# अथ सटीकं गुरूत्कर्षपञ्चकं प्रारभ्यते ।

श्रीगणेशाय नमः ॥ धर्मानंदालवाले सुरतरुरमवल्लीरसंवर्धितोयं नूनं गाथालताभिर्विबहुफलततिभिर्गाढमालिंगितो यः ॥ स्कंधैरष्टोच्छ्रितैः स्वर्णकुसुमावलिसच्छलोकपर्णातपघ्नो, मायूरैः शोकशब्दैः श्रितजनसुखकृत्सर्वदः सेवतां नः ॥ १ ॥ इह खलु धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्षएव परमः पुरुषार्थः । स च ब्रह्मज्ञानात् । तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय । इति श्रुत्या ज्ञानादेवतुकैवल्यमिति स्मृत्या च तदितरोपायस्यावधारणतः प्रत्याख्यातत्वेन ज्ञानादेव मोक्षः । ननु भक्तेर्मोक्षहेतुत्वं पुराणेषु प्रसिद्धमिति चेन्न भक्तेर्ज्ञानहेतुत्वेन तद्द्वारा मोक्षोपयोगित्वात् । तच्च गुरूपसदनेनैवाप्तं मोक्षाय भवति । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमुपगच्छेत् । नैषा तर्केण मतिरापनेयाऽन्येनैवोपदिष्टा सुज्ञानाय भवति । इत्यादिश्रुतिभिः सद्गुरोः सकाशाज्ज्ञानप्राप्तिः फलाय अन्यथा निष्फला ॥ तथाचोत्कृष्टत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्वं प्रतिपादितं स्मृतिषु । अज्ञानांधस्य लोकस्य ज्ञानांजनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ इत्यादिषूत्कृष्टत्वम् । यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥ इत्यादिषूत्कृष्टतरत्वम् । भगवदुक्तिरपि । आचार्यं मा विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥ यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ । मर्त्यासद्धीः श्रुतं तस्य मन्ये कुंजरशौचवत् ॥ इत्यादिषु गुरोरुत्कृष्टतमत्वमुक्तम् । कामादिशत्रूणां गुरुभक्त्यैव नाशो भवति । असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् । अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ आन्वीक्षिक्या शोकमोहौ दंभं महदुपासया । योगान्तरायान्मानेन हिंसां कामाद्यनीहया ॥ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना । आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च । एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यंजसा जयेत् ॥ अतो मोक्षप्रतिबंधकविघ्नविनाशकत्वेन च गुरुभक्तेः उत्कृष्टत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्वं च श्रीगुरोः सिद्धम् । नन्वत्रोत्कृष्टतमत्वप्रतिपादनेनातिश्रेष्ठत्वे सिद्धे किमुभयोः पूर्वयोः प्रतिपादने यत्नः कृतः सर्वात्मकस्याकाशस्य घटमठात्मत्ववदकिंचित्कर इति चेत्सत्यम् । आकाशस्य सर्वगतत्वलाभाय घटात्मकत्वमठात्मकत्वोपादाने सूपपन्ने यथा तथा उत्कृष्टतमत्वग्रहणायैव प्रथममुत्कृष्टत्वं प्रतिपाद्य तत उत्कृष्टतरत्वं च प्रतिपाद्यान्ते उत्कृष्टतमत्वं प्रतिपादितमिति सूपपन्नम् । तदेवोत्कृष्टत्वमुत्कृष्टतरत्वमुत्कृष्टतमत्वमाह त्रिभिः ।

**जन्मर्क्षं गदितं जनौ स्वगुरुणाऽन्यव्यक्तिनांकादि मे गायत्र्यंबकरूपिणा श्रुतिमुखं सांगं परैर्निग्रहैः ॥**
**मंत्रोपास्तियुगात्मता च चरमेणेत्थं प्रपंचे परेऽप्यर्थेऽनेकवपुर्हि तं कथितवांस्तस्माद्गुरोर्नो महान् ॥ १ ॥**

जन्मर्क्षमिति । स्वगुरुणा स्वोपाध्यायादिगणकरूपेण जनौ जन्मनि । जनुर्जननजन्मानीत्यमरः । जन्मर्क्षं जननसमये यदृक्षं ऋक्षमित्युपलक्षण तिथ्यादिभावान्तं सर्वं जातकप्रकरणोक्तं वा अवकहडादिचक्रानुरोधेन केवलं जन्मनामोपयोगिनक्षत्रं गदितं कथितम् । अशरणदशायामपि गुरोः कृपाकरत्वमिति भावः । अन्या द्वितीया व्यक्तिः स्वरूपं यस्य तेन मे मह्यं शिष्यायेति यावत् । अंकादि अंकाः

---

१—गुर्वीगाथेतिमूलपुस्तकपाठस्य व्याकरणदृष्ट्याऽसमंजसत्वादीदृक्परावर्तनम् ।

नवाक्षराणि तेन सर्वं एकाक्षरादारभ्य परार्धपर्यंतं संख्योपयोगि गृह्यते । कुत एतदंकात्मकत्वं परार्धपर्यंतानामिति । एतदुक्तं भवति । नवाक्षरैः पूर्णेन च संख्यावृद्धिर्जायते पूर्णस्य च तदन्तर्भावान्नवांकाः । उक्तं च । मुख्यमेकं पुरस्कृत्य यथासंख्यांकबिंदवः । वर्धंत इत्यादि । अंकलिपिरित्यर्थः । आदिशब्दादकाराद्यक्षरलिपिश्च । गदित मित्यस्य प्रत्यन्वयं लिंगादिविपरिणामेन सम्बंधः मे इत्यस्य च । अंबकरूपिणा अंबकः पिता तद्रूपेण गायत्री गदिता । मौंजीबंधनोत्तर गायत्र्युपदेशेन गुरुणा द्विजत्वं प्रापित इत्यर्थः । परैः अन्यैः विग्रहैः स्वरूपैः श्रुतिः मुखम् आदिर्यस्मिन् तत् अन्येतम वेदशास्त्रादि किंभूतं तत् सांगं अंगैः शिक्षाकल्पव्याकरणच्छंदोनिरुक्तज्योतिषैः सहितं युक्तं गदितम् । इदानीं मंत्रोपासनायोगज्ञानानां प्राप्तिमाह । मंत्रोपास्तियुगात्मतेति । चरमेण आत्मना तेन सर्वस्योत्तमत्वात्तत ऊर्ध्वं गुरुरेव न जात इत्युक्तं चरमेणेति । मंत्राः पञ्चदश्यादयः उपास्तिरुपासनाविधिः युक् योगश्च अष्टांगः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपः तैरात्मता आत्मज्ञानं गदितम् इत्यमिति एवंप्रकारेण प्रपंचे प्रवृत्तिरूपे परेपि अर्थे निवृत्तिरूपपरमार्थेऽपि हितं हितकरवचनं कथितवानुक्तवान् । स किंभूतः अनेकवपुः अनेकानि वपूंषि शरीराणि यस्य । गात्र वपुः संहननमित्यमरः । शिष्याय हितं वक्तुम् अनेकशरीरधर इत्यर्थः । यत एवमतो गुरोरन्यः श्रेष्ठो नास्ति इत्याह । तस्मादिति । तस्मात्कारणात् गुरोर्महान् श्रेष्ठो नो नास्ति । नार्थे नो इत्यव्ययम् । तथा च अनेकव्यक्तितया प्रपंचपरमार्थयोर्हितकरत्वेन श्रीगुरोः श्रेष्ठत्वादुत्कृष्टत्वमिति भावः । तदुक्तम् । न गुरोरधिकं न गुरोरधिकं शिवशासनतः शिवशासनतः ॥ १ ॥

**देवः श्रेष्ठ इतीर्यते यदि परैर्मंत्रैस्तु लभ्याः सुरास्तत्प्राप्तिः सुविदोऽखिलामरमनोः सत्संप्रदायाद्गुरोः ॥**
**देवो ध्यानमयो न वक्ति निजतां साक्षाद्धि वक्ता गुरू रामः कृष्ण इतो गुरू किल ततः श्रेष्ठो गुरुर्दैवतः ॥ २ ॥**

महानित्यनेन सामान्यतः श्रीगुरोः श्रेष्ठत्वमुक्तम् इदानीं विशेषतो विविच्य देवतः श्रेष्ठत्वमाह । देवः श्रेष्ठ इति । परैः गुरोर्महत्त्वमजानद्भिः देवः विष्ण्वादिः श्रेष्ठो महानित्युच्यते यदि तर्हि सुरा देवास्तु मंत्रैः मंत्रशास्त्रोक्तैस्तत्तन्मंत्रैर्लब्धुं प्राप्तुं योग्याः नान्यथेति यावत् । तत्प्राप्तिर्गुर्वधीनेत्याह । तेषां मंत्राणां प्राप्तिः सुविदः सुज्ञानिनः अखिलाः अमराणां मनवो मंत्रा यस्य पूर्णाभिषेकविधिना प्राप्तसर्वदेवमंत्रादेरित्यर्थः । सत्संप्रदायो गुरुपरंपरा यस्य तादृशात् गुरोः सकाशाद्भवतीत्यध्याहारः । अत्राय प्रयोगः । देवतादेशिकयोः इति पक्षः । न्यूनाधिकत्वे इति साध्यम् । अधीनानधीनत्वाभ्यां इति हेतुः । नियम्यनियामकवत् इति दृष्टान्तः । कुत एतत् । दैवाधीनं जगत्सर्वं मंत्राधीनं तु दैवतम् । ते मंत्रा ब्राह्मणाधीना ब्राह्मणो मम दैवतम् ॥ इत्युक्तेः प्रत्यक्ष ज्ञानोपदेशकत्वेन श्रेष्ठत्वमाह देव इति । देवः ध्यानमयः ध्यानस्वरूपः ध्यानगम्य इति यावत् । निजतां निजानां सेवकानां समुदायं वा निजस्वरूपं न वक्ति न भाषते । श्रीगुरुस्तु साक्षाद्वक्ता स्वशिष्यसमुदाय स्वरूपज्ञानं वा प्रत्यक्ष वदति । साक्षात्कारपर्यंतं समुपदिशतीत्यर्थः । ढ्लोपे पूर्वस्य दीर्घोऽण इत्यनेन दीर्घत्वम् । अतो मंत्रादिप्राप्त्यर्थं गुरूपसदनमावश्यकमित्यत्र सदाचारं प्रमाणयति । राम इति । रामः वसिष्ठं गुरुं इतः शरणं गतः कृष्णः सांदीपनिं शरणं गतः । ततः कारणात् गुरुः दैवतः श्रेष्ठोऽस्ति । अत्र गुरोर्मंत्रप्रदत्वेन मंत्राणां देवप्राप्तिहेतुत्वेनोत्कृष्टत्वमिति भाव । ईश्वरस्यापि पवित्रकारित्वं गुरावुपलभ्यते भागवते । निरपेक्षं मुनिं शांतं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥ इति । सर्वे देवदानवा अपि गुरुशुक्रोपासनेनैव प्राप्ता अतो गुरुरेव सर्वतो महानित्यलम् ॥ २ ॥

मूलाधारमुखेषु षट्सु कमलेष्वैभास्यपूर्वास्ततश्चोर्ध्वं तिष्ठति सर्वदेवतनुमान्साहस्रपत्रे गुरुः ॥
अज्ञान् ज्ञानमनादि वक्तुमभवच्चोर्व्यां मनुष्याकृतिस्तं मर्त्यं न वदेत्सुरोत्तमधिया संपूजयेद्भक्तितः ॥ ३ ॥

इदानीं मूलाधारादिचक्रषट्कोपरि स्थितत्वेन ज्ञानप्रदत्वेन चोत्कृष्टतमत्वं प्राह । मूलाधारमुखेष्विति । मूलाधारमुखेषु मूलाधारस्वाधिष्ठानानाहतविशुद्धिमणिपूराज्ञासंज्ञकेषु कमलेषु ऐभास्यः इभस्य गजस्यास्यमिवास्यं मुखं यस्य । इभः स्तंबेरमः पद्मी इत्यमरः । गजाननः पूर्वः प्रथमो येषु ते गणेशब्रह्मरुद्रात्मपरमात्मानास्तिष्ठति । ततः तेषां । सार्वविभक्तिकस्तसिः चकारोऽनुक्तदेवतासमुच्चयार्थः । चान्वाचयसमाहारेतरेतरसमुच्चय इति त्रिकांडशेषात् । ऊर्ध्वमुपरि सर्वोपरीति यावत् । सर्वदेवतनुमान् सर्वे च ते देवाश्च तेषां तनुर्विद्यते यस्य स गुरुः सहस्रं पत्राणि दलानि यस्य सहस्रदलकमले तिष्ठति । सर्वोपरिस्थितत्वसर्वदेवतामयत्वे च श्रीगुरोरेव भवतः । कुतः । सहस्रदलपंकजे सकलशीतरश्मिप्रभं वराभयकरांबुजं विमलगंधपुष्पांबरम् । प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ इत्युक्तत्वात् । ननु सहस्रपत्रस्थो हि सर्वदेवमयो गुरुर्ज्ञानोपदेशकः कथं भवेदित्यत आह । अज्ञानिति । यत्तदोर्नित्यसंबधात् यः गुरुर्मनुष्याकृतिः सन् मनुष्य इव आकृतिराकारो यस्य मनुष्यावतार इति यावत् । अज्ञान् पशुवज्ज्ञानशून्यान् तेषां पश्वादिभिश्चाविशेषात् । अनादिगुरुपरंपराप्राप्तं ज्ञानं ज्ञायते आत्मरूपं येन तद्वक्तुं कथयितुं उर्व्यां पृथिव्यां अभवत् जातः तं गुरुं मर्त्यं मरणधर्मशीलं मनुष्यमिति यावत् । न वदेन्नोच्चारयेत् । गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ इति ॥ न मर्त्यबुद्ध्याऽसूयेत । मर्त्यासद्धीः श्रुतं तस्य मन्ये कुंजरशौचवत् । इत्यादि बहूक्तत्वाच्चस्मिन्मनुष्यबुद्धिर्न कार्या इत्यर्थः । तर्हि कथं वर्तेतेत्यत आह । सुरोत्तमधिया इति । सुरेम्य उत्तमोऽयमिति बुद्ध्या भक्तितः श्रद्धया । श्रद्धारहितस्य तामसत्वाभिधानात् । संपूजयेत् सम्यक् पूजयेत् । सर्वोपरि सहस्रदलस्थितत्वेन सर्वदेवतारूपत्वेन मनुष्यावतारत्वेन ब्रह्मोपदेशकत्वेन चोत्कृष्टतमत्वमित्यर्थः ॥ ३ ॥

धुंडचंबार्कहरीश्वराः किल सुराः स्वेष्टाश्च रुष्टाः क्वचित्त्वेषां तांश्च गुरुर्निजांघ्रिशरणान्पात्येव सामर्थ्यतः ॥
सेतूल्लंघनतः क्वचिद्यदि गुरू रुष्टो हि यस्योपरि नेशास्त्रातुममुं सुहृन्नृपसुराश्चास्मिन्हि कांडोदरे ॥ ४ ॥

ननु शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरेभास्यनागसुता रवौ हरगणेशाजाम्बिकाः स्थापयेत् । देव्यां विष्णुहरेकदंतरवयो लंबोदरेऽजेश्वरेनार्याः शंकरभागतोऽतिसुखदा व्यस्तास्तु हानिप्रदाः ॥ इति पंचायतनपूजाविधानात्किमित्युच्यते गुरुं संपूजयेदिति चेदत्र ब्रूमः । तत्कृतरोषाविर्भूतभयनिवारकत्वात्सद्गुरोः गुरुकृतरोषाविर्भूतभयानिवारकत्वाच्च देवानामित्याह । धुंडयंबार्कहरीश्वरा इति । धुंडी गणपतिः अंबा देवी अर्कः सूर्यः हरिः विष्णुः ईश्वरो महादेवः ते स्वेष्टाः स्वस्य इष्टाः प्रियाः अन्ये सुराः देवाः चकारोऽनुक्तसंग्रहार्थः । महालसाकान्तादयः येषां जनाना क्वचित्परावेन रुष्टा रोषमिताः किल तु यदि । अव्ययानामनेकार्थत्वात् । तर्हि गुरुः निजांघ्रिशरणांश्च तान् पात्येव निजौ अंघ्री चरणौ । पदंघ्रिश्चरणोऽस्त्रियाम् इत्यमरः । तौ प्रति शरणान् शरणं प्राप्तान् तान् पूर्वोक्तान् जनान् सामर्थ्यतः स्वपराक्रमेण पात्येव रक्षत्येव अवधारणया शरणोपेक्षा न भवति इति सूचितम् । गुरुर्यदि रुष्टस्तस्मात्कोऽपि न रक्षति इत्याह सेतूल्लंघनत इति । सेतोर्मर्यादायाः उल्लंघनमतिक्रमणं तस्मात् क्वचित्कदाचित् पूर्वं तु रुष्ट एव न भवेत् । शान्तो दान्त इति श्रुतेः । कथंचिद्रुष्टो यदि कस्मिंश्चिद्रोषं प्राप्तो यदि तर्हि सुहृन्नृपमुखाः सुहृदः संबंधिनः नृपा राजानः सुरा देवाः शिवादयोऽपि अस्मिन्कांडोदरे कस्य ब्रह्मणः अंडं तत्सृष्टं ब्रह्मांडमिति यावत् । तस्योदरे मध्ये अमुं मर्यादोल्लंघनेन संजातरोषः गुरुर्यस्य तं नरं त्रातुं रक्षितुं न समर्थाः अतः किमु वक्तव्यं अन्ये समर्था भविष्यंतीति । न समर्था इत्यर्थः । हीति निश्चयेन । तदुक्तम् । शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ इति । आत्मज्ञानिनस्तु स्वरूपविचारेण देवा अपि सेवका भवन्ति । तदुक्तं । विचारेण परिज्ञातस्वभावस्य महामतेः । अनुकंप्या भवंत्येते ब्रह्मविष्णुमहेश्वराः ॥ इति । अनयाप्युत्कृष्टतमत्वमेव प्रतिपादितं श्रीगुरोः ॥ ४ ॥

**आप्तः श्रीगुरुरेव संप्रति मया प्राप्तः समालोकितः सुप्तः पूर्वमविद्ययाऽहमरिभिर्व्याप्तः स्मराद्यैर्यतः ॥**
**तप्तस्तत्कृततापतो बहुभवैर्लुप्तस्वभाग्योऽमुना गुप्तश्चामृतवर्षणाच्छ्रुतिगतात्तृप्तः स्वदीप्तः कृतः ॥ ५ ॥**

इदानीं ज्ञानप्रदत्वेन स्वानंदसमर्पकत्वमाह । आप्तेति । संप्रति सांप्रतकाले मया मुमुक्षुणा दारिद्रेण च श्रीगुरुरेव देशिक एव श्रिया लक्ष्म्या गुरुर्महान्धनिक इति यावत् । आप्तः यथार्थवक्ता प्रत्ययितः गुह्यः आप्तप्रत्ययितौ समौ इत्यमरः । प्राप्त आगतः समालोकितः रक्षणकर्ताऽयमिति दृष्टः । पक्षे दाताऽयमिति दृष्टः । अहं पूर्वमविद्यया अज्ञानेन सुप्तः अविद्यावृत इत्यर्थः । अविनाशामंतरे वर्तमाना इति श्रुतेः । पक्षे दरिद्रागमात् पूर्वं अविद्यया मे धन हरिष्यतीति ज्ञानराहित्येन सुप्तः स्वापं प्राप्तः । रात्रौ प्रसुप्तस्य धन हरति इति प्रसिद्धम् । यतोहमविद्यावृतः निद्रावृतश्च अतः स्मरादिः स्मरः कामः कामः पंचशरः स्मरः इत्यमरः । आदिर्मुख्यो येषां ते कामक्रोधलोभमदमत्सराहंकारदंभास्तैः पक्षे पंचशराद्यैः अरिभिः शत्रुभिर्व्याप्तः समंत द्वेष्टितः । तत्किमित्यत आह तप्त इति । तत्कृततापतः तैः शत्रुभिः कृतो यस्तापः आध्यात्मिकाधिदैविकाधिभौतिकः पक्षे पीडनताडनात्मकः तेन तप्तः तापं प्राप्तः दुःखित इत्यर्थः । बहुभवैः अनेकजन्मभिः पक्षे बहुभवैः बहुवारं वा बहुहरैश्चोरैरिति लक्षितलक्षणया बोध्यम् । जन्महरौ भवौ इत्यमरः । लुप्तस्वभाग्यः लोपमितं स्वरूपं आत्मरूपं भाग्यं दैवं यस्य पक्षे स्वं धनरूप भाग्यमैश्वर्यं अथवा स्वस्य भाग्यं । स्वो ज्ञातावात्मनि स्व त्रिष्वात्मीये स्वोऽस्त्रियां धने इत्यमरः । एवंविधः लुप्तस्वभाग्योऽहं अमुना श्रीगुरुणा स्वमेवात्मज्ञानमेवामृतं मरणनिवारकं तस्य वर्षण वृष्टिः तस्मात्पक्षे स्वस्य धनस्य अमृतमिव ज... वर्षण वृष्टि. तस्मात्कृतः रक्षितः श्रुतिगताच्छ्रवणगतात्तृप्तः तुष्टः पक्षे श्रवणमात्रेण संतुष्टः स्वदीप्तः स्वेनैव दीप्तः स्वप्रकाश इति यावत् । पक्षे द्रव्यदानेन दीप्तः प्रकाशितः ब्रह्मविद्ब्रह्मैव भवतीति श्रुतेः । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति । न चेदिहावेदीन्महती विनष्टिः ( १ ) असूर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ इत्यादिश्रुतिभिरज्ञानिनोऽनिष्टफलश्रवणात् ज्ञानिनस्तु मोक्षफलश्रवणात् । न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयन्ते । इत्यादि । तत्प्राप्त्यर्थं गुरूपसदनमपि श्रुतिस्मृतिसिद्धम् । जीवाभयप्रदानस्य कलां नार्हन्ति षोडशीम् । इत्यादिभिश्च ज्ञानप्रदगुरोः सदृशो महानुत्कृष्टतमो नास्तीत्यर्थः । अत्र श्रीगुरोः सर्वोत्कृष्टत्वेनोत्कृष्टतरत्वेनोत्कृष्टतमत्वेन च मनुष्यावतारित्वेन ज्ञानोपदेशद्वारा परमानंदप्रापकत्वेन सुसेव्यत्व सिद्धमित्यनवद्यम् ॥ ५ ॥

**गुरूत्कर्षरत्नानि नित्यं प्रयत्नात्स्मरादीन्सपत्नांश्च कुर्वन्नयत्नान् ॥ पठेत्स प्रबोधाद्गुरोराप्तबोधात्सुभक्त्या पुमान्यः स वै देवमान्यः ॥ ६ ॥**

गुरूत्कर्षपंचकस्तोत्ररत्नस्य श्रवणपठनफलं सपत्नविजयाद्यवातरफलसहितं देवमान्यत्वं भवतीत्याह । गुरूत्कर्षरत्नानीति । यत्तदोर्नित्यसंबन्धात् यः पुमान् पुरुषः स्मरादीन् कामक्रोधादीन् सपत्नान् शत्रून् अयत्नान् न यत्नः पराक्रमो येषां निर्बलानकिंचित्करानिति यावत् । कुर्वन् सन् गुरूत्कर्षरत्नानि गुरोरुत्कर्षो महत्त्वं यत्र तादृशानि रत्नानि महानुकर्षतेजःप्रभा येषां तानि वा रत्नानि प्रयत्नात् विशदाक्षरत्वादिना नित्यं पठेत् स पूर्वोक्तः पुरुषः प्रबोधात्प्रकृष्टः बोधो ज्ञानं यस्य ज्ञानस्वरूपात् इत्यर्थः । प्रबोधनामकाद्गुरोः ... आप्तबोधात् देवताधिकमहत्त्वेन गुरोः संबन्धिन्या सुभक्त्या आप्त. प्राप्तः बोधो ज्ञानं तस्मात् देवेषु मान्यः पूज्यः भवति वै निश्चयेन पुमानपि गुरुभक्त्या सम... देवेषु पूज्यो भवतीत्यर्थः । अत्र देवमान्यत्वं मुख्यं फलं सपत्नविजय अवांतरं फलं यथा वृक्षस्य आदि मुख्य फलं छायाद्यवांतरं फलं तथेति अलमतिप्रसंगेन ॥ ६ ॥

॥ समाप्त सटीकं गुरूत्कर्षपंचकम् ॥

# अथ गुरुपरंपराचारित्रस्थितविषयानुक्रमणिका प्रारभ्यते ॥

सर्गाङ्काः — विषयाः

॥ समाप्ता पूर्वार्धस्थितविषयानुक्रमणिका ॥

# अथोत्तरार्धानुक्रमणिका ।

| सर्गांकाः | विषयाः |
|---|---|
| ११ | काश्मीरदेशे शितांशाबिल्हणकवेरुत्पत्तिः, गुर्जरदेशगतानलपुरराज्ञो वीरसिंहस्य कन्याया अध्यापनाय बिल्हणकवेर्नियोजनम्, शशिकलाबिल्हणयोर्यूनोः परस्परप्रीतियोगान्नानाविधसुरतकेलिवर्णनम्, तादृशं कुलदूषणं कर्म श्रुत्वा क्रुद्धेन राज्ञा कविबिल्हणस्य शूलारोपणं कारिते शशिकलाबिल्हणयोर्विमानमारुह्य स्वर्लोकगमनञ्च । |
| १२ | बिल्हणशिष्यस्य काश्मीरदेशस्थितदंडयानंददेशिकस्य कथावर्णनम्, सुरवमानंदभैरवानद कथा च । |
| १३ | त्रिविक्रमानंदगुरोः पञ्चदेशिकानां पृथक् कथानिरूपणम् । |
| १४ | निर्धनस्य कस्यचिदवंतीस्थद्विजस्य देवीप्रसादादमृतफललाभः, द्रव्यं गृहीत्वा द्विजस्तत्फलं राज्ञे भर्तृहरये समार्पयत् राज्ञा स्वकान्तायै समर्पितस्य फलस्य परंपरया पुना राज्ञे प्राप्तिः, तद्वृत्त्वा जारिणीं स्त्रियं हत्वा राज्यं परित्यज्य राज्ञो देशांतरगमनम्, बहु भ्रमतोप्यशान्तस्य राज्ञः सारस्वतानंददेशिकान्मंत्रदीक्षाप्राप्तिश्च । |
| १५ | भर्तृहरिशिष्यकंठपंडितानंदगुरोस्त्रिगुरूणां कथावर्णनम् । |
| १६ | बिल्वमंगलगुरोर्व्यासदर्शनम्, तस्मात्तस्य कविराक्षसनामप्राप्तिः, उत्पलराजशक्तिकुमारानंद देशिककथावर्णनञ्च । |
| १७ | शक्तिकुमारानंदशिष्यारसीठाकुरानंदकथावर्णनम्, भवभूतिक्रीडाचंद्रानंदगुरुकथावर्णनञ्च । |
| १८ | भिन्नग्रंथकर्तुः शार्ङ्गधरानंदगुरोः कथावर्णनम्, किरातार्जुनीयमहाकाव्यकर्तुर्भारव्यानंदनाथस्य विस्तरेण वर्णनञ्च । |
| १९ | कर्णाटकदेशस्थितस्य गोविंदाख्यद्विजस्य संतानार्थं बटुभैरवमाराध्य तत्प्रसादाद्वैरवांशपुत्रलाभः, भैरवस्य गाल्यानंददेशिकाद्दीक्षाप्राप्तिः, भैरवानदान्नागमाया उत्पत्ति, नागानागमायां कुमुदानदजन्म, विस्तरेण कुमुदानंददेशिकचरितवर्णनञ्च । |
| २० | वाक्परानंदकथावर्णनम्, वाक्परानंदसुतसांबदीक्षितस्य महापातकिशुद्धिकरणे निश्चरसमोपस्थितपाषाणमयनंदिना स्तुतेन तृणकवलभक्षणात्तद्दिवर्धापनसज्ञाला भवर्णनञ्च । |
| २१ | मुक्तापीडानदनाथात् षड्देशिकानां पृथक् चरितवर्णनम् । |
| २२ | कर्पूरानंदवर्णनम्, आपेग्रामनिवासिगोविदतनयस्य विठ्ठलस्य तीर्थयात्रायामलकावतीप्रवेशः, तत्र सिद्धपंतकन्यया रुक्मिण्या सह स्वप्ने भगवतो निदेशात् विठ्ठलस्य विवाहः, रामेश्वरयात्रा समाप्य पत्न्या सह तस्य स्वगेहागमनम्, पित्रोर्मरणानतरं विठ्ठलस्य सिद्धपतगृहे सह पत्न्या निवसतः काशीगमनम्, तत्र सन्यास गृहीत्वापि गुरोरादेशेन स्त्रीस्वीकारः, यतीश्वरा-द्रुक्मिण्यां निवृत्तिज्ञानदेवसोपानसञ्ज्ञकानां पुत्राणां मुक्ताख्यकन्यायाश्च प्रसूतिवर्णनञ्च । |
| २३ | इन्द्रायणीनद्यां यतिरुक्मिण्योरंतर्धानोत्तरं निवृत्तिज्ञानदेवसोपानमुक्ताबिकाना विस्तरतश्चरित वर्णनञ्च । |
| २४ | ज्ञानेश्वरानंदशिष्यभलटानंदनाथतश्चतुर्णां गुरूणा पृथक् कथावर्णनम् । |
| २५ | कुंभकोणस्थितविद्येश्वराख्यद्विजपुत्रस्य शिवावतारस्य विद्यारण्यगुरुविद्यातीर्थदेशिकस्य चरितवर्णनम् । |
| २६ | तुंगभद्रातीरस्थितमाधवाचार्यस्य पित्रोर्मरणानतरं द्रव्यार्जनाभावान्निर्धनस्य भगवत्प्रेरणे गायत्रीपुरश्चरणकरणम, गुरोर्मंत्रलब्धये गायत्र्युपदेशः, दीक्षां प्रगृह्य विद्यातीर्थगुरुक्त्या कृतानुष्ठानस्य विद्यारण्यस्य प्रत्यक्षतो देवीदर्शनम्, अन्यदेहे तत्र सुखाश्रमो नास्ति देवी- |

| सर्गांकाः | विषयाः |
|---|---|
| | गौतमीवृद्धिं विलोक्य जलस्यान्तर्गमनार्थं गुरूक्त्या चिंतामणिकृतगंगास्तववर्णनम्, चिंतामणिसुतमयूरेश्वरजन्मवर्णनम्, औदुंबरखेटे चिंतामणिगुरोर्गंडान्तनिरसनवर्णनम्, संन्यासिनः शुकानंदगुरोः परपदप्रयाणवर्णनञ्च । |
| ५२ | गुरुशुकानंदमठसमीपे निबद्धाभिनवगंगाख्यतीर्थवर्णनम्, तत्तीर्थमाहात्म्यवर्णनम्, गुरुकाशीमाहात्म्यवर्णनम्, गुरुभागवताख्यग्रंथकरणम्, मयूरेश्वरस्य विद्याभ्यासवर्णनम्, पितुर्मयूरेश्वरस्य मंत्रदीक्षाग्रहणम्, शुकानंदगुरोरुत्सवसातत्यार्थं मयूरेश्वराग्रहाच्चिंतामणिगुरोर्भाग्यपुरे गमनम्, गुरुभागवतोक्तपद्ये स्वनामवर्णनं कृत्वा राजमंत्रिचंदुलालतः सहस्रलाभद ग्रामस्य लाभः, भाग्यपुराच्चिंतामणेः स्वनगरागतस्य संन्यासग्रहणम्, चिंतामणिगुरोः संन्यासिनः परपदप्राप्तिवर्णनञ्च । |
| ५४ | मयूरेश्वरकृतदंदशिकेंद्राष्टकवर्णनम्, शृंगिरीपीठस्थितनृसिंहभारतीनामकशंकराचार्यस्य बम्मत्यामागमनम्, मयूरेश्वरस्य शंकराचार्येण सह गमनम्, मयूरेश्वरगुरोः सर्वत्राचार्यदत्तविद्वद्राचिह्नयुक्तस्य दिग्विजये प्रतिष्ठालाभवर्णनम्, मयूरेश्वरप्रसादात् गणराजस्य सिद्धिसामर्थ्यवर्णनम्, तस्य परपदप्रयाणवर्णनम्, भाग्यनगरे गुरुमयूरेश्वरस्य प्रतिष्ठाद्रव्यलाभादिवर्णनम् । गुरुशुकानंदमठस्योत्तमां व्यवस्था विधाय मयूरेश्वरगुरोः संन्यासदीक्षाग्रहणम्, धुंडिराजस्य पितुर्मयूरेश्वराद्दीक्षाग्रहणवर्णनम्, मयूरेश्वरगुरोरात्मस्थितिवर्णनम्, गुरुपरंपराग्रंथरचयितुः कविरामकृष्णस्य गुरुप्रणामपद्यवर्णनम्, गुरुपरंपराश्रवणपठनफलवर्णनञ्च । |

॥ समाप्ताऽनुक्रमणिका ॥

॥ वैद्योपनामकसदाशिवसूनुरंगनाथविरचितेयं गुरुपरंपराग्रंथानुक्रमणिका श्रीगुरुशिवचरणारविंदयोरर्पिताऽस्तु ॥

पुस्तकोंके मिलनेका ठिकाना–
**खेमराज श्रीकृष्णदास,**
श्रीवेङ्कटेश्वर ( स्टीम् ) यन्त्रालय–मुम्बई ।

॥ श्रीगणेशाय नमः ॥ श्रीमानादिगुरुः किलाखिलमयोऽस्मात्सन्नचासत्परं तयं सर्वगणेश ईरित इति प्राहुर्गणेशं गुरुम् ॥ यस्यानुग्रहनिग्रहात्मविभो
राख्या हि वैनायकी चिन्तामण्यभिधाखिलेप्सितकरी सोयं मयूरेश्वरः ॥ १ ॥ यस्याः सामर्थ्यतः सर्वे जयंत्यत्र परावरे ॥ जयंतीं तां नुमो नित्यं सर्वमंगल
कारिणीम् ॥ २ ॥ श्रीगुरुपारंपर्यं बबन्ध यज्वा स रामकृष्णाख्यः ॥ श्रीमत्प्रबोधबलतोऽस्यार्थस्फूर्तिं तनोति गोपालः ३ ॥ अथ नानावेदशास्त्रपुराणप्रबन्धे
षूक्तानां धर्मार्थकाममोक्षाणां मध्ये मोक्ष एव परमपुरुषार्थः 'न स पुनरावर्तते' इति श्रुत्या तस्य नित्यत्वप्रतिपादनात् ॥ तत्प्राप्तौ च साधनीभूतानां
कर्मोपास्तिज्ञानकाण्डोक्तार्थानामवश्यानुष्ठेयत्वेनानुष्ठितकर्मकाण्डोक्तार्थानामक्ततोपास्तीनामधिकारिणां तावदुपासनां प्रकाशयितुं पृथक् २ देवतानामवतार
कथास्तत्रतत्र प्रदर्शिताः । तत्रापि उपासनासिद्ध्यर्थं मन्त्रज्ञानस्यावश्यकत्वात्तदर्थं गुरूपासनमपि रहस्यत्वात्कचित्कचित्प्रदर्शितम् । तथा हि । "नैषा
तर्केण मतिरापनेयाऽन्येनैवोपदिष्टा सुज्ञानाय भवति । समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमुपगच्छेत्" इत्यादिश्रुतिषु च तत्त्वमस्यादिवाक्यजन्यज्ञानार्थमवश्योपास्य
त्वं गुरोरेव दर्शितम् ॥ किं च "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥" इति श्रुत्या गुरौ देवताबुद्धि
विधानेन गुरोर्देवतासाम्यादुत्कृष्टत्वम् । "शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥" इति स्मृतौ गुर्वपराधस्य
देवताभिरनिवार्यत्वेन "आचार्यं मां विजानीयान्नावमन्येत कर्हिचित । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः ॥" इत्येकादशस्कन्धे भगवदुक्त्या गुरोः
सर्वदेवतारूपत्वेन चोत्कृष्टतरत्वम् । तथा सप्तमस्कन्धे । "असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥
आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया । योगान्तरायान्मौनेन हिंसां कायाद्यनीहया ॥ कृपया भूतजं दुःखं दैवं जह्यात्समाधिना । आत्मजं योग
वीर्येण निद्रां सत्त्वनिषेवया ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च । एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यंजसा जयत् ॥" इत्यादिना उपायांतरैः साधन
सिद्धिमुक्त्वा गुरुभक्त्यैव सर्वसाधनसिद्धिरिति गुरोरुत्कृष्टतमत्वं च तत्रतत्र यद्यपि प्रतिपादितं तथापि गुरूणा कथाः अत्यन्तमपेक्षिता अपि क्वचिन्नोक्ताः ॥
धर्मशास्त्रे कलियुगधर्मप्रस्तावे "कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतम् ।" इति ॥ कलौ देवताभजनापेक्षया गुरुभजनस्यात्यादरणीयत्वात् गुरुभ
जनसिद्ध्यर्थं गुरुकथाप्रधानं गुरुपरम्पराचारित्राभिधं ग्रन्थं चिकीर्षू रामकृष्णसोमयाजी कविराट् आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखमिति प्रमाणबो

धितनिर्विघ्नपरिसमाप्तिजनकशिष्टाचारप्राप्तगणपतिसरस्वतीगुरुनमस्क्रियाख्यमंगलान्यारभमाणः अस्मिन् ग्रन्थे " अष्टोत्तरशतैः सर्गैः प्रागुत्तरदलक्रमात् ॥ उत्रिंशाद्विशतीयानां गुरूणां कथ्यते कथा ॥ १ ॥ सर्गेथ प्रथमे सप्तत्रिंशत्पद्यैस्तु मंगलम् ॥ श्रोतृस्तुतिश्र्यादिनाथाद्गुरवो द्वादशोदिताः ॥ २ ॥ " तत्रादौ निर्विघ्नपरिसमाप्त्यर्थं गणपतिं प्रणमति ॥ श्रीमत्सिद्धीति ॥ अहम् ईप्सितार्थप्रदम् इष्टार्थपूरकं गणपतिं नौमि । ननु विष्ण्वादयोपि नमस्कुर्वतां स्वभक्तानामीप्सितार्थान् ददति तान्विहाय ग्रन्थारम्भे किमर्थं गणपतिरेवादौ नमस्क्रियत इति चेत्तत्राह । य इति । यः मयूरेश्वरः मीनाति हिनस्ति भवरोगमिति मयूरः । मीनातेरुरण् । स चासावीश्वरश्चेति समासः । स्पष्टं चेदमथर्वशीर्षे । गणपतिः पादाम्बुजयुग्मके अज्ञातस्वचरणाब्जयोः नम्राणां कवीनां काव्यकलापरत्नबहुलां काव्ये ये कलापाः अलंकाराः रूपकोपमादयः तएव रत्नानि तैः बहुलामधिकाम् ॥ 'कलापो भूषणे बर्हे' इत्यमरः ॥ विधिविष्णुरुद्र

॥ श्रीगणेशाय नमः ॥ श्रीमत्सिद्धिमतीश्वरं गणपतिं नौमीप्सितार्थप्रदं यः पादाम्बुजयुग्मके प्रणमतां संस्फोरयित्वा पराम् ॥ बुद्धिं काव्यकलापरत्नबहुलां सिद्धिं च निर्विघ्नतोऽदान्मह्यं विधिविष्णुरुद्रमहितो देवो मयूरेश्वरः ॥ १ ॥ या देवी जगतोखिलस्य गदिता धीवागधिष्ठात्र्यतो निश्चित्यात्मधिया जनः किमपि तद् ब्रूते स्ववाण्या स्वकम् ॥ तस्मात्तत्परिलब्धये कविजनैर्या प्रार्थ्यते[illegible] विद्या सास्तु ममार्थवागधिगता धीवाक्यसिद्धिप्रदा ॥ २ ॥

महितः पूज्यः । तादृशीं बुद्धिं सम्यक् स्फोरयित्वा निर्विघ्नतो ग्रन्थसमाप्तिरूपां सिद्धिं च मह्यमदात् । अतस्तं सिद्धिमतीश्वरं श्रीमंतं सिद्धिबुद्धिनियंतारं नौमीति यत्तदोः सम्बन्धः । अभ्यर्हितत्वात्सिद्धिपदस्य पूर्वनिपातः । गणपस्य सिद्धिबुद्धिनियंतृत्वेन विष्ण्वादीनां तु सिद्धिबुद्धिनियंतृत्वाभावेन च तान्विहायादौ गणपतिमंगलविधानमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ तल्लक्षणं च ॥ ' सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ' इति ॥ १ ॥ तथैवं वागर्थसिद्ध्यर्थं सरस्वतीं स्तौति ॥ या देवीति ॥ सा प्रसिद्धा विद्याऽपरोक्षज्ञानरूपिणी ममार्थवागधिगता निश्चितार्थवाण्यौ अधिगता प्राप्ता सती धीवाक्यसिद्धिप्रदा बुद्धिवाण्योरुत्तमसिद्धिप्रदाऽस्तु सा का । या देवी प्रकाशमाना । अखिलस्य सर्वस्य जगतो धीवागधिष्ठात्री बुद्धिवागधिष्ठात्री गदिता

कथिता । कविजनैरित्यपकृष्य योज्यम् ॥ धीवाण्योर्नियंतृत्वं तस्या एवास्ति यां विना जगति बुद्धिवाचोः प्रवृत्तिरेव नास्तीत्याह । अत इति । यतो धीवा गधिष्ठात्री । अतो हेतोः जनः इत्युपलक्षणं प्राणिमात्रस्य यत्किमपि धिया निश्चित्य स्वकं स्वीयं तदखिलं अर्थजातं स्ववाण्या ब्रूते वक्ति बुद्धिप्रेरकत्वं च " सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि । बुद्धिं या नः प्रचोदयात् " इति देवीभागवते उक्तम् । परापश्यन्तीत्यादिरूपतया साक्षात्सर्वजगद्व्यवहार इति मूलब्रह्मरूपत्वं तस्याः स्वतः सिद्धमेव । पुनः सा का ततः या कविजनैस्तत्परिलब्धये तयोः धीवाण्योः परिप्राप्तये या अहर्निशं रात्रिन्दिवं मुहुः प्रार्थ्यते ॥ ततश्च धीवाचोः परितः प्राप्त्यर्थं ग्रन्थादौ सरस्वतीप्रार्थना ममाप्यावश्यकीत्यर्थः ॥ २ ॥ इत्थं गणपतिसरस्वत्यौ स्तुत्वा स्वारब्धग्रंथे मुख्य तया वर्णनीयमादिनाथादिस्वदेशिकावधिगुरुरूपिणं समष्टिगुरुं स्तौति ॥ श्रीमद्देशिक इति ॥ आदिनाथमुखतः आदिनाथादितोऽस्मद्देशिकांतानामेकत्रिंश दुत्तरद्विशतीसंख्याकानाम् आकृतीः शुद्धसत्त्वात्मिकाः व्यक्तीः प्रत्येकं बिभ्राणो यस्तमाद्यं सर्वाधिष्ठानभूतं गुरुमीडे स्तौमि । कीदृशः । यत् सत् कालत्रया

श्रीमद्देशिकआदिनाथमुखतोऽस्मद्देशिकांताकृतीर्बिभ्राणो यदनंतचित्सदमलं ब्रह्मास्ति तद्रूपकः ॥ भ्रांतं प्रापयितुं स्वकीयसुगतिं भ्रांतं जगन्मोहतो जातो यः कृपयाऽगुणोपि सगुणस्तं चाद्यमीडे गुरुम् ॥ ३ ॥

विनाशि । अनंतं देशकालवस्तुपरिच्छेदरहितम् । चित् स्वप्रकाशम् । अमलम् अज्ञानरहितम् । यद्ब्रह्मास्ति तद्रूपकः तदेव रूपं यस्य । ननु निर्धर्मके ब्रह्मणि आकृतिमत्त्वं वक्तुमपि न शक्यमितिचेत्तत्राह । भ्रांतमिति । स्वस्मिन्नारोपितमपि स्वांशभूतं स्वाज्ञानजन्यमोहतः भ्रांतं विस्मृतात्मस्थितिं विस्मृता त्मस्वरूपम् । भ्रांतं संसारोद्भवतापत्रयैरिति शेषः एतादृशम् । गच्छतीति जगत् जीवजातम् । स्वकीयसुगतिम् आत्मीयोत्तमगतिं प्रापयितुम् अगुणः निर्गु णोपि कृपया सगुणगुरुरूपो जातः ॥ जगदुद्धारार्थमेव ब्रह्मणः सगुणगुरुरूपत्वमित्यर्थः ॥ अनेन श्लोकेनानुबंधचतुष्टयं प्रदर्शितम् ॥ तथा हि ॥ तापत्रय संतप्तो गुरुपादुकाश्रयान्मुमुक्षुरधिकारी ॥ आदिनाथात्स्वगुर्वंतदेशिककथा विषयः ॥ सर्वाधिष्ठातुः श्रीमदादिनाथस्य चाभेदः संबंधः । यद्वा गुरुकथानां ग्रंथस्य च प्रतिपाद्यप्रतिपादकभावः संबंधः ॥ एवं विषयप्रयोजनादीनामपि सम्बन्ध ऊह्यः ॥ गुरूणां निष्कामाचरणरूपकथाश्रवणान्निष्कामतया शुद्धान्तः

करणत्वेन तीव्रसंवेगेन वेदांतश्रवणश्रद्धासम्पत्तिद्वारा अधिकारिणां परमपुरुषार्थावगतिः प्रयोजनमिति तत्त्वम् ॥ ३ ॥ स्वगुरुं नमस्करोति ॥ यज्ञेश्वरमिति ॥ अहं यज्ञेश्वरं यज्ञेश्वरानंदनामकं गार्हपत्याद्यग्निरूपं गुरुं वंदे । किं भूतं गुरुम् । श्रौतस्मार्तक्रियया उज्ज्वलं तेजस्विनम् । पक्षे श्रौतस्मार्तक्रियासु प्रदीप्तम् । येन गुरुणाऽग्नीनामत्यंतमज्ञोप्यहं सोमयाजितां सोमयज्ञकर्तृत्वं प्रापितः । यद्वा उमया गौर्या ब्रह्मविद्यया वा सहितः सोमः शिवो ज्ञानी च । उमाशब्दस्य ब्रह्मविद्यावाचित्वं हरिवंशे पुष्करप्रादुर्भावेऽतिप्रसिद्धम् ॥ सोमं शिवं ज्ञानिनं च यजते सर्वात्मत्वेन पूजयतीति तस्य भावस्तत्त्वं प्रापितः ॥ तथा च कर्मोपास्तिज्ञान कांडोक्तब्रह्मात्मज्ञानसंपन्नत्वं ग्रंथकर्तुरित्यर्थः ॥ अत्राग्निरूपेण गुरुवर्णनाद्रूपकालंकारः ॥ तल्लक्षणं तु । 'यत्रार्थयोश्च साधर्म्यादभिधारूपकं भवेत् ।' इति ॥ ४ ॥ श्रीगुरुकृपयैव ग्रंथकरणे मत्प्रवृत्तिरित्याह । परंपरेति ॥ पुराणसंबंधिनीं कथां वक्तुं बलादाज्ञमो मूक इव आदितः आदिनाथमारभ्य गुरूणां परम्पराच

यज्ञेश्वरं गुरुं वंदे श्रौतस्मार्तक्रियोज्ज्वलम् ॥ येनाज्ञोऽप्यहमत्यंतं प्रापितः सोमयाजिताम् ॥ ४ ॥ परम्पराचरित्रं यद्गुरूणां वक्तुमा दितः ॥ येनाज्ञमो बलान्मूकः कथां पौराणिकीमिव ॥ ५ ॥ समर्था तत्कृपैवात्र समाख्यातुं कथोत्तमम् ॥ करोति जन्मतो मूकं वाचस्पतिसमं तु या ॥ ६ ॥ ततो गुरुकृपालेशाद्गुरूणां प्रोच्यतेऽधुना ॥ परंपरायाश्चरितमादिनाथान्मया गुरोः ॥ ७ ॥ अनंतं गुरुमाहात्म्यमहमत्यंतमल्पधीः ॥ वर्णयामि यथाशक्ति याति पक्षी यथांबरम् ॥ ८ ॥

रित्रं वक्तुं यत् येन आज्ञमो नियोजितोस्मीत्यर्थः ॥ ५ ॥ तत्प्रेरणायाश्च तत्कृपामन्तरा संभवो नेति तस्याः स्वयमभिमुखत्वेन प्रवृत्तेस्तस्या [illegible] नापटुत्वामित्याह ॥ समर्थेति ॥ अत्र मन्मुखेनैतच्चारित्रवर्णने तस्य गुरोः कृपैव कथाभिरुत्तमं ग्रंथं समाख्यातुं समर्था । सा कृपा जन्मारभ्य मूकं तु बृहस्प तिसमं करोति ॥ तथा चोक्तं "मूकं करोति वाचालं पंगुं लंघयते गिरिम् ॥ यत्कृपा तमहं वंदे परमानंदमाधवम् ॥" इति ॥ ६ ॥ तत्कृपालेशमात्रेणैव मया यथामति आदिनाथादिगुरुपराम्पराचारित्रमुच्यत इति तत्कृपालेशस्यापीदं माहात्म्यमित्याह ॥ तत इति ॥ गुरुकृपालेशसम्बन्धस्यैव मम ग्रंथकरणे प्रवृत्तिरित्यर्थः ॥ ७ ॥ नन्वनंतगुरुमाहात्म्यवर्णनेऽत्यंताज्ञस्य मम का शक्तिरिति स्वाहंकारं खंडयन्नाह ॥ अनंतमिति ॥ यथा पक्षी आकाशम् अनन्तमपि शक्तिमनतिक्रम्य

याति तथात्यंतमल्पबुद्धिरपि अनंतं गुरुमाहात्म्यं यथाशक्ति वर्णयामि । तदुक्तं भागवते 'नभःपतंत्यात्मसमं पतत्रिणः' इति ॥ ८ ॥ सशाक्तिकान् पित्रादिगुरून् स्वनामनिर्देशेन प्रणमति ॥ लक्ष्म्यामिति ॥ शिवरामनाम्नः पितुः सकाशाल्लक्ष्मीनाम्न्यां मातरि यः समभवत् प्रादुर्भूतः यश्च माधवात् विद्यान्वितः माधवानंदकृपयाऽपरोक्षज्ञानसंपन्नोऽभवदित्यर्थः । रामपदात् रामदीक्षितात् अरणिप्रदातुः यज्वा सोमयागकर्ता योऽभवत् मयूरेश्वरात् ल्यब्लोपे पञ्चमी। तं प्राप्येत्यर्थः समस्तमनुभिः सर्वमंत्रैः पूर्णः कृतपूर्णाभिषेक इत्यर्थः॥यश्च स्फुरद्गुरुकृपादीक्षावशात् स्फुरंती या गुरुकृपा तया दीक्षा पूर्णाभिषेकदीक्षा तद्वशात् एतादृशं धर्मानंद इति नाम आप्तवान् लब्धवान् सोऽहं रामकृष्णः शुभबुद्धिप्राप्त्यर्थं सशाक्तिकान् लक्ष्मीराधामहिणागंगा

लक्ष्म्यां यः शिवरामतः समभवद्विद्यान्वितो माधवाद्यज्वा रामपदात् समस्तमनुभिः पूर्णो मयूरेश्वरात् ॥ सोऽहं नौमि सश क्तिकाञ्छुभधियस्तान्रामकृष्णस्ततो धर्मानंदपदं स्फुरद्गुरुकृपादीक्षावशादाप्तवान् ॥ ९ ॥ अथाहं प्रार्थये श्रोतॄन्गुरुभक्तिरताश्च ये ॥ देशिकादाप्तविज्ञानास्त्यक्ताहंकृतयोऽमलाः ॥ १० ॥ यूयं महान्तः सरलाः पितरो बालभाषिते ॥ आनंदिनो भवन्त्येवं भवेयुर्मम भाषणे ॥ ११ ॥ आदिनाथं समारभ्य गुरूणां चरितं मया ॥ आज्ञप्तं श्रीमयूरेशगुरुणा तद्वदामि वः ॥ १२ ॥

शक्तिसहितान् तान् शिवराममाधवरामदीक्षितमयूरेश्वरनामभिः प्रसिद्धान् गुरून् नौमि । बहुगुरुकृपयाहं धन्यतमोऽस्मीति भावः ॥९॥ एवं दृढतरमंगलान्य भिधाय श्रोतॄन् प्रार्थनयाऽभिमुखीकरोति॥अथेति द्वाभ्याम्॥अथानंतरं देशिकात् गुरोः सकाशादाप्तं प्राप्तम् आत्मविज्ञानं आत्मानुभवो येषां ते तथोक्ताः अतो गुरुभक्तौ रताः रतिं प्राप्तास्ततस्त्यक्ताभिमानाः अत अमलाः शुद्धचित्ता ये श्रोतारस्तानहं प्रार्थये ॥ १० ॥ प्रार्थनाप्रयोजनमाह पितरइति ॥ यद्वन्मातरः पितरश्च स्वस्वबालभाषिते आनंदिनः भवंति तद्वन्मम भाषणे सरला महान्तः यूयम् आनंदिनो भवेयुः ॥ ११ ॥ संप्रदायं कथयन् चिंतामणिमयूरेश्वरयोः संवादमु पक्षिपति । आदिनाथमिति त्रिभिः ॥ आदिनाथगुरोः सकाशात्सर्वगुरूणां त्रिंशदधिकद्विशतीगुरूणां यच्चरितं मया श्रीमयूरेश्वरेण आज्ञप्तमुपदिष्टं तदहं वः

कथयामि ॥ १२ ॥ तेन मयूरेश्वरेण स्वात् देशिकेंद्रात् गुरोः सकाशाद्यच्छ्रुतमस्ति तदिदमुच्यते चारितमिति पूर्वसंबंधायोज्यम् । तयोर्देशिकेंद्रमयूरेश्वरयोः संवादोऽत्र ग्रंथे कथ्यते मयेत्यध्याहारः।भक्तिपरैर्भवद्भिः कर्तृभिः स्वस्थचित्तैः एकाग्रमनोयुक्तैः आज्ञप्तं तादिदं संवादरूपं चारित्रं श्रोतव्यमित्यर्थः ॥ १३॥ एकदेति । स्पष्टार्थः श्लोकः ॥ १४ ॥ रहस्यवक्तुर्दौर्लभ्यं दर्शयन् मयूरेश्वरो देशिकेंद्रं प्रार्थयति ॥ परम्परेति ॥ श्रीमद्भ्यो भवद्भ्योऽन्यो वक्ता कोस्ति न कोपीत्यर्थः ॥ १५ ॥ अनंतगुरुकथावर्णने आत्मनो यथाशक्त्यधिकारं संभावयन् श्रीदेशिकेंद्र उवाच । गुरव इति ॥ अनंताः अपरिच्छिन्नाः गुरवः । शक्तिभिः सिद्धिजन्यसामर्थ्यैर्ये विक्रमाः निग्रहानुग्रहरूपाः पराक्रमास्तैरनंतचारिताः ये संति तेषां गुणसंघान्वक्तुं दिवि स्वर्गे भुवि पृथिव्यां वा कः क्षमोऽस्ति न कोपि समर्थ इत्यर्थः ॥ १६ ॥ न कोपि समर्थ इत्येतदुपपादयति ॥ गणेशस्येति त्रिभिः ॥ यद्यपि गणेशादिपंचायतनदेवतानां चारित्राण्यनेकशः अनेकानि पुराणेषु कथितानि व्यासेनेति शेषः ॥ १७॥ तथापीति ॥ तथापि तानि न पूर्णानि न संपूर्णानीति व्यासवचस्तत्तत्पुराणेषु । 'नांतं विदाम्यहममी मुनयोऽग्रजास्ते' इत्यादिना भागवतादिषु स्फुटमस्ति । अतः पंचदेवानां पञ्चायतनदेवतानामेव चारितं पूर्णं न श्रुतम् अस्ति । वै निश्चयेन ॥ १८ ॥ एवं च पंचायतनदेवतावर्णनं समग्रं न भवति । गुरोस्तु सर्वदेवतामयत्वेनावर्णनीयसमग्रगुणत्वमित्याह गुरुर्यदिति ॥ गुरुः स्वयमेकः सन् सर्वदेवतानां तनुः

तेन श्रुतं देशिकेन्द्रात्स्वाद्यत्तादिदमुच्यते ॥ श्रोतव्यं स्वस्थचित्तैस्तु भवद्भिर्भक्तितत्परैः ॥ १३ ॥ एकदा श्रीमयूरेशो देशिकेंद्रं रहः स्थितम् ॥ प्रोवाच प्रांजलिर्भूत्वा प्रश्रयावनतो भृशम् ॥ १४ ॥ श्रीमयूरेश्वर उवाच ॥ परम्पराचारित्रं तु गुरूणामादिनाथतः ॥ श्रीमद्भ्यःश्रोतुमिच्छामि कोन्यो वक्तास्ति भूतले ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ गुरवोनंतचारितास्त्वनंताः शक्तिविक्रमैः ॥ तेषां गुणगणान्वक्तुं कः क्षमो भुवि वा दिवि ॥ १६ ॥ गणेशस्य रवेः शक्तेर्विष्णोः श्रीशंकरस्य च ॥ पुराणेषु चरित्राणि कथितानि ह्यनेकशः ॥ १७ ॥ तथापि तानि पूर्णानि नेति व्यासवचः स्फुटम्॥ चरितं पंचदेवानामपि पूर्णं न वै श्रुतम् ॥ १८ ॥ गुरुर्यत्सर्वदेवानामेक एवादधत्तनूः ॥ धीवागगोचरं तस्य चरितं सर्वरूपिणः ॥ १९ ॥

शरीराणि यत् यतः अदधत् दधार सर्वरूपिणस्तस्य चरितं बुद्धिवाण्यगोचरमस्ति । अनंतत्वादेवेत्यर्थः ॥ १९ ॥ एवं सार्वात्म्येनावर्णनीयं गुरुचारित्र मुपपाद्य किंचिद्वर्णने यथाशक्त्यधिकारं संभावयति॥ तथापीति । भक्त्या प्राप्यं यत् विशेषेण तव श्रवणौत्सुक्यं तस्माद्धेतोः यथाश्रुतं तत्रापि किंचित्प्रोच्यते मयेति शेषः ॥ २० ॥ तत्रादौ तंत्रप्रसिद्धं गुरूणां त्रिविधभेदमाह ॥ त्रिविधा इति द्वाभ्याम् ॥ दिव्यौघसिद्धौघमानवौघभेदात्त्रिविधाः ॥ दिवि प्रादुर्भूतास्ते दिव्याः ॥२१॥ सिद्धलोके प्रादुर्भूताः सिद्धाः । शंकराचार्यात्स्वगुरुपर्यंता मनुष्यलोके प्रादुर्भूताः मानवाः । गुरोः प्रादुर्भावतिरोभावौ च । "देवानां कार्यसि द्ध्यर्थमाविर्भवति सा यदा । उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते" इतिवत् भक्तदृष्टिकल्पिताविति सर्वत्र ज्ञेयम्॥एवमग्रेपि॥२२॥ पृथगिति ॥ एतेषाम्

तथापि प्रोच्यते किंचिद्यथा गुरुमुखाच्छ्रुतम् ॥ तवातिश्रवणौत्सुक्याद्भक्तिगम्याद्विशेषतः ॥ २० ॥ त्रिविधा गुरवः प्रोक्ता दिव्याः सिद्धाश्च मानवाः ॥ आदिनाथादितो ब्रह्मशक्त्यंता दिव्यसंज्ञकाः ॥ २१ ॥ सनकाद्यास्तु गोविंदयोग्यंताः सिद्धसंज्ञकाः ॥ तथा श्रीशंकराचार्यात्स्वगुर्वन्तास्तु मानवाः ॥ २२ ॥ पृथङ्नामानि चैतेषां सविशेषाणि मच्छृणु ॥ आख्यानमपि केषांचित्तत्तत्सि द्धिसमुद्भवम् ॥ २३ ॥ उच्यते किंचिदेवात्र श्रुत्वा गुरुमुखान्मया ॥ बुद्ध्यावधारितं यावत्तावत्त्वं चावधारय ॥ २४ ॥ यद्ब्रह्म शुद्धं निरहं निरीहं स्वांतर्विलीनात्मसमस्तशक्ति ॥ सच्चित्सुखं चैकमनंतपारं तं त्वादिनाथं रुमानताः स्मः ॥ २५ ॥

ओघत्रयस्थगुरूणां नामानि सविशेषाणि तत्तत्कारणविशेषयुक्तानि पृथक् मत् मत्तः शृणु । केषांचित्समुद्भवं सिद्धीनां समुद्भवो यस्मिन् तदाख्यानमपि मत्तः शृणु ॥ २३ ॥ उच्यत इति मया शुकानंदगुरुमुखाद्गुरूणामाख्यानं श्रुत्वा किंचिदुच्यते । यावन्मया बुद्ध्याऽवधारितं निश्चितं तावत् त्वं चावधारय । गुरु संप्रदायप्रवृत्त्यर्थमित्यर्थः ॥ २४ ॥ तत्र तावत् आदिनाथादिब्रह्मशक्त्यंतान् दिव्यौघस्थान्द्वादश गुरूनाह द्वादशभिः । अत्रेदं बोध्यम् । पुराणेषु सृष्टि स्थितिसंहारकर्त्तारो ब्रह्मविष्णुरुद्रास्त्रय एवाधिकारिण उक्ताः । अत्र तु आगमानुसरणेन सृष्टिस्थितिसंहारतिरोधानानुग्रहकर्त्तारो ब्रह्मविष्णुरुद्रेश्वरसदा शिवाः पंचाधिकारिण उच्यंते । तेषां समष्टिरूपः परशिवापरपर्यायः आदिनाथश्चैकश्चेति षट् गुरवो भवंति । तथा वृत्तिभेदेन ब्रह्मादीनां पंचपुरुषाणां एं

शक्तयः तासां समष्टिरूपिणी आदिशक्तिरेकेति शक्तिरूपाः षट् गुरवो भवंतीत्येवं द्वादश गुरवः प्रतिपादिता भवंति ॥ तथा चागमवाक्यम्—" पंचविधं तत्कृत्यं सृष्टिः स्थितिसंस्थिती तिरोभावः ॥ तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य ॥" इति सततोदितस्य नित्यमभिव्यक्तस्यादिनाथस्यैव पंचविधं कृत्यमुक्तम् ॥ सूतसंहितायाम्—"त्रिषु रुद्रो वरिष्ठः स्यात्ततो मायी परः शिवः । मायाविशिष्टात्सर्वज्ञात्सांबः सत्यादिलक्षणः ॥ वरिष्ठो मुनयः साक्षाच्छिवो नात्र विचारणा । शिवाद्वरिष्ठो नैवास्ति मया सत्यं समीरितम्" इति ॥ त्रिषु सृष्टिस्थितिलयकर्तृषु ब्रह्मविष्णुरुद्रेषु रुद्रो वरिष्ठः श्रेष्ठः ॥ ततो मायी शिवः मायोपाधिरीश्वरस्तिरोधानकर्त्ता ॥ तस्मान्मायाविशिष्टात्सांबः शुद्धविद्यावृत्तिमान् अनुग्रहकर्ता सदाशिवः ॥ ततः सांबाद्वरिष्ठः साक्षाच्छिवः । लीनवृत्तिरादिनाथः ॥ साक्षाच्छब्देन लीनवृत्तित्वमुक्तम् । मुनय इति शौनकादेः संबोधनम् ॥ यथा वृत्तिभिन्नात्मचिन्तनातिशयेन कश्चित्पुमानात्मानं विस्मरति लीनवृत्तित्वसाम्यात्तथा[illegible]दिनाथः । वस्तुतस्तु अखंडः स्वप्रकाशो निरतिशयानंदमयः सर्वाधिष्ठानतया सदात्मन्येव स्थित आदिनाथः। तस्यानंतशक्तिसमूहसमष्टिरूपिणी तदभिन्ना आदिशक्तिः । किं च आदिनाथाख्यं परं ब्रह्म स्वत एवानंतशक्तिकमित्युक्तं योगवासिष्ठे—'सर्वशक्तिमयं ब्रह्म नित्यमापूर्णमव्ययम्' इति॥ आदिशक्तेरेव शुद्धविद्यादिभेदैः पंचशक्तिभिरप्यनुग्रहतिरोधानसंहारपालनसर्जनरूपाणि पंच कृत्यानि विश्वस्य भवंति॥ तदुक्तं ब्रह्मांडपुराणे—"सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविंदरूपिणी ॥ संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ॥ सदाशिवानुग्रहदा पंचकृत्यपरायणा " इति ॥ शक्तिशक्तिमतोरभेदाच्छक्तेरेव सर्वकर्मकर्तृत्वाच्च ब्रह्मादीनां तत्तत्कर्मकर्तृणां ब्रह्मशक्त्यादिपंचशक्तीनामधिष्ठात्री समष्टिरूपा आदिनाथाभिन्ना आदिशक्तिरेव तथैव निर्गुणनिराकारनिराकारसगुणसगुणसाकारादि[illegible]रूपशक्तिकसदाशिवेश्वररुद्रविष्णुब्रह्मस्वरूपपंचकर्त्रधिष्ठानभूतः समष्टिरूप आदिशक्त्यभिन्न आदिनाथ इत्येवं व्यष्टिसमष्टिभेदांगीकारेण वृत्तिभेदाच्छक्ति[illegible]क्तिमतोर्भेदांगीकारेण च द्वादशगुरूणां व्यवस्था ज्ञेया तत्र सर्वकारणं सर्वाधिष्ठातारमादिनाथं प्रथमगुरुमेकपद्येन प्रणमति । यद्ब्रह्मेति ॥ यत् शुद्धं विकाररहितम् । यतो निरहम् अहंकाररहितम् । अत एव निरीहं निरिच्छम् । तत्कुतः । यतः स्वांतर्विलीनात्मसमस्तशक्ति स्वस्मिन् अंतर्विलीनाः अंतर्भागे विशेषेण लीनाः आत्मसंबन्धिन्यः समस्तशक्तयो यस्य तत् । अत एव सच्चित्सुखं सच्चिदानंदरूपम् एकमद्वितीयम् अनंतं देशकालवस्तुपरिच्छेदरहितम् । अपारं च एकत्वादिसंख्यातीतम् । अनंतपारमित्यत्र द्वंद्वादिभूतस्य नञः उभयसंबन्धित्वम् ।द्वंद्वादौ द्वंद्वांते च श्रूयमाणं पदं प्रत्येकमभिसंबध्यत इत्यनुशास

नात। ईदृशं यद्ब्रह्म तम् आदिनाथसंज्ञकं त्वा त्वां गुरुं वयम् आनताः आसमन्तात् नम्राः स्मो भवामः। बहुवचनं वक्तृश्रोत्रभिप्रायेण। एवं सर्वत्र ॥ यद्ब्रह्मेति उद्देश्यं तमादिनाथमिति विधेयम्। तेन पुन्नपुंसकयोर्विशेष्यविशेषणभावः।एवं सर्वत्रोद्देश्यविधेयस्थले भिन्नलिंगयोरपि विशेष्यविशेषणभावो बोध्यः। तथा च श्रुतयः—"एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किंचन,नासदासीन्नोसदासीत्तदानीम्"इत्याद्या आदिनाथस्य लीनवृत्तित्वे प्रमाणमित्यर्थः॥ इंद्रवज्रा वृत्तम्।"स्यादिन्द्रवज्रा यदि तौ जगौ गः" इति तल्लक्षणात् ॥ २५ ॥ आदिनाथाभिन्नाम् आदिशक्तिं द्वितीयं गुरुं प्रणमति ॥ या इति ॥ तद्विलीनास्तस्मिन्नादिनाथे विशेषेण प्रलयादौ लीनाः याः अनंतशक्तयः स्युः तत्स्वरूपिणी ब्रह्मणः सकाशादाद्यभिन्ना आदेः आदितः आदिनाथतः आरभ्य अभिन्ना ऐक्यरूपिणीत्यर्थः ॥ केव निद्रांते निद्रावसाने उत्थितस्य देहबुद्धिमप्राप्तस्य नरस्य या आद्या प्रथमा सुषुप्तिसुखाभिन्नाऽस्मीत्येवंरूपा वृत्तिर्भवति निद्रांतपदेन सृष्ट्यारम्भः सूचितः। प्रथमवृत्तिरूपाम् तामादिशक्तिम्। आदिनाथशक्तिं द्वितीयं गुरुं नताः प्रणताः स्मः भवामः॥तथाचोक्तं ब्रह्मांडपुराणे।'श्रीशिवा

यास्तद्विलीनामितशक्तयः स्युस्तद्रूपिणी ब्रह्मण आद्यभिन्ना ॥ निद्रांत आद्येव नरस्य वृत्तिर्नताः स्म तां शक्तिगुरुं द्वितीयम्॥२६॥
तया विशिष्टस्तु स आदिनाथो निराकृतिर्निर्गुण उच्यतेऽसौ ॥ वृत्त्यन्यगोनुग्रहवाँस्तृतीयं सदाशिवं तं गुरुमानताः स्मः ॥ २७ ॥

शिवशक्त्यैक्यरूपिणी ललितांबिका' ॥ वायवीयसंहितायाम्। "शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता ॥ ततः परिस्फुरत्यादौ सर्गे तैलतिलादिवत्" इति। यथा—तैलं तिलेभ्यः अभिन्नं तथेयमित्यर्थः। सौरसंहितायाम्—"ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नापरा॥तथा सति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः"॥ शक्तिशक्तिमतोर्विद्वन्भेदाभेदस्तु दुर्घट इति ॥ यद्यपि आदिनाथाभिन्नैवादिशक्तिः। तथापि वृत्तिभेदादुपासनार्थं पृथगुपादानमिति भावः ॥ २६ ॥ सदाशिवाख्यं तृतीयं गुरुं प्रणमति। तयेति । स पूर्वोक्त आदिनाथः अस्मीत्येवंरूपया आदिशक्त्या विशिष्टस्तद्वृत्तिमान्सन् असौ आवृत्तिरहितो गुणरहितश्च उच्यते। ननु वृत्तिमत्त्वेन निरावृत्तित्वं निर्गुणत्वं व्याहतं स्यात। वृत्तेरेव तत्र गुणत्वादित्यत आह ॥ वृत्त्यन्यग इति ॥ वृत्त्यन्येन वृत्तिशून्येन गम्यते प्राप्यतेऽसौ वृत्त्यन्यगः। वृत्तिशून्यसाक्षात्कारगम्य इति यावत्। तथापि गुणरहितोपि अनुग्रहवान् अनुग्रहकर्ता सदाशिवः। अनुग्रहो नाम निरवशेषध्वंसमप्राप्तस्य

जगतः सृष्ट्यादौ पुनः परमाणुरूपतापत्तिरिति भाष्ये भास्करपादैरुक्तत्वात् । तादृशानुग्रहकर्त्तारं सदाशिवानंदनाथं तृतीयं गुरुं वयमानताः स्मः अस्मी त्याकारकवृत्त्याश्रयत्वेनानुग्रहकर्तृत्वम् वस्तुतस्तु निर्गुणनिराकारत्वमेव सदाशिवस्य 'साक्षी चेता केवलो निर्गुणश्च' इति श्रुतेरित्यर्थः।उपजातिवृत्तम्॥ "अनंत रोदीरितपूर्वभाजौ पादौ यदीया उपजातयस्ताः इति लक्षणात् ॥२७॥ सदाशिवशक्त्यंबां चतुर्थं गुरुं प्रणमति ॥ तदुत्थितेति ॥ स्वत एव तस्मात्सदाशिवा दुत्थिता प्रादुर्भूता या वृत्तिः एकोहं न रम इत्येवंरूपा ईडया स्तुत्या 'स एकाकी नारमते' इति श्रुतेः । तां शुद्धविद्यां विषयानुल्लेखाच्छुद्धत्वमिति यावत् । सदाशिवसंबन्धिनीं सदाशिवशक्त्यंबां चतुर्थं गुरुम् आनताः स्मः । इयं शुद्धविद्यारूपा मूलप्रकृतिरित्यर्थः ॥ २८ ॥ ईश्वरानंदं पंचमगुरुं प्रणमति ॥ तद्वानिति ॥ तद्वान् एकोहं नरम इति वृत्त्यभिमानवान् । शुद्धविद्याशक्तिमानिति यावत् । अरूपः रूपम् आकारस्तद्रहितो निराकारः

तदुत्थिता या स्वत एव वृत्तिः श्रुत्या स नैको रमते त्वितीड्या ॥ तां शुद्धविद्यां च सदाशिवीयां शक्तिं चतुर्थीं गुरुमानताः स्मः ॥
॥ २८ ॥ तद्वानरूपः सगुणः स जातस्त्वपादपाणिः श्रुतिवाक्प्रसिद्धः ॥ तिरोहितं तिष्ठति विश्वमस्मिंस्तमीश्वरं पंचममानताः स्मः ॥
॥२९॥ द्वितीयमैच्छच्छ्रुतिवर्णिता या तद्वृत्तिरस्मान्महदादिगर्भम्॥ धत्तेन्तरे तां वयमीश्वरस्य शक्तिं तु षष्ठं गुरुमानताः स्मः ॥३०॥

इत्यर्थः ॥ एतादृशोपि सगुणः ज्ञानादिगुणवान् जातः वृत्तिविशिष्टत्वेन जात इव जातः । 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति श्रुतिवाचि प्रसिद्धोस्ति अस्मिन्नीश्वरे विश्वं जगत् तिरोहितं पूर्वप्रलयकाले क्षीणवासनत्वेनाच्छादितं सत्तिष्ठति सृष्टिकाले पुनः सर्जनार्थम् अभेदरूपेण वर्तत इत्यर्थः ॥ तम् ईश्वरानंदं पंचमं गुरुमानताः स्मः । अयमेव निराकार सगुणउच्यत इत्यर्थः उपजातिवृत्तम् ॥ २९ ॥ ईश्वरशक्त्यंबां षष्ठं गुरुं प्रणमति । द्वितीयमिति । 'स द्वितीयमैच्छत्' इति श्रुतेः । स ईश्वरः द्वितीयं प्रधानमैच्छत् इति श्रुतौ वर्णितायां तस्येश्वरस्य वृत्तिः अस्मा दीश्वरान्महत्तत्वादीनां गर्भम् अन्तरे स्वांतर्भागे धत्ते धारयति ताम् ईश्वरस्य शक्तिं षष्ठं गुरुं वयमानताः स्मः । द्वितीयेच्छारूपत्वेन इयमेव गुणगर्भिणी

त्युच्यत इत्यर्थः ॥ ३० ॥ सगुणसाकाररूपं रुद्रगुरुं प्रणमति । तद्युग्गुणेति । यः तद्युक् द्वितीयेच्छावृत्त्या गुणगार्भिण्याशक्त्या युक् युक्तः । गुणाढ्याकृति मान् सत्त्वगुणशरीरवान् सः यातेरुद्रेति वेदोक्तवचसि प्रसिद्धोऽस्ति । लयीकृतं संहृतं विश्वमस्मिन् लयकर्तरि रुद्रे तिष्ठति अभेदेन वर्तते सृष्टिसमये 'एकोऽहं बहुस्याम्' मिति संकल्पेन सर्जनार्थं वर्तत इत्यर्थः । तं सप्तमं रुद्रगुरुं वयं नताः स्मः । तथा च श्रुतिः—"या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तन्वा शंतमया गिरिशंताभिचाकशीहि ॥ " अस्या अयमर्थः । हेरुद्र आघोरा शांता अपापकाशिनी प्राचीनपुण्येन प्रकाशमाना शिवा कल्याणी या तव तनूः सगुणसाकाररूपा अस्ति तया शंतमया । सुखरूपतया तन्वा गिरिशंत हेगिरिश नः अस्मान् अभिचाकशि बहुस्यामिति संकल्पेन प्रकाशयसि हि इति निश्चये ॥ अतः परं सगुणसाकारा एव गुरवो ज्ञेया इत्यर्थः ॥ ३१ ॥ रुद्रशक्त्यंबामष्टमं गुरुं नमस्करोति अहमिति । तदुत्थिता न[illegible]

तद्युग्गुणाढ्याकृतिमान्स या ते रुद्रेति वेदोक्तवचःप्रसिद्धः ॥ लयीकृतं तिष्ठति विश्वमस्मिंस्तं सप्तमं रुद्रगुरुं नताः स्मः ॥ ३१ ॥ अहं बहु स्यामिति या तदुत्था वृत्तिर्जनित्री महदादिकानाम् ॥ पृथक्पृथक्कृत्य च रुद्रशक्तिं तमष्टमं स्वीयगुरुं नताः स्मः ॥३२॥ व्याप्नो ति तद्युक् स महन्मुखेषु तत्त्वेषु तेजस्त्वखिलं स्वकीयम् ॥ निधाय तत्स्थं परिपाति विश्वं विष्णुं गुरुं तं नवमं नताः स्मः ॥ ३३ ॥

रुद्रादुत्था उत्पन्ना अहं बहु बहुधा स्यां भवानीत्याकारा या वृत्तिः महदादीनां महत्तत्त्वादीनां पृथङ्महत्तत्त्वाहंकारतन्मात्रेंद्रियदेवताः पंचपर्वाविद्या भेदेन जनित्री जनयित्री तां रुद्रशक्तिमष्टमं स्वीयं स्वकीयं गुरुं नताः स्मः । 'एकोहं बहुस्याम्' इति श्रुत्या इयमेव गुणक्षोभिणीत्युच्यते महदादितत्त्वभे दकत्वादिति भावः ॥ ३२ ॥ नवमं विष्णुगुरुं नमस्करोति । व्याप्नोतीति । यः तद्युक् बहुस्यामिति वृत्तिरूपगुणक्षोभिणीयुक्तः सः महन्मुखेषु महदादिषु तत्त्वेषु व्याप्नोति व्याप्तो भवति स्वकीयम् अखिलं तेजो निधाय स्थापयित्वा तत्स्थं तत्त्वस्थं विश्वं परिपाति जीवयति तं विष्णुगुरुं नताः स्मः । तथा च श्रुतिः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मेति अत्र भूतपदं तत्त्वपरम् । प्रकरणात् ।

परस्परं विरुद्धानामपि तत्त्वानां स्वतेजोनिधानेन सूत्रीकरणादेकीकरणादयं सूत्रात्मेति भावः ॥ ३३ ॥ विष्णुशक्तिं दशमं गुरुं प्रणमति । पुष्णामीति ॥ अहं मदीयशक्त्या स्वसामर्थ्येन स्वकीयम् आत्मीयमिदं तत्त्वगतं विश्वं पुष्णामि पुष्टं करोमि इत्थंरूपा विष्णोः सम्बन्धिनी या वृत्तिः तत्त्वांतरगतं विश्वं पुष्णाति तां विष्णुशक्तिं नताः स्मः । तथा च ब्रह्मांडपुराणे—'क्षेत्रक्षेत्रज्ञपालिनी इति देवी नामनिर्देशात् । तत्र क्षेत्रशब्देन तत्त्वमयं ब्रह्मांडं शरीरं वा क्षेत्रज्ञः समष्टिव्यष्टिजीवौ वा तौ पालयति सा विष्णुशक्तिरित्यर्थः ॥ ३४ ॥ ब्रह्माणमेकादशं गुरुं प्रणमति । तत्त्वांतरस्थमिति । यस्तत्त्वांतरस्थं तत्त्वांतरगतम् एतत् प्रसिद्धं जगत् अन्तः स्वहृदये स्ववृत्त्या विश्वं पुष्णामीति वृत्त्या पश्यन् सन् सः जगच्चिंतनेन विराड् बभूव । कोसौ विराडित्यत आह । समष्टीति । समष्टिजीवः सर्वजीवसमूहरूपः अखिलसृट् सर्वजगत्स्रष्टा विधाता ब्रह्मा आसीत् तमेकादशं गुरुम् आनताः स्मः । 'हिरण्यगर्भः समवर्तताग्रे

पुष्णाम्यहं विश्वमिदं स्वकीयं मदीयशक्त्येति मदीयवृत्तिः ॥ पुष्णाति तत्त्वांतरगं तु विश्वं तां विष्णुशक्तिं दशमं नताः स्मः ॥ ३४ ॥
तत्त्वांतरस्थं जगदित्थमंतः पश्यन्स्ववृत्त्या स विराड् बभूव ॥ समष्टिजीवोऽखिलसृड्विधाता गुरुं तमेकादशमानताः स्मः ॥ ३५ ॥
यज्ञादिकं चात्मभवाः सुखाप्त्यै कुर्वंतु जीवा इति यास्य वृत्तिः ॥ वेदत्रयी कर्ममयी किलाजशक्तिं गुरुं द्वादशमानताः स्मः ॥ ३६ ॥

भूतस्य जातः पतिरेक आसीत्' इति श्रुतौ भूतस्य पतिरेक इत्यनेनास्य ब्रह्मणः समष्टिजीवत्वमिति भावः ॥ ३५ ॥ वेदत्रयीरूपां ब्रह्मशक्तिं द्वादशं गुरुं प्रणमति । यज्ञादिकमिति । आत्मभवाः आत्मप्रभवाः जीवाः सुखाप्त्यै सुखप्राप्त्यर्थं यज्ञादिकं कर्म कुर्वंतु इति या वेदत्रयीरूपा कर्ममयी वर्णाश्रमादिकर्मरूपा च अस्य ब्रह्मणः वृत्तिः किल निश्चयेन । अथर्वणवेदस्य यज्ञानुपयुक्तत्वात्त्रयीग्रहणम् । ताम् अजशक्तिं ब्रह्मशक्तिं द्वादशं गुरुम् आनताः स्मः इति यत्तदोः संबंधः । तथा च कूर्मपुराणे हिमवन्तं प्रति देवीवचनम्—"ममैवान्या परा शक्तिर्वेदसंज्ञा पुरातनी । ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते ॥ श्रुतिस्मृत्युदितं कर्म सम्यग्वर्णाश्रमात्मकम् । अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥ धर्मात्संजायते भक्तिर्भक्त्या संज्ञायते परम् । श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥ नान्यतो ज्ञायते कर्म वेदाद्धर्मोहि निर्बभौ । तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपमिदमाश्रयेत् ॥ मदाज्ञयैव गुप्त्यर्थं वेदानां भगवानजः ॥

ब्राह्मणादीन्ससर्जाथ स्वेस्वे कर्मण्ययोजयत्" इत्यादिषु वेदत्रय्याः स्वस्वधर्मादिकर्ममयत्वेन कदाचिद् ध्यायतः स्रष्टुर्वेदाः आसंश्चतुर्मुखात्" इति विष्णु भागवते ब्रह्ममुखप्रादुर्भूतत्वेन च ब्रह्मशक्तित्वमिति भावः ॥ ३६ ॥ एवं दिव्यौघस्थद्वादशगुरूनुक्त्वा तत्स्वरूपश्रवणफलमाह । आदिनाथमुखत इति । हे अनघ दिव्यादिव्यसंज्ञिकाः आदिनाथमुखतः आदिनाथप्रमुखतो द्वादशैव गुरवस्ते तुभ्यं कथिताः स्वरूपतो निरूपिताः शृण्वतामघहराः पापहराः पठतां पाठकर्तॄणां च भौमदिव्यसुखसद्गतिदाः भौमसुखं स्वर्गसुखं सद्गतिमुत्तमगतिं च दातारो भवंति । स्वागतावृत्तम्—"स्वागतेति रनभाद्गुरुयुग्मम्" इति

आदिनाथमुखतः कथितास्ते द्वादशैव गुरवोनघ दिव्याः ॥ शृण्वतामघहराः पठतां वै भौमदिव्यसुखसद्गतिदाः स्युः ॥ ३७ ॥ इति श्रीमद्गुरुपरंपराचारित्रे पूर्वार्द्धे ब्रह्मशक्त्यंतदिव्यौघकथनं नाम प्रथमः सर्गः ॥ १ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ सिद्धान् गुरून्वक्ष्ये शृणुष्वावहितांतरः ॥ येषां श्रवणमात्रेण यांति सिद्धिं तु भावुकाः ॥ १ ॥ ब्रह्मा यः कथितः पूर्वं गुरुरेकादशो विराट् ॥ तस्य शक्तिः क्रियारूपा प्रोक्ता च द्वादशी तथा ॥ २ ॥ गुरुणा स समादिष्टो विष्णुना विश्वसृष्टये ॥ तदाज्ञया स्वशक्त्याढ्यो विश्वं स्रष्टुं प्रचक्रमे ॥ ३ ॥ कथं भवेत्सृष्टिरिति चिंताकुलितचेतसः ॥ अविद्या चाभवत्पूर्वं पंचपर्वाथ वेधसः ॥ ४ ॥ प्रसिद्धा सा पुराणेषु ज्ञानावरणकारिणी ॥ विधिस्तस्यां निर्गतायां बभूव विमलांतरः ॥ ५ ॥ ततः सृष्टिं ध्यायतस्तु ब्रह्मणो मनसस्तदा ॥ सनकाद्याः सुताः पंच बभूवुर्विश्वपूर्वजाः ॥ ६ ॥

तल्लक्षणात् ॥ ३७ ॥ इति श्रीमद्गुरुपरम्पराचारित्रे पूर्वार्द्धेऽर्थबोधिन्यामर्थस्फूर्त्यभिधायां टीकायां प्रथमः सर्गः ॥ १ ॥ पंचाशत्पद्यवर्यैस्तु द्वितीये सनकादिकान् ॥ पंचोक्त्वा व्यतिरेकेण निदाघर्भुकथोच्यते ॥ १ ॥ दिव्यौघमुक्त्वा सिद्धौघस्थान् गुरून् वक्तुमुपक्रमते ॥ अथेत्यादिना । अवहितांतरः सावधानचित्तः ॥ १ ॥ विराडाख्यो यो ब्रह्मा कथितस्तस्य कर्मरूपा त्रयीनाम्नी ब्रह्मशक्तिश्च द्वादशी पूर्वसर्गे प्रोक्ता ॥ २ ॥ स ब्रह्मा ॥ ३ ॥ तामिस्रान्धतामिस्र तमोमोहमहातमरूपा पंचपर्वाऽविद्या वेधसो ब्रह्मणः छायातोऽभवत् ॥ ४ ॥ ज्ञानस्य आवरणकारिणी लोपकर्त्री ॥ ५ ॥ तत इति ॥ सृष्टिंकर्तुमिति शेषः

विश्वेषां सर्वेषां मध्ये पूर्वजाः प्रथमभवाः ॥ ६ ॥ सनक इति आर्यागीतिः । तल्लक्षणं तु—"आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजंगेशः" इति ॥ ७ ॥ दृष्ट्वेति ॥ ब्रह्मशक्तिसहितो धाता ब्रह्मा तान्सनकादिकान् दृष्ट्वा संतुष्टो बभूवेत्यन्वयः ॥ ८ ॥ सप्तकोटिमहामंत्रानित्यादि ॥ ब्रह्मा स्वशक्तये प्रोचे कथितवानिति तृतीयश्लोकस्थैः पदैरन्वयः ॥ अंगोपांगे पूर्वांगोत्तरांगे रहस्यं मंत्रार्थादि तत्सहितान् । ज्ञानं शास्त्रजन्यं परोक्षं विज्ञानम् अनुभवजन्यम् । अपरोक्षम् । योगः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपः । मुद्राः खेचर्यादयः । तत्समन्वितान् ॥ ९ ॥ चतुःषष्टिः तत्संख्याकानि तंत्राणि । यस्मिन् उपासनाक्रमः उपासनाविधिरस्ति ॥ यदिदं ब्रह्मणे

सनकः सनंदनाख्यः सनातनोथो सनत्कुमारश्च ॥ अंत्यः सनत्सुजात इति विख्याताः स्वनामभिः शुद्धाः ॥ ७ ॥ दृष्ट्वा तान्त्सूर्यसंकाशान्त्सुशांतान्त्संयतेंद्रियान् ॥ तुष्टो बभूव धातापि स्वशक्तिसहितः प्रभुः ॥ ८ ॥ सप्तकोटिमहामंत्रान्सांगोपांगरहस्यकान् ॥ ज्ञानविज्ञानसहितान्योगमुद्रासमन्वितान् ॥ ९ ॥ चतुष्षष्टिश्च तन्त्राणि महेशः समुपादिशत् ॥ उपासनाक्रमो यस्मिन्देवतानां पृथक् पृथक् ॥ १० ॥ अखिलं तत्तथान्यच्च नानासाधनलक्षणम् ॥ प्रोचे स्वशक्तये ब्रह्मा सनकाय तु साब्रवीत् ॥ ११ ॥ आद्यसिद्धो भवत्सोथ सर्वसिद्धेश्वरः सुधीः ॥ ज्येष्ठावरक्रमात्सर्वे गुरुशिष्याश्च ते भवन् ॥ १२ ॥ स आद्यसिद्धः कथितः सुसिद्धैर्यस्माद्गताः सिद्धिमनेकसिद्धाः ॥ तं सिद्धपूज्यं सनकं मुनींद्रं त्रयोदशं स्वीयगुरुं नताः स्मः ॥ १३ ॥

शिवः उपदिदेश ॥ १० ॥ अखिलमिति ॥ तत्सर्वं पूर्वोक्तम् । तथा नानासाधनानां लक्षणानि यस्मिन् तत् । अन्यत् गुरुमुखैकवेद्यं च प्रोचे ॥ सा ब्रह्मशक्तिः सनकानंदायाब्रवीत् ॥ पूर्वोक्तमिति शेषः ॥ एतेषां साधनानां मंत्रशास्त्रप्रसिद्धत्वेन गुरुमुखैकवेद्यत्वाद्वाऽव्याख्यानमिति बोध्यम् ॥ ॥ ११ ॥ आद्येति ॥ सर्वसिद्धानां सिद्धौघस्थगुरूणाम् ईश्वरोऽनुग्रहकर्ता आसीत् ॥ ते सर्वे ब्रह्मपुत्राः ज्येष्ठावरक्रमेण गुरुशिष्या बभूवुः ॥ १२ ॥ तत्र त्रयोदशं सनकानंदगुरुं प्रणमति ॥ स इति ॥ सुसिद्धैरुत्तमसिद्धैः आद्यो मुख्यः सिद्धः कथितस्तं त्रयोदशं गुरुं नताः स्मः ॥ उपजातिवृत्तम् ॥ १३ ॥

सनंदनानंदं चतुर्दशं गुरुं प्रणमति ॥ कनीयस इति ॥ असौ सनकः कनीयसे कनिष्ठाय सनंदनाय रहस्यं पूर्वोक्तमंत्रादिकं प्राह ॥ अथ रहस्योपदेशानंतरं सः सनंदनः आनंदयुक्तोऽभूत् वयं तमानताः स्मः ॥ १४ ॥ सनातनानंदं पंचदशं गुरुं प्रणमति ॥ भ्रातुरिति ॥ अथ वरिष्ठात् ज्येष्ठात् भ्रातुः सनंदनात्सर्वं मंत्ररहस्यादिकं संप्राप्य सनातने प्राचीनेऽद्वितीये ब्रह्मणि धृतमानसः लग्नचित्तः अभूत्तममुं बुद्धिस्थं सनातनानंदं नताः स्मः ॥ उपजातिवृत्तम् ॥ ॥ १५ ॥ सनत्कुमारानंदं षोडशं गुरुं प्रणमति ॥ प्रापेति ॥ अस्मात्सनातनादवरः कनिष्ठः सनत्कुमाराख्यः मंत्रादिरूपम् अभीष्टं प्रियं सर्वं रहस्यं प्राप तु पुनः यः सनत्कुमारः पृथवे पृथुराजाय आद्यं मुख्यम् आत्मतत्त्वमुवाच तमानताःस्मः ॥ तथा चोक्तं विष्णुभागवते चतुर्थस्कंधे-"एष स्वसद्मोपवने

कनीयसे प्राह स सोदराय सर्वं रहस्यं शरणागताय ॥ स्वानंदयुक्तोथ सनंदनोभूच्चतुर्दशं तं गुरुमानताः स्मः ॥ १४ ॥ भ्रातुर्वरिष्ठाच्च सनातनोथ संप्राप्य सर्वं धृतमानसोभूत् ॥ सनातने ब्रह्मणि चाद्वयेऽमुं स्वीयं गुरुं पंचदशं नताः स्मः ॥ १५ ॥ प्रापावरोऽस्माच्च सनत्कुमारो मंत्राद्यभीष्टं त्वखिलं रहस्यम् ॥ य आत्मतत्त्वं पृथवेऽवदच्च तं षोडशं सद्गुरुमानताः स्मः ॥ १६ ॥ सनत्कुमारोदितसंहितास्यै सनंदनो योगभवान्यमूर्तिः ॥ सप्तेंदुसंख्यं मनुविद्वरिष्ठं सनत्सुजातं गुरुमानताः स्मः ॥१७॥ ऋभ्वाख्यः सनकादीनामवरो ब्रह्मणः सुतः ॥ जातोस्य मानसादेव जन्मनैवात्मवित्तमः॥१८॥सर्वमात्मनि संपश्यन्नात्मानं विश्वसंस्थितम् ॥ न भेदोऽहन्त्वमित्यादिरीषदप्यस्य चेतसि ॥ १९ ॥ बंधुं सनत्सुजाताख्यमृभुः स शरणं गतः ॥ संप्रदायप्रवृत्त्यर्थमात्मवानपि भक्तितः ॥ २० ॥

समेत्य सनत्कुमारं भगवंतमेकम् ॥ आराध्य भक्त्याऽलभतामलं तज्ज्ञानं यतो ब्रह्म परं वदंति" इति ॥ १६ ॥ सनत्सुजातानंदं सप्तदशं गुरुं प्रणमति सनत्कुमारोदितेति ॥ सनंदन एव सनत्कुमारोक्तसंहिताप्राप्त्यर्थं योगेन तद्बलेन तत्सामर्थ्येन भवा उत्पन्ना अन्या मूर्तिर्देहो यस्य द्वितीयदेहवान्यस्तं मनुविद्वरिष्ठं मंत्रवित्सु वरिष्ठं महाज्ञानिश्रेष्ठं सप्तदशसंख्यं सनत्सुजातानंदं नताः स्मः ॥ विद्वद्वरिष्ठत्वं चास्य भारते उद्योगपर्वणि सनत्सुजातीये प्रसिद्धम् ॥ ज्येष्ठोपि कनिष्ठात्संहितां लब्धुं रूपांतरं धृतवानित्यर्थः ॥ १७ ॥ सनत्सुजातानंतरम् ऋभ्वानंदः संप्रदायप्रवर्तको जात इत्याह ॥ ऋभ्वाख्य इत्यादिभिः। पंचभिः ॥ अस्य ब्रह्मणः मानसात् मनसः ॥ १८ ॥ १९ ॥ आत्मवान् आत्मज्ञानवानपि संप्रदायप्रवृत्त्यर्थं सनत्सुजातानंदं शरणं गतः ॥ २० ॥

सदा संतुष्टः सन् वसुधातले चचारेति सार्द्धेनान्वयः ॥ २१ ॥ सर्वत्र आत्मनिकेतन आत्मदृष्टिः ॥ २२ ॥ तस्यैव ऋभुज्ञानदंनामवटकं क्षयापिकयं कथयन् विष्णुपुराणकथामाह ॥ एवमित्यादिना ॥ २३ ॥ यत् यतः वेदतत्त्वं वेदार्थानां तात्पर्योपलक्षितमर्थं न वेत्सि ततः वेदैः तदध्ययनेन फलं नेत्यर्थः ॥ २४ ॥ तत्त्वलब्धये ज्ञानप्राप्तये ॥ २५ ॥ स्वपितुः पुलस्त्यस्य ऋभुणा गुरुणा सह ॥ २६ ॥ यत आत्मतत्त्वं हृदि मनसि ज्ञात्वा निश्चित्य

ज्ञानं योगं मनून्सर्वान्संप्रदायक्रमादृभुः ॥ लब्ध्वा सनत्सुजाताख्याद्गुरोः संतुष्टधीः सदा ॥ २१ ॥ चचार वसुधापृष्ठे विक्षेपादि विवर्जितः ॥ नाश्रमं कुत्रचिच्चक्रे सर्वत्रात्मनिकेतनः ॥ २२ ॥ एवमुर्व्यां चरन्तं तमृभुमात्मविदां वरम् ॥ पुलस्त्यतनयोपश्य न्निदाघाख्योऽञ्जसागतम् ॥ २३ ॥ वेदाधीतिरतं दृष्ट्वा निदाघं पितुराश्रमे ॥ ऋभुस्तं प्राह किं वेदैर्वेदतत्त्वं न वेत्सि यत् ॥ २४ ॥ श्रुत्वा निदाघस्तं प्राह ब्रूहि तत्त्वं किमस्ति तत् ॥ इत्युक्त्वा तं ननामासौ निदाघस्तत्त्वलब्धये ॥ २५ ॥ आश्रमं स्वपितुस्तस्मा निदाघोथ सहर्भुणा ॥ चचार धरणिं तस्य शुश्रूषाभिरतो व्रती ॥ २६ ॥ तस्य शुश्रूषया तुष्टश्चात्मतत्त्वमृभुर्मुदा ॥ निदाघायादि शत्सर्वं यज्ज्ञात्वा हृदि मोदते ॥ २७ ॥ संप्राप्तात्मसुखं प्राह निदाघमृभुरादरात् ॥ गच्छ तात पितुः स्थानं गार्हस्थ्यं कुरु मन्म तात् ॥ २८ ॥ इत्युक्तोथर्भुणा सोपि निदाघः पितरं ययौ ॥ पित्रा कृतविवाहोसौ पृथक्कृत्वा निजाश्रमम् ॥ २९ ॥ निदाघो भार्य या युक्तश्चावसद्गृहधर्मवान् ॥ ऋभुर्ज्ञानदृशा ज्ञात्वा निदाघं कर्मतत्परम् ॥ ३० ॥ बहुवर्षान्तरे ज्ञानं वक्तुं तस्याश्रमं ययौ ॥ देवि कासरितस्तीरे रम्यं वीरपुरं महत् ॥ ३१ ॥

मोदते परमानंदं प्राप्नोति अधिकारीति शेषः ॥ २७ ॥ मन्मतात् मन्मतमाश्रित्य ल्यब्लोपे पंचमी । मदाज्ञयेति यावत् गार्हस्थ्यं गृहस्थाश्रमं कुरु ॥ ॥ २८ ॥ पितुराश्रमात्पृथक् भिन्नं स्वाश्रमं कृत्वा ॥ २९ ॥ गृहधर्मवान् गृहस्थाश्रमकर्मकर्ता ॥ ३० ॥ देविकाख्यायाः नद्यास्तीरे ॥ ३१ ॥

तदा वैश्वदेवस्य काले तमाश्रमं प्राप्तः ॥ ३२ ॥ ३३ ॥ अयं मां गुरुं न ज्ञातवानिति ज्ञात्वा हसन्निति भावः ॥ ३४ ॥ मद्विस्मरणेन विस्मृतात्मतत्त्व मेनमनेकयुक्त्या बोधयामीत्याह ॥ मिष्टान्न इति ॥ कदन्नेन भोजने किं प्रयोजनम् । न किंचिदपि तृप्तिः सुखं वा नेत्यर्थः ॥ यदि दास्यसि तर्हि मिष्टान्नं भोजनं देहि ॥ ३५ ॥ गोधूमपिष्टस्य तंत्वादि तंतुपदेन महाराष्ट्रभाषया ( फेन्या ) ( शेवया ) इत्यादि गृह्यते ॥ गृहे यत्संचितं संगृहीतमस्ति ॥

तस्योपवनदेशेऽभून्निदाघस्याश्रमः शुभः ॥ ऋभुस्तमाश्रमं प्राप्तो वैश्वदेवातिथिस्तदा॥३२॥द्वारस्थं तमृभुं दृष्ट्वा निदाघश्चेदमब्रवीत् ॥ अनायासेन लब्धस्त्वं मध्याह्ने मद्गृहेऽतिथिः ॥ ३३ ॥ भुंक्ष्व भक्ष्यं द्विजश्रेष्ठ मत्पत्न्या पाचितं तु यत् ॥ निदाघस्य वचः श्रुत्वा प्राहेत्थं तं हसन्नृभुः ॥ ३४ ॥ मिष्टान्ने विप्र मे वांछा किं कदन्नेन भोजनम् ॥ मिष्टान्नं पुष्कलं देहि यदि दास्यसि भोजनम् ॥३५॥ पत्नी प्राह निशम्येत्थं निदाघो विप्रभाषणम् ॥ गोधूमपिष्टतंत्वादि गृहे यच्चास्ति संचितम् ॥३६॥ पक्त्वा तच्छर्करायुक्तं देहि विप्राय तुष्यतु ॥ श्रुत्वा पत्न्यपि भर्त्रोक्तं पक्त्वा मिष्टान्नमादरात् ॥ ३७ ॥ सुभोजनं ददौ तस्मै सभर्त्रेऽतिथये भृशम् ॥ भुक्तवंतं द्विजं प्राह निदाघोपि मुदान्वितः ॥ ३८ ॥ जाता किन्नु भवत्तृप्तिर्मिष्टान्नेन द्विजाधुना ॥ निदाघस्य वचः श्रुत्वा तमृभुः प्राह भो द्विज ॥ ३९ ॥ तस्यैव तृप्तिः प्रष्टव्या यत्क्षुधा शमिता त्वया ॥ क्षुदेव नास्ति मे धर्मस्तृप्तिं पृच्छसि मां कथम् ॥४०॥ क्षुत्तृड्धर्माः किलासूनां रसनं मधुरादिवित् ॥ क्षुदर्थं मधुरां मुक्तिं मन इच्छाति भो द्विज ॥ ४१ ॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ अतिथिः संतुष्टो न वेति पृच्छति जातेति । भो द्विजेत्युत्तरान्वयी ॥ ३९ ॥ प्रश्न एव न घटत इत्याह तस्यैवेत्यादिना ॥ ॥ ४० ॥ क्षुधादीनामनात्मधर्मत्वमाह क्षुत्तृडिति । क्षुधातृषारूपो धर्मः असूनां प्राणानामस्ति किलेति प्रसिद्धौ नात्मनः ॥ तथा मधुरादिरसानां वित् वेत्तृ रसनं जिह्वेन्द्रियमस्ति नात्मा ॥ नन्वेवमतस्त्वया मिष्टान्नं कथमिपितमिति चेत्तर्हि इच्छादिधर्मो मनसोस्तीत्याह । क्षुदर्थमिति । क्षुधार्थं क्षुधोप

शमार्थं मधुरां भुक्तिं मिष्टान्नं भोजनं च मनः इच्छति नात्मा । कामसंकल्पादेर्मनोधर्मत्वादित्यर्थः ॥ ४१ ॥ न केवलमेतावत् । अपि तु विषयान् ध्यायंत् मनः इंद्रियैः करणैस्तान्सर्वविषयान् लब्धुं प्राप्तुमिच्छति ॥ कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः श्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुतौ कामशब्देनेच्छाया मनोधर्मत्वमिति भावः । मनः सत्त्वगुणं सत्त्वगुणात्मकमित्युत्तरम् ॥ ४२ ॥ विषया इति ॥ स्वप्नगतो यथा सुखदुःखादि मन्यते तथा जाग्रत्पुमान् जीवः । आत्मनो विस्मृत्याऽज्ञानेन देहबुद्ध्याढ्यः सन् गुणैरेव सुखं दुःखं च मन्यत इति योज्यम् ॥ आत्मा तु न तथेत्याह ।

इंद्रियैर्विषयान्ध्यायन्मनस्ताँल्लब्धुमिच्छति ॥ मनः सत्वगुणं प्रोक्तं राजसानींद्रियाणि च ॥ ४२ ॥ विषयास्तामसा प्रोक्ता इत्येवं गुणकल्पना ॥ गुणैरेव सुखं दुःखं विस्मृत्या चात्मनः पुमान् ॥ ४३ ॥ मन्यते देहबुध्याढ्यो भ्रांतः स्वप्नगतो यथा ॥ त्रिगुणेभ्यः परो ह्यात्मा नित्यः शुद्धो निराकृतिः ॥ ४४ ॥ सुखं दुःखं च गुणजं नेषदप्यात्मनीर्यते ॥ तेजस्व्यपि यथा सूर्यो मेघैर्दूरस्थितैरपि ॥ ॥ ४५ ॥ दृश्यते छन्नवच्चो के तथैवात्मा गुणैस्त्रिभिः ॥ मायोत्थास्त्रिगुणाः प्रोक्ता माया विस्मृतिरात्मनः ॥ ४६ ॥ तया विस्मृत्य चात्मानं देही भुंक्ते सुखाऽसुखे ॥ ऋभुणोक्तं निदाघोपि श्रुत्वेत्थं संप्रणम्य च ॥ ४७ ॥ तमिति प्राह कोसि त्वं त्वद्वाक्यैर्मे तमो हतम् ॥ स निदाघं पुनः प्राहाथाचार्योहमृभुस्तव ॥ ४८ ॥

त्रिगुणेभ्य इति । गुणत्रयातीतः । नित्यो बाधारहितः । शुद्धोऽज्ञानादिमलरहित आकृतिरहितश्चास्ति ॥ ४३ ॥ ४४ ॥ गुणजं त्रिगुणकृतं सुखदुःखादि द्वंद्वजातम् ईषत्किंचिदपि आत्मनि न ईर्यते न वर्ण्यते । ज्ञानिभिरिति शेषः ॥ तेजस्व्यपि सूर्यः दूरस्थैरपि मेघैर्यथा छन्नवद्दृश्यते तथात्मा त्रिगुणैश्छन्नवत् आच्छादित इव दृश्यत इत्यन्वयः । अवलोकयितृदृष्ट्याच्छादनेनानाच्छादितोप्याच्छादित इवेतीवार्थः ॥ ४५ ॥ मायोत्था मायाजन्याः ॥ आत्मनः विस्मृतिरज्ञानं माया । मायांशत्वादविद्याया मायात्वमित्यर्थः ॥ ४६ ॥ देही जीवस्तया माययात्मानं विस्मृत्य सुखदुःखे भुंक्ते ॥ उत्तरार्धमुत्तरान्वयि ॥ ४७ ॥ त्वद्वाक्यैर्मे

तमः आज्ञानं हतं दूरीकृतमस्ति स त्वं कोसीत्याह ॥ तवाचार्यो गुरुरहम् ऋभुनामास्मि ॥ ४८ ॥ ४९ ॥ सांगनेन स्त्रीसहितेन निदाघेन तदा श्रेष्ठोपचारैः पूजितः सर्वात्मदृष्टिः ऋभुः ऋषीणां स्थानानि पश्यन् सन् धरां पृथ्वीं चचार ॥ उपजातिवृत्तम् ॥ ५० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां टीकायां द्वितीयः सर्गः ॥ २ ॥ अष्टात्रिंशतश्चवर्यैर्निदाघभूक्तिरन्वयात् ॥ सिद्धेर्नाम ऋभुक्षेति तृतीये कृतमी

त्वां सक्तं कर्मणि ज्ञात्वा ज्ञानं ते वक्तुमागतः ॥ गरुं ज्ञात्वा निदाघोपि पूजयामास चानमन् ॥ ४९ ॥ संपूजितस्तेन च सांगनेन तदा निदाघेन वरोपचारैः ॥ ऋभुश्चचाराथ धरामृषीणां स्थानानि पश्यन्निखिलात्मबुद्धिः ॥५०॥ इति श्रीमद्गुरुपरंपराचरित्रपूर्वार्धे सनकादिपंचगुरुचरितपूर्वकमृभुचरित्रवर्णनं नाम द्वितीसः सर्गः ॥२॥ श्रीदेशिकेंद्र उवाच ॥ स ऋभुर्बहुवर्षांते गां भ्रमन्ब्रह्मवित्तरः ॥ द्रष्टुं निदाघं संप्राप्तस्तन्निवासपुरं पुनः ॥ १ ॥ तदैव तत्पुरस्वामी राजा सेनासमन्वितः ॥ प्रविवेश पुरं प्राप्तो मृगयायाः स्थितो गजे ॥ २ ॥ निदाघोपि तदैवागात्समिद्दर्भयुतो वनात् ॥ संमर्दं पथि सैन्यस्य दृष्ट्वैको दूरतः स्थितः ॥ ३ ॥ तत्समीपमृभुर्गत्वाऽभिवाद्याह हसंश्च तम् ॥ किमेकान्ते स्थितोस्येको भारं शिरसि वै वहन् ॥ ४ ॥ निदाघस्तमृभुं प्राह ससैन्यो नृपतिः पुरम् ॥ विशतीति महानस्ति संमर्दः पथि भो द्विज ॥ ५ ॥ कथं मयात्र गंतव्यं संमर्दस्पर्शभीरुणा ॥ अतो दूरं स्थितोऽस्म्येको गमिष्ये तद्गते नृपे ॥ ६ ॥ निदाघोक्तमिति श्रुत्वा पुनस्तमृभुरब्रवीत् ॥ को राजास्मिन्महत्संघे तं मे दर्शय वेत्सि चेत् ॥ ७ ॥ तच्छ्रुत्वाह निदाघस्तमृभुं चेत्थं द्विजोत्तम ॥ राजा महागजस्थोयं छत्रचामरशोभितः ॥ ८ ॥ अन्ये लघुगजाश्वस्था पादगाश्चास्य सैनिकाः ॥ ऋभुराह पुनश्चेत्थं निदाघं को नृपो द्विज ॥ ९ ॥

र्थेते ॥ ३ ॥ पूर्वाध्यायांते ऋभुणा निदाघायात्मनो व्यतिरेकरीत्या ज्ञानमुक्तम् ॥ तृतीयेऽन्वयेन ज्ञानमुपदिश्य ऋभोः क्षमाधिक्यं कथयति । स ऋभुरित्यादिना । गां पृथ्वीं तत्र प्रसिद्धं तस्य निदाघस्य निवासपुरं वीरपुरं पुनः प्राप्तः ॥ १ ॥ तदैवेति ॥ मृगयायाः सकाशात्प्राप्तः ॥ २ ॥ ३ ॥ तत्समीपमिति ॥ मां गुरुं न ज्ञातवानिति हेतोः हसन् ॥ भारं समिद्दर्भादिसमूहं वहन् धारयन् ॥ ४ ॥ ५ ॥ ६ ॥ निदाघ इति ॥ ७ ॥ ८ ॥ ९ ॥

कइति ॥ नृपेभौ नृपगजौ ॥ १० ॥ ऋभुरिति ॥ उत्तरार्द्धमुत्तरान्वयि । ऊर्ध्वाधोभेदज्ञानाभावाद्भ्रांतः किमिति हसन् ॥ ११ ॥ अथ इति ॥ गजः गज सदृशः नृपः नृपसदृशः ॥ १२ ॥ निदाघे उरसि स्थितेपि क्रोधाभावाच्छांतमतिः ॥ अतः क्षमी क्षमावान् ॥ १३ ॥ १४ ॥ इदं विश्वम् । आत्मन्य धिष्ठाने आभाति ॥ भंगास्तरंगाः । तेषु तरंगेषु ॥ केचित्तिर्यग्गाः तिर्यक् गामिनः ॥ १५ ॥ दृश्यन्त इति ॥ तीरे या रत्नखन्यस्ता गताः ॥ अतः

को गजस्स पृथक्सम्यङ्नृपे भौमे प्रदर्शय ॥ निदाघोथाह चोर्ध्वस्थो नृपोऽधस्थो गजो मुने ॥ १० ॥ ऋभुराह न जानेहमूर्ध्वाधो भेदकल्पनाम् ॥ निदाघोथ शिरोभारमधस्त्यक्त्वा हसन्मुहुः ॥११॥ अधो निपात्य तमृभुं तदुरःस्थोब्रवीत्पुनः ॥ त्वमधःस्थोहमू र्ध्वस्थस्त्वं गजोहं नृपो द्विज ॥ १२ ॥ ऋभुर्निदाघं प्राहेत्थं पुनः शांतमतिः क्षमी ॥ एक एव परो ह्यात्मा नानाभेदस्तु नात्मनि ॥ १३ ॥ को नृपः को गजस्त्वं कः कोहमूर्ध्वमधश्च किम् ॥ सैनिकाः के गजाश्वस्थाः पादगाः के द्विजोत्तम ॥ १४॥ आत्मन्येवे दमाभाति भंगाः सिंधौ यथाखिलाः ॥ तेष्वधोगामिनः केचित्तिर्यग्गाश्चोर्ध्वगाः परे ॥१५॥ दृश्यंते सूज्ज्वलाः केचित्तीरे रत्नखनिंगताः ॥ मृदादिसंगताः केचिद्दृश्यंते मलिनाः परे ॥ १६ ॥ शुद्धाश्चांतर्गताः केचिद्दृश्यंते संगवर्जिताः ॥ भंगा नानाविधाश्चैते न पृथक्सिं धुतः क्वचित् ॥ १७ ॥ तथा नानाविधं विश्वं नात्मनः पृथगीर्यते ॥ येनेदं सर्वमात्मैव दृश्यते स सुखी सदा ॥१८॥ ऋभुणोक्तमिति श्रुत्वा निदाघो ज्ञानयुग्वचः ॥ स्वचित्तेऽचिंतयच्चेत्थमृभुः किं ह्येष मद्गुरुः ॥ १९ ॥ द्रुतमुत्थाय लज्जाढ्यो निदाघोऽथानन्ततः ॥ सुस्थितं तमृभुं नत्वा प्रार्थनां बहुधाऽकरोत् ॥ २० ॥

सूज्ज्वलाः सुप्रकाशाः ॥ १६ ॥ अंतर्गताः समुद्रांतर्गताः ॥१७॥ तथेति ॥ येन नरेण कर्त्रा सर्वमिदं विश्वम् । आत्मैवेत्यवलोक्यते स नरः सुखी भवति ॥ १८ ॥ ज्ञानयुक् ज्ञानयुक्तं वचः ॥ १९ ॥ पूजार्हो गुरुर्मयावमानितोस्तीति लज्जाढ्यः । तस्य ऋभोः ऊर्ध्वतः हृदयात् द्रुतमुत्थाय सुस्थितं तमृभुं

रहितत्वेन निविष्टं नत्वा बहुप्रार्थनां कृतवानित्यर्थः ॥ २० ॥ अमुम् अपराधं क्षमस्व ॥ उपजातिवृत्तम् ॥ २१ ॥ यत् यस्मात् । आवां युष्मदस्मच्छब्दवाच्यौ आत्ममूलौ आत्मा चिद्रूपः मूलं कारणम् अधिष्ठानं ययोस्तौ ॥ २२ ॥ आत्मा आत्मस्वरूपं पुरा मिष्टान्नभोजनावसरे व्यतिरेकेण कथितोपि कर्मधिया त्वया विस्मृतः । अतः द्विधा अन्वयेन व्यतिरेकेण च ते तुभ्यं वक्तुमिदानीं द्वितीयवारम् उपदेष्टुमागतोस्मि ॥ २३ ॥ तुभ्यमिति ॥

मया त्वविज्ञाय गुरुं भवंतं तवापराधोऽत्र कृतो गरीयान् ॥ वाचाप्यवाच्योऽसुमयो क्षमस्व क्षमापराः स्युर्हि यतो महांतः ॥ २१॥
ऋभुस्तमाहाथ न मेऽपराधः कृतस्त्वयाऽऽवां च यदात्ममूलौ ॥ चेद् घर्षतश्चैकतरोऽस्तु शाखे कयापराधस्तु कृतो हि कस्याः ॥
॥ २२ ॥ आत्मा मया ते कथितः पुराद्य स विस्मृतः कर्मधिया त्वया तम् ॥ समागतो वक्तुमहं द्विधा ते द्वितीयवारं त्वुपदेष्टुमेव ॥
॥ २३ ॥ तुभ्यं मया भुक्तिमिषेण पूर्वं ह्यात्मत्वमुक्तं व्यतिरेकमार्गात् ॥ तथाऽद्य राजादिमिषेण सर्वं प्रोक्तं तदेवान्वयतो निदाघ ॥
॥ २४ ॥ द्वयं समालोच्य न यास्यसि त्वं दुःखं प्रपंचेऽखिलदुःखदेऽपि ॥ यथा जलौघे विमलं कदापि न पंकजं याति कपीटसङ्गम् ॥ २५ ॥ऋभूक्तमेतद्वचनं निदाघः श्रुत्वा पुरोक्तं व्यतिरेकवाक्यम् ॥ स्मृत्वाधुनोक्तं च तदन्वयाख्यमात्मन्यभूत्मोच्यतिहर्षयुक्तः ॥ २६ ॥ नत्वा मुहुःश्रीगुरुमग्रसंस्थो रोमांचितः प्रांजलिरंबुजाक्षः ॥ प्रेम्णाब्रवीद्गद्गदवाक्यमित्थं त्वत्तः परः कः सदयस्त्रिलोक्याम् ॥ २७ ॥ मां कर्मपाशैस्सुनिबध्य रुद्धं गृहांधकूपेऽरिभिरत्र षड्भिः ॥ निर्गंतुमस्मादसमर्थमूर्ध्वं ज्ञात्वा विमोक्तुं स्वयमागतोसि ॥ २८ ॥

॥ २४ ॥ द्वयमिति ॥ द्वयम् अन्वयव्यतिरेकज्ञानम् ॥ कपीटसंगम जलसंबन्धम् । 'कपीटं काण्डमस्त्रियात्' इत्यमरः ॥ २५ ॥ एतद्द्वितीयवारं नाम्नि तुमागतोस्मीत्यादि श्रुत्वा पुरोक्तं क्षुधादिसंबंधरहित आत्मेत्यादि व्यतिरेकबोधकं वाक्यम् अधुनोक्तं तरंगन्यायेनेदं विश्वमात्मनि भातीत्यायन्वयबोधकं च स्मृत्वा परमानंदमयोभवत् ॥ २६ ॥ २७ ॥ मामिति ॥ षड्भिररिभिः कामक्रोधादिभिःशत्रुभिः कर्तृभिः कर्ममयैः पाशैः करणैः गृहमेवांधकूपः अंधकारयुक्तकूप

स्वस्मिन्नितरां बद्धम् अत एवास्मादूर्ध्वं बहिर्निर्गंतुमसमर्थं मां ज्ञात्वा मोचयितुं स्वयमागतोसि ॥ २८ ॥ दुःखेति ॥ बन्ध्वादयो न पाति न रक्षंति । ब्रह्मादयो देवा अपि न रक्षंति इति हेतोः देवात् गुरुः पूज्योस्ति । गुरोस्त्वन्यः पूज्यो नास्ति । 'सर्वदेवमयो गुरुः' इति वचनात् पूज्यतमत्वं गुरोरेवेत्यर्थः ॥ २९ ॥ स्तुत्वेति ॥ इत्थं सः निदाघः स्तुत्वा स्वगृहं नीत्वा तमृभुं संपूज्य भोजयामास ॥ ३० ॥ इत्थमिति ॥ तदीयम् ऋभुवर्णनपरम् ॥ ३१ ॥ तमेवाह ज्ञानिन इति ॥ उरःसंस्थे उरसि स्थिते सति । अस्य मनाक् किंचिदपि कोपो नासीत् ॥ ३२ ॥ ऋभुक्ष इति ॥ संप्रदायिनः संप्रदायप्रवर्तकाः ॥ ३३ ॥ कस्मादिति ऋभुक्ष इति नाम्ना कस्माद्धेतो

दुःखाद्भवोत्थाद्गुरुरेव पाति नान्योथ बंधुर्नृपतिस्तथेंद्रः॥ब्रह्मा हरिः कामरिपुश्च देवात्पूज्यो गुरुर्नास्ति गुरोस्तु पूज्यः ॥२९॥ स्तुत्वा तमित्थं निजसद्म नीत्वा स भोजयामास तथा निदाघः ॥ ऋभुश्च तृप्तोथ ययौ यथेष्टं सुखं निदाघः स्थित आश्रमे स्वे ॥ ३० ॥ इत्थं क्षमावत्त्वमृभोर्मुनींद्राः श्रुत्वाथ सिद्धाः सनकादिकाद्याः ॥ आश्चर्ययुक्ताः पुरतो विधातुः श्लोकं जगुश्चैकमिमं तदीयम् ॥ ॥ ३१ ॥ ज्ञानिनः संति सिद्धाश्च न क्षमावानृभोः परः ॥ शिष्येपि यदुरःसंस्थे नास्य कोपो मनागपि ॥ ३२ ॥ ऋभुक्ष इति तन्नाम क्षमाधिक्यात्तु तैः कृतम् ॥ ऋभुक्षानंद इत्याहुस्तमतः संप्रदायिनः ॥ ३३ ॥ मयूरेश्वर वाच ॥ कस्मादृभुक्ष इत्युक्तः क्षमारूपादृभु स्तु तैः ॥ अर्थाद्वाशब्दतो वाख्या श्रीमद्भिः कथ्यतां हि सा ॥ ३४ ॥ श्रीदेशिकेंद्र उवाच ॥ विद्वन्नृभोर्नाम ददुर्मुनींद्राः क्षमैक्यतोर्धं प्रथमं क्षमायाः ॥ भक्तैक्यतो माधवनाम्नि काश्यां यथान्त्यमाप्तं तृणबिन्दुनाम्नः ॥ ३५ ॥

रुक्तः । श्रीमद्भिर्भवद्भिस्तत्कथ्यताम् ॥ ३४ ॥ विद्वन्निति ॥ हे विद्वन् । यथा काशीक्षेत्रे माधवनाम भक्तैक्यतः तृणबिंदुनाम्नः अंत्यम् अर्द्धं बिन्दु इत्याकारकम् आप्तं प्राप्तम् । तथा ऋभोः नाम्नि क्षं क्षशब्दमैक्यतः तं यथायथोपासते इति श्रुत्युक्तरीत्या क्षमैक्यात् क्षमारूपत्वेन क्षमायाः अर्द्धं मुनींद्रा ददुः ॥ तथा चेयं कथा काश्यां कश्चित्तृणबिंदुनामा ब्राह्मणो विष्णुभक्तः अभेदेन विष्णूपासनां कृतवान् ततो बहुकालेन तस्मै प्रसन्नो विष्णुर्वरं ददौ तेन च याचितं भवतो मम च नामरूपतः ऐक्यं भवत्विति तदैव तस्य देहे चतुर्भुजो विष्णुः प्रादुर्बभूव एवं रूपतः ऐक्यं कृत्वा नामतः ऐक्यं कर्तुं तृणबिंदुनाम्नः उत्तरार्द्धं

बिंदु इत्याकारकं विष्णुः स्वनाम्नि माधवे योजितवान् तेन बिंदुमाधव इति प्रसिद्धोभूदिति काशीखंडे प्रसिद्धा॥ ३५॥ एतदेव स्पष्टमाह तस्मादिति ॥ अयं महात्मा ऋभुस्तस्मात् क्षेत्यक्षरयोगात् ऋभुक्षो जातः। यथा तृणबिंदोः अंत्येन अर्द्धेन बिंदु इत्याकारकेण माधव एव बिंदु माधवो जातस्तथेति भावः॥ ३६॥ ऋभुक्षानंदमष्टादशं गुरुं प्रणमति आत्मैवेति ॥ एकमद्वितीयम् ऋभुक्षं आनन्दशब्दान्तं ऋभुक्षानंदम् ॥ ३७॥ ऋभुक्षचरित्रस्य श्रवणादिफलमाह। इदमिति ॥ श्रीव्यासवक्त्रेण विमलचित्तः शुद्धांतःकरणः सन् अभवार्थं मोक्षार्थं पठति किंच शृणोति स सन् उत्तमपुरुषः इहलोके ऋभुणा समस्तत्सदृशः आत्मवान्

तस्मात्खलु महात्मायमृभुक्षः इति संस्मृतः ॥ तृणबिंदोर्यथांत्येन माधवो बिंदुमाधवः ॥ ३६ ॥ आत्मैव सर्वं जगदस्ति नान्यदित्थं मतिर्यस्य सदा स्फुरंती ॥ आनन्दशब्दान्तमृभुक्षमेकमष्टादशं स्वीयगुरुं नताः स्मः ॥ ३७ ॥ इदमृभुचरितं श्रीव्यासवक्त्रेण गीतं सकलविबुधमान्ये विष्णुसंज्ञे पुराणे ॥ पठति विमलचित्तः सोऽभवार्थं शृणोति ऋभुसम इह नूनं चात्मवांश्च क्षमावान् ॥ ३८ ॥ इति श्रीमद्गुरुपरंपराचरित्रे पूर्वार्द्धे सिद्धौघस्थऋभुक्षानंदचरित्रवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥ श्रीदेशिकेंद्र उवाच ॥ अथात्रिर्ब्रह्मणः पुत्रः षड्भ्योऽमीभ्यश्च योऽवरः ॥ जातोस्य पश्यतो दृष्टेः सनकादीन्मुहुर्विधेः ॥ १ ॥ यथा सूर्योऽपरः कांत्या शुभलक्षणलक्षितः ॥ तं दृष्ट्वानंदयुग्ब्रह्मा प्रोवाचेदं वचः प्रभुः ॥ २ ॥ सनत्सुजातं त्वद्बंधुं ज्येष्ठं त्वं शरणं व्रज ॥ तस्माल्लब्ध्वाखिलान्मंत्रांस्तपः कुरु सुदुष्करम् ॥ ३ ॥

ज्ञानी क्षमावांश्च भवेत्। मालिनीवृत्तम्। तल्लक्षणं तु—"ननमयययुतेयं मालिनी भोगिलोकैः" इति ॥ ३८ ॥ इति श्रीमद्गुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां तृतीयः सर्गः ॥ ३ ॥ पंचत्रिंशत्पद्यैश्चतुर्थेनात्रिभूर्विधेः ॥ तत्तपोब्रह्ममुख्येशास्तुतिर्दत्तोद्भवः स्मृतः ॥ एवमष्टादशगुरूनुक्त्वा एकोनविंशं दत्तात्रेयगुरुं वक्तुं तदुपयोगिनीम् अत्रिकथां संक्षेपेण वर्णयति ॥ अथात्रिरित्यादिना अमीभ्यः सनकादिभ्योऽवरः कनिष्ठोऽत्रिः सनकादीन्मुहुर्मुहुः पश्यतोऽस्य ब्रह्मणो दृष्टेर्जातः ॥ १ ॥ आनंदयुक् आनंदयुक्तः ॥ २ ॥ ३ ॥

॥ ४ ॥ ५ ॥ ६ ॥ महामनूनां महामंत्राणां दीक्षार्थमुपदेशार्थम् । यैर्मंत्रैस्त्वाशु शाश्वती नाशरहिता सिद्धिः सर्वमनोरथसिद्धिर्भवति ॥ ७ ॥ यस्मान्मंत्रैरेव सर्वकार्यसिद्धिर्भवति तस्मात् ॥ देशिक उपदेशकर्ता गुरुः ॥ ८ ॥ ९ ॥ सर्वं मंत्ररहस्यम् ॥ १० ॥ गृहधर्मवान् गृहस्थाश्र

सिद्धे तपसि शंभ्वाद्याः सुरास्तुष्टास्तवामलाः ॥ भविष्यंति ततः प्राप्य वरं सृज शुभाः प्रजाः ॥ ४ ॥ एवमाज्ञापितः पित्रा सोऽत्रिर्भ्रातरमात्मनः ॥ सनत्सुजात्सतमात्मज्ञं ययौ शरणमादृतः ॥ ५ ॥ प्रश्रयावनतो भूत्वा प्रणनाम पुनःपुनः ॥ प्रांजलिः पुरतः स्थित्वा वचनं चेदमब्रवीत् ॥ ६ ॥ अत्रिरुवाच ॥ अहमाज्ञापितः पित्रा दीक्षार्थं भवतः प्रभो ॥ महामनूनां यैस्त्वाशु सिद्धिर्भवति शाश्वती ॥ ७ ॥ वेद तस्मान्मनून्सर्वान्योगं ज्ञानं च निर्मलम् ॥ देशिकस्त्वमहं शिष्यो भ्रातृबुद्धिं त्यजाधुना ॥ ८ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं सनत्सुजातोसावत्रिणाभ्यर्थितोऽत्र ये ॥ सर्वमंत्रमयीं दीक्षां ददौ दीक्षाविधानतः ॥ ९ ॥ संप्राप्यात्रिस्ततः सर्वं कर्द मस्य सुतां शुभाम् ॥ अनसूयामथो वव्रे सर्वलक्षणलक्षिताम् ॥ १० ॥ तया सह स सह्याद्राववसद्गृहधर्मवान् ॥ पतिं तमनसूयापि सेवते स्म पतिव्रता ॥ ११ ॥ पतिव्रतोत्तमा साभूत्पत्युरन्यत्र पश्यति ॥ देवेंद्रं मदनं वापि तुच्छं तं चेतसाकरोत् ॥ १२ ॥ तस्मिन्स्वी याश्रमे चात्रिस्तपस्तेपे सुदुष्करम् ॥ बहुवर्षं निराहारो जितेंद्रियमनाः सुधीः ॥ १३ ॥ इत्थं सुतीव्रे तपसि स्थितेऽत्रौ ययुः शिवाद्या स्तपसास्य तुष्टाः ॥ दातुं वरं तं मनसेप्सितं स्वैर्वाहायुधैः शक्तिभिरन्विताश्च ॥ १४ ॥

मकमर्कर्ता सन् ॥ ११ ॥ १२ ॥ १३ ॥ शिवाद्याः तद्गुणसंविज्ञानो बहुव्रीहिः ॥ ब्रह्मशिवहरयः वाहैः हंसनंदीगरुडैः आयुधैः कमंडलुत्रिशूलसुदर्शनैः शक्तिभिः सावित्र्युमालक्ष्मीभिरन्विताः ॥ १४ ॥

परतत्त्वसंस्थः आत्मतत्त्वसंस्थः ॥ १५ ॥ अक्षरैर्गद्गदया वाण्या ऊर्ध्वकेशः रोमांचितः ॥ १६ ॥ नग्नाभेदेन [illegible] स्तौति ॥ [illegible]
दित्यादि सप्तभिः । गुरुस्तु सनत्सुजातो मे श्रुतौ कर्णे एकमेव तत्त्वं ब्रह्म समादिशत् उपादिशत् यथापि यथोपदिष्टं तथैव आगमे [illegible] श्रुतौ [illegible]
सुतरां बाहुल्येन सम्यक् श्रुतं तद्वदेव निर्द्वंद्वं द्वैतरहितम् आकृतिविरहितं विचिंतितं गुरुशास्त्रात्मप्रतीतिनिश्चितमित्यर्थः । तद्ब्रह्म [illegible]
कथं विधीश्वराकृति विधिश्चेश्वरश्च अथ विधीश्वराः तेषामाकृतिर्यस्मिन् तत् । ब्रह्मादिदेवतात्रयाकृति कथं दृश्यते । आकारविरहितस्य [illegible]
दर्शनमत्याश्चर्यकारकमिति भावः । भिन्नवाच्यानां वर्णानामावृत्त्या यमकालंकारः । पंचचामरवृत्तम् । "लघुर्गुरोनिरंतरं भवेच्च पंचचामरम्" इति तल्लक्षणात् ॥

तांस्त्रीनथात्रिः पुरतः स्थितांश्च नापश्यदंतः परतत्त्वसंस्थः ॥ प्रविश्य तेंतर्निजयोगशक्त्या प्रोत्थापयामासुरमुं समाधेः ॥ १६ ॥
दृष्ट्वात्रिरग्रे शिवविष्णुधातॄन्ननाम भूमावथ दंडतुल्यः ॥ प्रेम्णाऽस्तुवत्तान्गलदश्रुनेत्रो वाण्याक्षरैर्गद्गदयोर्ध्वकेशः॥१६॥अत्रिरुवाच ॥
समादिशद्गुरुस्तु तत्त्वमेकमेव मे श्रुतौ सुसंश्रुतं मयापि तत्तथैव चागमे श्रुतौ ॥ विचिंतितं च तद्वदेव निर्द्वयं निराकृतं तदद्य दृश्यते
कथं दृशा विधीश्वराकृति ॥ १७ ॥ यदिंद्रियैरगोचरं धियान्वितैर्मनोमुखैश्चतुर्भिरेकतस्त्रिपंचभिस्तदद्य नो मुखैः ॥ सुगोचरं करैः
कमंडलुं तथा सुदर्शनं त्रिशूलकं बिभर्ति तस्य मे भवत्सुदर्शनम् ॥ १८ ॥ यदंगके [illegible] शुभ्रभाः शुभास्वरा गतानि हंसवी
द्रगोभिरंकगाः शुभा स्वरा ॥ रमा सती च वामतोस्य शोभते हि चिन्मयी विलोकिता ततः [illegible] कथं [illegible] ॥ १९ ॥

॥ १७ ॥ आश्चर्यमेव वर्णयति । यदित्यादिचतुर्भिः । यद्ब्रह्मधिया बुद्ध्या अन्वितैर्युक्तैर्मनोमुखैर्मनःप्रभृतिभिरिंद्रियैरगोचरमप्रत्यक्षं तद्ब्रह्माऽद्य चतुर्भिर्मुखैरेकतः
एकेन मुखेन सार्वविभक्तिकस्तसिः । पंचभिर्मुखैर्नोऽस्माकं सुगोचरं सुप्रत्यक्षं बभूवेति योज्यम् । तथा तदेव ब्रह्म करैः हस्तैः कमंडलुं सुदर्शनचक्रं त्रिशूलं च
बिभर्ति तस्य ब्रह्मणः मे सुदर्शनं सम्यग्दर्शनमभवत् । एकस्यानेकत्वेन दर्शनमाश्चर्यमित्यर्थः ॥ १८ ॥ यस्य ब्रह्मणोंगकेषु अंगकांतिः
सुभास्वरा तेजोवती सती रक्तकृष्णशुभ्रभाः रक्तकृष्णशुभ्रेति भाः कान्तिरस्ति । गतानि यद्गमनानि हंसवींद्रगोभिः हंसगरुडवृषैर्भवन्ति । "विश्वसृपि [illegible]

वाते परमात्मनि पक्षिणि" इत्येकाक्षररत्नमालायां विशब्दस्य पक्षिवाचकत्वात् वींद्रो गरुडो ज्ञेयः । अस्य देवत्रयरूपस्य ब्रह्मणो वामतःअंकगा वामांकगा शुभा शुभांगी चिन्मयी चिद्रूपा स्वरा ।"स्वरया सह संभूय विरिंचोंऽमजीजनत्"इति रहस्ये । स्वराशब्दस्य सावित्रीवाचकत्वात्स्वरा सावित्री रमा लक्ष्मीः सती गौरी च शोभते या सा मया ईक्षिता दृष्टा । यतो दृष्टा ततः कारणान्मयि कचित् आद्यकं पूर्वभवं पुण्यमस्ति । अद्वितीयस्य सशक्तित्वेन सद्वितीयत्व माश्चर्यमित्यर्थः॥ १९॥यद्ब्रह्म चंदनेन एणनाभिना कस्तूर्या शुभ्रभस्मना चेत्येतैः सुशोभितं ललाटे तेषां धारणादिति भावः।अंघ्रिसेविनां चरणोपासकानां च सुभूतिभिरुत्तमैश्वर्यैः करणैराशु शीघ्रं सिद्धिं करोति यस्य विधाता इति विष्णुरिति शंभुरिति नाम लोकानां पावनं पवित्रकरमस्ति । यत् नाम स्मृतं सत् सुरेन्द्रमुख्याः देवेंद्रादयो लोकपाः लोकपालास्तेषां अवनं रक्षणं करोति । परस्मैपदप्रयोगात्परार्थमेव तद्रक्षणं न स्वार्थमिति सूचितम् । नामनिर्देशाद्ब्र

चंदनैणनाभिशुद्धभूतिभिः सुशोभितं करोति सिद्धिमाशु चांघ्रिसेविनां सुभूतिभिः ॥ विधातृविष्णुशंभुनाम यस्य लोकपावनं स्मृतं सुरेंद्रमुख्यलोकपावनं करोति यत् ॥ २० ॥ सुरक्तपीतवस्त्रकृत्तिभिस्त्रिकं परं वरं यदीक्ष्यते स्वकांतितो विचित्ररुङ्मयांबरम् ॥ सुयज्ञसूत्रकौस्तुभादिनागभूषणांकितं वरं ददाति वांछितं स्वनामभूषणांकितम् ॥ २१ ॥ यदेकमेव निर्गुणं ह्यनंतशक्ति दूरं तदेव चाभवद्वरं प्रदातृमद्य मे गुणि ॥ विसृष्टिपालनात्ययादिकारणानि येगुणैर्मेक एव संत्वनात्मगस्त्वनेकभासदाः ॥ २२ ॥

ग्गोचरत्वे सति वागतीतत्वमाश्चर्यमित्यर्थः ॥२०॥ यदंचितं यद्गतम् । अंचुगतिपूजनयोः ॥ इति यत् ब्रह्म त्रिकं रूपत्रयात्मकं ब्रह्मायात्मकं त्रिकं रक्तवस्त्रेण पीताम्बरेण गजचर्मणा परमत्यन्तवरं श्रेष्ठमीक्ष्यते तथा स्वकांतितः स्वीयकांत्या विचित्ररूपत्रयं विचित्रकांतिबहुलम् । अंबरम् आकाशो यया ईक्ष्यते सुयज्ञसूत्रं कनकयज्ञोपवीतं च कौस्तुभादयश्च नागभूषणानि च तैरंकितं भूषितम् यत् ब्रह्म स्वनामानि । ब्रह्मविष्णुशिवाख्यानि तान्येव भूषणानि तैरंकितं चिह्नितं नामग्राहिणं भक्तं प्रति वरम् इष्टं ददाति । निरावरणं ब्रह्म वस्त्राद्यावृतमिव भातीत्याश्चर्यमित्यर्थः ॥ २१ ॥ ननु ब्रह्मभिन्नेश्वरस्यास्तु तद्भिन्नत्वं नाश्चर्यमिति चेन्न यथार्थाभेददृष्टिरेवास्त्वित्याह । यदेकमिति । निर्गुणं मायागुणास्पृष्टम् हि यत अनंतशक्तिमत् विचित्रशक्तियुक्तं अतो

वरं श्रेष्ठं यत् एकमेव ब्रह्मास्ति तदेव च मे मह्यं वरं प्रदातुं गुणि त्रिगुणयुक्तमभवत् । तत्र हेतुगर्भं विशेषणम् । सृष्टिः जगतः सर्जनं पालनं अत्ययो नाशश्च तेषामादिकारणानि मूलकारणानि गुणैः रजःसत्त्वतमोरूपैर्ये ब्रह्मविष्णुरुद्राः मम सदा एके एकरूपाः संतु भवंतु । अनात्मनो देहबुद्धेस्तु । अनेकभासदाः भिन्नभिन्नप्रत्ययदाः संतु । अनात्मदृष्ट्या भेदेपि वस्तुतोऽभेद इति भावः ॥ २२ ॥ स्वेष्टं प्रार्थयन्नाह प्रजा इति । यूयं आत्मवत् प्रसिद्धो विक्रमो येषां ते प्रसिद्धपराक्रमाः सतीः सद्रूपाः प्रजाः पुत्रान् ददध्वम् । नन्वात्मसमाः प्रजाः कथं भविष्यंतीति चेत्तत्राह तथेति । सती पतिव्रता मे सती पत्न्यनसूया । नोत्क्रमेत लालनपालनादिना उत्क्रान्तपातिव्रत्यक्रमा यथा न भवेत्तथा यूयमेवात्र भवध्वं प्रजारूपेण भवध्वमित्यर्थः । यतः प्रजातः

प्रजा ददध्वमात्मवत्प्रसिद्धविक्रमाः सतीस्तथा भवंतु यूयमेव नोत्क्रमेत मे सती ॥ यतस्तु कीर्तिरक्षया मयापि लोकपावनी प्रलभ्यते सुतोषयुग्यया सलोकपावनी ॥२३॥ सुपद्यसप्तकं च यैरिदं प्रपठ्यते परं सुपुत्रलाभ ईप्सितं धनादिकं च तैः परत्र सुकीर्तिरत्र लभ्यते स्थितिः परत्र चामरैर्वराप्सरोभिरामृतैः सुवीजितं हि चामरैः ॥२४॥ श्रीदेशिकेंद्र उवाच ॥ इदमत्रिकृतं स्तोत्रं पद्याष्टकसुशोभितम् ॥ श्रुत्वा धातृहरीशास्ते प्रोचुस्तुष्टास्तदा मुनिम् ॥२५॥ ब्रह्मादय ऊचुः ॥ तुष्टास्त्वत्तपसानेन स्तोत्रेणास्मत्प्रियेण च ॥ वृणीष्व तेऽखिलाभीष्टं यद्यदिच्छसि तद्भवान् ॥२६॥ वयमेव सुतास्तेद्य भवामः स्वांशतस्त्रयः ॥ यतस्ते कीर्तिरचला त्वत्पत्न्याश्च भविष्यति ॥२७॥

यया अक्षया सुकीर्तिः प्रलभ्यते प्राप्यते । यया कीर्त्या सलोकपा लोकपालसहिता अवनी पृथ्वी सुतोषयुक् संतोषयुक्ता मत्पुत्रैः जगदानंदो भवति तथा यया प्रजया अनसूया लोकपावनी भवति तथा यूयमेव पुत्ररूपा भवध्वमित्यर्थः ॥२३॥ पद्यसप्तकस्य पाठफलं प्रार्थयन्नाह । सुपद्येति । परं श्रेष्ठमिदं शुभ्र दर्शनपरं सुंदरं पद्यसप्तकं यैर्नरैः प्रपठ्यते प्रकर्षेण अर्थ ज्ञानेन सह पाठ्यते । चकारात् श्रूयते । तैरत्र लोके सुपुत्रलाभः धनादिलाभवत धनपश्वादिलाभ युक्तं परं श्रेष्ठं ईप्सितं इष्टं सुकीर्तिश्च लभ्यते प्राप्यते । परत्र स्वर्गे वराप्सरोभिः श्रेष्ठाप्सरोभिः कर्त्रीभिः चामरैः करणैः सुवीजितं यथा स्यात्तथाऽमरैर्देवैः सह स्थितिरमृतमेव आमृतम् यद्वा आसमंताद्वीजितं यथा स्यात्तथेति योज्यम् लभ्यते प्राप्यते भोगमोक्षलाभस्तस्य भवतीति भावः ॥२४॥२५॥२६॥२७॥

युष्मत्ख्यातिर्युवयोः ख्यातिर्भविष्यतीत्यनुवृत्तिः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ अनसूयायामत्रेः सकाशात्पुत्राः जाताः ॥ ३२ ॥ श्रीशेश[illegible] तृजैर्ब्रह्मविष्णुरुद्रजैरंशैः एतान्पुत्रान् ॥ ३३ ॥ उपजातिवृत्तम् ॥ ३४ ॥ दत्तात्रेयजन्मनः श्रवण फलमाह ॥ दत्तात्रेयेति ॥ सन्निरीहाः [illegible] ये निरीहा निष्कामास्तेषां मुक्तिश्च भवति ॥ ३५ ॥ इति श्रीमद्गुरुपरंपराचरित्रपूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां चतुर्थः सर्गः ॥ ४ ॥ पंचमस्तु त्रिपंचाशत्पद्यात्म[illegible]

पतिव्रतासु सर्वासु वरेयं तव सुंदरी ॥ तथा त्वं तापसश्रेष्ठो युष्मत्ख्यातिर्जगत्त्रये ॥ २८ ॥ त्वत्कृतं स्तोत्रमेतद्ये पठंति श्रद्धया भुवि ॥ तेषामभीप्सितान्कामान्पूरयामस्त्रयो वयम् ॥ २९ ॥ श्रीदेशिकेंद्र उवाच ॥ दत्त्वा त्रये वरानित्थं तत्पत्न्या च सुपूजिताः ॥ मुहुर्नमस्कृताश्चापुरंतर्धानं त्रयः सुराः ॥ ३० ॥ अंतर्हितान्नमस्कृत्य तानत्रिः सह भार्यया ॥ उवास स्वाश्रमे तत्र प्रजोत्पत्तिं नि[illegible]न्तयन् ॥ ३१ ॥ अत्रेरथानसूयायां त्रयो देवा निजांशतः ॥ जाताः पुत्राः शुभे काले रूपशीलगुणान्विताः ॥ ३२ ॥ दत्तात्रेयश्च दुर्वासाश्चंद्रः श्रीशेशधातृजैः ॥ अंशैरेतानवाप्याऽत्रिः संतुष्टोभूत्स्त्रियान्वितः ॥ ३३ ॥ जगद्रक्षितुमिच्छंतिनात्मजेशेनात्मना प्रादुर्बभूवुर्ये [illegible] हिताय ॥ अत्रेर्गृहेशौर्वीधिविष्णुभर्गा भक्त्यानसूयाकृतया निबद्धाः ॥ ३४ ॥ दत्तात्रेयभवार्थं भक्त्या यैः श्रूयते सदा[illegible] ॥ तेषामखिलाः कामाः पूर्णा मुक्तिश्च सन्निरीहाणाम् ॥ ३५ ॥ इति श्रीमद्गुरुपरंपराचरित्रपूर्वार्द्धे दत्तात्रेयजन्मवर्णनं चतुर्थः सर्गः ॥ ४ ॥
श्रीदेशिकेंद्र उवाच ॥ सप्तैते ब्रह्मणः पुत्रा अत्र्यंताः सनकादयः ॥ सत्कर्मपथाः षट् ते नात्रिः कर्मरतोऽभवत् ॥ १ ॥ [illegible]स्तथान्येपि बभूवुर्ब्रह्मणः सुताः ॥ येषां वंशवितानेन पूरितं भुवनत्रयम् ॥ २ ॥ अत्रेस्त्रयः सुताः प्रोक्ता दत्तात्रेयादयस्तु ये ॥ [illegible]णोपनीतास्ते वेदान्सांगान्समभ्यसन् ॥ ३ ॥

क्ति सत्कथाम् ॥ दत्तात्रेयस्य चाबाल्याद्योगसामर्थ्यशंसिनीम् ॥ ५ ॥ सप्तेति ॥ सनकाद्याः पंच ऋभुरत्रिश्चेति सप्तैते ब्रह्मणः पुत्राः [illegible] तेषु षट् ते सत्कर्मपथाः ब्रह्मनिष्ठतयापि सत्कर्ममार्गाः आसन् । अत्रिस्तु कर्मरतः क्रियानिष्ठ एवाभवत् ॥ १ ॥ वंशवितानेन वंशविस्तारेण ॥ २ ॥ ३ ॥

खेचरतां ग्रहत्वं प्राप्तः । दत्तो दत्तात्रेयः तत्त्वमार्गोपदेशतः तत्त्वस्य आत्मतत्त्वस्य मार्गः निष्कामकर्मानुष्ठानयुक्तज्ञानानुष्ठानयोग [illegible]
तेषाम् उपदेशेनाज्ञान् ज्ञानहीनान् जनांस्त्रातुम् अवतीर्णोऽस्ति ॥ ४ ॥ संप्रदायाः गुरुसंप्रदायाः । उत्तरार्द्धं सुगमं ॥ ५ ॥ [illegible]

दुर्वासास्त्वृषिमुख्योभूच्चन्द्रः खेचरतां गतः ॥ दत्ताऽवतीर्णोऽज्ञांस्त्रातुं तत्त्वमार्गोपदेशतः ॥ ४ ॥ तेनैव लोकेष्वखिलाः संप्रदायाः प्रकाशिताः ॥ बाल्य एव वयस्येप सर्वज्ञोपि हरिः स्वयम् ॥ ५ ॥ ऋभुसं शरणं चागात्संप्रज्ञातं प्रपश्यन् ॥ [illegible] दतः सर्वं लब्ध्वा मंत्ररहस्यकम् ॥ ६ ॥ ज्ञानं योगं च विधिवत्संप्रदायक्रमेण च ॥ अत्रेराश्रमेऽतिमुद्राढ्ये क्रीडारतः सदा ॥ ७ ॥ वयस्यैः क्रीडमानोपि न जहात्यात्मचिंतनम् ॥ वयस्यास्तेन संयुक्ताः क्रीडां चक्रुः सदा भृशम् ॥ ८ ॥ [illegible] सौंदर्य शीलाभ्यां यंत्रितास्तद्गुणैरपि ॥ आसंस्तमनुसृत्यैव तत्यजुर्न कदापि च ॥ ९ ॥ तैस्तस्य क्रीडमानस्य योगाभ्यासो न चाभवत् ॥ तेषां संगं स तित्यक्षुर्जल एवाऽवसत्क्वचित् ॥ १० ॥ दिनत्रयं जलांतश्चाभवल्लीनः स्वयोगतः ॥ क्रोशमानास्तु ते सर्वे [illegible] रेऽकृताशनाः ॥ ११ ॥ केचिदूचुर्मृतो नूनं भक्षितो मकरैरिति ॥ केचित्तस्यैव पितरौ गत्वा प्रोचुः सुदुःखिताः ॥ १२ ॥ [illegible] तस्य प्रभावज्ञौ नेपदप्यापतुर्भयम् ॥ त्रिष्वहःसु व्यतीतेषु बहिरागान्महामुनिः ॥ १३ ॥ जलाशयात्तदा सर्वे ननंदुस्तस्य दर्शनात् ॥ तं पप्रच्छुस्तदा सर्वे झषनक्रादिसंकुले ॥ १४ ॥ जलाशयेस्मिंश्चागाधे ह्यहं त्वं कथमास्थितः ॥ दुःखितास्त्वद्वियोगे त्यक्तस्वापजलाशनाः ॥ १५ ॥

बद्धम् ॥ ६ ॥ ७ ॥ ८ ॥ यंत्रिताः बद्धाः ॥ ९ ॥ तेषां बालानां संगं त्यक्तुमिच्छन् जले निमग्नः ॥ १० ॥ स्वस्य योगतः योगशक्त्या ॥ [illegible]

लाशनानि निद्राजलान्नानि यैस्ते वयमिति संबंधः ॥ १५ ॥ असौ दत्तात्रेयः विहस्य मूकवत् आसीत् मौनं कृतवान् ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ बालास्ते दत्तात्रेये त्र्यहं जलांतर्गतेपि संगं न मुमुचुः । स दत्तः अन्यत् बालसंगनिवर्तकमुपायांतरं स्वसंगविषये तेषां मनसस्त्रासो यथा भवेत्तथा चिंतयामासेति संबंधः । मनसं इति जात्येकवचनम् । उपजातिवृत्तम् ॥ २० ॥ अथैकदा मुनिपुत्रास्तदन्विता दत्तात्रेययुक्ताः संतः जलेन अगाधे

समाहूताश्च पित्राद्यैर्वयमत्रैव च स्थिताः ॥ श्रुत्वासौ तद्वचः किंचिद्विहस्यासीत्तु मूकवत् ॥ १६ ॥ तूष्णींभूतं समालोक्य ते त्रुवंस्तं पुनः पुनः ॥ दिष्ट्या त्वद्दर्शनं जातमस्मदानंददायकम् ॥ १७ ॥ गत्वा निजाश्रमं सर्वे क्रीडां कुर्मः कृताशनाः ॥ त्वद्वियोगात्प्रभो स्माकं युगतुल्यमभूत्किल ॥ १८ ॥ त्यजास्मान्दयासिंधो त्वद्वशे समुपस्थितान् ॥ इत्याद्युक्त्वा तदा सर्वे तद्युक्ताः स्वाश्रमं ययुः ॥ ॥ १९ ॥ स्वयोगशक्त्या त्र्यहमंभसीत्थं स्थितेपि संगं मुमुचुर्न बालाः ॥ स चिंतयामास तदान्यदंतस्त्रासो यथा तन्मनसः स्वसंगे ॥ २० ॥ अथैकदा पुनः सर्वे मुनिपुत्रास्तु तेनघ ॥ दत्तात्रेयान्विताश्चक्रुर्जलक्रीडां जलाशये ॥ २१ ॥ जलागाधे झषाकीर्णे पाणिभ्यां पादतस्तथा ॥ प्लवंतोंतर्मिथस्तोयं त्यजंतः पाणिभिर्मुखैः ॥ २२ ॥ निमज्जयंतश्चान्योन्यं ग्रीवोत्क्षिप्तैश्च पाणिभिः ॥ कर्षयंतः पदे धृत्वा विहसंतो मुहुर्मुहुः ॥ २३ ॥ एवं क्रीडाभिसक्तेषु कुमारेष्वखिलेष्वपि ॥ दत्तात्रेयोंभसो मध्ये निमग्नोभूत्स्वयं ततः ॥ २४ ॥ निमज्जंतं जले दृष्ट्वा तमुद्धर्तुं कृतोद्यमाः ॥ न क्षमाः स्युः समुद्धर्तुं तदात्यंतमधोगतम् ॥ २५ ॥ अशक्तास्ते त्वधो गंतुं ययुः सर्वे जलाद्बहिः ॥ क्लेशेन संस्थितास्तीरे चिंतयंतस्तमेव हि ॥ २६ ॥ यथा पूर्वं समायातो जीवंश्चाहस्त्रयांतरे ॥ आयास्यत्यधुनापीत्थं स्मृत्वा तद्विक्रमं हृदि ॥ २७ ॥ तूष्णीमासुस्त्र्यहं तत्र सर्वे तद्दर्शनार्थिनः ॥ न संस्मरुर्गृहान्नूनं मातृपितृसुहृज्जनान् ॥ २८ ॥

जलाशये सरोवरे जलक्रीडां चक्रुरिति त्रयाणामन्वयः । अनघेति मयूरेशसंबोधनम् ॥ २१ ॥ २२ ॥ ग्रीवायामुत्क्षिप्तैर्निक्षिप्तैः पाणिभिरन्योन्यं निमज्जयंतः ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ तद्विक्रमं जलस्तंभसामर्थ्यम् ॥ २७ ॥ २८ ॥

अथ चतुर्थे दिने प्रातर्दत्तात्रेयो वामकरे स्त्रियं समालिंग्य सव्येन दक्षिणकरेण सुराकुंभं च समाधदत् सन् तान् बालान्दृष्ट्वा विहसंश्च सन् जलाद्बहिर्निर्ययाविति पंचानामन्वयः ॥ २९ ॥ ३० ॥ तडिदिति ॥ तडिल्लतेव तडिल्लता तद्वदाकृतिः मूर्तिः शरीरं यस्याः तां श्यामां सुन्दरीं 'मुग्धः सुंदरमूढयोः' इत्यमरः। कटाक्षेणैकेनैवाकृष्टं वशीकृतं विष्टपं त्रिभुवनं यस्यास्तां तथा मन्दहासेन लसत् शोभमानं वक्रं मुखं यस्यास्तामृज्वी नासा यस्यास्ताम् अकुटिलनासिकाम्

चतुर्थे दिने प्रातर्दत्तात्रेयो जलाद्बहिः ॥ निर्ययावतितेजस्वी मेघौघादिव भास्करः ॥ २९ ॥ स्त्रियमालिंग्य वामेन करेणेन्दुसमाननाम् ॥ नानाभरणशोभाढ्यां महार्हवसनान्विताम् ॥ ३० ॥ तडिल्लताकृतिं श्यामां कटाक्षाकृष्टविष्टपाम् ॥ मन्दहासलसद्वक्त्रां मृजुनासां धनुर्भ्रुवम् ॥ ३१ ॥ वर्णनीयाकृतिं सौम्यां सर्वावयवसुंदरीम् ॥ हरिद्रालिप्तवपुषं कुंकुमालङ्कृतालिकाम् ॥ ३२ ॥ सुराकुंभं स्वसव्येन करेणासौ समादधत् ॥ तान्दृष्ट्वा विहसन्सर्वान्योगमायाविचेष्टितः ॥ ३३ ॥ स्वांके तु तां समारोप्य तेषां मध्ये स्थितोऽत्र यः ॥ स्वयं सुरां पाययंस्तां चषकेण मुहुर्मुहुः ॥ ३४ ॥ दृष्ट्वाथ मुनिपुत्रास्ते दत्तात्रेयं तथाविधम् ॥ तस्मात्स्थानात्ततो निर्ययुस्ते ततस्तदा ॥ ३५ ॥ गत्वा निजाश्रमं सर्वे प्रोचुरित्थं परस्परम् ॥ अस्माभिस्तस्य दौःशील्यं दत्तात्रेयस्य दुर्मतेः ॥ ३६ ॥ अविज्ञाय कृतानेन मैत्री त्यक्ता सुहृत्पितॄन् ॥ धिगस्मान्दुर्जने सक्तांस्त्यक्ताध्ययनकर्मणः ॥ ३७ ॥ क्रीडासक्तानद्योगत्र स्नानात् जलसेवनात् ॥ ब्राह्मणाचारहीनेन दत्तात्रेयेण संगतिः ॥ ३८ ॥ तत्तुल्यस्याथ वान्यस्य मा भूत्रस्तु भवेभवे ॥ इति तेषु प्रजल्पत्सु प्रोचुरेके कुमारकाः ॥ ३९

धनुषी इव वक्रे भ्रुवौ यस्यास्ताम् ॥ ३१ ॥ कुंकुमेनांकितमलिकं ललाटं यस्यास्ताम् ॥ ३२ ॥ योगमायया योगशक्त्या विचेष्टितं यस्यसः ॥ ३३ ॥ अभयो लौकिकभीतिहीनः । चषके पानपात्रे । चषकोऽस्त्री पानपात्रमित्यमरः । तां स्वशक्तिम् ॥ ३४ ॥ ३५ ॥ दौःशील्यं दुष्टत्वम् ॥ ३६ ॥ त्यक्तमध्ययनं स्वकर्म च यैस्तान् ॥ ३७ ॥ ब्राह्मणेत्याद्युत्तरान्वयि ॥ ३८ ॥ नः अस्माकम् । भवेभवे जन्मनिजन्मनि ॥ ३९ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ सक्तसत्पथः सक्तसन्मार्गः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ योगेन गतिः गमनं यस्य ॥ ४९ ॥
॥ ५० ॥ किञ्चिदिति ॥ उच्यताम् त्वयेति शेषः ॥ ५१ ॥ एकोनविंशतिसंख्यं दत्तात्रेयानंदं गुरुं प्रणमति । यस्मादिति । विज्ञान[illegible] अनुस्वारः ।

तेनानीता कुतस्तन्वी सुंदरी ललनोत्तमा ॥ पातालाद्वा नागकन्या समानीता जलाशयात् ॥ ४० ॥ अथवा योगसामर्थ्या[illegible]ता तेन धीमता ॥ वयं तु तस्य सामर्थ्यं न जानीमः किमस्ति तत् ॥ ४१ ॥ निंदा स्तुतिर्वा कस्यापि न कर्तव्या सुबुद्धिभिः ॥ ज्ञायते नैव केनापि कः कथं वर्तते जने ॥ ४२ ॥ हृद्गतं कस्य को वेत्ति तस्मात्किमपि नो वदेत् ॥ दत्तात्रेयोऽतितेजस्वी दृश्यतेऽसौ न लौकिकः ॥ ४३ ॥ अपरे प्रोचुरस्माभिर्नैतादृग्योगवाञ्छ्रुतः ॥ सुरापानरतो धृतस्त्रीसक्तस्त्यक्तसत्पथः ॥ ४४ ॥ ऐंद्रजालिक एवायं दत्तात्रेयो न योगिराट् ॥ इंद्रजालेन चाकृष्य तेनानीता परांगना ॥ ४५ ॥ इतः परं दर्शनं तु नैव कुर्मोऽस्य दुर्मतेः ॥ [illegible] कैंद्र उवाच ॥ इत्यादि बहुधोक्त्वोषुस्ते सर्वे स्वाश्रमेऽनघ ॥ ४६ ॥ दत्तात्रेयो वरं मन्ये स्वसंगात्तन्निवर्तनम् ॥ अदूरेऽस्या[illegible] कृत्वा निजमाश्रमम् ॥ ४७ ॥ योगं ज्ञानं चोपदिशच्छरणागतवत्सलः ॥ अद्याप्यास्ते स योगीशो जाह्नव्यां स्नानमाचरन् ॥ ४८ ॥ करवीरेऽटते भिक्षां गोदातीरे कृताशनः ॥ सह्याद्रौ स्वपते रात्रावित्थं योगगतिः प्रभुः ॥ ४९ ॥ तच्चरित्रं पुराणेषु प्रसिद्धं [illegible]स्तरात् ॥ मार्कंडेये तथा स्कांदेप्यन्यत्र च तथाविधम् ॥ ५० ॥ किंचिदेवात्र संप्रोक्तं ग्रन्थविस्तृतिभीर्यतः ॥ नाभक्ताय [illegible] श्रद्धाहीनाय चोच्यताम् ॥ ५१ ॥ यस्मात्प्रवृत्ता भुवि संप्रदाया विज्ञानमुद्राहठयोगमुख्याः ॥ एकोनविंशं शिरसाद्य दत्तानंदं वयं स्वीयगुरुं नताः स्मः ॥ ५२ ॥

मुद्राः खेचर्यादयः । हठयोगोऽष्टांगयोगः एते मुख्याः येषु ते संप्रदायाः भुवि पृथिव्यां यस्मात्प्रवृत्तास्तं दत्तात्रेयानंदगुरुं नताः स्मः ॥ ५२ ॥

सर्गोक्तकथाश्रवणफलमाह निखिलमिति॥ यः पुमान् अपूर्वं सर्वं दत्तात्रेयचरित्रं श्रुत्वा कर्णेन आश्रुत्य साकल्येन श्रुत्वा त्रिः त्रिवारं यः प्रपठेत् अस्य दत्तात्रेयः लोके सन्मानं सत्कारं कीर्तिकामं मनोरथं च झटिति कामं यथेच्छं यथा स्यात्तथा करोति इष्टार्थपूरको भवतीत्यर्थः ॥ समानमात्राकत्वान्मात्रासमकं वृत्तम् ॥ ५३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचमः सर्गः ॥ ५ ॥ त्रिपंचाशत्पद्ययुते षष्ठे रैवतकाद्यः ॥ शुकोद्भवोऽरणेर्व्यासाद्वर्ण्यते च तदात्म धीः ॥ ६ ॥ आदिनाथाद्विंशतिसंख्यं रैवताख्यानंदं गुरुं प्रणमति । अस्मादिति । रैवतमन्वन्तरे प्रसिद्धो रैवतकनामा सिद्धस्तस्मात् तात्रेयान्मंत्रमुख्यं मंत्रादिसर्वं रहस्यं

निखिलं दत्तात्रेयचरित्रं यः श्रुत्वाऽऽश्रुत्यापूर्वं प्रपठेत्त्रिर्गुरुभक्त्या सः ॥ लोके कीर्तिं चास्य तु कामं सन्मानं कामं पूर्णं दत्तात्रेयः करोति ॥ ५३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे दत्तात्रेयगुरुकथावर्णनं नाम पंचमः सर्गः ॥ ५ ॥ श्रीदेशिकेंद्र उवाच ॥
तस्मादथो रैवतकाख्यसिद्धः प्रापाखिलं मंत्रमुखं रहस्यम् ॥ मन्वंतरे त्रिंशतिपूरकं रैवते प्रसिद्धं स्वगुरुं नताः स्मः ॥ १ ॥ यो रैवता ख्यादथ वासुदेवः संप्राप्तविद्योऽखिलविश्वसूत्रम् ॥ स्वाभिन्नमैक्षिष्ट जगन्निवासं तं चैकविंशं स्वगुरुं नताः स्मः ॥ २ ॥ वासुदेवात्तथा सिद्धो व्यासः पूर्णोऽभवत्सुधीः ॥ सत्यवत्यां तु यो जातः साक्षाद्विष्णुः पराशरात् ॥ ३ ॥ त्रेतायां तु व्यतीतायां द्वापरे समुपस्थिते ॥ वर्णाश्रमवतां धर्मान्वक्तुं सम्यगशेषतः ॥ ४ ॥ चतुर्धा व्यभजद्वेदं शाखा बह्वीस्तथा पृथक् ॥ विभज्याध्यापयामास शिष्या न्व्यासो बहूनथ ॥ ५ ॥ भारतं पंचमं वेदं विश्वोपकृतयेऽकरोत् ॥ वर्णाश्रमविभागेन यत्रोक्तो धर्मनिर्णयः ॥ ६ ॥ चक्रेऽष्टादश महापुराणानि तथा विभुः ॥ तावंत्युपपुराणानि नानागाथान्वितानि च ॥ ७ ॥

पूर्णाभिषेकादिकं प्राप तं विंशतिसंख्यापूरकं विंशतितमं रैवतकानंदं वयं नताः स्मः ॥ इंद्रवज्रा वृत्तम् ॥ १ ॥ वासुदेवानंदमेकविंशगुरुं प्रणमति ॥ य इति । अथ यो वासुदेवः रैवताख्यगुरोः सकाशात्सम्यक् पूर्णाभिषेकविधिना प्राप्तविद्यः सर्वविश्वसूत्रं 'जगन्निवासं तत्सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः वासुदेवं नारायणं स्वाभिन्नम् आत्माभिन्नं हृदाऽपश्यत् तं वासुदेवानंदं नताः स्मः ॥ २ ॥ वासुदेवानंदसकाशात्पूर्णः पूर्णाभिषिक्तो व्यासः सुधीः सुज्ञानवानासीत् । स च अशेषतः सर्वान् धर्मान् वक्तुं द्वापरादौ पराशरात्सत्यवत्यां साक्षाद्विष्णुर्जात इति योज्यम् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ अष्टादशमहापुराणानि गणेशपुराणे उक्तानि । तथाहि ।

"मात्स्यं कौर्म्यं च वाराहं ब्रह्माण्डं वैष्णवं तथा॥ब्रह्मवैवर्तकं पाद्ममाग्नेयं मारुतं शुभम् ॥ ब्राह्मं स्कान्दं तथादित्यं भविष्यं लिंगमेव च ॥ मार्कण्डेयं भागवतं गारुडं वामनं तथा"इति ॥ उपपुराणानि च तत्रैव ॥ यथा—गाणेशं तत्त्वसारं च नृसिंहं शैवमेवच । भगवत्याः पुराणं च रेणुकायाः पृथक् स्मृतम् ॥ गुरुनारदसंज्ञं च यमनारदसंज्ञकम् । हंसं च वायुसंप्रोक्तं नन्दिसंज्ञं तथा परम् ॥ भविष्यपर्वसंज्ञं च तथा पाशुपतं शुभम् । बृहद्ब्रह्माण्डसंज्ञं च तंत्रं भारतसंज्ञकम् ॥ विष्णोरहस्यं विख्यातं लघुनारदसंज्ञकम् । विष्णुधर्मोत्तरं चेति प्रोक्तान्यष्टादशापि ते इति ॥ ते तानीत्यर्थः । पुंस्त्वमार्षम् । नानागाथा

तथा सौरं च गाणेशं शाक्तं वैष्णवशैवके ॥ महात्म्यं चैषु संप्रोक्तं विविधं सकथानकम् ॥८॥ व्यासस्य स्वस्य चाख्यानमुत्पत्त्यादि सविस्तरम् ॥ प्रसिद्धं तत्पुराणेषु तस्मान्नात्रातिवर्ण्यते ॥ ९ ॥ व्यासस्यैवाज्ञया सर्वे वर्तंते ब्राह्मणादयः ॥ वर्णास्तथाऽऽश्रमाः सर्वे स्वधर्माचारतः पृथक् ॥ १० ॥ स्वयोगबलतोऽद्यापि वर्तते कामरूपधृक् ॥ पुण्येन दर्शनं तस्य वाराणस्यां क्वचिद्भवेत् ॥ वर्णाश्रमाणामखिलांश्च धर्मान्वक्तुं व्यासं विष्णुमिलावतीर्णम् ॥पराशरात्सत्यवतीभवं तं द्वाविंशमेनं गुरुमानताः स्मः ॥११॥१२॥अथारणेरभूद्व्यासाच्छुकोऽयोनिभवः सुतः ॥ पितुर्लब्ध्वाऽभिषेकादीन्सिद्धः सर्वगतात्मदृक्॥१३॥मयूरेश्वर उवाच ॥ विस्तरेण शुकोत्पत्तिं भवंतः कथयंतु मे ॥ पत्नीं विना कथं व्यासाज्जातः पुत्रः शुकोऽरणेः ॥१४ ॥ श्रीदेशिकेंद्र उवाच ॥ एकदा स्वाश्रमे व्यासोऽपश्यद्वृक्षे विहंगमौ ॥ कृतनीडौ प्रेमयुक्तौ जातमात्रे शिशौ परम् ॥ १५ ॥ भक्ष्यमानीय यत्नेन क्षिपंतौ तन्मुखे मुहुः ॥ चुंबंतौ तन्मुखं चांगं घर्षयंतौ निजांगतः ॥ १६ ॥ दृष्ट्वाद्भुतं तयोः प्रेम तिरश्चोरपि बालके॥ व्यासश्चितातुरः कामं मनसैवं विचिंतयन् ॥ १७ ॥

न्वितानि नानाकथायुक्तानि ॥ ७ ॥ एषु पुराणेषु ॥ ८ ॥ अत्र ग्रंथे ॥ ९ ॥ स्वधर्माचारतः स्वस्वधर्मेण स्वस्वाचारेण च ॥ १० ॥ ११ ॥ द्वाविंशं व्यासानंदं प्रणमति॥वर्णाश्रमाणामिति । इलायां पृथिव्यामवतीर्णं पराशरात्सत्यवत्यां भवम् उत्पन्नं व्यासानंदं नताः स्मः ॥१२॥ अथारणेरिति ॥ ॥ १३ ॥ १४ ॥ विहंगमौ पक्षिणौ । जातमात्रे सद्योजाते शिशौ परमप्रेमयुक्तौ ॥ १५ ॥ १६ ॥ तिरश्चोः पक्षिणोः । कामम् अत्यंतम् ॥ १७ ॥

सेवाफलं सेवारूपं फलम् इच्छताम् पुत्रादिति शेषः । मनुष्याणां यत् प्रेम तत्किं चित्रम न किंचिदाश्चर्यमित्यर्थः । सेवाफलाभावेपि प्रेमातिशयश्चित्रमित्याह पक्षिबालेनेति ॥ १८ ॥ १९ ॥ नैसर्गिकं स्वाभाविकम् ॥ २० ॥ एवम् इहामुत्र पुत्रात्सुखमस्तीति विचिन्त्य ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

दृश्यते चाद्भुतं प्रेम पक्षिणोरपि बालके ॥ किं चित्रं यन्मनुष्याणां सेवायाः फलमीप्सताम् ॥ १८ ॥ पक्षिबालेन किं सेवा क्रियते वार्धकेनयोः ॥ किं वापित्रोर्गयाश्राद्धं पक्षिबालः करिष्यति ॥ १९ ॥ नैसर्गिकं सुखं तस्मात्प्राणिनां पुत्रजं महत् ॥ अपुत्रस्य गतिर्नास्तीत्याहुर्मन्वादयोऽपि च ॥ २० ॥ एवं निश्चित्य निःश्वस्य व्यासश्चिंतातुरोऽभवत् ॥ तपस्तप्तुं जगामाशु सुमार्गे मेरुसन्निधौ ॥ २१ ॥ तत्र दृष्ट्वा मुनिं व्यासो नारदं चांजसाऽऽगतम् ॥ नत्वाऽपृच्छन्मयाराध्यः को देवः पुत्रलब्धये ॥ २२ ॥ तच्छ्रुत्वा नारदः प्राह व्यासाऽऽराध्या त्वयांबिका ॥ शक्ताः सर्वे तया देव्या ह्यशक्तास्तां विनाऽखिलाः ॥२३॥ तामेवाऽतः शिवां शिवामाराधय सिद्धिदाम् ॥ उक्तेत्थं नारदे तस्माद्गते व्यासो दृढासनः ॥२४॥ स्थित्वा जजाप वाग्बीजं देवीं शंभुं च संस्मरन् ॥ खानिलाग्निधरानीरैः पुत्रमिच्छन् गुणाकरम् ॥ २५॥ एवं तपः कुर्वतोस्य व्यतीयुः शतवत्सराः ॥ ततोऽस्य तेजसा व्याप्तं विश्वं सर्वं चराचरम् ॥२६॥ इंद्रस्तत्तेज आलक्ष्य चिंताढ्यः शंकरं ययौ ॥ नत्वा व्यासतपोवृत्तं तमाहेंद्रो भयान्वितः ॥ २७ ॥ वृषारूढस्तदा शंभुः सेंद्रो व्यासांतिकं ययौ ॥ उत्तिष्ठेति मुनिं प्राह पुत्रस्ते भविता ध्रुवम् ॥ २८ ॥ सर्वतेजोमयो ज्ञानी कीर्तिमानखिलप्रियः ॥ तच्छ्रुत्वोत्थाय तं व्यासो नत्वागादाश्रमं मुदा ॥ २९ ॥ अग्निकार्यार्थमरणिं ममंथाग्निचिकीर्षया ॥ प्रादुर्भूतं तदैवाग्निं दृष्ट्वा व्यासो व्यचिंतयत् ॥३०॥ यथायमग्निरुत्पन्नस्तथा पुत्रः कथं भवेत् ॥ पत्नी पुत्रारणिः ख्याता मम सा तु न विद्यते ॥ ३१ ॥

खानिलाग्निधराणाम् आकाशवाय्वग्निपृथ्वीनां वीर्यं सामर्थ्यं व्यापकत्वासंगत्वतेजस्वित्वक्षमावत्त्वरूपं यस्मिन् तं गुणाकरं गुणसमुद्रम ॥ २५ ॥ २६ ॥ ॥ २७ ॥ २८ ॥ २९ ॥ अग्निकार्यार्थम् अग्निसाध्यकर्मकरणायाऽग्निचिकीर्षा अग्न्युत्पादनेच्छा तयाग्निं ममंथ ॥ ३० ॥ पुत्रारणिः पुत्रजननी पत्नी

ख्यातास्ति ॥ ३१ ॥ पूर्वार्द्धे पूर्वान्वयि । ननु विवाहेन पत्नीलाभो भविष्यतीत्यत आह कथमिति ॥ ३२ ॥ ३३ ॥ धर्मसंकटे गृहस्थधर्माचरणसंकटे ॥ ॥ ३४ ॥ ३५ ॥ यथा गृहिण्या मोक्षदं तथाऽनया घृताच्या पुंश्चल्या तत् गार्हस्थ्यं मोक्षप्रदं न स्यात् । गृहिण्या गृहकार्याणि न पुंश्चल्या न वेश्यये

तरुणीं रूपसम्पन्नां कुलोत्पन्नां पतिव्रताम् ॥ कथं करोमि कांतां च पादयोः शृंखलासमाम् ॥ ३२ ॥ चिंतयन्नेवमाकाशे घृताचीमप्स रोवराम् ॥ यदापश्यत्तदाभूच्चकामबाणप्रपीडितः ॥ ३३ ॥ अचिंतयत्तदा चित्ते किं कार्यं धर्मसंकटे ॥ यदामया स्वीकृता स्यादपकी र्तिस्तदा मम ॥३४॥ कामं निंदापि भवतु यदि स्यादतुलं सुखम् ॥ गार्हस्थ्यं पुत्रदं स्वर्ग्यं ज्ञानान्मोक्षप्रदं स्मृतम् ॥ ३५ ॥ न स्यात्त थानया नूनं नारदात्तन्मया श्रुतम् ॥ उर्वश्यप्सरसा साकं दुःखं प्राप्तः पुरूरवाः ॥३६॥ इत्थं चिंतयति व्यासे शापभीता गताप्सराः ॥ शुकीभूताथ दृष्ट्वा तां व्यासोभूद्विस्मयान्वितः ॥ ३७ ॥ कामाद्व्याकुलचेताश्च सर्वगात्रेषु कम्पयुक् ॥ धैर्यं प्रकुर्वतोप्यस्य शुक्रं व्यासस्य चारणौ ॥३८॥ अपतत्तत्र संभूतः शुको व्यासाकृतिः शुभः ॥ द्वितीयोग्निरिवात्यंतं दीप्यमानः स्वतेजसा ॥३९॥ गंगा तं स्नापयामास पेतुः पुष्पाणि खाद्भृशम् ॥ दिवि दुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः॥४०॥गंधर्वाश्च जगुर्व्यासो जातकर्म तदाऽकरोत् ॥ यतो दृष्टं शुकीरूपं घृताच्यास्तस्य संभवे ॥४१॥ अतः शुकेति नामास्य चकार मुनिसत्तमः ॥ तदर्थं खात्पपातोर्व्यां दंडोऽजिनकमंडलू ॥४२॥ पुत्रस्य जात मात्रऽस्योपनीतिं हि पिताऽकरोत् ॥ ब्रह्मचर्यव्रतं चक्रे गुरुं कृत्वा स वाक्पतिम् ॥४३॥वेदाञ्छास्त्राणि चाधीत्य गुरवे दक्षिणां ददौ॥सांगा वेदाश्चोपतस्थुर्बालं तत्पितरं यथा॥४४॥ शुको निजाश्रमं प्राप्य ववंदे पितरं मुदा॥ व्यासोपि तं समालिंग्य पप्रच्छ कुशलं सुधीः॥४५॥ व्यासःशुकमुवाच त्वं कुरु भार्यां विधानतः॥धर्मेणोत्पादय सुतान्नापुत्रस्य गतिर्यतः॥४६॥त्वदर्थं शतवर्षाणि तप उग्रं कृतं मया॥ कृत्वा गृहाश्रमं पुत्र सफलं तत्कुरुष्व मे ॥४७॥ निशम्येत्थं पितुर्वाक्यं प्रत्युवाच शुकोपितम्॥गार्हस्थ्यं नैवाश्रयामि यतोऽस्मिन्दुःखदं [illegible] ॥४८

त्यर्थः ॥ ३६ ॥ शुकीभूता सती गतेत्यन्वयः ॥ ३७ ॥ धैर्यमुत्तरान्वयि ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ आकाशात् अजिनकमंडलू पेततुरिति विपरिणामेन योज्यम् ॥ ४२ ॥ वाक्पतिं बृहस्पतिम् ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ [illegible] ॥ ४७ ॥ [illegible]

गार्हस्थ्ये उल्बणं महत् दुःखं भवति ॥ ४८ ॥ तया स्त्रिया ॥ ४९ ॥ रुष्यति कुप्यति ॥ ५० ॥ ५१ ॥ अजादयोऽपि ब्रह्माद्या अपि शक्तिवशाः सं ।आत्मनं विस्मृत्य सृष्ट्यादिकं वितन्वते विस्तारयन्ति ॥ ५२ ॥ पुण्यतः अनेकजन्मार्जितपुण्यपरिपाकवशात् अयोनिजत्वं परिलभ्य प्राप्य मेऽन्तरात्मा योनौ नो सज्जति न सम्बध्नाति तद्योगं नापेक्षते इत्यर्थः । तस्मात्तत्र प्रेरणा न कार्या । किं तु त्वं मामद्य अपारदुःखात् भवतः संसाराद्रक्ष ।

सदा स्त्रीवशता यत्र न स्वातंत्र्यं तु कर्हिचित् ॥ तया यद्याच्यते वस्तु सुलभं वातिदुर्लभम् ॥ ४९ ॥ अवश्यमेव तद्देयं नो चेत्सा रुष्याति ध्रुवम् ॥ राजाज्ञा लंघ्यते कैश्चिद्बलवद्भिः स्वशक्तितः ॥ ५० ॥ योगिभिर्दैवताज्ञापि लंघ्यते योगशक्तितः ॥ नाज्ञा स्त्रियस्तु लंघ्या स्याद्बलवद्भिरपीश्वरैः ॥ ५१ ॥ विस्मृत्य चात्मानमजादयोपि सृष्ट्यादिकं शक्तिवशा वितन्वते ॥ ज्ञानोपघाताय स्त्रियां हि संगतिः गार्हस्थ्यतो दुःखतरं न किंचित् ॥ ५२ ॥ अयोनिजत्वं परिलभ्यपुण्यतः योनौ हि नो सज्जति मेन्तरात्मा ॥ अपारदुःखाद्भवतो द्य रक्ष मास्मिंस्त्यज त्वं शरणागतं माम् ॥ ५३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शुककथावर्णनं नाम षष्ठः सर्गः ॥ ६ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं शुकोक्तिमाकर्ण्य व्यासः प्राह पुनः शुकम् ॥ पुत्रैवं मा वचो ब्रूहि खिद्यतेऽस्मान्मनो मम ॥ १ ॥ क्लेशादुत्पादितोसि त्वं शतवर्षं तपोमयात् ॥ कृत्वा गृहाश्रमं तन्मे दुःखं नाशय भोः शुभ ॥ २ ॥ पुत्रान् पौत्रांश्च ते दृष्ट्वा भविष्येहं सुखान्वितः ॥ अपुत्रस्य गतिर्नेति जगुर्मन्वादयोऽखिलाः ॥ ३ ॥ वाक्पतिस्त्वद्गुरुः साक्षात्स्मृतिकर्ता गृहाश्रमी ॥ वसिष्ठाद्यास्तथान्येपि गृहस्थाश्च त्मवित्तमाः ॥ ४ ॥ गार्हस्थेन समस्त्वन्यो नाश्रमेषु चतुर्ष्वपि ॥ मध्याह्ने गृहिणं यस्मादायांत्याश्रमिणस्त्रयः ॥ ५ ॥

अस्मिन् संसारे शरणागतं मा त्यज । मत्प्रवृत्तिं संसारे मा कुर्वित्यर्थः ॥ वृत्तमुपजातिः ॥ ५३ ॥ इति श्रीगुरुपरम्पराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां षष्ठः सर्गः ॥ ६ ॥ पंचाशत्पद्यवत्सर्गे सप्तमेत्र गृहाच्छुकः ॥ निवृत्तः प्रेषितः पित्रा जनकं चेति वर्ण्यते ॥ ७ ॥ इत्थमिति । अस्माद्वचसः ॥ १ ॥ ॥ २ ॥ ३ ॥ वाक्पतिर्बृहस्पतिः गृहाश्रमी गृहस्थाश्रमवान् ॥ ४ ॥ त्रयः ब्रह्मचारिवानप्रस्थसंन्यासिनः निःस्पृहाः अपि भुक्त्यर्थं मध्याह्ने गृहिणमायां

तीति संबंधः ॥ यथोक्तं "यथा मातरमाश्रित्य जीवंते सर्वजंतवः ॥ वर्तंते गृहिणं तद्वदाश्रित्येतर आश्रमाः" इति ॥ ५ ॥ आहुः मुनय इति शेषः ॥ ॥ ६ ॥ ७ ॥ ८ ॥ जयार्थमिति । यथोक्तं विष्णुभागवते ॥ यानाश्रित्येन्द्रियारातीन्दुर्जयानितराश्रमैः । वयं जयेम हेलाभिर्दस्यून्दुर्गपतिर्यथेति

निः स्पृहाश्चापि भुक्त्यर्थं तस्माच्छ्रेष्ठो गृहाश्रमः॥बलवंतींद्रिण्याहुर्दुर्जयानि महात्मभिः ॥ ६ ॥ तज्जयस्तु स्त्रिया नान्यैर्जपपाठादिसाधनैः ॥ पूर्वं चिरं तपस्तेपे विश्वामित्रो महामुनिः ॥७॥ दृष्ट्वैव मेनकां त्यक्त्वा तपो रेमे तया सह ॥ ततः शकुंतला जाता कन्या कमललोचना॥८॥ जयार्थमिंद्रियाणां च पुत्र त्वं स्त्रियमुद्वह ॥ व्यासात्प्रापंचिकं वाक्यं श्रुत्वा प्राह शुकोपि तम् ॥९॥ प्रवर्तयसि मां घोरे प्रपंचे किं बलात्पितः ॥ आत्मतत्त्वोपदेशेन रक्ष मां भवसंकटात् ॥१०॥आत्मलाभात्परो लाभो नास्तीत्याह स्वयं श्रुतिः ॥ हृता बृहस्तपेर्भार्या शिष्येणापींदुना बलात् ॥ ११ ॥ तदर्थं बुभुजे दुःखं गुरुश्चेति श्रुतं मया ॥ वसिष्ठस्य सुताः सर्वे विश्वामित्रर्षिणा हताः ॥ १२ ॥ तावुभौ पक्षिणौ भूत्वा मिथो युयुधतुर्भृशम् ॥ सर्वज्ञावपि संसारे दुःखमेवापतुर्मुनी ॥ १३ ॥ कृतदारः सुखी कश्चिज्जातो नाग्रे भविष्यति ॥ हरतीक्षणतश्चित्तं स्पर्शाद्धैर्यं बलं महत् ॥ १४ ॥ सहवासात्तपो वित्तं योषेत्थं सर्वघातिनी ॥ स्त्रीसंगान्नापरं दुःखं नात्मज्ञानात्परं सुखम् ॥ १५ ॥ तस्मात्तदेव मे ब्रूहि सुखमेव यतो भवेत् ॥ साक्षात्सुतस्तवाहं मां न स्त्रीसंगे नियोजय ॥ १६ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं गृहाश्रमे पुत्रमनासक्तं विलोक्य सः ॥ व्यासो दुःखान्वितोऽत्यंतं रुरोदाश्रुपरिप्लुतः॥१७॥ दुःखितं पितरं दृष्ट्वा शुकः प्राह हसन्निति ॥अहो बलवती माया ज्ञानिनामपि मोहिनी॥ १८ ॥

प्रापंचिकं प्रपंचभवं तद्योग्यमिति यावत् ॥ ९॥ १० ॥ ११ ॥ १२ ॥ पक्षिणौ आडीबकसंज्ञौ ॥ १३ ॥ ईक्षणतः अवलोकनमात्रेण । चित्तं स्पर्शात् स्पर्शमात्रेण धैर्यं बलं च हरति ॥ १४ ॥ १५ ॥ यतः आत्मज्ञानात् ॥ दत्तक्रीतादिव्युदासार्थं साक्षात्पदम् ॥ १६ ॥ १७ ॥ आश्चर्यजनकत्वेन

हसन्नित्याह ॥ आश्चर्यमेवाह अहो इत्यादिना ॥ १८ ॥ १९ ॥ २० ॥ देवीभागवतं देवीभागवताख्यं महापुराणम् ॥ २१ ॥ आत्मवान् आत्मज्ञानवान् ॥ २२ ॥ पद्याष्टादशसाहस्रं पद्यानामष्टादशसहस्राणि यस्मिन् तत् ॥ २३ ॥ २४ ॥ आत्मवान् ज्ञानी ॥ २५ ॥ २६ ॥

नारायणांश एव त्वं वेदानां यो विभागकृत् ॥ भारतस्यापि कर्तासावष्टादशपुराणकृत् ॥ १९ ॥ सोपि प्राकृतवत्पुत्रं मां मत्वा रोदिति प्रभुः ॥ नमामि तां परां शक्तिं यया संमोह्यते जगत् ॥ २० ॥ वदतीत्थं शुके व्यासः शुकमाहाथ भो शुक ॥ पठ देवीभागवतं सारभूतं मया कृतम् ॥ २१ ॥ ज्ञानवैराग्यसंयुक्तं श्रीदेव्या भक्तिवर्द्धनम् ॥ तत्समालोचनाच्छीघ्रं भवसि त्वं शुकात्मवान् ॥२२॥ इत्युक्त्वाध्यापयामास देवीभागवतं परम् ॥ पद्याष्टादशसाहस्रं व्यासः पुत्राय धीमते ॥ २३ ॥ यदा भागवतं स्वस्मादधीत्यापि न तुष्टधीः ॥ तदा व्यासः शुकं प्राह गच्छ त्वं मिथिलां शुक ॥ २४ ॥ तत्रास्ति जनको राजा कुर्वन्राज्यं सदात्मवान् ॥ दर्शनात्तस्य राजर्षेः संशयस्ते विनश्यति ॥ २५ ॥ तच्छ्रुत्वा प्राह पितरमिदं भाति मृषैव मे ॥ कुर्वन्राज्यं कथं ज्ञानी जनको नृपसत्तमः ॥ २६ ॥ संशयो मे महानत्र गच्छाम्यस्य निवृत्तये ॥ द्रष्टुं तं जनकं यस्तु तिष्ठन्राज्येपि चात्मवान् ॥ २७ ॥ चकमे मिथिलां गन्तुमात्माजिज्ञासया शुकः ॥ व्यासो जिगमिषुं प्राह शीघ्रमागच्छतां शुक ॥ २८ ॥ त्वद्वियोगोत्थदुःखेन वर्षतुल्यः क्षणो भवेत् ॥ शुकोप्याह पितः शीघ्रमागमिष्ये तवान्तिकम् ॥ २९ ॥ तथेति सोयं प्रतिश्रुत्य काननं गिरींस्तथोल्लंघ्य ययौ पुरीं ताम् ॥ यामात्मवेत्ता जनकः प्रपाति नात्यस्थराजेव यथा पुराणि ॥३०॥ शुकोपश्यत्पुरं रम्यं नानोद्यानसुशोभितम् ॥ अत्युच्चबाह्यपरिधिं द्वारपैर्युक्तगोपुरम् ॥३१॥ शतघ्नीभिः समाक्रांतः प्राकारोयं समंततः ॥ बहिरन्तर्भटैर्गुप्तमुद्यन्नानायुधैः सदा ॥३२॥ गतागतैस्तुलोकानां संमदान्वितपद्धति ॥ पुरोत्तमं संपश्यत्तच्छुकः संप्राप्य गोपुरम् ॥३३॥ गमनेऽतः कृतोद्योगो द्वारपेण निवारितः ॥ गत्वा दूरं स्थितस्तूष्णीं तत्क्षत्ता प्राह तं शुकम् ॥३४॥

॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ द्वारपालैर्युक्तं गोपुरं पुरद्वारं यत्र । पुरद्वारं तु गोपुरमित्यमरः ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

॥ ३५॥ ३६॥क्षत्त्रा द्वारपेन निजाशयं स्वाभिप्रायम् ॥ हे क्षत्तः यदर्थमहमागतोस्मि तदत्र द्वारे एव ज्ञातम्॥ ३७॥ यदर्थमागतोस्मि तदेवाह॥ब्रह्मविदिति॥ अत्रत्यो। मिथिलानिवासी धर्मगुप्तये धर्मरक्षणाय दंडकृद्राजा आत्मविदात्मज्ञानी कथं स्यात् ॥ ३८॥ ३९॥ यथा प्रदीप्तेऽग्नौ कोमलतृणसंभवो न भवति तथा

कोसि त्वं किं स्थितस्तूष्णीमागतोसि कुतो वद ॥ कार्यं किञ्चास्ति ते राज्ञा पुरस्थेनोत केनचित् ॥ ३५ ॥ इत्युक्तस्तेन नोवाच किंचिद्वाचं तदाऽवदत् ॥ मूकोसि किं न मां ब्रूषे न ज्ञेयं कथनाद्विना ॥ उक्त्वा कार्यं कुलं शीलं गंतव्यं नगरे त्वया॥ ३६ ॥ इत्थं क्षत्त्रा शुकः पृष्टस्तमुवाच निजाशयम् ॥ क्षत्तस्तज्ज्ञातमत्रैव यदर्थमहमागतः ॥३७॥ ब्रह्मविज्जनकोऽत्रत्यो राजेत्याह पिता मम ॥ कथं राजात्मविद्यस्तु दंडकृद्धर्मगुप्तये ॥ ३८ ॥ दंडादृते न तिष्ठंति स्वधर्मेषु यतः प्रजाः ॥ दंड्याः कृतागसो राज्ञा प्रजाः सर्वा इति स्मृतिः ॥ ३९ ॥ न क्वापि दंडकर्तृत्वं ब्रह्मज्ञे समदर्शिनि ॥ यथा नैव प्रदीप्तेऽग्नौ नूतनार्जुनसंभवः ॥ ४० ॥ इत्थं संशयमापन्नो द्रष्टुं राजानमागतः॥उल्लंघ्य बहुकष्टेन मेरुं हिमगिरिं तथा ॥ ४१ ॥ वर्षत्रयमतिक्रांतं मार्गे प्रवसतो मम ॥ वित्ताशया द्विजाः केचित्पर्यटन्ति भुवं श्रमात् ॥४२॥ साशा मय्यस्ति नाल्पापि व्यर्थं कष्टमपेक्षितम्॥ प्रारब्धमेव भोग्यं मे नापराधोत्र कस्यचित् ॥४३॥ इति तस्य वचः श्रुत्वा क्षत्ता चेतस्यचिंतयत् ॥ कश्चिन्नूनमयं ज्ञानी मया व्यर्थं निवारितः ॥ ४४ ॥ इति मत्वा शुकं प्राह गच्छांतस्त्वं सुखं द्विज ॥ अज्ञात्वा त्वां महात्मानं पुरा संरुद्धवान्बहिः ॥ ४५ ॥ शुकस्तमाह नात्रास्ति द्वारपागस्तवाण्वपि ॥ यथाज्ञा स्वामिना दत्ता तथा कुर्वंति सेवकाः ॥ ४६ ॥

समदर्शिनि ब्रह्मज्ञे कर्तृत्वादिरहिते ब्रह्मविदि दण्डकर्तृत्वसंभवो नास्ति 'यवसं तृणमर्जुनम्' इति कोशादर्जुनशब्दस्य तृणवाचित्वम् ॥ ४० ॥ इत्थं ब्रह्मविद्राजा कथमिति संशययुक्तः जनकं राजानं द्रष्टुं आगतोस्मि॥ ४१॥ ४२॥ ४३॥ ४४॥ ४५॥ हेद्वारप तवागः अपराधः 'आगोपराधो मंतुश्च' इत्यमरः॥ ४६॥

मया तु नृपम् अदृष्ट्वैव तदंतः तस्यांतःकरणं तदाज्ञानुगतस्य जनकसेवकस्य द्वारपस्य संगात् संगतः ज्ञातम् ॥ यथा जनैः अंबुनिधिं समुद्रं अदृष्ट्वैव तज्जनितलवणस्य भक्षणात्तज्जलस्य रसः समुद्रोदकरसो ज्ञायते तद्वत् ॥ ४७ ॥ यद्यपि ज्ञानहीनत्वाद्दर्शनायोग्योयं राजा तथापि पितुराज्ञया दर्शनमात्रं कर्तव्यमित्याह । तथापीति अभाविष्यत् हेतुहेतुमद्भावे लङ् ॥ ४८ ॥ अत्र नगरे ॥ अट्टं हर्म्याद्युपरि गृहम् । 'स्यादट्टः क्षौममस्त्रियाम्' इत्यमरः ॥ ४९ ॥ दंडेन तद्गृहीतदंडेन । प्राक्तनं

मया त्वदृष्ट्वैव नृपं तदंतर्ज्ञातं तदाज्ञानुगतस्य संगात् ॥ जनैरदृष्ट्वांबुनिधिं जलस्य रसो यथा तल्लवणस्य भक्षणात् ॥ ४७ ॥ तथापि कष्टेन समागतोहं दूरान्नृपस्यास्य निरीक्षणाय ॥ व्यासाऽज्ञयाऽतोऽद्य पुरं प्रवेशोऽभविष्यदस्याप्यभविष्यदीक्षा ॥ ४८ ॥ इत्थं स निश्चित्य शुकः प्रविष्टस्त्वपश्यदत्राखिलमंदिराणि ॥ रम्याण्यथाट्टं क्रयविक्रयाय स्वधर्मसक्तानखिलांश्च वर्णान् ॥ ४९ ॥ सौधस्य स द्वारमवाप्य तत्र द्वाःस्थेन दंडेन निवारितो यत् ॥ तदप्यसौ प्राक्तनमेव मेने तूष्णीं स्थितो दूरमसौ निरीहः ॥ ५० ॥ ॥ इति श्रीगुरुपरम्पराचारित्रे पूर्वार्द्धे शुककथावर्णनन्नाम सप्तमः सर्गः ॥ ७ ॥ श्रीदेशिकेंद्र उवाच ॥ मुहूर्तेन नृपामात्यस्तत्रागत्य शुकं मुनिम् ॥ प्रार्थयित्वाऽनयच्चांतर्बहुमानपुरःसरम् ॥ १ ॥ वाद्यघोषैर्वारयोषिन्नर्तनैर्दूरतः स्थितैः ॥ शुकसान्निध्यगैर्विप्रैर्वेदपाठपरैस्तथा ॥ २ ॥ प्रार्थयद्भिस्तथान्यैश्च यष्टिभ्रैर्मार्गदर्शिभिः ॥ एवं गच्छञ्छुकोऽपश्यद्राजैश्वर्यं महत्तरम् ॥ ३ ॥ अश्वेभरथशालादि सशस्त्रं पत्तिमंडलम् ॥ शुकोथ मंत्रिभिर्नीतो राजांतर्गृहमादरात् ॥ ४ ॥ तत्राप्सरःसमस्त्रीभिः शुकोयं सत्कृतो मुनिः ॥ स्थापयित्वासने दिव्ये पाद्यार्घ्यादिभिरर्चितः ॥ ५ ॥ स्नापितो वारिणोष्णेन सुरभिद्रव्यतैलतः ॥ वस्त्रचन्दनमाल्याद्यैस्ताभिरेव स्वलंकृतः ॥ ६ ॥

दैवं मेने ॥ ५० ॥ उप० ॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां सप्तमः सर्गः ॥ ७ ॥ षष्टिपद्येऽष्टमे पश्यन्राजैश्वर्यं शुकोऽस्पृहः ॥ राज्ञोपदिष्टो बहुधा गार्हस्थ्यार्थमितीर्यते ॥ ८ ॥ मुहूर्तेनेति । अमात्यो मुहूर्तेन मुहूर्तानंतरं तत्र शुकमागत्य बहुमानपुरःसरं यथा स्यात्तथा वाद्यादिभिः सह अंतःराजमंदिरान्तःप्रदेशमनयदिति सार्द्धद्वयेनान्वयः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ शुकः अर्चितः अमात्यैरिति शेषः ॥ ५ ॥ सुरभिद्रव्येण तैलेन च सार्वविभक्तिकस्तसिः । ताभिः ।

स्त्रीभिः ॥६॥७॥८॥ कामदीपनैः कामोद्दीपकैः पक्षिणां कोकिलादीनां शब्दैः ॥ वेदाध्यायं वेदाध्ययनम् ॥९॥ परमं ब्रह्म गायत्रीं जजाप । समानीतो गृहान्तरे इत्यादिश्लोकत्रयेणान्वयः ॥ १० ॥ सायाह्ने सूर्यास्तानन्तरम् । रात्राविति यावत् ॥ ११ ॥ कामस्य उद्दीपनं यैस्तैश्चेष्टितैः हावभावाद्यैश्चेष्टितोपि संकेतितोपि कामकश्मलतां कामाधीनतां न ययौ ॥ १२ ॥ वातोत्सर्पितधूलिभिः । वायुनिक्षिप्तपांसुभिर्यथाब्धिः कलुषतां न याति तद्वत् इति

भोजितः परमान्नेन दत्त्वा तांबूलमुत्तमम् ॥ स्थापितो मंचवर्येसौ क्षणादुत्थाय मंचतः ॥७॥ शुकोऽपश्यद्वनं रम्यं स्त्रीक्रीडार्थं सुरोपितम् ॥ नानावृक्षलताकीर्णं फलपुष्पसमन्वितम् ॥ ८ ॥ नादितं पक्षिणां रावैर्मंजुलैः कामदीपनैः ॥ स्थित्वा तत्र तरोर्मूले वेदाध्यायमथाकरोत् ॥ ९ ॥ ततः सूर्यास्तसमये सायंसंध्यां चकार सः ॥ जजाप ब्रह्म परमं समानीतो गृहान्तरे ॥ १० ॥ दत्तभोज्योथ सायाह्ने वरस्त्रीभिः सुमंचके ॥ महार्हास्तरणे नीतस्तांबूलाद्यैः सुतोषितः ॥ ११ ॥ पादसंवाहनाद्यैश्च कामोद्दीपकचेष्टितैः ॥ चेष्टितोपि शुको नैव कामकश्मलतां ययौ ॥ १२ ॥ यथा कलुषतां नाब्धिर्वातोत्सर्पितधूलिभिः ॥ सुप्त्वापार्धे गते यामे मंचोपरि शुको निशि ॥ १३ ॥ उत्थायांतिमयामेसौ संपाद्य मुखमार्जनम् ॥ कृत्वा शुको जले स्नानमारामस्थसरोवरे ॥ १४ ॥ धृत्वा विभूतिं सर्वांगे रुद्राक्षांश्च बहूनथ ॥ उद्यते भानवेर्घ्यांस्त्रीन्दत्त्वा जपमथाकरोत् ॥ १५ ॥ एवं कृताह्निकः प्रातस्तरुमूले श्रुतिं पठन् ॥ कुशपाणिः स्थितस्तत्र स वाञ्छन्राजदर्शनम् ॥ १६ ॥ राजाथ चारमुखतः श्रुत्वा शुकविचेष्टितम् ॥ निःस्पृहोयमिति ज्ञात्वा ययौ तद्दर्शनाय सः ॥ १७ ॥ सोपाध्यायोथ सामात्यः पौरैर्भृत्यैश्च संयुतः ॥ ददर्श शुकमासीनं क्रीडोपवनमध्यतः ॥ १८ ॥ अतिवर्चस्विनं शांतं सुरूपं प्राप्तयौवनम् ॥ व्याससूनुरिति ज्ञातो जनकेन शुकस्त्विषा ॥ १९ ॥ तं प्रणम्य समभ्यर्च्य मधुपर्केण भूपतिः ॥ पप्रच्छ कुशलं तस्मै प्रेम्णा तत्पुरतः स्थितः ॥ २० ॥ निःस्पृहस्य किमर्थं ते मद्गृहागमनं मुने ॥ ब्रूहि स्वांतर्गतान् कामान्पूरये दुर्लभानपि ॥ २१ ॥ इति राज्ञा शुकः पृष्टस्तं स्ववृत्तमथाब्रवीत् ॥ श्रीशुक उवाच ॥ व्यासेन पित्राज्ञप्तोहं भूपते दारसंग्रहे ॥ २२ ॥

पूर्वान्वितम् ॥ १३ ॥ आरामस्य कृत्रिमतया कल्पितस्य सरोवरे उपवनसरःपयसि ॥ १४ ॥ १५ ॥ श्रुतिं वेदम् ॥ १६ ॥ १७ ॥ पूर्वार्द्धं पूर्वान्वितम् ॥ १८ ॥ पूर्वार्द्धं पूर्वान्वितम् ॥ १९ ॥ २० ॥ २१ ॥ स्ववृत्तं स्वागमनवृत्तांतम् ॥ दारसंग्रहे विवाहाख्यसंस्कारसंप्रवर्तने ॥ २२ ॥

मामित्याद्युत्तरान्वयि॥ २३॥ विवेकवान्व्यासः विचारेण शांतचित्तो भूत्वा मां प्रति परं श्रेष्ठं देवीभागवतम् आह प्रोक्तवान्॥ २४॥ २५॥ २६॥ अत्र त्वयि त्वत्समीपम् ॥ २७ ॥ राजा सन् आत्मवेत्ता कथं स्यादिति संशययुक्तः । जनिं जन्म लब्ध्वा ॥ २८ ॥ २९ ॥ हास्यप्रयोजनमाह ॥ व्यास इति ॥ भारतं च कृतमिति योज्यम् । अमुना व्यासेन ॥ ३० ॥ तस्य वाक्ये व्यासवाक्येपि ते पुत्रस्य शुकस्य श्रद्धा नास्ति चेत् मम वाक्ये उपदेक्ष्यमाणे

नाहं स्वीकृतवानाज्ञां बहुधोक्तां च तां पितुः ॥ मामात्मतत्त्वजिज्ञासुं प्रपंचे निःस्पृहं तथा ॥ २३ ॥ मत्वा व्यासः सुदुःखार्तो बभूवाथ विवेकवान् ॥ उपादिशच्छान्तचित्तो देवीभागवतं परम् ॥ २४ ॥ तदधीत्यापि मे बुद्धिर्नैश्चला न यदाऽभवत् ॥ तदोवाच कृपापूर्णो मामित्थं नृपसत्तम ॥ २५ ॥ मिथिलां गच्छ पुत्र त्वं तत्रास्ते जनको नृपः ॥ राज्यं कुर्वंश्चात्मवेत्ता भोगान् भुक्त्वापि निर्ममः ॥२६॥ स राजा तत्वबोधेन त्वां करिष्यत्यसंशयम् ॥ इत्थं पित्राज्ञयात्राहं द्रष्टुं त्वामागतो नृप ॥ २७ ॥ कथं राजात्मवेत्तेति संशयानोऽति कष्टतः ॥ अतस्त्वं वद राजन्मां लब्ध्वा ब्रह्मकुले जनिम् ॥ २८ ॥ याथातथ्येन यत्कार्यं हृदयग्रंथिभेदनम् ॥ श्रीदेशिकेंद्र उवाच ॥ इत्येवं नृपतिः पृष्टस्तमुवाच हसन्मुहुः ॥ २९ ॥ जनक उवाच ॥ व्यासो नारायणः साक्षाच्चतुर्वेदविभागकृत् ॥ भारतं च पुराणानि कृतान्यष्टादशामुना ॥ ३० ॥ यस्याज्ञयाभिवर्त्तंते चतुर्वर्णाः स्वधर्मतः ॥ तस्य वाक्येन चेच्छ्रद्धा वाक्ये मे सा कथं भवेत् ॥३१॥ तथापि दगत्त्वमिहागतोसि व्यासाज्ञया संशययुक्तचेताः ॥ वक्ष्यामि तत्त्वं परमार्थभूतं वचःसु चेन्मे भवतीह निष्ठा ॥ ३२ ॥ ब्राह्मे कुलेऽवाप्य जनिं सुपुण्यैः कृतोपनीतिर्गुरुगेहसंस्थः ॥ व्रतेन वेदान्समधीत्य सांगांस्ततः समावर्त्य गृहाश्रमी स्यात् ॥ ३३ ॥ तत्राग्निहोत्रादि च कर्म कुर्याद्यदृच्छया लब्धधनादितुष्टः ॥ यजेन्मखैरिंद्रमुखांश्च भक्त्याथोत्पादयेन्मोक्षपरोपि पुत्रान् ॥ ३४ ॥ श्रीशार्कशक्तीशगणेश्वरेषु स्वाभेदबुद्ध्यान्यतमं त्वभीष्टम् ॥ मंत्रैरुपासीत गुरूक्तमार्गो देवे मनो देशिक एकबुद्धिः ॥ ३५ ॥

सा श्रद्धा कथं स्यात् ॥ ३१ ॥ परमार्थभूतं तत्त्वम् आत्मतत्त्वम् । वृत्तमुपजातिः ॥ ३२ ॥ व्रतेन मौनभिक्षाचरणगुरुसेवादिब्रह्मचर्यनियमेन समावर्त्य समावर्तनं कृत्वा गृहाश्रमी गृहस्थाश्रमवान् भवेत् ॥ ३३ ॥ यदृच्छया अप्रार्थनया यल्लब्धं धनादि तेन संतुष्टः ॥ ३४ ॥ श्रीशादिषु विष्ण्वादिपंचा

यतनदेवेषु अन्यतमं यं कंचिदभीष्टं देवं स्वाभेदबुद्धया आत्माभिन्नश्रद्धया मंत्रैरुपासीत उपासनां कुर्यात् ॥ तत्तन्मंत्रज्ञानार्थं गुरुः कर्तव्य इत्याह गुरुक्रमार्गो जपपूजादिसंप्रदायो यस्मै सः देवे मनौ मंत्रे देशिके गुरौ च एकबुद्धिः एकत्वनिश्चयवान् ॥ ३५ ॥ स्तुत्येति ॥ स्वेष्टधिया स्वेष्टदेवताबुद्धया स्तुत्या स्तवनेन । अंजसा अनायासेनाऽन्नैः प्रान्नैः सुभोज्यादिभिः उत्तमान्नादिभिः करणैः अतिथीन् तुष्टान् संतुष्टान् कुर्यात् । गृहस्थ इति पृथक् पृथक् योज्यम् । नैव निवर्तयेत् विमुखान्न कुर्यादेवेत्यर्थः । यतः कारणादखिलेभ्यः सर्वेभ्यो दाता अन्न दानकर्ता सः अतः अखिलेभ्यो वरिष्ठः श्रेष्ठोस्ति ॥ ३६ ॥ अथ स्त्रिया सह व्रताढ्यः उपोषणादिव्रतकर्ता असौ अधिकारी आतपम् उष्णं शीतलमंबु कर्म सोढा सहनकर्ता सन् । वने वसेत् । किंभूतः नित्यं प्राक्तनसंग्रहोनः प्राचीनसंग्रहरहितः ॥ ३७ ॥ तत इति । सकलोतिजालात् सर्ववासनासमूहात् विमुक्तः । ऊतयः कर्मवासनेति विष्णुभागवतोक्तेः । पुत्रे

स्तुत्याऽतिथीन्स्वेष्टधियैव तुष्टान्कुर्यात्सुभोज्यादिभिरंजसान्नैः ॥ निवर्त्तयेन्नैव यतो गृहस्थो दाताऽखिलानां स ततो वरिष्ठः ॥३६॥
स्त्रिया व्रताढ्योथ वसेद्वनेसौ सोढाऽऽतपं शीतलमम्बु नित्यम् ॥ वन्यैश्च तत्कालभवैः फलाद्यैः कृताशनः प्राक्तनसंग्रहोनः ॥ ३७ ॥
ततो विमुक्तः सकलोतिजालात्संस्थाप्य पुत्रे स्त्रियमात्मलब्ध्यै ॥ प्रव्रज्य स त्यक्तकलत्रपुत्रवित्तेषणस्त्वात्मविदंजसा स्यात् ॥ ३८ ॥
इत्थं निशम्याह शुकः पुनस्तं नाऽसंशयस्तद्वचसा न तुष्टः ॥ गृहस्थधर्मान्परिचिन्त्य निन्द्यानतीव तुर्याश्रमबद्धनिष्ठः ॥ ३९ ॥
राजन् गृहस्थः कथमात्मलब्धौ यतेत चार्थोत्थसुखं विहाय ॥ विवृद्धतृष्णो विषयोपभोगैरग्निर्विरूढार्चिरिवाज्यपातैः ॥ ४० ॥

पुत्रसमीपे स्त्रियं संस्थाप्य । वटेषु गाव इतिवत्सामीप्ये सप्तमी । त्यक्ताः दारपुत्रवित्तेषणाः येन सः स्वतंत्रोसौ आत्मलब्ध्यै आत्मप्राप्त्यर्थं प्रव्रज्य गृहस्य इत्थं उत्तरोत्तराश्रमस्वीकारक्रमेण अंजसा झटिति आत्मवित् ज्ञानी भवेत् ॥ ३८ ॥ इत्थमिति देशिकेंद्रोक्तिः । तद्वचसा जनकवाक्येन संतुष्टः असंशयः संशयरहितश्च नासीत् । तत्र हेतुगर्भविशेषणम् । गृहस्थधर्मान् गृहस्थाश्रमधर्मान् अतीव निंद्यान् परिचिन्त्य पर्यालोच्य चतुर्थाश्रमे संन्यासे बद्धा निष्ठा श्रेष्ठत्वनिश्चयो श्रद्धा येन ॥ ३९ ॥ जनके ज्ञानाभावं वक्तुमादौ गृहस्थस्यात्मचिंतनाभावमाह । राजन्निति । अग्निरिव विवृद्धतृष्णः अर्थोत्थसुखं विषयोत्पन्नसुखं विहाय आत्मलब्धौ आत्मप्राप्तिविषये कथं यतेत यत्नं कुर्यात् न कथमपीत्यर्थः ॥ ४० ॥

जनाः दंडकर्तृत्वेन ज्ञान्यनुगतशांत्यादिरहितत्वाद्विरुद्धधर्मं भवंतम् आत्मविदं ज्ञानिनं वदंतीति न सत्यमेवेति अहं ब्रवीमि। विषोल्बणस्य विषेणोल्बणस्य क्रूरस्य भुजगस्य क्षमा यथा मृषोक्तिः तथा त्वयि ज्ञानित्वं मृषेत्यर्थः ॥ ४१ ॥ किं च भोगभोक्तृत्वेन देहादिष्वात्माभिमानित्वेन च त्वं न ज्ञानवानित्याह । स्त्रीभिरिति । अद्धा साक्षात्स्त्रीभिः । रहसि एकांते युतः संयुक्तस्त्वं परान् श्रेष्ठान् भोगान् देहधिया भुंजन्सन् राज्यादिकं स्वकीयं मन्यसे तनदभिमानवान् भवसि। अतः कथं आत्मनिष्ठो भवसि न कथमपीत्यर्थः ॥ ४२ ॥ ननु विदेहनाम्ना प्रसिद्धस्य मे कथं देहबुद्धिमत्त्वमिति चेत् तत्राह । विदेहनामेति । निमेः सकाशात्तव पूर्वजानां विदेह इति नाम परंपरात्तं परंपराप्राप्तमस्ति । अत एव सर्वे त्वां विदेहमिति वदंति । हीति निश्चये । वस्तुतस्तु स्वतनौ धृताभिमानम् ।

लोके वदंत्यात्मविदं भवंतं विरुद्धधर्मं धृतराजदंडम् ॥ न सत्यमेवैतदिति ब्रवीमि क्षमेव सर्पस्य विषोल्बणस्य ॥४१॥ स्त्रीभिर्युतोऽद्धा रहसीप्सितांश्च भोगान्परान्देहधियैव भुंजन् ॥ राज्यं बलं कोशमपि स्वकीयं त्वं मन्यसे तत्कथमात्मनिष्ठः ॥ ४२ ॥ विदेहनामापि परंपरात्तं निमेः सकाशात्तव पूर्वजानाम् ॥ वदंति हि त्वामतएव सर्वे धृताभिमानं स्वतनौ विदेहम् ॥ ४३ ॥ राजात्मवेत्ता सुत गच्छ तं त्वमिति स्म तातस्य वचो निशम्य ॥ प्राप्ते न बुद्धं तव गोपुरं मया निवारणान्मे तव चात्मवित्त्वम् ॥४४॥ तथा किंचिद्धृदि संशयानपि प्राप्तो गृहं चात्र तवोक्तिभिश्च ॥ निःसंशयोऽहं नृप यामि तातं भुक्त्वाचिरादागमनादिकष्टम् ॥ ४५ ॥

विदेहनामापि देहतादात्म्येनैवास्तीत्यर्थः ॥ ४३ ॥ मदागमनप्रतिबंधेन तव सार्वात्म्यज्ञातशून्यत्वं ज्ञातमित्याह, राजेति । तातस्य वाक्यं निशम्य तत्र गोपुरे पुरद्वारे प्राप्तेन मया मे निवारणात् तव आत्मवित्त्वं बुद्धं ज्ञातमित्यर्थः ॥ ४४ ॥ तथापि द्वार एव नायं ज्ञानीति निश्चयेऽपि हृदि किंचित्संशययुक्तः परोक्षनिश्चये पि प्रत्यक्षमदृष्टत्वात्संशययुक्तः अत्र तवोक्तिभिः क्रममुक्तिप्रतिपादनादिरूपगृहस्थाश्रमपरैर्वचनैः निःसंशयः त्वं ज्ञानी नासीति निश्चयेन संशयरहितोऽहमस्मि । हे नृपाहं तातं व्यासं प्रति आगमनादिकष्टं भुक्त्वानुभूय यामि गच्छामि ॥ अत्र दूरदेशागमनादि प्रारब्धं भोक्तव्य

मेवेत्यर्थः ॥ ४५ ॥ तस्य शुद्धान्तःकरणस्य शुकस्य संशयं दूरमपाकरिष्यन् दूरीकरिष्यन् ॥ ४६ ॥ तत्रादौ पतनादिदोषहीनत्वात्क्रममुक्तिः सुकरेत्याह सोपानमार्गेणेति । आश्रममार्गतः ब्रह्मचर्यादिक्रममार्गं विना धीमान् बुद्धिमानपि जघन्यं अंत्यमुत्तममाश्रमं संन्यासाश्रमं चकारात् तत्फलं च नेयात् न प्राप्नुयात् हीति निश्चये ॥ ४७ ॥ अन्यथा पतनादि दोषमाह । पंथानमिति । पूर्वार्द्धे यथेत्यध्याहारः । तथा पूर्वानाश्रमाननादृत्य अस्वीकृत्य यः परेच्छुः संन्यासेच्छुर्ज्ञानेच्छुर्वा भवति । अस्याधिकारिणस्तु सैव पातरूपा गतिर्भवति । क्रममुक्तिं विना इंद्रियनिग्रहो न भवतीति भावः ॥ ४८ ॥ गृहस्थाश्रमं विना इंद्रियनिग्रहो न भवतीति कैमुत्यन्यायेनाह बलीन्द्रियेति । इंद्रियसमूहः बली बलवानिति हेतोः इह अत्र कः क्रमेण विहितमार्गक्रमेण गतं कंचित् कमपि धैर्य

श्रीदेशिकेंद्र उवाच ॥ शुकोदितं वाक्यमिदं निशम्य जगाद भूयो जनकस्तमित्थम् ॥ तत्संशयं दूरमपाकरिष्यन्प्रकाशयन्व्यापकमात्मतत्त्वम् ॥ ४६॥ सोपानमार्गेण विना यथोर्ध्वं नेयाद्बलाढ्योपि पुमान्विपश्चित् ॥ तथा विना ह्याश्रममार्गतोपि धीमाञ्जघन्याश्रमसुत्तमं च ॥ ४७॥ पंथानमुत्सृज्य विमूढचेताः कश्चिद्व्रजेदूर्ध्वमधोस्य पातः ॥ पूर्वाननादृत्य तथाश्रमान्यःपरे च्छुरस्यापि गतिस्तु सैव ॥४८॥ बलींद्रियग्राम इति क्रमेण गतं त्वधः पातयतीह कं चित् ॥ किं व्युत्क्रमाद्यान्तमपक्वबुद्धिं पराभवस्तस्य यतः स्त्रियैव॥४९॥ अतः स्त्रिया तं तु विजित्य पूर्वं पश्चाद्विरक्तश्चरमं विशेच्च ॥ श्रुतेस्तथाज्ञास्ति पितुस्तवापि द्वयं समुल्लंघ्य कथं स्वतंत्रः ॥ ५० ॥

हीनपुरुषं अधः पातयति । किं पुनर्वक्तव्यं व्युत्क्रमात् विरुद्धक्रमेण क्रममार्गं विना यान्तं गच्छंतम् अपक्वबुद्धिं वैराग्यवासनाबलहीनं पुरुषं पातयतीति । यतः तस्य इंद्रियग्रामस्य पराभवः तिरस्क्रिया स्त्रियैव भवतीत्यर्थः ॥ ४९ ॥ अतः पूर्वं स्त्रिया करणेन तमिन्द्रियग्रामं विजित्य पश्चाद्विरक्तः सन् वानप्रस्थक्रमेण चरमं सन्यासं विशेत् संन्यासं स्वीकुर्यात । श्रुतेः वेदस्य तव पितुरपि चकारात्स्मृतेरपि आज्ञा तथा स्त्रीस्वीकरणे अस्ति । द्वयं आज्ञाद्वयं समुल्लंघ्य कथं स्वतंत्रोसि । स्त्रीस्वीकरणाभावे यज्ञाद्यनुष्ठानाभावेन ऋणानपाकरणेन च । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेनेति; "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मण" इति च । श्रुतिस्मृत्योः पितुश्चाज्ञातिक्रांता

भवतीति भावः ॥ ५० ॥ राज्यकर्तुरपि मम ज्ञानित्वमस्तीति प्रतिज्ञापूर्वकमाह । राज्यमिति । इदम् आत्मवेत्तृत्वं वक्ष्ये राज्यकर्तुः यथात्मवेतृत्वं तथा वक्ष्ये इति भावः ॥ ५१ ॥ तत्रादौ दंडकर्तृत्वेनाकर्तृत्वं तव नास्तीति यदुक्तं तत्राह राज्य इति । अहं सर्वजनान् यथावत् यथाशास्त्रं सम्यक् शासयन् दंडयन् सन् वृषराज्यतुल्ये इंद्रराज्यसदृशे 'वासवो वृत्रहा वृषा'त्यमरः । अस्मिन् राज्ये असक्तः स्थितोस्मि हि निश्चये । क इव पथि मार्गे वासगृहान् तत्तन्निवासस्थानानि । 'गृहाः पुंसि च भूम्न्येव'इत्यमरः ॥ संमार्जयन्विलिंपन् असक्तः पथिक इव । स यथाऽवश्यकर्मणि:अनासक्तस्तथा प्रजापालनाख्ये क्षात्रकर्मण्यनासक्तत्वादकर्तास्मीति भावः ॥ ५२ ॥ राज्यादिस्वात्माभिमानवांस्त्वं न ज्ञानीति यदुक्तं तत्राह कमंडलुमिति । यथा त्वम् ।

राज्यं प्रकुर्वन्कथमात्मनिष्ठस्त्वं चेति मां पृच्छसि यच्छुकेदम् ॥ वक्ष्ये यथाहं प्रकरोमि राज्यं स्त्रीभिः सुभोगानखिलान्प्रभुंजन्॥५१॥
राज्येहमस्मिन्वृषराज्यतुल्ये संशासयन्सर्वजनान्यथावत् ॥ स्थितोप्यसक्तो हि पथीव पांथः संमार्जयन्वासगृहान्विलिंपन् ॥
॥ ५२ ॥ कमंडलुं चाजिनवस्त्रखण्डं दंडं यथा त्वं हृदि मन्यसे स्वम् ॥ तथा बलं राज्यमहं हि कोशं मन्येखिलानां ममता समैव ॥
॥५३॥ स्त्रियोनुभूतास्तु दृशा त्वयैता मया त्वचाप्यर्षिजनेड्य काश्चित्॥द्रष्टैक आत्मोभयतस्तथापि त्वं संशयाढ्योसि न चाहमस्मि ॥
॥५४॥ तद्बंधनं स्वीकरणात्सुभोग्यभोगस्य मे स्यादिति भीतिमेपि ॥ तांश्चाखिलान्विप्र सदात्र भुंजन्मुक्तोहमित्येव सदाभिमन्ये॥५५॥

एतदजिनं वस्त्र खण्डं कौपीनं कमण्डलुं च हृदि चित्ते स्वं स्वकीयं मन्यसे तथाहं राज्यादिकं स्वकीयं मन्ये । हि यतः सर्वेषामाश्रमिणां ममता समैवास्ति । आसक्तिरहिताभिमानस्य न बंधजनकत्वमित्यर्थः ॥ ५३ ॥ स्त्रीसंभोगादिकर्ता ज्ञानी नासीति यदुक्तं तत्र त्वमपि स्त्रीसंभोगवानसीत्याह । स्त्रिय इति हे ऋषिजनेड्य ऋषिजनैः ईड्य स्तुत्य त्वया एताः काश्चित्स्त्रियो दृशा दृष्ट्या अनुभूताः मया तु त्वचा त्वगिंद्रियेण अनुभूताः । उभयतः दृक्त्वचयोर्द्रष्टा साक्षी आत्मा एकोस्त्यभिन्नोस्ति तथा सत्यपि त्वं संशययुक्तोसि । अहं तु संशययुक्तो नास्मीत्यन्वयः । संशय एव बन्धकारणं न विषयभोगमात्र मित्यर्थः ॥ ५४ ॥ एवं सर्वेन्द्रियभोगेष्वतिदिशति ॥ तद्बन्धनमिति । सुभोग्यभोगस्य सुभोग्यानामुत्तमवस्तूना भोगस्य स्वीकरणात् भोगांगीकारान्मम

तत् बन्धनं स्यादिति निश्चयेन भीतिम् एषि प्राप्नोषि।हे विप्र तान् सर्वान् दृश्यादिसर्वेंद्रियविषयान् अत्र देहे भुंजन् सन्नपि अहं मुक्तोस्मीत्येव सदाभिमन्ये । 'गुणा गुणेषु वर्तंत इति मत्वा न सज्जते' इति बुद्ध्या मुक्तोस्मीत्यर्थः ॥ ५५ ॥ बन्धमोक्षव्यवस्थामाह । बन्ध इति ॥ बन्धस्तु दृश्यस्य देहादेर्भवति। असंगाद्धेतोः आत्मा न बध्यते एवं देहादिदृश्यात्मधिया देहादिषु दृश्येषु आत्मबुद्ध्या बन्धो भवति । ततः देहात्मबुद्धेः अन्यथा प्रकारान्तरया तत्त्वधिया आत्मस्वरूपज्ञानेन स प्रसिद्धः मोक्षः बन्धनिवृत्तिः ॥ अत्रायं प्रयोगः । अदृश्यः आत्मा धर्मी बंधरहितत्वं धर्मः—असंगत्वादिति हेतुः । आकाशवदिति अन्वयदृष्टांतः—गवादिवत् इति व्यतिरेकदृष्टांतः ॥ यद्वा गवादिधर्मी—बन्धवत्—दृश्यत्वात्—शुकवत् इति अन्वयदृष्टांतः—वायुवदिति व्यतिरेकदृष्टांतः । तथा च गुणतादात्म्याध्यासकृत एव बंधो न वस्तुतः सत्य इत्यर्थः ॥ ५६ ॥ आत्मस्वरूपमाह । एक इति । एकः अद्वितीयः परात्मा सर्वगतोपि अ...

बंधस्तु दृश्यस्यभवेददृश्यं नो बध्यते कुत्रचिदप्यसंगात् ॥ देहादिदृश्यात्मधिया तु बन्धस्ततोन्यथा तत्त्वधिया स मोक्षः ॥ ५६ ॥
एकः परात्माखिलगोऽप्यसंगः सूक्ष्माच्च सूक्ष्मो महतो महांश्च ॥ मायागुणैर्भाति जगद्धि तस्मिंश्चित्राणि भित्ताविव धातुवर्णैः ॥५७॥
चित्रं युतं कल्पितदुःखसौख्यैः तैःस्यान्न भित्तिस्तु युता कथंचित् ॥ जीवा युताः कल्पितबन्धनेन त्वात्मा विमुक्तः स्वयमेव बन्धात्
॥५८॥ इत्थं त्वमात्मानमनंतमाद्यं पश्यन् सदा सर्वगतं समानम् ॥ कृत्वापि कर्माणि न सज्जसेद्धा स्पृष्ट्वाऽखिलं वायुरिव त्वसंगः॥५९॥

गः संगहीनः सूक्ष्मात् परमाण्वादेः सूक्ष्मतरः महत आकाशादेः महांश्च यस्तस्मिन्नात्मनि धातुवर्णैः करणैः भित्तौ कुड्ये चित्राणीव मायागुणैः सत्त्वाद्यैः करणैर्जगत् देहादिकं सर्वं भाति । एकस्मिन्नात्मनि मायागुणवशादनेकत्वमित्यर्थः ॥ ५७॥ दृष्टांतं विवृण्वन् नित्यमुक्तत्वमात्मनो दर्शयति । चित्रमिति । चित्रं कल्पितानि यानि सुखदुःखानि तैः युक्तम् । भित्तिस्तु कथंचित् कथमपि तैः युक्ता न भवति यथा तथा विश्वगतजीवाः कल्पितं यद्बन्धनं तेन युक्ताः आत्मा तु बन्धात् स्वयं मुक्त एव सदास्ते इत्यर्थः ॥ ५८ ॥ त्वमप्येवमसंगत्वाकर्तृत्वनिश्चयेन गृहस्थाश्रमं कुर्वन्न लिप्यसे इत्याह । इत्थमिति । इत्थं संगरहितम् अनंतं देशकालवस्तुपरिच्छेदरहितम् । आद्यं सर्वादिरहितं सर्वगतं समानं सुखदुःखादिविकाररहितम् । एतल्लक्षणमात्मानं सदा साक्षित्वेन

पश्यन् सन् । कर्माणि अग्निहोत्रादिगृहस्थकर्माणि कृत्वापि अखिलं सुगंधदुर्गंधाद्याश्रयं वस्तु अद्धा साक्षात् स्पृष्ट्वापि असंगो वायुरिव न सज्जसे सक्तो न भविष्यसि । असंगो वैराग्यमित्युक्तम् । दृढवैराग्यवतो विषयप्रवृत्तिर्न बंधाय भवतीत्यर्थः ॥ ५९ ॥ सुतोषात् संतोषेण तं प्रसिद्धं पितुर्व्यासस्याश्रमं ययौ सुतं दृष्ट्वा व्यासोप्यानंदं प्राप ॥ ६० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां टीकायामष्टमः सर्गः ॥ ८ ॥ नवमेक्षिश्रुतिश्लोकेऽसंशयः पितृगो गृही ॥ शुकोऽसंगोथाप्तसिद्धिस्तपस्तेपे इतीर्यते ॥ ९ ॥ शुक इति । अष्टांगतः " उरसा शिरसा दृष्ट्या वचसा मनसा तथा ॥

श्रीदेशिकेंद्र उवाच ॥ इत्थं शुकस्तेन सुबोधितस्तं नत्वाप्य चाज्ञां गतसर्वसंशयः ॥ ययौ सुतोषात्सुतमाश्रमागतं दृष्ट्वा ननं व्यासमुनिर्ननंद ॥ ६० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शुकचरित्रेऽष्टमः सर्गः ॥ ८ ॥ श्रीदेशिकेंद्र उवाच ॥ शुकोथ पितरं भक्त्या ननामाष्टांगतः सुधीः ॥ मूर्ध्न्यवघ्राय तं व्यासः समालिंग्य मुहुर्मुहुः ॥ १ ॥ पप्रच्छ कुशलं वृत्तं शुकं चामिततेजसम् ॥ तेनापि कथितं सर्वं यज्जातं नृपसंगतः ॥ २ ॥ श्रुत्वातिहर्षितो व्यासः सह तेनाश्रमोत्तमे ॥ निःसंशयं शुकस्तत्र पठन्वेदं स्थितः सुखी ॥ ३ ॥ ज्ञात्वाधिकारिणं पुत्रं शुकं व्यासः समादिशत् ॥ रहस्यं मंत्रजातं च सांगं योगं ततः शुकः ॥ ४ ॥ वव्रे पितॄणां कन्यां स पीवरीं नाम सुंदरीम् ॥ तस्यामजनयत्पुत्रांश्चतुरो योगवानपि ॥ ५ ॥ श्वेतं गौरप्रभं कृष्णं भूरिदेवं तु कन्यकाम् ॥ कीर्तिनाम्नीं समुत्पाद्य चाणुहाय ददौ शुकः ॥ ६ ॥ ब्रह्मदत्तः सुतस्तस्यां भूमिपालः स चाभवत् ॥ राज्यं पुत्राय दत्त्वाभून्नारदाज्ज्ञानवान्मुनेः ॥ ७ ॥ उत्सृज्य पितरि स्वीयाञ्छुकः कैलासमन्वगात् ॥ तत्र तप्त्वा तपस्तीव्रं परां सिद्धिं गतः शुकः ॥ ८ ॥

पद्भ्यां कराभ्यां जानुभ्यां प्रणामोष्टांग उच्यते " इत्यष्टांगेन पितरं व्यासं ननाम । यतः सुधीः सुबुद्धिः । मूर्ध्नीत्युत्तरान्वयि ॥ १ ॥ शुकं प्रति कुशलं वृत्तं पप्रच्छ । व्यास इत्यनुवृत्तिः । पृच्छतेर्द्विकर्मकत्वम् । चकाराद्गमनागमनजनकभाषणादिकं यत् वृत्तम् ॥ २ ॥ ३ ॥ सांगम् अष्टांगसहितं योगम् । ततः शुक इत्युत्तरान्वयि ॥ ४ ॥ सुंदरीं तन्नाम्नीम् ॥ ५ ॥ ६ ॥ ७ ॥ स्त्रीपुत्रादिकान् स्वीयान् स्वपितरि व्यासे

व्याससमीपे उत्सृज्य कैलासमन्वगात् तं प्रति अगमत् ॥ ८ ॥ ९ ॥ अत्र कैलासे ॥ १० ॥ पाषाणतरुभिः करणैः शोकं मा कुर्विति प्रत्याह ॥ ११ ॥
॥ १२ ॥ १३ ॥ १४ ॥ सशिवं शिवया पार्वत्या युक्तम् ॥ १५ ॥ १६ ॥ कैलासगिरेः सकाशात् स्वाश्रमं गतः जगाम ॥ १७ ॥ व्यास इत्यनु



व्योममार्गेण चोड्डीय कांत्या सूर्य इवापरः ॥ मुनिभिस्तूयमानोसौ स्वतंत्रो निर्ययौ ततः ॥ ९ ॥ शुकस्येत्थं गतिं दृष्ट्वा व्यासो दुःखपरिप्लुतः ॥ ययावाक्रंदमानोत्र हा पुत्रेति मुहुर्मुहुः ॥ १० ॥ पितुराक्रंदनं श्रुत्वा तदा सर्वगतः शुकः ॥ प्रत्याह ग्रावतरुभिर्मा शुचेति मुनिं मुहुः ॥ ११ ॥ शुकः सिद्धिं गतो यत्र तत्रस्थास्तरवोऽखिलाः ॥ शब्दं कुर्वंति चाद्यापि प्रशंसंतोस्य वैभवम् ॥ १२ ॥ शोचन्व्यासः स्थितस्तत्र हा पुत्रेति शुकेति च ॥ श्रुत्वा व्यासस्य शोकं तं स्वयं प्राप्तः सदाशिवः ॥ १३ ॥ सांत्वयन्व्यासमाहेत्थं पुत्रस्ते न गतः क्वचित् ॥ लब्ध्वा सार्वात्मिकीं सिद्धिं स्थितः सर्वत्र सर्वदा ॥ १४ ॥ तत्कीर्त्या पूरितं विश्वं शोकस्तत्र वृथा कुतः । इति श्रुत्वाह स शिवं शिवं तं वृषभस्थितम् ॥१५॥ व्यास उवाच ॥ सत्यं ब्रूषे शिवेदं त्वं मन्नेत्रे तु शुकाननम् ॥ दृष्ट्वा न प्रापतुस्तृप्तिमतः शोचाम्यहं खलु ॥ १६ ॥ शिवोथाह शुकच्छायां त्वं द्रक्ष्यसि सदा मुने ॥ इत्युक्त्वांतर्दधे शंभुर्व्यासोपि स्वाश्रमं गतः ॥ १७ ॥ उद्वाह्य तत्सुतांस्तेषु शुकपत्नीं निधाय च ॥ सदा पश्यञ्छुकच्छायां त्यक्त्वा शोकं सुखं स्थितः ॥ १८ ॥ श्रीदेशिकेंद्र उवाच ॥ देवीभागवतांतस्था मयूरेश मयेरिता ॥ शुकस्येयं कथाऽथान्यां पुराणांतरगां शृणु ॥ १९ ॥ शुकोथ दक्षिणाशायां मलयाद्रिसमीपतः ॥ आविर्भूतो वने रम्ये जनसंबाधवर्जिते ॥ २० ॥ तत्राश्वत्थाः फलैर्नम्राश्चूताः प्लक्षा वटाः कुगाः ॥ तिंतिण्योथ बदर्योपि फलिन्यः कोविदारकाः ॥ २१ ॥

वृत्तिः ॥ १८ ॥ १९ ॥ २० ॥ तत्र वने अश्वत्थादयो वृक्षा आसन्निति पंचानामन्वयः । फलनम्राश्चूताः । वटाः कुगाः ऊर्ध्वमूलैः पृथ्वीस्पर्शिनः ॥ २१ ॥

स्कंधेषु बृहच्छाखासु फलानि येषां ते औदुंबराः पनसाश्च ॥ २२ ॥ २३॥ टंकचंपकाः । लोके साग इति प्रसिद्धाश्चंपकाश्च ॥ २४ ॥ सर्वे उक्तानुक्ताः द्रवो द्रुमाः । लतागृहाः कुंजाश्च ॥ २५ ॥ २६ ॥ सारसा इति सार्द्धान्वयः ॥ २७ ॥ स्वच्छोदाः अतिशुद्धोदकाः तथा शोपवर्जिताः शोषेण जलशोषेण आतपप्राबल्यजन्येन वर्जिताः त्यक्ताः निर्झराः अद्रेः मलयाद्रेः सकाशात् प्रवहंति ॥ २८ ॥ शुकस्त्वेवमिति सार्द्धान्वयः ॥ २९ ॥

शिरीषाः पुष्पिता निंबाः पलाशाः पारिजातकाः ॥ औदुंबराः स्कंधफलाः पनसाश्च बिभीतकाः ॥ २२ ॥ तालास्तमालाः सरलाः शिंशुपा देवदारवः ॥ अर्जुनामलकीबिल्वा मधुकागस्त्यदाडिमाः ॥ २३ ॥ खर्जूरीपूगजातिद्रुनारिकेलद्रुमास्तथा ॥ बकुलाः कुंदमंदाराः पुन्नागाष्टंकचंपकाः ॥ २४ ॥ माधवी मालती जातीकेतकीकरवीरकाः ॥ घनच्छाया द्रवोऽशोकाः सर्वे चासु लतागृहाः ॥ २५ ॥ सिंहा व्याघ्रा मृगाः क्रोडा वृकाः सालावृकाः शशाः ॥ चरंति निर्भया यत्र वैरं त्यक्त्वा मिथो गजाः ॥ २६ ॥ सारसाश्चक्रवाकाश्च सारिकाश्चटकाः शुकाः ॥ चाषा व्याघ्राटका हंसा बर्हिपारावताः पिकाः ॥२७॥ तथान्ये पक्षिणो यत्र कूजंति मधुरं सदा ॥ निर्झराः प्रवहंत्यद्रेः स्वच्छोदाः शोपवर्जिताः ॥ २८ ॥ शुकस्त्वेवंविधेऽरण्येऽवात्सीद्गिरिगुहांतरे ॥ दध्यौ ब्रह्म परं सूक्ष्मं सर्वकामविवर्जितः ॥ २९ ॥ स्वयं पतितपत्राणि भुक्त्वा पीत्वा पयः शुचि ॥ बहुकाले गते चैवं वने तस्मिञ्छुकांतिकम् ॥ ३० ॥ नृसिंहाख्यो मुनिः कश्चित्प्राप्तो दैववशात्सुधीः ॥ निस्पृहस्तत्त्वजिज्ञासुर्वेदवेदांगपारगः ॥ ३१ ॥ दृष्ट्वार्काभं गुहासंस्थं जटिलं वल्कलांबरम् ॥ शुकं सुरूपं चार्वंगं भस्मरुद्राक्षधारिणम् ॥ ३२ ॥ दृढं पद्मासनं बध्वाजिनस्थमृजुसत्तनुम् ॥ एकीकृत्वाखिलान्प्राणान्सहस्रारे मनोहरे ॥ ३३ ॥ ध्यायंतं परमात्मानं मनोवाचामगोचरम् ॥ ननाम दण्डवद्भूमावुत्थायाथ पुरः स्थितः ॥ ३४ ॥

स्वयमिति । उत्तरार्द्धमुत्तरान्वयि ॥ ३० ॥ शुकात्संप्रदायप्रवृत्तिमाह । नृसिंहाख्य इत्यादिना । नृसिंहाख्यः शुकं ननामेति सार्द्धचतुर्णामन्वयः ॥ ३१ ॥ ३२॥ ऋज्वी हृत्कटिकंठशिरःसु सरला सती तनुः उत्तमदेहो यस्य । मनोहरे रम्ये सहस्रारे ब्रह्मरंध्रे ॥ ३३ ॥ ३४ ॥

उत्थितिः उत्थानम्॥३५॥ द्विजोत्तमः द्विजेषु ब्राह्मणादिषु त्रिषूत्तमः श्रेष्ठः ब्राह्मणोऽस्मि ॥३६॥ साधनानि व्रतोपवासादीनि ॥३७॥ देशाद्देशान्तरमिति पूर्वान्वयि। तत् ज्ञानम् ॥ ३८ ॥ ३९ ॥ शुकश्चेति। निःसंगोपि संप्रदायप्रवृत्त्यर्थं महावाक्योपदेशेन ज्ञानमुपादिशदिति पूर्वेणान्वयः ॥ ४० ॥ ४१ ॥ मघवा इंद्रः स्वपदाभिलाषम् इंद्रपदाभिलाषं शुकं विशंकमानः सन् विघ्नं चकार। वृत्तमुपजातिः ॥४२॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां

बद्धांजलिपुटोवाञ्छन्समाधेश्चोत्थितिं मुनेः ॥ शुकः समाधेरुत्थायापश्यदग्रे स्थितं द्विजम् ॥ ३५ ॥ भक्त्या स्तुवंतं बहुधा नमंतं च मुहुर्मुहुः॥शुकस्तमाह कोसि त्वं स चाहाहं द्विजोत्तमः॥३६॥अधीत्याप्यखिलान्वेदान्मनो मे नागमत्सुखम् ॥ कृतानि साधनान्यद्धा निष्फलान्यभवन्मुने ॥ ३७ ॥ देशाद्देशान्तरं गच्छन्दैवात्प्राप्तस्त्वदंतिकम् ॥ ब्रूहि तद्येन मे चित्तं स्वस्थं भूयाद्धि देशिक ॥ ३८ ॥ शुकश्च तत्त्वजिज्ञासुं ज्ञात्वा तंत्राधिकारिणम् ॥ उपादिशन्मनून्सर्वान्योगं ज्ञानं च निर्मलम् ॥ ३९ ॥ महावाक्यानि सर्वाणि यज्ज्ञानान्मुक्तिमाप्नुयात् ॥ संप्रदायप्रवृत्त्यर्थं निःसंगोपि स्वयं मुनिः ॥ ४० ॥ नृसिंहोपि शुकात्सर्वं लब्ध्वाऽभून्निर्मलाशयः ॥ तस्थौ तत्रैव तत्सेवां कुर्वन्कंदफलादिना ॥ ४१ ॥ निष्काममित्थं तु तपस्तपंतं व्यासस्य सूनुं विजने वनेऽस्मिन् ॥ चकार विघ्नं मघवा निजांतर्विशंकमानः स्वपदाभिलाषम् ॥ ४२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शुकचारित्रवर्णनं नाम नवमः सर्गः ॥ ९ ॥ श्रीदेशिकेंद्र उवाच ॥ अथेंद्रः स्वमनस्येवं चिंतयामास चानघ ॥ शुकस्तपः करोत्युग्रं किं मद्राज्यमभीप्सति ॥ १ ॥ संचिंत्येति समाहूय रंभाद्याप्सरसोऽखिलाः ॥ उवाचेंद्रोऽग्रैव गत्वा युष्माभिस्तु शुकाश्रमम् ॥२॥ कर्तव्यस्तस्य तपसो भंगः संमोहनादिभिः ॥ तत्रानिलो मलयजः साहाय्यं वः करिष्यति ॥ ३ ॥ मदनोपि वसंतेनायास्यत्यद्धा सहायकृत् ॥ इत्यादिष्टाः सुरेंद्रेण रंभाद्यप्सरसश्च ते ॥ ४ ॥

टीकायां नवमः सर्गः ॥ ९ ॥ रंभां प्रेषितवानिन्द्रस्तपोविघ्नचिकीर्षया। शुकस्योक्तिश्चोनषष्टिश्लोकैर्दशमे ईर्यते ॥ १० ॥ अथेन्द्र इति ॥ १ ॥ २ ॥ ॥ ३ ॥ ते स च स च स च अप्सरसश्च ते त्यदादीनि सर्वैर्नित्यमित्येकशेषः। कामवसंतमलयानिलाः शुकाश्रमं जग्मुरित्यन्वयः ॥ ४ ॥

॥ ५ ॥ ६ ॥ ७॥८॥ ९ ॥ प्राणिनः मृगादीन् कामविचेष्टिते मन्मथक्रीडायां सक्ता ना पश्यदित्यन्वयः । शुक इत्यनुवृत्तिः ॥ १० ॥ वीणेति । पूर्वार्द्धे पूर्वान्वयि । विवेके सत्यपि तस्य शुकस्य चित्तं स्थिरं नाभूत् ॥११॥ कथं संतीत्यध्याहारः ॥ १२ ॥ आ आसमंतात् श्रूयते मयेति शेषः ॥१३॥१४॥

जग्मुः शुकाश्रमं सर्वे तपोविघ्नकरा मुनेः ॥ वनं तावद्वसंतेन स्वीयशोभान्वितं कृतम्॥५॥अकालेपि लताः सर्वास्तथा वृक्षाश्च पुष्पिताः॥ कोकिलाः कूजितं चक्रुर्मधुरं कामदीपनम् ॥६॥ पशवः पक्षिणोप्यन्ये वनस्थाः काममोहिताः॥स्वस्वर्तुकालेप्यप्राप्ते रेमुः स्वस्वस्त्रिया न्विताः ॥ ७ ॥ ववौ मलयजो वायुः सुगंधिः शीतलः स्थिरः ॥ मदनोऽथ शुकस्यैस्तु मनस्याविर्बभूव ह ॥ ८ ॥ तावद्विकल्पचित्तोसौ समाधेरुत्थितो मुनिः ॥ उन्मील्य नयनेऽपश्यद्वनं कुसुमशोभितम् ॥९॥ वनस्थान्प्राणिनः सर्वान्सक्तान्कामविचेष्टिते ॥ तावद्गानं स शुश्राव सत्स्वरं तालसंयुतम् ॥१०॥ वीणामृदंगशब्दाढ्यं रागालापमनोहरम् ॥ विकलं तच्चित्तमभूद्विवेकेपि न तत्स्थिरम् ॥११॥ शुकः प्राह कथं वृक्षा वसंतेन विनाखिलाः ॥ पुष्पिताः फलिताश्चात्र प्राणिनः काममोहिताः ॥ १२ ॥ वाति वायुः सुखस्पर्शो गानं च श्रूयतेंबरे ॥ मनश्च विकलं जातं चित्रं मे भाति चाखिलम् ॥ १३ ॥ चिंत्यमाने मुनानित्थं तावदाकाशमार्गतः ॥ रंभाद्यप्सरसः प्राप्ता गंधर्वैः सह गायकैः ॥ १४ ॥ स्थित्वा तास्तु मुनेरग्रे नृत्यभेदाननेकशः ॥ मुनये दर्शयामासुर्मिथः संकेतचेष्टितैः ॥ १५ ॥ गायन्ति नृत्यानुगुणं गन्धर्वाः सुमनोहरम् ॥ नृत्यंतीष्वप्सरःस्वित्थं शुकश्चिंतातुरोऽभवत् ॥ १६ ॥ स्वचित्तेऽचिंतयच्चैवं विघ्नजाल मिदं महत् ॥ कथं मत्तपसे प्राप्तं केन चोत्पादितं न्विह ॥ १७ ॥ सकामानां तापसानां तपसे विघ्नकृद्वरा ॥ कथं मे तपसे विघ्नं निष्कामस्य करिष्यति ॥ १८ ॥ न मे शत्रुश्च कुत्रापि सर्वत्र समदर्शिनः ॥ शत्रुभावेन यो विघ्नं करिष्यति च मय्यमुम् ॥ १९ ॥ स्वप्नश्चेत्स तु सुप्तस्य जाग्रतो नास्य संभवः ॥ भ्रांतिश्चेन्मनसः सापि भवेद्विपर्यचिंतनात् ॥ २० ॥ आत्मैकनिष्ठमनसस्तस्या अपि न संभवः ॥ केनापि हेतुना त्वत्र नांतरायोद्भवो मयि ॥ २१ ॥

॥ १५ ॥ १६ ॥ नु वितर्के ॥ १७ ॥ १८ ॥ नमे इति । अमुं संप्रति प्राप्तं विघ्नम् ॥ १९ ॥ २० ॥ तस्याः भ्रांतेः ॥ २१ ॥

एकं विघ्नकारणम् ॥२२॥२३॥२४॥ करोमीहेति । "द्वितीयाद्वै भयं भवति" इति श्रुतेः । साहंकारस्यैव देहादिद्वैतबुद्धया भीतिर्भवतीत्यर्थः ॥ २५॥ नाहमिति। अनेककम् अनेकं जगद्रूपमपि आत्मानं आत्मना मनसा एकरूपं पश्यामि॥२६॥यस्यात्मनो विस्मृत्या तत्रैवाधिष्ठाने । गुणे रज्जौ सर्प इव जगत् भाति । तं पश्यामीति पूर्वं योज्यम्॥२७॥एताः अप्सरसः । एताभिरवलोकिताभिरिति शेषः । आत्मनाशः किम् । यतः सर्वा कल्पनैवास्ति । अध्यस्तदर्शनेपि अधिष्ठाननाशो न भवतीत्यर्थः ॥ २८ ॥ निश्चित्यैवमिति । कार्याधिकरणीभूतगुणज्ञ इव रज्जौ सर्पज्ञानं भ्रमात् तद्भ्रमाधिष्ठानभूतरज्जुतत्त्वाभिज्ञः स्वयं

श्रीदेशिकेंद्र उवाच॥इति चिन्तां शुकः कुर्वन्पुनश्चैकमचिंतयत् ॥ इंद्र एवाखिलान्द्वेष्टि तापसान्न ततः परः ॥ २२ ॥ मद्राज्यमभिकांक्षंति तापसास्तपसेति च ॥ शंकमानोऽविचार्यैव सकामं वा गतस्पृहम् ॥ २३ ॥ तेनैव प्रेषिताश्चात्र रंभाद्यप्सरसोऽधुना ॥ तपसो मम भंगाय नूनं वाऽन्येन केनचित् ॥ २४ ॥ करोमीह तपश्चेत्थं चेन्मे चेतस्यहंकृतिः ॥ तर्ह्येवं तपसोभंगाद्धृदि भीः स्यान्ममात्तिदा ॥ २५ ॥ नाहं किंचित्तपः कुर्वे भंगविक्षेपकारकम् ॥ चिंतये चात्मनात्मानमेकमेवाप्यनेककम् ॥ २६ ॥ यद्विस्मृत्या जगद्भाति तत्रैवाहिर्गुणे यथा ॥ इत्थं चिंतयतोऽग्रे मे नृत्यंत्यप्सरसः सुरम् ॥ २७ ॥ काष्ठपुत्तलिकातुल्याः पश्याम्येताः पुरः स्थिताः ॥ किमात्मनाशश्चैताभिः कल्पनैव यतोऽखिलाः ॥२८॥ श्रीदेशिकेंद्र उवाच ॥ निश्चित्यैवं शुकस्तस्थौ पश्यंस्तासां स नर्तनम् ॥ सर्पाधिकरणीभूतगुणज्ञ इव निर्भयः ॥२९॥ रंभानाम्न्यप्सराः श्रेष्ठा तदाऽऽगत्य शुकं मुदा ॥ हसंती प्राह कंदर्पजनकापाङ्गवीक्षणा ॥३०॥ रंभोवाच ॥ स्वर्निशम्य तव रूपवैभवं त्वामहं सपदि हृद्गतं प्रियम् ॥ आकलय्य न ननन्द कुत्रचिद्भोग्यवस्तुनि महर्षिनंदन ॥३१॥

निर्भयः कम्पादिशून्य इति यावत् । तासामप्सरसां च नर्तनं पश्यन् शुकस्तस्थौ ॥ २९ ॥ ३० ॥ हे महर्षिनंदन व्यासपुत्र अहं स्वः स्वर्गे तव रूपवैभवं रूपसंपत्तिं निशम्य सपदि तत्काले हृद्गतं मनोगतं त्वां प्रियमाकलय्य त्वत्सौन्दर्यश्रवणसमकाले मदीयं मनस्त्वां पतिं मत्वेत्यर्थः । अनंतरमहं क्वचिदपि भोग्यवस्त्वन्तरे न ननंद आनंदं न प्राप । त्वां च सदा स्मरति । यमकालंकारः । तदुक्तं 'स्यात्पादपदवर्णानामावृत्तिः संयुतायुता ॥ यमकं भिन्नवाच्यानामा

दिमध्यांतगोचरम्' इति ॥ रथोद्धतावृत्तम् । तल्लक्षणं तु—रो नराविह रथोद्धता लगाविति ॥ ३१ ॥ अतः यो मम अतिदुःसहः श्रमः स्वर्गादागमनादिरासीत् तं श्रमं त्वद्विलासभवसंपदा त्वया सह विलासेन भवा जाता या संपत् प्रमोदरूपा तया हर्तुं परिहर्तुम् एतमाश्रमं प्रति अहमागता प्राप्तास्मि । ततः कारणात् हे अंग प्रिय त्वं मया सह रतिं कुरु ॥ ३२ ॥ ननु तपःकर्ताहं स्त्रीसक्तः कथं भवामीति चेत्सुखसाधने प्रवृत्तिर्युक्ता न दुःखसाधन इति वक्तुं तपःस्त्रीसंगयोर्दुःखानंदकरत्वं प्रपंचयंत्याह । किमित्याद्यष्टभिः । त्वंपदस्यानुवृत्तिः । हे शुक त्वं देहकर्शनं तपः किमर्थं तपसि सुतोपवर्पणं सुतोपस्य वर्पणम् । उत्तमानंदं वर्षति ददातीति तन्मम वपुः भज स्वीकुरु । आत्मजन्म सफलं सार्थकं कुरुष्व । रतिदानतः रतिप्रसंगेन मे मनः आशु तोषय । स्वार्थपरा

आगताहमत एतदाश्रमं त्वद्विलासभवसंपदा श्रमम् ॥ हर्तुमंग मम योतिदुःसहस्त्वं ततः कुरु रतिं मया सह ॥३२॥ किं तपस्तपसि देहकर्शनं मद्वपुर्भज सुतोषवर्पणम् ॥ आत्मजन्म सफलं कुरुष्व मे तोषयाशु रतिदानतो मनः ॥३३॥ त्वन्मुखं शुक मुनेऽतिकोमलं भस्मजं नु सहते कथं मलम् ॥ त्वन्मुखे मृगमदेन सुन्दरं कलये नु तिलकं च द्रागहम् ॥३४॥ त्वदृशौ मृगदृशायतांतरे किं निमील्य परिपश्यसि ध्रुवम् ॥ ते विकास्य शुक मे लसन्मुखं पश्य ते परिचरामि सम्मुखम्॥३५॥ भाति तेऽधरगतोऽतिरक्तिमा न त्वया सह रतिं तु वक्ति मा ॥ त्वं ततः पिब ममाधरामृतं यद्वदंति कृतिनो धरामृतम् ॥ ३६ ॥

र्थकमेतत्कार्यं त्वयाऽवश्यं कर्तव्यमित्यर्थः ॥ ३३ ॥ किं च हे शुकमुने त्वन्मुखं कोमलं भस्मजं मलं कथं सहते । न कथमपीति भावः । नु इति वितर्के । हे नंदन । अहं ते मुखे तव द्राक् झटिति मृगमदेन कस्तूर्या सुन्दरं तिलकं कलये ॥ ३४ ॥ त्वदृशौ नेत्रे मृगदृशायतांते मृगदृशाविव मृगनेत्रे इव आयते विस्तृते अंतरे मध्यभागौ ययोस्ते तादृशे स्तः । ते निमील्य चित्ते किं परिपश्यसि ईक्षसे । तर्हि किं कार्यं तत्राह [illegible] ते इति । किं नु हे शुक त्वं ते दृशौ विकास्य लसत् विलसितं मे मुखं पश्य । अहं ते सम्मुखं समक्षं परिचरामि संचरामि । 'निद्रालुं परित्यज्य [illegible]' इति न्यायादिति भावः ॥ ३५ ॥ भातीति । तवाधरोष्ठगतः अतिरक्तिमा अतिरक्तता स मा मां प्रति त्वया सह रतिं वक्ति । [illegible] इत्यर्थः । [illegible]

६

कामकुशलाः यत् धरायां पृथिव्याम् अमृतं वदंति तत् मम अधरामृतं पिब ॥३६॥ हे प्रिय त्वं मां स्वभुजपञ्जरान्तरे भुजाभ्यां निर्मितं यत्पञ्जरं तस्य मध्ये कुरु दृढालिंगनं कुर्वित्यर्थः परस्मैपदप्रयोगाज्ज्ञायते। क्लेशः कायक्लेशः दुःखं मानसं तेन बहुलं यत्तपः तत् त्यज। फलाभावात् फलविलम्बाद्वा स्वां निजां स्थितिं त्यज। ननु श्रमलब्धा तपःस्थितिः कथं त्याज्येत्यत आह। तपसि स्थितिर्यस्य तस्य तापसस्य तापः श्रम एव भवति। सुखं न भवति यथा शुचिगतातपे ग्रीष्मगतोष्णे स्थितिर्यस्य तस्योष्णनिवासिनः दुःखमेव फलं स्यात्तथेत्यर्थः ॥ ३७ ॥ भो मुने तव करौ सुकोमलौ अतिमृदू पद्मगर्वहरकान्तिशोभनौ पद्मस्य यो गर्वः अहमेव कान्त्या शोभन इत्येवंरूपः तस्य हारिण्या कान्त्या शोभनौ तदपेक्षयोत्तमकान्तिमन्तावित्यर्थः। तत् तस्माद्धेतोः उन्नतं कुचयुग्मं गृहाण ताभ्यां हस्ताभ्यां गृह्णीष्वेति भावः। अथो अनंतरं त्वम् अत्रपी न त्रपा लज्जा यस्य स

मां कुरु स्वभुजपञ्जरान्तरे क्लेशदुःखबहुलं तपस्त्यज ॥ ताप एव न सुखं तपस्स्थितेः स्याद्यथा शुचिगताऽऽतपस्थितेः ॥३७॥ भो मुने तव करौ सुकोमलौ पद्मगर्वहरकान्तिशोभिनौ॥ तद्गृहाण कुचयुग्ममुन्नतं मय्यथो कुरु शुकात्रपीनताम् ॥३८॥ संमतो न मम तेजसा धवस्त्वां विना सकरुणास्तु साधवः ॥ मामतस्त्वमनुरक्ष कामतः प्राप्स्यसे सुखमतोन्यदस्ति नो ॥ ३९ ॥ एहि रम्यविपिनं सुयानतो मस्तकस्तव पदे मया नतः ॥ त्वं मया सह रमस्व कानने दृष्टिरस्तु तव मे शुकानने ॥ ४० ॥

निर्लज्जः सन् मां नतां मैथुने आसनविशेषार्थं नम्रां कुरु संभोगं कुर्वित्यर्थः। यद्वा मयि अत्रपीनतां न त्रपा येषाम् अस्तीति अत्रपिणः तेषाम् इना स्वामिनी तस्या भावः तत्तां कुरु मां मा विमुखां कुर्विति भावः ॥ ३८ ॥ मम तेजसा संमतस्तुल्यो धवो भर्ता त्वदृते नास्ति त्वत्सदृशाः साधवस्तु सकरुणाः दयायुक्ता भवंति। यतः साधवः सकरुणाः अतः कारणात् त्वं कामतः कामपूरणेन मामनुरक्ष अतः मल्लाभात्परं सुखं त्वं प्राप्स्यसे। न किमपि रतिसुखादन्यत्सुखमस्ति ब्रह्मावाप्तिसुखं प्रलोभनामात्रमिति भावः ॥ ३९ ॥ सुयानतः उत्तमविमानेन रम्यं विपिनम् एहि आगच्छ त्वमिति शेषः। मया मस्तकः मूर्धा तव पदे नतः नम्रीकृतः त्वां नमस्करोमीत्यर्थः। त्वं मया सह कानने सुपुष्पवने रमस्व।

हे शुक तव दृष्टिः मे ममानने मुखेऽस्तु । मादृशाप्सरोलाभे सति नेत्रसंकोचनेन किं वृथा स्थितोसीति भावः ॥ ४० ॥ असौ शुकोपि रंभोदितं वचनजातं तत्परम्परां श्रुत्वा तोषं संतोषं नागमत् न प्रापत् तथा कोपी कोपयुक्तो वा न बभूव । विगतनिद्रः जनः गतनिद्रः जाग्रत् पुरुषः स्वप्नं मन्यते यथा तथा मुनींद्रः रंभोदितं तनुगतं जाग्रच्छरीरगतं मत्वा शरीरं प्रति रंभावचनं नात्मानं प्रतीति निश्चित्य धैर्ययुक्तः सन् तां रंभामाहेति भावः । वसंततिलकावृत्तम् । तल्लक्षण यथा—'उक्ता वसंततिलका तभजा जगौ गः' इति ॥ ४१ ॥ स्वर्गताः स्वर्गस्थाः ये ते विशुद्धबुद्धयः संति । खलु यतः सात्त्विकाः सत्त्वगुणवृत्तयः स्वगताः स्वाधीनाः सर्वसिद्धयो येषां ते यदि विपरीतभाषणं सात्त्विकविरुद्धं मया सह रतिं कुर्विति राजसविषयप्रवृत्तिपरं भाषणं वदंति तर्हि

श्रीदेशिकेंद्र उवाच ॥ रंभोदितं वचनजातमसौ शुकोपि श्रुत्वा न तोषमगमन्न बभूव कोपी ॥ स्वप्नं यथा विगतनिद्रजनस्तथायं मत्वाह तां तनुगतं धृतिमान्मुनींद्रः ॥ ४१ ॥ श्रीशुक उवाच ॥ स्वर्गताः खलु विशुद्धबुद्धयः सात्त्विकाः स्वगतसर्वसिद्धयः ॥ चेद्वदंति विपरीतभाषणं स्यात्कथं जगति धर्मपोषणम् ॥ ४२ ॥ काल एव विपरीततां गतः किं कलिस्त्वरितमेव वागतः ॥ द्वापरेमरधियोऽर्थभाजनाश्चेद्भवंति कलिगाः कथं जनाः ॥४३॥ देवि वेदवचनैर्विरोधि ते वाक्यमात्मगतये निरोधकम् ॥ मा वदस्व मयि तुल्यगोखरे बीजवापमिव भूमिगोखरे ॥ ४४ ॥

जगति धर्मपोषणं धर्मरक्षणं कथं स्यात् । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति स्मृतेन कथमपि धर्मरक्षणं भवेदिति भावः । रथोद्धतावृत्तम् ॥ ४२ ॥ काल इति । एष द्वापराख्योसौ कालः विपरीततां कलिधर्मतां गतः प्राप्तोस्ति किं वेति । अथ वा किं कलिरेव त्वरितं यथा तथाऽऽगतोस्ति । द्वापरे संप्रति काले अमरधियः इंद्रादिदेवबुद्धयः अर्थभाजनाः विषयाश्रयाः विषयपरा इति यावत् । भवंति यदि तर्हि कलिगता जनाः कथं संभविष्यंतीति योज्यम् । अस्मिन्द्वापरयुगे युष्माकमेतादृशो विषयाभिलाषश्चेत्तर्हि कलियुगस्थजनेषु विषयलंपटत्वं नाश्चर्यमिति भावः ॥ ४३ ॥ देवीति । हे देवि रंभे वेदवचनैर्विरोधि—'ऋतौ भार्यामुपेयादि'त्यादिवचनविषये भार्याभिन्नवेश्यागमनप्रतिपादकत्वेन विरुद्धम् । आत्मगतये आत्मप्राप्त्यै निरोधकं विषयोन्मुखताज

नकत्वेन प्रतिबंधकम् इति पूर्वोक्तं वाक्यं मयि मत्समीपे मा वद । कीदृशे तुल्यगोखरे तुल्याः अभिन्नाः गावः खराश्च यस्य मम तस्मिन्समदर्शिनीत्यर्थः । कमिव भूमिगे भूमिगते ऊषरे स्थाने बीजवापमिव स्थितम्–ऊषवानूषरौ द्वावप्यन्यालिंगौ स्थलं स्थलीत्यमरः । यमकालंकारार्थे खषयोरभेदः । यथा ऊषरभूमावुप्तं बीजं प्ररोहाय न भवति । तथा समदर्शिनि मयि त्वया प्रेरितं वाक्यं रत्यादिफलाय न भविष्यतीति भावः ॥ ४४ ॥ मत्संगेन जन्म सार्थकं कुर्विति यदुक्तं तत्र न कस्यापि स्त्रीसंगात्सार्थक्यमित्याह । क इति । अथो इति प्रश्ने–मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः ॥ पुरातनाः विश्वामित्रपुरूरवआदयः । स्त्रिया मेनकोर्वश्यादिकया युक्ताः संतः के सुखं ययुः । न केपीत्यर्थः । बहुधा बहुशः आप्ताः प्राप्ताः यातनाः तीव्रवेदनाः यैस्ते तथा भूताः । यातना तीव्रवेदनेत्यमरः । अंशसुखं स्त्रीसंगादिकं बडिशमिव परिपाके दुःखायैव भवतीत्यर्थः । तपःस्थितौ श्रमोस्तीति यदुक्तं तत्राह । देशिकादिति । गुरोः सकाशात् हृदयगं महावाक्योपदेशेनाबाधिततया हृदिस्थम् आत्मनो वैभवम् असंगत्वात्कर्तृत्वव्यापकत्वाद्यैश्वर्यं यस्य सः कः वृथा जनः

**के सुखं ययुरथो पुरातनाः स्त्रीयुताश्च बहुधाप्तयातनाः ॥ देशिकाद्धृदयगात्मवैभवः कस्त्रियो वशमियाद्वृथा जनः ॥ ४५ ॥ अस्थिमांसरचितातिकुत्सिता मूत्रगूथसहिता विपश्चिता ॥ केन काम्यत इयं स्त्रियस्तनुर्ज्ञानतो हि गदिता तु याऽतनुः ॥ ४६ ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्य वाचं तु शुकस्य रंभा जाता गजेनाभिहतेव रंभा ॥ पराजयं प्राप्य तमाह धैर्याद्यथा खलो वक्ति निजं जयित्वम् ॥४७॥**

जायत इति जनः व्यर्थजन्मा सन् स्त्रियः वशम् अधीनताम् । इयात् प्राप्नुयात् न कोपीत्यर्थः । निरतिशयानंदप्राप्तौ तुच्छसुखेच्छा न भवतीति भावः ॥ ४५ ॥ किं च स्त्रीशरीरस्यातिकुत्सितत्वेन रतिसुखस्यातितुच्छत्वमाह अस्थीति । अस्थ्यादिभिः रचिता अतिकुत्सिता अतिनिंद्या मलमूत्रसहिता इयं मत्पुरोवर्तिनी स्त्रियस्तनुः । स्त्रिय इति जात्येकवचनम् । केन विपश्चिता दोषज्ञेन काम्यते । न केनापीत्यर्थः । या अतनुः महती आकारवती ज्ञानतः विचारेण तनुः अल्पा कथिता । हीति निश्चये । ज्ञानिभिरिति शेषः । अक्षयात्मसुखापेक्षया क्षणिकरतिसुखस्य तत्कारणस्य स्त्रीदेहस्य चातितुच्छत्वमित्यर्थः । यथोक्तं "मुखं श्लेष्मागारं तदपि च शशांकेन तुलितं स्तनौ मांसग्रंथी कनककलशावित्युपमितौ । स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्धि जघनमहो निंद्यं रूपं कविवरविशेषैर्गुरु कृतमिति ॥ ४६ ॥ निशम्येति । रंभा शुकस्य वाक्यं श्रुत्वा गजेन हता रंभा कद

लीव जाता । यथा खलः पराजयं प्राप्य लब्ध्वापि धैर्येण निजं जयित्वं जेतृत्वं वक्ति तथा धैर्येणाह ॥ ४७ ॥ वेदविरुद्धं वेश्यागमनादीनि [illegible] परोप-
कारार्थं वेदविरुद्धाचरणे न दोष इत्याह । परोपकारादिति । हि यस्मात्त्वं मनोभवार्तां कामपीडितां मां न रक्षसे कामपूरणेन न [illegible] यदि प्राणांस्त्य-
क्ष्यामीति भावः । तस्मात्त्वयि धर्मवार्ता कथं स्यात् । न कथमपीत्यर्थः ॥ ४८ ॥ किं च स्त्रीसंतोषाकरणे दोषमाह । प्राप्तेति । स्वतः प्राप्ता स्त्री न निव-
र्तनीया भोगं विना न प्रत्याख्यातव्या इत्थं प्राचाम् उक्तिर्बुधकीर्तनीयास्ति । वरांगो रुक्मांगदः मुकुंदाख्यायाः निकृतेः स्वरतिभोगप्रार्थनातिरस्करणात्
कुष्ठस्य गलत्कुष्ठस्य रुजां रोगम् अवाप प्राप। तथाहि मृगयां गतो रुक्मांगदो राजा तृषार्तः सन् वाचक्नवीनामर्षेराश्रमं गतः । तत्पत्न्या मुकुंदानाम्न्या

रंभोवाच ॥ परोपकारान्न परोस्ति धर्मः परापकारान्न परस्त्वधर्मः ॥ न रक्षसे मां तु मनोभवार्तां ततः कथं स्यात्त्वयि धर्मवार्ता ॥
॥४८॥प्राप्ता स्वतः स्त्री न निवर्तनीया पुरातनोक्तिर्बुधकीर्तनीया ॥ मुकुंदनाम्न्या निकृतेर्वरांगो रुक्मांगदः कुष्ठरुजामवाप॥४९॥स्त्र्या-
लिंगनान्नैव तनुः कृतार्था कुचग्रहान्नैव करौ कृतार्थौ ॥ स्त्रीचुंबनान्नैव मुखस्य वीक्षा त्विनीति वात्स्यायनसूत्रदीक्षा ॥ ५० ॥ अक्ष्णोः
फलं स्त्रीमुखपङ्कजेक्षणं नीव्याः स्त्रियो मोचनमेव मोक्षः ॥ यः कामशास्त्रीयरहस्यमित्थं नो वेत्ति तज्जन्म भवेन्निरर्थम् ॥ ५१ ॥

सुरूपं राजानं दृष्ट्वा मोहितया मया सह रमस्वेति प्रार्थितः । तेन च धार्मिकेण राज्ञा प्रत्याख्याता सती सा गलत्कुष्ठी भवेति राजानं शशाप । तच्छापात्स
तथा जातः । ततस्तद्रूपधरादिंद्रात्तस्यां गृत्समदो नामर्षिर्जात इति गणेशपुराणे कथा प्रसिद्धा ॥४९॥ किं च कामशास्त्रसिद्धांतोप्येवमेवेत्याह । स्त्र्यालिङ्गनं
स्त्रियः आलिंगनाद्विना तनुः शरीरं कृतार्था न भवति । कुचग्रहात् तयोः ग्रहणात् कराभ्यां मर्दनाद्विना करौ कृतार्थौ न स्तः । स्त्रीमुखचुंबनाद्विना मुखस्य
वीक्षा दर्शनं नैव भवति । तस्याकर्तुर्मुखदर्शनं न कर्तव्यमित्यर्थः । इति वात्स्यायनस्य कामशास्त्रकर्तुः सूत्रे दीक्षा उपदेशोस्तीत्यर्थः ॥ ५० ॥ अक्ष्णोरिति
स्त्रीमुखपङ्कजस्य ईक्षणं दर्शनम् अक्ष्णोः तयोरुत्पत्तेः फलम्।स्त्रीमुखदर्शनेन नेत्रसार्थक्यमिति भावः।स्त्रियो नीव्याः मुक्तिः मोचनमेव मोक्षोस्तीति यः कामशा-

स्वगतं सिद्धांतं नो वेत्ति तस्य जन्म निरर्थकं भवेत॥५१॥अन्यैर्दुर्लभा मत्प्राप्तिस्त्वयानायासेन जातेत्याह।यदिति यत्प्राप्तये मुनींद्राः धनार्जने विगतनिद्राः सन्तः बहुधनैर्यज्ञादिकं कुर्वंति । तत् अप्सरोभोगसुखं तु अंजसा अनायासेन त्वया आप्तं प्राप्तं लब्धमित्यर्थः । तत् यः निवर्तयेत् तिरस्करोति तस्य पुरुषस्य दुष्कर्मपाकः प्राचीनदुष्कर्मफलं वेद्यः ज्ञेयः खलु । मत्प्राप्तिः पूर्वपुण्येनैव भवतीत्यर्थः ॥ ५२ ॥ मलमूत्रादिपूर्णं स्त्रीशरीरमिति यदुक्तं तत्र मम शरीरं न

यल्लब्धये यज्ञमुखं मुनींद्राः कुर्वंति चानेकधनैर्विनिद्राः ॥ तदंजसाऽऽप्तं तु निवर्तयेद्यो दुष्कर्मपाकः खलु तस्य वेद्यः ॥ ५२ ॥
ममोदरं नास्ति मलादियुक्तं विदारये पश्य सुधाभिषिक्तम् ॥ द्रव्यैः सुगंधैर्विविधैश्च पूर्णं चेत्तन्मयात्रैव रमस्व तूर्णम् ॥ ५३ ॥
श्रीदेशिकेंद्र उवाच ॥ इत्थमुक्त्वा तदा रंभा वृषलीव गतत्रपा ॥ तं कष्टुमुद्यतकरा तदा सोंतर्दधे शुकः ॥ ५४ ॥ संकोच्यांघ्री गुहामध्ये गच्छतो वृषणौ बहिः ॥ दृष्ट्वा शुकस्य रंभा तौ स्प्रष्टुमाशु गतांतिकम् ॥ ५५ ॥ तावदंतर्हितौ दृष्ट्वा निर्गता सा तदा ततः ॥ विमानेन सखीयुक्ता ययौ खिन्ना त्रिविष्टपम् ॥ ५६ ॥ जनाः पश्यंति चाद्यापि पाषाणौ वृषणाकृती ॥ पूजयंति तथा भक्त्या पुण्ये तस्मिनञ्छुकाश्रमे ॥ ५७ ॥ रंभाप्सरःश्रेष्ठतमापि नैवमनाग्वशं नेतुमभूत्समर्था ॥ यं सर्वभूतात्मनिकेतनं तं शुकं त्रयोविंशगुरुं नताः स्मः ॥ ५८ ॥

तथेत्याह । ममेति ममोदरं मलादियुक्तं नास्ति अहं तत् विदारये त्वं पश्येत्यत्रोदरकर्मत्वं तत् उदरं चेत् यदि सुधया अमृतेन सिक्तं सेचितम् । च पुनः विविधैः सुगंधद्रव्यैः पूर्णं स्यात्तर्हि त्वं मया सहात्रैवाश्रमे तूर्णं त्वरितं यथा स्यात्तथा रमस्व ॥ ५३ ॥ वृषलीव दासीव गतत्रपा निर्लज्जा ॥ ५४ ॥ ॥ ५५ ॥ एतौ वृषणौ । त्रिविष्टपं स्वर्गम् ॥ ५६ ॥ पुण्ये पवित्रे तदारभ्य शुकाश्रमः प्रसिद्धोऽभूत् इत्यर्थः ॥ ५७ ॥ त्रयोविंशसंख्यं शुकानंदं

प्रणमति । रम्भेति । सर्वेषां भूतानाम् आत्मा निकेतनं स्थानं यस्य तं नताः स्मः । वृत्तमुपजातिः ॥ ५८ ॥ शुकचरित्रकथायाः श्रवणादेः फलमाह । शुकचरितमिति । गुरुचरणगतात्मा गुरुचरणैकनिष्ठः बहुजनिभवपापात् अनेकजन्मोद्भवपातकान्मुच्यते. । आत्मलाभात् आत्मलाभेन शुकतुल्यः ॥ ५९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेर्थस्फूर्त्यभिधायां टीकायां दशमः सर्गः ॥ १० ॥ एकादशे चतुःषष्टिश्लोकैरष्टौ नृसिंहतः ॥ उक्ता गोविंदयोग्यंता

शुकचरितमिदं यः श्रावयेद्वा शृणोति गुरुचरणगतात्मा यस्तु भक्त्या पठेच्च ॥ बहुजनिभवपापान्मुच्यतेऽथात्मलाभाद्भवति शुकसमानः सर्वभूतांतरात्मा ॥ ५९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धे शुकचरित्रवर्णनं नाम दशमः सर्गः ॥ १० ॥ श्रीदेशिकेंद्र उवाच ॥ नृसिंहाख्योथ तच्छिष्यस्तस्मिंस्तिष्ठञ्छुकाश्रमे ॥ प्राप्तः शुकसमां सिद्धिं ज्ञानाभ्यासेन योगवान् ॥ १ ॥ नृसिंहाच्च तपःसंस्थाच्छ्रुत्वेंद्रोप्सरसः पुनः ॥ तपोघ्नीः प्रेषयामास भीतः स्वांते यथा शुकात् ॥ २ ॥ इंद्राज्ञताश्च तास्तत्र समागत्य गुहास्थितम् ॥ दुष्प्रेक्ष्यं नेक्षितुं शेकुः श्रीनृसिंहमिवापरम् ॥ ३ ॥ अशक्ताः स्थातुमप्यग्रे धर्षितास्तस्य तेजसा ॥ ययुर्यथागताः सर्वा नाकमप्सरसस्तथा ॥ ॥ ४ ॥ अथ तत्रागतं शांतं महेशाख्यं मुनिं तदा ॥ नृसिंहश्चादिशत्सर्वं संप्रदायप्रवृत्तये ॥ ५ ॥ शुकाश्रमाच्चाथ नृसिंहयोगी व्योम्नः सुमार्गेण ययौ यथेष्टम् ॥ सिद्धिं गता यः शुकसिद्धितुल्यां गुरुं चतुर्विंशममुं नताः स्मः ॥ ६ ॥ महेशोथ मनस्येवं चिंतयामास चैकदा ॥ निष्कामोपि यदैकत्र तपस्तपाति तापसः ॥ ७ ॥

देशिकाः सिद्धसंघगाः ॥ ११ ॥ नृसिंहाख्य इति ॥ १ ॥ स्वांते स्वचित्ते भीतः ॥ २ ॥ तत्र शुकाश्रमे ॥ ३ ॥ धर्षितास्तिरस्कृताः नाकं स्वर्गम् ॥ ४ ॥ अथाप्सरोगमनानंतरं सर्वं पूर्णाभिषेकादिमंत्ररहस्यम् ॥ ५ ॥ चतुर्विंशं नृसिंहानंदं प्रणमति । शुकाश्रमादिति । सुमार्गेण उत्तममार्गभूतेन व्योम्ना आकाशेन ययौ शुकस्य सिद्धिः सार्वात्म्यरूपा तत्समानां गतस्तम् अमुं नताः स्मः । गुरोः सर्वरूपत्वेन अमुमिति पुरोवर्तिनिर्देशः ॥ ६ ॥ एकत्र स्थले ॥ ७ ॥

तस्य तपस्विनो विघ्नं करोति । अतः एकत्र न स्थेयं स्थातव्यं मयेति शेषः । निश्चित्येत्युत्तरान्वयि ॥ ८ ॥ उत्पथाः स्थितान्दुराचारान् ॥ ९ ॥ भास्करायेति महेश इत्यनुवृत्तिः ॥ १० ॥ पंचविंशं महेशानंदं प्रणमति । प्राप्त इति । स्वांघ्रिरतांतराणां स्वच्चरणैकनिष्ठानां तं महेशानंदं स्वगुरुं स्वाभिन्नं गुरुं नताः स्मः । इंद्रवज्रावृत्तम् ॥ ११ ॥ परः द्वितीयो भास्करः सूर्य इवेति लुप्तोपमा स महेंद्राय अज्ञानकृतं सर्वं द्वैतजातं विनाश्य नाशयित्वा ज्ञानादिकं यथार्थतः अबाधितत्वेन आचचक्षे कथितवानिति द्वयोः संबंधः ॥ १२ ॥ स्वस्मादभिन्नस्योपास्यदेवतायाः पूजनम् ॥ १३ ॥ षड्विंशं भास्करानंदं प्रणमति ।

तदेन्द्रो विघ्नमेतस्य करोतीति गुरोः श्रुतम् ॥ अंतः स्थेयं न चैकत्रेति निश्चित्य शुकाश्रमात् ॥ ८ ॥ पर्यटन्सकलां पृथ्वीं शिक्षयंश्चोत्पथस्थितान् ॥ तपोबलान्महेशाख्यां सत्यां चक्रे स योगिराट् ॥ ९ ॥ भास्करायातिनम्राय मुनयेऽथ समादिशत् ॥ रहस्यजातमखिलं संप्रदायप्रवर्तकः ॥ १० ॥ प्राप्तोथ सिद्धिं परमां महेशः सिद्धैः स्वशिष्यै रभिसेवितांघ्रिः ॥ यः सिद्धिदः स्वांघ्रिरतांतराणां तं पंचविंशं स्वगुरुं नताः स्मः ॥ ११ ॥ भास्करोथ महायोगी तपसा भास्करः परः ॥ विनाश्याज्ञानजं सर्वं ज्ञानमात्मप्रकाशकम् ॥ १२ ॥ योगं जीवात्मनोरैक्यं स्वाभिन्नोपास्यपूजनम् ॥ सरहस्यं महेंद्रायाचचक्षे स यथार्थतः ॥ १३ ॥ यो देशिकेंद्राप्तसमस्तसिद्धिः सिद्धाग्रणीः साधकसिद्धिवक्ता ॥ तं भास्करानंदमपारसत्त्वं गुरुं च षड्विंशमिमं नताः स्मः ॥ १४ ॥ महेंद्रोऽखिलसिद्धानामिंद्र एवापरोभवत् ॥ यदाज्ञयाऽखिलाः सिद्धा यतंते स्वस्वसिद्धये ॥ १५ ॥ एकदा स महीपृष्ठे पर्यटञ्छिष्यसंयुतः ॥ ददर्श दांभिकाचारानज्ञान्संन्यासिनो बहून् ॥ १६ ॥ स तानुवाच युष्माभिः संन्यासः स्वीकृतः कथम् ॥ मोक्षायोदरपूर्त्यै वा मुक्तिर्ज्ञानान्न चान्यथा ॥ १७ ॥

य इति । देशिकान्महेश्वरानंदगुरोः सकाशादाप्ताः प्राप्ताः समस्तसिद्धयो येन स साधकानामुपासकानां सिद्धिं सिद्ध्युपायं वक्ति तम् अपारसत्त्वम् अनंतसामर्थ्यं भास्करानंदगुरुं नताः स्मः । वृत्तमुपजातिः ॥ १४ ॥ स्वस्वसिद्धये स्वस्वसिद्ध्यर्थं यतंते यत्नं कुर्वन्ति ॥ १५ ॥ स महेंद्रः अज्ञान् ज्ञानशून्यान् ॥ १६ ॥ मोक्षप्राप्त्यर्थम् उदरपूर्त्यर्थं वा भवद्भिः संन्यासः कृत इति प्रश्नद्वयम् । तत्राद्यस्यासंभवमाह मुक्तिरित्यादिना ॥ १७ ॥

संन्यस्य संन्यासं कृत्वा श्रवणं कुर्यात् श्रोतव्यो मंतव्यो निदिध्यासितव्य इति वेदाज्ञाऽस्ति तच्छ्रवणं महदादरात् महत्सेवया भवति ॥ १८ ॥ उदरपूर्त्यर्थमेव भवतां संन्यास इति द्वितीयं निश्चिनोति । भवद्भिरिति । भवद्भिस्तु तज्ज्ञानं हित्वा त्यक्त्वा दंभ एव स्वीकृतोस्ति ॥ १९ ॥ रुष्टा अपि तत्तेजसा तिरस्कृताः संतः प्रणेमुः ॥ २० ॥ २१ ॥ सप्तविंशतिसंख्यं महेंद्रानंदं प्रणमति । तत इति ॥ २२ ॥ स च माधवः अज्ञान्

ज्ञानं तु श्रवणेनैव श्रवणं महदादरात् ॥ संन्यस्य श्रवणं कुर्यादिति वेदानुशासनम् ॥ १८ ॥ भवद्भिस्तत्तु हित्वैव केवलोदरपूर्तये ॥ स्वीकृतो दंभ एवाद्य यूयं संन्यासिनः कथम् ॥ १९ ॥ श्रुत्वातिरुष्टास्तद्वाक्यं तेजसा तस्य धर्षिताः ॥ प्रणेमुर्दंडवद्भूमौ त्राहित्राही ति वादिनः ॥ २० ॥ महेंद्रेणाथ ते सर्वे सम्यज्ज्ञानेन वोधिताः ॥ आदिष्ट यतिधर्मांश्च कृताः संन्यासिनां वराः ॥ २१ ॥ ततो महेंद्रो निखिलं रहस्यमुक्त्वा स्वशिष्याय स माधवाय ॥ सार्वात्म्यसिद्धिं समवाप सप्तविंशं गुरुं तं शिरसा नताः स्मः ॥२२॥ माधवं माधवानंदमित्याहुः संप्रदायिनः ॥ स चाज्ञाञ्ज्ञानवाक्यौघैरुद्दधार ह संसृतेः ॥ २३ ॥ माधवः स्वावतारौघैर्दैत्यभीतेः सुरानिव ॥ माधवेति निजं नाम सत्यमित्थं चकार सः ॥ २४॥ आदिश्य शिष्याय परं रहस्यं यो जिष्णुदेवाय ययौ सुसिद्धिम् ॥ तं माधवानं दगुरुं सदाष्टाविंशं वयं सिद्धवरं नताः स्मः ॥ २५ ॥ भ्राजिष्णुर्जिष्णुदेवोपि तपोवर्चःश्रियोल्लसन् ॥ निःस्पृहः सर्वकामेभ्यः समलो ष्टाश्मकांचनः ॥ २६ ॥ शिष्यं नोपादिशत्कंचित्कालिं दृष्ट्वा समागतम् ॥ धर्महीनं तथाकाराञ्जनांश्चानधिकारिणः ॥ २७ ॥ प्रवृत्तिः संप्रदायस्य कथमग्रे भविष्यति ॥ इति चिंतायुतस्तस्थौ गुहायामात्मवित्तमः ॥ २८ ॥ यो जिष्णुदेवः शुक एव यस्मात्सार्वात्म्य सिद्धिस्तु तथैव लब्धा ॥ तं गौडदेशस्थितमात्मतुष्टं नन्दाक्षिसंख्यं गुरुमानताः स्मः ॥ २९ ॥

ज्ञानहीनान् वाक्यौघैः महावाक्यसंघैः । तदुपदेशैरिति यावत् । संसारात्संसारार्णवादुद्दधार उद्धृतवान् ॥ २३ ॥ स्वावतारौघैः रामकृष्णाद्यवतारसंघैः दैत्य भीतेः सुरान्माधव इवेति पूर्वान्वयि इत्थमज्ञरक्षणेन ॥ २४ ॥ अष्टाविंशतिसंख्यं माधवानंदं प्रणमति । आदिश्येति ॥ २५ ॥ भ्राजिष्णुः तेजस्वी तपो वर्चःश्रिया तपसोत्पन्नया तेजस्संपत्त्या ॥ २६ ॥ २७ ॥ २८ ॥ एकोनत्रिंशत्संख्यं जिष्णुदेवानंदं प्रणमति । य इति । नन्दाक्षिसंख्यं नन्दा

नव अक्षिणी द्वे । अंकानां वामतो गतिरिति न्यायेन एकोनत्रिंशत्संख्यं गौडदेशे स्थितम् ॥ २९ ॥ अग्रे संप्रदायप्रवृत्त्यर्थं गौडपादकथां श्रीदेशिकेंद्र उवाच । आसीच्छुकेत्यादिना ॥ ३० ॥ ३१ ॥ पुराकृतात् पूर्वकर्मणः तद्दोषादितिभावः ॥ ३२ ॥ ३३ ॥ अनिलो वायुः अहारोऽस्यास्तीत्यनिला

श्रीदेशिकेंद्र उवाच ॥ आसीच्छुकाश्रमाभ्याशे ग्रामो भूपालसंज्ञकः ॥ तत्रस्थोथ द्विजः कश्चिद्विष्णुदेव इति श्रुतः ॥ ३० ॥ वेदवेदांततत्त्वज्ञो देवतातिथिपूजकः ॥ धनधान्यसमृद्ध्याढ्यः सर्वभूतहिते रतः ॥ ३१ ॥ पत्नी गुणवती नाम तदाज्ञावशवर्तिनी ॥ सर्वसम्पत्समृद्धस्य पुत्रो नाभूत्पुराकृतात् ॥ ३२ ॥ स चैकदाऽपत्यकामः शुकाश्रममुपाययौ ॥ ज्ञात्वा सिद्धस्थलं तत्र स्थितः सप्तदिनावधिः ॥ ३३ ॥ एकासनेऽनिलाहारी गायत्रीजपतत्परः ॥ सप्तमे दिवसे तत्र श्रुता वाक् तद्गुहांतरात् ॥ ३४ ॥ पुत्रस्ते भविता नूनं कीर्तिमानखिलप्रियः ॥ सर्वज्ञः सर्वसिद्ध्याढ्यः सिद्धसंघनिषेवितः ॥ ३५ ॥ इति द्विजो वरं श्रुत्वा शुकदत्तं सुदुर्लभम् ॥ निश्चित्य स गुहां नत्वा संतुष्टः स्वगृहं ययौ ॥ ३६ ॥ ब्राह्मणान्भोजयित्वासावृतौ पत्न्यां सिषेच सः ॥ रेतः साऽधत्त गर्भं तं कालेऽथो सुषुवे सुतम् ॥ ३७ ॥ शुभलक्षणसंपन्नं कांत्या सूर्यमिवापरम् ॥ कृत्वास्य जातकं कर्म शुकदत्तेति नाम च ॥ ३८ ॥ चक्रे पिताथ ववृधे बालः शुक्ले यथा शशी ॥ उपनीतोथ पित्रासौ बालकः पंचहायनः ॥ ३९ ॥ वेदैः सांगैः सशास्त्रैश्च शिक्षितश्च सुबुद्धिमान् ॥ तेनाभ्यस्तं ह्यर्भकेण शास्त्रमेवाखिलं पितुः ॥ ४० ॥ ततोसौ सिद्धिकामोगाच्छुकाश्रमवनं महत् ॥ स्थितश्चैकासने तत्र गुहाग्रे वर्जिताशनः ॥ ४१ ॥

हारी ॥ ३४ ॥ ३५ ॥ ३६ ॥ ऋतौ ऋतुसमये काले प्रसूतिसमये ॥ ३७ ॥ पूर्वार्द्धं पूर्वान्वयि उत्तरार्द्धमुत्तरान्वयि ॥ ३८ ॥ ॥ ३९ ॥ तेनार्भकेणैव पितुः सकाशादखिलं वेदशास्त्रादि । अभ्यस्तं संगृहीतम् ॥ ४० ॥ ततः अध्ययनानंतरं असौ बालः वर्जिताशनः आहार

रहितः ॥ ४१ ॥ अहोरात्रमिति पूर्वान्वयि । ततः प्रातः काले यत्नेत्याद्युत्तरान्वयि ॥ ४२ ॥ ४३ ॥ ४४ ॥ ततः शुकाश्रमात् ॥ ४५ ॥ पितृभ्यां तावुद्दिश्येत्यर्थः । संप्रदाने चतुर्थी । पृष्ठलग्नौ पृष्ठगामिनौ ॥ ४६ ॥ अहं गृहं गृहस्थाश्रमं वा न यामि नागच्छामि संन्यासं स्वीकरोमीत्यर्थः । पुनः

अहोरात्रं ततः शब्दः प्रादुरासीद्गुहांतरात् ॥ गच्छ गौडं शिशो देशं यत्रास्मत्सांप्रदयिकः ॥ ४२ ॥ जिष्णुदेव इति ख्यातः सर्वासिद्धिभिरन्वितः ॥ तस्मात्त्वं चाखिलाः सिद्धीः प्राप्स्यसे मत्प्रसादतः ॥ ४३ ॥ त्वां वदिष्यंति लोकेस्मिञ्छुकशिष्य इति स्फुटम् ॥ अपक्वकर्मणस्ते तु नाधुना मम दर्शनम् ॥ ४४ ॥ विष्णुदेवाल्लब्धसिद्धिः सर्वगं मां त्वमीक्षसे ॥ श्रुत्वेति वाचं बालोथ ययौ स्वपितरं ततः ॥ ४५ ॥ पितृभ्यामुक्तवृत्तोसौ तौ नत्वा निर्ययौ ततः ॥ पृष्ठलग्नौ च तावाह युवाभ्यां गम्यतां गृहम् ॥ ४६ ॥ नाहं गृहं यामि पश्चात्पुत्रो वां भविता पुनः ॥ निवर्त्य पितरावित्थं गौडदेशं ययावसौ ॥ ४७ ॥ एकाकी पादचारी च बालकः पंचवार्षिकः ॥ जिष्णुदेवाश्रमं पृच्छन्प्राप्तस्तस्य गुहामुखम् ॥ ४८ ॥ ननाम जिष्णुदेवाख्यं सोपि दृष्ट्वा तमर्भकम् ॥ प्राह कस्त्वं किमायातः किं कृत्यं केन वा वद ॥ ४९ ॥ स चाह दाक्षिणात्योहं शुकाश्रमसमीपगः ॥ द्विजपुत्रोस्मि संदिष्टः साक्षाच्छ्रीशुकयोगिना ॥ ५० ॥ गुहांतर्गानगेनापि सिद्धिकामो गुहांतरात् ॥ गौडं गत्वा जिष्णुदेवाल्लभस्वाखिलवांछितम् ॥ ५१ ॥ संप्रदायी स चास्माकं तादृङ्नान्य इति स्फुटम् ॥ भवत्पादांतिकं प्राप्तः सोहं मां वद चाखिलम् ॥ ५२ ॥ ज्ञानं योगं परां सिद्धिं मंत्रजातरहस्यकम् ॥ श्रुत्वेत्थं जिष्णुदेवोपि प्रोवाचास्मै तदाऽखिलम् ॥ ५३ ॥

अन्यः पुत्रः ॥ ४७ ॥ ४८ ॥ ४९ ॥ दाक्षिणात्यो दक्षिणदिग्वासी गुहान्तर्गानगेन गुहांतर्गतेन शुकयोगिना गुहांतराद्गुहामध्यात् संदिष्टोहं भवत्पदांबुजं प्राप्तोस्मीति योज्यम् । तस्याज्ञामाह गौडं देशमित्यादि ॥ ५० ॥ ५१ ॥ अखिलं ज्ञानादिकमस्मामुपदिशेत्यर्थः ॥ ५२ ॥ अस्मै बाल

काय ॥ ५३ ॥ गौडपादनामप्रयोजनमाह गौडानिति । अस्य बालस्य ॥ ५४ ॥ ५५ ॥ ५६ ॥ तस्य ग्रंथकर्तृत्वमाह । योगगीतामिति । स्वार्थबोधकं माण्डूक्योपनिषदर्थबोधकमित्यर्थः ॥ ५७ ॥ अखिलं पूर्णाभिषेकादि मंत्ररहस्यम् । सोऽपि गोविंदयोगी ॥ ५८ ॥ त्रिंशत्तमं गौडपादानंदं प्रणमति य इति । अद्धा साक्षाच्छुकेन आदर्शितः जिष्णुदेवं शरणं गच्छेति ईषद्दर्शितः संप्रदायो यस्य तं सर्वात्मबुद्धिं नताः स्मः ॥ ५९ ॥ ६० ॥ ६१ ॥

गौडान्दूरात्समायातः पद्मामेव शिशुर्लघुः ॥ अतोस्य गौडपादेति चक्रे नाम स देशिकः ॥ ५४ ॥ गौडपादोखिलां सिद्धिं लब्ध्वा श्रीजिष्णुदेवतः ॥ सिद्धवर्यो बभूवाथ शुक एवापरः सुधीः ॥ ५५ ॥ ददर्श च शुकं साक्षात्स्मृतिमात्रेण सर्वदा ॥ शुकशिष्यमिति प्राहुरतस्तं ज्ञानिनोऽखिलाः ॥ ५६ ॥ योगगीतां चकाराशु योगमार्गप्रकाशिनीम् ॥ मांडूक्यसंज्ञोपनिषद्वार्तिकं स्वार्थबोधकम् ॥ ५७ ॥ प्राहाथ गौडपादोपि गोविंदमुनयेऽखिलम् ॥ सिद्धवर्योऽभवत्सोपि गौडपादप्रसादतः ॥ ५८ ॥ यो योगवांश्चाखिलसिद्धिवेत्ता योऽद्धा शुकाऽऽदर्शितसंप्रदायः ॥ तं गौडपादं निखिलात्मबुद्धिं त्रिंशत्तमं देशिकमानतास्स्मः ॥ ५९ ॥ गोविन्दानन्दयोगीन्द्रो न्यवसन्नर्मदातटे ॥ सर्वं ब्रह्मैव संपश्यन्मंत्रजातरहस्यवित् ॥ ६० ॥ गोविंदेन यथापूर्वं यमुनातीरवासिना ॥ चंचलाश्च वशं नीता गावो वेणुप्रवोधनात् ॥ ६१ ॥ तथा रेवातटस्थेन गोविंदानंदयोगिना ॥ आत्मबोधाद्वशं नीताः स्फुरंत्यखिलवृत्तयः ॥ ६२ ॥ यः सर्वसिद्धेषु वरो युगेऽस्मिन्यस्मात्प्रवृत्तो यतिसंप्रदायः ॥ गोविन्दयोगींद्रमनंतसत्त्वमेकात्रिसंख्यांतिममानताः स्मः ॥ ६३ ॥ सिद्धौघः कथितोयं सनकाद्गोविन्दनाथयोग्यन्तः ॥ निखिलेप्सितदः पुंसां श्रवणात्पठनाच्च भक्तितो नूनम् ॥ ६४ ॥ इति श्रीगुरुपरंपराचरित्रस्य पूर्वार्द्धे नृसिंहादिगोविंदयोग्यंतसिद्धौघस्थाष्टगुरुवर्णनं नामैकादशः सर्गः ॥ ११ ॥

आत्मबोधेन स्फुरन्त्यश्च ताः अखिलवृत्तयो वशं नीताः ॥ ६२ ॥ एकत्रिंशत्संख्यं गोविंदानंदं प्रणमति य इति । यस्मात् अस्मिन् कलियुगे यतिसंप्रदायः संन्यासमार्गः प्रवृत्तोऽभवत् । तम् अनंतसत्त्वम् अनंतसामर्थ्ययुक्तं गोविन्दयोगींद्रं नताः स्मः । इंद्र० ॥ ६३ ॥ सिद्धौघस्थगुरुकथाश्रवणादेः फलमाह—सिद्धौघ इति । निखिलेप्सितदः सर्वार्थपूरकः । गीतिः ॥ ६४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां टीकायामेकादशः सर्गः ॥ ११ ॥

अथैकादशभिः सर्गैः श्रीमच्छंकरसद्गुरुः॥कथ्यते यः शिवः साक्षाद्धामागाद्धर्मगुप्तये ॥ द्वादशे तत्र चैकाब्धिश्लोकैः शंभोः स्तुतिः सुरैः॥साक्षात्स्कंदस्य भट्टाग्रेजयश्चोक्तो जिनक्षयः ॥१२॥ अथेति । अथ सिद्धौघस्थगुरुचरित्रवर्णनानंतरम् । यत्र मानवौघे आद्यः प्रथमः ॥१॥ संशयापहं यथा स्यात्तथा ॥ २ ॥

श्रीदेशिकेन्द्र उवाच ॥ अथाह मानवौघस्थान्वक्ष्ये सर्वान्गुरून्क्रमात् ॥ यत्राद्यः शंकराचार्यः शिवः साक्षाद्धरां गतः ॥१॥ श्रीमयूरेश्वर उवाच ॥ कथं मानवतां प्राप्तो महादेवोऽखिलेश्वरः ॥ एतत्सर्वं विस्तरेण कथ्यतां संशयापहम् ॥ २ ॥ श्रीदेशिकेंद्र उवाच ॥ पुरे कदामराः सर्वे गत्वा कैलासपर्वतम् ॥ नत्वोमेशमिदं प्रोचुः सर्वे प्रांजलयः स्थिताः ॥ ३ ॥ देवा ऊचुः ॥ देवदेवाखिलाधार विज्ञप्तिं शृणु नः प्रभो ॥ बुद्धरूपो हरिर्भूत्वा वंचयन्वै तथागतान् ॥ ४॥ वर्तते तद्भवान्सर्वं वेत्त्येवाथापि नः शृणु ॥ तत्प्रणीतैस्तु पाखंडमार्गैः सर्वं धरातलम् ॥ ५ ॥ दूषितं तत्र नो वार्ता श्रौतस्मार्तक्रियोद्भवा ॥ न संध्या नाग्निहोत्रश्च न वेदाध्ययने क्वचित् ॥६॥ स्वाहा स्वधा वषट्कारो न संन्यासो न चात्मता ॥ अप्राप्य यज्ञभागादि कथं स्थास्यामहे वयम् ॥ ७ ॥ अतस्त्वां शरणं प्राप्ता दुःखं नाशय नः प्रभो ॥ इति तेषां वचः श्रुत्वा शंभुराहागतान्सुरान् ॥ ८ ॥ श्रूयतां मे सुरा वाक्यं यच्च वः सुखकारकम् ॥ उच्छिन्नोऽद्वैतमार्गोऽयं ज्ञानवैराग्यसंयुतः ॥ ९ ॥ अतस्तं स्थापयिष्यामि भूत्वा भूमौ नराकृतिः ॥ शंकराचार्यनामाहं चतुःशिष्यैः समन्वितः ॥ १० ॥ युष्माकमखिलान्कामान्पूरयिष्येऽमरेश्वराः ॥ तावद्धरायामखिलैर्भवद्भिश्चावतीर्यताम् ॥ ११ ॥

॥ ३ ॥ विज्ञप्तिं प्रार्थनाम् । तथागतान् बौद्धान् ॥ "सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः" इत्यमरः ॥४॥ वर्तत इति पूर्वान्वयि वेत्त्येव जानात्येव नः शृणु वाक्यमिति शेषः । तत्प्रणीतैः बौद्धस्थापितैः ॥ ५ ॥ दूषितमिति पूर्वान्वितम ॥ ६ ॥ आत्मता आत्मज्ञानमित्यर्थः ॥ ७ ॥ ८ ॥९॥ तम् अद्वै

तमार्गम् ॥ १० ॥ ११ ॥ स्थितीः स्थानानि ॥ १२ ॥ हे कार्तिकेय स्कंद ॥ १३ ॥ श्लोकपादः पूर्वान्वयि । तथागतान् जिनान् ॥ १४ ॥ ॥ १५ ॥ १६ ॥ सर्वविदपि बौद्धशास्त्रे कृत्रिमाम् अयथार्थां श्रद्धां धारयन् । सौगतान् बौद्धान् ॥ १७ ॥ सेनानीः कार्तिकेयः । सूत्राणाम् "अथातो धर्मजिज्ञासा" इत्यादीनाम् ॥ १८ ॥ १९ ॥ सार्द्धान्वयः । सदसि प्रभा यस्य तम् ॥ २० ॥ तद्व्याजेन पिकमिषेण ॥ २१ ॥ तद्गृहे

वेदमार्गप्रवृत्त्यर्थं यावदाविर्भवो मम ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं श्रुत्वाऽखिला देवास्तुष्टाः प्राप्ता निजाः स्थितीः ॥ १२ ॥ शंभुश्चाज्ञापयामास स्वपुत्रं षण्मुखं मुदा ॥ कार्तिकेयावतीर्य त्वं भूमौ स्थापय वैदिकम् ॥ १३ ॥ मार्गं तथागताञ्जित्वा ख्यातिस्ते संभविष्यति ॥ ब्रह्मापि मंडनो भूत्वा त्वत्साहाय्यं करिष्यति ॥ १४ ॥ सुधन्वाख्यो नृपश्चेंद्रो भविता तत्र कार्यकृत् ॥ शंभुनेत्थमनुज्ञातो जग्राहाज्ञां स षण्मुखः ॥१५॥ अथेंद्रोऽपि सुधन्वाख्यो राजा भूत्वा भुवि स्थितः ॥ शशास धरणीं सर्वां सागरांतां यथा दिवम् ॥१६॥ धारयन्कृत्रिमां श्रद्धां बौद्धशास्त्रेऽपि सर्ववित् ॥ प्रतीक्षन्स गुहोत्पत्तिं मेलयामास सौगतान् ॥ १७ ॥ अथावतीर्णः सेनानीर्भट्टपादाभिधो भुवि ॥ सूत्राणां जैमिनेर्भावं स्फुटयन्धरणीतले ॥ १८ ॥ पुरं सुधन्वनः प्राप्तो जयन्सर्वा दिशः क्रमात् ॥ राज्ञा संपूजितो भक्त्या सूपविष्टो वरासने ॥ १९ ॥ आशीर्भिरभिनंद्याथ सुधन्वानं सदःप्रभम् ॥ सभोपकंठं वृक्षस्थपिकवाचं निशम्य सः ॥ २० ॥ तद्व्याजेन नृपं प्राह क्षोभयन्सर्वसौगतान् ॥ नीचैर्न मलिनैः संगः कार्यः काकैस्त्वया पिक ॥ २१ ॥ श्रुतिदूषितरावैस्तु लब्ध्वा जन्मापि तद्गृहे ॥ श्रुत्वा तथागता वाचं तां तु तात्पर्यगर्भिताम् ॥२२॥ चुक्रुधुर्नितरां सर्वे पादस्पृष्टा इवाहयः ॥ सौगतैर्भट्टपादेस्य विवादस्तत्र चाभवत् ॥ २३ ॥

काकगृहे पक्षे बौद्धगृहे । जन्म लब्ध्वापि त्वया श्रुतिषु कर्णेषु अन्यत्र वेदेषु दूषितः कठोरः निंद्यश्च रावः शब्दो येषां तैः मलिनैः कृष्णवर्णैः अन्यत्रापवित्रैः काकैः बौद्धैश्च सह संगो न कार्य इत्यन्वयः । उत्तरार्द्धमुत्तरान्वयि । तात्पर्यगर्भितां स्वमतविषयं तात्पर्यं गर्भे यस्याः तां वाचम् ॥ २२ ॥ तत्र सुधन्व

समायाम् ॥ २३ ॥ ते बौद्धाः । अन्यथा अप्रमाणमित्याहुः ॥ २४ ॥ अमुना भट्टपादेन ॥ २५ ॥ तत्र तयोर्मध्ये यः अन्यथा विकारवान् भवेत तस्य मतम् असत्यम् अप्रमाणं स्यात्खलु ॥ २६ ॥ २७ ॥ अद्भुतं तत् गिरिपातादिनाऽव्यंगत्वम् ॥ २८ ॥ २९ ॥ एकं प्रश्नम् ॥ ३० ॥

वेदाः प्रमाणमित्याह भट्टपादोऽथ तेन्यथा ॥ तच्छ्रुत्वा तु सुधन्वाह मद्वचः श्रूयतामिदम् ॥ २४ ॥ बौद्ध ( जिन ) मुख्येन चैकेन द्विजवर्येण चामुना ॥ पतितव्यं गिरेः शृंगात्कृत्वा स्वमतनिश्चयम् ॥ २५ ॥ अन्यथा यो भवेत्तत्रासत्यं तस्य मतं खलु ॥ नृपवाक्यं च ते श्रुत्वा तूष्णीमासुस्तदाखिलाः ॥ २६ ॥ वेदाः प्रमाणमित्युक्त्वा द्विजवर्यो गिरेः शिरः ॥ आरुह्य न्यपत द्भूमौ सर्वेषां तत्र पश्यताम् ॥ २७ ॥ न क्षतं द्विजवर्यांगे न व्यथा ग्लानिरप्यभूत् ॥ दृष्ट्वा तदद्भुतं राजा श्रद्धां वेदेषु चाकरोत ॥ ॥ २८ ॥ आत्मानं धिग्धिगित्याह वेदमार्गबहिस्थितम् ॥ दिग्भ्यः समागता विप्राः श्रुत्वा तत्र तदद्भुतम् ॥ २९ ॥ राजाथ क्रोध ताम्राक्षः सौगतान्प्राह निंदयन् ॥ पृच्छामि भवतश्चैकं ब्राह्मणानपि सादरम् ॥ ३० ॥ सम्यक्तत्प्रोच्यते यैस्तु ते मे पूज्यतमाः सदा ॥ नोच्यते यैस्तु तत्सत्यं ते मे वध्याः प्रयत्नतः ॥३१॥ इत्युक्त्वेंद्रो राजरूपी रहः कुंभे भुजंगमम् ॥ क्षिप्त्वाच्छाद्य मुखं त्वाह समायां दर्शयन्घटम् ॥ ३२ ॥ अस्मिन्किमस्ति तत्सत्यं प्रोच्यतां द्विजसौगतैः ॥ श्वोऽस्माभिरुच्यते सत्यमित्याहुर्द्विजसौगताः ॥ ॥ ३३ ॥ द्विजा आसञ्जले स्थित्वा भास्करं ध्यानतत्पराः ॥ प्रादुर्भूय रविः साक्षाद्वक्तव्यं तत्समादिशत् ॥३४॥ समाजग्मुर्द्विजाश्चाथ सौगताः कृतनिश्चयाः ॥ बुद्धाः प्रोचुर्नृपाग्रे तु सर्पोऽस्तीति घटे खलु ॥ ३५ ॥ शेषशायी हरिः साक्षादित्याहुर्द्विजसत्तमाः ॥ श्रुत्वेत्थं द्विजवाक्यं तु राजा चिंतान्वितः स्थितः ॥ ३६ ॥

सम्यक् यथार्थम् ॥ ३१ ॥ राजरूपी सुधन्वरूपी । रहः एकांते क्षिप्त्वा आह । बौद्धान्विप्रांश्चेति शेषः ॥ ३२ ॥ ३३ ॥ यद्वक्तव्यं तत् शेषशायी विष्णुरस्तीति समादिशत ॥ ३४ ॥ कृतः निश्चयो वक्तव्यनिश्चयो यैस्ते सौगताश्च समाजग्मुः ॥ ३५ ॥ राजा तु इत्थं शेषशायी विष्णु

रस्तीति द्विजवाक्यं श्रुत्वा ब्राह्मणमतखंडनं शंकमानश्चितान्वितः ॥ ३६ ॥ खेचरी आकाशवाणी । संशयिनं संशययुक्तं नृपं प्रति द्विजैः यदुक्तं तन्मृषा नास्तीति आह । तुतोष इष्टार्थसिद्ध्या संतुष्टो बभूव ॥ ३७ ॥ आच्छादने निरस्ते सति अत्र घटे भुजगस्योपरि स्थितामिति शेषः ॥ हरेः सूक्ष्मां मूर्तिं पाषाणप्रतिमां भूपतिर्ददर्श । द्विजैः सौगतैर्बौद्धैश्च पश्यद्भिः सद्भिः ॥ ३८ ॥ आ सेतोः आ हिमाचलात् सेतुहिमालयपर्यंतं सौगताः बौद्धाः हंतव्याः ॥ ३९ ॥ स्कंदानुसारिणा भट्टपादानुकूलेन राज्ञा पृथ्वी अपाखंडा पाखंडमतरहिता कृता ॥ ४० ॥ भट्टपादसिंहः बौद्धगजान्हत्वा पृथिव्यां वेदशास्त्रप्रसिद्धं कर्म प्रवर्त

अथाह खेचरी वाणी नृपं संशयिनं द्विजैः ॥ यदुक्तं तन्मृषा नेति श्रुत्वा राजा तुतोष सः ॥ ३७ ॥ आच्छादने निरस्तेऽस्मिन्ददर्श भुजगोपरि ॥ सूक्ष्ममूर्तिं हरेर्भूपः पश्यद्भिर्द्विजसौगतैः ॥ ३८ ॥ जातो निःसंशयो राजा सेवकांश्च समादिशत् ॥ हंतव्याः सौगताः सर्वे चासेतोराहिमाचलात् ॥३९॥ राजाज्ञया हता भृत्यैः सौगताः क्षितिसंस्थिताः ॥ अपाखंडा कृता पृथ्वी राज्ञा स्कंदानुसारिणा ॥४०॥ श्रीभट्टपादाख्यमहामृगेंद्रो हत्वाखिलान्सौगतवारणांस्तु ॥ प्रवर्तयामास तदा धरायां द्विजातिकर्म श्रुतिशास्त्रसिद्धम् ॥ ४१॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे श्रीशंकराचार्यकथासारे भट्टपादकृतबौद्धमतखंडनं नाम द्वादशः सर्गः ॥१२॥ श्रीदेशिकेंद्र उवाच ॥ द्विजो विद्याधिराजोऽभूत्ख्यातः केरलदेशगः ॥ गृहे तस्याभवत्पुत्रो नाम्ना शिवगुरुः स्मृतः ॥ १ ॥ उपनीतोऽथ गुरुणा वेदान्सांगान्समभ्यसत् ॥ ब्रह्मचर्यव्रते तिष्ठन्गुरुमाह कृतांजलिः ॥ २ ॥ वैराग्यं स्याद्यदा तीव्रं प्रव्रजेच्च तदैव हि ॥ ब्रह्मचर्याद्गृहाद्वापि वनाद्वेति श्रुतिर्जगौ ॥ ३ ॥

यामास । उपजातिः ॥ ४१ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां द्वादशः सर्गः ॥ १२ ॥ सर्गे त्रयोदशे तूनाशीतिपद्यैः सुरैरभूत् ॥ शंकरोऽस्य कथाष्टाब्दपर्यन्तोच्यत आदितः ॥ १३ ॥ शंकरावतारं वक्तुं तत्पितामहादिवृत्तांतमाह । द्विज इत्यादिना ॥ १ ॥ गुरुणा पित्रा सांगान् शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमित्यंगसहितान् गुरुम् अध्यापकम् ॥ २ ॥ यदा वैराग्यं स्यात्तदैव प्रव्रजेत्संन्यासं कुर्यात् ब्रह्मचर्यात् गृहा

द्वा वनाद्वा प्रव्रजेत् इति च श्रुतिर्जेगौ।तथा च श्रुतिः "यदहरेव विरजेत्तदहरेव प्रव्रजेत्। ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा। संन्यस्य श्रवणं कुर्यात्। पुत्रा लेते ह्यद्दढा यज्ञरूपा" इति ॥ अयं भावः। ब्रह्मचर्यादेवेत्येवकारेण वैराग्यसमकालसंन्यासविधानेन च विरक्तस्य तुर्याश्रमाधिकारिणो मम संन्यासाश्र यणं युक्तमिति ॥ ३ ॥ यद्यप्येवं संन्यासेऽधिकारः तथापि भवद्भिरिति शेषः। हि यस्मात् गुरोराज्ञैव मे हितम्। हितकारणमस्ति। उद्देश्यविधेयभेदा द्भिन्नलिंगत्वम् ॥ ४ ॥ ५ ॥ ६ ॥ गृहधर्मान् अतिथिपूजनादीन् ॥ ७ ॥ शंभुं वृषपर्वतस्थम्। अनन्यमानसः न अन्यः शिवाभिन्नो मानमे यस्य

तथापि प्रोच्यतां स्वामिन्संन्यासो वा गृहाश्रमः ॥ कर्तुं योग्यो मया यो हि गुरोराज्ञैव मे हितम् ॥ ४ ॥ श्रुत्वेत्थं गुरुरप्याह पूर्वं गार्हस्थ्यमाचर ॥ पुत्रानुत्पाद्य धर्मेण पित्रोः सेवां समाचर ॥ ५ ॥ इत्थं तयोः प्रवदतोः पिता तावत्समागतः ॥ दक्षिणां गुरवे दत्त्वा नीतवान्स्वसुतं गृहम् ॥ ६ ॥ पित्रा शिवगुरुश्चाथ कृतोद्वाहः सुकन्यया ॥ प्राप्तभार्यो गृहे तिष्ठन्गृहधर्मान्समाचरन् ॥ ७ ॥ ततः शिवगुरुः काले पुत्रमिच्छन्गुणाकरम् ॥ शंभुमाराधयामास ध्यानेनानन्यमानसः ॥ ८ ॥ श्रीशंभुस्तपसा तुष्टः स्वप्ने त्वागत्य तं द्विजम् ॥ प्रोवाच भविता पुत्रः सर्वज्ञस्ते न संशयः ॥ ९ ॥ इत्थं शिवगुरुर्लब्ध्वा शंकराद्वांछितं वरम् ॥ तदाऽऽगत्य गृहं विप्रान्भो जयामास भक्तितः ॥ १० ॥ ऋतुमत्यां स्वभार्यायां ततः शिवगुरुर्द्विजः ॥ शिवध्यानयुतो वीर्यं शिवतेजः सिषेच तत् ॥ ११ ॥ शैवेन तेजसा गर्भं सा दधार परं सती ॥ अथ काले शुभे केंद्रे गुरौ तुंगे ग्रहत्रये ॥ १२ ॥ शंकराख्यं जगद्वंद्यं सुषुवे पुत्रमद्भुतम् ॥ दिवि दुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ १३ ॥

सः अभिन्नोपासक इत्यर्थः। भेदबुद्ध्योपासकस्य तु "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः" इत्यनेन पशुत्वश्रवणात् ॥ ॥८॥ न संशयः। त्वया संशयो न कर्तव्य इति शेषः ॥ ९ ॥१०॥ शिवस्य तेजो यस्मिंस्तत ॥ शंकरांशयुक्तं वीर्यं सिषेच ॥ ११ ॥ शिवतेजसा सह श्रेष्ठं गर्भं दधार यतः सती पतिव्रता। अथादि परान्वयि। अथ नवमासानंतरं शुभकाले अद्भुतं शंकरतेजोयुक्तत्वादलौकिकं पुत्रं सुषुवे। सा सती सत्त्व वृत्तिः। कस्मिन् सति। गुरौ केंद्रे प्रथमचतुर्थसप्तमदशमस्थानान्यतमस्थानस्थे सति। किंभूते काले तुंगग्रहत्रये। तुंगे उच्चस्थाने ग्रहत्रयं रविभौमशन्याख्यं

यस्मिन् उच्चस्थानानि च "मेषो वृषो मृगः कन्या कर्को मीनस्तुलाधरः । सूर्यादीनां भवेदुच्चं तस्मान्नीचं तु सप्तमम्" इत्युक्तानि ॥ १२ ॥ १३ ॥ भूः दिशश्च प्रसन्नाः । अत्र मंचाः क्रोशंतीतिवत् जहल्लक्षणया । दिग्भूमिस्थजीवजातस्य प्रसन्नत्वं ज्ञेयम् । उत्तरार्धे दानानि ददावित्युत्तरेणान्वयः ॥ १४ ॥ जन्मनः तज्जन्मकालिकग्रहफलं ज्योतिर्विदः अप्राक्षीत् पृच्छतिस्मेत्यर्थः । उत्तरार्धमुत्तरान्वयि ॥ १५ ॥ ते द्विजाः इति पूर्वोक्तप्रकारेण उक्त्वा गताः । शिवगुरुश्च तान्द्विजान्प्रति अस्य पुत्रस्य जीवनमायुर्न पृष्टवान् । तेपि द्विजाः ज्ञात्वापि आयुर्ज्ञात्वापि अथो इति मंगलार्थे नो जगुः नोक्तवंतः । अशुभो

तदा जगुश्च गंधर्वाः प्रसन्ना भूर्दिशस्तथा ॥ तुष्टः शिवगुरुः कृत्वा जातकं विधिपूर्वकम् ॥ १४ ॥ ददौ दानान्यनेकानि चाप्राक्षी ज्जन्मनः फलम् ॥ भविता सर्वविद्यायं कीर्तिरस्यावनाशिनी ॥ १५ ॥ इत्युक्त्वा ते गताः सर्वे हर्षाच्छिवगुरुश्च तान् ॥ नापृच्छज्जी वनं तस्याथो ते ज्ञात्वापि नो जगुः ॥ १६ ॥ शिवप्रसादात्पुत्रस्य जगत्कल्याणकारकम् ॥ शंकरेति च नामापि पिताह्न्येऽकादशे ऽकरोत् ॥ १७ ॥ जाते श्रीशंकरे चैवं सुराः शास्त्रवतां गृहे ॥ प्रादुर्बभूवुरितरे भूमौ श्रीशंकराज्ञया ॥ १८ ॥ पद्मपादाभिधो विष्णुर्वा युर्हस्तामलाभिधः ॥ अग्निर्जातस्त्रोटकाख्यो ब्रह्मा जातः सुरेश्वरः ॥ १९ ॥ वरुणश्चित्सुखाख्योऽभूत्रंद्यानंदगिरिस्तथा ॥ मुनिशा पाच्छारदापि जाता शोणतटे गृहे ॥ २० ॥ कस्यचिद्द्विजवर्यस्य वेदवेदांगपारगा ॥ जन्मनैवाभवत्सिद्धा सर्वज्ञातीव सुंदरी ॥ २१ ॥ कुमारी साथ तं श्रुत्वा विश्वरूपं गुणाकरम् ॥ जाता तन्मानसात्यंतं विस्मृत्याशनपानकम् ॥ २२ ॥

ज्ञारणस्य महद्बर्हितत्वादिति भावः ॥ १६ ॥ "एकादशेहनि पिता नाम कुर्यात" इति सूत्रे एकादशादिनस्य मुख्यत्वादेकादशेह्नि पिता शिवगुरुः शिवप्रसादरूपत्वेन जगत्सुखकरत्वेन च हेतुना पुत्रस्य शंकरेति नामाकरोत ॥ १७ ॥ इतरे सुराःविष्ण्वाद्याः देवाः शास्त्रवतां शास्त्रिणां गृहे प्रादुर्बभूवुः ॥ ॥ १८ ॥ सुरेश्वरो मंडनमिश्राख्यः । मुनेः विश्वामित्रस्य शापात् ॥ १९ ॥ शारदापि कस्यचिद्द्विजवर्यस्य विष्णुमित्राख्यस्य गृहे जातेति संबंधः । अत्रेयं कथा । कदाचिद्विश्वामित्रो ब्रह्मणः सदसि वेदं पठन् स्वरे स्खलितस्तदा सरस्वती जहास । अथर्षिस्तां भूमौ जनिष्यसीति शशापेति ॥ २० ॥ ॥ २१ ॥ तं गुणाकरं गुणसमुद्रं विश्वरूपं मंडनम् । अशनपानकं अशनं पानं च कुत्सितं विस्मृत्य तन्मानसा जाता । तं वरीतुकामाऽऽसीदित्यर्थः ॥ २२ ॥

॥ २३ ॥ २४ ॥ मनस्स्थितं मनोगतं तदेवाह । शोणाख्यनदस्य तीरे गुणान्वितेत्यनेन ॥ उत्तमपत्नीलाभेन प्रपंचे अध्ययनादिसाफल्यं स्यादिति भावः॥ ॥ २५ ॥ सा सरस्वत्येव ॥ २६ ॥ तत्ताताय सरस्वतीपित्रे विष्णुमित्राय विश्वरूपपितुः हिममित्रस्य मत्पुत्राय कन्यां देहीति मतम् उदितमुक्तम ॥२७॥ बाढं दास्यामीति विश्वरूपमित्याद्युत्तरान्वयि ॥ २८ ॥ वराय पारिबर्हं वस्त्रभूषादि । विप्रेभ्योऽन्नं धनं च ददौ ॥ २९ ॥ मातापितृसुहज्जनैः सह स्वपुरीं

तथैव विश्वरूपोपि सरस्वत्या गुणान्बहून् ॥ श्रुत्वा तस्यां मनश्चक्रे विसृज्याध्ययनादिकम् ॥ २३ ॥ भ्रांतचित्तं सुतं दृष्ट्वा पिता प्रोवाच तं तदा ॥ भ्रांतस्त्वं दृश्यसे पुत्र त्यक्तमध्ययनं त्वया ॥ २४ ॥ पृष्टः पित्रेति तं प्राह विश्वरूपो मनःस्थितम् ॥ शोणतीरे श्रुता बाला रूपशीलगुणान्विता ॥ २५ ॥ मग्नं तस्यां तु मच्चित्तं सैव भार्यास्तु मे गुरो ॥ पुत्रवाक्यं पिता श्रुत्वा प्रेषया मास स द्विजौ ॥ २६ ॥ शोणतीरे विप्रगेहं यत्र बाला सरस्वती ॥ तत्तातायोदितं ताभ्यां विश्वरूपपितुर्मतम् ॥ २७ ॥ सोऽपि कन्यामतं ज्ञात्वा बाढमित्याह तौ द्विजौ ॥ विश्वरूपं समानीय पितृमातृसुहृद्युतम् ॥ २८ ॥ विवाहमकरोत्तस्याः सरस्वत्याः पिता तदा ॥ पारिबर्हं वरायापि विप्रेभ्योऽन्नं धनं ददौ ॥ २९ ॥ कृतोद्वाहो विश्वरूपो गृहीत्वा तां सरस्वतीम् ॥ जगाम स्वपुरीं तुष्टो मातापितृसुहृज्जनैः ॥ ३० ॥ स विश्वरूपो विधिरेव साक्षात्संखण्ड्य सर्वाञ्जिनधर्ममार्गान् ॥ श्रुतेः स्मृतेर्मण्डनमाचकार लेभे ततो मंडननाम लोके ॥ ३१ ॥ स शोभयामास पुरीं निजां तां स्मार्ताग्निहोत्रादिमखैरनेकैः ॥ अनेकदेशागतशिष्यवर्गैः सच्छास्त्रवेदाध्ययनैकनिष्ठैः ॥ ३२ ॥

जगाम ॥ ३० ॥ साक्षाद्विधिर्ब्रह्मा सर्वान् दिगम्बरश्वेताम्बरादीन् वैभाषिकसौत्रांतिकयोगाचारमाध्यमिकादींश्च जिनधर्माणां जिनादिधर्माणां मार्गान् पूर्वं भट्टपादेन खंडितानपि क्वचित्क्वचिदवशिष्टान् संखण्डच सम्यक् खण्डयित्वा श्रुतेः श्रुतिप्रतिपादितधर्मस्य स्मृतेः स्मृतिप्रतिपादितस्य च धर्मस्य मंडनं स्थापनं आ साकल्येन चकार । अत एव लोके मण्डन इति स्वगुणसंपाद्यं नाम लेभे ॥ ३१॥ स मंडनः स्मार्तेत्यादिभिस्तृतीयांतैः स्वपुरीं मा[illegible]तां शोभयामास॥

उपजातिवृत्तम् ॥ ३२ ॥ एवं मंडनसरस्वत्योः पराजयार्थं संक्षेपेण कथामुपवर्ण्य शंकराचार्यस्य चरित्रं क्रमेणाह शंकर इत्यादिभिः [illegible] भाषां लब्ध्वा ज्ञात्वा द्वितीयेऽब्दे द्वितीयवर्षे वर्णान् मातृकावर्णान् ज्ञात्वा पुराणश्रवणादिनानेतिहासज्ञानवान्बभूव॥ ३३ ॥ परदेवता जगदम्बिका॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ मया किं प्राश्यतां यतोत्र किमपि नावशिष्यत इति भावः ॥ ३८ ॥ बालश्चासौ शंकरश्च तं प्रति स्तन्यं दुग्धमपाययत् ॥ ३९ ॥

श्रीदेशिकेंद्र उवाच ॥ शंकरोऽथ पितुर्गेहे प्रथमेऽब्दे स्वदेशागम् ॥ भाषां लब्ध्वा परे वर्णाः पुराणश्रवणं तथा ॥ ३३ ॥ कृतचौलस्तृतीयेऽसौ स्वपित्रा देवतालयम् ॥ नीतः पूजापरेणाथ पूजिता परदेवता ॥ ३४ ॥ समर्प्य दुग्धनैवेद्यं दत्तं तच्छंकराय वै ॥ पीतं तेनापि तद्दुग्धं नित्यमित्थं पिबत्यसौ ॥ ३५ ॥ अथैकदा शंकरस्य पिता ग्रामांतरं गतः ॥ शंकरो मातुरादेशात्स्वयं देवालयं गतः ॥ ३६ ॥ संपूज्य देवतां पश्चात्पयःपात्रं निजे करे ॥ धृत्वा पिबेति तां प्राह शंकरो बालभावतः ॥ ३७ ॥ भक्त्या पीतं पयः सर्वं देव्या पाषाणरूपया ॥ मया किं प्राश्यतामद्येत्यरुदच्छङ्करो भृशम् ॥ ३८ ॥ आविर्भूयाथ सा शक्तिः स्वोत्संगे बालशंकरम् ॥ संस्थाप्यापाययत्स्तन्यं दुर्लभं देवतागणैः ॥ ३९ ॥ तत्स्तन्यं शंकरः पीत्वा प्राप्तसर्वज्ञभावनः ॥ सौंदर्यलहरीनाम्न्या स्तुत्या तुष्टाव तां पराम् ॥ ४० ॥ वर्षे तस्मिन्मृतस्तातो दैवाच्छ्रीशंकरस्य सः ॥ चतुर्थे वत्सरे सोभूच्छंकरः सर्वशक्तिमान् ॥ ४१ ॥ पंचमे चोपनीतोऽसौ गुरुणा सर्वविद्गुरुः ॥ सांगान्वेदान्समभ्यस्य वेदार्थं स्वयमाप्तवान् ॥ ४२ ॥ वेदे ब्रह्माऽस्यांगे गर्गो जीवस्तु सर्वतात्पर्ये ॥ कर्मार्थेऽभूज्जैमिनिरेवाद्वैते स शंकरो व्यासः ॥ ४३ ॥

सौंदर्यलहरीनाम्ना सौन्दर्यलहरीति प्रसिद्धया स्तुत्या ॥ ४० ॥ तस्मिन्वर्षे तृतीये वर्षे तातः शिवगुरुः मृतः । सर्वशक्तिमान् अभूदित्यर्थः ॥ ४१ ॥ गुरुणा केनचिद्विद्वद्वरेण तत्कुलोपाध्यायेन सर्वविद्गुरुः शंकरः उपनीतः । आप्तवान् ज्ञातवान् ॥ ४२ ॥ वेदे ब्रह्मा । अस्य वेदस्यांगे षडङ्गे गर्ग इत्युपलक्षणं पाणिन्यादेः । सर्वतात्पर्ये वेदार्थज्ञाने जीवो बृहस्पतिः । कर्मार्थे कर्ममीमांसायां जैमिनिः । अद्वैते वेदांते व्यास एवाभवत् ॥ गीतिश्छन्दः ॥ ४३ ॥

निःस्वस्य दरिद्रस्य विप्रस्य गृहम् । विप्रांगना विप्रभार्या नेति भिक्षा नास्तीत्यब्रवीत् ॥४४॥ इत्थमित्युत्तरान्वयि॥४५॥ अस्य शंकरस्य अलौकिकी सर्वो
त्तमा ॥ ४६ ॥ समावर्त्य गुरोरध्ययनं समाप्य ॥ ४७ ॥ राजा तद्देशाधिपः । तमिति पदमुभयान्वयि शंकरं प्रति दर्शनार्थं सभां नेतुं मंत्रिणं प्रेष

एकदा स बटुर्गत्वा निःस्वविप्रगृहं शिवः ॥ भिक्षां देहीति चाहाद्य नेति विप्रांगनाब्रवीत् ॥ ४४ ॥ निःस्वास्तु वयमत्यंतं भिक्षां
दातुं न च क्षमाः ॥ इत्थं दीनवचः श्रुत्वा श्रियं स्तुत्वाथ शंकरः ॥ ४५ ॥ अकरोद्ब्राह्मणगृहं धनधान्यसमृद्धिमत् ॥ तदाप्रभृति
लोकेऽस्य जाता कीर्तिरलौकिकी ॥४६॥ षष्टेब्देभूच्छास्त्रवेत्ता सप्तमेथ गुरोर्गृहात् ॥ समावर्त्याकरोत्सेवां स्वमातुः सान्निधौ वसन् ॥
॥ ४७ ॥ राजा तस्य गुणाञ्छ्रुत्वा प्रेषयामास मंत्रिणम् ॥ दर्शनार्थं सभां नेतुं मंत्र्यागत्य तमब्रवीत् ॥ ४८ ॥ राजा तव
गुणाञ्छ्रुत्वा द्रष्टुं प्रार्थयतेऽधुना ॥ शंकरस्तद्वचः श्रुत्वा प्रहसन्निदमब्रवीत् ॥ ४९ ॥ वेदाधीतिं तथा शास्त्रं त्यक्त्वा वेदांतचिंतनम् ॥
संगं कश्चाभिवांछेत्तु नितरां विषयेच्छुभिः ॥ ५० ॥ शंकरस्य वचः श्रुत्वा मंत्री तस्मान्नृपं ययौ ॥ राज्ञे सर्वं समाचख्यौ यदुक्तं
शंकरेण तत् ॥ ५१ ॥ मंत्रिणो वचनं श्रुत्वा स्वयं राजा समागतः ॥ स्वर्णायुतं शंकराग्रे निधायाथ ननाम तम् ॥५२॥ नाटकत्रय
माहाथ स्वकृतं शंकराग्रतः ॥ श्रुत्वा तुष्टः शंकरस्तं प्राहेत्थं वद वांछितम् ॥ ५३ ॥ पुत्रं याचितवान्राजा तथेत्याहाथ शंकरः ॥ नत्वा
श्रीशंकरं राजा तुष्टः स्वनगरं ययौ ॥ ५४ ॥ सप्तर्षयोऽथ चान्येऽपि द्रष्टुं शङ्करमागताः ॥ दृष्ट्वा ताञ्छंकरो नत्वा मंत्रयुक्तमपूजयत ॥
॥ ५५ ॥ प्रार्थयित्वा मुनीनाह जननी शंकरस्य सा ॥ आयुष्यं मम पुत्रस्य वक्तव्यं कियदस्ति तत् ॥ ५६ ॥

यामास ॥ ४८ ॥ ४९ ॥ वेदाधीतिं वेदाध्ययनम् । तथा शास्त्रं शास्त्राध्ययनम् ॥ ५०॥ अध्ययनं त्यक्त्वा नायास्यामीति यदुक्तं तत्कथितवान् ॥
॥ ५१ ॥ स्वर्णानां सुवर्णमुद्राणाम् अयुतम् ॥ ५२ ॥ पूर्वार्धे राजेत्यनुवृत्तिः ॥ ५३ ॥ ५४ ॥ मंत्रयुक्तं समंत्रकं यथा स्यात्तथा ॥५५॥ कियत् ।

कतिवर्षपरिमितम् ॥ ५६ ॥ कुंभजः अगस्त्यः इति श्रुत्वा ॥ ५७ ॥ ५८ ॥ ५९ ॥ अन्यत् ब्रह्मव्यतिरिक्तं सर्वं मिथ्येति । तुर्याश्रमं संन्यासम् ॥ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ वाक्यैः पुराणवाक्यैः ॥ ६४ ॥ तेन मया तद्विघातकं ज्ञानमार्गप्रवृत्तिविघातकम् ॥ ६५ ॥ स्वमायया कापट्येन

श्रुत्वाह कुंभजोऽष्टाब्दमृष्याशीर्भिस्तथाष्टकम् ॥ एवं षोडश तस्येति ततः सप्तर्षयो गताः ॥५७॥ माताभूद्दुःखबहुला श्रुत्वा पुत्रायुषोऽल्पताम् ॥ मातरं दुःखितां दृष्ट्वा बोधयामास शंकरः ॥ ५८ ॥ मा शोकं कुरु मातस्त्वं संसारे क्षणभंगुरे ॥ सर्वं स्वप्नसमं दृश्यं का माता कोस्ति वा पिता ॥ ५९ ॥ सत्यं ब्रह्मैव मिथ्यान्यत्तस्माद्ब्रह्मज्ञताप्तये ॥ तुर्याश्रमं करोम्यद्य त्वमाज्ञां दातुमर्हसि ॥ ६० ॥ इति पुत्रवचः श्रुत्वा माताऽऽहाऽतीव दुःखिता ॥ त्यक्त्वा मां दुःखितां गेहे कथं संन्यासमिच्छसि ॥ ६१ ॥ भूत्वादौ गृहवान्यज्ञैर्यज पश्चाद्यतिर्भव ॥ त्यक्तुं नार्हसि सर्वज्ञ विधवां मां स्वमातरम् ॥ ६२ ॥ ममौर्ध्वदेहिकं कर्ता भविता को गते त्वयि ॥ जननीं दुःखितामित्थं बोधयामास शंकरः ॥ ६३ ॥ व्यासोक्तैर्बहुभिर्वाक्यैर्ज्ञानवैराग्यदायकैः ॥ समाप्तेऽथाष्टमे वर्षे चिंतयामास शंकरः ॥ ६४ ॥ ज्ञानमार्गप्रवृत्त्यर्थमवतीर्णोऽस्मि भूतले ॥ योऽहं तेन कथं कार्यं गार्हस्थ्यं तद्विघातकम् ॥६५॥ गुरोरप्यधिका माता सा यथाऽऽज्ञां हि दास्यति ॥ संन्यासार्थं तथैवाहं यतिष्ये वै स्वमायया ॥ ६६ ॥ इत्थं संचिंत्य मात्राथ स्नानार्थं सरितं ययौ ॥ प्रविष्टो जलमध्येऽसौ रुरोदांबां विमोहयन् ॥ ६७ ॥ हा मातर्मत्पदे ग्राहो धृत्वा मध्यं विकर्षति ॥ श्रुत्वा तद्वचनं माता रुरोदाहातिदुःखिता ॥६८॥ भर्त्राऽऽमृतेः पालिताहं ततो मत्पालकः सुतः ॥ प्राप्तं तस्यापि चेत्कष्टं किं दैवान्न मृता ह्यहम् ॥ ६९ ॥ मातुर्वचः समाकर्ण्य पुनस्तां शंकरोऽब्रवीत् ॥ आज्ञां मे देहि संन्यासे ततो मे जीवनं भवेत् ॥ ७० ॥ श्रुत्वेत्थं साह संन्यासं कृत्वा जीवाद्य पुत्रक ॥ इत्थं निशम्य बुद्ध्यासौ संन्यस्य बहिरागतः ॥ ७१ ॥

॥ ६६ ॥ ६७ ॥ ६८ ॥ आ मृतेः मरणपर्यंतम् । ततो भर्तृमरणानंतरम् ॥६९॥७०॥ बुद्ध्या मनसा संन्यस्येति । तद्विधेर्ज्ञातत्वादित्यर्थः ॥७१॥

॥ ७२ ॥ सन्न्यस्तमिति कुत्रापि मा ब्रूहि । मय्येव सुखं निवसेति भावः । मत्पितुर्धनहारैः दायादैः ॥ ७३ ॥ ७४ ॥ स्मृत्या स्मरणमात्रेण ॥ ॥ ७५ ॥ संन्यासिना कृतसंन्यासेन भवत्सु युष्मत्समीपे क्षिप्ता स्थापिता ॥ ७६ ॥ भवद्भिरिति पूर्वान्वयि । ते दायादाः पुनः पुनरिति जननीविश्वासार्थम् । उत्तरार्धमुत्तरान्वयि ॥ ७७ ॥ आत्मतामात्मभावं ज्ञानमिति यावत् । तस्यै मात्रे समादिशदित्यन्वयः । साऽपि ताम् आत्मताम् अवाप्य संतुष्टाऽभवत् । ततः मातृस्थानाद्दूरम् इष्टदेशम् ॥ ७८ ॥ सर्वज्ञस्यापि शंकरस्य संप्रदायप्रवृत्त्यर्थं गुरूपसदनमाह आत्मानमिति । अखिलगं सर्वगतम् आत्मा

तामिदं प्राह संन्यस्तं मनसैव यदा मया ॥ तदा त्यक्त्वागतो ग्राहो वदाऽत्राहं करोमि किम् ॥ ७२ ॥ श्रुत्वा माताऽह मा ब्रूहि स तां चाहाथ सांत्वयन् ॥ मत्पितुर्धनहारैस्त्वं पाल्या बंधुभिरादरात् ॥ ७३ ॥ पुनर्माताह पंचत्वं गताया मम का गतिः ॥ स चाहांबाऽऽगमिष्येहं यदा त्वं तु मरिष्यसि ॥ ७४ ॥ दुःखे सुखेऽथवा मातः स्मृत्याऽयास्यामि तेंतिकम् ॥ समीपतोऽधिकां दूरात्तत्र सेवां करोम्यहम् ॥७५॥ अथ बंधून्स चाहेत्थं मया संन्यासिना त्वियम् ॥ भवद्वशा मज्जननी पाल्यैवान्नांशुकादिभिः ॥७६॥ भवद्भिरथ तेऽप्यूचुर्बाढमेवं पुनः पुनः ॥ जननीहितमान्विच्छञ्छंकराचार्य आत्मताम् ॥ ७७ ॥ समादिशत्तदा तस्यै तुष्टाऽभूत्साप्यवाप्य ताम् ॥ प्राप्याज्ञां मातृतो दूरं गंतुकामस्ततो ययौ ॥७८॥ आत्मानमेवाखिलगं प्रपश्यन्नात्मास्थितं सर्वमिदं तथैव ॥ मत्संप्रदायानुगतः म पृच्छन्गोविंदपादं गुरुमाप योगी ॥७९॥ इति श्रीगुरुपरम्पराचरित्रे पूर्वार्द्धे श्रीमच्छंकराचार्यकथासारो नाम त्रयोदशः सर्गः ॥ १३ ॥

नम् अन्वयेन तथा सर्वमिदं जगत् आत्मनि व्यतिरेकेण । अपिश्चार्थे । सम्यक् पश्यन्सन्नपि योगी स शंकरः संप्रदायस्य गुरुपारंपर्यस्य मयैवं कृते सति मच्छिष्या अप्येवं कुर्युरित्येव प्रकारकस्य गुरूपसदनसंप्रदायस्येत्यर्थः । पृच्छन् जनानिति शेषः । गोविंदपादं गुरुम् आप प्राप्तवान् । इंद्रवज्रावृत्तम् ॥ ॥ ७९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां टीकायां त्रयोदशः सर्गः ॥ १३ ॥

चतुर्दशेऽथेषुषड्भिः पद्यैर्लब्ध्वा गुरुं ततः॥काशीं गतः शिवाज्ञप्तो भाष्यं चक्र इतीर्यते॥१४॥गोविंदपूज्यपादमिति पूज्यपादशब्दो यतित्वद्योतकः ॥१॥ ॥२॥अहं भूः पृथ्वी नास्मि नकारबाहुल्येन भिन्नानि वाक्यानि॥३॥ननु तर्हि कोऽसीत्यत आह। सर्वमिति । नेति नेति श्रुत्या सर्वनिषेधे सति यदवशिष्टं तदेवाहं परः शिवोऽस्मि । " नेह नानास्ति किंचन " इत्यादिश्रुत्या सर्वकार्यजातनिषेधे सति । देहादीनां तत्कारणानां पृथिव्यादीनां बाधितत्वान्निरधिष्ठानभ्रमासंभवाच्च सर्वाधिष्ठानभूतः प्रत्यगभिन्नः सर्वसाक्षी परः शिवोऽहमस्मीति भावः । यथोक्तं विष्णुभागवते " स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न

श्रीदेशिकेन्द्र उवाच॥गोविंदपूज्यपादं तं दृष्ट्वा दूराद्गुहास्थितम् ॥ ननाम दंडवद्भूमावकरोत्त्रिः प्रदक्षिणम् ॥ १॥ वर्णयन्गुरुमाहात्म्यं तुष्टाव मधुरैः स्तवैः॥ पुरस्थं शंकरं प्राह त्वं कोऽसीति स योगिराट् ॥ २ ॥ एवं पृष्टो गुरुं प्राह शंकरोऽहं न भूर्जलम् ॥ न तेजो न मरुद्व्योम नेन्द्रियाणि न धीर्मनः ॥३॥ सर्वं निषिध्य यच्छेषं तदेवाहं परः शिवः ॥ निशम्येत्थं गुरुः प्राह जाने त्वां शंकरं स्वयम् ॥ ॥ ४ ॥ शंकराचार्यतां प्राप्तं ज्ञानमार्गप्रवर्त्तकम् ॥ संपूज्याथ गुरोः पादौ शंकरः शिष्यतां गतः ॥ ५ ॥ संप्रदायप्रवृत्त्यर्थमग्रहीच्छङ्करस्ततः ॥ तत्त्वमस्यादिवाक्यानि संप्रदायक्रमात्तदा ॥६॥ ब्रह्माद्वैतं गुरुस्तत्त्वं नित्यं शुद्धं समादिशत् ॥ व्यासेनोक्तं स्वपुत्राय संप्रदायक्रमेण तु ॥ ७ ॥ ततोऽग्रहीद्गौडपादस्ततो गोविंदनामकः ॥ तस्माच्छ्रीशंकराचार्यस्त्वग्रहीन्मन्त्रपूर्णताम् ॥ ८ ॥ ब्रह्मैवाहमिति ध्यायन्सर्वत्राभूत्समाशयः ॥ वार्षिकांश्चतुरो मासान्गुरोः सेवामथाकरोत् ॥ ९ ॥

षंढो न पुमान्न जंतुः ॥ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः " इति ॥४॥ साधुलोकानां शं सुखं करोतीति तादृशश्चासावाचार्यश्च तत्ता मित्यर्थः ॥ ५ ॥ ननु सर्वज्ञस्य शंकरस्य किमर्थं शिष्यभावस्वीकरणमित्यत आह । संप्रदायेति । गुरुं विना ब्रह्मविद्या ज्ञानप्राप्तिर्न भवतीति ज्ञापनार्थ मित्यर्थः ॥ संप्रदायक्रमात् संन्यासविहितश्रवणादिसंप्रदायेन ॥६॥ संप्रदायक्रमेणेत्युत्तरान्वयि ॥ ७ ॥ ततः शुकात्संप्रदायक्रमेण नृसिंहब्रह्मेशभास्करभट्ट माधवजिष्णुदेवक्रमेण शुद्धं तत्त्वं गौडपादोऽग्रहीदिति योज्यम् । मंत्रपूर्णतां पूर्णाभिषेकदीक्षां तस्मात् गोविंदगुरोः सकाशात् जगृहे स्वीकृतवान् ॥ ८ ॥ सर्वत्र समः आशयोऽभिप्रायो यस्य सर्वत्र ब्रह्मदृष्टिः ॥ ९ ॥

उत्तरार्धमुत्तरान्वयि । ध्यानमग्ने ध्यानस्थे सति ॥ १० ॥ ध्याने विघ्नकरं विक्षेपकरं तदा नद्यास्तोयं स्वकमंडलौ आमंत्र्य मंत्रेणाकृष्य योगबलेन स्तंभयामासेति संबंधः ॥ ११ ॥ कुंभजोऽगस्त्यः तत् स्तंभनम् ॥ १२ ॥ व्यासवाक्यं वक्ष्यमाणम् । हे वत्स कदाचिदद्यामस्तु हिमालये बदरिकाश्रमे । अद्वैतं ब्रह्मसिद्धौघे सिद्धसमुदाये कथयामासेति संबंधः ॥ १३ ॥ व्याख्यानांते ब्रह्मप्रतिपादनसत्रान्तौ ॥ १४ ॥ ब्रह्मप्रतिपादकानि सूत्राणि च

अवसन्नर्मदातीरे ध्यानयोगपरो यतिः ॥ कदाचिच्छंकराचार्यो ध्यानमग्ने गुरौ सति ॥ १० ॥ अशृणोन्नर्मदाशब्दं ध्यानविघ्नकरं परम् ॥ तदामंत्र्य नदीतोयं शंकरः स्वे कमंडलौ ॥ ११ ॥ स्तंभयामास योगेन कुंभजः सागरं यथा ॥ समाधिविरमे ज्ञात्वा गोविंदाख्यो गुरुस्तु तत् ॥ १२ ॥ शंकरं प्राह हर्षेण व्यासवाक्यमनुस्मरन् ॥ गोविंदयोग्युवाच ॥ व्यासो वत्स कदाचित्तु ब्रह्माद्वैतं हिमालये ॥ १३ ॥ कथयामास सिद्धौघे गतोहं तत्र दैवतः ॥ व्याख्यानांते मया व्यासः पृष्ट इत्थं दयानिधिः ॥ १४ ॥ त्वया विभागिता वेदा भारतं च कृतं विभो ॥ कृतानि ब्रह्मसूत्राणि गूढार्थग्रथितानि च ॥ १५ ॥ तत्तात्पर्यमविज्ञाय मृषा जल्पंति पंडिताः ॥ किं तेषां न कृतं भाष्यं तात्पर्यार्थप्रकाशकम् ॥ १६ ॥ श्रुत्वेत्थं मद्वचो व्यासो मामाहेत्थं भविष्यवित् ॥ कश्चिद्गोविंद शिष्यस्ते नर्मदाया जलं महत् ॥ १७ ॥ स्तंभयिष्यति यः कुंभे साक्षाच्छंकर एव सः ॥ मत्सूत्रभाष्यकर्ता च भविष्यति न संशयः ॥ १८ ॥ मामित्युक्त्वा गतो व्यासः कैलासं त्वमतो यते ॥ जगदुद्धारणार्थाय गच्छ वाराणसीं पुरीम् ॥ १९ ॥

कृतानि । सूत्रलक्षणं च " अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ॥ अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः " इति ॥ १५ ॥ तेषां सूत्राणां तात्पर्यमज्ञात्वा मृषा उपासनादि द्वैतपरं जल्पंति । तेषां सूत्राणां तात्पर्यार्थस्य ब्रह्मपरार्थस्य प्रकाशकं भाष्यं किं न कृतम् । भाष्यलक्षणं तु " सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः ॥ स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुः " इति ॥ १६ ॥ व्यासवाक्यं हे गोविंदेति परान्वयि ॥ १७ ॥ १८ ॥ यते इति शंकरसं

बोधनम् ॥ १९ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ २० ॥ तां काशीम् । यत् काश्यष्टकं शंकरविजयप्रसिद्धं श्रुत्वा शिवतां शिवरूपत्वम् । इयात् प्राप्नुयात् ॥२१॥ श्लोकाष्टकैः तत्कृतगङ्गाष्टकनाम्ना लोके प्रसिद्धैः । एवमग्रेऽपि विश्वेश्वराष्टकान्नपूर्णाष्टकनामभ्यां प्रसिद्धैरित्यर्थो बोध्यः ॥ ॥ २२ ॥ २३ ॥ पराम् आदिशक्त्यभिन्नाम् ॥ २४ ॥ संप्रदायप्रवर्तकः आगमोक्तपूजाक्रमेणोपासनाप्रवर्तकः । अत्र भूमौ मोक्षदं क्षेत्रे तस्थौ स्थितः । मोक्षप्रदत्वं च यत्र हि जंतुषु प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृतीभूत्वा मोक्षीभवतीति श्रुतिप्रसिद्धम् ॥ २५ ॥ किं

तत्र विश्वेश्वरः साक्षाद्दर्शनं ते प्रदास्यति ॥ संप्राप्यैवं गुरोराज्ञां नत्वा तं शंकरो यतिः ॥ २० ॥ ययौ वाराणसीं तां च प्राप्य नत्वा शिवप्रियाम् ॥ श्लोकाष्टकेन तुष्टाव यच्छ्रुत्वा शिवतामियात् ॥ २१ ॥ प्राप्य भागीरथीं गंगां स्तुत्वा श्लोकैस्तथाष्टभिः ॥ स्नात्वा तस्यां ययौ पश्चात्परं विश्वेश्वरालयम् ॥ २२ ॥ संपूज्य परया भक्त्या विश्वेशं स्वात्मरूपिणम् ॥ श्लोकाष्टकेन तुष्टाव स्तोत्रेणापि स शंकरः ॥ २३ ॥ अन्नपूर्णालयं गत्वा तां परां देवतामपि ॥ स्तोत्रेण वरया भक्त्या स्तुत्वा श्लोकाष्टकेन च ॥ २४ ॥ पूजयामास विधिवत्संप्रदायप्रवर्तकः ॥ विश्वेशादीन्प्रपूज्येत्थं तस्थौ क्षेत्रेऽत्र मोक्षदे ॥ २५ ॥ निमज्ज्य गंगांभसि विश्वनाथं संपूज्य नित्यं परिवार युक्तम् ॥ सदात्मतत्त्वं परिचिंतयन्स श्रीशंकरः शंभुपुरे स्थितोऽभूत् ॥ २६ ॥ श्रीदेशिकेंद्र उवाच ॥ तत्रस्थे शंकरे कश्चिद्द्विजो वेद विदां वरः ॥ एकांते शंकरं नत्वा प्रांजलिस्तत्पुरः स्थितः ॥ २७ ॥ तमाह शंकरः कोऽसि स प्रत्याह च तं यतिम् ॥ विप्रोऽहं चोल देशस्थस्ततः संसारतापतः ॥२८॥ शांतिमिच्छन्भ्रमन्देशान्प्राप्तो दैवात्पुरीमिमाम्॥रक्ष मां घोरसंसारात्पुण्यालब्धोऽसि मे गुरो ॥२९॥

कुर्वन्स्थित इत्यत आह निमज्ज्येति । नित्यमिति सर्वत्र योज्यम् । नित्यं गंगोदके स्नात्वा परिवारयुक्तं नित्ययात्रोक्तदेवतापरिवारसहितं विश्वनाथं संपूज्य सदा आत्मतत्त्वं परिचिंतयन् सन् शंभुपुरे स्थितोऽभूत् । परिवारदेवताश्च काशीखंडे उक्ताः । यथा " विश्वेशं माधवं ढुण्ढिं दंडपाणिं च भैरवम् ॥ वंदे काशीं गुहां गंगां भवानीं मणिकर्णिकाम् " इति ॥ २६ ॥ तत्रस्थे काशीस्थिते सति ॥ २७ ॥ २८ ॥ शांतिं निरतिशयसुखरूपां मे मम पुण्येन

प्राप्तोऽसि ॥ २९ ॥ तस्य द्विजस्य ॥ ३० ॥ साधनसंपन्नम् । साधनानि तु—नित्यानित्यवस्तुविवेकः इहामुत्र फलभोगविरागः । शमादिषट्कसंपत् । मुमुक्षुत्वं चेत्युक्तानि । तैर्युक्तम् ॥ ३१ ॥ संप्रदायप्रवृत्त्यर्थं कलौ आगमोक्तपूजाक्रमप्रवृत्त्यर्थम् ॥ ३२ ॥ ३३ ॥ चांडालरूपेण विश्वेश्वरदर्शनमाह एकदेति । एकः एकाकी श्वभिः श्वानैः ॥ ३४ ॥ सिद्धांतवाक्यतः श्रुतिसिद्धांतवाक्येन प्रत्याह ॥ ३५ ॥ श्रुतिः अद्वैतं ब्रह्म प्राह । तत्र ब्रह्मणि । भेदकल्पना का न काचिदित्यर्थः । मार्गं देहीति यद्ब्रूषे तत् देहं वा देहिनं जीवं वा ब्रूषे इति प्रश्नद्वयम् ॥ ३६ ॥ तत्र देहादीनां जीवस्य च चिदात्मनि अध्यस्तत्वमंगीकृत्य क्रमेण निराकरोति न भूषेति । भूषा अलंकारः स्वर्णभिन्नो नास्ति । कार्यमात्रस्य कारणानन्यत्वात् । एतेन स्वपर

इत्यादिप्रार्थनां तस्य श्रुत्वा श्रीशंकरो गुरुः ॥ संन्यासं दत्तवांस्तस्मै प्रेषोच्चारणपूर्वकम् ॥ ३० ॥ ज्ञात्वा साधनसंपन्नं तत्त्वमस्यादिवाक्यतः ॥ ब्रह्माद्वैतं परं तत्त्वं बोधयामास तं गुरुः ॥ ३१ ॥ मंत्रजातं रहस्यं च योगमुद्राक्रमं तथा ॥ संप्रदायप्रवृत्त्यर्थं तस्मै सर्वं समादिशत् ॥ ३२ ॥ आद्यः सनंदः शिष्योऽसौ जातोऽन्येऽथ मुमुक्षवः ॥ शंकरं शरणं प्राप्ताः प्रापितास्तेऽपि शिष्यताम् ॥ ३३ ॥ एकदैकः शंकरस्तु स्नातुं गंगां गतस्तदा ॥ श्वभिश्चतुर्भिः संयुक्तं चंडालं पथि दृष्टवान् ॥ ३४ ॥ तमाह शंकरो मार्गं देहि मां मा स्पृशेति च ॥ श्रुत्वांत्यजस्तं प्रत्याह हसन्सिद्धांतवाक्यतः ॥ ३५ ॥ ब्रह्माद्वैतं श्रुतिः प्राह तत्र का भेदकल्पना ॥ देहि मार्गमिति ब्रूषे देहं वा देहिनं वद ॥ ३६ ॥ न भूषा स्वर्णभिन्ना च क्व भेदः साक्षिणि स्वयम् ॥ अहं द्विजोऽत्यजोऽयं च कस्ते मिथ्याग्रहो यते ॥ ३७ ॥ अविमुक्तमिदं क्षेत्रं यत्र देवो महेश्वरः ॥ तत्रापि भेदबुद्धिश्चेद्यते चित्रमिदं महत् ॥ ३८ ॥

देहोऽपि नात्मभिन्नः । अध्यस्तस्य अधिष्ठानानन्यत्वादिति सूचितम् । तथा च जडचेतनयोरभेदात् चेतनं प्रति जडदेहेन देहं प्रति आत्मना वा भाषणं न संभवति । स्वयं स्वप्रकाशे साक्षिणि भेदः क्व । न क्वापि भिन्नत्वम् । एतेन आत्मना आत्मानं प्रति भाषणं न संभवति त्वदीयमदीयात्मनोरेकत्वात् । चकारेण त्वदीयान्नमयादिना मदीयान्नमयादीन् प्रति भाषणं न संभवति । भेदस्य चैतन्यस्य स्वप्रकाशस्य चाभावात् । तस्मान्मार्गं देहीति त्वत्प्रश्नो न घटत इति भावः । ननु लोकसंग्रहार्थमुच्यत इत्यत आह । अहमिति ॥ ३७ ॥ अस्मिन् क्षेत्रे भेददृष्टिर्न युक्तेत्याह—अविमुक्तमिति । एतत् क्षेत्रम् अविमुक्तमं

ङ्गकमस्ति यत्र क्षेत्रे महेश्वराख्यो देवो ग्रामदेवतास्ति।तत्र क्षेत्रे भेदबुद्धिः भेददर्शित्वं चेत् इदं महच्चित्रं स्यात् । अस्मिन्महाक्षेत्रे संन्यासिनस्तव श्रुतिसिद्धांत विरोधि भेदबुद्धिकल्पनं स्पृश्यास्पृश्यदर्शनमयुक्तमिति भावः । तथा च श्रुतिः अविमुक्तं वै कुरुक्षेत्रं ब्रह्मसदनमिति चातदर्थस्तु काशीमरणजन्यमुक्तेः कैवल्यरू पत्वात्सलोकत्वादिविविधमुक्तिरहितम्।अविमुक्तं कुरुक्षेत्रं चाकुत्सितं रौतीति कुरु पापं तस्य क्षेपणात्त्रायत इति कुरुक्षेत्रं ब्रह्मप्राप्तिस्थानं चेति॥ ३८॥अदः इदं विश्वम्।एतादृशनिश्चयवांस्त्वं मम गुरुरेवासीत्यर्थः॥ ३९॥४०॥देहबुद्ध्याऽहं तव दासोस्मि, जीवधीर्जीवबुद्धिरहं तव अंशोऽस्मि आत्मबुद्ध्या त्वमेवाहमस्मि एवं मम बुद्धिर्निश्चिता निश्चयं प्राप्ता ॥ ४१॥ हे यतीश्वर ॥ ४२ ॥ यथा व्यासो मे प्रियस्तथा त्वं मे प्रियोसि । एतत् अवताररूपेणोक्तं वस्तुतः अहमेव

श्रुत्वेत्थं शंकरः प्राह सत्यमुक्तं त्वयाप्यदः ॥ सर्वमात्ममयं विश्वं यः पश्यति स मे गुरुः ॥ ३९ ॥ वदत्येवं शंकरेऽथ वेदैर्युक्तस्ततः शिवः॥आविर्भूतः शंकराग्रे तं च तुष्टाव शंकरः॥४०॥दासोऽहं ते देहबुद्ध्या तथांशो जीवधीरहम् ॥ आत्मबुद्ध्या त्वमेवाहं निश्चितैवं मतिर्मम ॥ ४१ ॥ इत्थं स्तुतस्स बहुधा श्रीशिवस्तमथाब्रवीत् ॥ धन्यस्त्वं कृतकृत्योऽसि सर्ववेत्ता यतीश्वर ॥ ४२ ॥ यथा व्यासः प्रियो मे त्वं तथैवाहं त्वमेव हि ॥ नावयोरंतरं किंचिन्मुनीनामाशयोऽस्म्यहम् ॥ ४३ ॥ श्रुतीः संगृह्य मीमांसा कृता व्यासे न चाद्वया॥मोक्षनिष्ठामतं यत्र सांख्यादीनां तु खंडितम्॥४४॥भाष्याभासान्मूढधियस्तस्याः केचित्प्रचक्रिरे ॥ अन्यथा श्रुतिवाक्या नि व्याख्यातानि कुबुद्धिभिः ॥४५॥ न सर्वज्ञं विना तेषां स्यात्तत्त्वार्थप्रकाशनम् ॥ सर्वज्ञोऽसि यते त्वं तु सर्वसिद्धियुतो मुने॥४६॥

त्वं त्वमेवाहमित्यर्थः । मुनीनां व्यासादीनाम् आशयः हृदयगतं तात्पर्यमस्मि ॥ ४३ ॥ एवं विश्वेश्वरस्य प्रासंगिकभाषणमुक्त्वा तत्कृतामाज्ञामाह—श्रुतीरि त्यष्टभिः । संगृह्य सम्यक् विचार्य । अद्वया अद्वैतप्रतिपादिका अथातो ब्रह्मजिज्ञासेत्यादिसूत्रसमूहरूपा उत्तरमीमांसा कृता । यत्र उत्तरमीमांसायां मोक्ष निष्ठाया मोक्षनिश्चयस्य मतं सिद्धांतोऽस्ति । सांख्यकाणादादीनां मतं तु खंडितम् ॥४४॥ केचिद्भास्करादयः । भाष्यमिव आभासंत इति तान्भाष्याभासान् ग्रंथान् । पाशुपतादीनां भाष्यग्रन्थान् न तु भाष्यभूतान् । अन्यथा द्वैतपरत्वेन व्याख्यातानि ॥४५॥ तेषामुत्तरमीमांसासूत्राणाम् । तदित्यव्ययं तथेत्यर्थः ।

अध्ययानामनेकार्थत्वात् ॥ ४६ ॥ ४७ ॥ इतिहासाना भारतादीनाम् । निर्मथ्य विचारेण निष्कास्येति पूर्वेणान्वयः ॥ ४८ ॥ परिनिष्ठत्वं चिर कालस्थायित्वं च यास्यंति ॥ ४९ ॥ गुप्ताख्यम् अभिनवगुप्तनामानं शाक्तम् ॥ ५० ॥ भेदाभेदमते द्वैताद्वैतमते निष्ठं वेदार्थस्य केवलाद्वैतस्य तस्करं लोपकं भास्करम् ॥ ५१ ॥ एवं विश्वेश्वराज्ञां संपाद्य भाष्याणि चकारेत्याह शंकर इति पंचभिः ॥ ५२ ॥ स्थित इति पूर्वान्वितम् ॥ ५३ ॥

सर्वश्रुतीनां तात्पर्यं यथा ब्रह्मणि वर्तते ॥ तदद्वैतपरं भाष्यं कुरुष्वाभिमतं सताम् ॥ ४७ ॥ श्रुतिस्मृतीतिहासानामर्थं निर्मथ्य तत्त्वतः ॥ शिष्यप्रशिष्यरूपेण संप्रदायं प्रवर्तय ॥ ४८ ॥ त्वया कृतानि भाष्याणि प्रसिद्धिं हि महीतले ॥ यास्यंति ब्रह्म लोकेऽपि परिनिष्ठत्वमेव च ॥४९॥ मंडनं कर्मठं जित्वा तथा जित्वा प्रभाकरम् ॥ नीलकंठं तथा शैवं गुप्ताख्यं शाक्तिकं तथा ॥५०॥ भेदाभेदमते निष्ठं भास्करं वेदतस्करम् ॥ जित्वा शिष्यत्वमानीय मतं प्रख्यापयाऽद्वयम् ॥ ५१ ॥ इत्युक्त्वांतर्हितः शंभुः शंकरो जाह्नवीं ययौ ॥ कृताह्निकः शिवं ध्यायन् वेदांतार्थान्विचारयन् ॥ ५२ ॥ स्थितोऽथास्याखिलज्ञस्य सर्वशक्तिमतो यतेः ॥ भाष्यकर्तृत्वशक्तिश्च स्वयमाविरभूद्धृदि ॥ ५३ ॥ बदरीकाननं गत्वा तत्र ब्रह्मर्षिभिः सह ॥ संविचार्यागमार्थं स संचिंत्यापि स्वयं मुहुः ॥५४॥ ईशावास्याद्युपनिषद्दशभाष्याणि सोऽकरोत् ॥ गीताया विष्णुसाहस्रनाम्नां भाष्यं स शंकरः ॥ ५५ ॥ भाष्यं सनत्सुजातीयमुपदेशसहस्रकम् ॥ नृसिंहतापिनीव्याख्यां कृत्वा शिष्यानुपादिशत् ॥५६॥ शांतिपाठविधानेन सम्प्रदायानुसारतः ॥ एवं काशीपुरे तिष्ठन्सशिष्यः शंकरो बभौ ॥ ५७ ॥ एकदा जाह्नवीपारे स्थितं शिष्यं सनंदनम् ॥ गंगाऽवारे स्वयं स्थित्वा शंकरः प्राह तं मुदा ॥५८॥

आगमार्थं वेदार्थम् ॥ ५४ ॥ ईशावास्यानामीशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरेयकैतरेयकच्छांदोग्यबृहदारण्यकाख्यानां दशानामुपनिषदां दश भाष्याणि ॥ ५५ ॥ उपदेशसाहस्रीम् ॥ ५६ ॥ शांतिपाठविधानेन संप्रदायानुसारतः प्राचीनाद्वैतसंप्रदायानुसारेण ॥ ५७ ॥ जाह्नव्याः पारे परतीरे गंगायास्तस्याः

एवावारे अर्वाचीनतीरे " पारावारे परार्वाचीतीरे " इत्यमरः ॥ ५८ ॥ सरितः गंगायाः । स सनंदनः ॥ ५९ ॥ अच्छा स्वच्छापि सा गंगा । तस्येति काकाक्षिवदुभयत्र योज्यम् । तस्य गुरुभक्त्या संतुष्टा सती तस्य सनंदनस्य पदेपदे पादसंक्षेपणस्थाने पद्मानि उदंचयति स्म प्रादुश्चकार ॥ ६० ॥ पद्मेषु पादावस्येति पद्मपाद इत्यन्वर्थकं नाम कृतवान् ॥ ६१ ॥ विवादैः शास्त्रीयैर्वादैः अजयत् जितवान् । अथ शंभुर्विश्वेश्वरः काशिकाधीश्वरो भगवान् तं

संसारसागराद्भक्तिस्तारिका सरितो न किम् ॥ तारिकेति स निश्चित्य प्रविष्टो जाह्नवीजलम् ॥ ५९ ॥ पादयोः क्षेपणे तस्य सा पद्मानि पदेपदे ॥ गंगोदञ्चयति स्माऽच्छा संतुष्टा गुरुभक्तितः ॥ ६० ॥ पदं निवेश्य पद्मेषु गुरोरंते समाययौ ॥ दृष्ट्वा शिष्यं गुरुस्तस्य पद्मपादाभिधां व्यधात् ॥ ६१ ॥ सैकदा वादिनः शैवान्विवादैरजयद्बली ॥ ताञ्छिष्यांश्चाकरोच्छंभुस्तमथाज्ञापयत्पुनः ॥ ६२ ॥ कुरु शारीरकं भाष्यं ब्रह्मसिद्धांतगोचरम् ॥ शिवेनाज्ञापितो व्याससूत्राणां श्रुतिसम्मतम् ॥ ६३ ॥ चक्रे शारीरकं भाष्यं ब्रह्माद्वैतप्रकाशकम् ॥ शिष्यानध्यापयामास सर्वत्रैतत्प्रकाशितुम् ॥ ६४ ॥ सारं श्रुतीनामजसूत्रभाष्याद्वैतसिद्धांतमत प्रकाशम् ॥ कृत्वाह पद्मांघ्रिमुखान्स्वशिष्याञ्छ्रीशंकरोऽज्ञानतमोहरोऽर्कः ॥ ६५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे श्रीमच्छङ्कराचार्यकथासारे चतुर्दशः सर्गः ॥ १४ ॥

शंकरं पुनः आज्ञापयत् । शारीरकभाष्यं कर्तुं पुनश्चाज्ञापितवानित्यर्थः ॥ ६२ ॥ ब्रह्मसिद्धांतविषयकं तत्परिपूर्णं शारीरकं शरीरमेव शरीरकं कुत्सितत्वात् तन्निवासी जीवः शारीरकस्तद्विषयकं भाष्यम् । जीवस्य ब्रह्मत्वप्रतिपादकमित्यर्थः । परार्द्धे परान्वयि ॥ ६३ ॥ एतत् भाष्यम् ॥ ६४ ॥ अजः जननादिशून्यः परमात्मा तद्विषयाणां सूत्राणां ब्रह्मसूत्राणां भाष्यम् । अज्ञानतमोहरोऽर्क इव । लुप्तोपमा । इंद्रवज्रावृत्तम् ॥ ६५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेर्थस्फूर्त्यभिधायां टीकायां चतुर्दशः सर्गः ॥ १४ ॥

सर्गे पंचदशे व्यष्टपर्यैव्यासिक्षणं ततः । भट्टांग्रिमण्डनाभ्यां च शंकरस्योक्तिरीर्यते ॥ १५ ॥ एकदेति । सार्थं भाष्यमिति भावः ॥ १ ॥
ब्राह्मणः ब्राह्मणवेषो व्यासः ॥ २ ॥ ३ ॥ स्वयमित्यनेन शिष्या मा वदंत्विति सूचयति ॥ ४ ॥ व्यासाभिप्रायो यथातथा
एकस्य सूत्रस्य तृतीयाध्यायस्य प्रथमसूत्रस्य । " तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् " । इत्यस्य मुख्यं यथार्थम् अर्थं
स्वयं वदेति पूर्वान्वितम् ॥ ५ ॥ इत्युक्तो भाष्यकारो मंत्रार्थविदो ब्रह्मज्ञान् नत्वा गताहंकारत्वेन सूत्रार्थं वक्तुं प्रतिजानीते आचार्येभ्य इति । मंत्र

श्रीदेशिकेंद्र उवाच ॥ एकदा शंकरो योगी भाष्यं शारीरकाभिधम् ॥ शिष्यानध्यापयामास जाह्नवीतीरसंस्थितः ॥ १ ॥ पाठांते
ब्राह्मणः कश्चिद्वृद्धस्तत्र समागतः ॥ पप्रच्छ शंकरं शास्त्रं किमिदं पाठ्यते यते ॥ २ ॥ विप्रं प्रोचुस्तदा शिष्या भाष्यं शारीरकाभि
धम् ॥ ब्रह्माद्वैतप्रकाशाय विप्रास्मद्गुरुणा कृतम् ॥ ३ ॥ श्रुत्वेत्थं ब्राह्मणः प्राह शंकरं किमिदं यते ॥ शिष्यास्त्वां भाष्यकर्तारं
प्राहुर्वेद तथा स्वयम् ॥ ४ ॥ सूत्रस्यैकस्य मुख्यार्थं यथा व्यासाशयो यते ॥ श्रुत्वेत्थं भाष्यकृत्प्राह ब्राह्मणं तमुदारधीः ॥ ५ ॥
आचार्येभ्यो ब्रह्मविद्भ्यो नमो मेस्तु सदा द्विज ॥ न मे सूत्रज्ञताऽहंता यत्पृच्छसि तदुच्यते ॥ ६ ॥ एवमुक्त्वाह सूत्रार्थं शंकरोथ तदा
द्विजः ॥ निषिध्य भाष्यकारोक्तमन्यथा प्रत्यपादयत् ॥ ७ ॥

द्रष्टृभ्यो ब्रह्मविद्भ्यः सदा मे मम नमोस्तु मम सूत्रज्ञतारूपाऽहंता नास्ति किंतु यत्पृच्छसि तदुच्यते ॥ ६ ॥ एवमिति सूत्रार्थस्तु । मरणसमये तदंतरप्रति
पत्तौ देहांतरप्राप्तौ देहबीजभूतैर्भूतसूक्ष्मैः संपरिष्वक्तः संवेष्टितो रंहति गच्छति कुतः प्रश्ननिरूपणाभ्यामिति हेतुः । तांडिश्रुतौ गौतमजैमिनिप्रश्नप्रतिवचना
भ्यामिति । तदर्थः—प्रश्नस्तावत् वेत्थं यथा पंचम्यामाहुतावापः पुरुषवचसो भवंतीति । प्रतिवचनं च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पंचस्वग्निषु श्रद्धासोम
वृष्ट्यन्नरेतोरूपाः पंचाहुतीर्दर्शयित्वा इति तु पंचम्यामाहुतावापः पुरुषवचसो भवंति । तत्राप्छब्देन सर्वेषां देहबीजभूतानां भूतसूक्ष्माणां ग्रहणात्संपरिष्वक्तो

गच्छतीति सिद्धं भवतीति । एवं सूत्रार्थं श्रुत्वा द्विजो ब्राह्मणवेषो व्यासो भाष्यकर्तुः अर्थम् अन्यथा उक्तवैपरीत्येन प्रतिपादितवान् । तथाहि । व्यापिनां करणानाम् आत्मनश्च देहांतरप्राप्तौ कर्मवशाद्वृत्तिलाभस्तत्र तत्र भवति । यद्वा केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति । इंद्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थान उत्पद्यंते । यद्वा मन एव केवलं यथा भोगस्थानमपि प्रतिष्ठते । यद्वा जीव एवोत्सृज्य देहाद्देहांतरं प्रतिपद्यते शुक इव वृक्षाद्वृक्षांतरम् । किंच देहांतरप्रतिपत्तौ करणानां जीवेन सह गमनं न संभवति । "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चंद्रमसं दिशः श्रोत्रम्" इत्यादिश्रुतिविरोधात् । उक्तं च—प्रथमेऽग्नौ अपां श्रवणाभावात्पंचम्यामाहुता आपः पुरुषवचसो भवंतीति निश्चेतुं न शक्यते। अत्र हि द्युलोकाद्याः पंचाग्नयः श्रद्धाद्याहुतीनामाधारत्वेनोक्ताः । तत्र प्रथमेऽग्नौ श्रुतां श्रद्धां परित्यज्याश्रुतानामपां कल्पनं साहसमात्रम् । श्रद्धायाः प्रत्ययविशेषत्वप्रसिद्धेः । किंच अस्तु । अपां श्रद्धादिक्रमेण पंचम्यामाहुतौ पुरुषाकारता प्रतिपत्तिस्तथापि तत्परिष्वक्तस्य जीवस्य गमनं तु न वाच्यं तस्याश्रुतत्वात् इत्यादि अन्यथार्थं प्रतिपादित

भाष्यकृत्स्थापयामास निजोक्तं श्रुतिवाक्यतः ॥ ज्ञात्वा द्विजं तदा व्यासं पद्मपादोऽब्रवीदिदम् ॥ ८ ॥

वानित्यर्थः ॥ ७ ॥ एवं व्यासवाक्यं श्रुत्वा भाष्यकारः शंकरः श्रुतिवाक्यप्रमाणेन स्वकीयार्थं प्रतिपादितवानित्याह । भाष्यकृदिति । न तावत् सांख्य बौद्धवैशेषिकदिगंबराणां कल्पना आदर्त्तव्या उदाहृतश्रुतिविरोधात् । न चाप्छब्दस्य श्रवणसामर्थ्यात्प्रश्नप्रतिवचनाभ्यां केवलाद्भिः संपरिष्वक्तो गच्छतीति वाच्यम् । तासां भूयस्त्वापेक्षयाऽप्छब्दप्रयोगाविरोधात् । न हि केवलानामपां देहारंभकत्वं संभवति त्रिवृत्करणश्रुतेः । त्रयाणामपि तेजोऽबन्नानां देहे कार्यो पलब्ध्या तस्य त्र्यात्मकत्वाच्च । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते इति चेन्नैष दोषः । इतरापेक्षयाऽपां बाहुल्यसंभवात् । तस्मादप्छब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपादानं युक्तम् । किं च प्राणानां देहांतरप्रतिपत्तौ गतिः श्राव्यते । " तमुत्क्रामंतं प्राणोऽनुत्क्रामति प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंति " इत्यादिश्रुतिभ्यः । सा च प्राणानां गतिराश्रयमंतरेण न संभवति । अतः प्राणगतिप्रयुक्तानां तदाश्रयाणामपामपि भूतांतरोपसृष्टानां गतिरर्था द्गम्यते । न हि निराश्रयाः प्राणाः क्वचिद्गच्छंति तिष्ठंति वा । जीवतो अदर्शनात् । वागादीनामग्न्यादिगतिश्रुतिस्तु गौणी । लोमसु केशेषु चादर्शनात् ।

'ओषधीर्लोमानि वनस्पतीन्केशाः' इति हि तत्र तत्राम्नायते । न च तेषामुत्प्लुत्य गमनं संभवति । न च जीवस्य प्राणोपाधिप्रत्याख्यानेन गमनमवकल्प्यते। नापि प्राणैर्विना देहांतरे उपभोग उपपद्यते । तस्माद्वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उपकारनिवृत्तिमात्रमपेक्ष्य वागादयः अग्न्यादीन् गच्छंतीत्युपचर्यंते । यत्तु प्रथमेऽग्नौ अपामश्रवणमित्यादि । तदपि न दोषावहम् । यतस्तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभिधीयंते । एवं सति आदिमध्यावसानसंगादनाकुलमेतदेकं वाक्यमुपपद्यते । अन्यथा पुनः पंचम्यामाहुतौ । अपां पुरुषवचस्त्वप्रकारे पृष्टे प्रवचनावसरे । प्रथमाहुतिस्थाने यदि अनयोर्होम्यं द्रव्यं श्रद्धानामावतारयेत् । ततोऽन्यथा प्रश्नोऽन्यथा प्रवचनमित्येकवाक्यता न स्यात् । न च श्रद्धाख्योऽप्रत्ययो मानसो जीवस्य वा धर्मः सन् । धर्मिणो निष्कृष्य होमायोपादातुं शक्यते पश्वादिभ्य इव हृदयादीनि । तस्मादाप एव श्रद्धाशब्देनोपादेयाः । श्रद्धाया आप इति

शंकरः शंकरः साक्षाद्व्यासो नारायणो हरिः ॥ तयोर्विवादे संप्राप्ते किंकरः किं करिष्यति ॥ ९ ॥ श्रुत्वैवं शंकरः साक्षाद्व्यासं प्राह कृतांजलिः ॥ दर्शयस्व निजं रूपं पैलादिमुनिसेवितम् ॥ १० ॥ एवं वदन्ददर्शाग्रे साक्षाद्व्यासं स शंकरः ॥ जटाकलापभ्राजंतं स शिष्यः प्रणनाम तम् ॥ ११ ॥ गुरो त्वद्दर्शनाद्धन्याः कृतकृत्या वयं प्रभो ॥ स्वागतं ते गुरो भाग्यं मदीयं फलितं त्विदम् ॥ १२ ॥

वैदिकप्रयोगदर्शनात् । श्रद्धाशब्दस्याप्सूपपत्तिः । गच्छंतीनामपां बीजरूपतायां सूक्ष्मत्वगुणयोगेन माणवके सिंहशब्द इव तासु श्रद्धाशब्दो वोपपन्नः । श्रद्धापूर्वककर्मसमवायाच्चाप्सु श्रद्धाशब्द उपपद्यते । "आपोहास्मै श्रद्धां सन्नमंते पुण्याय कर्मणे" इति श्रुतेः श्रद्धाहेतुत्वाच्च तासु श्रद्धाशब्दोपपत्तिः । यद्यपि अत्र जीवानां श्रवणं नास्ति । तथापि इष्टापूर्तादिकारिणः पितृयानेन गंतारः श्रुतास्त एव इहापि प्रतीयंते । तस्माद्भूतसूक्ष्मैर्देहांतरबीजभूतैः संपरिष्वक्तो गच्छतीति सिद्धम् । एवं खंडनमंडनाभ्यामष्टदिनपर्यंतं वादो जात इत्यर्थः । तदा पद्मपादः द्विजरूपं व्यासमिति ज्ञात्वा इदं वक्ष्यमाणमब्रवीत् ॥ ८॥ श्रीगुरो देशिक मादृशः किंकरः किंकरिष्यति । न किमपि मत्सामर्थ्यमेतयोर्निवारणेऽस्तीत्यर्थः ॥९॥१०॥११॥ आदराद्गुरुशब्दस्य द्विरुक्तिः ॥१२॥

दृष्ट इत्यत्रास्माभिरित्यध्याहारः ॥ १३ ॥ यत्र भारते ॥ १४ ॥ १५ ॥ अद्वैताध्वप्रकाशाय वेदांतमार्गप्रवृत्त्यर्थं सामान्यतः श्रुत्वा विशेषतः श्रोतुं प्राप्तः ॥ १६ ॥ हर्षसीमां निरतिशयसुखं गतोऽस्मि ॥१७॥ अर्कः सूर्यसदृशं भवत्सूत्रं भवता कृतं ब्रह्मसूत्रं क्व । मम भाष्यात्मा भाष्यस्वरूपी अल्पदीपकः क्व ॥ १८ ॥ एतद्भाष्ये बुद्धिपूर्वकं स्वयं स्वभावतो वा यत्साहसं न्यूनाधिकोक्तिरूपं मया अकारि कृतं चेत्तर्हि समीकर्तुं समानं कर्तुं योग्योऽसि ॥ १९ ॥ इत्थं निगदतो भाषमाणस्य तस्य शंकरस्य प्रसन्नं प्रशस्तार्थकं गंभीरं गहनार्थकम् ॥ २० ॥ वाक्यैः श्रुतिस्मृतिवचनैः सिद्धांतयु

दृष्टो नारायणः साक्षादष्टादशपुराणकृत् ॥ वेदा विभाजिता येन भारतं च तथा कृतम् ॥ १३ ॥ वर्णाश्रमवतां धर्मो वर्णितो यत्र कृत्स्नशः ॥ इत्येवं संस्तुतो व्यासो भाष्यकारेण धीमता ॥१४॥ उपविश्यासने प्राह शंकराचार्यमादरात् ॥ धन्योऽसि कृतकृत्योऽसि प्रियोऽसि शुकवन्मम ॥१५॥ अद्वैताध्वप्रकाशाय लोके जातोऽसि शंकर ॥ भाष्यं शंभुसभायां ते श्रुत्वा श्रोतुं समागतः ॥ १६ ॥ त्वन्मुखात्तत्समाकर्ण्य परं हर्षमवाप्तवान् ॥ इत्थं व्यासवचः श्रुत्वा भाष्यकृत्प्राह तं गुरुम् ॥१७॥ क्व भवत्सूत्रसूर्यः क्व मद्भाष्याख्यारूपदीपकः॥तथापि करुणार्द्रेण चेतसेत्थं प्रभाषसे॥१८॥साहसं चेन्मयाऽकारि भाष्ये बुद्ध्या स्वयं क्वचित्॥तत्त्वं विचार्य शिष्यस्य समीकर्तुमिहार्हसि ॥१९॥ इत्थं निगदतस्तस्य हस्ताद्भाष्यं स चाग्रहीत् ॥ प्रसन्नं चातिगंभीरं तदैक्षत महामुनिः ॥२०॥ सूत्रानुकारिभिर्वाक्यैर्युक्तं सिद्धान्तयुक्तिभिः ॥ दृष्ट्वाभिनंद्य संतुष्ट एवमाह स शंकरम् ॥ २१ ॥ न साहसं भवान्कुत्राऽकार्षीद्भाष्ये महत्तरे ॥ मीमांसायां शब्दशास्त्रे वेदे भाष्ये च कापिले ॥२२ ॥ योगे नास्ति समो लोके भवता भूतले दिवि ॥ कथं ते वदनात्सौम्य दुरुक्तं निःसरेद्यतः ॥ २३ ॥ प्राकृतो नासि गोविंदस्वामिशिष्यः स्वयं शिवः ॥ त्वदृते कुशलः कोऽन्यः सूत्रभाष्यादिकारकः ॥ २४ ॥

क्तिभिः सिद्धांतानुमानैश्च युक्तम् । संतोषवशात् । अतिसंतुष्टत्वेन॥२१॥ मीमांसादिषु भवता समो दिवि भुवि लोके चतुर्दशभुवने अत्र नास्तीत्यस्य पर्वताः सन्ति भूतभविष्यद्वर्तमानकालाः सन्तीतिवद्वर्तमानार्थमात्राविवक्षया त्रैकालिकत्वं सत्तायां प्रतीयत इति प्राङ् नासीदग्रे न भविष्यति वर्तमाने च नास्तीत्यर्थः। इदं नास्तीत्युत्तरेण योज्यम् ॥ २२ ॥ निःसरेत् निर्गच्छेत् । यत इत्युत्तरान्वयि ॥ २३ ॥ प्राकृतो लौकिकः ॥ २४ ॥

याथातथ्येन यथार्थत्वेन। आशयोऽभिप्रायः॥२५॥२६॥आयुर्पाते आयुष्यसमाप्तौ मणिकर्ण्यां भागीरथ्यामेतच्छरीरं त्वत्समीपे यावत्त्यजामि तावन्मुहूर्तमात्रं संप्रतीक्षस्व स्थिरो भवेत्यन्वयः॥२७॥ कार्यशेषज्ञानार्थं ध्यात्वेति ॥२८॥ वादिनो मंडनादयः यैर्वेदोऽन्यथा कर्मपरः कृतः ॥२९॥ न चेत् तन्मतनिरासार्थं भुवि वासं न करोषि चेत् मुमुक्षा मोक्षेच्छा दुर्लभा स्यात् ॥ ३० ॥ वेदांता उपनिषन्मार्गाः । नन्वल्पायुषा मया कथं स्थातव्यमित्यत आह ।

याथातथ्येनाशयो मे सूत्रभाष्ये त्वयोदितः ॥ कैश्चित्कृतानि भाष्याणि पूर्वं तत्राशयो न मे ॥ २५ ॥ गुरुणोक्तं वचः श्रुत्वा भाष्यकारोऽब्रवीदिदम् ॥ मया कृतानि भाष्याणि व्याख्यातानि तथोक्तिभिः ॥ २६ ॥ प्रकाशितोऽद्वैतमार्गः कृत्यं नैवावशेषितम् ॥ संप्रतीक्षस्व तावन्मां मणिकर्ण्यां त्वदंतिके ॥ २७ ॥ आयुर्पोऽन्ते त्यजाम्यद्य यावदेतत्कलेवरम् ॥ इत्याकर्ण्य वचो व्यासः क्षणं ध्यात्वाऽब्रवीदिदम् ॥ २८ ॥ इत्थं त्वया न कर्तव्यं कर्तव्यं शिष्टमस्ति ते ॥ बहवो वादिनः संति वेदो यैरन्यथा कृतः ॥ २९ ॥ तेषां मतनिरासार्थं वस्तव्यं भूतले त्वया ॥ न चेल्लोके मुमुक्षास्मिन्दुर्लभा स्याद्यथार्थतः ॥ ३० ॥ भूतले तु त्वया त्यक्ते वेदांताः स्युर्निराश्रयाः ॥ अष्टासन्दैवतोऽब्दास्ते तथाष्टार्षाश्च मातृतः ॥ ३१ ॥ अधुनेशवराद्भूयः संत्वब्दाः षोडशैव तु ॥ श्रुत्वेत्थं शंकरः प्राह भाष्यं मे ख्यातमस्तु कौ ॥ ३२ ॥ उक्त्वा तथेति स व्यासो बभूवांतर्हितस्तदा ॥ ततः श्रीशंकराचार्यो दिग्जयं कर्तुमुद्यतः॥३३॥ ययौ प्रयागं शिष्याढ्यः काश्या निर्गत्य शंकरः ॥ वेणीं स्तुत्वाथ नत्वा च स्नानं चक्रेऽतिहर्षतः ॥ ३४ ॥ कृताह्निकोऽतिशद्भामं शृण्वन्वाक्यान्यनेकशः ॥ गमागमवतां पुंसां भट्टपादाश्रितालि च ॥ ३५ ॥ यो भट्टपादो जिननाशकोऽस्य प्रसादतो यज्ञभुजः सुरेंद्राः ॥ स्वयं प्रविष्टः स तुषाग्निमद्य प्रवर्तयन्वैदिकमार्गमुग्रम् ॥ ३६ ॥

अष्टेति । दैवतः दैवयोगेन अष्टाब्दा आसन् । त्वदायुष्यप्रमाणभूता इति शेषः । तथा स्वमातृतः मातृप्रार्थनया । आर्षा अगस्त्यादिभ्य ऋषिभ्यः प्राप्ता अष्टाब्दा एवं षोडशाब्दा जाताः ॥ ३१ ॥ किंच । ईशप्रसादात् शिवप्रसादात् । कौ पृथिव्यां षोडशाब्दा एवं जन्मतो द्वात्रिंशदब्दा यावदायुः विख्यातमस्तु ॥ ३२ ॥ ३३ ॥ वेणीं त्रिवेणीम् ॥ ३४ ॥ गमागमवतां गमनागमनकर्तॄणां वाक्यानि शृण्वन् ॥ ३५ ॥ तत्रैकं तद्वर्णनपरं वाक्यमाह । य इति ।

यो भट्टपादो जिनानां नाशकोऽस्ति । सुरेंद्राः अस्य प्रसादात् यज्ञभोक्तारो बभूवुः । वैदिकमार्गं वेदप्रोक्तकर्मविधिप्रचारं प्रवर्तयन् स भट्टपादः । अथ उग्रं देहान्तप्रायश्चित्तरूपं तुषाग्निं स्वयं प्रविष्टः ॥ ३६ ॥ तत्र भट्टपादसमीपे । तथा तुषाग्निस्थं विकृतिरहितत्वेन प्रसन्नास्यं दृष्ट्वा परमविस्मयं प्राप्य महत्तरं धैर्यमस्तीत्याहेति द्वयोरन्वयः ॥ ३७ ॥ ३८ ॥ स्वस्य प्रायश्चित्तदीक्षास्वीकाराच्छिष्यैरपूजयत् ॥ ३९ ॥ अष्टावित्युत्तरान्वयि ॥ ४० ॥ अध्यायभाष्यसंदर्भे प्रथमाध्यायभाष्यतात्पर्ये भांति प्रकाशन्ते तथापि किं करोमि कथं करोमीत्यर्थः । किं तु इदानीं देहांतसमये दुर्लभात्तव दर्शनान्मे मम सुजीवितं सफलजी

एवं लोकगिरः शृण्वन्प्राप्तस्तत्र स शंकरः ॥ सशिष्यस्तं तथा दृष्ट्वा प्रसन्नमुखपंकजम् ॥ ३७ ॥ प्रभाकरादिभिः शिष्यैः सेवितं कर्मतत्परैः ॥ विस्मयं परमं प्राप्याऽऽहाऽहो धैर्यं महत्तरम् ॥ ३८ ॥ भट्टपादोपि तं दृष्ट्वा नत्वा शिष्यैरपूजयत् ॥ तस्मै शारीरकं भाष्यं दर्शयामास शंकरः ॥३९॥ भट्टपादोपि तद्दृष्ट्वा विचार्याऽऽहातिहर्षितः ॥ अष्टौ श्लोकसहस्राणि वार्तिकाख्यानि चाद्य मे ॥४०॥ अध्यायभाष्यसंदर्भे भान्तीदानीं करोमि किम् ॥ अद्य त्वद्दर्शनात्स्वामिन्दुर्लभान्मे सुजीवितम् ॥ ४१ ॥ कृतो मया निबंधोऽयं वेदमार्गप्रवर्तकः ॥ भुक्ता भोगाः सतां मध्ये संन्यासं नाप्तवानहम् ॥ ४२ ॥ जनैरपरिहार्यो यः कालः सोऽद्य समागतः ॥ शृणु मे पूर्ववृत्तांतं बौद्धाः सर्वधरातले ॥ ४३ ॥ प्रविश्य राजगेहेषु राजानस्तैर्वशीकृताः ॥ वेदोऽप्रमाणमित्यादिवेदालापैर्दुरात्मभिः ॥४४॥ न कश्चिद्वैदिको लोके सर्वे नास्तिकवादिनः ॥ ताञ्जेतुमुद्यते नाथ मया बोद्धुं तु तन्मतम् ॥ ४५ ॥ तत्सिद्धांताः समभ्यस्ताः शरणीकृत्य ताञ्जिनान् ॥ एकदा तन्मतेनाहं दत्तवान्दूषणं श्रुतौ ॥ ४६ ॥

वनमासीत् ॥ ४१ ॥ निबंधः पूर्वमीमांसायां भाट्टरहस्यरूपः ॥ ४२ ॥ अपरिहार्यः कालः तुषाग्निप्रवेशेन देहविसर्जनरूपः । ननु किमर्थं तुषाग्निः स्वीकृत इति चेत्तदर्थं स्ववृत्तांतं कथयति । शृण्वित्यादिसार्द्धाष्टभिः ॥ ४३ ॥ वेदालापैः वेदविषयकनिंदाशब्दैः ॥ ४४ ॥ अथ तान् जेतुमुद्यतेन मया तन्मतं बोद्धुं ज्ञातुं तान् शरणं गत्वा तेषां सिद्धांताः सम्यगभ्यस्ता इत्यन्वयः ॥ ४५ ॥ तन्मतेन बौद्धमतेन श्रुतौ वेदे दूषणं दत्तवान् ॥ ४६ ॥

तत्र सभायां दुष्टकर्मणा वेदनिंदारूपेण मे महान् अश्रुपात आसीत् । तदा तैर्बौद्धैरहं लक्षितः अयं परमतनिष्ठ इति ज्ञातोऽस्मि । ततस्ते मद्वधार्थमुद्युक्ता अभवन् ॥ ४७ ॥ कथंचिदपि केनापि प्रकारेणायं नोऽस्माकं वध्योऽस्तीति उद्युक्ता इति योज्यम् । यतः विपक्षगः परमतस्थः बलवान् शास्त्रबलवान् । सौधमूर्धनि शिरोगृहे भाषया जिना इति प्रसिद्धे स्थितम् ॥ ४८ ॥ वेदाः सत्याश्चेन्मम जीवनं स्यादिति मया निश्चितम् । तदा गुरुद्रोहान्ममैकं चक्षुः प्रनष्टम् ॥ ४९ ॥ एकाक्षरप्रदातापि गुरुर्भवति बहुपाठको गुरुर्भवतीति किं वाच्यम् ॥ ५० ॥ जैमिनेः मतनिष्ठया कर्मतत्त्वया गुरोरागः

अश्रुपातो महानासीत्तत्र मे दुष्टकर्मणा ॥ लक्षितोऽहं तदा तैस्तु मद्वधार्थं समुद्यताः ॥ ४७ ॥ कथंचिदिति वध्योऽयं बलवान्नो विपक्षगः ॥ एकदा सौधमूर्धस्थं सौगता मां व्यपातयन् ॥ ४८ ॥ निश्चितं तु मया वेदाः सत्याश्चेज्जीवनं मम ॥ चक्षुरेकं प्रनष्टं हि गुरुद्रोहात्तदा मम ॥ ४९ ॥ एकाक्षरप्रदातापि गुरुः किं बहुपाठकः ॥ तेभ्योऽधीत्य मतं तेषां दूषितं घातितं कुलम् ॥ ॥ ५० ॥ गुर्वागः कृतवानित्थं जैमिनेर्मतनिष्ठया ॥ दोषयुग्मनिरासार्थं तुषाग्नौ संस्थितोऽस्म्यहम् ॥ ५१ ॥ निश्चितं मरणं तावज्ज्ञातं श्रीपाददर्शनम् ॥ वार्तिकं तु भवद्भाष्ये कृत्वा यास्यामि सद्यशः ॥ ५२ ॥ जाने त्वां शिवमेवाद्यं संप्रदायप्रवर्तकम् ॥ कृतावतारः प्रागेव न प्राप्तो मेऽसि दृक्पथे ॥ ५३ ॥ इत्युक्तस्तेन तं प्राह भट्टपादं स शंकरः ॥ जाने त्वां सौगतान्हंतुं जातं भुवि षडाननम् ॥ ॥ ५४ ॥ क्व ते पातकसंबंधोऽसज्जनाः शिक्षिता यतः ॥ त्वां जीवयाम्यहं भाष्ये मदीये कुरु वार्तिकम् ॥ ५५ ॥ इत्युक्तः शंकरं प्राह योग्यमुक्तं त्वया हि तत् ॥ कर्तुं शुद्धमपि स्वामिन्नेशे लोकविरुद्धकम् ॥ ५६ ॥

अपराधं कृतवानस्मि । दोषयुग्मस्य गुरुमतखंडनतत्कुलघातरूपस्य दोषद्वयस्य निरासार्थं तत्प्रायश्चित्तार्थम् अहं तुषाग्नौ संस्थितोऽस्मि ॥ ५१ ॥ ५२ ॥ कृतावतारस्त्वं प्रागेव प्रायश्चित्तारंभात्प्रागेव मम दृक्पथे दृष्टिमार्गे न प्राप्तोऽसि ॥ ५३ ॥ ५४ ॥ दुष्टशिक्षणे पापं नास्तीत्यर्थः ॥ ५५ ॥ त्वां जीवये इति यत् त्वया योग्यमुक्तं तत् शुद्धमपि लोकविरुद्धं कर्तुं नेशे समर्थो नास्मि । निर्दोषेणापि मया लोकविद्भिः आरब्धप्रायश्चित्तत्यागो न

कर्तव्य इत्यर्थः ॥ ५६ ॥ एतदेव स्पष्टमाह । साक्षादिति । ईश्वरः निग्रहानुग्रहसमर्थः साक्षाच्छंकरस्त्वं विश्वं स्रष्टुं नाशयितुं क्षमोऽसि । मे मम जीवने क्षमो नासि किम् । अपि तु मां जीवयितुं समर्थ एवासीत्यर्थः । यद्यप्येवं तथापि व्रतम् आरब्धदेहांतप्रायश्चित्तं मोक्तुं त्यक्तुं नोत्सहे ॥ ५७ ॥ यत स्तत्त्वज्ञानेन संसृतेः सकाशान्मम मुक्तिः स्यात् तत्तत्त्वविज्ञानं मां प्रति ब्रूहि । अयं त्वत्कृतः अद्वैतमार्गो यदि संमतो योग्यस्तर्हि ते त्वया प्रकाशनीयः लोके प्रतिष्ठापनीयः ॥ ५८ ॥ जेयः जेतुं योग्यः त्वयेति शेषः । गृहस्थानां गृहस्थधर्माणां यज्ञादीनां प्रवर्तकोऽस्ति ॥ ५९ ॥ कृती कुशलोऽस्ति ।

साक्षात्त्वमीश्वरो विश्वं स्रष्टुं नाशयितुं क्षमः ॥ जीवने किं न मेथाऽपि व्रतं मोक्तुं न चोत्सहे॥५७॥ वद मां तत्त्वविज्ञानं मुक्तिर्मे संसृते र्यतः ॥ अयमद्वैतमार्गस्ते प्रकाश्यो यदि संमतः ॥५८॥ मंडनाख्यः कविर्जेयो जिते तस्मिञ्जितं जगत् ॥ कर्मिणां मुख्य आचार्यो गृहस्थानां प्रवर्तकः ॥ ५९ ॥ शापाद्दुर्वाससो जाता पत्नी तस्य सरस्वती ॥ वेदशास्त्रेषु निपुणो मत्तोऽधिकतरः कृती ॥ ६० ॥ शिष्यो भूत्वा भवद्भाष्ये वार्तिकं स करिष्यति ॥ श्रुत्वेत्थं भट्टपादं स ब्रह्माद्वैतमुपादिशत् ॥ ६१ ॥ भुवि शिवतनयोऽसौ भट्टपादो हि भूत्वा जिनकुलमपि हत्वाऽवर्धयद्वेदमार्गम् ॥ अथ हृदि परतत्त्वं शंकराख्यात्स लब्ध्वा शिवगतधिषणोऽद्धा प्राप तस्यैव धाम ॥ ॥ ६२ ॥ श्रीदेशिकेन्द्र उवाच ॥ अथ श्रीशंकरो योगी व्योमैवाश्रित्य योगतः ॥ सशिष्यो मंडनाख्यस्य प्राप माहिष्मतीं पुरीम् ॥ ॥६३॥ कृताह्निकः प्रविश्यांतर्मंडनस्य गृहं यतिः ॥ पप्रच्छांभःकुंभवतीर्हसंत्यस्तास्तमब्रुवन् ॥ ६४ ॥ स्वतः प्रमाणं परतः प्रमाणं कीरांगना यत्र गिरं गिरंति ॥ द्वारस्थनीडांतरसंनिरुद्धा जानीहि तन्मंडनपंडितौकः ॥ ६५ ॥

॥ ६० ॥ अद्वैतं ब्रह्म । उपादिशत् । ज्ञानोपदेशं कृतवानित्यर्थः ॥६१॥ शिवतनयः स्कंदः । शिवे परशिवे गता प्राप्ता धिषणा बुद्धिर्यस्य सः ॥६२॥ योगतः योगबलेन व्योमैवाश्रित्य आकाशमार्गेणेत्यर्थः ॥ ६३ ॥ कृताह्निकः कृतस्नानादिनित्यक्रियो यतिः । अंतः नगरमध्ये प्रविश्य । अंभोर्थं कुंभवत्यः अंभःकुंभवत्यः उदकानयनार्थं कुंभधारिण्यः स्त्रियः ताः । कर्मभूताः । मंडनस्य गृहं पप्रच्छ । पृच्छतेर्द्विकर्मकत्वम् । प्रसिद्धमपि मंडनगृहं न जानातीत्याश्चर्येण हसंत्यस्ताः शंकरमब्रुवन् ॥६४॥ तद्वाक्यमाह । स्वत इति । वेदवाक्यं स्वतः प्रमाणमुत परतः अनुमानादिना प्रमाणमस्तीति गिरं वाचम् । यत्र मंडना

लये । द्वारस्थनीडस्य पंजरादिरूपस्यांतरे मध्ये संनिरुद्धाः कीराणां शुकपक्षिणाम् अंगनाः स्त्रियोपि गिरंति उच्चारयंति । तत् मंडनपंडितस्य ओकः गृहं जानीहि । यद्गृहस्थपंजरशुकीनामेवमधिकारः किं वक्तव्यं तद्गृहजनानां तस्य चेति भावः ॥ ६५ ॥ दुःप्रवेशं कपाटलापनेन प्रवेशायोग्यं ज्ञात्वा व्योम्ना आकाशमार्गेण ऊर्ध्वतः ओकोंगणं गृहांगणं प्राप्य विद्यालंकृतं विद्वांसं मंडनं दृष्टवान् ॥ ६६ ॥ जैमिनिं व्यासं निमंत्र्य श्राद्धभोजनार्थमामंत्र्य अर्चयंतं पादपूजां कुर्वंतं मुदा आनंदेन स्थितमिति पूर्वान्वितम् ॥ ६७ ॥ प्रवृत्तिशास्त्रनिष्ठोपि "अक्रोधनैः शौचपरैः" इत्यादिकर्मशास्त्रनिष्ठोऽपि चुकोप । यद्यपि श्राद्धकाले कोपो न युक्तस्तथापि यतिदर्शनेनातिकोपवाञ्जात इत्यर्थः ॥ ६८ ॥ अंतिके समीपे उत्तरोत्तरम् अधिकोत्तरं तयोः प्रश्नोत्तराण्यासुर्बभूवुः ।

दुःप्रवेशं गृहं ज्ञात्वा व्योम्नौकोंगणमूर्ध्वतः ॥ प्राप्य विद्यालंकृतं तं दृष्टवान्मंडनं यतिः ॥ ६६ ॥ निमंत्र्य जैमिनिं व्यासमर्चयंतं स्थितं मुदा ॥ स व्यासं जैमिनिं नत्वा स्थितस्तत्प्रतिनंदितः ॥ ६७ ॥ आकाशादवतीर्णं तं दृष्ट्वा संन्यासिनं द्विजः ॥ प्रवृत्तिशास्त्रनिष्ठोऽपि चुकोपातिसमीपगम् ॥ ६८ ॥ अथ मंडनमिश्रस्य शंकरस्य च संगमे ॥ तयोः प्रश्नोत्तराण्यासन्नुत्तरोत्तरमंतिके ॥ ६९ ॥ कंथां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम् ॥ शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ॥७०॥ कंथां वहामि दुर्बुद्धे तव पित्रापि दुर्वहाम् ॥ शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति ॥ ७१ ॥

॥ ६९ ॥ मंडनकृतं प्रश्नमाह । कंथामिति । गर्दभेनापि दुर्वहां वोढुमशक्यां कंथां वहसि । तथा च अतिभारभूतां कंथां वोढुं समर्थस्य ते तव शिखायज्ञोपवीताभ्यां को भारो भविष्यति । न कोऽपीत्यर्थः । स्वल्पभारभयान्महद्भारवाहकस्य तवाहो दुर्बुद्धिरेति संबोधयति हे दुर्बुद्धे इति ॥ ७० ॥ एवमाक्षिप्तो भगवाञ्छंकरोऽपि कौतुकादाक्षेपं प्रतिक्षिपन् उत्तरमाह कंथामिति । तव पित्रापि स्त्रीभिस्तिरस्कृतेन पुनस्तास्वेव प्रीतिं कुर्वता गर्दभसदृशेन दुर्वहां दुष्प्राप्यां कंथां शिखायज्ञोपवीते विहाय वहामि धारयामि । यतः शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति । तथा हि । "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । यदहरेव विरजेत्तदहरेव प्रव्रजेत् ब्रह्मचर्याद्वा गृहाद्वा वनाद्वा संन्यस्य श्रवणं कुर्यात । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्व

मानशुः । अथ परिव्राट् विवर्णवासा मुंडोऽपरिग्रह " इत्यादि श्रुतिः शिखायज्ञोपवीतधारणं न सहते । श्रुत्याऽसह्यः शिखायज्ञोपवीतभारो वैदिकेन त्वया वश्यं दूरीकार्य इत्यर्थः । तस्माद्भारनिरसनाय कंथावाहकस्य मम सुबुद्धित्वमज्ञात्वा दुर्बुद्धित्वं वदतस्तव अहो दुर्बुद्धितेति ध्वनयन्संबोधयति । हे दुर्बुद्धे इति ॥ ७१ ॥ पुनः कुपितो मंडन आह । दौवारिकानिति । त्वं दौवारिकान् द्वारपालान् वंचयित्वा चोरवत्कथमागतोऽसि । शंकरः प्रत्याक्षिपति । भिक्षुभ्योऽन्नं तेषां भागम् अदत्त्वा स्तेनवत्कथं भोक्ष्यसे । तथा च स्मृतिः । "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वा तु भुक्त्वा चांद्रायणं चरेत्" । इति ॥ ७२ ॥ एवं प्रत्युत्तरैः पराजितो वक्तुमशक्तः सन्मंडन आह । नेति । अस्मिन् कर्मणः श्राद्धकर्मणः काले मूर्खेण त्वया न संभाष्यः । भाषणं न कर्तव्यमित्यर्थः । इत्युक्तः शंकर आह । यतिभंगेन अवसाने पदभंगरूपेण भाषिणा भाषणकर्त्रा " न संभाष्यस्त्वहं मूर्खेणास्मिन्काले हि कर्मणः " इत्य

**दौवारिकान्वंचयित्वा कथं स्तेनवदागतः ॥ भिक्षुभ्योऽन्नमदत्त्वा त्वं स्तेनवद्भोक्ष्यसे कथम् ॥ ७२ ॥ न संभाष्यस्त्वहं मूर्खेणास्मिन्काले हि कर्मणः ॥ अहो प्रकटितं ज्ञानं यतिभंगेन भाषिणा ॥ ७३ ॥ यतिभंगे प्रवृत्तस्य यतिभंगो न दोषकृत् ॥ यतिभंगे प्रवृत्तस्य पंचम्यंतं समस्यताम् ॥७४॥ स्वाद्वन्नभक्ष्यकामेन वेषोऽयं योगिनां कृतः ॥ मन्ये मैथुनकामेन वेषोऽयं कर्मिणां कृतः ॥७५॥**

स्मिन्नर्धपद्ये प्रथमचरणे मूर्खं इत्यस्याग्रे चरणसमाप्तावपि पदसमाप्तिर्नास्ति तेन पादांते यतिभंगदोषो विद्यते । एवं च त्वया स्वज्ञानं प्रकटितम् । अशुद्धसंभाषणेन स्वकीयं पांडित्यं दर्शितम् ॥ ७३ ॥ मंडन आह । यतेः सन्यासिनस्तव भंगे पराजये प्रवृत्तस्य मम तत्सूचको यतिभंगो दोषकृन्न भवति । एवमुक्तो भगवानाह । यतिभंगे प्रवृत्तस्येत्यत्र । यतेः सकाशाद्भंगः इति पंचम्यंतं समस्यताम् । न तु षष्ठीतत्पुरुषः । तथा च यतेः सकाशाद्भंगे जयविपर्यये सति स्वपराजये सति यतिभंगो न दोषकृत् इति त्वद्वाक्यार्थः ॥ ७४ ॥ पुनः मंडन आह । स्वाद्वन्नं मिष्टान्नं यद्भक्ष्यं तदिच्छया योगिनां संन्यासिनां वेषस्त्वया कृतोऽस्ति । इति निशम्य भाष्यकृदाह । त्वयापि कर्मिणां कर्मकर्तॄणां गृहस्थानाम् अयं वेषः मैथुनस्य इच्छया कृतोऽस्ति ॥ ७५ ॥

एवं शंकरमंडनयोर्दुर्वाक्यं वदतोः सतोः यतिं प्रति दुर्वचः दुर्वाक्यं मा ब्रूहीति श्रीव्यासो मंडनं प्रत्याह ॥ ७६ ॥ अयं यतिरूपेण आगतोऽस्मि । अ[illegible]
[illegible] यतिम् एनं भोजनार्थं निमंत्रय इत्याज्ञतो मंडनः अनन्यगत्या यतिं निमंत्रयति । अथ मंडनः जलं स्पृष्ट्वा भिक्षार्थं निमंत्रितवान् ॥ ७७ ॥
[illegible]पूर्विकां वादभिक्षामिच्छन्नाह । वादभिक्षामिति । पराजये सति अन्योन्यशिष्यत्वं प्राप्तव्यम् उभाभ्यामिति शेषः ॥ ७८ ॥ न चेत् समर्थो नासि
चेत् त्वयाहं जितोऽस्मीति वद । इति श्रुत्वा मंडनोऽप्याह । मे मम जयः पराजयः शेषेणापि न भवेत् ॥ ७९ ॥ यद्यप्येवं तथापि आवयोर्वादो-
ऽस्तु तत्र व्यासजैमिनी साक्षिणौ भवेताम् । तौ च तव पत्नी सरस्वती मध्यस्था भवतु इत्यूचतुः ॥ ८० ॥ एवं श्रुत्वा विप्रो मंडनः पत्न्या मध्यस्थत्वेना-

दुर्वाक्यं वदतोरित्थं भाष्यकृन्मंडनाह्वयोः ॥ श्रीव्यासो मंडनं प्राह यतिं मा दुर्वचो वद ॥ ७६ ॥ अभ्यागतः स्वयं शंभुरत एनं निमंत्रय ॥ मंडनोऽथ जलं स्पृष्ट्वा भिक्षार्थं तं न्यमंत्रयत् ॥७७॥ मंडनं स यतिः प्राह वादभिक्षां प्रयच्छ मे ॥ अन्योन्यशिष्यभावत्वं प्राप्तव्यं हि पराजये ॥७८॥ वादं कुरु समर्थश्चेज्जितोऽस्मीति न चेद्वद ॥ श्रुत्वा तं मंडनोऽप्याह न शेषेणापि मे जयः ॥७९॥ तथाप्यस्त्वावयोर्वादो मध्यस्थौ व्यासजैमिनी ॥ तावूचतुश्च मध्यस्था पत्नी तेऽस्तु सरस्वती ॥ ८० ॥ श्रुत्वानंदयुतो विप्रो भोजयामास तान्मुनीन् ॥ पश्चात्तेषां गृहीत्वाज्ञां भुक्तवान्हर्षितः स्वयम् ॥ ८१ ॥ अंतर्हितौ तदा व्यासजैमिनी शंकरालये ॥ शंकरो नर्मदातीरे तस्थौ गेहे च मंडनः ॥ ८२ ॥ परेद्युः कृत्वाऽऽह्निककर्म मिश्रो ययौ सशिष्यः पुरवासिभिश्च ॥ शिवालयं तत्र यतिं प्रणम्य तस्थौ सभायां श्रुतिवादमिच्छन् ॥ ८३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे श्रीशंकराचार्यकथासारे पंचदशः सर्गः ॥१५॥

नंदयुक्तः सन् तान् मुनीन् शंकरव्यासजैमिनीन् भोजयामास । पश्चात्तद्भोजनांते तदाज्ञां गृहीत्वा मंडनः एतत्कालपर्यंतं कोऽपि वादी नागतः अद्य तु अयं प्राप्तः सम्यक् जातमिति हर्षितः सन् स्वयं भुक्तवान् ॥ ८१ ॥ तदा व्यासजैमिनी अंतर्हितौ । शंकरो नर्मदातीरे शिवालये स्थितो मंडनश्च गृहे स्थितोऽभवत् ॥ ८२ ॥ द्वितीयदिने मिश्रो मंडनो नित्यकर्म कृत्वा शिष्यैः सहितः सन् पुरवासिभिः सह शिवालयं ययौ तत्र यतिं शंकरं प्रणम्य श्रुतिवादं वेदविषयं वादम् इच्छन् सन् सभायां स्थितोऽभवत् । उपजातिवृत्तम् ॥ ८३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचदशः सर्गः ॥ १५ ॥

मिश्रं जित्वा गिरं जेतुं योगान्नृपतनुं गतः ॥ शंकरः षोडशे सप्ताशीतिपद्यैरितीर्यते ॥ १६ ॥ अथ प्रातः सर्वसभानिवेशानंतरं शंकरो मंडनमुवाच । सर्वश्रुतीनां तात्पर्यं ब्रह्मणि स्मृतमस्ति ॥ १ ॥ तद् ब्रह्मपरत्वं वेदशिरोभूतैः उपनिषद्वाक्यैः वेदगर्भाभिः श्रुतिसंगृहीताभिः युक्तिभिस्तर्कैर्मया प्रतिपाद्यते । तत्र सिद्धांतमाह । ब्रह्म सत्यं तद्व्यतिरिक्तं सर्वं जगत् मिथ्यास्ति ॥ २ ॥ शुक्तौ रजतं यथा भ्रांत्या भाति । तथा ब्रह्मणि अधिष्ठाने एतत् जगत् भ्रमरूपमेवास्ति । अत्र एतद्विषये मम संशयो नास्ति । कुतः एतद्विषये सर्वश्रुतयः प्रमाणं प्रमाणभूताः संति ॥ ३ ॥ दैवात् मम परा

श्रीदेशिकेंद्र उवाच ॥ अथ श्रीशंकराचार्यो मंडनं चाब्रवीदिदम् ॥ सर्वेषां श्रुतिवाक्यानां तात्पर्यं ब्रह्मणि स्मृतम् ॥ १ ॥ वाक्यैर्वेद शिरोभूतैस्तन्मया प्रतिपाद्यते ॥ युक्तिभिर्वेदगर्भाभिर्ब्रह्म सत्यं जगन्मृषा ॥ २ ॥ शुक्तौ रजतवद्भ्रांत्या ब्रह्मण्येतद्भ्रमात्मकम् ॥ अत्र मे संशयो नास्ति प्रमाणं श्रुतयोऽखिलाः॥३॥पराजयो यदि स्यान्मे तदापि शृणु मंडन ॥ वसीय वसनं शुक्लं परिहृत्य कषायकम् ॥ ॥ ४ ॥ भाष्यकारवचः श्रुत्वा मंडनो वाक्यमब्रवीत् ॥ मोक्षः कर्मभिरेव स्याज्ज्ञानं व्यर्थमतो मतम् ॥ ५ ॥ यावज्जीवं त्यजेन्नैव कर्म वेदप्रचोदितम् ॥ एवं वादे कृते वेदवाक्यैर्न्यायसमन्वितैः ॥ ६ ॥ पराजयो यदि स्यान्मे तदा त्यक्त्वा गृहाश्रमम् ॥ त्वच्छिष्यत्वमुपादाय करिष्ये दंडधारणम् ॥ ७ ॥ अत्र मे साक्षिणी भार्या जयाऽजयफलप्रदा ॥ एवं कृतपणौ तौ द्वौ वेदवादे समुद्यतौ ॥८॥ आह्निकं प्रत्यहं कृत्वा वादं व्यतनुतां समम् ॥ एवं विजेतुमनसोर्निधाय गलयोः स्रजौ ॥ ९ ॥

जयः । अद्वैतसिद्धांतव्याघातो यदि स्यात्तदा मत्कर्तव्यं हे मंडन शृणु । काषायं वासः परित्यज्य शुक्लं वसनं वसीय आच्छादनार्थमंगीकुर्याम् ॥ ४ ॥ मंडनवाक्यमाह । मोक्षः कर्मभिरेव स्यात् । अतो हेतोर्ज्ञानं वेदांतमार्गो व्यर्थं निष्फलो मतं निश्चितः ॥ ५ ॥ “ यावज्जीवमग्निहोत्रं जुहोति ” इति वेदप्रचोदितं कर्म यावज्जीवं न त्यजेत् । एवं युक्तिसहितैर्वेदवाक्यैर्वादे कृते सतीत्युत्तरान्वयि ॥ ६ ॥ दंडधारणं तल्लक्षितं संन्यासम् ॥ ७ ॥ अत्र उभयोर्वादे मम भार्या सरस्वती जयाऽजयफलप्रदा जयपराजयसूचिका साक्षिणी भवतु । एवमित्युत्तरान्वयि ॥ ८ ॥ समन्यूनाधिक्यरहितं वादं व्यतनुतां

विस्तारितवंतौ । एवं विजेतुं मनो ययोस्तयोर्यतिमंडनयोः कंठयोः स्रजौ माले निधाय भारती सरस्वती आहेत्यन्वयः ॥ ९ ॥ वां युवयोः कंठयोः म्लानमालैवापजयसूचिकेत्यर्थः ॥ १० ॥ एवमुक्त्वा गृहं गत्वा दिनार्द्धके पाकं कृत्वा यतिं शंकराचार्यं पतिं मंडनं समेत्य भोः स्वामिन् भिक्षार्थम् । भो आर्यज हिममित्रसुत भोक्तुं भोजनार्थम् आगम्यतां युवाभ्यामिति शेषः । इति उक्त्वा आभ्यां यतिपतिभ्यां भिक्षाम् अशनं चादादित्यन्वयः । सा सरस्वतीत्यध्याहारः । एवं सरस्वत्या दत्तभिक्षाभोजनयोर्मित्रवत्परस्परं सत्कुर्वतोर्यतिमंडनयोर्वादः परमाश्चर्यपदमासीदिति भावः ॥ ११ ॥ [illegible] रान्वयि ॥ १२ ॥ स्वं निजं आत्मानं देहम् । वेदविषयको विवादः छलं दुर्वाक्यं क्रोधश्च ताभ्यां रहितः ॥ १३ ॥ श्रौतः श्रुतिप्रमाणको यो वादः सः

भारत्याह मया माले कंठयोरर्पिते हि वाम् ॥ म्लाना कंठे भवेद्यस्य तस्य मन्ये पराजयम् ॥ १० ॥ एवमुक्त्वा गृहं गत्वा पाकं कृत्वा दिनार्द्धके ॥ यतिं पतिं समेत्याह स्वामिन्भिक्षार्थमार्यज ॥ ११॥ भोक्तुमागम्यतामुक्त्वेत्याभ्यां भिक्षाशने अदात् ॥ एवं तयोः महा वादं श्रोतुं ब्रह्मादयः सुराः ॥ १२ ॥ अंतर्धाय स्वमात्मानं सभायां तत्र संस्थिताः ॥ तयोर्वेदविवादोऽभूच्छलक्रोधविवर्जितः ॥१३॥ नानायुक्तियुतः श्रौतो महद्विस्मयकारकः ॥ अभवत्परमो वादः शास्त्रमेव महात्मनोः ॥ १४ ॥ तयोः षड्दिनपर्यन्तं विवादः समो ऽभवत् ॥ सप्तमे दिवसे प्राह मंडनः शंकरं प्रति ॥१५॥ व्यक्तं जीवेश्वरैक्यं यद्भवता प्रतिपाद्यते ॥ तत्र नो श्रुतिसिद्धांतं दृश्यतेऽतः स उच्यताम् ॥ १६ ॥

शास्त्रमेवाभवत ॥ १४ ॥ समो जयाजयरहितः ॥ १५ ॥ भवता त्वया जीवेश्वरयोरैक्यं यत्प्रतिपादितं तत्र श्रुतिसिद्धांतः श्रुतिप्रामाण्यं [illegible] नास्त्येव अयं भावः । न हि श्रुतिशिरांसि अद्वैतसिद्धांते प्रमाणानि भवंति । शुद्धबुद्धोदासीनतयोपेक्षणीयं तत्कर्तृत्वं [illegible] शिनां अप्रयोजनत्वप्रसंगात् । किं च । लौकिकवाक्यानि यथा 'अग्निर्हिमस्य भेषजम्' इत्यादीनि प्रत्यक्षाद्यनधिगत[illegible] । न [illegible] णानि भवंति । तथा भूतार्थानुवादकत्वेन सापेक्षत्वात् उपनिषदां निरपेक्षो यः श्रुतिरिति नैरपेक्ष्यरूपं प्रामाण्यं [illegible]

ष्ठितवस्तुनः प्रतिपादनासंभवात् ब्रह्मप्रतिपादने च हेयोपादेयरहिते पुरुषार्थाभावादुपनिषदां प्रमाणत्वाभावेन भवत्सिद्धांतो व्याहतो भवति । अतः स उच्यता मिति ॥ १६ ॥ इति श्रुत्वा शंकर उत्तरमाह । उद्दालकप्रभृतयः श्वेतकेतुप्रमुखान् प्रति यदैक्यं जीवेश्वरयोस्तत् सम्यक् ग्राहयंति अनुभवारूढं कुर्वन्ति हि इति निश्चयेन तदेव प्रमाणमित्यर्थः । ' अयमात्मा तत्त्वमसि श्वेतकेतो ' इति दशवारमुपदेशश्छांदोग्ये कृतः । अत्र मुखप्रभृतिपदाभ्यां जनकयाज्ञवल्क्यादयो गृह्यंते । तथा चाह जनकं प्रति याज्ञवल्क्यः । " अभयं वै जनक प्राप्तोऽसि तदात्मानमेव वेदाहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् तत्र को मोहः कः शोक एकत्वमनुपश्यतः " इत्यादि । अत्रायमभिसंधिः । पुंवाक्यदृष्टांतेन भूतार्थतया सापेक्षत्वेनोपनिषदामप्रामाण्यापत्तिमभिप्रेत्य ब्रह्मणि प्रमाणं नास्तीति वदता त्वया वक्तव्यं किं पुंवाक्यानामप्रामाण्यद्योतकं सापेक्षत्वम् । भूतार्थत्वेन । उत पौरुषेयत्वेन । आद्ये प्रत्यक्षादीनां प्रमाणानामपि भूतार्थतया सापेक्षत्वेन प्रामाण्याभावप्रसंगः । द्वितीये तु यत्रार्थज्ञानपूर्वकं वाक्यज्ञानं शब्दसृष्टौ कारणं तत्र पौरुषेयत्वनियमेन । ' धाता यथापूर्वमकल्पयत् । अस्य महतो भूत

श्रुत्वेत्थं शंकरोथाह श्वेतकेतुमुखान्मुनीन् ॥ उद्दालकप्रभृतयो ह्यैक्यं संग्राहयंति तत् ॥ १७ ॥

स्य निश्वसितमेतद्यदृग्वेदः ' इत्यादि श्रुतिषु अर्थज्ञानपूर्वकवेदजननानुपलंभात् । अपौरुषेयाणां वेदांतानां प्रत्यक्षादीनामिव भूतार्थानामपि नाप्रामाण्यम् । अनधिगताबाधितविषयत्वं हि प्रामाण्यम् । तथा च ब्रह्मात्मभावस्य परिनिष्ठतवस्तुस्वरूपत्वेऽपि विस्मृतस्यात्मभावस्य तत्त्वमसीत्यादिशास्त्रमंतरेणानवगम्यमानत्वात्प्रत्यक्षादिविषयत्वाभावेन अनधिगतगंतृत्ववता द्वैतबाधेनाविर्भूतैक्यविषयाणां च वेदांतानां प्रत्यगभिन्ने ब्रह्मणि अनधिगताबाधितविषयत्वरूपं प्रामाण्यमवश्यमास्थेयम्। न च हेयोपादेयरहितत्वादपुरुषार्थत्वमिति वाच्यम्।हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशनिवृत्तिपूर्वकपरमानंदप्राप्त्या पुरुषार्थत्वसिद्धेः तत्र द्विविधं हि उपादेयम् । किंचित् अप्राप्तं ग्रामादि । किंचित्पुनः प्राप्तमपि विभ्रमवशादप्राप्तमिवावगतं यथा स्वग्रीवास्थं कंठभूषादि । एवं हेयमपि द्विविधम् । किंचिदहीनं यथा—व्यावहारिकसर्पादि । किंचित्पुनर्हीनं यथा—चरणाभरणे समारोपितसर्पादि। एवं च ब्रह्मात्मभावस्य अत्र हेयोपादेयत्वाभावेऽपि अविद्यादशायां समारोपितशोकादेस्तत्त्वमस्यादिवाक्यजनिततत्त्वज्ञानावगतिपर्यंतमनिवृत्तौ प्राप्तमपि आनंदरूपमप्राप्तमिव प्राप्तं भवति । तथा त्यक्तमेव शोकादि

अत्यक्तमिव त्यक्तं भवतीति तस्य परमपुरुषार्थत्वसिद्धिरिति ॥ १७ ॥ नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति वेदस्य क्रियापरत्वाभिधा नाद्भूतार्थविषयत्वेनाक्रियार्थानामुपनिषदामानर्थक्यं स्यात् । तत्परिहारार्थं हुंफडादिवज्जपादिक्रियार्थत्वेन वेदांतानां सार्थक्यमिति चेन्न । वेदांतानामर्थैश्च तीतिसंभवेन अर्थशून्यहुंफडादीनामनन्यगत्या जपाद्यर्थत्वमिव न तेषां तदर्थत्वम् । न च वेदांतानां यजमानप्रशंसारूपत्वेन सार्थक्यमिति वाच्यम् । याग प्रकरणपठितानामादित्यो यूपो यजमानः प्रस्तर इत्यादीनामिव प्रकरणांतरपठितानां तत्त्वमस्यादिवाक्यानां यजमानप्रशंसारूपत्वानुपपत्तेः । न हि महा वाक्यानां जीवेषु ब्रह्मसादृश्योपदेशेन ऐक्यबोधकत्वं व्याहतमिति युक्तम् । तथा च जीवानां चेतनत्वेन साम्यस्य पूर्वसिद्धत्वात्पुनरुपदेशकरणे महावाक्या देरानर्थक्यप्रसंगात् । ब्रह्मगुणैः सार्वज्ञसार्वात्म्यसर्वशक्तित्वरूपैर्जीवानां सादृश्ये तु तेषां परमात्मस्वरूपत्वापत्त्या निर्विवादाभेदसिद्धेः । ब्रह्मस्वरूपत्वाभावेन केवलसाम्ये तु सारूप्यमुक्तेर्विनाशित्वान्न परमानंदरूपत्वम् । न च किंचिज्ज्ञोऽहमीश्वराद्भिन्न इति प्रत्यक्षेण जीवब्रह्माभेदो बाधित इति वाच्यम् । भेदा

इत्यादिबहुभिर्वाक्यैर्भाष्यकारेण स द्विजः ॥ जितस्तूष्णीं बभूवाथ सभामध्ये व्यवस्थितः ॥ १८ ॥

भेदयोरुपाध्यवलंबनानवलंबनकृतत्वेन ईश्वरभेदप्रत्ययस्य गृहच्छिद्रगतोष्णादिप्रत्ययस्येवोपाध्यभिमानपरित्यागेन निवर्त्यमानत्वादीश्वराभेदस्य निष्प्रत्यूह सिद्धेः । यद्यपि विधिश्रवणाभावेन ब्रह्मोपासनानवबोधनाद्यावज्जीवमग्निहोत्रं जुहोतीति विधिपरित्यागेन ब्रह्मोपास्तिर्न युक्ता तथापि " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः । अयमात्माऽपहतपाप्मा सोऽन्वेष्टव्यः । स विजिज्ञासितव्यः । आत्मेत्येवोपासीत । ब्रह्मविद्ब्रह्मैव भवति " इत्याद्युत्तर कांडविधिना पूर्वकांडस्थाग्निहोत्रविधेर्जीवदशापन्नस्य बाधसंभवात् । अग्निहोत्रविधिनानुष्ठितेन शुद्धांतःकरणस्य मुमुक्षोरग्निहोत्रपरित्यागेन कृतसंन्या सस्य कैवल्यप्रापकं ब्रह्मोपासनमेव युक्तम् । ननु श्रवणादिक्रियाजन्यत्वेन कैवल्यस्याग्निहोत्रादिक्रियाजन्यस्वर्गादिसाम्यतया विशेषाभावेन निर्विशेषब्रह्मोपा सनस्यानावश्यकत्वमिति चेत् न । श्रवणादिविचारजन्यस्य कैवल्यस्य " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत " इत्यादिना सकलक्रियाकलापा दिबाधकत्वात् । अपूर्वद्वारा क्रियाजन्यस्य क्षयिष्णुत्वनियमेन कैवल्यस्य तु अपूर्वजन्यत्वाभावात् । ' न स पुनरावर्तते' इत्यादिश्रुत्याऽक्षयिष्णुत्वप्रतिपादना

त्तदर्थं ब्रह्मोपासनस्यैवावश्यकत्वम् । न च "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाक शीति" इति श्रुत्या जीवेश्वरभेदस्य प्रतिपादनात्कथं तदैक्यजनकस्य ब्रह्मोपासनस्यावश्यकत्वमिति वाच्यम् । प्रत्यक्षसिद्धभेदस्य ज्ञातस्य ज्ञापकत्वेनाप्रामा ण्यापत्तेः । अन्यो जीवः पिप्पलं कर्मफलम् अस्वादु अपि स्वादु सुंदरं मत्वा अत्ति भुंक्ते इत्यर्थपर्यवसन्नायाः श्रुतेः जीवेश्वरभेदानुपपादकत्वेन "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुतौ भेददर्शनस्य जन्ममरणाद्यनर्थजनकत्वश्रवणाच्चाभेदेन ब्रह्मोपासनस्यावश्यकत्वोपपत्तेः । नन्वेवमपि कर्तृ त्वभोक्तृत्वादेः प्रतीतौ कथमकर्तृत्वादिभावनया ब्रह्मोपासनं कर्तुं सुशक्यमिति चेन्न । तत्र यथाऽयःपिंडस्य स्वतः दग्धृत्वाभावेऽपि वह्नितादात्म्याद्दग्धृत्व मिव । स्वतः कर्तृत्वभोक्तृत्वरहितस्यात्मनः शरीरबुद्धितादात्म्याध्यासेन कर्तृत्वादिप्रतीतावपि तन्निवृत्त्यर्थकस्याकर्तृभोक्तृसर्वगतसच्चिदानंदस्वरूपात्मोपासन स्यैवावश्यकत्वम् । ननु अपूर्वद्वारा क्रियाजन्यस्य स्वर्गादेः क्षयिष्णुत्वं न युक्तम् । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति श्रुति

भर्तारं स्वं जितं ज्ञात्वा श्रौतसिद्धांतयुक्तिभिः ॥ भाष्यकारेण यतिना जहर्षांतः सरस्वती ॥ १९ ॥ प्रतिज्ञावसरे भर्तुः कंठे बद्धा परीक्षितुम् ॥ माला सा म्लानतां प्राप्ताऽसूचयच्छांकरं जयम् ॥ २० ॥ अब्रवीत्तावुभौ वाणी भिक्षां प्रकुरुतं युवाम् ॥ अथाह शंकरं वाणी शापाद्दुर्वाससस्त्वहम् ॥ २१ ॥

विरोधादिति चेन्न । तादृशश्रुतेः रोचनार्थकत्वेनाक्षयफलानभिसूचकत्वात् । अन्यथा । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यनुमानगर्भितश्रुतिविरोधः स्यात् । नन्वेवं सर्वथा द्वैतस्य ब्रह्मणि मिथ्यात्वे अन्यत्र कुत्रापि सत्यत्वं स्यात् । अन्यथाऽत्यंतासत्यस्य शशविषा णतुल्यस्य जगतः कथं ब्रह्मणि भाससंभव इति चेन्न । अध्यासस्य पूर्वप्रतीतिमात्रसापेक्षितस्य अनादिजगत्परंपरया उत्तरोत्तरारोपसंभवेन प्रतिबिंबा काशे महाकाशगतनैल्याध्यास इवात्यंतासतोपि जगतः आत्मनि प्रतिभाससंभवेन च निष्प्रत्यूहाद्वैतसिद्धिरित्यलमनंतगुणशंकराचार्यकृतवादकथावर्णनेन । प्रकृतमनुसरामः । इत्यादि बहुवाक्यैर्भाष्यकारेण जितो द्विजो मंडनः सभामध्ये स्थितः सन् तूष्णीं बभूव ॥ १८ ॥ पत्युः पराजये अहं शापाद्विमुक्ता भविष्यामीति हर्षकारणमिति भावः ॥ १९ ॥ भर्तुः प्रतिज्ञावसरे प्रतिज्ञाहानौ सत्यां जहर्षेति पूर्वान्वितम् ॥ २० ॥ युवाम् उभौ संन्यासिनौ भिक्षां

प्रकुरुतम् । इति अब्रवीत् । न तु पूर्ववत् यतेः भिक्षां पत्युर्भोजनमित्यब्रवीदित्यर्थः । शापादिति परेण योज्यम् । अहं दुर्वाससः शापान्मुक्ता सती यथेच्छं गच्छामि ॥ २१ ॥ इत्युक्त्वा गंतुकामाऽभवत् । इति संबंधः ॥ २२ ॥ यदा गंतुकामा तदा मंडनस्तूष्णीमेव तां पत्नीं ददर्शेति योजना । उत्तरार्द्धमुत्तरान्वयि ॥ २३ ॥ मंत्रेण वनदुर्गामंत्रेण बद्ध्वा ॥ २४ ॥ भविष्यति कालांतरे इति शेषः ॥ २५ ॥ श्रुतेः शिरः शिरोभूतं परं श्रेष्ठम् अद्वैतमतं

मानुषीत्वमुपायाता मुक्ता त्वद्दर्शनाद्यते ॥ गच्छाम्यहं यथाकामामि त्युक्त्वा सा मुनिं तदा ॥ २२ ॥ गंतुकामां तदा मिश्रस्तूष्णीमेव ददर्श ताम् ॥ भाष्यकारस्तु तां देवीं ज्ञात्वा साक्षात्सरस्वतीम् ॥ २३ ॥ मनसा जेतुकामस्तां बद्ध्वा मंत्रेण चाब्रवीत् ॥ जानामि त्वां भगवतीं ब्रह्मभार्यां सरस्वतीम् ॥२४॥ त्वयात्र स्थीयतां देवि गमनं तु भविष्यति ॥ एवं भाष्यकृतोक्ता सा स्थिता वाक्यं प्रतीक्षती ॥ ॥२५॥ इत्थं विनिर्जित्य स मंडनाख्यं श्रौतैः सुवाक्यैर्बहुयुक्तिमिश्रैः ॥ श्रुतेः शिरोऽद्वैतमतं धरायां संस्थापयामास परं यतींद्रः ॥२६॥
श्रीदेशिकेंद्र उवाच ॥ मंडनः पुनरप्याह शंकराचार्यमादरात् ॥ जितोऽहं तु त्वया स्वामिन्विषादस्तत्र नास्ति मे ॥ २७ ॥ तथापि संशयश्चित्ते वर्तते तं निवारय ॥ प्रोक्तं जैमिनिना कर्म स्वे सूत्रे तत्कथं वद ॥ २८ ॥ नो वदेदन्यथा किंचित्सर्वज्ञो भगवान्मुनिः ॥ अथाह शंकराचार्यो मंडनं संशयान्वितम् ॥ २९ ॥ शृणु विप्रवराद्य त्वमाशयं जैमिनेर्मुनेः ॥ दृष्ट्वा लोकान्दुराचारान्विपथैः कलुषांतरान् ॥ ३० ॥ तेषां चित्तविशुद्ध्यर्थं प्रोक्तवान्कर्म जैमिनिः ॥ चित्तशुद्धिं विना नैव ब्रह्माद्वैतं प्रकाशते ॥३१॥ तस्य ज्ञानं विना मोक्षो नैवेति श्रुतिरब्रवीत् ॥ अवश्यं कर्म कर्तव्यं न त्याज्यं कर्हिचिज्जनैः ॥ ३२ ॥ नैव कर्म विना कश्चित्फलं दातुं नृणां क्षमः ॥ एवं कर्मसु निष्ठानां स्वयमेवेश्वरे परे ॥ ३३ ॥

पृथिव्यां स्थापयामास ॥ २६ ॥ २७ ॥ प्रोक्तम् अवश्यकर्तव्यत्वेन विहितम् ॥ २८ ॥ अन्यथा व्यर्थम् ॥ २९ ॥ दृष्ट्वेत्याद्युत्तरान्वितम् । ॥ ३० ॥ ३१ ॥ तस्य ब्रह्मणः । “ तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय ” इति श्रुतिरब्रवीत् ॥ ३२ ॥ कश्चिदीश्वरोऽपि । एवमाधुन

रान्वयि ॥ ३३ ॥ तस्य ईश्वरस्याज्ञा वेदोक्तकर्मरूपा तस्याः पालनेन चित्तशुद्धिस्ततः परे ईश्वरे भक्तिः तया च वेदांतश्रवणादौ श्रद्धा चोत्पद्यते । ॥ ३४ ॥ तया श्रद्धया सत्संगादात्मलाभो भवति । उत्तरार्द्धमुत्तरान्वयि ॥ ३५ ॥ दध्यौ ध्यानं कृतवान् ॥ ३६ ॥ ३७ ॥ ते त्वया ।

चित्तशुद्ध्या भवेद्भक्तिस्तदाज्ञापरिपालनात् ॥ वेदांतश्रवणे भक्त्या श्रद्धा चोत्पद्यते ततः॥३४॥ श्रद्धयैवात्मलाभस्तु सत्संगाज्जायते ध्रुवम्॥श्रुत्वेत्थं भाष्यकारस्य वचनं मंडनस्तदा॥३५॥जैमिनिं मनसा दध्यौ निमील्य नयनद्वयम्॥ध्यातश्चाविर्बभूवाथ जैमिनिस्तपसां निधिः ॥ ३६ ॥ अर्घ्याद्यैः पूजितः सम्यक्तमुवाच द्विजोत्तमम् ॥ सत्यं सत्यं पुनः सत्यं वचनं शंकरस्य भोः ॥ ३७॥ संदेहो नैव कर्तव्यो भाष्यकारवचःसु ते ॥ तथैव वर्णयामास तवाग्रे शंकरो मुनिः ॥ ३८ ॥ सनकाद्याः कृते ज्ञानं दत्तस्त्रेतायुगे व्यधात् ॥ द्वापरे मद्गुरुर्व्यासो ज्ञानदः शंकरः कलौ ॥ ३९ ॥ इत्येवं मंडनं वाक्यैर्बोधयित्वा मुनिर्ययौ ॥ मंडनोपि तदा नत्वा शंकरं प्राह नम्रधीः ॥ ४० ॥ विदितोऽसि भवान्साक्षाच्छिव एव धरातले ॥ ज्ञानमार्गप्रवृत्त्यर्थमवतीर्णोऽसि मायया ॥ ४१ ॥ मम भाग्यवशाज्जातं दर्शनं तव सद्गुरो ॥ अतीवकर्मठोऽहं तु कर्मभिर्ग्रथितांतरः ॥ ४२ ॥ स्वयमेत्य त्वया स्वामिन्मोचितः कर्मबंधनात् ॥ संसारतापतप्तोऽहं शांतिं मे कुरु तत्त्वतः ॥ ४३ ॥ अहं वेदविदां श्रेष्ठो नान्योऽस्ति सदृशो मया ॥ कविः सर्वज्ञ इत्यादिनानाहंकारवांश्च यः ॥ ४४ ॥ सोऽहं सर्वं परित्यज्य त्वामेव शरणं गतः ॥ अनुशाधि च मां भृत्यं शिष्यत्वेन गृहाण वै ॥ ४५ ॥ मंडनस्य वचः श्रुत्वा भाष्यकारोऽतिहर्षितः ॥ सरस्वतीं तस्य पत्नीं समीपस्थां समैक्षत ॥ ४६ ॥ निर्जितं स्वपतिं ज्ञात्वा यतिमाह सरस्वती ॥ त्वया मे विजितो भर्ता न जिताहं यतीश्वर ॥ ४७ ॥ तस्मान्मां जय वादेन भर्तुरर्द्धांगरूपिणीम् ॥ जितायां मयि भोः स्वामिञ्जितो भर्ता त्वयाऽखिलः ॥ ४८ ॥

तथैव सत्यमेव॥ ३८॥सनकाद्याः कृतयुगे ज्ञानं व्यधुः स्थापितवंत इति क्रियाविपरिणामेन योज्यम् । दत्तो दत्तात्रेयः । कलौ शंकरो ज्ञानदोऽस्ति ॥ ३९॥ ॥ ४० ॥ विदितोऽसि मयेति शेषः ॥ ४१ ॥ ४२ ॥ तत्त्वतस्तत्त्वोपदेशेन ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ अर्द्धांगरूपिणीं ॥

" आत्मनो वा अर्द्धं पत्नी " इति श्रुतेः ॥ ४८ ॥ ४९ ॥ गार्ग्या याज्ञवल्क्यस्य वादो बृहदारण्ये प्रसिद्धः ॥ ५० ॥ सुलभानाम्न्या सह जनकस्य वादो मोक्षधर्मे प्रसिद्धः ॥ ५१ ॥ पूर्वार्द्धं पूर्वान्वितम् । तयोर्वादः आवश्यकं स्नानाद्यावश्यकं विना अनिशं सततं सप्तदशाहपर्यंतमभूत् ॥ ५२ ॥

सरस्वत्या वचः श्रुत्वा शंकरस्तामथाब्रवीत् ॥ महद्भिः स्त्रीजनैर्वादो न कर्तव्यः कथंचन ॥ ४९ ॥ सरस्वती निशम्येत्थं शंकरं पुनरब्रवीत् ॥ गार्ग्या सार्द्धं कृतो वादो याज्ञवल्क्येन धीमता ॥ ५० ॥ तथा सुलभया सार्द्धं जनकेन कृतः पुरा ॥ श्रुत्वैवं भाष्यकारोऽपि वादं चक्रेऽतिहर्षतः ॥ ५१ ॥ सूक्तिभिर्वेदगर्भाभिः सरस्वत्या समं विभुः ॥ तद्वादोऽह्नां सप्तदश त्वावश्यकमृतेऽनिशम् ॥ ५२ ॥ ज्ञात्वाऽजय्यं शंकरं वाग्जयोपायमचिंतयत् ॥ अयं बाल्याद्यतिर्जातो ब्रह्मचर्ये दृढे स्थितः ॥ ५३ ॥ कामशास्त्रं न जानाति तदेवास्मै तु पृच्छ्यताम् ॥ मनसैवं विनिश्चित्य यतिं प्राह सरस्वती ॥ ५४ ॥ कति कामकलाः संति वद मां त्वं यतीश्वर ॥ एवं पृष्टस्तया चित्ते चिंतयामास भाष्यकृत् ॥ ५५ ॥ नायं धर्मो यतींद्राणां तथापीयं तु पृच्छति ॥ दातव्यमुत्तरं चास्यै कथं तर्हीति तां पुनः ॥ ५६ ॥ शंकरः प्राह मासांते दास्ये प्रत्युत्तरं सति ॥ तथेति भारती प्राह सशिष्यं शंकरस्ततः ॥५७॥ निर्गत्याऽमरुकाख्यस्य देशं प्राप्तो यदा तदा ॥ मृतो राजा त्वमरुकस्तस्य राज्ञः कलेवरम् ॥ ५८ ॥ वृक्षमूले स्थितं नानामंत्रिभिः परिवारितम् ॥ दृष्ट्वा दूराद्योगदृष्ट्या शंकरस्तपसांनिधिः ॥ ५९ ॥ पद्मपादमुवाचादोऽमरुकाख्यो मृतो नृपः ॥ प्रविश्य तस्य देहेऽहं नृपो भूत्वा सनंदन ॥ ६० ॥ स्वल्पैरहोभिश्चाभ्यस्य कामशास्त्रमशेषतः ॥ प्रवेक्ष्यामि निजं देहं सत्यमेव न संशयः ॥ ६१ ॥

अजय्यं जेतुमशक्यम् ॥ ५३ ॥ पृच्छ्यतां मयेति शेषः ॥ ५४ ॥ ५५ ॥ इतीत्थं चिंतयामासेति योज्यतां पुनरिति परान्वयि ॥ ५६ ॥ सशिष्य इत्युत्तरान्वयि ॥ ५७ ॥ अमरुकाख्यस्य अमरुसिंहाभिधस्य राज्ञः । तस्य राज्ञ इत्युत्तरान्वयि ॥ ५८ ॥ दृष्ट्वेत्युत्तरान्वितम् ॥ ५९ ॥ पद्मपादं प्रति

गुरोरेवं वचः श्रुत्वा शिष्यः प्रोवाच शंकरम् ॥ सर्वज्ञस्य तव स्वामिन्किं स्यादविदितं गुरो ॥ ६२ ॥ मत्स्येंद्रोऽपि गुरुर्योगी गोरक्षं
देहरक्षणे ॥ नियुज्य कस्यचिद्राज्ञो मृतस्य तनुमाविशत् ॥ ६३ ॥ तत्रारमद्वरस्त्रीभिर्विस्मृत्यात्मानमात्मवित् ॥ निजं देहं निधा
कृत्वा गोरक्षो योगमाश्रितः ॥ ६४ ॥ ररक्षैकेन तद्देहं गुरुमन्येन चाययौ ॥ राजरूपी गुरुर्यत्र मंत्रिवत्तत्र संस्थितः ॥ ६५ ॥ नाना
शास्त्रोपदेष्टाभूदेकांते ज्ञानमेकदा ॥ उपदेश्याथ गोरक्षो गुरुं निन्ये निजां तनूम् ॥ ६६ ॥ ईदृशो विषयस्नेहो यतीनां परमो रिपुः ॥
तद्विवक्तुं समर्थोऽसि कृत्याकृत्ये च सार्थतः ॥ ६७ ॥ पद्मपादवचः श्रुत्वा शंकरो गुरुरब्रवीत ॥ शृणु सौम्याभिगीतं यथार्थं वचनं
मम ॥ ६८ ॥ प्रभवंति वशीकर्तुं नैव कामा ह्यसंगिनम् ॥ नारायणं कृष्णरूपं गोपवध्वः पुरा यथा ॥ ६९ ॥ नित्यं ब्रह्मात्मनिष्ठस्य
सर्वा सुखमयी कृतिः ॥ ब्रह्महत्याश्वमेधाभ्यां न लेपस्तस्य धीमतः ॥ ७० ॥ अतो मे कामशास्त्रस्यानुभूतिर्नैव क्षतिः न हि ॥ एवं
मुक्त्वा गिरेः शृंगं गत्वा शिष्यानुवाच सः ॥ ७१ ॥ पालयतां भोः शरीरं मे यावदागमनं मम ॥ कामशास्त्रं समभ्यस्यायास्ये शीघ्रं
निजां तनुम् ॥ ७२ ॥ एवमुक्त्वाखिलाञ्छिष्यान्योगशक्त्याथ शंकरः ॥ परित्यज्य निजं देहं राजदेहमुपाविशत् ॥ ७३ ॥

अदः वचनम् उवाच । प्रविश्येत्यादि सार्धान्वयः ॥ ६० ॥ ६१ ॥ शिष्यः पद्मपादः । अविदितम् अज्ञातं किं अपि तु सर्वं विदितमेव ॥ ६२ ॥
॥ ६३ ॥ निजं देहमित्याद्युत्तरान्वयि ॥ ६४ ॥ मंत्रिवत् प्रधानवत् ॥ ६५ ॥ ६६ ॥ तत् सरस्वत्युत्तरम् । विशेषेण वक्तुं समर्थोऽसि । नाना
यथार्थत्वेन कृत्याकृत्ये कार्याकार्ये च समर्थोऽसि ॥ ६७ ॥ अविगीतम् । अनिंद्यम् ॥ ६८ ॥ असंगिनम् अनासक्तं कामा विषया वशीकर्तुं समर्था न
भवंति । " तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः । गुणा गुणेषु वर्तंत इति मत्वा न सज्जते " इति गीतोक्तेः । तत्र दृष्टांतः यथा पूर्वं गोपिकाः कृष्णरूपं
नारायणं वशीकर्तुं न समर्थास्तद्वत् ॥ ६९ ॥ नित्यं सदा ब्रह्मरूपे आत्मनि निष्ठा यस्य तस्यात्मविदः सर्वाकृतिश्चेष्टा सुखमयी सुखप्रचुरा भवति ॥ ७० ॥
अनुभूतिः अभ्यासेन संपादनम् ॥ ७१ ॥ ७२ ॥ योगशक्त्या परकायप्रवेशरूपया ॥ ७३ ॥

॥७४॥सौभाग्यमंगलं हरिद्राकुंकुमसिंदूरमंगलसूत्रादिधारणम् । तूर्यस्वनैरित्यत्रोत्तरान्वयि ॥७५॥ नृपः नृपरूपी शंकरः॥७६॥अपूर्वगुणसंपन्नं पूर्वं ये गुणाः राजनिष्ठसंधिविग्रहादयस्तैरसंपन्नम् अयुक्तम् ॥ ७७ ॥ चित्रगुणो विचित्रगुणवान् । पूर्वम् अयम् इत्थं कृती कुशलो नासीत् । अद्य गुणाकरः गुणसमुद्रः कथमस्ति ॥ ७८ ॥ अयं नृपेंद्रः कश्चिद्योगी दृश्यते लक्ष्यते स्वदेहं त्यक्त्वा राजदेहं प्रविष्टोऽस्ति । अयं नृपदेहात्स्वदेहं यथा न यास्यति तथाऽस्माभिरेको मुख्यः प्रयत्नः कर्तव्य इत्यर्थः॥७९॥ मंत्रिभिरेकांते एवं निश्चित्य भुवि भृत्याश्चाराः प्रेषिताः । कथंभूताः । भवद्भिः प्राणरहितानि शरीराणि प्रदह्यंतामिति

शनैरुन्मील्य नयने राजदेहस्तदोत्थितः ॥ प्राप्तजीवं नृपं दृष्ट्वा तुष्टाः स्युर्मंत्रिणः प्रजाः ॥७४ ॥ राजपत्न्यपि संतुष्टा चक्रे सौभाग्य मंगलम् ॥ तूर्यस्वनैर्नृपं नीत्वा मंत्रिणो राजमंदिरम् ॥ ७५ ॥ उत्सवं परमं चक्रुः स्थापयित्वा नृपासने ॥ प्राप्तराज्यो नृपः पृथ्वीं पालयामास धर्मतः ॥ ७६ ॥ अपूर्वगुणसंपन्नं नृपं दृष्ट्वाथ मंत्रिणः ॥ संशयाविष्टमनसः प्रोचुरित्थं परस्परम् ॥ ७७॥ अहो चित्रगुणो राजा रूपशीलयुतः कृती ॥ नेत्थं पूर्वमयं चासीत्कथमद्य गुणाकरः ॥ ७८ ॥ योगी कश्चिद्दृश्यतेऽयं नृपेंद्रस्त्यक्त्वा देहं राजदेहं प्रविष्टः ॥ नायं यास्यत्यात्मदेहं नृपांगात्कार्यो यत्नोऽस्माभिरेकस्तथैव ॥ ७९ ॥ मंत्रिभिः प्रेषिता भृत्या निश्चित्यैवं स्वां भुवि ॥ व्यसुदेहाः प्रदह्यंतां यत्नादिति सुशासिताः ॥ ८० ॥ अथ राज्यधुरं न्यस्यामात्येषु बुभुजे नृपः ॥ मनोहराः स्त्रियो बह्वीः सुंदरीर्वामलोचनाः ॥ ८१ ॥ तत्र कामकलाः सर्वाः कामशास्त्रानुरोधतः ॥ वात्स्यायनप्रणीतास्ताश्चावैक्षत यथार्थतः ॥ ८२ ॥

सुशिक्षिताः॥८०॥अथ नृपः नृपरूपी शंकरोऽमात्येषु राज्यभारं विन्यस्य स्त्रियो बुभुजे॥८१॥ तत्र स्त्रीषु कामशास्त्रानुसारेण वात्स्यायनर्षिणा प्रणीताः सरस्वतीप्रश्नविषयाः कामकलाः यथार्थतः यथास्वरूपेण अवैक्षत दृष्टवान् । ताश्च यथा । " श्रद्धा प्रीती रतिश्चैव धृतिः कीर्तिर्मनोभवा । विमला मोदिनी घोरा मदनोत्पादिनी मदा । मोहिनी दीपनी चैव ज्ञेया वशकरी तथा । रंजनी चैव मदना कलास्वंगेषु सर्वशः । दक्षिणांगं समाश्रित्य आशिरश्चरणावपि । पादे गुल्फे तथोरौ च भगे नाभौ कुचे हृदि । कक्षे कंठे तथोष्ठे च गंडे नेत्रे श्रुतावपि । ललाटे च शिरोदेशे वसेत्कामस्तिथिक्रमात् । पक्षे पुंसः स्त्रिया

वामे शुक्ले कृष्णे विपर्ययः " इत्युक्ताः ॥ ८२ ॥ स देशिकः नृपरूपी शंकरो वात्स्यायनोक्तसूत्राणि सम्यक् दृष्ट्वा तत्र भाष्यरूपं निबंधम् अमरुशतकाख्यं व्यधत्त कृतवान् । तानि सूत्राणि तु—त्रिवर्गप्रतिपत्तिः । विद्यासमुद्देशः । नागरिकं वृत्तम् । नायकसहायदूतीकर्मविमर्शः । प्रमाणकालभावेभ्यो रतावस्थापनम् । प्रीतिविशेषाः । आलिंगनविचाराः । चित्ररतानि । प्रहरणयोगाः । तत्कृताश्च सीत्कृतोपक्रमाः । पुरुषायितं । पुरुषोपसृप्तानि । औपरिष्टकम् रतारंभावसानिकरतविशेषाः । प्रणयकलह इत्यादीनि समासव्यासरूपाणि ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ इत्थंधियः एवंकृतनिश्चयाः शंकरस्य शिष्याः केचित् शंकरस्य देहरक्षणार्थं तत्पर्वते स्थिताः । परे कुशलाः केचित्पद्मपादाद्याः मृतं नृपम् अमरुसिंहाख्यमुत्थितं श्रुत्वा तद्देशं समापुः संप्राप्ताः । उपजा

वात्स्यायनोक्तसूत्राणि सम्यग्वीक्ष्य स देशिकः ॥ तत्र भाष्यनिबंधं च व्यधत्त नृपवेषधृक् ॥८३॥ अतिक्रांतोऽथ मासोऽस्य राजदेहेन तिष्ठतः ॥ तच्छिष्याः पद्मपादाद्याः पर्वतस्था मिथोऽब्रुवन् ॥ ८४ ॥ अतिक्रांतोद्य मासोऽपि स्वीयं देहं न नो गुरुः ॥ प्राप्तः किमत्र कर्तव्यमस्माभिः परिमार्गणम् ॥ ८५ ॥ पद्मपादोऽथ तानाह श्रीगुरोर्देहरक्षणे ॥ कैश्चित्स्थितव्यं गंतव्यं कैश्चित्तत्परिमार्गणे ॥ ८६ ॥ इत्थंधियो भाष्यकृतस्तु शिष्याः स्थिता गिरौ तत्तनुरक्षणाय ॥ परेऽथ केचिन्मृतमुत्थितं तं श्रुत्वा नृपं तद्विषयं समापुः ॥८७॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धे श्रीशंकराचार्यकथासारे षोडशः सर्गः ॥१६॥ श्रीदेशिकेंद्र उवाच ॥ यतयः पद्मपादाद्या भूत्वा गायकरूपिणः ॥ गताः सभां नता राज्ञा जगुर्गानं यथोचितम् ॥ १ ॥ गानमेकादशश्लोकैर्ब्रह्मसिद्धांतगर्भितम् ॥ गीतं तैस्तन्नृपः श्रुत्वा मनसात्मस्मृतिं गतः ॥२॥ नृपं प्राप्तस्मृतिं ज्ञात्वा मुनयस्ते सभांतरात् ॥ ययुः शीघ्रं प्राप्तमाना गुरोर्यत्र कलेवरम् ॥३॥

तिवृत्तम् ॥ ८७ ॥ इति श्रीमद्गुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां षोडशः सर्गः ॥ १६ ॥ निरस्तप्रपंचः सर्वैके नृपांगात्स्वगतिर्गुरोः । गिरो जयो यतिर्मिश्रः कपाल्यंतो हरेः स्मृतः ॥ १७ ॥ यतय इति । राज्ञा राजरूपेण शंकरेण नताः नमस्कृताः । ब्रह्मप्रतिपादकः सिद्धांतो गर्भे यस्य तत् गानम् एकादशभिः श्लोकैः । तैः शंकरशिष्यैः कर्तृभिः गीतम् । न त्वं राजासि किंतु सर्वनिषेधावधिभूतं सर्वोपनिषत्प्रतिपाद्यं सच्चिदानंदं ब्रह्म तत्त्वमसि तत्त्वमित्यर्थकमित्यर्थः । शमदमोपरमादिमाधनैर्धीराः स्वात्मनि यदन्विष्य कृतकृत्याः अधिगतामितसच्चिदानंदरूपा न पुनरिह खिद्यंति तत्त्वमसि । तत्त्वमित्याद्याः श्लोकाः शंकरविजयप्रसिद्धाः । तद्गानं श्रुत्वा नृपो मनसा स्मृतिं प्राप्तः ॥ १ ॥ २ ॥ प्राप्तमानाः प्राप्तसत्काराः । यत्र पर्वते ॥ ३ ॥

मूर्च्छया मूर्च्छनानिमित्तेन ॥ ४॥ मुहुर्मुहुः क्रंदमानैः शंकरशिष्यैर्वार्यमाणैः शंकरतनुं मा नयतेति निवार्यमाणैरपि प्रधानाज्ञाकर्तृभिः राजसेवकैस्तद्वाक्यानि शिष्यवाक्यानि समुल्लंघ्याग्निना प्रदीप्तायां चितायां क्षिप्तां न्यस्ताम् आत्मतनुं दृष्ट्वा सुयोगवान् परकायप्रवेशादिशक्तिमान् श्रीशंकरो द्वादशभिः पद्यैस्तदा प्रवेशनसमये नृसिंहं स्तुवन् अग्निजं दुःखं च सहमानः सन् तां चितिस्थां स्वतनुम् आविशदाविवेशेति त्रयाणामन्वयः ॥ ५ ॥ ६ ॥ शीतोष्णेषु द्वंद्वेषु साम्यबुद्धिः । ईशः कर्तुमकर्तुमन्यथाकर्तुं समर्थः ॥ ७ ॥ "श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगींद्रभोगमणिरंजितपुण्यमूर्ते । योगीश शाश्वत

शंकरः प्राप्तसंज्ञोऽथ राजदेहं तु मूर्च्छया ॥ त्यक्त्वा योगबलात्प्राप्तः स्वां तनुं गिरिगह्वरे ॥ ४ ॥ तावदग्निप्रदीप्तायां चितायां राजसेवकैः ॥ वार्यमाणैरात्मशिष्यैः क्रंदमानैर्मुहुर्मुहुः ॥ ५ ॥ तद्वाक्यानि समुल्लंघ्य प्रधानाज्ञानशंगतैः ॥ क्षिप्तां स्वीयां तनुं दृष्ट्वा शंकरो नृहरिं तदा ॥ ६ ॥ स्तुवन्द्वादशभिः पद्यैराविशत्तां सुयोगवान् ॥ सहमानोऽग्निजं दुःखमीशः शीतोष्णसाम्यधीः ॥७॥ स्तोत्रं भक्त्या कृतं यद्वै श्रुत्वा नृहरितामियात् ॥ स्तवतुष्टो नृसिंहोऽथ साक्षादाविर्बभूव ह ॥ ८ ॥ पीत्वाग्निं भाष्यकारं तं प्राह प्रह्लाद रक्षकः ॥ वरं वरय मद्भिक्षो यत्ते मनसि वांछितम् ॥ ९ ॥ श्रुत्वेत्थं भाष्यकृत्प्राह ज्ञानमार्गोऽभिवर्द्धताम् ॥ मद्भाष्याभिमतेनैव श्रुत्वे त्याह तथेति सः ॥ १० ॥ मदभिन्नो भवान्साक्षाच्छंभुराद्यं प्रवर्तितुम् ॥ ज्ञानं भुव्यवतीर्णोऽस्तीत्युक्त्वा देवस्तिरोदधे ॥ ११ ॥ भाष्यकारोऽथ शिष्याढ्यो व्योममार्गेण संययौ ॥ गृहं मंडनमिश्रस्य दृष्ट्वा तं मंडनो मुदा ॥ १२ ॥ ननामाब्धः स्वपत्न्याऽथ वाणी चोवाच शंकरम् ॥ ईशानः सर्वविद्यानामीश्वरस्त्वं परः शिवः ॥ १३ ॥ मामजित्वा सभायां यत्कामशास्त्रकृतो मुने ॥ राजदेहप्रवे शादि तत्ते मर्त्यविडंबनम् ॥ १४ ॥

शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलंबम्" इत्यादि स्तोत्रं श्रुत्वा नृहरिभावं प्राप्नुयात् ॥ ८ ॥ मत् मत्तः सकाशात् ॥ ९ ॥ मद्भाष्या नुमतेन तदनुसारेण ज्ञानमार्गाभिवृद्धिरस्तु । स नृसिंहः तथेत्याह ॥ १० ॥ भवान् मदभिन्नो मद्रूपोऽस्ति । आद्यं ज्ञानम् । प्रवर्तयितुमित्यर्थः । अन्तर्भा वितण्यर्थोऽत्र वृतिः । दृष्ट्वा तमित्युत्तरान्वयि ॥ ११ ॥ १२ ॥ स्वपत्न्या सरस्वत्या आढ्यो युक्तः ॥ १३ ॥ कामशास्त्रकृतो कामशास्त्रसंपादनादिपर

राजदेहप्रवेशादि यत् तत् मर्त्यविडंबनं मनुष्यचेष्टितमस्ति । वस्तुतस्त्वं सर्वज्ञोऽसीति भावः ॥ १४ ॥ भर्तृपक्षानुकूलता । अयं स्त्रीधर्मोऽस्ति ॥ १५ ॥
स्त्रीभिः पत्यनुकूलतया भाव्यमिति स्त्रीजनशिक्षार्थम् ॥ १६ ॥ यतो लोकोपकारायावतीर्णा अतस्त्वं शृणु ॥ १७ ॥ फलैः पुष्पैः [illegible]
माना त्वम् अस्मत्कृते करिष्यमाणे । अभूतेऽपि भूतवन्निर्देशः । स्थाने मठे वस वासं कुरु । अद्वैतमतद्वेष्टृन्पराजित्यास्मन्मतं भुवि प्रकाशय ॥ १८ ॥ [illegible]

लब्धं मयोत्तरं त्वत्तस्त्वयाऽऽवां दंपती जितौ ॥ स्त्रीधर्मोऽयं धिया वाचा भर्तृपक्षानुसारिता ॥१५॥ एवं स्त्रीजनशिक्षार्थं कृतः प्रश्नो
मया मुने ॥ यास्याम्यहं निजं धामेत्युक्तस्तां शंकरोऽब्रवीत् ॥ १६ ॥ जानामि ब्रह्मणः पत्नीं त्वामहं श्रीसरस्वतीम् ॥ अवतीर्णासि
लोकोपकृतये त्वमतः शृणु ॥१७॥ वसात्रास्मत्कृते स्थाने पूज्यमाना फलैः सुमैः ॥ मतद्वेष्टॄन्पराजित्यास्मन्मतं भुवि काशय॥१८॥
तथेति तत्रैव तिरोहिता सा प्रापात्मधामाऽथ सुविस्मयाढ्याः ॥ प्रोचुर्जनाश्चेति महाबुधैर्या संस्तूयते भाष्यकृता जिता गीः ॥ १९ ॥
मिश्रोऽथ गृहगं दत्त्वाऽऽर्येभ्यः संन्यस्तुमुद्यतः ॥ भोगेभ्यो विरतस्तस्थौ शंकरस्य पुरः पुरः ॥२०॥ वाक्यं तत्त्वमसीत्येवं निर्विकल्पो
ऽशृणोत्ततः ॥ देहेंद्रियासुधीचित्तमनोहंकृतितः परः ॥ २१ ॥ त्वं साक्षाद्ब्रह्मरूपोऽसि मुक्तः सच्चित्सुखात्मकः ॥ कामादिशत्रुभिर्जीवो
बद्धः संसृतिकानने॥२२॥सत्संगान्मुच्यते शीघ्रं नान्यैश्चानेकसाधनैः ॥ इतिहासं शृणु त्वत्र श्रवणाद्बद्ध[illegible] ॥२३॥ कश्चित् [illegible]
देशीयो वैश्यो भूषणसंयुतः ॥ सुप्तो गृहाद्बहिर्मत्तो रात्रौ निद्रावशं गतः ॥ २४ ॥ चोरैर्भूषणलोभेन बद्ध्वा नीतो वनांतरे ॥ [illegible]
भूषणान्यस्य वृक्षे बद्धोऽदयैः शठैः ।।२५॥ व्याघ्रसर्पसमाकीर्णे वनेऽत्यंतं भयातुरः ॥ बुभुजे दुःखमेवासौ बंधनान्मोचनेऽक्षमः ॥२[illegible]

शंकराग्रे अंतर्हिता गीः सा सरस्वती॥१९॥मंडनमिश्रः आर्येभ्यः सत्पात्रेभ्यः गृहगतं वस्त्रपात्रादि दत्त्वा विरतो विरक्तः सन् संन्यस्तुं संन्यासं कर्तुम् [illegible]
॥ २० ॥ ततः शंकरात् विधिवत् संन्यासविधिना । महावाक्यार्थमाह देहेत्यादिभिः ॥ २१ ॥ कामक्रोधादिभिर्बद्धो जीवः सत्संगात् [illegible]
इत्यन्वयः ॥ २२ ॥ श्रवणात् श्रवणमात्रेण बद्धस्य मोक्षपदम् इतिहासं शृणु ॥ २३ ॥ २४ ॥ अदयैः निर्दयैः शठैश्चकैः ॥ २५ ॥ [illegible] ॥

मार्गे पथि तं प्रसिद्धं रोदनशब्दम् ॥२७॥ दार्ष्टांते योजयति कामाद्यैरिति ॥ २८ ॥ पांथैर्वैश्यो यथा मोचितः तथा त्वं मया सदुक्तिभिः वेदांतवाक्यैर्मोचितोऽसि । विवेकवैराग्यादिबंधुभिः सह त्वं निजम् आत्मीयं परं निरतिशयं सुखं भुंक्ष्व । कृतकृत्यो भवेत्यर्थः ॥२९॥ ३० ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३१ ॥ पादौ स्वशीर्षे स्थापयामास । अनेन कृतपूर्णभक्तत्वं पूर्णाभिषेकक्रशपात्रत्वं च सूच्यते ॥ ३२ ॥ स्वीयानाम् आत्मानाम् अनीक्षा अनवलोकनं तदिच्छुर्मंडनः

पांथैः कदाचिद्गच्छद्भिर्मार्गे दूरं दयालुभिः ॥ श्रुत्वा तं शब्दमेतस्य मुक्तोऽसौ बंधनात्ततः ॥२७॥ गृहं गतोऽथ बुभुजे सुखमेव स्वबंधुभिः ॥ कामाद्यैः शत्रुभिस्तद्वद्बद्धः संसृति कानने ॥२८॥ पांथैरिव मया बद्धो मोचितोऽसि सदुक्तिभिः ॥ विवेकाद्यैर्बांधवैस्त्वं सुखं भुंक्ष्व निजं परम् ॥२९॥ भाष्यकारोपदेशं स श्रुत्वेत्थं मंडनो द्विजः ॥ मत्वा कृतार्थमात्मानं शंकरं गुरुमब्रवीत् ॥३०॥ धन्योऽहं कृतकृत्योऽस्मि त्वत्प्रसादेन देशिक ॥ इत्युक्त्वाचार्यपादौ स गृहीत्वा भक्तिपूर्वकम् ॥ ३१ ॥ स्वशीर्षे स्थापयामास तमाचार्यस्ततोऽब्रवीत् ॥ स्व स्मारामाः सुराः प्रोक्तास्तेषु श्रेष्ठो भवान्यतः ॥३२॥ अतः सुरेश्वराख्यां त्वं प्राप्तोऽसि मदनुग्रहात् ॥ इत्युक्तो गुरुणा स्वीयानीक्षेच्छुर्निर्ययौ ततः ॥३३॥ जित्वेति कर्मिप्रवरं हि मिश्रं कृत्वा सुरेशाभिधमात्मशिष्यम् ॥ गोभिः स्वशिष्यैरिव कौ यतींद्रश्चचार सोऽज्ञानतमोहरोऽर्कः ॥३४॥ श्रीदेशिकेन्द्र उवाच ॥ अथैकदा क्वचिद्देशे रहःस्थं शंकरं खलः ॥ कपाली कश्चिदागत्याऽब्रवीद्भक्तिं प्रदर्शयन् ॥३५॥ स्वामिंस्तव गुणाञ्छ्रुत्वा विचिन्वंस्त्वामिहागतः ॥ परोपकारी शांतात्मा भाग्याद्दृष्टो मयाधुना ॥ ३६ ॥ शृणु त्वं मम वृत्तांतं यतः शरणमागतः देहेनानेन कैलासं गंतव्यमिति वाञ्छया ॥ ३७ ॥ आराधितो मया शंभुः शताधिकसमाः पुरा ॥ मामाहेदं तदा शंभुस्तपस्तुष्टो दयानिधिः ॥ ३८ ॥ सर्वज्ञस्याथ वा राज्ञो होष्यस्यग्नौ शिरो यदि ॥ तदा ते सफला वाञ्छेत्युक्त्वा सोंतर्दधे शिवः ॥ ३९ ॥

ततः स्वधामात् गुरुणा सहेति शेषः ॥ ३३ ॥ गोभिः किरणैरर्क इव ॥ ३४ ॥ अथेति कथांतरम् । रहःस्थम् एकांतवासिनम् । कपाली भैरवोपासकः ॥ ३५ ॥ एतादृशस्त्वं भाग्यवशान्मया दृष्टोऽसि ॥ ३६ ॥ वृत्तं वृत्तांतम् । देहेनेत्युत्तरान्वयि ॥ ३७ ॥ शताधिकसमाः शताधिकवर्षपर्यंतम् ॥ ३८ ॥ [illegible]

करिष्यसि ॥ ३९ ॥ ४० ॥ सतां लोकोपकारतः अन्यत्साध्यं नास्ति ॥ ४१ ॥ परोपकारार्थं देवाद्युपकारार्थम् ॥ ४२ ॥ नन्वत्यं तं प्रियो देहः कथं त्याज्य इत्यत आह—दुस्त्याज्यमिति । नश्यतः नाशं गच्छतो देहस्य त्यागेन ते कीर्तिर्भविष्यति ॥ ४३ ॥ ४४ ॥ अनेन देहेन तवार्थः सिध्येत्तर्हि तत्तवार्थसाधनं नः समीहितम् । इष्टमस्ति । तत शिरः ॥ ४५ ॥ तेषां शिष्याणाम् इति तेन शंकरेण प्रोक्तः । भिक्षुं शंक

दुष्प्राप्यं तु शिरो राज्ञस्त्वत्तः कः सर्वविद्भुवि ॥ तस्माद्देहि शिरश्छित्त्वा सर्वज्ञोऽसि यतो मुने ॥ ४० ॥ न शरीरे तवाहंता नश्वरे क्षणभंगुरे ॥ न भोगेच्छाथ वा साध्यं सतां लोकोपकारतः ॥ ४१ ॥ दधीचिप्रमुखाः संतो ज्ञात्वेदं नश्वरं वपुः ॥ दत्त्वा परोपकारार्थं प्रापुस्ते विमलं यशः ॥ ४२ ॥ दुस्त्याज्यं किं नु साधूनामुदाराणां भवादृशाम् ॥ कीर्तिस्ते भविता नूनं त्यागाद्देहस्य नश्यतः ॥ ४३ ॥ तच्छ्रुत्वा शंकरः प्राह सदयस्तमिदं वचः ॥ पतिष्यति स्वयं देहः कालेनापि स्वकर्मणा ॥ ४४ ॥ यद्यनेन तवार्थोऽपि सिध्येत्तन्नः समीहितम् ॥ दास्येऽहं तद्रहस्तुभ्यं यथा शिष्या न मे विदुः ॥ ४५ ॥ तेषामहं प्रियोऽस्मीति प्रोक्तस्तेन कपालिकः ॥ गतः स्वमाश्रमं भिक्षुं विज्ञाय करुणानिधिम् ॥ ४६ ॥ एकदा सर्वशिष्येषु स्वस्वशारीरकर्मसु ॥ सक्तेषु शंकरं प्राप्तो रहःसंस्थं कपालिकः ॥ ४७ ॥ दुष्टस्य चेष्टितं सर्वं ज्ञात्वा सिद्धिबलेन तत् ॥ पद्मपादो यतिर्गुप्तः स्थितः शंकरसन्निधौ ॥ ४८ ॥ शिरोमालायुतः शूली त्रिपुंड्री दैवचोदितः ॥ पद्मपादमविज्ञाय शंकराग्रे स्थितः खलः ॥ ४९ ॥ देहत्यागे मनश्चक्रे तं दृष्ट्वात्मानमात्मनि ॥ नियोज्य जत्रुदेशे स्वं चिबुकं स्थाप्य शंकरः ॥ ५० ॥ तं दृष्ट्वा तादृशं दुष्टः शूलमुद्यम्य निर्दयः ॥ हंतुकामोऽथ तं दृष्ट्वा पद्मांघ्रिर्नृहरिं स्मरन् ॥ ५१ ॥ सिद्धमंत्रं जजापात्मन्याधायात्मानमात्मना ॥ प्रादुर्भूतो नृसिंहोऽथ तत्क्षणे भक्तवत्सलः ॥ ५२ ॥

रम् ॥ ४६ ॥ शारीरकर्मसु मलमूत्रोत्सर्जनभिक्षाटनादिषु । रहःसंस्थम् एकांतस्थितम् ॥ ४७ ॥ ४८ ॥ दैवचोदितः दैवान्मरणोन्मुख इत्यर्थः । ॥ ४९ ॥ आत्मानं मनः । आत्मनि ब्रह्मणि । जत्रुदेश इत्यनेन खेचरीमुद्रा कृतेति सूच्यते । 'भ्रूमध्यदृष्टिरप्येषा महादेवेन कीर्तिता' इति वचनात् ॥ ५० ॥ तं शंकरं तादृशं समाधिस्थम् । दृष्ट्वा हंतुकामोऽभवत् । अथाद्युत्तरान्वयि । तं कपालिनम् । पद्मांघ्रिः पद्मपादः ॥ ५१ ॥ सिद्धमंत्रं नृसिंहमंत्रम् । आत्मना

बुद्ध्या आत्मानं मनः । आत्मनि ब्रह्मणि । आधाय स्थापयित्वा ॥ ५२ ॥ तं कपालिनम् ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ सनंदनं पद्मपादम् । किमर्थं प्राप्त इति शेषः ॥ ५७ ॥ ५८ ॥ पूर्वं वरप्रदः । तदेव स्मृतिकाले ॥ ५९ ॥ अहमित्यादि परान्वितम् ॥ ६० ॥ ६१ ॥ गह्वरे पर्वत

ददार तं नखैर्दुष्टं हिरण्यकशिपुं यथा ॥ कुर्वन्नट्टाट्टहासं च त्रासयामास भूतलम् ॥५३॥ शब्दं श्रुत्वा समायाताः शिष्याः सर्वे गुरोः पुरः ॥ श्रीनृसिंहं विलोक्याहुर्भक्त्या नत्वाथ विस्मिताः ॥ ५४ ॥ य ईशः सर्वभूतानां कथं सोऽत्र समागतः ॥ यस्मिन्भक्तिं प्रकुर्वंति यतयः संशितव्रताः ॥ ५५ ॥ सोऽयं विष्णुर्महातेजा ब्रह्मादीनां परो गुरुः ॥ अस्मद्दृग्गोचरो जातो नरसिंहः स्वयंप्रभः ॥५६॥ इत्थं स्तवं प्रकुर्वंतः पप्रच्छुस्ते सनंदनम् ॥ आराधितः कथं विष्णुः किमर्थं वै दयानिधिः ॥ ५७ ॥ एवं पृष्टः पद्मपादो वृत्तं सर्वं कपालिनः ॥ उक्त्वा प्राह यदा दुष्टो गुरुं हंतुं समुद्यतः ॥ ५८ ॥ तदा मया स्मृतः पूर्ववरदो नृहरिः परः ॥ प्रादुर्भूतस्तदैवासौ हतवां स्तं कपालिनम् ॥ ५९ ॥ तं प्रत्यूचुः कथं पूर्वं वरदस्ते नृकेसरी ॥ तानाह पद्मपादोऽहमेकदा गिरिमूर्धनि ॥ ६० ॥ नृसिंहं मनसा ध्यायन्बहुकालं स्थितोऽभवम् ॥ एकदा कश्चिदागत्य किरातस्तत्र पृष्टवान् ॥ ६१ ॥ किमर्थं गह्वरेऽद्रेस्त्वं वससीति स मां प्रति ॥ एवं संपृच्छते प्रोक्तं मयेदं शृणु मत्सखे ॥ ६२ ॥ नृरूपमागलं लब्धुमूर्द्ध्वं सिंहाकृतिं मृगम् ॥ वसाम्यत्रेति चाकर्ण्य किरातो निश्चयाद्भ्रमन् ॥ ६३ ॥ नृसिंहाख्यं मृगं बद्ध्वाऽऽनीतवान्मत्पुरस्तदा ॥ प्राह मामयमेवेष्टो मृगः किं ते हि तापस ॥ ६४ ॥

दर्यां किमर्थं वससि वासं करोषीति मां प्रति पृष्टवानिति पूर्वान्वयि । पृच्छते किराताय । मत् मत्तः । इदं वक्ष्यमाणं शृणु । सख इति किरातसंबुद्धिः । ॥ ६२ ॥ आगलं कंठपर्यंतं मनुष्यरूपम् ऊर्ध्वं मुखे सिंहाकृतिम् एतादृशं मृगं प्राप्तुं अत्र वासं करोमि । इत्याकर्ण्य किरात इत्याद्युत्तरान्वयि । निश्च

...वि प्राप्स्याम्यवेति दृढबुद्धया ॥ ६३ ॥ ६४ ॥ ६५ ॥ किरातेनेत्युत्तरान्वयि ॥ ६६ ॥ एवमादि परान्वयि ॥ ६७ ॥ अनुग्रहेण महां वरं दत्त्वा स्मृतिमात्रेण दर्शनं दास्यामीत्युक्त्वांतर्हितः ॥ ६८ ॥ भक्तसक्तदृक् भक्तासक्तदृष्टिः । स्थिताः शिष्या इति विशेष्याध्याहारः ॥ ६९ ॥ ७० ॥ ॥ ७१ ॥ अकिंचनप्रियः निष्कामप्रियः ॥ ७२ ॥ वर्तयन् प्रवर्तयन् । इलायां पृथिव्याम् आर्या श्रेष्ठा कीर्तिर्यस्य सः ॥ ७३ ॥ इति श्रीगुरुपरंपराचरित्रेपूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां सप्तदशः सर्गः ॥ १७ ॥ अष्टादशेऽथ चैकाष्टपद्यैरर्भस्य जीवनम् । हस्तामलोक्तिष्टीकाज्ञा शिष्यान्प्रति

श्रुत्वेत्थं नृहरिं दृष्ट्वा विस्मितो वक्तुमक्षमः ॥ धैर्येण नृहरिं स्तुत्वा पृष्टवानहमादरात्॥६५॥ अगम्यो योगिनां यस्त्वं किरातस्य वशः कथम् ॥ श्रुत्वेत्याह नृसिंहो मां किरातेनामुना यथा ॥ ६६ ॥ एकाग्रचेतसा ध्यातस्तथाहं न महर्षिभिः ॥ ततोऽस्य वरदो नित्यमेव मुक्ता नृकेसरी ॥ ६७ ॥ अनुग्रहाद्वरं दत्त्वा मह्यमन्तर्हितस्ततः ॥ तदारभ्य क्षणेनैव ध्यातो दृग्गोचरोभवत् ॥ ६८ ॥ आविर्भूतस्तथाद्यापि नृसिंहो भक्तसक्तदृक् ॥ इत्युक्ताः पद्मपादेन नृसिंहैकपराः स्थिताः ॥ ६९ ॥ तेषां भक्त्या जगर्जासौ नृसिंहो भक्तवत्सलः ॥ तच्छब्दाच्छंकराचार्यो विरराम समाधितः ॥ ७० ॥ उन्मील्य नयनेऽपश्यन्नृसिंहं पुरतः स्थितम् ॥ स्तोत्रेण परितुष्टाव भक्तिज्ञानान्वितेन च ॥ ७१ ॥ अथ प्रसन्नो भगवान्नृसिंहोऽकिंचनप्रियः ॥ वरान्दत्त्वा सशिष्याय शंकराय तिरोहितः ॥ ७२ ॥ इत्थं प्रकुर्वन्विविधानि कर्माण्यद्वैतमार्गं किल वर्तयन्सः ॥ चचार शिष्यैः सहितो धरित्र्यां श्रीशंकराचार्य इलार्यकीर्तिः ॥ ७३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शंकराचार्यकथासारे सप्तदशः सर्गः ॥१७॥ श्रीदेशिकेंद्र उवाच ॥ गोकर्णं स ततो गत्वा स्नात्वा नत्वा महाबलम् ॥ सांबं स्तुत्वा श्रहं स्थित्वा ययौ हरिहरालयम् ॥ १ ॥ नत्वा हरिहरं तस्माद्गच्छन्मार्गेण शंकरः ॥ दृष्ट्वाऽसौ दंपती पुत्रं व्यसुमेकं निधाय कौ ॥२॥ शोचंतौ कृपयाऽऽहाऽसौ न शोच्यो नृहरिः स्वयम् ॥ रक्षितेति ब्रुवत्यस्मिन्सजीवः शिशुरुत्थितः ॥३॥

स्मृता गुरोः ॥ १८ ॥ जगति ब्रह्मविद्याप्रतिष्ठापनार्थं शंकरयात्रामाह गोकर्णमित्यादिना । ततः कपालिनाशानंतरं सः शंकरः स्नात्वा समुद्रस्नानं कृत्वेत्यर्थः । महाबलाख्यं शिवम् ॥ १ ॥ तस्मात् हरिहरालयान्मार्गेण गच्छन् शंकरः । व्यसुं विगतप्राणम् एकं पुत्रं कौ पृथिव्यां निधाय शोचंतौ दंपती दृष्ट्वा कृपया आहेति योज्यम् ॥ २ ॥ असौ पुत्रो न शोच्यः शोकार्हो न भवति । तत्र कारणमाह । नृहरिः स्वयं रक्षिता पुत्रमिति शेषः । अस्मिन्

...ति भुवति सति । जीवसहितो बालः उत्थितोऽभवत् ॥ ३ ॥ यतिवैभवं शंकरसामर्थ्यम् । ततो बालजीवनानंतरं मूकांबिकां कर्णाटकप्रसिद्धामि...
...न्वयि ॥ ४ ॥ चक्राधारमयैः चक्रं श्रीचक्रम् आधारं मूलाधारचक्रम् । उपलक्षणमेतन्मूलाधारादिचक्राणाम् । तत्प्रचुरैः स्तवैः स्तवनश्लो...
... तथा च श्रीचक्राभिन्ना मूलाधारस्वाधिष्ठानादिचक्राभिन्ना चेयं मूकांबिकेत्यभेदप्रतिपादकैरित्यर्थः स्तवनं । कृत्वाऽत्र मूकांबासमीपे अल्पदिवसपर्यंतमव...
...त । ततो मूकांबासकाशात् त्रिबलिसंज्ञकं क्षेत्रमगमत् । शंकर इत्यध्याहारः ॥ ५ ॥ यत्र त्रिबलिक्षेत्रे इंदुवत् द्विजानंदकरः शिवः शिवाढ्यः पार्वतीयु...

स्तुतिं चक्रुर्जनाः सर्वे दृष्ट्वेत्थं यतिवैभवम् ॥ मूकांबिकां ततो गत्वा तां संपूज्य स्तवैः स्तुतिम् ॥ ४ ॥ चक्राधारमयैः कृत्वाऽत्रावसत्स्वल्पवासरान् ॥ त्रिबलिक्षेत्रमगमत्सशिष्यः शंकरस्ततः ॥ ५ ॥ यत्राग्निहोत्रिणो विप्रा विद्वांसो द्विसहस्रकाः ॥ शंभु र्यत्र शिवाख्योऽस्ति द्विजाह्लादकरोंदुवत् ॥ ६ ॥ प्रभाकरस्तत्र धनाढ्यविप्रः प्रवृत्तिनिष्ठः श्रुतिशास्त्रवेत्ता ॥ पुत्रोऽस्य ब्रह्मविदस्य जातो मूर्खो बहिर्भाति जडोऽतिमूकः ॥ ७ ॥ प्राप्तं श्रीशंकराचार्यं सर्वज्ञं सद्गुणाकरम् ॥ वेदवेदांगतत्त्वज्ञं शिष्यैः स्त्रसहस्रैर्युतम् ॥ ॥ ८ ॥ श्रुत्वा प्रभाकरो विप्रः पुत्राढ्यः पौरसंयुतः ॥ शंकरांतिकमागत्य दंडवत्प्रणनाम तम् ॥ ९ ॥ तत्पुत्रः शंकरं दृष्ट्वा प्रणनाम पुनः पुनः ॥ नोदतिष्ठत्तदा धृत्वा करेणोत्थाप्य शंकरः ॥ १० ॥ कृपया स्वस्य निकटे स्थापयामास तं शिशुम् ॥ प्रभाकरः पुत्रवृत्तं शंकराय न्यवेदयत् ॥ ११ ॥ स्वामिंस्त्रयोदशाब्दा वै व्यतीयुश्चास्य जन्मनः ॥ भुंक्ते कदाचिन्नो भुंक्ते भाषते नैव केनचित् ॥ १२ ॥ न विद्मोऽस्यांतरं वृत्तं यथावज्जडभावतः ॥ श्रुत्वेत्थं शंकराचार्यः शिशुं प्रोवाच चादरात् ॥ १३ ॥ कस्त्वं शिशो किमर्थं वा जडवद्वर्तसे वद ॥ इति भाष्यकृतो वाक्यं श्रुत्वा तं सर्ववेदिनम् ॥ १४ ॥

...ऽस्ति । वाक्यभेदायत्रेति द्विरुक्तिः ॥ ६ ॥ तत्र जातं वृत्तांतमाह प्रभाकर इत्यादिना । प्रवृत्तिनिष्ठः कर्मनिष्ठः । प्रभाकरनामा धनाढ्य आसीत् । अस्य जातः पुत्रः अंतः ब्रह्मवेत्ता सन् बहिर्जडोऽतिमूकश्च भाति । उपजातिवृत्तम् ॥ ७ ॥ प्राप्तमित्यादिद्वयोरन्वयः । उत्तमगुणानाम् आकरं खनिरू...
...पम् ॥ ८ ॥ ९ ॥ तदायुत्तरान्वितम् ॥ १० ॥ ११ ॥ जन्मनः सकाशात् ॥ १२ ॥ १३ ॥ इत्यादिपरान्वितम् । सर्ववेदिनं सर्वज्ञम् ॥ १४ ॥

ब्रह्मण्येवैका मुख्या निष्ठा पर्यवसानं यस्य तद्वचः ॥ १५ ॥ मदाधारवचनः मदाधारं मदाश्रयं वचनम् । वाचारंभणं यस्य स देहादिः प्रभवति व्यवहार योग्यो भवति । 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति' श्रुत्या कारणाश्रयणेनैव कार्यमात्रस्य नामरूपादिसिद्धौ व्यवहारयोग्यत्वं भवतीत्यर्थः । ननु मृदिव तव विकारित्वं स्यादत आह । गगनमिवालिप्तो विवर्ताधिष्ठानत्वेन संगरहितः अतः शुद्धोऽविद्यादिमलरहितश्चास्मि । ननु शुद्धस्यापि तव व्यवहारस्तु देहबुद्धयैव स्यादत आह । निरवधिमहिम्नो देशकालातीतमहत्त्वस्य बोधवपुषः ज्ञानस्वरूपस्य मे मम धिया बुद्धया सह विहरणं विहारो ब्रह्मानंदेऽस्ति ॥ १६ ॥ " निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः । रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा "

श्रेष्ठं ब्रह्मविदां ज्ञात्वा स्वानुभूतिमयं वचः ॥ ब्रह्मैकनिष्ठमात्मज्ञः शिशुः प्रोवाच बुद्धिमान् ॥ १५ ॥ न वर्णो विप्राद्यो मयि न च जडत्वादिकलना जडोऽयं देहादिः प्रभवति मदाधारवचनः ॥ अलिप्तोऽहं शुद्धो गगनमिव मे बोधवपुषो धिया ब्रह्मानंदे निरवधिमहिम्नो विहरणम् ॥ १६ ॥ इत्यादि द्वादशश्लोकैर्मुनिश्चात्मार्थसूचकैः ॥ स्वतत्त्वं कथयामास हस्तामलकसंज्ञकैः ॥ १७ ॥ तदारभ्य मुनिर्लोके प्राप्तो हस्तामलाभिधाम् ॥ ग्रंथोऽपि तस्य तत्संज्ञां प्राप्तः सत्सु विराजते ॥ १८ ॥ उपदेशं विना सम्यग्जातबोधः परात्मनि ॥ बालोऽनेकजनुःसिद्धश्चेत्यंतोऽचिंतयद्यतिः ॥ १९ ॥ स्वकरं मस्तके तस्य कृत्वाऽहार्यान्स शंकरः ॥ अनेकजन्मसंसिद्धो बालोयं प्रतिभाति मे ॥ २० ॥ एकेन जन्मना हीत्थं सम्यक् सिद्धोऽत्र दुर्लभः ॥ यतिः प्रभाकरं प्राहऽदृष्टं ते बालवैभवम् ॥२१॥ त्वया सार्द्धं निवासोऽस्य संभवेन्नैव कर्हिचित् ॥ अहं पितास्य पुत्रो मे कथमेनं त्यजामि च ॥ २२ ॥ एवं त्वया न कर्तव्यो बालेऽस्मिन्नाग्रहो बुध ॥ प्रभाकरो निशम्यैवं दृष्ट्वा पुत्रस्य चेष्टितम् ॥ २३ ॥

इत्यादि द्वादशश्लोकैः आत्मार्थसूचकैर्जीवात्मपरात्मैक्यार्थयुक्तैः । मुनिर्मौनवानपि । स्वतत्त्वम् आत्मतत्त्वं कथयामास । हस्तामलकसंज्ञकैरित्यनेन जडस्यापि अस्य श्लोककरणे आयासरहितत्वं दर्शितमिति भावः ॥ १७ ॥ १८ ॥ अनेकजन्मसुसिद्धोऽयं बालोऽस्ति । अंतः हृदि ॥ १९ ॥ आर्यान् ग्रामस्थान् आह । अनेकजन्मसु सम्यक् साधनाचरणेनासिद्धः ॥ २० ॥ हि यतः । अत्र लोके ॥ २१ ॥ त्वया कर्मनिष्ठेन । अस्याहं पितास्मि । अयं मे पुत्रोऽस्ति । एनं कथं त्यजामि ॥ २२ ॥ इत्थं त्वया बालविषये आग्रहो न कर्तव्यः । यतो हे बुध विद्वन् । विदुषि पुत्रायासक्तिर्न युक्तेति भावः ।

उत्तरार्द्धमुत्तरान्वयि ॥ २३ ॥ २४ ॥ अन्यद्वृत्तमाह गिरिनामेति । आसीदित्यध्याहारः ॥ २५ ॥ अस्मिन् गुरौ व्रजति सति स्वयं तथा गच्छति । एकादा शांतिपाठार्थं भाष्यप्रवचनार्थं पद्मपादाद्याः शिष्याः समुद्युक्ता अभवन् ॥ २६ ॥ भाष्यकृच्छंकरस्तान्प्राह । यावद्गिरेः आगमनं तावत्स्थेयं स्थातव्यं भवद्भिरिति शेषः । उत्तरार्द्धे त्वयेति शेषः ॥ २७ ॥ अस्य पद्मपादस्य ॥ २८ ॥ इत्थं पूर्वोक्तं संचिंत्य विचार्य गुरुः कृपायुक्तः सन् शक्तिपातो देहतादात्म्यराहित्येन शिष्यस्य गुर्वेकनिष्ठता । तद्धेतोः । चतुर्दश विद्याः " पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः।वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश"

त्यक्त्वा पुत्रमतिं तस्मिन्पौराद्यः स्वगृहं ययौ ॥ शंकरोऽथ सशिष्योऽद्रिं शृंगाख्यं प्राप्य चावसत् ॥ २४ ॥ पालयामास तत्रत्यान्छारदापि स्थिता गिरौ ॥ गिरिनामा यतेः शिष्यः कश्चित्सेवापरः सदा ॥ २५ ॥ गुरौ तिष्ठति तिष्ठेद्यो व्रजत्यस्मिन्स्वयं तथा ॥ एकदा शांतिपाठार्थं पद्माद्याद्याः समुद्यताः ॥ २६ ॥ भाष्यकृत्प्राह तान्स्थेयं यावदागमनं गिरेः ॥ पद्मपात्प्राह भाष्यार्थे मंदधीः किं प्रतीक्ष्यते ॥ २७ ॥ श्रुत्वेत्थं गर्वयुग्वाक्यं भाष्यकृत्क्रोधसंयुतः ॥ अहो गर्वोऽस्य हर्तव्यो मयाद्यैवेति निश्चितम् ॥२८॥ संचित्येत्थं गुरुर्विद्या गिरयेऽदाच्चतुर्दश ॥ शक्तिपातात्कृपायुक्तः स च ताः प्राप तत्क्षणे ॥ २९ ॥ तुष्टाव श्रीगुरुं वृत्तैस्तोटकाख्यैस्तदा गिरिः ॥ ब्रह्मात्मैक्यपराः श्लोकाः प्रसिद्धा भूतले च ते ॥ ३० ॥ पद्मपादादयः श्रुत्वा तान्छ्लोकान्विस्मयं ययुः ॥ गर्वं त्यक्त्वा शशंसुस्ते करुणावैभवं गुरोः ॥ ३१ ॥ गिरिं तोटकनामानं वदंत्यद्य बुधा भुवि ॥ पद्मपादः सुरेशश्च गिरिर्हस्तामलाभिधः ॥ ३२ ॥

इत्युक्ताः।गिरयेऽदात् ददौ । स च गिरिस्तत्क्षणे ताः विद्याः प्राप । अत्र सांख्यमार्गेण शक्तिपातो नाम देहतादात्म्यराहित्येन तदेकनिष्ठता ज्ञेया ॥ २९ ॥ " इह तोटकमंबुधिसैः प्रथितम् " इत्युक्तलक्षणैश्चतुःसगणयुक्तैस्तोटकवृत्तैः श्रीगुरुं तुष्टाव । ते च श्लोकाः " भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् । कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् " इति प्रसिद्धाः । जीवब्रह्मैक्यपराः संति ॥ ३० ॥ ३१ ॥ पद्मपादाद्या

श्चत्वारो मुख्यशिष्याः परान्वयिनः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ इयं वक्ष्यमाणा ॥ ३६ ॥ तामेवाह क इति ॥ ३७ ॥ मद्धीः मद्बुद्धिः क्व न कश्चित्समर्था तथापि तवाज्ञा निष्फला न भविष्यति भवदनुज्ञया वार्तिकं करिष्यामीति भावः ॥ ३८ ॥ एवं त्वदुक्तम् अस्तु । मदाज्ञया वार्तिकं कुर्वि त्यर्थः । इति गुरुणा प्रोक्तः सुरेश्वरः स्वस्थितिं ययौ ॥ ३९ ॥ सर्वज्ञायापि ते तुभ्यं किंचित् वक्तुं नः आज्ञापय । किंचित्प्रार्थनीयमस्ति तत् भवतः

चत्वारो भाष्यकृच्छिष्याः समास्ते सनकादिभिः ॥ प्रसिद्धा भूतले चासंश्चतुर्वेदा इवापराः ॥ ३३ ॥ गुरुं सुरेश्वरः प्राह कदाचिच्छिष्यमध्यगम् ॥ आज्ञापयस्व मां सेवां मद्योग्यां सुविचार्य च ॥ ३४ ॥ श्रुत्वेत्थं हर्षितः प्राह शंकरोऽथ सुरेश्वरम् ॥ वार्तिकं कुरु मद्भाष्ये श्रुतितात्पर्यगर्भितम् ॥ ३५ ॥ यदा श्रीव्याससूत्रेषु भाष्यं शारीरकं मया ॥ निर्मितं वै तदारभ्य वासनेयं ममाप्यभूत् ॥३६॥ कः करिष्यति शारीरभाष्ये वार्तिकमुत्तमम् ॥ न वै बुद्धौ ममाभाति क्षमः कर्तुं त्वया विना ॥ ३७ ॥ श्रुत्वा सुरेश इत्याह गुरुं नत्वा मुहुर्मुदा ॥ मद्धीः क्व भाष्यतात्पर्ये तथाप्याज्ञा न निष्फला ॥ ३८ ॥ अस्त्वेवं गुरुणा प्रोक्तः सुरेशः स्वस्थितिं ययौ ॥ गते तस्मिन्गुरुं प्रोचुर्यतयश्चित्सुखादयः ॥ ३९ ॥ सर्वज्ञायापि ते किंचिद्वक्तुमाज्ञापयाद्य नः ॥ प्रोच्यतामिति ते चोक्ता गुरुणाहुः पुनर्गुरुम् ॥ ॥ ४० ॥ आज्ञप्तः सूत्रभाष्येऽसौ वार्तिकं कर्तुमुद्यतः ॥ न हिताय सदा भाति सुरेशः कर्मठो यतः ॥ ४१ ॥ तात्पर्यं ब्रह्मणि प्रोक्तं व्यासेन श्रुतिवाक्यगम् ॥ जैमिनिर्व्यासशिष्योऽपि प्रोक्तवानन्यथैव तत् ॥ ४२ ॥ मतभेदे तयोरेवं कथं स्याद्गुरुशिष्यता ॥ आजन्म कर्मठोऽयं वै लोके कर्मप्रवृत्तिकृत् ॥४३॥ कर्मण्येवं परं भाष्यं प्रत्युतासौ प्रयोक्ष्यति ॥ न विश्वासपदं भाति मतमेतस्य नो गुरो ॥४४॥

आज्ञया निवेदयाम इति भावः ॥ ४० ॥ असौ सुरेश्वरः आज्ञप्तः । भवतेति शेषः । हिताय अद्वैतप्रतिपादनरूपं हितं कर्तुं योग्यो न भाति न दृश्यते । यतः सदा कर्मठः कर्मनिष्ठोऽस्ति ॥ ४१ ॥ गुरुहिताऽकरणे दृष्टांतमाह तात्पर्यमिति । श्रुतिवाक्यगं श्रुतिवाक्यस्थं तात्पर्यं सिद्धांतः ॥ ४२ ॥ तयोः गुरुशिष्ययोः जैमिनिव्यासयोर्भवत्सुरेश्वरयोश्च । अयं सुरेश्वरः ॥ ४३ ॥ प्रयोक्ष्यति योजयिष्यति । विश्वासपदं विश्वासार्हम् । नोऽस्माकम् ॥ ४४ ॥

अच्छधीः स्वच्छबुद्धिः ॥ ४५ ॥ यस्य प्रसन्नो नृहरिः स्मृत्या स्मरणमात्रेण समीपतां प्राप्नोति ॥ ४६ ॥ आनंदगिरिसंज्ञस्तोटको वा भाष्यवार्त्तिक विषये क्षमोऽस्ति । यस्यानंदगिरेः ॥ ४७ ॥ ४८ ॥ अयं हस्तामलकः प्रवृत्तिभाक् ग्रंथप्रवृत्तिमान्नास्ति ॥ ४९ ॥ नाह नोच्चारितवान् यस्तस्य ब्रह्मानंद

योग्यः सनंदनो भाष्ये वार्तिकं कर्तुमच्छधीः ॥ पद्भ्यां यो जाह्नवीतोयादागतो भवदाज्ञया ॥ ४५ ॥ कर्मणा तेन संप्राप्तः पद्मपादाभिधां पराम् ॥ प्रसन्नो नृहरिर्यस्य स्मृत्यायाति समीपताम् ॥ ४६ ॥ आनंदगिरिसंज्ञो वा क्षमोऽयं भाष्यवार्तिके ॥ प्रसन्ना शारदा यस्य बभूव कृपया तव ॥ ४७ ॥ अथाह पद्मपादोऽपि श्रीगुरुं पुरतः स्थितः ॥ हस्तामलोऽयं योग्योस्ति भाष्ये कर्तुं हि वार्तिकम् ॥ ४८ ॥ उपदेशं विना येन ब्रह्माद्वैतं प्रकाशितम् ॥ शंकरः प्राह तं सत्यं किं तु नायं प्रवृत्तिभाक् ॥ ४९ ॥ नाक्षराण्याह बाल्ये यश्चोपनीतस्तथा श्रुतीः ॥ ब्रह्मसौख्याब्धिमग्नस्य न प्रवृत्तिः प्रबंधके ॥ ५० ॥ इत्थं गुरोर्वचः श्रुत्वा पद्मांघ्रिः पुनरब्रवीत् ॥ श्रवणादि विना ज्ञानं जातमस्य कथं गुरो ॥ ५१ ॥ गुरुस्तानाह सिद्धोऽभूत्पुरैको यमुनातटे ॥ विरक्तः सर्वसिद्ध्याढ्यो ज्ञानवान्ब्रह्मतत्परः ॥ ५२ ॥ नद्यां स्नातुं विधेः प्राप्ता काचिद्बालयुता वधूः ॥ बालं सिद्धसमीपे सा निधायाह मुनिं वचः ॥ ५३ ॥ रक्षणीयः क्षणं बालस्त्वयेत्युक्त्वा सखीयुता ॥ गता स्नातुं ततो दूरं ध्यानस्थस्यांकतस्तदा ॥ ५४ ॥ पतन्नद्यां मृतो बालो दैवादथ सखीयुता ॥ स्नात्वाऽगता बालमाता दृष्ट्वा बालं मृतं तदा ॥ ५५ ॥ विललापातिदुःखार्ता सखीभिः सा द्विजांगना ॥ श्रुत्वा तत्करुणायुक्तो मुनिस्त्यक्त्वा निजं वपुः ॥५६॥ प्रविवेश शिशोर्देहे प्रोत्थितस्तत्क्षणे शिशुः॥सोऽयं हस्तामलः पूर्वसिद्धोऽतः श्रवणं विना ॥५७॥

मग्नस्य वार्तिकप्रबंधे प्रवृत्तिर्नास्ति ॥ ५० ॥ अस्य हस्तामलस्य ॥ ५१ ॥ तान् पद्मपादादीन् ॥ ५२ ॥ विधेः दैवात् ॥ ५३ ॥ ध्यानस्थस्येत्युत्तरान्वयि । अंकतः समीपतः ॥ ५४ ॥ अथादि परान्वितम् ॥५५॥ उत्तरार्धमुत्तरबद्धम् ॥५६॥ अतः श्रवणं विना ज्ञानवानिति संबंधः ॥ ५७ ॥

॥ ५८ ॥ निबंधकं टीकाविशेषम् ॥ ५९ ॥ प्रतिश्रुतं वार्तिकं कुर्विति प्रतिज्ञातम् ॥ ६० ॥ ६१ ॥ चित्सुखादीनां रुचिः प्रीतिर्नास्ति कर्मठस्य तव कर्मपरवार्तिकेन तेषां संतोषो न भविष्यतीति भावः । अन्यथा कर्मपरम् ॥ ६२ ॥ एषा पूर्वोक्ता या शंका तन्निवृत्त्यर्थं एषां चित्सुखादीनां प्रत्ययोऽद्वैतपरं वार्तिकं करिष्यतीति निश्चयो यथा भवेत्तथैकं ग्रंथं कृत्वा दर्शयेति योज्यम् ॥ ६३ ॥ नैष्कर्म्यगोचरां कर्मनिवृत्तिविषयाम् ॥ ६४ ॥

ज्ञानवान्स्वसुखे मग्नः प्रबंधं न करोत्यसौ ॥ सुरेशः सर्ववित्कर्तुं भाष्ये सद्वार्तिकं क्षमः ॥ ५८ ॥ भवद्भ्यो रोचते नास्य कृतं सद्वार्तिकं महत् ॥ पद्मपादः करोत्वेकं सूत्रभाष्ये निबंधकम् ॥ ५९ ॥ वार्तिकं तु न कर्तव्यं सुरेशाय प्रतिश्रुतम् ॥ स चेन्न कर्ता तर्ह्यन्यो विधातुं कः क्षमो भवेत् ॥ ६० ॥ श्रीदेशिकेंद्र उवाच ॥ शिष्यानेवं समादिश्य शंकरो रहसि स्थितः ॥ सुरेशं प्राह नो कार्यं त्वया भाष्ये तु वार्तिकम् ॥ ६१ ॥ न रुचिश्चित्सुखादीनां यतस्त्वं कर्मठः पुरा ॥ भाष्यार्थमन्यथैव त्वं कर्माभ्यासात्करिष्यसि ॥ ॥ ६२ ॥ एतच्छंकानिरासार्थं ब्रह्माद्वैतपरं सकृत् ॥ ग्रंथं कृत्वा दर्शयादौ यथैषां प्रत्ययो भवेत् ॥ ६३ ॥ ततो नैष्कर्म्यसिद्धिं स कृत्वा नैष्कर्म्यगोचराम् ॥ गुरवे दर्शयामास शोधयित्वा सुरेश्वरः ॥ ६४ ॥ दृष्ट्वा तु शंकरो ग्रंथं समालोच्य प्रहर्षितः ॥ शिष्येभ्योऽदर्शयत्तेऽपि दृष्ट्वा पूर्वापरं सकृत् ॥ ६५ ॥ सर्वेभ्यो मेनिरे श्रेष्ठं सुरेशं ग्रंथकारकम् ॥ भाष्यकारोऽब्रवीच्छिष्यान्नो जातं भाष्यवार्तिकम् ॥ ६६ ॥ चिरादभीष्टं मच्चित्ते प्रोच्येत्थं मौनमास सः ॥ ततः सुरेश्वरः प्राह येऽन्ये कुर्वंति वार्तिकम् ॥ ६७ ॥ सूत्रभाष्ये तु तल्लोके प्रसरं न गमिष्यति ॥ एवं शप्त्वा स मुनिराट् पुनराह गुरुं यतिः ॥ ६८ ॥ न च ख्यात्यै न लाभाय निबंधो रचितो मया ॥ पूर्वं यत्कर्मठत्वं मे तन्निरस्तं त्वया गुरो ॥ ६९ ॥ युक्तिभिर्हेतुगर्भाभिः पुनस्तर्कि प्रवर्द्धते ॥ न्यायशास्त्रादिशास्त्रेषु निबंधा बहवः कृताः ॥ ७० ॥

तेऽपि शिष्या इत्यादिपरान्वितम् ॥ ६५ ॥ नो जातं केनापि न कृतमित्यर्थः ॥ ६६ ॥ मच्चित्ते चिरादभीष्टमिति पूर्वान्वितम् । स शंकरः ॥ ६७ ॥ सूत्रभाष्य इति पूर्वान्वितम् । तेषां तद्वार्तिकं प्रसरं विस्तारं न प्राप्स्यति ॥ ६८ ॥ ६९ ॥ हेतुयुक्ताभिः युक्तिभिरिति पूर्वान्वितम् । तव कर्मठत्वम् ।

कृताः मयेति शेषः ॥ ७० ॥ मनीषा बुद्धिः । निवेशिता अर्पिता ॥ ७१ ॥ ७२ ॥ अत्र वार्तिकद्वये ॥ ७३ ॥ विचारतः अर्थावलोकनेन । उत्तरार्द्धं पुनरान्वयि । अर्थपुष्कलां बह्वर्थाम् ॥ ७४ ॥ अस्य पद्मपादकृतप्रबंधस्य । पंच चरणाः सपादैकाध्यायपर्यंतम् ॥ ७५ ॥ त्वं वाचस्पतिमिश्रनामा बुधो भूत्वा वार्तिकं भाष्यटीकां करिष्यसीत्यन्वयः ॥ ७६ ॥ स्थानापन्नां तत्तत्स्थाने योग्यार्थयुक्ताम् । समाधाय आश्वास्य ॥ ७७ ॥ आदिशब्दादुपनिषत्सु ।

अतः परं मनीषा मे भवत्पादे निवेशिता ॥ इत्युक्तवंतं प्रत्याह सुरेशं शंकरो गुरुः ॥ ७१ ॥ तैत्तिरीयकभाष्ये त्वं बृहदारण्यके तथा ॥ कृत्वा वार्तिकयुग्मं च कीर्तिमाप्नुहि भूतले ॥ ७२ ॥ न कश्चिद्विघ्नकर्तात्रेत्याज्ञप्तोऽथ सुरेश्वरः ॥ कृत्वा प्रदर्शयामास गुरवे वार्तिकद्वयम् ॥ ७३ ॥ दृष्ट्वा तद्भाष्यकारोऽपि हर्षमाप विचारतः ॥ कृत्वा सनंदनष्टीकां सूत्रभाष्येऽर्थपुष्कलाम् ॥ ७४ ॥ गुरवे दर्शयामास सोऽप्यालोच्य सुरेश्वरः ॥ आह पंचाऽस्य चरणाः प्रथिताः स्युर्न चाधिकम् ॥७५ ॥ एकांते शंकरः प्राह सुरेशं प्रतिबोधयन् ॥ प्रारब्धकर्मणा त्वं वै भूत्वा वाचस्पतिर्बुधः ॥ ७६ ॥ वार्तिकं भाष्यटीकां च स्थानापन्नां विधास्यसि ॥ सुरेश्वरं समाधाय शिष्यान्प्राह गुरुः पुनः ॥ ७७ ॥ सूत्रभाष्यादिभाष्येषु कार्याष्टीकाः स्वबुद्धितः ॥ सूत्रभाष्यादिभाष्याणां गूढार्थानां तु बोधकाः ॥ ७८ ॥ इत्याज्ञप्तास्तु ते टीकाश्चक्रुर्भाष्येषु सर्वशः ॥ कृत्वाऽऽनंदगिरिष्टीका गुरवे तास्त्वदर्शयत् ॥ ७९ ॥ भाष्यकारोऽपि ताष्टीकाः प्रतिभाष्यं विलोक्य सः ॥ प्राहानंदगिरिं धन्यः कृतार्थोऽसीति हर्षितः ॥ ८० ॥ कृत्वा निबंधानथ चित्सुखाद्याः प्रदर्शयामासुरुदारवीर्याः ॥ श्रीदेशिकेंद्राय विलोक्य तान्वै श्रीशंकरस्तुष्टमना बभूव ॥ ८१ ॥ इति श्रीगुरुपरंपराचरित्रे श्रीशंकराचार्यकथासारेऽष्टादशः सर्गः ॥ १८ ॥

गूढार्थस्य प्रकाशकाः ॥ ७८ ॥ सर्वशः सर्वेषु । तत्रानंदगिरेष्टीकोत्कर्षं दर्शयति कृत्वेत्यादिना ॥ ७९ ॥ प्रतिभाष्यं सर्वभाष्येषु ॥ ८० ॥ एवमन्येषां टीकादर्शनेनापि संतुष्टो जात इत्याह । कृत्वेति । उपजातिवृत्तम् ॥८१॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामष्टादशः सर्गः ॥ १८॥

पद्मांघ्रियात्राटीकांतो मातुर्मुक्तिर्गुरोर्दिशाम् । जयंतः ककचस्योक्तोऽष्टापचोनविंशके ॥ १९ ॥ एकदेति ॥ १ ॥ [illegible] तु [illegible] निवर्त्य संपाद्य ॥ २ ॥ सन् उत्तमः कृतः किं तु विक्षेपकारित्वम् । आत्मचिंतने चित्तानवस्थितिजनकत्वं यात्रायामस्तीति न विचारितं न ज्ञातं त्वयेति शेषः ॥ ३ ॥ यात्रायां विक्षेपकारित्वं दर्शयति मातुरिति । मध्याह्ने क्षुत्प्रपीडनं क्षुधा तापो भवतीति सर्वत्राध्याहारः ॥ ४ ॥ सर्वार्थयात्रायां फलं तद्गुरुसमीपेऽपि भवतीत्याह । गुरुरिति । तस्माद्गुरोरात्मोपदेशजा दृष्टिः आत्मसाक्षात्कारः देवानां क्षेत्रस्थदेवतानां दर्शनं समुदाहृतमस्तीति सर्वत्र योज्यम् ।

श्रीदेशिकेंद्र उवाच ॥ एकदा पद्मपादाख्यः शंकरं प्राह नम्रधीः ॥ भगवंस्तीर्थयात्रायै संकल्पो हृदि चोत्थितः ॥ १ ॥ तामेतां परमां [illegible] माज्ञा चेच्छ्रीमतां मे भविष्यति ॥ तीर्थयात्रां विनिर्वर्त्य यास्यामि गुरुसन्निधिम् ॥ २ ॥ श्रुत्वेत्थं तं गुरुः प्राह संकल्पोऽयं तु सन्कृतः ॥ किं तु विक्षेपकारित्वं यात्रायां न विचारितम् ॥ ३ ॥ प्रातरुत्थाय गमनं मध्याह्ने क्षुत्प्रपीडनम् ॥ नात्माभ्यासः समाधिश्च न सतां संगतिस्तथा ॥ ४ ॥ गुरुः क्षेत्रं जलं पादौ तस्मादात्मोपदेशजा ॥ दृष्टिरेव हि देवानां दर्शनं समुदाहृतम् ॥ ५ ॥ श्रुत्वा सनंदनोऽप्याह सत्यमेतद्वचो गुरो ॥ तथापि यात्रोत्कंठा मे वर्तते हृदि सर्वदा ॥ ६ ॥ इत्थं शिष्यवचः श्रुत्वा शंकरः प्राह तं पुनः ॥ एवमेवाग्रहस्ते चेन्न मयापि निवार्यते ॥७॥ सज्जनैः सह गंतव्यं सज्जना ह्यात्मसौख्यदाः ॥ गुरोर्वाक्यं पद्मपादः श्रुत्वा भक्त्या प्रणम्य तम् ॥८॥ मार्गमाश्रित्य शिष्याढ्यो यात्रार्थं प्रययौ मुदा ॥ सुरेश्वरमुखैः शिष्यैर्युक्तः शृंगगिरौ वसन् ॥ ९ ॥ मातुश्चिंतनया[illegible]योगात्तं देशमागमत् ॥ ननाम मातरं सापि चिरात्प्राप्तं समीक्ष्य च ॥ १० ॥ संतापं संपरित्यज्य हृष्टचित्ता बभूव ह ॥ शंकरो मातरं प्राह देवि तुभ्यं नमोऽस्तु मे ॥११॥ ऐहिकं वांछितं दास्ये किं वामुष्मिकमेव ते ॥ श्रुत्वेत्थं शंकरं प्राह जननी मत्कुलेश्वर ॥१२॥

॥ ५ ॥ यात्रोत्कंठा यात्रार्थमुत्सुकता ॥ ६ ॥ मयापि न निवार्यते निवारणमहं न करोमीत्यर्थः ॥ ७ ॥ किंतु सज्जनैः सह गंतव्यं त्वयेति शेषः । हि यस्मात्संतः आत्मानंदप्रदा भवंति । उत्तरार्धमुत्तरान्वयि ॥ ८ ॥ पद्मपादे गते शृंगपर्वते शंकरवृत्तमाह—सुरेश्वरेति । उत्तरान्वितम् । शंकर इति शेषः ॥ ॥ ९ ॥ सापि माता चिरात्प्राप्तं तं शंकरं समीक्ष्य दृष्ट्वा हृष्टचित्ता बभूवेत्यन्वयः ॥ १० ॥ ११ ॥ ऐहिकम् इह भवं किमामुष्मिकं स्वर्गादिभवं वा

वांछितं सुखादि दास्ये अर्पयामि । सर्वं तवेच्छितं पूरयामीत्यर्थः । मत्कलेवरमित्युत्तरान्वयि ॥ १२ ॥ जीर्णं जराग्रस्तमस्मि अतोऽहं स्थातुं शक्ता नास्मि त्वं चैतच्छरीरं शास्त्रतः यथाशास्त्रं संस्कृत्य अद्य स्वः स्वर्गस्य गतिं प्रापय । ततो मम सुखं भवेत् एतदेव ममेच्छितमस्तीत्यर्थः ॥ १३ ॥ १४ ॥ शैवा जटाभस्मादिधारणेन लक्षितान् दृष्ट्वा सुतं प्राह । स्वस्थितिं स्वस्थानम् । मम इष्टः अव्ययो हरिरस्ति । वैकुंठं गमिष्यामीत्यर्थः ॥ १५ ॥ १६ ॥

जीर्णं स्थातुं न शक्तास्मि चैतत्संस्कृत्य शास्त्रतः ॥ स्वर्गतिं प्रापयाद्य त्वं ततः सौख्यं भवेन्मम ॥ १३ ॥ निशम्य वचनं मातुः स तुष्टाव महेश्वरम् ॥ तत्क्षणे पार्षदाञ्छंभुः प्रेषयामास हर्षतः ॥ १४ ॥ शैवान्दृष्ट्वा सुतं प्राह माता नेष्टः शिवालयः ॥ प्रमथाः स्व स्थितिं यांतु ममेष्टो हरिरव्ययः ॥ १५ ॥ एवं मातुर्वचः श्रुत्वा विसृज्य शिवपार्षदान् ॥ नारायणं हरिं कृष्णं ध्यात्वा तुष्टाव शंकरः ॥ १६ ॥ श्रुत्वा स्तोत्रं हरिः साक्षाच्छ्रीयुक्तो गरुडस्थितः ॥ शंखचक्रादिसंपन्नश्चाविर्भूतो यतेः पुरः ॥ १७ ॥ शंकरः श्रीहरिं नत्वा पुनस्तुष्टाव तुष्टधीः ॥ यतेः स्तवनमाकर्ण्य तुष्टः श्रीहरिरव्ययः ॥१८॥ बद्धांजलिं यतिं प्राह यते ते विमला मतिः ॥ आविष्कृतो ऽद्वैतमार्गः कृत्वा भाष्याणि भूतले॥१९॥ त्वया कृताः प्रबंधा ये प्रचारं यांतु सत्सु ते ॥ ब्रह्मलोकेऽपि सिद्धेषु मान्यतां यांतु शंकर ॥२०॥ इयं सती ते जननी सुभद्रा रता परेशे मयि वासुदेवे ॥ प्रयातु मे धाम मया सहैव विमानमारुह्य खगप्रधानम् ॥२१॥ श्रीदे शिकेंद्र उवाच ॥ तावदेव यतेर्माता त्यक्त्वा तन्मानुषं वपुः ॥ धृत्वा दिव्यं वपुः प्राप्ता विमानं दिव्यकांतिमत् ॥ २२ ॥ प्रोवाच जननी पुत्रं कृतार्थाऽहं त्वया कृता ॥ पुत्रशब्दस्त्वया लोके याथार्थ्यं प्रापितोऽधुना ॥२३॥ मातरीत्थं वदंत्यां तु सविमानो गणान्वितः ॥ अंतर्हितो रमाकांतः पश्यतः शंकरस्य च॥२४॥वैकुंठं प्रापयित्वेत्थं मातरं शंकरो यतिः॥तस्थौ तत्रांगणे मातुर्देहं संस्कर्तुमुत्सुकः॥२५॥

॥ १७ ॥ यतेरित्यादि परान्वितम् ॥ १८ ॥ १९ ॥ प्रबंधाः भाष्यादयः ॥ २० ॥ सुभद्रा कल्याणवती । खगप्रधानं गरुडप्रधानं विमानमारुह्य ॥ ॥ २१ ॥ २२ ॥ त्वया पुत्रशब्दः याथार्थ्यं पुन्नामनरकात्त्रायत इत्यर्थयोग्यत्वं प्रापितः ॥ २३ ॥ २४ ॥ २५ ॥

तस्याः मातुर्बंधून् आतान् प्रार्थयामास शंकर इत्यनुवृत्तिः । स्वप्रकल्पितैरिति। मातुः सेवायां यतेरधिकारोऽस्तीति शास्त्रमज्ञात्वा केवलं मनःकल्पितैः यतिना प्रेतस्पर्शो न कार्यः कुतस्तत्संस्कार इत्यादिदूषणैर्निंदां कृतवंत इत्यर्थः॥२६॥ याचिताः मातरं संस्कर्तुं प्रार्थितास्ते वह्निं नैव ददुः तदेत्याद्युत्तरान्वयि । तां मातरम्॥२७॥बाहुं स्वबाहुं ममंथ असौ शंकर इत्यपकर्षः। तेन मंथनाग्निना॥२८॥इत इत्याद्युत्तरान्वयि॥२९॥युष्मद्गृहे संन्यासिनां भिक्षा न भविष्यतीत्यर्थः । चकारात् गृहसमीपे स्मशानं च भवत्विति ज्ञेयम् । उत्तरार्द्धमुत्तरान्वयि ॥ ३० ॥ ३१ ॥ नाथः शंकरः इति प्रकारेण जयति सर्वोत्कर्षेण

तद्बंधून्प्रार्थयामास तेऽपि सर्वे समागताः ॥ निनिंदुर्भाष्यकारं तं दूषणैः स्वप्रकल्पितैः ॥ २६ ॥ याचिता भाष्यकारेण वह्निं नैव ददुस्तदा ॥ स्वयं काष्ठानि संचित्य सरित्तीरे निवेश्य ताम् ॥ २७ ॥ ममंथ दक्षिणं बाहुं ततो वह्निर्विनिःसृतः ॥ तेन देहं ददाहासौ सर्ववित्सर्वशक्तिमान् ॥ २८ ॥ बंधून्विप्रांश्च तत्रत्यान्छशापाथ यतीश्वरः ॥ इतः परं भवंतोऽपि वेदवह्निबहिष्कृताः ॥ २९ ॥ शूद्राचाराश्च संन्यासिभिक्षाशून्या भविष्यथ ॥ शप्त्यैवं भाष्यकारोऽथ विप्रांस्तत्र निवासिनः ॥ ३० ॥ योगशक्त्या स्वयं शीघ्रमाययौ शृंगपर्वतम् ॥ प्रापिता जननी चेत्थं यतिना विष्णुमंदिरम् ॥ ३१ ॥ इति जयति महेशो नाथ आत्मा जनानां प्रवरगुणविशिष्टः सर्वलोकोपकारी ॥ मनुजसमविहारो मानुषं प्राप्य देहं भवति शठविनिंद्यस्तेषु संबंधवांश्चेत् ॥ ३२ ॥ श्रीदेशिकेंद्र उवाच ॥ अथानुज्ञां गुरोः प्राप्य तीर्थयात्रां सनंदनः ॥ स्वानुभूत्याऽद्वयानंदे तिष्ठन्नेव चकार सः ॥ ३३ ॥ दक्षिणां दिशमाश्रित्य कालहस्तीश्वरं ययौ ॥ स्नात्वा जलाशये सांबं संपूज्याथ ननाम ह ॥ ३४ ॥ कांचीपुरे शिवं नत्वा तत्समीपे तथा हरिम् ॥ पुंडरीकपुरं भिक्षुर्ययौ यत्र महेश्वरः ॥ ३५ ॥ सद्भिर्नृत्यति चानंदपूर्णस्तन्त्वीक्षते प्रिया ॥ तत्र गत्वा स तत्रत्यं जनं प्रोवाच भो इह ॥ ३६ ॥

वर्तते । तेषु शठेषु संबंधवान्सहवासकर्ता चेत् तर्हि तैः शठैर्विशेषेण निंद्यो भवति । निंदितुं योग्यो भवति । दुष्टसंगाच्छंकरस्य निंदार्हत्वं वस्तुतोऽनिंद्य इति भावः । मालिनीवृत्तम् ॥ ३२ ॥ स्वानुभवेनाद्वितीयब्रह्मानंदे तिष्ठन् सन्नेव तीर्थयात्रां चकार ॥ ३३ ॥ ३४ ॥ यत्र महेश्वर इत्युत्तरान्वयि ॥ ३५ ॥ यत्र पुंडरीकपुरे । आनंदपूर्णः सन् सद्भिः योगिभिः सह नृत्यति प्रिया गौरी तु तं शिवम् ईक्षते पश्यति । चकाराद्गौरी अप्यानंदपूर्णेति ज्ञेयम् । तत्र

युत्तरान्वयि । तत्रत्यं पुंडरीकपुरस्थं स सनंदनः ॥ ३६ ॥ नृत्येन श्रांतः श्रमितः शिवः । अत्र क्षेत्रे त्वम् एहीति गंगां प्राह स्नानार्थमिति शेषः ॥ ३७ ॥ आप्लुत्या स्नानेन शंभोः श्रमापहा श्रमहंत्री गंगाऽऽययौ प्राप्ता । अत्रत्या जनाः । शिवगंगाख्यं तीर्थमस्तीति भावः ॥ ३८ ॥ अद्भुतम् आश्चर्यकरं तत् गंगा गमनादि वचः श्रुत्वा तत्र शिवगंगायां स्नात्वा शिवमर्चयत ॥ ३९ ॥ बांधवा इत्यादि परेणान्वितम् ॥ ४० ॥ मातुलागारे मातुलगृहे ॥ ४१ ॥

किं तीर्थमिति तत्रत्यः पृष्टः सन्नुत्तरं ददौ॥ नृत्यश्रांतोऽत्र चैहीति गंगां प्राह शिवः स्वयम्॥३७॥एवमुक्ताऽऽययौ गंगाऽऽप्लुत्या शंभोः श्रमापहा ॥ शिवगंगेति चात्रत्या नामधेयं प्रचक्रिरे ॥ ३८ ॥ तदद्भुतं यतिः श्रुत्वा स्नात्वा तत्रार्चयच्छिवम् ॥ रामेश्वरं गंतुकामः कावेर्यां स्नातवानथ ॥ ३९ ॥ मातुलं द्रष्टुकामोऽसौ सशिष्यस्तद्गृहं ययौ ॥ जहर्ष मातुलो दृष्ट्वा बांधवाश्च समागताः ॥ ४० ॥ मिथः पप्रच्छुः कुशलं प्रशशंसुर्मिथस्तथा ॥ शिष्याढ्यो मातुलागारे भिक्षां भुक्त्वा स्थितो यतिः ॥ ४१ ॥ शिष्यपार्श्वस्थितं दृष्ट्वा पुस्तकं प्राह मातुलः ॥ पद्मपादं किमस्तीति प्रत्याह स च हर्षितः ॥ ४२ ॥ सूत्रभाष्ये कृता टीका मयेयं ब्रह्मतत्परा ॥ अथाह मातुलो देहि पुस्तकं मे विलोक्यते ॥ ४३ ॥ पद्मांघ्रिस्तद्ददौ हर्षाद्दृष्ट्वा स च मुदं ययौ ॥ तापमंतः समालोच्य ब्रह्माद्वैतं परिष्कृतम् ॥ ४४ ॥ श्रुत्या युक्त्या निरस्तं च यत्र प्राभाकरं मतम् ॥ मत्सरं कृतवानंतर्बहिः साधुवदाचरत् ॥ ४५ ॥ पद्मांघ्रिं प्राह निक्षिप्यात्रेदं रामेश्वरं व्रज ॥ तथेति पुस्तकं न्यस्य मातुलस्य गृहे ययौ॥४६॥स शिष्यः पद्मपादोऽपि रामेशं द्रष्टुमुत्सुकः ॥ गच्छतस्तस्य वामाक्षि प्रास्फुरद्दुःखसूचकम् ॥४७॥ खेदमंतस्त्ववाप्यासावगणय्य गतस्ततः ॥ गते तस्मिन्मातुलोऽस्य मनसीत्थं व्यचिंतयत्॥४८॥

॥ ४२ ॥ ब्रह्मतत्परा अद्वैततात्पर्यवती । त्वं मे मह्यं पुस्तकं देहि तन्मया विलोक्यत इत्यर्थः ॥ ४३ ॥ परिष्कृतं वाक्यार्थचातुर्येण प्रतिपादितम द्वैतं ब्रह्म समालोच्याकलय्यांतः हृदि तापं ययौ ॥ ४४ ॥ श्रुत्या कर्य्या । मत्सरं द्वेषं मातुल इति शेषः ॥४५॥ पद्मांघ्रिं प्राहेत्यत्र मातुल इत्यध्याहारः । अत्र मद्गृहे इदं पुस्तकं निक्षिप्य संस्थाप्य त्वं रामेश्वरं व्रज । न्यस्य स्थापयित्वा पद्मपादो रामेशं ययावित्यन्वयः॥४६॥पूर्वार्द्धं पूर्वान्वितम् ॥४७॥४८॥

अस्मद्गुरोः प्रभाकरस्य । मतं सिद्धांतः । इदं पुस्तकम् ॥ ४९ ॥ अब्जांघ्रिमातुलः पद्मपादमातुलः ॥ ५० ॥ तीर्थं रामेश्वरक्षेत्रम् । आगमत् "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु" इति विश्वः । सेतुबंधे तत्रस्थतीर्थे ॥ ५१ ॥ ५२ ॥ समासं विग्रहम् ॥ ५३ ॥ रामः ईशः उपास्यो यस्य सोऽहमिति महादेवो बहुव्रीहिं जगौ कथितवान् । रामस्य ईशो रामेशो ममोपास्योऽयं शिव इति तत्पुरुषं रामो जगौ । ब्रह्माद्या देवाः रामेश

प्रसिद्धोऽयं यदा ग्रंथस्तदैवास्मद्गुरोर्मतम् ॥ नाशं यास्यत्यतो यत्नान्नाशयेऽहमिदं खलु ॥ ४९ ॥ विचिंत्यैवं गृहे क्षिप्त्वा पुस्तकं चाथ वह्निना ॥ ददाहात्मगृहं दुष्टः कर्मठोऽब्जांघ्रिमातुलः ॥ ५० ॥ अथ श्रीपद्मपादोऽपि शिष्याढ्यस्तीर्थमागमत् ॥ सेतुबंधे ततः स्नात्वा रामेशं प्रणनाम ह ॥ ५१ ॥ स्तुत्वाह सेतुबंधः श्रीरामो रामेश्वरोत्र हि ॥ त्रयाणां दर्शनाद्यांति पापिनोऽपि परां गतिम् ॥ ५२ ॥ इत्थं क्षेत्रं प्रशंसंतं प्राह कश्चिद्द्विजोत्तमः ॥ यते रामेश इत्यस्य समासं वद निश्चयात् ॥ ५३ ॥ पद्मपादुवाच ॥ महादेवो बहुव्रीहिं रामस्तत्पुरुषं जगौ ॥ ब्रह्मादयः सुराः प्राहू रामेशे कर्मधारयम् ॥ ५४ ॥ श्रुत्वेत्थं ब्राह्मणः प्राह सर्वज्ञोऽसीति तं यतिम् ॥ ततः सशिष्यं पद्मांघ्रिर्ययौ मातुलमंदिरम् ॥ ५५ ॥ तत्र श्रुत्वा गृहं दग्धं तथा ग्रंथं च दुःखितः ॥ मातुलोऽप्याह तं भिक्षुं पश्चात्तापं प्रदर्शयन् ॥ ५६ ॥ गृहदाहे न मे दुःखं यथा पुस्तकदाहतः ॥ तमाह पद्मपादोऽथ दग्धं तत्पुस्तकं यदि ॥ ५७ ॥ बुद्धिर्मे सुस्थिरैवास्ति पुनष्टीकां करोम्यहम् ॥ करिष्यति पुनष्टीकामिति हेतोः स मातुलः ॥ ५८ ॥ प्राक्षिपद्भोजने द्रव्यं बुद्धिमांद्यकरं महत् ॥ भुक्त्वैकांतस्थितोऽपश्यद् बुद्धिमांद्यं सनंदनः ॥ ५९ ॥ सशिष्योऽथ गुरुं द्रष्टुं केरलानाजगामह ॥ तदैव शंकरोऽप्यागाद्व्योममार्गेण केरलान् ॥ ६० ॥ दृष्ट्वा तान्सन्नतान्सर्वान्पप्रच्छ कुशलं गुरुः ॥ पद्मपादोऽथ वृत्तांतं टीकानाशादिकं क्रमात् ॥ ६१ ॥

पदे रामश्चासावीशश्चेति । उभयाभेदसूचकत्वेनोभयोपासका वयमिति कर्मधारयं जगुः । एवं रामेशपदस्य बहवोऽर्था भवंतीत्यर्थः ॥ ५४ ॥ ततः रामेश्वरात् ॥ ५५ ॥ दुःखितोऽभवत् पद्मपाद इत्यनुवृत्तिः ॥ ५६ ॥ यथा पुस्तकदाहेन मम दुःखं न तथा गृहदाहेनेत्यर्थः ॥ ५७ ॥ इत्यादिकं परान्वयि ॥ ५८ ॥ द्रव्यं विषफलादि ॥ ५९ ॥ ६० ॥ तान् पद्मपादादीन् । पद्मपादादि परान्वयि ॥ ६१ ॥

पंचपादिकां सपादैकाध्यायटीकां प्राचख्यौ कथितवान् ॥ ६२ ॥ आनुपूर्व्यात् पूर्वक्रमेण पूर्वामेव पूर्वोक्तामेव । यथापूर्वामिति पूर्वान्वयि । तत् स्मृत्वा तटी
कावधारणं शंकरे न चित्रम्।उत्तरार्द्धे बभूवे त्यपकर्षः ॥६३॥ अन्यद्वृत्तमाह—अथेत्यादिना॥६४॥या पूर्वं त्वया कृता सा नाटकत्रयी प्रख्याताऽस्ति किं।स च
राजा । प्रमादतः गर्वेण त्वदग्रे मया प्रोक्ता नाटकत्रयीत्यनुवृत्तिः॥६५॥ श्रुतेत्युत्तरान्वयि ॥६६॥ स्वकृतां त्वत्कृताम्॥६७॥शुश्रूषां सेवामहं करोमि तां त्वं

गुरवे प्राह दुःखेन बुद्धिमांद्यं तथात्मनः ॥ अथाश्वास्य गुरुः शिष्यं प्राचख्यौ पंचपादिकाम् ॥ ६२ ॥ पूर्वामेवानुपूर्व्याच्च तच्चित्रं नैव शंकरे ॥ सपंचपादिकां श्रुत्वा गुरोश्चालिख्य तुष्टधीः ॥ ६३ ॥ बभूवाथागतो राजा शेखराख्यः कृतांजलिः ॥ प्रणम्य शंकरं तस्थौ भाष्यकृत्प्राह तं नृपम् ॥ ६४ ॥ या पुरा प्रथिता सा किं त्वत्कृता नाटकत्रयी ॥ स चोवाच मया प्रोक्ता भवदग्रे प्रमादतः ॥ ६५ ॥ तेन दोषेण दग्धाग्नौ पुनः कर्तुं न धीर्मम ॥ तमाह शंकरो राजञ्छुता त्वद्वदनान्मया ॥ ६६ ॥ प्रोच्यते तां लिख त्वत्र स्वकृतां नाटकत्रयीम् ॥ लिखन्हर्षाच्छंकरोक्तां विस्मयं प्राप भूपतिः ॥ ६७ ॥ शंकरं प्राह शुश्रूषां किं करोमि वदाधुना ॥ तं प्रत्याह यतिर्वाक्यं राजञ्छप्ताः पुरा मया ॥ ६८ ॥ कालटीनामका विप्रास्ते विधेयास्तथैव च ॥ एवमेव करिष्यामीत्येवमुक्त्वा नृपस्तदा ॥६९॥ परिक्रम्य यतीन्द्रं तं नमस्कृत्वा ययौ पुरीम् ॥ अथ श्रीशंकरः शिष्यैः सुधन्वनृपतेः पुरीम् ॥ ७० ॥ ययौ तेनार्चितः सम्यग्दिग्जिगीषुस्तमब्रवीत् ॥ राजन्नत्र महीपृष्ठे वेदमार्गप्रवर्तनम् ॥ ७१ ॥ कर्तुकामोऽस्म्यहं तत्र साहाय्यं कर्तुमर्हसि ॥ इति श्रुत्वा मुनेर्वाक्यं राजा वचनमब्रवीत् ॥ ७२ ॥ दासोऽस्म्यहं करिष्यामि शुश्रूषां तव पादयोः ॥ अथ शिष्यवरैर्युक्तः सोऽनुयातः सुधन्वना ॥ ७३ ॥

वद आज्ञापय । हे राजन् इत्युत्तरान्वयि ॥ ६८ ॥ कालटीनामकाग्रहारस्था विप्रास्तथैव यथा शप्तास्तथैव विधेयाः कर्तव्याः । वेदाग्निबहिष्कृता यति
भिक्षाविवर्जिताः गृहसमीपे स्मशानास्त्वया कर्तव्या इत्यर्थः । एवं त्वदुक्तं करिष्यामीत्येवमुक्त्वा नृपः पुरीं ययावित्यन्वयः॥६९॥अथायुत्तरान्वयि ॥७०॥
दिग्जयेच्छुः दिग्जयं कर्तुमिच्छुः । राजन्नित्यादि परान्वितम् ॥ ७१ ॥ तत्र दिग्जये ॥ ७२ ॥ अथायुत्तरान्वयि । सुधन्वना राज्ञा । अनुयातः

अनुसृतः ॥ ७३ ॥ सुरासक्तान् मद्यलोलुपान् ॥७४॥ चोलादिदेशान् जित्वेत्यादौ मंचाः क्रोशंतीतिवज्जहल्लक्षणया तत्रस्थान् पंडितान् जित्वेत्यर्थः । ततः कांचीं तत्रस्थान्विदुष इत्यर्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥ निष्कासितः स्थानाद्बहिष्कृतः ॥ ७८ ॥ गच्छन् स क्रकचाख्यः कपाली ।

विजिगीषुर्दिशः सर्वा आदौ रामेश्वरं ययौ ॥ व्रजन्पथि सुरासक्तान्छाक्तकाञ्जितवानसौ ॥ ७४ ॥ रामनाथं ययौ तत्र तं समर्च्य ततो मुनिः ॥ चोलद्रविडपांड्यांश्च जित्वा कांचीं ततोऽजयत् ॥ ७५ ॥ वेंकटाद्रिं विजित्यासौ कर्णाटकभुवं ययौ ॥ ततो जेतुं प्रवृत्तोऽसौ वेदबाह्यान्कपालिनः ॥ ७६ ॥ आगत्य क्रकचो नाम कपाली शंकराग्रतः ॥ प्राह संत्यज्य कापालं कथं भस्म धृतं त्वया ॥ ७७ ॥ भैरवार्चां विना मोक्षो मुंडनेन न देहिनाम् ॥ तस्यैवं वचनं श्रुत्वा राज्ञा निष्कासितो ह्यसौ ॥ ७८ ॥ गच्छन्स क्रकचोऽवोचच्छेत्स्येऽहं मस्तकानि वः ॥ गत्वा समाजं कृत्वासौ युद्धाय समुपस्थितः ॥७९॥ राजा कपालिनां संघं दृष्ट्वा युद्धाय चास्थितः ॥ कापालिकास्त्रिशूलाद्यैर्विप्रान्हंतुं समुद्यताः ॥ ८० ॥ राज्ञा युयुत्सवः केचित्क्रोधेन विवशीकृताः ॥ विप्राः पलायिताः सर्वे शंकरं शरणं ययुः ॥ ८१ ॥ विप्राणां हनने सक्तान्छंकरस्तान्कपालिनः ॥ दृष्ट्वा हुंकारमात्रेण भस्मसात्स चकार ह ॥ ॥ ८२ ॥ राज्ञा च निहतान्कांश्चिद्दृष्ट्वा स क्रकचाभिधः ॥ करे कपालं मद्याढ्यं धृत्वा नेत्रे निमील्य च ॥ ८३ ॥ अर्द्धं पिबन्तस्म सस्मार भैरवं स्वेष्टदैवतम् ॥ स्मृतः स भैरवः साक्षादाविर्भूतस्तदंतिके ॥ ८४ ॥ दृष्ट्वा स भैरवं देवं क्रकचः कुपितोऽब्रवीत् ॥ संजह्येनं विभो भिक्षुं तव भक्तजनद्रुहम् ॥८५॥ इत्युक्तः क्रकचं प्राह भैरवो रे कपालिक ॥ शिवावतारे मद्रूपे ह्यपराद्धं त्वया यतो ॥८६॥

अहं वः मस्तकानि छेत्स्ये इति अवोचत् उक्तवान् । समाजं कपालिसमूहम् " समाजोऽथ सधर्मिणाम् " इत्यमरः ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ राज्ञेत्यादि सार्द्धान्वयः ॥ ८३ ॥ ८४ ॥ ८५ ॥ रे इति हीनसंबोधनम् " हीनसंबोधने तु रे " इत्यमरः । त्वया यतो शंकरे हि निश्चयेन अपराद्धम्

अपराधः कृत इत्यर्थः ॥ ८६ ॥ अंतर्द्धिम् अंतर्धानं प्राप्तः ॥ ८७ ॥ पराब्धौ पश्चिमसमुद्रे । गोकर्णपुरे गोकर्णसमीपनगरे प्रविष्टः सन् शिवं नत्वा तस्य समीपे स्थितोऽभवत् ॥ ८८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामेकोनविंशः सर्गः ॥ १९॥ विंशे चतुश्चतुष्पद्यैर्नीलकंठं च भास्करम् । जित्वान्यांश्चाजयत्सूक्त्या श्रीशंकर इतीर्यते ॥ २० ॥ स्थित्वेति । देवस्य गोकर्णाख्यस्यालये मंदिरे ॥ १ ॥ कश्चित् हरदत्ताख्यो द्विजः ।

तस्मात्त्वां नाशयिष्यामीत्युक्त्वा तच्छीर्षमाच्छिनत् ॥ स्तुतोऽथ शंकरेणाऽसौ भैरवोऽतर्द्धिमाययौ ॥ ८७ ॥ संरक्ष्य विप्रांश्च विनाश्य दुष्टान्कापालिकाञ्छिष्ययुतः पराब्धौ ॥ स्नात्वाथ गोकर्णपुरं प्रविष्टो नत्वा शिवं तन्निकटे स्थितोऽभूत् ॥ ८८ ॥ इति श्रीगुरुपरंपराचरित्रे श्रीशंकराचार्यकथासारे एकोनविंशः सर्गः ॥ १९ ॥ श्रीदेशिकेंद्र उवाच ॥ स्थित्वा देवालये शिष्यान्पाठयामास शंकरः ॥ वेदांतभाष्यसंदोहं ब्रह्माद्वैतपरायणम् ॥ १ ॥ श्रुत्वा कश्चिद्द्विजो गत्वा नीलकंठाय चाब्रवीत् ॥ भगवञ्छंकरो नाम विजिगीषुर्यतिर्महान् ॥ २ ॥ आगतोऽत्र स्थितः शंभुमंदिरे यतिभिः सह ॥ इत्थं निशम्य तद्वाक्यं हसन्नूचे स शैवराट् ॥ ३ ॥ शोषयेत्सप्तसिंधून्यो रविं व्योम्नो निपातयेत् ॥ पटवद्वेष्टयेद्व्योम न जयेन्मां तथापि सः ॥ ४ ॥ एवमुक्त्वा स निरगात्पुराच्छिष्यगणैर्युतः ॥ शिवालयं समागत्य भाष्यकारं ददर्श सः ॥ ५ ॥ नीलकंठं सुरेशोऽपि दृष्ट्वा गुरुमुवाच ह ॥ आज्ञा मे स्याद्गुरूणां चेच्छैवेनानेन वै मया ॥ ६ ॥ विवादोऽस्त्वत्र भवतां श्रीमतां तदनंतरम् ॥ प्रत्याह नीलकंठोऽथ न जाने तव कौशलम् ॥ ७ ॥

श्रुत्वा भाष्यमित्यनुवृत्तिः । भगवन्नित्याद्युत्तरान्वयि । विजिगीषुः जेतुमिच्छुः ॥ २ ॥ ३ ॥ एवं सामर्थ्यवान्यद्यपि भवेत्तथापि सः मां न जयेत् । किं वक्तव्यं शंकरो मां जेष्यतीति अतो न पराजयभयं ममेत्यर्थः ॥ ४ ॥ ५ ॥ नीलकंठमिति सार्द्धान्वयः ॥ ६ ॥ तदनंतरं मद्वादानंतरं भवतां युष्माकं

वादोऽस्तु । कौशलं कुशलत्वम् ॥ ७ ॥ मुनिवर्यः शंकर एवात्र मया सह वादं करोतु । शिव उपास्यो जीव उपासक इति द्वैतमेव शैवमतं खंडितवान् ॥ ॥ ८ ॥ स्वकीयं द्वैतपक्षं त्यक्त्वा अद्वैतमब्रवीत् । यद्यपि द्वैतं न संभवति तथाप्यद्वैतं तु न संभवत्येवेत्यब्रवीदित्यर्थः । तदेवाह यते इति । सर्वज्ञत्वाकिंचिज्ज्ञत्वादिविरुद्धधर्मवत्वाचेजास्तिमिरयोरिव परमात्मजीवयोर्ब्रह्मणि ऐक्यं तवेष्टं न युज्यते युक्तं न भवतीत्यन्वयः ॥ ९ ॥ यत एवम् अतो जीवेश्वरौ भिन्नाविति त्वयांगीकार्यौ । अत्रायं प्रयोगः जीवेश्वरौ भिन्नस्वरूपौ । विरुद्धधर्मवत्वात् । तमःप्रकाशवत् इत्यन्वयदृष्टांतः । आलोकसूर्यवदिति व्यतिरेकदृष्टांत इति तस्मान्नाद्वैतसिद्धिरिति भावः ॥ १० ॥ आक्षेपं पूर्वपक्षम् । भिक्षुः शंकरः । प्रतिहारवचः पूर्वपक्षखंडनकरं वाक्यम् अब्रवीत् । अयं भावः । यद्यपि किंचिज्ज्ञत्वसर्वज्ञत्वादिविरुद्धधर्मिणोस्तेजस्तिमिरयोरिवात्यंतभिन्नयोस्तत्त्वंपदवाच्ययोर्जीवेश्वरयोरैक्यं न घटते । तथापि

वदतु स्वयमेवात्र मुनिवर्यो मया सह ॥ ततः श्रीशंकरस्तस्य मतं शैवं चखंड ह ॥ ८ ॥ नीलकंठः स्वकं पक्षं त्यक्त्वाऽद्वैतमथाब्रवीत् ॥ यते तवेष्टं ब्रह्मैक्यं युज्यते नात्मजीवयोः ॥ ९ ॥ विरुद्धधर्मवत्त्वाच्च तेजस्तिमिरयोरिव ॥ अतो जीवेश्वरौ भिन्नौ स्वीकर्तव्यौ त्वयाऽधुना ॥ १० ॥ एवं युक्तिशतैर्नीलकंठोऽद्वैतमतं प्रति ॥ आक्षेपं कृतवान्भिक्षुः प्रतिहारवचोऽब्रवीत् ॥ ११ ॥ जित्वा युक्तिशतैरेवं नीलकंठं स शंकरः ॥ अद्वैतं स्थापयामास श्रुतिसिद्धं दयानिधिः ॥ १२ ॥

किंचिज्ज्ञत्वसर्वज्ञत्वरूपविरुद्धांशपरित्यागेन जीवत्वेश्वरत्वोपाधिपरित्यागेन च सोऽयं देवदत्त इतिवद्भागलक्षणया तत्त्वंपदलक्ष्यार्थयोर्जीवेश्वरसाक्षिणोरैक्यमुभयोश्चिद्रूपत्वात्सम्यक्तया घटत एवेति ॥ ११ ॥ ननु जीवेषु कर्तृत्वभोक्तृत्वादिधर्मस्य ज्ञानोत्तरकालेऽपि प्रतीयमानत्वात्कथं विरुद्धांशप्रतीतौ सत्यामविरुद्धयोर्जीवेशसाक्षिणोरैक्यमिति चेत् न । लोकदृष्ट्या कर्तृत्वभोक्तृत्वप्रतीतावपि ज्ञानिदृष्ट्या तस्याः दर्पणमुखस्येव बाधसंभवात् । प्रारब्धावसानपर्यंतं बाधितानुवृत्त्या कर्तृत्वादिप्रतीतावपि न जीवेश्वरसाक्षिणोरैक्यहानिरित्यादियुक्तिशतैर्नीलकंठं जित्वा दयासमुद्रः स शंकरः श्रुतिप्रसिद्धम् अद्वैतमतं स्थापयामास । सूर्योदयसमये नीलत्वपरिच्छिन्नत्वाद्युपाधिपरित्यागेन तमांसि प्रकाशाभिन्नस्वरूपाणि यथा भवंति तथा नीलकंठादयो जीवाः शंक

रत्नाक्छ्रवणमात्रेणैव कर्तृत्वाद्युपाधिपरित्यागेन ब्रह्मरूपा बभूवुरिति भावः ॥१२॥१३॥ नैजभाष्याणि स्वकृतभाष्याणि । भिक्षुराट् शंकरः वितत्य विस्तार्य द्वारकामगात् ॥ १४ ॥ पांचरात्रिकाः पंचरात्राद्यागमाभिमानिनो वैष्णवाः । तेषां मते जीवेश्वरभेदः १ जीवानां परस्परभेदः २ जीवजडयोर्भेदः ३ ईश्वरजडयोर्भेदः ४ चितां च परस्परं भेदः ५ ॥ इति पंचभेदवादिनस्तप्तमुद्राधारिणो वैष्णवाः शंकरशिष्यैर्जिताः ॥ १५ ॥ १६ ॥ सच्चिदानंदरूपत्वात्कृष्ण एव ध्येय इत्याह कृषिरित्यादित्रिभिः । भू सत्तायां धातुस्तेन सत्तावाचकः कृषिशब्दोऽस्ति । तेन सत्तावाचकत्वेन सत्ताप्रदः नामरूपात्मकप्रपंचस्य सत्ता यत्सत्तयैव प्रतीयत इत्यर्थः । णकारश्च आनंदवाचकोऽस्ति "णश्च निर्वृतिवाचकः" इत्युक्तेः । तेनानंदमयो हरिरेव भवति विभुर्व्यापकश्च

नीलकंठं जितं श्रुत्वा शंकरेण महात्मना ॥ उद्दीपनप्रभृतयः कवींद्राश्च चकंपिरे ॥१३॥ नैजभाष्याणि देशेषु सौराष्ट्रादिषु भिक्षुराट् ॥ वितत्य बहुधा कृष्णपुरीं द्वारवतीमगात् ॥ १४ ॥ भुजयोः शंखचक्रादितप्तचिह्नभृतो जनाः ॥ जिताः शंकरशिष्यैस्ते वैष्णवाः पांचरात्रिकाः ॥ १५ ॥ तत्र स्थित्वा स्वयं कृष्णपूजनं कृतवान्यतिः ॥ घोषयामास सर्वत्र ध्येयो नारायणोऽस्त्विति ॥ १६ ॥ कृषिर्भूवाचकः शब्दस्तेन सत्ताप्रदो हरिः ॥ आनंदवाचको णश्च तेनानंदमयो विभुः ॥ १७ ॥ सत्तामाश्रित्य भूतानि जायंते सुखलेशतः ॥ आनंदेनैव जीवंति स्वानंदाज्ञानतः पृथक् ॥१८॥ सत्यज्ञानसुखात्मासौ कृष्णाख्यः परमेश्वरः ॥ आत्मा प्रियः सुहृत्साक्षी ध्येयोऽतः सर्वदेहिनाम् ॥ १९ ॥

भवति । चकारात् जीवानाम् आनंदप्रदः ॥ १७ ॥ एतदेव स्पष्टमाह सत्तामिति । भूतानि प्राणिनः सत्ताम् अधिष्ठानरूपकृष्णसत्तामाश्रित्य जायंते । "यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंति" इति श्रुतेः । सुखलेशतः सुखस्य आत्मसुखस्य लेशतः अंशमात्रेणानंदेन विषयानंदेनैव जीवंति । "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेः । स्वानंदस्यात्मसुखस्याज्ञानतः पृथक् भवंति । श्रीकृष्णसत्तयैव सर्वभूतानां सत्ता सुखं च भवतीति भावः ॥ १८ ॥ कृष्णनाम्नि सदानंदवाचिनौ कृष्णशब्दौ मध्यगतस्य चिद्रूपस्योपलक्षकावभिप्रेत्य सच्चिदा

नंदात्मा कृष्ण एव ध्येय इत्याह—सत्येति । सत्यात्मा सद्रूपो ज्ञानात्मा चिद्रूपः सुखात्माऽऽनंदरूपोऽसौ परमात्मा कृष्णाख्यः सर्वेषाम् आत्मा प्रियश्च यद पेक्षया सर्वेषां प्रियत्वम् । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति श्रुतेः । अत एव सुहृत उपासकानां हितकरः साक्षी द्रष्टा चास्ति । अतः सर्वदेहिनां ध्येयः ध्यातुं योग्योऽस्ति । सच्चिदानंदरूपस्य श्रीकृष्णस्य ध्यानात्कृतार्थतेति भावः ॥ १९ ॥ सदुपदेशं ब्रह्मोपदेशं घोषयित्वा प्रतिपाद्य चकाराद्वादिनश्च जित्वा ॥ २० ॥ महेशं महाकालाख्यम् ॥ २१ ॥ अस्मत्प्रवृत्तिं मदागमनं प्रकर्षेण अज्ञः मानी च तं प्राज्ञमानिनम् ॥ २२ ॥ वृत्तिः व्याख्यारूपा

एवं सदुपदेशं स घोषयित्वा यतीश्वरः ॥ कृष्णभक्तिं दृढीकृत्य ययौ चावंतिकां पुरीम् ॥ २० ॥ तां प्रविश्य महेशं स ववंदे पार्वती पतिम् ॥ स्थित्वा शिवालये तत्र पद्मपादमथाब्रवीत् ॥ २१ ॥ भास्करं वद गत्वास्मत्प्रवृत्तिं प्राज्ञमानिनम् ॥ श्रुत्वेत्थं स च गत्वाह भास्करं शिष्यमध्यगम् ॥२२॥ भगवाञ्छंकराचार्यो जयति स्म स योगिराट् ॥ ब्रह्मसूत्रेषु या वृत्तिस्त्वत्कृतास्ति हि भास्कर ॥२३॥ तां तिरस्कृत्य वेदांतयुक्तिभिः सत्प्रवृत्तिभिः ॥ शारीरके स्वयं भाष्यं ब्रह्माद्वैतात्मतत्परम् ॥ २४ ॥ कृत्वा विजित्य विबुधांस्त्वां विजे तुमिहागतः ॥ इत्युक्तवंतं पद्मांघ्रिं हसन्प्रत्याह भास्करः ॥ २५ ॥ कणभुग्जल्पितं व्यर्थं कपिलस्य प्रभाषणम् ॥ कृत्वा येन निरस्तं तत्तस्याग्रे कोऽस्ति भिक्षुकः ॥२६॥ श्रुत्वेत्थं पद्मपादोऽथ प्राह मैवं वदात्र भोः ॥ गिरीणां दारणे दक्षो न टंकः स्याद्यथा पवेः ॥२७॥

टीका त्वत्कृतास्ति ॥ २३ ॥ तां त्वत्कृतां द्वैतपरव्याख्यां सत्प्रवृत्तिभिर्ब्रह्मप्रवृत्तिपरैर्वेदांतयुक्तिभिर्वेदांतैरुपनिषद्भिर्युक्तिभिस्तर्कैश्च तिरस्कृत्य ब्रह्मरूपस्या द्वितीयात्मनस्तत्परं तत्प्रतिपादकं भाष्यं शारीरकसूत्रे स्वयं कृत्वा पंडितान्विजित्य त्वां जेतुम् इहागतोस्तीतियोज्यम् । शंकर इति शेषः ॥ २४ ॥ ॥ २५ ॥ व्यर्थं कृत्वा निरस्तमिति व्यवहितेन संबंधः । तत न्यायसांख्यरूपं करणादकपिलमतम् । तस्य ममाग्रे भिक्षुकः शंकरः कः कःपदार्थ इत्यर्थः । ॥ २६ ॥ अत्र शंकरविषये एवं मा वद । टंकः पाषाणदारणः। पविः वज्रं । पाषाणदारकस्त्वं द्वैतपर्वतदारकः शंकरं वज्रं जेतुं न समर्थ इति भावः॥ २७॥

सशिष्येण तेन भास्करेण सह शंकरसमीपं जगाम । पद्मपाद इति शेषः ॥ २८ ॥ वाक्यभेदाद्भास्करपदस्यावृत्तिरदोषाय । तं शंकरं नत्वा प्राह पद्मपाद इति पूर्वानुषंगात् ॥ २९ ॥ ३० ॥ ब्रह्मणो जगदुपादानत्वमंगीकृत्यैव सर्वाधिष्ठानं ब्रह्मोच्यते यदि तर्हि तदुपादानत्वं ब्रह्मणो न संभवति विकारित्वापातात् । किं तु निमित्तत्वम् असंगत्वात् । तथा च । प्रकृतिः कर्त्री जगतः परिणाम्युपादानकारणं नित्या च स्वांशभूताभ्यां मायाऽविद्याभ्यां बिंबप्रतिबिंबसदृशावीश्वरजीवौ सृजति । पुरुषस्तु पुष्करपलाशवन्निर्लेपोऽसंगः साक्षी विकाररहितः स्वसन्निधिमात्रेण जगत्सृजति । एवं सति कथं तस्य निर्विकारस्य जगदुपादानत्वं तदभावे च कथमद्वैतमार्गस्तव संमतस्तत्र विषये मे मह्यं वद कथय । नित्यायाः प्रकृतेरंगीकारादविकारित्वं ब्रह्मणः सिध्यति नान्यथेति भावः । अथेति । श्रुतेः वेदस्य संमतमिति संबंधः ॥ ३१ ॥ यद्यपि जगदुपादानकारणस्य ब्रह्मणः परिणामाश्रयणे विकारित्वं स्यात्तथापि विवर्ताश्रयणे

ततस्तेन स शिष्येण भास्करेण जगाम ह ॥ समीपं भाष्यकारस्य शिष्यवर्गावृतस्य च ॥२८॥ नत्वा तं प्राह चायातः स शिष्यो भट्टभास्करः ॥ भास्करोऽपि यतिं नत्वा पुरः स्थित्वेदमब्रवीत् ॥ २९ ॥ श्रुतं मया लोकमुखात्तत्र शिष्यमुखात्तथा ॥ शारीरके त्वया भाष्यं ब्रह्माद्वैतपरं कृतम् ॥३०॥ कथमद्वैतमार्गस्ते संमतस्तत्र मे वद ॥ अथ श्रीशंकराचार्यो ब्रह्माद्वैतमतं श्रुतेः ॥३१॥ संमतं तत्त्वमस्यादिवाक्यैः सर्वं समब्रवीत् ॥ एकमेवाद्वितीयं यत्परं ब्रह्मास्ति तत्त्वतः ॥ ३२ ॥

तु न तस्य विकारित्वं संभवति " तदैक्षत बहु स्यां प्रजायेय । तत्तेजोऽसृजत " इत्यादिश्रुतिषु ईक्षणपूर्वकं सृष्ट्यादिकर्तृत्वं श्रूयते । प्रधानं तु न जगत्कारणम् ईक्षणपूर्वकस्रष्टृत्वाभावात् । भवन्मते तस्य परिणाम्युपादानस्यानित्यत्वनियमेन नित्यत्वं ब्रह्मणः सुसिद्धं भवति । तस्मादभिन्ननिमित्तोपादानं ब्रह्म जगत्कारणं सर्वाधिष्ठानं तत्त्वमस्यादिवाक्यैः "यतो वा इमानि भूतानि जायंते । येन जातानि जीवंति । यत्प्रयंत्यभिसंविशंति" इत्यादिवाक्यैः प्रमाणभूतैः श्रुतेर्वेदस्य संमतं ब्रह्माद्वैतमतं सम्यक् अब्रवीत् प्रतिपादितवानित्यर्थः । किंच " एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन " इति श्रुतिप्रतिपादितं सजातीयविजातीयस्वगतभेदशून्यं यत्परं ब्रह्मास्ति तदेवाविद्यया जीवभावं प्राप्तं सत् अनेकधा अनेकप्रकारं भवतीति संबंधः । एकस्योपाधिवशादनेकत्वप्रतीतावपि

बिंबभूतसूर्यस्येव नैकत्वभंग इति भावः ॥ ३२ ॥ कीदृशं ब्रह्म असंगम् आविद्यादिमलरहितं ज्योतिः स्वप्रकाशं कूटस्थं निर्विकारं निर्विकल्पकं विकल्पः संशयस्तद्रहितम् । तथा च मूर्यकिरणानां कल्पितमृगजलास्पर्शित्वमिवासंगाविकारिणो ब्रह्मणो जगत्कारणत्वसिद्धौ तद्व्यतिरिक्तस्य प्रधानादेरनित्यत्व मिति न कोऽप्यद्वैतमते दोषप्रसंग इति भावः ॥ ३३ ॥ ३४ ॥ सशल्यः अपजयेन दुःखितः अस्य शंकरस्य सिद्धांते वेदांतमते न श्रद्धे विश्वासं न

असंगममलं ज्योतिः कूटस्थं निर्विकल्पकम् ॥ तदेवाविद्यया जीवभावं प्राप्तमनेकधा ॥ ३३ ॥ इत्यादिश्रुतिसिद्धांतवाक्यैर्युक्तिभिरेव च ॥ जितः श्रीशंकरेणासौ सशिष्यो भट्टभास्करः ॥३४॥ सशिष्यं शंकरं नत्वा सशल्यः स्वगृहं गतः ॥ अशक्तः शंकरं जेतुं सिद्धांते श्रद्दधेऽस्य नो ॥ ३५ ॥ ततः श्रीशंकराचार्यः संविजित्याथ भास्करम् ॥ स्वभाष्याणि प्रयत्नेन लोके संचारयन्स्थितः ॥ ३६ ॥ तत्रार्हन्नागतः कश्चिद्विवादं शंकरेण वै ॥ कृतवांस्तं विजित्यापि भग्नमानं चकार सः ॥ ३७ ॥ निमिषात्पारदान्गत्वाऽजैषीत्तत्र समागतान् ॥ ऊढविद्यामदं हर्षमिश्राख्यं जितवानसौ ॥ ३८ ॥ कामरूपां ततो गत्वा शाक्तभाष्यकृतं कविम् ॥ जित्वाभिनवगुप्ताख्यं भग्नमानमचीकरत् ॥ ३९ ॥ शाक्तोऽभिनवगुप्ताख्यो जितोऽप्येवमचिंतयत् ॥ अयं जेतुमशक्तोऽस्ति कथं मे वशगो भवेत् ॥ ४० ॥ अतोऽमुं नाशयाम्यद्य शत्रुं दैवतकृत्यया ॥ इत्थमंतर्बहिः शिष्यभावोऽसौ स्वगृहं ययौ ॥ ४१ ॥ भाष्यकृत्कौशलाञ्जित्वा कीर्तिं तत्रापि चाकरोत् ॥ मीमांसाशास्त्रिणं गौडे मुरारिं मिश्रमाजयत् ॥४२॥ नानाशास्त्रविदं धर्मगुप्ताख्यमिश्रमाजयत् ॥ तथैवोदयनाख्यं च न्यायशास्त्रविदां वरम् ॥ ४३ ॥

कृतवान् ॥३५॥ संचारयन् विस्तारयन् ॥३६॥ तत्रावंतीनगरे । अर्हन् नास्तिकः । स शंकरः ॥३७॥ पारदान्देशान् । ऊढः वृद्धिं गतः विद्यामदो यस्य तं हर्षमिश्राख्यम् ॥३८॥ कामरूपां कामाक्षीं शाक्तभाष्यकृतं शक्तिसूत्रभाष्यकर्तारम् ॥३९॥४०॥ अमुं शंकरम् । दैवतकृत्ययाऽभिचारेण ॥४१॥ कौशलांगा

दयश्च देशाः । गौडे गौडदेशे स्थितमिति शेषः ॥ ४२ ॥ ४३ ॥ अनुपमपराक्रमोऽसौ शंकर इत्याह । बुद्ध इति । यस्य ईक्ष
णाद्दर्शनमात्रेण कलहपरो वादोद्युक्तोऽपि बुद्धो विद्रुतः पलायितो भवति । यस्येक्षणादिति सर्वत्र योज्यम् । कणभुक्काणादः सप्तपदार्थवादी नैयायिको
द्राक् शीघ्रं कोणे व्यलीयत लीनोऽभवत् । गौतमः षोडशपदार्थवादी तमस्तोमेनाज्ञानपुंजेनावृतः सन् भग्नः पराजितोऽभवत् । कपिलः सांख्याचार्यः पला
यनपरोऽभवत् । पातंजलिर्योगाचार्यो नम्रतयांजलिं चक्रे । तस्य यतींद्रस्य शंकरस्य या चतुरता सा केनोपमेया न केनाप्युपमेया हीति निश्चयेन । अनु

बुद्धो वादसमुद्यतः कलिपरो यस्येक्षणाद्विद्रुतः कोणे द्राक्कणभुग्व्यलीयत तमःस्तोमावृतो गौतमः ॥ भग्नोऽसौ कापिलः पलाय
नपरः पातंजलिश्चांजलिं चक्रे तस्य यतीशितुश्चतुरता केनोपमेया हि सा ॥ ४४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शंकराचार्यकथा
सारे विंशः सर्गः ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ ततः श्रीशंकराचार्यः शिष्यानध्यात्मशालिनः ॥ आलोक्य कृतकृत्यांस्तान्मुदं
लेभेऽखिलान्यतीन् ॥ १ ॥ अथाभिनवगुप्ताख्योऽभिचारं कृतवान्यतौ ॥ अभिचारेण रोगोऽभूच्छंकरस्य भगंदरः ॥ २ ॥ परि
चर्यां तदा सम्यक्छंकरस्याकरोद्गिरिः ॥ सरुजं गुरुमालोक्य शिष्याः सर्वे व्यजिज्ञपन् ॥ ३ ॥ स्वामिन्नोपेक्षणीयोऽयं रोगः शत्रु
वदार्तिकृत् ॥ अध्यासः श्रीमतां नास्ति यद्यपीह कलेवरे ॥ ४ ॥

पमेयचातुर्यः शंकर इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां विंशः सर्गः ॥ २० ॥ एक
विंशेऽष्टपंचाशत्पद्यैः कृत्याकथेक्षणम् । गौडपादस्य काश्मीरयात्रा चोक्ता गुरोः क्रमात् ॥ २१ ॥ तत इति । अध्यात्मशालिनोऽध्यात्मज्ञानेन शोभमा
नान् ॥ १ ॥ अभिचारं कृत्याम् ॥ २ ॥ परिचर्यां सेवाम् । शाटीं शोणितशोधनादिरूपाम् । गिरिस्तोटकः । सरुजं महारोगयुक्तम् । व्यजिज्ञपन् प्रार्थित
वंतः ॥ ३ ॥ अध्यासस्तादात्म्यबुद्धिः । यद्यपि भवतो देहतादात्म्यं नास्ति तथापि विनेयानां शिष्याणां नोऽस्माकं सुखार्थं श्रवणादिसुखप्राप्तये येनजग

औषधं कुरु इत्यन्वयः ॥ ४ ॥ व्याधिर्द्विविधः कर्मजन्यो धातुविकारजन्यश्च । तत्रादिमः कर्मजन्यो भोगेन नश्येदिति संबंधः । " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि " इति स्मृत्या तस्य भोगैकनाश्यत्वमित्यर्थः ॥ ५ ॥ अंत्यः धातुविकारजन्यः औषधादिप्रयत्नेन नश्येत् । तदर्थम् औषधोपचारार्थं प्रयतामहे प्रयत्नं कुर्मः । अमृतम् अमृततुल्यं वचः ॥ ६ ॥ अद्य कल्पे प्रलये वाऽयं देहः पततु । मे ममात्मस्वरूपस्य वृद्धिः क्षयश्च नास्ति । तथा च वैद्यशास्त्रप्रवृत्त्यर्थमंगीकृतस्य प्रयत्नपक्षस्य देहात्मबुद्धिविषयतया देहतादात्म्यरहितस्य तु मम पूर्वोक्तवचनाद्भोगेनैव कर्मक्षयो भवत्विति भावः ॥ ७ ॥ सच्चिदानंदोहं क्व । अतितुच्छं शरीरं क्व । अनेन देहेन ममाऽर्थः प्रयोजनं नास्ति सदा असंगात् संगरहितत्वादिति हेतोः । विषयाद्यासक्तस्यैव देहादिना

तथापि नो विनेयानां सुखार्थं भेषजं कुरु ॥ कर्मधातुकृतो व्याधिर्द्विधा भोगेन चादिमः ॥ ५ ॥ नश्येदंत्यः प्रयत्नेन तदर्थं प्रयतामहे ॥ शिष्यविज्ञप्तिमाकर्ण्य गुरुराह वचोऽमृतम् ॥ ६ ॥ पतेत्कर्मक्षयाद्देहो नान्यथायं पतिष्यति ॥ पतत्वद्यैव वा कल्पे न मे वृद्धिर्न वा क्षतिः ॥ ७ ॥ क्वाहं नित्यचिदानंदः क्वेदं तुच्छं कलेवरम् ॥ नार्थोऽनेन ममाप्यद्य सदाऽसंगान्मुधाऽऽग्रहः ॥८॥ मास्त्वतश्चेति ते श्रुत्वा शिक्षार्थं देशिकं जगुः ॥ सत्यं गुरो न ते लोभः शरीरपरिरक्षणे ॥ ९ ॥ किं तु नो जीवनं श्रीमद्देहस्तस्माद्यतामहे ॥ हठादेव ततोऽनुज्ञामादायाचार्यतस्तु तैः ॥ १० ॥ भिषक्छ्रेष्ठाः समानीताश्चक्रिरे तेऽपि सत्क्रियाः ॥ न शशाम यदा व्याधिर्गतास्तूष्णीं भिषग्वराः ॥ ११ ॥ शिष्याणामतिनिर्बंधं दृष्ट्वा योगीश्वरस्तदा ॥ अमरेंद्रं स सस्मार तन्नियुक्तौ भिषग्वरौ ॥१२॥ अश्विनौ विप्ररूपेणागतौ यत्रास्ति शंकरः ॥ दृष्ट्वा श्रीशंकराचार्यं वचो युक्त्या तमूचतुः ॥ १३ ॥

प्रयोजनमस्ति । नानासक्तस्येति भावः । अतः कारणान्मुधा व्यर्थं भेषजं कुर्विति आग्रहो मास्त्विति संबंधः । औषधार्थं भवद्भिः प्रयत्नो न कर्तव्य इत्यर्थः ॥ ८ ॥ ते शिष्याः शिक्षार्थं गुरुसेवाऽवश्यं कर्तव्येति द्योतनार्थं गुरुं प्रोचुः ॥ ९ ॥ श्रीमद्देहो युष्मद्देहो नोऽस्माकं जीवनं मत्स्यानां जलमिव ज्ञानोपदेशेनोपजीवक इत्यर्थः । तस्माद्यतामहे प्रयत्नं करिष्यामः । ततः शंकरात् । हठात् बलात्कारेणाज्ञां गृहीत्वा वैद्याः समानीता इत्यन्वयः ॥ १० ॥ सत्क्रियाः औषधोपचारान् ॥ ११ ॥ योगीश्वरो गुरुः । अमरेंद्रम् इंद्रं स्मृतवान् । तेन इंद्रेण नियुक्तौ प्रेरितौ भिषग्वरौ वैद्यश्रेष्ठावश्विनौ आश्विनीकुमारौ

विप्ररूपेण तत्रागतावित्यन्वयः ॥ १२ ॥ १३ ॥ अचिकित्स्यः अस्मदादिवैद्यैरनिवर्त्यः । यतः परकृत्याकृतः । अभिचारजन्यरोगो मंत्रोपचारं विना न निवर्त्तत इत्यर्थः ॥ १४ ॥ संश्रुत्य अश्विभ्यां श्रुत्वा कर्तारम् अभिनवगुप्ताख्यं जानन् सिद्धः सनंदनो गुरुणा वार्यमाणोऽपि सिद्धं नृसिंहमंत्रं जजाप । हेति हर्षे ॥ १५ ॥ तत्क्षणे जपसमकालमेव अमुं कृत्याकर्तारं प्रति गतः । गुप्तोऽभिनवगुप्तः एतेन कृत्यासहितरोगेण हतोऽभिहतः सन् ममार । मृत

रोगोऽयमचिकित्स्योऽस्ति परकृत्याकृतो यतः ॥ इत्युक्त्वा जग्मतुर्दैवौ यथेच्छं तौ त्रिविष्टपम् ॥ १४ ॥ कृत्यां संश्रुत्य कर्तारं जानन्सिद्धः सनंदनः ॥ वार्यमाणोऽपि गुरुणा सिद्धमंत्रं जजाप ह ॥ १५ ॥ तत्क्षणे शंकरं त्यक्त्वा रोगोऽसौ कृत्यया सह ॥ प्रतियातोऽसुमेतेन हतो गुप्तो ममार च ॥१६ ॥ महतामपराधो हि नाल्पस्य सुखकृद्भवेत् ॥ ततः स्वस्थो बभूवासौ भाष्यकारो मुनीश्वरः ॥ ॥ १७ ॥ एकदा जाह्नवीतीरे ध्यायन्ब्रह्म हृदि स्थितम् ॥ गौडपादाभिधं व्योम्नोऽवतरंतं ददर्श सः ॥ १८ ॥ प्रत्युत्थाय ननामाथ गुरूणां परमं गुरुम् ॥ शंकरः प्राञ्जलिर्भूत्वा गुरोरग्रे व्यवस्थितः ॥ १९ ॥ विद्याविनयसंपन्नं शंकरं लोकशंकरम् ॥ दृष्ट्वा श्रीगौडपादस्तं प्राहेदं कुशलं वचः ॥ २० ॥ कुशलं वर्तते भिक्षो सशिष्ये त्वयि मानद ॥ कच्चिद्गोविंद पादात्त्वं सद्विद्यां प्राप्तवानसि ॥ २१ ॥ इत्थं श्रीगौडपादेन पृष्टः श्रीशंकरो यतिः ॥ श्रद्धां भक्तिं पुरोधाय व्याजहार कृतांजलिः ॥ २२ ॥ श्रीगुरो यत्त्वया पृष्टं तत्सर्वं संबभूव ह ॥ कृपासिंधून्गुरून्प्राप्य जंतोः किं न्वत्र दुर्लभम् ॥ २३ ॥ मूको वाग्मी भवेन्मंदधीर्भवेत्पंडिताग्रणीः ॥ गुरोर्मानं तु को वेत्ति नतिमेव करोम्यतः ॥ २४ ॥

इत्यर्थः ॥ १६ ॥ हि यस्मात् महतामपराधोऽल्पस्य हीनपुरुषस्य सुखकृत् सुखजनको न भवेत् ॥ १७ ॥ अन्यत्प्रसंगमाह एकदेति ॥ १८ ॥ आदिनाथात्स्वगुरुपर्यंतगुरूणां मध्ये परमं गुरुं स्वगुरोर्गुरुमिति यावत् ॥ १९ ॥ २० ॥ २१ ॥ श्रद्धया विश्वासेन सहिता या भक्तिः प्रेमलक्षणा तां पुरस्कृत्य श्रद्धाभक्तिपूर्वकमित्यर्थः । व्याजहार उवाच ॥२२॥२३॥ मानं महिमानम् । अतो महिमाऽज्ञानाद्धेतोर्नमस्कारमेव आसमंतात्करोमि ॥२४॥

यस्य तव विद्यासंप्रदायः साक्षाच्छुकाद्भूवेत्यर्थः । क्रमादित्यनेन नृसिंहमहेशभास्करमहेन्द्रमाधवजिष्णुदेवक्रमादिति ज्ञेयम् ॥ २५ ॥ २६ ॥ आयातः प्राप्तोऽस्मि ॥ २७ ॥ अकारि कृतम् । तावकं भाष्यं निर्देशेन श्रुत्वा अर्थतः श्रोतुं समागतोऽस्मि ॥ २८ ॥ एवमिति सार्द्धान्वयः ॥ २९ ॥ यत्कृतं तत् भाष्यमिति संबंधः । तथाग्रुत्तरान्वयि ॥ ३० ॥ पुनरित्यनेन गौडपादस्य श्रवणौत्सुक्यं ज्ञाप्यते ॥ ३१ ॥ असौ गौडपादः ॥ ३२ ॥

अहो भाग्यं मदीयं यच्छ्रीगुरोस्तव दर्शनम् ॥ यस्य विद्यासंप्रदायः साक्षाद्व्यासकेः क्रमात् ॥ २५ ॥ इत्याकर्ण्याब्रवीच्छ्रीमद्गौडपादो महामुनिः ॥ श्रुतं मया गुणौघस्य सौंदर्यं तव निर्मलम् ॥ २६॥ द्रष्टुं त्वामहमायातः समीपे तव शंकर ॥ भाष्यमुख्यान्निबंधांस्ते श्रुत्वा गोविंदवक्त्रतः ॥ २७ ॥ मांडूक्यवार्तिकं पूर्वं मयाऽकारि यदद्भुतम् ॥ तस्मिंश्च यावकं भाष्यं श्रुत्वा श्रोतुं समागतः ॥ ॥ २८ ॥ एवं श्रुत्वा वचस्तस्य गौडपादस्य सद्गुरोः ॥ शंकरो हर्षमापन्नो भाष्यं मांडूक्यवार्तिके ॥ २९ ॥ कृतं तच्छीघ्रमादाय तस्मै चाश्रावयद्यतिः ॥ तथैव ब्रह्मसूत्रेषु गीतासूपनिषत्सु च ॥ ३० ॥ तत्तद्भाष्यं कृतं सम्यक्छ्रावयित्वाथ शंकरः ॥ पुनश्चाश्रावयद्भाष्यं कृतं मांडूक्यवार्तिके ॥३१॥ श्रुत्वा भाष्याणि मांडूक्यभाष्यं चासौ विशेषतः ॥ अतीव हर्षमापन्नो भाष्यकारं वचोऽब्रवीत् ॥३२॥ मत्कारिकाशयावेदि भाष्यं श्रुत्वा महाद्भुतम् ॥ हर्षसीमामनुप्राप्तो वरमाशु ददामि ते ॥ ३३ ॥ श्रुत्वाह शंकरः कोऽन्यो वरस्त्वत्पाददर्शनात् ॥ सदा परावरे शुद्धे स्वात्मन्येवास्तु मे मनः ॥ ३४ ॥ तथेति गौडपादोऽपि तमुक्त्वांतर्द्धिमागतः ॥ अत्रांतरेऽशृणोद्वार्तां काश्मीरस्तुतिगर्भिताम् ॥ ३५ ॥ कैश्चिदुक्तां पृथिव्यां च जंबूद्वीपो वरो महान् ॥ तत्रापि भारतं वर्षं तत्र काश्मीरमंडलम् ॥ ३६ ॥

मत्कारिकाया आशयं तात्पर्यम् आवेदयति तत् भाष्यम् । हर्षसीमां परमानंदम् । वरम् ईप्सितम् ॥ ३३ ॥ परावरे कार्यकारणात्मके ॥ ३४ ॥ अंतर्द्धिम् अंतर्धानं प्राप्तः । काश्मीरस्तुतिपराम् ॥ ३५ ॥ कैश्चिज्जनैरुक्तामिति पूर्वान्वयि । पृथिव्यां सप्तद्वीपवत्याम् । वरः श्रेष्ठः । काश्मीरमंडलं काश्मीरदेशः ॥ ३६ ॥

यत्र काश्मीरदेशे ॥ ३७ ॥ यात्रां मार्गस्थतीर्थाटनं कृत्वा वादिमंडलैर्विद्वत्समूहैः पिनद्धं रोधितं दक्षिणद्वारं सरस्वतीमंदिरस्येति शेषः । संप्राप्य यदा प्रवेष्टुकामोऽभवत् तत्र तदाऽयं शंकरो वादिगणैर्विद्वद्वृंदैः रुद्धः प्रतिषिद्धो बभूवेति योज्यम् ॥ ३८ ॥ सर्वेत्यादि पराग्वयि ॥ ३९ ॥ भद्रासनं शारदापीठम् । अशरीरिणी गुप्तरूपा ॥ ४० ॥ ईषत् किंचित्कालपर्यंतं यावद्भाषणं करोमि तावत्स्थैर्यं त्वयेति शेषः । त्वं मम वचः शृणु । पुरैव पूर्वमेव ॥ ४१ ॥ यस्मात्सर्वज्ञत्वाद्धेतोः । विधिः ब्रह्मा । ननु मम सर्वज्ञत्वात्पीठारोहणे किमर्थं प्रतिबंधः क्रियते इति चेदत आह—किं त्विति॥ ४२॥ किं तर्हि कारणमत आह । अत्र पीठारोहणे कारणं सम्यक् सिद्धिरेव शुद्धाचरणरूपास्ति सा संसिद्धिरस्ति वा नास्तीति असंविचार्य सम्यग्विचारमकृत्वा

यत्रास्ते शारदा देवी सर्वविद्याप्रकाशिनी ॥ श्रुत्वेत्थं भाष्यकारोऽपि तत्र गंतुं मनो दधे ॥ ३७ ॥ यात्रां कृत्वा ययौ भिक्षुः शिष्यैः काश्मीरमंडलम् ॥ संप्राप्य दक्षिणं द्वारं पिनद्धं वादिमंडलैः ॥ ३८ ॥ प्रवेष्टुकामस्तत्रायं रुद्धो वादिगणैस्तदा ॥ सर्वत्रादिसमूहं तं जित्वा शिष्ययुतो यतिः ॥ ३९ ॥ प्रविश्यांतर्गृहं भद्रासनमारोढुमिच्छति ॥ अत्रांतरेऽब्रवीद्देवी शारदा चाशरीरिणी ॥ ४० ॥ भोः सर्वज्ञ यतींद्रेषत्स्थैर्यं तावद्वचः शृणु ॥ सर्वज्ञता पुरैवास्ति तव भिक्षो विदांवर ॥ ४१ ॥ यस्मात्ते शिष्यतां प्राप्तो विश्वरूपो विधिः स्वयम् ॥ किंतु सर्वज्ञतैवात्र पीठारोहे न कारणम् ॥ ४२ ॥ हेतुः संसिद्धिरेवात्रासंविचार्यास्ति नेति वा ॥ साहसं मा कृथा भिक्षो पूर्ववृत्तं च संस्मर ॥ ४३ ॥ उपभुज्यांऽगनाः कामकलाशास्त्रं सुशिक्षितम् ॥ भवता नृपदेहेन कुतो भिक्षोर्विशुद्धता ॥ ४४ ॥ विद्याभद्रासनं सद्भिः सिद्धवर्यैः समाश्रितम् ॥ ईदृशं पदमारोढुं कथं चार्हो भवान्प्रभो ॥ ४५ ॥

साहसं पीठारोहणरूपं मा कुरु । हे भिक्षो संन्यासिन् पूर्ववृत्तं च संस्मर ॥ ४३ ॥ ननु किं तत्पूर्ववृत्तमित्यत आह । उपभुज्येति । भवता त्वया नृपदेहेनां गनाः भुक्त्वा कामकलायुक्तं शास्त्रं कामशास्त्रं सुशिक्षितं हे भिक्षो विशुद्धता कुतो हेतोरस्ति । त्वयीति शेषः । अत्र भिक्षो इति संबोधनेन संन्यासिनस्तत्र स्त्रीसंगकर्तुर्विशुद्धाचरणाभावेन पीठारोहणेऽधिकारो नास्तीति सूचितमिति भावः ॥ ४४ ॥ तर्हि कस्याधिकारोऽस्तीत्यत आह विद्येति । सिद्धश्रेष्ठैः सद्भिः गुरुभ्यः सकाशात् विद्याभद्रासनम् एतद्विद्यापीठं सम्यगाश्रितमस्ति । तस्मात्सिद्धश्रेष्ठस्यैवाधिकार इत्यर्थः । ईदृशं सिद्धश्रेष्ठैकलभ्यमेतत्पदमारोढुं भवान् कथं

मर्हः योग्योऽस्ति । अत्र प्रभो इति संबोधनेन शंकरेण सह संभाषणं कर्तुमेवाधिकारो नास्तीत्युक्तम् । वस्तुतो निग्रहानुग्रहसमर्थस्य शंकरस्यैव पीठारोहणेऽधिकारोऽस्तीति दर्शितमिति भावः॥ ४५॥ किल्बिषं कृतमिति संबंधः ॥४६॥ कृतमिति काकाक्षिवत्पूर्वोत्तरान्वितम् । अन्यदेहेन यत्कृतं तत्तु अस्मिन्देहे युज्यते किं न युज्यत एव देहांतरकृतं कर्म एतद्देहकृतं न भवतीत्यर्थः । अन्यथा देहांतरकृतदोष एतद्देहे युज्यते चेत्तर्हि पूर्वदेहस्थो जघन्यो नीचः शूद्रजातीयः कश्चित्पुरुषः सुकृतात्किंचित्पुण्येन विप्रत्वं प्राप्य वेदेऽधिकारवान्न भवति किम् । अपि तु भवत्येवेति योज्यम् ॥ ४७ ॥ यतोऽन्यदेहकृतं देहांतरेऽनधिकाराय न भवति अतो हेतोरहं शुद्धो निर्दोषोऽस्मि । शुद्ध्यभावोऽशुद्धत्वं मे नास्ति तत्र हेतुः विवेकतो विवेकवत्त्वात् अयं भावः । असंभात्मविचारेणास्मि

इत्थं श्रुत्वा यतींद्रोऽपि शारदामब्रवीद्वचः ॥ जन्मारभ्य मया मातर्नास्मिन्देहे तु किल्बिषम् ॥ ४६ ॥ कृतं किं त्वन्यदेहेन यद्देहेऽस्मिन्न युज्यते ॥ अन्यथा पूर्वदेहस्थो जघन्यः शूद्रजातिजः ॥ ४७॥ सुकृताद्विप्रतां प्राप्य किं वेदे नाधिकारवान् ॥ अतः शुद्धोऽस्मि मे नास्ति शुद्ध्यभावो विवेकतः ॥ ४८ ॥ इत्थं श्रुत्वा वचस्तस्य शारदाभून्निरुत्तरा ॥ ततः श्रीशंकराचार्यो विद्याभद्रासनं मुदा ॥ ४९ ॥ समारुह्य सभामध्ये रेजे व्योम्नीव चंद्रमाः ॥ सर्वज्ञः पीठमारुह्य सर्वाज्ञानतमोरविः ॥ ५० ॥ शिष्यानद्वैतसन्मार्गनिष्ठानाज्ञापयद्विभुः ॥ अद्वैतसंप्रदायं वै वेदांतैः संमतं सताम् ॥ ५१ ॥ लोके प्रचारयध्वं भोः शिष्या मोक्षकरं नृणाम् ॥ एवमाज्ञाप्य काश्मीरमंडले विनिवेशितान् ॥ ५२ ॥

न्नेव देहे स्थितस्य कर्तृत्वं न संभवति । किं वक्तव्यमन्यदेहकृतेनैतद्देहे स्थितस्य कर्तृत्वं न भवतीति तस्मान्नोक्तदोषवानहमिति ॥ ४८ ॥ तत इत्युत्तरान्वितम् । विद्याभद्रासनं विद्यापीठम् । भद्रशब्दः " श्वः श्रेयसं शिवं भद्रं कल्याणं मंगलं शुभम् " इति कोशात्कल्याणवाची परमकल्याणकारकमिति भावः॥ ॥ ४९ ॥ उत्तरार्द्धमुत्तरान्वयि सर्वज्ञाधिष्ठितं पीठम् ॥ ५० ॥ अद्वैतसन्मार्गनिष्ठान् अद्वैतमार्गनिष्ठान् । भोः शिष्याः यूयं वेदांतैरुपनिषत्प्रमाणैः सतां संमतम् । अद्वैतसंप्रदायं श्रवणमननादिरूपं लोके प्रचारयध्वं विस्तारयध्वमिति योज्यम् । यतो नृणां मोक्षकरं कैवल्यप्रापकम् ॥ ५१ ॥ काश्मीरदेशे

स्थापितान् कांश्चिच्छिष्यान् प्रति एवं पूर्वोक्तमाज्ञाप्य कैश्चिच्छिष्यैः सह यतिः शंकरः शृंगगिरिं ययावित्यन्वयः ॥ ५२ ॥ तत्र शृंगपर्वतं इत्याद्युत्तरान्वयि ॥ ५३ ॥ भाष्यसंदोहं शारीरादिभाष्यसंघं निर्णीय महर्षिविचारं गृहीत्वा मुनीन् अध्यापयामासेति संबंधः ॥ ५४ ॥ तत्रादि परान्वितम् ॥५५॥ स्वयं च किल शंकरः सन् शंकरात्प्रार्थितवान् । चकाराच्छिष्याश्च प्रार्थितवंतः । तप्तोदलहरीमित्यादि परान्वयि । उष्णोदकतीर्थम् ॥ ५६ ॥ ५७ ॥

शिष्यान्कांश्चित्स्वयं कैश्चिद्ययौ शृंगगिरिं यतिः ॥ तत्र नीत्वा कियत्कालं सशिष्यो बदरीवनम् ॥ ५३ ॥ जगाम शंकराचार्यो हर्षेण महता वृतः ॥ निर्णीय भाष्यसंदोहं महर्षीणां मते स्थितः ॥ ५४ ॥ अध्यापयामास मुनीञ्छांतानद्वैततत्परान् ॥ तत्र शीतार्दितान्दृष्ट्वा शिष्यांस्तप्तोदकं मुनिः ॥ ५५ ॥ शंकरात्प्रार्थयामास स्वयं च किल शंकरः ॥ तप्तोदलहरीं तत्र मुनिना गिरिशोऽर्थितः ॥ ५६ ॥ प्रावर्तयत्सुखाराध्यो जनानां सुखहेतवे ॥ कृतवानद्भुतं कर्म स चेत्थं बदरीवने ॥ ५७ ॥ इत्थं विनिर्जित्य दिशस्तु सर्वाश्चाद्वैतमार्गं श्रुतिवाक्यसिद्धम् ॥ संस्थापयामास विभुर्धरित्र्यां श्रीशंकरः सर्वजनोपकारी ॥५८॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धे श्रीशंकराचार्यकथासारे एकविंशः सर्गः ॥ २१ ॥ श्रीदेशिकेंद्र उवाच ॥ विजित्येत्थं दिशः सर्वाश्चतुर्दिक्षु स शंकरः ॥ चतुरोऽथ मठान्कृत्वा शिष्यांश्चास्थापयद्विभुः ॥ १ ॥ चकार संज्ञामाचार्यश्चतुर्णां नामभेदतः ॥ क्षेत्रं च देवतां शक्तिं तथा तीर्थं पृथक्पृथक् ॥ २ ॥ संप्रदायमथाम्नायभेदं च ब्रह्मचारिणाम् ॥ एवं प्रकल्पयामास लोकोपकृतये प्रभुः ॥ ३ ॥ पश्चिमे द्वारकाक्षेत्रं शारदामठ उच्यते ॥ कीटवालः संप्रदायस्तीर्थाश्रमपदे उभे ॥ ४ ॥

॥ ५८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामेकविंशः सर्गः ॥ २१ ॥ द्वाविंशकेऽथ सतत्रिपद्मौरित्युच्यते कथा । मठाम्नायाः सुरस्तुत्या शंकरोऽभूत्स्वधामगः ॥ २२ ॥ विजित्येति ॥ १ ॥ चतुर्णां मठानां संज्ञाम् । आचार्यं क्षेत्रं देवतां शक्तिं तीर्थं संप्रदायं ब्रह्मचारिणामाम्नायभेदं च मठसंबंधि एतत्सर्वं पृथक्पृथक् नामभेदेन चकारेति सार्द्धान्वयः ॥ २ ॥ लोकोपकृतये लोकोपकारार्थम् ॥ ३ ॥ ज्येष्ठशिष्येण पद्मपादेनाश्रितपठ

मारभ्य वक्तुमुपक्रमते । पश्चिम इत्यादिभिः पश्चिमदेशे द्वारकानामकं क्षेत्रम् उच्यत इति सर्वत्र योज्यम् । शारदामठ इति स्थानाभिधानम् । कीटवालः संप्रदायः । उभे तीर्थाश्रमाख्ये पदे । संन्याससंप्रदायद्योतके उच्येते ॥ ४ ॥ सिद्धेश्वरो देवता भद्रकाली शक्तिः स्वरूपसंज्ञको ब्रह्मचारी पद्मपाद आचार्यो मठाधीशः ॥ ५ ॥ गोमतीनदी तत्तीर्थम् । सामसंज्ञको वेद उच्यते । तद्गतं सामवेदस्थं तत्त्वमसीति वाक्यं विख्यातं यत्तन्महावाक्यमिति व्यवहितेन संबंधः । यत्र महावाक्ये जीवात्मपरात्मनोरैक्यबोधो भवेदिति । तदिति जनानामिति शेषः ॥ ६ ॥ एवं पश्चिममठाम्नायमुक्त्वा पूर्वमठाम्नायमाह—

देवः ।सिद्धेश्वरः शक्तिर्भद्रकालीति विश्रुता ॥ स्वरूपब्रह्मचारीति चाचार्यः पद्मपादकः ॥५॥ विख्यातं गोमतीतीर्थं सामवेदश्च तद्गतम्॥ जीवात्मपरमात्मैक्यबोधो यत्र भवेदिति ॥ ६ ॥ विख्यातं तन्महावाक्यं वाक्यं तत्त्वमसीति च ॥ द्वितीयः पूर्वदिग्भागे गोवर्धनमठः स्मृतः ॥ ७ ॥ भोगवालः संप्रदाये वनारण्ये च ते पदे ॥ तस्मिन्देवो जगन्नाथः पुरुषोत्तमसंज्ञितम् ॥ ८ ॥ क्षेत्रं स्याद्विमला देवी सर्वलोकेषु विश्रुता ॥ प्रकाशब्रह्मचारीति हस्तामलकसंज्ञकः ॥ ९ ॥ आचार्यः कथितस्तत्र सर्वलोकेषु विश्रुतः ॥ ख्यातं महोदधिस्तीर्थमृग्वेदः समुदाहृतः ॥ १० ॥ वाक्यं प्रज्ञानमानंदं ब्रह्मेति च महादिकम् ॥ श्रीमठश्चोत्तरस्यां तु क्षेत्रं बदरिकाश्रमः ॥ ११ ॥ देवो नारायणो नाम शक्तिः पूर्णगिरीति च ॥ संप्रदायो नंदवालस्तीर्थं चालकनंदका ॥ १२ ॥ आनंदब्रह्मचारीति गिरिपर्वतसागराः ॥ नामानि तोटकाचार्यो वेदोऽथर्वणसंज्ञकः ॥ १३ ॥ अयमात्मा ब्रह्म चेति महावाक्यमुदाहृतम् ॥ चतुर्थो दक्षिणस्यां च शृंगेर्यां वर्तते मठः ॥ १४ ॥ मलहानिकरं लिंगं विभांडकसुपूजितम् ॥ तत्रास्ते ऋष्यशृंगस्य महर्षेराश्रमो महान् ॥ १५ ॥

द्वितीय इत्यादिभिः । गोवर्धनाख्यो मठः ॥ ७ ॥ वनारण्यसंज्ञके संन्यासद्योतके पदे । पुरुषोत्तमसंज्ञकं क्षेत्रमिति संबंधः ॥ ८ ॥ प्रकाशेति ब्रह्मचारिनाम । हस्तामलको मठाधीश आचार्यः कथित इति योज्यम् ॥ ९ ॥ महोदधिः समुद्रस्तीर्थम् ॥ १० ॥ महादिकं वाक्यं महावाक्यम् । उत्तरस्यां तु दिशि श्रीमठः जोशीमठः ॥ ११ ॥ १२ ॥ गिरिपर्वतसागराः । नामानि संन्यासनामानि। तोटकाचार्यो मठाधीशः ॥ १३ ॥ दक्षिणस्यां दिशि चतुर्थो

मठः शृंगिर्यां शृंगगिरौ ॥ १४ ॥ १५ ॥ १६ ॥ आचार्यो मठाधीशः सुरेश्वराचार्य इति संबंधः ॥ १७ ॥ सरस्वत्यादीनि दश संन्यासनामानि स्युरित्यन्वयः ॥ १८ ॥ गिर्याश्रममुखानीत्यत्र मुखपदेन वनपर्वतसागराख्यानि गृह्यंते ॥ १९ ॥ अहं ब्रह्मास्मीति पदं पदसमूहो महावाक्यमुक्तम् । चतुर्णां मठानां देवतादिकं सर्वं व्यवस्थयोक्तमिति योज्यम् ॥ २० ॥ तस्य शंकरस्य तेजसा त्रिषु लोकेषु विश्रुता इति संबंधः । बभूवुरिति शेषः ॥ २१ ॥

वराहो देवता तत्र रामक्षेत्रमुदाहृतम् ॥ तीर्थं च तुंगभद्राख्यं शक्तिः श्रीशारदेति च ॥१६॥ चैतन्यब्रह्मचारीति चाचार्यो लोकविश्रुतः ॥ वार्तिकादिब्रह्मविद्याकर्ता यो मुनिपूजितः ॥१७॥ सुरेश्वराचार्य इति साक्षाद्ब्रह्मावतारकः ॥ सरस्वती पुरी चेति भारत्यारण्यतीर्थकौ ॥ ॥१८॥ गिर्याश्रममुखानि स्युः सर्वनामानि सर्वदा ॥ संप्रदायो भूरिवालो यजुर्वेद उदाहृतः ॥१९॥ अहं ब्रह्मास्मीति पदं तन्महावाक्यमीरितम् ॥ चतुर्णां देवताशक्तिक्षेत्रनामान्यनुक्रमात् ॥ २० ॥ महावाक्यानि वेदाश्च सर्वमुक्तं व्यवस्थया ॥ उक्ताः श्रीशंकराचार्यशिष्यास्तस्यैव तेजसा ॥ २१ ॥ विख्यातास्त्रिषु लोकेषु ह्याचार्याश्चर्षिपूजिताः ॥ पद्मपादः सुरेशश्च हस्तामलकतोटकौ ॥ २२ ॥ विद्यासिद्धितपोभिश्च सर्वेऽपि गुरुणा समाः ॥ इत्थं बहुविधैः शुद्धैश्चरित्रैः कल्मषापहैः ॥ २३ ॥ समा व्यतीयुर्द्वात्रिंशच्छंकरस्य जगद्गुरोः ॥ अथ ब्रह्मादयो देवा आजग्मुस्तत्र शंकरम् ॥ २४ ॥ आनेतुं कृतकार्यं तं स्वधाम सुखदं पदम् ॥ ब्रह्माणमग्रतः कृत्वा ते स्तोतुमुपचक्रमुः ॥ २५ ॥ यतीशोर्वीस्थितं कार्यं कृतं नो बोधभास्कर ॥ न त्वया सदृशश्चान्यस्त्रिषु लोकेषु योगिनो ॥ २६ ॥

॥ २२ ॥ सर्वे पूर्वोक्ताः विद्यादिभिः गुरुणा शंकरेण समाः तुल्याः बभूवुरिति शेषः । एवं पापनाशकैः शुद्धैश्चरित्रैः हेतुभूतैः जगद्गुरोः शंकरस्य द्वात्रिंशत्समाः वर्षाणि व्यतीयुरिति संबंधः ॥ २३ ॥ अथ द्वात्रिंशद्वर्षानंतरम् । तत्र शंकरसमीपे । शंकरं प्रति स्वधाम आनेतुमिति संबंधः ॥ २४ ॥ पूर्वार्द्धं पूर्वान्वितम् । श्रेष्ठत्वद्योतनाय ब्रह्मणः पुरस्करणम् ॥ २५ ॥ स्तुतिमेवाह—यतीशेति सार्द्धत्रिभिः । हे यतीश हे बोधभास्कर ज्ञानसूर्य । उर्वी

स्थितं पृथ्वीगतं नोऽस्माकं कार्यमद्वैतमार्गप्रवृत्तिरूपं कृतं संपादितं त्वयेति शेषः । बोधने ज्ञानोपदेशे ॥ २६ ॥ [illegible] । [illegible]
न्प्रति उपनिषत्सिद्धांताभिप्रायस्य बोधने त्वत्तुल्यो लोकत्रये नास्तीति योज्यम् । आचार्यांतं पदं शंकराचार्यपदम् । [illegible]
ये भजंति ते संतः सद्यो मोक्षभागिनः जीवन्मुक्ता भवंतीत्यन्वयः ॥ २७ ॥ दृश्यमिदं विश्वं मनोमात्रं मनःकल्पितमखिलं । अद्वितीयं परं [illegible] ॥
॥ २८ ॥ इत्थम् एतादृशं वेदांततात्पर्यं ते त्वया कर्त्रा सद्भाष्यैः प्रकाशितम् । इत्थमित्यादि [illegible] ॥ २९ ॥ [illegible] ॥ [illegible] ॥

वेदांतशास्त्रसिद्धांततात्पर्यस्य च सन्नृणाम् ॥ ये त्वां शंकरनामानमाचार्यांतं पदं गुरुम् ॥२७॥ भक्त्या भजंति ते संतः सद्यः [illegible]
गिनः॥ मनोमात्रमिदं दृश्यं सत्यं ब्रह्माद्वयं परम्॥२८॥ इत्थं वेदांततात्पर्यं सद्भाष्यैस्तं प्रकाशितम् ॥ इत्थं स्तुत्वा समभ्यर्च्य [illegible]
पुष्पैः सुरेश्वराः ॥ २९ ॥ अब्रुवञ्छंकरं सर्वे ब्रह्माद्यास्ते पुनर्वचः ॥ भवानेव त्रिजगतामीश्वरः सर्वदेहिनाम् ॥ ३० ॥ [illegible]
सिद्धं तत्कार्यमादितः ॥ अधुना पाहि धाम स्वं कैलासाख्यमुमापते ॥ ३१ ॥ नित्यमुक्तस्वभावस्त्वं शंकराचार्यनामतः ॥ [illegible]
ब्रह्मादिदेवानां वचः श्रुत्वा तु शंकरः ॥ ३२ ॥ गंतुं स्वधाम लोकेशो महादेवाकृतिश्च सन् ॥ आविर्भूतत्रिनेत्रादिरीश्वरः [illegible]
वृतः ॥ ३३ ॥ आरुह्य यानमग्र्यं स नैजं धाम परं ययौ ॥ ब्रह्मादीन्हर्षयन्देवान्कलामस्यां न पार्वतीम् ॥ ३४ ॥ [illegible]
रीशो भूतले स्वेच्छयाऽसौ श्रुतिशिखरगिरां सन्निर्णयार्थेऽजनिष्ट ॥ श्रुतिमतयतिचर्यां संविधायाश्रमान्त्ये पुनरपि निजलोकं [illegible]
ऽगात्स्वधाम ॥ ३५ ॥

तत् वेदांतमार्गप्रवृत्तिरूपं कार्यम् आदितः जैनमतखंडनपूर्वकं सिद्धम् । अधुना स्वधाम कैलासाख्यं पाहि पालय त्वमिति शेषः ॥ ३१ ॥ [illegible]
न्वयि । इत्थं ब्रह्मादीनां वचः श्रुत्वा श्रीशंकरः श्रेष्ठं विमानमारुह्य स्वधाम ययाविति मार्कंडेयस्यान्वयः ॥ ३२ ॥ स्वधाम गंतुं [illegible]
आविर्भूतं त्रिनेत्रादिकं यस्य तादृशः सन्नित्यनेन स्वरूपाविर्भाव उक्तः ॥ ३३ ॥ अग्र्यं श्रेष्ठं नैजं स्वकीयम् ॥ ३४ ॥ इति पशुपतिरीशः [illegible]

मुत्तमनिर्णय एवार्थः कार्यं तन्निमित्तमजनिष्ट जातः । आश्रमेषु श्रेष्ठः संन्यासाश्रमस्तस्मिन्नेवाश्रमे स्थित्वा पुनः कैलासं प्राप्तवान् । मालिनी वृत्तम् ॥ ३५ ॥ द्वात्रिंशत्संख्यं शंकराचार्यं प्रणमति य इति । यः साक्षाच्छिवः क्षितौ पृथिव्यामवतीर्य आद्यं पुरातनमद्वैतमार्गं आस्थापितवान् । अपारसत्त्वं महाबुद्धिं नताः स्मः । इंद्रवज्रावृत्तम् ॥ ३६ ॥ शंकराचार्यकथाश्रवणादेः फलमाह । श्रीशंकरस्येति । वसंततिलकावृत्तम् ॥ ३७ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां शंकराचार्यनिर्वाणं नाम द्वाविंशः सर्गः ॥ २२ ॥ आचार्यपरंपरायाः शिष्यप्रशिष्यपरंपरां वर्णयति । यत्र सिद्धास्तु विद्वांसो बभूवुः कवयोऽखिलाः ॥ १ ॥ त्रयोविंशे तत्र चोनत्रिंशत्त्वयेऽजपाद्दौ । [illegible] शिष्याः [illegible] वर्ण्यंते ॥ २३ ॥

योऽद्धा शिवः क्षाववतीर्य मार्गमद्वैतमास्थापयदाद्यमाद्यः ॥ तं शंकराचार्यमपारसत्त्वं द्वात्रिंशत्संख्यं [illegible] स्मः ॥ ॥ ३६ ॥ श्रीशंकरस्य चरितं शृणुयाच्च भक्त्या यः श्रावयेदपि पठेदखिलं किलैतत् ॥ मुक्तो भवेद[illegible] कृ[illegible]त्वेह सौख्यमपरत्र सुमुक्तिभाक्स्यात् ॥३७॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शंकराचार्यकथासमापनं नाम द्वाविंशः सर्गः ॥२२॥ श्री देशिकेंद्र उवाच ॥ अथावसत्पद्मपादः सशिष्यो द्वारकापुरे ॥ शारदामठ आत्मज्ञोऽद्वैतमार्गं प्रवर्तयन् ॥ १ ॥ [illegible] सर्वमंत्ररहस्यवित् ॥ सिद्धाः सर्वेऽपि मनवः सिद्धयो यस्य चाखिलाः ॥ २ ॥ स यतिश्चापि [illegible] अर्चनोक्ताखिलैर्द्रव्यैर्भक्तियुग्ज्ञानवानपि ॥ ३ ॥ प्रवर्तयन्संप्रदायं चिराद्गुरुमुखागतम् ॥ [illegible] ॥ ४ ॥ अथैकदा पद्मपात्स्वाञ्छिष्यान्संन्यासिनोऽब्रवीत् ॥ स्वीकर्तव्यापास्तगतिर्भवद्भिः प्राक्कथागता ॥ ५ ॥

अथेति । द्वारकापुरे द्वारकानगर्याम् ॥ १ ॥ सर्वादि पूर्वार्द्धे पूर्वान्वितम् । मंत्राः सिद्धयश्च यस्य पद्मपादस्य सिद्धाः [illegible] बभूवुः ॥ २ ॥ यतिश्च संन्यास्यपि ज्ञानवानपि सः भक्तियुक्तः सन् । अर्चने उक्तैः सर्वगंधाद्यैर्द्रव्यैः साधनभूतैर्न्यासादिपूर्वकं [illegible] कार ॥ ३ ॥ संन्यासित्वाद्धेतोः । यतिः सन् किमर्थं पूजां कुरुत इति । लोकापवादभयेन गुरुपूजाकर्ता बभूव । तर्हि किमर्थं पूजां [illegible] आह । गुरुमुखा[illegible] क्रमप्राप्तं संप्रदायं चिरकालं प्रवर्तयन् । शिष्याधिकारं सम्यक् परीक्ष्यैव रहस्योपदेशः कर्तव्य इति भावः ॥ ४ ॥ [illegible] ॥ ५ ॥

नन्वस्माभिः संन्यासिभिः किमर्थमुपासनामार्गः स्वीकार्य इति चेनत्र हेतुमाह—संप्रदायेति श्लोकः [illegible]
ज्ञानमार्गप्रवृत्त्यर्थम् उत्पथगामिनामुपदेशक्रमात्सन्मार्गप्रवृत्त्यर्थे च प्राचीनगुरूणां सनकादीनां [illegible]
निःस्पृहा अपि ते लोकोद्धरणायाज्ञां कृतवंतस्तस्माल्लोकोद्धरणाय गुर्वाज्ञापालनं संन्यासिनावश्यं कार्यमिति भावः ॥ ६ ॥ ७ ॥ ८ ॥ [illegible]
भिक्षान्नं विना याञ्चा न कर्तव्या । भिक्षुकवतं यतिधर्मः ।" आसनं पात्रलोभश्च संचयः शिष्यसंग्रहः । दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट् । [illegible]

संप्रदायप्रवृत्त्यर्थं प्राचीनगुरुशासनात् ॥ उन्मार्गगामिनां पुंसां क्रमात्सन्मार्गलब्धये ॥६॥ गुरोर्वाक्यमिदं श्रुत्वा शिष्याः [illegible]
खिलाः॥प्रोचुः श्रीपद्मपादं तं यतिधर्मरतान्तराः॥७॥यतय ऊचुः ॥ न त्र संन्यासिभिः कार्यं देवतापूजना[illegible]
व्याः सकामैर्मंत्रसाधनैः ॥ ८ ॥ न कश्चित्संग्रहः कार्यो याञ्चा[illegible] तथा ॥ इत्यादि बहुशः प्रोक्तं मन्वाद्यैर्[illegible] ॥ ९ ॥
स्मृतिवाक्यमनादृत्य श्रीमदाज्ञैव केवलम् ॥ कर्तव्या चेत्तदा निंद्यां करिष्यंति कुबुद्धयः ॥ १० ॥ अतिनित्यापि [illegible]
स्तिपरा वयम् ॥ नात्माभ्यासो भवेत्किंचित्पूजामाद्यर्थचिंतनात् ॥ ११ ॥ आत्माभ्यास[illegible]
बहुहेतुत्वाद्वयं नोपासनाक्रमम् ॥ १२ ॥ गृह्णीमो बहुधोक्ताश्च श्रीमदाज्ञः [illegible] तत् ॥ [illegible]
शिष्यवाक्यानि चात्मनि ॥ १३ ॥ चिंताशुक्तो बभूवाथ ज्ञानवानपि [illegible] ॥ [illegible]

इत्यादिमन्वाद्यैः प्रोक्त इत्यर्थः ॥ ९ ॥ ननु शास्त्राज्ञापेक्षया गुरोराज्ञा बलीयसीति चेन्नत्राहुः । स्मृतीति । श्रीमतां युष्माकं [illegible]
चेत्तदा ॥ १० ॥ ननु " भिक्षाटनं जपं संध्यां ध्यानं शौचं सुरार्चनम् । कर्तव्यानि षडेतानि सर्वथा नृपदंडवत् । " [illegible]
क्रियत इत्यत आहुः । नेति ॥११॥ यतते आत्माभ्यासं करोति तस्य [illegible] । इत्यादि[illegible]
अपि वयमुपासनाक्रमं न गृह्णीम इत्यन्वयः॥१२॥तत् आज्ञोल्लंघनं क्षम्यतां श्रीमद्भिरित्यर्थात्सिद्धम् । [illegible] आत्मनि मनसि॥१३॥ [illegible]

संप्रदायप्रवर्तनयोग्यां तां बिंबांबां दृष्ट्वा कुमार्यापि तया संप्रदायं प्रवर्तयन् शिष्यान्कुर्वीति योजयन्सन् धनं लब्ध्वा दरिद्र इव संतुष्टो बभूवेत्यन्वयः ॥ ॥ २६ ॥ २७ ॥ त्रयस्त्रिंशं पद्मपादानंदं प्रणमति ततारेति । गंगोत्पन्नकमलेषु पादौ निधाय गुरुभक्तिदार्ढ्याद्गंगां यस्ततार तं शंकराचार्यपदस्य प्रथमशिष्यम् । अत्र पदशब्दो यतित्वद्योतकः । त्रयस्त्रिंशत्संख्यं पद्मपादगुरुं वयं नताः स्मः । उपजातिवृत्तम् ॥ २८ ॥ श्रीपद्मपादकथाश्रवणादेः फलमाह पद्मपादेति । स्वागतावृत्तम् ॥ २९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां त्रयोविंशः सर्गः ॥ २३ ॥ चतुर्विंशेऽष्टाब्धिपर्यैर्बिंबां वा तु

ततार गंगां गुरुभक्तिदार्ढ्याद्गंगोत्थपद्मेषु निधाय पादौ ॥ तं शंकराचार्यपदादिशिष्यं त्रिर्त्रिंशमब्जांघ्रिगुरुं नताः स्मः ॥ २८ ॥ पद्मपादचरितं किल भक्त्या यः शृणोति च पठेन्नियतात्मा ॥ श्रावयेच्च लभते स समग्रं स्वेप्सितं परमदुर्लभमन्यैः ॥ २९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे त्रयोविंशः सर्गः ॥ २३ ॥ श्रीदेशिकेंद्र उवाच ॥ सिद्धिं गते गुरौ तत्र बिंबांबा संस्थिता सती ॥ सर्वोपास्तिक्रमाभिज्ञा सर्वमान्या बभूव सा ॥ १ ॥ गुरोः कृपाबलात्तस्याः सद्भक्त्या व्रतचर्यया ॥ दृढोपास्त्या च मनवः सकलाः सिद्धिमापुयुः ॥ २ ॥ तथांजसाणिमाद्या वै सिद्धयः समुपस्थिताः ॥ सिद्धेश्वरी बभूवासौ बिंबांबा सिद्धसेविता ॥ ३ ॥ तन्मठाधीश्वरीं मेने तामेवाथाखिलो जनः ॥ मनसाऽस्यास्तु विद्वेषं यतयस्तेन हेतुना ॥ ४ ॥ चक्रुस्तत्र स्थिताः सर्वे नाद्धा वक्तुं क्वचित्क्षमाः ॥ यतीनां तन्मतं ज्ञात्वा बिंबांबा बुद्धिमद्वरा ॥ ५ ॥ तस्मान्मठाद्बहिश्चक्रे मठमन्यं मनोहरम् ॥ सशिष्योवास तत्रैव सा शिवार्चापरा मुदा ॥ ६ ॥ समृद्धो धनधान्याद्यैस्तन्मठोऽखिलसिद्धितः ॥ बभूव बुभुजुर्नित्यं द्विजास्तत्रान्नमुत्तमम् ॥ ७ ॥

द्विजार्भकम् । मूकं सिद्धयाकरोत्सिद्धं चाऽऽपाऽऽत्मत्वमितीर्यते ॥ २४ ॥ सिद्धिमिति गुरौ पद्मपादे । तत्र शारदामठे ॥ १ ॥ हेतुचतुष्टयेन तस्याः मनवो मंत्राः सिद्धिं प्राप्ताः ॥२॥३॥ तेन हेतुना । मठेश्वरीयमेवास्तीति जनस्तुतिनिमित्तेन ते यतयो मनसा बिंबांबाया द्वेषं चक्रुरित्यन्वयः ॥४ ॥ तत्र मठे स्थिताः सर्वे यतयोऽद्धा साक्षाद्वक्तुं क्वचित्क्षमा न बभूवुः । उत्तरार्द्धमुत्तरान्वयि। तत् असहिष्णुत्वरूपं मतम् अभिप्रायं ज्ञात्वा ॥५॥६॥ तस्याः मठस्तन्मठः

तत्र नवीनमठे ॥ ७ ॥ ८ ॥ धात्वर्थान् छंदसां तत्त्वं याथार्थ्यमिति पूर्वान्वितम् । उत्तरार्द्धमुत्तरान्वयि ॥ ९ ॥ देवतातीर्थेन मंत्रितभस्मना च रोगविहीनान् चक्रे ॥ १० ॥ बाधाहीनान् अपस्मारादिबाधारहितान् चक्र इति पूर्वान्वितम् ॥ ११ ॥ दशहायनं दशवार्षिकम् ॥ १२ ॥

काव्यं नवरसोपेतं बिंबांबा बहुधाऽकरोत्॥पप्रच्छुस्तां समागत्य महांतः कवयोऽपि च॥८॥धात्वर्थांश्छंदसां तत्त्वं साऽखिलं तत्समादिशत् ॥क्षयपांडुमुखैश्चापि पीडितास्तत्र रोगिणः॥९॥ययुस्तान्देवतातीर्थाद्भस्मनो मंत्रितात्तथा॥चक्रे रोगविहीनान्सा चापस्मारादिबाधितान् ॥ १० ॥ बाधाहीनानिति श्रुत्वाऽऽययुर्देशांतराज्जनाः ॥ बिंबांबां मेनिरे सर्वे ह्यवतीर्णां वरांबिकाम् ॥११॥ कश्चिद्द्विजवरः पुत्रं गृहीत्वा दशहायनम् ॥ आगत्यात्मजवृत्तांतं बिंबांबायै समादिशत् ॥ १२ ॥ ब्राह्मण उवाच ॥ मातः कृतास्योपनीतिश्चाष्टमाब्दे मया ततः ॥ समाक्रांतं शरद्युग्मं प्रोक्ता संध्यापि नित्यशः ॥ १३ ॥ नाद्याप्यस्मै समायाति कुतोऽन्यो वैदिको मनुः ॥ अस्मद्वंशेऽखिला जाताः पंडिता एव पूर्वजाः ॥ १४ ॥ मत्पुत्रोऽयं कथं मूर्खश्चैवं चिंतायुतस्य मे ॥ निद्रापि रात्रौ नायाति भोजनेऽन्नं न रोचते ॥ १५ ॥ एवंविधो निशाम्यांब त्वत्कीर्तिं लोकपावनीम् ॥ प्राप्तोऽस्म्यंघ्रिसमीपं ते सपुत्रो दूरदेशतः ॥ १६ ॥ सपुत्रे मयि कारुण्यं कुरु मातर्नमोऽस्तु ते ॥ मूर्खत्वं मम पुत्रस्य मूर्खपुत्रत्वमंब मे ॥ १७ ॥ प्रयास्यत्येव येनाशु तथा कारुण्यमस्तु ते ॥ श्रीदेशिकेंद्र उवाच ॥ इति विप्रोदितं श्रुत्वा बिंबांबा करुणान्विता ॥ १८ ॥ तमाह स्थीयतामत्र सपुत्रेण त्वया द्विज ॥ महामंत्रोपदेशेन हराम्येतस्य मूर्खताम् ॥ १९ ॥ मा चिंतां कुरु विप्रेंद्र मत्परास्तु न दुःखिनः ॥ इत्याश्वास्य द्विजं देवी ससुतं तं निजे मठे ॥ २० ॥

स्वपुत्रवृत्तांतमाह । हे मातः नित्यं प्रोक्तापि संध्याऽस्मै पुत्रायाद्यापि न समायातीत्यन्वयः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ उत्तरार्द्धमुत्तरान्वयि॥ १७॥ येन कारुण्येन प्रयास्यति गमिष्यति तथा कारुण्यमस्तु । इतीत्यादि परान्वयि ॥ १८ ॥ स्थीयतां स्थातव्यम् ॥ १९ ॥ मत्पराः मच्छरणाः दुःखि

नो दुःखवंतो न भवंति । इत्यादि परान्वितम् ॥ २० ॥ न्यवासयत स्थापितवती । तत इत्याद्युत्तरान्वितम् ॥ २१ ॥ कृत्स्नशः अंगे सर्वांगे च । वाग्बीजं सबिंदुं द्वादशस्वरम् ऐंरूपम् ॥ २२ ॥ २३ ॥ ततो बुद्धितः सर्वं मांद्यं मंदत्वं गतम् ॥ २४ ॥ एतद्बीजम् ॥ २५ ॥ तेन जपेन सर्वसिद्धयः आयास्यंति प्राप्स्यंति । शिष्यस्य पुत्रतुल्यत्वात्सुतेति संबुद्धिः । सकृदित्यादि परान्वितम् । अस्य बीजस्य । कृते कृतयुगे ॥ २६ ॥ सत्यव्रत इति नाम्ना

भोजयित्वा वरान्नेन शिष्यमध्ये न्यवासयत् ॥ ततोऽन्यस्मिन्दिने प्रातः स्नापयित्वा तमर्भकम् ॥ २१ ॥ मंत्रितं भस्म संलेप्य तद्भाले‍ऽगे च कृत्स्नशः ॥ आसने पुरतः स्थाप्य वाग्बीजं तं समादिशत् ॥ २२ ॥ सकृदुच्चारणात्तस्य बीजस्याभऊबुद्धिमान् ॥ जातः सद्यः कुमारोऽसावुत्थायाह प्रणम्य ताम् ॥ २३ ॥ कुमार उवाच ॥ मातस्त्वदुक्तबीजस्य सकृदुच्चारणान्मम ॥ बुद्धिः सुविमला जाता गतं मांद्यं ततोऽखिलम् ॥ २४ ॥ श्रुत्वेति वचनं तस्य बिंबांबाह तदा शिशुम् ॥ जप चैतदहोरात्रमेकासनसुसंस्थितः ॥ २५ ॥ सिद्धयः सकलास्तेनायास्यंति त्वां सुतांजसा ॥ सकृदुच्चारणादस्य कश्चिद्विप्रात्मजः कृते ॥ २६ ॥ मूर्खोऽपि पंडितार्योऽभून्नाम्ना सत्यव्रतोऽपि च ॥ देवीभागवते तस्य प्रसिद्धं सुकथानकम् ॥ २७ ॥ अधुना तु कलिः प्राप्तश्चैकाहोरात्रतस्ततः ॥ त्वं जपेति समादिश्य बिंबांबाभूच्छिवांतरा ॥ २८ ॥ ततो नक्तंदिवं सोऽपि वाणीबीजं जजाप तत् ॥ स्थितश्चैकासने धीरो बिंबांबाधिगताशयः ॥ ॥ २९ ॥ अहोरात्रं जपात्तस्य वाग्बीजस्य स चार्भकः ॥ लब्ध्वा सिद्धिं परां नत्वा तां तुष्टाव सुवृत्ततः ॥ ३० ॥ कुमार उवाच ॥ याविर्भूता सत्तनुर्निर्गुणापि त्रातुं भक्तान्विग्रतः सद्गजास्या ॥ धीसिद्धीशा नागजात्का चतुर्दोस्तां बिंबांबां ढुंढिरूपां नमामि ॥ ३१ ॥

प्रसिद्ध इति शेषः । पंडितार्यः पंडितश्रेष्ठोऽभूत् ॥ २७ ॥ यतः कलिः प्राप्तः ततः कारणादहोरात्रं जपस्व त्वम् । शिवांतरा शिवध्यानपरा ॥ २८ ॥ तव इति देशिकेंद्रोक्तिः । ततः स द्विजपुत्रोऽपि वाग्बीजं जजाप ॥ २९ ॥ तां बिंबांबां नत्वा सुवृत्ततः शालिनीवृत्तेन तुष्टाव । तल्लक्षणं तु " शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः " इत्युक्तम् ॥ ३० ॥ तत्र तावत " सर्वदेवमयो गुरुः " इति गुरोः सर्वदेवतारूपत्वेन पंचायतनरूपां बिंबांबां स्तुवन्नादौ गणप

तिरूपेण स्तौति येति । निर्गुणापि या परा शक्तिः सगुणरूपदेहा सती भक्तान् प्रति विघ्नान्हातुम् सद्गजास्या उत्पन्नाऽऽसीत् । या च धीसिद्धीशा सिद्धिबुद्धिनियंत्री नागजाका सिंदूरचर्चिता । "सिंदूरं नागसंभवम्" इत्यमरः । चतुर्दोश्चतुर्बाहुरासीत्तां बिंबांबां शुंडिरूपां गणपतिरूपां नमामि । अहमिति सर्वत्राध्याहारः ॥ ३१ ॥ अथ शक्तिरूपेण प्रणमति येति । या आद्याशक्तिर्मूलप्रकृतिरूपा सिंहाधिष्ठिताऽष्टबाहुः सती शुंभादीन्हंतुं सतां त्राणाय रक्षणायानेकवेषान् महाकाल्यादिरूपाणि दधार । तां कुंकुमरंजितां शक्तिरूपामहं नमामि ॥ ३२ ॥ सूर्यरूपां प्रणमति सुप्तानिति । या तेजोरूपा कालगणनाकर्त्री सूर्यरूपा शक्तिः स्वात् उदयात् स्वोदयमात्रेण सुप्तान् जीवान् संप्रबोध्य सुखप्राप्तये सत्कर्मसु वर्तमानान्करोति तां नमामि ॥ ३३ ॥

याऽऽद्या शक्तिः शुंभमुख्यान्निहंतुं सत्राणायानेकवेषान्दधार ॥ सिंहारूढा चाष्टदोः कुंकुमाक्ता तां बिंबांबां शक्तिरूपां नमामि ॥३२॥

सुप्ताञ्जीवान्संप्रबोध्योदयात्स्वात्सत्कर्मस्थान्या सुखाप्त्यै करोति ॥ तेजोरूपा कालसंख्याप्रकर्त्री तां बिंबांबां सूर्यरूपां नमामि ॥

॥ ३३ ॥ रूपाण्यद्धा मत्स्यमुख्यानि धृत्वा दैत्यान्हत्वा साधुवृंदं प्रपाति ॥ पक्षींद्रस्था श्रीवरा दोश्चतुष्का तां बिंबांबां विष्णुरूपां नमामि ॥ ३४ ॥ या पंचास्या नंदिगा शूलमुख्यैः शस्त्रैर्युक्ता चांधकादिप्रहंत्री ॥ भस्माक्तांगा चंद्रचूडा शिवाढ्या तां बिंबांबां शंभुरूपां नमामि ॥ ३५ ॥ सद्यो धृत्वा देशिकेंद्रस्वरूपं मां मूर्खं या चैकबीजोपदेशात् ॥ सर्वज्ञं सद्बुद्धियुक्तं च चक्रे तां बिंबांबां मत्पुरःस्थां नमामि ॥ ३६ ॥ मंत्रो देवः सद्गुरुश्च त्रयाणां नाम्ना भेदो न स्वरूपे मनाक्च ॥ सूर्यादित्याआख्ययार्को यथैकस्त्वाख्यां बिंबां नमाम्येकरूपाम् ॥ ३७ ॥

अथ विष्णुरूपां प्रणमति रूपाणीति । या गरुडस्था श्रीधराख्या हस्तचतुष्कयुक्ता सती मत्स्यादिरूपाणि धृत्वा दैत्यान् हयग्रीवादीन्हत्वा साधुवृंदं रक्षति तां विष्णुरूपां बिंबांबामहं नमामि ॥ ३४ ॥ शंकररूपां प्रणमति येति । पंचवक्त्रा नंदिगमना भस्माक्तांगा चंद्रशेखरा गौरीयुक्ता या शूलाद्यैः शस्त्रैर्युक्ता सती अंधकासुरानां प्रहंत्री नाशकर्त्री बभूव तां शंभुरूपां बिंबांबां नमामि ॥ ३५ ॥ एवं पंचायतनरूपां प्रणम्य सद्गुरुरूपां स्वपुरःस्थितां प्रणमति सद्य इति । या गुरुरूपं धृत्वा एकबीजोपदेशमात्रेण मूर्खमपि मां सर्वज्ञं सुबुद्धियुक्तं च चक्रे तां बिंबांबां मत्पुरोवर्तिनीं नमामि ॥ ३६ ॥ गुरुदेवताप

त्रैक्यरूपां प्रणमति मंत्र इति । मंत्रो देवता सद्गुरुश्चेति त्रयाणां नाममात्रेण भेदोऽस्ति स्वरूपे तु मनाक् किंचिद्भेदो नास्ति । यथा सूर्यादित्यादिनाम्ना भिन्नोऽपि सूर्य एक एवास्ति तथा त्र्याख्यां तिस्रः गुरुदेवतामंत्ररूपा आख्याः नामानि यस्यास्तामेकरूपां बिंबांबां नमामि ॥ ३७ ॥ बिंबांबेत्यन्वर्थता मयुक्तत्वं दर्शयन्स्तौति—एकस्मादिति । एकस्माच्छ्रीसूर्यबिंबसकाशाज्जलाद्युपाधिनिमित्तेन दशाः भेदेन प्रतीयमानाश्च ते अनेके च प्रतीकाशभासः प्रतिबिंब सूर्याः यद्वद्भांति तद्वत् यस्याः सकाशादंतःकरणोपाधिनिमित्तेन सर्वे जीवाः प्रतिभांति । तां त्वां बिंबरूपां नमामि । यथा "ह्ययं ज्योतिरात्मा विवस्वा

एकस्माच्छ्रीसूर्यबिंबादुपाधेर्देश्यानेकेः स्युः प्रतीकाशभासः ॥ तद्वद्यस्याः सर्वजीवास्तु भांति तां बिंबांबां बिंबरूपां नमामि ॥ ॥ ३८ ॥ श्रीदेशिकेंद्र उवाच ॥ एवं संस्तुत्य भक्त्यासौ ननामास्याः पदांबुजम् ॥ संतुष्टांबा तमाहाथ प्राप्तसिद्धिं द्विजार्भकम् ॥ ३९ ॥ बिंबांबोवाच ॥ स्तोत्रेणानेन ते वत्स जाताहं तुष्टमानसा ॥ ददाम्यन्यैस्तु दुःप्राप्यं येन साक्षाच्छिवो भवेत् ॥ ४० ॥ स्तोत्रमेतत्पठेद्यस्तु नित्यं श्रद्धासमन्वितः ॥ मूर्खोऽपि बुद्धिमच्छ्रेष्ठो भवत्येव न संशयः ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ तामित्युक्त्वाथ बिंबांबा पुरः संस्थाप्य चासने ॥ ददावखिलमंत्राणां दीक्षां दीक्षाविधानतः ॥ ४२ ॥ वाग्भवानंद इत्यस्य नाम चक्रे सुशोभनम् ॥ यतोऽयं प्राप्तवान्सिद्धिं वाग्बीजस्य जपात्पराम् ॥ ४३ ॥ योगं ज्ञानं क्रमेणाऽसौ साधनान्यप्यनेकशः ॥ बिंबांबाह ततः सोऽभूत्सर्वसिद्धेज्यपादुकः ॥ ४४ ॥ तत्पिताप्यतितुष्टोऽभूद्दृष्ट्वा सर्वज्ञमात्मजम् ॥ संस्थाप्यांबासमीपे तं ययौ स्त्रीयं पुरं ततः ॥ ४५ ॥ अथोपास्तिक्रमं सर्वं वाग्भवाख्याय सांबिका ॥ दत्त्वा स्वयं गता सिद्धिं सार्वात्म्यं चान्यदुर्लभम् ॥ ४६ ॥

नपोभिन्ना बहुधैकोऽनुगच्छत" इति श्रुतेः । तथा सर्वरूपो गुरुरेवेति भावः ॥ ३८ ॥ ३९ ॥ येन मंत्रेण साक्षाच्छिवो भवेदन्यैर्दुष्प्राप्यं तं ददामि । यथोक्तम् "यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम् । तेनैव लभ्यते विद्या श्रीमत्पंचदशाक्षरी" इति ॥ ४० ॥ तत्रादौ त्वत्कृतस्तोत्रं सफलं करोमीत्याह—स्तोत्रमिति ॥ ४१ ॥ यत्प्रतिज्ञातं तद्ददावित्याह—तमिति । दीक्षां पूर्णाभिषेकरूपां दीक्षोक्तविधानेन ॥ ४२ ॥ यतः कारणाद्वाग्बीजजपे नोत्तमसिद्धिं प्राप्तस्ततोऽस्य वाग्भवानंद इति नाम चक्रे ॥ ४३ ॥ सर्वसिद्धैरीज्यपादुकः पूज्यचरणः ॥ ४४ ॥ ४५ ॥ उपास्तिक्रमं जपन्यासपूजादि

क्रमम् ॥४६॥ चतुस्त्रिंशसंख्यं गुरुं बिंबांबां प्रणमति जात्येति। जात्याऽबला स्त्रीजातिरपि पद्मपादस्य गुरोः कृपाकटाक्षमात्रेणात्मविच्छ्रेष्ठा बभूव । तां सिद्ध पूज्यां बिंबांबां नताः स्मः । उपजातिवृत्तम् ॥ ४७ ॥ एतच्चरित्रश्रवणादेः फलमाह—श्रीति । आत्मतां ब्रह्मभावम् । गीतिश्छंदः ॥ ४८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां चतुर्विंशः सर्गः ॥ २४ ॥ पंचविंशेऽथ सतन्निपये वाग्भववाक्स्थितिः । चित्स्फूर्तिंश्चित्सुखे प्रोक्ता

जात्याऽबलाप्यात्मविदां वराभूच्छ्रीपद्मपादस्य कृपाकटाक्षात् ॥ बिंबांबिकां सिद्धजनार्चितां तां गुरुं चतुस्त्रिंशमितं नताः स्मः ॥४७॥ श्रीबिंबांबाचरितं श्रवणात्पठनाच्च पातकं हंति ॥ दत्ते दीर्घायुष्यं सुपुत्रमैश्वर्यमात्मतां पुंसाम् ॥ ४८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे चतुर्विंशः सर्गः ॥२४॥ श्रीदेशिकेंद्र उवाच ॥ ततः स वाग्भवानंदः श्रीबिंबांबाप्रसादतः ॥ दृढया च शिवोपास्त्या संप्रदायमवर्द्धयत् ॥ १ ॥ वाणी सिद्धाऽभवत्तस्य यत्तेनोक्तं तथाऽभवत् ॥ यद्युर्भूपतयोऽप्येनं प्रष्टुं भूतं च भाव्यपि ॥ २ ॥ कश्चित्खलः समायातस्तत्सा मर्थ्यं परीक्षितुम् ॥ बस्तमेकं करे धृत्वाऽन्यस्मिन्खड्गं विकोशकम् ॥ ३ ॥ वाग्भवानंदमाहासौ प्रहसन्निति भो गुरो ॥ जीवेद्बस्तोऽयमधुनाथवा किल मरिष्यति ॥ ४ ॥ उच्यतां भवता नूनं त्वद्वाक्सिद्धिं गता यतः ॥ श्रुत्वेत्थं वाग्भवानंदः खलवाक्यं तदा हृदि ॥ ५ ॥ खलोऽयमिति मत्वा तं खड्गबस्तकरं दृशा ॥ पश्यन्बिंबांबिकां ध्यात्वा तमाहाविर्मरिष्यति ॥ ६ ॥ नाधुनायमिति श्रुत्वा स खलः खड्गमुद्वहन् ॥ अवधीत्कंठदेशे तं तदाद्भुतमिवाभवत् ॥ ७ ॥ छिन्नः खड्गेन तद्धस्तो बस्तो येनामुना धृतः ॥ स पलायत निर्मुक्तः प्राप मूर्च्छां क्षणं खलः॥८॥कृच्छ्रादुत्थाय लज्जाढ्यो वाग्भवानंदमानमत्॥दण्डवत्पतितः पृथ्व्यां पाहि पाहीति चाब्रवीत्[1]॥

प्रसन्ने च प्रसन्नता ॥ २५ ॥ तत इति । ततो बिंबांबास्वरूपस्थित्यनंतरम् ॥ १ ॥ यत्तेनोक्तं तत्तथाऽभवत् ॥ २ ॥ समायातः संप्राप्तः ॥ ३ ॥ भो गुरो इत्याद्युत्तरान्वयि ॥४॥ यतस्तव वाणी सिद्धिं प्राप्ता । अत उच्यतामिति संबंधः।श्रुत्वेत्यादि परान्वयि ॥५॥ अधुनाऽयमविर्बस्तो न मरिष्यतीति योज्यम् ॥६॥७॥ अमुना खलेन कर्त्रा येन हस्तेन मेषो धृतः स तस्य हस्तः छिन्नोऽभवत् । स बस्तो विनिर्मुक्तः सन् पलायनं कृतवान्॥८॥ खल इति

---

१ चिदानंदे ।

विशेष्यानुवृत्तिः ॥ ९ ॥ तदा आलोकनसमये तस्य छिन्नः करः पूर्ववन्निर्व्रणो जात इत्यन्वयः ॥ १० ॥ आचार्यं शाम्भवानंदम् ॥ ११ ॥ स्वर्गे पृथिव्यां च त्वत्तोऽन्यो दयालुर्नास्ति येन त्वया कृतापराधोऽप्यहं रक्षितोस्मि । कृतापराधस्य रक्षणे दृष्टांतमाह यथेति । कैलासं प्रति उत्पाटनतत्परोऽपि रावण ईश्वरेण यथा त्रातस्तथेत्यर्थः । इंद्रवज्रावृत्तम् ॥ १२ ॥ दृष्टांते सनिमित्तदयालुत्वमुक्त्वाथ त्वन्निर्निमित्तदयालुत्वं त्वय्येवास्तीति प्रार्थयति सत्येति । तत्र यथा कैलासोत्पाटनसमये जातादंगकंपाद्भयं तेन भीतया कातरयेव सत्या गौर्या शिवेच्छाभावेऽपि स्वतो यत्कृतमालिंगनं तत् रावणं

दयालुर्वाग्भवानंदस्तं ज्ञात्वा व्यथितं भृशम् ॥ कृपार्द्रया दृशाऽपश्यच्छिन्नस्तस्य तदा करः ॥ १० ॥ पूर्ववन्निर्व्रणो जातः समुत्थथो ततः खलः ॥ तिष्ठन्प्रांजलिराचार्यं प्रार्थयामास चासकृत् ॥ ११ ॥ खल उवाच ॥ नाके धरित्र्यां च दयालुरन्य स्त्वत्तो न येनाहमयं कृतागाः ॥ त्रातो यथा रावण ईश्वरेण कैलासगोत्रोद्धरणप्रवृत्तः ॥ १२ ॥ सत्या कृतालिंगनमस्ति हेतुः स्वतोंऽगकंपाद्भयभीतयेव ॥ शिवस्य तोषे न तथात्र तस्मात्त्वं वै दयालुर्मयि निर्निमित्तः ॥ १३ ॥ दयालवश्चेश्वरतोऽपि संतो ज्ञातं मयैतद्धृदि निश्चितं च ॥ तस्मान्ममास्त्वेव भवेभवेऽपि संगः सतां येन भवेत्सुबुद्धिः ॥ १४ ॥ श्रीदेशिकेंद्र उवाच ॥ एवं स्तुत्वा च नत्वा तं त्यक्त्वा खलधियं ततः ॥ जगामासौ निजं गेहमित्थं साधुसमागमः ॥ १५ ॥ इत्थं चानेककर्माणि कृत्वा सर्वं रहस्यकम् ॥ चिदानंदाय दत्त्वाथ परां सिद्धिमवाप सः ॥ १६ ॥

प्रति शिवस्य संतोषे हेतुर्निमित्तमासीत् । तथात्र त्वत्कृपायां हेतुर्नास्ति तस्मात्त्वं वै निश्चयेन मयि निष्कारणदयावानसि । उपजा० ॥ १३ ॥ यत ईश्वरादपि सत्सु दयालुत्वं अतस्तत्संगं प्रार्थयन्नाह–दयालव इति । ईश्वरादपि संतो दयालवः संतीति एतन्मया ज्ञातं हृदि निश्चितं च तस्माद्येन सत्संगेन सुबुद्धिर्भवेत् स सतां संगो मम जन्मनि जन्मन्यस्तु । उपजातिवृत्तम् ॥ १४ ॥ साधुसमागमः इत्थम् एतादृशः । खलस्यापि सुबुद्धिजनक इति भावः ॥ १५ ॥ सर्वं पूर्णाभिषे

कादिरहस्यम् ॥ १६ ॥ पंचत्रिंशत्संख्यं वाग्भवानंदं प्रणमति—बिंबांबिकाया इति । बिंबांबासकाशात् ॥ १७ ॥ सः चिदानंदः सर्वेषां हृद्गतं चैतन्यं आत्मनि मनसि उत्तमबुद्ध्या दृढनिश्चयेन पश्यन्सन् स्वस्मादभिन्नो यः शिवस्तस्योपासनां चकार ॥ १८ ॥ स्वस्य चिदानंदनाम्नोऽन्वर्थकत्वं द्योतयन् स्वानुभवं प्रकटयति—सदेति । आत्मैव सदाऽवस्थात्रये अस्ति एतेन सद्रूपत्वम् । चित्स्फूर्तिः चिद्रूपेण स्वप्रकाशरूपेण स्फूर्तिः प्रतीतिर्यस्य । स्वप्रकाशत्वेनाऽनुभूयमानोऽस्ति एतेन चिद्रूपत्वम् । यस्मादात्मनः सकाशादखिलाः देहेंद्रियादय आनंदिनो भवंति तस्मादानंदरूपोऽप्यात्मैवास्ति । "एतस्यैवानंद

बिंबांबिकायाः समवाप सिद्धिं यो वाक्सुबीजस्य जपेन सद्यः ॥ श्रीवाग्भवानंदमनंतसत्त्वं पंचत्रिसंख्यं गुरुमानताः स्मः ॥ १७ ॥
श्रीदेशिकेंद्र उवाच ॥ सर्वं हृद्गतचैतन्यं पश्यंश्चात्मनि सद्धिया ॥ स्वतोऽभिन्नशिवोपास्ति चिदानंदश्चकार सः ॥ १८ ॥ सदात्मैव हि चित्स्फूर्तिर्यस्मादानंदिनोऽखिलाः ॥ सच्चिदानंदरूपोऽहं सर्वगः सर्वशक्तिमान् ॥ १९ ॥ न मत्तोऽन्यत्किमप्यस्ति दृश्यं सर्वं तु कल्पितम् ॥ मय्येव मायया भाति स्थाणौ भ्रांत्या यथा हरः ॥ २० ॥ नतान्हि सर्वानिति बोधयन्स प्रसन्नकायात्मगतं रहस्यम् ॥ सर्वं चिदानंद उवाच तत्त्वं षट्त्रिंशकं तं गुरुमानताः स्मः ॥ २१ ॥ प्रसन्नोऽपि प्रसन्नात्मा सदा विक्षेपवर्जितः ॥ आत्मलाभेन संतुष्टं यन्मुखं सुप्रसन्नकम् ॥ २२ ॥

स्याऽन्यानि भूतानि मात्रामुपजीवंति" इति श्रुतेः । एवं सच्चिदानंदस्वरूपोऽहं सर्वगतः सर्वशक्तिमान्परमात्मैवास्मीत्यर्थः ॥ १९ ॥ सर्वस्वरूपोऽप्यहमेवेत्याह—नेति । मत्तोऽन्यत्किमपि नास्ति । सर्वं दृश्यं तु कल्पितं कल्पनामात्रं मायया मय्येव भाति । यथा भ्रांत्या स्थाणौ स्तंभे हरश्चोरः अद्धीकम्बन्नं भाति । अध्यस्तस्याधिष्ठानानन्यत्वादहमेव सर्वस्वरूप इति भावः ॥ २० ॥ एवं चिदानंदस्यानुभवमुक्त्वा षट्त्रिंशसंख्यं तं प्रणमति—नतानिति । नम्रान्सर्वजनान्इति सच्चिदानंदात्मरूपं बोधयन् यश्चिदानंदः प्रसन्नकाय शिष्यायात्मगतं स्वनिष्ठं रहस्यं सर्वं पूर्णाभिषेकादि कथितवान् तं नताः स्मः । उपजातिवृत्तम् ॥
॥ २१ ॥ प्रसन्नानंदस्य सुप्रसन्नत्वं वर्णयति—प्रसन्न इत्यादिभिः । प्रसन्नात्मा प्रसन्नबुद्धिः । विक्षेपश्चित्तास्थैर्यं तद्रहितः स्थिरचित्तः । उत्तरार्द्धमुत्तर

न्वयि ॥ २२ ॥ दुःखयुक्तोऽपि पुमान् यदालोकात् यस्यावलोकनमात्रेण सुखवान् बभूव ॥ २३ ॥ प्रसन्न इति सार्द्धान्वयः ॥ २४ ॥ प्रसन्नैः प्रशस्तैः। उपासनां तंत्रोक्तपूजाम् उत्तरार्द्धमुत्तरान्वितम् ॥ २५ ॥ दुर्वृत्तो दुष्टो निर्घृणो निर्दयः । अक्षमी क्षमारहितः । आयातः प्राप्तः । बद्ध्वेत्याद्युत्तरान्वयि । पृष्ठतः पृष्ठदेशे सार्वविभक्तिकस्तसिः ॥ २६ ॥ ध्याननिष्ठस्य ध्यानस्थितस्य । यावदस्य दुष्टस्य हस्तो दुःखितो व्यथितस्तावत्पर्यंतं ध्यानस्थस्य प्रसन्नाख्यस्य पृष्ठेऽहन्निति संबंधः । अथ श्रांतहस्तो लज्जाढ्यः सन् पलायनपरो यदाऽभवत् तावत्प्रसन्नानंदस्य शिष्याः समायाताः संजाता इत्यन्वयः ॥ २७ ॥

सदा हास्ययुतं भाति न म्लानं तत्कदाप्यभूत् ॥ दुःखाढ्योऽपि यदालोकाद्बभूव सुखवान्पुमान् ॥ २३ ॥ प्रसन्नोऽसौ प्रसन्नेन मनसा सुप्रसन्नके ॥ हृदये देवतां ध्यायन्प्रसन्नामेव सर्वदा ॥२४॥ पूजाद्रव्यैः प्रसन्नैश्च चकारोपासनां पराम् ॥ प्रसन्नस्य प्रसन्नत्वं श्रुत्वेत्थं तत्परीक्षितुम् ॥ २५ ॥ दुर्वृत्तः कश्चिदायातः क्रोधाढ्यो निर्घृणोऽक्षमी ॥ बद्ध्वा मुष्टिं दृढां तस्य प्रसन्नाख्यस्य पृष्ठतः ॥ २६ ॥ अहन्स ध्याननिष्ठस्य यावद्धस्तोऽस्य दुःखितः ॥ श्रांतहस्तोऽथ लज्जाढ्यः पलायनपरो यदा ॥ २७ ॥ तावच्छिष्याः समायाताः प्रसन्नस्य बहिर्गताः ॥ समीपस्थात्तु कस्माच्चिच्छ्रुत्वैतत्खलसाहसम् ॥२८॥ धृत्वा तं मुष्टिलत्ताभिस्ताडनं कर्तुमुद्यताः ॥ प्रसन्नानंद उत्थाय तावदेव निजासनात् ॥ २९ ॥ निवार्य शिष्यांस्तं प्राह प्रसन्नास्योऽतिसांत्वयन् ॥ प्रसन्नानंद उवाच ॥ उपकारस्त्वया नूनं कृतोऽयं मयि सांप्रतम् ॥ ३० ॥ देवपूजाभिसक्तस्य सर्वदासनसंस्थितेः ॥ व्यथितः पृष्ठभागो मे केनापीत्थं न मर्दितः ॥ ३१ ॥ स त्वया मुष्टिभिः कामं निर्व्यथोऽद्य कृतः खलु ॥ तवैव हस्तौ व्यथितौ मुष्टिपाताच्चिरं मयि ॥ ३२॥ तत्क्षमस्व दयालो त्वं सन्मतिश्च भवाऽधुना ॥ श्रीदेशिकेंद्र उवाच ॥ प्रसन्नानंदवचनं श्रुत्वा शिष्यादयोऽखिलाः ॥ ३३ ॥

कस्माच्चित्पुरुषात् खलस्य साहसं मुष्टिताडनादि दुश्चेष्टितं श्रुत्वा तं खलं धृत्वा मुष्टिलत्तादिभिस्ताडनं कर्तुमुद्युक्ता बभूवुरित्यन्वयः। शिष्या इत्यनुवृत्तिः ॥ ॥ २८ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ २९ ॥ तं खलं प्राह । अयं पृष्ठमर्दनरूपः ॥ ३० ॥ व्यथितो मे पृष्ठभागस्त्वया इत्थम् अनेन प्रकारेण यथा केनाप्यन्येन न मर्दित इत्यर्थः ॥ ३१ ॥ स पृष्ठभागः । कामं यथेच्छम् । व्यथितौ जाताविति शेषः ॥ ३२ ॥ हे दयालो त्वं तत् त्वदीयहस्तव्यथाजनकत्व

रूपमदपराधं क्षमस्व । सुबुद्धिश्च भव । उत्तरार्द्धमुत्तरान्वयि ॥ ३३ ॥ खलोऽपीत्युत्तरान्वयि ॥ ३४ ॥ तं प्रसन्नानंदं नत्वा साधुतां साधुभावं प्राप ॥ ॥ ३५ ॥ सप्तत्रिंशसंख्यं प्रसन्नानंदं प्रणमति—इत्थमिति । एतादृशप्रभावेन क्षमासामर्थ्येन युक्तः प्रसन्नानंदः संभ्रमसंज्ञकाय शिष्याय रहस्यं पूर्णाभिषेका दिमंत्ररहस्यं दत्त्वाऽथ शीघ्रं परां कैवल्यरूपां स्थितिं यो जगाम तं नताः स्मः । इंद्रवज्रावृत्तम् ॥ ३६ ॥ एतत्सर्गोक्तगुरुत्रयकथाश्रवणादेः फलमाह—वाग्भवत इति । त्रिगुरूणां वाग्भवचिदानंदप्रसन्नानंदानां क्रमेण फलानि । वाक्सिद्धिम् आत्मभावं प्रसन्नहृदयत्वं चेति । ईप्सितमिति सर्वेषां कथाश्रवणफलं सः लभते । गीतिश्छंदः ॥ ३७ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचविंशः सर्गः ॥ २५ ॥ पयोनवष्ट्या षड्भिरो संभ्रमश्च

विस्मितास्तं प्रणेमुस्ते वर्णयंतोऽस्य वैभवम् ॥ खलोपि विस्मितोऽत्यंतमात्मानमतिगर्हयन्॥३४॥त्यक्त्वा खलधियं नत्वा तं जगाम निजं गृहम् ॥ प्रसन्नस्य प्रसन्नत्वं वर्णयन्प्राप साधुताम् ॥ ३५ ॥ इत्थं प्रभावेन युतः प्रसन्नानंदो रहस्यं त्वथ संभ्रमाय ॥ दत्त्वा जगामाशु परां स्थितिं तं सप्तत्रिसंख्यं गुरुमानताः स्मः ॥ ३६॥ वाग्भवतस्त्रिगुरूणां शृणोति चरितं पठेच्च यो भक्त्या ॥ वाक्सिद्धिं चात्मत्वं प्रसन्नहृत्त्वं तथेप्सितं लभते॥३७॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे वाग्भवानंदादिगुरुत्रयवर्णनं नाम पंचविंशः सर्गः॥२५॥
श्रीदेशिकेंद्र उवाच॥संभ्रमस्तु सदैवेत्थं प्राह शिष्यान्सुबोधयन्॥ब्रह्मणीदं जगत्सर्वं भ्रम एव न वस्तुतः॥१॥ कल्पितं जगदेतद्धि तस्माद्ब्रह्मैव सर्वतः॥भाति नानाविधं तंतुर्यथा नानापटाकृतिः॥२॥रज्जुर्भाति यथा सर्पदंडभूच्छिद्ररूपतः॥इत्थं मतिः शिष्याणां स चकार गुरुशासनात्॥३॥प्रोक्तो भ्रमोऽप्यात्मतयैव सम्यग्येनेति तं संभ्रममाहुरार्याः॥ यः सर्वमूचे परमात्मने तं चाष्टत्रिसंख्यं गुरुमानताः स्मः॥४॥

परात्मकः । भक्तावनान्नीलकंठो गुरुत्रयमितीर्यते ॥ २६ ॥ संभ्रम इति । ब्रह्मणीदं विश्वं भ्रम एव मिथ्यैवास्ति । वस्तुतो यथार्थत्वेन नास्तीत्यर्थः ॥ १ ॥ हि यस्मादेतज्जगत् कल्पितं कल्पनामात्रमस्ति तस्मात्सर्वत्र नानाविधं ब्रह्मैव भाति । यथा तंतुरेव नानापटाकृतिस्तद्वत् ॥ २ ॥ ननु तंतुवद्ब्रह्मणो विकारित्वं स्यादित्याशंक्य दृष्टांतांतरमाह । यथा रज्जुः सर्पदंडभूच्छिद्ररूपेण नानारूपा भाति तद्वदिति पूर्वान्वितम् । विवर्ताधिष्ठानत्वेन ब्रह्मणो न विकारित्वमिति भावः । गुरुशासनात् प्रसन्नानंदस्याज्ञया ॥ ३ ॥ अष्टत्रिंशसंख्यं संभ्रमानंदं प्रणमति—प्रोक्त इति । येन भ्रमोऽपि मिथ्याभूतोपि देहादिरात्मत्वेनैव सम्यक्

प्रोक्तस्तं प्रति आर्याः श्रेष्ठाः संभ्रमानंदमाहुः । " न हि विकृतिं त्यजंति कनकस्य तदात्मतयास्य कृतमनुप्रविष्टमिदमात्मतयावसितम् " इति वेदस्तुतौ । जगत आत्मत्वेन ग्रहणादत्याज्यत्वमित्यर्थः । च पुनः परमात्मसंज्ञकशिष्याय सर्वं पूर्णाभिषेकादिरहस्यमुवाच तं संभ्रमानंदं नताः स्मः । इंद्रवज्रावृत्तम् ॥ ४ ॥ परमानंदोपि त्रिकालेषु जाग्रदादिकालेषु सृष्टिस्थितिलयेषु एकरूपिणम् अव्यभिचारादेकत्वेन भासमानम् आत्मानं पश्यन् सन् । अथ सर्वाश्चाह कथयामास ॥ ५ ॥ एकोनचत्वारिंशं परमात्मानंदं प्रणमति—जगादेति । सन्मंत्रजातं सर्वोत्तममंत्रान् श्रेष्ठं रहस्यं पूर्णाभिषेकादि नीलकंठनाम्ने जगाद तं परमा

परमात्मापि चात्मानं त्रिकालेष्वेकरूपिणम्॥पश्यन्नथाह सर्वांश्च शिवार्चातत्परः सदा॥५॥जगाद सर्वं परमात्मसंज्ञो यो नीलकंठाय परं रहस्यम्॥ सन्मंत्रजातं वयमूनचत्वारिंशं गुरुं तं सततं नताः स्मः॥६॥नीलकंठोऽपि सिद्धोऽभूत्सर्वसिद्धिश्रियोज्ज्वलन् ॥ जीवात्मैक्यं बहूञ्छिष्यान्स्वानुभूत्या समादिशत् ॥७॥ आत्मानुभवमापुस्ते सर्वे गुरुकृपाबलात् ॥ दृढभक्तियुताश्चासन्गुरौ देवे यथाऽखिलाः ॥ ॥ ८ ॥ पूजयित्वा गुरुं नित्यमुपचारैरनेकशः ॥ समर्प्य तस्मै भक्ष्यादि जगृहुश्च ततः स्वयम् ॥ ९ ॥ असमर्पितमन्नादि गुरवे तैर्न गृह्यते ॥ विषयेष्वप्यनासक्ताः सदैवात्मानुचिंतनात् ॥ १० ॥ व्यापारे गृहकृत्ये च तेऽनुद्योगिन एव हि ॥ तथापि गुरुभक्त्यैषां गृहं सर्वं समृद्धिमत् ॥ ११ ॥ आसीद्यतः कलौ प्रोक्ता गुरुभक्तिः फलप्रदा ॥ प्रपंचे परमार्थे च नान्योपायस्तया विना ॥ १२ ॥

त्मानंदं नताः स्मः । उपजातिवृत्तम् ॥ ६ ॥ ७ ॥ ते शिष्या आत्मानुभवं आपुः । यथा अखिला सर्वे मुमुक्षवो गुरौ देवे च दृढभक्तियुक्तास्तथा आसन् ॥ ८ ॥ अनेकशः अनेकैः । ततः स्वयं जगृहुः गुरुनिवेदितं सर्वं स्वीकृतवंत इत्यर्थः । शिष्या इत्यनुवृत्तिः । अनासक्ता आसक्ता न बभूवुः । ते शिष्या इत्यपकृष्य योज्यम् ॥ ९ ॥ १० ॥ व्यापारे गृहकृत्ये च ते शिष्याः यद्यप्यनुद्योगिनः प्रयत्नरहिता आसन् तथापि एषां शिष्याणां गृहं गुरुभक्त्या समृद्धियुक्तम् आसीदित्यन्वयः॥ ११॥ तया गुरुभक्त्या । " कलौ गुरूणां भजनमीशभक्त्यधिकं स्मृतम् " इत्युक्तेर्गुरुभक्तेः परममहत्त्वमित्यर्थः॥ १२॥

॥ १३ ॥ ते बांधवाः अस्य संपन्नशिष्यस्य द्वेषम् आचक्रुः आ सर्वप्रकारेण कृतवंतः । तदेवाहुः । अयं धनवान् कथं जातः । तत्कुलजाः स यत्कुले जातस्तत्कुलसंभूता वयं कथं दरिद्रिणो जाताः ॥ १४ ॥ १५ ॥ वंचकाः परप्रतारणानिपुणाः साधवः साधुवेषाः मार्गघ्नाः मार्गे द्रव्यादिहरणेन नाशकाः लोके " सौंदे " "लुंटाकाः" इति प्रसिद्धाः यथा भवंति तथा वंचकास्ते धनवच्छिष्यस्य गृहं प्राप्ताः मित्राणीव स्थिताः संतस्तमूचुः ॥ १६ ॥ ॥ १७ ॥ नोऽस्माकं पृथक् गृहेषु पृथक् पृथक् गृहेषु भोजनार्थम् एहि आगच्छ त्वमिति शेषः । निःस्वान्निर्धनान् ॥ १८ ॥ बंधूनां विस्मृतिः कथं भवेत् ॥

इत्यासुर्नीलकंठस्य शिष्याः सर्वे धनान्विताः ॥ कस्यचित्राथ शिष्यस्य बांधवास्तु दरिद्रिणः ॥ १३ ॥ ते सर्वे द्वेषमाचक्रुरस्यायं धनवान्कथम् ॥ वयं तत्कुलजाश्चापि कथं जाता दरिद्रिणः ॥ १४ ॥ मृतश्चेदयमस्माभिस्तद्धनं लभ्यते बहु ॥ तस्मात्तन्मरणोपायः कर्तव्योऽनेकसाधनैः ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ इति कृत्वा मतिं सर्वे वंचकास्तद्गृहं ययुः ॥ मित्राणीव तमूचुस्ते मार्गघ्नाः साधवो यथा ॥ १६ ॥ वयं त्वद्बांधवाः सर्वे त्वमस्मान्वेत्सि वा न वा ॥ न त्वयास्मद्गृहे वंधो कदाचिद्भोजनं कृतम् ॥ १७ ॥ अतः पृथग्गृहेष्वेहि भोजनार्थं तु नः सखे ॥ श्रुत्वेत्थं धनवान्प्राह निःस्वान्कपटमानसान् ॥ १८ ॥ धनवानुवाच ॥ वेद्म्यहं निखिलान्बंधून्बंधूनां विस्मृतिः कथम् ॥ पत्नीयमहमेकोऽस्मि तृतीयो नास्ति मद्गृहे ॥ १९ ॥ धनं धान्यं गोकुलं च विपुलं मद्गृहेऽखिलम् ॥ संति भृत्याश्च बहवस्तत्तत्कार्येषु योजिताः ॥ २० ॥ तैस्तत्किं पाल्यते सत्यं यतः सर्वेऽपि चार्थिनः ॥ गुरोः कृपैव तत्पाति पालयेऽहं किमेकलः ॥ २१ ॥ गुरोः पूजापरोऽहं तु नावकाशो ममाप्यणुः ॥ भवद्गेहागमस्तस्मान्न मे स्यात्क्षम्यतां ततः ॥ ॥ २२ ॥ आयांतु मद्गृहं सर्वे भोजनायाद्य बांधवाः ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं ते पुनः प्रोचुर्दर्शयंतोऽमुमादरम् ॥ २३ ॥

॥ १९ ॥ विपुलमस्तीति योज्यम् ॥ २० ॥ तैर्भृत्यैस्तत् धनम् सत्यं यथार्थं यथा भवति तथा पाल्यते किम् । अपि तु न पाल्यते अथवा योग्यमिति पाठः । यतः कारणात्सर्वेऽपि अर्थिनः स्वार्थपराः संति । तर्हि कथं पाल्यत इत्यत आह—गुरोः कृपैव तद्धनं पाति अहं तु न पालये । यतः एकलः एकाकी ॥ २१ ॥ तर्हि किमर्थं नागच्छसीत्यत आह—गुरोरिति । अहमस्मि । अवकाशो नास्ति । क्षम्यताम् । भवद्भिरित्यध्याहारः ॥ २२ ॥ मयि भवतां

प्रीतिश्चेन्मद्गृहे भोजनार्थं भवद्भिरेवागंतव्यमित्याह—आयांत्विति । अमुं धनिनम् । आदरम् आग्रहम् ॥ २३ ॥ दीर्घदर्शनात् बहुकालानंतरं तव दर्श नाद्धेतोरस्माभिस्ते तुभ्यं भोजनार्थम् आगच्छेति प्रोक्तम् ॥ २४ ॥ मद्गृहे भोजनार्थम् आगंतव्यमिति यत्त्वया प्रोक्तं तत्राहुः—पूर्वमिति । यतः कारणात्त्वं नो बंधुरेवासि । बंधुगृहे अनाहूता अपि भोजनार्थं गच्छंति किं वक्तव्यमादरेणाहूता इति भावः ॥ २५ ॥ २६ ॥ अथादिकं परान्वितम् ॥

बांधवा ऊचुः ॥ वयं विद्मोऽखिलं बंधो सस्नेहं तव मानसम् ॥ अस्त्येवास्मासु चास्माभिः प्रोक्तं ते दीर्घदर्शनात् ॥ २४ ॥ पूर्वमस्म द्गृहानेहि भोजनार्थं ततो वयम् ॥ आयास्यामस्तव गृहं यतस्त्वं बंधुरेव नः ॥ २५ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्युक्त्वा बहुशस्तं श्वो भोजनायैहि नः सखे ॥ त्वं गृहानिति चामंत्र्य गताः सर्वे निजालयम् ॥ २६ ॥ देयमस्मै विषं नूनं सद्यो येन मरिष्यति ॥ चक्रुरि त्थं मतं सर्वेऽथान्यस्मिन्दिवसे तु तैः ॥ २७ ॥ पाकं कृत्वा समाहूतो मध्याह्ने गुरुभक्तिमान् ॥ स चाभ्यर्च्य गुरुं भक्त्या कृत्वा कर्माणि कृत्स्नशः ॥ २८ ॥ यत्र पाकः कृतस्तत्र भोजनाय ययौ सुधीः ॥ एकपंक्तौ स्थिताः सर्वे ते तत्रायमपि स्थितः ॥ २९ ॥ भक्ष्यं लेह्यं तथा पेयं चोष्यमेवं चतुर्विधम् ॥ परिवेष्य ततः पश्चाद्घृतं च परिवेषितम् ॥ ३० ॥ गुरुभक्तस्य पात्रस्थे घृते तैर्विषमु ल्बणम् ॥ क्षिप्तं नायं तु जानाति तेषां कापट्यमादितः ॥ ३१ ॥ भोजनारंभतः पूर्वं गुरुभक्तोऽमलाशयः ॥ निमील्य नयने दध्यौ श्रीगुरोर्विग्रहं हृदि ॥ ३२ ॥ पादादिशीर्षपर्यंतं यथा नित्यं सुपूजितम् ॥ प्रार्थनां च गुरोश्चक्रे मनसैवेति भक्तिमान् ॥ ३३ ॥ गुरु भक्त उवाच ॥ मयाऽन्नमद्यावधि नित्यमेव पक्वं स्वगेहान्निकटे तवार्यं ॥ आनीय तुभ्यं च समर्प्य शेषं नीत्वा स्वगेहं तु तदेव भुक्तम् ॥ ॥ ३४ ॥ तथा न चाद्यात्र भवत्यहं यत्प्राप्तः परस्यालयमन्नमत्तुम् ॥ गृहाण तस्मादत एव सर्वं मदीयपात्रे परिवेषितं यत् ॥ ३५ ॥

॥ २७ ॥ गुरुभक्तिमान् धनिकः । स चेत्यादि परान्वयि ॥ २८ ॥ यत्र गृहे ॥ २९ ॥ परिवेषितं बंधुभिरिति शेषः ॥ ३० ॥ उल्बणं घोरं विषं क्षिप्तं परिवेषणात्पूर्वमेव निक्षिप्तमिति ज्ञेयम् ॥ ३१ ॥ दध्यौ ध्यातवान् । विग्रहं देहम् ॥ ३२ ॥ ३३ ॥ अद्यावधि अद्यपर्यंतम् । तत् गुर्वर्पितमन्नम् ॥ ॥ ३४ ॥ अत्र बंधुगृहे यथापूर्वं तथा गुर्वर्पितशेषस्य भोजनं न भवति । यद्यतः परस्य गृहेऽन्नं भोक्तुमहं प्राप्तोऽस्मि तस्मात्त्वमेव मदीयपात्रे परिवेषितं

मत्पदत्तं गृहाण ॥ ३५ ॥ ननु त्वयात्रानीय निवेदितं यत्तद्ग्राहकोऽहं कथं त्वत्पात्रस्थं गृह्णामीत्याशंक्य सर्वगतत्वेन त्वमेव समर्थोऽसीत्याह—साक्षादिति द्वाभ्याम् । त्वं साक्षाच्छिवोऽसि खलु । ननु शिवः कैलासे वर्तते कथमत्रागत इत्यत आह । गुणरहितोऽपि त्वं शरणागतान्नोऽस्मान् संसाराद्रक्षितुं दयार्द्रचित्तः सन् सत्त्वगुणात्मकं स्वेच्छाशरीरं दधानो भुवं प्राप्तोऽसि ॥ ३६ ॥ गुरोः शिवरूपत्वात्त्वं व्यापकः अतः सर्वगतः सर्वात्मा चासि । इत्थं ममांतः मनसि निश्चयोऽस्ति चेत् अनन्यविषया मे मम भक्तिस्त्वय्यस्ति चेत्तर्हि श्रीदेशिकेंद्र हे गुरो त्वमिदं मत्पात्रस्थमन्नं भुंक्ष्व । हीति निश्चये ॥ ३७ ॥

साक्षाच्छिवस्त्वं खलु निर्गुणोऽपि त्रातुं भवाब्धेः शरणागतान्नः ॥ स्वेच्छातनुं सत्त्वमयीं दधानो दयार्द्रचित्तो भुवमागतोऽसि ॥३६॥
त्वं व्यापकः सर्वगतोऽखिलात्मा चेदित्थमंतर्मम निश्चयोऽस्ति ॥ त्वय्यस्ति चेद्भक्तिरनन्यगा मे श्रीदेशिकेंद्रान्नमिदं हि भुंक्ष्व ॥३७॥
श्रीदेशिकेंद्र उवाच ॥ इत्थं तन्मानसं स्तोत्रं ज्ञानदृष्ट्याखिलं गुरुः ॥ नीलकंठोऽथ विज्ञाय विषं तच्च घृतेऽर्पितम् ॥ ३८ ॥ मद्भक्तोऽद्य विषादुग्रात्पंचत्वं यास्यतीति सः ॥ दयाकुलमनाः शीघ्रमुत्थायासनतस्तदा ॥ ३९ ॥ ययौ यत्रात्मनः शिष्यो बंधुपंक्तौ स्थितः सुधीः ॥ अनुक्त्वैव किमप्येनं हस्तेनोत्थाप्य पात्रतः ॥ ४० ॥ स्थित्वा तत्र स्वयं सर्वं पपौ पात्रस्थितं घृतम् ॥ दृष्ट्वेत्थं बांधवास्तस्य बभूवुः कंपितांतराः ॥ ४१ ॥ इति प्रोचुर्मिथोऽस्माभिः किं कृतं तत्कथं ह्यभूत् ॥ मरणाय कृतो यत्नो यस्य सोऽद्धा स्थितः पुरः ॥ ४२ ॥ अनाहूतः पपौ साधुः स्वयमेवोल्बणं विषम् ॥ मृतिं यास्यत्ययं नूनं राजाऽस्मान्दंडयिष्यति ॥ ४३ ॥

मानसं मनसि कृतं स्तोत्रं घृतेऽर्पितं च तद्विषं ज्ञानदृष्ट्या ज्ञात्वा मद्भक्त उग्रविषेण मृत्युं यास्यतीति दयायुक्तांतःकरणः सन् आसनादुत्थाय तदा तत्र स ययाविति सार्द्धद्वयोरन्वयः ॥ ३८ ॥ ३९ ॥ उत्तरार्द्धमुत्तरान्वयि । एनं शिष्यम् । अनुक्त्वैव पात्रतो भोजनपात्रात् उत्थाप्य घृतपात्रमिति शेषः ॥ ४० ॥ तत्र पात्रसमीपे स्थित्वा पात्रे पुटके स्थितं घृतं पपौ गुरुरित्यनुवृत्तिः । तस्य शिष्यस्य बांधवाः ॥ ४१ ॥ कथमभूत्कथं जातम् ॥ ४२ ॥ अयं साधुः ॥ ४३ ॥

यस्मात्तापान्निर्वृतिः सुखं नास्ति ॥ ४४ ॥ ४५ ॥ ४६ ॥ अथैकक्षणानंतरम् । अपश्यत् नीलकंठ इत्यनुवृत्तिः । स्थितं जीवितं यस्य तं जीवंतमित्यर्थः ॥ ४७ ॥ प्रगेमुः ते शिष्यबांधवा इत्यनुवृत्तिः ॥ ४८ ॥ ४९ ॥ अनेन शिष्येण । उत्तरार्धमुत्तरान्वयि । तां स्तुतिम् ॥ ५० ॥

पापं चास्माभिरतुलं प्राप्तं यस्मान्न निर्वृतिः ॥ कथं कार्यं बतास्माभिः प्राप्तं कष्टं महत्तरम्॥४४॥ श्रीदेशिकेंद्र उवाच॥ इत्थं जल्पत्सु सर्वेषु नीलकंठः स योगिराट् ॥ क्षणं कश्मलतां प्राप्तश्चोल्बणेन विषेण वै ॥ ४५ ॥ घृतं तेनोदरे क्षिप्तं विषं कंठे धृतं महत् ॥ तेनासौ नीलकंठोऽभूत्साक्षाच्छिव इवापरः ॥ ४६ ॥ नेत्रे अथ समुन्मील्य स्थित्वा पश्यत्तदाखिलान् ॥ दृष्ट्वा बभूवुः संतुष्टाः सर्वे तं स्थितजीवितम् ॥ ४७ ॥ प्रगेमुर्दंडवद्भूमौ न वक्तुं किमपि क्षमाः ॥ नीलकंठः स्वयं प्राह तानथो शिष्यबांधवान् ॥ ४८ ॥ नीलकंठ उवाच ॥ भवद्भिः साहसं कर्म कृतं यत्तद्विगर्हितम् ॥ धनलोभेन मच्छिष्यं हंतुं दत्तं विषं घृते ॥ ४९ ॥ मत्स्तुतिर्मनसानेन कृतात्रं मे निवेदितम् ॥ योगशक्त्या तु तां ज्ञात्वा विषं चाज्ये निवेदितम् ॥ ५० ॥ प्राप्तोऽत्राहं मृतेस्त्रातुं शिष्यं चानन्यमानसम् ॥ अपमृत्योरयं त्रातः स्वयं पीत्वा विषं मया ॥ ५१ ॥ देवोपि न क्षमो हंतुं गुरुभक्तं कुतः परे ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं नीलकंठोक्तं लज्जिताः शिष्यबांधवाः ॥ ५२ ॥ तं नत्वा प्रार्थयामासुर्बद्ध्वा तत्र भोजने ॥ ततः शांतः सशिष्योऽसौ बुभुजे तैर्युतः खलैः ॥५३॥ संरक्ष्यैवं मृतेः शिष्यं नीलकंठो ययौ मठम् ॥ शिष्यो गृहं स्थिताः सर्वे बांधवास्तु निजान्गृहान् ॥ ५४ ॥ गुरुभक्तिं प्रशंसंतः सामर्थ्यं चास्य योगिनः ॥ ततस्तच्छिष्यतां प्राप्य बभूवुः शांतमानसाः ॥ ५५ ॥ अद्याप्यास्ते स योगींद्रो जित्वा योगबलान्मृतिम् ॥ चतुःसहस्रवर्षेषु ह्यतीतेष्वपि जन्मतः ॥५६॥शुकानंदपदेभ्योऽभून्नीलकंठाख्ययोगिनः ॥ दर्शनं भाषणं यद्वै तदग्रे वक्ष्यते मया॥५७॥

मृतेर्मरणाद्रक्षितुम् ॥ ५१ ॥ श्रुत्वेत्यादि परान्वितम् ॥ ५२ ॥ ५३ ॥ संरक्ष्य रक्षयित्वा ॥ ५४ ॥ पूर्वार्द्धं पूर्वान्वयि । तच्छिष्यतां नीलकंठशिष्यतां प्राप्य शांतमानसा बभूवुः । शिष्यबांधवा इत्यनुवृत्तिः ॥ ५५ ॥ मृतिं मृत्युं जित्वा अद्यापि वर्तते । जन्मतः जन्मन आरभ्य चतुःसहस्रवर्षेषु अतीतेषु

सत्सु नीलकंठयोगिनो दर्शनं भाषणं च शुकानंदाय यद्भूत्तदग्रे शुकानंदचरित्रे मया वक्ष्यत इति संबंधः ॥ ५६ ॥ ५७ ॥ आदिनाथाच्चत्वारिंशं नीलकंठानंदं प्रणमति—सत्येति । येन निजाभिधा नीलकंठेति स्वनाम इत्थं विषपानेन भक्तरक्षणात् सत्या कृता यथार्थं कृतम् । शांभवनामकाय शिष्याय रहस्यं पूर्णाभिषेकादिमंत्ररहस्यं च प्रोक्तम् । तं नताः स्मः । इंद्रव० ॥ ५८ ॥ एतत्सर्गोक्तगुरुत्रयकथाश्रवणादिफलमाह—आख्यानमिति । संभ्रमानंदस्य परमात्माभिधस्य नीलकंठस्य च यदाख्यानं तत् भक्त्या पाठेन श्रवणेन च नुः मनुष्यमात्रस्य अभ्रमत्वादिफलं क्रमेण कुर्यात् । अभ्रमत्वं द्वैतभ्रमराहितत्वम् ।

सत्या कृता येन निजाभिधेत्थं प्रोक्तं रहस्यं किल शांभवाय ॥ तं नीलकंठाख्यगुरुं च चत्वारिंशत्तमं वै शिरसा नताः स्मः ॥ ॥ ५८ ॥ आख्यानं नुः संभ्रमस्याभ्रमत्वं भक्त्यात्मत्वं तत्परात्माभिधस्य ॥ मुक्तिं कष्टाच्चापमृत्योश्चिरायुः पाठाच्छ्रुत्या नीलकंठस्य कुर्यात् ॥ ५९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे षड्विंशः सर्गः ॥ २६ ॥ श्रीदेशिकेंद्र उवाच ॥ शांभवः शंभुभक्तोऽभूच्छंभुमेव हृदि स्मरन् ॥ विश्वं शंभुमयं पश्यञ्छिवार्चाभिरतः सदा ॥ १ ॥ शिवान्यन्नैव यच्चित्ते स्फुरत्येव कदाप्यणु ॥ देशे काले च सर्वत्र यन्मनः शिवतां गतम् ॥ २ ॥ सर्वे पदार्थाः खलु शक्तिमंतः शक्त्या विना नैव पदार्थता स्यात् ॥ शक्तिर्न भिन्ना शिवतः कदापि पदार्थजातं शिव एव तस्मात् ॥ ३ ॥ सदेत्थं चिंतयंश्चित्ते यद्यत्पश्यति चक्षुषा ॥ तत्र तत्र चकारासावखंडां शिवभावनाम् ॥ ४ ॥

संभ्रमानंदाख्यानश्रवणाद्भवेत् । परमात्मानंदाख्यानश्रवणादात्मत्वम् आत्मरूपत्वं ज्ञानमिति यावत् । भवेत् । नीलकंठाख्यानश्रवणात् कष्टात् दुःखादपमृत्योश्च मुक्तिः चिरायुष्यं च भवेदित्यर्थः । शालिनीवृत्तम् ॥ ५९ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां षड्विंशः सर्गः ॥ २६ ॥ सप्तविंशे तु षट्पंचपद्यैः शांभवशैवधीः । विश्वात्मकश्च विश्वात्माप्रियस्य प्रियतोच्यते ॥ २७ ॥ शांभव इति ॥ १ ॥ २ ॥ सर्वे घटपटादिपदार्थाः शक्तिमंतः संति खलु । शक्त्या विना पदार्थत्वं न स्यात् । तस्माच्छक्तिशक्तिमतोरभेदात् शिव एव शिवरूपमेव । उपजातिवृत्तम् ॥ ३ ॥ शिवभावनां शिवरूपमेवेद

मिति सदा चिंतितवानित्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥ तत्रत्याः विष्णुमंदिरस्थाः । इयं शंकरस्य प्रतिमा नास्ति किंतु विष्णुप्रतिमास्तीति शेषः ॥ ७ ॥ चक्षुष्मानपि त्वं किमंधोऽसि । अद्धा साक्षाद्धरेर्मूर्तिं शिवलिंगैः स्तवैः शिवमिव स्तौषि स्तवनं करोषि ॥ ८ ॥ अजस्रं सततं हृत्प्राणैर्मनसा प्राणैश्च । इंद्रियैश्च सह शिवतां शिवभावं गतः प्राप्तः शांभवस्तान् वचः प्राह । यस्य शिवान्यत्किमपि नास्तीति भावः ॥ ९ ॥ यतोऽमूमीश्वरस्य मूर्तिं मत्पुरोगतां

मूर्तीर्विष्णवादिदेवानां पश्यन्नप्यकरोन्नतिम् ॥ शंभुमेव हृदा ध्यायन्वाचाप्युच्चारयञ्छिवम् ॥५॥ कदाचित्स क्वचिद्देशे गतो विष्ण्वालयं भ्रमन् ॥ दृष्ट्वापि विष्णोः प्रतिमां चक्रे ध्यानं शिवस्य सः॥६॥ ननाम दंडवद्भूम्यां ब्रुवञ्छंभो शिवेति च ॥ श्रुत्वेति चोचुस्तत्रत्याः प्रतिमेयं न शांकरी ॥७॥ चक्षुष्मांश्च किमंधोऽसि स्तौष्यद्धा प्रतिमां हरेः ॥ शंखचक्रादिचिह्नाढ्यां शैवीमिव शिवस्तवैः ॥८॥ श्रीदेशिकेंद्र उवाच ॥ तत्रत्यानामिति श्रुत्वा वचस्तानथ शांभवः ॥ प्राहाजस्रं स हृत्प्राणैश्चेंद्रियैः शिवतां गतः ॥ ९ ॥ शांभव उवाच ॥ यूयमेवांधतां प्राप्ताः सर्वेऽद्धा मूर्तिमैश्वरीम् ॥ विष्णुमूर्तिमिति ब्रूथ चक्षुष्मंतोऽप्यमूं यतः ॥ १० ॥ सांप्रतं तर्हि नयने सम्यगुन्मील्य दृश्यताम् ॥ विषयेभ्यः समाकृष्य मनश्चात्यंतचंचलम् ॥ ११ ॥ श्रीदेशिकेंद्र उवाच ॥ ब्रुवतीत्थं शांभवेऽथ तत्राद्भुतमिवाभवत् ॥ ते सर्वे वैष्णवीं मूर्तिं ददृशुः शांभवीमिव ॥ १२ ॥ चंद्रचूडत्रिनेत्रादिचिह्नाढ्यां सुमनोहराम् ॥ तदा ते विस्मिताः सर्वे प्रणेमुः शांभवं गुरुम् ॥ १३ ॥ तं प्रोचुरिति धन्योऽसि भक्तः शंभोर्दृढाशयः ॥ भक्तिदार्ढ्येन ते साक्षाद्विष्णुमूर्तिः शिवाकृतिः ॥ १४ ॥ दृषन्मय्यपि जातेयमहो भक्तेर्बलं महत् ॥ अनन्यया वशं याति यथा भक्त्या हरिर्हरः ॥ १५ ॥ तथा न साधनैरुग्रैर्वर्षोष्णहिमदुःखदैः ॥ न भिन्नौ प्रकृतेरैक्यात्स्मृतौ हरिहरौ बुधैः ॥ १६ ॥

शिवप्रतिमां प्रति विष्णुमूर्तिमिति ब्रूथ वदथ ततो यूयमेवांधतां प्राप्ता इति योज्यम् ॥ १० ॥ दृश्यतां भवद्भिरिति शेषः ॥ ११ ॥ १२ ॥ पूर्वार्द्धं पूर्वान्वितम् ॥ १३ ॥ दृषन्मयी पाषाणमय्यपि विष्णुमूर्तिरियं शिवाकृतिर्जातेति संबंधः ॥ १४ ॥ अनन्यया न अन्यः आत्मभिन्नः पदार्थो यस्यां तया त्रिपुटीविलयेन सर्वोऽहमस्मीत्येवंरूपया शिवान्यन्नास्त्येवेत्येवं रूपया वा भक्त्या ॥ १५ ॥ वर्षोष्णहिमदुःखदैः पर्जन्योष्णशीतकालेषु वृष्ट्युष्णशीतादिसहनेन

दुःस्वप्नैः साधनैर्योगाभ्यासादिभिः । प्रकृतेर्धातोः हृञ् हरण इत्यस्य ऐक्यादेकत्वेन हरिहरौ न भिन्नाविति बुधैः स्मृतौ । प्रकृत्यभेद एवोभयोरैक्यज्ञापक इत्यर्थः ॥ १६ ॥ भेदकर्ता नरकं प्राप्नोति । सः वै निश्चयेन पितुः अन्यस्य वीर्याज्जातः । कैश्चिज्जनैः कैरपि जनैः तयोर्हरिहरयोः ॥ १७ ॥ १८ ॥ ॥ १९ ॥ एकचत्वारिंशं शांभवानंदं प्रणमति—इत्थमिति । यस्माच्छांभवानंदाद्रहस्यम् आद्यं श्रेष्ठं पूर्णाभिषेकद्वारा मंत्रजातं विश्वात्मकः शिष्यः प्राप्तवान् तं नताः स्मः ॥ २० ॥ विश्वात्मकः इति भावनां चकारेति पंचमश्लोकस्थक्रिययान्वयः । नापरं मत्तः अपरं नास्तीत्यर्थः । तत्र दृष्टांतः । स्वप्ने

भेदकृन्निरयं याति स वै पित्रन्यवीर्यजः ॥ तस्मान्न कैश्चित्कर्तव्या भेदबुद्धिस्तयोर्जनैः ॥ १७ ॥ इति तेषां वचः श्रुत्वा शांभवस्तुष्टधी स्ततः ॥ निर्जगाम सशिष्योऽथ मत्वा तं परमेश्वरम् ॥ १८ ॥ तदाप्रभृति तत्क्षेत्रं जातं हरिहरात्मकम् ॥ प्रसिद्धं दक्षिणाशायां दर्शनात्सर्वकामदम् ॥ १९ ॥ इत्थं हि शंभौ दृढभक्तियुक्ताद्यस्माद्रहस्यं मनुजातमाद्यम् ॥ विश्वात्मकः प्राप तमेकचत्वारिंशं गुरुं शांभवमानताः स्मः ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ विश्वात्मकोऽखिलं विश्वमहमेवास्मि नापरम् ॥ यतो मय्येव भात्यद्धा स्वप्ने दृश्यमिव स्फुटम् ॥ २१ ॥ नृगजाश्वादिकं स्वप्ने नृभिः सर्वं विलोक्यते ॥ बाह्यतः किं तदा याति रहःशायि नराग्रतः ॥ २२ ॥ विस्मृत्यैव स्वदेहस्य श्रुतं दृष्टं मनोगतम् ॥ पूर्वस्माद्बुद्धिसंस्कारात्स्वस्मिन्नेव विभाति तत् ॥ २३ ॥ विस्मृत्यैवात्मनश्चात्मन्यात्मानं स्यमिदं तथा ॥ भाति प्राक्कर्मभिर्बुद्धेः संस्कृतेर्बहुजन्मतः ॥ २४ ॥

अद्धा प्रत्यक्षं दृश्यम् अश्वरथादि भाति स्फुटं स्पष्टम् ॥ २१ ॥ दृष्टांतं विवृणोति—मनुष्यगजाश्वादिकं यदवलोक्यते तत् एकांते शयनकर्तुः पुंसोऽग्रभागे बाह्यदेशादागच्छति किं किं तु मनःकल्पितं मनस्येव वर्तत इत्यर्थः ॥ २२ ॥ तदेवाह—जाग्रद्देहस्य विस्मरणेन दृष्टं श्रुतं च वस्तु मनोगतं भवति । तत्र हेतुः पूर्वस्माज्जाग्रत्कालाद्बुद्धेः संस्कारात् तत्तादात्म्याध्यासेन स्वस्मिन्नात्मन्येव भाति न पृथगित्यर्थः ॥ २३ ॥ दार्ष्टांते योजयति सच्चिदानंदात्मनः

विस्मरणेन चात्मनोऽनंतत्वमेवेदं विश्वरूपेण आत्मनि मनसि भाति । तत्र हेतुः बहुजन्मतः बहुजन्मसु प्राक्कर्मभिर्बुद्धेः संस्कारेण । सार्वविभक्तिकस्तसिः ॥ २४ ॥ अतः कारणाद्विश्वं विश्वरूपः अहं नान्यः पृथिव्यादिर्विश्वरूपोऽस्ति ॥ २५ ॥ तया विश्वात्मिकया सिद्ध्या जीवजाताशयं सर्वजीवमनोगतं वेद ॥ २६ ॥ द्विचत्वारिंशत्संख्यं विश्वात्मकानंदं प्रणमति—इत्थमिति । त्रियाख्याय शिष्याय परं रहस्यं पूर्णाभिषेकद्वारा मंत्रोपदेशादि प्रादात् कथितवान् यस्तं सिद्धश्रेष्ठं विश्वात्मकं नताः स्मः ॥ २७ ॥ २८ ॥ देहादेरात्मसुखार्थत्वे सनिमित्ता प्रीतिः । आत्मा तु निर्निमित्तप्रियोऽस्ति " आत्मनस्तु कामाय

अतो विश्वमहं नान्यश्चकारेति स भावनाम् ॥ प्रापाथ भावनादार्ढ्यात्सिद्धिं विश्वात्मिकां पराम् ॥ २५ ॥ तया सिद्ध्याऽखिलं वेद जीवजाताशयं मुनिः ॥ यद्यत्संकल्पितं सर्वैस्तत्तज्जानाति कृत्स्नशः ॥ २६ ॥ इत्थं महत्याभिहितस्तु सिद्ध्या प्रादात्त्रिया ख्याय परं रहस्यम् ॥ विश्वात्मकं तं स्वगुरुं द्विचत्वारिंशन्मितं सिद्धवरं नताः स्मः ॥ २७ ॥ प्रियानंदः प्रियं प्रोचे सदा सर्वान्प्रियोक्तिभिः ॥ कदाचिदपि कंचित्स नोवाचाप्रियमण्वपि ॥ २८ ॥ निर्निमित्तः प्रियोऽस्त्यात्मा तदर्थं चाखिलं प्रियम् ॥ एक एव स सर्वेषु देहेष्वात्मानमात्मना ॥२९॥ जानन्नास्तेऽमलोऽनंतो निर्द्वंद्वोऽनावृतोऽक्षयी ॥ देहाद्यमपि तस्यैव सान्निध्याद्भासतेऽखिलम् ॥३०॥ इत्थं सर्वगतोऽस्त्यात्मा कस्मै चाप्रियमुच्यताम् ॥ एवं सदा हृदा ध्यायन्स सर्वान्प्रियभाषणम् ॥३१॥ चक्रे स्वप्नेऽपि नैवास्य निर्ययावप्रियं मुखात् ॥ मनोधींद्रियवृत्त्यापि नाकरोदप्रियं तथा ॥३२॥ इत्यभ्यासात्प्रियानंदः प्राप सिद्धिं प्रियाभिधाम् ॥ प्रियत्वेन तयोचुस्तं सर्वे नाप्रियमण्वपि ॥३३॥ क्रुद्धोऽपि यन्मुखं दृष्ट्वा हसन्वक्ति प्रियं मुदा ॥ कौचिद्वौ ब्राह्मणौ बंधू कलहाढ्यौ दिवानिशम् ॥३४॥

सर्वं प्रियं भवति " इति श्रुतेः । उत्तरार्द्धमुत्तरान्वयि । आत्मना साक्षिरूपेण आत्मानं परमात्मानम् ॥ २९ ॥ अमलः अविद्यारहितत्वात् । अनंतः परिच्छेदत्रयरहितत्वात् । निर्द्वंद्वः सुखदुःखादिरहितः अद्वितीयत्वात् । अनावृतः स्वप्रकाशत्वात् । अक्षयी नाशहीनः जन्माभावात् । एतादृशात्मसान्निध्येन देहादिकं प्रकाशते ॥ ३० ॥ मयाऽप्रियं कस्मै वाच्यं न कस्मैचिदित्यर्थः ॥ ३१ ॥ चक्रे इति पूर्वानुषंगि । मनोबुद्धींद्रियवृत्त्यापि परस्याप्रियं न अकरोत् न अचिंतयदपीत्यर्थः ॥ ३२ ॥ तया सिद्ध्या ॥ ३३ ॥ क्रुद्धोऽपि जनः तस्य प्रियत्वं वक्तुं कथामाह—काविव्यादिना यावत्सर्गसमाप्ति ।

कलहाढ्यौ स्थिताविति योज्यम् ॥ ३४ ॥ पितुर्यद्वित्तं वृत्त्यादिकं तस्य विभागाय दीर्घकालं यथा स्यात्तथा कलहाढ्यौ । उत्तरार्द्धमुत्तरान्वयि ॥ ३५ ॥
॥ ३६ ॥ तत्रत्यास्तद्ग्रामस्थाः ग्रामांतरमित्याद्युत्तरान्वयि ॥ ३७ ॥ यतः कारणात्परग्रामस्थास्त्वेकपक्षपातिनो न भवंति । सत्यं हितम् ॥ ३८ ॥

पितृवित्तविभागार्थं दीर्घकालमिति स्थितौ ॥ विभक्तं च पितुर्द्रव्यं मयोनं तु त्वयाधिकम् ॥ ३५ ॥ गृहीतमिति जल्पंतौ मिथस्तौ द्वेषकारिणौ ॥ बहुधात्रैर्महद्भिश्च प्रोक्तौ राज्ञापि दंडितौ ॥ ३६ ॥ तथापि कलहो नैव विरराम तदा तयोः ॥ तत्रत्यास्तावथ प्रोचुर्ग्रामांतरमितो युवाम् ॥ ३७ ॥ गच्छतं परपूःस्थास्तु न यतः पक्षपातिनः ॥ उभयोरपि सत्यं ते वदिष्यंति न चान्यथा ॥ ३८ ॥ तावित्थं तु पुरस्थानां वचः श्रुत्वा पुरांतरम् ॥ जग्मतुर्नैव तत्रापि कलहोपरमस्तयोः ॥ ३९ ॥ गत्वा ग्रामान्बहून्नित्थं दैवात्प्राप्तौ पुरं हि तत् ॥ स्थितो यत्र प्रियानंदः प्रियवाग्खिलप्रियः ॥ ४० ॥ ऊचतुस्तौ स्ववृत्तांतं तद्ग्रामस्थांस्तदाखिलम् ॥ ते तावूचुः पुरे चास्मिन्प्रियानंदः प्रियंवदः ॥ ४१ ॥ युवाभ्यां तन्मठे शीघ्रं गंतव्यं स द्वयोरपि ॥ हृद्गतं प्रियमद्धा यद्वदिष्यति तदस्तु वाम् ॥ ४२ ॥ श्रुत्वेत्थं तौ पुनः सर्वान्प्रोचतुर्ब्राह्मणावुभौ ॥ ब्राह्मणावूचतुः ॥ बहुभ्यो जनमुख्येभ्यः स्ववृत्तं हि पुरे पुरे ॥४३॥ आवाभ्यां कथितं गत्वा तत्तद्ग्रामान्बहूनपि ॥ तैस्तैरेकतरस्यैव कथितं चावयोः प्रियम् ॥ ४४ ॥ सर्वेष्वप्युभयोर्नैव प्रियं केनापि चोदितम् ॥ भवद्भिः प्रोच्यते त्वत्र प्रियानंदः प्रियं द्वयोः ॥ ४५ ॥ वदिष्यतीति वाक्यं नौ महद्भिस्सर्यदं हि वः ॥ श्रीदेशिकेंद्र उवाच ॥ अहं सत्योऽस्म्यहं सत्यश्चेति निश्चयिनोर्द्वयोः ॥ ४६ ॥

तौ भ्रातरौ ॥३९॥४०॥ प्रियंवदः प्रियवादी अस्ति ॥ ४१ ॥ सः प्रियानंदः तत् विभागादि वां युवाभ्याम् अस्तु । तदुक्तविभागः स्वीकार्य इत्यर्थः ॥
॥४२॥ उत्तरार्द्धमुत्तरान्वयि ॥४३॥ तैस्तैर्जनैः आवयोर्मध्ये एकस्यैव हितमुक्तम् ॥४४॥ सर्वेषु ग्रामेषु । अत्रेत्याद्युत्तरान्वयि ॥४५॥ उत्तरार्द्धमुत्तरान्वयि ।

निश्चयिनोः निश्चयवतोः ॥ ४६ ॥ ४७ ॥ युवामिति पूर्वोत्तरान्वयि ॥ ४८ ॥ ४९ ॥ ५० ॥ निरीक्ष्यैव अवलोकनमात्रेणैवेत्यर्थः ॥ ॥ ५१ ॥ ५२ ॥ वित्तार्थमिति पूर्वोन्वितम् । किं च बंधुभावात् वित्तं श्रेष्ठं नास्ति । यतो वित्तलाभः प्रयत्नेन भवति बंधुत्वं तु अतः परं न लभ्यते ॥ ५३ ॥ इत्थं द्वेषं त्यक्त्वा मिथः स्नेहयुक्तौ । स्वग्रामस्थकवविभागे एव सत्यत्वनिश्चयत्वेन प्रीतियुक्तौ ॥ ५४ ॥ त्रिचत्वारिंशन्मितं प्रियानंदं

श्रुत्वेति वचनं प्रोचुस्तद्ग्रामस्थाः पुनश्च तौ ॥ ग्रामस्था ऊचुः ॥ कुरुतं संशयं नेत्थं प्रियानंदेऽखिलप्रिये ॥ ४७ ॥ युवां निःसंशयौ भूत्वा तमुभौ गच्छतं द्रुतम् ॥ दर्शनात्तस्य वां सर्वं प्रियमेव भविष्यति ॥ ४८ ॥ इति पौरवचः श्रुत्वा प्रियानंदमठं गतौ ॥ तावुभौ कलहं मार्गे कुर्वंतौ वै निजार्थिनौ ॥ ४९ ॥ स्वस्थानस्थं प्रियानंदं दृष्ट्वा तावखिलप्रियम् ॥ नेमतुर्दंडवद्भक्त्या स्वस्वार्थं स्थैव चिंतकौ ॥ ५० ॥ प्रियानंदमुखं तावन्निरीक्ष्यैव द्विजौ मिथः ॥ दीर्घद्वेषं परित्यज्य प्रेमयुक्तौ बभूवतुः ॥ ५१ ॥ उभौ गाढं समालिंग्य प्रोचतुश्चेत्यहो मिथः ॥ त्यक्त्वाऽऽवाभ्यां हि बंधुत्वं कलहस्तु मुधा कृतः ॥ ५२ ॥ वित्तार्थं किंच बन्धुत्वाच्छ्रेष्ठं वित्तं न वै यतः ॥ प्रयत्नाल्लभ्यते वित्तं न बंधुत्वमतः परम् ॥ ५३ ॥ इत्थं द्वेषमुभौ त्यक्त्वा स्नेहयुक्तौ मिथः पुरम् ॥ जग्मतुः स्वामितीक्षित्वा सर्वेऽप्याश्चर्यमाययुः ॥ ५४ ॥ इत्थंप्रभावः प्रियकृज्जनानां क्रोडीशसंज्ञाय परं रहस्यम् ॥ दत्त्वाऽऽप सिद्धिं किल तं त्रिचत्वारिंशं प्रियानंदगुरुं नताः स्मः ॥५५॥ शांभवात्सुचरितं त्रिगुरूणां यः पठेदपि शृणोत्यघनाशम् ॥ शंकरेऽखिलसुखात्मनि भक्तिं प्राप्नुयाच्च सुखमत्र परत्र ॥५६॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शांभवादिगुरुत्रयवर्णनं नाम सप्तविंशः सर्गः ॥ २७ ॥

प्रणमति—इत्थमिति । इत्थं प्रभावः दर्शनमात्रेण प्रीतिजनकसामर्थ्यवान् । क्रोडीशसंज्ञकाय शिष्याय परं रहस्यं पूर्णाभिषेकादि सर्वमंत्ररहस्यं दत्त्वा सिद्धिं यः आप तं प्रियानंदं नताः स्मः ॥ ५५ ॥ एतत्सर्गोक्तगुरुत्रयकथाश्रवणादिफलमाह—शांभवादिति । शांभवविश्वात्मकप्रियानंदानां चरितश्रवणादिना क्रमेण शंकरभक्तिः सर्वात्मतेहामुत्र सुखानि फलानि स्युरित्यर्थः॥५६॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां सप्तविंशः सर्गः॥२७॥

अष्टाविंशोऽष्टाधिपर्वैः क्रोडीशाच्चतुरो गुरून् । उक्ता साक्षात्सरस्वत्या बीजकायाः स्मृतो भवः ॥ २८ ॥ क्रोडीश इति । क्रोड रूपधरं वराहमूर्तिम् । उपास्यत्वेन अयमेवोपास्य इत्यब्रवीत् ॥ १ ॥ उपास्यत्वमेवाह—विष्णुनेति द्वाभ्याम् । धरया पृथिव्या शक्त्या ॥ २ ॥ ३ ॥ क्रोडिनः वराहरूपिणः । हरेरुपासनायाः कथनात् ॥ ४ ॥ चतुश्चत्वारिंशत्संख्यं क्रोडीशानंदं प्रणमति—इत्थमिति । रमेशस्य श्रीपतेः । वीरं शिष्यं तु सर्वं पूर्णाभिषेकद्वारा मंत्ररहस्यादि जगाद तं श्रुतिवेदसंख्यं चतुश्चत्वारिंशन्मितं वीरानंदं नताः स्मः ॥ ५ ॥ वीरानंदः कामक्रोधादिनाशे शूर एव बभूव ।

श्रीदेशिकेंद्र उवाच ॥ क्रोडीशश्चात्मविच्छ्रेष्ठो व्यापकं विष्णुमव्ययम् ॥ क्रोडरूपधरं सर्वानुपास्यत्वेन चाब्रवीत् ॥ १ ॥
क्रोडीश उवाच ॥ विष्णुना क्रोडरूपेण धरणीयं रसातलात् ॥ प्रागुद्धृता ततः सर्वाः प्रजास्तस्यां सुखं स्थिताः ॥ ॥ २ ॥ तस्मात्सर्वैः सदा सेव्यः क्रोडरूपधरो हरिः ॥ धरया सहितः शक्त्या सर्वलोकहिते रतः ॥ ३ ॥ श्रीदेशिकेंद्र उवाच ॥ क्रोडिनः श्रीहरेरित्थमुपास्तेः शासनादयम् ॥ क्रोडीश इति नामाऽऽप विख्यातं पृथिवीतले ॥ ४ ॥ इत्थं रमेशस्य वराहमूर्तेरुपासनां यस्तु जनाञ्जगाद ॥ वीरं तु सर्वं श्रुतिवेदसंख्यं क्रोडीशसंज्ञं गुरुमानताः स्मः ॥ ५ ॥ वीरस्तु वीर एवासीत्कामादिरिपुमर्दने ॥ निर्जित्य निखिलाञ्छत्रून्कामादीन्षड्निजं परम् ॥ ६ ॥ साम्राज्यं बुभुजे शश्वच्छत्रुभीतिविवर्जितः ॥ वीरोपास्तिं स्वशिष्येभ्यः प्रोवाचाद्यक्रमागताम् ॥ ७ ॥ उक्त्वाथ तत्त्वं निखिलं रहस्यं चिन्मुद्रसंज्ञाय जगाम सिद्धिम् ॥ तं वीरसंज्ञं किल पंचचत्वारिंशन्मितं सद्गुरुमानताः स्मः ॥८॥ चिन्मुद्रोऽपि चिदेवैतत्तस्याः शक्त्या प्रकाशितम् ॥ तस्यामेव विभात्यद्धा नान्यत्तस्माच्चितोऽखिलम् ॥९॥

निजं स्वकीयं श्रेष्ठं साम्राज्यम् आत्मानंदपदं शश्वद्बुभुज इति संबंधः ॥ ६ ॥ प्राचीनक्रमप्राप्तां वीरोपास्तिं वीरकर्तृकोपास्तिं शिष्येभ्यः प्रोवाच । वीर लक्षणं च । " अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः । पराक्रमपरो भुंक्ते स्वात्मानमशिवापहम् " इति ललितासहस्रनामभाष्ये भास्करपादैः संगृहीतम् । तदर्थश्च प्रतिकूलस्येदमंशस्याहमंशे प्रकर्षेण लयं कुर्वन् तेन पराक्रमपरः सन् दुःखनिवर्तकमात्मानं भुंक्तेऽनुभवतीति ॥ ७ ॥ पंचचत्वारिंशं वीरानंदं प्रणमति—उक्त्वेति । चिन्मुद्रसंज्ञकशिष्याय सर्वं रहस्यं गुरुमुखैकवेद्यं तत्त्वं पूर्णाभिषेकपूर्वं मंत्रोपदेशादि उक्त्वा सिद्धिं प्राप्तं तं नताः स्मः ॥८॥ चिदेव चिद्रूपमेवै

तद्विश्वमस्ति । मध्यमणिन्यायेनैतत्पदमुभयान्वयि । तस्याः चितः शक्त्या एतत्प्रकाशितं सत् तस्यां चित्येव साक्षाद्विभाति । तस्मादखिलं विश्वं तस्याश्चितेः सकाशाद्भिन्नं नास्ति ॥ ९ ॥ हैमीं सुवर्णमयीं मुद्रां चकार । चित् चिद्रूपमेव विश्वम् अन्यत् चितो भिन्नं नास्तीत्यस्यां मुद्रायां लिखितवान् ॥ १० ॥ कंठदेशतः कंठदेशे बबंधेति हेतोर्विख्यातां चिन्मुद्राभिधां सम्यक् प्राप ॥ ११ ॥ तस्य चिन्मुद्रस्य हृद्या मनोहरा । उत्तरार्द्धमुत्तरान्वयि ॥ ॥ १२ ॥ यदाऽष्टवर्षा तदा बाल्यमारभ्य वेदांतस्य श्रवणात् अखिलं अदः विश्वं मिथ्यात्वेनावलोकयन्त्यासीदिति योज्यम् । तदेवाह शश्वत् सदा

बोधयंश्चेति सर्वान्स हैमीं मुद्रामथाकरोत् ॥ चिद्विश्वं नान्यदस्तीति लिलेखास्यां हि योगिराट् ॥ १० ॥ कृत्वेत्थं मुद्रिका बह्वीः शिष्याणां कंठदेशतः ॥ बबंधेति समापाऽसौ चिन्मुद्राख्यां सुविश्रुताम् ॥ ११ ॥ कन्यासीत्तस्य हृद्यैका त्रयः पुत्रास्तथाभवन् ॥ विवाहयोग्यतां प्राप्ता यदा कन्याष्टवार्षिकी ॥ १२ ॥ वेदांतश्रवणाद्बाल्यान्मृषा पश्यंत्यदोऽखिलम् ॥ आत्मैव शाश्वतः शश्वन्नित्यशुद्धो निरामयः ॥ १३ ॥ तस्मिन्नेवेदमाभाति रश्मिष्वर्कस्य वार्यथा ॥ चिंतयंतीति सा नित्यं न चक्रे बाल्यखेलनम् ॥ ॥ १४ ॥ समाहूतापि केल्यर्थं वयस्याभिर्गृहांगणे ॥ चिन्मुद्रस्तद्विवाहार्थमुद्युक्तः सद्वराप्तये ॥ १५ ॥ यदा तदा विदित्वा सा कन्या पितरमब्रवीत् ॥ पितर्मां नैव संसारे दुःखदेऽस्मिन्नियोजय ॥ १६ ॥

वर्तमानः शाश्वतः नित्यः । नित्यम् अवस्थात्रयेऽपि शुद्धः । साक्षिरूपत्वेनाज्ञानमलरहितः । अतो निरामयो दुःखरहितः । एतादृश आत्मैवास्ति न जगत्॥ १३॥कुत इत्याह । तस्मिन्नात्मन्येवेदं जगद्भाति मिथ्यात्वेन प्रतीयते। यथा सूर्यकिरणेषु वाः उदकं तथेति। "आपः स्त्री भूम्नि वार्वारि" इत्यमरः । मध्याह्ने सूर्यकिरणेषु यथा जलप्रत्ययस्तथा यावदुपाधिजगत्प्रतिभास इत्यर्थः । बाल्यखेलनं बाल्ययोग्यां क्रीडाम् ॥ १४ ॥ केल्यर्थं क्रीडार्थं वयस्याभिः सखीभिः तस्याः विवाहार्थं सद्वराप्तये उत्तमवरलाभाय यदोद्युक्तस्तदा विदित्वा ज्ञात्वा विवाहं करोतीति निश्चित्य चिन्मुद्रमुवाचेति संबंधः ॥१५॥१६॥

येन संसारेणाद्धा प्रत्यक्षं सिद्धापि आत्मता नष्टप्राया भविष्यति । किंभूतेन संसारेण वृथा देहाभिमानो यस्मिन् ममत्वेनाकृष्टं चेतो यस्मिन् ॥ ॥ १७ ॥ आत्मैक्ये सत्यपि देहसंगतः देहसंगेन पृथक्बुद्धेर्भेदबुद्धेर्निश्चयेन संसारे दुःखमेव सदा भवेत् ॥ १८ ॥ भेदनिश्चयं प्रपंचे दर्शयति— धनमिति ॥ १९ ॥ दुःखानुभविनः दुःखानुभववंतः ॥ २० ॥ यस्मात्संसारे न सुखं तस्मादात्मनो विवाहं न करोमि । येन विवाहनिमित्तेन द्वैतजन्यं

येनाद्धाप्यातमता सिद्धा नष्टप्राया भविष्यति ॥ वृथा देहाभिमानेन ममत्वाकृष्टचेतसा ॥ १७ ॥ संसारे न सुखं किंचिद्दुःखमेव सदा भवेत् ॥ आत्मैक्येऽपि पृथग्बुद्धेर्निश्चयाद्देहसंगतः ॥ १८ ॥ धनं लब्धं त्वया भूरि मयाल्पं तेन चाधिकम् ॥ अहं श्रेष्ठः स नीचोऽस्ति सुज्ञोऽहं चाज्ञ एव सः ॥१९॥ इत्यादिबहुशो द्वंद्वाद्द्वेषबुद्ध्या मिथोऽखिलाः ॥ दुःखानुभविनस्तेषां न स्वप्नेऽपि सुखागमः ॥ ॥ २० ॥ तस्माद्विवाहं नो कुर्वे येनेत्थं द्वैतजं भयम् ॥ कुमार्येव व्रताढ्याहं स्थास्याम्यात्मपरायणा ॥ २१ ॥ ध्यायंती गुरुरूपं त्वामात्मानं ज्ञानदं परम् ॥ पश्यंती सर्वरूपेण पूजयंती शिवात्मकम् ॥ २२ ॥ जपंती मंत्ररूपेण भाषमाणा च सज्जनैः ॥ आत्मानमेव वाक्यौघैः श्रुतिशीर्षोपपादितैः ॥ २३ ॥ इत्थंविहारां तिष्ठंतीं श्रीगुरो मामनुग्रहात् ॥ दुस्तराज्ज्ञानपोतेन पारं नय भवांबुधः ॥ २४ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति वचनं तस्याश्चिन्मुद्रः प्राप विस्मयम् ॥ वयसाल्पापि कन्येयं जानात्यात्मत्वमादितः ॥ २५ ॥ न विदुर्यन्महांतोऽपि जपध्यानरताः सदा ॥ विचिंत्येति हृदा सम्यग्ज्ञात्वा तामधिकारिणीम् ॥२६॥ नाकरोत्तद्विवाहं तु शास्त्राण्यशिक्षयच्च ताम् ॥ अधीतशास्त्रविद्यायै स्वकन्यायै विधानतः ॥ २७ ॥

भयं स्यात् । व्रताढ्या ब्रह्मचर्यव्रतयुक्ता ॥ २१ ॥ किंभूता । ध्यायंतीत्यादिश्लोकद्वयोक्तविशेषणयुक्ता ॥ २२ ॥ श्रुतिशीर्षोपपादितैः उपनिषत्प्रतिपादितैः वाक्यौघैः तत्त्वमस्यादिवाक्यसंघैरात्मानमेव कथयंती मंत्ररूपेण जपंती च ॥ २३ ॥ दुस्तरात्संसारसमुद्रात् ज्ञाननौकया मां पारं नय ॥ २४ ॥ आदितः आद्यं वय आरभ्य ॥ २५ ॥ यत् आत्मत्वम् । उत्तरार्द्धमुत्तरान्वयि ॥ २६ ॥ अशिक्षयत् आसमंतात्सर्वाणि शास्त्राणि अध्यापयत् अशि

क्षयत् । उत्तरार्द्धमुत्तरान्वयि । विधानतः पूर्णाभिषेकविधिना ॥ २७ ॥ दीक्षां षोडशीमंत्रोपदेशम् । दीक्षाविहितं नाम ॥ २८ ॥ क्रीडाधर्मके बाल्येऽपि स्वत एव गुरुं विना ज्ञानविषयकशक्तिमत्त्वेन हेतुना संविच्छक्तिरिति अस्याः नामाकरोदिति संबंधः ॥ २९ ॥ सर्वशास्त्ररहस्यभूतं तत्त्वं प्राप्ता ॥ ॥ ३० ॥ पूजाक्रमं तंत्रोक्तपूजाविधिम् ॥ ३१ ॥ गिरं सरस्वतीं ज्ञानमार्गप्रवृत्तये पृथ्वीं प्राप्ताम् ॥ ३२ ॥ आत्मविज्ञाने धीर्यस्य । उत्तमा कीर्तिर्यस्य

सर्वमंत्रमयीं दीक्षां चिन्मुद्रानंद आददौ ॥ संविच्छक्त्यंबिकेत्यस्या दीक्षानामाकरोद्गुरुः ॥ २८ ॥ संविज्ज्ञानमिति प्रोक्तं तत्रास्याः शक्तिरद्भुता ॥ क्रीडाधर्मेऽपि बाल्येऽभूत्स्वत एवेति हेतुना ॥ २९ ॥ ततः सापि प्रसिद्धाभूत्पंडितेष्ववनीतले ॥ उपासनाक्रमाभिज्ञा सर्वशास्त्ररहस्यगा ॥ ३० ॥ चिन्मुद्रश्चातिसंतुष्टः सर्वज्ञां तां विलोक्य च ॥ ददौ पूजाक्रमं संविच्छक्त्यै प्राक्क्रमागतम् ॥ ३१ ॥ अथ कालेन कियता चिन्मुद्रस्य वधूः सती ॥ वृद्धापि सुषुवे कन्यां गिरं साक्षाद्धरागताम् ॥ ३२ ॥ सदात्मविज्ञानधियः सुकीर्तेश्चिन्मुद्रसंज्ञस्य गृहेऽस्य भक्त्या ॥ सरस्वती ज्ञानमयी च संविच्छक्तेः सुपूजातपसावतीर्णा ॥ ३३ ॥ दुहितुर्जातकर्मादि चिन्मुद्राख्यः स चाकरोत् ॥ द्वादशेऽह्नि तथा नाम बीजकेति च विश्रुतम् ॥ ३४ ॥ बीजं ब्रह्मैव विश्वस्य तस्मात्कं ज्ञानजं सुखम् ॥ तत्स्याद्यया ततः प्रोक्ता तत्पित्रा बीजकेति सा ॥ ३५ ॥ ततः सा ववृधे बाला नीलोत्पलदलद्युतिः ॥ अथ स्वल्पेन कालेन चिन्मुद्रः सिद्धिमाययौ ॥ ३६ ॥ यो मंत्रजातं प्रददौ हि संविच्छक्त्यै दुहित्रेऽपि तथाऽवतीर्णा ॥ गीर्यद्गृहे तं च षडूर्ध्वचत्वारिंशत्कचिन्मुद्रगुरुं नताः स्मः ॥ ३७ ॥

तस्य चिन्मुद्रस्य गृहे अस्य भक्त्या संविच्छक्तेः पूजारूपतपसा च ज्ञानरूपा सरस्वती अवतीर्णाऽभूत् ॥ ३३ ॥ बीजकेति नाम चकारेत्यर्थः ॥ ३४ ॥ बीजात् ब्रह्मज्ञानात्कं सुखं यया यस्या वा बीजका ॥ ३५ ॥ सिद्धिं स्वरूपं प्राप्तः ॥ ३६ ॥ षट्चत्वारिंशं चिन्मुद्रानंदं प्रणमति—य इति । मंत्रजातं वैदिकमंत्रभिन्नं सर्वमंत्रसमूहं संविच्छक्त्यै कन्यायै यः प्रददौ पूर्णाभिषेकविधिना ददौ तथा यस्य गृहे पत्न्यां सरस्वती जाता तं षट्चत्वारिंशन्मितं चिन्मुद्रानं

द्गुरुं नताः स्मः ॥ ३७ ॥ अथ चिन्मुद्रस्य सिद्धिप्राप्त्यनंतरम् । तृतीयेब्द इत्युत्तरान्वयि ॥ ३८ ॥ सुबुद्धियुक्ता सांगं वेदमिति वेदप्रवचनं सरस्वत्यव तारत्वेन देवतात्वान्न दोषावहम् ॥ ३९ ॥ अखिलज्ञतां सर्वज्ञतां प्राप । स्वौद्वाहिकं स्वविवाहसंबंधिनं विधिं वरावलोकनादि कर्तुमुद्युक्तां मातरं प्राहे त्यन्वयः ॥ ४० ॥ लौकिकी प्राकृता ॥ ४१ ॥ अलौकिकत्वमात्मनो दर्शयति—नष्टज्ञानेति । नष्टज्ञाने ज्ञानहीने लोके आत्मसंविदः आत्मज्ञानस्य प्रका

श्रीदेशिकेंद्र उवाच ॥ अथाद्याब्दे बीजका सा प्रोचे लौकिकभाषणम् ॥ द्वितीये चांकवर्णादि लिलेखाब्दे तृतीयके ॥ ३८ ॥ स्वत एव पुराणानां कथाः प्रोवाच बुद्धियुक् ॥ सांगं वेदं चतुर्थेऽब्दे तथा शास्त्राणि पंचमे ॥ ३९ ॥ षष्ठे वेदांतनैपुण्यं सप्तमेऽब्देऽखिलज्ञ ताम् ॥ प्रापाथाष्टमवर्षे तु कर्तुं स्वौद्वाहिकं विधिम् ॥ ४० ॥ उद्युक्तां स्वांबिकां प्राह बीजकाख्या सरस्वती ॥ बीजकोवाच ॥ नोद्वाहं कुरु मे मातर्नाहं कन्याऽस्मि लौकिकी ॥ ४१॥ नष्टज्ञानेऽखिले लोके प्रकाशायात्मसंविदः ॥ गिरमद्यावतीर्णां मामवेह्यंब धरातले ॥ ४२ ॥ न मया सदृशो भर्ता त्रैलोक्ये ज्ञानवान्कचित् ॥ विद्यतेऽतो न कर्तव्यो मद्विवाहोल्पबुद्धिना ॥ ४३ ॥ श्रीदे शिकेन्द्र उवाच ॥ श्रुत्वेत्यंबा वचस्तस्याश्चोद्वाहं नाकरोदथ ॥ संविच्छक्तेर्मंत्रजातं बीजकाख्या समग्रहीत् ॥ ४४ ॥ संप्रदायप्रवृ त्त्यर्थं सर्वज्ञापि सरस्वती ॥ न यतः संप्रदायस्य प्रवृत्तिः सद्गुरुं विना ॥ ४५ ॥ संविच्छक्तिर्विदित्वा तामवतीर्णां सरस्वतीम् ॥ संप्रदायक्रमं सर्वं संतुष्टास्यै समादिशत् ॥ ४६ ॥ या बाल्य एवात्मगतिं हि संविच्छक्त्यंबिकेत्याप पितुश्च नाम ॥ तां बीजकाग्र्यां किल सप्तचत्वारिंशत्तमं सद्गुरुमानताः स्मः ॥ ४७ ॥

शाय पृथिव्यां प्राप्तां साक्षात्सरस्वतीम् अवेहि त्वमिति शेषः ॥ ४२ ॥ तथापि त्वं पतिं कुर्विति चेत्तत्राह— नेति । अल्पबुद्धिना पत्या ॥ ४३ ॥ अंबा माता नाकरोत् न चकार । संविच्छक्तेः ज्येष्ठभगिनीसकाशात् मंत्रजातं सकलमंत्रान् ॥ ४४ ॥ पूर्वार्द्धं पूर्वान्वयि । यतः गुरुं विना संप्रदायप्रवृत्तिर्न भवति ॥ ४५ ॥ अस्यै बीजकायै ॥ ४६ ॥ सप्तचत्वारिंशत्संख्यं संविच्छक्त्यंबां प्रणमति—येति । या बाल्ये वयस्येव पितुश्चिन्मुद्रात्सकाशादात्मगतिमा

त्मज्ञानं संविच्छत्त्यंबिकेति नाम च प्राप बीजकाया ज्येष्ठां तां सप्तचत्वारिंशं गुरुं नताः स्मः ॥ ४७ ॥ कोडीशाचतुर्गुरूणां चरितपाठादिफलमाह—चतुर्गुरूणामिति । कोडीशचरिताद्विष्णौ भक्तिं वीरचरितात्कामजयम् । चिन्मुद्रचरितादुत्तमसंततिं संविच्छत्त्यंबाचरिताद्विज्ञानलाभं प्राप्नोतीत्यर्थः ॥ ४८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामष्टाविंशः सर्गः ॥ २८ ॥ ऊनत्रिंशे पंचपंचपद्यैर्गीर्बीजका स्तुता । वैदिकाद्यैः स्वविद्येव कविपृष्टेति

चतुर्गुरूणां चरितं सुपुण्यं कोडीशतो यः प्रपठेच्छृणोति॥भक्तिं हरौ कामजयं स्वपत्यं विज्ञानलाभं लभते स भक्त्या॥४८॥इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे कोडीशादिचतुर्गुरुवर्णनं नामाष्टाविंशः सर्गः॥२८॥श्रीदेशिकेन्द्र उवाच॥बीजकापि चकाराऽथ सर्वं पूजादिकं क्रमम्॥ साक्षाद्गीश्चावतीर्णाऽपि संप्रदायाभिगुप्तये ॥१॥ कवितां बहुधा चक्रेऽतिरसां नवसद्रसैः ॥ सा शार्ङ्गधरमुख्येषु निबंधेषु सुविश्रुता ॥२॥ पंगुः शीघ्रगतिश्चाभूत्सुदृगंधस्तथाऽश्रुतिः ॥ दूरश्रुतिरवाग्वाग्मी बीजकांबाकृपेक्षणात्॥३॥इत्थं चातर्क्यसामर्थ्यं बीजकायाः समीक्ष्य ताम् ॥ मेनेऽखिलो जनः साक्षाद्धरोद्भूतां सरस्वतीम् ॥ ४ ॥ अथाखिलेषु देशेषु बीजकाख्या सरस्वती ॥ प्रसिद्धाऽभूच्च तां द्रष्टुं देशेभ्यः संययुर्बुधाः ॥ ५ ॥ वैदिकाः स्मृतिमार्गज्ञास्तार्किकाः शब्दवेदिनः ॥ मीमांसावेदिनश्चापि सिद्धांतज्ञाः स्थिराशयाः ॥ ६॥ योगाभ्यासरताः पंचोपासनागामिनः पृथक् ॥ ज्योतिर्विदश्च भिषजः संगीतज्ञास्तथाऽखिलाः ॥ ७ ॥ चतुष्षष्टिकलाभिज्ञाः पृथक्स्वस्वकलोन्नताः ॥ नानालंकारनिपुणाः कवयो नवसद्रसैः ॥ ८ ॥ कुर्वंतः काव्यवैचित्र्यं बीजकास्तुतिहेतुकम् ॥ तथान्ये बहुशः प्राप्तास्तत्र नीतिविदादयः ॥ ९ ॥ प्रणेमुर्बीजकां देवीं सर्वे भक्तिसमन्विताः ॥ तुष्टुवुर्विविधैर्वाक्यैः स्वकीयविषयान्वितैः ॥ १० ॥

चेर्यते ॥ २९ ॥ बीजकेति ॥ १ ॥ शृंगारादिनवसद्रसैरतिरसाम् उत्तमरसयुक्ताम् ॥२॥ बीजकाकृपावलोकनात् । अंधः सुदृष्टिः । अश्रुतिः बधिरः दूरश्रुतिः । अवाक् दिव्यवाग् बभूव ॥ ३ ॥ धरायामुत्पन्नां सरस्वतीं मेने ॥ ४ ॥ ५ ॥ तानेवाह—वैदिका इति चतुर्भिः । स्थिराशयाः स्थिरचित्ताः वेदांतविदः ॥ ६ ॥ पंचायतनोपासनाविदः । भिषजो वैद्याः ॥ ७॥ उन्नता उत्तमाः उपमारूपकाद्यलंकारकुशलाः नवरसैः काव्यरूपं वैचित्र्यं विचित्र काव्यं

कुर्वंत इति योज्यम् ॥ ८ ॥ ९ ॥ १० ॥ तत्रादौ वैदिकाः स्वविद्यारूपिणीं स्तुवंति—प्रागिति । निर्गुणतः निर्गुणात् । प्रणवस्य सर्वशब्दयोनित्वं प्रसिद्धम् ॥ ११ ॥ प्राक् सृष्ट्यादौ अखिलं विश्वं सृजतो ब्रह्मणो मुखेभ्यः कर्मोपास्तिज्ञानकांडात्मिका वेदत्रयी मंत्रमयी अथर्वणवेदरूपा या विद्या द्विजेभ्यः पुरुषार्थदाऽभूत् ॥ १२ ॥ स्मार्ताः स्मृतिरूपिणीं स्तुवंति—मन्वादिकेभ्य इति । सदाचारस्य सुवृत्तिहेतुः सुप्रवृत्तिकारणम् । पृथक् स्वधर्मैर्ब्राह्मणादिवर्णान् रक्षति ॥ १३ ॥ तार्किकास्तर्करूपां स्तुवंतीत्याह—येति । बहुतर्कैर्गुर्वी महत्तरा ॥ १४ ॥ वैय्याकरणाः शब्दरूपां स्तुवंति—येति । अखिलशब्दानां

वैदिका ऊचुः॥प्रागाविरासीत्प्रणवस्वरूपा परात्मनो निर्गुणतोऽपि विद्या॥या मूलभूता खलु शब्दजाते तां बीजकारूपधरां नताः स्मः॥
॥११॥ विधेर्मुखेभ्यः सृजतोऽखिलं प्राक्कांडत्रयी मंत्रमयी च विद्या ॥ याभूद्द्विजेभ्यश्चतुरर्थदात्री तां बीजकारूपधरां नताः स्मः॥१२॥
स्मृतिज्ञा ऊचुः ॥ मन्वादिकेभ्यः स्मृतिरूपिणी प्राग्याभूत्सदाचारसुवृत्तिहेतुः ॥ पृथक्स्वधर्मैः परिपाति वर्णांस्तां बीजकारूपधरां नताः स्मः ॥ १३ ॥ तार्किका ऊचुः ॥ या वै कणाद्गौतमसूत्ररूपा विद्याऽऽविरासीद्बहुतर्कगुर्वी ॥ यया पुमान्वेत्त्यखिलान्पदार्थांस्तां बीजकारूपधरां नताः स्मः ॥ १४ ॥ शब्दज्ञा ऊचुः ॥ याऽऽविर्बभूवाखिलशब्दगर्भा विद्या महेशाच्छ्रुतिवक्त्ररूपा ॥ व्यक्तीकृता पाणिनिना स्वसूत्रैस्तां बीजकारूपधरां नताः स्मः ॥ १५ ॥ मीमांसका ऊचुः ॥ यां जैमिनिः प्राह पुरा सुसूत्रैर्यज्ञाद्यनेकाखिलकर्मगुर्वीम् ॥ मीमांसिकां स्वर्गफलप्रदात्रीं तां बीजकारूपधरां नताः स्मः ॥ १६ ॥ वेदांतिन ऊचुः ॥ संवित्परा योपनिषत्प्रसूता संवर्द्धिता व्यासपदैः सुगूढा ॥ व्यक्तीकृता शंकरपूज्यपादैस्तां बीजकारूपधरां नताः स्मः ॥ १७ ॥ उपासका ऊचुः ॥ शंखेन नीताः श्रुतयो यदाद्या ईशात्तदा तंत्रमयी सुविद्या ॥ योपासनापंचपराविरासीत्तां बीजकारूपधरां नताः स्मः ॥ १८ ॥

गर्भभूता महेशाच्छंकरात्प्रादुर्बभूव । श्रुतिवक्त्ररूपा वेदमुखरूपा । " मुखं व्याकरणं स्मृतम् " इत्युक्तेः ॥ १५ ॥ मीमांसकाः कर्मविचाररूपां स्तुवंति—यामिति । गुर्वी बृहत्तरा । मीमांसिका कर्मविचाररूपा ॥ १६ ॥ औपनिषदा ज्ञानरूपां स्तुवंति । संविदिति । या परा चरमवृत्तिरूपा संवित्—ज्ञानम् । तत्त्वमस्यादिवाक्यजन्या ॥ १७ ॥ उपासकाः पूजादितंत्ररूपां स्तुवंति—शंखेनेति । यदा श्रेष्ठाः श्रुतयः शंखासुरेण नीतास्तदा पंचायतनपरा उपासना

या शिवात्प्रादुर्बभूव ॥ १८ ॥ योगिनो योगरूपां स्तुवंति । जीवेति । ऐक्यविधौ एकत्वविज्ञाननिमित्तम् । धातूरंध्रं ब्रह्मरंध्रं गंतुं पतंजलिः यामैक्यसूत्ररूपां योगसूत्ररूपामाह ॥ १९ ॥ ज्योतिर्विदः स्वविद्यारूपां स्तुवंति । ब्रह्मादिभिरिति । विधिज्ञैः दैवज्ञैः सिद्धांतसंज्ञाऽष्टादशसिद्धांतसंज्ञका । भूतभविष्यवक्त्री । आर्यैः श्रेष्ठैर्या श्रुतेर्वेदस्य नेत्ररूपा चोक्ता । तदुक्तं नारदसंहितायाम् " वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम् " इति ॥ २० ॥ वैद्याः स्वविद्यारूपां स्तुवंति । धन्वंतरीति ॥ २१ ॥ साक्षात्सरस्वतीं तां दर्शनेन संतुष्टाः संतो वस्त्राद्यैः पूजितवंतः ॥ २२ ॥ ते निखिलाः वैदिकाद्यास्तां प्रति निज

योगिन ऊचुः॥जीवात्मनोरैक्यविधौ सुषुम्नामार्गेण गंतुं किल धातृरंध्रम्॥यामाह पातंजलिरैक्यसूत्रां तां बीजकारूपधरां नताः स्मः॥
॥१९॥ज्योतिर्विद ऊचुः॥ब्रह्मादिभिर्या कथिता विधिज्ञैः सिद्धांतसंज्ञा गतभाविवक्त्री॥याऽऽर्यैः श्रुतेर्नेत्रमर्याति चोक्ता तां बीजकारूपधरां नताः स्मः ॥ २० ॥ वैद्या ऊचुः ॥ धन्वंतरीत्याख्यकविष्णुतः प्राग्याभूत्सुविद्याखिलरोगहंत्री ॥ यस्यां चिकित्सा बहुधौषधीभिस्तां बीजकारूपधरां नताः स्मः ॥ २१ ॥ श्रीदेशिकेंद्र उवाच ॥ स्वस्वात्मविद्यामिति भावयंतः परेऽथ सर्वे स्तुतिभिः स्तुवंतः ॥ तां शुकाद्यैश्च तदा पुपूजुः सरस्वतीं दर्शनतोऽतितुष्टाः ॥ २२ ॥ पप्रच्छुरेनां निजसंशयांस्ते स्वस्वासु विद्यासु गतान्समस्तान् ॥ यद्यैस्तु पृष्टं कथितं तया ते निःसंशयाः प्राप्तमुदस्तदासन् ॥ २३ ॥ कवयस्तुष्टुवुः सर्वे रसैर्नवभिरन्वितैः ॥ पद्यैस्तां बीजकां देवीं प्रश्रयावनताः स्थिताः ॥२४॥कवय ऊचुः॥ शृंगाराढ्यातिहास्यान्यसकलयुवतिः स्वद्विषद्रौद्ररूपा वीरा पाखंडहंत्री कुमतिनृभयदा मंदबीभत्सकर्त्री ॥ सामर्थ्येऽत्यद्भुता या नतजनसदया ब्रह्मविद्याऽतिशांता वाक्साऽस्मान्बुद्धिमांद्यान्नवरसजननी बीजकाख्या प्रपातु॥२५॥

संशयान् पप्रच्छुः । पृच्छेर्द्विकर्मत्वं ते वैदिकाद्याः प्राप्तसंतोषा बभूवुः ॥ २३ ॥ पद्यैः श्लोकैः ॥ २४ ॥ नवरसाश्रयत्वं वर्णयंतः कवय ऊचुः । शृंगाराढ्येति । शृंगारयुक्ता । मनोधर्मस्य शृंगाररसस्यालंबनमिति यावत् । अतिहास्यास्पदाः अन्याः सर्वयुवतयो यस्याः सा । स्वद्विषत्सु आत्मद्वेषकर्तृषु अनात्मसु वा रौद्ररूपा क्रूररूपा । वीरा वीररसालंबना कुतः पाखण्डहंत्री पाखंडमतनाशिका । कुमतीनां कुबुद्धीनां नृणां भयदात्री । मंदबीभत्सकर्त्री मंदानां

बुद्धिहीनानां बीभत्सं निंदार्हत्वं करोति सा सामर्थ्यविषये अतिशयेनाद्भुता वक्तृत्वादिषु अतिसामर्थ्यवतीत्यर्थः । नम्रजनेषु दयायुक्ता ब्रह्मविषयाऽति शांता या सा वाणी बुद्धिमांद्यादस्मान् प्रपातु रक्षतु बुद्धेर्मांद्यं दूरीकरोत्वित्यर्थः ॥ २५ ॥ उत्कृष्टविद्यासु सर्वसद्गुणयुक्ताऽसि त्वमिति शेषः ॥ २६ ॥ शीतोष्णवृष्टिभिः व्याकुलशरीराणां शीतादिकालानुरूपाकंठजलवासादिकर्तॄणां निगृहीतेंद्रियाणां यज्ञादिषु दीक्षितानां तपोयज्ञादिभिः साधनैर्दुर्लभेन तव दर्शनेन वयं धन्याः स्मः॥२७॥ त्वं सरस्वत्यसि अत्र त्वयि संशयो नास्ति यद्यपि तथापि किंचित्प्रष्टव्यं वचोस्ति । निजमातरं प्रति अल्पबाला यथा तथा

श्रुता त्वमस्माभिरिलावतीर्णा सरस्वती ज्ञानमयीति साक्षात् ॥ यथा तथाऽत्रापि दृशाद्य दृष्टाऽस्युत्कृष्टविद्याखिलसद्गुणाढ्या ॥ ॥ २६ ॥ वयं तु धन्यास्तव दर्शनेन तपोमखाद्यैश्च सुदुर्लभेन ॥ शीतोष्णवर्षाकुलविग्रहाणां यतेंद्रियाणामपि दीक्षितानाम् ॥ ॥ २७ ॥ सरस्वती त्वं न हि संशयोऽत्र प्रष्टव्यमत्रास्ति तथापि किंचित् ॥ चेन्मन्यसे तज्जननि प्रयुंज्मो यथाल्पबाला निजमातरं वै ॥ २८ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा कवीनां वचनं तदानीं तान्बीजकाहेदमनाग्घसंती ॥ स्वांतःस्थितः संशय उच्यतां मे श्रुत्वे ति चोचुः कवयोऽपि हृष्टाः ॥ २९ ॥ कवय ऊचुः ॥ या कुंद इत्यादिभिरंबपद्यैः प्राग्भारती शुक्लतनुः कवींद्रैः ॥ प्रोक्ता तदुक्तेर्वि परीतरूपा यतोऽसि नीलोत्पलरुक्त्वमद्य ॥ ३० ॥ इत्थं काव्यं वचः श्रुत्वा बीजकाऽऽह पुनश्च तान् ॥ कुर्वंती दूरतस्तेषां संशयं तु सदुक्तिभिः ॥ ३१ ॥ शृणुध्वं कवयः सर्वे यथाऽहं कृष्णतां गता ॥ वक्ष्ये तत्कारणं सर्वं युष्मत्संशयनाशनम् ॥३२॥ सर्वेषां हृद्गता बुद्धिस्तद्वन्मद्रूपमुज्ज्वलम् ॥ यथा तस्याः स्थितिर्लोके वर्णो भवति मे तथा ॥ ३३ ॥

मन्यसे चेत् प्रब्रूमः । वयमिति शेषः ॥ २८ ॥ मनाक्किंचित् हसंती ॥ २९ ॥ पूर्वं कवींद्रैः शुक्लदेहा या कथिता सा उक्तिर्विपरीता अद्य जाता । यतस्त्वं नीलकांतिरसि ॥ ३० ॥ कवीनामिदं काव्यं कविसंबंधि वचः श्रुत्वा दूरतः कुर्वंती निराकरणं कुर्वंती तान् आह ॥ ३१ ॥ तत्कारणं नील त्वकारणम् ॥ ३२ ॥ सर्वहृद्गता बुद्धिर्यथा तद्वत् मे मम रूपमुज्ज्वलं प्रकाशमानम् । तस्याः बुद्धेर्लोके यथा स्थितिः वर्तनं तथा मम वर्णो भवति॥ ३३॥

यथा बुद्धेः परिणामस्तथा मद्रूपं भवतीत्याह । वासनारहितत्वेन शुद्धायां बुद्धौ सत्यामहं शुक्का भवामि । अल्पार्थयुजि अल्पविषययुक्तायां बुद्धौ पीतकांतिः। बहुविषयमिश्रितायां बुद्धौ रक्ता । अतिविषययुक्तायां बुद्धौ कृष्णा भवामीत्यर्थः ॥ ३४ ॥ एतदेव स्पष्टमाह—कृतकृत्या इति । कृतयुगे सर्वे जनाः विषयहीनांतःकरणाः अतः कृतकृत्याः शुद्धस्वरूपबुद्ध्या विषयसंबंधरहितत्वेनात्माकारया शुद्धबुध्या सदृशा शुक्लवर्णाऽभवम् ॥ ३५ ॥ तदेव श्रेष्ठं मद्रूपं शुद्धबुद्धिमयं शुक्लमित्येव सर्वतः सर्वैः कवीन्द्रैर्वर्णितम् ॥ ३६ ॥ त्रेतायुगे तु वेदत्रयी ब्रह्ममुखादुत्पन्ना । लोको जनः स्वर्गफलेच्छुः सन् तया श्रुत्या कर्मबुद्धिरासीत् ॥ ३७ ॥ किंच यदा यस्मिन् काले स्वर्गरूपविषयदूषितत्वेऽपि वेदोक्तकर्मपरत्वात् अणु किंचिन्मिश्रा दिव्यभोगविषयिणी तदा त्रेतायां तेन हेतुना

शुद्धबुद्धौ तु शुक्लाहमल्पार्थयुजि पीतरुक् ॥ बह्वर्थायां मतौ ताम्रा कृष्णात्यंतार्थयुङ्मतौ ॥ ३४ ॥ कृतकृत्याः कृतयुगे सर्वे निर्विषयांतराः ॥ शुद्धस्वरूपबुद्ध्या वै शुक्लाहमभवं तदा ॥३५॥ तदेवाद्यं हि मद्रूपं शुद्धबुद्धिमयं परम् ॥ वर्णितं तत्कवीन्द्रैश्च शुक्लमित्येव सर्वतः ॥ ३६ ॥ विधिवक्त्रसमुद्भूता त्रेतायां तु श्रुतित्रयी ॥ स्वर्गकामोऽखिलो लोकस्तयाऽसीद्यज्ञकर्मधीः ॥ ३७ ॥ अभूद्वेदोक्तकर्मत्वाद्बुद्धिर्मिश्रा यदा त्वणु ॥ हेतुना तेन मद्रूपं पीतरुक्त्वभवत्तदा ॥ ३८ ॥ शंखासुरेण वेदेषु हतेष्वीशात्तदागमाः ॥ द्वापरादौ समुत्पन्नाः पंचोपास्तिप्रवर्तकाः ॥३९॥ तदा लोकेऽखिलाश्चासन्सकामार्चनतत्पराः ॥ निष्कामार्चां परित्यज्य नानाकामयुतांतराः ॥ ॥ ४० ॥ बुद्धिस्तदाऽखिलांतःस्था मिश्रिता बहुकामतः ॥ अहं चारुणतां प्राप्ता लोकबुद्ध्यनुरूपिणी ॥ ४१ ॥

मद्रूपं पीतकांत्यभवत् ॥ ३८ ॥ रक्तवर्णप्रयोजनमाह—शंखासुरेण वेदेषु हतेषु सत्सु तदा शिवादागमास्तंत्रमार्गाः द्वापरादावुत्पन्नाः किंभूताः पंचायतनोपासनाप्रवर्तकाः ॥ ३९ ॥ आगमा यदोत्पन्नास्तदा सकला जनाः निष्कामपूजां त्यक्त्वा धनादिनानाकामयुक्तांतःकरणाः संतः सकामपूजापरा बभूवुः । त्रेताद्वापरयुगस्थितयोर्जनयोः सकामत्वसाम्येऽपि वेदोक्तागमोक्तकर्मभेदेनामुष्मिकैहिककामनाभेदेन च तत्तद्बुद्धौ किंचिन्मालिन्यं बहुमालिन्यं च भवतीति भावः ॥४०॥ जनाः सकामोपासनापरा यदा तदा सर्वहृदिस्थिता बुद्धिः कामतः विषयेच्छामिश्रिताऽऽसीत् । अहमपि तेषां बुद्धिसदृशरूपिणी रक्तभावं प्राप्ता॥ ४१ ॥

कविप्रश्नविषयम् आत्मनः कृष्णरूपत्वकारणं वक्तुं कलौ जनबुद्धीनां बहुमालिन्यमाह द्वाभ्याम्—प्राप्त इति । निरंकुशाः स्वतंत्राः ॥ ४२ ॥ अतस्तद्धृद्गता कलिस्थजनहृद्गता ज्ञानहीनविषययुक्ता च ॥ ४३ ॥ ततो हेतोः शुद्धज्ञानरूपिणी निर्मलापि कृष्णरूपाऽभवम् ॥ ४४॥ प्रत्यक्षं श्रुतिरूपेण दृश्यं मम रूपम् ॥ ४५ ॥ ज्ञानरूपा प्रणवभावनारूपा शुद्धचित्तैर्हृदि आत्मानुचिंतनेन शुक्ला भाव्यते ॥ ४६ ॥ त्रेतायां श्रुतिरूपाऽहं कलुषज्ञानैः मिश्रज्ञानैः कर्मनिष्ठैः

प्राप्तेऽथाद्य कलौ घोरे द्विजाः सर्वे निरंकुशाः ॥ वर्जिताश्च सदाचारैः शिश्नोदरपरायणाः ॥ ४२ ॥ वेदे शास्त्रे च नो निष्ठा केषामपि कलौ युगे ॥ अतस्तद्धृद्गता बुद्धिर्ज्ञानहीनार्थसंयुता ॥ ४३ ॥ ततः कृष्णाऽभवं चाहं ज्ञानरूपाऽपि निर्मला ॥ यथा पूर्वं स्थितास्म्यं तर्बहिरित्थं युगेयुगे ॥४४॥ लोकानां बुद्धितुल्यं तु रूपं संधारयाम्यदः ॥ प्रत्यक्षं युगभेदेन यन्मद्रूपं वदामि तत् ॥४५॥ आत्मानुचिंतनान्नित्यमहं मुनिवरैः कृते ॥ हृद्देशे विधृता शुक्लोंकाररूपामलाशयैः ॥ ४६ ॥ उपांशुपाठात्त्रेतायां श्रुतिरूपा तु कर्मठैः ॥ मिश्रज्ञानैर्धृता कंठे पीता ज्ञानादिरूपिणी ॥४७॥ द्वापरे श्रुतिरूपैव धृताद्वा पठनादहम् ॥ सकामैः कलुषज्ञानैर्जिह्वयातस्तथाऽरुणा ॥४८ ॥ नष्टज्ञानैः कलौ विप्रैः पाठहीनैरबुद्धिभिः ॥ पुस्तके लिपिरूपाऽहं कृष्णाभा विधृता श्रुतिः ॥ ४९ ॥ अतः कृष्णावतीर्णाऽहं कलौ विप्रैर्यथा धृता ॥ नष्टज्ञानप्रवृत्त्यर्थं संप्रदायक्रमाद्भुवि ॥ ५० ॥ अजानद्भिर्बीजकां मां नीलोत्पलसमद्युतिम् ॥ वृथैव कविभिः प्रोक्ता कलौ शुक्ला सरस्वती ॥ ५१ ॥

कर्तृभिरुपांशुपाठेन कंठे धृता यदा तदा पीताऽभवम् ॥ ४७॥ द्वापरे मलिनज्ञानैर्धृतः सकामैः पुरुषैः प्रत्यक्षपठनेनाहं वेदरूपा जिह्वया धृता तथा जिह्वावत् रक्तवर्णा जाता ॥४८॥ कलौ ज्ञानहीनैर्बुद्धिहीनैरल्पबुद्धिभिश्च जनैः श्रुतिः पुस्तके कृष्णरूपा कृष्णाभा कज्जलेन कृष्णलिपिरूपाऽहं विधृताऽस्मि ॥४९॥ अतोहं कलौ कृष्णा कृष्णरूपाऽवतीर्णास्मि । बुद्धिवाण्यधिष्ठातृत्वान्मम लोकबुद्धिसदृशं वेदवाणीतुल्यं च स्वरूपं भवतीति भावः ॥ ५० ॥ ५१ ॥

भवामीत्यध्याहारः ॥ ५२ ॥ ५३ ॥ अष्टचत्वारिंशत्संख्याकां बीजकांबां प्रणमति—वाण्येवेति । स्पष्टोऽर्थः ॥ ५४ ॥ एतत्सर्गकथाश्रवणादिफलमाह—बीजकेति । त्रिसमये त्रिकाले । अनुदिनं प्रतिदिनम् ॥ ५५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामेकोनत्रिंशः सर्गः ॥ २९ ॥ त्रिंशे तु पंचषट्पद्यैर्जडोंऽबाकृपया सुवित् । भट्टोऽथ मदनानंदः कामजेतेति चेर्यते ॥ ३० ॥ कश्चिदिति । हस्तपादैः शक्तिरहितः । अन्यार्पि

युष्माभिर्यत्कृतं स्तोत्रं स्वविद्याभेदतः पृथक् ॥ तेनाहं चातिसंतुष्टा पठतां वांछितार्थदा ॥५२॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं श्रुत्वा वचो देव्या विद्वांसो वैदिकादयः ॥ नत्वा प्रदक्षिणीकृत्य तां ययुः स्वं निकेतनम् ॥ ५३ ॥ वाण्येव साक्षाद्वसुधावतीर्णा विद्वज्जनानंदकरी सुवाक्यैः ॥ तां बीजकाख्यां वयमष्टचत्वारिंशत्तमं श्रीगुरुमानताः स्मः ॥५४॥ बीजकाभिधगिरश्चरितं यः संशृणोत्यपि पठेदघनाशम् ॥ श्रद्धया त्रिसमयेऽनुदिनं च पंडितो भवति मूर्खवरोऽपि ॥ ५५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे बीजकांबाचरित्रवर्णनं नामैकोनत्रिंशः सर्गः ॥ २९ ॥ श्रीदेशिकेंद्र उवाच ॥ कश्चिद्द्विजार्भकोऽथासीत्करपादैरशक्तिमान् ॥ जन्मनैव तथांधोभून्मूकोऽन्यार्पितभक्ष्यभुक् ॥ १ ॥ यश्चलत्यंघ्रिकरतः कदाचिन्नेषदप्यसौ ॥ शकृन्मूत्रनिसर्गश्च स्थितिस्थानेऽस्य चाभवत् ॥ २ ॥ दुःखितौ पितरौ तस्य हस्तैर्निष्कास्य तन्मलम् ॥ दशाब्दाक्रमणेप्यस्य स्थितौ नेषदतिक्रमः ॥ ३ ॥ कृच्छ्रादष्टमवर्षेऽस्य पित्रोपनयनं कृतम् ॥ गायत्रीमंत्रितं वारि निक्षिप्यास्य मुखे बलात् ॥४॥ श्रुता धरावतीर्णाथ तेन विप्रेण बीजका ॥ याद्या सरस्वती दुःखं हरंतीक्षणतोऽखिलम् ॥५॥

तभक्ष्यभुक् परदत्तान्नभोक्ता ॥ १ ॥ पादहस्तैरीषदपि न चलति चंचलो न भवति ॥ २ ॥ दुःखयुक्तौ बभूवतुः दशवर्षातिक्रांतावपि बालस्थितौ व्यतिक्रमो न जातः ॥ ३ ॥ कृच्छ्रात्कालातिक्रमसंकटात् । ननु मूकेन गायत्र्युच्चारणं कथं कृतमिति चेत्तत्राह—गायत्रीति ॥ ४ ॥ धरायामवतीर्णाऽद्धा साक्षा

रसरस्वती । ईक्षणतः दर्शनमात्रेण ॥ ५ ॥ निक्षिप्य स्थापयित्वा । आदितः जन्मारभ्य ॥ ६ ॥ तथाविधं जडरूपं बालं च ॥ ७ ॥ बीजकांबायाः कृपावलोकनेन ॥ ८ ॥ ९ ॥ यथोपलः पाषाणः प्रत्यक्षं जडोस्ति तथा दशाब्दोऽहं हस्तपादैरचलश्चांचल्यरहितोऽभवम् । न केवलमेतावत् अपितु कुकायः कुत्सितदेहः । वाङ्नेत्रकर्णैस्त्यक्ताः स्वस्ववृत्तयो यस्य । पितृतः पितृभ्यां कर्तृभ्यां दत्तमन्नं पानं च यस्य ॥ १० ॥ मलमूत्रनिष्कासनदुःखितेन मे पित्राऽतिकष्टेन जडोऽपि ते तव चरणसमीपेऽनंतजन्मकृतपुण्यैरानीतोऽस्मि ॥ ११ ॥ अतिजडस्य तव कथं मत्स्तुतौ प्रवृत्तिरित्याशंक्याह । एतादृश

गृहीत्वाथ शिशुं पृष्ठे स विप्रो बीजकां ययौ ॥ निक्षिप्याग्रे शिशुं तस्याः प्रोचे तद्वृत्तमादितः ॥ ६ ॥ श्रुत्वा वृत्तं बीजकांबा दृष्ट्वाऽर्भं च तथाविधम् ॥ कृपार्द्रया दृशा बालं पश्यति स्म सरस्वती ॥ ७ ॥ तत्क्षणे बीजकांबायाः स बालः करुणेक्षणात् ॥ बभूव चारुसर्वांगो ननामोत्थाय तां स्वतः ॥ ८ ॥ प्रांजलिः पुरतः स्थित्वा बीजकांबां विलोकयन् ॥ प्रेमगद्गदया वाचा तुष्टावैनां सरस्वतीम् ॥ ९ ॥ बाल उवाच ॥ यथोपलोऽद्धाऽचल एव नित्यं तथाभवं चांघ्रिकरैः कुकायः ॥ वाङ्नेत्रकर्णोज्झितसर्ववृत्तिर्दत्तान्नपानः पितृतो दशाब्दः ॥ १० ॥ अनंतजन्मार्जितपूर्वपुण्यैः संप्रापितस्त्वत्पदसन्निधौ मे ॥ विण्मूत्रनिष्कासनदुःखभाजा पित्राऽहमत्यंतजडोपि कष्टात् ॥ ११ ॥ एतादृशोऽप्येव तवेक्षणाद्वै कृपायुताद्याहमनिंद्यकायः ॥ जातोऽखिलज्ञोऽद्य यथा हि दत्तात्रेयेक्षणात्प्राक्कृतवीर्यसूनुः ॥ १२ ॥ धीवाण्यधिष्ठात्र्यसि चाखिलानां सरस्वती ज्ञानमयी त्वमद्धा ॥ स्तुतिर्मयाल्पेन कथं भवेत्ते स्नानं पयोब्धेरिव धेनुदुग्धैः ॥ १३ ॥ तस्मान्नतिं केवलमेव कुर्वे मुहुर्मुहुस्तेंऽघ्रियुगाय नान्यत् ॥ महोपकाराय यथा सवित्रे कुर्वंति सर्वे नतिमेव नान्यत् ॥ १४ ॥

इति । ईक्षणाद्दर्शनमात्रेण पवित्रदेहः अतः सर्वज्ञो जातोऽस्मि । तत्र दृष्टांतः दत्तात्रेयदर्शनेन कार्तवीर्य इव । स हि बाल्येऽत्यंतं जडो दत्तात्रेयदर्शने गणपतिमंत्रं लब्ध्वा तज्जपात्कालांतरे महत्त्वं प्राप्त इति गणेशपुराणे । त्वयि तु साक्षात्सरस्वत्यां दर्शनमात्रेण जाड्यनिवर्तकत्वं नाश्चर्यमिति भावः ॥ १२ ॥ पयोब्धेः क्षीरसमुद्रस्य ॥ १३ ॥ तस्मान्नतिं नमस्कारमेव पुनःपुनः करोमि । यथा महान् चक्षुःप्राप्तिरूप उपकारो यस्मात्तस्मै सूर्याय सर्वे जनाः नमस्का

रमेव कुर्वंति नान्यत् । महोपकारकर्तुर्नमस्कारातिरिक्तं प्रत्युपकाराय न भवतीत्यर्थः ॥ १४ ॥ विधानतः पूर्णाभिषेकविधिना ॥ १५ ॥ संप्रदायक्रमं तंत्रोक्तपूजादि ॥ १६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १७ ॥ गुरुर्हितोपदेष्टा । तत इत्यादुत्तरान्वयि ॥ १८ ॥ मदनसौख्याय मदनानंदाय ॥ १९ ॥ एकोनपंचाशत्संख्यकं भट्टानंदं प्रणमति—इत्थमिति । इज्यपादः पूज्यचरणः इज्यार्चितं पञ्चैरपि पूजितम् ॥ २० ॥ २१ ॥ न मुमोह मोहं न प्राप्तवान् ।

श्रीदेशिकेंद्र उवाच ॥ इत्थं बालोदितं श्रुत्वाऽतिसंतुष्टाऽथ बीजका ॥ सर्वमंत्रमयीं दीक्षां ददौ तस्मै विधानतः ॥ १५ ॥ भट्टानंदेति नामापि चकारास्यातिविश्रुतम् ॥ संप्रदायक्रमं सर्वं भट्टानंदस्तदाऽकरोत् ॥ १६ ॥ बीजकाथ ययौ सिद्धिं महतीं योगिसेविताम् ॥ बीजकांबाकृपोत्कर्षाद्भट्टानंदोऽखिलज्ञताम् ॥ १७ ॥ प्राप्याखिलानां विदुषां गुरुश्चासीत्स भूतले ॥ ततः कालेन महताऽखिलं मनुरहस्यकम् ॥ १८ ॥ दत्त्वा मदनसौख्याय स्वयं प्राप परां गतिम् ॥ विद्वच्छ्रेष्ठं तदारभ्य भट्टाचार्यं जगुर्बुधाः ॥ १९ ॥ इत्थंप्रभावोऽखिलविद्भट्टानंदोऽखिलैर्योगिभिरिज्यपादः ॥ वयं तमिज्यार्चितमूनपंचाशत्संख्यकं श्रीगुरुमानताः स्मः ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ मदनानंदसंज्ञोऽभूत्सौंदर्येण स्मरः परः ॥ दृष्ट्वैवं मुमुहुर्यस्य मुखं सद्योऽखिलांगनाः ॥ ॥ २१ ॥ स्वयं मुमोह नैवासौ सदैवात्मसुखे रतः ॥ चक्रेऽखिलं संप्रदायं विद्वज्जनसुपूजितः ॥ २२ ॥ एकदा मदनानंदं रहः पूजापरायणम् ॥ एकाकिनमिति ज्ञात्वा कामिन्यो हृद्भवार्दिताः ॥ २३ ॥ सौंदर्यातिशयात्तस्य मोहिता मदनातुराः ॥ ययुस्तत्सन्निधिं बह्व्यः कामसंकेतहृष्टयः ॥ २४ ॥ गुर्वात्मदेवतैक्येन जपंतं तन्मयं मनुम् ॥ भ्रामयंतं वर्णमालां मन्वंते वर्णतः पृथक् ॥ २५ ॥ इत्थमेकाग्रहृदयं मदनानंददेशिकम् ॥ ईक्षमाणाः स्थिताः सर्वाः समंतात्काममोहिताः ॥ २६ ॥

संप्रदायं पूजादिकम् ॥ २२ ॥ रहः एकांते । एकदेत्यादिद्वयोरन्वयः । हृद्भवार्दिताः कामपीडिताः ॥ २३ ॥ २४ ॥ तन्मयं गुर्वात्मदेवतामयं मंत्रं जपंतमीक्षमाणाः सर्वाः स्त्रियः समंतात्स्थिता इत्यन्वयः । मन्वंते मंत्रांते पृथक्वर्णैर्वर्णमालां भ्रामयंतम् । वर्णमाला च । अकारादिषोडश स्वराः कादयो ळपर्यंताश्चतुस्त्रिंशत् । एवं पंचाशत् । ळकारादि अकारपर्यंतं विलोमतः पंचाशत् । अकचटतपयशेत्यष्टावेवमष्टोत्तरशतं क्षकारो मेरुरिति तंत्रेषूक्तः ॥ २५ ॥ २६ ॥

॥२७॥आत्मकार्यं त्यक्त्वा एकांते श्रीपूजायां सक्तं निःस्पृहं च मां प्रति किमर्थं प्राप्ताः॥२८॥स्वगृहादन्यत्र स्थले कुलस्त्रीणां गमनं न योग्यमस्ति॥२९॥ विस्मृताखिलवृत्तयस्त्यक्तसर्वव्यापाराः ॥ ३० ॥ हे पुरुषार्य हे पुरुषश्रेष्ठ एकांते तव दर्शनेन वयं धन्याः स्मः । अन्यसौख्यदाः परसौख्यदाः ॥ ॥ ३१ ॥ अन्यानाप्तांश्च वंचयित्वा । सौष्ठवेन सौंदर्येण ॥ ३२ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ३३ ॥ ननु परस्त्रीगमनं दोषावहं कथमहं करोमीति चेत्तत्रा

जपंति मदनानंदो नेत्रे उन्मील्य चाग्रतः ॥ ददर्श युवतीस्तन्वीः कटाक्षाक्षेपलोचनाः ॥ २७ ॥ ताः पप्रच्छाथ सर्वाः स किमर्थं यूयमागताः ॥ त्यक्त्वात्मकार्यं श्रीपूजासक्तं मां निःस्पृहं रहः ॥२८॥ स्वगेहाद्गतिरन्यत्र न योग्या कुलयोषिताम्॥श्वश्रूश्वशुरमुख्येभ्यो युष्माकं नास्ति किं भयम्॥२९॥ श्रुत्वेत्थं मदनानंदवाक्यं प्रोचुस्तदाखिलाः ॥ हसंत्यो मदनोत्कर्षाद्विस्मृताखिलवृत्तयः॥३०॥ नार्य ऊचुः॥पुरुषार्य वयं धन्याः सर्वास्त्वद्दर्शनाद्रहः ॥ वांछां नः कुरु पूर्णां त्वं यतः संतोऽन्यसौख्यदाः॥३१॥ वंचयित्वा पतिं श्वश्रूं श्वशुरं वयमागताः ॥ अन्याप्तांश्च भवद्रूपसौष्ठवेनातिमोहिताः ॥३२॥ एकाकिनमिति ज्ञात्वा त्वां रहः संस्थितं स्फुटम् ॥ रमस्वातः सहास्माभिर्गोपिकाभिर्यथा हरिः ॥ ३३ ॥ त्वं सर्वात्ममतिर्ज्ञानी सर्वगोऽप्यखिलात्परः ॥ अतो न लिप्यसे पापैर्यथा सर्वगतो मरुत् ॥ ॥ ३४ ॥ न प्रत्याख्यानमस्माकं त्वया कार्यं स्मराशुगैः ॥ आर्तानां त्राणतः सद्यो यशः प्राप्स्यसि निर्मलम् ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ इति तासां वचः श्रुत्वा मदनानंद एकलः ॥ हृदीत्थं चिंतयामास ध्यानविक्षेपसंकुले ॥ ३६ ॥

हुः—त्वमिति । सर्वात्मबुद्धिः सर्वगतः सर्वस्मात्परो ज्ञान्यासि । ज्ञाननिष्ठत्वात्तवाकर्तृत्वेन नास्मत्संगो दोषावह इति भावः ॥ ३४ ॥ स्मराशुगैः कामबाणैः पीडितानां रक्षणेन यशः प्राप्स्यसि । आर्तरक्षणं साधूनां धर्म इति भावः॥ ३५॥एकलः एकाकी । ध्याने विक्षेपश्चित्तानवस्थितिस्तया व्याप्ते चित्ते॥ ३६॥

चिंतनमेवाह—कथमिति षड्भिः ॥ ३७ ॥ बहुस्त्रीभ्य एकेन मया पापभीरुणा किं वाच्यम् ॥ ३८ ॥ यस्य सामर्थ्येन इमाः सर्वाः स्त्रियो मां त्यक्त्वा स्वतो गमिष्यंति तादृशः कश्चिन्मंत्रो मया जपितव्यश्चेद्विक्षिप्तचित्तेन मया मंत्रोऽधुना न स्मर्यत इति योज्यम् ॥ ३९ ॥ अतः केवलो गुरुपादुकामंत्रो मया जपितव्यः ॥ ४० ॥ तर्हि पादुकामंत्रस्मरणं कथं भविष्यतीति चेत्तत्राह । यस्य पादुकामंत्रस्य न्यासाद्यपेक्षा नास्ति स्मृतिमात्रेण सिद्धि



कथं विघ्नोऽयमुत्पन्नो देवताचारिते मयि ॥ निवारणं कथं चास्य भविष्यति किलाधुना ॥ ३७ ॥ किं वक्तव्यं मयैताभ्यो बह्वीभ्यश्चैकलेन तु ॥ जुगुप्सितं कर्म कर्तुमुद्यताभ्योऽघभीरुणा ॥ ३८ ॥ जप्यतां चेन्मनुः सिद्धः कश्चिच्छीघ्रमिमाः स्वतः ॥ गमिष्यंत्येव मां त्यक्त्वा यस्य सामर्थ्यतोऽखिलाः॥३९॥अधुना क्षिप्तचित्तेन न मया स्मर्यते मनुः ॥ गुरूणां पादुकामंत्रो जपितव्योऽद्य केवलः॥४०॥ न्यासादेर्यस्य नापेक्षा स्मृतिमात्रेण सिद्धिदः ॥ प्रागुक्तं गुरुभिर्मह्यं संप्राप्तेऽत्यंतसंकटे ॥ ४१ ॥ श्रीगुरोः पादुकामंत्रो जपितव्यो जनैरिति ॥ न पादुकासमो मंत्रः स्मृता रक्षति पादुका ॥४२॥ श्रीदेशिकेन्द्र उवाच ॥ मदनानंद इत्यंतर्निश्चित्य पादुकामनुम् ॥ सस्मार श्रीगुरुं ध्यायन्मुद्रां शि[illegible]करोत् ॥ ४३ ॥ सकृच्छ्रीपादुकास्मृत्या तदाद्भुतमिवाभवत् ॥ सद्यस्ताश्चांधतां प्राप्ताः कामिन्यः सकलाः स्थिताः ॥ ४४ ॥ अथ प्रोचुर्मिथोऽगानि स्पृशंत्योऽखिलयोपितः ॥ किं जातमद्भुतं चैतत्सहसा दृग्गताद्य नः ॥ ॥ ४५ ॥ यदर्थमागताः स्मोऽत्र भवत्वद्य न वापि तत् ॥ यास्यामोऽद्य गृहं स्वीयं कथं चिंतेति नो हृदि ॥ ४६ ॥

प्रदो भवति । संकटप्राप्तौ पुरुषैः श्रीगुरुपादुकामंत्रो जपितव्य इति मद्गानंदगुरुभिः प्राक् मह्यमुक्तमिति योज्यम् ॥ ४१ ॥ तस्मात्पादुकासमानो मंत्रो नास्ति यतः स्मृतैव पादुका रक्षति न तत्र जपाद्यपेक्षाऽस्तीत्यर्थः ॥ ४२ ॥ अंतः निश्चित्य मनसि निश्चयं कृत्वा मुद्रां पादुकामुद्रां गुरुमुखैकवेद्याम् । शिरसि धृतवानित्यर्थः ॥ ४३ ॥ स्मृत्या स्मरणेन ॥ ४४ ॥ दृक् दृष्टिः गता नष्टा ॥ ४५ ॥ यदर्थमागतास्तत् कार्यं भवतु वा न भवतु परंतु

स्वगृहं कथं यास्याम इति चिंतास्माकं ह्यस्ति ॥ ४६ ॥ अंधताप्राप्तौ हेतुं संभावयंत्य आहुः । अस्माभिरिति ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ बालोऽपि रज्जुबुद्धया सर्पं स्पृशन् फलं दंशादि एति प्राप्नोति यथा तथा साधुं च त्वां कामबुद्धया इच्छंत्यो वयमंधत्वादिफलं प्राप्ता इत्यर्थः ॥ ५१ ॥ यथा खले सर्पे दुःखप्रदत्वं युक्तं न तथा त्वयि सत्पुरुषे युक्तमित्याहुः । अहेरिति भवतीत्यध्याहारः ॥ ५२ ॥ व्यस्तं विलोमं दुःखदम् । खंडनकर्तुः

अस्माभिर्मदनानंदे निष्कामे कामधीः कृता ॥ तदुद्भवेन दोषेण दृग्गता नो न चान्यथा ॥ ४७ ॥ स एव प्रार्थनीयोऽद्य यथास्माकं दृशं पुनः ॥ दास्यत्येव दयालुत्वादपराधकृतामपि ॥ ४८॥ इत्थं निश्चित्य ताः सर्वा मदनानंदमादरात् ॥ प्रार्थयामासुरग्रस्थाः कृतांजलिपुटाः स्त्रियः॥४९॥ स्त्रिय ऊचुः ॥ अपराधस्तवास्माभिर्मूढाभिस्तु कृतो महान् ॥ तपसोऽद्भुतसामर्थ्यमविज्ञाय तपोनिधे॥५०॥ रज्जुबुद्ध्याऽहिमज्ञात्वा बालोऽप्येति स्पृशन्फलम् ॥ साधुं चाभिलषंत्यस्त्वां कामबुद्ध्या वयं तथा ॥ ५१ ॥ अहेस्तामसवृत्तित्वात्स्वभावः परदुःखदः ॥ साधोः सात्त्विकवृत्तेस्तु स्वभावः परसौख्यदः ॥ ५२ ॥ व्यस्तं तत्कथमत्रासीत्साधुसंगतिजं फलम् ॥ खंडितोऽपि ददातीक्षुश्छेत्तुर्मिष्टरसं यथा ॥ ५३ ॥ साधुः कृतापराधोऽपि सुखमेवापराधिनः ॥ त्वयाऽस्माकं प्रार्थितं चाऽकृत्वा परिहृताद्य दृक् ॥ ५४ ॥ यतो नो द्विगुणं दुःखं नेत्थं साधुसमागमः ॥ स्त्रीस्वभावात्तवास्माभिरपराधः कृतो महान् ॥ ५५ ॥ स त्वया क्षम्यतां नूनं सर्वः साधुस्वभावतः ॥ नेत्थं पुनः करिष्यामस्त्वयि बुद्धिं तु सत्तमे ॥ ५६ ॥ त्वत्पद्भ्यां बहुशः कुर्मो नमनान्यधुना वयम् ॥ दृशं नः पूर्ववद्देहि नत्वा त्वां स्वगृहान्द्रुतम् ॥ ५७॥ यास्यामोऽन्वेषणे सक्ताः श्वश्र्वाद्याः संति नः पुरे ॥ अतः शीघ्रं कृपां कृत्वा सदृष्टीः कुरु नः प्रभो॥५८॥श्रीदेशिकेन्द्र उवाच ॥ श्रुत्वेति बहुशस्तासां प्रार्थनां मदनाभिधः॥सदयः श्रीगुरुं ध्यायन्प्रार्थयंश्च तथांतरे॥५९॥

यथा मिष्टरसमिक्षुर्ददाति तथाऽपराधकर्तुः सुखमेव साधुर्ददातीति योज्यम् ॥ ५३ ॥ ५४ ॥ यतो दृङ्नाशाद्द्विगुणं दुःखं जातम् । इत्थं रत्यलाभेन नेत्रनाशेन च द्विगुणदुःखजनकः साधुसमागमो न भवति । ननु युष्माभिः कथमपराधः कृत इति चेत्तत्राहुः । स्त्रीस्वभावादिति ॥ ५५॥ सः अपराधः सत्तमे साधुश्रेष्ठे ॥ ५६ ॥ स्वगृहान् द्रुतं यास्याम इति संबंधः ॥ ५७ ॥ सदृष्टीः उत्तमनेत्राणि ॥ ५८ ॥ श्रुत्वेति सार्द्धश्लोकान्वयः ॥ ५९ ॥

तन्मंत्रं गुरुपादुकामंत्रम् । उत्तरार्द्धमुत्तरान्वयि ॥६०॥ पुपूज मदनानंद इति शेषः ॥६१॥ पूजारूपेणादरेण ॥६२॥६३॥ पंचाशत्संख्यं मदनानंदं प्रणमति । मदनाभिनंदः मदनानंदः । योगानंदायाखिलं रहस्यं योगसहितं ज्ञानं पूर्णाभिषेकपूर्वकं सर्वमंत्रांश्च ददौ तं नताः स्मः ॥ ६४ ॥ भट्टानंदमदनानंदचरित्रश्रवणपाठादिना क्रमेण सर्वज्ञत्वम् उत्तमरूपत्वं च फलं भवतीत्याह । भट्टानंदगुरोरिति ॥ ६५ ॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां

पुनर्जजाप तन्मंत्रं मुद्रावंदनपूर्वकम् ॥ सकृन्मंत्रजपाज्जातास्ताः सर्वाः प्राप्तदृष्टयः ॥ ६० ॥ प्रणेमुर्मदनानंदं प्रार्थयंत्यो मुहुर्मुहुः ॥ हरिद्राकुंकुमाद्यैस्ताः पुपूज देवताधिया ॥ ६१ ॥ प्रसादं मदनानंदोऽथाभ्यो देवार्पितं ददौ ॥ संतोषं चाकरोत्तासामित्थं पूजादरेण सः ॥ ६२ ॥ संतुष्टास्तास्ततः सर्वास्तं नत्वा मदनाभिधम् ॥ प्रशंसंत्योऽस्य सामर्थ्यं ययुः स्वं स्वं निकेतनम् ॥ ६३ ॥ इत्थंप्रभावो मदनाभिनंदो योगाभिनंदाय ददौ रहस्यम् ॥ ज्ञानं सयोगं सुमनूंश्च यस्तं पंचाशदाख्यं गुरुमानताः स्मः ॥ ६४ ॥ भट्टानंदगुरोर्यन्मदनानंदस्य चाखिलं चरितम् ॥ शृणुयाद्वा प्रपठेद्यः सर्वज्ञत्वं सुरूपतां लभते ॥ ६५ ॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्द्धे भट्टानंदमदनानंदगुरुद्वयकथावर्णनं नाम त्रिंशः सर्गः ॥ ३० ॥ श्रीदेशिकेंद्र उवाच ॥ योगानंदोऽखिलज्ञोऽथ योगाभ्यासरतः सदा ॥ मूलाधाराद्ब्रह्मरंध्रावधिस्था हि सुषुम्णिका ॥ १ ॥ या नाडी तत्सुमार्गेण गत्वाऽसौ ब्रह्मरन्ध्रकम् ॥ गलत्पीयूषमत्रत्यात्पिबतींदोः सुखान्वितः॥२॥योगानंदः सदैवासीद्योगींद्रार्चितपादुकः॥ योगाभ्यासं बहूञ्छिष्याञ्छिक्षयन्स्वमठेऽवसत्॥३॥

टीकायां त्रिंशः सर्गः ॥ ३० ॥ एकत्रिंशे चतुःपञ्चपर्यैर्योगोऽप्यनुत्तरः । भीमसिंहद्वयश्चेति नाथाः प्रोक्ताः कथानकैः ॥ ३१ ॥ योगानंद इति । सर्वज्ञो बभूवेत्यर्थः । उत्तरार्द्धमुत्तरान्वयि ॥ १ ॥ मूलाधाराद्ब्रह्मरंध्रपर्यंतं स्थिता या सुषुम्णा नाडी तेन सुमार्गेण । अत्रत्यात् ब्रह्मरंध्रस्थाचंद्राद्गलितममृतं पिबति । तथा च श्रुतिः “ शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवंति ” इति । हृदय

स्येति । हृदयस्थाने शतनाडीनां सुषुम्णाभिन्नत्वं भवति । आयन् गच्छन् इति तदर्थः ॥ २ ॥ ३ ॥ अस्माद्योगानंदात् ॥ ४ ॥ तत्र राजनगरे । विरागी वैरागीति प्रसिद्धः । कष्टप्रदेन योगेनात्मसाधनं किम् । आत्मप्राप्तिसाधनं योगो नास्तीत्यर्थः ॥ ५ ॥ किं तु नामसंकीर्तनं त्यक्त्वा कलियुगेऽन्यत् साधनं नास्तीत्यर्थः । यथा नामसंकीर्तनेनात्मप्रकाशस्तथाऽन्यैः योगेन खेचर्यादिमुद्रासाधनैश्चात्मा न प्रकाशत इति योज्यम् ॥ ६ ॥ ७ ॥ ८ ॥ आत्मज्ञानाभावे केवलनामोच्चारणेन सुखं न भवतीत्यर्थः । तत्र दृष्टांतः । अलब्धा अप्राप्ता सिता शर्करा येन तस्य मुखं तदुक्तिभिः शर्करा शर्करेति केवलवचनै

एकदा मरुदेशेशो योगानंदं नृपोत्तमः ॥ तं संप्रार्थ्यात्मनगरं नीत्वाऽस्माद्योगमभ्यसत् ॥ ४ ॥ तत्र कश्चिद्विरागग्येकः समागत्य नृपोत्तमम् ॥ प्राह योगेन किं राजन्कष्टदेनात्मसाधनम् ॥ ५ ॥ नामसंकीर्तनं त्यक्त्वा कलौ नान्यद्धि साधनम् ॥ नामसंकीर्तनात्सद्यो ह्यात्मा संप्रकाशते ॥ ६ ॥ तथा न साधनैरन्यैर्योगमुद्रादिकैरपि ॥ श्रुत्वा वैरागिणो वाक्यं तूष्णीमासीन्नृपस्तदा ॥ ॥ ७ ॥ योगानंदस्तमाहाथ दर्शयन्योगमुख्यताम् ॥ भो विरागिन्कथं योगाच्छ्रेष्ठं नाम त्वयोदितम् ॥ ८ ॥ नामोच्चारेण किं सौख्यं पुंसोऽनात्मविदो भवेत् ॥ यथालब्धासितस्यास्यं मिष्टं स्यात्किं तदुक्तिभिः ॥ ९ ॥ साक्षाज्जीवात्मनोरैक्यं ब्रह्मरंध्रे भवत्यतः ॥ स योगो न भवेदल्पो नात्मविन्नामकीर्तनात् ॥ १० ॥ श्रैष्ठ्यं योगस्य वक्त्रेण किं मया वर्ण्यतां बहु ॥ प्रत्यक्षं वच्म्यहं योगे प्रतिज्ञां नामधारक ॥ ११ ॥ योगाभ्यासवता स्थेयं मयैकस्मिन्गृहेऽधुना ॥ तत्कपाटं दृढं दत्त्वा षण्मासावधि निश्चलम् ॥ १२ ॥ नामोच्चारवताऽन्यस्मिन्गृहे तद्वद्दृढाररे ॥ त्वया चोक्तावधि स्थेयं निश्चलेन यथा मया ॥ १३ ॥ षट्स्वतीतेषु मासेषु द्वाभ्यां चोत्थीयतां सकृत् ॥ चेच्छ्रेष्ठो योग एवास्ति जीवतोत्थास्यते मया ॥ १४ ॥

मिष्टं भवति किं न भवतीत्यर्थः ॥ ९ ॥ यतः येन ब्रह्मरंध्रे प्रत्यक्षं जीवपरमात्मनोरैक्यं भवति । अतः कारणात्स योगोऽनात्मवित्कृतनामसंकीर्तनादल्पो न भवति ॥ १० ॥ योगस्य बहुश्रेष्ठत्वम् । तन्मुखेन मया किं वाच्यं प्रत्यक्षं यथा स्यात्तथा वच्मि कथयामि । हे नामधारक नामांगीकारिन् ॥ ११ ॥ स्थेयं स्थातव्यम् । तत् कपाटं गृहकपाटं दृढं कृत्वा निश्चलमुद्घाटनरहितं यथास्यात्तथा ॥ १२ ॥ नामोच्चारणकर्त्रा त्वया च दृढाररे दृढकपाटेऽन्यगृहे ।

यथा मया स्थीयते तद्वत् निश्चलेन उक्तावधि षण्मासपर्यंतं स्थातव्यमित्यर्थः ॥ १३ ॥ १४ ॥ नामोक्तिर्नामोच्चारणं उत्थास्यते सा नामोक्तिः । म्रियते त्वं मरिष्यसीत्यर्थः ॥ १५ ॥ द्विसाम्ये नामयोगयोः समत्वे । द्वयोरावयोः । प्रत्यक् पृथक् ॥ १६ ॥ अनात्मज्ञो विरागी बाढमित्यब्रवीत् । तदीर्ष्यया योगानंदेर्ष्यया परगुणा । सहिष्णुत्वरूपया ॥ १७ ॥ पृथक् । दृढं कपाटं ययोर्वेश्मनोर्गृहयोः । परकृतकपाटदार्ढ्ये मध्यस्थयोरुद्घाटनायोग्यत्वं भवतीत्यर्थः ॥ १८ ॥ अररं कपाटं षण्मासावधि नोद्घाटनीयमिति नृपमाज्ञाप्य स्वयं च संकल्प्य योगिश्रेष्ठः स योगानंद इत्युत्तरान्वयि ॥ १९ ॥ लंबि-

योगान्नामोक्तिरुत्कृष्टा चेत्त्वयोत्थास्यते तथा ॥ सा चेन्नीचा भवेद्योगात्त्वया तु म्रियते खलु ॥ १५ ॥ योगे नीचे मरिष्येऽहं द्विसाम्ये जीवनं द्वयोः ॥ इत्थं प्रतिज्ञयाऽऽवाभ्यां स्थातव्यं प्रत्यगेव हि ॥ १६ ॥ श्रीदेशिकेंद्र उवाच ॥ योगानंदवचः श्रुत्वाऽनात्मविद्बाढमब्रवीत् ॥ अजानन्योगसामर्थ्यं स विरागी तदीर्ष्यया ॥ १७ ॥ इत्थं कृतप्रतिज्ञौ तौ योगानंदविरागिणौ ॥ तस्थतुर्वेश्मनोर्मध्ये पृथग्दृढकपटायोः ॥ १८ ॥ सानुगं नृपमादिश्याऽररं नोद्घाटयतामिति ॥ षण्मासावधि संकल्पं कृत्वाऽसौ योगवित्तमः ॥ १९ ॥ दृढे पद्मासने तस्थौ लंबिकायोगमास्थितः ॥ सुषुम्णया ब्रह्मरंध्रं गत्वा जीवात्मयोगजम् ॥ २० ॥ अनुभूय सुखं तत्स्थादिंदोरेवामृतं च्युतम् ॥ पिबन्नित्थं समाधिस्थो योगानंदो बभूव सः ॥ २१ ॥ बाह्यवृत्तिविहीनोऽसावंतर्वृत्त्यात्मसंस्थितः ॥ विरागिकोऽप्यनात्मज्ञो दांभिकोऽथ गृहांतरे ॥ २२ ॥ स्थित्वासने स नामानि जगौ बुद्धैर्गदाभृतः ॥ प्राप्ते मध्याह्नसमये क्षुदुद्बोधोऽस्य चाभवत् ॥ ॥ २३ ॥ उपांशूच्चारणं चक्रे नाम्नां सायाह्नकावधि ॥ ततोऽत्यंतं क्षुधाविष्टो नामोच्चाराक्षमो भुवि ॥ २४ ॥ समापतद्विस्तृतांगः शुष्कजिह्वोष्ठतालुकः ॥ नृपानुगास्ततः प्रातर्दृष्ट्वा तौ लघुरंध्रतः ॥ २५ ॥

कायोगस्थ । " लंबिकोर्द्ध्वस्थिते गर्ते जिह्वां व्यावृत्य धारयेत् " इति योगशास्त्रे उक्तः । उत्तरार्धमुत्तरान्वयि ॥ २० ॥ तत्स्थात् ब्रह्मरंध्रस्थात् ॥ २१ ॥ पूर्वार्द्धे बभूवेत्यपकर्षः । उत्तरार्द्धमुत्तरान्वयि । गृहांतरेऽन्यगृहे ॥ २२ ॥ गदाभृतः विष्णोः अस्य विरागिणः ॥ २३ ॥ उत्तरार्द्धमुत्तरान्वयि । क्षुधाविष्टः क्षुत्पीडितः । भुवि पृथिव्याम् ॥ २४ ॥ विस्तृतांगः प्रसारितशरीरः । उत्तरार्द्धमुत्तरान्वयि । लघुरंध्रतः सूक्ष्मच्छिद्रेण ॥ २५ ॥

॥ २६ ॥ किंचिच्चंचलौ पादौ हस्तौ च यस्य । जीवसहितः मृतो वा न ज्ञातो यतः कांतिहीनशरीरः॥ २७॥ चारैर्दूतैः करणैर्बहिरानीतः।राज्ञेति शेषः ॥ २८॥ हस्तसंकेतैः भक्ष्यमन्नाद्यं ययाचे याचितवान् । तज्जातीयकरात् वैरागिहस्तेनान्नं जलं च तन्मुखे राज्ञा निक्षिप्तम् ॥ २९ ॥ ममैकदिवसेनैतादृशी गतिर्यो गानंदस्य तु का गतिः स्यादिति राजानमाह ॥ ३० ॥ सुस्थः सुस्थितोऽस्ति ॥ ३१ ॥ अधोदृक् अधोदृष्टिः ॥ ३२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३३ ॥

राज्ञे वृत्तं पृथक्प्रोचुर्योगानंदविरागिणोः ॥ दूता ऊचुः ॥ दृढासने स्थितोऽस्त्येव योगानंदोऽतिकांतिमान् ॥ २६ ॥ विरागिकस्तु पतितो भुवीषच्चलपात्करः ॥ सजीवो वा मृतोऽस्माभिर्न ज्ञातोऽयं विरुग्वपुः ॥ २७ ॥ दूतवाक्यमिति श्रुत्वा ययौ तत्र नृपः स्वय म् ॥ उद्घाट्य द्वारमानीतो बहिश्चारैर्विरागिकः ॥ २८ ॥ ययाचे हस्तसंकेतैर्भक्ष्यं राज्ञाथ तन्मुखे ॥ क्षिप्तमन्नं शनैः पेयं तज्जातीय करात्तदा ॥ २९ ॥ पीत्वान्नं स क्षणेनाथ विराग्युन्मील्य लोचने ॥ कृच्छ्राद्राजानमाहेत्थं योगानंदस्य का गतिः ॥ ३० ॥ राजा तं प्राह सुस्थोऽस्ति योगानंदो दृढासने ॥ ऋजुकायोऽतिकांत्याढ्यः प्राग्वत्स्थाणुरिवाचलः ॥ ३१ ॥ नृपेणोक्तमिति श्रुत्वा लज्जाढ्यः स विरागिकः ॥ शनैरुत्थाय चाधोदृङ्निर्ययौ नगराद्बहिः ॥ ३२ ॥ जहसुर्निखिलाः पौरास्तं गच्छंतं विरागिणम् ॥ मासषट्के गते ऽथासौ योगानंदः समाधितः ॥ ३३ ॥ विरम्यासनमुत्सृज्य प्रसन्नास्यः समुत्थितः ॥ राज्ञा प्रागुक्ततत्कालं ज्ञात्वामात्यानुगैः सह ॥ ॥ ३४ ॥ पौरैर्बहिः समागत्य द्वारमुद्घाटितं हि तत् ॥ योगानंदः शनैर्गेहाद्बहिः प्राप्तस्तदाखिलाः ॥ ३५ ॥ प्रणेमुस्तं समायातास्त तो राजा सुगंधिभिः ॥ तैलैः संमर्द्य चोष्णैस्तं वार्भिः संस्नाप्य वाद्यतः ॥ ३६ ॥ वस्त्राभरणगंधाद्यैरुपचारैरपूजयत् ॥ भोजयित्वा वरा न्नेन प्रार्थयामास तं नृपः ॥ ३७ ॥ कष्टं मदर्थं षण्मासं प्राप्तं ते क्षम्यतामिति ॥ श्रुत्वाह योगानंदस्तमिदं राजन्ममाण्वपि ॥ ३८ ॥

विरम्य विरामं प्राप्य । उत्तरार्द्धमुत्तरान्वयि । अमात्येनानुगैः सेवकैः पौरैश्च सह ॥ ३४ ॥ तदाखिला इत्युत्तरान्वयि ॥ ३५ ॥ ततो राजेत्याद्युत्तरा न्वयि ॥ ३६ ॥ अपूजयत् योगानंदमिति शेषः । वरान्नेन भोजयित्वेति ब्राह्मणकृतपाकेनेति ज्ञेयम् ॥ ३७ ॥ प्रार्थनामेवाह । ते त्वया मम तु इदं अणु अल्पं

कष्टं नास्तीति योज्यम् ॥ ३८ ॥ विषयसुखात्समाधिसुखं परं श्रेष्ठमस्ति । उत्तरार्द्धमुत्तरान्वयि ॥ ३९ ॥ अतिसम्मानादतिसत्कारेण । स्वस्थः आत्मसुखस्थः ॥४०॥ एकपंचाशदाख्यं योगानंदं प्रणमति—योगाभिनंद इति । यः पूर्णाभिषेकद्वारा सर्वमंत्रजातं वेदादिविद्याः सर्वकलाश्च अनुत्तराय शिष्यायाह । तं योगानंदं नताः स्मः ॥ ४१ ॥ सर्वविद्यासु युक्तिमान् ॥ ४२ ॥ उत्तरार्द्धमुत्तरान्वयि । सर्वविद्यावेत्तारः ॥ ४३ ॥ पृथक् पृथक्कलावेत्तारश्च ।

न कष्टं हि यतो बाह्यसौख्यादंतःसुखं परम् ॥ ततो राज्ञाखिलं योगं तस्मादभ्यस्य वै पुनः ॥ ३९ ॥ पूजितः सोऽतिसन्मानात्प्रापितः स्वाश्रमं सुखम् ॥ शिष्यानुपदिशन्योगं स्वस्थ आसीन्निजाश्रमे ॥ ४० ॥ योगाभिनंदोऽखिलमंत्रजातं श्रुत्यादिविद्याश्च कलाः समस्ताः ॥ योऽनुत्तरायाह तमेकपंचाशत्संख्यकं श्रीगुरुमानताः स्मः ॥ ४१ ॥ श्रीदेशिकेन्द्र उवाच ॥ अथ सोऽनुत्तरानंदः सर्वविद्योपपत्तिमान् ॥ तथाखिलकलाभिज्ञो बभूवाखिलवित्तमः ॥ ४२ ॥ न तादृग्वसुधायां तु सर्वज्ञोऽन्यस्तदाभवत् ॥ सर्वविद्याविदः सम्यक्प्रष्टुं स्वविषयान्पृथक् ॥ ४३ ॥ ययुश्चानुत्तरानंदं तथैकैककलाविदः ॥ नर्मदातटसंस्थं तं ज्ञात्वाऽखिलविदं परे ॥ ४४ ॥ विद्याभिमानिनः केचित्प्राप्यैनं व्यवदन्भृशम् ॥ तांस्ताननुत्तरानंदस्तार्किकाञ्छाब्दिकांस्तथा ॥ ४५ ॥ मीमांसकांस्तथान्यांश्च चकारानुत्तरान्द्रुतम् ॥ विद्याविच्च कलाभिज्ञः कश्चिज्जेतुं न तं क्षमः ॥ ४६ ॥ सर्वेऽप्यनुत्तरास्तेन कृता इत्थं तु सद्गुरोः ॥ कृपाबलात्कृतं सत्यं स्वनामानुत्तरेति च ॥ ४७ ॥ अनुत्तरानंद इतिप्रभावः सर्वाः सुविद्याश्च रहस्यमंत्रान् ॥ यो भीमसिंहाय जगाद तं वै द्विपंचसंख्यं गुरुमानताः स्मः ॥ ४८ ॥ श्रीदेशिकेंद्र उवाच ॥ भीमसिंहोऽथ विद्वत्सु निखिलेष्वपि विद्यया ॥ महासिंह इवासीद्यं दृष्ट्वा भीर्विदुषां हृदि ॥ ४९ ॥ तर्कवेदांतशास्त्रादिस्वस्वविद्यासु सिंहताम् ॥ तत्तद्विशेषविज्ञानाद्ये प्राप्ताः पंडिताः पुरा ॥५०॥

नर्मदातीरस्थं सर्वज्ञं परे अन्य इत्युत्तरसंबंधि ॥ ४४ ॥ एत्य प्राप्य भृशमत्यंतं वादं कृतवंतः । ये वादं कृतवंतस्तांस्तानित्युत्तरान्वयि ॥ ४५ ॥ अनुत्तरान् मूकान् । क्षमः समर्थो नासीदित्यर्थः ॥ ४६ ॥ ४७ ॥ द्विपंचाशत्तममनुत्तरानंदं प्रणमति । अनुत्तरानंद इति । यः सर्वोत्तमविद्याः रहस्यमंत्रान्षोडशीप्रमुखान् भीमसिंहशिष्याय कथितवांस्तं नताः स्मः ॥ ४८ ॥ भीमसिंह इति । आसीदिति मध्यमणिन्यायेनोभयान्वयि ॥ ४९ ॥ ये सिंहतां

श्चातास्तान् जित्वा एक एव सः सर्वविद्यासु सिंहत्वं प्रापेत्यन्वयः ॥ ५० ॥ सर्वविद्यासु ये विशेषास्तान् जानाति ॥ ५१ ॥ तेन पूर्वोक्तेन । यस्याग्रे आत्मनः पंडितत्वं वक्तुं पृथिव्यां कोऽपि क्षमो नासीत् ॥ ५२ ॥ त्रिपंचाशन्मितं भीमसिंहानंदं प्रणमति—इत्थमिति । शाकवृद्ध्याभिधं शिष्यंप्रति सर्वं पूर्णाभिषेकादिरहस्यमंत्रजातं य आह तं गुरुं भीमसिंहानंदं नताः स्मः ॥ ५३ ॥ एतत्सर्गोक्तगुरुत्रयकथाश्रवणादिफलमाह—योगानंदेति । योगानंदस्य चरितश्रवणादिना उत्तमयोगम् । अनुत्तरानंदस्य सुज्ञत्वं भीमसिंहस्य श्रेष्ठत्वमित्यर्थः ॥ ५४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामेक

सर्वविद्याविशेषज्ञो भीमसिंहोऽखिलांश्च तान् ॥ जित्वाऽऽप सर्वविद्यासु सिंहत्वं चैक एव सः ॥ ५१ ॥ पंडितैर्हेतुनानेन भीमसिंह इति स्मृतः ॥ पांडित्यं यस्य पुरतः कश्चिद्वक्तुं क्षमो न कौ ॥ ५२ ॥ इत्थं सुकीर्तिः सकलार्यमान्यो यं शाकवृद्ध्याह्वयमाह सर्वम् ॥ रहस्यकं तं गुरुभीमसिंहानंदं त्रिपंचाभिधमानताः स्मः ॥ ५३ ॥ योगानंदमुखानां त्रिगुरूणां यः शृणोति सच्चरितम् ॥ प्रपठेद्वा लभतेऽसौ सुयोगतां सुज्ञतां तथा श्रैष्ठ्यम् ॥ ५४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे योगानंदादिगुरुत्रयवर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥ श्रीदेशिकेन्द्र उवाच ॥ अंतर्निष्ठः शाकवृध्यानंदोऽप्यहरहर्निशि ॥ शाकंभर्याख्यदेव्या यश्चक्रे पूजां सुभक्तितः ॥ १ ॥ षष्टिशाकान्वितैरन्नैर्नैवेद्यं नियतांतरः ॥ नित्यं समर्पयामास शाकानानीय यत्नतः ॥ २ ॥ इत्थं नियमिनस्तस्य कदाचित्कथान्वितस्य च ॥ ग्रीष्मर्तुसमये प्राप्ते तदा शाकास्तु नोऽभवन् ॥ ३ ॥ तस्मिन्वर्षेऽल्पवृष्टित्वान्नद्यो वाप्यः सरांसि च ॥ कूपाश्च शुष्कतां प्रापुर्वनान्युपवनानि च ॥ ४ ॥ शाका आसंस्ततोऽलभ्यास्तथा धान्यमहर्घता ॥ कृच्छ्राद्धान्यस्य लाभोऽभूत् शाकलब्धिस्तु नाभवत् ॥ ५ ॥ शाकवृध्याभिधश्चासीद्बहुधान्यस्य संग्रही ॥ शाकांश्चानीतवान्यत्नात्षष्टितोऽल्पानतोऽमुना ॥ ६ ॥

त्रिंशः सर्गः ॥ ३१ ॥ द्वात्रिंशे चैकपंचाशत्पद्यैः शाकर्द्धिभक्तितः । अंबिकैवावतीर्णेति शीलाभट्टारिकोच्यते ॥ ३२ ॥ अंतर्निष्ठ इति ॥ १ ॥ स इति योज्यम् “ अस्त्री शाकं हरितकम् ” इति कोशाच्छाकशब्दस्य पुंस्त्वम् ॥ २ ॥ नियमिनः नियमवतः ॥ ३ ॥ शाकानुत्पत्तौ हेतुमाह तस्मिन्निति । ॥ ४ ॥ धान्यमहर्घता चासीदिति योज्यम् ॥ ५ ॥ अतः शाकाल्पलाभाद्धेतोः अमुना शाकवृद्धिना देव्यै नैवेद्यं निवेदनीयमन्नं नार्पितमिति योज्यम् ॥ ६ ॥

॥ ७ ॥ स्रवचक्षुः साश्रुः । दृढं व्रतं षष्टिशाकार्पणरूपं यस्य ॥ ८ ॥ यस्मिन् व्रते ते तुभ्यं शाकषष्ट्या सहान्नरूपनिवेदनीयार्पणं तद्व्रतं बहुकालं निर्वाहितम् ॥ ९ ॥ ननु ममात्मजत्वं त्वयि कथम् । येनात्मजव्रतनिर्वाहकत्वं मयि स्यादिति चेत्तत्र जगज्जनन्यां त्वयि मन्मातृत्वसंभावनेन मत्कृतव्रतनिर्वाहकत्वं योग्यमित्याह—एकेति द्वाभ्याम् । एका असहाया।अजा जन्मरहिता त्रिगुणा सत्त्वरजस्तमोमयी । "बह्वीरात्मसमानरूपास्त्रिगुणात्मिकाः प्रजाः सृजंतीति" श्रुतौ । त्वं महत्तत्त्वादेर्जगतो मातासि । तस्मिन् जगति स्थितस्य मम माता नासि किम् अपि तु अस्येव । तथा च श्रुतिः " अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् " इति । जगज्जनन्यां त्वयि मज्जननीत्वमस्त्येवेत्यर्थः ॥ १० ॥ किं च लोके अत्यंतं ज्ञानहीनस्य पुत्रस्य यदिच्छितमत्यंत

नैवेद्यं नार्पितं देव्यै ह्यहं चान्नं न भक्षितम् ॥ तृतीयेथ दिने रात्रौ देवीमूर्तेः स्थितोऽग्रतः ॥७॥ श्रीदेवीं प्रार्थयामास शाकंभर्यभिधां पराम्॥प्रेमगद्गदया वाचा स्रवच्चक्षुर्दृढव्रतः॥८॥शाकवृध्यानंद उवाच॥मातस्त्वया मे बहुकालमेतद्व्रतं सुनिर्वाहितमात्मजस्य ॥ यस्मिन्हि नित्यं किल शाकषष्ट्या सहान्ननैवेद्यसमर्पणं ते ॥ ९ ॥ एका ह्यजा च त्रिगुणा सृजंती बह्वीः प्रजाश्चात्मसमानरूपाः ॥ इति श्रुतौ त्वं महदादिविश्वमातासि तत्स्थस्य न मे किमंब ॥ १० ॥ अत्यज्ञबालस्य यथा त्रिलोके यद्वांछितं पूर्यत एव मात्रा ॥ सुदुर्लभं चापि तथा त्वयैतन्निर्वाहितं देवि परं व्रतं मे ॥ ११ ॥ त्वं शक्तिराद्याऽखिलगा विना त्वां कर्तुं पुमान्नाण्वपि कश्चिदीशः ॥ शक्त्या ह्य एवाऽखिलकृज्जनेऽतः सर्वैः कृतं यत्तु कृतं त्वयैव ॥ १२ ॥ कृतापराधेऽपि न जातु माता हीषत्प्रकुप्यत्यनृजौ शठे च ॥ बहुप्रजायाः सकलास्तु पुत्राः संत्येव तुल्याः सुधियोऽधियश्च ॥ १३ ॥

दुष्प्राप्यमपि तन्मात्रा पूर्णं क्रियते यथा तथा श्रेष्ठमेतत्षष्टिशाकार्पणरूपं मम व्रतं त्वया संपादितम् ॥ ११ ॥ सर्वशक्तिरूपायां त्वय्येतन्नाश्चर्यमित्याह—त्वमिति । अखिलगा सर्वगता । शक्तियुक्त एव सर्वकार्यकर्ता भवति अतो जने लोके सर्वजनैः कृतं तत्त्वयैव कृतमस्ति । सर्वकार्यकर्त्र्यां त्वयि मत्कार्यसंपादनं नाश्चर्यमिति भावः ॥ १२ ॥ किं च अनृजौ कुटिले मूर्खे च पुत्रे कृतोऽपराधो येन तथाविधेऽपि माता ईषदपि कदाचिन्न कुप्यति । हीति निश्चयेन । किंतु बह्वपत्याया मातुस्तु सुबुद्धयो बुद्धिहीनाश्च सर्वे पुत्राः समानाः संति । उपासनाऽविदुषि मूढे मयि षष्टिशाकार्पणव्रतापूरणेन कोपं कर्तुं नार्हसीति

भावः ॥ १३ ॥ किं च शाकपूरणेन लोकरक्षकत्वं तवातिप्रसिद्धमित्याह—अवर्षण इति त्रिभिः । पूर्वं भूमौ शतवर्षमनावृष्टौ सत्यां धान्याभावेन क्षुधितान् दुर्गमाख्यदैत्यपीडितांश्च सर्वान् जनान् दृष्ट्वा दयायुक्ता सती हे मातस्त्वमवतीर्णा महर्षिप्रमुखकृतस्तवनेनातिसंतुष्टा चाभूः ॥ १४ ॥ केन रूपेण नाम्ना चावतीर्णेत्यत आह—करैरिति । किंभूता त्वं चतुर्हस्तैः फलपुष्पमूलपत्रयुक्तशाकान् दधती धारयंती एकहस्ते कमलमेकहस्ते बाणानेककरे चापं धनुश्चैकहस्ते दधतीत्यर्थः । अक्ष्णां शतं यस्यां सा शताक्षीत्यर्थः । असिताभा कृष्णकांतिः । इत्थंतनुरेतादृशशरीरा शाकंभरीनाम्नी इज्यैः पूज्यैरपि पूज्या । तद्रूपमुक्तं मार्कंडेयपुराणे रहस्ये । “ शाकंभरी नीलवर्णा नीलोत्पलविलोचना । गंभीरनाभिस्त्रिवलीविभूषिततनूदरी । सुकर्कशसमोत्तुंगवृत्तपीनघनस्तनी । मुष्टिं

अवर्षणे प्राक् तु शताब्दमुर्व्यां तान्दुर्गमार्तान्क्षुधितांश्च सर्वान् ॥ दृष्ट्वाऽवतीर्णाव दयायुता त्वं महर्षिमुख्यस्तवतोऽतितुष्टा ॥ १४॥
करैश्चतुर्भिः फलपुष्पमूलपत्राढ्यशाकान्कमलं च बाणान् ॥ चापं दधत्यक्षिशताऽसिताभा शाकंभरीत्थंतनुरिज्यपूज्या ॥ १५ ॥
आर्द्रा कृता भूः करुणार्द्रनेत्रैः शाकैः ससस्या धनुरुत्थबाणैः ॥ हतस्त्वया दुर्गमदैत्य एवं विश्वार्तिहंत्र्याऽहमुपेक्षितः किम् ॥ १६ ॥
श्रीदेशिकेंद्र उवाच ॥ पद्याष्टकस्तवेनेत्थं स्तुता शाकंभरी शिवा ॥ शाकवृद्ध्यभिधेनाथ साविर्भूता विलोकिता ॥ १७ ॥ सोऽतितुष्टो दृशा दृष्ट्वा साक्षाद्देवीं पुरःस्थिताम् ॥ ननाम दंडवद्भूमौ रोमांचांकितविग्रहः ॥ १८ ॥ स तिष्ठन्नित्युवाचांबां त्वदंघ्र्योरीक्षणादहम् ॥ धन्योऽब यौ सुदुर्दर्शौ योगिनामपि कृच्छ्रतः ॥ १९ ॥ किं मयाऽऽचरितं पुण्यमनंतासु जनिष्यतः ॥ साक्षात्त्वद्दर्शनं जातं येन मज्जन्म सार्थकम् ॥ २० ॥

शिलीमुखापूर्णं कमलं कमलालया । पुष्पपल्लवमूलादिफलाढ्यं शाकसंचयम् । काम्यानंतरसैर्युक्तं क्षुत्तृण्मृत्युजरापहम् । कार्मुकं च स्फुरत्कांति बिभर्ति परमेश्वरी । शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्तिता ” इति ॥ १५ ॥ एतादृशावतारकृत्यमाह—आर्द्रेति । त्वया कृपार्द्रनेत्रैः तज्जन्यजलैर्भूमिरार्द्रा कृता शाकैर्धान्ययुक्ता च कृता । धनुःसृष्टबाणैर्दुर्गमाख्यदैत्यो हतः । एतच्च तत्रैवोक्तम् “ तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् । दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ” इति । एवं विश्वपीडाहन्त्र्या त्वयाऽहं किमर्थमुपेक्षितः । षष्टिशाकलाभेन व्रतपूर्णतां कुर्वित्यर्थः ॥ १६ ॥ आविर्भूता सती दृष्टा ॥ १७ ॥ १८ ॥ धन्योस्मि । यौ चरणौ । कृच्छ्रतः कष्टेन ॥ १९ ॥ जनिषु जन्मसु । अतः पुण्यात् सार्थकं कृतार्थम् । जातमिति शेषः ॥ २० ॥

विश्वजनैः जगज्जनन्यास्तव स्तवनं कथं कार्यं न कथमपीत्यर्थः । यतः प्राणिनां बुद्धिवाण्योः प्रवर्तकैवासि ॥ २१ ॥ २२ ॥ करात् हस्तात् ॥ २३ ॥
अनिच्छया अनिच्छाप्रारब्धेन भविष्यतीत्यनुवृत्तिः ॥ २४ ॥ २५ ॥ सक्षयं नाशयुक्तम् ॥ २६ ॥ तावत् तदैव ॥ २७ ॥ तस्याः पत्न्याः ॥ २८ ॥



किंचिज्ज्ञेन मया किं ते कार्यो विश्वजनैः स्तवः ॥ धीवाक्प्रवर्तकैव त्वं सर्वेषामपि देहिनाम् ॥ २१ ॥ इति तस्य वचः श्रुत्वा तमाहांबा तिवत्सला ॥ मया त्वद्वांछितं ज्ञातं तत्सर्वं पूरयाम्यहम् ॥२२॥ इत्युक्त्वा सा कराच्छाकान्दत्त्वानेकान्फलानि च ॥ प्राहाथ शाकवृद्धिस्ते भविष्यति गृहेऽञ्जसा ॥२३॥ धनधान्यादिकं सर्वं तथात्यंतमनिच्छया ॥ इह भुक्त्वाखिलान्भोगानंते यास्यसि मद्गतिम् ॥२४॥ यदन्यद्वां छितं चास्ति तन्मे ब्रूहि ददामि ते ॥ मां सर्वकामदां लब्ध्वा नैव वांछाऽवशिष्यते ॥२५॥ श्रुत्वेति शाकवृद्धचाख्यः प्राह त्वत्पाददर्शनात् ॥ विनान्यन्नैव कांक्षेऽहं यतः सर्वं च सक्षयम् ॥ २६ ॥ तावदाहास्य पत्नीत्थं नावयोरस्ति संततिः ॥ अतस्तां देहि तुष्टा चेद्भ तस्त्वं सर्वकामदा ॥ २७ ॥ तस्याश्चेत्थं वचः श्रुत्वा शाकंभर्याह दंपती ॥ युवयोर्भालदेशे तु नापत्यं विधिनार्पितम् ॥ २८ ॥ अतो हमेव वां कन्या भूत्वा वांछां प्रपूरये ॥ अजन्मापि वशा भक्त्या युवयोरेकचित्तयोः ॥ २९ ॥ वत्स यत्त्वत्कृतं स्तोत्रं मम प्रीतिकरं महत् ॥ पठतां शृण्वतां वापि संपत्संततिवर्धनम् ॥ ३० ॥ श्रीदेशिकेन्द्र उवाच ॥ इत्युक्त्वांतर्दधे देवी शाकवृद्धचाख्यपूजिता ॥ ततः स भार्यया शाकान्पक्त्वान्नानि तथार्पयत् ॥ ३१ ॥ नैवेद्यं पश्चिशाकाढ्यं मुदा देव्यै ततः स्वयम् ॥ सुवासिनी कुमार्याढ्यो बुभुजे ब्राह्मणान्वितः ॥ ३२ ॥ सपत्नीकस्तदारभ्य शाकवृद्धिरिति श्रुतः ॥ दूराच्छाकान्नवित्तादि ददुरानीय वै जनाः ॥ ३३ ॥

वां युवयोः । अजन्मा जन्मरहितापि वशा स्वाधीनास्मीत्यर्थः ॥ २९ ॥ स्तोत्रश्रवणादेः फलं ददाति । वत्सेति ॥ ३० ॥ ३१ ॥ देव्यै इत्यंतं पूर्वा न्वयि । ततः सुवासिन्या कुमारिकया च युक्तो ब्राह्मणैरपैश्च युक्तः स्वयं भुक्तवान् ॥ ३२ ॥ सपत्नीक इति पूर्वान्वयि ॥ ३३ ॥

पूर्वार्द्धं पूर्वान्वयि॥ ३४ ॥ ३५॥शुक्लचंद्रः संपन्नानां चोरभयाजनकत्वेन संतोषं यथा करोति तथा मातापित्रोर्मुदं कुर्वतीति पूर्वान्वयि।उत्तरार्द्धमुत्तरान्वयि ३६॥ सांबम् अंबासहितम् ॥ ३७ ॥ प्राकृता लौकिकी । इदं वचनं हृदि बुध्यतां गोपनीयमित्यर्थः । अजा जन्मरहिता ॥ ३८॥ अल्पैश्वर्यमन्यं पतिं नोत्सहे

अंजसा तमथाचंतं शाकंभर्याः प्रसादतः ॥ ततः कालेन तत्पत्नी कन्यारत्नमजीजनत् ॥ ३४ ॥ शीलाभट्टारिकेत्यस्याः पित्रा नाम कृतं मुदा ॥ ववृधे साऽथ चार्वंगी सुरूपाऽथ गुणान्विता ॥ ३५ ॥ पित्रोर्मुदं प्रकुर्वंती शुक्लेंदुर्धनिनामिव ॥ अथाष्टवर्षा सा देवी स्वविवाहे कृतोद्यमम् ॥ ३६ ॥ सांबं पितरमाहेदं शीलाभट्टारिका वचः ॥ कन्योवाच ॥ भो मातर्भोः पितर्नैव विवाहः क्रियतां मम ॥ ३७ ॥ प्राकृताहं यतो नास्मि कन्येदं हृदि बुध्यताम् ॥ भक्त्याऽवतीर्णा युवयोः साक्षादहमजांबिका ॥ ३८ ॥ त्वन्मुदेऽत्र कियत्कालं स्थित्वा यास्ये स्वकं पदम् ॥ मत्पतिः परमैश्वर्योऽन्यं नाल्पैश्वर्यमुत्सहे ॥ ३९ ॥ श्रुत्वेत्थं पितरौ ज्ञात्वा तां साक्षात्पर देवताम् ॥ तद्विवाहमतिं त्यक्त्वा तूष्णीमेवावतस्थतुः ॥ ४० ॥ विनाभ्यासाच्छ्रुतीः सर्वाः सांगाः शास्त्राणि सर्वशः ॥ सार्थं चाध्यग मद्देवी पितृसान्निध्यवासतः ॥ ४१ ॥ पितुः शालास्थिताञ्छिष्यान्स्वयं सर्वमशिक्षयत् ॥ शीलाभट्टारिकामित्थं दृष्ट्वा बुद्धिमतीं पिता ॥ ४२ ॥ सर्वमंत्ररहस्यं च ददौ तस्यै विधानतः ॥ ततः पूजाक्रमं चक्रे शीलाभट्टारिकांबिका ॥ ४३ ॥ देवतापि स्वयं लोके संप्र दायप्रवृत्तये ॥ शाकवृद्ध्यभिधश्चाथ बभूवात्मपरायणः ॥ ४४ ॥ शाकंभरीपूजनभक्तिदार्ढ्याद्यः प्राप सिद्धिं त्वपरैर्दुरापाम् ॥ तं शाकवृद्ध्याह्वयमात्मनिष्ठं गुरुं चतुःपंचमितं नताः स्मः ॥ ४५ ॥

वरीतुमिति शेषः ॥ ३९ ॥ ४० ॥ सर्वशः सर्वाणि । सार्थं यथा स्यात्तथा । पितृसान्निध्यवासतः पितृसमीपे वासेनाध्यगमत् । प्राप्तवती ॥ ४१ ॥ सर्वं शास्त्रादि । उत्तरार्द्धमुत्तरान्वयि ॥ ४२ ॥ विधानतः पूर्णाभिषेकविधिना ॥ ४३ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ४४ ॥ चतुःपंचाशन्मितं शाकवृद्ध्यानंदं

प्रणमति । शाकंभरीत्यादि । स्पष्टोऽर्थः ॥ ४५ ॥ स्त्री अपि सन्मतिः उत्तमबुद्धिः ॥ ४६ ॥ यस्मिन् ज्ञानवानपि मुह्यति तं परमात्मानमस्पृश्यैव तस्मिन्नेवेश्वरे नानाविधं जगत् यया कृतं तस्यामिदमध्यापनकर्तृत्वं नाश्चर्यमिति योज्यम् ॥ ४७ ॥ ४८ ॥ ४९ ॥ पंचपंचाशत्तमं गुरुं शीलाभट्टारिकांबां प्रणमति—इत्थमिति । सत्प्रवृत्त्यै सत्संप्रदायप्रवृत्त्यै । शीलापूर्वा या भट्टारिका शीलाभट्टारिकानाम्नी तां नताः स्मः ॥ ५० ॥ एतत्सर्गोक्तगुरुद्वयकथाश्रवणादिफलमाह—चरितमिति । शाकवृद्ध्यानंदचरितश्रवणादिना धनधान्यवृद्धिः शीलाभट्टारिकाचरितश्रवणादिना उरु महत् शीलम् अद्रोहादिसुस्वभावः स्यादि

श्रीदेशिकेन्द्र उवाच ॥ शीलाभट्टारिका शिष्यान्बहुदूरात्समागतान् ॥ शास्त्राण्यध्यापयामास जात्या सा स्त्र्यपि सन्मतिः ॥४६॥ नातिचित्रमिदं तस्यां पराशक्त्यां गुणाकर ॥ अस्पृश्यैव परात्मानं तस्मिन्नेव यया जगत् ॥ ४७ ॥ कृतं नानाविधं यस्मिन्ज्ञानवानपि मुह्यति ॥ शीलाभट्टारिका देवी सर्वज्ञेत्थं बभूव सा ॥ ४८ ॥ कृतं नानाविधं काव्यं तया देव्यातिसद्रसम् ॥ प्रसिद्धं चोत्तरे देशे पंडितैरपि सत्कृतम् ॥ ४९ ॥ इत्थं परांबा भुवि सत्प्रवृत्त्यै शीलाद्यभट्टारिकनाम्न्यभूद्या ॥ तां शाकवृद्धेस्तनयां तु पंचपंचाशदाख्यं गुरुमानताः स्मः ॥ ५० ॥ चरितं हि शाकवृद्धेः शीलाभट्टारिकांबिकायाश्च ॥ शृण्वंति ये पठेयुः स्यात्तेषां धनकणर्द्धिरुरुशीलम् ॥ ॥५१॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे द्वात्रिंशः सर्गः ॥३२॥ श्रीदेशिकेन्द्र उवाच ॥ अथोज्जायिन्यां राजासीच्चित्रांगद इति श्रुतः ॥ तस्यापुत्रस्य कन्ये द्वे शारदा च सुलोचना ॥ १ ॥ सुबुद्धेस्तत्प्रधानस्य कन्या मत्स्योदरीति च ॥ शैवाद्गणात्त्रयः पुत्रास्तास्वासुर्गंधमादनात् ॥ २ ॥

त्यर्थः ॥ ५१ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां द्वात्रिंशः सर्गः ॥ ३२ ॥ रसाष्टपद्यैस्त्रित्रिंशेऽनुगः शंभोरुपाखरः । भुव्यभूत्रिसुतास्तस्माच्चोच्यंते मध्यविक्रमाः ॥ ३३ ॥ शीलाभट्टारिकानंतरं भट्टिः संप्रदायप्रवर्तकोऽभूत् । तस्य सभ्रातृकस्य जन्मादिचरित्रं वक्तुमुपक्रमते—अथेत्यादि यावत्सर्गसमाप्ति ॥ १ ॥ गंधमादननामकाच्छिवगणात् तासु शारदासुलोचनामत्स्योदरीषु त्रयः पुत्रा बभूवुः । अत्र गणशब्दः शिवसेवकवाची ॥ २ ॥

तेषां नामान्याह—ज्येष्ठ इति । अंत्यभूः कनिष्ठः स एव भट्टिरेव देशिकः । अत्रार्कशब्दोर्कगुणवचनः । सूर्यतुल्य इत्यर्थः ॥ ३ ॥ ज्येष्ठोऽपि भर्तृहारिः विक्रमात् विक्रममारभ्य शिष्यप्रशिष्यक्रमेण शिष्यपंक्तौ त्रिणवत्यंतरेऽग्रे जातः । विक्रममारभ्य त्रिणवतिसंख्याक इत्यर्थः ॥ ४ ॥ कनीयसि भट्टिसंज्ञके । ज्येष्ठे भर्तृहरौ शिष्यशिष्यत्वं विक्रमात्रिणवतिसंख्यायां भर्तृहारिः शिष्यः कथं जातः । मनुष्यमात्रस्य शतायुष्ट्वप्रसिद्धेस्त्रिणवतिपुरुषपर्यंतं भर्तृहरेः कथं स्थायित्व

ज्येष्ठो भर्तृहरिर्मध्यो विक्रमो भट्टिरंत्यभूः ॥ स एव विक्रमार्कस्य कनीयानपि देशिकः ॥३॥ ज्येष्ठोऽपि भर्तृहर्याख्यो विक्रमाच्छिष्यशिष्यतः ॥ त्रिणवत्यंतरेऽग्रेभूच्छिष्यपंक्तौ स सर्ववित् ॥४॥ श्रीमयूरेश्वर उवाच ॥ इदं चित्रमिवाभाति गुरुत्वं तु कनीयसि ॥ ज्येष्ठे च शिष्यशिष्यत्वं विक्रमार्कस्य धीमतः ॥ ५ ॥ शैवाद्गणान्मृत्युलोके कथं पुत्रास्त्रयस्तथा ॥ विस्तरेणाखिलं चैतत्सम्यगेवाद्य कथ्यताम् ॥६॥ श्रीदेशिकेंद्र उवाच ॥ शैवो गणस्तु कैलासे कदाचिद्गंधमादनः ॥ धिया कर्मानुसारिण्या पश्चाच्छंभुं निनिंद सः ॥७॥ श्रुत्वा निंदां शिवः क्रुद्धोऽशपत्तं गंधमादनम् ॥ उज्जयिन्यामिलापृष्ठे रासभो भव दुर्मते ॥८॥ श्रुत्वेति शापं भीतोऽसौ प्रार्थयामास शंकरम् ॥ उच्छापं देव देहीति स्वभृत्ये त्वं दयां कुरु ॥ ९ ॥ सदयोऽथ शिवः प्राह द्वादशाब्देषु रासभीम् ॥ योनिं मुक्त्वा निजं रूपं लप्स्यसे तत्र भूपतेः ॥ १० ॥ ज्येष्ठकन्यार्थितवराक्षतस्पर्शेन केवलम् ॥ मां च यास्यसि कैलासे पूर्ववद्गंधमादन ॥ ११ ॥ श्रीदेशिकेंद्र उवाच ॥ अथोज्जयिन्यां जातोऽसौ कुलालस्य गृहे खरः ॥ अभून्महांश्च कालेन पृष्ठे मृद्वाहनक्षमः ॥१२॥ तज्जन्मना कुलालस्य गृहे श्रीर्वृद्धिमागता ॥ तेन तुष्टः कुलालोऽपि गृह एव बबंध तम् ॥ १३ ॥

मित्यर्थः॥ ५॥ भवद्भिरिति शेषः॥ ६॥ पश्चाद्भागे निनिंद निंदां कृतवान् ॥ ७॥ ८॥ उच्छापं शापमोक्षम् ॥ ९॥ तत्र भूपतेश्चित्रांगदस्य ज्येष्ठकन्या शारदानाम्नी तया अर्पिताः ये वरोद्देशेन अक्षताः विवाहसमयोचितवरवरणार्थकत्वेन वरमस्तके बध्वा समर्प्यमाणास्तंदुलाः तेषां स्पर्शेन केवलं स्पर्शमात्रेणैवेत्यर्थः । रासभीं योनिं मुक्त्वा निजं रूपं लप्स्यसे प्राप्स्यसे । किंच हे गंधमादन पूर्ववत् मांप्रति कैलासे यास्यतीति द्वयोः श्लोकयोरन्वयः ॥ १० ॥ ११॥ १२॥ १३॥

मृदं मृत्तिकामानीय तत्पृष्ठोपरीति शेषः । वर्षे इत्याद्युत्तरान्वयि ॥ १४ ॥ उदित उक्तः । उत्तरार्द्धमुत्तरान्वयि ॥ १५ ॥ स्वेशं स्वस्वामिनम् । खरे खरजातौ बभूवेत्यध्याहारः ॥ १६ ॥ प्राक्स्मृत्या पूर्वोदितशिववाक्यस्य द्वादशाब्दांते शापमुक्तो भविष्यसीत्यस्य स्मरणेन । ततः निशीथादन्यतः अन्यकाले नोवाच । भीतस्वांतः भीतमनाः । यतः खरो मनुष्यवद्भाषतेऽतो मद्गृहे पिशाचबाधा जाता किम् । इत्थम् इति आहेत्य

मृदमानीय भक्ष्यार्थं चणकांश्च तृणं ददौ ॥ इत्थं गतं द्वादशाब्दं वर्षे प्राप्ते त्रयोदशे ॥ १४ ॥ उच्छापसमयः प्राप्तस्तस्य प्राक्छंभुनोदितः ॥ अथैकस्मिन्दिने रात्रौ निशीथे रासभस्तु सः ॥ १५ ॥ मनुष्यवाण्या प्रत्यक्षं कुलालं स्वेशमाह्वयत ॥ विस्मितः कुंभकृच्छ्रुत्वा खरे वाचं तु मानवीम् ॥ १६ ॥ नित्यं निशीथे प्राहाऽसौ प्राक्स्मृत्या न ततोन्यतः ॥ भीतः स्वांतः कुलालोऽथ प्राहेत्थं किं गृहे मम ॥ १७ ॥ जाता पैशाचिकी बाधा यतो वक्ति खरो नृवत् ॥ अथैकस्मिन्दिने धैर्याद्गृहत्काष्ठधरः खरम् ॥ १८ ॥ गत्वाऽऽहेति कुलालस्तं किं मामाह्वयसे निशि ॥ श्रुत्वेत्थं तं खरः प्राह शृणु तात वचो मम ॥ १९ ॥ गत्वा राजगृहं राज्ञः कन्यां याचस्व मे स्त्रियम् ॥ नात्रेषदपि शंकां त्वं कुरु राजात्मजां तु मे ॥ २० ॥ दास्यत्येव विवाहार्थं त्वां च संमानयिष्यति ॥ श्रुत्वेत्याह कुलालस्तं त्वं नूनमासि रासभः ॥ २१ ॥ राज्ञः कन्या रासभाय कथं लभ्या भविष्यति ॥ श्रुत्वैव मद्वचो राजा दूतैर्मां ताडयिष्यति ॥ २२ ॥ दर्शनं दुर्लभं राज्ञो भाषणं तेन मे कथम् ॥ मूर्खमाहुः खरं लोके त्वं तु साक्षात्स एव हि ॥ २३ ॥ त्वद्वाण्या चेन्नृपं यास्ये स्यान्ममापि खरोपमा ॥ इत्युक्त्वा तं खरं गत्वाऽस्वपद्गेहेऽथ कुंभकृत् ॥ २४ ॥ द्वितीयेऽह्नि तथैवाह निशीथे रासभः पुनः ॥ चतुःपंचसु चाहःसु सममेव खरोदितम् ॥ २५ ॥ श्रुत्वा कुलाल इत्याह स्वचित्तेऽथ विचारयन् ॥ नेयं पिशाचबाधास्ति देवकृत्यं तु दृश्यते ॥ २६ ॥

न्वयः । किं गृहे ममेत्युत्तरान्वयि ॥ १७ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १८ ॥ १९ ॥ स्त्रियं कर्तुमिति शेषः । राजेत्याद्युत्तरान्वयि । आत्मजां शारदानाम्नीम् ॥ २० ॥ २१ ॥ २२ ॥ तेन राज्ञा सह । लोके मूर्खं खरमित्याहुः त्वं तु खर एवासीत्यर्थः ॥ २३ ॥ २४ ॥ समानमेव खरवाक्यमा

सीदित्यर्थः ॥ २५ ॥ २६ ॥ नृवत् मनुष्यवत् । पशुषु निंदार्होऽपि । श्वः प्रभाते ॥ २७ ॥ तत् कन्यां नृपो दास्यतीति खरोक्तम् । तथैव भविष्यति कन्यां दास्यतीत्यर्थः । उत्तरार्द्धमुत्तरान्वयि । इति निश्चित्य निशीथे राजानं गमिष्यामीति खरमुक्त्वा सूर्योदये राजसभां धैर्येण ययावित्यन्वयः

यतः साक्षान्नृवद्वक्ति खरो निंद्यः पशुष्वपि ॥ गत्वा नृपाय वक्तव्यं श्वः सर्वं खरचेष्टितम् ॥२७॥ चेद्दैवकृतमेवास्ति भविष्यति तथैव तत् ॥ निश्चित्येति खरं चोक्त्वा निशीथे चोदिते रवौ ॥ २८ ॥ राज्ञः सभां ययौ धैर्यात्कुलालः सभ्यसंकुलाम् ॥ स्थितो दूरं नृपं वक्तुमक्षमः सभ्यमध्यगम् ॥ २९ ॥ ततस्तूष्णीं चिरेणासौ ययौ गेहं तु कुंभकृत् ॥ द्वित्र्यहःसु च गत्वेत्थं पुनर्याति निजं गृहम् ॥३०॥ नृपश्चालक्ष्य तं प्राह स्वदूतं निकटस्थितम् ॥ कोऽयं नित्यं सभामेत्य स्थित्वा तूष्णीं च गच्छति ॥ ३१ ॥ वक्तव्यं किं मयाऽनेन चेद्गत्वा तं विचारय ॥ दूतोऽथ नृपतेराज्ञां श्रुत्वा पप्रच्छ तं तदा ॥ ३२ ॥ किमर्थं नित्यमायासि किं वक्तव्यं नृपेण ते ॥ दूतं प्राह कुलालोऽथ चेदेकांते नृपो मम ॥ ३३ ॥ शृणोति वाक्यमेकाकी तर्हि वक्ष्येऽहमादितः ॥ श्रुत्वेति दूतस्तद्वाक्यं गत्वा राज्ञे तथाब्रवीत् ॥ ३४ ॥ राजाहाखिलसभ्येषु गतेष्वेतस्य भाषणम् ॥ शृणोम्येकोऽहमत्रैव स्थीयतामिति तं वद ॥ ३५ ॥ तं तथाह पुनर्दूतः श्रुत्वा सोऽपि स्थिरोऽभवत् ॥ सदस्येषु गतेष्वेको राज्ञाहूतः स सन्निधौ ॥ ३६ ॥ भीतः कुलालस्तं प्राह मह्यं चेदभयं नृप ॥ दीयतेऽहं ततः सर्वं वक्ष्ये वृत्तांतमादितः ॥ ३७ ॥ राजाहाभयमेवास्ति ब्रूहि वृत्तं यथास्थितम् ॥ कुलालोऽथाह राजन्मे गृहेऽस्त्येको हि गर्दभः ॥ ३८ ॥ निशीथे स नृवद्वाक्यं मुहुर्वदाति निर्मलम् ॥ स नित्यं वक्ति मामित्थं त्वं गत्वा राजमंदिरम् ॥ ३९ ॥

॥ २८ ॥ सभ्यैर्व्याप्ताम् ॥ २९ ॥ चिरेण चिरकालं स्थित्वेत्यर्थः ॥ ३० ॥ ३१ ॥ मया सह अनेन कुलालेन किं वक्तव्यं चेत् गत्वा विचारय ॥ ॥ ३२ ॥ चेदित्युत्तरान्वयि ॥ ३३ ॥ ३४ ॥ त्वया स्थीयतां स्थातव्यमिति तं वद ॥ ३५ ॥ उत्तरार्द्धमुत्तरान्वयि ॥३६॥३७॥३८॥ त्वं गत्वेत्या

युत्तरान्वयि ॥ ३९ ॥ सः गर्दभः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ अथ प्रधानः विचार्य आह । कन्यायाः शारदायाः मृन्मयं मृत्तिकानिर्मितं क्रीडनालयं क्रीडार्थं तस्याः प्रासादांगणभुवि कारितं विशालं गृहं ' घरकुल ' इति ख्यातं चेत् असौ खरः सद्यः तत्क्षणमेव हिरण्मयं करिष्यति ॥ ॥ ४४ ॥ तदा हे कुंभकृत् कुंभकार अस्मै खराय कन्या दास्यते इति वृत्तं खरं प्रति ब्रूहि । इति प्रधानस्य वचः श्रुत्वा राजा अपि तथा यथा प्रधानोक्तं

मद्विवाहाय राज्ञस्तु कन्यां याचस्व शारदाम् ॥ निषिद्धोऽपि मया नित्यं पुनर्वक्ति तथैव सः ॥ ४० ॥ देवताकृत्यमेवेदं बाधा वास्ति पिशाचजा ॥ ज्ञायते न मया राजन्या खरोक्तिर्मनुष्यवत् ॥४१॥ मयेदं सर्वमाख्यातं खरेणोक्तं यथा श्रुतम् ॥ त्वया विचार्य राजेंद्र प्रोच्यतामस्य चोत्तरम् ॥ ४२ ॥ तत्खराय निशीथेऽहं कथयिष्ये त्वयोदितम् ॥ राजाहूयाथ सचिवं सुमतिं प्राह चाखिलम् ॥४३॥ विचार्याह प्रधानोऽथ मृन्मयं क्रीडनालयम् ॥ कन्यायाश्चेत्खरः सद्यः करिष्यति हिरण्मयम् ॥ ४४ ॥ तदास्मै दीयते कन्या ब्रूहीत्थं कुंभकृत्खरम् ॥ राजाप्याह तथाऽगत्य कुलालोऽथ गृहं निशि ॥ ४५ ॥ खरायाहाखिलं वृत्तं श्रुत्वा तं चाह गर्दभः ॥ तात लेपय तद्गेहं शकृता मम सर्वतः ॥ ४६ ॥ पश्चान्मद्दत्तपर्णोत्थं रसं सेचय चोर्ध्वतः ॥ भर्जयाथाग्निना गेहं भविष्यति हिरण्मयम् ॥ ४७ ॥ श्रुत्वेति प्रातरुत्थाय कुलालोऽपि तथाऽकरोत् ॥ अग्निना भर्जितं रात्रौ प्रातर्गत्वा विलोकितम् ॥ ४८ ॥ हिरण्मयं कुलालेन हर्षाद्राज्ञे तथोदितम् ॥ प्रधानाढ्यो नृपो दृष्ट्वा कंन्यागेहं हिरण्मयम् ॥ ४९ ॥ प्राहाथेति खरो नूनं कश्चिद्देवो न लौकिकः ॥ कुलालं प्राह राजास्मै दत्ता कन्या मया खलु ॥ ५० ॥ सुलग्ने चाशु कर्तव्यो विवाहः खरकन्ययोः ॥ खराय दुहिता दत्ता नृपेणेति तदा खिलाः ॥ ५१ ॥

तथैवाह । आगत्येत्याद्युत्तरान्वयि ॥ ४५ ॥ मम विठया सर्वं मृन्मयं राजकन्याक्रीडागृहं लेपय ॥ ४६ ॥ ४७ ॥ यथोक्तं तथाऽकरोत् कृतवान् ॥ ॥ ४८ ॥ हिरण्मयमिति पूर्वान्वयि । तथा उदितं सुवर्णमयं जातमिति कथितम् । उत्तरार्द्धमुत्तरान्वयि ॥ ४९ ॥ अस्मै खराय ॥ ५० ॥ उत्तरार्धमुत्त

रान्वयि ॥ ५१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५२ ॥ आनयत् आनीतवान् । खरकन्ययोरित्युत्तरान्वयि ॥ ५३ ॥ अत्र वरस्य पशुत्वाद्विवाहविधिमंतरा केवलमक्षतारोपणमाह । पटमिति । अंतरे मध्ये । पश्चाद्वधूकरात् शारदाहस्तेन खरमूर्ध्नि अक्षताः निक्षिप्ताः जनैरिति शेषः । तावदेवात्र विवाहेऽद्भुतं जातमित्यन्वयः ॥ ५४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५५ ॥ दिव्यकांतियुक्तं पूर्ववत्स्वं रूपं प्रापेत्यर्थः । उत्तरार्द्धमुत्तरेण योज्यम् ॥ ५६ ॥ तत् वरस्य

पौराः श्रुत्वा निनिंदुस्तं पश्चान्नैषज्जगुः पुरः ॥ मंडपादि नृपः कृत्वा सर्वं सन्मंगलोचितम् ॥ ५२ ॥ पुष्पमुक्ताहेमस्रग्भिः खरं चालंकृतं ततः ॥ मंडपं वाद्यनिर्घोषैरानयत्खरकन्ययोः ॥ ५३ ॥ पटं धृत्वांतरे विप्राः प्रोचुर्मंगलमक्षतान् ॥ चिक्षिपुर्निखिलाः पश्चात्खरमूर्ध्नि वधूकरात् ॥ ५४ ॥ निक्षिप्ताश्चाक्षतास्तावदद्भुतं जातमत्र वै ॥ त्यक्त्वा खरतनुं शापान्मुक्तः शिवगणो निजम् ॥ ५५ ॥ पूर्ववद्वपुरापासौ कांतिमद्गंधमादनः ॥ दिव्यरूपधरं दृष्ट्वा वरं तत्र समीपगाः ॥ ५६ ॥ बभूवुर्विस्मिताः सर्वे गत्वैके तन्नृपं जगुः ॥ नृपोऽप्येत्य सुरूपं तं दृष्ट्वा जामातरं हृदा ॥ ५७ ॥ संतुष्टोंऽतःपुरे वार्तां प्रेषयामास चारतः ॥ स्त्रियश्चाकर्ण्य संतुष्टास्तत्प्राग्दुःखं हि तत्त्यजुः ॥ ५८ ॥ जामाता गर्दभो राज्ञश्चेत्थं दुष्कीर्तिसंभवम् ॥ जामातरं नृपोऽथाह को भवान्वद तत्त्वतः ॥ ॥ ५९ ॥ त्वं कथं खरतां प्राप्तः कथं प्राप्तोऽथ सत्तनुम् ॥ स चाहाथ नृपं राजन्कैलासस्थः शिवानुगः ॥ ६० ॥ गंधमादननामाहं शंभोः शापात्खरोऽभवम् ॥ द्वादशैव समाः पश्चात्त्वत्कन्याकरगाक्षतैः ॥ ६१ ॥ स्पृष्टमूर्धाऽभवं शापान्मुक्तः श्रीशंभुशासनात् ॥ श्रुत्वाथ नृपतिः प्राह साक्षाच्छंभुसमीपगः ॥ ६२ ॥

दिव्यरूपम् । नृप इत्याद्युत्तरान्वयि ॥ ५७ ॥ चारतः दूतद्वारेण । प्राक् यद्दुःखं तत् त्यक्तवत्यः ॥ ५८ ॥ किं तत्प्राक् दुःखमतः आह । राज्ञः जामाता गर्धभो जात इत्यपकीर्तिजन्यमिति पूर्वान्वयि । तत्त्वतः यथार्थत्वेन ॥ ५९ ॥ सत्तनुम् उत्तमदेहं हेराजन्नित्याद्युत्तरान्वयि ॥ ६० ॥ पश्चाद्द्वादशवर्षानंतरमित्याद्युत्तरान्वयि ॥ ६१ ॥ श्रुत्वा जामातृवाक्यमिति शेषः । कैलासस्थितः शिवानुचरोऽयं बहुजन्मकृतपुण्यैर्मम कन्यायाः पतिः प्राप्तोऽस्तीति

नृपतिः प्राहेत्यन्वयः ॥ ६२ ॥ ततः किं वृत्तमित्यत आह स्थापिताविति । विवाहोक्तविधिनिमित्तम् ॥ ६३ ॥ यावद्विवाह आरब्धस्तावत् । स्रजं मालाम् । अन्यप्रेरिता न भवतीत्यनन्यचोदिता स्वबुद्ध्यैवेत्यर्थः ॥ ६४ ॥ अमात्यकन्या मत्स्योदरीनाम्नी ददौ अर्पितवती ॥ ६५ ॥ ६६ ॥ स च गंधमादनः ॥ ६७ ॥ राज्ञा बहुधा प्रार्थितः सन् वर्षपर्यंतं स्थिरोऽभवत् ॥ ६८ ॥ ६९ ॥ मद्भवाः मत्पुत्राः ॥ ७० ॥ सुबुद्धाः ज्ञानिनः इति राजानं

मत्कन्यायाः पतिः प्राप्तः पुण्यैर्बहुभवोद्भवैः ॥ स्थापितौ दंपती राज्ञा वेद्यां वैवाहिके विधौ ॥६३॥ तावत्सुलोचनानाम्नी राज्ञः कन्या कनीयसी ॥ स्रजं तस्यैव कंठेऽथ चिक्षेपानन्यचोदिता ॥ ६४ ॥ मत्स्योदर्यभिधामात्यकन्याप्यस्य स्रजं गले ॥ ददावित्थं स्त्रियस्तिस्रः स लेभे गंधमादनः ॥६५॥ राजामात्यौ च संतुष्टौ चक्रतुर्विधिपूर्वकम् ॥ कन्यादानं ततो राजा प्राह जामातरं मुदा॥६६॥ अपुत्रेण मया तुभ्यं दत्तं राज्यमकंटकम् ॥ स चाह नृपतिं राजन्यास्येऽहं शिवसन्निधिम् ॥ ६७ ॥ त्यक्त्वा स्वर्गसुखं किं स्यात्सुखं मे मर्त्यराज्यतः ॥ श्रुत्वेति प्रार्थितो राज्ञा बहुधाब्दं स्थिरोऽभवत् ॥६८॥ पुनर्गंतुं कृतोद्योगं तं स्तुवन्प्राह भूपतिः ॥ केनात्र राज्यं कर्तव्यं कैलासं तु गते त्वयि ॥ ६९ ॥ नृपमाश्वासयन्प्राह दुःखितं गंधमादनः ॥ भविष्यंति त्रयः पुत्रास्तिसृष्वेतासु मद्भवाः ॥७०॥ सुबुद्धाश्चातिबलिनः कृत्वा राज्यमकंटकम् ॥ करिष्यंति परां कीर्तिं मा चिंतां नृप कुर्विति ॥ ७१ ॥ गुंडराणाख्यमाहूय कुशलं गंधमादनः ॥ तमाह यामि कैलासं तेऽस्त्वितः पोषिते दया ॥ ७२ ॥ स्त्रियश्चाहेति युष्माभिर्यदाऽहं च स्मृतो हृदि ॥ तदाऽऽयास्ये समीपेऽहं युष्माकं गृहगो यथा ॥ ७३ ॥ श्वशुरौ स्वस्त्रियश्चेत्थं सांत्वयन्गंधमादनः ॥ पश्यत्स्वखिललोकेषु ययौ कैलासमूर्ध्वतः ॥ ॥ ७४ ॥ कैलासं तु गते तस्मिन्स्त्रियस्तिस्रः सुतत्रयम् ॥ शुभे सुषुविरे काले श्रुत्वामात्यनृपौ मुदा ॥ ७५॥ चक्राते जातकर्माणि दत्त्वा दानान्यनेकशः ॥ द्वादशाहे तु नामापि ताभ्यां तेषां पृथक् कृतम् ॥ ७६ ॥

प्राहेति पूर्वश्लोकस्थेनान्वयः ॥ ७१ ॥ यामि गच्छामि । पोषिते मयि इतः परं दयाऽस्तु ॥ ७२ ॥ अहं यदा स्मृतस्तदा युष्माकं समीपे गृहस्थित इवायास्ये ॥ ७३ ॥ ऊर्ध्वतः आकाशमार्गेण ॥ ७४ ॥ श्रुत्वा दौहित्रोत्पत्तिमिति शेषः । अमात्यनृपौ मुदेत्युत्तरान्वयि ॥ ७५ ॥ जातकर्माणि चक्राते

दौहित्राणामित्यर्थः । ताभ्यां नृपामात्याभ्याम् । तेषां दौहित्राणाम् ॥ ७६ ॥ ततः कालेनेत्याद्युत्तरान्वयि ॥ ७७ ॥ चित्रसेनो राजा सः प्रधानश्च उपनयनमप्यकरोत् ॥ ७८ ॥ त्रयः भर्तृहरिविक्रमभट्टयः ॥ ७९ ॥ उत्तरार्द्धे बभूवुरित्यध्याहारः ॥ ८० ॥ ८१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ८२ ॥ तत्प्रसिद्धम् अमात्यस्येदमामात्यं प्रधानत्वमित्यर्थः । हे विक्रम त्वमित्याद्युत्तरान्वयि ॥ ८३ ॥ वस वासं कुरु ॥ ८४ ॥ इति राज्यपालनरूपां व्यवस्थां

ज्येष्ठो भर्तृहरिः प्रोक्तो विक्रमार्कस्तु मध्यमः ॥ कनिष्ठो भट्टिरित्युक्तस्ततः कालेन ते त्रयः ॥७७॥ शुभलक्षणसंपन्ना जाताश्चैकादशाब्दिकाः ॥ अथोपनयनं तेषां चित्रसेनोऽकरोच्च सः ॥ ७८ ॥ प्राप्तविद्यास्त्रयोऽप्यासुर्गुरुभ्योऽभ्यासतत्पराः ॥ धनुर्विद्यासु कुशला नीतिशास्त्रविशारदाः ॥ ७९ ॥ दृष्ट्वा तान्गुणसंपन्नान्राजाऽमात्यमथाब्रवीत् ॥ कुमारास्तु त्रयोऽप्येते राजलक्षणलक्षिताः ॥ ८० ॥ राजा ज्येष्ठोऽत्र कर्तव्यः कनिष्ठोऽमात्य एव च ॥ मध्यमस्तु द्वयोर्मैत्र्या तिष्ठत्वत्राथ विक्रमः ॥ ८१ ॥ श्रुत्वेत्याह प्रधानोऽपि बाढमित्येव तं नृपम् ॥ चित्रसेनोऽथ संभारान्मेलयित्वोत्तमे दिने ॥ ८२ ॥ तद्भर्तृहरये राज्यं चाऽऽमात्यं भट्टये ददौ ॥ विक्रमं तु नृपः प्राह त्वं भर्तृहरिसख्यतः ॥ ८३ ॥ तत्साहाय्यं सदा कुर्वन्वस तताज्ञया मम ॥ विक्रमस्त्वित्थमुक्तोऽपि न मुदं प्राप चांतरे ॥८४॥ सचित्रसेनो नृपतिर्व्यवस्थां कृत्वेति चामात्ययुतः स्वपत्न्या ॥ ययौ वनं देवपुराणि पश्यन्प्रापात्मतां तत्र च सत्सुसंगात् ॥ ८५ ॥ सबंधोर्विक्रमार्कस्य जन्माख्यानमघापहम् ॥ पठेच्छृणोति यस्तस्य भवेत्पुत्रः पराक्रमी ॥ ८६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे विक्रमार्कजन्मकथनं नाम त्रयस्त्रिंशः सर्गः ॥३३॥ श्रीदेशिकेंद्र उवाच ॥ चित्रसेने गतेऽरण्यं राज्यं भर्तृहरिः स्वयम् ॥ चकार भट्टिः साचिव्यं दौहित्रः सुमतेर्यतः ॥ १ ॥

कृत्वा अमात्येन सुमतिना युक्तः आत्मताम् आत्मभावं साधुसंगेन प्राप्तः ॥ ८५ ॥ एतत्सर्गोक्तकथाश्रवणादिफलमाह—सबंधोरिति । बंधुसहितस्य । शेषं स्पष्टम् ॥ ८६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां त्रयस्त्रिंशः सर्गः ॥ ३३ ॥ चतुस्त्रिंशे षण्णवत्या पद्यैर्भर्तृहरिं विक्रमम् । चिन्वन्गुरोः प्राप्य सिद्धिं बंधुं चाहेति कथ्यते ॥ ३४ ॥ चित्रसेन इति । साचिव्यं प्रधानकर्म यतः सुमतिप्रधानस्य कन्यापुत्रो भट्टिः ॥ १ ॥

पारतंत्र्येण राज्याधिकारे प्रधानाधिकारे च स्वातंत्र्याभावेन । तत उज्जयनीतः । चोराणां संगतितः समागमेन वासं कृतवान् ॥ २ ॥ वृत्तिम् उपजीविकाम् । देशांतरमित्याद्युत्तरान्वयि ॥ ३ ॥ तत उज्जयिन्याः सकाशात् । उत्तरार्द्धमुत्तरान्वयि ॥ ४ ॥ तेषु वणिक्षु । सामीप्ये सप्तमी । तत्परिचर्यया वणिक्सेवया । रत्नेत्याद्युत्तरान्वयि । आदिशब्देन वस्त्रादिना ॥ ५ ॥ ६ ॥ ते वणिजस्तां नर्मदामुत्तीर्य पारं गंतुम् असमर्था इत्यन्वयः । उज्ज्वलां मर्यादोल्लंघितजलाम् ।

विक्रमः पारतंत्र्येण खिन्नचित्तस्ततो ययौ ॥ देशांतरं क्वचिद्ग्रामे चोरसंगतितोऽवसत् ॥ २ ॥ वृत्तिं निर्वाहयामास चौर्यं कृत्वा च तैः सह ॥ देशांतरं गतं ज्ञात्वा विक्रमं भट्टिरप्यथ ॥ ३ ॥ दुःखितस्तद्वियोगेन तं विचिन्वन्ययौ ततः ॥ अलब्ध्वा विक्रमं भट्टिर्बहु देशान्भ्रमन्क्वचित् ॥ ४ ॥ वणिग्भिः संगतस्तेषु तस्थौ तत्परिचर्यया ॥ रत्नमुक्तादिवस्तूनां क्रयविक्रयकारिणः ॥ ५ ॥ वणिजस्तु सदैवासुर्गमागमपरायणाः ॥ भट्टिर्बभ्राम तैः पृथ्वीं विक्रमान्वेषणेच्छया ॥ ६ ॥ कदाचिन्नर्मदातीरे वर्षाकाले स्थितास्तु ते ॥ तामुत्तीर्याक्षमाः पारं गंतुं वार्धिमिवोज्ज्वलाम् ॥ ७ ॥ स्थितो भट्टिस्तु तैः साकं तत्र मासं पुराकृतात् ॥ पुण्याद्भट्टिर्ददर्शाथ शीलाभट्टारिकां मठे ॥ ८ ॥ तपस्तेजस्विनीं साक्षाद्भूस्थितां परदेवताम् ॥ नत्वा भट्टिः स्ववृत्तांतमंबिकायै न्यवेदयत् ॥ ९ ॥ भट्टिरुवाच ॥ अवंतीशश्चित्रसेनस्तत्कन्ये तु शिवानुगम् ॥ भूगतं शंभुशापेन वव्राते गंधमादनम् ॥ १० ॥ राज्ञोऽमात्यस्य सुमतेः कन्या वव्रे तमेव हि ॥ राजाऽपुत्रोऽखिलं राज्यं जामात्रेऽथ ददौ मुदा ॥ ११ ॥ स्थित्वाब्दं स ययौ स्वर्गं शापान्मुक्तः शिवानुगः ॥ तस्माद्गर्भवतीष्वासु त्रिभार्यासु त्रयः सुताः ॥ १२ ॥ चित्रसेनो नृपस्तेषु द्वादशाब्देषु तद्ददौ ॥ राज्यं ज्येष्ठाय साचिव्यं कनिष्ठाय स्वयं वनम् ॥ १३ ॥

नौकयापि पारं गंतुमशक्तास्तत्तीरे वासं कृतवंत इत्यर्थः ॥ ७ ॥ पुराकृतात् पूर्वजन्मसंपादितात्पुण्याद्धेतोः । मठे नर्मदातीरगतच्छात्रादिनिलये ॥ ८ ॥ ॥ ९ ॥ १० ॥ तं गंधमादनम् । राजा चित्रसेनः ॥ ११ ॥ स गंधमादनः त्रिभार्यासु शारदामुलोचनामत्स्योदरीषु ॥ १२ ॥ द्वादशाब्देषु द्वादशवर्षे

वयस्केषु सत्सु तत्र स्वकीयं राज्यं ज्येष्ठाय भर्तृहरये कनिष्ठाय मह्यम् । स्वयं वनं ययावित्यन्वयः ॥ १३ ॥ १४ ॥ १५ ॥ देशान् भ्रमामीति पूर्वान्वितम् । पारमार्थ्यं परमपुरुषार्थसंबंधि । अणु अपि अल्पमपि सौख्यं न जातमिति शेषः ॥१६॥ प्रपंचपरमार्थौ यथासुखदौ तथा मयि कृपां कुरुष्वेत्यन्वयः।

ययावथ गतो देशान्मध्यमो विक्रमाभिधः ॥ ज्येष्ठं भर्तृहरिं ज्ञात्वा राजानं खिन्नमानसः ॥ १४ ॥ कनिष्ठोऽहं भट्टिसंज्ञस्त्यक्त्वा साचिव्यमात्मनः ॥ बंधुं विचिन्वन्स्वां वृत्तिं वणिङ्मध्ये निवर्तयन् ॥ १५ ॥ देशान्भ्रमामि नो बंधोर्दर्शनं भ्रमतोऽपि मे ॥ न वै प्रापंचिकं सौख्यं पारमार्थ्यं तथाण्वपि ॥ १६ ॥ पुण्येन दर्शनं जातं मातः पूर्वकृतेन ते ॥ प्रपंचः परमार्थश्च यथा स्यात्सुखदस्तथा ॥ १७ ॥ कृपां मयि कुरुष्वांब शरणागतवत्सले ॥ शाकवृद्धेर्भक्तितुष्टा त्वं साक्षात्परदेवता ॥ १८ ॥ अवतीर्णाऽसि नस्त्रातुं दीनानज्ञानदुःखितान् ॥ श्रीदेशिकेंद्र उवाच ॥ भट्टेरित्थं वचः श्रुत्वा शीलाभट्टारिका तदा ॥ १९ ॥ सदयाऽस्मै ददौ पूर्णां दीक्षां सकलसिद्धिदाम् ॥ लब्ध्वाखिलान्महामंत्रान्स भट्टिर्भक्तितत्परः ॥ २० ॥ जजाप नियमान्कृत्वा चैकविंशदिनावधि ॥ सिद्धीः प्रापाखिलास्तावद्याभिश्चाखिलदेहिनाम् ॥ २१ ॥ वाचो वेद तथा भूतभविष्यद्वृत्तमादितः ॥ शीलाभट्टारिकाथास्मै भट्टये लब्धसिद्धये ॥ २२ ॥ ज्ञानं योगं विस्तरेण ददौ संतुष्टमानसा ॥ वणिजोऽथ ययुर्देशान्वर्षाकाले गते ततः ॥ २३ ॥ शीलाभट्टारिकां नत्वा ययौ भट्टिश्च तैः सह ॥ बंधुं पश्यन्भ्रमन्देशानात्मतुष्टः सुसिद्धियुक् ॥ २४ ॥ भट्टिविक्रमयोरित्थं भ्रमतोर्देशदेशतः ॥ उज्जयिन्यां भर्तृहरिश्चक्रे राज्यं तदैकलः ॥ २५ ॥ वव्रे राजसुतां तन्वीं सुरूपां मातृशासनात् ॥ भार्याढ्यो बुभुजे भोगान्राजा भर्तृहरिर्बहून् ॥ २६ ॥ अथ दैववशाद्भार्यां हत्वा भूत्वाऽमरः स्वयम् ॥ राज्यं त्यक्त्वा ययौ कोपादुत्तराशां भ्रमन्धराम् ॥ २७॥

॥ १७ ॥ असीत्यस्यापकर्षः ॥ १८ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १९ ॥ अस्मै भट्टये । लब्ध्वेत्याद्युत्तरान्वयि ॥ २० ॥ नियमाननशनादीन् ॥२१॥ पूर्वार्द्धं पूर्वान्वितम् । उत्तरार्द्धमुत्तरान्वितम् ॥ २२ ॥ २३ ॥ २४ ॥ देशदेशतः देशे देशे ॥ २५ ॥ २६ ॥ अमरः मृत्युरहितः ॥ २७ ॥

अग्रे भर्तृहरिकथाप्रसंगे । तदा भर्तृहरिगमनानंतरकाले ॥२८॥ तत्रोज्जयिन्याम् ॥ २९ ॥ उज्ज्वलान् दीप्तिमतः ॥ ३० ॥ तं नृबलिं दिवा उज्जयिन्या राजानं कृत्वा । कीदृशम् । पृथक् पृथक् गृहस्थितम् स एव नृबलिर्दीयत इत्यन्वयः ॥ ३१ ॥ ३२ ॥ त्रयाणां भर्तृहरिविक्रमभट्टीनाम् ॥३३॥३४॥

विस्तरात्तस्य चरितं प्रोच्यतेऽग्रेऽनघामलम् ॥ नोज्जयिन्यां तदा कश्चिद्राजासील्लोकपालकः॥२८॥ वेतालास्तत्र चागत्य बभुजुर्मनुजान्बहून् ॥ नगरी सोद्वसा जाता प्रजाः शिष्टाः क्वचित्क्वचित् ॥ २९॥ ताः सर्वाः शरणं गत्वा वेतालान्प्रोचुरुज्ज्वलान् ॥ प्रत्यहं दीयतेऽस्माभिर्भवद्भ्यो नृबलिर्निशि ॥ ३० ॥ राजानं तं दिवा कृत्वा नित्यं स्वस्वगृहस्थितम् ॥ कर्तव्याद्य कृपास्मासु भवद्भिर्नतवत्सलैः ॥ ॥ ३१ ॥ श्रीदेशिकेंद्र उवाच ॥ वेतालास्तु तथेत्यूचुः श्रुत्वेत्थं लोकभाषणम् ॥ पुरमेत्य प्रजाः सर्वास्तथा चक्रुर्यथोदितम् ॥ ३२ ॥ त्रयाणां मातरस्तिस्रः स्वपुत्राणां वियोगतः ॥ सस्मरुः स्वपातिं सर्वाः स्वर्गस्थं गंधमादनम् ॥ ३३ ॥ स्मृतिमात्रेण सोऽप्येत्य याने संस्थाप्य ताः स्त्रियः ॥ नीत्वा कैलासमेताभिस्तस्थौ तत्र शिवांतिके ॥ ३४ ॥ इत्थं राजविहीना सा जाता चोज्जयिनी पुरी ॥ भट्टिविक्रमयोर्वृत्तं यज्जातं तन्निशम्यताम् ॥ ३५ ॥ भ्रमन्भट्टिर्वणिग्युक्तो दैवात्प्राप्तस्तु तां पुरीम् ॥ विक्रमो यत्र चोरेषु कुर्वंश्चौर्यं स्थितोऽन्वहम् ॥ ३६ ॥ तस्माद्ग्रामाद्बहिःस्थाने वणिजस्ते वृषैः स्थिताः ॥ वस्तुभारान्वृषोर्ध्वस्थान्मध्ये संस्थाप्य यत्नतः ॥ ३७ ॥ परितः स्वस्थितिं चक्रुस्ततो वृषभसंस्थितिम् ॥ सुषुपुश्चाथ रात्रौ ते वणिजः श्रमकर्षिताः ॥ ३८ ॥ निशीथे तान्महार्हाणां वस्तूनां संग्रहान्वितान् ॥ विज्ञाय ते ययुश्चोरा गुप्तो येष्वस्ति विक्रमः ॥ ३९ ॥ जाग्रतः संति वा सुप्ता एवं तान्वेदितुं स्फुटम् ॥ स्थित्वा दूरेऽखिलाश्चोराः शुश्रुवुस्तद्वचांस्यथ ॥ ४० ॥

निशम्यतां त्वयेति शेषः ॥ ३५ ॥ ३६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३७ ॥ ३८ ॥ तान्वणिजः ॥ ३९ ॥ जाग्रतः जाग्रदवस्थावंतः । तद्वचांसि

वणिग्वाक्यानि ॥ ४० ॥ यावच्चोरा आगतास्तावत् । तस्य शिवाशब्दस्य ॥ ४१ ॥ कश्चिद्राजपुत्रः ॥ ४२ ॥ ४३ ॥ ४४ ॥ नोऽस्माकं वित्तस्याशा नास्ति । यतो वयं सर्वे धनान्विताः ॥ ४५ ॥ ४६ ॥ राजपुत्रस्येति पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि ॥ ४७ ॥ उत्तरार्द्धमुत्तरेणान्वेति ॥ ४८ ॥

तावच्छिवारवं चक्रे भट्टिः श्रुत्वा तमेकलः ॥ तस्यार्थं जागृतः प्राह चोत्थाप्यैतान्सुनिद्रितान् ॥४१॥ भट्टिरुवाच ॥ शृणुध्वं वणिजः सर्वे शिवाशब्दार्थमादितः ॥ राजपुत्रः पुरादस्माद्गतो व्याघ्रेण चोत्तरे ॥ ४२ ॥ मृगयार्थं गतो ह्येको दैवात्प्रेतदशां गतः ॥ तत्प्रेतसंस्कृतिः कार्या गत्वा केनापि चाधुना ॥४३॥ लभ्यतेऽस्मै महत्पुण्यं भूपाः प्रेतस्थिताश्च याः ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं वणिजः प्राहुर्निद्राभंगेन दुःखिताः ॥ ४४ ॥ वणिज ऊचुः ॥ नाशा वित्तस्य नो ल्पाऽपि वयं सर्वे धनान्विताः ॥ कुरु निद्रां किमर्थं नो निद्राभंगः कृतस्त्वया ॥४५॥ श्रीदेशिकेंद्र उवाच ॥ तावच्छिवा पुनः शब्दं चक्रे श्रुत्वाथ तान्पुनः ॥ भट्टिस्तस्यार्थमाहेति यः कुर्यात्प्रेतसंस्कृतिम् ॥४६॥ राजपुत्रस्य राजासावुज्जयिन्यां भविष्यति ॥ निशम्येति निषेध्यैनं भट्टिं ते वणिजः पुनः॥४७॥निद्राकुलितनेत्राश्च सुषुपुः स्वस्वसंस्तरे ॥ विक्रमश्चोरमध्यस्थः श्रुत्वेत्थं भट्टिभाषितम् ॥ ४८ ॥ ज्ञात्वा स्वरात्स्वबंधुं च भट्टिं प्राहाथ तस्करान् ॥ विक्रम उवाच॥जागृताः संति वणिजो न चौर्यं साध्यतेऽधुना॥४९॥यास्यामः स्वगृहान्सर्वे निद्राभंगो यतो वृथा ॥ श्रीदेशिकेंद्र उवाच॥ श्रुत्वेत्थं तस्कराः सर्वे ययुः स्वस्वगृहांस्ततः ॥ ५० ॥ विक्रमोथ ययौ ग्रामादुत्तरस्यां दिशि स्वयम् ॥ भ्रमंस्तत्र ददर्शासौ राजपुत्रशवं स्फुटम् ॥५१॥ भूपास्तदाखिलास्तस्य गृहीत्वा विक्रमः शिरः ॥ छित्त्वा शस्त्रेण तत्प्रेतं ददाहेंधनसंचये ॥५२॥ गृहीत्वा तच्छिरस्तस्माद्विक्रमः स्वस्थलं ययौ ॥ निशीथप्रापनिद्रां नो हृदि चेत्थमचिंतयत्॥५३॥ यः शिवाशब्दगर्भार्थं वणिग्भ्यः प्राह जागृतः ॥ मद्बंधुर्भट्टिरेवायं वणिजां दास्यतां गतः॥५४॥प्रातस्सिद्धिश्च दैवेन यत्नात्तेभ्यः स मोच्यताम्॥इत्थं रात्रौ विचिंत्याथ प्रातः प्रेतस्य तच्छिरः॥५५॥

॥ ४९ ॥ ५० ॥ ५१ ॥ इंधनसंचये चितायाम् ॥ ५२ ॥ तस्मात्प्रेतदहनदेशात् । इत्थं वक्ष्यमाणम् ॥ ५३ ॥ ५४ ॥ मोच्यतां मयेति शेषः । इत्थ

मित्याद्युत्तरान्वयि ॥५५॥५६॥५७॥ नोऽस्माकं स्वं धनम् ॥ ५८॥ अस्माभिर्गृह्यतामिति पूर्वान्वयः । तत्र द्रव्यहरणे ॥५९॥ येन वचनेन ते पश्चाद्धनं दास्यंति तदहं वच्मि॥६०॥मद्वाक्यसदृशं मद्वाक्यानुकूलम् । उत्तरार्द्धमुत्तरान्वयि॥६१॥६२॥६३॥चौर्यं त्वित्याद्युत्तरान्वयि ॥६४॥ तच्चौर्यमुत्तरार्द्धमुत्त

निद्राभंगादतिभ्रांतं वंचयित्वा वणिग्जनम् ॥ तद्वस्तुभारे चिक्षेप यत्नादाच्छाद्य विक्रमः॥५६॥न ज्ञातं तद्वणिग्भिस्तु विक्रमस्य विचेष्टितम् ॥अथाह तस्करानेत्य विक्रमो बुद्धिमद्वरः ॥५७॥ जागृतेभ्यो वणिग्भ्यो नः स्वं रात्रौ नाप्तमण्वपि ॥ अतस्तान्क्षयमत्यंतं दर्शयित्वाऽधुना धनम् ॥५८॥ अस्माभिर्गृह्यतां तत्र मयोपायस्तु कल्पितः ॥ शस्त्रपाणिभिरस्माभिः सर्वैस्तत्राद्य गच्छताम् ॥५९॥ वयं राजभटा इत्थं तेभ्यः सर्वैः समुच्यताम् ॥ अहं च वच्मि तत्पश्चाद्येन दास्यंति ते धनम् ॥६०॥ मद्वाक्यसदृशं सर्वैर्वक्तव्यं नान्यथा क्वचित् ॥ श्रीदेशिकेंद्र उवाच ॥ चोरानुक्त्वेति तैः साकं विक्रमः शस्त्रपाणिभिः ॥६१॥ स्वयं शस्त्रधरस्तत्र ययौ यत्र वणिक्स्थितिः॥ तानूचुर्विक्रमाद्यास्ते के यूयं चात्र संस्थिताः ॥ ६२ ॥ चौर्यं रात्रौ कृतं नूनं भवद्भिर्नृपमंदिरे ॥ प्रेषितास्तु वयं राज्ञा युष्मदर्थं सुकोपिना ॥ ६३ ॥ रज्जुभिर्निखिलान्बध्वानेष्यामो राजसन्निधिम् ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं वणिजस्तांश्च प्रोचुश्चौर्यं तु जन्मतः ॥ ॥ ६४ ॥ वयं स्वप्नेपि नो विप्रो जागृतौ तत्कुतो भटाः ॥ मौक्तिकादिमहार्हाणां वस्तूनां क्रयविक्रयौ ॥ ६५ ॥ कुर्वंतः सकलां पृथ्वीं संभ्रमामो वृषैः सह ॥ पुनः प्रोचुर्विक्रमाद्याः सर्वांस्तान्वणिजोनघ ॥ ६६ ॥ चौर्यसत्यकरं वस्तु चेत्किंचिद्भवदंतिके ॥ निष्कासितं किलास्माभिर्यूयं चोराः स्फुटं तदा ॥ ६७ ॥ वणिजस्तान्पुनः प्रोचुश्चौर्यसत्यकरं स्फुटम् ॥ निष्कासनीयमस्मासु वस्तु चोरास्तदा वयम् ॥ ६८ ॥ विक्रमस्तु क्षणं तूष्णीं विचिन्वन्भारसंचये ॥ राजपुत्रशिरस्तस्मान्निष्कास्यैभ्योप्यदर्शयत् ॥ ६९ ॥

रान्वयि ॥६५॥ अनघेति मयूरेश्वरसंबोधनम्॥६६॥ चौर्यसत्यकरं चौर्यकर्मणः सत्यत्वप्रतिपादकं वस्तु॥६७॥वस्तुचोराः वस्तुहराः॥६८॥ तस्माद्भारसं

चयात् । एभ्यो वणिग्भ्यः ॥ ६९ ॥ अखिलान् चोरान् ॥ ७० ॥ द्विगुणं अयुतं अयुतद्वयमित्यर्थः ॥ ७१ ॥ उक्तं अयुतद्वयम् । अयं दासः भट्टयभिधः ॥ ७२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ७३ ॥ ७४ ॥ भट्टिरपि विक्रमं ज्ञात्वा प्राकट्यमकुर्वन्वणिक्संगं जिहासुराह । श्रूय

दृष्ट्वा तद्भयभीतास्ते नेमुस्तै वणिजोऽखिलान् ॥ प्रार्थयामासुरत्यंतं रक्षतास्मानहो भटाः ॥७०॥ भवद्भ्यो दीयतेऽस्माभिर्द्विगुणं चायुतं धनम् ॥ श्रुत्वेति विक्रमः प्राह श्रूयतां मद्वचोऽखिलैः ॥ ७१ ॥ दत्त्वैवोक्तं धनं चोर्ध्वं दासोऽयं चेत्प्रदीयते ॥ अस्मभ्यं निखिला स्तूष्णीं यास्यामो भवदंतिकात् ॥ ७२ ॥ नोचेद्बद्ध्वाखिलानद्य नेष्यामो नृपतेः पुरः ॥ वणिजस्तान्पुनः प्रोचुर्धनमद्यैव दीयते ॥ ॥ ७३ ॥ दातुं न शक्यतेऽस्माभिर्दासोऽयं बहुकार्यकृत् ॥ हितवेत्ताखिलज्ञोऽयं बहुकालं तु पोषितः ॥ ७४ ॥ मन्यामहे गुरुं सर्वैं यं स देयः कथं भटाः ॥ अथाह भट्टिस्तान्सर्वान्वणिजः श्रूयतां वचः ॥ ७५ ॥ दत्त्वैवैकाकिनं मां तु भवंतु सुखिनोऽखिलाः ॥ एकत्यागाद्बहुश्रेयश्चेत्तत्प्रियमपि त्यजेत् ॥ ७६ ॥ पालितोऽन्नांशुकैर्नित्यं भवद्भिस्त्वहमादृतः ॥ भवंतः सुखिनः संतु मत्स्मृत्या खिलसंकटे ॥ ७७ ॥ तथेति वणिजो भट्टिं ददुस्तेभ्यो धनं च तत् ॥ गृहीत्वा तस्कराः सर्वे ययुः स्थानं निजं ततः ॥ ७८ ॥ विक्रमोऽथ धनं दत्त्वा तस्करेभ्योऽखिलं ततः ॥ गृहीत्वा स्वानुजं भट्टिं ययौ चावंतिमार्गतः ॥ ७९ ॥ भट्टिः पथा व्रजञ्ज्ञात्वा स्वाग्रजं विक्रमं स्फुटम् ॥ नत्वा पप्रच्छ कुशलं तस्मै स्वं वृत्तमादिशत् ॥ ८० ॥ भट्टिरुवाच ॥ त्वय्युज्जयिन्यास्तु गतेऽन्यदेशान मात्यतां भर्तृहरेर्विहाय ॥ निर्गत्य तस्मादहमेक एव त्वामेव पश्यन्न्यवसं वणिक्षु ॥ ८१ ॥ तैः साकमेतां धरणीं त्वदर्थं भ्रमंश्च दास्यं वणिजां प्रकुर्वन् ॥ त्वद्दर्शनाकांक्ष्यथ दर्शनं तेऽलब्ध्वा स्थितस्तेषु धरां भ्रमत्सु ॥ ८२ ॥

तामिति । भवद्भिरिति शेषः ॥ ७५ ॥ ७६ ॥ ७७ ॥ तेभ्यश्चोरेभ्यः । तद्धनं अयुतद्वयरूपम् ॥ ७८ ॥ धनलाभाद्बंधुलाभं वरं मन्यमानस्तस्करेभ्यो धनं ददावित्याह—विक्रम इति । अवंतिमार्गतः उज्जयनीमार्गेण सार्वविभक्तिकस्तसिः ॥ ७९ ॥ ८० ॥ वणिक्षु न्यवसं स्थितवानस्मि ॥ ८१ ॥ त्वदर्थं

त्वत्प्राप्त्यर्थम् । दास्यं दासकर्मस्थितः अस्मि इति शेषः ॥ ८२ ॥ मातृवृत्तं मातॄणां वर्तमानम् ॥८३॥ दैवतः दैवयोगेन राज्यं मातॄश्च त्यक्त्वा कोपयुक्तः सन् देशान् प्रति गतः ॥ ८४॥ उज्जयिन्यां राजहीनायां सत्याममुश्च वेतालाः सर्वाः प्रजाः कर्मीभूताः भक्षितवंतः ॥ ८५ ॥ पत्या गंधमादनने । सुयानात् सुविमानेन ॥८६॥ वृक्षयुक्तवटां सुनीरां मूदकाम् ॥८७॥ स्थितः तिष्ठन् ॥८८॥ सर्वाश्च ताः आप्ताः प्राप्ताः सिद्धयो येन तं यैर्मनुभिस्त्वं सर्वाः सिद्धीः

त्वद्दर्शनं दैववशादभून्मे जातः प्रयत्नः सफलो ममायम् ॥ किमुज्जयिन्यामथ मातृवृत्तं बन्धोश्च नावामणु तच्च विद्रः ॥८३॥वच्म्यद्य सिद्धेर्बलतोऽश्रुतं तत्कृत्वा स्त्रियं भर्तृहरिश्च हत्वा॥ तां दैवतो राज्यमपीह हित्वा मातॄर्गतः कोपयुतश्च देशान् ॥८४॥अराजकायामथ चोज्जयिन्यां प्रजाः समस्ताश्च बभक्षुरुग्राः ॥ वैतालिकाश्चोद्वसतां गता सा लोकाः स्थितास्तत्र कियद्गृहेषु ॥८५ ॥ दुःखान्विताः पुत्र वियोगतस्तास्तिस्रो जनन्यः स्वपतिं स्मरंत्यः॥पत्या तु नीताः सकलाः सुयानात्कैलासमंबा निवसंति तत्र॥८६॥श्रीदेशिकेंद्र उवाच ॥ सिद्धेर्बलाद्भर्तृहरिरुवाच वृत्तमित्थं यथा चोज्जयिनीपुरेऽभूत् ॥ पथा व्रजंतावथ तावुभौ च प्राप्तौ नदीं वृक्षतटां सुनीराम् ॥ ८७ ॥ स्नात्वा खिलाश्चक्रतुरत्यवश्याः क्रियास्ततस्तौ तटवृक्षमूले ॥ स्थितावथोत्थाय च विक्रमाख्योऽनुजं हि नत्वा स्थित आह भर्तृम् ॥ ८८ ॥ विक्रम उवाच ॥ प्राप्तोऽस्मि बंधो शरणं गुरुं त्वां कनिष्ठमप्यात्मविदां वरिष्ठम् ॥ सर्वात्मसिद्धिं च ततो मनून्मां ब्रूह्याप्तवान्यैस्त्वम नेकसिद्धीः ॥ ८९ ॥ ज्यैष्ठ्यं न चोक्तं वयसैव सद्भिर्ज्ञानाधिको ज्येष्ठ इतीर्यते वै ॥ यथा लघुं शंभुसुतं गणेशं जेष्ठं विधीनां श्रुतिराह साक्षात् ॥ ९० ॥ विद्याजनिभ्यां द्विविधः किलोक्तो वंशो बुधैर्ज्येष्ठतयाहमस्मि ॥ जन्मोत्थवंशेऽस्ति तवास्तु साद्य विद्योत्थवंशेऽसि यतोऽखिलज्ञः ॥ ९१ ॥

प्राप्तवानसीत्यर्थः॥८९॥ननु भवान् ज्येष्ठः कनिष्ठं मां कथं शरणं प्राप्त इत्यत आह—ज्यैष्ठ्यमिति।वयसा जेष्ठत्वं सद्भिर्नोक्तं किंतु यो ज्ञानवान्स ज्येष्ठो भवति। अत्र निदर्शनम् । अल्पं शिवसुतं गणपतिं विधीनां ब्रह्मादीनां ज्येष्ठं श्रुतिराह । "ज्येष्ठराजं ब्रह्मणाम्" इति श्रुत्या वयोऽल्पे गणपतौ ब्रह्मादिज्येष्ठत्वमित्यर्थः॥ ॥९०॥वंशो द्विधा विद्यया जन्मना च तत्र जन्मवंशे मम ज्येष्ठत्वेऽपि विद्यावंशे त्वं ज्येष्ठोभवेत्याह—विद्याजनिभ्यामिति । ज्येष्ठता यतः कारणात्त्वं सर्वज्ञो

ऽसीत्यर्थः ॥९१॥ ननु जन्मवंशज्येष्ठस्य विद्यावंशे कनिष्ठत्वाश्रयेण किमत आह । प्रपंचजा इति । प्रशामय दूरीकुरु ॥ ९२ ॥ परमाभ्यासेन लब्धं योगं च ददौ ॥ ९३ ॥ अखिलं मंत्रजातम् ॥ ९४ ॥ षट्पंचसंख्यं भट्टयानंदं प्रणमति.य इति । अखिलवित् सर्वज्ञः ॥९५॥ भट्टिविक्रमकथापाठादेः फलम् इच्छितलाभो दूरदेशगतबंधुदर्शनं भवतीत्याह । भट्टिविक्रमकथामिति ॥ ९६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्याख्यायां टीकायां चतुस्त्रिंशः

प्रपंचजा मां प्रदहंति तापा ह्यंतर्बहिस्तांस्त्रिविधांश्च बंधो ॥ प्रशामयाज्ञानहरैः सुवाक्यैर्दावानलं मेघजलैरिवेंद्रः ॥ ९२ ॥ श्रीदेशिकेंद्र उवाच ॥ संप्रार्थितो भट्टिरनेकधेत्थं स विक्रमाख्येन ददावथास्मै ॥ मंत्रान्समस्तांश्च तथात्मतत्त्वं योगं पराभ्यासबलेन लब्धम् ॥ ९३ ॥ भट्टेः सकाशादथ विक्रमार्को लब्ध्वाखिलं सिद्धवरो बभूव ॥ इत्थं कनिष्ठोपि गुरुर्हि जातो ज्येष्ठस्य भट्टेः किल विक्रमस्य ॥ ९४ ॥ यः सिद्धवर्योऽखिलविद्रहस्यं ददौ कनिष्ठोऽप्यथ विक्रमाय ॥ चक्रे सुकाव्यानि च भट्टिमेनं षट्पंच संख्यं गुरुमानताः स्मः ॥ ९५ ॥ भट्टिविक्रमकथामतिपुण्यां यः शृणोति च पठेदथ भक्त्या ॥ वांछितं स लभते च दुरापां दूरदेशगतबंधुसमीक्षाम् ॥ ९६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे विक्रमाख्याने चतुस्त्रिंशः सर्गः ॥३४॥ श्रीदेशिकेंद्र उवाच ॥ अथ भट्टिविक्रमश्च प्राप्तावुज्जयिनीं पुरीम् ॥ रात्रावलक्षितावन्यैर्मालाकारगृहे स्थितौ ॥ १ ॥ वेतालनृबलेर्दानं प्राप्तं तस्मिन्गृहे क्रमात् ॥ एक एव गृहे स्वामी तन्मातातिरुरोद ह ॥ २ ॥ वृत्तं ज्ञात्वाखिलं तस्यास्तामाहेत्थं तु विक्रमः ॥ विक्रम उवाच ॥ मा चिंतां कुरु मातस्त्वं वेतालबलिरस्म्यहम् ॥ ३ ॥ पुर्याः कृत्वा दिवा राज्यं भविष्ये निशि तद्बलिः ॥ अथ प्रातर्ययुः पौरा बल्यर्थं तद्गृहेऽखिलाः ॥ ४ ॥

सर्गः ॥३४॥ पंचत्रिंशे चैकविंशत्युत्तरैः शतपद्यकैः । राजा श्रीविक्रमोऽवंत्यां शालिवाहजितः स्मृतः ॥३५॥ विक्रमस्य राज्यप्राप्त्यादि चरित्रमुपक्रमते । अथेत्यादिना । अन्यैर्ग्रामस्थैः ॥ १ ॥ वेतालेभ्यो नृबलेर्दानं गृहस्वामी मालाकार एक एव आसीत् ॥ २ ॥ ३ ॥ पुर्याः अवंत्याः राज्यं कृत्वा तद्बलिः वेतालबलिः बल्यर्थं मालाकारगृहाद्बलिप्राप्त्यर्थम् ॥ ४ ॥

अहमस्मीति शेषः । नास्त्येत्याद्युत्तरान्वयि ॥ ५ ॥ अस्य किंचिदपि मरणभयं नास्ति । अहं बलिरस्मीति स्वयं वक्ति अहो आश्चर्यम् । वाद्यैः सह अथानंतरम् ॥ ६ ॥ प्रजावशगा आभूवन् इति परिणामेन योज्यम् ॥ ७ ॥ गोपुराग्रतः नगरद्वारसमीपे ॥ ८ ॥ ९ ॥ १० ॥

तानाह विक्रमः स्पष्टं वेतालार्थं बलिस्त्वहम् ॥ श्रुत्वेति विस्मिताः सर्वे प्राहुर्नास्य मनागपि ॥ ५ ॥ मृतेर्भयं स्वयं वक्ति बलिरस्मीत्यहं त्वहो ॥ वाद्यैर्नीत्वाथ नृपतिं चक्रुः पौरास्तु विक्रमम् ॥ ६ ॥ भट्टिः साचिव्यकर्ताभूत्तदाज्ञावशगाः प्रजाः ॥ भट्टिः प्राहाप राह्णेथ जनान्सर्वान्पुरःस्थितान् ॥ ७ ॥ कृत्वान्नानि विचित्राणि स्थाप्यंतां गोपुराग्रतः ॥ वेतालागमवेलायां सर्वैरानीय गेहतः ॥ ॥ ८ ॥ तथेति सर्वैः पक्वान्नं स्थापितं गोपुराग्रतः ॥ नानाव्यंजनशाकाढ्यं शर्कराघृतमिश्रितम् ॥ ९ ॥ तत्रागत्याथ वेतालैः सायाह्नेऽन्नं विलोकितम् ॥ स्थापितं बहुधान्नं तत्पृथक्पर्वतसन्निभम् ॥ १० ॥ बुभुजुश्चाथ वेतालास्तदन्नं परमादरात् ॥ तृप्ताः सर्वेऽथ संतुष्टाः समागत्य नृपाग्रतः ॥ ११ ॥ नृपं प्रोचुः प्रसन्नास्तेऽस्मत्त्वं याचस्व सद्वरान् ॥ श्रुत्वेति विक्रमः प्राह वेतालांस्तुष्टमानसान् ॥ ॥ १२ ॥ विक्रम उवाच ॥ भवद्भिर्दीयते मह्यं वरश्चेदिति दीयताम् ॥ भवद्भिर्नाद्यतोऽत्रत्या भक्षितव्यास्तु मानवाः ॥ १३ ॥ पुरीयं रक्षितव्या च विघ्नतः सर्वदाखिला ॥ वांछितं क्रियतामेत्य ममाग्रे स्मृतिमात्रतः ॥ १४ ॥ श्रीदेशिकेंद्र उवाच ॥ विक्रमं ते तथेत्युक्त्वा वेतालाः स्वालयं ययुः ॥ राज्यं चक्रे स निर्विघ्नमुज्जयिन्याः सुविक्रमः ॥ १५ ॥ भट्टिः साचिव्यमकरोद्गुरुश्चास्य हिते रतः ॥ समृद्धा नगरी साभूत्संतुष्टाश्चाखिलाः प्रजाः ॥ १६ ॥

उत्तरार्द्धमुत्तरान्वयि ॥ ११ ॥ वयं ते प्रसन्नाः अस्मत् अस्मत्तस्त्वम् उत्तमवरान्याचस्व ॥ १२ ॥ अत्रत्या अवंतिस्थाः अद्यतः अद्यदिनमारभ्य नो भक्षणीयाः ॥ १३ ॥ वांछितम् इच्छितकार्यम् ॥ १४ ॥ १५ ॥ गुरुश्च गुरुरपि भट्टिः प्रधानकर्माकरोत् चकार । प्रजाश्च संतुष्टा आसन्निति परिणामेन

योज्यम् ॥ १६ ॥ सार्वभौमतां चक्रवर्तित्वम् ॥ १७ ॥ निःस्पृहौ बभूवतुरित्यध्याहारः । विक्रमे नृपे सति ॥ १८ ॥ १९ ॥ २० ॥ कृततुल्यः कृतयुगसमः ॥ २१ ॥ पूर्वार्द्धं पूर्वान्वयि । रहोगतादेकांतगतात्सिद्धात् । अमुं विक्रमं वंचयित्वा यथा गुरुविक्रमाभ्यां न ज्ञायते तथा तां परकायप्रवेशविद्याम् आप प्राप्तवान् । विक्रमसेवां कुर्वन् विक्रमस्याभ्याससमये गृहाद्बहिः स्थित्वा गुरुविक्रमाभ्यां यथा न ज्ञायते तथाऽभ्यासं कृतवानिति भावः ॥ २२ ॥

निर्जित्याखिलभूपांश्च विक्रमः सार्वभौमताम् ॥ प्रापाथ चक्रतुर्भोगं सुरूपे भट्टिविक्रमौ ॥ १७ ॥ भोगाननेकान्भार्याढ्यौ भुक्त्वांते निःस्पृहौ सदा ॥ वर्णाश्चाश्रमिणश्चक्रुः स्वधर्मान्विक्रमे नृपे ॥ १८ ॥ नाधिर्व्याधिर्नापमृत्युर्न चोराः कलहः क्वचित् ॥ पतिसक्ताः स्त्रियः सर्वाः पितृसेवारताः सुताः ॥१९॥ धनधान्यसमृद्धा भूर्जलदाः कालवर्षिणः ॥ फलवंतो द्रुमाश्चासन्गावः कामदुघोऽखिलाः ॥ ॥ २० ॥ कलावपि तदा कालः कृततुल्यो बभूव ह ॥ विक्रमोऽथाप कस्माच्चित्सिद्धाद्विद्यां सुदुर्लभाम् ॥ २१ ॥ परकायप्रवेशाख्यां सेवातुष्टाद्रहोगतात् ॥ कश्चिद्विक्रमदूतोऽपि वंचयित्वामुमाप ताम् ॥२२॥ विद्यां विक्रमसिद्धाभ्यां न ज्ञाता कुटिलास्य धीः ॥ अथागत्याह दैवज्ञः कश्चिद्विक्रमभूपतिम् ॥२३॥ त्रिवर्षकन्यासंभूतो यस्त्वद्धंतेति स स्फुटम् ॥ श्रुत्वेति राज्यरक्षार्थं भट्टिमादिश्य विक्रमः ॥ ॥ २४ ॥ षाण्मासिकावधिं पत्न्यै चोक्त्वा तापसवेषधृक् ॥ कापट्याल्लब्धविद्यं तमज्ञात्वा नीचदूतकम् ॥ २५ ॥ शिष्यं कृत्वा विचिन्वंस्तं त्र्यब्दकन्यासुतं भुवि ॥ बभ्राम सकलान्देशान्यतः स्वमरणं स्मृतम् ॥२६॥ शिष्यभूतेन दूतेन तपस्वी विक्रमः स्वयम् ॥ भ्रमन्देशान्ददर्शाथ निःस्वं विप्रं कुटुंबिनम् ॥ २७ ॥ वेदवेदांगशास्त्रज्ञं श्रौतस्मार्तक्रियोज्ज्वलम् ॥ कन्यापुत्रकलत्राढ्यं नित्यं भिक्षोपजीविनम् ॥ २८ ॥ जरद्वस्त्रधरा पत्नी युवती चातिसुंदरी ॥ भूषणानि कुतस्तस्यास्तथापत्यानि सर्वदा ॥ २९ ॥

विद्यामिति पूर्वान्वयि ॥२३॥ त्वद्धंता तव नाशकः । उत्तरार्द्धमुत्तरान्वयि ॥२४॥ नीचदूतकं बुद्धिमज्ञात्वा तं शिष्यं कृत्वा यस्मात्त्रिवर्षकन्याप्रसूतादात्मनाशस्तं भुवि विचिन्वन्देशान्बभ्रामेति द्वयोरन्वयः ॥ २५ ॥ २६ ॥ दूतेन सह निःस्वं दरिद्रम् ॥ २७ ॥ विप्रविशेषणानि ॥ २८ ॥ आसीदित्यध्या

हारः पूर्वार्द्धे । कुतः संतीति अध्याहारश्च । अपत्यानि पुत्रादीनि । तथा भूषणहीनानीत्यर्थः ॥ २९ ॥ बालानां पुनः अत्तुं भक्षयितुम् अण्वपि अल्पमपि नासीदित्यर्थः ॥ ३० ॥ दैवोत्थविपाकेन प्रारब्धजन्यफलेन ईदृशं दारिद्रम् ॥ ३१ ॥ निःस्वत्वेन धनहीनत्वेन अतिदुःखितः अत्यंतं पीडितः॥ ३२॥

भिक्षाधान्योत्थपिष्टादि पक्का खादंति चैकदा ॥ सर्वं न शेषं बालानामप्यत्तुं पुनरण्वपि ॥ ३० ॥ विद्वांसमपि दैवोत्थविपाकेनेदृशं द्विजम् ॥ दृष्ट्वातिसदयो राजा रात्रौ तद्गृहमास्थितः ॥ ३१ ॥ स्वगृहस्थं तापसं तं दृष्ट्वा चिंतान्वितो द्विजः ॥ नत्वा सभार्यस्तं प्राह निःस्वत्वेनातिदुःखितः ॥ ३२ ॥ ब्राह्मण उवाच ॥ प्राप्ते त्वत्सदृशे गेहं तापसे निजशक्तितः ॥ तस्मै भक्ष्यादिकं देयं धर्मोऽयं गृहमेधिनाम् ॥ ३३ ॥ धान्यं न किंचिन्मद्गेहे किं कार्यं चाधुना मया ॥ श्रीदेशिकेंद्र उवाच ॥ तत्पत्नी तु बहिर्गत्वा श्वो दास्यामीति याच्ञया ॥ ३४ ॥ पृथुकान्किंचिदानीय ददौ तस्मै गुडान्वितान् ॥ भुक्त्वा तान्दूतयुक्तोऽथ विक्रमोऽपि मुदान्वितः ॥ ३५ ॥ सुष्वाप तद्गृहे रात्रौ चिंतयंश्चेति चेतसि॥ दारिद्र्यनाशनायास्मै देया मंत्रास्तु सिद्धिदाः ॥ ३६ ॥ यैः समृद्धं धनं धान्यं गृहे चास्य भविष्यति ॥ अथो कृताह्निकं प्रातर्द्विजं तं विक्रमस्तथा ॥ ३७ ॥ आहूय निकटे तस्मै ददौ सर्वान्मनून्क्रमात् ॥ योगं ज्ञानं तथान्यच्च रहस्यं यत्सुदुर्लभम् ॥ ३८ ॥ भोगानंदेति नामास्य सद्भोगाप्त्यै चकार च ॥ बभूव तुष्टधीर्विप्रो विक्रमाल्लब्धसन्मनुः ॥३९॥ भोगानंदस्य चरितं किंचिदग्रेपि वक्ष्यते ॥ दूताढ्यो विक्रमस्तस्माद्ययौ रत्नपुरं महत् ॥ ४० ॥ तस्माद्ग्रामाद्बहिश्चासीद्रम्यं चैकं सरोवरम् ॥ शिवालयं च तत्तीरे सदैकांतसुखप्रदम ॥ ४१ ॥ स्नात्वा कृत्वाह्निकं भुक्त्वाऽथापराह्णे स विक्रमः ॥ सरस्तीरे ददर्शैकं मृतसर्पकलेवरम् ॥ ४२ ॥

निजशक्तितः स्वशक्त्यनुसारेण ॥ ३३ ॥ तत्पत्नीत्याद्युत्तरान्वयि ॥ ३४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३५ ॥ ३६ ॥ यैर्मंत्रैः । अथो इत्याद्युत्तरान्वयि ॥ ३७ ॥ ३८ ॥ सद्भोगाप्त्यै उत्तमभोगप्राप्तये प्राप्तसन्मनुः प्राप्तसन्मंत्रः ॥ ३९ ॥ अग्रे उत्तराध्याये तस्माद्ब्राह्मणगृहात् ॥ ४० ॥ ४१ ॥ ४२ ॥

उत्तरश्लोके प्रविशेत्यंतमन्वयः ॥ ४३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४४ ॥ उत्तरार्द्धमुत्तरान्वितम् ॥ ४५ ॥ याममात्रं प्रहरपर्यंतं त्वया स निवार्यतामिति योज्यम् ॥ ४६ ॥ आलये देवालये राजेत्युत्तरान्वयि ॥ ४७ ॥ राजसंज्ञको देहो राजदेहः । अथेत्युत्तरेण योज्यम् ॥ ४८ ॥ ईदृशं परदेहानुभूतिजन

अथांतश्चाह राजेत्थं लब्ध्वा सिद्धान्मया पुरा ॥ परकायप्रवेशाख्या विद्यास्याः प्रत्ययोऽधुना ॥ ४३ ॥ द्रष्टव्यः सर्पदेहेऽस्मिन्प्रविश्यास्ति रहःस्थलम् ॥ सुप्तं दृष्ट्वाथ दूतं च गृहीत्वा तत्कलेवरम् ॥ ४४ ॥ स्थाप्य देवालयस्यांतर्दूतमुत्थाप्य चाब्रवीत् ॥ स्थानमेकांतमस्तीदं ध्यानमत्र मयाधुना ॥ ४५ ॥ क्रियते स्वेष्टदेवस्य याममात्रं त्वया बहिः ॥ स्थित्वांतः पुरुषः कश्चिच्चेदायास्यति वार्यताम् ॥ ॥ ४६ ॥ दूतः श्रुत्वा तथेत्याह राजा गत्वाऽऽलये ततः ॥ कृत्वा स्वमुखसान्निध्ये सर्पप्रेतमुखं स्वयम् ॥ ४७ ॥ जप्त्वा विद्यां सह प्राणैः सर्पदेहे विशन्नृपः ॥ निष्प्राणः पतितस्तस्य राजदेहोऽथ विक्रमः ॥ ४८ ॥ सर्पदेहस्थितो ज्ञात्वा विद्यासामर्थ्यमीदृशम् ॥ सर्पदेहानुभूतिश्च गृहीतव्येति चिंतयन् ॥४९॥ देवालयाद्बहिर्गत्वा छिद्रतः सरसस्तटे ॥ बभ्राम दूतविश्वासादज्ञात्वा तस्य दुर्धियम् ॥ ॥५०॥ दूतोऽथ निखिलं ज्ञात्वा दूरतोऽपि शिवालये ॥ गत्वा विशद्राजदेहं तां विद्यां संजपन्खलः ॥ ५१ ॥ तत्र त्यक्त्वा निजं देहं हर्षाद्विक्रमदेहवान् ॥ ययावुज्जयिनीं सोऽथ दूतो विश्वासघातकः ॥ ५२ ॥ कुर्वेऽद्योज्जयिनीराज्यं विक्रमोऽहं न संशयः ॥ उपभोक्ष्येऽस्य पत्नीं च भोगांश्चेति विचिंतयन् ॥ ५३ ॥ दृष्ट्वापि विक्रमाकारं स्वभावाद्बुद्धिमांद्यतः ॥ ज्ञात्वा भट्टिः कृत्रिमं तं तूष्णीमास सुबुद्धिमान् ॥ ५४ ॥ स्थित्वा नृपासने राज्यं चक्रे कृत्रिमविक्रमः ॥ त्रस्ताः प्रजास्तु तस्योग्रदंडेनोज्जयिनीस्थिताः ॥ ५५ ॥

कम् ॥ ४९ ॥ बभ्रामेति द्वयोरन्वयः । दूतविश्वासाद्धेतोः ॥ ५० ॥ ५१ ॥ ५२ ॥ अस्य विक्रमस्य इति चिंतयन्नुज्जयिनीं ययावित्यन्वयः ॥ ५३ ॥ स्वभावेन बुद्धिमांद्येन च तं विक्रमं कृत्रिमं कपटिनं ज्ञात्वा तूष्णीमास यतः सुबुद्धिमान् । परकायप्रवेशविद्यया विक्रमदेहे कश्चित्पुरुषोऽयमस्तीति सिद्धिसा

मर्थ्येन ज्ञात्वा तं वंचयितुं तूष्णीमासेति भावः ॥ ५४ ॥ ५५ ॥ अंतर्गतोंतःपुरगतः बभूवेत्यध्याहारः । कार्त्रिमं कृत्रिमभावम् ॥ ५६ ॥ अतः भवद्भ्च नहेतोः तावत् षण्मासपर्यन्तम् ॥ ५७ ॥ वांछितम् इच्छितं तवेति शेषः ॥ ५८ ॥ विक्रमवर्णनमाह—अथेत्यादिना ॥ ५९ ॥ ६० ॥ गुरोः सकाशात् ॥ ६१ ॥ आपत्सु यो धीरः स पुमान्सुखी भवतीति योज्यम् ॥ ६२ ॥ विश्वासघातिनो दूतस्य ॥ ६३ ॥ विचित् चैतन्यहीनं मृतं कीरवपुः शुकशरीरं

सोंऽतर्गतो राजपत्नीं भोक्तुं सा चास्य कार्त्रिमम् ॥ ज्ञात्वाह दूरतः स्थित्वा तं दुर्बुद्धिं पतिव्रता ॥ ५६ ॥ षण्मासादूर्ध्वमायास्ये भवद्भिः प्रागितीरितम् ॥ अतो मया ब्रह्मचर्यव्रतं तावद्धृतं महत् ॥ ५७ ॥ अतीते तु व्रते सर्वं वांछितं तु भविष्यति ॥ इत्थमुक्तो महिष्यासौ ययौ तूष्णीं बहिः खलः॥५८॥ अथ विक्रमराजोपि सर्पदेहधरो भ्रमन्॥प्राप्तो देवालये तत्र न ददर्श निजां तनुम्॥५९॥दृष्ट्वाथ दूतदेहं तु निश्वसंश्चाब्रवीदिदम् ॥ दूतेन वंचितो नूनमहं विश्वासघातिना ॥ ६० ॥ विद्याभ्यस्ता पुरानेन वंचयित्वैव मां गुरोः ॥ अविज्ञायैव दौर्जन्यं विश्वासोऽस्मिन्कृतो मया ॥ ६१ ॥ किं वृथैवाद्य दुःखेनापत्सु धीरः सुखी पुमान् ॥ चेत्पुण्यं बलवन्मेस्ति पुनर्लप्स्ये निजं वपुः ॥ ६२ ॥ न स्थेयं सर्पदेहे तु तामसीयं तनुर्यतः ॥ स्थातुं योग्यस्तथा नायं देहो विश्वासघातिनः ॥ ६३ ॥ श्रीदेशिकेंद्र उवाच ॥ चिंतयन्विक्रमश्चैवमेत्य देवालयाद्बहिः ॥ भ्रमन्वनेऽहिरूपोऽथापश्यत्कीरवपुर्विचित् ॥ ६४ ॥ नृवद्वक्तुं क्षमं ज्ञात्वा स्वतंत्रं सात्विकं तथा ॥ तस्मिञ्जप्त्वा विशद्विद्यां सर्पदेहात्स विक्रमः ॥ ६५ ॥ शुकरूपोऽपि राजासौ भ्रमन्देशान्बहूनथ ॥ चरितं विविधं चक्रेऽन्योपकारकरं महत् ॥ ६६ ॥ बहुरूपधरायाह कस्मैचिद्वटवृक्षगः ॥ विद्यां विचित्रसंज्ञां तु यया वैचित्र्यदर्शनम् ॥६७॥ कस्मैचिद्धनिनेऽथासावात्मानं वेषधृक्करात् ॥ विक्रीयास्माददौ वित्तं द्विलक्षं बहुरूपिणे ॥ ६८ ॥

पूर्वार्द्धे पूर्वान्वयि ॥ ६४ ॥ पूर्वार्द्धे पूर्वान्वयि । तस्मिन् शुकदेहे ॥ ६५ ॥ अन्येभ्यः उपकारकं महत् बहुविधम् ॥ ६६॥ तत्रापि किंचित्किंचित्कथयति बहुवेषधरायेत्यादिना । वटवृक्षस्थो विक्रमशुकः यया वैचित्र्यस्य विचित्रभावस्य देहेन स्वर्गगमनादिदर्शनं तां विद्यामौडंबरीसंज्ञकां विचित्ररूपां कस्मैचिद्बहुरूपिणे प्राहेत्यर्थः ॥ ६७ ॥ धनिने संपन्नाय आत्मानं शुकदेहिनम् । वेषधृक्कराद्बहुरूपिणो हस्तेन विक्रीयास्माद्धनिपुरुषात्सकाशाद्द्विलक्षं धनं बहु

रूपिणे ददावित्यन्वयः ॥ ६८ ॥ वेश्यापमानिता धनिकसन्निधाविति शेषः । अत्रेयं कथा—विक्रमचरित्रे—शुकसंग्रहकर्ता धनिकः कदाचित्स्वप्ने वेश्यां भुक्त्वा कस्मैचित्पुरुषायाह—मया स्वप्ने वेश्या भुक्तेति । तच्छ्रुत्वा सा वेश्या भोगमूल्यं धनिकाय याचितवती । धनिकोऽपि धनं दातुमुद्यतस्तावत्स्वामिहित कच्छुको धनराशिनिकटे स्वामिहस्तेनादर्शं स्थापयित्वाह । स्वप्नभोगस्य मूल्यं दर्पणगतं धनं गृहाणेति । तच्छ्रुत्वा जनाः यादृशो भोगस्तादृशं मूल्यं युक्तमुक्तं शुकेनेत्याहुः । तच्छ्रुत्वापमानिता बभूवेति । तया द्वेषेण धनिनः सकाशादसौ शुको हननेच्छया याचितः याच्ञया गृहीत इत्यर्थः ॥ ६९ ॥ तन्मांसभक्षणार्थं छिन्नपक्षः पचनार्थं क्वचित्स्थापितोऽपि पूर्वपुण्येन मुक्तः सन् ततः कालांतरे गुप्तरूपेण तंदुलादि भक्षयित्वा पुनर्नूतनपक्षो जातः स च

वेश्यापमानिता काचिच्छुकरूपेण भूभुजा ॥ द्वेषात्तया याचितोऽसौ धनिनो हननेच्छया ॥ ६९ ॥ छिन्नपक्षोऽपि पुण्येन जीवन्मुक्तस्ततः पुनः ॥ प्राप्तपक्षो विरूपत्वं शिरोमुंडनपूर्वकम् ॥ ७० ॥ तस्याश्चक्रे वंचयित्वा दैव्या वाण्याथ वृक्षगः ॥ बंदिनं सोमदत्ताख्यमात्मान्वेषणतत्परम् ॥ ७१ ॥ दृष्ट्वा तं विक्रमः प्रोच्य स्ववृत्तं तद्युतो ययौ ॥ भ्रमन्देशांश्च मार्गेण राजकन्यापणं स्वयम् ॥ ७२ ॥ जित्वा सुदर्शनायासौ ददौ पद्मावतीं पराम् ॥ कस्मैचिद्भूभुजे पश्चाद्विक्रीयात्मानमेव हि ॥ ७३ ॥ बंदिनः करतस्तस्मै ददौ वित्तं द्विलक्षकम् ॥ पिशाचेन हृतां तत्र विप्रभार्यां ददौ पुनः ॥ ७४ ॥

दैव्या वाण्या तस्या वेश्यायाः शिरोमुंडनपूर्वकं विरूपभावं चक्रे इत्यन्वयः । तथा च वेश्यां प्रत्यपकारं चिकीर्षुणा शुकेन हनुमन्निकटस्थितेन गुप्तेन हनुमद्वाणीसदृशनिजवाक्येन कथितम् । किं तत् त्वं शिरोमुंडनपूर्वकं क्षौरं विधाय नग्ना सती मां शतवारं प्रदक्षिणीकरोषि चेत् अप्सरोरूपा भविष्यसीति श्रुत्वा तया तथा रात्रौ कृतं तावत्सूर्योदये जनाश्च दृष्ट्वा जहसुरिति वंचितेत्यर्थः ॥ ७० ॥ अथ वृक्षगतः शुक इत्याद्युत्तरान्वयि ॥ ७१ ॥ तद्युतो बंदियुक्तः । उत्तरार्द्धमुत्तरान्वयि ॥ ७२ ॥ कस्मैचित्सुदर्शनाख्याय राज्ञे पद्मावतीनाम्नी कन्या पणं त्यक्तहास्यभाषणायास्तस्याश्चतुर्वारं हास्यभाषणरूपं पणं जित्वा तां राजकन्यां तस्मै ददावित्यन्वयः । उत्तरार्द्धमुत्तरान्वयि आत्मानं शुकदेहिनम् ॥ ७३ ॥ तस्मै बंदिने कथांतरं पिशाचेनेति ॥ ७४ ॥

तद्भर्त्रे इति पूर्वान्वितम्।अत्रापीयं कथा विक्रमचरित्रे—कस्मिंश्चिद्द्विजे भार्यां गृहे स्वपितृसमीपे न्यस्य यात्रार्थं गते सति पश्चात्तद्रूपधरः पिशाचस्तद्गृहे स्थित्वा तद्भार्यां बुभुजे। द्विजोऽपि यात्रां कृत्वा गृहमागत्य निजरूपधारिणा पुरुषेण कलहं चकार तदा जनाश्च विस्मिता बभूवुः। तौ च ममेयं भार्येति भाषमाणौ राजसमीपमागतौ तदा शुकरूपिणा सर्वज्ञेन विक्रमेण नलिकाछिद्राद्योगमिष्यति सोऽस्या भर्त्तेत्युक्तम्। तदा पिशाचः स्वमतसिद्धये तथाकरोत्। तदैवायं पिशाचो ज्ञातः सन् गतः। तद्भर्त्रे भार्या प्राप्तासीदिति। अथ भट्टिर्वेदिवाक्येन विक्रमं ज्ञात्वा तस्माच्छुकसंग्रहीतुर्नृपात्सकाशात्तं याचयित्वोज्जयिन्यां निना

तद्भर्त्रेऽथ नृपात्तस्माद्वेदिवाक्येन याचकः॥ ज्ञात्वा भट्टिर्याचयित्वा विक्रमं स्वपुरेनयत्॥७५॥ राज्ञोऽस्य शुकरूपस्य प्रोक्ताः संक्षेपतः कथाः॥ विस्तृतेभयतोऽथाग्रे शृणुष्वानघ तत्कथाम्॥७६॥ भट्टिना पंजरस्थोऽसौ रहसि स्थापितः शुकः॥ कृत्रिमो विक्रमो थांतर्गत्वाह महिषीमिति॥ ७७॥ षण्मासाः समतिक्रांताः कुरु मेऽद्य मनोगतम्॥ श्रुत्वेति दूरात्तं प्राह महिषी भट्टिनेरिता॥७८॥ परकायप्रवेशाख्यां विद्यां वेत्ति भवानिति॥ श्रुतं मयादौ तस्मात्त्वं मह्यं दर्शय तामिह ॥ ७९ ॥ ततस्त्वं तु पुमानेव स्त्र्यहं नैवात्र संशयः॥ श्रुत्वेति स तथेत्याहाथानीयैकं मृतं शशम्॥८०॥ तदग्रेऽस्थापयच्चास्मिन्स दुष्टात्माऽविशच्छवे ॥ भट्टिर्गूढः स्थितस्तावत्पंजराच्छुकमानयत्॥ ८१॥ स्वदेहेथाविशद्राजा जपन्विद्यां शुकीतनोः॥ दृष्ट्वेति स खलो भीतो ज्ञात्वा विक्रममागतम्॥ ॥ ८२॥ दुद्राव स्ववधाद्भीतस्तत्पृष्ठे राजसेवकाः॥ गत्वा निजघ्नुस्तं पापं शस्त्रैर्ग्रामाद्बहिर्गतम् ॥ ८३ ॥ नृपतिः प्राप्य देहं स्वमित्थं पुण्यबलात्पुनः॥ चक्रेथोज्जयनीराज्यं भोगांश्च बुभुजे परान्॥ ८४॥ शताब्दं पंचरामोर्ध्वं सिंध्वंतां बुभुजे धराम्॥ शककर्ता कलौ तावद्विक्रमार्कोतिविक्रमात्॥ ८५॥

येत्यर्थः॥ ७५॥ ७६॥ ७७॥ मनोगतं मनोरथं त्वत्संगादित्यर्थः। ईरिता प्रेरिता॥ ७८॥ तां विद्याम् इह मन्निकटे ॥ ७९॥ त्वं पुमान् अहं स्त्रीत्यत्र वाक्ये त्वं मत्पतिर्नासि। अहं च ते पत्नी नास्मीति गूढाभिप्रायः। अथेत्याद्युत्तरान्वयि॥ ८०॥ ८१॥ शुकीतनोः सकाशात्॥ ८२॥ तं पापं निजघ्नुर्घातितवंतः। तथा च गुरुं वंचयित्वा प्राप्तापि विद्या नाशाय भवतीति भावः॥८३॥८४॥ पंचरामोर्ध्वं शब्दे पंचत्रिंशादधिकशतवर्षपर्यंतम्।

सिंध्वंतां समुद्रपर्यंतां पृथ्वीं तावत्पर्यंतम् अतिविक्रमात् अतिपराक्रमेण शककर्ता जात इति शेषः ॥ ८५ ॥ देवेंद्रसदृशमैश्वर्यमासीदिति परिणामेन योज्यम् पराक्रमात् पराक्रमेण. ॥ ८६ ॥ ८७ ॥ शालिवाहनकथामाह—प्रतिष्ठान इत्यादिना । कन्या आसीदिति शेषः ॥ ८८ ॥ ८९ ॥ ९० ॥ आयातः आगतः ॥ ९१ ॥ अहिराट् शेषः ॥ ९२ ॥ पुरान्निष्कासितः सन् कुलालगृहे स्थितः ॥ ९३ ॥ मृत्सैन्यं मृन्मयं सैन्यं चतुरंगं हस्त्यश्वरथपदातिरूपम् ।

पुत्राः पौत्राश्च यस्यासन्सुरेंद्रैश्वर्यमक्षयम् ॥ नं शत्रुः करदाः सर्वे भूपास्तस्य पराक्रमात् ॥८६॥ न्यायान्विवदतोश्चक्रेऽनेकान्कलह नाशकान् ॥ भूस्थाः कलहिनः सर्वे प्रष्टुं यांत्येव विक्रमम् ॥ ८७ ॥ प्रतिष्ठाने पुरेऽथासीद्द्विजः कश्चित्स्त्रियान्वितः ॥ तत्पत्नी तु मृता दैवात्कन्यैकाऽस्य त्रिवार्षिकी ॥ ८८ ॥ कदाचित्तां गृहीत्वासौ गोदां स्नातुं ययौ द्विजः ॥ कन्यां स्थाप्य तटे स्नातुं गतश्चाप्सु द्विजो यदा ॥८९॥ तावद्बिलाद्विनिष्क्रम्य शेषः साक्षान्नराकृतिः ॥ बुभुजे तां बलात्कन्यां रुदंतीं सांत्वयन्मुहुः ॥९०॥ स्नात्वायातः पिता तावत्तमाहाऽनंतमेव माम् ॥ विद्धि मत्तः सुतश्चास्यां शककर्ता भविष्यति ॥ ९१ ॥ स्मर्तव्यः संकटेऽहं चेत्युक्त्वा सोंऽतर्दधेऽहिराट् ॥ गर्भं दधार कन्याऽथ निनिंदुस्तं द्विजं जनाः ॥ ९२ ॥ निष्कासितः पुरात्तस्थौ कुलालस्य गृहे द्विजः ॥ कन्याथ सुषुवे पुत्रं सुमुहूर्ते सुलक्षणम् ॥ ९३ ॥ पंचाब्दिकोऽभवत्पुत्रः शालिवाहनसंज्ञकः ॥ नित्यं कृत्वा स मृत्सैन्यं चतुरंगमनेकधा ॥ ९४ ॥ स्थापयामास शालायां कुलालस्य दिने दिने ॥ चत्वारो बंधवः केचिद्विवदंतो मिथो ययुः ॥ ९५ ॥ पितृवित्तविभागार्थं विक्रमं स्वपुरस्थितम् ॥ न्यायस्तेषां तु याथार्थ्यान्नाभवद्विक्रमाद्यदा ॥ ९६ ॥

उत्तरार्द्धमुत्तरान्वयि ॥ ९४ ॥ तत्कृतां नीतिमाह—चत्वार इति ॥ ९५ ॥ पितृवित्तविभागार्थमित्यर्द्धं पूर्वान्वितम् । अत्रेयं कथा कश्चिद्धनिको मरणसमये पर्यंकस्य चतुःपादाधःस्थले किंचित्किंचिद्धान्यं पशुचित्रं सुवर्णं पत्रं च स्थापयित्वा मृतस्तत्पुत्राश्चत्वारो विभागे विवदमाना विक्रमं ययुरिति ॥ ९६ ॥

यदा न जातस्तदा तस्माद्विक्रमाद्देशे देशे भ्रमंतः प्रतिष्ठानं ययुः ॥ ९७ ॥ ततः प्रतिष्ठानात् । तान् बंधून् ॥ ९८ ॥ वक्तव्यं भवद्भिरिति शेषः । निर्णीयते निश्चीयते । उत्तरार्द्धमुत्तरत्र योज्यम् ॥ ९९ ॥ अर्भे बालकेऽपि ते बंधवश्चतुर्भिरित्याद्युत्तरान्वयि ॥ १०० ॥ समान् भगान् पितृधनेषु उत्पन्नान् युष्मत्पितृकृत एव विभागोऽस्ति स यथा चतुर्मंचपादाधःस्थिताश्चत्वारो भागाश्चतुर्बंधुभिर्ग्राह्याः । तथा च धान्यपशुसुवर्णपत्राणि चतुर्भिर्भ्रातृभिर्ग्राह्याणीत्यर्थः ।

तस्मांद्ययुः प्रतिष्ठानं भ्रमंतो देशदेशतः ॥ प्रतिष्ठाने तु तत्रत्यास्तं न्यायं कर्तुमक्षमाः ॥ ९७ ॥ ततोऽपि निर्ययुस्तेऽथो वीक्ष्य ताञ्छालिवाहनः ॥ मिथो विवदतोऽपृच्छच्चेति किं कलहोऽस्ति वः ॥ ९८ ॥ वक्तव्यं तस्य तात्पर्यं सम्यङ्निर्णीयते मया ॥ प्रागल्भ्यं तस्य चाकर्ण्य वचस्तेजोऽप्यलौकिकम् ॥ ९९॥ दृष्ट्वार्भे तु सुविश्वस्ताः प्राहुर्बालाय तेऽखिलम् ॥ चतुर्भिर्बंधुभिः प्रोक्तं श्रुत्वा बालोऽपि तद्धृदि ॥ १०० ॥ विचार्याह समान्भागांस्तेभ्यः पितृधनोत्थितान् ॥ श्रुत्वा तेऽपि समान्भागान्मेनिरे बालकोदितान् ॥ १ ॥ स्वस्थानं ते ययुस्तुष्टाः प्रशंसंतः शिशोर्धियम् ॥ विक्रमोऽथाखिलं श्रुत्वा चारेभ्यः शिशुचेष्टितम् ॥ २ ॥ स कथं कृतवान्न्यायं यो मयापि च नो कृतः ॥ हनिष्येऽहं तमर्भं तु येन मद्धेलनं कृतम् ॥ ३ ॥ चिंतयन्निति सेनाढ्यः प्रतिष्ठानं ययौ रुषा ॥ विक्रमं चागतं श्रुत्वा भीताः पौराश्च तत्पतिः ॥ ४ ॥ दत्त्वाखिलकपाटानि प्राकारस्योर्ध्वतो जगुः ॥ विक्रमं चेति यो बालः कृतवान्न्यायमस्ति सः ॥ ५ ॥ बहिरेव न जानीमो वयं तस्य विचेष्टितम् ॥ बालमातापि भीताथ पित्राद्या शेषमस्मरत् ॥ ६ ॥ तावच्छेषः समायातो बालकायाखिलां ददौ ॥ सरहस्यां धनुर्विद्यां शस्त्रास्त्राणि च भूरिशः ॥ ७ ॥

समान् मानितवंतः ॥ १ ॥ अथ विक्रमः शिशुचेष्टितं श्रुत्वा इति चिंतयन् क्रोधेन प्रतिष्ठानं ययाविति द्वयोरन्वयः ॥ २ ॥ ३ ॥ उत्तरार्द्धमुत्तरान्वयि । तत्पतिः तेषां पुरवासिनां पतिः राजा च ॥ ४ ॥ यो बालो न्यायं कृतवान् स बहिरेवास्तीति योज्यम् ॥ ५ ॥ अस्मरत् स्मृतवती ॥ ६ ॥ ७ ॥

कवचं रत्नमुकुटमिति पूर्वान्विवम् । स्वदृशा स्वनेत्रेण ॥८॥ बालं शालिवाहनमाह । शेष इति शेषः । ते भयं मास्तु । बहिः गृहाद्बहिर्ययाविति योज्यम् ॥ ९ ॥ ११० ॥ रथगो रथस्थः ॥ ११ ॥ तं विक्रमं अजयत् हतवान् ॥ १२ ॥ स्वर्गतं स्वर्गगतम् । मार्गे शालिवाहनस्य सैनिकास्तत्पृष्ठतः विक्रमसेनापृष्ठभागेन नर्मदातटं ययुरित्यन्वयः ॥ १३ ॥ ततो नर्मदातः उज्जयिनीं प्रति गंतुं शक्ता न बभूवुरिति शेषः । सैनिककर्त्रनुवृत्तिश्च ॥ १४ ॥ शालि

कवचं रत्नमुकुटमथ सेनां मृदा कृताम् ॥ जीवयामास शालस्थां सिंचयन्स्वदृशाऽमृतम् ॥८॥ बालमाह न भीस्तेऽस्तु जय एव तवाधुना ॥ उक्त्वेत्यंतर्हितः शेषोऽथाऽर्भः सेनायुतो बहिः ॥९॥ ययौ रथस्थितः सेनां विक्रमस्य ददर्श च ॥ अथाभवन्महद्युद्धमुभयोः सेनयोरपि ॥११०॥ शालिवाहनसैन्येन विक्रमस्य बलं महत् ॥ हतं दृष्ट्वा विक्रमोऽथ योद्धुं तं रथगो ययौ ॥११॥ चक्रतुस्तौ मिथो युद्धं शालिवाहनविक्रमौ ॥ विक्रमं तं तदा युद्धे चाजयच्छालिवाहनः ॥१२॥स्वर्गतं विक्रमं दृष्ट्वा शेषास्तत्सैनिकास्ततः॥दुद्रुवुः स्वपुरीं मार्गे शालिवाहनसैनिकाः ॥१३॥ ययुस्तत्पृष्ठतः सर्वे नर्मदायास्तटं महत् ॥ ततो गंतुं न शक्तास्ते निवृत्त्य स्वपुरं ययुः ॥१४॥ प्रतिष्ठानेऽथ राजाभूच्छालिवाहनसंज्ञकः ॥ दक्षिणे सागरांता तु नर्मदावधि चोत्तरे ॥ १५ ॥ बुभुजे धरणीं कृत्स्नां शालिवाहनभूपतिः ॥ शककर्ता स एवासीद्विक्रमात्परतः कलौ ॥ १६ ॥ अथोज्जयिन्यां भट्टिस्तु विक्रमस्य सुतं नृपम् ॥ कृत्वाऽऽप सिद्धिं परमां सार्वात्म्यां योगिसेविताम् ॥१७॥ देशान्गतो भर्तृहरिस्तु कोपाद्भूत्वाऽमरोऽप्याप सुदुःखमंतः ॥ सारस्वताख्यं गुरुमेव पश्चात्तापेन कृत्वा भवितात्मनिष्ठः॥ ॥१८॥ यो वीरभद्रांश इतीरितोज्ञैः कृत्वा परां कीर्तिमिल[illegible]लेऽथ ॥ ययौ निजं धाम च विक्रमार्कस्तं सप्तपंचाख्यगुरुं नताः स्मः ॥१९॥

वाहनसंज्ञकः स राजा नर्मदातो दक्षिणसमुद्रपर्यंतं पृथ्वीं बुभुजे भुक्तवानित्यन्वयः ॥ १५ ॥ स एव शालिवाहनभूपतिः कलियुगे विक्रमशकात्पश्चाच्छककर्ताऽऽसीदित्यर्थः ॥ १६ ॥ नृपं राजानं कृत्वा योगिसेवितसिद्धिं प्राप प्राप्तः ॥ १७ ॥ देशान् देशांतराणि गतो भर्तृहरिस्तु पत्नीनिमित्तकोपेनामरो मृत्युरहितो भूत्वापि अंतः मनसि अत्यंतं दुःखं प्राप्तः सन् पश्चात्तापेन सारस्वतानंदं गुरुं कृत्वैवात्मनिष्ठो भविष्यतीत्यर्थः ॥ १८ ॥ सप्तपंचाख्यं विक्रमानंदं प्रण

मति—य इति । इलातले पृथ्वीतले कीर्तिं कृत्वा निजं धाम ययौ तं विक्रमानंदं नताः स्मो वयमिति शेषः ॥ ११ ॥ वयसाऽधिकः विद्यावंशे वयो ज्येष्ठो न भवति किं तु विदा ज्ञानेनाधिको यः स ज्येष्ठो भवति तत्रायमेव दृष्टांत इत्याह—भर्तृहरिर्ज्येष्ठोपि यथाऽवरः कनिष्ठो जातः । भट्टिरल्पोपि उज्ज्येष्ठः उत्कृष्टो ज्येष्ठो गुरुत्वात्सर्वोत्कृष्ट इत्यर्थः । गीतिरियम् ॥ १२० ॥ विक्रमचरित्रश्रवणादिफलमाह चरितमिति । विशदभक्त्या शुद्धभक्त्या अघोनं दुःखरहितं पदं मोक्षपदं व्रजति । यस्मान्मोक्षपदादन्यच्छ्रेष्ठं नास्तीत्यर्थः ॥१२१॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचत्रिंशः सर्गः॥३५॥षट्त्रिंशे

विद्यावंशे वयसाधिको न वयो विद्याधिको ज्येष्ठः ॥ भर्तृहरिर्ज्येष्ठोपि यथावरोऽल्पोऽपि भट्टिरुज्जेष्ठः ॥ १२० ॥ चरितमतिप वित्रं विक्रमार्कस्य यो वै पठति विशदभक्त्या श्रावयेद्वा शृणोति ॥ इह सुखकरभोगान्पुत्रपौत्रांश्च लब्ध्वा व्रजति पदमघोनं श्रेष्ठमन्यन्न यस्मात् ॥ १२१ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे विक्रमादित्यकथावर्णनं नाम पंचत्रिंशः सर्गः ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ भोगानंदः पुरोक्तो यो विक्रमार्काद्रहस्यकम् ॥ लब्ध्वाभवत्स सिद्धार्यः प्राप चालौकिकीं श्रियम् ॥ १ ॥ तपःश्रियान्वितः पत्न्यां पुत्रपौत्रादिभिः सह ॥ बुभुजेऽनेकभोगान्वै राज्ञामपि सुदुर्लभान् ॥ २ ॥ राजानः शिष्यतां प्रापुर्धनिनोऽस्य विशस्तथा ॥ शिवार्चानिरतो नित्यं भोगान्भुंजंश्च निःस्पृहः ॥ ३ ॥ भोगानंदाभिधश्चासीदात्मवान्योगवित्तमः ॥ सरहस्यान्मनून्सर्वान्ददौ पुत्राय धीमते॥४॥निःस्वोपि लब्ध्वाखिलमंत्रजातं सिद्धीः पराः प्राप सदात्मनिष्ठः॥तमष्टपंचाशगुरुं हि भोगानंदं वयं सिद्धवरं नताःस्मः॥५॥

तु त्रिषट्प्रथैर्भोगानंदादिदेशिकाः ॥ उदिताश्च क्रमादष्टौ पृथक्कृततत्कथानकैः ॥ ३६ ॥ भोगानंद इति । पुरा पूर्वसर्गे । अलौकिकीं सर्वलोकामित्यर्थः ॥ १ ॥ तपसा श्रिया च युक्तः ॥ २ ॥ अस्य भोगानंदस्य । शिवयोः पूजातत्परः । इच्छाहीनो बभूव ॥ ३ ॥ ननु भोगभुजि भोगानंदे निःस्पृहत्वं कथं भवेदत आह । आत्मवान् ज्ञानी योगविद्वरीयान् । ज्ञानयोगवतो हि अकर्तृत्वभावनया भोगभुक्तेपि वस्तुतः श्रीकृष्णवत् भोगभोक्तृत्वाभावेन निःस्पृहत्वं संभवतीति भावः ॥ ४ ॥ अष्टपंचाशत्संख्यं भोगानंदं प्रणमति—निःस्व इति । पूर्वं निःस्वो दरिद्रोऽपि पश्चात्सर्वमंत्रान् प्राप्य तेभ्यः सिद्धीः प्राप तथाऽप्यात्म

निष्ठो यो बभूव । स्पष्टार्थमन्यत् ॥ ५ ॥ दयया आर्द्रं क्लिन्नं चित्तं यस्य । ततो हेतोः क्लिन्नानंदः स्मृतः । 'आर्द्रं सार्द्रं क्लिन्नम्' इत्यमरः ॥ ६ ॥ सायुधा आयुधहस्ताः । निशीथके निशीथे ॥ ७ ॥ ते चोराः । अस्य क्लिन्नानंदस्य ॥ ८ ॥ हस्ततः हस्तेभ्यः । अखिलानां सर्वेषां शरीराणि । इलातले पृथ्वीतले ॥ ९ ॥ यावदेवं जातं तावत् । अत्र मद्गृहे ॥ १० ॥ भृशमत्यंतं धनवंतम् । धनलब्ध्यै द्रव्यलाभाय प्राप्ताः । चोरकर्मणाऽस्माकमुपजीवि

भोगानंदस्य शिष्यस्तु क्लिन्नानंद इति श्रुतः ॥ दयार्द्रचित्तोऽभूद्यस्मात्क्लिन्नानंदस्ततः स्मृतः ॥ ६ ॥ कदाचित्तस्य सदने ययुश्चोरास्तु सायुधाः ॥ समृद्धसंपदं ज्ञात्वा क्लिन्नानंदं निशीथके ॥ ७ ॥ क्लिन्नानंदस्तु तैर्दृष्टो ध्यानस्थश्चातिभास्वरः ॥ यथाग्निरेव सज्वालो भीतास्तेऽथास्य दर्शनात् ॥ ८ ॥ तेषां मीलितनेत्राणां पेतुः शस्त्राणि हस्ततः ॥ चकम्पिरेऽखिलांगानि केचित्पेतुरिलातले ॥ ९ ॥ तावदुन्मील्य नयने क्लिन्नानंदो ददर्श तान् ॥ के यूयमिति चापृच्छद्रात्रावत्र किमागताः ॥ १० ॥ तेऽथ प्रोचुर्वयं चोराः श्रुत्वा त्वां धनिनं भृशम् ॥ धनलब्ध्यै समायाता वृत्तिश्चौर्येण नः सदा ॥ ११ ॥ त्वां दृष्ट्वैवाग्निसंकाशं जाताः सर्वेऽबला वयम् ॥ त्वां द्रष्टुमपि नो शक्ताः कर्तुं चौर्यं कुतः पुनः ॥ १२ ॥ अस्माकं पोष्यवर्गोऽस्ति गृहेऽत्यंतमुपोषितः ॥ अनन्नमातृतो दुग्धमलब्ध्वाऽर्भा रुदंति हि ॥ १३ ॥ वयं चोपोषिताः सर्वे नाह्नि गंतुं बहिः क्षमाः ॥ रात्रावपीत्थमत्राभूत्कथं जीवामहे पुनः ॥ १४ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति तस्करोक्तं तान्क्लिन्नानंदः कृपार्द्रदृक् ॥ प्राहेत्थमत्र युष्माभिर्भुज्यतामन्नमुत्तमम् ॥ १५ ॥ नोपोषितश्च मद्गेहात्कश्चिद्गच्छति सर्वदा ॥ श्रुत्वेति तस्कराः प्रोचुश्चेच्चिरं चात्र संस्थिताः ॥ १६ ॥ वयं राजभटैरेत्य बंधनं क्रियते हि नः ॥ क्लिन्नानंदोऽथ तान्प्राह यूयं चोरास्तु नाखिलाः ॥ १७ ॥ मद्गृहेऽतिथयः प्राप्ताः पुण्यान्मेऽत्यंतदुर्लभाः ॥ न यद्दर्शनमप्यह्नि रात्रौ ते स्वयमागताः ॥ १८ ॥

कास्तीत्यर्थः ॥ ११ ॥ अबला बलहीनाः ॥ १२ ॥ पोष्यवर्गः स्त्रीपुत्रादिः । अनन्नमातृतः न अन्नं याभ्यस्ताभ्यो मातृभ्योऽर्भा बाला दुग्धमप्राप्य रुदंति हि निश्चयेन ॥ १३ ॥ अह्नि दिवा न क्षमा न समर्थाः । इत्थं प्राकट्यचौर्यलाभादि ॥ १४ ॥ १५ ॥ न गच्छति न जगाम । भूते वर्तमाननिर्देशश्चोरस्थिरीकरणार्थः ॥ १६ ॥ वयमिति पूर्वान्वितम् । तर्हि बंधनं क्रियत इति योज्यम् । यूयं तु चोराः न स्थेत्यध्याहारः ॥ १७ ॥ किं तु अतिथयः

प्राप्ताः स्थ पुण्यात् पुण्येन । दुर्लभत्वमाह । येषां चोराणां दर्शनं दिवा न भवति रात्रौ तु स्वतः प्राप्ताः ॥ १८ ॥ पस्त्यात् गृहात् । ' निशांतपस्त्यसदनम् ' इत्यमरः । अशनाद्विना भोजनं विना मनाक् अल्पम् ॥१९॥ गृहिणा गृहस्थेन । उत्तरार्द्धमुत्तरान्वयि । पत्न्या पत्नीहस्तेन ॥ २० ॥ हराश्चोराः भुंजतेस्म भुक्तवंतः ॥ २१ ॥ तद्गृहस्थानां चोरगृहस्थितानां स्त्रीपुत्रादीनां भुक्त्यर्थं भोजनार्थम् । भृशं बहु ॥ २२ ॥ क्लिन्नानंदादि पूर्वान्वयि । अथ ते

उपोषिताश्च ते गंतुं नार्हाः पस्त्याद्विनाऽशनात् ॥ अभुक्त्वान्नं मनाग्वापि मद्गृहादतिथिर्गतः ॥ १९ ॥ गृहिणां कृत पुण्यस्य हर्तासौ भवति ध्रुवम् ॥ इत्युक्त्वा तान्स्वपत्न्याथ पक्वान्नं तु सविस्तरम् ॥ २० ॥ भोजनाय ददौ तेभ्यः क्लिन्नानंदोतिभक्तितः ॥ भुंजतेस्म हराः सर्वे स्वाद्वन्नं व्यंजनान्वितम् ॥ २१ ॥ शर्कराघृतमिश्रं च यन्न भुक्तं कदापि तैः ॥ भुक्त्यर्थं तद्गृहस्थानां पक्वमन्नं ददौ भृशम् ॥ २२ ॥ क्लिन्नानंदः सतांबूलं तस्करेभ्योऽथ ते ययुः ॥ स्वगृहांस्तस्य सामर्थ्यं प्रशंसंतस्ततोऽखिलाः ॥ २३ ॥ त्यक्त्वा चोरधियं जाताः सद्धियोऽथान्यवृत्तिभिः ॥ पुपुषुः पोष्यवर्गं स्वं साधोः संगतिरीदृशी ॥ २४ ॥ एतादृशः क्लिन्नसुखो रहस्यमुक्त्वाऽखिलं चापि कुलेश्वराय ॥ सार्वात्म्यसिद्धिं समवाप योगी तमूनषष्ट्याख्यगुरुं नताः स्मः ॥ २५ ॥ आसीत्कुलेश्वरानंदः कुलधर्मपरायणः ॥ मूलाधारात्करंध्रांता नाडी यास्ति सुषुम्णिका ॥ २६ ॥ चिन्मयीं देवतारूपां तामेवांतस्तु भावयन् ॥बहिश्चावाह्य मूर्त्यादौ कुलमार्गादपूजयत् ॥ २७ ॥ त्यक्त्वा प्राचीनमार्गं येऽविध्याचाररताः सदा ॥ तांश्चानुशास्य सामर्थ्याद्विध्याचारे न्ययोजयत् ॥ २८ ॥ केचित्कुलेश्वरानंदं सदानंदमिति स्फुटम् ॥ प्राहुः सद्गुणशीलत्वात्सदाचारप्रवर्तनात् ॥ २९ ॥

चोराः ततः क्लिन्नानंददर्शनानंतरमित्याद्युत्तरेणान्वेति ॥ २३ ॥ चोरधियं चोरबुद्धिम् । अन्यवृत्तिभिः चौर्यभिन्नोपजीविकाभिः । ईदृशी सद्बुद्धिजनका ॥ ॥ २४ ॥ एकोनषष्टितमं क्लिन्नानंदं प्रणमति एतादृश इति । क्लिन्नसुखः क्लिन्नानंदः ॥ २५ ॥ कुलधर्मपरायणः कौलिक इत्यर्थः । करंध्रांता ब्रह्मरंध्रपर्यंता ॥ २६ ॥ अंतः मनसि । कुलमार्गात्कुलमार्गेण ॥ २७ ॥ अविध्याचाररता इति छेदः । विध्याचारे गुरूपदिष्टमार्गे योजितवान् ॥ २८ ॥ २९ ॥

षष्टितमं कुलेश्वरानंदं प्रणमति—कुलेश्वरानंद इति । कुलिनां कुलमार्गवताम् । अविधानभाजां विध्याचरणहीनानाम् । लीलासुखाय लीला नंदाय । रहस्यं पूर्णाभिषेकादि ॥ ३० ॥ वियत् आकाशः ॥ ३१ ॥ आत्मनिष्ठैर्वृद्धैः सुसंमतः सत्कृतः क्रीडन्नित्यादिद्वयोरन्वयः ॥ ३२ ॥ पूजापद्धतेः पूजामार्गस्य ग्रंथं ललिताचार्सुधाकरनामकम् । पंचरात्राद्यागमसिद्धांतरूपं चकार । कुलमार्गवतामुत्तमज्ञानार्थम् ॥ ३३ ॥ एकषष्टिमितं लीलानंदं प्रण

कुलेश्वरानंद इलातलेऽभूच्छास्ता विधानात्कुलिनां यथावत् ॥ लीलासुखायाह परं रहस्यं षष्ट्या मितं तं गुरुमानताः स्मः ॥३०॥ लीलानंदोऽथात्मवेत्ता कुर्वँल्लीलास्त्वनेकधा ॥ नैव लिप्तोऽभवत्ताभिर्मेवसंघैर्यथा वियत् ॥ ३१ ॥ क्रीडन्बालैश्च तरुणैरथ वृद्धैः सुसंमतः ॥ आत्मनिष्ठैरात्मतत्त्वं ख्यापयंश्च सदात्मदृक् ॥ ३२ ॥ ग्रंथं पूजापद्धतेश्च चकारागमनिर्णयम् ॥ सद्बोधाय कुलीनानां ललिताचार्सुधाकरम् ॥ ३३ ॥ लीलाभिनंदो गदितस्वभावो रहस्यमुक्त्वा सहजाभिधाय ॥ यः प्राप सिद्धिं परमां गुरुं स्वं तमेक षष्ट्या प्रमितं नताः स्मः ॥ ३४ ॥ सहजानंदनामाभूद्यदृच्छालब्धतुष्टधीः ॥ सदैवात्मसुखे मग्नो लब्ध्याऽलब्ध्या न मुह्यति ॥ ॥ ३५ ॥ कदाचित्सहजानंदः कर्तुमाराधनां गुरोः ॥ भिक्षार्थं प्रययौ शिष्यैर्गुरुभक्तिमतां गृहान् ॥ ३६ ॥ धान्यं गोधूममुख्यं च ददुः केचिद्घृतं सिताम् ॥ गुडं केचिद्धनं चान्ये स्वशक्त्याऽऽप्तं यदेव तत् ॥३७॥ चीरखंडानि ह्रस्वानि जरंति मलिनानि च ॥ सहजा नंदगुरवे शठः कश्चिद्ददौ धनी ॥ ३८ ॥ जग्राहादरतस्तानि सहजानंद आत्मवान् ॥ दृष्ट्वेति जहसुश्छात्रास्तानादेहीति निषेधयन् ॥ ॥ ३९ ॥ सहजानंद उवाच ॥ प्रक्षल्यैतानि खंडानि शुक्लीकृत्वाथ वर्तिकाः ॥ गुर्व्यौ दीपाराधनार्थं कार्याश्चातिप्रकाशदाः ॥ ४० ॥

मति लीलाभिनंद इति । गदितस्वभावः पूर्वोक्तस्वभावः ॥ ३४ ॥ लब्ध्या लाभेनालब्ध्याऽलाभेन न मुह्यति सुखदुःखे न प्राप्नोति ॥ ३५ ॥ ३६ ॥ यत शक्तिप्राप्तं तत् ददुः ॥ ३७ ॥ ३८ ॥ आदरतः परमप्रीत्या छात्राः शिष्यास्तान् इति वक्ष्यमाणम् आह । सहजानंद इति शेषः ॥ ३९ ॥ गुर्व्यौ बृहत्यः

वर्तिकाः " काकडे " इति महाराष्ट्रप्रसिद्धाः ॥ प्रकाशदाः प्रकाशकराः ॥ ४० ॥ चीरखंडैः संतुष्टस्तद्दानं वर्णयति—नेति । यथा उरुवर्तिकाः कृतवान् ॥ ४१ ॥ द्विषष्टिप्रमितं सहजानंदं प्रणमति—इत्थमिति । इज्यं पूज्यम् ॥ ४२ ॥ ४३ ॥ गुरुभक्तौ धीर्येषां ते पूजयंति स्म पूजितवंतः ॥४४॥ निःस्वो दरिद्रः । अन्वहं प्रतिदिनम् ॥ ४५ ॥ तद्धृदयं शिष्यमानसं तपोबलात् तपःसामर्थ्येन ॥ ४६ ॥ साद्धान्वयः । पुलिने तीरे सिकताः

नानेन सदृशं दानं प्रकाशबहुलं परम् ॥ इत्युक्त्वानंदयुग्गत्वा स्वस्थानं स तथाकरोत् ॥ ४१ ॥ इत्थं हि योगी सहजाभिधानः कामाभिधायाऽऽह रहस्यजातम् ॥ सिद्धिं परां प्राप ततस्तमिज्यं गुरुं द्विषष्टिप्रमितं नताः स्मः ॥ ४२ ॥ शरणागतभक्तानां स्वीयानां कामपूरकः ॥ आसीदात्मविदां श्रेष्ठः कामानंदोऽतिनिःस्पृहः ॥ ४३ ॥ तच्छिष्या बहवश्चासन्गुरुभक्तिधियोऽखिलाः ॥ पूजयंतिस्म वस्त्राद्यैः कामानंदं गृहे गृहे ॥ ४४ ॥ कश्चिच्छिष्योऽथ तस्यासीन्निःस्वोऽप्यत्यंतभक्तिमान् ॥ गुरोः पूजां कर्तुमिच्छन्दारिद्र्यादक्षमोऽन्वहम् ॥ ४५ ॥ ज्ञात्वा तद्धृदयं सर्वं कामानंदस्तपोबलात् ॥ तं गृहीत्वा ययौ रात्रौ दूरं ग्रामाद्बहिर्नदीम् ॥ ४६ ॥ स्थित्वाथ पुलिने नद्यास्तत्रत्याः सिकताः स्वयम् ॥ महतीः स्वकराभ्यां तु गृहीत्वा स्वोत्तरीयके ॥ ४७ ॥ मुहुः क्षिप्त्वा दृढं बद्ध्वा शिरस्यस्य ददावथ ॥ तमाहेति गृहं नीत्वा स्थापयैतद्रहःस्थले ॥ ४८ ॥ प्रातस्त्वमेव मुक्त्वास्य ग्रंथिं पश्यान्यवर्जितः ॥ मनस्तोषकरं सत्यं श्रद्धाढ्यश्चेद्धि लप्स्यसे ॥ ४९ ॥ कामानंदस्तमित्युक्त्वा तेनाढ्यः पुरमाविशत् ॥ स्वगृहं स गतः शिष्यः स्वाश्रमं देशिकस्तथा ॥ ५० ॥ एकांते सिकताभारं श्रद्धाढ्यः स्थाप्य चोषसि ॥ शिष्यो मुमोच तद्ग्रंथिं तदद्भुतमिवाभवत् ॥ ५१ ॥ मुद्राः स्वर्णमयीः सर्वाः सोऽपश्यन्नैव वालुकाः ॥ धनिनां प्रवरोऽथाऽभूत्सद्यः करुणया गुरोः ॥ ५२ ॥

वालुकाः । स्वोत्तरीये आत्मन उत्तरीयवस्त्रे ॥ ४७ ॥ अस्य शिष्यस्य शिरसि ददौ स्थापितवान् । कामानंद इति शेषः । स च तं शिष्यं प्राह । त्वम् एतत् मया दत्तं रहःस्थले एकांतस्थाने स्थापय ॥ ४८ ॥ मुक्त्वा उन्मुच्य अस्य मद्दत्तवस्त्रस्य । अन्यवर्जितः एकाकी । मनस्तोषकरं वस्तु लप्स्यसे प्राप्स्यसे ॥ ४९ ॥ तेन शिष्येण आढ्यः सहितः । सः शिष्यः ॥ ५० ॥ गुरुभक्ते नाश्चर्यमेतत्तदर्थमिवशब्दः ॥ ५१ ॥ ५२ ॥

सुभक्तये उत्तमभक्तिमते॥५३॥ त्रिषष्टिमितं कामानंदं प्रणमति—इत्थमिति । आसमंतात्सर्वतोऽपूरयत्॥५४॥ चतुःषष्टिमितं कौलेश्वरानंदं प्रणमति—लब्ध्वेति। कामसुखात्कामानंदात् ॥ ५५ ॥ षट्शताधिकैकविंशतिसहस्रैः प्राणिनां श्वासैरिडापिंगलानाड्यौ वामसव्यतः वामदक्षिणभागेन वहतः प्रवहत इति सार्द्धा न्वयः ॥५६॥५७॥ तयोर्नाड्योः सार्द्धद्विघटिकामानं प्रोक्तं सार्द्धद्विघटिकापर्यंतमेकनाडीस्थितिरित्यर्थः । तन्मध्यगानि नाडीमध्यस्थानि पृथिव्यादित त्त्वानि भवंतीति शेषः ॥ ५८ ॥ घटिकार्द्धप्रमाणानि अर्द्धघटीपर्यंतं स्थायीनीति तत्त्वविशेषणम् । उक्तं स्वरोदयादिग्रंथेष्वित्यर्थः ॥ ५९ ॥ तज्ज्ञानात्स्वर

चकार गुरुपूजां च बहुभूषांशुकादिभिः ॥ प्रसन्ने श्रीगुरावित्थं किमलभ्यं सुभक्तये ॥ ५३ ॥ इत्थं त्वनेकान्निजभक्तकामांश्चापूरयत्स्वी यतपोबलेन ॥ तं सिद्धवर्यं गुरुमद्य कामानंदं त्रिषष्टिप्रमितं नताः स्मः ॥५४॥ लब्ध्वाखिलं कामसुखाद्रहस्यं कौलेश्वरः कौलमता भिमानी॥ सिद्धिं शिवोपास्तिबलाद्ययौ तं गुरुं चतुःषष्टितमं नताः स्मः ॥ ५५ ॥ शिष्यस्तस्य स्वरानंदः स्वराभ्यासरतः सदा ॥ एक विंशतिसाहस्रैः षट्शतोर्द्धैरहर्निशम् ॥५६॥ मूलाधारादिचक्रोत्थैः प्राणिश्वासैर्मुहुर्मुहुः॥ इडा च पिंगला नाड्यौ वहतो वामसव्यतः॥ ॥५७॥ सार्द्धद्विघटिकामानं तयोः प्रोक्तं पृथग्बुधैः ॥ तन्मध्यगानि तत्त्वानि पंच पृथ्वीमुखानि च ॥५८॥ घटिकार्द्धप्रमाणानि वर्णा कारादिभिः पृथक् ॥ स्वरूपमुक्तमेतेषां स्वरशास्त्रविशारदैः ॥५९॥ सम्यगभ्यासतस्तेषां ज्ञानं भवति नान्यथा ॥ भूतं भावि च तज्ज्ञा नाज्ज्ञायते तत्फलैः पृथक् ॥६०॥ गायत्र्यास्त्वजपाख्यायाश्चानुसंधानतः सदा ॥ तत्फलैस्तु स्वरानंदो वेत्ति भूतं भविष्यकम् ॥६१॥ स्वरानुसंधानवशात्सदैव ज्ञात्वाऽखिलं भूतभविष्यकं यः ॥ प्राहात्मशिष्यान्किल पंचषष्ट्या मितं स्वरानंदगुरुं नताः स्मः ॥ ६२ ॥ सुचरितमिदमष्टानां पठतामपि शृण्वतां सुनिष्ठानाम् ॥ हारकमतिकष्टानां कामानां पूरकं किलेष्टानाम् ॥६३॥ इति श्रीगुरुपरंपराच रित्रे पूर्वार्द्धे भोगानंदाद्यष्टगुरुवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥

ज्ञानेन भावि भविष्यम् । तत्फलैः तत्त्वफलैः करणैर्ज्ञायते । स्वरशास्त्रज्ञैरिति शेषः ॥ ६० ॥ तत्फलैः स्वरफलैः ॥ ६१ ॥ पंचषष्टिमितं स्वरानंदं प्रण मति—स्वरेति । स्वरानुसंधानवशात् स्वरविचारेण । शेषं स्पष्टम् ॥ ६२ ॥ अध्यायश्रवणादिफलमाह—सुचरितमिति । अष्टानां गुरूणामिति विशेषाध्याहारः। इष्टानाम् इच्छितानां कामानां पूरकं भवतीति शेषः।यमकालंकारः॥६३॥इति श्रीमद्गुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां षट्त्रिंशः सर्गः ॥ ३६ ॥

सप्तत्रिंशेऽशीतिपर्यैश्चत्वारो देशिकाः स्मृताः ॥ तत्रापि दीपकाख्यस्य गुरुसेवाधिकोदिता ॥ ३७ ॥ स्वरानंदस्येति सार्द्धान्वयः । तृतीयापंचम्यंतहेतुभिस्तद्रूप एव श्रीविद्यारूप एव बभूवेति शेषः ॥ १ ॥ यो यस्यां देवतायां श्रद्धावान् सः स एव भवति यथा भगवतो गीतायां वाक्यं तथा श्रीविद्यानंदे उपास्योपासकैक्यं जातमित्यन्वयः ॥ २ ॥ ३ ॥ षट्षष्टिमितं श्रीविद्यानंदगुरुं प्रणमति–य इति । श्रीविद्या प्रथमा यस्य स विद्यासुखो विद्यानंदः ।

श्रीदेशिकेंद्र उवाच ॥ स्वरानंदस्य शिष्योथ श्रीविद्यानंदसंज्ञकः ॥ विद्योत्कर्षाद्गुणैश्चापि शांत्याद्यैस्तेजसाख्यया ॥१॥ श्रीविद्योपासनादार्ढ्याज्जातस्तद्रूप एव सः ॥ यथा श्रीभगवद्वाक्यं यो यच्छ्रद्धः स एव सः ॥२॥ उपास्योपासकैक्यं श्रीविद्यानंदे तथाऽभवत् ॥ देवतारूपिणं सर्वे मेनिरे तमुपासकाः ॥ ३ ॥ यो देवतैक्यं गतवान्सुभक्त्या श्याद्यस्तु विद्यासुख आत्मवेत्ता ॥ तं सिद्धवर्यैः परिपूजितांघ्रिं गुरुं हि षट्षष्टितमं नताः स्मः ॥ ४ ॥ अंतेवास्यथ तस्यासीद्धर्माचार्य इति श्रुतः ॥ उपासकेभ्यो यः प्राह धर्मान्दैवतभेदतः ॥ ५ ॥ वक्ता यस्तु चतुःषष्टितंत्राणां नान्य ईदृशः ॥ महांतोऽपि यमायांति धर्मान्प्रष्टुमुपासकाः ॥ ६ ॥ वर्णाश्रमाणां धर्मांश्च यस्तथा वेत्ति कृत्स्नशः ॥ मीमांसाशास्त्रतत्त्वज्ञो वेदवेदांगपारगः ॥ ७ ॥ धर्मवेत्तृषु सर्वेषु प्रोक्तः श्रेष्ठोऽखिलैरतः ॥ धर्माचार्यमिति प्राहुर्धर्मतत्त्वविदोऽखिलाः ॥ ८ ॥ यः सर्वधर्मोद्भवतत्त्वमुक्त्वा नात्मानुभावं तु मनाग्जहाति ॥ धर्माद्यमाचार्यमिति प्रसिद्धं तं सप्तषष्ट्याख्यगुरुं नताः स्मः ॥ ९ ॥ धर्माचार्यानंदशिष्यो दीपकानंद ईरितः ॥ गुरुभक्तिरतो नित्यं वेत्त्यन्यन्न गुरोर्वरम् ॥ १० ॥ धर्माचार्यः कदाचित्तु गतो वाराणसीं पुरीम् ॥ दीपकेन युतो वर्षं तस्थौ तत्रात्मवित्तमः ॥ ११ ॥

श्रीविद्यानंद इत्यर्थः । स्पष्टमन्यत् ॥ ४ ॥ अंतेवासी पूर्णाभिषिक्तः यः शिष्यः । तस्य पूर्वोक्तगुरोः दैवतभेदतः देवताभेदेन पृथक् धर्मान् तत्तद्देवतापूजाधर्मान् उपासकेभ्यः प्राह ॥ ५ ॥ ईदृशो धर्मानंदसदृशो नासीत् ॥ ६ ॥ ७ ॥ धर्मवेत्तृषु धर्मज्ञेषु । अतः कारणात् ॥ ८ ॥ सप्तषष्टिमितं धर्माचार्यानंदं प्रणमति–य इति । सर्वेषु धर्मेषु उद्भवं जातं तत्त्वं तात्पर्यं मनाक् किंचित् । आत्मानुभवं न जहाति तं धर्माद्यमाचार्यं धर्माचार्यम् ॥ ९ ॥ शिष्यः कृत

पूर्णाभिषेको बोध्यः । अस्मिन् ग्रंथे सर्वे पूर्णाभिषिक्ता एव गुरवः संति । गुरोरन्यं वरं श्रेष्ठं न वत्ति ॥ १० ॥ ११ ॥ उदररुजा उदररोगेण । तं दीप
कम् ॥ १२ ॥ बहिर्गंतुं न शक्यत इति योज्यम् ॥ १३ ॥ अत्र गृहमध्य एव ॥ १४ ॥ वंचयति न करोतीत्यर्थः ॥ १५ ॥ गुरुभक्तार्यो गुरुभक्त
श्रेष्ठः सार्थकं सफलं वै निश्चयेन ॥ १६ ॥ १७ ॥ दीपकोपि मुहुः प्रार्थयन् मिष्टान्नेन धर्मानंदगुरुं भोजयतीति चतुर्णामन्वयः ॥ १८ ॥ ईषत् किंचित्

शिष्यभक्तिपरीक्षार्थं मिथ्योदररुजान्वितः ॥ तमाहेति शकृन्मूत्रोत्सर्गायापि मया बहिः ॥ १२ ॥ गंतुं न शक्यतेऽथाद्य कथं कार्यं वदाधुना ॥ श्रुत्वेति दीपकः प्राह दृढभक्तियुतो गुरुम् ॥ १३ ॥ दीपक उवाच ॥ मलमूत्रोत्सर्जनं वै क्रियतामत्र तन्मया ॥ निष्कास्यते न संदेहः कर्तव्योऽथ मनागपि ॥ १४ ॥ प्राक्पुण्यातिशयेनैव गुरोः सेवा तु लभ्यते ॥ तां वंचयति यो मूढः स जीवन्मृत उच्यते ॥ १५ ॥ देवादपि गुरुः श्रेष्ठ इति यस्य मतिर्दृढा ॥ स एव गुरुभक्तार्यस्तस्य वै जन्म सार्थकम् ॥ १६ ॥ श्रीदेशिकेन्द्र उवाच ॥ धर्माचार्यो निशम्येत्थं शिष्यवाक्यं गृहांततः ॥ उत्ससर्ज मलं मूत्रं दर्शयन्महतीं व्यथाम् ॥ १७ ॥ दीपकोऽपि करेणैवोद्धृत्याद्धा खर्परादिभिः ॥ बहिस्त्यक्त्वा मलं मूत्रं धौतपाणिश्च तां भुवम् ॥ १८ ॥ गोमयेनोपलिप्येषत्पूतिगंधिर्यथा गुरोः ॥ न यास्यति तथा पश्चात्स्नात्वा गंगाजले स्वयम् ॥ १९ ॥ वार्भिरुष्णाभिराचार्यं स्नापयित्वा प्रयत्नतः ॥ दत्त्वा धौतानि वासांसि भूतिगंधाद्यलंकृतिम् ॥ २० ॥ कृत्वास्मै नगरे भैक्ष्यं याचयित्वा ततः पृथक् ॥ मिष्टमन्नं तु गुरवे भोजयत्यर्थयन्मुहुः ॥ २१ ॥

पूतिगंधिर्दुर्गंधः गुरोर्न यास्यति न प्राप्स्यति तथा तां मलदूषितां भुवं गोमयेनोपलिप्येति योज्यम् ॥ १९ ॥ वार्भिरुदकैः आचार्यं धर्माचार्यं प्रयत्नतः समारंभेण ॥ २० ॥ अस्मै गुरवे । नगरे काश्याम् । भैक्ष्यं भिक्षान्नम् । ततः पृथक् कृत्वा कदन्नमिष्टान्नयोर्विवेचनं कृत्वेत्यर्थः ॥ २१ ॥

प्रक्षाल्येत्यादि द्वयोरन्वयः । अर्प्य समर्प्य करे गुरुहस्ते ॥२२॥२३॥ तां मलदूषिताम् ॥ २४ ॥ २५॥ इत्थं गुरुसेवारतः ॥२६॥ अविमुक्तके काश्यां देवतानां विश्वेशादीनां दर्शनविषये ॥२७॥ ईश्वरकोपे गुरू रक्षिता गुरुकोपे न कोपि रक्षकः इति भीत्या गुरुकृपाप्राप्तये सदा गुरौ तत्परः आसक्तोऽभवदित्यर्थः

प्रक्षाल्य च गुरोर्हस्तौ तांबूलं चार्पयत्करे ॥ शय्यां मृद्वीं ततः कृत्वा शाययित्वाऽथ सद्गुरुम् ॥ २२ ॥ स्वयं शाकादिकं शेषं भुक्त्वा श्रीदेशिकाज्ञया ॥ शीघ्रमुत्थाय तत्पादौ निपीडयति चादरात् ॥२३॥ मलमूत्रोत्सर्जनं चेत्पुनः कुर्याद्गुरुस्तदा ॥ मलं निष्कास्य तां पृथ्वीं पूर्ववल्लेपयत्यसौ ॥२४॥ सायाह्नेऽपि समानीय तंदुलादि प्रयत्नतः ॥ पक्त्वा ददाति गुरवे भोजनायातिसंस्तुवन् ॥२५॥ रात्रावपि तथा पादौ निपीडयति भक्तितः ॥ गुरोः सेवारतोऽत्यंतं स इत्थं दीपकोऽभवत् ॥ २६ ॥ एवं वर्षमतिक्रांतं दीपकस्याविमुक्तके ॥ नावकाशोऽभवन्नित्यं देवतादर्शनेऽप्यणुः ॥२७॥ हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ इति भीतः सदैवासीद्दीपको गुरुतत्परः ॥ ॥ २८ ॥ गुरौ भक्तिं दीपकस्य दृष्ट्वेत्यव्यभिचारिणीम् ॥ ययौ विश्वेश्वरः साक्षात्कमलासनविष्णुयुक् ॥ २९ ॥ वरं दातुं दीपकाय निद्रामग्नेऽस्य सद्गुरौ ॥ प्रोचुस्ते दीपकं सर्वे ब्रह्मविष्णुमहेश्वराः ॥ ३० ॥ गुरावत्यंतभक्त्या ते वरं दातुं समागताः ॥ वरं याचस्व भो अस्मद्दुर्लभं च मनोगतम् ॥ ३१ ॥ श्रुत्वेति दीपकः प्राह तिष्ठतो विष्णुकेश्वरान् ॥ न जानेऽहं वरं किं तु सेवां जाने गुरोः सदा ॥ ३२ ॥ वरश्चेद्याच्यतां कश्चिद्विषयोत्थसुखाप्तये ॥ विषयोत्थं सुखं किंचित्परिणामेऽतिदुःखदम् ॥ ३३ ॥ गुरुः स्वात्मसुखं दत्ते चाक्षयं क्षणसंगतः ॥ को मूढः श्रीगुरोः सेवां त्यक्त्वान्यत्सुखमिच्छति ॥ ३४ ॥

॥ २८ ॥ अव्यभिचारिणीं कपटरहिताम् । ब्रह्मविष्णुयुक्तः ॥ २९ ॥ पूर्वार्द्धं पूर्वान्वयि । अस्य दीपकस्य ॥ ३० ॥ अस्मत् अस्मत्तः ॥३१॥ तिष्ठतो विष्ण्वादीन् ॥३२॥ तर्हि विषयजन्यं किंचिदपि तत्सुखं परिणामे फलकालेऽतिदुःखप्रदं भवतीति शेषः ॥३३॥ विषयसुखाद्गुरुप्राप्तसुखस्य महत्त्वमाह ।

गुरुरिवि । अक्षयं नाशरहितं निरुपाधिकत्वादित्यर्थः ॥ ३४ ॥ देवालयं प्रति ॥ ३५ ॥ ते देवाः ॥ ३६ ॥ ३७ ॥ वर्षं वर्षपर्यंतम् ॥ ३८ ॥ वः आलयं मंदिरं पर्वसु महाशिवरात्र्यादिष्वपि न प्राप्तोऽस्मि ॥ ३९ ॥ सिद्धैरिच्छितं दर्शनं येषां ते यूयमिति पूर्वान्वयि ॥ ४० ॥ नैवाभिवांछे नैवेच्छामि ।

अतो नास्ति वरेच्छा मे गुरुसेवान्तुकुर्वतः ॥ नमोऽस्तु वोऽद्य गंतव्यं युष्माभिः स्वालयं सुखम् ॥ ३५ ॥ जागृतश्चेद्गुरुः क्रुद्धो भविष्यति ममोपरि ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं निराकृतास्तेन तेंऽतर्धानं ययुस्त्रयः ॥३६॥ पुनः कालांतरेणाथ ते समागत्य दीपकम् ॥ गृहाद्बहिः स्थिताः प्रोचुर्याचस्वेति वरं मुहुः ॥ ३७ ॥ दीपको बहिरागत्य नत्वा तानाह सांजलिः ॥ दीपक उवाच ॥ अहं वर्षं स्थितः काश्यां गुरुसेवारतः सदा ॥३८॥ दर्शनायापि नायातः पर्वस्वप्यालयं तु वः ॥ केन मत्कर्मणा यूयं संतुष्टाः स्वयमागताः ॥ ॥ ३९ ॥ वांछितं मे वरं दातुं सिद्धवांछितदर्शनाः ॥ निराकृताश्चैकवारं मया भूयः समागताः ॥४०॥ वरं नैवाभिवाञ्छेऽहं गच्छध्वं स्वालयं पुनः ॥ श्रुत्वेति दीपकोक्तिं ते ब्रह्मविष्णुमहेश्वराः ॥ ४१ ॥ गुरुभक्तिं प्रशंसंतः प्रोचुर्दीपकमग्रगम् ॥ देवा ऊचुः ॥ बहवः संति लोकेऽस्मिन्नस्मद्भक्ताः सकामनाः ॥ ४२ ॥ निष्कामा दुर्लभास्तत्र गुरुभक्तोऽति दुर्लभः ॥ भर्तृसेवारता नारी पित्रोः सेवारतः सुतः ॥ ॥४३॥ गुरुसेवारतः शिष्यो वयं चैतेभ्य उद्भयाः ॥ नानाविद्याप्रदातारो गुरवः संत्यनेकशः ॥४४॥ सुदुर्लभतमस्तत्र त्वात्मविद्याप्रदो गुरुः ॥ नास्मत्तोऽसौ भवेद्भिन्नश्चात्मानुभवतुष्टधीः ॥४५॥ ज्ञानी त्वात्मैव मे हीत्थं गीतावाक्यं च तादृशम् ॥ तस्माज्ज्ञानिगुरोः सेवा दुर्लभा सा त्वया कृता ॥ ४६ ॥

उत्तरार्द्धमुत्तरान्वयि ॥ ४१ ॥ अग्रगं पुरःस्थितम् ॥ ४२ ॥ तत्र निष्कामेषु ॥ ४३ ॥ एतेभ्यः पूर्वोक्तनारीपुत्रशिष्येभ्यः उद्भयाः उत्कृष्टं भयं येषां ते वयं भवाम इति शेषः ॥ ४४ ॥ तत्र गुरुषु ॥ ४५ ॥ " उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् " इति गीतावचनम् । तादृशं ज्ञानप्रदगुर्वभेदम्

तिपादकम् ॥ ४६ ॥ तया गुरुसेवया संतुष्टा भवंतीति शेषः ॥ ४७ ॥ ४८ ॥ उदितम् उक्तम् ॥ ४९ ॥ क्षणं निद्रावसानपर्यंतम् ॥ ५० ॥ नियं
त्रिता निबद्धाः । उत्तरार्द्धमुत्तरान्वयि ॥ ५१ ॥ ५२ ॥ श्रीमता भवता श्रुत्वेत्यादि प्राहेत्यंतमन्वयः ॥ ५३ ॥ स्वांतः मनसि संतुष्टः । चिरमित्याद्युत्त

तुष्टास्तयाऽखिला देवाः काशीस्थाश्च त्रिलोकगाः ॥ वरं वरय तस्मात्त्वं दुर्लभं चापि वांछितम् ॥४७॥ श्रीदेशिकेन्द्र उवाच॥इति तेषां वचः श्रुत्वा दीपकः प्राह तान्पुनः ॥ गुरुसेवां विना नान्यद्धृदये मम वांछितम्॥४८॥नश्वरं दृश्यमखिलं याच्यतां किं मयाऽधुना॥गुरुं पृष्ट्वा प्रयाचेऽहं वरं तु गुरुणोदितम् ॥४९॥ सुप्तोऽधुना देशिकोऽस्ति भवद्भिः स्थीयतां क्षणम् ॥ उत्थितं श्रीगुरुं पृष्ट्वा याचेऽहं च वरं ततः ॥ ५० ॥ तथेति संस्थिताः सर्वे गुरुभक्त्या नियंत्रिताः ॥ तावदुत्थितमालोक्य श्रीगुरुं दीपकाभिधः ॥ ५१ ॥ नत्वाह द्वारगाः संति ब्रह्ममाधवशंकराः ॥ याचस्वेति वरं मां ते वदंति बहुशो गुरो ॥ ५२ ॥ मया कोऽथ वरो याच्यः प्रोच्यतां श्रीमताधुना ॥ श्रुत्वेति दीपकं ज्ञात्वा गुरुभक्तिदृढाशयम् ॥ ५३ ॥ संतुष्टः श्रीगुरुः स्वांतर्बाह्यतः क्रोधवानिव ॥ तं प्राहेति चिरं कृत्वा मत्सेवां दीपकाधुना ॥ ५४ ॥ त्रस्तोऽसि किं वरं देवान्याचसेऽद्य सुखाप्तये ॥ श्रुत्वेति दीपकः प्राह नाहं त्रस्तोऽस्मि सद्गुरो ॥ ५५ ॥ श्रीपादसेवने नित्यं ममौत्कंठयं नवंनवम् ॥ वर्षं स्थितोऽस्म्यहं काश्यां विश्वेश्वरमुखान्सुरान् ॥ ५६ ॥ द्रष्टुमप्येकवारं हि तेषां धामानि नो गतः ॥ त एव स्वत आगत्य याचस्वेति मनोगतम् ॥ ५७ ॥ मां वदंति मया पूर्वमेकवारं निराकृताः ॥ पुनरागत्य तैरुक्तो वरानर्थयितुं त्वहम् ॥ ५८ ॥

रान्वयि ॥ ५४ ॥ त्रस्तः त्रासं प्राप्तोऽसि किम् । कुत इत्याह सुखप्राप्तये देवान्प्रति वरं याचसे । 'दुह्याच्पच' इत्यादिना याचतेर्द्विकर्मत्वम् ॥ ५५ ॥
औत्कंठ्यम् उत्सुकता । विश्वेश्वराद्युत्तरान्वयि ॥ ५६ ॥ तेषां देवानां धामानि स्थानानि न गतोऽस्मि । मनोगतं वरम् ॥ ५७ ॥ मां वदंतीति पूर्वमिव

द्वम् । मया त्विति संबंधः ॥ ५८ ॥ ते देवाः इति मया उक्ता इति तृतीयश्लोकस्थेनेतिपदेन संबंधः इति । किं सेवामित्यादि ॥ ५९ ॥ निद्रात्यये निद्रा समाप्तौ । तं गुरूक्तम् । ततो हेतोरित्युत्तरान्वयि ॥ ६० ॥ तावद्गुरुजागृतिपर्यंतं याच्यः याचितुं योग्यो यः सद्वर उत्तमवरस्तं त्वां प्रति प्रष्टुम् अंतः गृह मध्ये प्राप्तोऽस्मि ॥ ६१ ॥ गुरुदेवतैक्यभावं दर्शयामास । यतोऽयं योगिराट् ॥ ६२ ॥ निजतन्वा गुरुदेहेन तिरोहितमंतर्हितम् ॥ ६३ ॥ द्वारि द्वारदेशे

मयोक्तास्ते गुरोः सेवां विनेच्छा नेति मे स्फुटम् ॥ तैः पुनश्चाग्रहेणोक्तो यदाहं वरयाचने॥५९॥तेभ्यस्तदा मयाऽप्युक्तं निद्रास्थोऽस्ति गुरुर्मम ॥ निद्रात्यये गुरुं पृष्ट्वा याचे युष्मान्वरं च तम् ॥ ६० ॥ भवद्भिः स्थीयतां तावदित्यास्थाप्य बहिश्च तान् ॥ अहमंतः समा यातस्त्वां प्रष्टुं याच्यसद्वरम् ॥ ६१ ॥ श्रीदेशिकेंद्र उवाच ॥ दीपकोक्तमिति श्रुत्वा धर्माचार्योऽथ योगिराट् ॥ गुरुदेवैक्यतां साक्षा द्दर्शयामास चात्मवान् ॥ ६२ ॥ ददर्श दीपकस्तावद्ब्रह्मेशहरिरूपकम् ॥ गुरुमेव त्रिधाभूतं निजतन्वां तिरोहितम् ॥ ६३ ॥ ब्रह्म विष्णुशिवान्दृष्ट्वा चादृष्ट्वा स्वगुरुं दृशा ॥ उद्विग्नो दीपकोऽपश्यन्न द्वारि प्राक्स्थितान्सुरान् ॥ ६४ ॥ याचस्वेति वरं प्राहुस्तेंऽतः स्था दीपकं मुहुः ॥ दीपकः प्राह तान्नैव दृश्यते मम सद्गुरुः ॥ ६५ ॥ कस्मै पृष्ट्वा मया देवा याचनीयो वरोऽधुना ॥ श्रीदेशिकेंद्र उवाच ॥ दृष्ट्वेति निश्चयं तस्याभवत्तेभ्यः पृथग्गुरुः ॥ ६६ ॥ दीपकं प्राह नो भेदो मम देवैर्मनागपि ॥ गुरोर्देवस्य नाम्नैव भेदो वत्स न वस्तुतः ॥ ६७ ॥ अथ देवान्गुरुः प्राह निष्कामोऽयं तु दीपकः ॥ भवद्भिरेव देयोऽस्मै वरः सम्यग्विचार्य च ॥ ६८ ॥ श्रुत्वेति विष्णुधात्रीशास्तुष्टास्तस्मै वरं ददुः ॥ प्रकाश्यते यथा रात्रौ गृहं दीपेन सर्वतः ॥ ६९ ॥ दीपकेन तथात्मीयविद्यावेत्रा धरा तलम् ॥ कलावप्यग्रतश्चास्य संप्रदायः प्रकाशताम् ॥ ७० ॥

नापश्यत् ॥ ६४ ॥ अंतस्था गृहांतर्गतास्ते देवाः वरं याचस्वेति दीपकं पुनःपुनः प्राहुः ॥ ६५ ॥ हे देवाः । तस्य दीपकस्य । तेभ्यो देवेभ्यः पृथक् जात इत्यर्थः ॥ ६६ ॥ नाम्ना उच्चारणमात्रेणैव ॥ ६७ ॥ ६८ ॥ विष्णुधात्रीशाः हरिब्रह्मेशाः । तस्मै दीपकाय ॥ ६९ ॥ आत्मीयविद्यावेत्रा

आत्मप्रतिपादिका या विद्या ब्रह्मविद्या तां वेत्तीति तेन पृथ्वीतलं प्रकाशिष्यत इति पूर्वोक्तक्रियापरिणामः । संप्रदायः शिष्यप्रशिष्यरूपः प्रकाशतां प्रकाशितो भवतु ॥ ७० ॥ पूर्वार्द्धे पूर्वान्वयि ॥ ७१ ॥ सः दीपकस्थापितशिवः । दर्शनेनैव दर्शनमात्रेणैवेत्याद्युत्तरान्वयि ॥ ७२ ॥ उत्तरार्द्धमुत्तरान्वयि । पुरस्कृत्य गृहीत्वेत्यर्थः ॥ ७३ ॥ उत्तरे उत्तरभागे । उत्तरार्द्धमुत्तरान्वयि ॥ ७४ ॥ गुरोः श्रीविद्यानंदनाथस्य स्थलं स्थानम् । दीपक इति सार्द्धान्वयः

ज्ञानवृद्ध्या च सत्कीर्त्या यावच्चंद्रदिवाकरौ ॥ स्थाप्यः शंभुर्दीपकेन काश्यां श्रीदीपकेश्वरः ॥ ७१ ॥ भूयात्संदर्शनेनैव नृणां ज्ञानप्रदः कलौ ॥ इति दत्त्वा दीपकाय वरांस्तेनाभिपूजिताः ॥ ७२ ॥ अंतर्धानं ययुर्देवा लीना इव गुरोस्तनौ ॥ दीपकोऽथ गुरोराज्ञां पुरस्कृत्याविमुक्तके ॥ ७३ ॥ दीपकेशं महादेवं स्थापयामास चोत्तरे ॥ काश्यास्ततो विनिर्गत्य धर्माचार्यः सदीपकः ॥ ७४ ॥ गत्वा गुरोः स्थलं तत्र प्राप सिद्धिं परां स्वयम् ॥ दीपकोऽपि ततः सर्वं संप्रदायं प्रवर्तयन् ॥ ७५ ॥ पराभट्टारकाख्याय दत्त्वाखिलरहस्यकम् ॥ परां सिद्धिं ययौ सोऽपि सिद्धसेवितपादुकः ॥ ७६ ॥ यो भूतभाव्याऽखिलमानवौघे बभूव सद्देशिकभक्तवर्यः ॥ तं दीपकानंदगुरुं सुकीर्तिं मूर्ध्नाष्टषष्टिप्रमितं नताः स्मः ॥ ७७ ॥ परांबिकानन्यधिया सदा तां यः पूजयामास परात्मसंस्थाम् ॥ तं न्यूनसप्तत्यभिलब्धसंज्ञं पराद्यभट्टारकमानताः स्मः ॥ ७८ ॥

॥ ७५॥ अपिश्चार्थे । सिद्धिं च ययौ ॥ ७६ ॥ अष्टषष्टिप्रमितं दीपकानंदं प्रणमति—य इति । शंकराचार्यादिधर्मानंदांतो भूतमानवौघः । पराभट्टारकाद्यरमगुरुपर्यंतो भाविमानवौघस्तस्मिन्सद्देशिकस्य सद्गुरोर्भक्तश्रेष्ठो यो बभूव तं नताः स्मः ॥ ७७ ॥ एकोनसप्ततितमं पराभट्टारकानंदं प्रणमति—परांबिकेति । परशक्त्यां या अनन्यबुद्धिस्तया तां परशक्तिपरात्मस्थां परशिवांकस्थां यः सदा पूजयामास तम् । पराशब्द आद्यः प्रथमो यस्य भट्टारकस्य तं पराभट्टारका

मंदमित्यर्थः ॥ ७८ ॥ एतत्सर्गोक्तचतुर्गुरुकथाश्रवणादेः फलमाह—कथिता इति ॥ ७९ ॥ दीपककथाश्रवणादेः फलविशेषमाह—तत्रेति । तत्र गुरुचतुष्टयमध्ये । स्पष्टं सर्वम् ॥ ८० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां सप्तत्रिंशः सर्गः ॥ ३७ ॥ चतुः सप्ततिपद्येऽष्टत्रिंशेऽघोरगुरोः कथा। तथा शक्तिधराख्यस्य शक्त्युत्कर्षा समीरिता ॥ ३८ ॥ पराभट्टारकानंदादिति ॥ १ ॥ स्वीयान् भक्तान् अनेकसूक्तिभिः अनेकवेदांतवाक्यैः साधनैर्वाऽऽत्मप्राप्ति

कथिताश्चत्वारोऽत्र श्रीविद्यानाथतो मया गुरवः ॥ तेषां चरित्रपठनाच्छ्रवणाच्चाखिलसुखं पुमाँल्लभते ॥७९॥ तत्रापि दीपकस्य चरितं सत्कीर्तिदं नृणां पाठात् ॥ यच्छ्रवणात्पुत्राद्याः कामाः सर्वे भवंति परिपूर्णाः ॥ ८० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे श्रीविद्यानंदादिचतुर्गुरुवर्णनं नाम सप्तत्रिंशः सर्गः ॥३७॥ श्रीदेशिकेंद्र उवाच ॥ पराभट्टारकानंदादघोराख्यो रहस्यकम् ॥ लब्ध्वा बभूव सिद्धार्थः प्रसिद्धो धरणीतले ॥१॥ घोराद्भवभयात्स्वीयान्संरक्ष्याऽनेकसूक्तिभिः ॥ आत्मलब्ध्याऽघोररूपान्कर्ताऽघोरस्ततः स्मृतः ॥२॥ केचिद्विषयिणस्तेषां घोरात्तानपि संकटात् ॥ संरक्ष्य योगशक्त्याढ्योऽनेकधाऽऽनंदयत्यसौ ॥ ३ ॥ अघोरानंदशिष्योऽभूत्कश्चिद्धनसमृद्धिमान् ॥ स्वर्णरौप्यादिवस्तूनां क्रयविक्रयकृद्द्विजः ॥ ४ ॥ गुरुभक्तिरतोऽत्यंतं वर्जितोऽपि स्वकर्मणा ॥ कुर्वन्व्यापारमखिलं सदांतर्गुरुचिंतकः ॥ ५ ॥ कदाचिदश्वमारुह्य ययावेकः पुरांतरम् ॥ स्वर्णमुद्रादिवस्तूनि स्वयं विक्रेतुकाम्यया ॥ ६ ॥ आसीत्पथि महारण्यं नानावृक्षलताकुलम् ॥ चोराणां गृहमन्येषां सर्पव्याघ्रादिभीतिदम् ॥ ७ ॥ तत्रारण्ये व्रजन्मार्गे दृष्टश्चोरैरसौ द्विजः ॥ एकाकिनं च धनिनं ज्ञात्वा चोरास्तमाययुः ॥८॥ पृष्ठतोऽथ द्विजो ज्ञात्वा चोरान्स्वाश्वं सुवेगिनम् ॥ कशया ताडयामास ततः सोऽश्वो ययौ जवात् ॥९॥

स्तयाऽघोररूपान् शांतान् कर्ता करोति यतस्ततोऽघोरः स्मृतः । बुधैरिति शेषः ॥ २ ॥ तेषां भक्तानां मध्ये केचित् भक्ता विषयपरास्तान् रक्षित्वा ॥ ३ ॥ तस्य संकटनिवारकत्वद्योतिकां कथामाह—अघोरानंदशिष्या इत्यादिना ॥ ४ ॥ स्वकर्मणा स्वजातिधर्मेण । अंतः मनसि ॥ ५ ॥ स्वयम् एकाकी ॥ ॥ ६ ॥ अन्येषां जनानां भयप्रदम् ॥ ७ ॥ ८ ॥ पृष्ठत इति पूर्वान्वयि । स्वाश्वं निजवाहनं वेगवंतं ताडयामास चोरेभ्यो रक्षणार्थमित्यर्थः । स ताडि

तोऽश्वो वेगेन ययौ ॥ ९ ॥ पृष्ठे पश्चाद्भागे । अश्वसमम् अश्वसदृशम् । कश्चिदित्याद्युत्तरान्वयि । तेषां चोराणां मध्ये एकः ॥ १० ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ११ ॥ १२ ॥ १३ ॥ उभयतः पुरः पृष्ठभागे ॥ १४ ॥ तत्रैव चोरसर्पमध्यगताश्वपृष्ठ एव स्थित इति पूर्वान्वितम् । अस्तौषीत् स्तवनं कृतवान् । उभयसंकटनिवृत्त्यर्थम् ॥ १५ ॥ विधितो दैवेन स्वाढ्यो धनवानपि अधिकधनाशया । अत्र प्राप्तोऽस्मि । किं कृत्वा सेवकेभ्योऽणु अल्पं स्वं धनं प्रदातुं शाठ्यं शठत्वं कृत्वा धनव्ययभयात् सेवकसंग्रहमकृत्वेत्यर्थः । ततः कारणादेकाक्यहं पृष्ठे शस्त्रसहितचोरात् अग्रे उग्रसर्पात् शाठ्यफलं धननाशमरणादिरूपं

स्थिताः पृष्ठेऽखिलाश्चोरा गंतुं नाश्वसमं क्षमाः ॥ कश्चिदेकतमस्तेषां बलवान्वेगवांस्तदा ॥ १० ॥ विकोशं खड्गमुद्धृत्य ययौ द्विजसमीपतः ॥ द्विजोऽथ पृष्ठतश्चोरं खड्गपाणिं समीपगम् ॥ ११ ॥ दृष्ट्वा भीतः कशाघातैर्निजाश्वं प्राहनद्रुषा ॥ ययावति जवेनाश्वस्ताडितः कशया ततः ॥ १२ ॥ तावदग्रे महासर्पो मार्गमावृत्य संस्थितः ॥ प्रस्फुरन्बहुफूत्कारैः साक्षान्मृत्युरिवापरः ॥ ॥ १३ ॥ इत्थं चोभयतो दृष्ट्वा स द्विजो घोरसंकटम् ॥ निमील्य नयने चाश्वं खलीनेन नियम्य च ॥ १४ ॥ स्थितस्तत्रैव चाश्वस्थो मृतिः प्राप्तेति चिंतयन् ॥ स्मरन्गुरुं च मनसाऽस्तौषीत्संकटशांतये ॥ १५ ॥ प्राप्तोऽहं विधितोऽत्र घोरविपिने स्वाढ्योऽपि वित्तेच्छया कृत्वा शाठ्यमणु प्रदातुमनुगेभ्यः स्वं ततश्चैकलः ॥ भोक्ष्ये शाठ्यफलं सशस्त्रहरतः पृष्ठेऽग्र उग्राहितोऽथो सत्संकटतोऽभिरक्ष्य कुरु मामानंदयुक्तं गुरो ॥ १६ ॥ अश्वस्थोऽप्यहमग्रतो न गमने शक्तो यतोऽहिर्महान्फूत्कारैः प्रदहन्निवास्ति पुरतो मार्गेऽतिपार्श्वद्रुमे ॥ चोरः खड्गमकोशमेव च करे धृत्वागतः पृष्ठतो घोरात्संकटतोऽभिरक्ष्य कुरु मामानंदयुक्तं गुरो ॥ १७ ॥

भोक्ष्ये । हे गुरोऽस्माद्घोरसंकटान्माम् अभिरक्ष्य रक्षित्वाऽऽनंदयुक्तं कुरु। त्वमिति शेषः ॥ १६ ॥ ननु वेगवदश्वस्थस्त्वमन्यमार्गगमनेन संकटमुक्तो भवेत्याशंक्याह—अश्वस्थ इति । वेगवदश्वगतोऽप्यहमग्रे गमने शक्तः समर्थो नास्मि । यतः कारणात्पुरतो मार्गे महान्सर्पः फूत्कारैः प्रदहन्निवास्ति । पार्श्वतोऽपि गंतुं न शक्यत इत्याह मार्गविशेषणेन । अतिपार्श्वद्रुम इति अतिशयेन पार्श्वयोर्द्रुमा यस्य तस्मिन् पार्श्वयोर्निबिडवृक्षाश्रयत्वेनाश्वगत्यसंभवादित्यर्थः । यदि

निवृत्त्य पश्चाद्गंतव्यं तदाऽपि संकटमित्याह । पृष्ठतश्चोरोऽपि कोशरहितं खड्गं धृत्वा प्राप्तोऽस्ति । शेषमुक्तार्थम् । एवं सर्वतः संकटे गुरुरेव रक्षक इति भावः ॥ ॥ १७ ॥ ननु पूर्वपुण्येनेश्वरो रक्षिता भवेदत आह—नो इति । पर्वकालेऽपि दानकर्ताऽहं नाभवम् । अत्र दानशब्दो देयवाची । यत्पुण्यं मद्भयनाशकं भविष्यति । मया कश्चिद्देवोऽपि न पूजितः । यो मृत्योः सकाशान्मां मुक्तं करिष्यति । ततः पुण्येश्वरयोः रक्षकत्वाभावेन त्वां गुरुमेवाहं प्रार्थये । शेषमुक्तार्थम् ॥ १८ ॥ ननु देवस्य रक्षकत्वाभावे गुरुः कथं रक्षितेति चेद्देवाद्गुरोराधिक्यं दर्शयन् प्रार्थयते । नो इति । देवः अपि भवतः गुरोः अपेक्षया अधिको नास्ति । हीति निश्चयेन । यतः कारणाद्देवो यैर्मंत्रैर्वशः स्वाधीनो भवति ते मंत्रास्त्वद्दत्ते त्वां गुरुं विना न भवंति । इति हेतोरसौ गुरुः अणु अल्पमपि भक्त

नो पर्वस्वपि दानदोऽहमभवं यत्पुण्यमेतद्भयं नाशं नेष्यति पूजितश्च न मया देवोऽपि कश्चित्परः ॥ मृत्योर्मामिह मोचयिष्यति ततस्त्वामेव संप्रार्थये घोरात्संकटतोऽभिरक्ष्य कुरु मामानंदयुक्तं गुरो ॥१८॥ नो देवो भवतोऽधिकोऽस्ति हि यतो मंत्रैर्वशस्त्वद्वशास्ते मंत्रास्त्वद्दते न चेति कुरुते भक्तेष्टमण्वप्यसौ ॥ देवाः स्वस्वफलाः समस्तफलदस्त्वं सर्वरूपो यतो घोरात्संकटतोऽभिरक्ष्य कुरु मामानंदयुक्तं गुरो ॥ १९ ॥ त्रातुं नैव परः क्षमोऽस्ति हि ततोऽत्रेत्थं त्वहं निश्चयात्त्वां चानन्यधिया गतोऽस्मि शरणं सार्वात्म्यसिद्धिं गतम् ॥ चेन्मां मोचयसे धराधृततनोर्द्रक्ष्ये तवांघ्र्योर्युगं नो चेत्त्वां शिवमास्मरन्नसुगतौ प्राप्स्ये पदं तेऽचलम् ॥ २० ॥

हितं करोति । किं वक्तव्यं महद्भयाद्रक्षणं करोतीति । ननु देवा अपि फलदाः संति अत आह । देवाः स्वस्वफलाः स्वं स्वं फलं येभ्यस्ते । ज्ञानं महेश्वरादिच्छेदित्यादि निजनिजफलप्रदा भवंति । त्वं तु सर्वफलप्रदोसि । यतः सर्वदेवतारूपोसि । गुरुं विना देवस्याकिंचित्करत्वेन त्वमेव रक्षेति भावः ॥१९॥ ततः गुरोः परः इतरोऽत्र वने रक्षितुं क्षमो नास्ति । अहं तु इत्थं निश्चयेन त्वां गुरुमनन्यबुद्ध्या शरणं गतोस्मि । ननु ग्रामस्थितेन मया कथं रक्षणीय अत आह । सर्वात्मसिद्धिं प्राप्तमिति । यदि त्वं संकटतो मां मोचयसि तदा धरायां पृथिव्यां गृहीतदेहस्य तव चरणयुगमहं द्रक्ष्ये अवलोकिष्ये नो मोचयसि

चेदसुगतौ प्राणोत्क्रमणसमये शिवरूपं त्वाम् आस्मरन् आ समंतात्सर्वतः स्मरन् अचलं स्थिरं ते पदं प्राप्स्ये तदपि हितकरमेवेति भावः ॥ २० ॥ अखिल स्थितिः सर्वगतः । सार्वात्म्यसिद्ध्या ॥ २१ ॥ दययाऽऽक्रांतं व्याप्तं हृदयम् अंतःकरणं यस्य । महाजवम् अतिवेगवत् ॥ २२ ॥ ऊर्ध्वगमनेन तत्याज विससर्ज ॥ २३ ॥ २४ ॥ अघोराभिधं वपुर्धृत्वा । कस्मादपादानात् भयाद्धेतोर्मे स्मरणं त्वया कृतम् ॥ २५ ॥ किमपि भयं नास्तीत्याह—स्वप्न इति

श्रीदेशिकेंद्र उवाच ॥ शिष्यस्तवमिति श्रुत्वाऽघोरानंदोऽखिलस्थितिः ॥ सार्वात्म्यसिद्धितोऽपश्यच्छिष्यं मृत्युभयार्दितम् ॥ २१ ॥ दयाक्रांतांतरो धृत्वा गृध्ररूपं महाजवम् ॥ ययौ तत्र महारण्ये योगशक्त्या स योगिराट् ॥२२॥ धृत्वा चंचुपुटे सर्पमूर्ध्वगत्या प्रधावतः॥ स्कंधे चोरस्य तत्याज सर्पं फूत्कारसंयुतम् ॥२३॥ स्कंधे पतंतं दृष्ट्वाथ चोरः सर्पं भयानकम् ॥ भीतः प्राप महामूर्च्छां पतितो धरणीतले ॥२४॥ अघोराख्यं वपुर्धृत्वा निजशिष्याग्रतः स्थितः ॥ प्राह शिष्यं भयात्कस्मात्स्मृतिर्मेऽद्य कृता त्वया ॥२५॥ स्वप्नेऽपि गुरुभक्तस्य भयं नैव तु दृश्यते ॥ उन्मील्य नयने मां त्वं पश्याग्रे संस्थितं गुरुम् ॥२६॥ श्रीदेशिकेंद्र उवाच ॥ सहसेति वचः श्रुत्वा शिष्यश्चो न्मील्य लोचने ॥ गुरुं दृष्ट्वा ननामासाववतीर्याश्वतस्तदा ॥ २७ ॥ स्तुत्वानेकविधैर्वाक्यैः प्रणनाम पुनर्गुरुम् ॥ अघोराख्योऽथ तं प्राह वत्स गच्छ यथासुखम् ॥ २८ ॥ पादादिशीर्षपर्यंतं श्रीगुरोराकृतिं स्मरेत् ॥ तेन विघ्नाः प्रणश्यंति सिध्यंति च मनोरथाः ॥ ॥ २९ ॥ इत्थं विश्वासयुक्तस्य न भयं कुत्रचिद्भवेत् ॥ शिष्यमुक्त्वेति तत्रैव प्रापांतर्द्धिं स योगिराट् ॥ ३० ॥ शिष्योऽप्यश्वं समा रुह्य स्वकार्यार्थं ययौ ततः ॥ चोरदेहाद्ययौ सर्पो न दंशं कृतवानमुम् ॥ ३१ ॥ मुहूर्तादुत्थितश्चोरोऽहिमदृष्ट्वैव चात्मनि ॥ तुष्टस्तं धनिनं चाग्रे खिन्नः स्वस्थानमाययौ ॥ ३२ ॥ चोरसर्पावहत्वैवाघोरानंदेन संकटात् ॥ स्वशिष्यो रक्षितश्चेत्थं साधवोऽतिदयालवः॥ ॥३३॥ इत्थंविधोऽघोरसुखो रहस्यमुक्त्वा ततः शक्तिधराय सर्वम् ॥ सिद्धिं ययौ सिद्धवरैर्दुरापां तं सततिस्वाख्यगुरुं नताः स्मः॥३४॥

॥ २६ ॥ २७ ॥ २८ ॥ सर्वसंकटहारकमुपायं कथयति—पादादीति ॥ २९ ॥ इत्थमिति । अंतर्द्धिमंतर्धानम् ॥ ३० ॥ अमुं चोरम् ॥ ३१ ॥ सर्पं धनवंतं चादृष्ट्वा तुष्टः खिन्नश्च सन् स्वगृहं ययौ ॥ ३२ ॥ अहत्वा नाशमकृत्वा । दयावंतो भवंतीति शेषः ॥ ३३ ॥ सप्ततिसंख्यमघोरानंदं प्रणमति—

इत्थमिति । अघोरसुखोऽघोरानंदः । सर्वं पूर्णाभिषेकादिमंत्ररहस्यम् । सप्ततिसंख्यायां सुष्ठु आख्या नाम यस्य तम् ॥ ३४ ॥ परं भिन्नम् ॥ ३५ ॥ शक्तिहीनस्य स्थितिर्नास्तीति निश्चयेन सर्वशक्तित्वरूपां सिद्धिं प्राप्तः ॥ ३६ ॥ स्वस्वोपास्यदेवताप्रशंसिनः तद्वर्णनपराः ॥ ३७ ॥ तानेवाह द्वाभ्याम्—सौरा इति । सौराः सूर्योपासका इत्यादि ज्ञेयम् । पातंजलमतानुसरणशीला योगिन इत्यर्थः ॥ ३८ ॥ सदा यज्ञकर्मपराः अग्न्युपासकाः कर्मठाः ॥ ॥ ३९ ॥ न शुश्राव श्रवणेन नांगीकृतवान् ॥ ४० ॥ तत्रादौ गाणेशप्रशंसामाह—स्मृत्येति । स्वस्यात्मनः स्मृत्या स्मरणेन सर्वेषामनेकविघ्नान्नाशयित्वा

श्रीदेशिकेंद्र उवाच ॥ आसीच्छक्तिधरानंदः पराशक्तेरुपासकः ॥ पराशक्तेः परं किंचिन्नैवापश्यच्चराचरम् ॥ ३५ ॥ सर्वं शक्तिमदेवास्ति नैवाशक्तस्य संस्थितिः ॥ सर्वशक्तिमयीं सिद्धिं प्राप्तोऽसाविति निश्चयात् ॥ ३६ ॥ यथुः शक्तिधरानंदगुरोराराधनोत्सवे ॥ कदाचित्साधवः शांताः स्वस्वोपास्यप्रशंसिनः ॥ ३७ ॥ सौरा गाणेश्वराः शाक्ता वैष्णवाः शांभवाः परे ॥ योगिनः सांख्यतत्त्वज्ञाः पातंजलानुयायिनः ॥ ३८ ॥ अग्नेरुपासकाश्चापि यज्ञकर्मरताः सदा ॥ अन्येऽपि मिलितास्तत्रानेकधा मतवादिनः ॥ ॥ ३९ ॥ प्रशशंसुः सदःस्थास्ते स्वंस्वं मतमनेकधा ॥ नैक एकस्य शुश्राव वाक्यं स्वस्वप्रशंसया ॥ ४० ॥ गाणेशा ऊचुः ॥ स्मृत्या स्वस्यानेकविघ्नान्प्रणाश्य यः सर्वेषां कार्यसिद्धिं करोति ॥ श्रुत्युक्तं यज्ज्यैष्ठ्यमात्मोद्भवाद्ये तं विघ्नेशं चाखिलाः संस्तुवंतु ॥ ॥ ४१ ॥ सौरा ऊचुः ॥ कृत्वा सर्वाञ्जाग्रतः स्वोदयेन तैस्तैस्तत्तत्कार्यकर्तेति चात्मा ॥ श्रुत्वा विश्वस्योदितस्तस्थुषश्च तं श्रीसूर्यं चाखिलाः संस्तुवंतु ॥ ४२ ॥

यः कार्यस्य सिद्धिं करोति । आत्मोद्भवाद्ये ब्रह्मादिके जगति श्रुत्या यस्य ज्यैष्ठ्यं श्रेष्ठत्वमुक्तं तं विघ्नेशं गणपतिं सर्वे च स्तुवंतु ॥ ४१ ॥ सौराः सूर्यं वर्णयंति—कृत्वेति । यः सर्वान्निजोदयेन जाग्रतो जागृतान्कृत्वा तैस्तैर्जनैर्निमित्तभूतैस्तानि तानि कार्याणि करोति सः । यद्वा तेषां तेषां जनानां कार्याणां कर्ता भवति । " सूर्य आत्मा जगतस्तस्थुषश्च " इति श्रुत्या च विश्वस्य जगतस्तस्थुषः स्थावरस्य चात्मोदितः कथितस्तं श्रीसूर्यं सर्वे स्तुवंतु ॥ ४२ ॥

शत्त्युपासकाः शक्तिं प्रशंसंति । नानारूपैरिति । या दुर्गा नानावतारैः शुंभादीन् हत्वा देवानां सुखप्रदा भवति । वेदे च या निजानां भक्तानां दुःखाद्रक्षणकर्त्री कथिता तां च श्रीदेवीं सर्वे स्तुवंतु । " अग्निवर्णां शुभां सौम्यां कीर्तयिष्यंति ये द्विजाः । तान्तारयति दुर्गाणि नावेव सिंधुं दुरितात्यग्निः " इति परिशिष्टे दुर्गास्तवे दुःखनिवारणेन पालयित्री दुर्गा वर्णितेति भावः ॥ ४३ ॥ वैष्णवा विष्णुं प्रशंसंति—मत्स्याद्यैरिति । यो व्यापकत्वहेतुना मत्स्याद्यैरवतारैः सज्जनप्रमोदाय चरित्रं चकार । तस्य व्यापकत्वे श्रुतिं प्रमाणयति—एक इति । यश्चैको देवः सर्वभूतेषु गुप्तोऽस्ति तं श्रीविष्णुं सर्वे स्तुवंतु । " एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा " इति श्रुतौ व्यापकत्वश्रवणेन तस्यैव सर्वभावेनोपासनं युक्तमिति भावः ॥ ४४ ॥ शैवाः शिवं प्रशंसंति—

शाक्ता ऊचुः ॥ नानारूपैः शुंभमुख्यान्निहत्य या देवानां सौख्यदोक्तेति वेदे ॥ दुर्गा दुःखाद्रक्षयित्री निजानां तां श्रीदेवीं चाखिलाः संस्तुवंतु॥४३॥वैष्णवा ऊचुः ॥ मत्स्याद्यैर्यः स्वावतारैश्चरित्रं चक्रेत्यंतं सन्मुदे व्यापकत्वात् ॥ एको देवः सर्वभूतेषु गूढस्तं श्रीविष्णुं चाखिलाः संस्तुवंतु ॥ ४४ ॥ शैवा ऊचुः ॥ यः कल्पांते नाशकर्तापि भक्तानार्यैः प्रोक्तश्चात्मदानप्रकर्ता ॥ श्रुत्याप्युक्तः सर्वविद्येश्वरो यस्तं श्रीशंभुं चाखिलाः संस्तुवंतु ॥४५॥ सांख्या ऊचुः ॥ तत्त्वान्यद्धा याखिलानि प्रसूय तैर्ब्रह्मांडं चाकरोद्वै स्वतंत्रा ॥ तामेवाद्यामादिशक्तिं पुमांसं ज्ञात्वाऽसंगं मुच्यते कर्मबंधात् ॥४६॥ पातंजला ऊचुः ॥ गत्वा प्राणैर्ब्रह्मरंध्रं सुषुम्णामार्गेणाद्यं पूरुषं विश्वबीजम् ॥ विश्रांतःस्थं विश्वकर्तारमीशं लब्ध्वाऽऽत्मैक्यान्मुच्यते दुःखसंगात् ॥ ४७ ॥

य इति । कल्पांतसमये सर्वनाशकर्तापि आर्यैः श्रेष्ठैः भक्तान्प्रति आत्मदानप्रकर्ता ज्ञा[illegible]ः कथितः " ईशानः सर्वविद्यानाम् " इति श्रुत्याऽपि यः सर्वविद्याधिपतिः कथितस्तं शंभुं सर्वे स्तुवंतु ॥ ४५ ॥ सांख्याः प्रकृतिं प्रशंसंति—तत्त्वानीति । या स्वतंत्रा सती सर्वाणि तत्त्वानि महदादीनि प्रसूय जनयित्वा ब्रह्मांडं चाकरोत् कृतवती तामेवाद्यां श्रेष्ठाम् आदिशक्तिं प्रकृतिं च पुनः पुरुषं तु संगरहितं ज्ञात्वा कर्मबंधान्मुच्यते विवेकवानिति शेषः ॥ ४६ ॥ पातंजला योगेश्वरं वर्णयंति—गत्वेति । सुषुम्णामार्गेण कृत्वा प्राणैः सह ब्रह्मरंध्रं गत्वा तत्र जगद्बीजभूतं विश्रांतर्यामिणं सर्वकर्तारमीशं सर्वशिक्षकम् आद्यं

पुरुषमात्मैक्यभावेन प्राप्य देहादिदुःसंबंधान्मुक्तो भवति योगाभ्यासीति शेषः ॥ ४७ ॥ कर्मठास्तु यज्ञादिकर्मैव प्रशंसंति—य इति । योऽग्निर्देवानामास्यं मुखमस्ति किल । अस्मिन्नग्नौ हव्यं होमद्रव्यं हुत्वा इंद्रश्रेष्ठैरिंद्राद्यैरमरत्वं लब्धं प्राप्तम् । अतः कारणात् भोः साधवः वो युष्माकं श्रद्धाऽनिंद्ये यज्ञकर्मणि सदा भूयात् ॥ ४८ ॥ देशिकेंद्रोक्तिः इत्थमिति । स्वस्वोपास्यस्य प्रशंसावर्णनं येषु तानि वाक्यानि ॥ ४९ ॥ स्वस्वोपास्यो देवः प्रशंस्यते वर्ण्यते । केन हेतुना

कर्मठा ऊचुः ॥ योग्निश्चास्यं देवतानां किलास्मिन्हव्यं हुत्वा चामरत्वं हि लब्धम् ॥ इंद्रश्रेष्ठैः साधवोऽतः सदा वः श्रद्धाभूयाद्यज्ञकर्मण्य निंद्ये ॥ ४८ ॥ इत्थं शक्तिधरः श्रुत्वा साधुवाक्यान्यनेकशः ॥ स्वस्वोपास्यप्रशंसानि तानाहाथ रहस्यवित् ॥ ४९ ॥ शक्तिधरानंद उवाच ॥ स्वस्वोपास्यं तु युष्माभिः श्रेष्ठत्वेन प्रशंस्यते ॥ स्वोपास्ये श्रेष्ठता केन तदंतः संविचार्यताम् ॥ ५० ॥ विघ्नहंत्री गणेशेस्ति तमो हंत्री दिवाकरे ॥ विष्णौ मोक्षप्रदा शक्तिर्ज्ञानदा शंकरे तथा ॥ ५१ ॥ शक्तिस्तत्त्वविचाराख्या सांख्याचार्येषु योगिषु ॥ प्राणसंधारणा शक्तिः स्वर्गदा यज्ञकर्मसु ॥ ५२ ॥ स्वस्वशक्तिभिरेताभिर्गणेशादिषु मुख्यता ॥ चेत्ताभिस्ते विहीनाः स्युः पूज्यंते नैव कैरपि ॥ ॥ ५३ ॥ स्वस्वकार्येषु शक्त्याढ्यः स शक्तः कथ्यते जनैः ॥ [illegible]ः शक्तिविहीनश्च स्तोकेप्येवं द्विधा स्थितिः ॥ ५४ ॥ पराशक्तेरंश भूताः शक्तयः सकलाश्च याः ॥ पूजितायां पराशक्त्यां पूजिताः सकलाः सुराः ॥ ५५ ॥ तस्मात्सर्वैः प्रयत्नेन पूजनीया परांबिका ॥ तां विना नेश्वरेणापि स्पंदितुं चाणु शक्यते ॥ ५६ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति साधवः सर्वे स्वस्वोपास्याभिमानिनः ॥ प्रोचुः शक्तिधरानंदं शाक्तसांख्यविवर्जिताः ॥ ५७ ॥ साधव ऊचुः ॥ शक्तिः शक्तिमतोऽधीना सदैवादोनुयायिनी ॥ न स्वतंत्रा कदाचिच्च पुंसः स्त्रीवहि गेहिनः ॥ ५८ ॥

सम्यक् विचार्यताम् ॥ ५० ॥ स्वस्वोपास्ये स्वस्वशक्त्यैव श्रेष्ठत्वं स्वयमेव दिदर्शयिषुराह विघ्नहंत्रीत्यादिना । शक्तिविशेष्यत्वं प्रथमांतेषु । अस्ति क्रियाप कर्षश्च ॥ ५१ ॥ योगिषु प्राणधारणशक्तिः ॥ ५२ ॥ ताभिर्विघ्नहंत्र्यादिशक्तिभिस्ते गणपत्यादयः । कैरपि जनैर्न पूज्यंते । ते इत्यनुवृत्तिः ॥ ५३ ॥ स्तोके बाले स्थितिः वर्तनम् ॥ ५४ ॥ ५५ ॥ ५६ ॥ शाक्तसांख्यविवर्जिता इति तद्भिन्नानामननुकूलशक्तिप्रतिपादनादित्यर्थः ॥ ५७ ॥ शक्तिमतः

अधीना स्वाधीना अमुं शक्तिमंतमनुयाति अनुगच्छतीत्यदोऽनुयायिनी ॥ ५८ ॥ प्रोज्झ्य त्यक्त्वा ॥ ५९ ॥ यथा स्त्रीयुक्तो गृही गृहाश्रमी भवति । न स्त्री यस्य स विधुर इत्यर्थः । ब्रह्मकर्मसु अग्निहोत्रादिषु ॥ ६० ॥ ६१ ॥ ननु मातापित्रोरिवोभयभजनमस्तु इति चेन्न मातुः पित्रधिकत्वप्रतिपादनात् । तस्माच्छ्रीमातृपासनमेव युक्तमित्याह—तस्मादिति ॥ ६२ ॥ ६३ ॥ तेषां गणेशाद्युपासकानाम् ॥ ६४ ॥ अशक्ताः शक्तिहीनाः ईषत् किंचित् ॥

स्वतंत्रं शक्तिमंतं तु त्यक्त्वा शक्तेरुपासनाम् ॥ कः करोति नृपं प्रोज्झ्य दासादरमिवाल्पधीः ॥ ५९ ॥ श्रीशक्तिधरानंद उवाच ॥ शक्त्यैव शक्तिमाञ्छ्रेष्ठः पुमान्स्त्र्याढ्यो यथा गृही ॥ निंद्यः सर्वत्र चाशक्तो यथाऽग्निर्ब्रह्मकर्मसु ॥६०॥ अतः शक्तिमतः श्रेष्ठा शक्तिर्ना स्यात्तु शक्तिमान् ॥ शक्तिर्जनित्री विश्वस्य शक्तिमाञ्जनकः स्मृतः ॥ ६१ ॥ तस्मात्पूज्या पराशक्तिर्विश्वमाताऽखिलैर्जनैः ॥ मन्वादीनां वचश्चेत्थं न मातुर्दैवतं परम् ॥६२ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं शक्तिधरानंदप्रोक्तं वाक्यं तु साधवः ॥ श्रुत्वापि मेनिरे नैव पराशक्तेरुपासनाम् ॥ ६३ ॥ तदा शक्तिधरानंदः पराशक्तिं हृदि स्मरन् ॥ शक्तीराकर्षयामास तेषां सर्वाः स्वसिद्धितः ॥६४॥ अशक्ताः पतिताः सर्वे नेषद्वक्तुमपि क्षमाः ॥ प्रेततुल्यदशां प्राप्ताः साधवः शक्तिहेलनात् ॥६५॥ दृष्ट्वा तांस्तादृशान्केचित्तदाप्तास्तत्र संस्थिताः ॥ प्रोचुः शक्तिधरानंदं स्थिताः प्रांजलयोऽग्रतः ॥ ६६ ॥ आप्ता ऊचुः ॥ अज्ञात्वैवास्मदाप्तैस्तु पराशक्तेः पराक्रमम् ॥ कृतं तद्धेलनं प्राप्तं तत्फलं द्रुतमेव तैः ॥ ६७ ॥ समीचीनः कृतोऽमीषु दंडश्चागःसमस्त्वया ॥ द्रुतं कृपाद्य कर्तव्या यतः संतोऽल्पमन्यवः ॥ ६८ ॥ गात्रस्पंदेऽप्यशक्तास्ते त्वत्कृताच्छक्तिकर्षणात् ॥ नर्तयितृकराकर्षात्स्थिताः पुत्तलिका इव ॥ ६९ ॥

॥ ६५ ॥ तदाप्तास्तत्पुत्राद्याः । स्थिताः तिष्ठंतः ॥ ६६ ॥ ६७ ॥ अमीषु अस्मदाप्तेषु । आगःसमोऽपराधसदृशः । यतः कारणात्साधवोऽल्पकोपास्ततस्त्वरितं त्वया कृपा कर्तव्या ॥ ६८ ॥ त्वत्कृतशक्त्याकर्षणेन शरीरचलनेऽप्यसमर्थाः । अत्र दृष्टांतः नर्तयितुः नर्तनकर्तुर्हस्तस्याकर्षणेन स्थिताः

पुत्तलिका इवेति ॥ ६९ ॥ स्वसिद्धया शक्त्याकर्षणविमुंचनरूपया ॥ ७० ॥ तैः आप्तैः एतान्गणेशाद्युपासकान् ॥ ७१ ॥ शक्तिपूजकाः शक्त्युपासकाः ॥ ७२ ॥ एकसप्ततिसंख्यं शक्तिधरानंदं प्रणमति—एवमिति । एकसप्ततिरूपा अभिगता प्राप्ता संख्या यस्मिंस्तमीड्यं स्तुत्यं नताः स्मः ॥ ७३ ॥ अघोरानंदशक्तिधरानंदयोः कथाश्रवणादिफलमाह—अघोरसंज्ञस्येति । आद्यं प्रथमम् अपरं द्वितीयम् ॥ ७४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायामष्टत्रिंशः सर्गः ॥ ३८ ॥ नवत्रिंशेष्टषट्पद्यैर्मृतजीवनकोऽमृतः । मातृकाभिश्चोरहंता मातृगुप्तश्च वर्ण्यते ॥ ३९ ॥ एकोनत्रिंशेऽमृतानंदमातृ

पराशक्तिं हृदा ध्यात्वा सशक्तान्कुरु तान् पुनः ॥ स्वसिद्धया ह्यक्षया लोके त्वत्कीर्तिस्तु भविष्यति ॥ ७० ॥ श्रीदेशिकेंद्र उवाच ॥ एवं शक्तिधरानंदो बहुशः प्रार्थितस्तु तैः ॥ सदयः पूर्ववत्सर्वांश्चकारैतान्सशक्तिकान् ॥ ७१ ॥ उत्थाय तेऽपि चिच्छक्तेर्ज्ञात्वा वैभवमद्भुतम् ॥ नत्वा शक्तिधरानंदं बभूवुः शक्तिपूजकाः ॥ ७२ ॥ एवंविधो योऽमृतसंज्ञकाय रहस्यमुक्काऽऽप परां च सिद्धिम् ॥ तमेकसप्तत्यभिसंख्यमीड्यं वयं गुरुं शक्तिधरं नताः स्मः ॥ ७३ ॥ अघोरसंज्ञस्य चरित्रमाद्यं तथाऽपरं शक्तिधराभिधस्य ॥ पठेन्नरो यः शृणुयाच्च कष्टान्मुक्तो भवेच्चाखिलकार्यशक्तः ॥ ७४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे अघोरानंदशक्तिधरानंदगुरुद्वयवर्णनं नामाष्टत्रिंशः सर्गः ॥ ३८ ॥ श्रीदेशिकेंद्र उवाच ॥ अथासीदमृतानंदोऽमृतवागमृतांतरः ॥ अपश्यद्दृश्यमखिलं चात्मरूपं सदाऽमृतम् ॥ १ ॥ रज्जुरेव यथा भाति भ्रांत्याऽहिर्न तु वास्तवः ॥ तथात्मैव जगद्भाति तस्मादमृतमेव तत् ॥ २ ॥

कानंदयोश्चरित्रमाह—अथेत्यादिना । अमृतवाक् प्रियहितवक्ता । अमृतहृदयः सर्वदृश्यम् आत्मरूपं सदा अमृतम् अमृतरूपं चापश्यत् ॥ १ ॥ ननु नाशवतो दृश्यस्य कथममृतत्वमिति चेद्दृष्टांतेनाह—रज्जुरिति । यथा रज्जुरेव भ्रांत्या सर्परूपा दृश्यते वस्तुतो भ्रमाभावे न दृश्यते । दार्ष्टांते दर्शयति । तथाऽऽत्मैव जगद्रूपो भाति तस्मादध्यस्तस्याधिष्ठानानन्यत्वात्तद्दृश्यं जगत् अमृतमेव । अधिष्ठानस्यात्मनोऽमृतत्वेनामृतरूपमेवास्ति । तथा चायं प्रयोगः । दृश्यं जगत् अधिष्ठानरूपम् अध्यस्तत्वात् । रज्जुसर्पवत् । एवमध्यस्तस्याधिष्ठानरूपत्वे सिद्धेऽधिष्ठानस्यात्मनः सच्चिदानंदरूपत्वेनामृततया तत्राध्यस्तस्यापि जगतोऽमृत

रूपत्वमेवेति भावः ॥ २ ॥ नानेति । स्पष्टम् ॥ ३ ॥ एतादृशानुभवेनामृतानंदस्य सिद्धिसामर्थ्यं दर्शयन् कथामाह—कदाचिदित्यादिना । सार्द्धान्वयः ॥ ४ ॥ सैषोऽमृतानंदः प्रेताय अमृतरूपाय नमोऽस्तु इति स्फुटम् आह । प्रेतबंधुश्रवणारूढं यथा स्यात्तथेत्यन्वयः ॥ ५ ॥ हास्यप्रयोजनं दर्शयति—प्रेतं मृतं प्रति अमृतं वदति अयमित्यस्यानुवृत्तिः ॥ ६ ॥ यूयमेव भ्रांताः कुत इत्यत आह—आत्मानं व्यापकम् अतः सर्वगतं समं जगद्विवर्ताधिष्ठानत्वेन विकारहीनं सदाऽमृतं नाशरहितमविज्ञाय पृथक् देहाभिमानेन सोऽहं त्वमित्यादिबुद्धियुक्ताः अत एव सदा विषयाः अंतरे मनसि येषां ते यूयं भ्रांताः स्थेति क्रिया

नानादुःखाकुलं विश्वं पश्यन्नपि न मोहवान् ॥ सदात्मसुखमग्नोऽसावमृताख्यस्ततः स्मृतः ॥ ३ ॥ कदाचिदमृतानंदो गच्छन्मार्गे विलोक्य सः ॥ स्मशाने नीयमानं तु प्रेतं तद्बांधवादिभिः ॥ ४ ॥ प्रेतायैषोऽमृतायास्तु नम इत्याह च स्फुटम् ॥ श्रुत्वा तं जहसुः सर्वे किमयं भ्रांततां गतः ॥ ५ ॥ अमृतं वदति प्रेतमित्याहुः प्रेतसंगिनः ॥ श्रुत्वेति सोऽमृतानंदस्तान्सर्वानाह संहसन् ॥ ६ ॥ अमृतानंद उवाच ॥ यूयमेवाखिला भ्रांता आत्मानं सर्वगं समम् ॥ सदैवामृतमज्ञात्वा पृथग्देहाभिमानतः ॥ ७ ॥ सोहं त्वमिति बुद्ध्याढ्याः सदैव विषयांतराः ॥ विषयालाभलाभाभ्यां दुःखं सौख्यमहर्निशम् ॥ ८ ॥ मन्यमानास्तु विस्मृत्य सुखमात्मीयमक्षयम् ॥ देहाहंकृतितः पूर्वं कृतं कर्म शुभाशुभम् ॥९॥ तद्भोगनाशे मरणं त्यक्तदेहोऽस्थकर्मणाम् ॥ परिपाके पुनर्जन्म भवतीत्थं हि संसृतिः ॥ ॥ १० ॥ विस्मृत्यैवात्मनश्चेदं सर्वं दुःखमिहाप्यसत् ॥ स्थाणुविस्मरणान्मिथ्या चोरभीत्यादिकं यथा ॥ ११ ॥

न्वयः । स्वाज्ञानेनात्मानमविज्ञाय देहबुद्धयो जाता इत्यर्थः ॥ ७ ॥ विषयचिंतनं दुःखहेतुरित्याहोत्तरार्द्धेन । स्थेति क्रियाध्याहारः ॥ ८ ॥ मन्यमाना इति पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि । पूर्वं पूर्वजन्मनि देहाहंकारेण पापपुण्यरूपं यत्कर्म कृतम् ॥ ९ ॥ तस्य कर्मणो भोगस्य नाशे समाप्तौ सत्यां मरणं भवति । पश्चाद्विसृष्टदेहकृतकर्मणां परिपाके फलावस्थायां पुनर्जन्म भवति । इत्थम् उक्तप्रकारं संसृतिः संसृतिपदवाच्यं संसरणं भवतीत्यर्थः ॥ १० ॥ आत्मविस्मरणेन असत् असत्यं सर्वं जगत् तज्जन्यं दुःखं च भवति । यथा स्तंभविस्मरणेन चोरस्तज्जन्या भीतिश्च । आदिना कंपाक्रोशादिकं च भवति

तथेति पूर्वार्द्धेनान्वयः ॥ ११ ॥ स्वात्मनि ज्ञाते सति गुरूपसदनश्रवणमनननिदिध्यासनादिमहावाक्यविचारेणापरोक्षीकृते सति ईषत् किंचिदपि दुःखं नास्ति । कुतो बहुदुःखम् । स्वप्नेऽपि न दृश्यते कुतो जागृतावित्यर्थः । चोऽप्यर्थे । अतो भवतामात्मविस्मरणेन देहादिबुद्ध्या प्रेतादिदर्शनमित्यर्थः । आत्मेत्यादिद्वयोरन्वयः । अद्वितीयः अत एव शुद्धो विकारहीनः देहादिसंगरहितोऽतश्च सुखी सुखरूपः । राहोः शिर इतिवत्सुखे सुखवत्त्वोपचारः । सर्वगतो व्यापकः ॥ १२ ॥ व्यापकत्वादेव सर्वत्र सदा स्थितः सद्रूपत्वेनास्थितः । उपलक्षणमेतत् चिद्रूपत्वानंदरूपत्वयोः । तदुक्तम् " अस्ति भाति प्रियं

ज्ञाते चात्मनि नैवेषद्दुःखं स्वप्नेऽपि दृश्यते ॥ आत्मा यतोऽद्वयः शुद्धः सर्वगोऽसंगवान्सुखी ॥१२॥ चरेऽचरे मृते प्रेते सम एव सदा स्थितः ॥ निष्प्राणेऽपि शरीरेऽसावमृतः पूर्ववत्स्थितः ॥१३॥ अतोऽमृताय च नमः प्रेतायोक्तं मया जनाः ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति विस्मिताः प्राहुस्तेऽमृतानंदमित्यथ ॥१४॥ जना ऊचुः ॥ त्वयात्मा सदृशः प्रोक्तो जीवन्मृतशरीरयोः ॥ नास्माकं मंदबुद्धीनां भाति सत्यमिदं वचः ॥ १५ ॥ यथा जीवच्छरीरेऽस्ति ह्यात्मा ध्यादिप्रकाशकः ॥ तथा न मृतदेहे तु द्वयोस्तुल्यात्मता कथम् ॥ ॥ १६ ॥ चेदस्मिन्पूर्ववत्प्रेते त्वयात्मत्वप्रकाशनम् ॥ क्रियते तर्हि ते वाक्यः सत्यं मन्यामहे वयम् ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थममृतानंदः स्मरञ्छ्रीगुरुपादुकाम् ॥ शृण्वतां प्रेतबंधूनां वाक्यमित्याह चात्मवान् ॥ १८ ॥ अमृतानंद उवाच ॥ गुरुणात्मा तु मे प्रोक्तः सातत्येनाखिलस्थितः ॥ समस्तथा मया बुद्ध्या सोनुभूतः प्रकाशकः ॥ १९ ॥

रूपं नाम चेत्यंशपंचकम् । आद्यं त्रयं ब्रह्मरूपं मायारूपं ततो द्वयम् " इति नामरूपयोः कल्पितत्वेन सच्चिदानंदरूपं सर्वमित्यर्थः । पूर्ववदिति यथा सप्राणे देहे तथा तद्रहिते देहे च सच्चिदानंदरूपेण वर्तत इत्यर्थः ॥ १३ ॥ यत एवमतोऽमृताय प्रेताय नम इत्युक्तम् ॥ १४ ॥ सदृशः समः ॥ १५ ॥ बुध्यादिप्रकाशकः बुद्ध्यादिद्रष्टा । द्वयोर्देहयोस्तुल्यात्मता समानात्मत्वं कथं घटेत । न कथमित्यर्थः ॥ १६ ॥ चेद्यदि ॥ १७ ॥ १८ ॥ सातत्येन नैरंतर्येण

बुद्ध्या करणेन । प्रकाशकः साक्षी अनुभूतः ॥ १९ ॥ दृढतां निदिध्यासनेन दृढभावं प्राप्तः । तर्हीत्याद्युत्तरान्वयि ॥ २० ॥ अल्पबुद्धीनां विश्वासाय प्रकाशतां प्रकाशितो भवतु । करात् करेण प्रेतदेहे सिंचितवानित्यन्वयः ॥ २१ ॥ २२ ॥ तं स्वबंधुं सुखात् सुखेन ॥ २३ ॥ मृतजीवनेन ॥ २४ ॥ द्विसप्ततिसंख्यममृतानंदं प्रणमति—एवमिति । स्वं निजं रहस्यं पूर्णाभिषेकादि ॥ २५ ॥ मातृगुप्तकथामाह—अथेत्यादिना यावत्सर्गसमाप्ति । आत्मोपास्य

चेद्विश्वासो गुरोर्वाक्ये ममास्ति दृढतां गतः ॥ तथैवानुभवो मे चेत्तद्ध्येषामल्पधीमताम् ॥२०॥ विश्वासार्थमिह प्रेते प्रागन्नदात्मा प्रकाशताम् ॥ श्रीदेशिकेंद्र उवाच ॥ इत्युक्त्वा सोऽमृतानंदः कमंडलुजलं करात् ॥२१॥ सिषेच प्रेतदेहेऽथ तदाद्भुतमिवाभवत् ॥ त्यक्त्वा प्रेतदशां तावत्स पुमान्स्वयमुत्थितः ॥२२॥ जहृषुर्बांधवाः सर्वे दृष्ट्वा तं मृतमुत्थितम् ॥ स्मशानेऽथ बलिं दत्त्वा तं निन्युः स्वगृहं सुखात् ॥२३॥ प्रशशंसुस्तदा सर्वेऽमृतानंदं तु देशिकम् ॥ अमृतानंद इत्येष प्रसिद्धो मृतजीवनात् ॥ २४ ॥ एवंविधोऽसौ सकलं रहस्यं स्वं मातृगुप्ताय ददावथाप ॥ सिद्धिं द्विसप्तत्यभिसंख्यकं तं सदामृतानंदगुरुं नताः स्मः ॥ २५ ॥ अथासीन्मातृगुप्ताख्यः शिवार्चातत्परः सदा ॥ महदैश्वर्ययुक्तोऽसावात्मोपास्यप्रसादतः ॥ २६ ॥ स्त्रीपुत्रपौत्रबंध्वाढ्यो नित्यं शिष्यैः सुसेवितः ॥ दास्यो दासा इभाः साश्वाः शिबिकाः शकटा वृषाः ॥ २७ ॥ यद्गृहे धनधान्यादि समृद्धं चाक्षयं सदा ॥ राजानो देशदेशस्थाः प्राप्ताः शिष्यत्वमस्य वै ॥ २८ ॥ एकदा केनचिद्राज्ञा मातृगुप्ताख्यदेशिकः ॥ समाहूतोऽतिमानेन परिवारसमावृतः ॥ २९ ॥ तद्देशमाययौ शिष्यैः स्वस्त्रीपुत्रान्वितोऽध्वना ॥ कैश्चिद्दासैः सशस्त्रैश्च गजाश्वैः शकटैर्युतः ॥ ३० ॥ रम्यां चारुह्य शिबिकां शीघ्रगैर्वाहकैर्धृताम् ॥ मार्गेऽथासीन्महारण्यं झिल्लीझंकारनादितम् ॥३१॥ नानावृक्षलताकीर्णं सर्पव्याघ्रादिदूषितम् ॥ नानाश्वापदसंघाढ्यं चोरभीतिकरं परम् ॥३२॥

प्रसादतः निजोपास्यदेवताप्रसादेन ॥ २६ ॥ पूर्वार्द्धं पूर्वनिबद्धमुत्तरार्द्धमुत्तरान्वयि ॥ २७ ॥ सर्वमक्षयमासीदित्यर्थः । अस्य मातृगुप्तस्य ॥ २८ ॥ अतिमानेनातिसन्मानेन ॥ २९ ॥ तस्य राज्ञो देशं ययाविति सार्द्धान्वयः ॥ ३० ॥ ३१ ॥ नानेति पूर्वान्वयि ॥ ३२ ॥

॥ ३३ ॥ कुंदमंदमरुत् कुंदपुष्पाणां मंदवायुः यस्याः नद्याः विकसत्कमलजन्यसुगंधलुब्धभ्रमरैर्यत्र नदीतीरे लघुः मंदः सुशब्दः क्रियत इत्यन्वयः ॥ ३४ ॥ महान् सुशब्दः इत्यपकृष्यते। रवः शब्दः॥ ३५॥ विशीर्णानि पतितानि। इति रम्यामित्याद्युत्तरान्वयि॥ ३६॥ अत्र नद्याम्। स्वीयान् स्वकीयजनान् इत्याह। इह तीरे स्थेयं स्थातव्यं सर्वैरिति शेषः ॥ ३७॥ अस्यां नद्याम् ॥ ३८॥ अस्मात्स्थानात्सर्वैस्त्वरितं गंतव्यम् ॥ ३९ ॥ ४० ॥ शक्यते नेति पूर्वान्वितम्

तस्मिन्नेवं विधेऽरण्ये मातृगुप्तो महानदीम् ॥ सांद्रद्रुमतटां रम्यां चापश्यन्निर्मलोदकाम् ॥ ३३ ॥ कुंदमंदमरुद्यस्याः समं ताद्राति सर्वदा ॥ विकसत्पद्मजामोदलोलुपैर्भ्रमरैर्लघुः ॥ ३४ ॥ सुशब्दः क्रियते यत्र कोकिलैर्वृक्षगैर्महान् ॥ पक्षिणां च रवोऽन्येषां यत्तीरे श्रुतिसौख्यदः ॥ ३५ ॥ वृक्षाणां चाम्रमुख्यानां फलानि बहुशो भुवि ॥ विशीर्णानीति रम्यां तु दृष्ट्वासौ महतीं नदीम् ॥ ३६॥ मातृगुप्तोऽत्र संस्नातुं तत्तीरे देवतार्चनम् ॥ कर्तुं समुत्सुकः प्राह स्वीयान्स्थेयमिहेति सः ॥ ३७ ॥ स्नात्वास्यां देवतार्चां च तटे कृत्वा ततो वयम् ॥ यास्यामोऽथाखिलाः श्रुत्वा प्रार्थयंतस्तमूचिरे ॥ ३८ ॥ क्षणमप्यत्र नो स्थेयं चोरभीतिर्हि दारुणा ॥ अस्तीति श्रुतमस्माभिरतोऽस्माद्गम्यतां द्रुतम् ॥ ३९ ॥ श्रुत्वेति मातृगुप्ताख्यस्तानाहेदं सुरम्यकम् ॥ स्थलं त्यक्त्वाऽग्रतो गंतुं देवतार्चां विना मया ॥ ४० ॥ शक्यते नेति चाकर्ण्य तस्याऽऽग्रहमथाखिलाः ॥ स्वस्ववाहेभ्य उत्तेरुस्तत्र चोरभयांतराः ॥ ४१ ॥ मातृगुप्तोऽपि संतुष्टः समुत्तीर्य नृवाहनात् ॥ निष्कासितशिरस्त्रादिः सस्नौ नद्यां तु वैदिकैः ॥ ४२ ॥ मंत्रैस्ततस्तांत्रिकैश्च महार्हवसने ततः ॥ धृत्वा भूतिं च रुद्राक्षान्कृत्वाऽवश्यं तु वैदिकम् ॥ ४३ ॥ तांत्रिकीं च तथा संध्यां देवतार्चां तदारभत् ॥ नद्यास्तटे वृक्षमूले शुचौ देशे कृतासनः ॥ ४४ ॥ भूशुद्धिं भूतशुद्धिं च स्वप्राणस्थापनं क्रमात् ॥ कृत्वा न्यासान्गणेशादींस्ततोऽसौ मातृकाः क्रमात् ॥ ४५ ॥

॥ ४१ ॥ निष्कासिताः शिरस्त्रादयः उष्णीषकवचादयो येन स वैदिकैस्तांत्रिकैर्मंत्रैः सस्नौ स्नानं कृतवानित्यन्वयः ॥ ४२ ॥ उत्तमवस्त्रे विभूतिं रुद्राक्षांश्च धृत्वा वैदिकं संध्यादि तांत्रिकीं संध्यां च कृत्वा देवतार्चनमारब्धवान् इत्यन्वयः ॥ ४३ ॥ ४४ ॥ भूशुद्धिमित्यादिसार्धान्वयः। गणेशादिन्यासाः

मंत्रशास्त्रे प्रसिद्धाः ॥ ४५ ॥ तत्तत्स्थानेषु मस्तकादिषु यावदेवं कृतवान् तावत् । पर्वतस्योरुगुहायां महांदर्याम् आलयः स्थानं येषां ते ॥ ४६ ॥ खड्गकुंतादीनि शस्त्राणि येषु ते । तनुभिः शरीरैः करालाः भयदाः इति पूर्वान्वयि उत्तरार्द्धमुत्तरान्वयि । अतिसमीपतः अतिसमीपे ॥ ४७ ॥ करेषु अकोशाः कोशरहिताः खड्गा येषां तान् । भयेन कंपः अंगेषु येषां ते निजं स्वीयम् अंशुकमुखं वस्त्रादि ॥ ४८ ॥ स्नपन्नित्यादिश्लोकद्वयोक्तं नानाविधं कार्यं कुर्वंतो दासाः शस्त्राणि त्यक्त्वा दिशः कर्मभूताः जीवनाशया ययुरिति त्रयाणामन्वयः । उपभुंजन् उपहारं कुर्वन् ॥ ४९ ॥ त्रुट्यंत्या रज्ज्वा

पंचाशद्वर्णरूपाश्च तत्तत्स्थानेषु स व्यधात् ॥ तावच्चोराः समायाताः पर्वतोरुगुहालयाः ॥ ४६ ॥ शतशः खड्गकुंतादिशस्त्रास्तनुकरालकाः ॥ मातृगुप्तानुगाः शिष्याश्चौराननतिसमीपतः ॥ ४७ ॥ दृष्ट्वागतान्कराऽकोशखड्गान्मृत्युसमान्बहून् ॥ दुद्रुवुर्भयकंपांगास्त्यक्त्वांशुकमुखं निजम् ॥ ४८ ॥ स्नपन्नद्यां पितॄन्कश्चित्तर्पयन्नंशुकं जलैः ॥ क्षालयंस्तत्तटे कश्चिच्चोपभुंजंश्च देवताः ॥ ४९ ॥ पूजयन्पुस्तकं हस्ते धृत्वा स्तोत्राणि संपठन् ॥ त्रुट्यद्रज्ज्वा विमुक्तं वै बध्नन्नश्वं वृषं तथा ॥ ५० ॥ एवं नानाविधं कार्यं कुर्वंतः सर्वतो दिशः ॥ ययुर्दासाश्च शस्त्राणि त्यक्त्वाद्धा जीवितेच्छया ॥ ५१ ॥ प्रियो ह्यात्माखिलेभ्यश्च नान्यत्किमपि तत्समम् ॥ देवतामर्चयंस्तत्र मातृगुप्तः समासने ॥ ५२ ॥ स्थित एकः स्त्रियः काश्चिल्लघवः शिशवोऽपि च ॥ जगृहुर्वस्त्रभूषादि संभारानुष्ट्रगोवृषान् ॥ ५३ ॥ चोरास्तेऽथ ययुः सर्वे मातृगुप्तसमीपतः ॥ हेमरौप्यमयं दृष्ट्वा पूजोपकरणं महत् ॥ ५४ ॥ ग्रहीतुकामा यावत्तु तदाद्भुतमिवाभवत् ॥ मातृगुप्तशरीरात्तु पंचाशद्वर्णमातृकाः ॥ ५५ ॥ स्वस्वस्थानात्स्वस्वरूपैर्निर्ययुः शस्त्रवाहनैः ॥ ध्यानं तंत्रेषु मातॄणां पंचाशद्भेदतः पृथक् ॥ ५६ ॥ यथोक्तं तास्तथारूपाश्चेत्तासां वर्णनं पृथक् ॥ क्रियतां तर्हि विस्तारो भवितेति न तत्कृतम् ॥ ५७ ॥

निमित्तेन विमुक्तम् अश्वं वृषं च बध्नन् ॥ ५० ॥ एवमिति । उक्तार्थम् ॥ ५१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५२ ॥ एकोऽसहायः । काश्चित्स्त्रियः केचिल्लघुबालकाः स्थिता इति योज्यम् ॥ ५३ ॥ चोरास्ते इति पूर्वान्वयि । अथ सर्वहरणानंतरं समीपतः समीपे । हेमाद्युत्तरान्वयि ॥ ५४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५५ ॥ स्वस्वस्थानात् मस्तकादिन्यासस्थानात् । शस्त्रवाहनैः सह निर्गताः । यथोक्तमित्यपकृष्य योज्यम् ॥ ५६ ॥ ताः मातृकाः

उक्तरूपा निर्ययुरिति पूर्वान्वयः । यदि तासां मातृकाणां पृथक् पृथक् वर्णनं मया क्रियते तर्हि विस्तारो भविता भविष्यति इति हेतोस्तद्वर्णनं न कृतम् ॥ ॥ ५७ ॥ वदंत्यो मातृकाः ॥ ५८ ॥ शिरांसि चिच्छिदुरिति संबंधः । यत् आहृतं तत्सर्वं त्यक्त्वा पलायिताश्चोरा इति शेषः । ताः मातृकाः इति कर्म कृत्वा गुप्ता बभूवुः ॥ ५९ ॥ मातृगुप्तस्य तनौ शरीरे इति पूर्वान्वयि ॥६०॥ मातृगुप्तशरीरप्रादुर्भूतमातृकासामर्थ्येन गतान् मृतान् । ज्ञात्वेति पूर्वसंबंधः ।

निर्जघ्नुश्छिधि भिंधीति वदंत्यस्तस्करांश्च तान् ॥ करानंघ्रींश्च केषांचिच्चिच्छिदुः कर्णनासिकाः ॥५८॥ शिरांस्यपि च केषांचिन्मृताः केचित्पलायिताः ॥ सर्वं त्यक्त्वेति कृत्वा ता अंतर्धानं ततो ययुः ॥ ५९ ॥ तनौ श्रीमातृगुप्तस्य प्रहरार्द्धादथाययुः ॥ मातृगुप्तजनाः सर्वे ज्ञात्वा चोरान्गतान्मृतान्॥६०॥मातृगुप्तशरीरोत्थमातृकाणां प्रभावतः ॥ लज्जाढ्यास्तं प्रणम्याहुः सर्वे प्रांजलयः स्थिताः ॥६१॥ स्वजना ऊचुः ॥ अज्ञात्वा तव सामर्थ्यं वयं चोरभयाद्गताः ॥ त्यक्त्वैकं त्वां जीविताशास्तद्भवान् क्षंतुमर्हति ॥ ६२ ॥ श्रुत्वेति मातृगुप्ताख्यस्तूष्णीं सांगं शिवार्चनम् ॥ कृत्वागान्निखिलैः सार्द्धं गंतव्यनगरं ततः ॥ ६३ ॥ श्रीदेशिकेंद्र उवाच ॥ यः श्रीविद्यार्चको नित्यं तद्देहेऽखिलदेवताः ॥ श्रीचक्र इव तिष्ठंति चक्रमय्येव तत्तनुः ॥ ६४ ॥ तस्मादसौ देवतेत्र माननीयः शुभार्थिना ॥ कश्चिच्चेद्द्वेष यत्येनं मुधा दोषधिया खलः ॥६५॥ स नश्यति यथा चोरा मातृगुप्तापराधिनः ॥ इत्यसौ मातृभिर्गुप्तो मातृगुप्तस्ततः स्मृतः ॥६६॥ श्रीमातृगुप्ताख्य इति प्रसिद्धो यो मुक्तकेशाय ददौ रहस्यम् ॥ सिद्धिं ततः प्राप परां ततस्तं त्रिसप्ततिं श्रीगुरुमानताः स्मः ॥ ६७ ॥

तं मातृगुप्तम् ॥ ६१ ॥ जीविताशाः जीवितस्य मरणाभावस्य आशा येषां ते ॥ ६२ ॥ गंतव्यं गंतुं योग्यं नगरं प्रति अगात् जगाम ॥ ६३ ॥ तस्य मातृगुप्तस्य शरीरं श्रीचक्ररूपमेवास्ति॥६४॥६५॥मातृगुप्तस्यापराधिनः अपराधकर्तारः॥६६॥त्रिसप्ततितमं मातृगुप्तानंदं प्रणमति । श्रीतिस्पष्टम् ॥६७॥

एतत्सर्गोक्तगुरुद्वयकथाश्रवणादिफलमाह । योऽमृताख्येति । अपमृत्योः संकटौघाच्च क्रमेण मुच्यते ॥ ६८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायामूनचत्वारिंशः सर्गः ॥ ३९ ॥ षडशीतिश्लोकसंघे चत्वारिंशे षडीरिताः । मुक्तकेशादिगुरुबोधिका भोजकथात्र च ॥ ४० ॥ मुक्तकेशानंदनाथ इति । त्यक्तसंगः त्यक्ताहंकारादिसंबंधः । कुत इत्यत आह । सदा अवस्थात्रये आत्मवान् आत्मनिष्ठः । यथार्क इति । आकाशस्थः जलमध्यगः प्रतिबिंबभूतः । एवं चाकाशस्थसूर्यस्य श्रुत्युक्तात्मरूपत्वेनाकाशवत्सर्वगतस्यैव बिंबप्रतिबिंबभावतयांतर्बहिर्वृत्तित्वं पश्यन् मुक्तकेशानंदोपि तादृशस्वात्मानं पश्यन् असंगात्मरूपो बभूवेत्यर्थः ॥ १ ॥ इंद्रियैः सर्वं शरीरनिर्वाहादिकार्यं नृप इव सेवकैः कृत्वापि अकर्तैवासीत् । प्रतिभाय प्रतिभानंदायेत्याद्युत्तरान्वयि । एकलः एकाकी ॥२॥ पशुचर्यया गोकाकमृगाद्याचरणेन । ऋषभदेवः॥३॥ चतुःसप्ततिसंख्यं मुक्तकेशानंदगुरुं प्रणमति । इत्थमिति । यः संचरन् सन् योगवतां योगिनामुत्तमयोगाभ्यासैः सुदुर्लभां परां सिद्धिं प्राप । इज्यं पूज्यं तं नताः स्मः ॥४॥ यस्य प्रतिभानंदस्य धीः बुद्धिः सर्वशास्त्रेषु सद्योऽवलोकनमात्रेणोत्तमस्फूर्तिविलसिताऽऽसीत् ॥ ५ ॥ ज्ञाः बुधाः सर्वेपि यदधीनाः आसन् । कश्चिदपि बुधः किंचिद्वादकर्ता नासीत् । प्रतिभानंदेन सहेति

योऽमृताख्यचरितं प्रथमं यन्मातृगुप्तचरितं द्वितीयकम् ॥ स शृणोति च पठेदपमृत्योर्मुच्यते च बहुसंकटजालात् ॥ ६८ ॥
इति श्रीगुरुपरंपराचरित्रे पूर्वार्धे अमृतानंदमातृगुप्तानंदगुरुद्वयवर्णनं नामोनचत्वारिंशः सर्गः ॥ ३९ ॥ श्रीदेशिकेंद्र उवाच ॥ मुक्तकेशानंदनाथस्त्यक्तसंगः सदात्मवान् ॥ देहस्थोपि न देहस्थो यथार्को जलमध्यगः ॥ १ ॥ इंद्रियैरखिलं कृत्वा ह्यकर्तैवानुगैर्नृपः ॥ प्रतिभायाखिलं दत्त्वा रहस्यं स्वयमेकलः ॥ २ ॥ मुक्तकेशश्च दिग्वासाः पृथिवीं पशुचर्यया ॥ बभ्राम प्राग्यथा योगी श्रीमानृषभदेवकः ॥ ३ ॥ इत्थं चरन्प्राप परां सुसिद्धिं सुदुर्लभां योगवतां सुयोगैः ॥ यस्तं चतुःसप्ततिसंख्यमिज्यं श्रीमुक्तकेशाख्यगुरुं नताः स्मः ॥ ४ ॥ प्रतिभानंदनामासीत्प्रसिद्धः पंडिताग्रणीः ॥ यद्धीरखिलशास्त्रेषु सद्यः सत्स्फूर्तिशालिनी ॥ ५ ॥ पराजयो न यस्यासीन्महद्भिरपि पंडितैः ॥ ज्ञाश्चासन्यद्वशाः सर्वे कश्चिन्माण्वपि वादकृत् ॥ ६ ॥

शेषः ॥ ६ ॥ नित्यं नवोल्लासवती धिषणा बुद्धिः सा प्रतिभा मता तया शाल्यतेसौ तच्छाली तस्य भावस्तत्त्वं तस्मादसौ प्रतिभानंद इति प्रोक्तः ॥ ७ ॥ पंचसप्ततं पंचसप्ततिसंख्यम् । " तस्यपूरणे डट् " इति सूत्रेण डट्प्रत्ययश्चात्र । प्रतिभानंदं प्रणमति । जेतेति स्पष्टार्थम् ॥८॥ सर्वगुहाशयं सर्वहृदिस्थम् ॥ ॥ ९ ॥ तं विष्णुमित्यादिपूर्वोन्वयि ॥ १० ॥ पुपूज पूजितवान् । न अन्यो विध्यतिरिक्तो मनसि यस्य सः ॥ ११ ॥ नो वेद न ज्ञातवान् ॥ १२ ॥

नित्यं नवनवोल्लासधिषणा प्रतिभा मता ॥ तच्छालित्वाद्बुधैः प्रोक्तः प्रतिभानंद इत्यसौ ॥ ७ ॥ जेताखिलानां भुवि पंडितानां यो विष्णुदेवाय ददौ रहस्यम् ॥ प्रापाथ सिद्धिं प्रतिभाभिनंदं नताः स्म पञ्चाधिकसप्ततं तम् ॥ ८ ॥ विष्णुदेवोभवद्विष्णोर्भक्तः सर्वगुहाशयम् ॥ अपश्यद्विष्णुमेवाद्धा काष्ठांतःस्थमिवानलम् ॥ ९ ॥ तमेव पूजयन्नित्यमुपचारैरनेकशः ॥ चिंतयन् हृदि तन्मूर्तिं रम्यां भक्तसुखप्रदाम् ॥ १० ॥ एकदा विष्णुदेवाख्यो विष्णुमूर्तिं मनोमयीम् ॥ ध्यात्वोपचारैर्मनसा पुपूजानन्यमानसः ॥ ११॥ बाह्यवृत्तिविहीनोसावंतर्विष्णौ सनातने ॥ कृतचेताः स नो वेद बाह्यं वस्तु समीपगम् ॥ १२ ॥ ध्यायन्विष्णुमभेदेन विष्णुरेव बभूव सः ॥ दर्शनार्थं ययुस्तावच्छिष्यास्तस्य रहःस्थितेः ॥ १३ ॥ दूरादेव नमस्कृत्य ददृशुस्ते महाद्युतिम् ॥ विष्णुरूपं चतुर्हस्तं शंखचक्रगदोत्पलैः ॥ १४ ॥ भ्राजमानं स्मिताढ्यास्यं मौलिकुंडलराजितम् ॥ भूषितं कौस्तुभाद्यैश्च पीतांबरधरं परम् ॥ १५ ॥ दृष्ट्वेत्थं स्वगुरुं सर्वे विस्मितास्तन्महन्महः ॥ निरीक्षितुमशक्तास्ते ययुर्नत्वाखिलास्ततः ॥ १६ ॥ मुहूर्ताद्विष्णुदेवोथ ध्यानमुत्सृज्य संस्थितः ॥ ते पुनस्तावदायाताः पूर्ववद्ददृशुर्गुरुम् ॥१७॥ विष्णुं तं मेनिरे साक्षात्स्वगुरुं ते ततोखिलाः ॥ विष्णुदेव इति ख्यातस्ततोभूत्स धरातले॥ ॥१८॥यो विष्णुरूपो निखिलैश्च दृष्टस्तन्वानयैवामलभक्तिदार्ढ्यात् ॥ तं विष्णुदेवं बुधगीतकीर्तिं षट्सप्ततं स्वं गुरुमानताःस्मः॥१९॥

रहःस्थितेरेकांतवासिनः ॥ १३ ॥ महाद्युतिं महातेजस्विनम् । तमेवाह विष्णुरूपमित्यादिसार्धेन । स्मिताढ्यास्यं हास्ययुक्तमुखम् ॥ १४ ॥ १५ ॥ इत्थंरूपं स्वगुरुम् । तस्य महत् महः तेजोनिरीक्षितुमसमर्थाः ततः स्थानात् ॥ १६ ॥ ते शिष्याः पूर्ववन्मनुष्यरूपं ददृशुः ॥ १७ ॥ ते शिष्याः ततः विष्णुरूपगुरुदर्शनानंतरं विष्णुदेवं साक्षाद्विष्णुं मानितवंतः । ततः शिष्यविश्वासानंतरम् ॥ १८ ॥ षट्सप्ततिसंख्यं विष्णुदेवं प्रणमति य इति । अनया

पंचमहाभूतस्वरूपया तन्वा देहेन ॥ १९ ॥ तच्छिष्यो विष्णुदेवशिष्यः यस्य चेतः क्वचित्किंचित् विषयवैषम्यं न स्पृशति ॥ २० ॥ चित्तं स्वतो निर्मलं विषयचिंतनात्कलुषम् अस्थिरं भवति । विषयोन्मुखे चित्ते सत्यात्मनः प्रसन्नता नास्ति ॥ २१ ॥ अत्यंतं अतिशयेन अमलः सुखदुःखसंबंधेपि विकाररहितोऽभवत ॥ २२ ॥ सप्तसप्तसंख्यं विमलानंदं प्रणमति । इत्थमिति । स्पष्टम् ॥ २३ ॥ २४ ॥ तमात्मानं विना विदः ज्ञानस्य स्थितिर्नास्ति ॥२५॥

विमलानंदनामाभूत्तच्छिष्यो विमलांतरः ॥ नेषद्विषयकालुष्यं यच्चेतः स्पृशति क्वचित् ॥ २० ॥ चेतः स्वतो निर्मलं हि कलुषं चार्थचिंतनात् ॥ विषयाक्रांतचित्ते तु न स्यादात्मप्रसन्नता ॥ २१ ॥ निर्वातगेहगो दीपो यथात्यंतं प्रकाशवान् ॥ अंतर्विषयराहित्याद्विमलाख्यः सदाऽमलः ॥ २२ ॥ इत्थंविधो यो विमलाभिधानः संवित्सुखायात्मरहस्यतत्त्वम् ॥ दत्त्वाप सिद्धिं खलु सप्तसप्ततं गुरुं वयं सादरमानताः स्मः ॥२३॥ संविदं ज्ञानमित्याहुस्तस्यातिशयतः स्मृतः ॥ संविदानंद इत्येष ज्ञानिभिर्विमलांतरैः ॥२४॥ सदात्मज्ञानसंतुष्टो नान्यत्पश्याति चात्मनः ॥ ज्ञानं यत्रास्ति तत्रात्मा तं विना न विदः स्थितिः ॥२५॥ न ज्ञानेन विना किंचिज्ज्ञातृ ज्ञेयं चराचरम् ॥ अतश्चराचरेप्यात्मा सम एवास्ति सर्वदा ॥ २६ ॥ इत्थं महत्यात्मनि संविदाढ्यो भोजाय दत्त्वाखिलमाप सिद्धिम् ॥ तं संविदानंदमथाष्टसप्ततं गुरुं वयं संप्रणताः स्म नित्यम् ॥ २७ ॥ अथ भोजाभिधानोभूद्राजा चोज्जयनीश्वरः ॥ विक्रमस्यान्वये जातः कर्मणा न तु तादृशः ॥ २८ ॥ परस्त्रीमानसोत्यंतं परद्रव्यापहारकः ॥ परनिंदारतो नित्यं देवब्राह्मणवंचकः ॥ २९ ॥ तस्य राज्ञः पितुर्मंत्री वृद्धः सत्यव्रताभिधः ॥ स एव राजकीयं तु सर्वं भोजपितुः क्रमात् ॥ ३० ॥

ज्ञातृज्ञेयरूपं चराचरं ज्ञानेन विना नास्ति ॥२६॥ अष्टसप्ततिप्रमितं संविदानंदं प्रणमति । इत्थमिति । अखिलं सर्वमंत्ररहस्यादि ॥ २७ ॥ भोजानंदकथामाह । अथेत्यादिना । यावत्सर्गसमाप्ति । कर्मणा सदाचरणादिना तादृशो विक्रमतुल्यः ॥२८॥२९॥ तस्य भोजस्य पितुः संबंधी राजकीयं राजकार्यं स

एव चक्रे इत्यपकर्षः ॥ ३० ॥ तेनैव सत्यव्रतेनैव अमुना पत्या सह ॥ ३१ ॥ मंत्रितां प्रधानत्वम् ॥ ३२ ॥ तस्य स्वप्रधानस्य सुवृत्ताचारितं सुवृत्ताचरणं न मेने सम्यक्त्वेन न मानितवान् । अनंगपत्नी रतिः ॥ ३३ ॥ सरस्वतीनाम्नीति पूर्वान्वयि । मनश्चक्रे भोगार्थमिति शेषः । निष्कासनीय इत्यादि चिंतयन् सुव्रतं प्राहेति सार्द्धान्वयः ॥ ३४ ॥ ३५ ॥ रत्नाकरं समुद्रम् । इतो नगरात् ॥ ३६ ॥ त्वां विनाऽन्येषु सेवकेषु मे विश्वासो नास्ति । यतोऽन्येनृ

चक्रे तेनैव संतुष्टाः प्रजाः सर्वे न भोजतः ॥ कालेन स मृतो मंत्री तत्पत्नी स्वर्गताऽमुना ॥ ३१ ॥ बुद्धिमांस्तस्य पुत्रोपि प्राग्वयाः सुव्रताभिधः ॥ पूर्ववन्मंत्रितां चक्रे प्रजापालनतत्परः॥३२॥ न मेने भोजराजस्तत्सुवृत्ताचरितं हृदि ॥ सुव्रतस्याभवद्भार्याऽनंगपत्नीव रूपिणी ॥३३॥ सरस्वतीति तस्यां स नृपश्चक्रे मनः कुधीः ॥ निष्कासनीयो यत्नेन राज्यादेकस्तु सुव्रतः ॥ ३४ ॥ यास्यंति मद्वशे पौरास्तत्पत्नीचेति चिंतयन् ॥ सुव्रतं सचिवं प्राह भोजराजः कुबुद्धितः ॥३५॥ महार्हाणि तु रत्नानि भूषार्थं मम योषिताम् ॥ यत्नेनानय गत्वा त्वं रत्नाकरमितोऽधुना ॥ ३६ ॥ त्वदृतेन्येषु विश्वासो न मेस्त्यनृतवादिषु ॥ तच्छ्रुत्वा सुव्रतः सद्धीर्नीतिशास्त्रविशारदः ॥३७॥ अलंघ्याऽऽज्ञा स्वामिनस्तु सेवकेनेति चिंतयन् ॥ तथेति नृपतिं प्रोक्त्वा सेनाढ्यः सुव्रतो ययौ ॥ ३८॥ रत्नाकरं तु संस्थाप्य दासीः पत्नीसमीपतः ॥ विश्वासकारिणीर्बह्वीर्द्वारे दासांश्च तादृशान् ॥ ३९ ॥ पातिव्रत्यं स्वपत्न्याश्च जानन्बुद्धिमतां वरः ॥ सुव्रताख्ये गते चेत्थं भोजराजो दुराशयः ॥ ४० ॥ तत्पत्नीं भोक्तुकामोथ मंत्रिदासान्समाह्वयत् ॥ तानाह वः स्वामिनीह बाला प्रोषितभर्तृका ॥ ४१ ॥ तिष्ठत्येकाकिनी गेहे सद्वृत्ता वान्यथेति सा ॥ लक्ष्यतेद्धा मयैवेत्य रात्रावेकेन तद्गृहम् ॥ ४२ ॥

तवादिनः मौल्याधिक्यायनृतोक्तिस्वभावाः तेषु । उत्तरार्द्धमुत्तरान्वयि । सद्धीः सद्बुद्धिः ॥ ३७ ॥ अलंघ्या नोल्लंघनीया ॥ ३८ ॥ रत्नाकरं समुद्रमिति पूर्वान्वितम् । संस्थाप्येत्याद्युत्तरान्वयि स्वपत्न्याः सरस्वत्याः पतिव्रतात्वं जानन् । विश्वासेन सेवमानाः बहुदासीः पत्नीसन्निधौ तादृशान् विश्वासवतो दासांश्च द्वारे स्थाप्य ययावित्यन्वयः ॥ ३९ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४० ॥ व इत्याद्युत्तरान्वयि ॥४१॥ सा सरस्वती सद्वृत्ताऽसद्वृत्ता वेति मया तद्गृहं प्राप्य

अद्धा प्रत्यक्षं लक्ष्यते ज्ञायत इत्यन्वयः ॥ ४२ ॥ तां ज्ञात्वा स्वगृहमायास्ये ॥ ४३ ॥ चिंतां पातिव्रत्यभंगनिमित्ताम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ नृपायेति पूर्वान्वयि । तदा नृपो दासीर्दासान् प्रति इति वक्ष्यमाणं प्राहेत्यन्वयः ॥ ४७ ॥ अस्याः सरस्वत्या भर्त्रा सुव्रतेन यत्पत्रं रहस्यं रहस्यार्थं प्रेषितं तन्मयास्यै सरस्वत्यै यावत्प्रोच्यते तावत्सर्वैर्बहिर्गम्यतामित्यन्वयः ॥४८॥ ततः पत्राभिप्रायकथनानंतरम् । अंतः गृहमध्ये आगम्यताम् । भवद्भिरिति शेषः।

किंचित्स्थित्वा भाषणाद्यैर्ज्ञात्वाऽऽयास्ये च तां गृहम् ॥ भवद्भिश्चोच्यतां तस्या आयास्ये ते गृहं त्विति ॥ ४३ ॥ श्रीदेशिकेन्द्र उवाच ॥ तच्छ्रुत्वा मंत्रिणो दूताः सरस्वत्यै नृपोदितम् ॥ प्रोचुः सापि निशम्येत्थं चिंतामाप परां हृदि ॥४४॥ चकार विविधं भक्ष्यं नृपार्थं तु पतिव्रता ॥ अथैकाकी नृपो रात्रौ दुर्धीर्मंत्रिगृहं ययौ ॥ ४५ ॥ दूतैरवारितः सत्या ह्यासनाद्यैश्च सत्कृतः ॥ भक्ष्यं मिष्टं सुपक्वान्नं व्यंजनाढ्यं ददौ सती ॥४६॥ नृपायासौ च बुभुजे स्मरबाणार्दितांतरः ॥ तांबूलं च ददौ सास्मै दासीर्दासान्नृपस्तदा ॥४७॥ प्राहेतो गम्यतां सर्वैर्मुहूर्तं सदनाद्बहिः ॥ भर्त्रास्याः प्रेषितं पत्रं रहस्यं तन्मयाधुना ॥ ४८ ॥ पठित्वा प्रोच्यते यावदस्यै चागम्यतां ततः ॥ अंतः पश्चादहं यास्ये स्वगृहं भवदावृतः ॥ ४९ ॥ श्रीदेशिकेंद्र उवाच ॥ राज्ञः श्रुत्वा तु वाक्यं सा चिंतयंती सरस्वती ॥ दूषयत्यधुना नूनं पातिव्रत्यं तु मे नृपः ॥ ५० ॥ कर्तव्यं किं मयाऽवार्यो दूतैश्चायं प्रभुर्यतः ॥ त्यक्ष्येऽसूनेव नोपायः संप्रत्यन्यस्तु दृश्यते ॥ ५१ ॥ सतीत्वभंगान्मन्येहं देहत्यागं वरं यतः ॥ पुनर्लप्स्ये नवं देहं पातिव्रत्यं सुदुर्लभम् ॥ ५२ ॥ जन्मतश्चेन्मया पत्युर्मनसापि परः पुमान् ॥ नेक्षितस्तर्हि मद्भर्ता स एवास्त्वन्यजन्मनि ॥ ५३ ॥ श्रीदेशिकेन्द्र उवाच ॥ इति निश्चित्य साध्वी सा निमित्तेनाथ केनचित् ॥ गत्वा पश्चाद्गृहात्कूपेऽगाधे देहं तु साऽत्यजत् ॥ ५४ ॥ शब्दं श्रुत्वा तदा दास्यो दासाश्चातिभयातुराः ॥ गत्वा पश्चाद्गेहकूपे महादीपप्रकाशतः ॥ ५५ ॥

भवदावृतः युष्मत्सहितः ॥ ४९ ॥ ५० ॥ मया दूतैश्च यतः प्रभुरतो हेतोः अवार्यः अनिवार्यः । असून् प्राणान् त्यक्ष्ये त्यजामि ॥ ५१ ॥ सतीत्वभंगात्पातिव्रत्यभंगात् । प्राणापेक्षया पातिव्रत्यस्य दुर्लभत्वमाह यत इति ॥ ५२ ॥ ५३ ॥ ५४ ॥ महादीपानां "मशालीति" महाराष्ट्रप्रसिद्धानां प्रकाशतः

प्रकाशेन । पश्चात्पश्चाद्भागं ययुः ॥ ५५ ॥ अंभसः जलस्य ऊर्ध्वम् ऊर्ध्वभागे ॥ ५६ ॥ ते इत्युत्तरान्वयि ॥५७॥ संचस्करुः संस्कारं कृतवंतः । सरस्वतीत्युत्तरान्वयि ॥ ५८ ॥ व्यस्तांघ्रिगमनात् व्यस्तपादनिक्षेपेण । उत्तरार्द्धमुत्तरान्वयि ॥ ५९ ॥ ६० ॥ स्वोद्वाहोद्योगिनं निजविवाहे प्रयतमानं प्राग्भवस्मरा पूर्वजन्मस्मरणवती ॥ ६१ ॥ जीवन्नास्ते इति पूर्वनिबद्धम् । सः पतिः ॥ ६२ ॥ ननु तव पूर्वभर्तुर्लाभः कथं स्यादत आह । ऊर्ध्वगेहे

सरस्वत्यंशुकं किंचिद्ददृशुश्चोर्ध्वमंभसः ॥ हाहाकारं ततश्चक्रुर्दासा दास्यश्च दुःखिताः ॥ ५६ ॥ देहत्यागं सरस्वत्याः श्रुत्वा राजाऽथ लज्जितः ॥ ययौ तूष्णीं गृहे तेऽथ दासाः कूपात्सरस्वतीम् ॥ ५७ ॥ मृतां निष्कास्य यत्नात्संचस्करुश्चापि बांधवैः ॥ भयाद्राज्ञश्चरित्रं ते नोचुर्दासाः सरस्वती ॥ ५८ ॥ व्यस्तांघ्रिगमनात्कूपे पतितेति जने जगुः ॥ पातिव्रत्योत्थपुण्येन काश्यां जन्म सरस्वती ॥ ५९ ॥ कुलीनस्य गृहे प्राप धनिनः शंभुशर्मणः ॥ अतिरूपवती जाता साष्टवर्षा गुणाकरा ॥ ६० ॥ स्वोद्वाहोद्योगिनं प्राह पितरं प्राग्भवस्मरा ॥ नोद्वाहोद्यैव कार्यो मे प्राग्जन्मीयः पतिः पितः ॥ ६१ ॥ जीवन्नास्ते स्वतः सोऽत्रायास्यत्येवाचिरेण तु ॥ तस्मै देयाहमन्यस्मै न कस्मैचित्त्वया खलु ॥६२॥ ऊर्ध्वगेहे स्थिताहं तु गवाक्षान्मार्गगामिनाम् ॥ मध्ये परीक्ष्य पूर्वांकैर्वक्ष्ये त्वां स्वपतिं ततः ॥६३॥ श्रीदेशिकेंद्र उवाच ॥ मतं ज्ञात्वैव दुहितुर्नोद्वाहं तु पिताऽकरोत् ॥ अथ द्वादशवर्षांते सुव्रतः स्वपुरं ययौ ॥६४॥ दत्त्वा राज्ञे च रत्नानि श्रुत्वा मृत्युं गतां प्रियाम् ॥ स्वदासैर्नृपवृत्तं स ज्ञात्वा गेहेऽतिनिःस्पृहः ॥६५॥ नो कुर्वेऽन्यां स्त्रियं चेत्यं निश्चयात्पुष्कलं धनम् ॥ गृहीत्वाऽऽढ्योऽनुगैः कैश्चित्काशीं मोक्षपुरीं ययौ ॥ ६६ ॥ वैराग्याढ्यः स्थितस्तत्र गंगास्नायी शिवार्चकः ॥ व्रजन्विश्वेश्वरं द्रष्टुं सरस्वत्या स लक्षितः ॥६७॥ निवेदितः स्वपित्रे च तमाहूय पिता गृहे ॥ कुलं गोत्रं च पृष्ट्वास्मै ददौ कन्यां विधानतः ॥६८॥

स्थिता शिरोगृहे वर्तमानाहं मार्गगामिनां जनानां मध्ये पूर्वांकैः पूर्वचिह्नैः स्वपतिं परीक्ष्य ततस्त्वां प्रति वक्ष्ये कथयिष्यामि ॥ ६३ ॥ तत्पत्युर्वर्तमानमाह । अथेत्यादिना ॥ ६४ ॥ अतिनिःस्पृहो बभूव ॥ ६५ ॥ अहमन्यां स्त्रियं न कुर्वे इति निश्चयेन । आढ्यो युक्तः ॥ ६६ ॥ ६७ ॥ स्वपित्रे कथित इति

पूर्वान्वयि । तं सुव्रतम् ॥ ६८ ॥ सुजीवता सुजीविना विदा पंडितेन । लिख्यते मयेति शेषः ॥ ६९ ॥ नृपकौतुकेन राज्ञो दुश्चरितेन । आप प्राप ॥ ७० ॥ सरस्वतीचारित्रेण भोजराजस्य पश्चात्तापमाह सरस्वतीत्यादिना ॥ ७१ ॥ सरस्वत्याः सतीत्वं पातिव्रत्यम् । सतीप्रमादात् पतिव्रताहेलनात् । यस्या भयं देवश्रेष्ठैरपि धार्यते ॥ ७२ ॥ सुखाप्तिः सुखप्राप्तिरस्ति किम् । न किमपीत्यर्थः । तदेवाहोत्तरार्द्धेन ॥ ७३ ॥ महाघः महापापी । अत्र

मृतापि भार्या प्रापेत्थं सुव्रतेन सुजीवता ॥ कृतः श्लोको विदास्त्यत्र प्रमाणार्थं तु लिख्यते ॥६९॥ सरस्वतीभोजसुमंत्रिणः स्त्री मृत्युं गता सा नृपकौतुकेन ॥ संभूय काश्यां पतिमाप भूयो जीवन्नरो भद्रशतानि पश्येत् ॥७०॥ श्रीदेशिकेंद्र उवाच ॥ सरस्वतीजन्म नृपो निशम्य काश्यां स्वभर्त्रैव विवाहमस्याः ॥ विगर्हयन्नात्मनि धिक् प्रकुर्वन्नात्मानमेवाह तदेति भोजः ॥ ७१ ॥ भोज उवाच ॥ मया त्वबुद्ध्यैव सतीत्वमस्याः कृतोऽपराधो हि महान् खलेन ॥ का स्याद्गतिर्मे तु सतीप्रमादात्संधार्यते देववरैश्च यद्भीः ॥७२॥ राज्येन किं मे च तथांगनाभिर्बलेन कोशेन सुतैः सुखाप्तिः ॥ कृतापराधस्य पतिव्रतायाः कुत्रापि नो सौख्यमिहापरत्र ॥ ७३ ॥ मुक्त्वा कथं सत्यपराधपापाद्यास्ये परं लोकमहं महाघः ॥ नात्रामराः शक्तियुताः कुतोन्ये ज्ञान्येत्र पापघ्न इतीममीक्षे ॥ ७४ ॥ राजेति संचिंत्य ददौ सुताय राज्यं तथैको हि भुवं भ्रमन् सः ॥ श्रीसंविदानंदमठं प्रविष्टस्समीक्ष्य तेजस्विनमाननाम ॥७५॥ तस्मै निजं वृत्तमुवाच राजा वैराग्यदं सत्यपराधमुख्यम् ॥ श्रुत्वा तदेत्याह मुनिर्नृपं तं राजन्हि देहात्मधियामघौघः ॥ ७६ ॥ दयान्वितः प्राह गणेशसुख्यात्राज्ञे मनूंश्चास्य शिरः करेण ॥ स्पृशन्मुनिश्चाथ नृपोपि सद्धीर्भूत्वैव तुष्टाव गुरुं सुपद्यैः ॥७७॥ भोज उवाच ॥ मध्येऽगाधेऽहं पतितो जनिमरणाब्धे तस्मात्त्राता त्वं खलु नान्यः करुणाब्धे ॥ स्त्रीपुत्रान्यैर्वैगयुतैर्दुर्मकराद्यैः क्षिप्तः श्वभ्रे वारितसत्त्वोऽहिकराद्यैः ॥७८॥

सत्यपराधे । इमं ज्ञानिनम् ईक्षे पश्यामि । अहमिति शेषः ॥ ७४ ॥ समीक्ष्य अवलोक्य ॥ ७५ ॥ सत्यपराधादिस्ववृत्तं वैराग्यजनकम् । देहात्मबुद्धीनां देहबुद्धीनाम् कर्मणि षष्ठी । पापसंघः । प्राप्नोतीति शेषः ॥ ७६ ॥ सद्धीः सद्बुद्धिः । गुरुं संविदानंदम् ॥ ७७ ॥ समुद्ररूपकेण संसारं दुःखदं

वर्णयन् तत्परिहारं प्रार्थयति । मध्य इत्यादिपंचभिः । हे करुणाब्धे दयासमुद्र । जन्ममरणात्मको योब्धिः समुद्रस्तस्य मध्ये मध्यभागेऽहं पतितोस्मि । तस्मात्त्राता रक्षकस्त्वमेवासि नान्योस्ति । वेगयुक्तैः स्त्रियः पुत्राश्चान्ये च तैर्मकरादिभिः कर्तृभिः अहिकरायैः अहिसदृशैः हस्तादिभिः करणैः वारितसत्त्वः क्षयीकृतबलोऽहं श्वभ्रे स्वनिवासस्थानगर्ते निःक्षिप्तोस्मि । मत्तमयूरं वृत्तं तल्लक्षणं च—वेदैरंध्रैर्म्तौयसगामत्तमयूरमिति । अत्र संसारस्यातिदुःखजनकत्वेन समुद्राद्यभेदरूपेण रंजनाद्रूपकालंकारः । तदुक्तं—विषयभेदताद्रूप्यरंजनं विषयस्य यत् रूपकं तदिति ॥ ७८ ॥ तस्मान्मकरगृहात् बाह्यं स्थानं प्रति साधनसंगात्साधनबलसम्बन्धेन अपयातुर्निर्गच्छतो मे पादयुगं सा आशा तृष्णा बन्धाति । सा का या जालमयी वासनाजालरूपा । इह च संसारसमुद्रे भ्रांत्याख्य आवर्तः मां तोयान्तरनेता उदकस्यांतरं मध्यं नयतीतिनेता आकर्षकोस्ति । तस्मात्परं तीरं अपनेता अपकर्षकः कोपि नास्तीत्यर्थः ॥

तस्माद्बाह्यं साधनसंगादपयातुर्बध्नात्याशा पादयुगं जालमयी तु ॥ भ्रांत्यावर्तो मामिह तोयान्तरनेता पारं तीरं कोपि न तस्मादपनेता ॥ ७९ ॥ जन्मांताख्यान्मज्जनिमज्जैर्बहुधार्यं दुःखं मेऽभूत्साधनवृंदैर्यदवार्यम् ॥ गच्छत्यर्थांभो बहुधा मे विमुखांतः कोष्ठाभारेऽधोगमनात्मीयसुखांतः ॥ ८० ॥ कामो वायुर्वेगवशाद्वै जलभंगान्कृत्वा दत्ते तैर्विषयान्कुत्सितसंगान् ॥ रुट् चौर्वाग्निर्दहति न मां मामतितर्षात्सर्पोऽहं मां खादति पादावधि शीर्षात् ॥ ८१ ॥

॥ ७९ ॥ जन्मांताख्यैर्जन्ममरणनामकैरुन्मज्जनिमज्जैः उन्मज्जननिमज्जनैरित्यर्थः । बहुधार्यं मे बहुभिर्जनैर्ज्ञानहीनत्वात्प्राप्यमित्यर्थः । दुःखमभूत् यत् दुःखं साधनवृंदैः साधनशतकैरवार्यम् अनिवार्यमस्ति । अर्थांभः विषयोदकमपि बहुधा मे मुखांतर्गच्छति तेन च कोष्ठाभारे कोष्ठस्योदरस्य आ अतिशयेन भारे जाड्ये सति अधोगमनेनात्मीयसुखांतः अधोगमनेनात्मीयस्यात्मसंबंधिनः सुखस्य नाशोभवदित्यर्थः । “ पुंसि कोष्ठोंतर्जठरम् ” इत्यमरः ॥ ८० ॥ कामनामा वायुर्वेगेन जलतरंगान्मानसव्यापाररूपान्निर्माय तैस्तरंगैः कुत्सितः परिणामे दुःखदः संगो येषां तान् विषयान् दत्तेऽर्पयति । रुट् क्रोधश्च स एवौर्वाग्निः वडवानलः । “ और्वस्तु वाडवो वडवानलः ” इत्यमरः । अतितर्षात् अतितृष्णायाः मां दहतितमाम् अतिशयेन दहति । अहमाख्यः अहं

कारः स एव सर्पः अतिवर्षादतितृष्णया शीर्षात्पादावधि मां खादति ग्रसति ॥ ८१ ॥ अहं तु अतिबलेन बलिष्ठेन प्राग्भवेषु पूर्वजन्मसु यत्कृतं पुण्यादि आदिना सुसमागमादि स एवानिलो वायुस्तेन कर्त्रा स्वोर्म्या स्वकृततरंगेण ते चरणसमीपे आनीतः प्रापितः । तस्मात्परतीरस्थस्त्वं मां करदानेन अभयहस्तप्रदानेन तारय । हे देशिक गुरो जीवाभयप्रदानादन्यच्छ्रेयो नास्ति ॥ ८२ ॥ सद्धियं सद्बुद्धिं ज्ञात्वा सर्वमंत्रमयीं दीक्षां पूर्णाभिषेकरूपां संविदं ज्ञानं चास्मै भोजाय ददाविति सार्द्धान्वयः ॥ ८३ ॥ ८४ ॥ एकोनाशीति संख्यं भोजानंदं प्रणमति राजेति । भोजानंदः पूर्वं राजापि संविदानंदादात्म

इत्थं त्वाहं प्राग्भवपुण्याद्यनिलेन स्वोर्म्यानीतस्ते चरणांतेतिबलेन ॥ पारस्थो मां तारय तस्मात्करदानान्नान्यच्छ्रेयो देशिक जीवाभयदानात् ॥८२॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं श्रीसंविदानंदः स्तुतो राज्ञातितुष्टधीः ॥ ज्ञात्वा तं सद्धियं भोजं मुमुक्षुं शरणागतम् ॥८३॥ सर्वमंत्रमयीं दीक्षां ददावस्मै च संविदम् ॥ बभूव सिद्धवर्योऽसौ भोजानंद इति श्रुतः ॥ ८४ ॥ राजापि भूत्वात्मविदां गरीयान्संवित्सुखाद्भोजसुखोथ सर्वम् ॥ ददौ पराद्याय शिवाय चैकोनाशीतिसंख्यं गुरुमानताः स्मः ॥ ८५ ॥ मुक्तकेशमुखषट्गुरुगाथां यः शृणोति च पठेदतिभक्त्या ॥ काममुख्यरिपुषट्कजयेन सौख्यमेव लभतेत्र परत्र ॥ ८६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे मुक्तकेशादिषट्गुरुवर्णनं नाम चत्वारिंशः सर्गः ॥ ४० ॥

विदां ज्ञानिनां मध्ये गरीयान् श्रेष्ठो भूत्वा पराद्याय शिवाय परशिवानंदाय सर्वं मंत्ररहस्यं यो ददौ तं नताः स्मः ॥ ८५ ॥ मुक्तकेशादिषड्गुरुकथाश्रवणादिफलमाह मुक्तकेशेति । मुक्तकेशादिषड्गुरुकथामतिभक्त्या यः शृणोति पठेच्च सः कामादिशत्रुषट्कजयेन इहामुत्र च सौख्यमेव प्राप्नोति । स्वागतावृत्तम् । तल्लक्षणं च—'स्वागतेति रनभाद्गुरुयुग्मम्' इति ॥ ८६ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां चत्वारिंशः सर्गः ॥ ४० ॥

एकचत्वारिंशके द्विसप्ततिश्लोकमण्डलैः । सर्गे परशिवादीनां चतुर्णां कथ्यते कथा ॥४१॥ आसीदिति कार्यकारणाभ्यां परस्मिन् केवलेऽद्वये शिवे विश्वम् । अध्यस्तं पश्यन् विश्वस्मिन्सर्वजगति तं परशिवमेवांतर्बहिः स्थितं पश्यन्सन् आसीत् ॥ १ ॥ जगदध्यासस्य बुद्धिकल्पितत्त्वमाह । इंद्रियाणि ज्ञानेंद्रियाणि पराणि देहादिदृश्यापेक्षया सूक्ष्माणि । एभ्यः इंद्रियेभ्यः संकल्पविकल्पात्मकं मनः परम् । तत्प्रवर्तकत्वात् । अतो मनसः धीर्बुद्धिः परा । संकल्पादेर्नियामक बुद्धिपूर्वकत्वात् । तस्याः बुद्धेः परः परमात्मा । तत्साक्षित्वात् । तस्मिन्परमात्मनि कूटस्थे स्वाविद्याकल्पितबुद्ध्या प्रकल्पितम् इदं जगत् भाति दृश्यते । स्वबुद्ध्या कल्पितत्वे दृष्टांतः नैल्यमिति । यथा दृष्ट्या आकाशे नीलत्वं तथा तस्मिन्परमात्मनि विश्वमिदं बुद्ध्या कल्पितं सत् । अन्यथा अलीकं भाती

श्रीदेशिकेंद्र उवाच ॥ आसीत्परशिवानंदः परस्मिन्केवले शिवे ॥ पश्यन् विश्वं तु विश्वस्मिंस्तमेवांतर्बहिः स्थितम् ॥ १ ॥ इंद्रियाणि पराण्येभ्यो मनः परमतोपि धीः ॥ परमात्मा परस्तस्यास्तस्मिन्बुद्ध्या प्रकल्पितम् ॥ २ ॥ भाति विश्वमिदं दृष्ट्यांबरे नैल्यमिवान्यथा ॥ जीवस्त्वविद्योपाधिः स विद्योपाधिस्तथेश्वरः ॥ ३ ॥ निरुपाधि परं ब्रह्म परमात्मैव स त्रिधा ॥ जालगार्कसमो जीवश्चेशो गेहांगणार्कवत् ॥ ४ ॥ सर्वगार्कसमं ब्रह्म वाग्भेदोयं न वास्तवः ॥ परमात्मा सदास्तित्वाच्छिवोऽखंडितमंगलः ॥ ५ ॥ अतः परशिवं प्राहुः परमात्मानमेव हि ॥ तस्मिन्परशिवानंदस्त्वखंडानंदतः स्मृतः ॥ ६ ॥ शिवे परस्मिन्परिपूर्णकामः परः शिवोऽथाप्य रहस्यजातम् ॥ मनोजदेवाय ययौ सुसिद्धिं चाशीतिसंख्यं गुरुमानताः स्मः ॥ ७ ॥

त्यर्थः ॥ २ ॥ जीवेश्वरयोः स्वरूपमाह जीव इति । अत्रोपाधिः परिच्छेदको बोध्यः ॥ ३ ॥ उपाधिरहितं परं ब्रह्म स परमात्मा त्रिधा भवति । तदेवाह । जालगतसूर्यसमो जीवः अल्पप्रकाशत्वात् । ईश्वरश्च गृहांगणसूर्यवत् बहुप्रकाशत्वात् ॥ ४ ॥ सर्वगतसूर्यवत् ब्रह्म व्यापकप्रकाशत्वात् । अति बालबुद्ध्या वाग्भेदेपि वास्तवो यथार्थो भेदो नास्ति यथा तथाऽविवेकेन ब्रह्मेश्वरजीवानां वाग्भेदेपि वस्तुतोऽभेद एवेत्यर्थः । परमात्मा सदाऽस्ति वर्तते इति हेतोरखंडितं व्यापकं मंगलं यस्मिन् स एव शिवः परशिव इत्युच्यते इति शेषः ॥ ५ ॥ तस्मिन्परशिवाभिन्ने परमात्मनि अखंडानंदतः अखंडानन्दानुभव सद्भावात् परशिवानंद इति स्मृतः । ज्ञानिभिरिति शेषः । शिवशब्दस्य कल्याणवाचित्वेन परमकल्याणस्वरूप इति भावः ॥ ६ ॥ अशीतिसंख्यं परशिवा

नंदं प्रणमति शिव इति । परिपूर्णकामः रहस्यजातं पूर्णाभिषेकादि ॥ ७ ॥ ब्रह्मवित्तमः ब्रह्मविच्छ्रेष्ठः । सदा नित्यम् ॥ ८ ॥ दीव्यति प्रकाशते । उक्तः ज्ञानिभिरिति शेषः ॥ ९ ॥ यदखिलं पदार्थजातम् ॥ १० ॥ ११ ॥ एकाशीतिं मनोजदेवानंदं प्रणमति । मनोजदेव इति । परमां कैवल्यरूपाम् ॥ ॥ १२ ॥ सिद्धार्यः सिद्धश्रेष्ठः परमात्मनि प्राप्तानंदेऽभवदित्यन्वयः । अनुभूतपरमात्मानंद इत्यर्थः ॥ १३ ॥ तथात्मनि सर्वं जगत्कल्पितं पश्यति



मनोजदेवानंदाख्यः सिद्धार्यो ब्रह्मवित्तमः ॥ मनोभवांश्चोपचारान् स्वोपास्याय सदार्पयत् ॥ ८ ॥ स्वशक्तिभिरनंताभिर्दिव्याभिर्दीव्यति स्वयम् ॥ स एव देव इत्युक्तः परमात्मा सनातनः ॥ ९ ॥ यत्संकल्पविकल्पाभ्यां मनसो जायतेऽखिलम् ॥ तद्देवायार्पयत्यद्धा केवलाय परात्मने ॥ १० ॥ अतो मनोजदेवोसावुक्तः सद्भिर्विचक्षणैः ॥ मनसो यस्य चोपास्यान्नैवान्यत्र गतिः क्वचित् ॥ ११ ॥ मनोजदेवो गुरुरात्मवेत्ता ददौ रहस्यं गगनाभिधाय ॥ प्रापाथ सिद्धिं परमां तमेकाशीतिं गुरुं सादरमानताः स्मः ॥ १२ ॥ सिद्धार्यो गगनानंदो व्यापके परमात्मनि ॥ निःसंगे सर्वगेऽनंते निर्लेपे चाद्वयेऽमले ॥ १३ ॥ प्राप्तानंदो जगत्सर्वं यथा गगनसंस्थितम् ॥ गगनं च जगद्व्यापि तथात्मनि स पश्यति ॥ १४ ॥ आत्मा तस्मिंश्च तेनासौ गगनानंद ईरितः ॥ गगनेन समो यस्य चात्मानंदः सदा स्थितः ॥ १५ ॥ सिद्धेश्वरोसौ गगनाभिनंदो गेयादिकादित्यसुनामकाय ॥ दत्त्वा रहस्यं समवाप सिद्धिं द्व्यशीतिसंख्यं गुरुमानताः स्मः ॥ १६ ॥ गेयादित्योवदच्चेत्थं विश्वमादित्यतः खलु ॥ दृश्यतेऽस्योदयेनैव वर्ततेऽखिलकर्मसु ॥ १७ ॥ तथा तस्यास्ततः सर्वं निद्राकल्पे च लीयते ॥ तस्मादादित्यतो ह्यस्य सृष्टिस्थितिलयाः सदा ॥ १८ ॥

॥ १४ ॥ तस्मिन् जगति । तेन आकाशसदृशात्मदर्शित्वेन । ईरितः कथितः । बुधैरिति शेषः । गगनेन समः व्यापक इत्यर्थः ॥ १५ ॥ द्व्यशीतिसंख्यं गगनानंदं प्रणमति । सिद्धेश्वर इति । गेयादिकादित्यसुनामकाय गेयादित्यायेत्यर्थः । तं नताः स्मः ॥ १६ ॥ गेयादित्योऽवदत् जनानिति शेषः । आदित्यतः सूर्याद्धेतोः विश्वं जगत् दृश्यते । अस्य सूर्यस्योदयेनैव विश्वं जगत् सर्वकर्मसु वर्तते ॥ १७ ॥ यथोत्पद्यते तथाऽस्यादित्यस्यास्ततः अस्तमानेन

निद्राकल्पे सुप्त्याख्यनित्यप्रलये सर्वं लयमेति । तस्मादादित्यादस्य जगतः सृष्टिः स्थितिः उतात्ययो नाशश्च भवति ॥ १८ ॥ पुराणादौ तु सृष्ट्यादिकर्तारः कादयो ब्रह्मादयः प्रोक्ताः ते तु कैरपि न दृष्टाः । अयमादित्यस्तु प्रतिदिनमस्माभिर्विलोक्यते इत्यन्वयः ॥ १९ ॥ प्रातराद्यैरित्यत्राद्यपदेन मध्याह्नास्तमानौ । उदयादिभिरित्यत्रादिना स्थितिसंहारौ । तैः करणैः अद्धा प्रत्यक्षमनुभूयते सर्वैरिति शेषः । अयं भावः । प्रातः प्रबोधेनोत्पत्तिकर्तृत्वेन मध्याह्ने भोजनादिना पालकत्वेन अस्ते निद्रयान्तकर्तृत्वेन च सृष्ट्यादिकर्तृत्वं सूर्यस्येति ॥ २० ॥ संध्याकर्मसु ईड्यते स्तूयते । यद्यपि मध्याह्ने उग्ररूपत्वेन रुद्ररूपः

उक्ताः सृष्ट्यादिकर्तारः पुराणादौ तु कादयः ॥ न कैश्चिदपि दृष्टास्तेऽयं त्वस्माभिर्दिने दिने ॥१९॥ विलोक्यते प्रातराद्यैस्त्रिकालैश्चोदयादिभिः ॥ सृष्टिस्थित्यंतकर्तृत्वमस्मिन्नद्धानुभूयते ॥२०॥ अत एव द्विजैर्नित्यं संध्याकर्मसु भेदतः ॥ ब्रह्मादित्रयरूपेणादित्य एकस्त्रिधेड्यते ॥ ॥२१॥ तस्मादादित्य एवायं जनैः सर्वैर्निरंतरम् ॥ गेयोथोपासनीयश्च नमस्कार्यः सुभक्तितः ॥२२॥ ध्येयो धीनिश्चयादार्यैः कदाप्यन्यो न सर्वथा ॥ श्रीदेशिकेंद्र उवाच ॥ गेय आदित्यदेवोऽसावुपदेशाज्जनेष्विह ॥ २३ ॥ गेयादित्य इति ख्यातः सर्वसिद्धेषु भूतले ॥ स कदाचिद्भ्रमन्देशान्नगरं चैकमाययौ ॥ २४ ॥ तत्रत्यो ब्राह्मणः कश्चिद्विद्वाञ्छ्रीमांश्च धार्मिकः ॥ देवशर्माऽस्य भार्या च सावित्रीति गुणाकरा ॥ २५ ॥ तयोर्दैवात्सुतश्चासीद्दशाब्दः शंकराभिधः ॥ सदाध्ययनशीलोसौ बुद्धिमान्रूपसुंदरः ॥ २६ ॥ एक एव पितुर्नित्यं प्रियकृद्बुद्धिमत्तया ॥ बभूव पांडुसंज्ञोऽस्य रोगः प्राक्कृतकर्मणा ॥ २७ ॥ चिकित्सापि कृता वैद्यैस्तस्य रोगस्य शांतये ॥ तथापि न रुजः शांतिर्वृद्धिरेव दिने दिने ॥२८॥ रोगोत्कर्षेण तस्यांगं गौरं पांडुरतां ययौ ॥ निःसत्त्वोभूत्कुमारोसावक्षमो वक्तुमप्यणु ॥२९॥

सूर्य उक्तः तथापि भोजनादिषु प्रवर्तकत्वेन पोषकत्वात्पालकत्वमनुभूयते । अतस्तदपि संभवतीति विष्णुरूपत्वमुक्तमित्यर्थः ॥ २१ ॥ २२ ॥ धीनिश्चयात् बुद्धिनिश्चयेनेति पूर्वान्वयि । सर्वथा सर्वभावेन कदापि कस्मिन्नपि काले अन्यो न गेयः नोपास्य इत्यादि । उत्तरार्द्धमुत्तरान्वयि ॥ २३ ॥ तस्योपासनादार्ढ्यद्योतकचरित्रमाह स इत्यादिना यावत्सर्गसमाप्ति ॥ २४ ॥ तत्रत्यः तत्रस्थः । आसीदित्यध्याहारः ॥ २५ ॥ २६ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ २७ ॥ चिकित्सा

रोगनिवृत्त्युपायः । रुजो रोगस्य ॥ २८ ॥ २९ ॥ शुचं शोकम् ॥ ३० ॥ मार्गे गच्छन् शोकं श्रुत्वेति पूर्वान्वयि । तौ सावित्रीदेवशर्माणौ प्रोचतुश्चेत्यन्वयः ॥ ३१ ॥ अस्तीत्यध्याहारः ॥ ३२ ॥ मुमूर्षुतां मुमूर्षां मरणावस्थां प्राप्तः ॥ ३३ ॥ नौ आवयोः । येन त्वदनुग्रहेण ॥ ३४ ॥ गेयादित्यसुखः गेयादित्यानंदः । अस्य शिशोः रोगशांत्यै सूर्यमेव तुष्टाव ॥ ३५ ॥ यदेति । यदा सृष्ट्यादौ दृश्यजातं दृश्यमात्रं किमपि नासीत्तदा एकश्चिद्रूपः आदित्यदेवः आस यद्यस्मादादौ स्थितत्वेन यम् आदित्यमाहुः बुधा इति शेषः । तमादिदेवमादित्यमहं सदा भजे भजामि । वृत्तं

प्राप्तो मुमूर्षुतामेव पितरौ चक्रतुः शुचम् ॥ तावत्तत्सदनं प्राप्तो गेयादित्योतिवत्सलः ॥ ३० ॥ गच्छन्मार्गे शुचं श्रुत्वाऽपश्यद्रोगिणमर्भकम् ॥ गेयादित्याय नमनं चक्रतुस्तौ च दंपती ॥ ३१ ॥ प्रोचतुश्चेति भोः स्वामिन्नेक एवावयोः सुतः ॥ मतिमान्रूपवान्नित्यं वेदाध्ययनतत्परः ॥ ३२ ॥ सोयं मुमूर्षुतां प्राप्तो रोगेणोग्रेण पांडुना ॥ चिकित्साभिश्च बह्वीभिर्नैयं रुक् शांतिमाययौ ॥३३॥ नौ दैवेन त्वमायातो दीनावनचिकीर्षया ॥ कुरुष्वानुग्रहं चास्मिन्येन जीवत्ययं रुजः ॥ ३४ ॥ श्रीदेशिकेंद्र उवाच ॥ गेयादित्यसुखश्चेत्थं पितृभ्यां प्रार्थितः शिशोः ॥ सदयोस्य रुजः शांत्यै तुष्टावादित्यमेव सः ॥३५॥ गेयादित्य उवाच ॥ यदा दृश्यजातं त्वभून्नैव किंचित्तदैकश्चिदात्मा स चादित्यदेवः ॥ यदादौ स्थितत्वात्तमादित्यमाहुर्भजेहं सदादित्यमेवादिदेवम् ॥ ३६ ॥ अदोऽभिन्नशक्तिः प्रभा चिन्मयी सा गुणैर्ज्ञप्तिमिश्रज्ञताऽज्ञानरूपैः ॥ जगत्स्वर्धराऽधस्तलाख्यं हि चक्रे भजे तं सदादित्यमेवादिदेवम् ॥३७॥ चिदादित्यतेजोयुतं स्वर्गलोको दिवानिट्प्रकाशाऽप्रकाशान्विता भूः ॥ प्रकाशोज्झितं यस्य चाधस्तमोयुक् भजे तं सदाऽऽदित्यमेवादिदेवम्॥३८॥

भुजंगप्रयातम् ॥ ३६ ॥ त्वमेव जगज्जनकोसीति प्रार्थयति । अदोभिन्नशक्तिः अदसः अमुष्मात् अभिन्ना चिन्मयी चिद्रूपा या शक्तिः प्रभारूपेणास्ति सा ज्ञप्तिः ज्ञानं मिश्रज्ञता मिश्रज्ञानम् अज्ञानं च तद्रूपैर्गुणैः स्वर्गः धरा पृथ्वी अधस्तलं पातालं च तानि आख्या यस्य तत् जगत् करोति जनयति तमादिदेवमादित्यं भजे । वृत्तं तु भुजंगप्रयातम् । यथोक्तम्—भुजंगप्रयातं भवेद्यैश्चतुर्भिरिति ॥ ३७ ॥ उक्तमर्थं विवृण्वन् स्तौति चिदिति । सदा आदित्यस्य तेजोयुक्तः स्वर्गोस्ति । सत्त्वगुणकार्यत्वात् । इयं भूः पृथिवी दिवा निशि प्रकाशेनाप्रकाशेन च युता । मिश्रज्ञानकार्यत्वात् । यस्य सूर्यस्य प्रकाशेन रहितम्

अधः अधस्तलं तमोयुक् तमोगुणकार्यमस्ति । तं भजे इत्युक्तार्थम् ॥ ३८ ॥ यथा ज्ञानमिश्रज्ञानाज्ञानोपाधिना स्वर्गादिकल्पकत्वं न वस्तुतस्तथाहोरात्रादिकमुपाधिकल्पितमेवेति दर्शयन् स्तौति नेति । उपाधिना तत्तद्देशकालसंयोगरूपेणाऽवलोकपितृकल्पितेन सर्वम् अहोरात्रादिकं विभाति ॥ ३९ ॥ प्रकारांतरेण जगत्कर्तृत्वं वर्णयति यदीयेति । यदभिन्ना परा सूक्ष्मा कालाख्या शक्तिः परार्द्धांतभेदैः द्विपरार्द्धपर्यन्तभेदकैः पलाद्यैः पलघटीदिनवर्षादिभिः विधैः ब्रह्मणः आरभ्य स्तंबकांतं ब्रह्मादिस्तंबपर्यंतं इदं जगद्विधत्ते जनयति पाति अंते प्रलये हंति तं भजे ॥४०॥ पुनरादित्याधिष्ठितकालाख्यशक्तिकृतं जगत्पोषणं स्मरन्स्तौति । जलोद्वर्षणैरिति । प्रतिवर्षं जलवृष्टिभिः शीतवायुभिस्तथा महोष्णैः करणैः जगत्पोषणाय धान्यानां वापः आवापः ऋद्धिः वृद्धिः

न चाहो न रात्रिर्न चोषो न सायं न मध्यं सदा चित्प्रकाशे ह्यनंते ॥ उपाधेस्तु सर्वं विभात्येव यस्मिन् भजे तं सदाऽऽदित्यमेवादिदेवम् ॥ ३९ ॥ यदीया परा कालशक्तिः पलाद्यैः परार्द्धांतभेदैर्विधैः स्तंबकांतम् ॥ विधत्ते जगत्पाति हंतीदमंते भजे तं सदादित्यमेवादिदेवम् ॥ ४० ॥ जलोद्वर्षणैः शीतवातैर्महोष्णैस्तथा वत्सरेवत्सरे सा करोति ॥ जगत्पुति धान्यवापर्धिशौष्क्यं भजे तं सदादित्यमेवादिदेवम् ॥ ४१ ॥ स चात्माऽखिलानां जगत्संस्थितानां चराणां स्थिराणां श्रुतेर्वाक्यतोद्धा ॥ न किंचिद्विनादित्यतोऽन्यत्रिलोक्यां भजे तं सदादित्यमेवादिदेवम् ॥ ४२ ॥ सदा जप्यते या तु गायत्र्यभिज्ञैर्द्विजैर्ब्रह्ममुख्यैः सुरैर्वेदमाता ॥ यया ब्राह्यमस्याश्च यो देवतास्ति भजे तं सदादित्यमेवादिदेवम् ॥४३॥ मयादित्यमौख्यं कथं वर्ण्यतेद्धा न यद्ब्रह्ममुख्याश्च जानंति कात्स्न्यात् ॥ स चेत्थं महात्मापि भक्तार्तिहर्ता भजे तं सदादित्यमेवादिदेवम् ॥ ४४ ॥

शौष्क्यं शुष्कत्वं च यदीया कालशक्तिः करोति । अत्र द्वितीयचरणांत्यवर्णे लघुत्वं पादांतस्थं विकल्पेनेत्यदोषाय । तेन जगत्पालनं भवतीत्यर्थः ॥४१॥ सर्वमादित्यशक्तिकृतं पालनादिकमुपवर्ण्य लोकदृष्ट्या कृतं परिच्छिन्नत्वं वारयन् श्रुत्युक्ताधिष्ठानात्मत्वेन सर्वरूपत्वं वर्णयति स इति । अद्धा प्रत्यक्षम् । “ सूर्य आत्मा जगतस्तस्थुषश्च ” इति श्रुतिवाक्येन त्रिलोक्यामित्युपलक्षणं भुवनमात्रस्य ॥ ४२ ॥ आदित्यस्य सर्वाधिष्ठानत्वमुक्त्वेदानीं सर्वोपास्यत्वेन स्तौति सदेति । ब्रह्ममुख्यैः ब्रह्माद्यैः ब्राह्मं ब्रह्मत्वम् । अस्या गायत्र्याः यो देवतास्ति तमहं भजे ॥ ४३ ॥ मयेति । आदित्यमौख्यं सूर्यमुख्यत्वं कात्स्न्येन

किं वर्ण्यते । अपि तु नेत्यर्थः । इत्थमपि एवमपि स महात्मा सूर्यः भक्तदुःखहंतास्ति अतस्तमहं भजे ॥ ४४ ॥ इदानीं ब्राह्मणबालरोगहरणायादित्यस्य रोगहंतृत्वप्रसिद्ध्या स्तौति ऋच इति । श्रुतौ वेदे ऋचः उद्यन्नद्येत्याद्याः । नतीः नमस्कारांश्च कुर्वंति तं भजे ॥ ४५ । एतद्विषये आगमम् । उपासनाप्रकरणगतं प्रमाणं दर्शयन् प्रार्थनाप्रयोजनमाह । अरुक्त्वमिति स्पष्टम् ॥ ४६ ॥ मदीयेति । रुगंतं रोगनाशं बह्वायुःप्राप्तिं च करोतु ॥ ४७ ॥ एतत्स्तो

ऋचः संति तिस्रः श्रुतौ रोगहंत्र्यो द्विजास्ताभिरर्घ्यप्रदानं नतीश्च ॥ प्रकुर्वंति यस्मै महारोगशांत्यै भजे तं सदादित्यमेवादिदेवम् ॥ ॥ ४५ ॥ अरुक्त्वं सदा भास्कराद्वाञ्छितव्यं मयैतच्छ्रुतं चागमं वाक्यमाद्यम् ॥ अतो विप्रसूनोर्महारोगशांत्यै भजेऽहं सदादित्यमेवादिदेवम् ॥ ४६ ॥ मदीया दृढाभक्तिरादित्यदेवे तथा श्रीगुरौ चास्ति तुल्यैव नित्यम् ॥ समागत्य तर्ह्येव साक्षात्स चास्य रुगंतं तथायुःसुवृद्धिं करोतु ॥ ४७ ॥ पठेत्स्तोत्रमेतद्धि रुङ्नाशनाख्यं पुमान्यश्चिरायुः सदा रोगहीनः ॥ स भूयात्सुपुत्रान्वितः सर्वमान्यः प्रभावोस्तु मे स्तोत्रराजस्य चैषः ॥४८॥ श्रीदेशिकेंद्र उवाच ॥ गेयादित्येन चादित्यः स्तुत इत्थं सुभक्तितः ॥ मंडलात्स्वयमुत्तीर्य ययौ तत्र सुमूर्तिमान् ॥ ४९ ॥ दधानश्चारुहस्ताभ्यां शंखचक्रे वरायुधे ॥ मणिमंडितमौल्याढ्यः कुंडलांगदभूषितः ॥ ५०॥ लसद्रक्तांशुकः कांचीनूपुराद्यैश्च भूषितः ॥ चक्षूंष्याच्छादयन्स्वीयतेजसाखिलदेहिनाम् ॥ ५१ ॥ गेयादित्यः किलैकस्तं समपश्यत्सुभक्तितः॥ नान्ये मीलितनेत्रास्ते सदादेहाभिमानिनः ॥ ५२ ॥ ननाम दंडवद्भूमौ श्रीमदादित्यमद्भुतम् ॥ गेयादित्यः सुतुष्टस्तं प्रोवाचेति कृतांजलिः ॥ ५३ ॥ गेयादित्य उवाच ॥ यो यज्ञदानैश्च तपोभिरुग्रैर्न दृश्यते योगिभिरप्यनीहैः ॥ स त्वं मयात्राद्य दृशैव दृष्टः किं पूर्वपुण्यं मम संचितं वै ॥ ५४ ॥ अस्पष्टमप्यज्ञशिशोस्तु वाक्यं श्रुत्वैव यात्यस्य पिता समीपे ॥ स्तोत्रं तथा मूर्खतमस्य मेऽद्य श्रुत्वैव साक्षात्त्वमिहागतोसि ॥ ५५ ॥

त्रपाठस्य फलं याचते । पठेदिति ॥४८॥ गेयादित्येनेति त्रयाणामन्वयः । तत्र ब्राह्मणगृहे ॥४९॥ मणिमंडितमौल्याढ्यः रत्नभूषितमुकुटयुक्तः ॥५०॥ ॥५१॥ तं सूर्यम् ॥५२॥ अद्भुतम् अद्भुतरूपम् ॥ ५३ ॥ अनीहैर्निरिच्छैः । सोऽद्य मया दृशा दृष्टः । अतो मे पूर्वपुण्यमस्तीत्यर्थः ॥ ५४ ॥ ५५ ॥

त्वमेवासि नान्य इत्यर्थः ॥ ५६ ॥ सर्वप्राणहर्ता यमस्तव पुत्रोस्ति। स च यमः तव संबंधिनीं कालस्य गतिम् आश्रित्य वर्तते । अतः त्वदधीनत्वात् अपमृत्युम् अकालमरणं दूरीकुरु ॥ ५७ ॥ गेयपूर्वादित्येन गेयादित्येन । तं बालं सुदृष्ट्या कृपायुक्तदृष्ट्याऽपश्यत् । बालोपि सूर्यावलोकनेन दिव्यदेहो जातः । स्पर्शः महाराष्ट्रभाषया 'परीस' इति प्रसिद्धः ॥ ५८ ॥५९॥ उद्घृणाढ्यः उत्कटकरुणायुक्तः । अखिलज्ञत्वं सर्वज्ञत्वम् । असौ

तवागमो नो विफलः कदाचिदतः कुरुष्व द्विजबालकस्य ॥ रुजः प्रशांतिं च तथायुषोपि वृद्धिं यतोऽरुक्त्वकरस्त्वमेव ॥ ५६ ॥ कालस्वरूपोपि भवान्न चान्यः पुत्रो यमस्ते निखिलासुहर्ता ॥ आश्रित्य ते कालगतिं स चास्तेऽतोऽस्यापमृत्युं च निवारय त्वम् ॥ ॥ ५७ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वादित्यः प्रार्थनां गेयपूर्वादित्येनोक्तां तं ह्यपश्यत्सुदृष्ट्या ॥ बालो जातोऽर्केक्षया दिव्यदेहः स्पर्शस्पर्शेनेव लोहं सुवर्णम् ॥ ५८ ॥ द्विजस्य सूनुः स च शंकरोथादित्याय साष्टांगनतिं चकार ॥ स्वयं समुत्थाय रुजार्दितोपि ह्यतर्क्यकर्ता महतां प्रसादः ॥ ५९ ॥ स्वीयेन हस्तेन वरायुधेनाऽऽदित्यः शिरोऽस्यास्पृशदुद्घृणाढ्यः ॥ प्राप्याखिलज्ञत्वमसौ सुवाग्भिस्तुष्टाव चादित्यमथादिदेवम् ॥ ६० ॥ कुमार उवाच ॥ यो मण्डलस्थोपि जडोत्पलानां धरागतानां च निजोदयेन ॥ प्रकाशकोऽद्धास्य मनाक्चितो मे संजीवनं नास्ति महद्विचित्रम् ॥ ६१ ॥ यं दूरतोपीक्षितुमक्षमाः स्युर्महत्तमाः सोद्य शिरो मदीयम् ॥ अद्धाऽस्पृशत्स्वीयकरेण किं मे प्राग्जन्मजातं सुकृतं न जाने ॥ ६२ ॥ गेयादिकादित्यगुरोः प्रसादाज्जातं तवांघ्र्योः खलु दर्शनं मे ॥ हेतुर्न चान्योऽस्य मयोपकर्तुं नोत्तीर्णता जन्मशतैः सुदास्यैः ॥ ६३ ॥ भूयाद्गुरोरस्य भवेभवे मे संगस्त्वयीहापि समा च भक्तिः ॥ न भेदधीमें ह्युभयोः कदाचिद्गुरोऽयमेवास्तु रवे भवत्तः ॥ ६४ ॥ प्रपश्यतां मत्पितरौ तवांघ्री तद्बांधवाश्चात्र समागता ये ॥ न भेदधीस्ते खिलबोधकस्य नातस्त्वमेतेषु कुरु प्रपंचम् ॥ ६५ ॥

बालः ॥ ६० ॥ मनाक्चितः अल्पजीवनस्य ॥ ६१ ॥ ६२॥ उपकारकर्तुः अस्य गुरोः उत्तीर्णता प्रत्युपकारित्वम् अनेकजन्मकृतदास्यैः करणैः मया कर्त्रा न लभ्यत इति शेषः ॥ ६३ ॥ इह गुरौ समा अभेदभावनया तुल्या भक्तिर्भवतु ॥ ६४ ॥ तवांघ्री तव चरणौ प्रपंचं दर्शनाप्रदानेन प्रतारणम्

"प्रपंचः संचयेपि स्याद्विस्तरे च प्रतारणे" इति मेदिनी ॥ ६५ ॥ ६६ ॥ यया ज्ञानदृष्ट्या आत्मसाक्षात्कारो भवति ॥ ६७ ॥ ते सर्वे कुमारपित्रादयः ॥ ६८ ॥ गुरुबुध्या गुरुत्वं निश्चयेनावस्थितम् ॥ ६९ ॥ रुजो रोगात् । मूर्तिमतः सूर्यादानंदो यस्येत्यर्थः ॥ ७० ॥ त्र्यशीतिसंख्यं गेयादित्यानंदं प्रणमति गेयेत्यादिना ॥ ७१ ॥ परशिवानंदादिचतुर्गुरुकथाश्रवणादेः फलमाह । प्रथमपरशिवानामिति । प्रथमः आदिः परशिवो येषाम् ।



श्रीदेशिकेंद्र उवाच ॥ स्तुत इत्थं कुमारेणादित्योऽस्मै वांछितं ददौ ॥ दृशं तत्पितृमुख्येभ्यः स्याद्यया चात्मदर्शनम् ॥६६॥ साक्षात्तं ददृशुः सर्वे चक्रुर्लब्धोपचारतः ॥ कुमारमुख्याः सत्पूजां गेयादित्येन चान्विताः ॥ ६७ ॥ तावदंतर्दधे देवः स्तुतः सर्वैर्यथामति ॥ गेयादित्यं शशंसुस्ते प्रणेमुश्चाखिलास्तदा ॥ ६८ ॥ गेयादित्योपि तं ज्ञात्वा गुरुबुद्ध्यात्मनि स्थितम् ॥ कुमारं प्रददौ तस्मै दीक्षां चाखिलमंत्रदाम् ॥ ६९ ॥ मूर्तिमानेत्य चादित्यो जीवयामास यं रुजः ॥ अतो मूर्तिमदानंदं तस्य नाम चकार सः ॥ ७० ॥ गेयादिकादित्यसुखो रहस्यं दत्त्वाखिलं मूर्तिमतेऽखिलज्ञः ॥ सिद्धिं ययौ सिद्धवरैर्दुरापां त्र्यशीतिसंख्यं गुरुमानताः स्मः ॥७१॥ प्रथमपरशिवानां श्रीगुरूणां चरित्रं पठति विमलचेताश्चाथवा यः शृणोति ॥ परमसुखमिहैव प्राप्य चात्मीयलाभात् गुरुचरणकृपातो मानवोऽद्धा शिवोऽयम् ॥७२॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे परशिवादिचतुर्गुरुवर्णनं नामैकचत्वारिंशः सर्गः ॥४१॥ श्रीदेशिकेंद्र उवाच ॥ आसीन्मूर्तिमदानंदश्चात्मवेत्तानुभावतः ॥ आज्ञाऽप्रतिहता यस्य ह्यादित्यस्य प्रसादतः ॥ १ ॥ कश्चिन्नोल्लंघयत्याज्ञां यस्य राजा महानपि ॥ अशक्तोप्यतिशक्तोभूदाज्ञया यस्य मानवः ॥ २ ॥ सदात्मलाभसंतुष्टः स्वतंत्रस्तिष्ठति क्वचित् ॥ कदाचिद्भ्रममाणोसौ कदाचिद्वक्ति वा न वा ॥ ३ ॥

आत्मीयस्य सुखस्य लाभेन शिवरूपो भवति ॥ ७२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायामेकचत्वारिंशः सर्गः ॥ ४१ ॥ द्विचत्वारिंशके तूनषष्ट्या पर्यैर्हि मूर्तिमान् । आज्ञाशक्तिर्मैरिकस्तु त्रयाणां कथ्यते कथा ॥ ४२ ॥ आसीदिति । अनुभावतः अनुभवेन ॥ १ ॥ २ ॥ ३ ॥

स्वोपास्याचांकरः स्वेष्टदेवतापूजकः ॥ ४ ॥ परां द्वितीयां पत्नीं कृत्वा । त्यक्तामिति पूर्वान्वयि । तस्यां त्यक्तपत्न्यां भर्तुः सकाशात्कन्या आसीदित्यन्वयः । एकवत्सरा एकवर्षेत्युत्तरान्वयि ॥ ५ ॥ पूर्वार्द्धे आसीदित्यध्याहारः । सकन्यां कन्यासहितामित्याद्युत्तरान्वयि ॥ ६ ॥ मलिनम् अंगं केशाः

कदाचिज्जपनिष्ठोसौ स्वोपास्याचांकरः क्वचित् ॥ भ्रमन्स चैकदापश्यत्कांचिद्विप्रांगनां कृशाम् ॥ ४ ॥ त्यक्तां भर्त्रा परां पत्नीं कृत्वा वैरूप्यकारणात् ॥ दैवात्तस्यां चैककन्या भर्तुरेवैकवत्सरा ॥ ५ ॥ साप्यत्यंतकृशा मातुः पयोऽलाभात्क्षुधार्दिता ॥ सकन्यां तां स्त्रियं दृष्ट्वा मूर्तिमांस्तत्समीपतः ॥ ६ ॥ गत्वा तां प्राह कासीति बहिष्ठा किं सबालका ॥ कृशा त्वं दृश्यसेत्यंतं मलिनांगकचांबरा ॥ ॥७॥ पतिस्ते वर्तते कुत्र पिता बंधुः क्व ते वद ॥ पृष्टा मूर्तिमता सेत्थं मासमात्रोपवासतः ॥८॥ नेषद्वक्तुं क्षमा किंचिद्धस्तमेवोर्ध्वतोऽकरोत् ॥ समीपस्थजनास्तावच्चागतास्तत्र तेऽखिलम् ॥ ९ ॥ प्रोचुर्मूर्तिमते तस्याः सर्वं वृत्तं क्रमेण तु ॥ जना ऊचुः ॥ अस्याः पतिः समीपेस्मिन्गृहे तिष्ठति निर्दयः ॥ १० ॥ इयमस्ति कुरूपेति कृता तेनापरा वधूः ॥ त्यक्तेयमन्नमप्यस्यै दीयते न कुतोंशुकम् ॥११॥ तेनेयं करतो धृत्वा गृहान्निष्कासिता बलात् ॥ अनया कुत्र गंतव्यं कुलवध्वा पतिं विना ॥ १२ ॥ नास्याः पितास्ति जननी न बंधुर्न सुहृज्जनः ॥ अतोऽत्रैव स्थिता साध्वी पत्युर्गेहसमीपतः ॥ १३ ॥ मासो जातोऽनया नैव भक्षितं चान्नमण्वपि ॥ निष्ठत्यायुर्बलेनैव त्वियं पानाशनोज्झिता ॥१४॥ शूद्राणामेव चास्माकं गेहान्यत्र समीपतः ॥ ब्राह्मणीयं वयं त्वस्यै जलान्ने दातुमक्षमाः॥१५॥

वस्त्रे च यस्याः सा ॥ ७ ॥ उत्तरार्द्धमुत्तरान्वयि । मासमात्रमुपोषणेन किंचिद्वक्तुं क्षमा नासीत् ॥ ८ ॥ ऊर्ध्वभागे किंचित् हस्तमेवाकरोत् । तेऽखिलमित्युत्तरान्वयि ॥ ९ ॥ १० ॥ अंशुकं वस्त्रम् ॥ ११ ॥ करतः करे ॥ १२ ॥ १३॥ इयं तु पानाशनोज्झिता पानाशने अन्नजले उज्झिते त्यक्ते यया

अन्नजलरहितेति यावत् ॥ १४ ॥ १५ ॥ जीवनं भवति ॥ १६ ॥ १७ ॥ ननु परदुःखेन कथमस्य दुःखित्वमत आह । आत्मनः समस्थित्या समत्वेन तादृशानुभवेन च हेतुना साधुभिः सर्वगतं सुखं दुःखं च स्वदेहे मन्यते । असंगत्वेन दुःखाभावेपि करुणावशाद्दुःखित्वमिव मन्यत इति भावः ॥१८॥

एकाब्दिकास्याः कन्येयं तस्यै दुग्धं दिनेदिने ॥ बलात्पाययतेऽस्माभिस्तेनास्याः किल जीवनम् ॥१६॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं मूर्तिमदानंदस्तस्या दुःखं निशम्य च॥ आसीत्सदयचित्तोसौ परदुःखेन दुःखितः॥१७॥आत्मनश्च समस्थित्याऽनुभवेनाखिलास्थितम्॥ सुखं दुःखं स्वके देहे मन्यते साधुभिर्यतः ॥ १८ ॥ अथ मूर्तिमदानंदः स्मरञ्छ्रीगुरुपादुकाम् ॥ कमंडलोर्जलं हस्ते गृहीत्वा चाभिमंत्रितम् ॥ १९ ॥ शीर्षे चाङ्गे च संप्रोक्ष्य तामुत्तिष्ठेति चाब्रवीत् ॥ ममाज्ञयास्तु शक्तिस्ते ह्यशक्तायाः किलाधुना ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ ब्रुवतीत्थं मूर्तिमती सोदतिष्ठद्द्विजांगना ॥ कट्यां गृहीत्वा स्वां कन्यां जनान् दृष्ट्वाथ सङ्गतान् ॥ २१ ॥ तथा मूर्तिमदानंदमद्धाऽऽदित्यमिवाग्रगम् ॥ जानुभ्यां संस्थिता भूमौ मूर्ध्नाऽस्यांघ्री ननाम सा ॥ २२ ॥ अथ मूर्तिमदानंदः करेणास्याः शिरः स्पृशन् ॥ उत्तिष्ठेत्यब्रवीत्तां चाऽथोत्थितामवदत्पुनः ॥ २३ ॥ मूर्तिमदानंद उवाच ॥ मातापितृसुहृद्धीना त्यक्ता भर्त्राप्यथो मया ॥ स्वीकृता दुहितेव त्वं ततोद्यैहि मठं मम ॥ २४ ॥ दीयतेंशुकमन्नं च निर्भया वस सौख्यतः ॥ सतां सेवां प्रकुर्वंती मठस्थानामनिंदिता ॥ २५ ॥ तेभ्यो वेदांतवाक्यानां शृण्वत्यर्थं तु नित्यशः ॥ श्रीदेशिकेंद्र उवाच ॥ तामित्युक्त्वा निनायासौ स्वमठं कन्यया सह ॥ २६ ॥ छात्रपत्नीभिरभ्यंगं कारयित्वांशुकं शुभम् ॥ कंचुकीं च ददौ तस्यै नित्यमन्नं च सात्त्विकम् ॥ २७ ॥

अथेत्याद्युत्तरान्वयि ॥ १९ ॥ २० ॥ जनानित्याद्युत्तरान्वयि ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ अनिंदिता अदूषितेत्यर्थः ॥ २५ ॥ तेभ्यः साधुभ्यः । पूर्वार्द्धं पूर्वान्वयि ॥ २६ ॥ छात्रपत्नीभिः शिष्यस्त्रीभिः । सात्विकं रस्याः स्निग्धा इत्यादिना भगवदुक्तमन्नं च ददौ गुरुरित्यर्थः ॥ २७ ॥

॥ २८ ॥ २९ ॥ पूर्वमशक्तापि स्वाज्ञया शक्तिं सामर्थ्यं यतः प्राप्तवती अतोऽस्याः आज्ञाशक्तिरिति नाम चकार ॥ ३० ॥ ततः परं पूर्णदीक्षानंतरं संप्रदायक्रमं श्रीचक्रपूजादिकं सैवाज्ञाशक्तिश्चक्रे ॥ ३१ ॥ चतुरशीतिसंख्यं मूर्तिमदानंदं प्रणमति । संस्थाप्येति ॥ ३२ ॥ यस्याः सकाशात् ॥ ३३ ॥

अर्थं वेदांतवाक्यानां सद्भ्यः शृण्वत्यहर्निशम् ॥ आत्मलाभेन संतुष्टा सा बभूव सुमध्यमा॥२८॥अथ मूर्तिमदानंदस्तां ज्ञात्वा चाधिकारिणीम् ॥ सर्वमंत्रमयीं दीक्षां ददौ तस्यै विधानतः ॥२९॥ नामाप्याज्ञाशक्तिरिति तस्याश्चक्रे सुबुद्धिमान् ॥ प्रागशक्ताप्यसौ शक्तिं प्राप स्वस्याज्ञया यतः ॥३०॥ संप्रदायक्रमं सर्वं सैव चक्रे ततः परम् ॥ कन्याप्यष्टाब्दिका जाता नित्यं सत्सहवासिनी ॥३१॥ संस्थाप्य चाज्ञादिमशक्तिमत्र सिद्धिं ययौ मूर्तिमदादिमोऽथ ॥ अशीतिमेनं चतुरूर्ध्वगं तं गुरुं स्वमूर्ध्ना सततं नताः स्मः ॥ ३२ ॥ श्रीदेशिकेंद्र उवाच ॥ आज्ञाशक्त्यंबिकाऽथाभूत्सर्वसिद्धसुपूजिता ॥ प्रापुर्यस्यास्तु बहवः सिद्धीर्यैं सिद्धिकामुकाः ॥ ३३ ॥ अस्याश्चाष्टाब्दिका कन्या सतां संगादहर्निशम् ॥ आत्मवित्प्रवरा जाता पश्यंती विश्वमस्थिरम् ॥ ३४ ॥ विवाहयोग्यां ज्ञात्वा तामाज्ञाशक्तेः पतिर्द्विजः ॥ कुलीनेन विवाहार्थमात्मजां समयाचत ॥ ३५ ॥ आज्ञाशक्तिस्तमाहेत्थं दुहित्राशयवेदिनी ॥ आत्मजामेव पृष्ट्वा त्वं नय सा मन्यते यदि ॥ ३६ ॥ पप्रच्छाथ द्विजः कन्यामिति तत्स्नेहयंत्रितः ॥ एहि मत्सदनं कन्ये विवाहं ते करोम्यहम् ॥ ३७ ॥ कुलीनेन गुणाढ्येन सुरूपेण वरेण तु ॥ अथ कन्यापि तं प्राह त्वं कोसीति निशम्य सः ॥ ३८ ॥ हसन्पुनः सुतां प्राह पिताऽहं ते न वेत्सि माम् ॥ कन्याऽऽह तं न दृष्टस्त्वं श्रुतश्चाजन्मतो मया ॥ ३९ ॥ जननीमेव जानेऽहं मातरं पितरं गुरुम् ॥ तथा प्राचीनवाक्यं च न मातुर्दैवतं परम् ॥ ४० ॥ जडोपि देहोऽयमभूत्सकाशाद्यस्यास्तयैवाथ विवर्द्धितोऽयम् ॥ प्रकाशमेकस्य तथात्मनोहं सर्वत्र पश्यामि यदीयसंगात् ॥ ४१ ॥

संगात्संगेन ॥ ३४ ॥ कुलीनेन पत्या विवाहार्थं समयाचत । द्विकर्मकत्वात् पत्नीमित्यर्थतः ॥ ३५ ॥ दुहित्राशयवेदिनी कन्याभिप्रायज्ञा ॥ ३६ ॥ ॥ ३७ ॥ पूर्वार्द्धं पूर्वान्वयि । निशम्य स इत्युत्तरान्वयि ॥ ३८ ॥ ३९ ॥ तथामातृमुख्यत्वेन ॥ ४० ॥ यदीयसंगात् यस्याः संगेन एकात्मनो ज्ञान

प्रकाशं सर्वत्र स्थितं पश्यामि ॥ ४१ ॥ तेनेति । अमलचित्प्रकाशोऽसंगचित्स्फूर्तिरूपे तत्रात्मनि स्थिताऽस्मि । आत्मना सह मम विवाहो जातः । तेन संगं करोमीत्यर्थः ॥ ४२ ॥ ननु प्रपंचसुखदं पतिं त्यक्त्वा किमात्मना ते सुखं स्यादिति चेत् । अनंतमात्मसुखं स्यादित्याह । तत्संगेति । आत्मसंगोत्पन्नम् अखंडं देशकालापरिच्छिन्नं यतः अनंतमद्वयं निर्विषयं च विषयजन्यं तु सुखम् एतत्सुखविरोधि भवति । अतस्तदात्मसुखमेकांतस्थले भुक्त्वा तेनानंदेन युक्ता मातृकृपया भयरहिता च सती संचरामि धरायामित्यर्थः ॥ ४३ ॥ विषयसुखस्यात्मसुखविरोधित्वेनातितुच्छत्वमाह । संग इति । देहात्मबुद्धिमता पत्या संगो मम मा भवतु । पतिसंगेनातिदुःखमेव भवति । अतो विषयसंबंधिसुखं नेच्छामि । यतः कारणात्परिणामे अंते दुःखमेवाखंडितम् ।

तेनैव चाखंडितवैभवेन सर्वोत्तमेनातुलविक्रमेण ॥ सदात्मना संगमहं करिष्ये स्थिता च तत्रामलचित्प्रकाशे ॥ ४२ ॥ तत्संगजातं सुखमप्यखंडं भुक्त्वाऽद्वयं निर्विषयं त्वनंतम् ॥ चरामि चानंदयुता स्वतंत्रा मातुः प्रसादेन भयोज्झिता च ॥ ४३ ॥ संगो न देहात्मधिया मयास्तु यत्संगतोऽखंडितदुःखमेव ॥ न कामये वैषयिकं च सौख्यं दुःखं यतः स्यात्परिणामतस्तु ॥ ४४ ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्य कन्योक्तिमभूत्स तूष्णीं देहात्मधीर्वक्तुमम्मू त्वशक्तः ॥ प्राप्तात्मनिष्ठानुभवां तदाज्ञाशक्तिः प्रसूः प्राह सुतां स्वकीयाम् ॥ ४५ ॥ आज्ञाशक्तिरुवाच ॥ नैवाग्रहं त्वं कुरु कन्यकेऽद्य ह्यकर्तुमुद्वाहविधिं वरेण ॥ कामोयमत्यंतसुदुर्जयोऽस्य प्रापुर्जयं नो मुनयोऽमराश्च ॥ ४६ ॥ पितामहो येन सुतानुयायी पराशरो धीवरकन्यकागः ॥ वृंदास्मशाने स्ववशे चकार विष्णुं भवेत्कस्य जयस्त्वनंगात् ॥ ४७ ॥

यतः तद्द्वयविषयसुखस्य लेशमात्रस्य भोगसमाप्त्यतिदुःखरूपत्वेन भोगकालेपि दुःखरूपत्वान्न सुखगंधोपि पत्यादिप्रपंचार्यंगीकारेण । अतो वरं पूर्वोपलब्धात्मपतिसेवनमिति भावः ॥ ४४ ॥ निशम्येति स कन्यापिता । अमूं कन्यां प्राप्ता आत्मनः निष्ठा निश्चयोऽनुभवश्च यस्याः तां प्रति माता प्राह । हे कन्ये त्वं वरेण पत्या विवाहम् अकर्तुम् आग्रहं नैव कुरु विवाहं न करोमीति मा वद ॥ ४५ ॥ कामस्यातिदुर्जयत्वमाह । काम इत्यादिसार्द्धेन । मुनयः विश्वामित्रादयः अमरा इंद्राद्याः । अस्य कामस्य जयं न प्रापुः ॥ ४६ ॥ ब्रह्मा येन कन्यानुयायी कन्याभोगलुब्धः कृतः । पराशरः धीवरकन्यां सत्यवतीं

गच्छति स तथाकृतः । वृंदानाम्न्याः जालंधरपत्न्याः स्मशाने वृंदावनाख्ये स्थितं विष्णुं स्ववशे चकार । तस्मान्मदनात्कस्य जयो भवेत् । किंतु पराजय एव । अतो महतां ज्ञानिनामपि कामो दुर्जयः । अबलायास्तव सुतरां कामजयो न भविष्यति । तदर्थं पत्यादिविषयसेवनेन शनैः शनैः कामं जहीति भावः ॥ ४७ ॥ कामान्मम किमपि भयं नास्ति देहात्मबुद्धिमतां कामो भयप्रदो भवति । स्वधियाम् आत्मबुद्धीनां ज्ञानिनां कदापि कामाद्भयं नास्ति ॥ ४८ ॥ यदा विषयैः सह जनानां संगस्तदा तच्चिंतनेन विषयेच्छारूपः कामो भवति । सत्संगेन कामस्य दर्शनं न भवति । सिंहमैत्र्या वृकस्य दर्शनं न भवति यथा

श्रीदेशिकेंद्र उवाच ॥ निशम्य कन्या जननीं तदाह मातर्न मे भीस्तु मनागनंगात् ॥ भयप्रदो देहधियां किलाऽयं भीतिर्न चास्मात्स्वधियां कदापि ॥ ४८ ॥ संगो यदा स्याद्विषयैर्जनानां कामोद्भवः स्यात्तु तदैव नूनम् ॥ तद्दर्शनं नैव सतां सुसंगान्मृगेंद्रसख्येन यथा वृकस्य ॥ ४९ ॥ प्रसादतस्तेऽहमजय्यमन्यैः कृत्वातिनम्रं स्मरमात्मदार्ढ्यात् ॥ बध्नामि सद्बोधबलेन मौर्व्या चापं प्रबध्नाति यथा हि वीरः ॥ ५० ॥ नैवाल्पमप्यस्ति भयं स्मरान्मे सत्संगतश्चात्मपथस्थितायाः ॥ यथा महारण्यपथस्थितानां भीश्चोरतः किं बहुशूरसंगात् ॥ ५१ ॥ लघ्व्याः कुमार्यास्त्वफलं हि वाक्यमित्थं न मन्यस्व निजांतरेऽब ॥ उक्तं मया सत्सहवासतोऽद्धा ज्ञात्वा स्वरूपं मदनस्य कात्स्न्यात् ॥ ५२ ॥ तस्मान्न मे चोद्वहनं कुरु त्वं तापास्पदं देहधियः कुसंगात् ॥ अखंडितात्मीयसुखांतकारि जन्मात्ययानेकपरंपरादम् ॥ ५३ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं कुमार्यात्मपरायणा सा निराकरोत्तौ पितरौ स्वकीयात् ॥ विवाहकृत्याच्च पिता ययौ स्वं गृहं हि तूष्णीं जननी स्थिताऽत्र ॥ ५४ ॥

॥ ४९ ॥ त्वत्प्रसादतोऽहमन्यदुर्जयमपि कामं वशीकृत्य ज्ञानप्रकाशबलेन बध्नामि यथा मौर्व्या गुणेन श्रेष्ठो वीरपुरुषो धनुरिति ॥ ५० ॥ आत्मपथस्थितायाः आत्माभ्यासपरायाः । यथा स्वकीयबहुवीरैः सह महारण्यमार्गगामिनां चोराद्भयं न भवति ॥ ५१ ॥ ननु कामावस्थामनारूढायास्तवैतद्भाषणं निरर्थकमिति चेत्तत्राह लघ्व्या इति । लघ्व्याः अल्पवयसः वाक्यं कामाद्भयं नास्तीत्यादि निजांतरे स्वमनसि । स्वरूपं कल्पितत्वेन मिथ्याभूतम् । कात्स्न्यात् साकल्येन ॥ ५२ ॥ जन्मात्ययानेकपरम्परादं जन्ममरणादिपरंपराप्रापकम् ॥ ५३ ॥ निराकरोत् निराकरणं कृतवती । अत्र मठे ॥ ५४ ॥

कैश्चिदब्दैः संवत्सरैर्गतैः सद्भिरित्यर्थः । निर्विषये आत्मनि विलीनं संविदं ज्ञानम् ॥ ५५ ॥ नाम कृतं आज्ञाशक्त्येति शेषः ॥ ५६ ॥ पंचाशीतिसंख्यं आज्ञाशक्त्यंबां प्रणमति—स्त्रीत्व इति । आत्मजायै मौर्विकायै इत्थं परमं रहस्यं उपदिश्य परं परमात्मानम् आप प्राप ॥५७॥ षडशीतिसंख्यं गुरुं मौर्विकांबां प्रणमति सेति । शिवादासाय रहस्यं पूर्णाभिषेकादिमंत्ररहस्यं या अदात्तं नताः स्मः ॥ ५८ ॥ मूर्तिमदादिगुरुत्रयकथाश्रवणादेः फलमाह य इति ।

गतेषु कालेषु कदाचिदाज्ञाशक्तिर्मनो निर्विषयात्मसंस्थम् ॥ ज्ञात्वा ददौ सर्वरहस्ययुक्तान्मनूंन्स्सुतायै विदमात्मनिष्ठाम् ॥५५॥ मौर्वीव चापं निबबंध कामं ततः कृतं नाम सहेतु तस्याः ॥ यन्मौर्विकाशक्तिरिति प्रसिद्धं कृत्यं सतां नाम समं हि नूनम् ॥ ५६ ॥ स्त्रीत्वे पि सिद्धैरभिसेविताज्ञाशक्त्यंबिकेत्थं परमं रहस्यम् ॥ दत्त्वात्मजायै परमाप पंचाशीतिं गुरुं तां प्रणताः स्म नित्यम् ॥ ५७ ॥ सा मौर्विकाशक्तिरथाखिलेषु सिद्धेषु वै पूज्यतमा बभूव ॥ दासाय दासात्परमं शिवायाः षडुत्तराशीतिगुरुं नताः स्मः ॥५८॥ यो वै त्रयाणां चरितं शृणोति पठेत्तथा मूर्तिमदादिकानाम् ॥ सत्कीर्तिमारोग्यमानंदितां चाऽथात्मस्वरूपं लभते स मर्त्यः ॥ ५९ ॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्द्धे मूर्तिमदादिगुरुत्रयवर्णनं नाम द्विचत्वारिंशः सर्गः ॥४२॥ श्रीदेशिकेंद्र उवाच ॥ शिवादासानंदनाथः शिवां कल्याणकारिणीम् ॥ अनेककोटिब्रह्मांडचैतन्यैकस्वरूपिणीम् ॥ १ ॥ संपूजयामास सदा स्वाभिन्नां परदेवताम् ॥ निर्धर्मस्य शिवस्यापि स्वविमर्शात्प्रकाशिनीम् ॥ २ ॥ इत्थं शिवार्चाऽभिरतो रहस्यं दत्त्वाभिनंदाय ययौ सुसिद्धिम् ॥ तं श्रीशिवादासगुरुं च सप्ताशीतिं प्रसन्नं सततं नताः स्मः ॥ ३ ॥ अभिनंदानंदनाथो योऽभूत्सर्वाभिनंदकः ॥ उद्विग्नोप्यतिदुःखेन श्रुत्वा यद्वाक्यमेव हि ॥ ४ ॥

सत्कीर्तिमारोग्यं च मूर्तिमत्कथायाः फलम् । शेषं सुगमम् ॥५९॥ इति श्रीमद्गुरुपरंपराचारित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां द्विचत्वारिंशः सर्गः ॥४२॥ त्रिचत्वारिंशके पंचपंचाशद्भिरनुत्तमैः । शिवादासाच्च चत्वारः प्रोक्ताः श्लोकैः कथानकैः ॥ ४३ ॥ शिवादासानंदनाथ इति उत्तरान्वयि ॥ १ ॥ धर्मरहितस्य परशिवस्य स्वविमर्शात् स्वस्फुरणेन प्रकाशिनीं प्रकाशनशीलाम् ॥ २ ॥ सप्ताशीतितमं शिवादासानंदं प्रणमति इत्थमिति ॥ ३ ॥ सर्वाभिनंदकः ।

सर्वानंदनः । उद्विग्न इत्याद्युत्तरान्वयि । यद्वाक्यम अभिनंदानंदवाक्यम् ॥ ४ ॥ पूर्वं दुःखम् । तृषार्तमिति सार्द्धद्वयश्लोकेनान्वयः ॥ ५ ॥ ६ ॥ यथान्यायात् यथार्थन्यायेन । स्वबोधतः दृष्टान्ते स्वकीयवृत्तान्तज्ञानेन प्रकृते आत्मज्ञानेन अभिनंदयतीत्यभिनंदकः ॥ ७ ॥ अष्टाशीतितममभिनंदानंद

भवत्यत्यंतसंतुष्टः पूर्वं विस्मृत्य चाखिलम्॥तृषार्तं जलदानेन क्षुधितं चान्नदानतः॥५॥रोगिणं चारोग्यदातुरौषधाद्ग्रहपीडितम्॥गृहशांत्या पिशाचादिबाधाढ्यं सिद्धमंत्रतः ॥ ६ ॥ कलहाढ्यौ यथान्यायात्रितापाढ्यं स्वबोधतः॥ सद्योभिनंदयत्येवातः स्मृतः सोऽभिनंदकः ॥ ७ ॥ इत्थं त्वनेकानभिनंद्य सर्वं धाराकदंबाय रहस्यमुक्त्वा ॥ सिद्धिं ययौ यो ह्यभिनंदमष्टाशीतिं प्रसन्नं गुरुमानताः स्मः ॥ ८ ॥ धाराकदंबानंदोपि सिद्धवर्योऽतिविश्रुतः ॥ अनेकसिद्धिसामर्थ्याद्ररक्ष शरणागतान् ॥ ९ ॥ श्रीमयूरेश्वर उवाच ॥ धाराकदंबानंदेति नामाश्चर्यकरं तु मे ॥ भाति तत्कारणं सर्वं कथ्यतां संशयापहम् ॥ १० ॥ श्रीदेशिकेंद्र उवाच ॥ धाराकदंबनामासीत्प्राक्छिवानंदसंज्ञकः ॥ पश्चात्प्राप्तमिदं नाम यथा तेन शृणुष्व तत् ॥ ११ ॥ स कदाचिच्छिवानंदो युक्तः शिष्यैरनेकशः ॥ राज्ञाऽऽदरेण चाहूतः केनचित्तत्पुरं ययौ ॥ १२ ॥ पूजितस्तेन रत्नाद्यैर्देवबुद्ध्यातिभक्तितः ॥ भोजितः परमान्नेन नित्यं मासं स्वकालये ॥१३॥ ततस्तस्य पुरात्सोयं शिष्यैः स्वीयं पुरं ययौ ॥ प्राप्तेतिभीष्मे ग्रीष्मर्तावुष्णसंततमार्गतः ॥१४॥ महागिरिं समुल्लंघ्य मध्याह्नेऽथ गिरेरधः ॥ प्राप्तः कृच्छ्राच्छिवानंदो नरवाहनमास्थितः ॥१५॥ तदा तृषार्दिताः सर्वे जाताः शिष्याश्च सेवकाः ॥ उष्णसंतप्तसर्वांगाः शुष्ककंठोष्ठतालुकाः ॥ १६ ॥ वने तस्मिन्महाघोरे पावकोपमभूतले ॥ शुष्कवृक्षेऽग्रतः पश्चादजले योजनावधि ॥ १७ ॥

नाथं प्रणमति इत्थमिति । तं नताः स्मः ॥ ८ ॥ ९ ॥ १० ॥ प्राक् पूर्वम् ॥ ११ ॥ अनेकशः अनेकैः ॥ १२ ॥ १३ ॥ स्थित्वेत्यादिसार्द्धान्वयः । अतिभीष्मेऽतिभयंकरे । उष्णप्रतप्तमार्गेण ॥ १४ ॥ नरवाहनं शिबिकामास्थितः ॥ १५ ॥ १६ ॥ वने इत्याद्युत्तरान्वयि ॥ १७ ॥

॥१८॥१९॥ तत्र कदंबच्छायायाम् ॥२०॥ असंकोचप्रसारणाः पतिताः बभूवुरिति पूर्वेणान्वयः ॥२१॥ यानतः शिबिकायाः। प्राप्तं मुमूर्षुत्वं मुमूर्षा यैः तानित्युत्तरान्वयि ॥ २२ ॥ अंतः मनसि अस्तुवत् तुष्टाव ॥ २३ ॥ हे विश्वजननि अमले विकाररहिते ब्रह्मांडस्वामिनि त्वं सर्वभुवने असि वर्तसे। व्यापिकायां त्वयि एतद्वनगतभक्तानामस्माकमुपेक्षणं नोचितमित्याह नेति। अत्र वने त्वं न स्थितासि किम्। यतः शिवनेत्रा त्रिनेत्रा ज्ञानदृष्टिमती त्वम् अमून् भक्तजनान् न पश्यसि। स्वागतावृत्तम् ॥ २४ ॥ ननु सर्वै रेतैः पूर्वजन्मकृतं शुभाशुभं भुज्यते न तदन्यथा कर्तुं मया शक्यत इति चेत्तत्तद्वासनारूपेण

जलाभिकांक्षिणः सर्वे नाग्रे गंतुं क्षमास्तदा ॥ कदंबवृक्षं ददृशुः सुच्छायं बहुविस्तरम् ॥ १८ ॥ शुष्केऽप्यखिलवृक्षौघे निबिडार्द्रसुपल्लवम् ॥ उत्तीर्य सर्वे यानेभ्यो वृक्षाधस्ताद्ययुर्द्रुतम् ॥ १९ ॥ प्रापितं तत्र यानं च देशिकस्याशु वाहकैः ॥ मिथोऽण्वप्यक्षमा वक्तुं पतितास्तत्र तेऽखिलाः ॥ २० ॥ व्यस्तहस्तांघ्रिशिरसस्त्वसंकोचप्रसारणाः ॥ मुमूर्षुसदृशाकाराः श्वासमात्रोपलक्षिताः ॥ २१ ॥ शिवानंदेन दृष्टास्ते बहिर्निर्गत्य यानतः ॥ सर्वान्प्राप्तमुमूर्षुत्वाञ्जलार्थं विकलेंद्रियान् ॥ २२ ॥ दृष्ट्वार्थांतः शिवानंदाश्रितयामास देवताम् ॥ जपन् श्रीभुवनेश्वर्या बीजं वाचाऽस्तुवच्च ताम् ॥ २३ ॥ श्रीशिवानंद उवाच ॥ विश्वमातरमले भुवनेशि व्यापिका त्वमखिले भुवनेऽसि ॥ न स्थिता किमधुनाऽसि वनेत्राऽमून्न पश्यसि यतः शिवनेत्रा ॥ २४ ॥ यत्कृतानि बहुजन्मभवानि प्रेक्ष्य तान्किमिह हंसि भवानि ॥ वासनैव शुभपापविधात्री सा त्वमेव जगतः खलु धात्री ॥ २५ ॥ स्युस्त्वयाखिलशुभाशुभभोगा धूलयो हि मरुतेव नभोगाः ॥ त्वं शुभाशुभकृतौ निजतंत्रा योजयस्यखिलकान्परतन्त्रान् ॥ २६ ॥

तत्तत्कर्मसु त्वमेव प्रवर्तकाऽसीत्याह। यत्कृतानीति। हे भवानि। यैरेतैः कृतानि बहुजन्मसु भवानि उत्पन्नानि कर्माणि प्रेक्ष्य दृष्ट्वा किं हंसि नाशयसि। यतः शुभाशुभकर्मकरणे न ते स्वतंत्राः किं तु वासनापरतंत्रा इत्याह—शुभाशुभकर्मणोर्विधायिका वासनैव भवति। जगतो वासनारूपिणी त्वमेव धात्री तत्तद्विषयार्पणेन पोषिकाऽसि ॥ २५ ॥ वासनारूपेण प्रवर्तकत्वात्त्वमेव स्वतंत्रासीत्याह स्युरिति। यथा धूलयः पांसवः मरुता वायुना निमित्तेन नभोगाः आकाशगता भवंति तथा त्वया वासनारूपिण्या निमित्तेन सर्वे पापपुण्यात्मकाः भोगाः विषयस्पर्शाः भवंति। अतस्त्वं सदसत्करणे निजतंत्रा स्वतंत्रा सती

अखिलगान् सर्वगतान् जीवान् सदसदाचरणे योजयसि ॥ २६ ॥ एतेषां स्वतंत्रत्वाभावात् तदुपरि कोपकरणं न योग्यमित्याह नेति । असुपराणां प्राणतर्पणमात्रपराणां नराणाम् इह लोके पापपुण्यकरणे पापपुण्याचरणविषये मंतुः अपराधो नास्ति । "आगोपराधो मंतुश्च" इत्यमरः।इत्थं अपराधाभावे सत्यपि इह एषु कोपयुक्ता भवसि । केव स्वांकिताकृतिमति स्वचिह्नितमूर्त्यादिमति पाषाणादौ धृतासिः धृतखड्गः पुरुषो यथा तथा । अरक्षणे न तव कोपकरणमेतेष्विति भावः ॥ २७ ॥ ननु निर्जलदेशे जलप्रदानेन कथं मया रक्षितव्यमिति चेदघटनघटनापटुत्वं तवातिप्रसिद्धमित्याह । अश्मेति । त्वं पाषाणमध्यगत

नैव मंतुरिह चास्ति नराणां पापपुण्यकरणेऽसुपराणाम् ॥ सत्यपीत्थमिह कोपयुतासि स्वांकिताकृतिमतीव धृतासिः ॥ २७ ॥
अश्ममध्यगकृमीनपि पासि किं जनं मम जलेन न पासि ॥ पश्य चाक्षिभिरमूंश्च हृदार्द्रा प्राक् त्वया कुरपि यैस्तु सदार्द्रा ॥ २८ ॥
श्रीदेशिकेंद्र उवाच ॥ इत्थं शिवानंदगुरुर्भवानीं यदाऽस्तुवत्पंचभिरेव पद्यैः ॥ तावत्सुतुष्टा भुवनेश्वरी सा ववर्ष तोयं सुकदंबवृक्षात्॥
॥ २९ ॥ तद्वृक्षशाखा परितस्ततोथ पेतुः क्षितौ शीतलतोयधाराः ॥ बभूवुरार्द्रास्तु ततोंशुकाद्यैः सर्वे समुत्तस्थुरथार्द्रितांगाः ॥३०॥
पपुश्च तोयं बहुशीतलं तत्कृत्वा कराभ्यामपि चांजलींस्ते ॥ संपाययामासुरदोऽश्वमुख्यान् भांडैरनेकैस्तु घृतं सदंभः ॥ ३१ ॥ धारा
भिरेताभिरुरुप्रवाहो ववौ नदीवद्धिततोऽणुदेशम् ॥ ज्ञात्वाखिलांस्तांश्च सुतोयतृप्तान् पपौ शिवानंदगुरुस्तदापः ॥३२॥ तदा द्रुमस्कं
धतलात्स्रवंत्यः स्युः खंडिताश्चामलतोयधाराः ॥ स्थितं धरासंचितवारिमात्रं पांथाः पपुश्चातपतः सुतप्ताः ॥ ३३ ॥

जीवानपि रक्षसि । एवं सति किमर्थं मम जनं जलेन उदकेन न रक्षसि । ननु पाषाणगतजीवरक्षणेऽल्पोदकं स्वेदादि पाषाणादुत्पाद्यते । अत्र बहूदकं कुत्र उत्पादनीयमिति चेदत्रापि हृदा मनसा कृपार्द्रा सती तैः स्वनेत्रैरमून् तृषार्तान्पश्य । यैर्नेत्रैः पूर्वं त्वया कुरपि पृथ्वी च सदार्द्रा कृता । शाकंभरीरूपेण दयार्द्रनेत्रेभ्यः उदकं विसृज्य शाकवृद्ध्या मुनीन् रक्षितवतीति कथा मार्कंडेयपुराणे ॥ २८ ॥ २९ ॥ अथेत्युत्तरान्वयि ॥ ३० ॥ अदः एतत् सदंभः निर्मलोदकम् ॥ ३१ ॥ नदीवत् नदीसदृशः । अणुदेशं क्रोशमात्रं । तदा काले अपो जलानि शिवानंदगुरुः पपौ ॥ ३२ ॥ निर्मलोदकधाराः । आतपतः

उष्णेन सुतप्ताः भवताः ॥ ३३ ॥ सिद्धिजवैभवं वृष्ट्यादिसिद्धिजन्यसामर्थ्यम् । आश्चर्यकरम् अस्य शिवानंदगुरोः । अखिलैर्गीतमुक्तं धाराकदंबेति अस्य नाम जातम् ॥ ३४ ॥ सर्वगतात्मज्ञानवान् । तं धाराकदंबानंदम् ॥ ३५ ॥ कदंबवृक्षाद्बहूदकधाराः प्रोहुः प्रकर्षेण वहंति स्मेतीयं सिद्धिः कस्मान्मंत्राज्जाता तं मंत्रं मह्यं कथय त्वमित्यध्याहारः ॥ ३६ ॥ ३७ ॥ ३८ ॥ परांबानिलयं परशक्तिस्थानं तंत्रविद्भिः स्मृतम् ॥ ३९ ॥ त्रिशतीस्तवे ब्रह्मां

इत्थं गुरोः सिद्धिजवैभवं तु दृष्टं यदाश्चर्यमथास्य शिष्यैः ॥ तदाप्रभृत्येव बभूव नाम धाराकदंबेत्यखिलैश्च गीतम् ॥३४॥ ततो ययौ स्वीयपुरं स्वशिष्यैर्धाराकदंबोऽखिलगात्मवेत्ता ॥ कदाचिदेकांतगतं तमाह शिष्यः प्रियः कश्चिदिदं तु वाक्यम् ॥ ३५ ॥ शिष्य उवाच ॥ कस्मान्मनोः सिद्धिरियं तु जाता कदंबवृक्षाद्बहुतोयधाराः ॥ प्रोहुस्तमेवाद्य वदस्व मंत्रं मह्यं स्वदासाय दयार्द्रचेताः ॥ ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ धाराकदंबानंदोसौ श्रुत्वेत्थं शिष्यभाषितम् ॥ ज्ञात्वाधिकारसंपन्नं तमाहानंदयन्वचः ॥ ३७ ॥ धाराकदंबानंद उवाच ॥ शृणु वक्ष्यामि ते वत्स मनोर्यस्य जपेन मे ॥ शीघ्रं सिद्धिप्रदा जाता प्रपन्ना भुवनेश्वरी ॥ ३८ ॥ बीजं यद्भुवनेश्वर्याः सर्वतंत्रेषु गोपितम् ॥ हृल्लेखाख्यं तंत्रविद्भिः परांबानिलयं स्मृतम् ॥३९॥ हृल्लेखानिलयेत्यस्या नामैव त्रिशतीस्तवे ॥ कीर्त्यतेऽतः सदा तस्मिन्संस्थिता भुवनेश्वरी॥४०॥ शीघ्रं तस्य जपात्सिद्धिर्भक्तिमद्भिस्तु लभ्यते ॥ अभक्तैर्युगसाहस्रैः सिद्धिलेशोपि नाप्यते ॥४१॥ यूयं यदाखिलास्तस्मिन्वने तृट्परिपीडिताः ॥ मुमूर्षुतुल्याः पतितास्तदा व्याकुलचेतसा ॥४२॥ माया बीजं तदैवैकं संजप्तं शतसंख्यया ॥ तेनैव तुष्टया देव्या जलधाराः कदंबतः ॥ ४३ ॥ निपात्य रक्षिताः सर्वे तृषार्ताः प्राणदानतः ॥ इत्युक्त्वा भुवनेश्वर्या बीजं भुवनसंज्ञकम् ॥ ४४ ॥ धाराकदंबानंदोऽस्मै ददौ मंत्रांस्तथाखिलान् ॥ भुवनानंदनामास्य चक्रे लोकेषु विश्रुतम् ॥ ॥४५॥ शिवोपि धारादिकदंबनामा दत्त्वा रहस्यं भुवनाभिधाय ॥ ययौ परां सिद्धिममुं गुरुं तं नवाधिकाशीतितमं नताः स्मः ॥४६॥

डपुराणस्थे कीर्त्यते वर्ण्यते भगवता हयग्रीवेणेति शेषः । तस्मिन्बीजे ॥ ४० ॥ नाप्यते न प्राप्यते ॥ ४१ ॥ तदेत्याद्युत्तरान्वयि ॥ ४२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४३ ॥ ४४ ॥ अस्मै शिष्याय ॥ ४५ ॥ एकोननवतितमं धाराकदंबानंदं प्रणमति । धारेत्यादिना ऊननवतितमम् ॥ ४६ ॥

॥४७॥ एतस्य मंत्रस्य जपं न त्यक्तवान् ॥ ४८ ॥४९॥ यद्यद्भवनं यस्य यस्य गृहमित्याद्युत्तरान्वयि ॥ ५० ॥ ५१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५२ ॥
॥ ५३ ॥ नवतितमं भुवनानंदं प्रणमति इत्थमिति ॥ ५४ ॥ शिवादासादिचतुर्गुरुकथाश्रवणादिफलमाह । शिवाया इत्यादि क्रमेण फलानि । यमनसभ

लब्ध्वापि भुवनानंदो गुरोः सर्वं रहस्यकम् ॥ भक्तिमान् भुवने बीजे जजापाहर्निशं च तत् ॥४७॥ गच्छंस्तिष्ठन्स्वपन्नश्नञ्छृण्वन्पश्यन्सु खासुखे ॥ भुंजंश्चात्मनि संतुष्टस्तत्याजैतज्जपं न सः ॥ ४८ ॥ इत्थं तद्बीजजपतः सिद्धत्वयौतिविश्रुतः ॥ बभूव भुवनानंदः शरणागत कार्यकृत् ॥ ४९ ॥ यद्यद्भवनमायाति भुवनानंददेशिकः ॥ कलहाढ्याश्च तद्गेहे त्यक्त्वा कलहमादितः ॥ ५० ॥ मिथश्चानंदयुक्तास्ते बभूवुर्यस्य दर्शनात् ॥ आनंदयति सर्वाणि भुवनानि निजेक्षणात् ॥५१॥ अतोसौ भुवनानंदः प्रख्यातः सर्वभूतले ॥ कलहो यत्र यत्रासी न्मिथः संबंधिनां गृहे ॥ ५२ ॥ धनाद्यर्थं तत्र नीत्वा बहुप्रार्थनया जनाः ॥ पुपूजुर्देवबुद्ध्या तं वस्त्रालंकरणादिभिः ॥ ५३ ॥ इत्थं हि सिद्धो भुवनाभिनंदो महेश्वराख्याय ददौ रहस्यम् ॥ ततः परां सिद्धिमवाप चैनं गुरुं नताः स्मो नवतेः प्रपूरकम् ॥ ५४ ॥ शिवा दासादीनां प्रपठति चतुर्णां हि चरितं पुमान्सद्भक्त्याढ्योऽखिलमपि निशम्याक्षयफलम् ॥ शिवायां भक्त्याढ्योऽखिलजनमनस्तो षजनकोऽखिलाद्दुःखान्मुक्तः स भवति सदैवात्मगतधीः ॥५५॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शिवादासादिचतुर्गुरुवर्णनं नाम त्रिचत्वा रिंशः सर्गः ॥ ४३ ॥ श्रीदेशिकेंद्र उवाच ॥ महेश्वरानंदनाथः श्रीविद्याचरितः सदा ॥ अभिन्नोपासनादाढ्यात्सिद्धमंत्रो बभूव सः ॥ ॥ १ ॥ ये ये प्रयोगास्तंत्रेषु मोहनस्तंभनादयः ॥ सिद्धास्ते चाखिलास्तस्य जाताः स्वोपासनाबलात् ॥ २ ॥ निर्घृणाः क्रूरकर्माणः परपीडाकरास्तु ये ॥ तांस्तान्स्वसिद्धिसामर्थ्याच्छास्त्यसावात्मवित्तमः ॥ ३ ॥ ररक्ष भक्तान् भयतः सदयः शरणागतान् ॥ किरातः कश्चिदुन्मत्तो गिरिदुर्गनिवासकृत् ॥ ४ ॥ धनुर्बाणधरः क्रूरः पांथवित्तापहारकः ॥ स्वकीयैर्बहुभिर्युक्तो गत्वा ग्रामाननेकशः ॥ ५ ॥

लागैः शिखरिणीवृत्तम् ॥ ५५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ चतुश्चत्वारिंशसर्गे चतुः
सप्तति पद्यतः । महेश्वराभयः प्रोक्ता गुरवस्तत्कथानकैः ॥ ४४ ॥ महेश्वरानंदनाथ इति ॥ १ ॥ २ ॥ शास्ति शिक्षयति ॥ ३ ॥ तस्य दुष्टशासनेन

शरणागतरक्षकत्वं दर्शयितुं कथामाह किरात इति । सार्द्धत्रयाणामन्वयः ॥ ४ ॥ ५ ॥ ६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ७ ॥ श्रुत्वेत्याद्युत्तरान्वयि ॥ ८ ॥ ९ ॥ गुरुं प्रोचुः । ग्रामवासिन इत्यपकर्षः । स च महेशानंदः । स्थेयं स्थातव्यम् । भवद्भिरिति शेषः ॥ १० ॥ तर्हि न भविष्यतीत्युत्तरार्द्धे ॥ ११ ॥

पौराणां तरसा हृत्वा सर्ववित्तांशुकादिकम् ॥ स्त्रियश्च दूषयामास बह्वीयास्तत्पुरे स्थिताः ॥ ६ ॥ तत्तद्राजभटैश्चापि न शक्यो जेतुमुद्धतः ॥ इत्थं स लुंठन् ग्रामान्वै दुर्जयः सबलैर्नृपैः ॥ ७ ॥ ययौ तन्नगरं यत्र महेशानंददेशिकः ॥ श्रुत्वा तं दुष्टमायांतं सर्वे तद्ग्रामवासिनः ॥ ८ ॥ भीताः स्त्रीबालसहिताः सर्वोपस्करसंयुताः ॥ मठं महेशानंदस्य ययुस्तद्वीर्यवेदिनः ॥ ९ ॥ गुरुं प्रोचुः किरातोऽत्रागतः कुर्मोऽत्र किं वयम् ॥ स चाह मास्तु भीतिर्वः सुखं स्थेयं मठे मम ॥ १० ॥ सस्त्रीबालैर्भवद्भिस्तु श्रद्धा चेद्वचनेऽस्ति मे ॥ भवतां न किराताद्भीः क्रूरात्कालसमादपि ॥ ११ ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्यैवं स्थितास्तत्र निर्भयाः पुरवासिनः ॥ गुरौ विश्वासयुक्तास्तेऽमरा इव बृहस्पतौ ॥ १२ ॥ अथो ग्रामे प्रविष्टोऽसौ किरातः क्रूरदृक् खलः ॥ ददर्शाखिलसद्मानि पुंस्त्रीबालोज्झितानि सः ॥ १३ ॥ निरुद्धानि कपाटाद्यैरनिरुद्धानि कानि चित् ॥ मध्योपस्करहीनानि स दृष्ट्वाऽचिंतयद्धृदि ॥ १४ ॥ गताः कुत्र जनाः सर्वे स्त्रीबालोपस्करैः सह ॥ रक्षकाः स्थापिताः पूर्वं मया ग्रामसमंततः ॥ १५ ॥ न क्षमास्ते बहिर्गंतुं मध्य एव क्वचित्स्थिताः ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं स चिंतयन् पश्यन् सदनान्यखिलानि च ॥ १६ ॥ मठं महेशानंदस्य ययौ पौरजनाकुलम् ॥ स्त्रीबालधनधान्याढ्यान्सर्वाञ्ज्ञात्वा महामठे ॥ १७ ॥ स प्राहेदं समीचीनमेकत्राखिलसंस्थितिः ॥ हरिष्येऽहमनायासादेकदैवाखिलं धनम् ॥ १८ ॥ इत्युक्त्वा स्वान्सुसंस्थाप्य मठबाह्ये समंततः ॥ बहुशस्त्रधरैः सार्द्धं प्रवेष्टुं मठमध्यतः ॥ १९ ॥ येतेऽथ स तदा पौराः कृत्वा तस्यारं दृढम् ॥ महेशानंदमित्याहुरनेनाद्य मठांततः ॥ २० ॥

॥ १२ ॥ पुरुषस्त्रीबालरहितानि ॥ १३ ॥ स किरातः ॥ १४ ॥ चिंतामेवाह गता इति सार्द्धेन ॥ १५ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १६ ॥ स्त्रीत्याद्युत्तरयुक् ॥ १७ ॥ १८ ॥ मध्यतः मध्ये ॥ १९ ॥ येत इति पूर्वान्वयि । येते यत्नं चकार । अररं कपाटम् । अनेन किरातेनेत्याद्युत्तरान्वयि ॥ २० ॥

तीक्ष्णकुठारैः ॥ २१ ॥ पादुकामंत्रं तंत्रेषु प्रसिद्धम् । मुद्रां पादुकामुद्रां गुरुकपालाभ्याम् ॥ २२ ॥ ततः पादुकावंदनानंतरम् । उत्तरार्द्धमुत्तरान्त्रयि । मार्तंडभैरवात् मार्तंडभैरवमन्त्रेण ॥ २३ ॥ देवताप्रत्ययज्ञानी देवताकृतकार्यज्ञानवान् ॥ २४ ॥ सर्वतः सर्वेभ्यः ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

प्रविश्यते कपाटं च भित्त्वा तीक्ष्णकुठारतः ॥ त्वत्परान्पाहि नः सर्वान्कस्त्राता त्वदृतेऽद्य नः ॥ २१ ॥ दृष्ट्वा महेशानंदोथ तान्किराताद्भयान्वितान् ॥ श्रीगुरोः पादुकामंत्रं कृत्वा मुद्रां जजाप सः ॥२२॥ ततो दुष्टान्महोग्रांश्च किरातांस्तंभयत्रुषा ॥ वाचं तु नकुलेश्वर्या दृशं मार्तंडभैरवात् ॥ २३ ॥ वाराह्यंगानि सर्वाणि किरातानां बबंध सः ॥ देवताप्रत्ययज्ञानी सर्वानाहाथ देशिकः ॥ २४ ॥ उद्घाटयतां कपाटानि सर्वतोऽद्य न भीस्तु वः ॥ स्तंभितेभ्यः किरातेभ्यो देवतामंत्रतो मया ॥२५॥ श्रीदेशिकेंद्र उवाच ॥ जना निशम्य विश्वस्ताः श्रीगुरोर्वाच उत्तमाः ॥ उद्घाटयामासुरमी कपाटान्यखिलानि च ॥२६॥ हृदि किंचिद्भयाढ्याश्च बहिर्निर्गत्य तन्मठात् ॥ किरातान्ददृशुः सर्वास्थितान्पुत्तलिकोपमान् ॥ २७ ॥ भीतवत्तत्समीपे च गत्वा सम्यग् दृशाखिलान् ॥ वाग्दृक्कराङ्घ्रिचलनैर्हीनांस्तान्ददृशुर्जनाः ॥ २८ ॥ नमयंतो धनुः केचिज्ज्यायोगार्थं क्वचित्स्थिताः ॥ योजयंतश्च धनुषि बाणान्केचित्स्थिताः परे ॥ २९ ॥ तूणसक्तकराश्चान्ये बाणनिष्कासनोद्यताः ॥ खड्गं विकोशं कुर्वंतस्तिर्यक्कृतकराः परे ॥ ३० ॥ इत्थं चानेकशस्त्राद्यास्तत्तत्ग्रहणोद्यताः ॥ स्थितास्तथैव कुड्यादौ चित्राणीव धरातले ॥ ३१ ॥ पौरास्तेथाभयाश्चक्रुः स्नानाशनमुखाः क्रियाः ॥ अथ यामे गते किंचिद्दिनशेषे दयान्वितः ॥३२॥ वाचं मुख्यकिरातस्य मोचयामास देशिकः ॥ गत्वा समीपं प्राहेत्थं स्तंभितांघ्रिकरं तु तम् ॥३३॥ महेशानंद उवाच ॥ किमर्थं त्वमिहायातः शस्त्रभृद्भिर्युतोऽखिलैः ॥ श्रीदेशिकेंद्र उवाच ॥ किरातोथ तमाहेत्थं मुक्तवाग्विनयान्वितः ॥३४॥

तानेवाह त्रिभिः । नमयंत इत्यादिभिः ॥ २९ ॥ ३० ॥ ३१ ॥ अथेत्याद्युत्तरबद्धम् ॥ ३२ ॥ ३३ ॥ नम्रतया । वचः ॥ ३४ ॥

अत्र ग्रामे ॥ ३५ ॥ ते कृपया निकेतनं स्वनिलयम् ॥३६॥३७॥ इत्थं दोषवान्यद्यपि तथापीत्युत्तरान्वयि ॥३८॥ सदृशी समीचीना ॥३९॥ अनं-
तमवाघस्यानेकजन्मकृतपापस्य ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ उत्तरार्द्धमुत्तरान्वयि । प्राप्तसद्बुद्धिम् ॥४६॥ शासनात् शिक्षा

किरात उवाच ॥ अज्ञात्वा तव सामर्थ्यमहं पौरधनादिकम् ॥ हर्तुं समागतोस्म्यत्र मूषकोऽहिबिले यथा ॥ ३५ ॥ त्वं समर्थोखिलं कर्तुं स्तंभनान्मोचयाशु माम् ॥ स्वीयैर्युतस्ततो यास्ये कृपया ते निकेतनम् ॥ ३६ ॥ कर्मेत्थं न करिष्येहं परपीडाकरं पुनः ॥ क्षमस्व मम दौर्जन्यं क्षमाशीला हि साधवः ॥ ३७ ॥ परवित्तापहारी च परदाराभिदूषकः ॥ इत्थं चानेकपापाढ्यस्तथाप्यद्य पुरातनैः ॥ ३८ ॥ पुण्यैर्जन्मसहस्रोत्थैर्जातं त्वत्पाददर्शनम् ॥ शिक्षा च सदृशी जाता मम पापापहारिणी ॥ ३९ ॥ यथानंततमोनाशो भवेदर्कोदयाद्द्रुतम् ॥ ममानंतभवाघस्य नाशस्त्वद्दर्शनात्तथा ॥ ४० ॥ विष्ण्वादिदर्शनात्साक्षादर्थकामान्वितं मनः ॥ सतां दर्शनतः सद्यो निष्कामं तद्भवेद्ध्रुवम् ॥ ४१ ॥ अतो देवात्परः साधुर्देवः कर्मफलप्रदः ॥ साधुस्तु कर्मसंहर्ता कथं साम्यं तयोर्भवेत् ॥ ४२ ॥ कष्टसाध्याच्च यज्ञादिकर्मणोल्पसुखागमः ॥ नैष्कर्म्यादक्षयं सौख्यं तस्मात्साधुसमागमात् ॥ ४३ ॥ अतो जन्मवतामाहुर्दुर्लभं सत्समागमम् ॥ येन धीर्विमला जाता सद्यो मे दुर्धियोप्यहो ॥ ४४ ॥ न तथानेकतीर्थेषु स्नानैः कृच्छ्रशतैरपि ॥ नातः परमथाकांक्षे किंचित्साधुसमागमात् ॥ ४५ ॥ भवेभवेपि मे भूयात्सतां संगः सदैव हि ॥ श्रीदेशिकेंद्र उवाच ॥ ज्ञात्वा महेशानंदोथ किरातं चाप्तसद्धियम् ॥ ४६ ॥ स्वकृताच्छासनात्सद्यो मोचयामास बंधनात् ॥ किराताश्चाखिलाश्चैवं त्यक्त्वा चौरधियं तदा ॥४७॥ नत्वा महेशानंदं च सद्धियः स्वगृहान्ययुः ॥ साधवस्तेखिलाश्चासन्सुधियः साधुशासनात् ॥४८॥ पौराः स्वस्वगृहान्प्राप्ताः स्त्रीबालोपस्करैर्मुदा ॥ साधूनां शासनं चापि सर्वाघौघहरं खलु ॥ ४९ ॥ शास्ताऽसतां चात्मविकासकर्तायस्त्र्यंबकायाखिलमाह तत्त्वम् ॥ सिद्धिं ययौ यस्तमिमं नताः स्मश्चैकाधिकाया नवतेः प्रपूरकम् ॥ ५० ॥

रूपात् । एवमित्याद्युत्तरान्वयि ॥ ४७ ॥ साधुशासनात् साधुकृतशिक्षणेन ॥ ४८ ॥ ४९ ॥ एकनवतितमं महेश्वरानंदं प्रणमति शास्तेति ॥ ५० ॥

भूतमतीतं वर्तमानं भविष्यं च वेत्तीति ॥ ५१ ॥ यं त्र्यंबकानंदम् ॥ ५२ ॥ ५३ ॥ ५४ ॥ द्विनवतितमं त्र्यंबकानंदं प्रणमति । त्रिकालविदिति । सर्वं मन्त्ररहस्यम् । द्विनवतितमम् ॥ ५५ ॥ जयगुप्तेत्यादिसार्द्धद्वयेऽस्यान्वयः ॥ ५६ ॥ ५७ ॥ ५८ ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि ॥

श्रीदेशिकेंद्र उवाच ॥ अथासीज्ज्ञानचक्षुष्मांस्त्र्यंबकानंददेशिकः ॥ स दैवात्मानुसंधानाद्भूतप्रस्तुतभाविवित् ॥ ५१ ॥ पप्रच्छुर्यं समागत्य महांतोपि नृपादयः ॥ भूतं स्वपूर्वजादीनां दूरस्थसुहृदां तथा ॥५२॥ वर्तमानं भविष्यं च स्त्रीपुत्रधनलाभदम् ॥ सर्वं संकथयत्येष तथ्यमेव त्रिकालजम् ॥५३॥ इत्थं त्रीण्यंबकान्यस्य त्रिकालज्ञानदानि च ॥ अतस्त्र्यंबकमित्याहुस्तं त्र्यक्षमपि साधवः ॥ ५४ ॥ त्रिकालवित्त्र्यंबकसंज्ञकोपि निधाय सर्वं जयगुप्तसंज्ञे ॥ ययौ परां सिद्धिममुं नताः स्मो द्वाभ्यां युताया नवतेः प्रपूरकम् ॥ ५५ ॥ जयगुप्तानंदनाथो विष्णुभक्तिपरायणः ॥ सर्वत्र व्यापकं विष्णुं पश्यंस्तत्पूजने रतः ॥५६॥ सदोच्चैर्विष्णुनामानि गृणन्प्रेमपरिप्लुतः ॥ विष्णुक्षेत्राणि यावंति धरायां तानि यत्नतः ॥५७॥ गत्वा चकार पूजादि तत्तन्मूर्तेः सुभक्तितः ॥ स चैकदाऽखिलैः शिष्यैरन्यैश्चापि युतो ययौ ॥ ॥ ५८ ॥ नारायणं द्रष्टुकामः ख्यातं बदरिकाश्रमम् ॥ हिमाद्रिर्दुर्गमो मार्गो यात्रिणः शिक्यसंस्थिताः ॥ ५९ ॥ व्रजंति यस्मिंस्तत्रत्यैरज्जुभिः कर्षिताः सदा ॥ शिक्यस्थो जयगुप्ताख्यो व्रजंस्तत्रापतत्त्वधः ॥ ६० ॥ अगाधेऽलकनंदायाः प्रवाहे शब्दपूरिते ॥ पतंश्चापि जगादोच्चैर्विष्णोर्नामानि भक्तितः ॥ ६१ ॥ जय केशव विश्वात्मञ्जय नारायणाच्युत ॥ जय लक्ष्मीपतेऽनंत जय गोविंद गोपते ॥ ६२ ॥ जयपूर्वाणि नामानि गृह्णतोऽस्यावने तदा ॥ विष्णुः संप्रेषयामास पार्षदप्रवरं जयम् ॥ ६३ ॥

॥५९॥ उत्तरार्द्धमुत्तरान्वयि । यस्मिन्मार्गे तत्रत्यैः आश्रमस्थैः ॥६०॥६१॥ ६२ ॥ अस्य जयगुप्तस्यावने रक्षणे विषये जयं जयनामानम् ॥ ६३ ॥

१ शिक्यं शक्यते पुरुषेण वोढुमिति शिक्यम् । मार्जारादिभीत्या यत्र सर्वगृहेषु दध्यादि स्थाप्यते तदित्यर्थः ।

तत अलकनंदायाः सर्वेषां सहगंतॄणां मध्ये अग्रे प्रथमम् ॥ ६४ ॥ तस्य जयगुप्तस्य । कृच्छ्रतः कष्टेन । ततोऽलकनंदातः ॥ ६५ ॥ स्वांते मनसि ॥ ६६ ॥ ६७ ॥ यदोच्चारितानि तदा जयः प्रेषित इत्यन्वयः ॥ ६८ ॥ श्रीवत्सकौस्तुभचिह्नरहितः ॥ ६९ ॥ तस्मात्पतनात् ॥ ७० ॥ ॥ ७१ ॥ ७२ ॥ त्रिनवतितमं जयगुप्तानंदं प्रणमति एवंप्रभाव इति । आद्यम् आदितः आगतं पूर्णाभिषेकादि ॥ ७३ ॥ महेशादिगुरुत्रयक

पतंतं तं गृहीत्वाथ निष्कास्य स तदा जयः ॥ प्रापयामास सर्वेषामग्रे नारायणांतिकम् ॥ ६४ ॥ न विदुस्तस्य शिष्यास्तु ते सर्वे कृच्छ्रतस्ततः ॥ यथुर्नारायणस्थानं ददृशुस्तत्र देशिकम् ॥६५॥ विस्मितास्तेऽखिलाः स्वांते अगाधे पतितस्त्वयम् ॥ प्रवाहेऽलकनंदायाः कथमत्रागतोऽधुना ॥६६॥ पप्रच्छुस्तं नताः सर्वे कथमस्माकमग्रतः ॥ आगतः पतितो यस्त्वमगाधे दुर्गमे स्थले ॥६७॥ स चाथाह यदाहं तु पतितो निर्गमे स्थले ॥ नामानि श्रीहरेरुच्चैरीरितानि मया तदा ॥६८॥ विष्णुना प्रेषितः साक्षाज्जयः पार्षदसत्तमः ॥ यथा विष्णुस्तथैवासौ श्रीवत्सांकविवर्जितः ॥ ६९ ॥ स मां तस्मात्समुद्धृत्याऽत्रैव नारायणांतिके ॥ प्रापयित्वा पश्यतो मेंतर्धानं स गतोऽधुना ॥ ७० ॥ निशम्य निखिलास्तुष्टा जयगुप्तेति तं जगुः ॥ कृत्वा यात्रां ततः प्रातः स्वपुरं देशिकस्तदा ॥ ७१॥ विष्णोः पार्षदमुख्येन जयेनाद्धाभिरक्षितः ॥ हेतुना तेन संप्राप्तो जयगुप्ताभिधां पराम् ॥७२॥ एवंप्रभावो जयगुप्तसंज्ञः सदाशिवायाह रहस्यमाद्यम् ॥ ययौ ततः सिद्धिमसुं त्रिनन्दसंख्यांतिमं तं गुरुमानताः स्मः ॥७३॥ यः कथामिह पठेच्च महेशाद्याशृणोत्यघहरां त्रिगुरूणाम् ॥ चोरतः खलु भवेद्धृतभीतिर्ज्ञानदृक् सुखयुतोऽखिलमार्गे ॥ ७४ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे महेशादिगुरुत्रयकथावर्णनं नाम चतुश्चत्वारिंशः सर्गः ॥४४॥ श्रीदेशिकेंद्र उवाच ॥ सदाशिवानंदनाथस्त्रीणि तत्त्वानि शोधयन् ॥ शिवतत्त्वे तुरीयेसावासीदानंदसंयुतः ॥ १ ॥

थाश्रवणादिफलमाह य इति । क्रमेण फलानि । चोरत इति ॥७४॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ सप्तत्या पद्यतः पंचचत्वारिंशे सदाशिवात् । चत्वारो देशिकाः प्रोक्तास्तत्तन्नामकथानकैः ॥ ४५ ॥ सदाशिवानंदनाथ इति । त्रीणि तत्त्वानि दृश्यादृश्यानि पंतृरूपाणि शोधयन् कल्पितत्वेन पश्यन् । तुरीयसंज्ञके शिवतत्त्वे आनंदयुक्तः परशिवानंदवानित्यर्थः “ शिवमद्वैतं चतुर्थं मन्यते ” इति श्रुतेः ॥ १ ॥

मोक्षेच्छावद्भिः प्रथमं महदादितत्त्वसमुदायो ज्ञातव्यः । द्वितीया प्राकृतिः कारणरूपा । तृतीयः पुरुषो नियंता तथा ज्ञेयः ॥२॥ तुरीयपदार्थमाह । यदिति।
भयात् देहाद्यनर्थात् । " द्वितीयाद्वै भयं भवति " इति श्रुतेः । अद्वितीयपरशिवचिंतनेन सुखदुःखरहित इत्यर्थः ॥ ३ ॥ ४ ॥ चतुर्नवतितमं सदाशिवा

ज्ञेयो मुमुक्षुभिस्तत्त्वसंघः प्रथमतोऽखिलः ॥ द्वितीया प्रकृतिर्ज्ञेया तृतीयः पुरुषस्तथा ॥ २ ॥ यन्निर्गुणमनंतं च ब्रह्माख्यं
ऽसुखं शिवम् ॥ तुरीयं तत्तु विज्ञेयं यज्ज्ञात्वा मुच्यते भयात् ॥ ३ ॥ ज्ञाते तस्मिञ्छिवे तत्त्वे ज्ञातव्यं नावशिष्यते ॥
तज्ज्ञानानंदशान्नित्यं सोतः प्रोक्तः सदाशिवः ॥ ४ ॥ सदाशिवानंदगुरुः प्रसिद्धः श्वेतांबरायाह परं रहस्यम् ॥ सिद्धिं परां प्राप ततो
ऽधिनंदप्रपूरकं तं गुरुमातनताः स्मः ॥ ५ ॥ श्वेतांबरः पूर्वमासीद्ब्राह्मणो वेदपारगः ॥ नर्मदाया उदग्भागे दूरं क्रोशत्रये स्थितः ॥
॥ ६ ॥ तिष्ठँल्लब्ध्वा गुरोः सर्वं चक्रे पूजाक्रमं ह्ययम् ॥ अभिन्नोपासनादार्ढ्यादात्मानुभवमंजसा ॥ ७ ॥ लब्ध्वाथ प्रियशिष्याय मनू
न्पूजाक्रमं तथा ॥ ददावसंगो देहादौ यतिवर्यो बभूव सः ॥ ८ ॥ दीक्षां परमहंसाख्यां बिभ्रंश्चात्मविदां वरः ॥ देहातीतमतिर्मौनी
भाषते न हि केनचित ॥ ९ ॥ धत्ते काषायवासांसि कदाचित्तु दिगंबरः ॥ विप्राऽन्नाशी कदाचित्तु सर्ववर्णाशनं क्वचित् ॥ १० ॥
विश्वमात्मनि संपश्यंश्चात्मानं विश्वसंस्थितम् ॥ चचारानंदयुक्तोऽसौ बालोन्मत्तपिशाचवत् ॥ ११ ॥ तस्यासन्बहवः शिष्याः सं
म्यग् भक्तिपरायणाः ॥ सर्वे गुरोः प्रभावज्ञाः पश्यंतो देववद्गुरुम् ॥१२॥ केनचिच्छिष्यवर्येण नीतः स्वगृहमंजसा ॥ पूजितः परया
भक्त्या यतिवर्यो दिगंबरः ॥ १३ ॥ स्नापयित्वा तमुष्णाभिरद्भिरभ्यंगपूर्वकम् ॥ परिधानं कारयित्वांशुकं श्वेतं महार्हकम् ॥ १४ ॥
शुभ्रं कंचुकमुष्णीषमुत्तरीयं तथापरम् ॥ समर्प्य गंधपुष्पाद्यैः पूजयित्वा च भक्तितः ॥ १५ ॥

नंदगुरुं प्रणमति । सदाशिवे ॥ ५ ॥ ६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ विश्वम् आत्मनि व्यतिरेकेणात्मानं विश्वस्मिन्नन्वयेन
संपश्यन् ॥ ११ ॥ १२ ॥ शिष्येण केनचित्पूजित इति संबंधः ॥ १३ ॥ स्नापयित्वेत्यादि । सार्द्धद्वयेनान्वयः ॥ १४ ॥ १५ ॥

उत्तरार्द्धमुत्तरान्वयि ॥१६॥१७॥१८॥ पापकरत्वमाहुः । सकंचुकमिति ॥ १९ ॥ उत्पथे परधर्मे ॥२० ॥ अस्य श्वेतांबरस्य । अयं यत्थाचरणरूपः ॥

भोजयित्वोत्तमान्नेन ददौ तांबूलचर्वणम् ॥ स्वतंत्रोथ गुरुस्तस्मादुत्थाय नगरेऽखिले॥१६॥बभ्राम श्वेतवस्त्राढ्यस्तांबूलांकितसन्मुखः॥ दृष्ट्वा तं जहसुः सर्वे निनिंदुश्च दुरुक्तिभिः ॥१७॥ जना ऊचुः ॥ यतिर्भूत्वापि धत्तेऽयमंशुकानि गृहस्थवत् ॥ यतिना यान्ययार्थाणि पश्यतां पापदानि च ॥१८॥ सकंचुकं यतिं दृष्ट्वा सचैलं स्नानमाचरेत् ॥ इत्यादिका हि बहवः संति मन्वादिकोक्तयः॥१९॥न योग्योयं किलास्माभिर्द्रष्टुमप्युत्पथस्थितः ॥ नित्यं दृक्पथगोऽस्माकं कथं कार्यं बताधुना ॥२०॥ श्रीदेशिकेंद्र उवाच ॥ इति निंदां जनाश्चक्रुर प्रभावविदोऽस्य तु ॥ गत्वोचुर्नृपतिं केचिदन्यायोऽयमिति स्फुटम् ॥ २१ ॥ राज्ञा निवार्यतामित्थमुत्पथस्थस्तु यत्नतः ॥ यो यते श्चापि कुरुते ह्यधार्यांशुकधारणम् ॥ २२ ॥ द्रष्टुं न योग्यः सोस्माभिर्नित्यं दृक्पथगस्तु नः ॥ वयं तद्वारणेऽशक्तास्तच्छिष्या हि घनान्विताः ॥ २३ ॥ अतस्तद्वारणं कार्यं त्वया राजन्यथा पुनः ॥ तद्दर्शनं स्यान्नास्माकं श्रेयोहानिर्यतो भवेत् ॥ २४ ॥ इत्थं पौरवचः श्रुत्वा राजा क्रोधसमन्वितः ॥ यतेः शिष्यान् समाहूय तानेतानाह भर्त्सयन् ॥ २५ ॥ नृप उवाच ॥ गुरुः कथं हि भवता मनाचाररतः सदा ॥ अधार्यं धार्यते वस्त्रमभक्ष्यं भक्ष्यतेऽमुना ॥ २६ ॥ दर्शनार्हो न पौराणामतः शीघ्रं पुराद्बहिः ॥ यथा यास्यति युष्माभिस्तथा गत्वा स चोच्यताम् ॥ २७ ॥ श्रीदेशिकेंद्र उवाच ॥ इति राज्ञो वचः श्रुत्वा गत्वा शिष्याः स्वसद्गुरुम् ॥ प्रोचुः प्रांजलयः सर्वे प्रणम्य च मुहुर्मुहुः ॥ २८ ॥ भगवन् ग्रामगाः सर्वे निंदंति त्वां जनाः सदा ॥ अतस्तदृक्पथे स्थेयं न क्षणं च त्वयात्र हि ॥ २९ ॥ इति शिष्यवचः श्रुत्वा गुरुः शीघ्रं तदैव हि ॥ ययौ तन्नगराद्दूरं क्रोशत्रयमसौ यतिः ॥ ३० ॥ नर्मदायास्तटे तत्र चैकाकी विचरन्त्सुखी ॥ न खिन्नः पौरदुर्वाक्यैः सदात्मानंदसंप्लुतः ॥ ३१ ॥

॥ २१ ॥ २२ ॥ २३ ॥ यतोस्माकं पुण्यनाशस्ततस्तस्य दर्शनं पुनः यथा न भविष्यति तथा त्वया कार्यमित्यन्वयः ॥ २४ ॥ २५ ॥ अमुना युष्मद्गुरुणा ॥ २६ ॥ पौराणां कर्तरि षष्ठी पौरैः ॥ २७ ॥ २८ ॥ अत्र नगरे ॥ २९ ॥ ३० ॥ ३१ ॥

स्थाने स्वस्वगृहे रुयादिमोहवशंगताः । स्त्रीपुत्रादीनां मोहेनाकर्षिताः ॥३२॥ कश्चित्प्रियशिष्यः ॥३३॥३४॥ स्वयं च तदन्नमित्युत्तरान्वयि ॥३५॥ तेन गुरुणा महान् प्रसिद्धो जातः॥३६॥नर्मदोत्तरततटे पूर्वार्द्धे पूर्वान्वयि॥३७॥उत्तरार्द्धमुत्तरान्वयि ॥३८॥ तत्र नर्मदातीरे॥३९॥४०॥ गुरुतोषिणे गुरोस्तो

शिष्याः सर्वेऽथ नगराद्गतं ज्ञात्वा निजं गुरुम् ॥ खिन्नचित्ताः स्थिताः स्थाने रुयादिमोहवशंगताः ॥ ३२ ॥ तदैकः प्रियशिष्यस्तु स्त्रीपुत्रधनगेहजम् ॥ मोहपाशं विनिर्भिद्य तीव्रभक्त्या गुरुं ययौ ॥ ३३ ॥ नर्मदायास्तटे कृत्वाऽस्यल्पां तृणमयीं कुटीम् ॥ स्थापयित्वा गुरुं तस्यां सेवां चक्रेऽखिलां स्वयम् ॥ ३४ ॥ खेटेखेटे धान्यपिष्टं याचित्वा च प्रयत्नतः ॥ पक्त्वांगारेषु गुरवे ददौ भक्त्या स्वयं च तत् ॥ ३५ ॥ तेनाज्ञप्तस्तु बुभुजे सदा सेवापरायणः ॥ ख्यातः श्वेतांबरानंदः पृथ्व्यां जातस्ततो महान् ॥ ३६ ॥ सच्छिष्येण युतस्तिष्ठन्नर्मदोदक्तटस्थले ॥ सदा सेवारतः शिष्यो न सस्मार स्त्रियं सुतान् ॥३७॥ सेवयाऽव्यभिचारिण्या तोषयामास सद्गुरुम्॥ संतुष्टेऽथ गुरौ सर्वदेवरूपिणि सेवया ॥३८॥ संतुष्टाश्चाखिलास्तस्य देवा इंद्रपुरोगमाः ॥ तत्रैकदा ययुः सर्वे निशीथेऽथ दिवौकसः॥ ॥ ३९ ॥ शिष्यं प्रोचुर्वयं तुष्टास्त्वत्सेवातिशयाद्गुरौ ॥ वरं वृणीष्व भद्रं ते यस्ते मनसि वर्तते ॥ ४०॥ दुर्लभं चापि दास्यामो नादेयं गुरुतोषिणे ॥ गुरुभक्तस्य वांछामो वयं दास्यं सदाखिलाः ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्य देवतावाक्यं शिष्यस्तानाह सांजलिः ॥ शिष्य उवाच ॥ गुरुसेवां विना नान्यद्वर्तते मम चेतसि ॥४२॥ तस्माद्येन गुरोः सेवा स्यात्सांगा यत्प्रदीयताम् ॥ इति शिष्यवचः श्रुत्वा तथेत्युक्त्वा दिवौकसः॥४३॥ अंतर्धानं ययुः सर्वे गुरुभक्तिं समीक्ष्य ताम् ॥ प्रातश्चाथ ययुस्तत्र धनिनो मार्गतोंऽजसा ॥४४॥

षणशीलाय । तोष आनन्दः ॥ ४१ ॥४२॥ येन धनाद्यैश्वर्येण । उत्तरार्द्धमुत्तरान्वयि ॥४३॥ सर्वे देवाः । मार्गतो मार्गेण । गामिन इति शेष. ॥४४॥

प्रोचुः धनवंत इति पूर्वानुवृत्तिः । यतस्तेजस्वी ॥ ४५ ॥ निश्चयेनेत्याद्युत्तरान्वयि ॥ ४६ ॥ ४७ ॥ ४८ ॥ ददुरित्यनुवृत्तिः ॥ ४९ ॥
॥ ५० ॥ तं शिष्यम् । उत्तरार्द्धमुत्तरान्वयि ॥ ५१ ॥ निःशंकं यथास्यात्तथा ॥५२॥ तुष्ट इत्याद्युत्तरान्वयि ॥ ५३ ॥ तदिदं शब्दौ शिष्यवाचिनौ ।

दृष्ट्वा श्वेतांबरं सिद्धं शिष्यं चाखंडसेविनम् ॥ मिथः प्रोचुरयं साक्षाद्देवस्तेजोऽधिको यतः ॥४५॥ शिष्योऽपि देववत्सेवां कुरुतेऽस्य ततो वयम् ॥ सेवां कुर्मो यथाशक्ति निश्चयेनेति तेऽखिलाः ॥ ४६ ॥ प्राकारं शिल्पकारैस्ते चक्रुरत्यंतविस्तृतम् ॥ चतुर्दिक्षु पृथक् शालाः केचिच्चक्रुः सुशोभनाः ॥ ४७ ॥ केचिद्धनानि धान्यानि तत्रानीय ददुः स्वयम् ॥ गाः केचिन्महिषीः केचिद्दासान्दासीः परे जनाः ॥ ॥ ४८ ॥ भांडानि धातुजान्यन्ये द्रव्याणि सुरभीणि च ॥ वासांस्यास्तरणान्यन्ये मंचाद्योपस्कराणि च ॥ ४९ ॥ गुरुसेवोपयोग्यानि दृष्ट्वा सर्वाणि चेतसि ॥ तुष्टः शिष्यो बभूवासौ गुरुसेवारतः सदा ॥ ५० ॥ पुनरेत्याथ ते देवास्तमूचुः प्रांजलिस्थिताः ॥ गुरोः सेवासाधनेषु यद्यन्न्यूनं द्विजोत्तम ॥ ५१ ॥ दास्यामस्तत्तदखिलं ब्रूहि निःशंकमेव नः ॥ सर्वांश्च गुरुभक्तस्य दासान्विद्धि तवामरान् ॥ ५२ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमेत्य सदा देवास्तं प्रोचुः सेवका इव ॥ तुष्टो गुरुश्च तद्भक्त्या देवाञ्ज्ञात्वास्य किंकरान् ॥ ५३ ॥ सर्वमंत्रमयीं दीक्षां ददौ तस्मै विधानतः ॥ देवदाससुखं चेति नामाप्यस्य चकार सः ॥ ५४ ॥ अथ श्वेतांबरानंदस्त्वासीद्यन्नगरे पुरा ॥ तत्रत्यो नृपतिः श्रुत्वा सिद्धिं तस्य यतेः पराम् ॥ ५५ ॥ स्वर्गस्था यस्य शिष्यस्य दासाः सर्वेऽमरा इति ॥ पश्चात्तापेन संतप्तश्चात्मानमतिगर्हयन् ॥ ५६ ॥ आत्मन्याह ततश्चेत्थं दुर्गासेनो नृपोत्तमः ॥ जनवाक्यैर्मया व्यर्थं निंदितोऽसौ यतीश्वरः ॥ ५७ ॥ अज्ञात्वा तस्य सामर्थ्यं कस्तूरीवाज्ञवाक्यतः ॥ बहुधैवं नृपः प्रोक्त्वा स्वसुताय तदाऽखिलम् ॥ ५८ ॥

॥ ५४ ॥ तत्रत्यस्तन्नगरस्थः । अमरा दासा इति सिद्धिं श्रुत्वा आत्मनि मनसि आहेत्यन्वयः ॥ ५५ ॥ ५६ ॥ ५७ ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धं

मुत्तरान्वयि ॥ ५८ ॥ ५९ ॥ अथेत्यादेः प्राहेति क्रिययान्वयः ॥ ६० ॥ अत्र मत्तिरस्कारे । यतः कारणादात्मनः अंशरूपेण उत्पन्ना इत्युत्तरान्वयि ॥ ६१ ॥ ६२ ॥ ६३ ॥ श्रुत्वेत्याद्युत्तरान्वयि ॥ ६४ ॥ ६५ ॥ राजा क्षत्रियोऽपि सन् सिद्धैर्वंदितः ॥ ६६ ॥ पंचनवतितमं श्वेतांबरानंदं प्रणमति

दत्त्वा राज्यं ययौ तत्र यत्र श्वेतांबरोऽवसत् ॥ ननाम दंडवद्भूमौ तं यतिं लज्जितो नृपः ॥५९॥ उत्थाय प्रांजलिः स्थित्वा नोवाचाधोमुखोऽण्वपि ॥ अथ ज्ञात्वाऽस्य हृदयं योगी श्वेतांबरः स्वयम् ॥ ६० ॥ दयालुर्नृपतिं प्राह स्तुतिनिंदासमांतरः ॥ राजन्नात्रापराधस्ते यतश्चात्मांशसंभवाः ॥ ६१ ॥ वयं सर्वेपि कः कस्य निंदकः स्तावकोऽत्र हि ॥ समुद्रस्य यथा भंगा मिथः संमर्दयंति च ॥ ॥ ६२ ॥ तत्र कस्यापराधस्तु कृतः केनेति चोच्यताम् ॥ श्रीदेशिकेंद्र उवाच ॥ इत्यादिबहुशः प्रोक्ता देवदासमथाब्रवीत् ॥ ६३ ॥ वत्सानुग्रहमस्मिंस्त्वं कुरुष्व शरणागते ॥ निशम्य देवदासोपि राज्ञे देशिकशासनात् ॥ ६४ ॥ सर्वमंत्रमयीं दीक्षां ददौ तस्मै विधानतः ॥ ज्ञानं क्रमेण योगं च ददौ सर्वं कृपान्वितः ॥ ६५ ॥ दुर्गासेनोखिलं प्राप्य सिद्धवर्यो बभूव सः ॥ राजापि वंदितः सिद्धै र्गुरुवर्यकृपाबलात् ॥ ६६ ॥ श्वेतांबरोभूदिति सिद्धवर्यो यच्छिष्यदासास्त्वखिलाः सुराश्च ॥ तं सिद्धवर्यं वयमानताः स्मः पञ्चाधिकाया नवतेस्तु पूरकम् ॥६७॥ यो देवदासो गुरुभक्तवर्यो देवांश्च चक्रे गुरुभक्तिदाढ्यात् ॥ दासान्वयं षण्णवतेस्तु पूरकं सर्वज्ञमेनं गुरुमानताः स्मः ॥ ६८ ॥ त्यक्त्वेंद्रतुल्यं निजराज्यमंतर्वैराग्ययुक्तः शरणं ययौ यः ॥ सप्ताधिकाया नवतेः प्रपूरकं दुर्गाख्यसेनं गुरुमानताः स्मः ॥ ६९ ॥ सकलं चतुर्गुरूणां सदाशिवाख्याच्छृणोति सच्चरितम् ॥ प्रपठेद्वा पापौघान्मुक्तो यास्यत्यखंडसुखधाम ॥ ॥ ७० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे सदाशिवादिचतुर्गुरुवर्णनं नाम पंचचत्वारिंशः सर्गः ॥ ४५ ॥

श्वेतांबर इति ॥६७॥ षण्णवतितमं देवदासानंदं प्रणमति य इति॥६८॥सप्तनवतितमं दुर्गासेनानंदं प्रणमति त्यक्त्वेति ॥६९॥ सदाशिवानंदादिचतुर्गुरूणां चरित्रश्रवणादिफलमाह सकलमिति । गीतिः ॥ ७० ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचचत्वारिंशः सर्गः ॥ ४५ ॥

षट्चत्वारिंशत्सर्गेष्टषट्पद्यैः पाणिनिः सुवित् । सिद्धः कपिलरुद्रश्च निश्चयीशंकुकः स्मृतः ॥४६॥पाणिन्यानंदेति ॥१॥ य इति । सार्द्धान्वयः । शब्दशास्त्रसूत्राणाम् अष्टाध्यायीस्थानाम् ॥ २ ॥ उत्तरार्द्धमुत्तरान्वयि । असौ पाणिनिः ॥ ३ ॥ श्रुतीः वेदान् शास्त्राणि न्यायादीनि वेदांगानि शिक्षादीनि ॥४॥ साधनेनेत्युत्तरान्वयि ॥ ५ ॥ तत् साधनम् एतत् कीर्त्याख्यम् ॥ ६ ॥ मंत्रात् मंत्रेण । तल्लाभो मंत्रलाभः । सः गुरुः । मयेति शेषः ॥७॥ सर्वतंत्ररहस्य



श्रीदेशिकेंद्र उवाच ॥ पाणिन्यानंदनामासीत्सर्वशास्त्रविशारदः ॥ दुर्गासेनस्य यः शिष्यः शब्दशास्त्रविशेषवित् ॥ १ ॥ यः शब्दशास्त्रसूत्राणां कर्ताभूत्पाणिनिर्मुनिः ॥ स एव स्वीयसूत्राणां सम्यगर्थं प्रकाशितुम् ॥२॥ अवतीर्णो धरापृष्ठे ज्ञात्वाऽज्ञान् सकलान् द्विजान् ॥ कस्यचिद्द्विजमुख्यस्य पुत्रोऽसौ पंचहायनः ॥३॥ पित्रोपनीतः प्रापाथ सकृदुच्चारणाच्छ्रुतीः ॥ तथा शास्त्राणि सर्वाणि वेदांगानि च कृत्स्नशः॥४॥ लब्ध्वापि सम्यग् लोकेस्मिन्न प्रकाशो यदाभवत् ॥ चिंतयामास चित्तेऽसौ साधनेनाथ केन मे ॥५॥ लोके स्यादतुला कीर्तिरिति पृच्छामि कं पुनः ॥ देवतायाः प्रसादेन कार्यं चैतद्भविष्यति ॥६॥ स च तद्देवतामंत्रात्तल्लाभस्तु गुरोर्भवेत् ॥ तस्मात्स एव द्रष्टव्यो मंत्रविद्देवतार्चकः ॥ ७ ॥ इत्थं संचिंत्य चित्तेऽसौ शोधयामास भूतलम् ॥ सर्वमंत्ररहस्यज्ञः पृच्छन् कोस्तीति सर्वतः ॥ ८ ॥ दुर्गासेनमठं प्राप्तः कस्यचिद्वचनात्तु सः ॥ ददर्श मंत्रवेत्तारं पूजयंतं तु देवताम् ॥ ९ ॥ भासमानं तपःकांत्या साक्षात्सूर्यमिवापरम् ॥ तं दृष्ट्वा पाणिनिः प्रीतश्चित्ते कांत्यायमुज्ज्वलः ॥ १० ॥ श्रीदेव्याश्च प्रसादेन युक्तोऽसौ भाति मे हृदि ॥ प्रार्थनीयोऽयमेवाद्य महामंत्रोपदेशने ॥ ११ ॥ नानेन सदृशस्त्वन्यो मया दृष्टो धरातले ॥ इति संचिंत्य मनसा दुर्गासेनं ननाम सः ॥ १२ ॥ प्रार्थयामास दीक्षार्थमशेषमनुवेदिनम् ॥ दयायुक्तो गुरुर्ज्ञात्वा पाणिनिं चाधिकारिणम् ॥ १३ ॥

वित् कः पुरुषोस्तीति सर्वतः सर्वान्पृच्छन् दुर्गासेनमठं प्राप्त इति द्वयोरन्वयः ॥ ८॥ ९ ॥ चित्ते मनसि प्रीतः । कांत्याऽयमुज्ज्वल इत्युत्तरान्वयि ॥१०॥ महामंत्राणामुपदेशने उपदेशविषये मया प्रार्थनीय इत्यर्थः ॥११॥ अनेन गुरुणा ॥१२॥ मंत्राणां दीक्षार्थमुपदेशार्थम् । दयायुक्तेत्याद्युत्तरान्वयि ॥ १३॥

॥१४॥असौ पाणिनिः पूर्वसूत्रतः प्राचीनसूत्रैः ॥१५॥ अयं पाणिनिरेवावतीर्णः ततोस्य पाणिन्यानंद इति नाम बुधाः चक्रुः तथा गुरुश्च चक्रे ॥ १६॥ अष्टनवतितमं पाणिन्यानंदं प्रणमति य इति । कपिलरुद्रं प्रति रहस्यं मंत्रजातमुक्त्वा सिद्धिं ययौ तं नताः स्मः ॥ १७ ॥ स्वकीयसिद्धिप्रापकाः बभूवुरित्यु

महामंत्रान्ददौ सर्वांस्तस्मै दीक्षाविधानतः ॥ ज्ञानयोगौ क्रमेणाथ लब्ध्वा सर्वं रहस्यकम् ॥१४॥ बभूव सिद्धवर्योऽसौ देवतोपासना बलात् ॥ चक्रे व्याकरणं शास्त्रं प्रसिद्धं पूर्वसूत्रतः ॥ १५ ॥ साक्षात्पाणिनिरेवायमवतीर्णो धरातले ॥ पाणिन्यानंदनामास्य गुरुश्चक्रे बुधास्तथा ॥ १६ ॥ यः शब्दशास्त्राखिलतत्त्ववेत्ता रहस्यमुक्त्वा कपिलाख्यरुद्रम् ॥ सिद्धिं ययौ पाणिनिमानताः स्मो गजाङ्कसंख्यापरिपूरकं गुरुम् ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ आसीत्कपिलरुद्राख्यः सिद्धवर्योऽतिविश्रुतः ॥ यस्याणिमाद्याः सकलाः सिद्धयः स्वस्वसिद्धिदाः ॥ १८ ॥ मनसापि महद्भिर्यत्कर्तुं न स्मर्यते क्वचित् ॥ स्मृतिमात्रेण तत्कर्म चक्रे कपिलरुद्रकः ॥ १९ ॥ वहंत्यस्य जनाः सर्वे भयं सिद्धिसमुद्भवम् ॥ यः क्रुद्धः स्तंभयत्याशु प्रवाहं सरितामपि ॥ २० ॥ इत्थं सिद्धिप्रभावोऽसौ प्रसिद्धः सर्वभूतले ॥ अवसन्नर्मदातीरे शिष्यसंघसमावृत्तः ॥ २१ ॥ सर्वमंत्ररहस्यज्ञः सर्वसाधनतत्त्ववित् ॥ अभिन्नोपासको देव्याः परांबेवौजसोज्ज्वलन् ॥ ॥ २२ ॥ यथा कापिलरुद्रेति ख्यातं नामास्य भूतले ॥ तथैव चरितं तस्य शृणुष्वानघ सिद्धिजम् ॥ २३ ॥ कदाचिद्वार्षिके काले मासि भाद्रपदाभिधे ॥ कपिलाख्यः पर्वकालो ययौ बह्वब्ददुर्लभः ॥ २४ ॥ भाद्रे मास्यसिते पक्षे रोहिणीभौमसंयुते ॥ व्यतीपातान्विता षष्ठी सा बुधैः कपिला स्मृता ॥ २५ ॥ इत्थं सुदुर्लभं योगं ज्ञात्वा श्रद्धालवो जनाः ॥ क्षेत्रराजं प्रयागाख्यं कोटिशः प्रययुर्मुदा ॥ २६ ॥ ययौ कपिलरुद्रश्च सर्वांतेवासिभिर्युतः ॥ आत्मवान् सिद्धवर्योऽपि स कुर्वँल्लोकसंग्रहम् ॥ २७ ॥

त्तरार्द्धे ॥ १८ ॥ १९ ॥ २० ॥ प्रसिद्धोऽभवत् ॥ २१ ॥ परांबेव परशक्तिरिव तेजसा ज्वलन् प्रदीप्त इति पूर्वेणान्वेति ॥ २२ ॥ २३ ॥ तदेवाह कदाचिदित्यादिभिः । बह्वब्ददुर्लभः बहुवर्षलभ्यत्वाद्दुष्प्राप्यः ॥ २४ ॥ तल्लक्षणवाक्यं संग्राहयति । भाद्र इति ॥२५॥२६॥ शिष्ययुक्तः कपिलरुद्रश्च

ययौ। लोकसंग्रहं लोकशिक्षाम् ॥२७॥ व्रजंत इत्युत्तरान्वयि। पर्वकालाप्तये पर्वकाललाभाय॥२८॥शीघ्रगमनेन खिन्नाः। शेषोऽवशिष्टो यामः प्रहरो यस्य तस्मिन् सति। तैः यात्रिकैः ॥ २९ ॥ तुंगभंगतः उच्चतरंगैर्हेतुभिः नाविकाः बृहन्नौकाभिरपि यस्याः यमुनायाः परतीरं यात्रास्थान् यात्रार्थं स्थितान् प्रति नेतुं न समर्थाः आसुरित्यर्थः ॥ ३० ॥ तुंगाः उच्चगामिनः। पूर्वार्द्धे आसीदित्यध्याहारः ॥ ३१ ॥ ३२ ॥ ३३ ॥ अतिशयेन पंको यस्मिंस्तेन

व्रजंतो यात्रिणः सर्वे पर्वकालाप्तये द्रुतम् ॥ नभस्यकृष्णपंचम्यां यमुनादक्षिणे तटे ॥ २८ ॥ ययुः शीघ्रगतिश्रांताः शेषयामे दिनेऽखिलाः ॥ तैर्दृष्टा यमुनात्यंतजलकल्लोलवर्द्धिनी ॥ २९ ॥ नौकाभिरपि तुंगाभिः कूलं नेतुं परं ततः ॥ यात्रास्थान्न क्षमाः सर्वे नाविकास्तुंगभंगतः ॥ ३० ॥ तुंगाः सिंधोर्यथा भंगास्तथाऽस्याः पर्वतोपमाः ॥ चंचलाः पश्यतां दृष्टिर्न यान्द्रष्टुमपि क्षमा ॥ ३१ ॥ श्रीदेशिकेंद्र उवाच ॥ दृष्ट्वा ते यात्रिणः सर्वे यमुनां खिन्नमानसाः ॥ ऊचुः परस्परं तत्र प्रयागं गंतुमुत्सुकाः ॥ ३२ ॥ यात्रिण ऊचुः ॥ वयं बतेह संप्राप्ताः स्वस्वदेशात्सुदूरतः ॥ ज्ञात्वातिदुर्लभं पर्व कपिलाषष्ठिसंज्ञकम् ॥३३॥श्रांताः पथातिपंकेन वृष्ट्याद्रांगाश्च सर्वदा॥ कस्मिंश्चिद्दिवसेऽशक्ताः पाकं कर्तुमुपोषिताः ॥ ३४ ॥ भुक्त्वाल्पान्पृथुकान् सर्वे स्थिताश्चार्द्रेंधनादितः ॥ श्रमं बह्वनुभूयापि पर्वण्यस्मिन्सुदुर्लभे ॥ ३५ ॥ सितासितोभयोर्नद्योः संगमे श्रुतिवर्णिते ॥ स्नानं चेन्न भवेन्नोऽद्य देहत्यागस्ततः परः ॥ ३६ ॥ इत्याभाष्य मिथः सर्वे यात्रिणोऽत्यंतदुःखिताः ॥ महाकोलाहलं चक्रुश्चैकैवाखिलाः स्थिताः ॥ ३७ ॥ श्रुत्वा कोलाहलं तेषां नादयंतं दिशो दश ॥ सिद्धः कपिलरुद्राख्यः सर्वेषामग्रतो ययौ ॥ ३८ ॥

मार्गेण श्रांताः ततः पाकं कर्तुमशक्ताः वयमुपोषिताः स्थिताः इत्युत्तरान्वयि ॥ ३४ ॥ आर्द्रेंधनादितः आर्द्रेंधनादिभिः पाकं कर्तुमिति योज्यम्। उत्तरार्द्धमुत्तरान्वयि ॥ ३५ ॥ सिता भागीरथी असिता यमुना तयोरुभयोर्नद्योः। ततः कारणाद्देहत्यागः परः श्रेष्ठोऽस्ति। तथा च श्रुतिः "सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतंति। ये वै तन्वं विसृजंति धीरास्ते मृतासो अमृतत्वं लभन्ते" इति ॥ ३६ ॥३७॥३८॥

॥ ३९ ॥ सूर्यकन्यात्वेन तवातिप्रसिद्धत्वान्मार्गरोधनेनापयशो मा लभस्वेति प्रार्थयति । यदीयमिति पंचभिः । यस्य सूर्यस्य इदं प्रसिद्धं तेजः सर्वजगति व्यापकमस्ति । अतः कारणाद्वर्णाश्रमवतां जनानां यस्मात्सूर्याद्धेतोः सर्वा क्रिया भवति विहितया यया क्रियया । शिखरिणी० ॥ ४० ॥ तस्य त्वं कन्याऽसि अत एव सुपर्वाप्लुतिहृदां सुपर्वणि कपिलषष्ठ्याम् आप्लुत्यै स्नानाय हृत् मनो येषां तेषां यात्रिणां मार्गे रोधं प्रतिबंधं माकुरु । मनाकूकीर्तेः अल्पकीर्तेः । अपत्यं संततिः । अयशः अपकीर्तिकरं न भवति। प्रख्यातकीर्तेः सूर्यस्यापत्यं त्वम् अघकरं पापकरा कथं भवसीत्यर्थः॥ ४१ ॥ननु जलरूपाया

नदीतीरे स्थितस्तत्र यमुनाख्यां सरिद्वराम् ॥ प्रार्थयामास बहुशः स्मृत्वादौ गुरुपादुकाम् ॥ ३९ ॥ कपिलरुद्र उवाच ॥ यदीयं तेजो स्मिञ्जगति निखिले व्यापकमतः क्रिया सर्वा यस्माद्भवति खलु वर्णाश्रमवताम् ॥ यया लोको भुंक्ते सुखमिह परस्मिन्विहितया नमं त्येनं सूर्यं प्रतिदिनमतः कर्मनिपुणाः ॥ ४० ॥ जगत्कीर्तेः साक्षात्त्वमसि दुहिता तस्य तु रवेर्न पांथानां रोधं कुरु पथि सुपर्वाप्लुति हृदाम् ॥ मनाक्कीर्तेर्लोके न भवति किलापत्यमयशो ह्यपत्यं त्वं भानोः कथमघकरं ख्यातयशसः ॥ ४१ ॥ न पांथानां मार्गं यदि परतटं गंतुमधुना ददास्येते देहैस्त्वयि खलु पतंत्येव सकलाः ॥ गृहाणैषां हत्योद्भवमघमदः स्वीयशिरसा यतो दुष्कीर्तिस्ते जगति भविताऽऽकल्पमखिले ॥ ४२ ॥ मया ज्ञातं सर्वं हृदयमघबद्धं तव यतः स्वसा साक्षान्मृत्योस्त्वमसि च यमस्यैव यमुने ॥ मृतैरेभिः सर्वैर्भवतु विपुला भ्रातृनगरी निजैर्भंगैरूर्ध्वं भवसि यमुनेऽतः प्रतिपलम्॥४३॥युगे तार्तीये ते जननि वसुदेवाय भवती ददौ मार्गं रात्रौ हरिपदनखस्पर्शविभवात् ॥ असत्त्वं ज्ञात्वा मां मनुजमिति न त्वं गणयसि ममातः सामर्थ्यं गुरुपदमतः पश्य यमुने॥४४॥

मम पापनिवर्तकत्वात्कथमघकर्तृत्वमिति चेत् अत आह नेति । देहैः सह एषां यात्रिणां वधजन्यम् अदः इदं पापं त्वं गृहाण । यतः पापात्तव दुष्कीर्तिः कल्पपर्यंतं भविष्यति॥ ४२॥ यतस्तव हृदयम् अघबद्धं पापयुक्तमस्ति तन्मया ज्ञातम् । यतस्त्वं मृत्युरूपस्य यमस्य स्वसासि । एभिर्यात्रिभिर्मृतैः गतासुभिः करणैः भ्रातुर्यमस्य नगरी संयमिनी विपुला व्याप्ता भवतु इति त्वं प्रतिपलम् ऊर्ध्वं यथास्यात्तथा भवसि । वर्धितजला भवसीत्यर्थः ॥४३॥ पुरेति । असत्त्वं

सामर्थ्यहीनम् । गुरुपदमतेः गुरुचरणैकबुद्धिमतः ॥ ४४ ॥ ४५ ॥ चक्षुर्भ्यामिति पूर्वान्वयि ॥ ४६ ॥ सम्यक् द्रष्टुमसमर्थैः ॥ ४७॥
॥ ४८ ॥ अल्पदृक् अल्पदृष्टिः ॥ ४९ ॥ सः कपिलरुद्रः ॥ ५० ॥ ५१ ॥ मां पास्यति किं वा । मुखनेत्रोत्थितार्चिर्भिः मुखनेत्रोद्भूतज्वा

श्रीदेशिकेंद्र उवाच ॥ बभूव क्रोधताम्राक्षस्तदेत्युक्त्वा स देशिकः ॥ अत्यावेशात्स्फुरद्गात्रो रोमांचांकितविग्रहः ॥ ४५ ॥ चक्षुर्भ्यां मुखतो ज्वालाः प्रवमन् सर्वतोदिशः ॥ दहन्निव स्फुरद्गात्रः पिबन् सर्वां नदीमिव ॥ ४६ ॥ रुद्रः कल्पांतसमये यथा विश्व विनाशकः ॥ दृष्टस्तथाऽखिलैर्लोकैरक्षमैः सम्यगीक्षितुम् ॥ ४७ ॥ भीताः सर्वेपि तं दृष्ट्वा निमील्याक्षीणि संस्थिताः ॥ केचित्प्रकं पयुक्तांगाः पतिताः पृथिवीतले ॥ ४८ ॥ पलायिताः परे दूरमन्ये धैर्ययुताः स्थिताः ॥ वस्त्रांतरितदृष्ट्या तं पश्यंतोर्कमिवाल्पदृक् ॥ ४९ ॥ इत्थं कोपं प्रकुर्वन्स सिद्धवर्यस्ततः स्वयम् ॥ यमुनायां ययौ पातुमगस्त्य इव सागरम् ॥ ५० ॥ भयप्रकंपिता जाता जलरूपापि सा नदी ॥ दृष्ट्वातिकोपिनं सिद्धं करिणीव मृगेश्वरम् ॥ ५१ ॥ किं मां प्रपास्यत्यखिलामधुनाऽयं स्वसिद्धितः ॥ मुख नेत्रोत्थितार्चिर्भिः शोषयिष्यति वा किमु ॥ ५२ ॥ अथवोच्चाटनैर्मंत्रैर्दूरमुच्चाटयिष्यति ॥ इत्थं विचिंत्य सा देवी साक्षात्सूर्यसुतापि च ॥ ५३ ॥ मानयंती गुरोर्भक्तं सर्वदेवात्मरूपिणः ॥ ददौ मार्गं महापूरं भूत्वा गुल्फजलामला ॥५४॥ परं तीरं ययौ सिद्धो यमुना यास्ततोऽखिलाः ॥ यात्रिणश्च ययुः शीघ्रं पृष्ठतोस्यैव योगिनः ॥ ५५ ॥ संतुष्टाश्चाथ तेऽत्यंतं प्रशंसंतोऽस्य वैभवम् ॥ तस्थुः प्रयागे रात्रौ च पक्वान्नं बुभुजुः सुखम् ॥ ५६ ॥ अथ प्रातः पर्वकाले षड्योगे कपिलाभिधे ॥ त्रिवेण्यामखिलाः स्नात्वा मेनिरे कृतकृत्य ताम् ॥ ५७ ॥ इत्थं यो यमुनां तर्तुं कापिले रुद्रसन्निभः ॥ क्रुद्धोभूदिति संप्रोक्तः सिद्धैः कपिलरुद्रकः ॥ ५८ ॥ इत्थंप्रभावः कपिला ख्यरुद्रः प्रोक्ता रहस्यं भुवि शंकुकाय ॥ आसीत्सदानंदयुतः स्वसौख्ये नताः स्म चैकोनशतप्रपूरकम् ॥ ५९ ॥

लाभिः ॥ ५२ ॥ पूर्वार्द्धे असावित्यध्याहारः । उत्तरार्द्धमुत्तरान्वयि ॥ ५३ ॥ सर्वदेवात्मस्वरूपस्य ॥ ५४ ॥५५॥ ते यात्रिणः । अस्य कपिलरुद्रस्य ॥५६॥ षड्योगाः पूर्वोक्ता यस्मिन् ॥५७॥ कापिले कपिलषष्ठ्याख्ये पर्वणि॥५८॥नवनवतितमं कपिलरुद्रानंदं प्रणमति । स्वसौख्ये आत्मसुखे॥५९॥

॥ ६० ॥ बहुकालमारभ्यात्मनो विस्मृतिर्यस्य तम् ॥ ६१ ॥ सुखे सुखरूपे । अद्भुतसामर्थ्यवतः गुरोरन्यः एवन्दयावान् कोऽस्ति न कोपीत्यर्थः ॥ ६२ ॥ वैभवं सामर्थ्यम् ॥ ६३ ॥ परं श्रेष्ठम् । निश्चयिनं निश्चयवंतम् । उत्तरार्द्धमुत्तरान्वयि ॥ ६४ ॥ दृढाशयात् दृढभावात् ॥ ६५ ॥ क्षेत्रादिम र्यादाज्ञानाय यथातथार्यं शंकुक इत्यर्थः ॥ ६६ ॥ शतसंख्याकं शंकुकानंदं प्रणमति इत्थमिति. । स्वमुखे स्वानन्दे श्रीदेशिकेंद्रेण कपिलरुद्रगुरुणा पूर्णः

शंकुकानंदनाथस्तु दृढविश्वासवान्गुरौ ॥ शिवोयमवतीर्णोऽस्ति साक्षात्सदसतोः परः ॥६०॥ज्ञात्वा भवाब्धौ मग्नं मां बहुकालात्मवि स्मृतिम्॥स्वयमुत्तारयामास करं दत्त्वार्द्रमानसः॥६१॥दत्त्वाक्षयं सुखं भूरि स्वेपरेऽतिष्ठिपत्सुखे॥ इत्थं दयावान्को देवो गुरोरद्भुतविक्र मात् ॥ ६२ ॥ मंत्रमूलाः सुराः सर्वे मंत्रास्ते गुरुणैव मे ॥ दत्तास्तेनैव वेदाहं सर्वदैवतवैभवम् ॥ ६३ ॥ अतः सर्वेषु देवेषु मन्येहं देशिकं परम् ॥ इत्थंनिश्चयिनं ज्ञात्वा शिष्यं कपिलरुद्रकः ॥ ६४ ॥ शंकुकानंदनामाऽस्य ततश्चक्रे दृढाशयात् ॥ आदिनाथाद्गुरो र्यस्तु शतसंख्यावधौ स्थितः ॥ ६५ ॥ यथा क्षेत्रादिमर्यादाद्योतने शंकुरोपणम् ॥ गुरूणां शतसंख्यायां शंकुकोयं दृढाशयः ॥६६॥ इत्थं गुरौ देवधियं दृढां यश्चक्रे ततः शंकुकनामको यः ॥ श्रीदेशिकेंद्रं कृतपूर्णदीक्षशताशविस्थं गुरुमानताः स्मः ॥ ६७॥ त्रयमिति हि गुरूणां पाणिनेर्वै सकाशाच्चरितमपि किलास्य श्रावयेद्वा शृणोति ॥ विदितसकलशास्त्रः सर्वदुःखोज्झितश्च गुरुपददृढनिष्ठायुग्भ वेत्सर्वमान्यः ॥ ६८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे पाणिन्यानंदादिगुरुत्रयवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥

कृतपूर्णाभिषेको यस्तम् ॥ ६७ ॥ पाणिन्यादिगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह त्रयमिति । पाणिनेः सकाशाद्गुरूणां त्रयम् इति यत्तस्यास्य त्रयस्य चारितं शृणोति श्रावयेद्वा यः स शास्त्रज्ञः सर्वदुःखरहितः गुरुचरणविश्वस्तः सन् सर्वमान्यश्च भवेत् । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरित्युक्तत्वात् ॥ ६८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धेऽर्थस्फूर्त्यभिधायां टीकायां षट्चत्वारिंशः सर्गः ॥ ४६ ॥

ते सप्तचत्वारिंशे द्विषष्टिपद्यैस्तु दीपकः । भासः कर्णोत्पलाख्यश्च वर्ण्यते स्वकथानकैः ॥ ४७॥ शंकुकानंदशिष्य इति ॥ १ ॥ दीपस्थानं मंत्रादिसिद्धये प्रथमं विलोक्यते तेन शीघ्रसिद्धिर्भवतीति मंत्रशास्त्रे प्रसिद्धम् । यथोक्तं ललिताचौसुधाकरे " कूर्मचक्रे कूर्ममुखं दीपस्थानमिहोच्यते । नवकोष्ठात्मकं यंत्रं कृत्वा वर्णांल्लिखेद्यथा।युग्मस्वरान्वै विलिखेच्च पूर्वं कादींश्च वर्गान्क्रमशः क्षमीशे।ताराधिपस्याक्षरमस्ति यत्र तद्दीपदेशं मुनयो वदंति" इति ताराधिपो यजमानो दीपस्थाने स्थित्वा जपं कुर्यात् शीघ्रं सिद्धिर्भवति इति तद्वदत्रापि भाविगुरूणां वर्णनसिद्धयेऽयं दीपकः प्रथमं द्वितीयशतकादौ वर्णित इति भावः ॥२॥ एतदे

श्रीदेशिकेंद्र उवाच ॥ शंकुकानंदशिष्यस्तु दीपकानंदसंज्ञकः ॥ द्वितीये शतके यस्तु गुरूणां प्रथमः स्मृतः ॥ १ ॥ दीपस्थानं विना सिद्धिर्न मंत्राणां भवेत्क्वचित् ॥ द्वितीयशतकारंभे दीपकाख्यः कृतस्ततः ॥ २ ॥ भाविनां सर्वसिद्धानां मनूनां शीघ्रसिद्धये ॥ प्रसादाद्यस्य चाग्रस्थाः सिद्धाः स्युः संप्रदायिनः ॥ ३ ॥ प्रकाशतो यस्य शते द्वितीये संतोऽखिलाश्चात्मविदो बभूवुः ॥ तं दीपकानंदमतिप्रकाशं नताः किलैकोर्ध्वशतस्य पूरकम् ॥ ४ ॥ दीपकानंदनाथस्य ह्यंतेवास्यपि तत्समः ॥ भासानंद इति ख्यातः प्राप्तसिद्धिः परात्मवित् ॥ ५ ॥ आत्मन्येवाखिलं विश्वं भासमानं तदस्मृतौ ॥ नश्यत्यद्भुतमप्यात्मस्मृतौ गुरुकृपाबलात् ॥६॥ स शिष्यान्कथयंश्चेत्थमात्मतत्त्वं जगाद सः ॥ तस्यासन्बहवः शिष्याः सर्वेप्यात्मविदां वराः ॥ ७ ॥ भासमेवाखिलं पश्यन्स्वयमात्मसुखाप्लुतः ॥ आसीदिति बुधाः प्राहुस्तं भासानंदमेव हि ॥ ८ ॥ इत्थं विधो भाससुखो रहस्यं कर्णोत्पलायाह मनःप्रियाय ॥ सुखं य आस्तेपि च तं द्विकोर्ध्वशतान्तिमं श्रीगुरुमानताः स्मः ॥ ९ ॥

वाह । भाविनामिति । पूर्वान्वयि । उत्तरोत्तरगुरूणां पूर्वपूर्वगुरुसापेक्षत्वाद्यस्य दीपकस्य प्रसादादग्रस्थाः अग्रे वर्तमानाः संप्रदायिनो गुरवः सिद्धाः बभूवुरित्यर्थः ॥ ३ ॥ एकाधिकशततमसंख्याकं दीपकानंदं प्रणमति प्रकाशत इति ॥ ४ ॥ अंतेवासी शिष्यः । तत्समः दीपकसदृशः ॥५॥ आत्मविस्मृतौ सत्यामात्मन्यधिष्ठाने इदं विश्वं भासमानं प्रकाशमानं भवति । गुरुकृपासामर्थ्येनात्मस्मृतौ सत्यां विविधरूपेणाद्भुतमपि नश्यति॥६॥स भासानंदः इत्थम् आत्मनि जगद्भासस्य कल्पितत्वं कथयन् आत्मतत्त्वं शिष्यान् जगाद प्रोक्तवान्॥७॥भासम् आत्मभासरूपम् ॥८॥ द्व्यधिकशततमसंख्याकं भासानंदं प्रणमति।इत्थमिति।भाससुखो

भासानंदः । सुखमेव यथा भवति तथा यः आस्ते तं नताः स्म इत्यन्वयः ॥ ९ ॥ १० ॥ सम्यक् आख्यानं कथानकं गुरोर्देव्याश्च प्रसादभवम् ॥ ११ ॥ काव्यभाषारसाश्रयाः सार्द्धान्वयः ॥ १२ ॥ कादिपंचदशीं गुरुप्रसादलभ्याम् ॥ १३ ॥ १४ ॥ अन्ये अवराः कनिष्ठाः ॥ १५ ॥ १६ ॥ विश्वस्य विश्वासं प्राप्य सर्वैर्भवद्भिरनुष्ठानं कर्तव्यमिति पूर्वान्वयि । पूर्वं सिद्धिर्यस्य भविष्यति स ज्येष्ठो बोध्यः ॥ १७ ॥ इत्थमिति । सार्द्धद्वयोरन्वयः ॥ १८ ॥

आसीत्कर्णोत्पलानंदो बालांबायाः प्रसादवान् ॥ तस्य कर्णोत्पलानंद इति नाम यथाऽभवत् ॥ १० ॥ तच्छृणुध्वं समाख्यानं गुरुदेवीप्रसादजम् ॥ भासानंदस्य शिष्यास्तु सर्वेऽभूवन्सुबुद्धयः ॥ ११ ॥ वेदवेदांगतत्त्वज्ञाः काव्यालापरसाकराः ॥ ते सर्वेऽपि गुरुं नत्वा श्रीविद्यां सर्वसिद्धिदाम् ॥ १२ ॥ आद्यां पंचदशीं कादिमयाचन् षोडशीं तथा ॥ तान्सर्वाञ्छ्रीगुरुः प्राह धीविद्याशीलतः समान् ॥ ॥ १३ ॥ भासानंद उवाच ॥ शीलादिभिर्गुणैर्बुद्ध्या विद्याभिश्चाखिलाः समाः ॥ यूयं सर्वे पंचदश्या मंत्रदानाधिकारिणः ॥ १४ ॥ तत्र कस्मै मया देया पूर्वं पंचदशाक्षरी ॥ ज्येष्ठोऽखिलेषु भविता स एवान्ये ततोऽवराः ॥ १५ ॥ अतः सर्वैरनुष्ठानं कर्तव्यं स्वस्वसिद्धये ॥ मत्तः प्रागेव लब्धेन गणेशमनुना तथा ॥ १६ ॥ बालामंत्रेण विश्वस्य सिद्धिर्यस्य भविष्यति ॥ पूर्वं ज्येष्ठः स विज्ञेयः कनिष्ठास्तु ततोऽखिलाः ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमाज्ञापिताः शिष्याः सर्वे सद्गुरुणाथ ते ॥ देवीक्षेत्रेष्वनेकेषु पृथक् स्थित्वाखिलास्तदा ॥ ॥ १८ ॥ गणेशबालामंत्राभ्यां पुरश्चरणमार्गतः ॥ विलोक्य दीपस्थानानि तत्तद्देव्याद्यवर्णतः ॥ १९ ॥ प्राक्सिद्धिकांक्षिणः सर्वेऽप्यनुष्ठानानि चक्रिरे ॥ आसीदेकतमस्तेषु श्रीगुरोर्बहुतोषकृत् ॥ २० ॥ अनुष्ठानं चकारासौ भ्रमरांबासमीपतः ॥ एक एव महारण्ये सर्पव्याघ्रादिभीतिदे ॥ २१ ॥

पुरश्चरणविधानेन देव्यादिवर्णतः दीपस्थानानि विलोक्येति देवताया मंत्रस्य आद्यवर्णः पूर्वस्यां दिशि प्रदेयः तद्वर्णमारभ्य स्वनामाद्यवर्णपर्यंतं सव्यक्रमेण गणयित्वा स्वनामाद्यवर्णो यत्र विश्राम्यति तद्दिशि अनुष्ठाने कृते सिद्धिर्भवतीति तद्विलोक्येत्यर्थः ॥ १९ ॥ प्राक् प्रथमम् ॥ २० ॥ २१ ॥

महागणपतेः तन्मंत्रस्य पुरा प्रथमम् ॥ २२ ॥ अष्टाविंशतिसहस्रसंख्याकैर्मंत्रैः कलौ च चतुर्गुणा चतुर्गुणजपा द्वादशशताधिकलक्षजपात्मिका पुरश्चर्या उक्ता तां तथाऽकरोदिति पूर्वान्वयि । सः शिष्यः । इति चिंतामग्नो बभूव ॥२३॥ चिंतामेवाह होमादिकमिति । मनोः मंत्रस्य ॥२४॥ ईषत् किंचित् न प्राप्तवान् । धनी धनवान् ॥ २५ ॥ होमादीनां सुसिद्धिदं साधकं साहित्यम् । स शिष्योपीत्याद्युत्तरान्वयि ॥ २६ ॥ धनिकसंबंधिचारैर्दूतैर्द्विजानाहूय तैः यथाशास्त्रं क्रमेण होमादिकं चकार ॥२७॥ तत्र पूर्वस्य जपादेः दशमांशेन परं होमादिकं भवति । इति प्रकारेण पुरश्चरणं सम्यक् सांगं चकार॥२८॥

ह्यतो भुवि विशीर्णानि वृक्षपर्णानि नित्यशः ॥ भुक्त्वाऽकरोत्पुरश्चर्यां महागणपतेः पुरा ॥ २२ ॥ अष्टाविंशतिसाहस्रैः कलौ चोक्तां चतुर्गुणाम्॥पुरश्चर्यासमाप्तौ तु चिंतामग्नो बभूव सः॥२३॥ होमादिकं कथं कार्यं द्रव्यसाध्यं तु तद्भवेत् ॥ विना होमादिना नैव मनोः सिद्धिर्भवेद्ध्रुवम् ॥२४॥ एवं चिंतान्वितो रात्रौ निद्रामीषन्न चाप सः ॥ अथ प्रातर्ययौ कश्चिद्धनी विघ्नेश्वराज्ञया ॥२५॥ गृहीत्वा सर्वं साहित्यं होमादीनां सुसिद्धिदम् ॥ तपस्विने ददौ तस्मै सोपि तुष्टो बहून्द्विजान् ॥ २६ ॥ आहूय धनिनश्चारैस्तैश्चकार यथाविधि ॥ क्रमाद्धोमं तर्पणं च मार्जनं विप्रभोजनम् ॥ २७ ॥ पूर्वस्य दशमांशेन परं पंचांगमित्यसौ ॥ चक्रे गणेशमंत्रस्य पुरश्चरणमुत्तमम् ॥ ॥ २८ ॥ निद्रामग्नेषु सर्वेषु रात्रावथ विनायकः ॥ तत्राविर्भूय साक्षाद्वै ददौ तस्मै स्वदर्शनम् ॥ २९ ॥ तेजःपुंजमिवाग्रस्थं दृष्ट्वाऽशक्त स्तमीक्षितुम् ॥ दीप्त्या सम्मीलयन्नेत्र ईक्षार्थमुन्मीलयन्मुहुः ॥ ३० ॥ दंडवत्प्रणनामाक्षिस्रवद्वार्यूर्ध्वरोमकः ॥ प्रेमवाण्या तमस्तौषी दग्रतः प्रांजलिः स्थितः ॥ ३१ ॥ तपस्व्युवाच ॥ गणेशं गजास्यं ह्यजादिप्रधानं दशैवायुधान्युक्तहस्तैर्दधानम् ॥ सुसिन्दूरलिप्तं सुरक्तांबराढ्यं सुभक्तैर्हि दूर्वादिभिश्चार्चितांगम् ॥ ३२ ॥

विनायकः गणपतिः तत्र शिष्यसन्निधौ आविर्भूय शिष्यायात्मदर्शनं ददौ॥२९॥ तेजःपुंजमित्याद्युत्तरान्वयि । अशक्तः असमर्थः दीप्त्या प्रकाशेन ईक्षार्थी दर्शनार्थी ॥३०॥ अक्षिभ्यां स्रवद्वारि यस्य ऊर्ध्वानि अंकुरितानि रोमाणि यस्य स चासौ शिष्योऽस्तौषीत् स्तुतिं चक्रे ॥ ३१ ॥ गणेश महं नमामीति तृतीयश्लोकस्थक्रिययान्वयः । गजमुखं ब्रह्मादीनां श्रेष्ठम् उक्त हस्तैः ध्यानोक्तदशहस्तैः दशायुधानि धारयंतं रक्तवस्त्रं नागजेन सिंदूरेणासमंताच्छोभितांगम् ।

उत्तमभक्तैर्देवैश्च पूजितदेहम् । 'सिंदूरं नागसंभवम्' इत्यमरः । वृत्तं च भु०प्र० । भुजंगप्रयातं भवेद्यैश्चतुर्भिरित्युक्तत्वात्॥ ३२॥ सिद्धिबुद्धियुक्तं भक्तसंकटवारकं मोदकभक्षकं शोभिते ललाटे चंद्रं धारयन्तं महासिंहवाहम् असुरघातकम् ॥ ३३॥ शिवपुत्रं कृपादृष्टिम् उत्तमभूषणयुक्तदेहं कट्यां नागसूत्रं यस्य तं चिद्रूपेण विश्वमात्रे स्फुरंतं विचित्ररूपं निरिच्छम् ॥ ३४ ॥ आप्तकामः पूर्णकामः विहर्ता विहारकर्ता अग्रतः अग्रभागे अल्पदृष्टेऽल्पज्ञानस्य ममादृष्टे दैवे

युतं सिद्धिधीभ्यां नतान्नश्रयंतं महासंकटान्मोदकान्भक्षयंतम् ॥ लसद्भालदेशे विधुं धारयंतं महासिंहगं चासुरान्मारयंतम् ॥ ३३ ॥
नमामीशपुत्रं कृपायुक्तनेत्रं सुभूषाढ्यगात्रं कटौनागसूत्रम् ॥ चिता विश्वमात्रे स्फुरंतं विचित्रं निरीहं स्वतंत्रं सदांतःपवित्रम् ॥ ३४ ॥
सदैवाप्तकामोपि भक्तार्तिहर्ता स्वरूपैरनेकैर्विचित्रैर्विहर्ता ॥ ममाविर्बभूवाग्रतो याल्पदृष्टेरनल्पं हि पुण्यं ममासीददृष्टे ॥ ३५ ॥ हृदिस्थोऽखिलानामतः सर्वकामान्प्रदास्यत्यसौ मे स्वभक्तान्सकामान् ॥ प्रपातुं दधौ रूपमाद्योपि चित्रं किमंतःप्रियं मेऽस्य कर्तुं विचित्रम् ॥ ३६ ॥ स्तुतस्तपस्विनेत्थं सोऽविघ्नकर्ता विनायकः ॥ प्रसन्नवदनः प्राह तं तपःपूतविग्रहम् ॥ ३७ ॥ विनायक उवाच ॥
त्वत्कृतेनास्मि संतुष्टः पुरश्चरणतोऽधुना ॥ स्तोत्रेणापि द्रुतं सिद्धिप्रदेनाहं द्विजोत्तम ॥ ३८ ॥ भविष्यति तवाभीष्टं शीघ्रं वै मत्प्रसादतः ॥ बालात्रिपुरसुंदर्याः पुरश्चर्यां विधानतः ॥ ३९ ॥ नवलक्षात्मिकां सांगां कुरुष्वैकाग्रमानसः ॥ शीघ्रं प्रसन्ना सा देवी तवाभीष्टं करिष्यति ॥४०॥ सिद्धिस्ते भविता नूनं निर्विघ्नं मत्प्रसादतः ॥ श्रीदेशिकेंद्र उवाच ॥ इत्युक्त्वांतर्दधे तत्र धीसिद्धिभ्यां विनायकः ॥
॥ ४१ ॥ अथारभत्स बालायाः पुरश्चरणमादितः ॥ पंचांगं पूर्ववच्चक्रे नवलक्षात्मकं क्रमात् ॥ ४२ ॥ पुरश्चर्यासमाप्तौ तु रात्रावाविर्बभूव सा ॥ तपस्विने वरं दातुं बाला त्रिपुरसुंदरी ॥ ४३ ॥

बहु पुण्यमासीत ॥ ३५ ॥ यतः सर्वहृदिस्थः अतो मे सर्वकामान् प्रदास्यति कुत इत्यत आह । सर्वाद्योपि सकामभक्तरक्षणाय विचित्ररूपं धृतवान् । मे अंतःप्रियं मनःप्रियं कर्तुम् अत्र गणपतौ चित्रम् आश्चर्यमस्ति किं न किमपि आश्चर्यमित्यर्थः ॥ ३६ ॥ इत्थं तपस्विना स्तुतः स विनायकः तपसा पवित्रदेहं तं शिष्यं प्राह ॥ ३७ ॥ पुरश्चरणेन ॥ ३८ ॥ बालेत्याद्युत्तरान्वयि ॥ ३९ ॥ भविता भविष्यति ॥ ४० ॥ धीसिद्धिभ्यां सह । तत्र भक्त

समीपे पंचांगं जपादिकं क्रमात् क्रमेण ॥ ४१ ॥४२॥४३॥ या पूर्वं ध्याता तां स्वाग्रभागे आनंदाश्रुयुक्तदृष्टिः गद्गदोक्तिः गद्गदशब्दो बालां तुष्टाव वृत्तं तु शा० । शालिन्युक्ता म्तौतगोगोऽब्धिलोकैरित्युक्तत्वात् ॥४४॥ " सदेव सौम्येदमग्र आसीत् " इत्यादिश्रुतिप्रसिद्धं सर्वादिभूतंयद्ब्रह्मासीत् तद्ब्रह्मैव अजा प्रकृतिः अभिन्नरूपा "अजामेकां लोहितशुक्लकृष्णाम्" इत्यादिश्रुतिवर्णिता श्रीचक्रनिवासिनी परदेवता सा च स्वोत्पन्नया कलया अंशरूपिण्या यया बालया निमित्तभूतया उरुरूपका बहुरूपा अभवत् सा कलारूपिणी त्रिपुरादिसुंदरी बाला त्रिपुरसुंदरी मां रक्षतु । यथा स्फटिकः स्वतः शुद्धोपि जपापुष्पसंयोगेन रक्तः सोपि चंद्रप्रकाशे पद्मरागो भवति स एव दूरस्थत्वादिदोषेण हीनोपलं यथा तथा शुद्धं ब्रह्मैवाभिन्नपराशक्तिरूपं तदेव बालारूपं सत्तदेव जगद्रूपं भव

आविर्भूतां स्वाग्रतः सुप्रसन्नां बालां दृष्ट्वाऽनंदयुक्तस्तपस्वी ॥ नत्वा भूयस्तां प्रतुष्टाव भक्त्या रोमांचाढ्यः साश्रुदृक् गद्गदोक्तिः॥४४॥ तपस्व्युवाच ॥ यदभूदखिलादि चाद्वयं तदजा वै कलयोरुरूपका ॥ निजसंभवया यया च मावतु बाला त्रिपुरादिसुंदरी ॥ ४५ ॥ विधिविष्णुहरास्त्रिवर्णकां रसवर्णैर्नवभिः स्वसिद्धये ॥ प्रजपंति सदैव यां मुदावतु बाला त्रिपुरादिसुंदरी ॥ ४६ ॥ मुनयः सवनैर्जपंति यां पृथगेव श्रुतिमातृरूपिणीम् ॥ त्रिपुरात्ततनुः सदा हि मावतुबाला त्रिपुरादिसुन्दरी ॥४७॥ अरुणारुणभा जपस्रजं स्वभुजैः पुस्तकाभयं वरम् ॥ अदधज्जगतोवनाय सावतु बाला त्रिपुरादिसुंदरी ॥ ४८ ॥ परिवेत्ति परापि मा निजं मम मातेति च वेद्मि तामहम् ॥ भुवि यामि यशस्तथैव मावतु बाला त्रिपुरादिसुन्दरी ॥ ४९ ॥

तीत्यर्थः । अत्रात्मरूपिणीबालावियोगपरिहाराय वियोगिनीवृत्तम् । तल्लक्षणं च—विषमे ससजा गुरू समे सभरा लोथ गुरुर्वियोगिनीति ॥ ४५ ॥ ब्रह्मविष्णुशंकराः स्वस्वसृष्ट्यादिकार्यसिद्धये त्र्यक्षरां रसवर्णैः षड्वर्णैर्नववर्णैश्च युक्तां यां बालां मुदा आनंदेन सदा त्रिकाले प्रजपंति सा बाला मां रक्षतु । गायत्रीं त्र्यक्षरां बालां ब्रह्माणीं ब्रह्मदैवतामित्यादिना त्वं गायत्रीरूपासीत्यर्थः ॥ ४६ ॥ मुनयो मननशीलाः पृथक् सवनैः कालत्रयेण निमित्तभूतेन स्थितिसृष्टिलयकार्यनिमित्तं ब्रह्मादित्रिदेवरूपा या सा सदा मामवतु ॥४७॥ या च बाला अरुणवर्णा चतुर्बाहुभिः जपमालां पुस्तकं च निर्भयम् अभयमुद्रां चानयोः समाहारे नपुंसकत्वमेकत्वं च । तानि वरं वरदमुद्रां च अदधत् लोकरक्षणाय धृतवती सा मां रक्षतु ॥ ४८ ॥ पररूपापि या मां निजम् आत्मीयं स्वभक्त

मिति पार्थिवीति जानाति अहमपि यां मम मातेति मातृरूपिणीति वेद्मि जानामि यथा पृथिव्यां यशः यामि प्राप्स्यामि तथैव सा मां बाला त्रिपुरसुंदरी रक्षतु। ॥ ४९ ॥ तेन भासानंदशिष्येण इष्टदानतः कामितार्थपूरणेन ॥ ५० ॥ उत्पले कमले मानससरसि उत्पन्ने सदा विकसिते अम्लाने तस्य शिष्यस्य कर्णयोर्दत्त्वेति पूर्वान्वयि ॥ ५१ ॥ वरः श्रेष्ठः । मया दत्ताभ्याम् उत्पलतः कमलाभ्यां पृथिव्यां विख्यातो भविष्यसि ॥ ५२ ॥ सर्वशिष्याधिका गुरोः

श्रीदेशिकेंद्र उवाच ॥ तेनेत्थं संस्तुता देवी बाला त्रिपुरसुंदरी ॥ प्रसन्ना तमुवाचाथ तोषयंतीष्टदानतः॥५०॥कर्णयोस्तस्य कमलेदत्त्वा मानससंभवे ॥ सदा विकसितेऽत्यंतसुगंधे चारुणप्रभे ॥५१॥ श्रीबाला त्रिपुरसुंदर्युवाच ॥ भासानंदस्य शिष्येषु भविष्यसि भवान्वरः॥ सर्वसिद्धियुतः ख्यातो मद्दत्तोत्पलतः क्षितौ ॥ ५२ ॥ त्वय्येवास्ति गुरोः प्रीतिः सर्वांतेवासितोऽधिका ॥ वरदाहं यथा तेऽस्मि तथा नैकतमाय च ॥५३॥ श्रीदेशिकेंद्र उवाच ॥ इत्युक्त्वांतर्दधे देवी सोत्पलः स गुरुं ययौ ॥ नत्वा मुहुः स्ववृत्तांतं कथयामास चादितः॥ ॥ ५४ ॥ तमथाह गुरुस्तुष्टो दृष्ट्वाद्धा कर्णयोः कजे ॥ अम्लानेऽत्यंतरुचिरे प्रफुल्लेऽतिसुगंधिते ॥ ५५ ॥ भासानंद उवाच ॥ नूनं ते सिद्धिदा देवी बाला त्रिपुरसुंदरी ॥ त्वमतः सर्वशिष्येषु ज्येष्ठः सर्वेषु नापरः ॥ ५६ ॥ प्राप्ताश्चाथाखिलाः शिष्याः स्वस्वसिद्धिप्रशंसिनः ॥ गुरुस्तानाह मे चिह्नं दर्शनीयं स्वसिद्धिजम् ॥ ५७ ॥ यथास्य कर्णयोः साक्षात्कमले देवतार्पिते ॥ श्रुत्वा तूष्णीं बभूवुस्ते शिष्याः सर्वेऽथ देशिकः ॥५८॥ सर्वमंत्रमयीं दीक्षां ददौ पूर्वागताय च ॥ कर्णोत्पलानंदनाम तस्य चक्रे सुशोभनम् ॥५९॥ सिद्धवर्यो बभूवासौ गुरुदेवीकृपाबलात् ॥ गुरुर्यस्यातिसंतुष्टः सिद्धवर्यः स एव हि ॥ ६० ॥

प्रीतिस्त्वय्येवास्ति । तथा एकतमाय एतेषु कस्मैचिदप्येकस्मै शिष्याय वरदा नास्मि यथा तवेत्यर्थः ॥ ५३ ॥ सोत्पलः देवीदत्तकमलयुक्तः ॥ ५४ ॥ अद्धा प्रत्यक्षं कजे कमले ॥ ५५ ॥ पूर्वोत्तरार्द्धयोः अस्त्यसिपदयोरध्याहारः । अपरः शिष्यः ॥५६ ॥ ५७ ॥ अस्य पूर्वागतशिष्यस्य कर्णयोर्देवतार्पिते कमले स्तः तथा भवद्भिः चिह्नमिति पूर्वार्द्धे पूर्वान्वयि । अथ देशिको भासानंद इत्युत्तरान्वयि ॥५८॥ पूर्वागताय पूर्वमागताय शिष्याय ॥५९॥ गुरुः भासा

नंदः देवी बाला तयोः कृपासामर्थ्येन ॥ ६० ॥ त्र्यधिकशतान्तिमं त्र्युत्तरशततमं कर्णोत्पलानंदं प्रणमति बालेति । चिह्नं कमलरूपं परं पदम् आत्मानम् । मुक्तिमिति यावत् ॥ ६१ ॥ अत्रोक्तगुरुत्रयचरित्रकथाश्रवणादिफलं क्रमेणाह त्रिगुरूणामिति । दीपकतः दीपकानंदादीनां त्रयाणां गुरूणां चरितं भक्त्या शृणोति पठति च प्रथितवंशस्तेजस्वी स्वयं कीर्तिमांश्च भवेत् । गीतिः ॥ ६२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ सप्तषष्टिसुपद्येष्टचत्वारिंशे स्मृतौ गुरू । उपमन्युः शंभुभक्तश्चाद्या शंभुरुमापतिः ॥ ४८ ॥ उपमन्य्वानंदनाथ इति । अन्यान्

बालाप्रसादोद्भवचिह्नमित्थं साक्षाद्दयानोथ रहस्यजातम् ॥ दत्त्वोपमन्योः परमाप तं वै कर्णोत्पलं त्र्यूर्ध्वशतं नताः स्मः ॥ ६१ ॥ त्रिगुरूणां दीपकतः शृणोति चरितं पठेच्च यो भक्त्या ॥ स स्तुतवंशस्तेजोयुक्तः कीर्त्यन्वितो भवेन्नूनम् ॥ ६२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे दीपकानंदादिगुरुत्रयकथावर्णनं नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥ श्रीदेशिकेंद्र उवाच ॥ उपमन्य्वानंदनाथः शिवभक्तिरतः सदा ॥ न शंभोरन्यदेवांस्तु विष्ण्वादीन्वेत्ति यः क्वचित् ॥ १ ॥ स एव सर्वदेवेभ्यश्चाधिकारान्ददौ प्रभुः ॥ तस्माद्देवाखिलाः प्रापुरैश्वर्यं माधवादयः ॥ २ ॥ कृत्वैवाराधनं तस्य तत्क्षेत्रे चाविमुक्तके ॥ स एवाखिलकल्याणकर्ताऽतः शंकरः स्मृतः ॥३॥ यस्मात्कल्याणसंभूतिरतः शंभुश्च कथ्यते ॥ सर्वकल्याणमूर्तित्वाच्छिवमाहुस्तमेव हि ॥ ४ ॥ इत्थं बाल्यादसौ शंभावुपमन्युस्तु भक्तिमान् ॥ नैसर्गिक्यां हि तद्भक्तौ प्राक्कथास्यैवमुच्यते ॥ ५ ॥ वसिष्ठवंशे प्रागासीदुपमन्युस्तु बालकः ॥ मातरं बालभावेन भूरि दुग्धमयाचत ॥ ६ ॥

देवान् ॥ १ ॥ सः शिव एव अधिकारान् स्थानानि प्रभुः सर्वनियंता तस्माच्छिवात् ऐश्वर्यं अणिमाद्यम् ॥ २ ॥ तत्क्षेत्रे शिवक्षेत्रे अविमुक्तके 'अविमुक्तं वै कुरुक्षेत्रं ब्रह्मसदनम्' इति श्रुतिप्रसिद्धे शिवस्याराधनं कृत्वेति पूर्वान्वयि ॥३॥ शं सुखं भवत्यस्मात्स शंभुः सर्वत्र कल्याणशब्दस्य मंगलवाचित्वे समानेपि परमकल्याणनिधानत्वद्योतनाय पृथग्ग्रहणमिति भावः ॥ ४ ॥ इत्थं पूर्वोक्तप्रकारेण नैसर्गिक्यां स्वाभाविक्यां भक्तौ श्रद्धाविषये अस्य उपमन्योः प्राग्जन्म

गता कथा एवं वक्ष्यमाणप्रकारेण उच्यते मयेति शेषः ॥ ५ ॥ ६ ॥ अतुष्टः संतोषहीनः ॥ ७ ॥ ८ ॥ कस्मात् गृहात् तत् दुग्धम् । सर्वदेवानां मध्ये महान् ॥ ९ ॥ लघुदेवतः अल्पदेवेभ्यः । उत्तरार्द्धमुत्तरान्वयि ॥ १० ॥ ११ ॥ अखिलेषु सर्वभूतेषु यो महादेव इत्युत्तरान्वयि ॥ १२ ॥ ज्ञानेनेत्याद्युत्तरान्वयि ॥ १३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १४ ॥ निजम् आत्मीयम् ॥ १५ ॥ पुराणे काशीखंडे । कामपूरकं तत् अद्यापि विश्रुतम् ॥ १६ ॥ स्वोत्थं

दत्ते मात्राल्पपयसि रुरोदातुष्ट एव सः ॥ दत्ते गुडादिके तस्मै न तथाप्यश्रृणोदसौ ॥ ७ ॥ त्रस्तातिरोदनात्तस्य मातातीव रुषान्विता ॥ उपमन्युमिति प्राह नास्ति दुग्धं गृहेऽधुना ॥ ८ ॥ कस्माद्देयं मया तत्त्वं न शृणोषि हठान्वितः ॥ यः सर्वेषां महादेवः पयस्तं याचयाधुना ॥ ९ ॥ बहु याचयतस्तृप्तिर्न स्यात्ते लघुदेवतः ॥ एवमुक्त्वाऽतिकोपेन करे धृत्वा तमात्मजम् ॥ १० ॥ गृहान्निष्कासयामास जननी परुषाक्षरा ॥ गृहमध्ये स्वयं गत्वा गृहकृत्यरताऽभवत् ॥ ११ ॥ एकाक्येवास्थितो बालः प्ररुदंश्च गृहांगणे ॥ हृदीत्थं चिंतयामास महादेवोखिलेषु यः ॥ १२ ॥ बाल्यत्वान्न मया ज्ञातः केन मे कथ्यतेऽधुना ॥ ज्ञानहीनस्य बालस्य मेऽग्रतः सोऽखिलेश्वरः ॥ १३ ॥ कृपयाविर्भवत्वद्य दातुं मत्तृप्तिकृत्पयः ॥ श्रीदेवेंद्र उवाच ॥ इत्थं चिंतयतस्तस्य ह्याविर्भूय शंकरः ॥ १४ ॥ बालायापि निजं स्तोत्रं कर्तुं ज्ञानं ददौ महत् ॥ लब्ध्वा शिवात्परं ज्ञानं शिवस्तोत्रं चकार सः ॥ १५ ॥ पुराणे विश्रुतं सद्भिः पठ्यते द्यापि कामदम् ॥ प्रसिद्धत्वान्न तत्प्रोक्तं पिष्टपेषणवत्पुनः ॥ १६ ॥ स्वोत्थज्ञानस्य बालस्य स्तोत्रेण मुदितः शिवः ॥ स्वांभःप्रपुष्टमेघानां जलैर्भूगैरिवांबुधिः ॥ १७ ॥ आविर्भूयास्य पुरतः पंचवक्त्रो दशायुधः ॥ कृत्तिवासास्त्रिनयनः सोमः कर्पूरभास्वरः ॥ ॥ १८ ॥ नंदिगः पश्यतस्तस्य तं नीत्वा क्षीरधेस्तटम् ॥ इत्थमाह मया दत्तः पानार्थं ते पयोनिधिः ॥ १९ ॥ यथेच्छं त्वं पयःपानमुपमन्यो मुदा कुरु ॥ त्वमेवाधिपतिश्चास्य पयःपानार्थिनस्तु ये ॥ २० ॥

आत्मनः उत्पन्नं ज्ञानं यस्य तस्य बालस्य स्तोत्रेण शिवः स्वोदकेन प्रपुष्टमेघानां संबंधिभिर्भूगैर्भूमिप्राप्तैर्जलैः समुद्र इव प्राप्तानंदः सन् अस्योपमन्योरग्रे प्रादुर्भूय तस्य पश्यतः सतस्तं क्षीरनिधेस्तटं नीत्वा इत्थमाहेति तृतीयेन सहान्वयः ॥ १७ ॥ उमया सहितः ॥ १८ ॥ १९ ॥ पयःपानार्थिनः इत्युत्तर

युक् ॥ २० ॥ उपमन्युरित्युत्तरान्वयि ॥ २१ ॥ तत्र क्षीरसमुद्रे ॥ २२ ॥ २३ ॥ शिवभक्तिरहितेऽत्र कलियुगे । २४ ॥ चतुरधिकशततमसंख्य मुपमन्युमानंदं गुरुं प्रणमति स इति ॥ २५ ॥ २६ ॥ आसीदित्यध्याहारः ॥ २७ ॥ सद्विद्या सद्बुद्ध्या ॥ २८ ॥ २९ ॥ यस्याः कन्यायाः ॥



त्वदाज्ञयैव ते पानं करिष्यंति न चान्यथा ॥ इत्युक्त्वांतर्दधे शंभुरुपमन्युः पयोनिधेः ॥ २१ ॥ लब्ध्वाधिपत्यं तत्रैव तस्थौ नित्यं पयः पिबन् ॥ बभूव मुनिवर्योऽसौ प्रसिद्धोऽथ जगत्त्रये ॥ २२ ॥ शिवभक्तिरतोत्यंतं वेदवेदांगपारगः ॥ तस्य वंशस्य विस्तारोऽप्यासीत्सर्वधरातले ॥ २३ ॥ कलावस्मिन्महाघोरे शिवभक्तिविवर्जिते ॥ अवतीर्णः स एवात्र शिवभक्तिप्रवर्तने ॥ २४ ॥ स शैवधर्मस्य भुवि प्रतिष्ठां कृत्वा तथोमापतये रहस्यम् ॥ उक्त्वा निजं स्थानमगाच्चतुर्युक्शताख्यसंख्यान्तिममानताः स्मः ॥ २५॥ श्रीदेशिकेंद्र उवाच ॥ उमापत्यानंदनाथः शिवः साक्षाद्धरातले ॥ अवतीर्ण उमादेव्याः प्रीतये तत्कथां शृणु ॥ २६ ॥ कश्चित्कर्नाटके देशे ब्राह्मणो वेदपारगः ॥ श्रीविद्याचाररतो नित्यमात्मवान्विमलाशयः ॥२७ ॥ तस्य भार्यापि सद्वृत्ता पतिभक्तिरता सदा ॥ पंचपुत्राश्च तस्यां स्युर्विद्वांसः सद्विद्याखिलाः ॥ २८ ॥ कन्या चैकापि जातास्य तत्प्राप्त्यै परदेवताम् ॥ प्रार्थयामास बहुधा कन्यां देहीति मेंऽबिके ॥ २९ ॥ दानेन यस्याः सुखिनो दश पूर्वे दशापरे ॥ न कन्यादानसदृशमन्यद्दानं जगत्त्रये ॥ ३० ॥ अतः सा भवतान्मातस्त्वत्प्रसादात्सुकीर्तिदा ॥ इत्थं संप्रार्थिता देवी भक्तवश्यातिवत्सला ॥ ३१ ॥ स्वयमेवाभवत्तस्य कन्या सर्वगुणाकरा ॥ शुभलक्षणसंपन्नां दृष्ट्वा तां स द्विजोत्तमः ॥ ३२ ॥ चकारोमेति तन्नाम ज्ञात्वोमां तां धरागताम् ॥ विवाहयोग्या सा जाता वयसाऽष्टाब्दिकाथ ताम् ॥ ३३ ॥ दृष्ट्वा चिंतान्वितः प्राह स्वभार्यां स द्विजोत्तमः ॥ कस्मै देया मया कन्या सुरूपा शुभलक्षणा ॥ ३४ ॥ देवतांशैव मे भाति प्राकृतेयं न सर्वथा ॥ भूतले दृश्यते मह्यं नानया सदृशो वरः ॥ ३५ ॥

॥ ३० ॥ भवतात् भवतु उत्तरार्द्धमुत्तरान्वयि ॥ ३१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३२ ॥ धरां प्राप्ताम् । अथेत्युत्तरान्वयि ॥ ३३ ॥ ३४ ॥ ३५ ॥

अखिलदेशतः सर्वदेशेभ्यः ॥ ३६ ॥ सद्वरातये उत्तमवरलाभाय ॥ ३७ ॥ ३८ ॥ गोरथैः वृषयुक्तशकटैः ॥ ३९ ॥ अथ कथांतरे ॥ ४० ॥ पुरा उमावतारात्पूर्वम् ॥ ४१ ॥ ४२ ॥ अनंगः कामः । शंकरविशेषणानि पूर्वान्वितानि ॥ ४३ ॥ ४४ ॥ मत्पत्नी जाता उत्पन्नास्तीत्यन्वयः ॥ ४५ ॥

काशीमेवाद्य गच्छामि तत्र चाखिलदेशतः ॥ विद्वांसो बहवो यांति यात्रार्थं स्त्रीसुतान्विताः ॥ ३६ ॥ तत्राप्यनेके संत्येव पंडिताः ख्यातकीर्तयः ॥ अतस्तत्रैव गंतव्यं दुहितुः सद्वरातये ॥३७॥ अनया सदृशः कश्चिद्गुणवान्पंडितात्मजः ॥ अस्ति चेद्धि मया देया कन्याऽस्मै विश्वसुंदरी ॥ ३८ ॥ इत्थं विचिंत्य मनसा काशिकां द्विजसत्तमः ॥ ययौ कुटुंबसहितो गोरथैर्वाजिभिश्च सः ॥ ३९ ॥ द्विजोऽथासीत्प्रतिष्ठाने विद्वाञ्छंकरभक्तिमान् ॥ पुत्रस्तस्याभवत्साक्षाच्छंकरोऽत्यंतभक्तितः ॥ ४० ॥ भविष्यति च भूलोके स्वभक्तपरितुष्टये ॥ उमेति भवितव्यं च ज्ञात्वा जातः स्वयं पुरा ॥ ४१ ॥ शंकरेति पिता नाम चकारास्य मुदान्वितः ॥ जातो द्वादशवर्षोऽथ वयसाऽसौ गुणाकरः ॥ ४२ ॥ वेदवेदांगतत्त्वज्ञः सर्वविद्याविशारदः ॥ रूपेणानंग एवाद्य तेजसाऽर्क इवापरः ॥ ४३ ॥ बहवः पंडितास्तस्मै कन्यां दातुमुपागताः ॥ स्वविवाहार्थमुद्युक्तं पितरं प्राह शंकरः ॥ ४४ ॥ कन्याभिर्नाहमेताभिर्विवाहं कर्तुमुत्सहे ॥ मत्पत्नी कुत्रचिद्देशे मन्मनस्तोषकारिणी ॥ ४५ ॥ जातास्ति सत्कुले नूनं सुरूपाढ्या गुणाकरा ॥ नान्यां पत्नीं करिष्येहं तां विना सापि मां विना ॥ ४६ ॥ मनसाप्यन्यभर्तारं न वृणोति कुतोन्यथा ॥ इत्थं पुत्रवचः श्रुत्वा चिंतयामास चेतसि ॥ ४७ ॥ मत्पुत्रचित्ता सा कन्या कस्मिन्देशेऽस्ति सद्गुणा ॥ मत्पुत्रस्य तयोद्वाहो भविष्यति कदा कथम् ॥४८॥ मत्सुतोपि मृषा नैव वक्ति स्वप्नेपि सत्यवाक् ॥ केनापि प्रत्ययेनैव प्रोक्तं तेनेदमद्य मे ॥ ४९ ॥

सापीत्युत्तरान्वयि ॥ ४६ ॥ अन्यथा शरीरेण वाचा वा ॥ ४७ ॥ मम पुत्रस्य चित्तं यस्यां सा कन्या ॥ ४८ ॥ प्रत्ययेन पूर्वजन्मज्ञानेन ॥ ४९ ॥

॥ ५० ॥ तर्हि मत्पुत्रस्य तया विवाहो भविष्यति ॥ ५१ ॥ पूर्वार्द्धं पूर्वान्वयि ॥५२॥ पुत्रसहितः । इदं पूर्वान्वयि ॥ ५३ ॥ ५४ ॥ भोः पितः ममे त्युत्तरान्वयि ॥ ५५ ॥ उपयमाय मे विवाहार्थं त्वं कन्यां याचय । मयेत्युत्तरान्वयि ॥ ५६ ॥ मिथ इत्यादि उत्तरेण योज्यम् ॥ ५७ ॥ कन्य

काशीमेवाद्य गच्छामि यात्रिणस्तत्र दूरतः ॥ आयांति तेषु सा बाला कथंचिच्चागमिष्यति ॥५०॥ मत्पुत्रस्य विवाहश्च भविष्यति तया सह ॥ इत्थं निश्चित्य मनसा परिवारान्वितो ययौ ॥ ५१ ॥ काशीयात्रामिषेणैव गोरथाश्वानुगैर्वृतः ॥ वाराणस्यां कदाचित्स नत्वा विश्वेश्वरं ययौ ॥ ५२ ॥ अन्नपूर्णालयं पुत्रसहितस्तावदेत्र हि ॥ कन्यापितापि संप्राप्तः कन्याढ्यश्चांबिकालये ॥ ५३ ॥ प्राक्प्रेमाणावि वान्योन्यं ददृशाते च तावुभौ ॥ रहस्याहूय पितरं कन्याहाऽयं पतिर्मम ॥ ५४ ॥ मां देह्यस्मै विधानेन नान्योऽस्मान्मद्वरो भुवि ॥ कुमारश्च तथा प्राह पितरं भोः पितर्मम ॥५५॥ भार्येयं दृश्यते नूनं याचयोपयमाय मे ॥ पिताप्याहेति पुत्राय मयाऽपरिचिताय ते ॥ ॥५६॥ याचितव्या कथं कन्याऽज्ञातदेशकुलाय च ॥ मिथः प्रवदतोरित्थं तयोर्जनकपुत्रयोः ॥५७॥ कन्यया प्रेरितो दृष्ट्वा कुमारं च सुलक्षणम् ॥ तत्समीपं समागत्य तदा कन्यापिता स्वयम् ॥ ५८॥ पितरं तस्य चापृच्छत्कुलशीलादिकं तथा ॥ सोपि प्राहाखिलं चास्मै श्रुत्वाऽसावपि सत्कुलम् ॥५९ ॥ परीक्ष्य विद्यां बालस्य संतुष्टोथ विधानतः ॥ शंकराय ददौ कन्यामुमानाम्नीं गुणाकराम् ॥ ॥६०॥ तौ दंपती तुल्यगुणौ सुभासौ रूपेण शीलेन च पार्वतीशौ ॥ धरावतीर्णाविति काशिसंस्थाः संमेनिरे दृष्टिमदीक्षणार्हौ ॥६१॥ तावूषतुस्तत्पितरौ सुखाढ्यौ काश्यां बभूवाथ स विद्वदग्र्यः ॥ उमापतिः शंकरसंज्ञमेनं पप्रच्छुरर्थं विबुधाः श्रुतीनाम् ॥ ६२ ॥ भ्रमन्हठात्तत्र समागतः क्ष्मां यश्चोपमन्य्वाभिधदेशिकार्यः ॥ जग्राह तस्मान्निखिलान्मनूंश्च स शंकरः सूक्ष्मतमोपि सिद्ध्यै ॥ ६३ ॥

येति सार्द्धान्वयः ॥ ५८ ॥ स वरपिता अस्मै कन्यापित्रे । असौ कन्यापिता । श्रुत्वा बालस्य कुलं विद्यां च ज्ञात्वा संतुष्टः सन् शंकराय कन्यां ददा वित्यन्वयः ॥ ५९ ॥ ६० ॥ सुभासौ तेजस्विनौ दृष्टिमद्भिः द्रष्टुं योग्यौ ॥ ६१ ॥ ऊषतुः वासं चक्रतुः । आद्यं मुख्यम् ॥६२॥ हठात् अकस्मात् क्ष्मां

भुवं भ्रमन् संचरन् । सिद्ध्यै संप्रदायसिद्ध्ये ॥ ६३ ॥ उमया सह पृथिव्यां प्राप्तं ज्ञानप्रकाशहेतुभूतं साक्षाच्छंकरं ज्ञात्वोभयसंप्रकाशं प्रकृतिपुरुषात्मकत्व बोधकम् । अमुष्य शंकरस्योमापत्यानंदेति नाम चकार ॥ ६४ ॥ सर्वान्श्रति तारकोपदेष्टा सन् । भुवि पृथिव्यां पप्रतुः पालयामासतुः ॥ ६५ ॥ पंचाधि कशततमसंख्याकमुमापत्यानंदं प्रगमति उभेति । शराभ्रविध्वन्तिमं शराः पंच अभ्रं खं विधुरेकः अंकानां वामतोगतिरितिरीत्या पञ्चोत्तरशततममित्यर्थः । ॥ ६६ ॥ एतत्सर्गोक्तगुरुद्वयकथाश्रवणादिफलमाह उपेति । क्रमेण फले । शिवप्रसादं पृथिव्यामनवद्यां शुद्धां कीर्तिं च ॥६७ ॥ इति श्रीगुरुपरंपराचरित्रे

गुरुस्तथोमापतिसौख्यनामाकरोदमुष्योभयसंप्रकाशम् ॥ ज्ञात्वोमयाऽसौ धरणीगतं तं श्रीशंकरं ज्ञानविलासहेतुम् ॥ ६४ ॥
काश्यां स विश्वेशसमोऽखिलानां सत्तारकं मन्त्रमुपादिशत्सा ॥ उमापि सर्वेष्टफलस्य दात्री मातेव पुत्रान् भुवि पप्रतुस्तौ ॥ ६५ ॥
उमापतिश्चेत्थमनंतसत्त्वो दत्त्वाथ विद्यापतये रहस्यम् ॥ ययौ परां सिद्धिममुं शराभ्रविध्वन्तिमं तं गुरुमानताः स्मः ॥ ६६ ॥
उपमन्यूमापत्योः पठेच्चरित्रं शृणोति वा भक्त्या ॥ लभते शिवात्प्रसादं तथा धरायां सुकीर्तिमनवद्याम् ॥ ६७ ॥ इति श्रीगुरुपरंप राचरित्रे पूर्वार्द्धे उपमन्यूमापत्यानंदगुरुद्वयकथावर्णनं नामाष्टचत्वारिंशः सर्गः ॥४८॥ श्रीदेशिकेंद्र उवाच ॥ विद्यापत्यानंदनाथः सदा काशीनिवासकृत् ॥ यस्यैकस्याखिलाश्चापि विद्याः सांगाः समाययुः ॥ १ ॥ कस्यापि द्विजमुख्यस्य तदा काश्यामुपस्थितिः ॥ नासीत्सांगैकविद्यस्य सर्वेऽल्पाध्ययनान्विताः ॥ २ ॥ पंडितास्तत्रैकतमो विद्यापत्याभिधोखिलाः ॥ विद्याः सांगाश्च यो वेत्ति काशीक्षेत्रेऽभिपालिताः ॥ ३ ॥ विद्याश्चैकेन निखिलाः पंडितैरुदितस्ततः ॥ विद्यापत्यभिधानेन तथा काशीस्थितैरपि ॥ ४ ॥

पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायामष्टचत्वारिंशः सर्गः ॥४८॥ ऊनपंचाशत्तमे द्विसप्तत्या पद्यतः स्मृताः । त्रयो विद्यापतिमुखा विद्योत्कर्षेण देशिकाः॥४९॥ विद्यापत्यानंदनाथ इति । समाययुः प्रापुः ॥ १ ॥ तदा विद्यापतिनिवासकाले । सांगा एका विद्या यस्य तस्य सांगैकविद्यावतः ॥ २ ॥ पंडिता इति पूर्वान्वयि । तत्र काश्याम् एकः असाधारणो विद्यापतिः सांगाः सर्वविद्याः वेत्ति । अभिपालिता रक्षिता इत्युत्तरान्वयि ॥ ३ ॥ उदितः उक्तः ॥ ४ ॥

तस्मात् विद्यापतेरित्युत्तरान्वयि ॥ ५ ॥ तेऽपि बालकाः ॥ ६ ॥ षडधिकशततमसंख्याकं विद्यापत्यानंदं प्रणमति । विद्येत्यादिना ॥ ७ ॥ ८ ॥ तेषा मित्युत्तरान्वयि ॥ ९ ॥ हार्यंते दूरीक्रियते तथेत्युत्तरान्वयि । आत्मबोधतः आत्मज्ञानेन ॥ १० ॥ विद्यामदहरणरूपेण संसारतापहरणरूपेण च हेतुद्वयेन

अथ तस्मात्पृथक्सर्वे काशीस्थाः पंडितार्भकाः ॥ वेदविद्याः शास्त्रविद्याः सांगोपांगास्तथापराः ॥ ५ ॥ अभ्यासाज्जगृहुस्तत्र बभूवु स्तेपि पंडिताः ॥ विद्यापतिं तं विश्वेशसदृशं मेनिरेऽखिलाः ॥ ६ ॥ विद्याविपानंदगुरुः प्रसिद्धो दत्त्वा रहस्यं हरणाभिधाय ॥ ययौ परां सिद्धिममुं षडूर्ध्वशतान्तिमं स्वं गुरुमानताः स्मः ॥ ७ ॥ हरणानंदनाथोऽपि सर्वविद्याविशारदः ॥ काश्यामेवावसद्धीमान्विद्वत्पूजितपादुकः ॥ ८ ॥ विद्यामदयुताः काशीं ययुर्ये देशदेशतः ॥ बहवः पंडितास्तेषां मदो येन स्वविद्यया ॥ ९ ॥ हार्यतेऽतो बुधैः प्रोक्तो हरणानंद इत्यसौ ॥ तथा ये शरणं प्राप्तास्तेषामप्यात्मबोधतः ॥ १० ॥ संसारतापजं दुःखं हार्यतेऽनेन चादितः ॥ इत्थं हेतु द्वयेनापि प्रसिद्धो हरणाभिधः ॥ ११ ॥ अथासौ हरणानंदः वार्द्धक्यं प्राप्तकालतः ॥ अशक्तो वक्तुमत्यंतं वादं कर्तुमतोऽक्षमः ॥ ॥ १२ ॥ श्लेष्मरुद्धस्वरः किंचिच्छनैर्वक्ति श्रमेण तत् ॥ वादं कर्तुमथाशक्तं ज्ञात्वा तं बहुपंडिताः ॥ १३ ॥ ययुः काशीपुरीं शिष्यैः क्रुद्धाः पूर्वावमानतः ॥ पंडितान्देशदेशस्थान्हरणाख्यावमानितान् ॥ १४ ॥ वादार्थमागतान्छ्रुत्वा काशीस्थाः पंडितास्तदा ॥ मिथः प्राहुः किमस्माभिः क्रियतामिति काशिगाः ॥ १५ ॥ वक्तुं चेपदशक्तोऽस्ति हरणानंददेशिकः ॥ पंडिताः सर्वशास्त्रज्ञाः प्राप्ताश्चात्र जयार्थिनः ॥ १६ ॥ वयं त्वेकैकशास्त्रज्ञाः स एषोत्रास्ति सर्ववित् ॥ काशीक्षेत्रमिदं ख्यातं विद्यापीठमितीर्यते ॥ १७ ॥

॥ ११ ॥ १२ ॥ तत् भाषणादिकम् । वादमित्युत्तरान्वयि तं हरणानंदम् ॥ १३ ॥ हरणानंदकृतपूर्वावमानेन । पंडितानित्यादि सार्द्धान्वयः ॥ १४ ॥ ॥ १५ ॥ १६ ॥ स हरणानंदः ॥ १७ ॥

अजयः अपजयः ॥ १८ ॥ स विश्वेश्वरः ॥ १९ ॥ निश्चयिनो निश्चयवंतः ॥ २० ॥ यो विश्वेशः स्वयमन्यनैरपेक्ष्येण जगत् महदाद्यव्याकृतम् उत्पाद्य ततो विष्णवादिरूपैः स्वमायागुणैः स्थितेः पालनस्य सृष्टेः नष्टेः संहारस्य च कर्ता निर्गुणश्च भवति । अचिंत्यम् आत्मनः सामर्थ्यं यस्य तं त्वां वयं नुमः । भुजंगप्रयातवृ० । " बहुलरजसे विश्वोत्पत्तौ भवाय नमोनमः प्रबलतमसे तत्संहारे हराय नमोनमः । जनसुखकृते सत्त्वोत्पत्तौ मृडाय नमोनमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमोनमः " इति महिम्नस्तोत्रे त्रिगुणो निर्गुणश्चोक्त इत्यर्थः ॥ २१ ॥

अत्रत्य पंडितानां किं भवेद्व्याजयो हि नः ॥ सर्वविद्येश्वरश्चास्य क्षेत्रस्यास्ति पतिः स्वयम् ॥१८॥ स एव प्रार्थनीयोद्यास्माभिर्विश्वेश्वरोऽखिलैः ॥ जयदाताखिलानां नस्तदन्यो नास्ति चाधुना ॥१९॥ इत्थं निश्चयिनः सर्वे गत्वा विश्वेश्वरालयम् ॥ पंडिताः प्रार्थयामासुर्विश्वेशं काशिकास्थिताः ॥ २० ॥ पंडिता ऊचुः ॥ जगद्यः स्वयं मायया संप्रकल्प्य यदीयैर्गुणैर्विष्णुधात्रीशमुख्यैः ॥ स्थितेः सृष्टिनष्ट्योश्च कर्ताऽगुणो यो नुमस्तं वयं त्वामतर्क्यात्मशक्तिम् ॥ २१ ॥ अनेकानि यूथानि चेत्थं स्वमायागुणैर्यः प्रकल्प्यापि नाभूद्धि कर्ता ॥ तदंतःस्थजीवाशयं वेत्त्यसंगो नुमस्तं वयं त्वामतर्क्यात्मशक्तिम् ॥ २२ ॥ कृतं जीववर्गैश्च भुंजन्नभोक्ता यथाकोंऽखिलं संस्पृशन्शुद्ध एव ॥ सदा व्योमवत्सर्वगश्चाप्यलिप्तो नुमः स्तं वयं० ॥ २३ ॥ त्वमेवेशयस्यात्मशक्त्या च विश्वमतस्त्वां हि विश्वेश्वरं प्राहुरार्याः ॥ तथा सर्वविद्येश्वरं स्वप्रकाशान्नुमस्तं वयं त्वामतर्क्यात्मशक्तिम् ॥ २४ ॥

जगत्सृष्ट्यादिकर्तृत्वेपि न कर्ता किन्त्वसंग एवेत्याह अनेकानीति । इत्थम् अनेकानि यूथानि जगत्समुदायान् " सजातीयैः कुलं यूथम् " इत्यमरः । संघश इत्यर्थः । स्वमायागुणैः प्रकल्प्य यः कर्ता भवति । वस्तुतः अकर्ता सन् जगदंतर्गतजीवांतःकरणं वेत्ति तत्र हेतुरसंग इति । तं नुमः ॥२२॥ जीवसंघैः कृतं पूर्वजन्मार्जितपुण्यादि चकाराज्जीवैरेव भुंजन् । किरणद्वारा जगत्संस्पृशन्नपि शुद्धः सदसत्स्पर्शदोषरहितः सूर्य इवाभोक्ता च यो भवति । तत्र हेतुः आकाशवत्सर्वगतः अस्पृश्यश्च तं नुमः ॥ २३ ॥ एवं सर्वकर्तृत्वेऽपि विश्वेशस्याकर्तृत्वं प्रतिपाद्येदानीं सर्वनियंतृत्वेन सर्वेश्वरं स्तुवंति त्वमेवेति । स्वशक्त्या

विश्वम् ईशयसि शिक्षयसि अतस्त्वामार्याः ज्ञानिनो विश्वेश्वरं स्वप्रकाशत्वेन सर्वविद्येश्वरं च प्राहुस्तं त्वां नुमः ॥२४॥ त्वं सत्यः सद्रूपः । काशिकां विना सर्वं जगद्विनाशि । काशी तु त्वद्रूपास्ति ननु जगदंतर्गतकाश्याः कथमविनाशित्वमत आहुः । त्वमेतज्जगत्प्रलयकाले त्रिशूले तां काशीं धारयसि तं नुमः ॥२५॥ यतस्तव प्रिया काशी अतस्तद्गतजीवानां प्राणोत्क्रमणकाले भवतारकं मंत्रमुपदिश्य अक्षयं स्थानं मोक्षाख्यं स्वप्रकाशम् आत्मज्ञानेन प्रापयसि तं नुमः । अत्र हि "जंतोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति" इति श्रुतिप्रसिद्धं मोक्षप्रदत्वं विश्वेश्वरस्येत्यर्थः ॥ २६ ॥ त्वत्प्रियकाशीनिवासिनो वयं ते तव न प्रियाः किं यतः कारणाद्दूरदेशनिवासिपंडितैर्नोऽस्माकम् इह काश्याम् अवमानं करोषि

त्वमेवासि सत्योऽखिलं नाशमेति विनाकाशिकां याऽक्षया त्वत्स्वरूपा ॥ त्वमेतल्लये तां स्वशूले बिभर्षि नुमस्तं वयं त्वामतर्क्यात्मशक्तिम् ॥ २५ ॥ तवातिप्रिया काश्यतोसुव्यये त्वं मनुं तारकं तत्स्थजीवेभ्य उक्त्वा ॥ ददास्यक्षयं स्थानमात्मप्रकाशं नुमस्तं वयं त्वामतर्क्यात्मशक्तिम् ॥ २६ ॥ वयं काशिकावासिनो न प्रियाः किं यतो दूरदेशस्थितैर्नः करोषि ॥ इहाद्यावमानं जगद्धृद्गतो यो नुमस्तं० ॥ २७ ॥ भवान्सर्वविद्येश्वरः क्षेत्रमेतत्स्थितेस्ते जगुः सर्वविद्यासुपीठम् ॥ मृषा नो करोत्वेतमद्याभिमानं नुमस्तं० ॥२८॥ श्रीदेशिकेंद्र उवाच ॥ काशीस्थैः पंडितैरित्थं स्तुतोऽथाविर्बभूव च ॥ दीप्तिमान्पार्थिवाल्लिंगात्साक्षाद्विश्वेश्वरः स्वयम् ॥ २९ ॥ पंचवक्त्रो दशभुजस्त्रिनेत्रः सर्पभूषणः ॥ जटाजूटी चंद्रमौलिः कर्पूराभपिनाकदोः ॥ ३० ॥

पंडितेभ्यः पराजयेनाऽल्पान् करोषीति । जगदन्तर्यामी यः तं त्वां नुमः ॥ २७ ॥ काश्याः विद्यापीठत्वप्रसिद्धिः न नश्यत्विति स्तुवंति भवानिति । सर्वविद्येश्वर इति "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्" इति श्रुतिप्रसिद्धोऽसि एतत्क्षेत्रं त्वन्निवासेन सर्वविद्यास्थानं जगुः प्राचीनकाशीस्था इति एतत प्राचीनवचनरूपं काशीवासिनाम् अभिनिवेशं भवान् मृषा अन्यथा न करोतु । एतदर्थं तं त्वां नुमः ॥ २८ ॥ इत्थम् एवं स्तुतः । पार्थिवात् पाषाणमयात् ॥२९॥ सार्द्धेन विशेषणानि विश्वेश्वरस्य जटाया जूटो बंधविशेषोऽस्यास्तीति पिनाकयुक्तः दोः बाहुर्यस्य 'भुजबाहुप्रवेष्टो दोः' इत्यमरात्॥ ३०॥

वामांगालिंगिता गिरिजा पार्वती येन सः कृपार्द्रदृष्टिः ॥ ३१ ॥ ३२ ॥ एकादशावधि एकादशवारम् ॥ ३३ ॥ ३४ ॥ साहाय्यं बुद्धिप्रदानेन प्रयोजकत्वम् ॥ ३५ ॥ ३६ ॥ अथेत्यादिद्वयोरन्वयः ॥ ३७ ॥ मूकानां वाग्मित्वप्रदं वाग्बीजाख्यं द्वादशस्वरूपं मंत्रं प्राह ॥ ३८ ॥ ३९ ॥

वामांगाश्लिष्टगिरिजः कृत्तिवासाः कृपार्द्रदृक् ॥ पंडितानाह तद्भीतिमपाकुर्वन्स विश्वपः ॥ ३१ ॥ श्रीविश्वेश्वर उवाच ॥ माभूद्भीतिर्मदीयानां युष्माकमजयप्रदा ॥ स्तोत्रेणानेन गीतेन तुष्टोभीष्टं करोमि वः ॥३२॥ इदं चाभीष्टदं स्तोत्रं नित्यमेकादशावधि ॥ पठेदेकादश दिनं यस्तस्याभीष्टदोऽस्म्यहम् ॥३३॥ गच्छन्तु हरणानंदं भवन्तो हि मदाज्ञया ॥ स एव भवतां कार्यं जरठोऽपि करिष्यति ॥३४॥ साहाय्यं तस्य कुर्वेऽहं गुरुभक्तस्य पंडिताः ॥ भवद्भिर्नैव कर्त्तव्यः संशयः कार्यसिद्धये ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ उक्त्वेत्यंतर्दधे देवः पंडिताश्चाखिलास्ततः ॥ हरणानंदमेत्याहुर्नत्वा विश्वेश्वरोदितम् ॥ ३६ ॥ अथासौ हरणानंदः संस्मरन्गुरुपादुकाम् ॥ बटुमेकं समाहूय द्विजार्भं पंचहायनम् ॥३७॥ शिरस्यस्य निजं हस्तं दत्त्वा कर्णे शनैर्मनुम् ॥ वाग्बीजाख्यं परं प्राह मूकवाचालताप्रदम् ॥३८॥ पंडितांश्चाह युष्माभिर्गत्वा विश्वेश्वरालयम् ॥ सभा तत्राद्य कर्तव्या तान्समाहूय पंडितान् ॥ ३९ ॥ भवतां कार्यमखिलं बटुरप्ययमेकलः ॥ करिष्यत्यखिलाञ्जित्वा काशीविजयकृद्भुवि ॥४०॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा ते पंडिताः सर्वे बटुं दृष्ट्वा लघुं हृदि ॥ स्वजये संशयाढ्याश्च स्मृत्वा विश्वेशभाषितम् ॥४१॥ तेन धैर्यान्विताः शीघ्रं ययुस्तस्याद्यमंडपम् ॥ प्रेष्य शिष्यान्समाहूताः काशीस्थैरन्यदेशगाः ॥४२॥ पंडितास्तेपि वेगेन ययुर्वादोत्सुकाः सभाम् ॥ बभूवाथ महान्वादः काशीस्थैरन्यदेशिनाम् ॥४३॥ न्यायवेदांतमीमांसाशब्दशास्त्रीयसूक्तिभिः ॥ ज्ञात्वा जेतुमशक्यांस्तान्काशीस्थाः प्राहुरित्यथ ॥४४॥ वर्णयंतः काशिकायाः श्रैष्ठ्यं विश्वेश्वरस्य च ॥ काशीस्था ऊचुः विद्यापीठमिदं क्षेत्रं सर्वविद्येश्वरस्तु यः ॥४५॥ स ईशानोभिमान्यस्य साक्षाद्विश्वेश्वराभिधः ॥ तत्रत्यैरधुनास्माभिर्युष्माभिर्देशदेशगैः ॥४६॥

भुवि काश्याः जयप्रापकः ॥ ४० ॥ श्रुत्वेति सार्द्धान्वयः ॥ ४१ ॥ तेन विश्वेशभाषणेन धैर्ययुक्ताः संतस्तस्य शिवस्याद्यं मुख्यं मंडपं ययुः ॥ ४२ ॥ ॥ ४३ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ४४ ॥ वर्णयंत इति पूर्वान्वयि ॥ ४५ ॥ अस्य क्षेत्रस्य । तत्रत्यैः काशीस्थैरित्युत्तरान्वयि ॥ ४६ ॥

यतः वादेन । युष्माकमित्युत्तरान्वयि ॥४७॥ अमुना पुरःस्थितेन। अयं।बटुः वः युष्मान् जेता जेष्यति । सर्वेषामिति कर्तरि षष्ठी। सर्वैः भवद्भिः क्षेत्रसामर्थ्यं द्रष्टव्यम् ॥ ४८ ॥ ४९ ॥ अबुद्धिना अल्पबुद्धिना ॥ ५० ॥ इदं भवद्वाक्यम् ॥५१॥५२॥५३॥ हरिः सिंहः । अल्पवयसा युक्तोहं विजेष्ये युष्मानिति शेषः । यतो गुरुपुत्रः ॥ ५४ ॥ ५५ ॥ पूर्वार्द्धं पूर्वान्वितम् । उत्तरार्द्धमुत्तरान्वितम् ॥ ५६ ॥ सर्वदेशतमांसि सर्वदेशगतांधकारान् ।

कथं वादोल्पविद्याभिरस्माकं लघुता यतः ॥ युष्माकं चेन्महानस्ति विद्यागर्वस्तदाखिलैः ॥ ४७ ॥ सर्वशास्त्रोक्तिभिर्वादः क्रियतां बटुनाऽमुना ॥ जेताऽयं योस्ति सर्वेषां पश्यतां क्षेत्रवैभवम् ॥ ४८ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्यन्यपुरस्थास्ते प्राहुः काशीस्थ पंडितान् ॥ वयसाऽयं लघुर्बालः क्रीडार्हः पञ्चहायनः ॥ ४९ ॥ वयं वृद्धाः कथं कुर्मोऽनेन वादमबुद्धिना ॥ विद्याभिर्वयसा बुद्ध्या तुल्यैर्वादो न चान्यथा ॥ ५० ॥ इदं हास्यास्पदं वक्तुमप्ययोग्यं भवादृशाम् ॥ युष्माभिरेव वादेन कर्त्तव्योऽस्मत्पराजयः ॥ ५१ ॥ श्रुत्वेत्यन्यपुरस्थानां पंडितानां वचो बटुः ॥ प्रगल्भं वचनं प्राह तोषयन्क्षेत्रवासिनः ॥ ५२ ॥ बटुरुवाच ॥ कन्यादानार्थमेवायैर्वयो यत्नाद्विचार्यते ॥ वादे किं तेन कार्यं स्याद्बुद्धिरेवात्र कारणम् ॥ ५३ ॥ जन्मनैव यथा हंति हरिर्बालो मतंगजान् ॥ तथाल्पवयसाहं वै विजेष्ये देशिकार्भकः ॥ ५४ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति बटुवाक्यं ते क्रुद्धाः सर्वेपि पंडिताः ॥ एकदैवाखिलाश्चक्रुः पूर्वपक्षाननेकशः ॥ ५५ ॥ दुर्भेदाभिर्महद्भिश्च पृथक्छास्त्रमतोक्तिभिः ॥ अथासौ बटुरेकोपि चरणौ श्रीगुरोः स्मरन् ॥ ५६ ॥ तत्तच्छास्त्रोक्तिभिश्चक्रे यामार्द्धात्तान्निरुत्तरान् ॥ सर्वदेशतमांस्यर्को भित्त्वैकः शोभते यथा ॥ ५७ ॥ बटुस्तथैव जित्वाऽयं सर्वदेशस्थपंडितान् ॥ इति दृष्ट्वा बटोः शक्तिं लज्जितास्ते महाधियः ॥ ५८ ॥ मिथः प्रोचुरहो जातमिदमत्यद्भुतं खलु ॥ यैरस्माभिर्जिताः सर्वे पंडिता जगति स्थिताः ॥ ५९ ॥ दिवैकद्विमहादीपाः सर्वभूविजयान्विताः ॥ वयं तेऽनेन बटुनाऽत्र जिता पंडितोत्तमाः ॥ ६० ॥

भित्त्वा नाशयित्वा अर्को यथा शोभते तथा सर्वपंडितान् जित्वा शुशुभे इति योज्यम् ॥ ५७ ॥ बटोरित्युत्तरान्वयि ॥ ५८ ॥ अद्भुतमेवाह । यैरित्युत्तरान्वयि ॥५९॥ दिवा अहनि एकद्विसंख्याकाः महादीपाः ' मशालीति ' प्रसिद्धाः येषां ते सर्वभूविजयेन शोभिताः यैः पराजितास्ते वयं अनेन पंचवर्षेण

बटुना अत्र काश्यां जिताः स्मः ॥ ६० ॥ एतदिति सार्द्धान्वयः । अस्य बटोः तदुक्तस्य गुरूक्तस्य मंत्रस्य ॥ ६१ ॥ महताम् अल्पात्पराजयो मृत्यो मरणादपि वरो महान् हि ॥ ६२ ॥ ६३ ॥ तं हरणानंदम् आहुः । पंडिता इत्यनुवृत्तिः । तस्मै हरणानन्दाय । यज्जातं वर्तमानमित्यर्थः ॥ ६४ ॥६५॥ देव्याः मंत्रस्य गुरोश्च अदः इदं वैभवं सामर्थ्यम् । उत्तरार्धमुत्तरान्वयि ॥६६॥ सती समीचीना दया यस्मिन् सः ॥६७॥ वामनेन यथा बलिर्जितस्तथा

एतत्क्षेत्रस्य माहात्म्यमुत विश्वेश्वरप्रभोः ॥ अथवास्य गुरोरेव तदुक्तस्य मनोरुत ॥६१॥ न जानीमो वयं सर्वे संशयोद्विग्नमानसाः ॥ मृत्योरपि वरो ह्यल्पान्महतां तु पराजयः ॥ ६२ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं लज्जायुतास्तेऽथ ययुः स्वस्वपुराणि च ॥ बटुना सह काशीस्था हरणानंदमाययुः ॥ ६३ ॥ तं नत्वाऽथाहुरखिलं यद्वै विश्वेश्वरालये ॥ सभायां जातमेतस्मै बटोर्विजयसूचकम् ॥ ६४ ॥ तच्छ्रुत्वा हरणानंदो हर्षेण महता वृतः ॥ बटुं तमालिलिङ्गाग्रे आनन्दाश्रुपरिप्लुतः ॥ ६५ ॥ देवीमंत्रगुरूणां वै मेनेऽशे वैभवं परम् ॥ सुमुहूर्तेऽथ बटवे मंगलस्नानपूर्वकम् ॥ ६६ ॥ कृतालंकरणायासौ सर्वमंत्रमयीं ददौ ॥ दीक्षां बुद्धिगरिष्ठाय वयोऽल्पायापि सद्दयः ॥६७॥ विष्णुना वामनाख्येन बटुना लघुना जितः ॥ त्रिविक्रमेणैव बलिः तथानेनापि पंडिताः ॥६८॥ जगत्यां मानिनोऽल्पेन ह्यधुना लीलया जिताः ॥ अतोस्य वामनानंद इति नाम चकार सः ॥ ६९ ॥ इत्थं हि सिद्धो हरणाभिनंदो यो वामनाख्याय समर्प्य मन्त्रान् ॥ सप्ताभिवृद्धैकशतान्त्यसुस्थः सिद्धिं ययौ तं स्वगुरुं नताः स्मः ॥ ७० ॥ इत्थं वयोल्पोपि च पंडितार्याञ्जिग्ये गुरोर्यः कृपयैव काश्याम् ॥ तं वामनानंदमथाष्टवृद्धशतान्तिमं स्वीयगुरुं नताः स्मः ॥ ७१ ॥

नेन सर्वपृथिव्यां वयं विद्वांस इत्यभिमानवंतो जिताः । अतो हेतोर्वामनानंद इति नाम चकारेत्यन्वयः ॥ ६८ ॥ ६९ ॥ सप्ताधिकशततमं हरणानंदं प्रणमति इत्थमिति ॥ ७० ॥ अष्टोत्तरशततमं वामनानंदं प्रणमति इत्थमिति । वयोल्पः वयसा लघुः । जिग्ये जितवान् । तं नताः स्मः ॥ ७१ ॥

विद्यापत्यादिगुरुत्रयकथाश्रवणादिफलं क्रमेणाह । विद्यापतिमुख्यानामिति ॥ ७२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायामेकोनपंचाशत्तमः सर्गः ॥ ४९ ॥ द्वौ पंचाशत्तमे प्रोक्तौ समसप्ततिपद्यतः । गुरू संकुलकानंदस्तथैवाद्भुतपुण्यवान् ॥ ५० ॥ वामनानंदनाथस्येति । पावनीं पवित्राम् ॥ १ ॥ २ ॥ कश्चिदिति द्वयोरन्वयः ॥ ३ ॥ संकुलितः संकीर्णः । " संकीर्णे संकुलाकीर्णे " इत्यमरः । सदा संयुक्त इत्यर्थः ॥ ४ ॥

विद्यापतिमुख्यानां कथात्रयाणां शृणोति यो मर्त्यः ॥ विद्वत्त्वं ह्यरिनाशः सुपुत्रता चापि लभ्यते तेन ॥ ७२ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे विद्यापत्यानंदादिगुरुत्रयवर्णनं नामैकोनपंचाशत्तमः सर्गः ॥ ४९ ॥ श्रीदेशिकेंद्र उवाच ॥ वामनानंदनाथस्य शिष्यः सर्वगुणाकरः ॥ संकुलानंदनामासीत्तत्कथां शृणु पावनीम् ॥१॥ यदासीद्वामनानंदस्त्वप्राप्तगुरुपादुकः ॥ चिक्रीडे स्ववयस्तुल्यैर्वयसा पंचहायनः ॥ २ ॥ कश्चिद्द्विजार्भस्तेष्वासीद्वामनाख्येन सर्वदा ॥ शयने भोजने पाने गमनागमने स्थितौ ॥ ३ ॥ नानाक्रीडाविहारेषु सह संकुलितोऽमुना ॥ न जहाति क्षणं चैनं वामनोपि तथैव तम् ॥ ४ ॥ एवं मिथः संकुलितौ तौ बाल्ये क्रीडने रतौ ॥ आस्तां तयोर्वामनोयं पूर्वपुण्येन सद्गुरोः ॥ ५ ॥ कृपया लब्धसन्मंत्रस्तत्प्रभावेण पंडितान् ॥ बाल्य एवाखिलाञ्जिग्ये कर्मणा तेन विश्रुतः ॥६॥ वामनानंदनामासीत्संप्रदायप्रवर्तकः ॥ सिद्धिं गते गुरौ सोऽथ गुरूक्तान्सकलान्मनून् ॥७॥ पुरश्चर्याविधानेन जजापाखिलसिद्धिदान् ॥ बभूवुश्चाखिला मंत्राः सिद्धास्तस्याथ तैरयम् ॥ ८ ॥ बभूव सर्वसिद्धार्यः प्रौढतां वयसाप्यगात् ॥ सिद्धवर्यममुं ज्ञात्वा सोऽथ बाल्यातिसंगतः ॥ ९ ॥ वामनानंदमेत्याह नत्वा स्थित्वा कृतांजलिः ॥ आवां क्रीडारतौ पूर्वं बाल्ये तु सहचारिणौ ॥ १० ॥

आस्ताम् आसतुः । तयोरित्युत्तरान्वयि ॥ ५ ॥ तत्प्रभावेण मंत्रसामर्थ्येन जिग्ये जितवान् । तेन जयकर्मणा । वामनानंद इति नाम्ना संप्रदायप्रवर्तक आसीदित्यन्वयः ॥ ६ ॥ स वामन इत्युत्तरार्द्धमुत्तरान्वयि ॥ ७ ॥ तैर्मंत्रैरयं वामन इत्युत्तरान्वयि ॥ ८ ॥ सर्वसिद्धार्यः सर्वसिद्धश्रेष्ठः । अमुं वामनं

बाल्यावस्थायामतिसंगात् । उत्तरार्द्धमुत्तरान्वयि ॥ ९ ॥ १० ॥ सिद्धिं सिद्धभावं समानयोरावयोर्वैपरीत्यं सिद्धिलाभालाभरूपो विपरीतभावो मास्तु ॥ ११ ॥ पूर्वार्द्धं पूर्वान्वयि । मां विना त्वं क्षणमात्रं नासीः त्वां विनाहं क्षणमात्रं नासमित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥

दैवात्त्वं सिद्धिमापन्नः कृपया श्रीगुरोः सखे ॥ नाहं तथेत्थं मास्त्वेव वैपरीत्यं समानयोः ॥ ११ ॥ वयसा सततं चैकमनसोस्तुल्यलीलयोः ॥ क्षणं नासीः पुरा त्वं तु मां विनाहं त्वया विना ॥ १२ ॥ स्मृतिमप्यधुना मे त्वं न करोषि कदापि च ॥ गतं तदखिलं कुत्र ते यत्प्रेम पुरा मयि ॥ १३ ॥ ज्ञात्वा त्वं बालमित्रं मां मयि कारुण्यवान्भव ॥ यथा प्रेम्णा समानत्वमासीद्बाल्ये पुरावयोः ॥ १४ ॥ अधुनापि तथैवास्तां मुहुस्त्वां प्रार्थयाम्यहम् ॥ बालमित्रेण तेनेत्थं वामनानंददेशिकः ॥ १५ ॥ प्रार्थितः कृपया तस्मै सर्वमंत्रमयीं ददौ ॥ दीक्षां दीक्षाविधानज्ञः संकुलानंदमित्यसौ ॥ १६ ॥ शोभनं नाम चक्रेऽस्य स्वेन संकुलितो यतः ॥ प्रागासीत्संकुलानन्दः सर्वसिद्धसुपूजितः ॥ १७ ॥ दीक्षाप्रभावेण महाप्रभावो जातोद्भुताख्याय परं रहस्यम् ॥ सार्वात्म्यसिद्धिं प्रययौ नवाग्रशतान्तिमाढ्यं गुरुमानताः स्मः ॥ १८ ॥ आसीदद्भुतपुण्याख्यानंदश्चात्मविदां वरः ॥ यथेयमाख्या जातास्य कथां मत्तः शृणुष्व ताम् ॥ १९ ॥ प्रागंबानंदसंज्ञोऽसौ भागीरथ्यास्तटेऽमले ॥ पुण्यदेशेतिविख्याते चार्यावर्ते सदाऽवसत् ॥ २० ॥ शिवार्चाभिरतोत्यंतं शिष्यसंघसमावृतः ॥ वेदवेदांगतत्त्वज्ञो मंत्रशास्त्रविशारदः ॥२१॥ तद्देशाधिपतिश्चासीद्देवब्राह्मणभक्तिमान् ॥ दुर्जनानां तापदायी सज्जनानं ददायकः ॥ २२ ॥ पुत्रानिव प्रजाः पाति शत्रुसंतापकारकः ॥ येनेप्सितार्थदानेन याचकाः सधनाः कृताः ॥ २३ ॥

॥ १५ ॥ संकुलानंदमित्युत्तरान्वयि । असौ वामनानंदः ॥ १६ ॥ असौ संकुलानंदः ॥ १७ ॥ नवाधिकशतसंख्याकं संकुलानंदं प्रणमति । य इति ॥ १८ ॥ इयम् अद्भुतपुण्यरूपा ॥ १९ ॥ आर्यावर्ते पुण्यभूमौ । “ आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः ” इत्यमरः ॥ २० ॥ शिवार्चैत्या

दिपूर्वान्वयि ॥ २१ ॥ २२ ॥ २३ ॥ दंपत्योरित्युत्तरान्वयि ॥ २४ ॥ तदा पुत्रजन्मकाले ॥ २५ ॥ अतिसुरूपतः अतिलावण्येन हेतुना मदनसिंहेति नाम कृतम् । राज्ञः प्रीत्या सह ववृधे । राजप्रीतिरपि वृद्धिं गतेत्यर्थः ॥ २६ ॥ वाचा किंचिन्नवक्ति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ कर्मवि

वीरसिंह इति ख्यातः पत्न्यस्येंदुमती सती ॥ दंपत्योस्तु तयोर्दैवाद्बहुकालाऽनपत्ययोः ॥ २४ ॥ अनेकव्रतदानाद्यैर्जातः पुत्रः सुलक्षणः ॥ दत्तान्यनेकदानानि याचकेभ्यस्तदा मुदा ॥ २५ ॥ राज्ञा मदनसिंहाख्या कृताऽस्याऽतिसुरूपतः ॥ ववृधे स शिशू राज्ञो मुदा सह दिनेदिने ॥ २६ ॥ स बालः पंचवर्षोपि वाचेषद्वक्ति नो क्वचित् ॥ महतीं प्राप चिंतां तु मूकं दृष्ट्वात्मजं नृपः ॥ २७ ॥ उपायान्बहुधा चक्रे मणिमंत्रौषधीमुखान् ॥ तस्य वाक्सिद्धयेऽथापि नासौ वाचालतामगात् ॥ २८ ॥ जातो द्वादशवर्षोपि मूक एवास्ति तत्सुतः ॥ तदा पितापि चिंताढ्यः सुखं नैवाप कुत्रचित ॥ २९ ॥ समाहूयाथ काशीस्थान्विदुषो ब्राह्मणोत्तमान् ॥ नत्वा शुकाद्यैः संपूज्य तान्पप्रच्छ कृतांजलिः ॥ ३० ॥ राजोवाच ॥ वदंतु ब्राह्मणाः सर्वे काशीस्थाः पंडितोत्तमाः ॥ दृष्ट्वा मद्बालचिह्नानि कर्मपाकं विचार्य च ॥ ३१ ॥ केनायं पूर्वपापेन मूको जातो हि जन्मतः ॥ पुण्योपायेन केनाढ्या लभ्यतेऽनेन वागिति ॥ ३२ ॥ यानि दानानि देयानि चास्य वाक्सिद्धये तथा ॥ जपहोमाद्यनुष्ठानं कार्यं यत्सम्यगीर्यताम् ॥ ३३ ॥ श्रीदेशिकेंद्र उवाच ॥ इति श्रुत्वा तत्सुतस्य दृष्ट्वा सामुद्रिकादिकम् ॥ तथा कर्मविपाकं च बालवाक्प्रतिबंधकृत् ॥ ३४ ॥ पापं तच्छमनोपायं नृपायाहुः सुशास्त्रतः ॥ पंडिता ऊचुः ॥ नृपाखिलानि चिह्नानि शुभान्येव सुतस्य ते ॥ ३५ ॥ दीर्घायुष्काणि राज्यश्रीयशोदानि यथार्थतः ॥ प्राग्भवे नृप एवायं याचकेभ्योतिदानदः ॥ ३६ ॥

पाकं पूर्वकर्मफलम् ॥ ३१ ॥ इति विचार्येति पूर्वेणान्वयः ॥ ३२ ॥ यत्कर्तव्यं तत्सर्वमीर्यतां कथ्यताम् । भवद्भिरिति शेषः ॥ ३३ ॥ इति श्रुत्वेति सार्द्धान्वयः ॥ ३४ ॥ सुशास्त्रतः शास्त्रविचारेण । एकस्य सुतस्य ॥ ३५ ॥ पूर्वार्द्धं पूर्वान्वयि । नृपो राजाऽऽसीत् । अतिशयेन दानकर्ता ॥ ३६ ॥

॥ ३७ ॥ अत्र अस्मिन् जन्मनि च अनेकदानपुण्यैर्नृपात्मजो बभूव । अस्येत्याद्युत्तरान्वयि ॥ ३८ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३९ ॥ इत्थमित्युत्तरत्रा न्वेति ॥ ४० ॥ तद्भवेन दानोत्पन्नेन ॥ ४१ ॥ तेन दानेन अस्य राज्ञो बालकः षण्मासैः स्खलद्वाण्या किंचित् उक्तवानित्यन्वयः ॥ ४२ ॥ ततोऽ

दत्त्वा दानान्यनेकानि ब्राह्मणान्परुषाक्षरैः ॥ भर्त्सयामास तेनास्य वाग्बंधः पापकर्मणा ॥ ३७ ॥ नानादानभवैः पुण्यैर्भवेऽत्रासी न्नृपात्मजः ॥ अस्य वाग्बंधमोक्षाय पुस्तकानां नृपाधुना ॥ ३८ ॥ देहि दानान्यनेकानि हेमाम्रांशुकवंति च ॥ प्रौष्ठपद्यां पौर्ण मास्यां हेमसिंहोपरि स्थितम् ॥३९॥ दत्तं भागवतं येन वाचा वाक्पतिरेव सः ॥ इत्थमष्टादशानां च पुराणानां पृथक्पृथक् ॥ ४० ॥ प्रतिमासं वेदविद्भ्यो देहि दानानि भक्तितः ॥ पुण्येन तद्भवेनास्य वाक्छक्तिरुदियाद्भृशम् ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ ददौ निशम्य राजा तत्पुराणानामशेषतः ॥ दानं भक्तियुतस्तेन षण्मासैरस्य बालकः ॥ ४२ ॥ स्खलद्वाचेषदेवाह नातितुष्टो नृपस्ततः ॥ तान्विप्रान्पुनराहूय नत्वेत्याहातिभक्तितः ॥ ४३ ॥ राजोवाच ॥ भवद्भिस्तु यथोक्तं मे तथा दानं कृतं मया ॥ तत्पुण्यान्मे सुतो वक्ति स्खलद्वाण्येषदेव हि ॥४४॥ यथा वक्ष्याति सुस्पष्टं तथान्यच्चाद्य कथ्यताम् ॥ निशम्यैतन्नृपोक्तं ते दृष्ट्वा ग्रंथाननेकशः ॥ ४५ ॥ वाग्दा सरस्वती देवी तूपास्येति जगुर्नृपम् ॥ तामेवाराधयामासुर्जपैर्वैदिकतांत्रिकैः ॥ ४६ ॥ स्तोत्रपाठैश्च तन्मूर्तेः पूजनैरुपचारतः ॥ त्रिसप्तकादिनैरित्थमनुष्ठानं कृतं द्विजैः ॥ ४७ ॥ होमो जपदशांशेन कृतस्तत्तद्विधानतः ॥ तर्पणं मार्जनं विप्रभुक्तिश्च नृपवित्ततः ॥ ॥ ४८ ॥ अनुष्ठानसमाप्तौ तु स्वप्न आचार्यमेव हि ॥ साक्षात्सरस्वती प्राह तं भो विप्र त्वया द्विजैः ॥ ४९ ॥ कृतं राज्ञस्त्वनुष्ठानं मन्मंत्रैस्तोषितास्म्यतः ॥ प्रवक्ष्ये राजपुत्रस्य यथा वाग्विशदाक्षरा ॥ ५० ॥

स्पष्टभाषणेनातिसंतुष्टो नाभवत् ॥ ४३ ॥ ४४ ॥ अन्यत्कर्तव्यं भवद्भिः कथ्यताम् । उत्तरार्द्धमुत्तरान्वयि ॥ ४५ ॥ ४६ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ॥४७॥ द्विजैरित्यनुवृत्तिः ॥४८॥ भो विप्रेत्याद्युत्तरान्वयि ॥४९॥ राजपुत्रस्य वाणी यथा येन साधनेन भविष्यति तदहं प्रवक्ष्ये इत्यन्वयः ॥ ५० ॥

तत् मयोक्तम् अथ कर्तव्यम् । अन्यत्साधनं न कर्तव्यमित्यर्थः ॥ ५१ ॥ तत् पापम् अस्य बालस्याद्भुतं दिचित्रमस्ति ॥ ५२ ॥ ५३ ॥ तम् अद्भुतपुण्यदातारमहं वक्ष्ये । मन्मंत्राणामित्युत्तरान्वयि ॥ ५४ ॥ तस्मिन् अंबानंदे इत्युत्तरान्वयि ॥ ५५ ॥ ५६ ॥ ५७ ॥ नानानुष्ठानानि कुर्वंति तैः शिष्यैर्युक्तम् अखिलाः सर्वाः सिद्धयो येषु तैः ॥ ५८ ॥ सर्वाणि मठविशेषणानि ॥ ५९ ॥ तत्र मठे आसने समासीनमंबानंदं राजा ननामेति तृती

भविष्यति तदेवाद्य कार्यं नैवान्यसाधनम् ॥ क्रूरवाग्भयजान्नान्यत्पापं वाक्छक्तिरोधकम् ॥ ५१ ॥ तदेवाद्भुतमस्यास्ति प्राग्जन्माचरितं खलु ॥ नानुष्ठानशतैर्दानैः क्षयश्चास्य भविष्यति ॥ ५२ ॥ कश्चिदत्यद्भुतं पुण्यं मन्मंत्रोपासनाभवम् ॥ दास्यत्यस्मै तदैवास्य वाङ्नूनं स्यात्स्फुटाक्षरा ॥ ५३ ॥ तं च वक्ष्येऽस्ति जाह्नव्याः पश्चात्तीरेऽतिविश्रुतः ॥ अंबानंदस्तु मद्भक्तो मन्मंत्राणां बहून्यसौ ॥ ॥५४॥ पुरश्चर्यासहस्राणि कृतवान्हि विधानतः ॥ तस्मिन्नेवाद्भुतं पुण्यं मत्पुरश्चरणोद्भवम् ॥ ५५ ॥ अस्ति नान्यत्र कुत्रापि तस्माद्राज्ञा स एव हि ॥ प्रार्थनीयोद्भुतं पुण्यं दातुं निजसुताय च ॥ ५६ ॥ इत्युक्त्वांतर्दधे देवी तदाऽचार्योऽपि जागृतिम् ॥ प्राप्योत्थाय स्ववृत्तांतं प्रातराह नृपाय सः ॥ ५७ ॥ संप्रहृष्टो ययौ विप्रैरंबानंदमठं नृपः ॥ नानानुष्ठानकृच्छिष्यैर्युक्तं चाखिलसिद्धिभिः ॥५८॥ शोभितं सफलैर्वृक्षैरुच्चप्राकारगोपुरम् ॥ रमणीयचतुःशालं सर्वसंपत्समन्वितम् ॥ ५९ ॥ तत्रासने समासीनमंबानंदं तपस्विनम् ॥ पूजयंतं परामंबामागमोक्तोपचारतः ॥ ६० ॥ सकामैः कामनासिद्ध्यै महद्भिश्चातिसंस्तुतम् ॥ निष्कामैश्चात्मलाभार्थं सेवितं श्रवणोत्सुकैः ॥६१॥ भस्मरुद्राक्षभूषाढ्यं महार्हवसनान्वितम् ॥ तपस्तेजोभासमानं साक्षादर्कमिवापरम् ॥ ६२ ॥ ननाम दंडवद्राजा समुत्थायाथ सांजलिः ॥ पुत्रं तं वंदयांचक्रे तिष्ठंस्तत्पुरतोऽब्रवीत् ॥६३॥ राजोवाच ॥ मयापत्यविहीनेन साधनैर्बहुभिः सुतः ॥ प्राप्तोऽनंगसमानांगः शुभलक्षणसंयुतः ॥६४॥ जातो द्वादशवर्षोऽपि नाद्यापीषद्वदत्यसौ ॥ कृताः पुस्तकदानाद्या उपाया बहवो मया ॥६५॥

यस्थक्रिययान्वयः । तंत्रागमोक्तोपचारद्रव्यैः ॥ ६० ॥ सकामनिष्कामोपास्यत्वमंबानंदस्येत्याह । सकामैरिति ॥ ६१ ॥ तपस्तेजसा तपोवीर्येण प्रकाशमानम् ॥ ६२ ॥ ६३ ॥ मयापत्यविहीनेन पुत्रहीनेन । अनंगसमानांगः मदन इव सुन्दरः ॥ ६४ ॥ ईषत् किंचित् ॥ ६५ ॥

पूर्वार्द्धं पूर्ववत्र । अन्यतः अन्येन दुर्ज्ञेयं वक्ति॥६६॥ सद्वाक्सिद्ध्यै सुवाण्यर्थं मया आराधितेत्यर्थः । सा सरस्वती॥६७॥अस्य बालस्य । अद्भुतपुण्यलाभेन विना ।एतत् अद्भुतपुण्यम् । तदित्यव्ययं तस्येत्यर्थकम् । अबानंदस्य अंतिके समीपेस्तीत्यन्वयः॥६८॥स अंबानंदः तत मंत्रपुरश्चरणभवमद्भुतपुण्यम्॥६९॥ इति सरस्वतीवाक्येन तत्पुण्यं मत्पुत्राय देहीत्यन्वयः । अयं सद्वाक् उत्तमवाक् भविष्यति ॥ ७० ॥ परोपकारार्थं जीवंति ते । उत्तरार्द्धमुत्तरान्वयि ॥७१॥

दृष्ट्वा कर्मविपाकं च ब्राह्मणैर्वेदवित्तमैः ॥ तैरुपायैः स्वलद्वाण्या वक्ति दुर्ज्ञेयमन्यतः ॥ ६६ ॥ ततश्चाराधिता देवी सद्वाक्सिद्ध्यै सरस्वती ॥ तुष्टा मंत्रजपैः स्वप्ने साऽऽहाऽऽचार्यस्य सन्निधौ ॥६७॥ न भविष्यति वागस्य विशदा पूर्वपापतः ॥ विनाद्भुतस्य पुण्यस्य लाभेनैतत्तदंतिके ॥६८॥ अंबानंदस्य मन्मंत्रपुरश्चरणसंभवम् ॥ स चेद्दास्यति तत्पुण्यमस्मै वाग्मी भवेदयम् ॥६९॥ इति तेंघ्रिसमीपे हं प्राप्तस्तत्पुण्यमद्भुतम् ॥ देहि मत्सूनवे तेनायं सद्वाग्भविता ध्रुवम् ॥ ७० ॥ दयालवो यतः संतः परोपकृतिजीविनः ॥ श्रीदेशिकेंद्र उवाच ॥ इत्येवं बहुशो राज्ञा प्रार्थितः स तु देशिकः ॥ ७१ ॥ देवीमंत्रपुरश्चर्यापुण्यं यच्चाद्भुतं ददौ ॥ राजपुत्रकरे तोयदानेन स्वकराग्रतः ॥ ७२ ॥ तावद्वाक्पटुतां प्राप्तो राजपुत्रोऽथ सांजलिः ॥ प्रार्थयित्वा मुहुर्नत्वा तथा संपूज्य तं गुरुम् ॥ ७३ ॥ पित्रा सह ययौ स्वीयपुरं सेनाद्विजैर्युतः ॥ अंबानंदस्य सामर्थ्यं शंसन्राज्यं चकार सः ॥ ७४ ॥ इत्थं स्वाद्भुतपुण्यस्य दानादंबासुखस्ततः ॥ जातस्त्वद्भुतपुण्याख्यानंद इत्यतिविश्रुतः ॥ ७५ ॥ इत्थं प्रभावोऽद्भुतंपुण्यसंज्ञो ह्युत्प्रेक्षकावल्लभकाय दत्त्वा ॥ सर्वे ययौ सिद्धिमसुं दशादिशतांशसंख्यं गुरुमानताः स्मः ॥ ७६ ॥

यदद्भुतं पुण्यं तद्राजपुत्रहस्ते स्वकराग्रात् उदकदानेन ददावित्यन्वयः ॥ ७२ ॥ यावदेवं कृतं तावद्वाक्पटुत्वं प्राप्तो राजपुत्र इत्याद्युत्तरान्वयि ॥ ७३ ॥ सेनया ब्राह्मणैश्च युक्तः नगरं ययौ । सः राजपुत्रः॥७४॥७५॥दशोत्तरशतसंख्यमद्भुतपुण्यानंदं प्रणमति एवमिति । सर्वं पूर्णाभिषेकादिमंत्ररहस्यम्॥७६॥

एतत्सर्गोक्तगुरुद्वयकथाश्रवणादिफलं क्रमेणाह संकुलेति । आत्मसुखदं मित्रम् अलौकिककीर्तिं च प्राप्नुयात् । स्वताम् आत्मभावं मुक्तिं चका
राद्युभयफलं रथोद्धतावृत्तम् ॥ ७७ ॥ इति श्रीगुरुपरंपराचारित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां पंचाशत्तमः सर्गः ॥ ५० ॥ त्र्यशीतिपद्यैरत्रैकपंचाशत्तम
सर्गके । उत्प्रेक्षावल्लभे विद्यारामानंदात्मतोऽस्थितिः ॥ ५१ ॥ उत्प्रेक्षावल्लभानंद इति । आसीदित्यध्याहारः ॥ १ ॥ नवरसयुक्तम् ॥ २ ॥ नानाबु

संकुलाद्भुतसुपुण्यसत्कथां यः शृणोत्यपि पठेद्दिनेदिने ॥ मित्रमात्मसुखदं तथाद्भुतां पुण्यकीर्तिमपि चाप्नुयात्स्वताम् ॥ ७७ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे संकुलाद्भुतपुण्यानंदकथावर्णनंनाम पंचाशत्तमः सर्गः ॥ ५० ॥ श्रीदेशिकेंद्र उवाच ॥ उत्प्रेक्षावल्लभानंदश्चात्मवानपि काव्यकृत् ॥ मान्यः सर्वबुधेष्वेको मंत्रशास्त्रविशारदः ॥ १ ॥ तस्य भार्याऽपि शालायां शृण्वत्यध्यापनं पितुः ॥ क्रीडमानापि बाल्ये या काव्यं चक्रे रसालयम् ॥ २ ॥ नानाधीतर्कनैपुण्यमुत्प्रेक्षाभूषणोल्लसत् ॥ यद्दृष्ट्वाखिलशास्त्रज्ञाः सुधियोप्यतिविस्मिताः ॥३॥ उत्प्रेक्षाधिक्यतः काव्ये नामाप्यस्याश्च पंडिताः ॥ उत्प्रेक्षेत्येव विख्यातं चक्रुस्तज्जनकान्विताः ॥ ४ ॥ विवाहयोग्यां तां दृष्ट्वोद्योगमस्याः पिताऽकरोत् ॥ विवाहार्थमवेक्ष्यासौ पितरं प्राह कन्यका ॥ ५ ॥ न मूर्खेण वरेण त्वं मद्विवाहं पितः कुरु ॥ दुःखमेवाज्ञसंगेन विदुषोऽण्वपि नो सुखम् ॥ ६ ॥ परीक्ष्यातः पतिं सम्यग्विद्वांसं बुद्धिमत्तमम् ॥ तस्मै मां देहि कीर्तिः स्याद्यथा पत्युर्ममापि च ॥ ७ ॥ मूर्खाय मां दास्यसि चेत्त्यक्ष्येऽसूनेव तत्क्षणात् ॥ मूर्खसंगाद्वरां मन्ये मृतिं नो जीवनं पितः ॥ ८ ॥ विद्वांसं सत्कुलोत्पन्नं ज्ञात्वानय ममांतिकम् ॥ मया यत्पृच्छ्यते तत्र यो दास्यति तदुत्तरम् ॥ ९ ॥

द्धिगततर्काणां निपुणता यस्मिन् । उत्प्रेक्षाद्यैरलंकारैरेव भूषणैः शोभितं यत् काव्यम् । उत्प्रेक्षालंकारश्च । "संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना" इत्यादिनोक्तः ॥ ३ ॥ तत्पितृयुक्ताः पंडिताः अस्याः कन्यायाः काव्ये उत्प्रेक्षालंकारबाहुल्येनोत्प्रेक्षेति विख्यातं नामोक्तवंतः ॥ ४ ॥ असौ उत्प्रेक्षा कन्या विवाहोद्योगिनं पितरम् ईक्ष्य प्राह ॥ ५ ॥ ६ ॥ यतः सुखं नास्ति अतः ॥ ७ ॥ असून् प्राणान् ॥ ८ ॥ मया अत्र विवाहाय यद्यत्पृच्छ्यते

तदुत्तरं यो दास्यति स एव मत्पतिरस्तु महानप्यन्यो मास्त्वित्यन्वयः ॥ ९ ॥ इत्थमित्युत्तरान्वयि ॥ १० ॥ ११ ॥ यान् पंडितपुत्रान् प्रति यान् प्रश्नान् पप्रच्छ ते तदुत्तरं किंचिन्न ददुरित्यन्वयः ॥ १२ ॥ ततः कांचीसकाशात् ॥ १३ ॥ अनेकतः अनेकैः ॥ १४ ॥ १५ ॥ लावण्यं सौंदर्यं दृष्ट्वेति पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि ॥ १६ ॥ १७ ॥ १८ ॥ तत्रादावुत्प्रेक्षायां कृतः प्रश्नः—स्त्रीजन्मनः साफल्यं सफलता किं कथं भवतीति वल्लभकृतम्

स एव वल्लभोऽन्यो मे पतिर्नस्यान्महानपि ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं कन्यावचः श्रुत्वा पिता कांचीपुरे स्थितः ॥ ॥ १० ॥ चिंतां चकार दुहितुः प्रियभर्त्तुस्तु लब्धये ॥ प्रेषयामास विदुषः शिष्याञ्जामातृलब्धये ॥ ११ ॥ तैर्देशेभ्यः समानीताः शिष्यैः पंडितसूनवः ॥ यान्यान्पप्रच्छ बाला सा तेषांतेषां सदुत्तरम् ॥ १२ ॥ नैव किंचिद्ददुस्तूष्णीं प्रययुर्लज्जिताननाः ॥ अथ काशीस्थविदुषां पुत्राः कांचीपुरीं ययुः ॥ १३ ॥ अधीतशास्त्राः सुधियः काव्यभेदाननेकधा ॥ सद्यःस्फूर्त्या गद्यपद्ये कर्तुं सर्वेपि सुक्षमाः ॥ १४ ॥ सा कुमार्यखिलान्प्राप्य प्रश्नांश्चक्रे तदाखिलाः ॥ तूष्णीं बभूवुरेतस्याः प्रगल्भं वाक्यमद्भुतम् ॥ ॥ १५ ॥ मंदस्मितयुतं श्रुत्वा दृष्ट्वा लावण्यमद्भुतम् ॥ तूष्णींभूतेषु सर्वेषु काशीस्थः कश्चिदेव हि ॥ १६ ॥ पुत्रः पंडितवर्यस्य सतां कारुण्यतः सुधीः ॥ कुमार्याश्चाग्रतो गत्वा तेजस्वी सुन्दरो युवा ॥ १७ ॥ तस्मै प्रश्नांश्चकारैषा ददौ प्रत्युत्तराणि सः ॥ प्रश्नोत्तरकदम्बं तदेतयोः श्रूयतामिदम् ॥१८॥ साफल्यं स्त्रीजनेः किं प्रियहृदयपतिस्तत्प्रियत्वं कुतः स्याद्विद्वद्वंशप्रसूतेर्विदुषि वरकुले सत्तनौ का च भूषा॥ सत्स्फूर्तिश्चाकलित्वं प्रियवचनगतिस्त्वय्यदोऽस्तीति कस्माद्वेद्यं संबंधतोदः स च भवतु हि नौ मेपि वांछा तथैव॥ १९॥

त्तरं—प्रियहृदयपतिः प्रियं हृदयं मनो यस्य सः प्रियहृदयः पतिर्यस्यास्तादृशी चेत्स्त्रीजन्मसाफल्यं भवति । प्रश्नः—तत्प्रियत्वं कुतः कस्माद्भवति। उत्तरं—विद्वद्वंशप्रसूतेः विदुषां प्रसूतेः भवति । प्रश्नः—विदुषि उत्तमवंशे का भूषा किं भूषणम् । उत्तरं—विदुषि उत्तमस्फूर्तिः पदपदार्थवाक्यार्थस्फुरणम् । सद्वंशे अकलित्वं न कलिः कलहः येषु तेषां भावस्तत्त्वम् । अकलह इत्यर्थः । रूपवच्छरीरे प्रियवचनगतिः इष्टवाक्प्रवाहश्च भूषणं भवति । प्रश्नः—अदः इदं सर्वम् उत्तम

स्फूर्त्यादिकं त्वयि अस्तीति कस्मात्केन हेतुना ज्ञातव्यम् । उत्तरम्—अदः इदं पूर्वोक्तं सर्वं संबंधतः समागमेन ज्ञातव्यम् । वेद्यमिति उभयान्वयि । प्रश्नः—स च समागमो नौ आवयोः भवतु । उत्तरं—ममापीच्छा तथा तवेच्छासदृश्येवेत्यर्थः ॥१९॥ इत्थं प्रश्नानाम् उत्तराणि । वल्लभः प्रियोऽस्ति॥२०॥ जामातरमित्यायुत्तरान्वयि । पूर्णा संपत् यस्य तम् ॥ २१ ॥ २२ ॥ गोरथैरश्वैर्नृयानेन च ॥२३ ॥२४॥ २५ ॥ यात्रार्थमिति पूर्वान्वयि । दंपती उत्प्रेक्षाव

श्रुत्वा प्रश्नोत्तराणीत्थं पितरं प्राह कन्यका ॥ वल्लभोऽयं ममात्यंतं देह्यस्मै विधिनाऽद्य माम् ॥ २० ॥ जामातरं पिता दृष्ट्वा विद्वांसं च सुरूपिणम् ॥ वयसा कन्यकायोग्यं कुलीनं पूर्णसंपदम् ॥ २१ ॥ ददौ तस्मै विधानेन कन्यां संतुष्टचेतसा ॥ स्वदत्तांशुकभूषाढ्यायोत्प्रेक्षां बहुभूषणाम् ॥ २२ ॥ पारिबर्हं तु बहुधा दत्त्वा तौ दंपती ततः ॥ काशीं संप्रेषयामास गोरथाश्वनृवाहनैः ॥ २३ ॥ अथ तौ दंपती काश्यां तस्थतुः प्रेमसंप्लुतौ ॥ उत्प्रेक्षाऽऽख्या काव्यकर्त्री तत्पतिश्च ततोऽधिकः ॥ २४ ॥ प्रसिद्धौ काव्यकर्तारौ तौ काश्यामासतुर्यदा ॥ ययावद्भुतवाण्याख्यः कदाचित्काशिकां तदा ॥ २५ ॥ यात्रार्थं दंपती ज्ञात्वा सर्वज्ञं तं तदंतिकम् ॥ प्रार्थयामासतुर्गत्वा मंत्रदीक्षार्थमादरात् ॥ २६ ॥ ज्ञात्वाथाद्भुतपुण्योऽपि तावुभावधिकारिणौ ॥ सर्वमंत्रमयीं दीक्षां ददौ ताभ्यां विधानतः ॥ २७ ॥ उत्प्रेक्षावल्लभ इति कृतं नामापि शोभनम् ॥ भार्यानामद्योतकं वै सर्वज्ञेनामुना तदा ॥ २८ ॥ प्रसिद्धोऽथ बभूवासावुत्प्रेक्षावल्लभाभिधः ॥ मंत्रज्ञो योगवाञ्ज्ञानी शरणागतवत्सलः ॥ २९ ॥ उत्प्रेक्षकावल्लभकोऽपि रामानंदाय दत्त्वाऽखिलमाप सिद्धिम् ॥ एकादशाद्येकशतान्तसंख्यं वयं गुरुं तं शिरसा नताः स्मः ॥ ३० ॥ श्रीदेशिकेंद्र उवाच ॥ आसीद्रामानंदनाथो योगवानात्मवित्तमः ॥ शिवार्चाभिरतः काश्यामागमोक्तोपचारतः ॥ ३१ ॥ प्रसिद्धं तस्य चरितं गीयते धरणीतले ॥ तदेव कीर्त्यतेऽत्रापि यथा गुरुमुखाच्छ्रुतम् ॥ ३२ ॥ सातत्येन सतां चित्तं रमते यत्र चिन्मये ॥ आत्मारामः स विज्ञेयस्तद्रूपानंदवानसौ ॥३३॥

लभौ ॥ २६ ॥ २७ ॥ अमुना अद्भुतपुण्येन ॥ २८ ॥ २९ ॥ एकादशाधिकशततमम् उत्प्रेक्षावल्लभानंदं प्रणमाति । उत्प्रेक्षेत्यादिना । अखिलं पूर्णाभिषेकादिमंत्ररहस्यम् ॥ ३० ॥ आसीदिति आगमोक्तपूजाद्रव्यादिना ॥ ३१ ॥ अत्र गुरुपरंपराचरित्रे मयेति शेषः ॥ ३२ ॥ सातत्येन नैरंतर्येण यत्र

यस्मिन्नात्मनि । आत्मस्वरूपानंदवान् असौ रामानंदः ॥ ३३ ॥ ततो रामानंद इति ज्ञानिभिः प्रोक्तः । उत्तरार्द्धमुत्तरत्रान्वेति ॥ ३४ ॥ कतिपयाब्दतः कियद्वर्षैः । दत्त्वेत्युत्तरान्वयि । तं पूर्वक्रमागतं पूजादिरहस्यमार्गं शिष्याय वक्ष्यमाणाय ॥ ३५ ॥ संन्यासदीक्षां दधौ । विक्षेपवर्जितः सुखदुःखसंबन्धरहितः ॥ ३६ ॥ आत्ममयम् आत्मरूपम् । पूर्वार्द्धं पूर्वान्वयि । दृष्ट्वेत्याद्युत्तरान्वयि ॥ ३७ ॥ आत्मविदः अनात्मबुद्धयश्च क्रमेण ॥ ३८ ॥ छेदकर्तॄ

रामानंदस्ततः प्रोक्तः पंडितैरात्मदर्शिभिः ॥ आत्मारामोपि पूर्वोक्तं पूजाक्रममशेषतः ॥ ३४ ॥ संप्रदायप्रवृत्त्यर्थं चक्रे कतिपयाब्दतः ॥ दत्त्वा तमखिलं मार्गं सच्छिष्यायाधिकारिणे ॥ ३५ ॥ दधौ परमहंसीयां दीक्षामात्मविदां वरः ॥ तस्थौ गंगातटे रम्ये सदा विक्षेपवर्जितः ॥ ३६ ॥ विश्वमात्ममयं पश्यन्यदृच्छालब्धवृत्तिमान् ॥ दृष्ट्वात्मानंदमग्रेऽस्मिन्यतिधर्मान्कृताकृतान् ॥ ३७ ॥ संतः खलाः स्तुतिं निंदां चक्रुस्तज्ज्ञा अतद्विदः ॥ समानानेव सोऽपश्यद्रामानंदोऽखिलान्दृशा ॥ ३८ ॥ छेत्तॄन्निजारोपकर्तॄंश्छाययेव महाद्रुमः ॥ प्रणेमुस्तं जनाः सर्वे श्रीगंगास्नानगामिनः ॥ ३९ ॥ नारायणः शुभं कु[illegible]दित्याहाऽऽशिषमेव तान् ॥ रोगिणः सुशरीराः स्युरपुत्राः पुत्रलब्धयः ॥ ४० ॥ मूढाः सुज्ञाः खलाः शांताः स्विका निस्वा यदाशिषा ॥ दृष्ट्वेत्थं तस्य सामर्थ्यं काशीस्थाः सकलास्तदा ॥ ४१ ॥ विश्वासं चक्रुरत्यंतं रामानंदेऽखिलप्रिये ॥ अथ काश्यां धनी कश्चिद्वैश्यः स्वर्णादिसंग्रही ॥ ४२ ॥ वृद्ध्या ऋणप्रदोन्येषां सर्वेषामल्पसंपदाम् ॥ उदारो दानदो नित्यं सत्पात्रेभ्यो विधानतः ॥ ४३ ॥

न्बीजारोपकर्तॄंश्च छायार्पणेन महावृक्ष इवेति पूर्वान्वयि॥ ३९॥तान् वंदनकर्तॄन् प्रति इति। आशीर्वादमाह। रामानंद इति शेषः। पुत्राणां लब्धिः प्राप्तिर्येषां ते तथाभूताः॥ ४०॥पूर्वार्द्धं पूर्वान्वयि। निस्वाः धनहीनाः। 'निस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोपि च' इत्यमरः। स्वं धनं येषां ते स्विकाः धनिकाः। दृष्ट्वेत्युत्तरान्वयि ॥ ४१॥ अथेति सार्द्धद्वयोरन्वयः। वैश्यव्यापारवान् ब्राह्मणः कलौ क्षत्रियवैश्ययोरभावेन तत्तद्व्यापारवद्ब्राह्मणेष्वेवांतर्भावात् ॥ ४२॥ अल्पसंपदाम्

अल्पधनवताम् ॥ ४३ ॥ अन्नवस्त्रप्रदः । एकाकी परिवारहीनः ॥ ४४ ॥ यस्य गृहे इति शेषः । इत्थम् एवं वर्तमानः स वैश्य इत्यु त्तरान्वयि ॥ ४५ ॥ मुधा व्यर्थं निकटवर्तिनां लेखकानां संगाद्धेतोः उत्तरार्द्धमुत्तरान्वयि ॥ ४६ ॥ बलवत्प्राक्तनैनसा बलवत्पूर्वकर्मदोषेण सन्निंदाजन्यदोषेण च तस्य संततिर्नासीत् ॥ ४७ ॥ साधनैः कृत्वेति पूर्वान्वयि ॥ ४८ ॥ महावैद्यार्पितैः । पंचत्वं मरणम् ॥ ४९ ॥ सुकुमारीति त्रया

दीनांधकृपणादीनां कृपयाऽन्नांशुकप्रदः॥ एकाक्येव सपत्न्याढ्यो दासदासीभिरन्वितः॥४४॥ व्यापारार्थं च यस्यासन्बहवो लेखका स्तथा ॥ इत्थं स वैश्यवर्यस्तु रामानंदं विरागिणम् ॥४५॥ मुधा निनिंद दुष्टानां संगान्निकटवर्तिनाम् ॥ स्नानार्थं च गतो गंगां दृष्ट्वाप्येनं यतीश्वरम् ॥४६॥ न ननाम कदाचित्स बलवत्प्राक्कृतैनसा ॥ नापत्यं चाभवत्तस्य महन्निंदाभवैनसा ॥ ४७ ॥ समृद्धसंपदो नित्यं दानदस्यापि साधनैः ॥ कालेन तस्य वैश्यस्य महारोगो बभूव च ॥४८॥ क्षयो महाभिषग्दत्तैरौषधैर्नागमच्छमम् ॥ वैश्यः पंचत्वमप्याप विललाप तदंगना ॥४९॥ सुकुमार्यतिभूषाढ्याऽपत्यहीना निजं गृहम् ॥ दृष्ट्वा संपत्समृद्ध्याढ्यं गोमहिष्यश्वसंकुलम् ॥५०॥ अबंधु पितृका साथ भर्त्रा सह परां गतिम् ॥ गंतुमेव मनश्चक्रे कंचिद्भर्तृकुलोद्भवम् ॥ ५१ ॥ समाहूयात्मनं सा योजयित्वा निजं सुतम् ॥ परलोकविधिं कर्तुं स्वभर्तुश्चात्मनोऽपि हि ॥ ५२ ॥ ग्रहसंपद्विरक्ता सा पत्यावेव दृढांतरा ॥ कृताभ्यंगाऽहतवस्त्राढ्या हरिद्राकुंकुमो ज्ज्वला ॥५३॥ सौभाग्याऽऽवश्यभूषाश्च धृत्वा पत्युः कलेवरम् ॥ स्नापयित्वा सुवस्त्राढ्यं कृत्वा तेनान्विता ययौ ॥५४॥ गंगातीरे पुण्यदेशे यत्रास्ति मणिकर्णिका ॥ ब्राह्मणैर्वेदमार्गज्ञैर्बांधवैश्च युता सती ॥५५॥ तत्रासीनं ददर्शाथ रामानंदं यतीश्वरम् ॥ तपःकांत्या ऽर्कमेवाढ्यं शांतमात्मसुखे रतम्॥५६॥सा ननामाथ तं मूर्ध्ना स्पृशंती जानुतो भुवम्॥नारायणः शुभं कुर्यादित्येवाह स योगिराट्॥५७॥

णामन्वयः ॥ ५० ॥ कंचिद्भर्तृकुलोत्पन्नं दायादं भर्तुः आत्मनश्च अंत्यक्रियां कर्तुं पुत्रं मत्वेति योजना ॥ ५१ ॥ ५२ ॥ सा वैश्यपत्नी उक्तविशेषण युक्ता सती उक्तकर्माणि कृत्वा तेन पतिशरीरेण सह कर्मकुशलब्राह्मणयुक्ता गंगातीरं ययाविति त्रयाणामन्वयः । उत्तमवस्त्रयुक्ता ॥ ५३ ॥ सौभाग्याऽऽवश्य भूषाः कंठादिभूषणानि ॥ ५४ ॥ मणिकर्णिका यत्रास्ति तत्र ययाविति संबन्धः ॥ ५५ ॥ ५६ ॥ जानुतः जानुभ्याम् ॥ ५७ ॥

आहेत्यत्र वैश्यपत्नीत्यध्याहारः॥५८॥तेन पत्या युक्ताग्निं प्रवेष्टुकामाहं सर्वसंपदस्त्यक्त्वा श्मशानं प्राप्तास्मि । नारायण इत्युत्तरान्वयि ॥५९॥६०॥६१॥
अग्रस्थयोः पुरःस्थितयोरिति पूर्वान्वयि । आशीर्भवम् आशीर्वादजन्यम्। उत्तरार्द्धमुत्तरान्वयि ॥ ६२॥६३॥ यतेः नत्या नमस्कारेण तस्य प्रेतस्य किं फलं

आशिषं तस्य चाकर्ण्य यतिमाहेति सांजलिः ॥ सत्युवाच ॥ मृतभर्त्रा सहैवाग्निं गंतुकामास्मि सांप्रतम् ॥ ५८ ॥ श्मशानमेव तेनाहं प्राप्तोज्झ्याखिलसंपदः ॥ नारायणस्त्वीदृशायाः शुभं किं मेऽत्र जन्मनि ॥ ५९ ॥ करिष्यति मुधैवोक्ता ह्याशीरेषा त्वया यते ॥ श्रीदेशिकेंद्र उवाच ॥ सत्युक्तं स समाकर्ण्य वचनं प्राह देशिकः ॥ ६० ॥ तां स्वाग्रस्थां प्रेतपत्नीं वाचा गंभीरया तदा ॥ श्रीरामानंद उवाच ॥ मातर्नाशीरसत्या मे किलैषा तु भविष्यति ॥ ६१ ॥ आनयात्र गतप्राणं स्वपतिं तेन वंदनम् ॥ कारयान्यधृतेनैव गुरुपादुकयोर्मम ॥ ६२ ॥ अग्रस्थयोस्ततः पश्य फलमाशीर्भवं सति ॥ श्रीदेशिकेंद्र उवाच ॥ रामानंदोक्तमाकर्ण्य तत्रत्याः प्रेतबांधवाः ॥ ६३ ॥ केचिदाहुः परेताय किं फलं वंदनाद्यतेः ॥ महौषधैर्जीवितोपि यस्याभून्नैव जीवनम् ॥ ॥ ६४ ॥ मृतस्य किं पुनस्तस्य नत्या केवलया यतेः ॥ अपरेऽथाहुरश्रद्धा न कार्या सिद्धभाषणे ॥ ६५ ॥ निःस्पृहोऽयं यतिर्मिथ्या किमर्थं वदतेऽधुना ॥ अथ केचित्प्रेतयानाद्गतासुं तं यतेः पुरः ॥ ६६ ॥ आनीय कारयामासुः पादुकावंदनं ततः ॥ नारायणः शुभं कुर्यादित्याऽहाऽऽशिषमप्यसौ ॥ ६७ ॥ तावदद्भुतमेवाभूत्स गतासुः सचेतनः ॥ भूत्वा स्थितोऽग्रतोऽपश्यद्रामानंदं यतीश्वरम् ॥ ॥ ६८ ॥ पत्नीं स्वपार्श्वतः पृष्ठे ज्ञातींस्तानाह चाखिलान् ॥ यूयं सर्वेऽप्येकवारं मत्पत्न्यात्र किमागताः ॥ ६९ ॥ रुग्णोहं स्वगृहात्सर्वैश्चानीतोहं कथं बहिः ॥ अथाहुर्ज्ञातयस्तं च मृतस्त्वं क्षयरोगतः ॥ ७० ॥ भार्या त्वत्सहगन्त्र्यासीत्सुतं कृत्वा स्वगोत्रजम् ॥ श्रीदेशिकेंद्र उवाच ॥ आमृत्युकालादारामानन्दानुग्रहमेव च ॥ ७१ ॥

भविष्यति न किमपीत्यर्थः ॥ ६४ ॥ ६५ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ६६ ॥ असौ रामानंदः ॥ ६७ ॥ ६८ ॥ एकवारम् एकदैव ॥ ६९ ॥
॥ ७० ॥ भार्या त्वत्सहगन्त्री त्वया सह परलोकगमनेच्छावती मृत्युकालमारभ्य रामानंदानुग्रहपर्यंतं वैश्यः ज्ञातिभिः कथितमिति परत्र योज्यम् ॥७१॥

अस्तौत् स्तुतवान् ॥ ७२ ॥ प्रथमं स्वापराधानुद्घाटयति मयेति । पुरा खलमध्यस्थितेन मयैवं महत्सामर्थ्यमज्ञात्वा तव निंदा कृता यथा तमोनिवासिना दिवाभीतेन दिव्यतेजसः सूर्यस्य निंदा क्रियते तद्वत् विश्वप्रियस्येति ॥ ७३ ॥ तत्फलं निंदाफलं यच्च अनपत्यः अपत्यहीनः । कुरुजा कुत्सितरोगस्तस्मादासमृत्युश्च जातोस्मीतिशेषः । हि यस्मात्सत्सु कृता निंदा नम्रता च शीघ्रफलप्रदा भवति ॥७४॥ मत्पत्नीकृतनमस्कारेण यतो रामानंदात् दुष्प्रापा जीवयुतिः सजीवभावो मया प्राप्ता । हि यस्मात्सत्सु साधुषु यथाभावनं सदसद्रूपं पुमान् फलं भुंक्ते । यथा कल्पवृक्षे सदसद्भावनाफलं तदधस्थः प्राप्नोति ॥७५॥

ज्ञातिभिर्वर्णितं वृत्तं वैश्यः श्रुत्वा स लज्जितः ॥ ननामैव यतिं तूष्णीमुत्थितोऽस्तौद्यतीश्वरम् ॥ ७२ ॥ वैश्य उवाच ॥ मया खलस्थेन पुरा तवेत्थं शक्तिं त्वविज्ञाय कृतातिनिंदा ॥ विश्वप्रियस्याऽपि तमःस्थितेन घूकेन भानोरिव दिव्यदीप्तेः ॥ ७३ ॥ प्राप्तं मया तत्फलमप्यदोऽद्धा संपद्युतेनापि सुदानदेन ॥ यच्चानपत्यः कुरुजाऽसमृत्युर्निंदानती चाशु फले हि सत्सु ॥ ७४ ॥ नत्या यतः स्त्रीकृतया तवांघ्र्योः प्राप्ता मया जीवयुतिर्दुरापा ॥ भुंक्ते पुमान्सत्सु हि भावनात्तत्फलं यथा कल्पतरावधःस्थः ॥७५॥ न निंदयाऽज्ञैः कृतयाऽऽत्मतेषद्भसत्यथार्यस्तुतितो न पुष्टः ॥ समः सदा सिंधुरिवार्कभानुभिर्जलापकर्षैश्च सरित्प्रवाहैः ॥७६ ॥ त्वं मग्न एवात्मसुखे सदैव पास्येव दुःखात्कृपयाऽखिलान्नः ॥ कूर्मो हरिः सिंधुजलस्थितः प्राग्देवासुरान्धारणया यथाऽद्रेः ॥ ७७ ॥ त्वं दैवतः श्रेष्ठनरो हि भासि संजीवनान्मेऽद्य मृतस्य भूयः ॥ स्वसुः सुतं प्रागभिमन्युमद्धा नाजीवयद्युद्धमृतं हरिर्यत् ॥ ७८ ॥ किलामरेशैर्नियतिर्न वार्या दुरत्यया कर्मफला कुतोन्यैः ॥ यश्चात्मवान्कर्म मृषेति बुद्धिः स एव तां वारयितुं समर्थः ॥ ७९ ॥

मूर्खकृतया निंदया आत्मभावो न क्षीयते श्रेष्ठकृतस्तवनेन च पुष्टो न भवति । सदा समानो यथा समुद्रः जलापकर्षकैः रविकरैर्न्यूनो न भवति नदीप्रवाहैर्न वर्द्धते ॥ ७६ ॥ त्वं तु सदात्मसुखे निमग्नः सन् कृपया हेतुभूतया सर्वान्निंदास्तुतिकर्तॄन् नोऽस्मान्रक्षसि यथा कूर्मावतारो हरिः समुद्रजलास्थितः सन् मंदरपर्वतधारणेन देवाऽसुरान्ररक्ष तथेत्यर्थः ॥ ७७ ॥ अतस्त्वं देवेभ्यः श्रेष्ठतरो मृतस्य ममाद्य भूयः संजीवनेन भासि दृश्यसे । मृतिवारकत्वेन देवेभ्यः श्रेष्ठतरत्वं श्रीकृष्णस्यापि नास्ति । ततश्च तव श्रीकृष्णादपि श्रेष्ठतरत्वमित्यर्थः ॥ ७८ ॥ अघटितघटकत्वं तवेत्याह किलेति । कर्मफलरूपा नियतिरवश्यंभावि

नियमः देवैरपि न वार्या निवर्त्या नास्ति किल । अन्यैर्निवार्येति कुतः न कुतोपीत्यर्थः । यतो दुरत्यया दुर्लंघ्या " दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः " इत्यमरः । यश्च भवान् कर्मसु प्रारब्धादिषु मृषात्वबुद्धिः मिथ्या लब्धा बुद्धिः येन स तां नियतिं दूरीकर्तुं समर्थोऽस्ति ॥ ७९ ॥ तादृक् कर्ममृषाबुद्धिरात्मवांश्च अतस्त्वमेव समर्थोऽसि नान्यो नियतिवारणे समर्थः । अतः मूर्खस्य मे पुराकृतान् निंदाद्यपराधान् क्षमस्व । त्वत्सदृशानां संगो जन्मजन्मनि भवतु इत्येतामाशिषमेव देहि । तव सत्समागमो जन्मजन्मनि भवत्विति आशीर्वादं देहीत्यर्थः ॥८०॥अमुं रामानंदं पैष्टं पिष्टमयम् । आप प्राप्तवान्

ताहक्समर्थोऽस्ति भवान्न चान्यः क्षमस्व मेऽज्ञस्य पुरापराधान् ॥ भवेभवेप्यस्तु भवादृशानां संगो ममेत्याशिषमेव देहि ॥ ८० ॥ श्रीदेशिकेंद्र उवाच ॥ स्तुत्वेति योगींद्रममुं स वैश्यः पत्न्याऽन्वितो बंधुजनैश्च नत्वा ॥ दत्त्वा श्मशाने बलिमेव पैष्टचं गृहं ययौ चाखिलसौख्यमाप ॥ ८१ ॥ इत्थंप्रभावस्थितिमान्हि रामानंदः शिवस्वामिनमाह सर्वम् ॥ सिद्धिं ययौ द्वादशकोत्तरैकशतान्तिमं स्वं गुरुमानताः स्मः ॥ ८२ ॥ उत्प्रेक्षकावल्लभरामसौख्यगुर्वोश्चरित्रे शृणुयात्पठेद्वा ॥ कवित्वमाद्येन परेण सौख्यं स्तोत्राल्लभेत्तापमृतेर्विनाशम् ॥ ८३ ॥ इति श्रीगुरुपरंपराचरित्रे उत्प्रेक्षावल्लभरामानंदगुरुद्वयकथावर्णनं नामैकपंचाशत्तमः सर्गः ॥ ५१ ॥ श्रीदेशिकेंद्र उवाच ॥ शिवस्वाम्यानंदनाथः काञ्च्यामासीद्द्विजार्भकः ॥ अकिंचनः पिताऽस्यासीद्भिक्षाशी जरदंबरः ॥ १ ॥ मृतः सोपि रुजा काले माता तेन दिवं गता ॥ एक एव गृहेऽथासीद्बालकः पंचहायनः ॥ २ ॥

॥८१॥ द्वादशाधिकशततमं रामानंदं प्रणमति इत्ययिति । एवं प्रभावा या स्थितिः वर्तनं तद्वान् । सर्वं मंत्ररहस्यम् ॥८२॥ एतत्सर्गोक्तगुरुद्वयकथाश्रवणादिफलं वैश्यकृतस्तोत्रादिफलं चाह । उत्प्रेक्षकेत्यादिना । रामसौख्यो रामानंदः । आद्येन प्रथमचरित्रेण परेण रामानंदचरित्रेण स्तोत्रेण चापमृत्युनाशं लभेत प्राप्नोतु ॥ ८३ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायामेकपंचाशत्तमः सर्गः ॥ ५१ ॥ द्विपंचाशत्तमे पंचषष्टिपर्यायैर्गुरुः पराम् । कांचीस्थः शिवभक्त्याऽऽप शिवस्वाम्यभिधो लघुः ॥ ५२ ॥ शिवस्वाम्यानंदनाथ इति । अकिंचनः दरिद्रः । जरदंबरः जीर्णवस्त्रः ॥ १ ॥ रुजा रोगेण

काले नियतकाले ॥२॥ एकैकगृहे प्रतिदिवसमंभसा उदकेन सहान्नं दत्त्वा शिवस्वामिनं द्विजाः पालयामासुरित्यर्थः ॥ ३ ॥ उपनीतः स्वसाहित्यं दत्त्वा योजितोपनयनः उपलब्धवान् प्राप्तवान् । एकेन साहित्यं सामग्र्यः दत्तमेकेनोपदिष्ट इत्यर्थः ॥ ४ ॥ एकांबरेश्वरं कांचीस्थं शिवं गुर्वादेशेन गुर्वाज्ञया ॥ ॥ ५ ॥ प्रातः स्नात्वेति सार्द्धान्वयः । अर्द्धाह्ने मध्याह्ने ॥ ६ ॥ अमुना शिवस्वामिना ॥ ७ ॥ कुत्रचित्स्थले ॥ ८ ॥ कदाचिदित्युत्तरान्वयि ॥ ९ ॥

तत्र ह्यस्तं द्विजाः केचित्पुपुषुर्जरदंशुकम् ॥ एकैकाहानि चैकैकगृहे दत्त्वान्नमंभसा ॥ ३ ॥ अथाष्टाब्दैः परैः कैश्चिच्चोपनीतः स बालकः ॥ कस्माच्चिद्ब्राह्मणश्रेष्ठात्सावित्रीमुपलब्धवान् ॥ ४ ॥ वेदाभ्यासरतोऽथासौ नित्यमेकांबरेश्वरम् ॥ त्रिकालं पूजयामास गुर्वादेशेन भक्तितः ॥ ५ ॥ स्नात्वा संपूज्य तत्रेशं चकाराध्ययनं ततः ॥ स्नात्वार्धाह्ने च संपूज्य देवं भैक्ष्यं ततः पुरि ॥ ६ ॥ याचयित्वाऽतियत्नात्संस्थाप्याऽधीतिमथाऽकरोत् ॥ प्रदोषार्चां ततः कृत्वा तद्भैक्ष्यं भुज्यतेऽमुना ॥ ७ ॥ पुनः शिवालये गत्वा निशीथावधि तत्पुरः ॥ भक्त्या कृत्वा गीतनृत्ये ततः स्वपिति कुत्रचित् ॥८॥ इत्थं नित्यक्रियोथासौ जातो द्वादशवत्सरः ॥ कदाचिन्मंदिराच्छंभोर्निशीथोर्ध्वं गुरोर्गृहम् ॥९॥ गच्छतो बालकस्यास्य मार्गे तस्करदर्शनम् ॥ बभूव तावत्तत्पृष्ठे राजदूताश्च वेगतः ॥ १० ॥ ययुर्भीतस्तस्करस्तु हारं रत्नमयं स्वयम् ॥ विप्रार्भकगले तूर्णं निःक्षिप्याथ स्थले क्वचित् ॥ ११ ॥ निरीक्षणानर्हकेसौ लीनश्चोरो बभूव सः ॥ दृष्ट्वा मार्गेथ विप्रार्भं प्राहुरुच्चैरमुं भटाः ॥१२॥ त्वं कोसीति स चाहैतान्विप्रार्भोहं निशीथके ॥ एकांबरेश्वरेक्षार्थं गतस्तं प्रेक्ष्य सद्गुरोः ॥ १३ ॥

तावदित्युत्तरान्वयि ॥ १० ॥ तस्कर इत्याद्युत्तरान्वयि । शिवस्वामिकंठे ॥ ११ ॥ निरीक्षणानर्हे द्रष्टुमशक्ये स्थले लीन इति संबंधः । भटाः राजदूताः ॥ १२ ॥ त्वं कोऽसीति पूर्वान्वयि । ईक्षार्थं दर्शनार्थं गतोऽभवम् तं शिवं प्रेक्ष्य दृष्ट्वा गुरोर्गृहं प्रति गच्छता एकाकिना मया कश्चित्पुमान् दृष्ट

इत्यन्वयः ॥१३॥ तेनैवेत्युत्तरान्वयि ॥ १४ ॥ ऊर्जस्वी तेजस्वी हारो निःक्षिप्तोस्ति । स चोरः अस्मात्स्थानात् । ततो हारार्पणानंतरं जवाद्वेगेन गतः । तं शिवस्वामिनम् ॥ १५ ॥ यस्मात्त्वद्गले हारोस्ति तस्मात्त्वं तस्करोसीति योज्यम् । तं वा तस्करं दर्शय ॥ १६ ॥ मर्यादा अवकाशः ॥ १७ ॥

व्रजता गृहमेकेन कश्चिन्मार्गे मया पुमान् ॥ पश्यन्पृष्ठे व्रजञ्छीघ्रं दृष्टस्तेनैव मद्गले ॥ १४ ॥ हारः क्षिप्तोयमूर्जस्वी स गतोस्मात्ततो जवात् ॥ भटाः श्रुत्वेति तं प्राहुस्तस्करोसि त्वमेव हि ॥ १५ ॥ हारोयं त्वद्गले यस्माद्वस्तून्यन्यानि दर्शय ॥ तं वा दर्शय नः शीघ्रं हारं यस्त्वद्गलेऽक्षिपत् ॥१६॥ नो चेत्त्वामेव बध्वाद्य रज्जुभिर्नृपसन्निधौ ॥ विप्रार्भमपि नेष्यामः का मर्यादा हि तस्करे॥१७॥ इत्युक्त्वा तं करैरेव धृत्वाऽऽनीय नृपांतिकम् ॥ प्राहुर्नृपाय वृत्तांतं भटास्तेऽयं धृतो यथा ॥१८॥ श्रुत्वा राजापि वृत्तांतं दृष्ट्वा तं लघुमर्भकम् ॥ दूतान्प्रेक्ष्याह राजाऽयं दृश्यते बालको लघुः ॥ १९ ॥ कथमस्य भवेद्धैर्यं चौर्यं कर्तुं नृपालये ॥ कस्यचित्तस्करस्यायं वाक्यं श्रुत्वाऽतिसंगतः ॥ २० ॥ धनलोभवशः कश्चिचागतोस्तीति भाति मे ॥ हारस्तेनैव दत्तोऽस्मै येनानीतः स्वसंगतः ॥ २१ ॥ गृहीत्वाऽखिलवस्तूनि स्वयं च गतवान्द्रुतम् ॥ नायं गतो यतो नास्मिश्चौर्यकर्तृत्वमादितः ॥२२॥ स्तेयिनः संगतः प्राप्तश्चास्तेयी स्तेयितामयम् ॥ विप्रार्भं च नृपः प्राह त्वं तु नाऽस्त्येव तस्करः ॥ २३ ॥ यस्याज्ञां तु पुरस्कृत्य सेवकः स्वामिनो यथा ॥ स्तेयं कर्तुमिहायातः स्वामिनं तं निजं वद ॥ २४॥ दीयतेऽयं मया हारः संतोषादेव तेऽर्भक ॥ त्वया चेन्नोच्यते स्वामी कशाताडनपूर्वकम् ॥ २५ ॥

यथायं चोरो धृतस्तथा प्राहुः ॥ १८ ॥ १९ ॥ उत्तरार्द्धमुत्तरान्वयि । संगतः संगेन ॥ २० ॥ तेन चोरेण अस्मै बालाय ॥ २१ ॥ स्वयं च तस्करः आदितः मुख्यत्वेन ॥ २२ ॥ स्तेयिनः चोरस्य संगेनास्तेयी अचोरोयं बालश्चोरत्वं प्राप्तः ॥ २३ ॥ यस्य चोरस्य । वद कथय ॥ २४ ॥ ते तुभ्यं कशे

त्यायुत्तरान्वयि ॥ २५ ॥ निगडतः श्रृंखलादिना ॥ २६ ॥ पूर्वार्द्धे पूर्वान्वयि । ततः शिवात्परं स्वामिनम् ॥ २७ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ २८ ॥ ॥ २९ ॥ अनुगं सेवकं प्राहेत्यन्वयः ॥ ३० ॥ पृष्ठतः पृष्ठभागे । अथेत्युत्तरान्वयि । ऊर्ध्वतः ऊर्ध्वभागे ॥ ३१ ॥ न हंसि न ताडयसि ॥ ३२ ॥ सः सेवकः तत्समतां पूर्ववत्स्तंभितहस्तत्वम् ॥ ३३ ॥ लघुं दृष्ट्वा द्विजार्भकमित्युत्तरान्वयि ॥ ३४ ॥ अस्मै बालकाय न दीयते नार्प्यते ॥ ३५ ॥

त्यक्ष्ये कारागृहेद्य त्वां बध्वा निगडतोनुगैः ॥ इत्थं पृष्टः स विप्राभों नृपं प्राहातिनिर्भयः ॥२६॥ विप्राभंक उवाच ॥ शिवमेकांबरेशाख्यं स्मरन्मनसि भक्तितः ॥ राजन्मेस्ति शिवः स्वामी नो जानेहं ततः परम् ॥२७॥ तस्यैव संगं कुर्वेहमहर्निशमनन्यधीः ॥ कशाभिस्ताडितो दूतैर्बद्धो निगडतो दृढम् ॥२८॥ क्षितःकारागृहे चाहं वक्ष्ये स्वस्वामिनं शिवम् ॥ पिता माता सुहृद्बंधुः शिव एव ममाऽव्ययः ॥२९॥ राजन्नासत्यमेतन्मे वचो वेत्ति शिवः स्वयम् ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्य द्विजबालोक्तं राजा क्रोधान्वितोनुगम् ॥३०॥ प्राहाशु त्वं कशाघातैरेनं ताडय पृष्ठतः ॥ अथानुगः कशां धृत्वा तं हंतुं करमूर्ध्वगः ॥ ३१ ॥ चकार तावत्तद्धस्तस्तूर्ध्वमेव स्थितोऽचलः ॥ राजा तमाह रे मंद कशयैनं न हंसि किम् ॥ ३२ ॥ सोप्याह राजन्मद्धस्तः स्थित ऊर्ध्वे न यात्यधः ॥ अन्यमाज्ञापयद्राजा सोपि तत्समतां गतः ॥ ३३ ॥ इत्थं राजानुगाः सर्वेप्यूर्ध्वहस्ताः कशाधराः ॥ जातास्तदाह राजेत्थं लघुं दृष्ट्वा द्विजार्भकम् ॥ ३४ ॥ ममानुगैः कशाघातः कृपयास्मै न दीयते ॥ न कराः स्तंभिता इत्थं मृषैवैतैः खलूच्यते ॥३५॥ मुधोन्मार्गे द्विजे वार्भे दयाऽह्यास्ये यथा पयः ॥ अहमेव कशाघातैर्हन्म्यतः कुपथस्थितम् ॥ ३६ ॥ इत्थं निश्चित्य राजासौ कशाघातान्द्विजार्भके ॥ दित्सुरुत्थातुमुद्युक्तस्तावत्तच्चरणावुभौ ॥ ३७ ॥ जडावास्तां क्षमः स्थानान्नोत्थातुं तं द्विजार्भकम् ॥ नमन्राजाऽऽसनाद्बालं प्रार्थयत्यनुगर्तधीः ॥ ३८ ॥

उन्मार्गे स्वधर्माचरणहीनद्विजबालके दयाकरणम् अह्यास्ये सर्पमुखे पय इव मुधा वृथास्ति । अतोऽहमेव हन्मि ताडयामि ॥ ३६ ॥ तावद्राजचरणौ जडावास्तामित्यन्वयः ॥ ३७ ॥ स्थानादुत्थातुं क्षमो नासीत् । राजेत्यपकर्षः । तं शिवस्वामिनं नमन् प्रार्थयति । कीदृशः । अनुगर्तधीः अनुगेषु सेवकेषु कृत

बुद्धिः सत्यत्वबुद्धिः । मत्पादस्तंभनेन सेवकहस्ता अपि स्तंभिता इति निश्चयवानित्यर्थः ॥ ३८ ॥ अस्मत्पादाद्या अनेन स्तंभिता इति ज्ञात्वा ब्राह्मण माहात्म्यं दुर्ज्ञेयमित्याह क इति । पृथिव्यां ब्राह्मणसामर्थ्यं को जानाति न कोपीत्यर्थः । मर्त्यो मनुष्योपि यो द्वादशवत्सरेभ्यः ऊनः न्यूनवयस्कोयं बाल श्चोरबुद्ध्या नो मानितः अस्माभिर्न सत्कृतः तिरस्कृत इति यावत् । तेन ब्राह्मणापमानेन ऊर्ध्वकराः स्तब्धहस्ताः बभूवुः । इंद्रवज्रप्रहारतुल्यत्वं स्तंभनस्य द्योतयितुं वृत्तमपि इन्द्रवज्रा ॥ ३९ ॥ न केवलमेतावत् किं तु मम चरणयुग्ममपि जडभावं प्राप । किंचिदासनान्न चंचलं भवति मम चरणयोः सेव कहस्तानां च स्तंभनाशाय मया कथं कर्तव्यं त्वत्कृपां विनाऽन्य उपायो न दृश्यत इत्यर्थः । स्तंभनादिविपरीतप्रसंगद्योतनाय विपरीतपूर्वावृत्तम् ।

राजोवाच ॥ को वेत्त्यहो ब्राह्मणवीर्यमुर्व्यां मर्त्योपि यो द्वादशवत्सरोनः ॥ नो मानितश्चोरधियायमर्भस्तेनानुगास्तूर्ध्वकराः किलासन् ॥ ॥ ३९ ॥ ममांघ्रियुग्मं च जडत्वमाप नेषच्चलत्यद्य निजासनात्तत् ॥ जडत्वनाशाय ममानुगानामंघ्र्योः करणां च कथं हि कार्यम् ॥ ४० ॥ नौमि स्थितोत्रैव निजासनेऽहं त्वां ब्राह्मणार्भं शिवभक्तवर्यम् ॥ त्वं स्तंभनान्मोचय शीघ्रमेतांस्त्वद्वैभवावेदिनमद्य मां च ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ निशम्य प्रार्थनां राज्ञः स विप्रार्भः कृपान्वितः ॥ शिवमेकांबरेशानं प्रार्थयामास चेतसि ॥ ४२ ॥ विप्रबाल उवाच ॥ एकस्मिन्विशदेंबरेऽखिलजगत्तिष्ठत्यमुष्मिंश्च तद्बाह्यान्तः परिपूर्णमेव सततं तल्लेपबंधोज्झितम् ॥ ब्रह्मांडानि तथैव संति बहुशस्त्वय्येव शुद्धेऽद्वये तेषु त्वं च सदास्यनंतविभवोऽतस्त्वाहुरेकांबरम् ॥ ४३ ॥

" जतौ जगौ गो विषमे समे स्याचौ जगौ ग एषा विपरीतपूर्वा " इति तल्लक्षणात् ॥ ४० ॥ अतस्त्वमेव बंधनान्मोचयेत्याह नौमीति । एतान् सेवकान् त्वद्वैभवानभिज्ञं मां च मोचय ॥ ४१ ॥ ४२ ॥ एकस्मिन् निर्मले आकाशे सर्वं जगत्तिष्ठति अमुष्मिन् जगति तत् अंबरं तिष्ठति । बाह्यदेशे अंतः मध्ये लेपबंधोज्झितं लेपबंधरहितं सततं पूर्णमेव वर्तते यथा तथा ब्रह्मांडानि शुद्धे संबंधरहिते नाशरहिते त्वय्येव संति त्वं च तेषु ब्रह्मांडेषु अनंतैश्वर्यवान् असि। अतस्त्वामेकांबरम् एकः अंबरमिव आहुः सर्वे जना इति शेषः । दीनदुःखमृगनिवारणे एकांबरेशशार्दूल एव समर्थ इत्यभिप्रायेण वृत्तं शार्दूलविक्रीडितम् ४३॥

किंच हे ईश सच्चिदानंदमयस्त्वं असत् जडं दुःखरूपं तदेतज्जगत् कर्म आत्मतुल्यं प्रकाशबहुलं विस्तृतप्रकाशं कर्तुं भूराद्यष्टप्रकारः अभूः । भूः पृथ्वी अंभांसि उदकानि अनिलो वायुः अनलोऽग्निः अंबरमाकाशम् अहर्नाथः सूर्यः हिमांशुश्चंद्रः पुमान्पुरुषो यजमानः जातोसि । तत्र दृष्टांतः लेखकश्चि त्रकार एव लेख्यं चित्रादि अनृतम् अत्यंतासदपि ऋतं सत्यं कर्तुमनेकधा अनेकरूपो भवति तथा त्वमेव भूरादिरूपेण अनेकरूपो जात इत्यर्थः ॥ ४४ ॥ स त्वम् अष्टविभूतिः श्रुत्युक्तभवशर्वादिनामभिः प्रसिद्धैर्भूरादिलिंगैः स्वशरणागतं रक्षितुम् इह पृथिव्यां वर्तसे । तत्र भूरादिलिंगेषु आदिः प्रथमो भूलिंगा त्मकोऽयमेकांबराभिधः शिवः कांचीपुर्यां स्थितः सन् उपरितः स्वर्गे मध्ये पृथिव्याम् अधः पाताले च अदः विश्वं स्वशक्त्या रक्षसि । ननु कांचीस्थेन मया

सच्चित्सौख्यमयस्त्वमेतदखिलं चासज्जडं दुःखदं तच्चेशात्मसमं प्रकाशबहुलं कर्तुं स्वयं त्वष्टधा ॥ भूरंभांस्यनलोनिलोंऽबरमहर्नाथो हिमांशुः पुमांश्चाभूर्लेखकवद्धि लेख्यमनृतं कर्त्तुं त्वृतं नैकधा ॥ ४४ ॥ स त्वं चाष्टतनुः श्रुतीरितिभवाद्यैर्नामभिर्भूमुखैर्लिंगैस्त्रातुमसीह चात्मशरणं तत्रादिरेकांबरः ॥ कांचीस्थः परिपास्यदो ह्युपरितो मध्येप्यधः शक्तितः सत्यंगं विपुलं यथातिविपुलं कांचीस्थमेकांब रम् ॥ ४५ ॥ देवाः सिद्धनराश्च पन्नगवरास्त्वां संस्तुवंतीश्वरं कांचीमेत्य हि योगशक्तिबलतः स्वस्वार्थिनो निण्मुखे ॥ तेषां त्वं निखिलार्थदोऽसि सततं भक्तानुकंपाढ्यहृत्तेप्यन्यं त्वदृते न चात्मसुखदं पश्यंति कांडांतरे ॥ ४६ ॥

कथमूर्ध्वाधोगतविश्वरक्षणं क्रियत इत्याशंक्याह । यथा विपुलं ऊर्ध्वाधोभागे नाधिकमपि सत्याः पतिव्रतायाः अंगं कांचीगतं मेखलावृति एकमंबरं वस्त्रं कर्तृ रक्षति तथा त्वमपि कांचीस्थभूमिलिंगनिवासी उर्ध्वाधो लोकान् रक्षसीति भावः ॥ ४५ ॥ मध्योर्ध्वाधोलोकगताः सर्वेपि त्वां भजंतीत्याह देवा इति । देवाः सिद्धाः नराः मनुष्याः सर्पश्रेष्ठाश्च स्वस्वार्थिनः स्वार्थसाधनेच्छवः संतः योगाभ्यासबलेन निण्मुखे निशामुखे कांचीमेत्यैश्वरमेकांबरेश्वरं स्तुवंति। भक्तेषु कृपायुक्तहृदयस्त्वं तेषां देवादीनां सर्वार्थप्रदाता भवसीति देवाद्या अपि कांडांतरे ब्रह्मांडे मध्ये अन्यब्रह्मांडेषु वा आत्मसुखप्रदं त्वां विना अन्यं न

पश्यंति । अतस्त्वमेव सर्वसौख्यप्रद इत्यर्थः ॥ ४६ ॥ त्वत्प्रियार्थं विष्णुरपि कांच्यां वरदराजरूपेण तिष्ठतीत्याह । प्राप्तुमिति । पूर्वं पार्वती पूर्वपतिं कामनाशकं शिवं त्वामेव प्राप्तुमधःकृतपादांगुष्ठेन पृथिव्यां तिष्ठंती सती अत्र कांच्यामुग्रं तपश्चक्रे इति दृष्ट्वा त्वया ज्ञापितः स विष्णुः पार्वत्यै वरान्ददौ । अतः कारणात् अस्यां कांच्यां तं विष्णुं वरदं वरदराजाभिधं सर्वे प्राहुः ॥ ४७ ॥ अथ त्वं हिमवता कर्त्रा नारदेन करणेन संप्रार्थितः सन् गिरिजापतिर्जातोसि एवमियं कांच्याख्या पुराणप्रसिद्धा या मोक्षपूः पंचमी मोक्षपुरीषु "अयोध्या मथुरा माया काशी कांची ह्यवंतिका । पुरी द्वारवती चैव सप्तैता मोक्षदायकाः" इति स्मृत्युक्तसप्तपुरीषु पंचमी काञ्चीपुरी अस्ति । अत्र वसतां जनानां काश्यां विश्वेश इव त्वं तु मोक्षं ददासि । च पुनः काश्यां कणपूर्णयाऽन्नपूर्णयेव

प्राप्तुं प्राक्पतिमेव कामदहनं त्वामद्रिकन्या पुरा चक्रेऽत्रैव तपोतिदुष्करमधःपादाग्रतो भूतले ॥ तिष्ठंतीति ।निरीक्ष्य शङ्कर विभो विष्णुस्त्वयाऽऽज्ञापितः पार्वत्यै स वरान्ददौ च वरदं तं प्राहुरस्यामतः ॥ ४७ ॥ जातस्त्वं गिरिजापतिर्हिमवता संप्रार्थितोऽर्थिणा कांचीत्थं हि पुरी पुराणकथिता या मोक्षपूः पंचमी॥मोक्षं त्वं तु ददासि चात्र वसतां काश्यां हि विश्वेशवत्कामाक्ष्या कणपूर्णयैव सुखमत्रेशः कथं स्तंभितः॥४८॥दुःखं मास्तु मदर्थमस्य नृपतेर्मेऽयं न दुष्कीर्तिदःस्तेयारोपकरो हि पूर्वचरितं दुष्कीर्तिसत्कीर्तिदम् ॥ चेन्मातापितृबंधुमित्ररहितस्य त्वं शिवःस्वाम्यसि क्षेत्रस्थस्त्वनुगैः करांघ्रिचलनात्त्वत्स्तंभनं मोचय॥४९॥ नो चेद्देहममुं त्यजाम्यघहरेऽस्मिन्सर्वतीर्थेऽधुना यास्ये ते पदमद्वयं शिवशुभत्वन्नामसंकीर्तनैः॥भूपं सानुगमद्य मोचयसि चेत्तेऽर्चारतः प्रागिव स्थास्येऽत्रैव निजायुरंतमुभयोर्भाव्यं तदंगीकुरु५०

कामाक्ष्या देव्या ईप्सितकामरूपं सुखम् अन्नवस्त्रादि विषयसुखं च ददासि। 'कामाक्षी कामदायिनी' इति रहस्यसहस्रनामाभिधानात्।एवं सति अत्र कांच्याम् ईशो राजा त्वया कथं स्तंभितः मोक्षपुरीनिवासिना त्वया राज्ञो बंधमोचनमवश्यं कर्तव्यमित्यर्थः ॥ ४८ ॥ मन्निमित्तेनास्य राज्ञो दुःखं मा भवतु इति प्रार्थयति दुःखमिति । मदर्थं राज्ञो दुःखं मा भवतु । ननु तव दुःखदस्य राज्ञो बंधनमुचितमिति चेन्मदुःखप्रदोयं नास्तीत्याह । चोरोयमित्यारोपकरोयं राजा ममापकीर्तिप्रदो नास्ति हि यस्मात्पूर्वाचरितं प्रारब्धमेव सदसत्कीर्तिप्रदमस्ति । मम साक्षान्माता पिता बंधुः सुहृच्च त्वमेवासि चेत्तर्हि क्षेत्रस्थः मोक्षपुरीस्थोयं राजा सेवकैः सह करचरणाचलनरूपात् त्वत्कृतस्तंभनान्मुक्तो भवत्वित्यर्थः ॥ ४९ ॥ नो चेन्न मोचयसि चेत् अधुना संप्रति अस्मिन्सर्वतीर्थेऽहं

देहं त्यजामि शिवशिवेतिनामसंकीर्तनैः करणैः अद्वितीयं ते पदं गमिष्यामि सेवकसहितं राजानं मोचयसि चेत्तर्हि त्वत्पूजानुरक्तः सन् निजायुरंतं स्वायुष्यसमाप्तिपर्यंतम् अत्र कांच्यां वसामि उभयोर्मरणजीवनयोर्मध्ये यद्भाव्यम् अवश्यं भावि तत्स्वीकुरु मरणजीवनयोरुभयोरपि मम समानदर्शित्वमस्तीत्यर्थः॥५०॥ इत्थमिति प्रेक्ष्य दृष्ट्वा। यतो व्यापकः सर्वगतः भक्तवत्सलः ॥ ५१ ॥ निशीथान्निशीथमारभ्य भक्तापमानदोषेण करणेन शिवेन कर्त्रा सेवकैः सह

श्रीदेशिकेंद्र उवाच ॥ इत्थं विप्रार्भकं प्रेक्ष्य निःस्पृहं व्यापकः शिवः ॥ स्तंभनात्सानुगं भूपं मोचयामास वत्सलः ॥ ॥ ५१ ॥ निशीथाद्दिवसेऽन्यस्मिन्मध्याह्नावधि भूपतिः ॥ स्वीयावमानदोषेण स्तंभितः शंभुनाऽनुगैः ॥ ५२ ॥ मोचितश्च तदात्मीयस्तवनादेव नान्यथा ॥ अथ राजाऽऽसनात्तूर्णमेत्य बालकसन्निधौ ॥ ५३ ॥ ननाम दंडवद्भूयः प्रश्रयावनतो भृशम् ॥ स्वयं स्नात्वा च तं बालं स्नापयित्वोष्णवारिभिः ॥ ५४ ॥ महार्हवस्त्राभरणैः पूजयामास भक्तितः ॥ तदाप्रभृति तन्नाम शिवस्वामीति चाभवत् ॥ ५५ ॥ प्रख्यातोऽसौ शिवस्वामी बभूव धरणीतले ॥ विद्याश्चापाखिलाः शीघ्रमीषदभ्यासतः सुधीः ॥ ५६ ॥ कुलीनकन्यया चक्रे तद्विवाहं च भूपतिः ॥ ददौ बहुधनं चास्मै गृहं सर्वसमृद्धिमत् ॥ ५७ ॥ अग्निहोत्रादि कर्माथ शिवस्वामी चकार सः ॥ शिष्यांश्चाध्यापयामास त्रिकालं शिवमर्चयन् ॥५८॥ अथैकदा ययौ काशीं शिवस्वामी सहाग्निभिः ॥ चकार गोरथैश्शिष्यैः स यात्रां त्रिस्थलीं क्रमात् ॥ ५९ ॥ सर्वज्ञं तत्र दृष्ट्वासौ रामानंदं महाधियम् ॥ गत्वा शरणमात्मज्ञं मंत्राञ्जग्राह चाखिलान् ॥६०॥ तस्माज्ज्ञानं तथा योगरहस्यान्यखिलानि च ॥ गुरुणाख्या शिवस्वाम्यानंदेत्यस्योदितामला ॥ ६१ ॥ काश्यां स्थित्वाल्पकालं स पुनः कांचीं ययौ ततः ॥ बभूव सिद्धवर्योसौ रामानंदकृपाबलात् ॥ ६२ ॥

स्तंभितः ॥ ५२ ॥ आत्मीयस्तवनाद्भक्तकृतस्तवनेनैव । अथ राजेत्युत्तरान्वयि ॥ ५३ ॥ उत्तरार्द्धमुत्तरान्वयि । उष्णवारिभिः उष्णोदकैः ॥ ५४ ॥ ॥ ५५ ॥ ५६ ॥५७॥५८ ॥ क्रमात् त्रिस्थलीयात्रां काशीप्रयागगयारूपां चकार कृतवानित्यर्थः ॥५९ ॥ ६० ॥ पूर्वार्द्धं पूर्वान्वयि । अखिलानि रह

स्यानि पूर्णाभिषेकादीनि । गुरुणा रामानंदेन ॥ ६१ ॥ ६२ ॥ ६३ ॥ त्रयोदशोत्तरशततमं शिवस्वाम्यानंदं प्रणमति । अमातृतात इति । अल्पवयसि ॥ ६४ ॥ एतच्चरित्रश्रवणादिफलमाह चरित्रमिति । मृषारोपणं मिथ्यारोपः । उपजातिवृत्तम् ॥ ६५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां द्विपंचाशत्तमः सर्गः ॥ ५२ ॥ त्रिपंचाशत्तमे त्वेकषष्टिपद्यैः कपोलकः । बाल्ये कृपावशाद्देव्याः सिद्धिमापेति वर्ण्यते ॥ ५३ ॥ शिवस्वा

अस्यैव वंशे भविता सिद्धत्रयीतिविश्रुतः ॥ नंदिवर्द्धननामाग्रे चरित्रं तस्य चोच्यते ॥ ६३ ॥ अमातृतातोपि वयस्यदीर्घे यः शंभुभक्त्यैव किलाप सिद्धिम् ॥ त्रयोदशाङ्काग्रशतान्तिमं तं गुरुं शिवस्वामिनमानताः स्मः ॥ ६४ ॥ चरित्रमेतत्सततं पुमान्यः शृणोति भक्त्या प्रपठेच्च मर्त्यः ॥ न स्यान्मृषारोपणमल्पमस्य न चोरभीर्जन्मनि नापकीर्तिः ॥ ६५ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे शिवस्वाम्यानंदगुरुचरित्रवर्णनं नाम द्विपंचाशत्तमः सर्गः ॥५२॥ श्रीदेशिकेंद्र उवाच ॥ शिवस्वाम्यानंदशिष्यः कपोलानंद ईरितः ॥ कान्यकुब्जाभिधे देशे यश्चासीद्ब्राह्मणार्भकः ॥ १ ॥ पितास्यासीत्पंडिताग्र्यः पंचासंस्तस्य सूनवः ॥ कनिष्ठस्तेष्वयं बाल्ये पितृप्रीतिकरोऽधिकम् ॥ २ ॥ चकार सोष्टमे वर्षे तस्योपनयनं पिता ॥ सावित्रीमुपदिश्यैवं संध्यां चाध्यापयत्ततः ॥३॥ अध्यापयितुमारेभे वेदमेनं स सद्दिने ॥ अथाययौ शारदीयं नवरात्रं तदा पिता ॥ ४ ॥ कृत्वा मंडपिकां गेहे लसत्पल्लवतोरणाम् ॥ रमणीयवितानाढ्यां कदलीस्तंभशोभिताम् ॥ ५ ॥ आदर्शांकितचित्राढ्यां पुष्पमालासुगंधिनीम् ॥ नीलपीतारुणश्वेतहरितैश्चोपरिस्थितैः ॥ ६ ॥ खदीपैर्बहुशोभाढ्यामधोदीपैरखंडिताम् ॥ सिंहासने तां संस्थाप्य श्रीदेवीं प्रतिवार्षिकीम् ॥ ७ ॥

म्यानंदशिष्य इत्यादिना ॥ १ ॥ २ ॥ ३ ॥ सद्दिने शुभदिवसे । तदा पितेत्युत्तरान्वयि ॥ ४ ॥ तदा कपोलानंदपिता गृहे मंडपं कृत्वा तत्र सिंहासने श्रीदेवीं स्थाप्य तंत्रोक्तविधानेन महतीं प्रतिवर्षागतां पूजां चकारेति सार्द्धत्रयाणामन्वयः ॥ ५ ॥ दर्पणेषु अंकितैश्चित्रितैश्चित्रैः 'तजवीरा' इति प्रसिद्धैर्युक्ताम् ॥ ६ ॥ खदीपैः काचभांडाश्रयदीपैः 'कंदील' इति प्रसिद्धैः । अधोदीपैः 'नंदादीप' इति प्रसिद्धैरखंडितां सततं युक्ताम् ॥ ७ ॥

उत्तरार्द्धमुत्तरान्वयि ॥८॥ समाप्तावित्युत्तरान्वयि॥९॥एवं दृष्ट्वेत्यादीनां स बालो मंडपिकां कृतवानित्यत्रान्वयः । वयस्याढ्यः बालयुक्तः ॥१०॥ तस्या वेद्या ऊर्ध्वतः ऊर्ध्वभागे लघुभिः काष्ठैः शरदृतुगतपल्लवैरित्यारभ्य भक्त्या तां देवीं पुपुजे इत्यंतमन्वयः॥११॥ तां मंडपिकाम् । ऋतुभानपुष्पैः पल्लवैरलंकृत्य ऊर्ध्वभागे ग्रामादानीततृणैराच्छाद्य अंतः मध्ये उर्व्यां महत्यां दृषदि पाषाणे अल्पपाषाणमयीं शिवां श्रीदेवीं कल्पयित्वा ॥ १२ ॥ १३ ॥ सितां शर्कराम्।

पूजां चकार महतीमागमोक्तविधानतः ॥ सुवासिनीः कुमारीश्च हरिद्राकुंकुमादिभिः ॥ ८ ॥ पूजयित्वोपचारैश्च स्वाद्वन्नं भोजनं ददौ ॥ ब्राह्मणेभ्यस्तथा नित्यं समाप्तौ वस्त्रभूषणैः ॥ ९ ॥ पूजयामास विप्राग्र्यानेवं दृष्ट्वा महोत्सवम् ॥ स बालोपि वयस्याऽऽढ्यो गत्वा शून्यस्थलं क्वचित् ॥ १० ॥ वेदिं कृत्वोर्ध्वतस्तस्याः काष्ठैर्मंडपिकामपि ॥ लघुभिः कृतवान्यत्नात्पल्लवैस्तदृतुस्थितैः ॥११॥ समन्तात्तामलंकृत्य चोर्ध्वं ग्राम्यतृणैर्मुहुः ॥ संछाद्यांतर्दृषद्युर्व्यामणूपलमयीं शिवाम् ॥ १२ ॥ कल्पयित्वाथ संस्थाप्य सिंदूरेण विलेप्य च ॥ स्वगेहादेव चौर्येण हरिद्राकुंकुमाक्षताः ॥ १३ ॥ सितां गुडं तथानीय पुपूजैतां स भक्तितः ॥ लब्धपुष्पैश्च पूजांते लघ्वीराहूय कन्यकाः ॥ १४ ॥ हरिद्राकुंकुमं ताभ्यः संलेप्यैषात्सितां गुडम् ॥ भोजनाय ददौ भक्त्या तिंतिडीबीजदक्षिणाम् ॥ १५ ॥ लघुबालान्ब्राह्मणांश्च कल्पयित्वा तथाऽकरोत् ॥ त्यक्त्वाशनं चाध्ययनं स्थितस्तत्रैव सोऽर्भकः ॥ १६ ॥ प्रथमेह्नि तदा मात्रा बलान्नीत्वा गृहं शिशुः ॥ भोजितोऽथान्यदिवसे बालकृत्यं तु तत्पिता ॥ १७ ॥ श्रुत्वा ययौ स्वयं तत्रापश्यत्सर्वं निजात्मजम् ॥ निमील्य नयने देव्याः स्थितमग्रे तृणासने ॥ १८ ॥ तृणग्रंथिस्रजं धृत्वा जपंतं वेदमातरम् ॥ अन्यान्कृतोपनयनाञ्जपतस्तद्वदेव हि ॥ १९ ॥

पूजांते इत्याद्युत्तरान्वयि ॥ १४ ॥ १५ ॥ तथा पितृसदृशम् । तत्र पूजास्थले ॥ १६ ॥ अथेत्युत्तरान्वयि ॥ १७ ॥ तत्र पूजास्थले सर्वं बालकृतसमारंभम् अपश्यत । सर्वमेवाह । निजात्मजमित्यादिसार्द्धद्वयेन ॥ १८ ॥ तृणग्रंथिरूपां मालाम् । वेदमातरं गायत्रीं जपंतम् ॥ १९ ॥

स द्विज इत्युत्तरान्वयि ॥२०॥२१॥ यदि मद्गृहान् आगमिष्यसि तर्हि ताडने योग्यो भवसि॥२२॥२३॥ अखिलान् स्त्रीपुत्रादीन् । यूयमित्युत्तरान्वयि । ॥ २४ ॥ २५ ॥ अथार्भको बालोपि तातेन पित्रा खंडितां जगन्मातुरित्युत्तरान्वयि ॥ २६ ॥ अजने जनरहिते ॥ २७ ॥ उज्झिता त्यक्ता अतो हेतोः

बहिश्चानुपनीतांस्तु स्थितांस्तूष्णीं लघूञ्छिशून् ॥ लघ्वीः कन्याश्च खेलंतीः समंताच्चैव स द्विजः ॥२०॥ दृष्ट्वांतःस्थं सुतं प्राह त्यक्ताध्ययनमर्भक ॥ किं जपस्युपलाग्रेत्र दीयते किं तवाश्मना ॥ २१ ॥ अद्यप्रभृति वस्त्रान्नं याचयाश्मानमेव हि ॥ नागच्छ मद्गृहांश्चेत्त्वमायास्यस्यनुताड्यसे ॥ २२ ॥ इत्यादि बहुधोक्त्वा तं कराघातैः कपोलयोः ॥ संताड्याथोपलं देव्याः कोपात्तत्त्याज दूरतः ॥ २३ ॥ भंक्त्वा मंडपिकां चान्याञ्छिशून्संतर्ज्य वाक्यतः ॥ गृहमेत्याखिलान्प्राह यूयं यदि गृहं शिशुम् ॥ २४ ॥ तमानेष्यथ वै गत्वा भोजयिष्यथ तत्र हि ॥ प्राप्तं स्वतोथवा गेहं स्वीकरिष्यथ लोभतः ॥ २५ ॥ तर्हि तेनान्वितान्युष्मान्करिष्यामि गृहाद्बहिः ॥ अथार्भकोऽपि तातेन जगन्मातुः सुखंडिताम् ॥२६॥ दृष्ट्वा मंडपिकां त्यक्तां तथा देवीं च दूरतः ॥ एक एवाजने स्थाने रुरोदोच्चैः शिवां स्मरन् ॥ ॥ २७ ॥ प्राहेत्थं नाणु दुःखं मे ताडनेन कपोलयोः ॥ ताड्यो हि पित्रार्भः किंतु श्रीदेवी दूरमुज्झिता ॥ २८ ॥ तथा मंडपिकाभंगः कृतोनेन कुबुद्धिना ॥ नागच्छ मद्गृहं चेति तेनोक्तोऽहमतः खलु ॥ २९ ॥ यास्यामि नैव तद्गेहं नोत्थितिं स्वासनादहम् ॥ करिष्यामि स्वतश्चेन्मां देवी चोत्थापयिष्यति ॥ ३० ॥ तर्ह्येवोत्थितिरस्मान्मे सैवान्नांशुकदापि मे ॥ निश्चित्यैवं स्थितस्तत्र गायत्रीजपतत्परः ॥ ३१ ॥ त्यक्त्वाशनं तथा पानं निद्रां तंद्रां दृढांतरः ॥ अहोरात्रमतिक्रांतमरुणस्योदये तदा ॥ ३२ ॥ भक्तः कपोलयोः पित्रा ताडितः सांत्वयन्त्यतः ॥ अदृश्या प्राह तं देवी ह्युत्तिष्ठेति स्पृशंत्यमुम् ॥ ३३ ॥

खलु निश्चयेन न यास्यामीति संबंधः ॥ २८ ॥ २९ ॥ उत्थितिम् उत्थानम् ॥ ३० ॥ तदा अस्मादासनान्मे उत्थानं भवतु सा देव्येव मे मह्यम् अन्नवस्त्रदात्री भवतु न पित्रादिरित्यर्थः । तत्र ध्वस्तपूजास्थले॥ ३१ ॥ पूर्वार्धं पूर्वान्वयि । तदा अरुणोदये अदृश्यरूपा देवी तं बालं प्राहेत्यन्वयः॥ ३२ ॥ ३३ ॥

पूर्वार्द्धे पूर्वान्वयि ॥ ३४ ॥ तत्र कांच्याम् ॥ ३५ ॥ ३६ ॥ ननु अद्य त्वं भाषसे दर्शनं कुतो न ददासीति चेत्तत्राह । अलब्धेति ॥ ३७ ॥ सर्वत्र स्थिता चिद्रूपायाः देव्याः व्यापकत्वादित्यर्थः । उत्तरार्द्धमुत्तरान्वयि ॥ ३८ ॥ ३९ ॥ तत्पुरात् पितृपुरात् ॥ ४० ॥ बालविशेषणानि कपोलयोः

कपोलयोस्तु चादृश्यात्करात्स्वीयाद्दयान्विता ॥ गच्छ वत्साद्य शीघ्रं त्वं शिवकांचीमतंद्रितः ॥ ३४ ॥ मद्भक्तोस्ति शिवस्वामी तत्र मंत्रविदां वरः ॥ अहं चाज्ञापयिष्ये तं तुभ्यं मंत्रोपदेशने ॥ ३५ ॥ तस्माद्गृहाण मंत्रांस्त्वं दुर्लभान्सर्वसिद्धिदान् ॥ ताञ्जपस्व ततोहं ते दास्ये शीघ्रं स्वदर्शनम् ॥ ३६ ॥ अलब्धगुरुपादानां नैव मद्दर्शनं भवेत् ॥ गुरुमार्गवतां पुंसां सदा तिष्ठामि सन्निधौ ॥ ॥ ३७ ॥ तूष्णीं बभूव चोक्त्वेत्थं सा देवी सर्वतः स्थिता ॥ बालोपि तद्वचः सर्वं साक्षाद्देव्या समीरितम् ॥ ३८ ॥ ज्ञात्वोत्थितस्तूर्ण मेव स्वासनात्तत्कपोलकौ ॥ श्रीदेव्याः स्पर्शतोत्यंतं स्वर्णकांती बभूवतुः ॥ ३९ ॥ तदैव तत्पुराद्बालः कांचीमेवाञ्जसा ययौ ॥ तत्र विप्रगृहेष्वश्रंश्चैकाक्ययेव द्विजात्मजः ॥ ४० ॥ मेखलामुपवीतं चाजिनं कौपीनमादधत् ॥ दंडं कमंडलुं लब्ध्वा शिवयाऽद्यः कपो लयोः ॥४१॥ तेजस्वी संस्मरन्देवीं शिवस्वामिगृहाजिरे ॥ प्राप्तो दृष्टस्तस्य शिष्यैरुक्तश्च गुरवेऽखिलैः ॥ ४२ ॥ प्रागेव देव्याज्ञप्तो भूच्छिवस्वाम्याऽऽसनाद्बहिः ॥ ययौ कांतकपोलं चापश्यल्लघुबटुं पुरः ॥ ४३ ॥ शिवस्वामिनमेनं तु ज्ञात्वा साष्टांगवंदनम् ॥ चक्रे बटुस्तदा तेन चोत्थाप्यालिंगितः शिशुः ॥ ४४ ॥ बटुमाह शिवस्वामी त्वं धन्यो मां यतः स्वयम् ॥ देव्येवाज्ञापयत्स्वप्ने तुभ्यं मंत्रोपदेशने ॥ ४५ ॥ इत्युक्त्वा तं शुभे काले स्नात्वा संस्राप्य देशिकः ॥ सर्वमंत्रमयीं दीक्षां ददौ तस्मै विधानतः ॥ ४६ ॥ कपो लानंद इत्यस्य चकाराख्यां सुशोभनाम् ॥ यतो देवीकरस्पर्शात्स्वर्णाभौ स्तः कपोलकौ ॥ ४७ ॥ तस्थावथ कपोलाख्यानंदः कांच्यां गुरोर्गृहे ॥ विद्यां चाभ्यसितुं सर्वां सेवां कुर्वन् गुरोः सदा ॥ ४८ ॥

तेजस्वी प्रशस्ततेजोयुक्त इति संबंधः ॥ ४१ ॥ अजिरे अंगणे उक्तः निवेदितः ॥ ४२ ॥ ४३ ॥ एनं पुरोवर्तिनम् ॥ ४४ ॥ ४५ ॥ ४६ ॥ स्वर्णाभौ सुवर्णकांती यतो भवतस्ततः कपोलताडनेन कपोलस्पर्शनेन वा परमानंदो यस्य तथा नाम देशिकश्चकारेत्यन्वयः ॥ ४७ ॥ ४८ ॥

अस्य कपोलानंदस्य तत्र पूजास्थाने ॥ ४९॥५०॥ खेलनं क्रीडासाधनं रुषा क्रोधेन ॥ ५१ ॥ हेलनं पूजाभंगादिना तिरस्करणम् ॥५२॥५३॥ देवीमंत्रान् श्रीविद्यादीन् जपन् सर्वसिद्धीः प्राप्तवानिति संबंधः ॥ ५४ ॥ अखिलज्ञतां सर्वज्ञताम् ॥ ५५ ॥ शुचं शोकम् ॥ ५६ ॥ ५७ ॥ ५८ ॥ विधिना आगमोक्तविधिना ॥ ५९ ॥ चतुर्दशाधिकशततमं कपोलानंदं प्रणमति इत्थमिति । पूर्वोक्तप्रकारेण । स्पष्टमन्यत् । दलतः इंद्रोपेंद्रवज्रामिश्रणादुपजातिः ।

पितास्य स्वपुरे तत्र ह्यदृष्ट्वा तं तदा सुतम् ॥ शुशोच भृशदुःखार्तः स्मरन्पुत्रगुणान्मुहुः ॥ ४९ ॥ प्राहेति च मया शीलमविचार्य सुतस्य सः ॥ मुधा निर्भर्त्सितो वाक्यैः परुषैः श्रुतिदुःखदैः ॥ ५० ॥ यो बालोपि महादेव्याः पूजामेव हि खेलनम् ॥ चक्रे त्यक्त्वाशनं पानं ताडितोपि मया रुषा ॥ ५१ ॥ क्व गतः स इदानीं तु कदा यास्यति मद्गृहान् ॥ अपराधं क्षमस्वांब निजभक्तस्य हेलनम् ॥ ५२ ॥ मत्पुत्रं रक्ष ते भक्तं झटित्यानय मद्गृहान् ॥ श्रीदेवीमिति संप्रार्थ्य स्थितो गेहे सुतं स्मरन् ॥ ५३ ॥ अथातः स कपोलाख्योऽखिलाः प्राप गुरोर्मुखात् ॥ विद्याः स्वल्पेन कालेन देवीमंत्राञ्जपंस्तथा ॥ ५४ ॥ सिद्धीः प्रापाखिलाः सोथ देव्याज्ञतो गुरुं निजम् ॥ नत्वागात्पितरं तूर्णं गुरोः प्राप्याखिलज्ञताम् ॥ ५५ ॥ दृष्ट्वा पितागतं पुत्रं शुचं त्यक्त्वातिहर्षयुक् ॥ आलिलिंगाथ तं दोर्भ्यां रोमांचिततनुर्मुदा ॥ ५६॥ मूर्ध्न्युपाघ्राय कुशलं पप्रच्छाथ कपोलकः ॥ पित्रेप्याहाखिलं वृत्तं श्रीदेवीस्पर्शनादिकम् ॥५७॥ श्रुत्वा पितापि दृष्ट्वास्य कपोलौ स्वर्णवर्चसौ ॥ मेनेऽद्धास्य प्रसादोस्ति देव्या इति निजांतरे ॥ ५८ ॥ अथ पित्रा कृतोद्वाहः कपोलाख्यो गृहाश्रमी ॥ शिष्यानध्यापयंस्तस्थौ श्रीदेवीं विधिनार्चयन् ॥५९॥ इत्थं महासिद्धवरः कपोलानंदोखिलं प्राह च रुद्रदाय॥ रहस्यमेनं तु चतुर्दशादिशतान्तिमं तं गुरुमानताः स्मः॥६०॥यः कपोलचरितं त्विदं पठेच्छ्रावयेद्गुरुमतिः शृणोत्यपि॥ मंदबुद्धिरपि पंडिताग्र्यतां संलभेत सुखमाद्यमंजसा॥६१॥इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे कपोलानंदगुरुकथावर्णनं नाम त्रिपंचाशत्तमः सर्गः ॥५३॥

॥ ६० ॥ कपोलानंदकथाश्रवणादेः फलमाह य इति । गुरुमतिः गुरौ श्रद्धावान् आद्यं परमं सुखमाप्नुयात् । रथोद्धता ॥६१ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्धेऽर्थस्फूर्त्यभिधायां टीकायां त्रिपंचाशत्तमः सर्गः ॥ ५३ ॥

चतुःपंचाशनमेष्टपंचाशत्पद्यतः स्मृतः । रुद्रटो रौद्रकर्मायं गुरुः पूर्वार्द्धकैतिमः ॥५४॥ रुद्रटानंदनाथ इति ॥१॥ बाल्याद्बाल्यावस्थामारभ्य क्रूरकर्मा॥२॥ पाषाणानां पातैर्घटादीनां स्फोटनं चकार॥३॥तत दुग्धं पाययति प्राशयति॥४॥ बीभत्सानि निंद्यानि॥५॥अथासौ अष्टवर्षो जात इत्यन्वयः ॥६॥ वेदवे

श्रीदेशिकेंद्र उवाच ॥ रुद्रटानंदनाथस्तु साक्षाद्रुद्रांशकः स्मृतः ॥ नर्मदोत्तरभागेऽसौ जातो विप्रगृहे शिशुः ॥ १ ॥ रौद्रकर्मकरो बाल्यात्रिवर्षे कृतचूडकः ॥ चकार कलहान्नित्यं वयस्यैश्च वयोधिकैः ॥ २ ॥ क्वचिद्बंधं कपाटानां बहिः शृंखलयाऽकरोत् ॥ मृद्भांडस्फोटनं पातैश्चाश्मनां लगुडैरपि ॥ ३ ॥ दुग्धदानां गवां वत्सान्मुक्त्वा तत्पाययत्यथ ॥ बध्नाति पुच्छतोऽन्योन्यं पांथान्हंति सदाश्मभिः ॥ ४ ॥ गालिप्रदानमत्युग्रं महतोपि करोत्यसौ ॥ इत्थं ह्यनेककर्माणि बीभत्सान्येव चाकरोत् ॥ ५ ॥ केचिद्बाल इति ज्ञात्वा तूष्णीमासुः कलिं परे ॥ तत्पित्रा तरसा चक्रुरथासावष्टहायनः ॥ ६ ॥ जातः पिता चकारास्योपनीतिं वेदवेदिभिः ॥ कृतोपनयनोप्येष संध्यां चाध्ययनं क्वचित् ॥७॥ न करोति सदा सक्तः कर्मण्युग्रे पुरा यथा ॥ ताडितो बहुधा पित्रा स्तंभे बद्धोपि रज्जुभिः ॥८॥ मरीच्यादिभवैर्धूमैरुग्रैर्वक्त्रे च धूपितः ॥ पौरैश्च ताडितो नित्यं शालायां प्रापितोप्यसौ ॥९॥ न जहात्युग्रकर्मैवं त्रस्तो थास्य पिता हृदि ॥ विचार्य प्राह बालोयं प्रापणीयोऽविमुक्तकम् ॥१०॥ प्राक्कर्मपाकतस्तत्र गतिः काप्यस्तु चास्य हि ॥ येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ११ ॥ इत्थं पुराणवचनं तस्मात्तत्रैव चास्त्वयम् ॥ इत्थं निश्चित्य मनसा गृहीत्वान्यस्य बालकम् ॥ १२ ॥ कुटुंबसहितः काशीं गोरथेन ययौ तदा ॥ अथ मार्गे महारण्ये व्याघ्रः कश्चिद्भयानकः ॥ १३ ॥ अवरुध्या स्थितो मार्गे तदा दृष्ट्वा वृषावुभौ ॥ ग्रीवाकाष्ठे दृढं बन्धं संत्रोट्यान्यमार्गतो गतौ ॥ १४ ॥

दिभिः वेदज्ञैर्ब्राह्मणैः उत्तरार्द्धमुत्तरान्वयि क्वचित्कदाचित्॥७॥पुरा उपनयनात्पूर्वं रज्जुभिः कालभेदेन रज्जुभेदाद्बहुवचनम्॥८॥उत्तरान्वयिप०॥९॥प्रापणीयः प्रवेष्टव्यः अविमुक्तकं काशीम्॥१०॥११॥अस्तु भवेत् । इत्थमित्युत्तरान्वयि ॥१२॥अथेत्युत्तरान्वयि॥१३॥ग्रीवास्थितकाष्ठे युगकाष्ठे स्थितं दृढं बंधं

संत्रोट्य खंडयित्वा उन्मार्गेतो गतौ मार्गतः भ्रष्टौ॥१४॥१५॥ त्वामित्याद्युत्तरान्वयि । संभक्ष्य भक्षयित्वा ॥१६॥१७॥ शार्दूल इत्युत्तरान्वयि ॥ १८॥ उत्तरार्द्धमुत्तरान्वयि ॥१९॥ दूरादित्युत्तरान्वयि ॥ २० ॥ तस्माद्व्याघ्रदर्शनस्थानात् अस्माभिरित्युत्तरान्वयि ॥२१ ॥ २२ ॥ रुद्रटपदस्यार्थमाह टकार

पतितश्चाग्रतः पृथ्व्यां शकटोथाखिलाश्च ते ॥ भयप्रकंपितांगास्तु बालं प्राहुरिति स्फुटम् ॥१५॥ त्वं सदैवोग्रकर्मासि त्वामतस्तरसा वयम् ॥ व्याघ्राग्रतस्त्यजामोऽथ संभक्ष्याध्वानमद्य नः ॥ १६ ॥ दास्यत्येवायमित्यर्भः श्रुत्वा भीतो महाध्वानिम् ॥ चकारासौ यथा रुद्रः कल्पांतेऽखिलनाशकः ॥ १७ ॥ श्रुत्वात्युग्रध्वनिं पृथ्व्यां मूर्च्छिताः पतितास्तदा ॥ तत्पित्राद्याश्च शार्दूलो भीतः कृत्वा मह त्स्वनम् ॥ १८ ॥ पुच्छं संताड्य भूम्यां च वेगाच्चक्रे पलायनम् ॥ मुहूर्तादुत्थिताः सर्वे विद्धांगाः कंटकाश्मभिः ॥१९॥ व्यस्तवस्त्राश्च ददृशुः शकटस्थं तमर्भकम् ॥ निर्भयं न च शार्दूलं दूरादानीय तौ वृषौ ॥ २० ॥ संयोज्य शकटे तस्माच्छनैः कांचित्पुरं ययुः ॥ प्रोचुर्मिथोऽथ तेऽस्माभिर्ध्वनिर्जन्मन्यपीदृशः ॥२१॥ न श्रुतो येन निष्प्राणा इव मूर्च्छापरा वयम् ॥ रौद्रो ध्वनिः कृतोनेन रुद्रध्व निरिवाद्भुतः ॥ २२॥ तस्माद्रुद्रट इत्यस्य नामाद्यारभ्य तिष्ठतु ॥ टकारो ध्वनिरित्युक्तो रुद्रध्वनिरिव ध्वनिः ॥ २३ ॥ यस्यासौ रुद्रटश्चेत्थं विग्रहः सार्थकोस्य हि ॥ ततः कतिपयाहोभिर्ययुः काशीं सरुद्रटाः॥ २४ ॥ तेखिलास्त्रिस्थलीयात्रां कृत्वा काशीं पुनर्य युः ॥ अथैकदा निशीथे तं त्यक्त्वा रुद्रटमेकलम् ॥ २५ ॥ निद्राग्रस्तं स्थितिस्थाने पितृमुख्यास्ततो ययुः ॥ स्वदेशं रुद्रटोऽथोषस्यु त्थितस्तत्स्थलेऽखिलान् ॥ २६ ॥ अदृष्ट्वोच्चैः स रुदितं चकार भयविह्वलः ॥ निर्जने चोद्वसे स्थाने श्रुत्वा घोरस्वनं जनाः ॥ २७॥ भीतास्तत्सन्निधौ केपि न ययुः पुरवासिनः ॥ यामद्वयमतिक्रांतं रुदतोस्याथ सोर्भकः ॥ २८ ॥

इति । " टः पुमान्करटे धूमे चापेर्के कितवे ध्वनौ " इति रत्नमाला । रुद्रध्वनिरित्युत्तरान्वयि ॥२३॥ सरुद्रटाः पुत्रसहिताः ॥२४॥ त्रिस्थलीं काशी प्रयागगयारूपाम् । अथेत्युत्तरान्वयि ॥ २५ ॥ रुद्रटेत्याद्युत्तरान्वयि ॥ २६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ २७ ॥ तत्सन्निधौ बालसमीपे । अथेत्याद्युत्तरा

न्वयि ॥ २८ ॥ अथायुत्तरान्वयि ॥ २९ ॥ पायसामत्रं पायसपात्रं 'पात्रामत्रं च भाजनम्' इत्यमरः । उभयहस्ताभ्याम् ॥ ३० ॥ तं रुद्रटम् । अन्न पूर्णेत्यध्याहारः पूर्वार्द्धे ॥ ३१ ॥ निजमातरं स्वमातृरूपाम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ भिक्षाशनः सकृदुच्चारणमात्रेण तद्धारणपूर्वं पाठकर्ता



मध्याह्ने क्षुधितोत्यंतं तृषितः पतितो भुवि ॥ निःसत्त्वोथ दयाविष्टा काशी क्षेत्राभिमानिनी ॥ २९ ॥ आविर्बभूवान्नपूर्णा रुद्रटाग्रे स्फुरत्तनुः ॥ दधती पायसामत्रं दर्वीं चोभयहस्ततः ॥३०॥ उत्थाप्य तं पायसान्नकवलं तत्करे ददौ ॥ बभक्ष सोपि तत्तूर्णं क्षुधाविष्टोऽमृतोपमम् ॥ ३१ ॥ जलमप्यंबया दत्तं पपौ तृट्पीडितोऽर्भकः ॥ उन्मील्य नयनेऽपश्यत्तां साक्षान्निजमातरम् ॥ ३२ ॥ मदर्थेऽत्र स्थिता माताऽन्ये गता इत्यचिन्तयत् ॥ तावदंतर्दधे सापि पश्यतोर्भस्य चांबिका ॥ ३३ ॥ देवीप्रसादात्सद्बुद्धिश्चिंतयन्मनसेति सः ॥ नेयं मज्जननी साक्षाज्जगन्मातान्नपूर्णिका ॥३४॥ काशीस्था प्रददात्यन्नं मयेत्थं प्राक् पितुः श्रुतम् ॥ इत्थं विचार्य शांतात्मा स्थितः काश्यां स रुद्रटः ॥ ३५ ॥ भिक्षाश्यध्ययनं चक्रे सकृदुच्चारपाठकृत् ॥ सांगवेदांश्च शास्त्राणि विद्याः प्रापाखिलास्तथा ॥ ॥ ३६ ॥ अल्पेनैव हि कालेन पंडितार्यो बभूव सः ॥ काश्यामेव कृतोद्वाहः स्थितश्चाध्यापयन् बहून् ॥ ३७ ॥ अथ देशान्स बभ्राम शिष्यैर्दिग्विजयेच्छया ॥ देशाञ्जित्वाथ संप्रापत्कान्यकुब्जाख्यदेशगम् ॥ ३८ ॥ कपोलानंदमत्रत्यं जेतुं नैव क्षमोऽभवत् ॥ ज्ञात्वा सर्वज्ञमेवैनं गुरुं शरणमाययौ ॥ ३९ ॥ सर्वमंत्रमयीं दीक्षां तस्माज्जग्राह रुद्रटः ॥ रुद्रटानंद इत्यस्य चकाराख्यां स देशिकः ॥ ४० ॥ गुरुं संपूज्य नत्वा च रुद्रटानंद आत्मवान् ॥ काश्मीराख्यं ययौ यत्र भारत्याः पीठमुज्ज्वलम् ॥ ४१ ॥ तत्र जित्वा बुधान्सर्वान् गिरः पीठे स्थितः स्वयम् ॥ अध्यापयन्बहूंश्चासौ स्थितः काश्मीरमंडले ॥ ४२ ॥

एकपाठीति यावत् ॥ ३६ ॥ स रुद्रटः ॥ ३७ ॥ देशान् देशस्थपंडितान् कान्यकुब्जदेशस्थं कपोलानंदमिति संबंधः ॥ ३८ ॥ अत्रत्यम् अत्र निवासिनम् । स रुद्रट इत्यनुवृत्तिः । एनं कपोलानंदम् ॥ ३९ ॥ ४० ॥ काश्मीरदेशम् । भारत्याः सरस्वत्याः ॥ ४१ ॥ बुधान् पंडितान् बहून् शिष्यान्

काश्मीरमंडले काश्मीरदेशे ॥ ४२ ॥ जिग्ये जितवान् ॥ ४३ ॥ निबंधान् ग्रंथान् ॥ ४४ ॥ उभौ द्वौ शिष्यौ वरौ श्रेष्ठौ गुरोः रुद्रटस्य प्रियौ आसतु रित्यन्वयः ॥ ४५ ॥ ४६ ॥ समानविद्यौ बभूवतुः । अथ रुद्रट इत्युत्तरान्वयि । तयोः हीरमिश्रकुमारमिश्रयोः ॥ ४७ ॥ अवरः कनिष्ठः ॥ ४८ ॥

यथा शंकरपादैः प्राक् जित्वाखिलधरां ततः ॥ गिरः पीठं च काश्मीरे जिग्येऽयं रुद्रटस्तथा ॥ ४३ ॥ शब्दशास्त्रे धर्मशास्त्रे तथान्यविषयेष्वपि ॥ बहूंश्चक्रे निबन्धांश्च रुद्रटानंददेशिकः ॥ ४४ ॥ अर्वाचीननिबंधेषु संति तद्वचनान्यपि ॥ आसञ्छिष्याश्च बहवो रुद्रटस्य वरावुभौ ॥ ४५ ॥ शीलविद्यागुणाधिक्यात्सेवया च गुरोः प्रियौ ॥ हीरमिश्रः कुमारश्च मिथस्तौ शालकावुभौ ॥ ४६ ॥ दत्ता कुमारमिश्रस्य हीरमिश्राय तु स्वसा ॥ समानविद्यौ द्वावेतौ रुद्रटोथ तयोः पृथक् ॥ ४७ ॥ सर्वमंत्रमयीं दीक्षां ददौ तद्भक्तितुष्टधीः ॥ हीरानंदस्तयोर्ज्येष्ठः कुमारानंदकोऽवरः ॥ ४८ ॥ वयोदीक्षाक्रमाभ्यां च ज्येष्ठता हीरसौख्यके ॥ इत्थं विचार्य हृद्देशे विद्यापीठं तु रुद्रटः ॥ ४९ ॥ प्रददौ हीरमिश्राय शिष्यान्पाठयितुं स्वकम् ॥ कुमारोथाभवत् खिन्नो गुरुं तं प्राह भो गुरो ॥५०॥ आवयोश्च सतोर्विद्यासमयोः प्रोज्झ्य मां कथम् ॥ हीरानंदायैव दत्तं विद्यापीठमिदं त्वया ॥ ५१ ॥ श्रुत्वा प्राह गुरुश्चैनं भोः कुमार शृणुष्व भोः ॥ विद्याभिस्तु समावेवाक्षमौ जेतुं मिथस्तथा ॥ ५२ ॥ तथापि वयसा ज्येष्ठो दीक्षितस्त्वत्स्वसुः पतिः ॥ इति हेतुत्रयात्पीठं हीरानंदाय चार्पितम् ॥५३॥ यदि जेतुं समर्थोऽसि हीरानंदं त्वमप्यमुम् ॥ जित्वा गृहाण गीःपीठं तस्मादाज्ञैव मेऽस्ति ते ॥ ५४ ॥ विद्वत्तमश्चात्मविदां वरिष्ठो हीराय दत्त्वाखिलमाप सिद्धिम् ॥ तं चेषुभूशतिकरान्तिमं स्वं श्रीरुद्रटानंदगुरुं नताः स्मः ॥ ५५ ॥

हीरसौख्यके हीरानंदे । उत्तरार्द्धमुत्तरान्वयि ॥ ४९ ॥ स्वकं स्वकीयं विद्यापीठम् । भो गुरो इत्युत्तरान्वयि ॥ ५० ॥ मां भयं प्रोज्झ्य त्यक्त्वा ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ पंचदशाधिकशततमं रुद्रटानंदं प्रणमति विद्वत्तम इति । अखिलं पूर्णाभिषेकादिमंत्ररहस्यम् ॥ ५५ ॥

रुद्रटानंदचरित्रश्रवणादिफलमाह रुद्रटस्येति । चौरं भयं चोरभीतिः।स्वागतावृत्तम् ॥ ५६ ॥ आदिनाथमुखाः आदिनाथाद्याश्च ते देशिकवर्यान्ताःदेशिकानंदपर्यंता इत्यर्थः । स्वगुरुभ्यः मयूरेश्वरगुरुभ्यः सकाशाच्छ्रुताः त्रिंशदुत्तरशतद्वयसंख्याः तासु तत्संख्यासु परम्परासु मध्ये आद्यशरचन्द्रशतौघः आद्यः यः पञ्चदशोत्तर शतसंख्याख्यः समूहः यः उत्तमः स उक्तः वर्णित इति यावत् ॥ ५७ ॥ इह ग्रन्थो गुरुपादुकाश्रयेणेत्यर्थः । एतज्जातं पूर्वार्द्धम् । संप्रदायवतां संतोषाय

रुद्रटस्य चरितं प्रपठेद्वा यः शृणोति सततं दृढभक्त्या ॥ नैव जन्मानि भयं खलु चौरं मूर्खतापि न च तस्य हि वंशे ॥ ५६ ॥
॥ कविरुवाच ॥ आदिनाथमुखदेशिकवर्यान्ताः श्रुताश्च गुरवः स्वगुरुभ्यः ॥ त्रिंशदुत्तरशतद्वयसंख्यासूक्त आद्यशरचंद्रशतौघः ॥ ५७ ॥ उत्तमैर्गुरुकथानकैः परं मंडिते स्वगुरुपादुकाश्रयात् ॥ जातमर्धमिह पूर्वसंज्ञकं तुष्टयेऽस्तु गुरुसंप्रदायिनाम् ॥
॥ ५८ ॥ इति श्रीगुरुपरंपराचरित्रे पूर्वार्द्धे रुद्रटाख्यगुरुकथानुवर्णनं नाम चतुःपंचाशत्तमः सर्गः ॥५४॥ वेदांकमुन्यब्जशकेऽगिरोब्दे ह्युदग्दिगर्केऽब्जतिथौ च पौषे ॥ श्रीदेशिकानां च परंपरायाः पूर्वार्धमेतत्कृपया समाप्तम् ॥१॥ श्रीमत्परमहंसपरिव्राजकाचार्यविद्वद्वर्य श्रीदेशिकानंदनाथतनयविद्वन्मुकुटमणिश्रीमन्मयूरेश्वरदीक्षानामयज्ञेश्वरानंदशिष्यधर्मानंदव्यावहरिकनामकरामकृष्णसोमजमुखाविर्भूतांतर्यामिश्रीदेशिकेंद्रप्रणीतं गुरुपरंपराचरित्रे पूर्वार्धं समाप्तम् ॥ श्रीरस्तु ॥ शुभं भवतु ॥ समाप्तमिदं पूर्वार्द्धम् ॥

भवतु । रथोद्धतावृत्तम् ॥५८॥ इति श्रीगुरुपरंपराचरित्रटीकायामर्थस्फूर्त्यभिधायां चतुःपंचाशत्तमः सर्गः ॥५४॥ पूर्वार्द्धं समाप्तम् ॥ श्रीरस्तु ॥ श्रीशुकानंददेशिकानंदयज्ञेश्वरानंदधर्मानंदगुरुभ्यो नमोनमोऽस्तु शतशः संपूर्णं शके १८०९ सर्वजिन्नामसंवत्सरे ॥ समाप्तं च त्रिंशद्विशतगुरुपूर्वार्द्धमनघं मया गोपालेनारचि गुरुपदाब्जाश्रयबलात् । तदीयार्थस्फूर्तिर्नवसध्रतिशाके १८०९ ऽखिलाजितीशतिथ्यां ११ मार्गांते रविदिन इतस्तुष्यतु गुरुः ॥ १ ॥ ॥ शुभं भवतु ॥

॥ श्रीगणेशाय नमः॥ श्रीमद्देशिकराट् सदा विजयते विद्वान्मयूरेश्वरो भेस्त्वात्मास्य च यूर्हि यूथमनृतं चिद्भासकं रोस्य भीः ॥ मिथ्यासंसृतिजाप्रबोधत इमां यश्चेशांपित्वांतक्तत्स्वीयानंदकरः प्रबोधपरनानंदस्ततः कीर्त्यते ॥ १ ॥ जयति श्रीजयंत्यंबा देशिकांकविहारिणी ॥ कारिणी सर्वसौख्यानां हारिणी निखिलापदाम् ॥ २ ॥ उत्तरार्धादिमे चैकशतपद्यैः कथा द्वयोः ॥ कुमारदासानंदस्य श्रीहर्षस्यापि कथ्यते ॥ ३ ॥ तत्रादौ निर्विघ्नपरिसमाप्त्यर्थं गणपतिं मयूरेश्वरं गुरुं च स्मरति । मयूरेश्वर इति । य एष मयूरेश्वरो गणपतिर्गुरुश्च आदौ सृष्ट्यादौ प्रथमतश्च उत्तमकांतिं कांतिमतीं सुंदरीनाम्नीं कन्यां विस्तारयन्नुत्पादयंश्च सन्नानाभिधानः अनेकनामवान् । नानानामकपुत्राभिधानवान् "आत्मा वै पुत्रनामासि" इति श्रुतेः । अभवत् । यः दयालुः दयावान् यः इह भूतले आविर्बभूव सः विघ्नाद्रक्षतु । कीदृशः।जयंत्यंबिकासंयुतः जयकर्त्र्याऽम्बिकया मात्रा गौर्या युक्तः । पक्षे जयंतीसंज्ञकमातृयुक्तश्च।पुनः कीदृशः अजात्मजेशः।

श्रीगणेशाय नमः ॥ मयूरेश्वरः पातु विघ्नाद्दयालुर्जयंत्यंबिकासंयुतोऽजात्मजेशः ॥ य आविर्बभूवेह नानाभिधानोऽभवत्सुंदरीं कांतिमादौ वितन्वन् ॥ १ ॥ यशोदयायुतं वंदे माधवं राधिकाप्रियम् ॥ जननीमोहसंत्यागाद्योऽसौ दामोदराभिधः ॥ २ ॥

अजस्य ब्रह्मणः आत्मजयोः सिद्धिबुद्ध्योर्नियंता । पक्षे अजस्य विष्णोरात्मजा गंगा तत्पादसंभूतत्वात् । यद्वा ब्रह्मणः कमंडलुप्रभवा गंगा तस्या ईशः पतिः गंगांबापतिरित्यर्थः । "अजाविष्णुहरच्छागा" इत्यमरः । यद्वा । अजा माया आत्मनो जाताऽऽत्मजाऽविद्या च तयोर्नियंता गुरुरेवेत्यर्थः । भुजंगप्रयातंवृ० ॥ ॥ १ ॥ माधवं विष्णुं माधवगुरुं च प्रणमति यशोदयेति । यशोदया मात्रा युक्तं अन्यत्र यशसा दयया च युक्तं राधाप्रियं राधानाम्न्याः भर्तारं च । माधवं लक्ष्मीपतिं माधवगुरुं चाहं वंदे । यो माधवः जनन्या मात्रा यशोदया यः कृतः मोहसंत्यागः उलूखलबंधनेन पुत्रविषये ममतात्यागस्तेन निमित्तेन दामोदराभिधो जातः । अन्यत्र यो माधवगुरुः जननी विश्वजनका मूलप्रकृतिस्तन्निमित्तो यो मोहः स्त्रीपुत्राद्यासक्तिस्तस्याः संत्यागात्सन्यासाद्धेतोः दामोदरा

१—मयूरशब्दे मः आत्मा, यूः यूयं, रः भीः । नानात्मत्वभीतिनाशकः अद्वैतरूप इत्यर्थः ।

नंदतीर्थं च सरस्वतीति नामवान्जातस्तं तं च वंदे इत्यर्थः ॥ २ ॥ अरणिप्रदातारं प्रणमति रामदीक्षितमिति । समं समदर्शिनम् ॥ ३ ॥ स्वपितरं शिवरामं शिवं रामं च प्रणमति स्वीयमिति । करुणाकरं स्वपितरं शिवरामं शिवं रामं च नमामि कीदृशं मणिकर्णिकेति । मातृगृहप्रतिष्ठितं मातृ नाम सांऽकनिलया उत्संगनिवासिनी यस्य तम् । पुनः कीदृशं लक्ष्म्याः श्वशुरगृहलब्धलक्ष्मीनाम्न्याः मातुः पतिम् अन्यत्र मणिकर्णिका तीरवासिनं लक्ष्मीपतिं शिवं रामं च नमामि ॥ ४ ॥ गायत्र्याद्युपदेष्टॄन्नमस्करोति गायत्र्या इति ॥ ५ ॥ एवं दृढं समाप्तिसाधनं गणपत्यादिमंगलं विधाय श्रोतॄनभिमुखीकरोति

रामदीक्षितमाचार्यं वंदे चारणिदं समम् ॥ सोमयाजी कृतो येनाज्ञोऽप्यहं स्वकृपाबलात् ॥ ३ ॥ स्वीयं नमामि पितरं शिवरामं घृणाकरम् ॥ मणिकर्ण्येकनिलयं साक्षाल्लक्ष्म्याः पतिं गुरुम् ॥४॥ गायत्र्या उपदेष्टारं तथा वेदोपदेशकान् ॥ ज्योतिर्विद्याद्योपदेष्टॄन्नमाम्य खिलसद्गुरून् ॥५॥ श्रोतृभिः श्रूयतां सर्वैश्चोत्तरार्धकथानकम् ॥ परंपराचारित्रस्य गुरूणामखिलार्थदम् ॥ ६ ॥ पप्रच्छ श्रीमयूरेशः पुनः श्रीदेशिकं प्रति ॥ रुद्रानंदपर्यंतं कथाः श्रुत्वातिपावनीः ॥७॥ श्रीमयूरेश्वर उवाच ॥ श्रुतं पंचदशोर्ध्वं तु गुरूणां शतसादितः ॥ तत्तत्सिद्धिचरित्राढ्यं शृण्वतां चित्ततोषदम् ॥ ८ ॥ रुद्रानंदशिष्यौ तु श्रीमद्भिः कथितावुभौ ॥ तयोर्देशिकपंक्तौ कः कुमारानुग इत्यसौ ॥ ९ ॥ श्रीदेशिकेंद्र उवाच ॥ शृणुष्वानघ चैकां प्राक्कथां पुण्यामघापहाम् ॥ सिद्धिं गते गुरौ सोथ कुमारानंदसंज्ञकः ॥ ॥ १० ॥ मनसीत्थं विचार्याह हीरानंदोऽस्ति पीठगः ॥ गुरुणाज्ञापितोऽहं च जित्वा तं वादतः पुनः ॥ ११ ॥

श्रोतृभिरिति । अखिलार्थदं सर्वार्थपूरकम् ॥ ६ ॥ देशिकेंद्रमयूरेश्वरसंवादमुपक्षिपति पप्रच्छेति । अतिपावनीः अतिपवित्राः ॥ ७ ॥ श्रुतं मयेत्यध्याहारः । तेषां तेषां सिद्धिप्रकाशचरित्रयुक्तं मनस्तोषकरं च ॥ ८ ॥ श्रीमद्भिर्भवद्भिः कथितौ पूर्वार्द्धात्यसर्गे उक्तौ । तयोः हीरानंदकुमारानंदयोः मध्ये देशिकपंक्तौ गुरुपरंपरायां कुमारानुगः कुमारदासः कोऽस्ति हीरानंदकुमारानंदयोर्मध्ये कुमारदासाभिधः कोऽस्तीति प्रश्नः ॥ ९ ॥ प्रश्नोत्तरभूतां कथां देशिकेंद्र आह शृणुष्वेति । उत्तरार्धमुत्तरान्वयि । गुरौ रुद्रानंदे ॥ १० ॥ पीठगः सरस्वतीपीठस्थः हीरानंदं वादेन जित्वा सरस्वत्याः पीठं मया स्वतः

दत्तमपि तत्त्वं गृहाणेति रुद्रटानंदगुरुणाहमाज्ञापितोस्मि इत्यन्वयः ॥११॥ अजेयः जेतुमशक्यः यतः आवयोर्विद्या समा समाना अस्ति ॥१२॥ जयाय जयप्राप्तये । आद्या देवता काली मयाऽऽराधनीया ॥ १३ ॥ पंचांगां जपहोमतर्पणमार्जनब्राह्मणभोजनरूपपंचांगयुक्ताम् । गुरोः सकाशान्मंत्ररहस्यज्ञः । ॥१४॥१५॥ हीरानंदमिति । सः कुमारदासः ॥ १६ ॥ १७ ॥ तदेत्युत्तरान्वयि ॥ १८ ॥ आजीवं मरणपर्यंतम् ॥ तथेत्याद्युत्तरान्वयि ॥ १९ ॥

गिरःपीठं गृहाण त्वं मया दत्तमपि स्वतः॥ वादेनाजेय एवायं यतो विद्या समावयोः ॥१२॥ हीरानंदाज्जयायाद्याराधनीया हि देवता ॥ तस्याः प्रसादं लब्ध्वाऽयं जेतव्यो हीरसंज्ञकः ॥१३॥ निश्चित्येति पुरश्चर्यां महाकाल्याश्चकार सः ॥ पंचांगां हि प्रयत्नेन गुरोस्तंत्ररहस्यवित् ॥१४॥ पुरश्चर्यासमाप्तौ साऽविर्बभूवादिदेवता ॥ वरं ब्रूहीति तं प्राह कुमारानंदमीप्सितम्॥१५॥ स चेत्याह जयो मेऽस्तु हीरानंदाद्धि वादतः ॥ सांतर्दधे तथेत्युक्त्वा हीरानंदमथैत्य सः ॥ १६॥ वादं कुरु मयेत्याह तं प्रतिज्ञापुरःसरम् ॥ हीराख्योऽपि ततः श्रुत्वा तं प्राहेति पुनर्वद ॥ १७॥ का प्रतिज्ञा तवास्त्येनां ज्ञात्वा वादो भविष्यति ॥ तमाहाथ कुमारोऽहं निर्जितश्चेत्त्वया तदा ॥ ॥ १८ ॥ पूजनीये मयाजीवं पादुके तव नित्यशः ॥ तथा मया निर्जितस्त्वं गिरः पीठं समर्प्य मे ॥ १९ ॥ पूजयाजीवमह्नयाह्नि पादुके मम चेति वै ॥ कृता मया प्रतिज्ञेयं रोचते चेत्तवांतरे ॥ २० ॥ वादं कुरु मया नोचेत्तूष्णीं पीठं गुरोर्मम ॥ दत्त्वा मे स्वगृहं गच्छ न वादायासतोभयोः ॥२१॥ पादुकापूजनस्यापि द्वयोरपि न संभवः ॥ हीरानंदोऽपि तं प्राह नेपद्धीर्मे त्वया सह ॥२२॥ वादं कर्तुमहं नैव विना वादं समर्पये ॥ गुरोः पीठं द्वयोर्वादे कस्याप्यस्तु जयोऽत्र हि ॥ २३ ॥ पीठस्थोपि स एवास्तु चैकगुर्वोः किलावयोः ॥ इत्थं कृतप्रतिज्ञौ तावासतुर्वादतत्परौ ॥२४॥ दिनत्रयमहोरात्रं समविद्यावुभावपि ॥ जयं पराजयं नैव प्रापतुर्हैकदेशिकौ ॥२५॥

अंतरे मनसि ॥ २० ॥ नो चेद्वादं न करोषि चेन्मद्गुरो रुद्रटानंदस्येदं सरस्वतीपीठं मे मह्यं दत्त्वा त्वं निजगृहं गच्छ । तेनावयोर्वादायासता वादरूपा आयासता श्रमभावो न भविष्यतीत्यर्थः ॥ २१ ॥ द्वयोरावयोः समविद्यत्वात्पादुकापूजनस्य परस्परं पादुकार्चनस्य संभूतिर्नास्तीत्यर्थः । भीः भयं त्वया सह वादं कर्तुमिति संबन्धः ॥ २२ ॥ २३ ॥ एकगुर्वोरावयोर्मध्ये सः प्राप्तजय एव पीठस्थितो भवतु ॥ २४ ॥ दिनत्रयं त्रिदिनपर्यंतम् अहोरात्रं यथा

तथा वादतत्परौ बभूवतुरित्यन्वयः । एकः देशिको गुरुः ययोस्तौ ॥ २५ ॥ आर्यां कालीम् ॥ २६ ॥ २७ ॥ २८ ॥ आसनं सरस्वतीपीठम् ॥ २९॥
अघतः अद्यारभ्य ॥ ३० ॥ स्वस्यात्मनः ॥ ३१ ॥ कुमारस्य कुमारानंदस्य ॥ ३२ ॥ कुमारदासायुत्तरान्वयि । स्वगुरुपादुके रुद्रानंदपादुके ॥३३॥
तं कुमारानंदं स्वगुरौ रुद्रस्य भक्तं मत्वा यो यस्मिन् श्रद्धावान्स तद्रूप एवेति वाक्येनासौ कुमारदासः गुरुभक्तं कुमारानंदं गुरुसमानं मेन इत्यन्वयः

चतुर्थेस्य दिने प्रातः कुमाराख्यः स्वचेतसि ॥ सस्माराद्यां यया दत्तः प्राग्वरः स्वजयप्रदः ॥ २६ ॥ स्मृतिमात्रान्महाकाली साविरासीद्दयोर्हदि ॥ स्फूर्त्या कुमारहृदये भ्रांत्या हीरांतरे तथा ॥ २७ ॥ चकाराथ कुमाराख्यो देवतास्फुरणाद्भुतम् ॥ हीरानंदस्य वाक्यानां खंडनं पूर्वतोधिकम् ॥ २८ ॥ हीरानंदो भ्रांतियुक्तः कुमारानंदमब्रवीत् ॥ निर्जितोऽहं त्वया नूनं गृहाणेदं ममासनम् ॥ २९ ॥ पूजयाम्यद्यतो नूनं चाजीवं पादुके तव ॥ इत्युक्त्वा पादुके तस्य गृहीत्वा स्वगृहं ययौ ॥ ३० ॥ कुमारानंदसंज्ञस्तु शिष्यानध्यापयन्स्थितः ॥ गिरः पीठेतिहर्षेण स्वस्य मेने कृतार्थताम् ॥ ३१ ॥ हीरानंदकुमारस्य पादुकापूजनाज्जनाः ॥ कुमारदासानंदेति तदाप्रभृति चोचिरे ॥ ३२ ॥ कुमारदासानंदोऽथ नित्यं स्वगुरुपादुके ॥ पूजयित्वा ततः स्वेष्टदेवतां च विधानतः ॥ ३३ ॥ ततः कुमारानंदस्य पादुके पूजयत्यसौ ॥ तं मत्वा स्वगुरोर्भक्तं यो यच्छ्रद्धः स एव सः ॥ ३४ ॥ इति वाक्येन मेनेऽसौ गुरुभक्तं तु तत्समम् ॥ कुमारदासानंदस्य शिष्याश्चासुरनेकशः ॥ ३५ ॥ धनधान्यसमृद्धिश्च तद्गृहे देवतार्चनात्॥समृद्धसंपदोऽप्यस्य गोविंदः पुत्र एकलः ॥ ३६ ॥ सोपि बाल्यान्मातुलस्य गृहे तिष्ठत्यहर्निशम् ॥ अधीत्य तस्मादेवासौ बभूवाखिलशास्त्रवित् ॥३७॥ आगमच्च कदाचित्प्राङ्मातापित्रोः स दर्शने ॥ पितृमातुलयोर्द्वेषो यदा जातस्तदादितः ॥ ३८ ॥ नागाद्दक्पथमप्येष पित्रोर्मातुलभीतितः ॥ सद्मनि तद्गृह एवासीद्गोविंदो गुरुभक्तिमान् ॥ ३९ ॥

॥ ३४ ॥ ३५ ॥ पूर्वोत्तरार्धं एवासीदिति परिणामेन क्रियानुवृत्तिः ॥ ३६ ॥ स गोविंदः मातुलस्य कुमारानंदस्य ॥ ३७ ॥ पितृमातुलयोः कुमारदासकुमारानंदयोः । तदादितः तद्दिनमारभ्येत्युत्तरान्वयि ॥ ३८ ॥ मातुलभयेन पित्रोर्दृक्पथं दृष्टिमार्गं पुत्रोऽप्येष गोविंदः नागात् नयागतवान् ।

सस्त्रीकः पत्नीसहितः ॥ ३९ ॥ मामलांबा तत्पत्नी ॥ ४० ॥ ४१ ॥ ४२ ॥ इष्टानि इच्छितानि ॥ ४३ ॥ निस्वता दरिद्रता उत्तरार्द्धमुत्तरान्वयि ॥ ४४ ॥ वृद्धतः वृद्धात्सकाशात् ॥ ४५ ॥ कुमारदासानंदादिति पूर्वान्वयि । सुषुवे तत्पत्नीति शेषः ॥४६॥ पिता कुमारदासः । तल्लक्षणानि पुत्रलक्ष

कुमारदासानंदस्तु स्वपुत्रादर्शनादिति ॥ मेनेऽपुत्रमिवात्मानं मामलांबा च चेतसि ॥ ४० ॥ दुःखिताऽऽथाह भर्तारमित्थमीप्सितमात्मनः ॥ पत्न्युवाच ॥ भगवंस्त्वं समर्थोऽसि सर्वसाधनतत्त्ववित् ॥ ४१ ॥ त्वदुक्ताः साधनैरेवानपत्याः स्युः सपुत्रकाः ॥ निर्धनाः सधनाश्चासन्ह्यपत्नीकाः कृतोद्वहाः ॥४२॥ प्रापुरन्यानि चेष्टानि बहवस्त्वत्प्रसादतः ॥ इत्थंभूतस्य नापत्यं सर्वसंपद्वतोपि ते ॥४३॥ अत्यद्भुतमिदं भाति कुबेरस्येव निस्वता ॥ श्रीदेशिकेंद्र उवाच ॥ कुमारदासानंदोपि पत्न्याः श्रुत्वेति भाषणम् ॥ ४४ ॥ ददौ तस्यै तु ललितानामसाहस्रमंत्रितम् ॥ नवनीतं दधौ तेन गर्भं वृद्धापि वृद्धतः ॥ ४५ ॥ कुमारदासानंदात्तु पुत्रं च शुभलक्षणम् ॥ सुषुवेऽथ शुभे काले जातकर्मास्य चाकरोत् ॥ ४६ ॥ पिता तल्लक्षणं वीक्ष्य तच्छ्रियातीव हर्षितः ॥ श्रीहर्षेति चकाराख्यां ततो वर्षद्वयोत्तरम् ॥ ४७ ॥ आसन्नमरणो रोगात्कुमारानुगसंज्ञकः ॥ रहस्याढ्यान्सर्वमंत्रान्पत्न्यै चोक्त्वाऽह तां पुनः ॥ ४८ ॥ इदानीं लघुरेवास्ति श्रीहर्षाख्यः सुतो मम ॥ न शक्तो मंत्रग्रहणे मयातः स्थापितस्त्वयि ॥ ४९ ॥ सर्वमंत्रांस्त्वमप्येताञ्जाते महति बालके ॥ देहि तस्मै विधानेन दुर्लभांश्च ममाज्ञया ॥ ५० ॥ अथाह पत्नी तं स्वामिन् गते त्वयि परं पदम् ॥ पूजनीये किमेतेन श्रीहर्षेणापि पादुके ॥ ५१ ॥

णानि दृष्ट्वा तच्छ्रिया पुत्रकांत्या स हर्षयुक्तः सन्नित्यर्थे काकाक्षिवत्पूर्वोत्तरान्वयि । ततो वर्षद्वयानंतरमित्युत्तरान्वयि ॥ ४७ ॥ रोगाद्रोगेणासन्नमरणः समीपमृत्युः स रहस्याढ्यान् रहस्ययुक्तान्सर्वान्मंत्रान्पत्न्यै उक्त्वा तां पुनराहेत्यर्थः ॥४८॥४९॥ सर्वमंत्रा इति पूर्वान्वयि । एतान्मंत्रान्महति प्रौढवयस्के विधानेन पूर्णा

भिषेकविधानेन ॥ ५० ॥ ५१ ॥ कुमारानंदसंज्ञस्य पादुके इति पूर्वार्धं पूर्वान्वयि । पुनः वादेन तं कुमारानंदं जित्वेति परान्वयि ॥ ५२ ॥ पादुके तव पादुके कुमारानंदाय मद्भ्रात्रे देहीत्यर्थः ॥ ५३ ॥ अथ तु मुमूर्षुता मरणयोग्यताऽस्ति अतो वादं न करोमीत्यर्थः ॥५४॥ ननु अल्पविद्यत्वेन पूर्वं पराजितोऽसीति चेत् नेत्याह । कुमाराख्य इति दैवतः दैवयोगेन ॥ ५५ ॥ ५६ ॥ ५७ ॥ पुत्रः श्रीहर्षः ॥ ५८ ॥ तदा खल्वित्युत्तरान्वयि ॥ ५९ ॥

कुमारानंदसंज्ञस्य मम बंधोस्तथा पुनः ॥ प्रार्थनां शृणु मे चैतां जित्वा तं वादतः पुनः ॥ ५२ ॥ देहि पीठं स्वपुत्राय कुमारायापि पादुके ॥ कुमारदासानंदश्च पत्नीं प्राह शृणु प्रिये ॥ ५३ ॥ सदात्मसुखनिष्ठस्य मम वादमतिः क्वचित् ॥ पीठत्यागादिनात्रैव जाताद्य तु मुमूर्षुता ॥ ५४ ॥ कुमाराख्यस्तु त्वद्बन्धुर्न मत्तो विद्ययाधिकः ॥ पुरा पीठं मया दत्तं श्रांतेनैव हि दैवतः ॥ ५५ ॥ मयाद्यापि च शक्योयं जेतुं वादेन सुंदरि ॥ तथापि नैव मच्चेतः कर्तुं वादं प्रवर्तते ॥ ५६ ॥ पीठं त्वत्सूनवे लब्धुं त्वद्बन्धोः पादुकार्चनम् ॥ विसर्जयतुमेकं ते ह्युपायं वच्मि सांप्रतम्॥५७॥कृतोपनयनः पुत्रो भविष्यति यदा तव॥तदा पूर्वं गणेशस्य बीजं तस्मै वदानघे॥५८॥ चिंतामणिमनुं ब्रूहि तं चेत्प्रेतासनस्थितः ॥ अहोरात्रं कुमारस्ते जपिष्यति तदा खलु ॥ ५९ ॥ प्रसन्नास्य महाकाली भूत्वा सामर्थ्यमद्भुतम्॥सर्वशास्त्रविवादेषु दास्यत्येव न संशयः ॥६०॥ पुस्तकानि मया यानि संगृहीतानि तान्यपि॥सकृद्देवेक्षणीयानि श्रीहर्षेणाथ तावता॥६१॥जेष्यत्येव कुमाराख्यं भूत्वायं सर्वशास्त्रवित् ॥ तस्माद्गृहीत्वा गीःपीठं त्यक्त्वा तस्य च पादुके॥६२॥स्वपादुके च पूजार्थं दास्यत्यस्मै तवार्भकः ॥ कुमारदासानंदस्तामित्थं मामल्लसंज्ञकाम् ॥६३॥ भार्यामुक्त्वात्मनात्मानं संयोज्याखिलयोगवित्॥ ब्रह्मरंध्रं स्वयं भित्त्वा ययौ धामानिवर्तकम् ॥६४॥ श्रीहर्षसंज्ञाय रहस्यजातं दातुं स्वभार्यामिति सर्वमुक्त्वा ॥ कुमारदासस्तु परं ययौ वै तं षोडशोदक्शतमानताः स्मः ॥ ६५ ॥ श्रीहर्षोऽथाष्टमे वर्षे ब्राह्मणैर्वेदवादिभिः ॥ मातृप्रेरणयाताद्यैरुपनीतो यथाविधि ॥ ६६ ॥

॥ ६० ॥ अथ तावतावलोकनमात्रेण सर्वशास्त्रज्ञो भूत्वेत्यग्रिमेणान्वयः ॥ ६१ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ६२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ६३ ॥ आत्मानं कूटस्थम् आत्मना ब्रह्मरूपेण अनिवर्तकं निवृत्तिरहितं धाम मोक्षाख्यं ययौ ॥ ६४ ॥ षोडशाधिकशतमितं कुमारदासं प्रणमति श्रीहर्षसंज्ञायेति ।

सर्वं मंत्ररहस्यमिति पूर्वोक्तम् । परं पदं ययौ । तं नताः स्मः । उपजातिवृत्तम् ॥ ६५ ॥ ६६ ॥ प्राक् पूर्वमस्मै श्रीहर्षाय चिंतामणिं चिंतामणिसंज्ञकं गुरुमु
खैकवेद्यं ददौ ॥ ६७ ॥ तवाज्ञया नित्यं मया ये अर्च्येते पूज्येते ते पादुके कस्य स्यातामित्यन्वयः ॥ ६८ ॥ पूर्वं तव पितेत्युत्तरान्वयि ॥ ६९ ॥ ७० ॥
पादुके ते तुभ्यं पूजार्थं समर्पिते पित्रेत्यध्याहारः । चेत्स्वमातुलमित्यादि सार्द्धान्वयः ॥ ७१ ॥ इज्यार्थं पूजार्थम् ॥ ७२ ॥ तत्रैकांतस्थले मद

अथ मामल्लदेव्यस्मै प्राग्गणेशमनुं ददौ ॥ ततश्चिंतामणिं मंत्रं शीघ्रं सकलसिद्धिदम् ॥ ६७ ॥ श्रीहर्षो दशवर्षोऽथ प्राह मातरमे
कदा ॥ कस्यामू पादुके मातश्चार्च्येते ये तवाज्ञया ॥ ६८ ॥ नित्यं मया ब्रूहि तत्र कारणं पादुकार्चने ॥ श्रुत्वेति माता श्रीहर्षं प्राह
पूर्वं पिता तव ॥ ६९ ॥ जितः कुमारमिश्रेण सदसीति प्रतिज्ञया ॥ जयिनः पादुकापूजामकरोत्तु पराजयी ॥ ७० ॥ यावज्जीवमतः
पित्रा तव मातुलपादुके ॥ पूजिते तेऽधुना दत्ते पूजार्थं चेत्स्वमातुलम् ॥ ७१ ॥ त्वं जेष्यसि तदा तस्मात्पीठमाहृत्य पैतृकम् ॥
त्यक्त्वा तत्पादुके चास्मै दत्त्वेज्यार्थं स्वपादुके ॥ ७२ ॥ पैत्र्याहृणात्त्वमुत्तीर्णो भूत्वा प्रापय मां सुखम् ॥ त्वत्पित्रोक्तं साधनं त्वं
तत्र तत्कुरु मन्मतात् ॥ ७३ ॥ श्रीदेशिकेन्द्र उवाच ॥ श्रीहर्षोऽथाह जननीं मातस्तत्साधनं वद ॥ यत्कृत्वैव भविष्येहमृणान्मुक्तः
पितुर्द्रुतम् ॥ ७४ ॥ माताथाहेति हे वत्स त्वं मे हृदयसंस्थितः ॥ जपस्वैकाग्र्यतो मंत्रं चिंतामणिमतंद्रितः ॥ ७५ ॥ मयैकांते तैल
पूर्णो दीपः प्रज्वाल्यते महान् ॥ स यावल्लघुतामेति तावज्जपपरो भव ॥ ७६ ॥ आद्या देवी जपस्यांते साक्षादाविर्भविष्यति ॥
वांछितं याचयाशु त्वं तस्यै दास्यति सापि तत् ॥ ७७ ॥ उक्तमित्येव पुत्राय नोक्तं प्रेतासनं शिशुः ॥ भयाढ्यो भवितेऽत्यंबा
वचः श्रीहर्षसंज्ञकः ॥ ७८ ॥ श्रुत्वा प्राह तथेत्यंबाऽथास्य मातापि सद्दिने ॥ प्रातः स्नात्वा कुमारं च स्नापयित्वा रहःस्थले ॥ ७९ ॥

नुमतेन तत्साधनं त्वं कुरु इत्यर्थः ॥ ७३ ॥ तज्जयकरम् ॥ ७४ ॥ ७५ ॥ स दीपः ॥ ७६ ॥ ७७ ॥ शिशुर्भययुक्तो भविष्यतीति हेतोः पुत्राय प्रेतासनं न
कथितमित्यर्थः । अंबावच इत्युत्तरान्वयि ॥ ७८ ॥ तथा करिष्यामीत्याह । अथ माता सद्दिने शुभदिवसे श्लोकद्वयोक्तं कृत्वा पुत्रमब्रवीदित्यन्वयः ॥ ७९ ॥

असिपुत्रिकां छुरिकां " स्यादसी चासिपुत्री चच्छुरिका चासिधेनुक " इत्यमरः ॥ ८० ॥ ८१ ॥ वस्त्रगोपितहस्तेन हस्तधृतखड्गेन स्वकंठ मच्छिनत् । इति पूर्वान्वयि । असौ श्रीहर्षः न वेत्ति न जानाति मातृकृतस्वशिरश्छेदमिति शेषः । एकधीः एकबुद्धिः॥८२॥अहोरात्रं । जपकर्तुः ॥८३॥ अथ सोऽर्भक इत्युत्तरान्वयि ॥ ८४ ॥ जनयित्रीं मातरं तां कालीमवदत् ॥ ८५ ॥ यतोऽल्पबुद्धिः अतोऽहं वरं न जाने । यथा मात्रा उच्यते तथा त्वं वरं देहीत्यन्वयः । इति श्रुत्वा मामलांबां मृतां ज्ञात्वा कृपेक्षणात्कृपावशोकनेन काली तामजीवयत् ॥ ८६ ॥ ८७ ॥ हे कालि त्वं

यथा स्थास्यत्यहोरात्रं तथा तैलेन पूरितम् ॥ दीपं प्रज्वाल्य वस्त्रांतस्तीक्ष्णां धृत्वासिपुत्रिकाम् ॥ ८० ॥ स्थित्वोत्तानतनुर्बालं तं स्थाप्योरसि चाब्रवीत् ॥ जपस्वेति मनुं तूष्णीं ततश्छुरिकयाऽच्छिनत् ॥ ८१ ॥ स्वकंठं वस्त्रच्छन्नेन हस्तेनेदं न वेत्यसौ ॥ निमील्य नयने चक्रे जपं श्रीहर्ष एकधीः ॥ ८२ ॥ अथाहोरात्रजपतस्तं मंत्रं चैकचेतसः ॥ बालस्याग्रे महाकाली साक्षादाविर्बभूव च ॥८३॥ सौम्यमेव निजं रूपं दधती बालतोषदम् ॥ वरं ब्रूहीति तं प्राह श्रीहर्षं चाथ सोऽर्भकः ॥ ८४ ॥ उन्मील्य नयने दृष्ट्वा महाकालीं पुरःस्थिताम् ॥ जनयित्रीं तु जीवंतीं मन्यमानोवदच्च ताम् ॥ ८५ ॥ मात्रोच्यते तथा देहि वरं जाने न चाल्पधीः ॥ श्रुत्वेत्यंबा मृतां ज्ञात्वाजीवयत्तां कृपेक्षणात् ॥ ८६ ॥ दृष्ट्वा साक्षात्पुरः कालीं बालमुत्तीर्य वक्षसः ॥ मामलांबापि तां नत्वा वाचा तुष्टाव सांजलिः ॥ ८७ ॥ मामल्लदेव्युवाच ॥ त्वं विश्वांतर्जीवमाताखिलांश्च तुल्यं पास्येवाज्ञबाले तथापि ॥ त्वत्कारुण्यं दृश्यतेत्यंतमाद्ये लोकेप्यल्पे प्रीतिकर्त्री यथांबा ॥ ८८ ॥ मद्बालेऽस्मिन्मंत्रतंत्रानभिज्ञेऽप्याविर्भूय त्वं कृपां कर्तुमाद्या ॥ चिद्रूपैतत्सर्गपोषांतकर्त्री सिद्धैरप्यद्धा तपोभिर्दुरापा ॥ ८९ ॥

विश्वांतर्गतजीवानां मातासि । अखिलान् सर्वान् तुल्यं समानं पासि रक्षस्येव । तथापि अज्ञानबालेषु तव कारुण्यमत्यंतमतिशयेन दृश्यते । आद्ये इति कालीसंबोधनम् । अत्र दृष्टांतः यथा लोके माता अज्ञे मूर्खेऽपि प्रीतिकर्त्री भवति तथेत्यर्थः । शालिनीवृत्तम् । लक्षणं तु " शालिन्युक्ता म्तौतगौगोऽब्धिलोकैः " ॥ ८८ ॥ मद्बाले कृपां कर्तुमिति संबंधः । एतस्य जगतः सर्गपोषांतकर्त्री उत्पत्तिपालननाशकर्त्री त्वं सिद्धैरपि प्राप्तुम

शक्याऽसि ॥ ८९ ॥ गृह्णतां दर्शनस्वीकरिष्णूनां तद्दर्शनं तथा वाञ्छापूरकं भवतु मौख्यं मुख्यत्वं च करोतु ॥ ९० ॥ अंबा काली वांछातुल्यं इच्छाप्र दशं सर्वमस्तु । हे अपापे पापरहिते सर्वतः सर्वपुस्तकानामेकेक्षा एकवारमवलोकनं कर्तृ तव पुत्रं सर्वज्ञं करोतु ॥ ९१ ॥ नैजे स्वकीये ॥ ९२ ॥ ९३ ॥ स कुमारानंदः वादतो वादेन ॥ ९४ ॥ सः कुमारानंदः अन्यं शिष्यं योजितवान् तमपि तथैव पूर्ववज्जितं मत्वाऽथान्यान्योजितवान् तांश्च जितान्दृष्ट्वा न्याया धीशो न्यायशास्त्रादिषु पंडितोपि वादं चक्रे ॥ ९५ ॥ कुमारः कुमारानंदः न्यायशास्त्रयुक्त्या यायाः कोटीः पूर्वपक्षकक्षाः प्राह ताः वेदांतवचनेन खंडयन्

मातर्वाञ्छापूरकं दर्शनं ते सम्यग्भक्त्या गृह्णतां तत्तथास्तु॥ श्रीहर्षेऽस्मिंस्तातवंध्यादिहीने सर्वज्ञत्वं सत्सु मौख्यं करोतु ॥९०॥ श्रीदेशिकें द्र उवाच ॥ श्रुत्वेत्यंबा प्राह मामल्लदेवीं वांछातुल्यं तेऽखिलं चास्त्वपापे ॥ ईक्षा चैका सर्वतः पुस्तकानां सद्यः सर्वज्ञं तवाऽर्भं करोतु॥ ॥९१॥जित्वा वादे मातुलं पीठमस्माल्लब्ध्वा त्यक्त्वा पादुके तस्य नैजे॥दत्त्वा तस्मै पूजनार्थं तवाभोद्वैतं मार्गं स्थापयिष्यत्यथोर्व्याम्॥ ॥ ९२ ॥ उक्त्वेत्यंबाऽतर्दधेऽथात्मजाय मामल्लाख्या प्राह मंत्रांश्च सर्वान् ॥ तत्सामर्थ्यात्पुस्तकान्येकदेक्ष्य श्रीहर्षाख्यः प्राप सर्वज्ञतां वै ॥ ९३ ॥ गत्वा वादं मातुलेनाकरोत्सोथार्भं मत्वानेन शिष्यं कुमारः ॥ अल्पं वादेयोजयत्तं क्षणेन तूष्णींभूतं वादतोऽसौ चकार ॥ ९४ ॥ सोन्यं वादेयोजयत्तं तथैव मत्वाथान्यान्तान्क्रमान्निर्जितांश्च ॥ दृष्ट्वा श्रीहर्षेण वादं कुमारोन्यायाधीशोप्यल्पबालेन चक्रे ॥ ९५ ॥ याया युक्तीर्न्याययुक्त्या कुमारः प्राह श्रीहर्षोऽवदत्खंडयन्ताः ॥ वेदांतोक्त्या सोभवद्वै प्रबंधो विद्वत्ख्यातो न्यायसत्खंडनाख्यः॥९६॥ कृत्वा वादेनुत्तरं तं कुमारं पीठं तस्माच्चाग्रहीत्पादुके च ॥ त्यक्त्वा तस्मै स्वे ददौ पूजनाय श्रीहर्षाख्यः ख्यातकीर्तिर्गुरुर्नः॥ ॥९७॥ग्रंथाः श्रीहर्षेण बद्धास्त्वनेका गद्यैः पद्यैः सद्रसालंकृताश्च॥ प्राहुः काव्यं यन्महत्सर्वकाव्येष्वार्यास्तेषामूर्ध्वगं नैषधाख्यम्॥९८॥

श्रीहर्षोऽवदत् । स उभयोर्वादरूपः प्रबंधो ग्रंथः न्यायसत्खंडनाभिध इति विद्वत्सु विख्यातोऽभवत् ॥ ९६ ॥ कुमारं कुमारमिश्रमुत्तररहितं कृत्वा तस्मात्सरस्व तीपीठं जग्राह । तत्पादुके पित्रा स्वीकृते कुमारपादुके त्यक्त्वा तस्मै स्वपादुके पूजनार्थं ददौ एतादृशो नोऽस्माकं गुरुः ख्यातकीर्तिरभूत् ॥ ९७ ॥ श्रीहर्ष स्य महाकवित्वप्रसिद्धिं दर्शयति ग्रंथा इति । आर्याः कालिदासाद्याः सर्वकाव्येषु यन्महत्काव्यमुपलक्षणमेतत्काव्यानां यानि काव्यानि प्राहुः तेषां मध्ये

उर्ध्वगं सर्वोपरिगतं नैषधाख्यं श्रीहर्षेण निबद्धमित्यर्थः ॥ ९८ ॥ श्रीहर्षस्यातिबुद्धिमत्तां वर्णयति । धीमानिति । यो धीमांद्यार्थं बुद्धिमंदत्वाय पूर्वमुपायान् बिंबफलभक्षणनागवल्लीदलवृंतभक्षणादीन् कृत्वा पश्चात्काव्यश्रेष्ठं नैषधं चकार काव्यकरणात्पूर्वमेतस्यालौकिकबुद्धिमत्त्वमित्यर्थः ॥ ९९ ॥ सप्तदशाधिकशतसंख्यं श्रीहर्षानन्दं प्रणमति बाल्य इति स्पष्टार्थम् । उपजातिवृत्तम् ॥ १०० ॥ सर्गोक्तगुरुद्वयकथाश्रवणादेः फलमाह । कुमारदासस्येति । विपरीत



धीमान्नो श्रीहर्षतुल्यः किलास्ति प्राचीनार्वाचीनविद्वत्सु यस्तु ॥ धीमांद्यार्थं प्रागुपायांश्च कृत्वा पश्चाच्चक्रे नैषधं काव्यवर्यम् ॥ ९९ ॥ बाल्येपि कृत्वेति सुकीर्तिमासीद्यः सिद्धवर्योऽखिलमंत्रवेत्ता ॥ श्रीहर्षकं सप्तदशोर्ध्वमेनं शताप्तसंख्यं गुरुमानताः स्मः ॥ १०० ॥ कुमारदासस्य कथां शृणोति श्रीहर्षसंज्ञस्य च योऽतिभक्त्या ॥ पठेच्च सत्पुत्रमसौ लभेत सर्वज्ञतां पंडितमान्यतां च ॥ १०१ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे कुमारदासानंदश्रीहर्षानंदगुरुद्वयकथावर्णनं नाम प्रथमः सर्गः ॥ १ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रीहर्षानंदशिष्यस्तु शंभ्वानंद इतीरितः ॥ यस्य मालवके देशे स्थानं क्षिप्रानदीतटे ॥ १ ॥ सेवया यस्य बहुभिर्लब्धं कल्याणमात्मनः ॥ मुमुक्षुभिस्तु कैवल्यं कामिभिः स्त्रीसुखादिकम् ॥ २ ॥ रुग्णा निःस्वा अपुत्रा येऽस्त्रीकाः श्रुतिदृगक्षमाः ॥ पंग्वाद्याश्चाययुः सर्वे स्वस्वदुःखोपशांतये ॥ ३ ॥ शंभ्वानंदमथैतेषां सर्वेषां तत्कृपाबलात् ॥ दुःखप्रशमनं चासीत्कल्याणं चाप्यखंडितम् ॥ ४ ॥ शं यस्माद्भवतीत्याहुः शंभ्वानंदमसुं बुधाः ॥ प्रसिद्धः सिद्धवर्योऽसौ शरणागतशंकरः ॥ ५ ॥ इत्थंप्रभावोऽखिलविद्धि शंभ्वानंदो रहस्यं पृथिवीधराय ॥ ददौ तमष्टादशकोर्ध्वमीड्यं शताप्तसंख्यं गुरुमानताः स्मः ॥ ६ ॥

पूर्वाख्यानकीवृत्तं तल्लक्षणं तु "जतौ जगौ गो विषमे समे स्यात्तौ जगौ ग एषा विपरीतपूर्वा" इति॥ १०१ ॥इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां प्रथमः सर्गः ॥ १ ॥ नवत्युत्तरनपर्वैस्तु द्विके शंभुसुखात्स्मृताः । चत्वारो देशिकाः स्वस्य नामतुल्यकथानकाः ॥ २ ॥ श्रीहर्षानंदशिष्य इति ॥ १ ॥ बहुभिर्जनैः ॥ २ ॥ ३ ॥ शंभ्वानंदमिति पूर्वान्वयि । एतेषां रुग्णादीनाम् ॥ ४ ॥ शंकरः सुखकरः ॥ ५ ॥ अष्टाधिकशतसंख्यं शंभ्वानंदं प्रणमति ।

इत्यमिति । अखिलवित्सर्वज्ञः । रहस्यं महामंत्रादिरहस्यम् । इज्यं पूज्यम् ॥ ६ ॥ आसीदिति ॥ ७ ॥ ८ ॥ बहव इति पूर्वान्वितम् ॥ ९ ॥ सशिष्य इति पूर्वान्वयि ॥ १० ॥ स्थिता इत्यध्याहारः ॥ ११ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १२ ॥ तत्र तट इत्युत्तरान्वयि ॥ १३ ॥ १४ ॥ तुंगमुच्चं कूलं

आसीत्पृथ्वीधरानंदो नर्मदाया उदग्दिशि ॥ दूरं क्रोशत्रये शिष्यैः सिद्धमंत्रोऽखिलप्रियः ॥ ७ ॥ सूर्यपर्वैकदा प्राप्तं वर्षाकाले महत्तदा ॥ तत्पुरस्था ययुर्लोकाः स्नातुं पर्वणि नर्मदाम् ॥८॥ बहवोऽथाखिलैः साकमात्मवानपि दर्शयन् ॥ लोकसंग्रहमेवासौ ययौ पृथ्वीधराभिधः॥९॥सशिष्योऽथ त्वरायुक्तास्ते सर्वे पर्वलब्धये ॥ गत्वा चक्रुर्मुदा स्नानं रेवायां स्पर्शपर्वणि॥१०॥ केचिन्मंत्राज्ञपंतोऽन्ये तर्पयंतः पितॄन्परे ॥ हेम्ना श्राद्धानि कुर्वंतः केचिद्गोमुख्यदानदाः ॥ ११ ॥ जलमध्यस्थिताः केचित्पुरश्चरणतत्पराः ॥ इत्थं स्थितेषु सर्वेषु तावत्सा नर्मदानदी ॥ १२ ॥ ववृधेऽतिजलौघेन तदा कंठजलावधि ॥ स्थित्वांतस्थास्तटं प्राप्ता तत्रापीक्ष्याद्भुतं जलम् ॥ १३ ॥ उपर्युपरि जग्मुस्तेऽथाभूत्सर्वत्र तज्जलम् ॥ निवृत्त्य गंतुं स्वग्रामं नासीन्मार्गः कुतोऽप्यणुः ॥ १४ ॥ तुंगं कूलं क्वचिद्दृष्ट्वा ययुः शीघ्रमदोऽखिलाः ॥ किंचित्किंचित्कूलतश्च जलधाराजवादधः ॥१५॥ आपतत्तस्य चात्यल्पा ह्यवशिष्टा धरा तदा ॥ तस्यामेवाखिलास्तस्थुर्मिथो धृत्वा करान्भिया ॥ १६ ॥ अथाखिलां च तां भूमिं स्फुटंतीं जलवेगतः ॥ पतंतीं वीक्ष्य नद्यास्ते मेनिरे निखिलक्षयम् ॥१७॥ तदा पृथ्वीधरानंदः सर्वानाह न वोऽस्तु भीः ॥ रक्षयिष्येऽहमखिलाञ्छ्रीगुरोः पादुकाबलात् ॥ १८ ॥ इत्थमुक्त्वा स्मरन्सोऽथ श्रीगुरोः पादुकामनुम् ॥ स्तंभयामास तां पृथ्वीं पतंतीमंबुवेगतः ॥ १९ ॥

तीरम् । अदः इदं किंचित्किंचिन्मृदादिकमित्युत्तरान्वयि॥ १५॥तस्य तीरस्य भिया भयेन॥ १६॥ ते जनाः निखिलक्षयं सर्वनाशम् ॥ १७॥ १८॥ १९॥

पूर्वार्द्धे पूर्वान्वयि । दंडिनीमनुना वाराहीमंत्रेण ॥ २० ॥ २१ ॥ २२ ॥ तस्मात्स्थानात् ॥ २३ ॥ अखिला वयमित्युत्तरान्वयि ॥ २४ ॥ सिद्धमंत्रबलेनास्यास्मद्रक्षकस्य ॥ २५ ॥ २६ ॥ सिद्धमंत्रबलादिति पूर्वान्वयि ॥ २७ ॥ मंत्रान्मंत्रेणारक्षत् रक्षितवानित्यनुवृत्तिः ॥ २८ ॥

पुरश्चरणसिद्धेन दंडिनीमनुना तदा ॥ पतंतीं निश्चलां दृष्ट्वा धरां ते मेनिरे सुखम् ॥ २० ॥ अहोरात्रमथो तस्थुस्तस्यां संकोचतोऽखिलाः ॥ करैर्धृत्वा मिथश्चित्ते स्मरंतः स्वेष्टदेवताम् ॥ २१ ॥ तावत्पृथ्वीधरानंदः श्रीवाराह्या जपन्मनुम् ॥ स्थितः पदेन चैकेन स्मरन्गुरुपदांबुजे ॥ २२ ॥ शनैस्ततोऽभवन्न्यूनं तज्जलं प्राक्स्थले गतम् ॥ दृष्ट्वाखिला ययुस्तस्माच्छनैः पंकगतांघ्रयः ॥ २३ ॥ तावत्कूलधराभागः सोऽपतद्द्रुतमंबुनि ॥ दृष्ट्वा ते विस्मिताः सर्वे प्राहुरित्यखिला वयम् ॥ २४ ॥ रक्षिताः साधुनानेन सिद्धमंत्रबलात्खलु ॥ अस्येयं विमला कीर्तिर्यथा स्थास्यति निश्चला ॥ २५ ॥ तथा नामास्तु विख्यातमेतत्कर्मप्रसूचकम् ॥ यतोऽनेन धृता पृथ्वी ह्यस्मदर्थमहर्निशम् ॥ २६ ॥ सिद्धमंत्रबलात्तस्मान्नाम्नायं पृथिवीधरः ॥ करे गोवर्धनं धृत्वाऽरक्षत्कृष्णो यथा व्रजम् ॥ २७॥ तथा पृथ्वीधरो मंत्रात्सर्वानस्मान्किलाधुना ॥ इत्थमुक्त्वा ययुः सर्वे स्वंस्वं स्थानं सुखान्विताः ॥ २८ ॥ मन्यमाना वयं मृत्योर्मुखादेवागताः पुनः ॥ प्रशंसंतश्च पृथिवीधरानंदयशो मुहुः ॥ २९ ॥ यः सिद्धमंत्रोऽखिलविद्रहस्यं दत्त्वा हमीराय ययौ सुसिद्धिम् ॥ तमूनविंशोर्ध्वशताप्तसंख्यं पृथ्वीधरानंदगुरुं नताः स्मः ॥३०॥ भूख्यातभूपोर्जुनतुल्यवीर्यो यो वैद्यनाथाय ददौ रहस्यम् ॥ विंशोर्ध्वमेनं तु शताप्तसंख्यं हमीरसौख्यं गुरुमानताः स्मः ॥ ३१ ॥

॥ २९ ॥ एकोनविंशत्यधिकशतसंख्यं पृथ्वीधरानंदं प्रणमति य इति ॥ ३० ॥ विंशत्यधिकशतसंख्यं प्रणमति सिद्धेश्वर इति । हमीरसौख्यं हमीरा

नंदम् ॥ ३१ ॥ आसीदित्यध्याहारः ॥ ३२ ॥ ३३ ॥ रोगिण इत्युत्तरान्वयि ॥ ३४ ॥ बभूवेत्युत्तरार्द्धे ॥ ३५ ॥ तस्य वैद्यनाथत्वप्रकाशिकां कथा माह । अथेत्यादिना यावत्सर्गसमाप्ति । राजा आसीद्विक्रमवंशोत्पन्नः ॥ ३६ ॥ निपुणाः कुशलाः यं भोजं मर्त्यतां मनुष्यभावम् ॥ ३७ ॥ इत्थंप्रभावः एवंसामर्थ्यवान् । बभूव ॥ ३८ ॥ ३९ ॥ ४० ॥ अप्सु उदकेषु ॥ ४१ ॥ वाक्पतिः बृहस्पतिः । विधिर्ब्रह्मा यस्य नीतिं ज्ञात्वा दैवपरः दैववाचकोऽ

वैद्यनाथानंदनाथश्चात्मवान्मंत्रवित्तमः ॥ वेदशास्त्रार्थतत्त्वज्ञः सिद्धमंत्रोऽखिलप्रियः ॥३२॥ धारानगरसामीप्ये यस्य चासीन्महामठः॥ शिष्याश्च बहवोऽस्यासन्सदा सेवापरायणाः ॥३३॥ रोगिणो बहवो यस्य दर्शनार्थं सुदूरतः ॥ आगत्यास्य कृपालोकाच्चांघ्रितीर्थनिषेवणात् ॥३४॥ भूत्वैवारोगिणः सद्यो यं नत्वा यांति ते गृहम् ॥ इत्थं सामर्थ्यवान्योगी शिवार्चाभिरतः सदा॥३५॥अथ धारापुरे राजा भोजनामातिविश्रुतः ॥ विक्रमार्कान्वयोत्पन्नः प्रजापालनतत्परः ॥ ३६ ॥ यमाहुर्निपुणाः साक्षाद्ब्रह्मणोंऽशं धरातले ॥ धर्मे नष्टे कलौ धर्मरक्षार्थं मर्त्यतां गतम् ॥ ३७ ॥ यस्य दर्शनतः प्रेतो द्विमुहूर्तावधि स्फुटम् ॥ वदतीत्थंप्रभावोऽसौ कलावपि नृपोत्तमः ॥ ३८ ॥ नर्मदाहिमवन्मध्यां प्राक्पश्चात्सागरावधि ॥ यः पाति पृथिवीमेकः सम्यङ्नीत्यारिवर्जितः ॥ ३९ ॥ यस्य सैन्यं तु विस्तीर्णं दृष्ट्वैवाखिलशत्रवः ॥ निवर्त्य पश्चाद्गच्छंति समुद्रमिव पक्षिणः ॥४०॥ यस्य चांतःपुरस्त्रीणां मुखं वीक्ष्य विमानतः ॥ स्वर्गं त्यक्त्वा ह्रिया तस्थुश्चाश्वेवाप्सरसोऽखिलाः ॥ ४१ ॥ यस्य वाक्पटुतां श्रुत्वा ह्रियास्तं याति वाक्पतिः ॥ प्रत्यब्दे तु विधिर्ज्ञात्वा नीतिं दैवपरोऽभवत् ॥४२॥ बहवः पंडिताः स्वास्थ्यं दत्त्वा येन स्वसन्निधौ ॥ स्थापिताः कवयश्चापि नानाकाव्यकलाविदः ॥४३॥ रसालंकृतिरम्यार्थं सच्छंदःशब्दमंडितम् ॥ प्रकरोति नवं श्लोकं तस्मै लक्षं ददात्यसौ ॥४४॥ गुणिनोऽन्येपि बहवो गानमुख्यकलाविदः ॥ संगृहीतास्तथा राज्ञा वैद्याः सम्यक्चिकित्सकाः ॥४५॥ स्वयं च सर्वशास्त्रज्ञः काव्यं चानेकभेदतः ॥ कृतवान्यत्सतां मान्यं स्पष्टालंकृतिसद्रसम् ॥४६॥

भवत् । 'विधिर्विधाने दैवे च' इत्यमरः । अत्रातिशयोक्तिरलंकारः । तल्लक्षणं तु "वस्तुनो वक्तुमुत्कर्षमसंभाव्यं यदुच्यते॥ वदंत्यतिशयाख्यं तमलंकारं बुधा यथा ।" इति ॥ ४२ ॥ येन भोजेन ॥ ४३ ॥ रसालंकारैः रम्योऽर्थो यस्मिन्सच्छंदःशब्दमंडितम् उत्तमच्छंदोयुक्तशब्दशोभितं नवीनं श्लोकं यः करोति

तस्मै लक्षं लक्षमुद्राः असौ भोजो ददाति ॥ ४४ ॥ ४५ ॥ ४६ ॥ दानी दानकर्ता आसीत् ॥ ४७ ॥ कचित्कदाचिदर्धोदयपर्वणि त्रिभिरहोभिरे ष्यमाणे सति राज्ञो भोजस्यापथ्यभक्षणेनाद्भुतज्वरोत्पत्तिर्बभूव ॥ अर्धोदयलक्षणम् । " अमार्कश्रवणे पाते युक्ता चेत्पुष्यमाघयोः । अर्द्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः " इति ॥ ४८ ॥ भो इत्युत्तरान्वयि । त्रिदिनैरागामि यदर्धोदयपर्व तस्मिन् ॥ ४९ ॥ ५० ॥ दैवयोगेन लब्धमिति पूर्वान्वयि ।

विद्वत्तमोपि राजेत्थं देवब्राह्मणतुल्यधीः ॥ सदाचाररतो नित्यं दानी पर्वणि चाधिकम् ॥ ४७ ॥ पर्वण्यर्धोदयेऽहोभिरेष्यमाणे त्रिभिः कचित् ॥ राज्ञोऽद्भुतज्वरोत्पत्तिर्बभूवापथ्यभक्षणात् ॥ ४८ ॥ अथाहूय नृपो वैद्यानित्याह ज्वरपीडितः ॥ राजोवाच ॥ भो वैद्यास्त्रिदिनैरेवागाम्यर्धोदयपर्वणि ॥ ४९ ॥ ममात्यंतज्वराढ्यस्य स्नानं दानं कथं भवेत् ॥ जन्मन्यर्द्धोदयं पर्व त्विदमेव सकृन्मया ॥ ५० ॥ लब्धं दैवेन तत्रापि महान्विघ्नोऽयमुत्थितः ॥ दैवज्ञेभ्यः श्रुतं पूर्वं मया वर्षद्वयांतरे ॥ ५१ ॥ इदं पर्व तदारभ्य हीत्थं संकल्पितं हृदि ॥ स्नात्वा श्रीनर्मदातोये तथा दानान्यनेकशः ॥ ५२ ॥ तुलापुरुषमुख्यानि दास्याम्यस्मिंस्तु पर्वणि ॥ भग्नं चकार संकल्पं सर्वं मेऽसौ महाज्वरः ॥ ५३ ॥ अतो देयं भवद्भिर्मे चौषधं यत्स्वतेजसा ॥ मत्क्षेमपूर्वकं शीघ्रं शांतिं नेष्यत्ययमुं ज्वरम् ॥ ५४ ॥ स्नात्वैव दास्ये दानानि यथा चागामिपर्वणि ॥ तथा यतध्वं भिषजो वैद्यशास्त्रचिकित्सया ॥ ५५ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति भिषजश्चक्रुश्चिकित्सां स्वस्वकौशलम् ॥ दर्शयंतो नृपायाथ धीभेदात्पृथगौषधैः ॥ ५६ ॥ कश्चित्प्राह नृपायाहं ज्वरं यामचतुष्टयात् ॥ शमं नेष्येऽपरः प्राह तथा यामद्वयादिति ॥ ५७ ॥ यामेनान्यस्तदर्धेन तदर्धेनेति जल्पिनः ॥ यश्चकार मुहूर्तेन प्रतिज्ञां ज्वरशांतये ॥ ५८ ॥ प्रागदद्दावौषधं सोऽथ ज्वरोद्भुत इवाभवत् ॥ ततो यामार्धवक्ताथ यामवक्तेति तेऽखिलाः ॥ ५९ ॥

तत्र पर्वसमये उत्पन्नः ॥ ५१ ॥ इदं पर्वेति पूर्वान्वितम् । इत्थं वक्ष्यमाणम् उत्तरार्द्धान्वयि ॥ ५२ ॥ ५३ ॥ यदौषधं कर्तृ स्वतेजसा स्वसामर्थ्येन ॥ ५४ ॥ यथाऽहं स्नात्वा दानानि देयानि गवादीनि दास्यामि तथा यतध्वं प्रयत्नं कुरुत ॥ ५५ ॥ चिकित्सां परीक्षां कौशलं कुशलतां धीभेदाद्बुद्धिभेदेन ॥ ५६ ॥ यामचतुष्टयात्प्रहरचतुष्टयेन यामद्वयात्प्रहरद्वयेन ॥ ५७ ॥ जल्पिनो वक्तारो बभूवुः ॥ ५८ ॥ स पूर्वमौषधं ददौ यामार्द्धेन ज्वरनाशकोऽहमिति वक्ता । तेऽखिला

इत्युत्तरान्वयि ॥ ५९ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ६० ॥ ६१ ॥ प्रकृत्या शरीरेण सुक्षेमं सामर्थ्यवंतम् ॥ ६२ ॥ ह्रिया लज्जया तस्माद्राज्ञः स्थानात् विस्मृतभेषजाः विसृष्टौषधकोशाः । तत्र राजमंदिरे ॥ ६३ ॥ प्रकृत्या व्यस्तं व्याकुलम् ॥ ६४ ॥ ताः दास्यः अमुना राज्ञा ॥ ६५ ॥ बहूनां वैद्या

राज्ञे ददुश्चौषधानि स्वस्वाधिक्यप्रशंसिनः ॥ भिषग्भिर्बहुभिर्दत्तैरौषधैर्नृपतेस्ततः॥६०॥उष्णत्वातिशयेनाभूत्पित्तक्षोभस्ततो नृपः॥बभूवात्यंतनिःसत्त्वो वक्तुमप्यक्षमस्तदा ॥ ६१ ॥ दृष्ट्वा कोलाहलं चक्रुर्नृपमित्थं स्त्रियोऽखिलाः ॥ भिषजोऽप्यक्षमाः कर्तुं प्रकृत्यैनं तु सुक्षमम् ॥ ६२ ॥ ह्रिया भीत्या ययुः शीघ्रं तस्माद्विस्मृतभेषजाः ॥ अथामात्याश्च तत्राशु श्रुत्वा कोलाहलं ययुः ॥ ६३ ॥ राजानं प्रकृतिव्यस्तं दृष्ट्वांतःपुरचारिणीः ॥ दासीः पप्रच्छुरित्थं किं राजा प्रकृतितोऽन्यथा ॥ ६४ ॥ ताश्चाहुः प्राग्ज्वरोत्पत्तिर्नृपस्यासीत्ततोऽमुना ॥ आज्ञप्ताश्च भिषङ्मुख्याः शीघ्रं तच्छांतयेऽखिलाः ॥ ६५ ॥ राज्ञे प्रतिज्ञया दत्तान्यौषधान्यपि तैः पृथक् ॥ बहूनामौषधैरित्थं दशां प्राप्तो नृपोऽधुना ॥ ६६ ॥ श्रुत्वामात्यास्तदेत्याहुर्नृपोयं बुद्धिमत्तमः ॥ बहूनां भिषजामेकश्चौषधानि किमाददे ॥ ६७ ॥ रोगिणोंऽताय भिषजौ द्वावप्युक्तौ पुरातनैः ॥ किं पुनर्बहवः क्षेमं करिष्यंति चिकित्सया ॥ ६८ ॥ क्व गतास्ते नृपायादौ यैर्दत्तान्यौषधान्यहो ॥ तानानीय बलादेतैः क्षेमं राज्ञः किलौषधैः ॥ ६९ ॥ कार्यं नो चेद्धि दंड्यास्ते भिषजस्तु नृपांतिके ॥ एवमाज्ञापिताश्चारा वैद्यान्वेषणतत्पराः ॥७०॥ बभ्रमुर्नगरीं सर्वां श्रुत्वेत्थं भिषजो द्रुतम् ॥ चक्रुः पलायनं सर्वे वैद्यनाथमठंप्रति ॥ ७१ ॥ कंपितांगाः पदे भीत्या स्खलंतः पृष्ठतो मुहुः ॥ पश्यंतश्च प्रधावंतो वैद्यनाथाग्रतो ययुः ॥ ७२ ॥

नाम् ॥ ६६ ॥ किं किमर्थं गृहीतवान् ॥ ६७ । अंताय नाशाय ॥ ६८ ॥ आदौ तान्वैद्यान् बलादानीय तैरौषधैः करणैः राज्ञः क्षेममस्माभिः कार्यमित्यन्वयः ॥ ६९ ॥ एवं प्रधानैराज्ञापिताश्चाराः दूताः सर्वां नगरीं बभ्रमुरित्यन्वयः ॥ ७० ॥ ७१ ॥ पदेपदे स्खलंतः ॥ ७२ ॥

॥७३॥७४॥अथाद्युत्तरान्वयि॥७५॥७६॥मुमूर्षुरिवेति पूर्वान्वयि । तं राजानं तस्माद्राजगृहात्॥७७॥७८॥ते दूताः । इत्थमित्याद्युत्तरान्वयि॥७९॥

वैद्यनाथोपि तान्दृष्ट्वा दयया व्यथितांतरः ॥ पप्रच्छ किं भयं वोऽस्ति भवंतः कथयंतु तत् ॥७३॥ अथाहुर्भिषजो वृत्तं वैद्यनाथाय चादितः ॥ मुहुः पश्चात्प्रपश्यंतो दूतागमभियाऽखिलाः ॥ ७४ ॥ वैद्या ऊचुः ॥ राज्ञोद्भुतज्वरोत्पत्तिरासीत्तच्छांतये द्रुतम् ॥ तेनाज्ञप्ता वयं सर्वेऽथास्माभिः स्वस्वकौशलम् ॥ ७५ ॥ दर्शयद्भिः पृथग्दत्तान्यौषधानि प्रतिज्ञया ॥ राज्ञेऽखिलैस्ततो राजा बहूनामौषधैर भूत् ॥ ७६ ॥ मुमूर्षुरिव दृष्ट्वा तं तत्पत्न्यो रुरुदुर्भृशम् ॥ वयं तु निर्गतास्तस्मात्तत्क्षेमं कर्तुमक्षमाः ॥ ७७ ॥ ज्ञात्वाऽमात्या इदं वृत्तमस्मानन्वेषितुं पुरम् ॥ दूताः संप्रेषितास्ते तु संत्यस्मत्पृष्ठतोऽधुना ॥ ७८ ॥ बलान्नीत्वाऽखिलानस्मांश्चामात्यपुरतोऽद्य ते ॥ किं करिष्यंति नो विद्मश्चेत्थं भीत्यान्विता वयम् ॥ ७९ ॥ अलब्धशरणाः प्राप्तास्त्वामेव शरणं गुरो ॥ पाहि नोऽस्माद्भयात्त्राता त्वदृतेऽन्यो न विद्यते ॥ ८० ॥ श्रीदेशिकेंद्र उवाच ॥ उक्त्वेत्थं भिषजः पेतुर्वैद्यनाथाग्रतोखिलाः ॥ त्राहि त्राहीति भाषंतस्तावत्तत्राययुर्भटाः ॥ ८१ ॥ पतितान्भिषजः सर्वान्दृष्ट्वोत्थाप्य त्वरान्विताः ॥ तान्प्रोचुर्वो नृपामात्या आह्वयन्ति क्रुधा द्रुतम् ॥ ८२ ॥ नागमिष्यथ चेद्यूयं बलान्नेष्यामहेऽखिलान् ॥ इत्युक्त्वा तान्करैर्धृत्वा नेतुं दूताः कृतोद्यमाः ॥ ८३ ॥ भिषजोऽथ निरीक्षंतो वैद्यनाथं मुहुर्मुहुः ॥ रक्षरक्षेति तं प्रोचुर्वैद्यनाथोऽथ सदयः ॥ ८४ ॥ दूतानाह क्षणं स्थेयमौषधं दीयते मया ॥ राज्ञः क्षेमाय वैद्येभ्यस्तद्गृहीत्वाखिला इमे ॥ ८५ ॥ युष्माभिः सह यास्यंति श्रुत्वेत्यासुर्भटाः स्थिराः ॥ स्वगुरोः पादुकातीर्थं सिद्धमंत्रैश्च मंत्रितम् ॥ ८६ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ सती दया यस्मिन्स वैद्यनाथ इत्युत्तरान्वयि ॥८४॥ तदौषधं गृहीत्वा सर्वे इमे वैद्या इत्युत्तरान्वयि ॥८५॥ उत्तरार्द्धं

मुत्तरान्वयि ॥ ८६ ॥ निक्षेप्यतां भवद्भिरित्यध्याहारः ॥ ८७ ॥ ८८ ॥ ८९ ॥ तावदद्भुतं बभूवेत्यन्वयः ॥ ९० ॥ भवद्भिरित्यग्रान्वितम् ॥ ९१ ॥
अंततः हृदये देहुः संतापं चक्रुः । और्वः हव्यवाट् वाडवाग्निः । तेनौषधेन ॥ ९२ ॥ मुमुदुः मोदं प्रापुः ॥९३॥ स्वसामर्थ्येन हेतुना येन वैद्यनाथेन यतः
कारणाद्रक्षिताः अतस्तं बुधाः पृथिव्यां वैद्यनाथं प्राहुरित्यन्वयः ॥ ९४ ॥ स वैद्यनाथः ॥९५॥ एकविंशत्यधिकशतसंख्यं गुरुं प्रणमति एवमिति । उदेकविं

विभूतिं च भिषग्भ्योऽसौ वैद्यनाथो ददौ तदा ॥ तानाह तीर्थं वदने राज्ञो निक्षिप्यतां द्रुतम् ॥८७॥ भूतिश्चांऽगेषु सर्वेषु ज्वरशांत्यै विमर्द्य ताम् ॥ भविष्यति द्रुतं क्षेमं राज्ञो नास्त्यत्र संशयः ॥ ८८ ॥ नाविश्वासोऽत्र कर्तव्यो विश्वासः फलदो यतः ॥ भिषजोऽपि गृहीत्वा तद्ययुर्दूतैर्नृपालयम् ॥ ८९ ॥ वैद्यनाथेऽतिविश्वस्तास्तीर्थं राज्ञो मुखे शनैः ॥ निक्षिप्यांगेषु तां भूतिं ममर्दुस्तावदद्भुतम् ॥ ९० ॥ बभूव नृप उत्तस्थौ विज्वरः स्वयमेव सः ॥ वैद्यानाह भवद्भिस्तु प्राग्दत्तान्यौषधानि मे ॥ ९१ ॥ देहुर्ममांततश्चौर्वः समुद्रमिव हव्यवाट् ॥ पश्चाद्दत्तं तु यत्तेन जातं शांतं ममोदरम् ॥ ९२ ॥ ज्वरोपि दृश्यते नांगे स्वस्थोऽद्याहं न संशयः ॥ श्रुत्वेति मुमुदुः सर्वेऽमात्याश्चांतःपुरस्त्रियः ॥ ९३ ॥ नृपोऽपि पर्वणि स्नात्वा ददौ दानान्यनेकशः ॥ इत्थं वैद्याः स्वसामर्थ्याद्रक्षिताः संकटाद्यतः ॥ ९४ ॥ येनातस्तं बुधाः प्राहुर्वैद्यनाथमिति क्षितौ ॥ आसीद्विख्यातकीर्तिः स शरणागतवत्सलः ॥ ९५ ॥ एवं त्वनेकार्तिहरस्तु कालोदासाय मंत्रान्प्रददौ दयाढ्यः ॥ तं वैद्यनाथाख्यमुदेकविंशशताप्तसंख्यं गुरुमानताः स्मः ॥ ९६ ॥ शंभ्वानंदाद्धि चतुर्णां गुरूणां गाथां भक्त्या यः पठेद्वा शृणोति ॥ कल्याणं स्वं चार्तिनाशं सुकीर्तिं चारोगित्वं प्राप्नुयान्नात्र शंका ॥ ९७ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे शंभ्वानंदादिचतुर्गुरुकथावर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

शताप्तसंख्यम् उत् उर्ध्वम् एकविंशाः एकविंशतिसंख्यका गुरवो यस्मिन्तस्मिन् शते आप्ता संख्या गणना यस्य एकविंशत्यधिकशतसंख्यमित्यर्थः ॥९६॥
एतत्सर्गोक्तशंभ्वादिगुरुचतुष्टयकथाश्रवणादिफलमाह शंभ्वानंदादीति । कल्याणं दुःखनाशम् उत्तमकांतिं रोगनाशं शंभुपृथ्वीधरहमीरवैद्यनाथानंदानां चरित्रश्रवणादिफलानि ॥ ९७ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां द्वितीयः सर्गः ॥ २ ॥

[1]उत्तरार्धेतीयाचतुर्थकः कालीदासोऽत्र पद्यतः। चतुःषष्टया भोजकन्यावरेक्षा च तदागमः ॥ ३ ॥ कालीदासानन्दकथामिति। अचलांतरः स्थिरचित्तः। यः कालीदासः सद्यस्तात्कालिकी स्फूर्तिर्यस्य सुतरां विख्यातस्तस्य कथां त्वं शृणिवत्यन्वयः ॥१॥ राजा भोजराजः वैभवं सामर्थ्यम् अखिलाधिकां सर्वोत्कृष्टाम् ॥२॥ वैद्यनाथायुत्तरान्वयि॥३॥तांत्रिकीं तंत्रोक्तां मंत्रशास्त्रोक्तसिद्धारिचक्रेण सिद्धां दीक्षाम् उपास्यमंत्रम् अस्माद्वैद्यनाथादमलं विक्षेपरहितम् ॥४॥ राजे

श्रीदेशिकेंद्र उवाच ॥ कालीदासानंदनाथकथां शृण्वचलांतरः ॥ यश्चाखिलकविश्रेष्ठः सद्यःस्फूर्तिः सुविश्रुतः ॥१॥ अथ राजापि चाकर्ण्य वैद्यनाथस्य वैभवम् ॥ स्वदूतमुखतस्तस्मिन्भक्तिं चक्रेऽखिलाधिकाम् ॥ २ ॥ वैद्यनाथमठं गत्वा राजा तं भक्तिपूर्वकम् ॥ प्रणामान्बहुशः कृत्वा प्रार्थयित्वा मुहुर्मुहुः ॥ ३ ॥ जग्राह तांत्रिकीं दीक्षां शुद्धां सिद्धारिचक्रतः ॥ स्वानुभूतिकरं ज्ञानं चास्माद्योगं तथामलम् ॥ ४ ॥ इत्थं तं देशिकं कृत्वा वैद्यनाथं तपोनिधिम् ॥ ददावैश्वर्यमखिलं मठे स्वीयाद्यथाधिकम् ॥ ५ ॥ अथ भोजनृपस्यासन् पुत्राः सद्गुणशालिनः ॥ चत्वारः कन्यका चैका कनिष्ठाखिलपुत्रतः ॥ ६ ॥ पुत्रेभ्योपि नृपस्यासीत्तस्यां प्रीतिरखंडिता ॥ अतिरूपवती सापि जाता पंचाब्दिका ततः ॥ ७ ॥ केनचित्पंडितार्येण नृपस्तां शास्त्रविद्यया ॥ शिक्षयामास वृद्धेन ज्ञात्वात्यंतसुधीमतीम् ॥ ८ ॥ गुरोः शास्त्राण्यभ्यसंती वयसा दशवार्षिकी ॥ यावद्बभूव तावत्साऽखिलज्ञातिशयाद्धिया ॥ ९ ॥ पंडितान्सा बहूञ्जिग्येऽस्खलद्वाक्छास्त्रवादतः ॥ तां दृष्ट्वाप मुदं राजा शशंसुः सर्वपंडिताः ॥ १० ॥ राज्ञः प्रीतिं दर्शयंतश्चेतसात्यंतदुःखिताः ॥ वैद्यनाथं गुरुं गत्वा शरणं साथ कन्यका ॥ ११ ॥ जग्राह मंत्रदीक्षां च योगं ज्ञानं तथाभ्यसत् ॥ ज्ञानयोगे मंत्रशास्त्रे निपुणा सा बभूव च ॥ १२ ॥ तां दृष्ट्वेत्थं नृपः प्रौढां द्वादशाब्दां सुरूपिणीम् ॥ आर्यान्पप्रच्छ सामात्यान्पंडितांश्चेति कन्यका ॥ १३ ॥

त्यध्याहारः। यथा स्वकीयैश्वर्यादधिकं तथा ददौ॥५॥अथ गुरुप्रसादानंतरम्॥६॥तत इत्युत्तरान्वयि॥७॥८॥ अतिबुद्धिमत्त्वेन सर्वज्ञा बभूव॥९॥ जिग्ये जितवती यतः अस्खलद्वाक् अकुंठितवाग्गतिः ॥ १० ॥ पूर्वार्द्धं पूर्वान्वयि। उत्तरार्द्धमुत्तरगामि ॥ ११ ॥ १२ ॥ कन्यकेत्युत्तरान्वयि ॥ १३ ॥

१—उत्तरार्धेत्रितीयाध्यायादारभ्य।

जयंती जयकर्त्री । वर इत्युत्तरान्वयि ॥ १४ ॥ मे मह्यम् ॥ १५ ॥ तेषां राज्ञाम् ॥ १६ ॥ १७ ॥ १८ ॥ स्मृत्यभिप्रायमाह चतुर्वर्णभवा

कस्मै देया सुरूपेयं जयंती पंडितानपि ॥ शास्त्रवादैर्वयोऽल्पा च वरः कः सदृशोऽनया ॥ १४ ॥ बुद्धिविद्याशीलरूपैर्लभ्यते धरणी तले ॥ राजानः संति पृथ्व्यां ये तेऽखिला मे करप्रदाः ॥१५॥ नात्मजेष्वस्ति तेषां च विद्वान्मत्कन्यया समः ॥ पंडितानां सुताः संति विद्वांसस्ते दरिद्रिणः ॥ १६ ॥ तथापि ब्राह्मणैस्तैस्तु क्षत्रियस्य सुता मम ॥ गृह्यते वा न भार्यार्थं संशयोऽस्ति महानयम् ॥ ॥ १७ ॥ श्रुत्वेति पंडिताः प्राहुस्तं नृपं विनयान्वितम् ॥ पंडिता ऊचुः ॥ राजन्मन्वादिभिः प्रोक्तं स्वस्वस्मृत्यां निजं मतम् ॥ ॥ १८ ॥ चतुर्वर्णभवाः कन्या विप्रो राजा त्रिवर्णजाः ॥ वैश्यो द्विवर्णजाः शूद्रश्चोद्वहेदेकजामिति ॥ १९ ॥ तस्माद्राजंस्त्वया देया कन्या विप्राय धीमते ॥ को न स्वीकुरुते कन्यां सुरूपां धीमतीं तव ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति भूपतिः प्राह सामा त्यान्पंडितानिति ॥ राजोवाच ॥ गत्वा युष्माभिरखिलैर्विद्वान्काश्चिद्विजार्भकः ॥२१॥ रूपवान्मत्सुतायोग्यो वरश्चानीयतां द्रुतम् ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं नृपवाक्यं ते देशान्सामात्यपंडिताः ॥ २२ ॥ गत्वा संशोध्य यत्नेन पंडितस्य सुतं क्वचित् ॥ दृष्ट्वातिरूपिणं कांतं सर्वशास्त्रविशारदम् ॥ २३ ॥ कर्तुं वादं सुकुशलं रसालंकृतिकोविदम् ॥ वयसा षोडशाब्दीयं रसिकं प्रातयौव नम् ॥ २४ ॥ आनीय भोजराजाय दर्शयामासुरुत्तमम् ॥ दृष्ट्वा तं नृपतिस्तुष्टो दुहित्रे चारतोऽब्रवीत् ॥२५॥ कन्याथाह मया वादं कृत्वा जेष्यति मां तु यः ॥ वरिष्येहं तमेवान्यमनंगमपि नाधियम् ॥ २६ ॥ कन्याशयमिति ज्ञात्वा नृपस्तं पंडितार्भकम् ॥ प्रेषयामास कन्याग्रे तयोर्वादस्तदाऽभवत् ॥ २७ ॥ न तां जेतुं समर्थोऽभूत्पंडितार्भोऽथ लज्जितः ॥ तूष्णीं ययौ निजं ग्रामं तयेत्थं बहवो जिताः ॥ २८ ॥ सामात्यैः पंडितैर्यत्नात्पंडितानां तु पुत्रकाः ॥ विद्वांसश्चातिरूपाढ्या आनीताः सर्वदेशतः ॥ २९ ॥

इति । एकजां शूद्रजाम् ॥ १९ ॥ २० ॥ गत्वेत्युत्तरान्वयि ॥ २१ ॥ श्रुत्वेत्यादित्रयाणामन्वयः ॥ २२ ॥ २३ ॥ २४ ॥२५॥ अनंगं मदनरूप

मधियं मूर्खम् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ये ये इति पूर्वबद्धम् ॥ ३० ॥ इत्यर्द्धं पूर्वान्वयि ॥ ३१ ॥ ते त्वित्याद्यु त्तरान्वयि । ते वराः ते तव ॥ ३२ ॥ कामात्कामेन उत्तरार्धमुद्धतम् ॥ ३३ ॥ जेतुं शक्या किमित्यन्वयः । अपि तु नेत्यर्थः ॥ ३४ ॥ तस्यास्तव कन्यायाः यो मनोविक्षेपभावस्तस्माद्भयं येषां तैः ॥ ३५ ॥ अन्यथा वादवरस्वीकारे बहुवर्षैरपि वरप्राप्तिर्न भविष्यति श्रुत्वेत्याद्युत्तरान्वयि । अनघे

ये ये तांस्तांश्च निर्जित्य चक्रे सा तु पराङ्मुखान् ॥ तेऽमात्याः पंडिताः श्रांताश्चित्ते चिंतान्वितो नृपः ॥ ३० ॥ मत्कन्याचित्तसदृशः कथं भर्ता भवेदिति ॥ नृपं प्राहुरथामात्याः पंडिताश्चेति भो नृप ॥ ३१ ॥ परीक्ष्यास्माभिरानीताः सुधियः पंडिताभकाः ॥ विद्वांसस्ते तु कन्याया रूपं दृष्ट्वा तु मोहकम् ॥ ३२ ॥ कामाद्विक्षिप्तमनसो नासन्वकुमणु क्षमाः ॥ कृतादावृषयः पूर्वं कौशिकाद्या दृढव्रताः ॥ ३३ ॥ वाताशनाश्च दृष्ट्वैव स्त्रीमुखं भ्रांततां गताः ॥ किं पुनः कलिजैरल्पैः स्त्रीकामैर्वरकांक्षिणी ॥ ३४ ॥ जेतुं शक्या सुरूपा स्त्री तन्मनोभंगताभयैः ॥ तस्माद्वादं विना चेत्ते कन्या स्वीकुरुते वरम् ॥ ३५ ॥ तर्ह्येवास्यै वरावाप्तिर्नान्यथाब्दगणादपि ॥ श्रुत्वेत्याह सुतां राजा ब्रूहि रेच्छा तवानघे ॥ ३६ ॥ त्यज वादं स्त्रिया वादं कर्तुं देवोपि न क्षमः ॥ स्थीयते चेत्त्वया तूष्णीं तर्ह्यत्रामात्यपंडितैः ॥ ३७ ॥ वरस्त्वदर्थं त्वत्तुल्यो विद्वांश्चानीयते कुली ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं ज्ञात्वाखिलानां च मतं सा भोजकन्यका ॥ ३८ ॥ तथेत्याहाथ ते सर्वे ननंदुः पंडिता हृदि ॥ स्थित्वा रहसि सामात्याः प्रोचुरित्थं मिथोऽखिलाः ॥ ३९ ॥ विद्वांसोऽस्माभिरानीताः कुलशीलगुणाकराः ॥ ये वरास्तेऽनया सर्वे प्रत्याख्याताः कुवादतः ॥ ४० ॥ परिभ्राम्य महीं सर्वां श्रमभाजो वयं मुधा ॥ कृताः किलानयातोऽस्यै मूर्ख एव वरोऽधुना ॥ ४१ ॥ योजनीयः प्रयत्नेन सर्वैरप्यनुमोदताम् ॥ इत्थमेकं मतं कृत्वाऽखिलाः सामात्यपंडिताः ॥ ४२ ॥ बभ्रमुर्बहुशो देशानतिमूर्खवराप्तये ॥ भ्रमंतस्तेऽथ ददृशुः क्वचिद्देशे व्रजांतिके ॥ ४३ ॥

निष्पापे एतेन त्वयि विद्वत्पराभवकरणमयुक्तमिति भावः ॥ ३६ ॥ तर्हीत्युरान्वयि ॥ ३७ ॥ कुली सद्वंशजः । इत्थमत्रेत्युत्तरान्वयि ॥ ३८ ॥ तथा वादं विना वरिष्ये इति ॥ ३९ ॥ ४० ॥ वरो योजनीय इति संबंधः ॥ ४१ ॥ इत्थमित्युत्तरान्वयि ॥ ४२ ॥ बहुशः बहुदेशान् अथ ते सामात्यपंडिताः

क्वचिद्देशेऽल्पग्रामसमीपे कंचित्पुरुषं ददृशुरिति सार्धद्वयेनान्वयः ॥ ४३ ॥ उत्कटबलम् ॥ ४४ ॥ कौपीनाद्यं दधानम् ॥ ४५ ॥ ४६ ॥ ऊर्ध्वस्थि तस्येत्युत्तरनिबद्धम् ॥ ४७ ॥ अयमजापालो वर इत्युत्तरान्वयि ॥ ४८ ॥ कौ पृथिव्याम् अधोभागे क्षणमात्रमागच्छेति संबंधः ॥ ४९ ॥ ननु स्वोद्योगं त्यक्त्वा नागच्छामीति चेत्तत्राहुः । ते तुभ्यं सिताभवं शर्कराभवं भक्ष्यं दास्यामः॥५०॥सितायुक्तभक्ष्यं शर्करायुक्तं भक्ष्यमुभयान्वयि । ते सामात्यपंडिताः

स्थित्वोर्ध्वं वृक्षशाखायास्तामेवाधः कुठारतः ॥ छेदयंतमणु प्राप्ततारुण्यं कंचिदुद्बलम् ॥४४॥ शिखयैवोपवीतेन द्योतमानं द्विजन्मताम् ॥ कौपीनं मलिनं कट्यां जरत्कंबलमूर्ध्वतः ॥ ४५ ॥ दधानं वृक्षपरितोऽजाः पश्यंतमवेक्ष्य तम् ॥ प्राहुस्ते को भवानस्यां शाखायां संस्थितोऽसि वै ॥ ४६ ॥ तामेव छेदयस्यद्धा तेऽधःपतनभीर्न किम् ॥ स चाहाथोर्ध्वसंस्थस्य मेऽधःशाखानिकृंतनेन ॥ ॥ ४७ ॥ पतनं स्यात्कथं मूढाः सम्यङ्न ज्ञानमस्ति वः ॥ श्रुत्वेति जहसुः सर्वे मिथश्चाहुरयं वरः ॥ ४८ ॥ दृश्यते राजकन्यायै योग्यो मूढतमस्तु कौ ॥ इत्थं निश्चित्य ते सर्वे मिथश्चाहुरधः क्षणम् ॥ ४९ ॥ आगच्छ मधुरं भक्ष्यं दास्यामस्ते सिताभवम् ॥ भक्ष्यलोभात्स चाधस्तादागतोऽस्मै ददुर्बुधाः ॥ ५० ॥ सिताभक्ष्यं स भुक्त्वाभूत्संतुष्टो मिष्टभक्षणात् ॥ ज्ञात्वा संतुष्टमाहुस्ते का जातिस्ते क्व तिष्ठसि ॥ ५१ ॥ माता पिता च भार्यापि निजवृत्तं वदाखिलम् ॥ अथाहासौ न जानेऽहं किमप्येतन्ममांबिका ॥ ५२ ॥ गृहे तिष्ठति प्रष्टव्यं गत्वा पृच्छध्वमब्रवीताम् ॥ अथ तेन सहामात्यपंडितास्तद्गृहं ययुः ॥ ५३ ॥ तार्णं समंतादासीनमेषाविलघुशालकम् ॥ असंस्कृतमजागूथमूत्रसंछादितांगणम् ॥ ५४ ॥ तिष्ठंतीं तत्र दृष्ट्वा ते मलिनां तस्य मातरम् ॥ तां ते पप्रच्छुर्जात्यादि साप्याह ब्राह्मणी त्वहम् ॥ ५५ ॥ पुत्रोऽयं मम कृत्वास्योपनीतिं मत्पतिर्मृतः ॥ पंचमेऽब्देऽथ दायादाः पुत्रं मे हंतुमुद्यताः ॥ ५६ ॥

ते तव ॥ ५१ ॥ माता पितापि । भार्येति पूर्वान्वयि । असौ अजारक्षकः एतद्ववदुक्तं अंबिका मातेत्युत्तरान्वयि ॥ ५२ ॥ प्रष्टव्यं प्रश्नविषयम् ॥ ५३॥ गृहविशेषणानि तार्णं तृणमयं परितः स्थिताः मेषाविबालका यस्मिंस्तत् अजामलमूत्राभ्यां छादितमंगणं यत्र ॥ ५४ ॥ अयम् अजापालको मम पुत्रोऽस्ति

अत्रस्थोऽजापालको मां प्राहेत्यन्वयः ॥५५॥ ५६ ॥ ५७ ॥ स्वस्रे भगिन्यै ॥५८॥५९॥६०॥६१॥ पूर्वार्धं पूर्वान्वयि । ततो धनं दत्त्वेति संबंधः ॥ ६२ ॥ नृयानाच्छिबिकया ॥ ६३ ॥ पुरुषभाग्यस्य विचित्रत्वं वर्णयति अहो इति । विवाहार्थं वरणार्थम् ॥ ६४ ॥ इति श्रीगुरुपरंपराचरित्रो

तदाहं सुतमादाय गृहं त्यक्त्वा समृद्धिमत् ॥ निश्येवात्र समायाताऽथात्रत्योऽजपतिस्तु माम् ॥ ५७ ॥ प्राहात्र निर्भया तिष्ठ सबाला न्नांशुके मया ॥ दीयेतेऽहरहस्तुभ्यं स्वस्रे भ्रात्रेव मानतः ॥ ५८ ॥ मुख्येनाजेश्वरेणेत्थमत्र दत्ताश्रयास्म्यहम् ॥ पक्वान्नं स्वकरेणाद्भि तदेवाश्नाति मत्सुतः ॥ ५९ ॥ इत्थमप्यत्र तिष्ठंत्यां पुत्रः प्रौढो बभूव मे ॥ ततोऽजारक्षणायासौ योजितोजेश्वरेण हि ॥ ६० ॥ श्रीदेशिकेंद्र उवाच ॥ ब्राह्मणाः सर्ववृत्तांतं श्रुत्वाहुस्तामथाखिलाः ॥ नेष्यामोऽद्य विवाहार्थं त्वत्सुतं राजकन्यया ॥ ६१ ॥ सत्कृत्त्वांशुकभूषाभिर्नरयानेन चादरात् ॥ श्रुत्वेति सापि संतुष्टा तथेत्याह ततो धनम् ॥ ६२ ॥ दत्त्वास्यै विपुलं निन्युर्नृयानात्तमलंकृतम् ॥ न ब्रूहि किंचिदप्येवं शिक्षयित्वा सकृद्दृढम् ॥ ६३ ॥ अहो विचित्रं पुरुषस्य भाग्यं न कोऽपि तद्वेत्ति पुमान्समर्थः ॥ मूर्खोऽप्यजारक्षणको नृयानाद्विवाहितुं राजसुतां ययौ हि ॥ ६४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे कालीदासाख्याने तृतीयः सर्गः ॥ ३ ॥

श्रीदेशिकेंद्र उवाच ॥ अथ ते स्वस्वयानस्थाः पुरीं राज्ञो द्रुतं ययुः ॥ श्रुत्वा ययौ नृपः पौरैस्तान्वाद्यैर्नगराद्बहिः ॥ १ ॥ कृताभिवंदनोऽमात्यैर्दत्ताशीः पंडितैर्नृपः ॥ ददर्श शिबिकासंस्थं जामातरमलंकृतम् ॥ २ ॥ वर्णयित्वागुणांस्तस्य नृपायाहुर्नृपाखिलाः ॥ महार्हवस्त्राभरणैः पूजयित्वा नृपोऽप्यथ ॥ ३ ॥ नीत्वा जामातरं पुर्यां स्थापयामास सुस्थले ॥ तत्सेवार्थं बहून्भृत्याननुज्ञाप्य ततः शुभे ॥ ४ ॥ मुहूर्ते तद्विवाहं च चक्रे राजा स्वकन्यया ॥ दासान्दासीर्गजानश्वान्रथान्ग्रामांस्तथा बहून् ॥ ५ ॥

त्तरार्धटीकायामर्थस्फूर्त्यभिधायां तृतीयः सर्गः ॥ ३ ॥ तुर्यसर्गेऽष्टसप्तत्या पद्यैः पूर्वोदितोद्वहः ॥ गुरूक्त्यांबाप्रसादाच्च कालीदासाभिधोच्यते ॥ ४ ॥ अथेत्यादिना । राज्ञो भोजस्य तान्वरयुक्तामात्यपंडितान् प्रति ॥ १ ॥ २ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३ ॥ ततः शुभे इत्यग्रबद्धम् ॥ ४ ॥ दासानित्युत्तरा

न्वयि ॥ ५ ॥ पूर्वानुशासनात् वादं न करिष्यामीति पूर्वकथनेन ॥ ६ ॥ ७ ॥ तावदसौ वरः नत्वेत्युत्तरान्वयि ॥ ८ ॥ पुरालये देवगृहे ॥ ९ ॥ इत्याद्युत्तरान्वयि ॥ १० ॥ ११ ॥ तेन वरेण वचः राभण इति वाक्यम् ॥ १२ ॥ राभण इति वाक्यस्य शुद्धत्वमाह त्रयाणामिति । बंधूनां मध्ये आद्यो ज्येष्ठः रावणोस्ति त्रयाणां रावणकुंभकर्णविभीषणानां संबंधित्र्यक्षरैः कृत्वाऽनेन रावणस्य राभण इति नाम उक्तम् ॥ १३ ॥ तदेव स्पष्टमाह ।

बह्वीर्धेनूः सवत्साश्च जामात्रे प्रददौ नृपः ॥ तूष्णीमेवास नृपतेः कन्या पूर्वानुशासनात् ॥ ६ ॥ जाते सांगे विवाहेऽथ स वरः सह भार्यया ॥ ययावंतःपुरे राज्ञो नमस्कर्तुं हि देवताः ॥ ७ ॥ तेन साकं ययुः केचित्पंडितास्तस्य मूर्खता ॥ व्यक्ता माभूदतस्तावन्नत्वासौ कुल देवताः ॥ ८ ॥ दशावतारचित्राणि तत्रापश्यत्सुरालये ॥ रामरावणयोर्युद्धं लिखितं च सुविस्तरम् ॥ ९ ॥ तेषु रावणमेवासौ बुबुधे प्राक्छ्रुतं क्वचित् ॥ दशास्यं विंशतिभुजमिति दृष्ट्वाथ तं वरः ॥ १० ॥ राभणोयमिति प्राह तच्छ्रुत्वा राजकन्यका ॥ पंडितानाह युष्माभिः पंडितार्योऽयमीरितः ॥ ११ ॥ स कथं रावणं दृष्ट्वा राभणं वक्ति मूर्खवत् ॥ अथाहुः पंडितास्तेन शुद्धमेवोदितं वचः ॥ १२ ॥ त्रयाणामपि बन्धूनां प्रताप्याद्यश्च रावणः ॥ त्रयाणां त्र्यक्षरैस्तस्मान्नाम तस्योदितं क्रमात् ॥ १३ ॥ रवर्णाद्यो रावणोऽस्ति भमध्यः कुंभकर्णकः ॥ णांतो विभीषणस्तस्माद्रावणं राभणं जगुः ॥ १४ ॥ पंडितैरित्थमुक्तापि सा बालासीत्ससंशया ॥ वरः सुज्ञोऽथवा मूर्खश्चित्ते निश्चेतुमक्षमा ॥ १५ ॥ अथैकदा विवाहोर्ध्वं रात्रावुपरि वेश्मनि ॥ शृंगारशोभां दासीभिर्मृद्वीं शय्यां च मंचके ॥ १६ ॥ कारयित्वानया तस्यां प्रापितस्ताभिरेव सः ॥ शय्यागृहं तु सोऽपश्यच्चादर्शांकितमूर्तिभिः ॥ १७ ॥

रवर्णो रेफः आद्यः प्रथमो यस्य जगुः पंडिता इति शेषः । अन्यच्चाप्युक्तं भकारस्य भीतिसूचकत्वेन नामत्रये भकारप्राप्त्यर्थं राभण इति " कुंभकर्णे भकारोऽस्ति भकारोऽस्ति विभीषणे । राक्षसानां कुलश्रेष्ठो राभणो न तु रावणः " इति ॥ १४ ॥ १५ ॥ अथेति सार्धान्वयः ॥ १६ ॥ अनया राजकन्यया कर्पा

तस्यां शय्यायां ताभिः दासीभिः स वरः प्रापितः । शय्यागृहमिति सार्धान्वयः ॥ १७ ॥ शृंगारचेष्टायुक्ताऽऽदर्शचिह्नितचित्रैराढ्यं युक्तमिति योज्यम् ॥ ॥ १८ ॥ वर इत्यध्याहारः ॥ १९ ॥ २० ॥ २१ ॥ सा तं पूर्वान्वयि सादिरुत्तरान्वयि ॥ २२ ॥ ॥ २३ ॥ २४ ॥ अजा छागी श्रुत्वेत्या

शृंगारचेष्टायुक्ताभिश्चोर्ध्वं लोलप्रदीपकैः ॥ आज्यं कुसुममालाभिर्धूपैः सुरभिभिर्युतम् ॥ १८ ॥ गृहमध्ये वितानाधश्चापश्यन्मंचमुन्नतम् ॥ दिव्यास्तरणकशिपुमुपबर्हणमंडितम् ॥१९॥ इत्थं चानेकशोभाढ्यं गृहं दृष्ट्वा वरस्तदा ॥ अनभिज्ञतयात्यंतं भ्रांत एव बभूव सः ॥ २० ॥ अथ एवास्वपन्मंचाच्चाप निद्रां महत्तमाम् ॥ ययावथ मुहूर्तेन तत्र राजसुता स्वयम् ॥ २१ ॥ महार्हांशुकभूषाढ्या सर्वावयवसुंदरी ॥ रंतुमुत्कंठिता भर्त्रा सा च मंचादधः पतिम् ॥ २२ ॥ प्राप्तनिद्रं निरीक्ष्यांतर्बभूवात्यंतदुःखिता ॥ शनैः करांघ्रिवक्त्राब्दांस्तस्योत्थानाय साकरोत् ॥२३॥ नोदतिष्ठद्यदा भर्ता तदा कर्पूरवीटिकाम् ॥ चूर्णयित्वा कराभ्यां तन्मुखे चिक्षेप सा शनैः ॥ २४ ॥ कुर्वन्थूशब्दमुत्थाय सोऽथेत्याह मुखे मम ॥ मुमोचाजाशकृत्किं तु श्रुत्वेत्थं सा च विह्वला ॥२५॥ चेतसीत्याह बालाथ किमयं ब्राह्मणात्परः ॥ दुर्जातीयो ह्यजापालो वक्ति स्वप्नेप्यतस्तथा ॥ २६ ॥ प्रष्टव्या जातिरेतस्मै भयं किंचित्प्रदर्श्य च ॥ विचिंत्येत्थं तमाहाथ सा त्वं कोऽसि वदेति च ॥२७॥ का जातिर्ब्रूहि तथ्यं मे नोचेदाहूय किंकरान् ॥ ताडयिष्ये कशाघातैस्तयेत्थं भाषितस्तु सः ॥ २८ ॥ तामित्याह पितासीन्मे ब्राह्मणः स तु मां स्वयम् ॥ उपनीय मृतो दैवाद्यदाहं पंचहायनः ॥ २९ ॥ हर्तुं पितृधनं भूरि मां च हंतुं यदोद्यताः ॥ दायादास्तु तदा मात्राहमानीतो वने निशि ॥ ३० ॥ दैवादजापतिस्तत्र लब्धस्तेन दयालुना ॥ स्वस्रेव पोषितांबा मे दत्त्वा धान्यं तथांशुकम् ॥ ३१ ॥ यदाहमभवं प्रौढस्तदाजारक्षणेऽमुना ॥ योजितोऽथ समानीतस्त्वद्विवाहाय पंडितैः ॥ ३२ ॥ श्रुत्वेति कन्यया ज्ञातं ब्राह्मणोयमिति स्फुटम् ॥ पंडितैः पूर्ववैरेण पतिर्मूर्खो वृतो हि मे ॥ ३३ ॥

द्युत्तरान्वयि ॥ २५ ॥ यतः स्वप्नेऽपि मत्पतिस्तथाजपाल इवाजानामोच्चारणं करोति तथायं ब्राह्मणभिन्नोऽजापालको दुर्जातीयोस्ति किमित्यर्थः ॥२६॥ ॥ २७ ॥ तया राजकन्ययेत्युत्तरान्वयि ॥ २८ ॥ उपनीत्योपनयनं कृत्वा ॥ २९ ॥ ३० ॥ तत्र वने ॥ ३१ ॥ अमुनाऽजपतिना ॥३२॥३३॥

भोः पिब इत्युत्तरान्वयि ॥ ३४ ॥ ३५ ॥ तौ वधूवरौ ॥ ३६ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ३७ ॥ अमात्यादीनिति पूर्वगम् । अत्र मठे स्थितिर्निवासो भविष्यति । अथाप्युत्तरान्वयि ॥३८॥ ३९ ॥ ४० ॥ तैः पंडितैः निरस्ता निवर्तितास्मि । उत्तरार्द्धमुत्तरबद्धम् ॥ ४१ ॥ ४२॥ तन्मौर्ख्यं पतिमूर्खत्वम् ॥

कविश्रेष्ठं करिष्येऽमुं श्रीगुरोः पादुकाश्रयात् ॥ इत्थं निश्चित्य सा गत्वा पितरं प्राह भोः पितः ॥ ३४ ॥ पत्या सह गमिष्येऽहं दर्शनायाधुना गुरोः ॥ विवाहोर्ध्वं नैव दृष्टे मया गुरुपदांबुजे ॥३५॥ श्रुत्वेत्याह पिता वत्से गच्छावश्यं सभर्तृका ॥ श्रीगुरुं प्रेषयामास शिबिकास्थौ नृपोऽथ तौ ॥ ३६ ॥ वाद्यघोषैर्महादीपैर्वृद्धामात्यादिसेवकैः ॥ श्रीगुरुं प्राप्य सा तन्वी नत्वा संपूज्य चाब्रवीत् ॥३७॥ अमात्यादीन्नृपं यांतु सर्वेऽत्रावाऽवयोः स्थितिः ॥ तथेति जग्मुरखिला अथ सा रहसि स्थितम् ॥३८॥ गुरुं प्राहेति भगवन्मद्वृत्तं शृणु चाखिलम् ॥ निर्जिताः पंडिताः पूर्वं मया वै शास्त्रवादतः ॥ ३९ ॥ तथा तैर्ये समानीतास्ते वराश्च पराजिताः ॥ मां जित्वा न समर्थोऽभूत्कश्चिद्वरयितुं वरः ॥ ४० ॥ तदा राजाज्ञयाऽहं च तैर्निरस्ता हि वादतः ॥ वादान्मयि निवृत्तायां पूर्ववैरेण तैर्वरः ॥ ४१ ॥ यत्नान्मूर्खः समानीतो द्विजोऽप्यजपसेवकः ॥ दत्ता पित्रापि तद्वाक्यैरहं तस्मै विधानतः ॥ ४२ ॥ विवाहोर्ध्वं तु तन्मौर्ख्यं ज्ञातं तच्चेष्टितैर्मया ॥ कथं मूर्खेण पत्याहं स्थातुं शक्ता क्षणं गुरो ॥ ४३ ॥ यथा प्राक्त्वत्कृपालेशाज्जिताः श्रेष्ठाश्च पंडिताः ॥ अतस्त्वं मत्पतिः सुज्ञो यथा भवति तत्कुरु ॥ ४४ ॥ नो चेत्प्राणांस्त्यजाम्येव कुसंगान्मरणं वरम् ॥ श्रुत्वेत्थं श्रीगुरुः प्राह वत्से मा कुरु साहसम् ॥ ४५ ॥ श्रीदेशिकेंद्र उवाच ॥ ततः समाहूय पतिं स तस्याः स्मशानकाल्या मनुमाह तस्मै ॥ जपस्व चैकाग्रमनाः स्मशानं गत्वाथ तत्रैव निशीथकाले ॥ ४६ ॥

॥४३॥ यथा मया साहमिति पूर्वान्वयि ॥४४॥ साहसं प्राणत्यागम् ॥ ४५ ॥ स गुरुः मनुं मंत्रं गुरुमुखैकवेद्यं वैद्यनाथगुरुवाक्यं जपस्वेति ॥४६॥

अविघ्नं ते तुभ्यं तवाग्रत इति संबंधः । उपजातिवृत्तम् ॥ ४७ ॥ अणुचेष्टनैरल्पचेष्टाभिः ते तव । ते पिशाचाः सधैर्ये धैर्ययुक्ते पुरुषे ॥ ४८ ॥ अंबया काल्या कासीति वद ॥ ४९ ॥ तं भोजकन्यापतिम् ॥ ५० ॥ यत्स्मशानं भीरुभयदं मज्जामांसादिदुर्गंधयुक्ता या उज्ज्वलिताः प्रदीप्तचितास्ताभिरग्निरहितचिताभिश्च अन्वितम् ॥ ५१ ॥ अस्मिन्स्मशाने तदा पिशाचा इत्यग्रान्वयि ॥ ५२ ॥ कर्णदूषकैः शब्दैः अग्निमुत्सृजद्भिरिव नेत्रैश्च करणैः

आविघ्नमेतस्य मनोर्मुहूर्तं जपो यदि स्याद्धि तदैव काली ॥ आविर्भविष्यत्यथ तेऽग्रतोद्धा दास्यत्यभीष्टं च तवाखिलं सा ॥ ४७ ॥
करालवेतालपिशाचसंघास्त्वां भीषयिष्यंत्यणुचेष्टनैश्च ॥ मैवास्तु तैर्भीस्तु कुरुष्व धैर्यं कुर्वंति ते नैव भयं सधैर्ये ॥ ४८ ॥
यदांबया कस्त्वमसीति पृष्टस्त्वं चेत्तदास्यै च वदेति कासि ॥ काल्यस्मि तस्यामिति वै वदंत्यां ब्रूहि त्वमस्मीति तवैव दासः ॥
॥४९॥ तमित्थमादिश्य सुमंत्रितां च भूतिं तदंगेषु विलेप्य भूयः ॥ स्वपाणिना तस्य शिरः स्पृशन्स संप्रेषयामास गुरुः स्मशाने ॥
॥ ५० ॥ नत्वा गुरुं सोऽपि ययौ स्मशानं ग्रामाद्बहिर्भीरुभयप्रदं यत् ॥ मज्जादिगंधोज्ज्वलदुच्चिताभिरनग्निभिश्चान्वितमासमंतात् ॥
॥ ५१ ॥ स्थाप्यासनं श्रीगुरुदत्तमस्मिञ्जजाप मंत्रं स्थित एकचित्तः ॥ स्मरन्गुरुं संजपतोऽस्य चेत्थं घटी व्यतीयाय तदा पिशाचाः ॥
॥ ५२ ॥ तं भीषयंतो ययुरूर्ध्वदंताः पश्यन्नृमृत्यूपमभीतिदांगाः ॥ शब्दैरनेकैः श्रुतिदुःखदैश्च दुरीक्षणैरग्निमिवोद्वमद्भिः ॥ ५३ ॥
दृष्ट्वेत्थमुग्रानपि नैषदाप भयं स गुर्वंघ्रियथार्थचित्तः ॥ न तेऽपि तं धर्षयितुं समर्थाः प्राप्ता भयं देशिकमंत्रभक्त्या ॥५४॥ अंतर्दधुस्ते
ऽथ पिशाचसंघाः पूर्णे मुहूर्ते पुरतोऽस्य काली ॥ दशायुधैर्युक्तकराविरासीद्भूषोज्ज्वलात्मीयदयार्द्रदृष्टिः ॥ ५५ ॥ जपं प्रकुर्वंतमुवाच तं
सा कोऽसीत्यथोन्मील्य दृशौ स दृष्ट्वा ॥ तां चाह का त्वं त्वहमस्मि कालीत्यूचेऽथ सोप्याह तवास्मि दासः ॥५६॥ श्रुत्वेति तुष्टास्य
करेण कूर्चं कामं लिलेखाखिललोकमाता ॥ जिह्वाहृदोर्भ्रूगृहदयेऽखिलोर्ध्ववासित्वराङ्मित्वकवित्त्वासिद्ध्यै ॥ ५७ ॥

पश्यतामवलोकयितॄणां नराणां मृत्युसदृशभयप्रददेहाः ॥ ५३ ॥ ईषत्किंचिद्भयं न प्राप्तवान् यतः गुरुचरणयोर्निष्ठावती बुद्धिर्यस्य देशिकमंत्रभक्त्या गुरूक्तमंत्रनिष्ठया गुरुभक्त्याद्भयं प्राप्ता इत्यर्थः ॥ ५४ ॥ भूषाभिरुज्ज्वला आत्मीयेषु भक्तेषु दयार्द्रदृष्टिः ॥ ५५ ॥ ५६ ॥ अस्य भक्तस्य कूर्चं भ्रूमध्ये 'कूर्चं

मध्वी भ्रुवोर्मध्यम् ' इत्यमरः करेण कामं कामबीजं मंत्रशास्त्रप्रसिद्धम् । अखिलोर्ध्वं सर्वोपरि यथा भवति तथा वशित्वप्राप्तये लिलेख लिखितवती जिह्वाहृदोः जिह्वायां हृदये च वाक्पटुत्वकवित्वसिद्धये वाग्भृदये वाग् बीजं हृल्लेखाबीजं च लिखितवतीत्यभिप्रायः ॥ ५७ ॥ तयोः गुरुदैवतयोः प्रसादात्सर्वज्ञतायुक्तः ॥ ५८ ॥ हेंऽबिके ते तव कीर्तिरद्भुता सती जयति सर्वोत्कर्षेण वर्तते ब्रह्माद्यैरपि न वर्ण्यते अल्पबुद्धिना मया तु कथं वर्ण्यते न कथमपीत्यर्थः । अल्पजल निवासिना जलचरेण समुद्रस्य जलं कथं वर्ण्यते विषयीक्रियते । कामदावृत्तं तल्लक्षणं तु—नररलागुरुः शुद्धकामदा ॥५९॥ अमलः अविद्यादोषरहितः असंगत्वात् स चासौ सर्वगो व्यापकत्वात् ईदृशः यः पुमान्परः शिवस्तस्य कलांऽशरूपा सदा तद्गता तस्मिन्नभेदेन वर्तमानासि । सर्वजगत्तव कल्पनामात्रं भवति ।

ततः स चोत्थाय ननाम मूर्ध्ना तामादिशक्तिं वरदां पुरस्थाम् ॥ तुष्टाव पश्यन्गुरुदैवतैक्यं तयोः प्रसादादखिलज्ञताढ्यः ॥ ५८ ॥ स उवाच ॥ जयति तेंबिके कीर्तिरद्भुता विधिहरीश्वरैर्नापि वर्ण्यते ॥ कथमहो मयात्यल्पबुद्धिना मितजलौकसाब्धेर्जलं यथा ॥ ५९ ॥ विमलसर्वगो यः पुमान्परस्त्वमसि तत्कला तद्गता सदा ॥ भवति कल्पना तेऽखिलं जगत्त्वयि जगंत्यनेकानि तेंऽतरे ॥ ६० ॥ पृथगितात्मभूशंभुविष्णवो भवलयस्थितीः कर्तुमक्षये ॥ त्रिगुणतस्त्वया पुंसि कल्पिता इव रसाश्रिया मूर्तयः पटे ॥ ६१ ॥ भवभयच्छिदे तेऽल्पसौख्यकं किमिति याच्यतां यत्क्षयेंऽतगम् ॥ गुरुकृपाबलादंघ्रिदर्शनं भवतु मे गुरौ त्वयि च दृक्समा ॥ ६२ ॥ अपि विधेः पदं कल्पनाशगं निखिलसंक्षये त्वं सदाऽक्षया ॥ अजपसंगवानप्यहं त्वया सकलवित्कृतः किं ब्रुवेंऽब ते ॥ ६३ ॥

इतिप्रकारेण सर्वाणि जगंति तवांतरे हृदये संति यथा बीजमेव वृक्षरूपेण दृश्यते तथा त्वमेव जगद्रूपासीत्यर्थः ॥ ६० ॥ जगद्रूपत्वमुपवर्ण्य जगज्जन्मादि हेतुत्वं वर्णयति पृथगिति । हे अक्षये नाशहीने त्वया त्रिगुणैर्निमित्तैः जगज्जन्मोपसंहारपालनानि कर्तुं ब्रह्मरुद्रविष्णवोऽसंगे पुंसि परशिवे पृथक्त्वेन कल्पिताः रंगशोभया पटे चित्राणीव पृथग्भाविता इत्यर्थः ॥ ६१ ॥ संसारभयहंत्र्यै तुभ्यं मया अल्पसौख्यं सिद्ध्यादिसुखं किं याच्यताम् यत् क्षये प्रलये नाशं गच्छति तत्किमपि न प्रार्थनीयं किंतु अस्त्येकं प्रार्थनीयं यद्गुरुकृपासामर्थ्येन मे मह्यं ते दर्शनं जातं तस्मिन् गुरौ त्वयि देवतायां च समदृष्टिरस्तु गुरुदेवतात्मैकत्वनिश्चयरूपं वरं देहीत्यर्थः ॥६२॥ ब्रह्मलोकादेः क्षयिष्णुत्वं दर्शयन् अविनाशिपदप्राप्त्या आत्मनो महालाभतुष्टत्वं दर्शयति अपीति । यद्यपि ब्रह्मणः स्थानं

दैनंदिनप्रलयपर्यंतं स्थायि तथापि प्रकृतिलये नाशगामि त्वं तु सदा प्रकृत्याद्युत्पत्तिस्थितिलयकाले ज्ञानरूपत्वात्क्षयरहिताऽसि। अजापालसंगवानतिमूढतमोहं त्वया सकलवित्सर्वज्ञः कृतोऽस्मि ते इति कर्मणि षष्ठी । हे मातः अहं त्वां प्रति किं प्रार्थनीयं ब्रुवे कृतकृत्यतया न किमपि प्रार्थनीयमित्यर्थः ॥६३॥ इत्थमिति । आद्या ललिता काली । तं दासम् इह देवतायां च ॥६४॥६५॥ तच्छब्दौ साधनवाचकौ ॥६६॥ मध्यतः मध्यभागे निशीथे ॥६७॥ मृत्युर्भ

श्रीदेशिकेंद्र उवाच ॥ इत्थं स्तुताद्या ललिता तं पुनः प्राह वत्सला ॥ गुरौ दृष्ट्वास्य विश्वासं भक्तिं चात्मसमामिह ॥६४॥ श्रीकाल्युवाच ॥ अंनतजन्मपुण्यौघात्सर्वज्ञोऽद्य गुरुस्त्वया ॥ लब्धस्तेनोदितं यत्ते साधनं भीरुभीतिदम् ॥ ६५ ॥ श्रीगुरोर्वाक्यविश्वासात्कृतं धैर्याच्च यत्त्वया ॥ संतुष्टाहं द्रुतं तेन तुभ्यं श्रद्धालवेऽनघ ॥ ६६ ॥ शंभुः क्रीडति भूतेशः स्मशाने निशि मध्यतः ॥ अतस्तत्र भवेत्सिद्धिः शीघ्रं श्रद्धावतां गुरौ ॥ ६७ ॥ गुरुभक्तिविहीनानां भीरूणां मृत्युरेव च ॥ व्यापकाहं यथा चैका ब्रह्मांडेषु तथा त्वया ॥ ॥ ६८ ॥ चिद्रूपापि किल ज्ञाता गुरौ विश्वासतः क्षणम् ॥ तस्माद्यथास्मि सर्वज्ञा त्वं तथा सर्वविद्भव ॥ ६९ ॥ न ममेषत्त्वया भेदो भेदकर्त्ताऽऽवयोस्त्वधीः ॥ कवींद्रस्त्वं कलावेकस्त्वत्समो नापरः कविः ॥७०॥ कुर्वन्कर्माण्यनेकानि भुंजन्भोगाननेकशः॥ लिप्यसे नाद्य पुण्यैश्च खं यथा वायुधूलिभिः ॥७१॥ गच्छ वत्स गुरुं तस्मान्मत्रान्त्स्वीकुरु सर्वतः॥ संप्रदायप्रवृत्त्यर्थं सर्वज्ञोऽपि ममाज्ञया ॥ ७२ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमाज्ञाप्य तं देवी बभूवांतर्हिताप्यथ ॥ सोऽपि गत्वा गुरुं भक्त्या दंडवत्प्रणनाम च ॥ ७३ ॥ स्रवन्नेत्रजलः प्रेम्णाऽस्तुवद्गद्गदवागिति ॥ प्राङ्मुखोऽपि गुरोर्देव्याः कृपयाऽवाप्य सुज्ञताम् ॥ ७४॥ कालिदास उवाच ॥ किं वर्ण्यते देशिक ते महत्त्वं तपोभिरुग्रैरपि यद्दुरापम् ॥ तन्मे मुहूर्तात्कृतमंबिकायाः संदर्शनं सर्वविदस्मि येन ॥ ७५ ॥ यः पंडितैर्मूर्खतमो ह्यमुर्व्यां सुनिश्चितोऽस्यास्तु विवाहकार्ये ॥ प्राग्द्वेषबुद्ध्या निखिलैकमत्यात्सोहं कृतश्चाशु त्वयाऽखिलज्ञः ॥ ७६ ॥

वेत् । उत्तरार्धेऽहमस्मि तथा त्वया ज्ञातेति संबंधः ॥ ६८ ॥ चिद्रूपा चिन्मया ॥ ६९ ॥ ईषत्किंचित् । आवयोर्भेदद्रष्टाऽधीरल्पबुद्धिः ॥ ७० ॥ ७१ ॥ ॥ ७२ ॥ ७३ ॥ स्रवन्नेत्रयोर्जलं यस्य स गुरुं तुष्टाव ॥ ७४ ॥७५॥ अस्याः राजकन्यायाः निखिलानां प्रधानपंडितानाम् । निखिलानामैकमत्यादेक

निश्चयेनाशुतया शीघ्रभावेन ॥ ७६ ॥ उत्तीर्णता अनृणभावः या नतिः नमस्कारः उत्तीर्णता आनृण्यहेतुः महोपकारेषु सद्भिरुक्ता ॥ ७७ ॥ स्मशानसंस्थं स्मशानगतं तथाऽतिसंतुष्टाऽभवत् ।।७८।। इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां चतुर्थः सर्गः ॥४॥ शतपद्योत्पंचमे तु शपंतीमं मृतांगना। कालिदासस्य सदसि जयोऽन्यापि कथोच्यते ॥ ५ ॥ अथेति । तं दासम् ॥ १ ॥ २ ॥ ३ ॥ अखिलं रतिसाहित्यम् ॥ ४ ॥ ईश्वरः पतिः कामरसा

नोत्तीर्णता मे तु तवोपकाराद्वेदनंतैरपि जन्मसंघैः ॥ करोम्यतस्ते नतिमेव योक्ता तूत्तीर्णतोरूपकृतीषु सद्भिः ॥७७॥ श्रीदेशिकेंद्र उवाच ॥ स प्राह नत्वा स्वगुरुं स्ववृत्तं स्मशानसंस्थं त्वथ वैद्यनाथः ॥ श्रुत्वेति तुष्टो नृपकन्यकापि ज्ञात्वाखिलज्ञं स्वपतिं तथाभूत् ॥ ॥ ७८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे कालिदासवरप्राप्तिर्नाम चतुर्थः सर्गः ॥ ४ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ प्रातः स्वयं स्नात्वा वैद्यनाथस्तथैव तम् ॥ स्नापयित्वा ददौ दीक्षां सर्वमंत्रमयीं प्रभुः ॥ १ ॥ कालिदासानंद इति चक्रे नामास्य शोभनम् ॥ यतः काल्यै प्रसन्नायै दासोस्मीति तवाह सः ॥ २ ॥ अथ राज्ञा नृयाने द्वे प्रेषिते तत्र दंपती ॥ स्थित्वा तौ जग्मतुर्वाद्यघोषैर्नृपतिमंदिरम् ॥ ३ ॥ शय्यागारेथ रात्रौ साऽखिलं कृत्वा हि पूर्ववत् ॥ दास्या स्वपतिमाहूय प्रार्थयामास सूक्तिभिः ॥ ४ ॥ बालोवाच ॥ भगवंस्त्वमसीश्वरो ममाद्धाखिलवित्कामरसार्थिनीं प्रियां माम् ॥ कुरु कामकलाप्तकामनां वै किल संतः शरणागतेच्छया हि ॥ ५ ॥ पतिरेव किलोदितः सतीनां परदेवः परमं यतो न चान्यत् ॥ परितुष्टान्निजभर्तुरेव सत्यः सुखमेवेह परत्र चाप्नुवंति ॥ ॥६॥ गदितं विपरीतमेव यत्ते मितबुध्यैव मयांगनास्वभावात् ॥ तदघं मम सन्मनाः क्षमस्व खलु संतः करुणापराः क्षमाढ्याः ॥७॥

र्थिनीं कामसुखेच्छावतीं मां कामकलाभिपूर्णमनोरथां कुरु हि यस्मात्संतः शरणागतेच्छापूरणेन विलसंतीत्यध्याहारः । वसंतमालिकावृत्तम् । तल्लक्षणं तु "विषमे ससजा गुरू समे चेत्सभरा यश्च वसंतमालिका सा" इति ॥५॥ सतीनां पतिव्रतानां परमं श्रेष्ठं यतः पत्युः सकाशात् ॥ ६ ॥ ते तुभ्यं विपरी

चतुर्दशशतसंख्याः पंडिताः भोजस्याश्रयभूता इत्युत्तरान्वयि ॥३३॥ कंठतः कंठेन केचिद्विः द्विवारं श्रुत्वार्थसहितां पूर्वपठितामिवोचारयंते ॥३४॥ काव्यकर्त्रे नवीनकाव्यकर्त्रे लक्षसुवर्णमुद्रादानविषये विघ्नं कुर्वंति ॥ ३५ ॥ मे बलान्मत्कृपासामर्थ्येन ॥ ३६ ॥ भो गुरो इत्याद्युत्तरान्वयि ॥ ३७ ॥ सुज्ञः "वपनं द्रविणादानं स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबंधूनां वधो नान्योऽस्ति दैहिकः" इति ज्ञानवान् ॥३८॥ प्रसादाद्युत्तरान्वितं मत् मत्तः परः

करोति तस्मै सौवर्णमुद्रालक्षं ददात्यसौ ॥ चतुर्दशशतन्तुल्याः पंडितास्तस्य चाश्रिताः ॥ ३३ ॥ ते सकृत्कवितां श्रुत्वा नूतनामपि कंठतः ॥ पठंति केचिद्विःश्रुत्वा सार्थां प्राक्पठितामिव ॥ ३४ ॥ प्राचीनेयं नैव नूत्ना नृपायोक्तेति तेऽखिलाः ॥ काव्यकर्त्रे लक्षदाने विघ्नं कुर्वंति सर्वदा ॥ ३५ ॥ त्वं तैर्वक्तुमशक्यां वै कवितां कुरु मद्बलात् ॥ तां श्रुत्वैव नृपस्त्वां तु कविश्रेष्ठं करिष्यति ॥ ३६ ॥ श्रुत्वेति कालिदासस्तु गुरुं प्राहाथ हे गुरो ॥ मां दृष्ट्वैव नृपो ज्ञात्वा स्वकन्याप्राणहारकम् ॥ ३७ ॥ हनिष्यत्येव खड्गाद्यैर्दूतानाज्ञाप्य यत्नतः ॥ सुज्ञोऽथवा ब्राह्मणत्वात्पुरान्निष्कासयिष्यति ॥ ३८ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्याह गुरुर्भूयो नेयं चिंतास्तु ते हृदि ॥ प्रसादान्मम देव्याश्च त्वां कश्चिदपि मत्परः ॥ ३९ ॥ नृपजामातरमिति नैव वेत्स्यत्यतो व्रज ॥ श्रीदेशिकेंद्र उवाच ॥ अथ नत्वा गुरुं ध्यात्वा श्रीकालीं हृदि निर्भयः ॥ ४० ॥ कालिदासो नृपसभां ययौ सूर्य इवापरः ॥ दृष्ट्वा तं मुमुहुः सर्वे कोऽयमित्याहुरुज्ज्वलः ॥ ४१ ॥ उत्थाय स्थापयामासुः सनृपास्तं वरासने ॥ अथाह कवितां नूत्नां कालिदासो नृपाग्रतः ॥ ४२ ॥ राजन्कोट्यो मदीया नवनवतिमिताः स्वर्णवन्मुद्रिकाणां वृद्ध्या साहस्रभागात्प्रतिशरदि तव स्वसृकार्याय पित्रा ॥ मत्संप्रार्थ्योद्गृहीता इह सदसि गताः पंडिताः साक्षिणोऽमी देह्येताश्चेन्न सत्यं मम नवकविता देहि लक्षाण्यदोऽर्णैः ॥ ४३ ॥

अन्यः ॥ ३९ ॥ अतः कारणात् । अथाद्युत्तरान्वयि ॥ ४० ॥ सर्वे पंडिताः ॥ ४१ ॥ ४२ ॥ हे राजन् सुवर्णमुद्राणां नवनवतिकोट्यः प्रतिवर्षं सहस्रांशवृद्ध्या तव पित्रा तव भगिनीविवाहार्थं प्रार्थनीयात् मत् मत्तो गृहीताः संति सदसि वर्तमानाः अमी पंडिता इहैतद्विषये साक्षिणः संति अतस्त्वमेता

मुद्राः वृद्धिसहिताः मह्यं देहि एतद्वचनं सत्यं नास्तीति चेत्तर्हि मम नवीनकविताऽस्ति अदोर्णैः अमुष्याः कवितायाः अर्णवैर्णैः कृत्वा मुद्रालक्षाणि देहि एत द्वृत्तगतवर्णसंख्यया चतुरशीतिलक्षाणि देहि नवीनकविता न चेत्तर्हि प्राचीनकवितात्वेन नवनवतिकोट्या वृद्धिसहिता अर्पयेत्यर्थः । स्रग्धरावृत्तम् ॥ ४३ ॥

श्रुत्वेति कवितां राजा पंडितानाह हे बुधाः ॥ कथ्यतां नूतनेयं वा प्राचीनेति विचारतः ॥४४॥ पंडिताश्चाहुरस्माभिर्नेदृशी कविता क्वचित् ॥ श्रुता छलार्थसंयुक्ता तस्मान्नूत्नैव दृश्यते ॥४५॥ कालिदासं नृपः प्राह बहवः कवयः पुरा ॥ इहागताः कवित्वं च बहुधा तैस्तु नूतनम् ॥ ४६ ॥ उक्त्वा प्रदर्शितं स्पष्टं पंडितैस्तत्र मानितम् ॥ प्राचीनमिति मामुक्त्वा पठितं तैः स्वतोऽखिलम् ॥ ४७ ॥ लक्षं नूत्न कवित्वस्य दक्षिणा नैव दीयताम् ॥ इत्थं पंडितवाक्येन मया दत्ता न दक्षिणा ॥ ४८ ॥ बहुभ्यः कविमुख्येभ्यो गताः सर्वे ह्यदाक्षिणाः ॥ तवाद्य कवितां श्रुत्वा नूतनामिति चाखिलाः ॥ ४९ ॥ वदंति तस्मात्त्वत्तुल्यः कविर्नान्यो हि दृश्यते ॥ कविश्रेष्ठस्त्वमेवासि त्वया यद्याच्यतेऽधुना ॥ ५० ॥ तद्दीयते मया नूनं कोशो राज्यमथाखिलम् ॥ मत्तुल्यभोगांस्त्वं भुंजन्सदा मन्निकटे वस ॥ ५१ ॥ श्रीदेशिकेंद्र उवाच ॥ कालिदासमिति प्रोच्य पूजयामास भूपतिः ॥ महार्हवस्त्राभरणैः पंडितान्हृदि खेदयन् ॥ ५२ ॥ अथावसत्तत्र कालिदासः कांश्चागतान्कवीन् ॥ दापयन्दक्षिणां राज्ञस्तत्तत्काव्याभिवर्णनात् ॥५३॥ स्वीयकाव्यस्य चातुर्यं दर्शयामास मानितः ॥ नृपाय बहुशस्तेन मुदमाप नृपः पराम् ॥ ५४ ॥ राज्ञाज्ञतः कदाचित्तु चित्रलेखकरो रहः ॥ भानुमत्यास्तस्य पत्न्या नग्नां मूर्तिं स चालिखत् ॥ ५५ ॥ वेर्णीं तस्याश्चकारासौ नीलां लघुशलाकया ॥ तावत्समापतद्बिंदुर्योनावल्पस्तिलोपमः ॥ ५६ ॥

इयं कविता ॥ ४४ ॥ छलार्थेन कपटयुक्तार्थेन सहिता ॥ ४५ ॥ कवित्वं कवितेत्युत्तरनिबद्धम् ॥ ४६ ॥ स्वतः स्वमुखतः ॥ ४७ ॥ मया दक्षिणा न दत्ता ॥४८॥ बहुभ्यः कविश्रेष्ठेभ्य इति पूर्वान्वयि । नूतनां वदंतीत्यन्वयः ॥ ४९॥५०॥ वस वासं कुरु ॥५१॥५२॥५३॥५४॥ चित्रलेखकरः

त्रिकारः ॥ ५५ ॥ ५६ ॥ चित्रकारकर्णे तथा बिंदुसदृशस्तिलकोस्तीति अवदत् ॥ ५७ ॥ स चित्रकारः मत्करान्मम हस्तेनेत्युत्तरा न्वयि ॥५८॥ अथायुत्तरनिबद्धम् । रह एकांते ॥ ५९ ॥ बहुवर्षैरित्युत्तरान्वयि ॥ ६० ॥ अस्यां भार्यायां कस्माद्धेतोः ॥ ६१ ॥ स कालिदासः

तं बिंदुं मार्ष्टुमुद्युक्तं न्यषेधल्लेखकं तदा ॥ कालिदासस्तथास्तीति वदंस्तत्कर्णतः शनैः ॥५७॥ सोपि नो मार्जयामास तं बिंदुं वीक्ष्य भूपतिः ॥ लेखकायाह किंचेदं सोऽप्याहेदं तु मत्करात् ॥५८॥ कालिदासस्तथास्तीत्यलेखयन्न त्वहं स्वतः ॥ तूष्णींभूतोऽथ भूपालो रतिकाले रहो निशि ॥ ५९ ॥ विलोक्य तिलकं योनौ यथालिखितमेव च ॥ मनसीति नृपः प्राह बहुवर्षेष्वहं निशि ॥ ६० ॥ नित्यं च रममाणोऽस्यामथापीदं तिलं क्वचित् ॥ दृष्टवान्नैव यं कस्मात्कालिदासो ददर्श तम् ॥ ६१ ॥ राजकार्येषु संसक्ते दिवा मयि तदा खलु ॥ पश्चान्मेतुदिनं भुंक्ते सोऽद्धा भानुमतीमिमाम् ॥ ६२ ॥ क्षणं स्थातुं न योग्योऽयं कालिदासो गृहे मम ॥ बहिः कार्यः प्रयत्नेन निश्चित्येत्थं स भूपतिः ॥ ६३ ॥ प्रातरेत्य सभां तत्र कालिदासं सभास्थितम् ॥ रहस्याहूय तं प्राह त्वयि श्रेष्ठकवावपि ॥ ॥ ६४ ॥ मम चेतसि चोत्पन्नः संशयो हि दुरत्ययः ॥ यतस्त्वया भानुमत्यास्तिलो ज्ञातो भगस्थितः ॥ ६५ ॥ रमसे त्वमतस्तस्यां कार्यसक्ते दिवा मयि ॥ तस्माद्गच्छ पुराच्छीघ्रं नापकीर्तिर्यथावयोः ॥ ६६ ॥ श्रीदेशिकेंद्र उवाच ॥ कालिदासो नृपेणेति प्रोक्तस्तूष्णीं ययौ हसन् ॥ बुद्धिमन्मंत्रिणो गेहं तस्मै सर्वं न्यवेदयत् ॥ ६७ ॥ कालिदासं मंत्रिवर्यः स्थापयामास तं गृहे ॥ न लक्ष्यते यथाऽन्येन सर्वभोगव्यवस्थया ॥ ६८ ॥ तत्पुरस्थौ कृतोद्वाहौ कयोश्चिद्द्विप्रयोः सुतौ ॥ गतावध्ययनं कर्तुं काशीमष्टाब्दकावुभौ ॥ ॥ ६९ ॥ कृतमध्ययनं द्वाभ्यां द्वादशाब्दैः सुयत्नतः ॥ तयोरेकतरश्चासीद्विद्वान्नान्यस्तु तादृशः ॥ ७० ॥

॥६२॥ इति निश्चित्येत्युत्तरान्वयि ॥६३॥ त्वयि विषय इत्युत्तरान्वयि ॥६४॥ दुरत्ययः दुर्निवार्यः ॥ ६५ ॥ ६६ ॥ ६७॥६८॥ अष्टाब्दकावष्ट

वर्षौ ॥ ६९ ॥ ७० ॥ निजांगने स्वभार्ये ऋतुमत्यौ ज्ञात्वा ॥ ७१ ॥ ७२ ॥ समं समकालम् ॥ ७३ ॥ समकालात्समकालेन समं ग्रंथादिना तुल्यम् ॥७४॥ प्रतिष्ठा सत्कारः । समयोरेकः पूज्यश्चेदन्यो मृततुल्यो भवति ॥ ७५ ॥ इत्थमित्युत्तरान्वयि ॥ ७६ ॥ तावदित्युत्तरान्वयि ॥ ७७ ॥ चतुरक्षरमक्षरचतुष्टयम् ॥ ७८ ॥ हंता हननकर्ता तस्य सहाध्यायी पांथान्यदर्शनादन्यपांथदर्शनात् ॥ ७९ ॥ स्वस्थानं धारापुरमिति

स्वदेशयात्रिणां वाक्यादृतुमत्यौ निजांगने ॥ ज्ञात्वा शीघ्रमुभावेव जग्मतुः स्वपुरं ततः ॥७१॥ क्वचिन्मार्गे व्रजंतौ तौ नद्यां स्नात्वा कृताह्निकौ ॥ तरोर्मूले सुषुपतुर्भुक्त्वा पाथेयमुत्तमम् ॥७२॥ अथेत्याह तयोरेकश्चेतस्यावामुभावपि ॥ सममेव किलायातौ कर्तुमध्ययनं पुरा ॥७३॥ समकालात्तथावाभ्यां कृतमध्ययनं समम् ॥ तथाप्यधिकविद्याढ्यो मत्तोऽयं दृश्यते धिया ॥७४॥ प्रतिष्ठास्यैव भविता भोजराजसदस्यपि ॥ महांश्चेत्समयोरेकस्तर्ह्यन्यो मृतसंनिभः ॥७५॥ अतोऽत्रैव हनिष्येऽमुं ह्यप्रतिष्ठाकरं मम ॥ इत्थं निश्चित्य चोत्थाय विकोशं खड्गमुज्ज्वलम् ॥ ७६ ॥ धृत्वा करेण चान्येन शिखां सुतस्य दुष्टधीः ॥ कंठं चिच्छेद तावद्धि सुप्तो ग्रीवार्द्धखंडितः ॥ ॥ ७७ ॥ जागृतः प्राह हंतारं ज्ञात्वा तस्येति चेष्टितम् ॥ ब्रूहि मे जनकायाप्राशिखेति चतुरक्षरम् ॥ ७८ ॥ अथ च्छिन्नेऽखिले कंठे तत्रैवाशु ममार सः ॥ हंता ययौ द्रुतं तस्माद्भीतः पांथान्यदर्शनात् ॥ ७९ ॥ धारापुरं निजं स्थानं श्रुत्वा मृतपितागतम् ॥ सतीर्थ्यमात्मपुत्रस्य तस्य गेहं द्रुतं ययौ ॥ ८० ॥ किं नागतः सुतोऽनेन ममेत्थं चिंतयान्वितः ॥ तं पप्रच्छ सुतो मे किं नागतोऽस्तीति कुत्र सः ॥ ८१ ॥ स चाहेति सुतस्तेऽहं समं चावां विनिर्गतौ ॥ काश्यास्ततो महारण्ये मार्गे व्याघ्रः सुतं तव ॥ ८२ ॥ मत्पृष्ठस्थं महावक्त्रश्चाग्रहीत्कंठदेशतः ॥ व्याघ्रेण धृतकंठोपि त्वत्सुतः प्राह धैर्यतः ॥८३॥ मत्पित्रेऽप्राशिखेत्येवं ब्रूहि भ्रातः प्रयत्नतः ॥ अथाहं भयतः शीघ्रं गतो दूरं हि मार्गतः ॥८४॥ यावन्न दृश्यते व्याघ्रस्त्वत्पुत्रप्राणहारकः ॥ ततो दुःखाच्छनैर्गच्छन्प्राप्तस्तातपुरीमिमाम् ॥८५॥

पूर्वान्वयि । मृतस्य पिता स्वात्मजस्य सतीर्थ्यम् एकगुरुसमीपे कृताध्ययनमागतं श्रुत्वा धारापुरं ययौ ॥८०॥ अनेन सह पूर्वार्द्धं पूर्वान्वयि । कुत्रास्तीति पप्रच्छ ॥८१॥ तत इत्युत्तरान्वयि ॥ ८२ ॥ मत्पृष्ठस्थं मत्पश्चाद्गंतारम् ॥ ८३ ॥ भयतः भयेन मार्गतः मार्गे । अहं प्राप्तोऽस्मि ॥ ८४ ॥ ८५ ॥

समादिशत् कथितवान् ॥ ८६ ॥ अप्रशिखेति स्वपुत्रेणोक्तमिति पूर्वान्वयि ॥ ८७ ॥ बहुकालतः बहुकालमारभ्य ॥ ८८ ॥ तस्य कालिदासस्य छात्रिणीति उत्तरान्वयि ॥८९॥ अस्याप्रशिखेत्यस्य । प्रत्यक्षं दृग्गोचरं यथा स्यात्तथाऽत्र सभायां नागच्छति । तस्मादित्युत्तरान्वयि । नृयानतः शिबिकादिना

श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति निधनं सूनोः सभां राज्ञोऽथ स द्विजः ॥ पुत्रहंत्रा ययौ तत्र पंडितेभ्यः समादिशत् ॥ ८६ ॥ स्वपुत्रेणोदितं चाप्रशिखेत्यस्यार्थमण्वपि ॥ न विदुः पंडिताः सर्वे तदेत्याह नृपः स्वयम् ॥ ८७ ॥ कालिदासः कविश्रेष्ठोऽस्यार्थं वक्ता न चापरः ॥ क्व गतः स इदानीं नो दृश्यते बहुकालतः॥ ८८ ॥ तावन्मंत्रिवरः प्राह स्वामिन्काशीं गतो हि सः॥ छात्रिणी तस्य मत्कन्या तेन तुल्यातिधीमती ॥ ८९ ॥ गूढार्थस्यास्य तात्पर्यं कथयिष्यति निश्चितम् ॥ प्रत्यक्षं नात्र सा याति स्त्रीत्वात्तस्मान्नृयानतः ॥ ९० ॥ वस्त्रैराच्छाद्य चानेया चेच्छ्रद्धा वचने मम ॥ श्रुत्वेति नृपतिः शीघ्रं नृयानं मंत्रिणा सह ॥ ९१ ॥ प्रेषयामास तन्मध्ये कालिदासो रहःस्थले ॥ स्थापितो मंत्रिणैकेन वस्त्रैराच्छाद्य यत्नतः ॥ ९२ ॥ वाहकैरथ तद्यानं प्रापितं नृपतेः पुरः ॥ अथाहाप्रशिखेत्यस्यै मृततातो बहिः स्थितः ॥ ९३ ॥ कालिदासो निशम्यातस्तदुक्तं तं च जालतः ॥ दृष्ट्वा तत्पुत्रहंत्राढ्यं संदेशार्थमथाब्रवीत् ॥ ९४ ॥ कालिदास उवाच ॥ अनेन तव पुत्रस्य प्रसुप्तस्य वनांतरे ॥ शिखामुद्धृत्य हस्तेन खड्गेनोत्खंडितं शिरः ॥ ९५ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति नृपतिर्ज्ञात्वानेनैवास्य सुतं हतम् ॥ बद्ध्वा निगडतो दूतैः कारागारेऽमुमाक्षिपत् ॥ ॥ ९६ ॥ राजाथ पंडितान्प्राह विस्मयाविष्टमानसः ॥ योऽर्थो युष्माभिरज्ञातस्तमहो स्त्री समादिशत् ॥ ९७ ॥

॥ ९० ॥ आनेया त्वयेतिशेषः । उत्तरार्द्धमुत्तरगामि ॥ ९१ ॥ ९२ ॥ ९३ ॥ जालतः सूक्ष्मच्छिद्रात् संदेशार्थमप्रशिखेत्यस्यार्थमब्रवीत् ॥ ९४ ॥ प्रथमवर्णांगीकारेण वाक्यार्थमाह अनेनेति । अनेन पुरःस्थितेन ॥९५॥ अनेनास्य सुतं हतं ज्ञात्वा निगडतोऽमुं हंतारम् ॥९६॥अहो आश्चर्यम् ॥९७॥

असौ कालिदासः । भानुमत्यास्तिलो यथा ज्ञातस्तथानेनैतत्कर्म कृतमिति मया ज्ञातमित्याह ॥ ९८ ॥ एनं कालिदासं मत्वा ज्ञात्वा । वृ० उ० ॥९९॥ मया पूर्वं यदुक्तं तत्त्वया क्षम्यतां हि यतः ये सर्वज्ञास्ते क्षमायुक्ता भवंति । इंद्रवज्रावृत्तम् ॥१००॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे टीकायामर्थस्फूर्त्यभिधायां पंचमः सर्गः ॥ ५ ॥ अब्ध्यष्टपद्यैरुत्षष्ठे कालिदासस्य चात्मता । विद्वेषो वैश्यया मृत्युयोगात्सिद्धिरपीर्यते ॥ ६ ॥ इत्थमिति ॥ १ ॥ अथ पंच

स्त्रियं ज्ञात्वाह यानस्थां नृपः सुभ्रूः कथं त्वया॥ज्ञातमेतदसौ प्राह भानुमत्यास्तिलो यथा ॥९८॥ राजाथ मत्वा कविवर्यमेनं निवार्य यानावरणं करेण ॥ धृत्वा तमानीय ततो वहिस्तात्प्रेम्णालिलिंग स्रवदश्रुनेत्रः ॥९९॥ स्थाप्यासने वस्त्रमुखैः प्रपूज्य नत्वा नृपः प्राह कवींद्रमित्थम् ॥ तत्क्षम्यतां यत्तु मयोदितं हि संतः क्षमाढ्याः खलु येऽखिलज्ञाः ॥१००॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे कालिदासप्रभाववर्णनं नाम पंचमः सर्गः ॥ ५ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं चानेककर्माणि विद्वच्चित्तचमत्कृतिम् ॥ कुर्वंश्चक्रे मुदं राज्ञः कालिदासकवीश्वरः ॥ १ ॥ क्वचिद्वेदाध्यायी क्वचिदपि तदध्यापनपरः क्वचिद्धर्मान्ब्रूते श्रुतिभिरिह वर्णाश्रमवताम् ॥ क्वचित्कुर्वन्कर्माण्यपि च विधिना कर्मठजनैः सुधीः कालीदासो न चलति पलं चात्मसुखतः ॥ २ ॥ क्वचित्पूजाद्रव्यै रहसि विधिनेशार्चनपरः परांबां स्वाभिन्नां हृदि विकसिते ध्यायति चिरम् ॥ क्वचिन्मंत्रांश्चास्याः प्रजपति तदर्थानुगतधीः सुधीः कालीदासो न चलति पलं चात्मसुखतः ॥ ३ ॥ क्वचिज्जीवेशैक्यं व्रजति हठयोगाभ्यसनतः क्वचिद्योगं चान्यान्ह्यसुनियमनैः शिक्षयति यः ॥ क्वचित्सांख्यं तत्त्वं कथयति परं तन्मतवतः सुधीः कालीदासो न चलति पलं चात्मसुखतः ॥ ४ ॥

पद्यैः कालिदासाचरणं वर्णयति क्वचिदिति । स्मृतिभिर्मन्वादिवचनैः पलमात्रमुपलक्षणमेतत् निमिषमात्रमपि आत्मसुखान्न चलति चंचलो न भवतीत्यर्थः । शिखरिणीवृत्तम् " रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी " इति तल्लक्षणात् ॥ २ ॥ अस्याः परदेवतायाः तदर्थेषु मंत्रार्थेषु अनुगता स्थिता बुद्धिर्यस्य ॥ ३ ॥ हठयोगाभ्यसनतः प्रबलयोगाभ्यासेन असुनियमनैः प्राणनिग्रहोपायैः सांख्यं सांख्यशास्त्रगतं परं तत्त्वमभिप्रायं तन्मतवतः सांख्यमतस्थान्

कथयति ॥ ४ ॥ ततः साधून्प्रति यस्मिन्भाष्ये सर्वगततत्त्वस्य ब्रह्मणः जीवैनैकत्ववर्णनमस्ति। तस्य तत्त्वस्यानुभवकृद्भवति ॥ ५ ॥ सहचर इव सहवासी बाल इवानुकरणैः बालचेष्टाभिः वीरादिरसयुक्तशृंगाररसे चतुरः कुशलः नृपतेर्भोजस्य ॥ ६ ॥ एतत्पद्यपंचकस्य पाठफलमाह पठेदिति। निःस्पृह

क्वचिच्छारीराख्यं कथयति सतः शंकरकृतं वरं भाष्यं यस्मिन्निखिलगततत्त्वैक्यकथनम् ॥ क्वचित्त्वेकांतस्थो भवति खलु तस्यानुभवकृत्सुधीः कालीदासो नचलति पलं चात्मसुखतः ॥५॥ क्वचित्क्रीडन्बालैः सहचर इवाद्धानुकरणैः क्वचिद्वेश्यागारेऽरमतरसशृंगारचतुरः ॥ क्वचिद्विद्वज्जेता सदसि नृपतेः शास्त्रवचनैः सुधीः कालीदासो न चलति पलं स्वात्मसुखतः ॥६॥ पठेत्कालीदासाचरणविभवं पंचकमिदं भवेज्जीवन्मुक्तः परगतमतिर्निस्पृहवरः ॥ सकामश्चेत्कामान्स खलु लभते दुर्लभतमांश्चिरायुः सत्कीर्तिः सकलविबुधैः श्लाघितगुणः ॥ ७ ॥ श्रीदेशिकेंद्र उवाच ॥ कालिदास इति स्थित्याऽपश्यद्ब्रह्माणि चाखिलम् ॥ आत्मन्येव यथा स्वप्नं जागृतः सुविचारवान् ॥८॥ चकारानेककाव्यानि विख्यातानि महीतले ॥ रघुवंशमहाकाव्यं कुमाराख्यं तथा परम् ॥ ९ ॥ गुणवंति तथान्यानि छंदोलंकारसद्रसैः ॥ मान्यानि यानि सर्वत्र पंडितेषु महत्स्वपि ॥ १० ॥ श्रीहर्षाद्यास्तु पूर्वोक्ताश्चाणक्याद्यास्तदुत्तराः ॥ कवयस्तेषु नो तुल्यः कालिदासेन बुद्धितः ॥ ११ ॥ कृते शुकोऽथ वाल्मीकिस्त्रेतायां कविरुत्तमः ॥ वेदव्यासो द्वापरे च कालिदासः कलौ तथा ॥ १२ ॥ तस्यासन्बहवः शिष्याः श्रेष्ठस्तेषां त्रिलोचनः ॥ योगं ज्ञानं मंत्रगुह्यं कालिदासस्तमादिशत् ॥ १३ ॥ अथ राजाश्रिताश्चक्रुर्द्वेषं सर्वेपि पंडिताः ॥ पश्चादेव निनिंदुस्तं नाग्रे वक्तुमणु क्षमाः ॥ १४ ॥

वर्यश्चेत् परगतमतिरात्मगतबुद्धिर्भवेत् ॥ ७ ॥ अखिलं सर्वं जगत् यथा सुविचारवान् जागरितः सन् स्वप्नस्थं गजरथादिकं जगत् आत्मन्येव कल्पितं पश्यति तथेत्यर्थः ॥ ८ ॥ अपरं नलोदयादि ॥ ९ ॥ छंदोऽलंकारसद्रसैर्युक्तानि ॥१०॥ बुद्धितः बुद्ध्या ॥११॥१२॥ मंत्रगुह्यं पूर्णाभिषेकादि ॥१३॥१४॥

दुराचारं दुष्टकर्म ॥ १५ ॥ हे ईश्वरेति संबोधनेन कालिदासं दंडयेति सूचयंति ॥ १६ ॥ १७ ॥ चारैर्दूतैः । धर्मरक्षिणा धर्मरक्षकेन ॥ १८ ॥
अयं कालिदासः ॥ १९ ॥ मानं सत्कारम् ॥ २० ॥ २१ ॥ २२ ॥ यद्यप्येवं तथापि ब्राह्मणो न दंड्यः शरीरदंडार्हो नास्ति " वपनं द्रविणादानं

रहस्याहुर्नृपं केचिद्राजञ्छृणु यथार्थतः ॥ कालिदासो दुराचारं सदैवाचरति स्फुटम् ॥ १५ ॥ खादत्यभक्ष्यमेवासावपेयं पिबतीश्वर॥
गच्छत्यगम्यां नारीं च लोकलज्जाविवर्जितः ॥ १६ ॥ एवमादीनि कर्माणि दुष्टान्येव करोत्यसौ ॥ न वक्तुमपि योग्यानि यान्यस्मा
भिस्तवाग्रतः ॥१७॥ त्वं चारैस्तानि सर्वाणि ज्ञात्वाप्येनमुपेक्षसे ॥ राज्ञा नैतादृशी कार्या ह्युपेक्षा धर्मरक्षिणा॥१८॥ नायं त्वत्सदसो
मध्ये स्थातुं योग्यो वरासने ॥ ततोऽयं वार्यतां दूतैर्नायात्येव यथा सभाम् ॥ १९ ॥ श्रीदेशिकेंद्र उवाच ॥ कालिदासस्येति निंदां
श्रुत्वा क्रुद्धोऽपि भूपतिः ॥ उवाच पंडितान्नम्रस्तेषां मानमखंडयन् ॥ २० ॥ राजोवाच ॥ युक्तमेवाखिलं चेदं भवता यन्मयाखिलाः॥
यूयं धर्मस्य रक्षार्थं स्वराष्ट्रे स्थापिताश्चिरम् ॥ २१ ॥ धर्मशास्त्रं विचार्यैव भवद्भिश्चोच्यते यथा ॥ तत्तद्दोषसमो दंडः क्रियतेऽपि मया
तथा ॥ २२ ॥ तथापि ब्राह्मणो नैव दंड्यस्तत्रापि शास्त्रवित् ॥ तस्माद्विद्वद्भिरेवाद्य कालिदासस्तु शास्त्रतः ॥ २३ ॥ शासनीयः
प्रयत्नेन यथेत्थं न करिष्यति ॥ भवद्भिः शास्त्रवादेन कार्यस्तस्य पराजयः ॥२४॥ स दंडो मृत्युतुल्यो यद्विप्राणां मानखण्डनम् ॥
ममापीष्टमिदं नूनं यद्धर्मस्याभिरक्षणम् ॥२५॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति तूष्णीमेवासुः पंडितास्ते यदग्रतः ॥ वक्तुमप्यक्षमाः
किंचिन्निःश्रीकास्तस्य तेजसा ॥ २६ ॥ इत्थं यातेऽप्यब्दसंघे सुधासुः कालीदासं ते द्विषंतः सदांतः ॥ राजा मेने तं तु गोत्रावतीर्णं
साक्षादीशं काव्यजानंदमिच्छुः ॥ २७ ॥ कालीदासोऽथात्मवेत्ता स्वधाम गंतुं हीच्छन्योगगत्या करंध्रात् ॥ तावच्छापं भोजकन्यो
क्तमेष सस्मारेति स्त्रीकरात्स्वस्य मृत्युम् ॥ २८ ॥

स्थानान्निर्यापणं तथा ॥ एष हि ब्रह्मबंधूनां वधो नान्योऽस्ति दैहिकः " इत्युक्तेः । तस्मादित्युत्तरान्वयि ॥ २३ ॥ इत्थं दुष्टकर्म ॥ २४ ॥ २५ ॥
तस्य कालिदासस्य ॥ २६ ॥ अंतर्मनसि गोत्रावतीर्णं पृथिव्यामवतीर्णम् । शालिनीवृत्तम् ॥ २७ ॥ करंध्रात् ब्रह्मरंध्रमार्गेण ॥ २८ ॥

यस्याः भोजकन्यायाः सकाशात् ॥ २९ ॥ दुर्मृतेर्दुर्मरणात् विधिः कर्तव्यं निषेधोऽकार्यम् अयं भावः सर्वगतात्मैक्यज्ञानवतो मम कार्याकार्याभावेन कृतकृत्यतया दुर्मरणदुर्गतिभ्यां भयं नास्तीति ॥ ३० ॥ स्वस्थितिस्थं स्वगृहगतम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ मुधा व्यर्थम् अग्रे समक्षम् ॥ ३४ ॥ ३५ ॥ तत्स्थितिं

यस्याः प्राप्तिः सद्गुरोश्चांबिकायाः सर्वज्ञत्वं मूर्खवर्यस्य मेऽभूत् ॥ कीर्तिं सर्वत्रापि मानो जयश्च शापस्तस्यास्त्वन्यथा नैव कार्यः ॥ २९ ॥ नेषद्भीर्मे दुर्मृतेर्दुर्गतेश्च दुष्कीर्तेः श्रीदेशिकेंद्रप्रसादात् ॥ सर्वत्रैकं ब्रह्म संपश्यतस्तु भेदाभावे को विधिः को निषेधः ॥ ३० ॥ कालीदासश्चेतसीत्थं विचिंत्य रात्रावेकोऽलक्षितोऽन्यैर्मनस्वी ॥ वेश्यागारं प्राप तामेतदाह मा ब्रूहि त्वं मां कचित्स्वस्थितिस्थम् ॥ ३१ ॥ अथ प्रातर्भोजराजः सभां पंडितमंडिताम् ॥ ययौ तत्र न चापश्यत्कालिदासं कवीश्वरम् ॥ ॥ ३२ ॥ मंत्रिमुख्यान्नृपः प्राह कालिदासः सभास्थले ॥ नैवाद्य दृश्यते द्वेषाद्बुधानां क्व गतः किमु ॥ ३३ ॥ मुधैव तं द्विषंतीमे धर्मज्ञाः प्राकृता इव ॥ पश्चात्तस्य प्रजल्पंति नाग्रे वक्तुमणु क्षमाः ॥ ३४ ॥ कालिदासं विना नैव मनो मे संप्रसीदति ॥ अतो दूतैः शोधनीयः पुर्यामस्यां कवीश्वरः ॥ ३५ ॥ अथाशु प्रेषयामासुर्दूतान्पुर्यां हि मंत्रिणः ॥ भ्रमंतोपि पुरीं कृत्स्नां नापुस्ते तत्स्थितिं क्वचित् ॥ ३६ ॥ अदर्शनं नृपः श्रुत्वा कालिदासस्य दूततः ॥ आसीत्खिन्नः स्वचित्ते तं संस्मरन्सद्गुणाकरम् ॥ ३७ ॥ अथाययौ कविः कश्चित्सभां राज्ञोतिविश्रुतः ॥ सद्यःस्फूर्त्या काव्यकर्ता रसालंकृतिकोविदः ॥ ३८ ॥ स चाह पंडितान्सर्वानेवं शृण्वति भूपतौ ॥ भवतां हि श्रुता कीर्तिः कालिदासस्य चाधिका ॥ ३९ ॥ यो नृपेण कविश्रेष्ठः कृतः सर्वमहीतले ॥ अतोहमागतोऽस्म्यत्र प्रष्टुमेकं किलोत्तरम् ॥ ४० ॥ यो ब्रूतेहं जितस्तेन नोचेत्सर्वे मया जिताः ॥ कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते ॥ ४१ ॥



कालिदासनिवासं न मापुः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ एकं सुभाषितविषयं प्रश्नम् उत्तरं यो ब्रूत इति संबंधः ॥ ४० ॥ प्रश्नमाह कुसुम इति ॥ ४१ ॥

नेति पद्यपूर्तिर्न क्रियत इति वाण्या उच्यतां कवेरित्युत्तरान्वयि ॥ ४२ ॥ ४३ ॥ कालिदासेन सह अस्मान्नगरात् क गत इति केनापि न ज्ञायते ॥ ४४ ॥ ४५ ॥ ४६ ॥ एवं पराजयः ॥ ४७ ॥ ४८ ॥ न अन्येन लक्षितो गुप्त इत्यर्थः ॥ ४९ ॥ तत्पद्यपूर्तिकर्त्रे इच्छितं दास्या

पूर्तिः कार्यास्य पद्यस्य नो चेन्नेत्येव कथ्यताम् ॥ श्रीदेशिकेंद्र उवाच ॥ कवेर्वाक्यमिति श्रुत्वा विचार्यापि हृदा चिरम् ॥४२॥ तां पूर्ति मक्षमाः कर्तुं ह्यासुर्मूका इवाखिलाः ॥ तूष्णींभूतान्नृपो दृष्ट्वा पंडितानिति चाब्रवीत् ॥ ४३ ॥ नृप उवाच ॥ कालिदासस्य युष्माभि र्मुधा द्वेषः कृतोऽखिलैः ॥ तद्धेतोरेव सोऽप्यस्माद्गतः क्वेति न बुध्यते ॥ ४४ ॥ स्थिताः किं मूकवत्सर्वे भवत्स्वेकोपि नैव किम् ॥ कर्तुं क्षमः पद्यपूर्तिं मुधा स्वस्वाभिमानिषु ॥ ४५ ॥ चतुर्दशशतेष्वत्र सत्सु विद्वत्सु मे सभा ॥ निर्जितैकेन कविना कापकीर्तिर तोऽधिका ॥ ४६ ॥ कालिदासो यदात्रासीत्तदा नैवं कदाप्यभूत् ॥ गतेनैकेन तेनैव जातं यन्न कदाप्यभूत् ॥ ४७ ॥ यः करोत्यद्य नाप्यस्य पूर्तिं पद्यस्य चार्थतः ॥ दास्येऽहमीप्सितं तस्मै यच्चादेयं सुदुर्लभम् ॥ ४८ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं वदति भूपाले सा वेश्यासीत्सभागता ॥ कालिदासो गृहे यस्याः स्थितश्चानन्यलक्षितः ॥ ४९ ॥ पद्यार्धं सा हृदा धृत्वा तद्वाक्यं नृपतेरपि ॥ गृहं ययौ ततोऽपृच्छत्कालिदासं निशीथके ॥ ५० ॥ कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते ॥ बाले तव मुखांभोजे दृष्टमिंदीवरद्वयम् ॥ ॥ ५१ ॥ एवं पद्योत्तरार्द्धेन कृता पूर्तिस्तु सार्थका ॥ कालिदासेन तां श्रुत्वा दधौ वेश्या हृदा दृढम् ॥ ५२ ॥ साब्रवीन्मनसैवेत्थं प्रातरेव सभामहम् ॥ गत्वा राज्ञे प्रवक्ष्यामि पद्यपूर्तिं यथोदिताम् ॥ ५३ ॥ ततस्तुष्टो नृपो मह्यं दास्यत्येव यदीप्सितम् ॥ राज्यं कोशं तथान्यद्वा ततोऽहं सर्वतोधिका ॥ ५४ ॥

मीति राजवचनम् ॥ ५० ॥ पंडितकृतं पद्यमाह कुसुमे इति । पुष्पे पुष्पोत्पत्तिः श्रूयते केवलं वार्तामात्रं श्रूयते किंतु न दृश्यते इति प्रश्नः । उत्तरमाह । बाले इति । हे प्रिये तव मुखकमले कमलद्वयं दृष्टम् ॥५१॥ सार्थकाऽर्थसहिता । दधौ धृतवती॥५२॥५३॥ततो राज्यादिप्राप्त्या सर्वोत्तमा भवामि ॥५४॥

उत्तरार्द्धमुत्तरान्वयि ॥ ५५ ॥ संकथयति सम्यक् कथयति अर्पितं पद्यपूर्तिकरणेन मद्दत्तैश्वर्यादि ॥ ५६ ॥ अत्र अस्यामेव रात्रौ उत्तरदलमुत्तरगामि ॥ ५७ ॥ भोजकन्यासमीरितमित्युत्तरान्वयि ॥ ५८ ॥ सेत्युत्तरनिबद्धम् ॥ ५९ ॥ हृदा मनसा स्थिरा स्थिरचित्ता ॥ ६० ॥ ६१ ॥



कदाचिच्चेद्भवेद्राज्ञा कालिदासेन संगमः ॥ कालिदासस्तदा राज्ञे पद्यपूर्तिर्मया कृता ॥ ५५ ॥ इति संकथयेद्यर्हि तदा राजा पुरार्पितम् ॥ मत्तो बलाद्गृहीत्वैव कालिदासाय दास्यति ॥ ५६ ॥ अतोऽत्रैव मया यत्नात्कालिदासो निहन्यते ॥ निश्चित्येति प्रसुप्तं च कालिदासं निरीक्ष्य सा ॥ ५७ ॥ विकोशं खड्गमादाय तद्ग्रीवायां तदाहनत् ॥ स तावज्जागृतोऽप्यासीद्भोजकन्यासमीरितम् ॥ ५८ ॥ शापं सत्यं प्रकर्तुं च नैव किंचित्तदाब्रवीत् ॥ सा तु च्छित्त्वा तस्य कंठं गर्तं कृत्वा रहःस्थले ॥ ५९ ॥ तस्मिन्निक्षिप्य तं यत्नान्मृदाच्छाद्यास हृत्स्थिरा ॥ अथ प्रातर्ययौ वेश्या सभां राज्ञः कुकर्मिणी ॥ ६० ॥ नृपं प्राहेति भो राजन्पूर्वेद्युर्यत्त्वयोदितम् ॥ यो ब्रूयात्पद्यपूर्तिं तु तस्मै दास्येऽहमीप्सितम् ॥६१॥ मया सा तूच्यते देहि मह्यं यद्याच्यते नृप ॥ ब्रूहीप्सितं प्रदास्ये त्वामित्युक्त्वा भूपतिः स्वयम् ॥६२॥ शृण्वत्स्वखिलविद्वत्सु पूर्वपद्यार्द्धमाह तत् ॥ कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते ॥६३॥ बाले तव मुखांभोजे दृष्टमिंदीवरद्वयम् ॥ श्रुत्वेदमुत्तरार्द्धं च वेश्ययोक्तं नृपस्तदा ॥ ६४ ॥ संबोधनविपर्यासात्कालिदासकृतं स्फुटम् ॥ ज्ञात्वा तामाह ते गेहे कालिदासोऽस्ति वा मृतः ॥ ६५ ॥ श्रुत्वेत्यंतं भीतियुक्ता हि वेश्या तूष्णीमासीत्तामुवाचेति राजा ॥ मा भीतिस्ते ब्रूहि सत्यं किलाद्य देही जन्मांतौ लभेत्कर्मणा वै ॥ ६६ ॥ श्रुत्वेत्थं सा प्राह कर्णे नृपस्य कालीदासश्चासिना सुप्त एव ॥ एकाकिन्यैवाहतोऽसौ मयेश श्वभ्रे निक्षिप्तो मृदाच्छादितश्च ॥ ६७ ॥ त्वत्तः श्रुत्वा पूर्वमर्द्धं मया तत्तस्मै चोक्तं प्राह पूर्तिं स तस्य ॥ जीवंश्चेत्स्यात्स्वार्थितस्वीकरिष्णुः कालीदासोऽस्मान्मया घातितोऽद्धा ॥ ६८ ॥

सा पद्यपूर्तिः इत्याद्युत्तरान्वयि ॥ ६२ ॥ ६३ ॥ श्रुत्वेति सार्द्धान्वयः ॥ ६४ ॥ संबोधनविपर्यासाद्बाले इति स्त्रीसंबोधनेन ॥ ६५ ॥ देही देहवान् प्राक्कर्मणा जन्म मरणं च प्राप्नोति । शालिनीवृत्तम् ॥ ६६ ॥ श्रुत्वेति । हे ईश श्वभ्रे गर्ते ॥ ६७ ॥ त्वत्त इति । स कालिदासो जीवंश्चेत्तर्हि स्वार्थितस्य

पद्यपूरणेन त्वत्सकाशाद्याचितस्य द्रव्यस्य स्वीकरिष्णुः स्वीकर्ता भवेत् अस्माद्धेतोः ॥ ६८ ॥ मेति । तव भयं मास्त्विति च पुनः सत्यं ब्रूहीत्येवं पूर्वं त्वया मह्यमुक्तं यतस्त्वं सत्यवाक् अतः पश्चान्मया च तुभ्यं वक्तुमयोग्यमपि स्वकृत्यं कालिदासवधाद्युक्तं यद्यपि त्वमीशः शिक्षकस्तथापि सत्यवादी त्वं स्वस त्यवचनसिद्धये मां रक्षेत्यर्थः ॥६९॥ राजेति । अनृतः अनृतवक्ता अस्यै वेश्यायै॥७०॥स्थित्वेति । राजेत्यनुवृत्तिः । तस्याः वेश्यायाः गर्तान्निक्षेपस्था नादानीय आनयित्वा॥७१॥सम्यगिति। अस्य भोजस्य दृष्ट्याऽवलोकनमात्रेण गतप्राणोऽपि द्वौ मुहूर्तौ मुहूर्तद्वयपर्यंतं चिदाढ्यः चैतन्याढ्यो भवति ॥ ७२॥

मा भीरित्थं प्राक्त्वयोक्तं हि मह्यं सत्यं ब्रूहीत्थं च पश्चान्मयातः ॥ तुभ्यं चोक्तं स्वीयकृत्यं त्ववाच्यमीशोऽसि त्वं रक्ष मां सत्यवादी ॥ ६९ ॥ राजाप्येनां प्राह नैवानृतोऽहं कालीदासं दर्शयाशु स्वगेहे ॥ यास्ये सर्वैरावृतोऽहं च तत्रेत्युक्त्वा राजामात्यमुख्यैर्जगाम ॥ ७० ॥ स्थित्वा तस्याः प्रांगणे शुद्धदेशे यत्रासीद्वै संस्थितिः श्रीतुलस्याः ॥ कालीदासं तत्र गर्तात्स्वदूतैरानीयैनं स्थापयामास चाग्रे ॥७१॥ सम्यक्छीर्षं तस्य कंठे नियोज्य पादाग्रादाशीर्षमेनं समैक्षत् ॥ राजा साक्षाद्ब्रह्मणोंऽशोस्य दृष्ट्या स्यान्निःप्राणो द्वौ मुहुर्तौ चिदाढ्यः ॥ ७२ ॥ प्रागेवेत्थं चोक्तमस्माद्धि हेतोः कालीदासोऽथोदतिष्ठत्सजीवः ॥ राजाप्युत्थाप्यालिलिंगाथ चैनं श्रेष्ठे पीठे स्थापयित्वेति चाह ॥ ७३ ॥ राजोवाच ॥ कालीदासेनास्तु मे जन्मजन्मन्यद्धा संगो मे यतश्चित्ततोषः ॥ शंभुः साक्षात्त्वं धरामागतोऽसि मादृक्स्वस्त्यै नेदृशी मर्त्यता हि ॥७४॥ वादं कर्तुं न त्वया वाक्पतिश्च शक्तोऽन्ये किं हीव सिंहेन वन्याः ॥ सर्वं कृत्यं ते नटस्येव वेषो नेपत्संगो हृत्प्रदेशेऽमुना ते ॥ ७५ ॥

प्रागिति । प्राक् वैद्यनाथगुरुकथोपक्रमे यस्य दर्शनतः प्रेतो द्विमुहूर्तावधि स्फुटं वदतीत्युक्तम् अस्मात्तादृशराजसामर्थ्याद्धेतोः कालिदासोऽथो राजावलोकनार्थं सचेतनः सन्नुत्थितः । यद्यपि राज्ञः स्वसुतायाः प्रेतावस्थायां शरीरदर्शनमात्रेण सप्राणत्वानुपलंभोऽभवत् तथापि तस्याः ब्रह्मरंध्रद्वारा गमनसंभवादप्राप्तब्रह्मभावस्य शरीरस्य राजदर्शनेन मुहूर्तद्वयावधि चैतन्यप्राप्तिरिति भावः ॥ ७३ ॥ कालीदासेति । यतस्त्वसंगात् मादृक्स्वस्त्यै मत्सदृशानां कल्याणाय शिव एव त्वं भूमौ प्राप्तः हि यस्मात्त्वत्तुल्यः मनुष्यो नास्तीत्यर्थः ॥ ७४ ॥ वादमिति । ब्रह्मापि त्वया वादं कर्तुं न समर्थश्चेत्तर्हि अन्येऽमी विबुधाः सिंहेन

स्पर्धितुं मृगाया इव न समर्थाः अमुना शरीरेण सह ॥ ७५ ॥ सख इति । मुहूर्तद्वयावधिकजीवनाभावात् त्वा त्वां यथा स्थास्यति तथा कुरु तथास्त्वि त्याह तौ द्वौ भोजकालिदासौ भोजचंपूसंज्ञकं काव्यम् ॥ ७६ ॥ कालिदास इति व्यत्ययाद्भोजो गद्यं कालिदासः पद्यम् इति भेदात् ॥ ७७ ॥ काली दास इति । मार्गान्मार्गेण तत ब्रह्मरंध्रं भित्त्वा सिद्धिमाप प्राप्तः ॥ ७८ ॥ स्वर्गादिति ॥ ७९ ॥ भावीति ॥ ८० ॥ कालिदासेति ॥ ८१ ॥ स्त्रीति

सख्रः किंचित्प्रार्थये त्वाऽवयोस्तु कीर्तिर्लोके स्थास्यतीत्थं कुरु त्वम् ॥ कालीदासोऽप्याह राज्ञे तथेति चंपूसंज्ञं चक्रतुस्तौ च काव्यम् ॥ ॥७६॥ कालीदासः प्राह गद्यं कदाचिद्भोजः पद्यं व्यत्ययाद्वेति ताभ्याम् ॥ यामार्द्धौ द्वे भोजचंपूर्निबद्धा ख्यातामान्या साऽस्ति विद्व ज्जनेषु ॥ ७७ ॥ कालीदासो द्वौ मुहूर्तौ समाप्तौ ज्ञात्वा प्राणायामतो योगगत्या ॥ मूलाधाराद्ब्रह्मरंध्रं सुषुम्न्यमार्गाद्गत्वा तच्च भित्त्वा ऽऽप सिद्धिम् ॥ ७८ ॥ स्वर्गात्पेतुस्तस्य पुष्पाणि शीर्षे वाद्यान्यद्धा शुश्रुवुस्तत्र सर्वे ॥ राजा चक्रे तत्समाधिस्थितिं तु स्वस्यारामे पूजनैर्वाद्यघोषैः ॥ ७९ ॥ भावि ज्ञात्वा यावनं राज्यमुर्व्यां ज्येष्ठं पुत्रं स्वासने स्थाप्य राजा ॥ योगाद्ब्रह्मैवाप विख्यातकीर्तिः का लीदासो भोजसंज्ञो नृपश्च ॥ ८० ॥ कालीदासस्थापिता मूर्तिरद्धा धारापुर्यामंबिकायाः किलास्ति ॥ तस्यास्त्वग्रे ये मनुं संजपंति सिद्धिस्तेषां शीघ्रमित्थं प्रसिद्धम् ॥८१॥ स्त्रीसाहसाद्दुर्गतिं योगतोपि यो गाद्ब्रह्मागाद्धि गुर्वंघ्रिनिष्ठः ॥ तस्मान्नो भीर्देशिकांघ्रिस्थधीनां दुर्गत्यादिः सर्वगो ह्यात्मवेत्ता ॥ ८२ ॥ कलौ य एवं कविवर्यवर्यस्त्रिलोचनायाह रहस्यजातम् ॥ तं द्विद्विकोर्ध्वं शतगं हि कालीदा साभिधं स्वीयगुरुं नताः स्मः ॥८३ ॥

स्त्रियः साहसकर्मणा दुर्मरणं प्राप्तस्यापि गुरुचरणनिष्ठावतः कालिदासस्य योगेन ब्रह्मप्राप्त्या गुरुचरणसंश्रितचित्तानां दुर्गत्या भयं नास्तीति सिद्धम् । हि यस्मादात्मवेत्ता सर्वगतः "आचार्यवान् पुरुषो वेद" इति श्रुतौ श्रीगुरुचरणाश्रितस्यैव सर्वगतब्रह्मप्राप्त्या अद्वितीयत्वेन "द्वितीयाद्वै भयं भवति" इति श्रुतिघो षितभयनिवृत्तिरिति भावः ॥८२॥ द्वाविंशत्यधिकशतं कालिदासानंदं प्रणमति कलाविति । द्विद्विकोर्द्ध्वं द्वाविंशत्यधिकं यथा स्यात्तथा शतसंख्यागतं कालि

दासम् ॥ ८३ ॥ कालिदासीयसर्गचतुष्टयस्य धर्मार्थकाममोक्षफलप्रदत्वमाह । कालिदासचरित्रमिति ॥८४॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां षष्ठः सर्गः ॥६॥ एकाशीतिसुपद्यैरुत्तमे देशिकाश्रयः ॥ त्रिलोचनाद्याः कथिताः कथाभिः पृथगेव हि ॥७॥ त्रिलोचनानंदनाथ इति । जीवस्येश्वरस्यैकत्वप्रापकम् ॥ १ ॥ स्वार्थज्ञानि स्वविषयग्राहकाणि विषयसंकल्पिविषशश्छब्दादीन्सम्यक् कल्पयति तत् देहे आत्मत्वनिश्चयात्मिका या सा बुद्धिः स्यात् ॥ २ ॥ यावान्देहस्तावानहंकारः एषां देहादीनामध्यासतः तादात्म्यनिश्चयेन चैतन्यस्य ब्रह्मणोंऽश इवांशो जीव उच्यते श्रुतिभिरिति शेषः ॥ ३ ॥ देहाद्यध्यासेनास्य संसारमाह परिच्छिन्न इति । देशकालवस्तुपरिच्छेदवानत एव परतंत्रः यतः कामक्रोधाधीनः स जीवोऽहंकारेण पापपुण्यात्मकं कर्म कुर्वंस्तेन कर्मणा निमित्तभूतेन जन्म मरणं च प्राप्नोति । अहंकारपूर्वकर्मकरणेनैवानर्थप्राप्तिरित्यर्थः ॥ ४ ॥ ईश्वरस्य ततो वैलक्षण्यमाह देहेति । देहादितादात्म्यरहितो यः स साक्षाच्छिव एव भवति चिद्घनः चिदेकरसः सर्वगतः सर्वदेशे सर्वकाले समः विकारहीनः अत एवासंगः विवर्ताधिष्ठानेन सुखसंबंधरहितः ॥ ५ ॥ तस्यैवोपाधितारतम्येन जीवादिरूपताप्राप्तिरिति सदृष्टांतमाह रवेरिति । यथोष्णादिमूर्यतेजो गवाक्षाद्युपाधिमत्तत्तदाकृतिमत् दीर्घवर्तुलादिगवाक्षाकारवद्भवति । तथैव देहाद्युपाधिभिः पृथक्पृथग् भिन्नभिन्न इवेश्वरोऽपि प्रतीयते । उपाधिकृतमेवेश्वरस्य नानारूपत्वं न वस्तुत इत्यर्थः ॥६॥

कालीदासचरित्रं शृणुयाद्वा संपठेच्चतुःसर्गम् ॥ धर्मार्थकाममोक्षसंज्ञं लभते पुमांश्चतुर्वर्गम् ॥८४॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे कालिदासकथावर्णनं नाम षष्ठः सर्गः ॥ ६ ॥ श्रीदेशिकेंद्र उवाच ॥ त्रिलोचनानंदनाथो जीवेशैक्यकरं परम् ॥ ज्ञानं लब्ध्वा गुरोः सर्वं तस्याभ्यासं सदाकरोत् ॥ १ ॥ देहो जडोऽयमत्यंतं स्वार्थज्ञानींद्रियाणि च ॥ मनो विषयसंकल्पि बुद्धिर्देहात्मनिश्चया ॥ २ ॥ चित्तं तु चिंतयत्यर्थान्यावद्देहस्तथास्त्यहम् ॥ एषामध्यासतो जीवश्चिदंश इति कथ्यते ॥ ३ ॥ परिच्छिन्नोऽस्वतंत्रश्च कामक्रोधादिवृत्तिमान् ॥ अहंकृत्याऽऽचरन्कर्म तेन याति भवाभवौ ॥ ४ ॥ देहाद्यध्यासहीनो यः शिवः साक्षात्स एव हि ॥ चिद्घनः सर्वगोऽसंगः समः सर्वत्र सर्वदा ॥ ५ ॥ रवेस्तेजो गवाक्षाद्यैस्तत्तदाकृतिमद्यथा ॥ देहोपाधिभिरीशश्च तथा भाति पृथक्पृथक् ॥ ६ ॥

त्रिलोचनानुभावं वर्णयति तस्मादिति । यस्मादीश्वर एव नानारूपस्तस्मादहं न देहादिरूपः अंतश्चतुष्कम् अंतःकरणचतुष्टयरूपः वायुवर्गः प्राणसमुदायरूपो नास्मि किंतु सर्वैर्देहादिभिरसंगः संगरहितः सर्वद्रष्टा सच्चिदानंदरूपः परशिवोऽहमस्मि ॥ ७ ॥ एवं सदाभ्यासपरस्त्रिलोचनोऽभिन्नतया गुरुदेवतात्मैक्यरूपेण शिवपूजां यथाविधि चकार " शिवो भूत्वा शिवं यजेत् " इति वाक्यं तथैवास्य त्रिलोचनस्याचरणमासीदिति ॥ ८ ॥ उपासनादार्ढ्यात्तस्य शरीरेऽपि शिवचिह्नप्राप्तिरित्याह । शिवस्येति । ऐशे ईशपुत्रे गणेशे धिया आत्मनिश्चयेन भ्रुशुंडिनो भक्तस्य शुंडाप्राप्तिर्यथा तथास्य शिवभक्त्या तृतीयनेत्रप्राप्तिरभवत् हि

तस्मान्न देहोऽहमपीन्द्रियाणि नांतश्चतुष्टं न च वायुवर्गः ॥ सर्वैरसंगः खलु सर्वसाक्षी सच्चित्सुखात्मास्मि परः शिवोऽहम् ॥ ॥ ७ ॥ इत्थं सदाभ्यासरतः शिवेज्यां चकार चाभिन्नतया यथावत् ॥ भूत्वा शिवात्मापि यजेच्छिवं यद्वाक्यं तथैवास्य यथार्थचर्या ॥ ८ ॥ भक्त्याशिवस्येत्यभवत्तृतीयं नेत्रभ्रुवोर्मध्यगतं किलास्य ॥ भ्रुशुंडिनश्चैशधियेव शुंडा यत्रास्ति यद्भक्तिरसौ स एव ॥ ९ ॥ अतींद्रियं यत्तदपि प्रपश्यन्स तेन नेत्रेण च चिन्मयेन ॥ योनागतातीतमुवाच वृत्तं त्रिलोचनं प्राहुरतस्तमार्याः ॥ १० ॥ योऽद्धा शिवः प्राह रहस्यजातं रत्नाकरायाथ ययौ सुसिद्धिम् ॥ ऊर्ध्वं त्रयोविंशतितः शताख्यं त्रिलोचनानंदगुरुं नताः स्मः ॥ ११ ॥ श्रीदेशिकेंद्र उवाच ॥ रत्नाकरानंदनाथश्चात्मवान्योगवित्तमः ॥ मंत्रशास्त्रसुतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ १२ ॥

यस्माद्यो यत्र श्रद्धावान् स तद्रूप एव भवति । भ्रुशुंडकथा च गणेशपुराणे प्रसिद्धा ॥ ९ ॥ स तेन ज्ञानमयेन नेत्रेण करणेन यदिंद्रियातीतं तद्वस्तुजातं सम्यक्पश्यन्सन् भूतं भविष्यद्वर्तमानं च पृच्छकान्प्रति उवाचातो हेतोस्तमार्यास्त्रिलोचनमाहुः ॥ १० ॥ त्रयोविंशत्यधिकशतं त्रिलोचनानंदनाथं प्रणमाति य इति । त्रयोविंशतितः त्रयोविंशत्या ऊर्ध्वमधिकं यथास्यात्तथा शताख्यं शतसंख्यायामाख्या नाम यस्य तं नताः स्मः ॥ ११ ॥ रत्नाकरानंदनाथ इति

आसीदित्यध्याहारः ॥१२॥ दृष्ट्वेति द्वयोरन्वयः ॥१३॥ स्त्रिया सह ॥१४॥१५॥ तत्र गंगातीरे इत्याद्युत्तरान्वयि॥१६॥॥१७॥दानमिति पूर्वान्वयि। दधौ धृतवान् ॥ १८ ॥ अतिभूषणो बहुभूषणो यो राजा तस्यैकहारस्मरणमस्ति किम् अपि तु नास्तीति निश्चयोंतरे मनसि एषां तै रक्षकैरेव स हारो हत

दृष्ट्वाखिलाञ्जनानज्ञान्देहात्मत्वाभिमानिनः ॥ शठान्क्रूरान्कामसक्तान्नानादोषाकुलान्स्वयम् ॥ १३ ॥ त्रस्तस्तत्संगतोऽत्यंतं त्यक्त्वा गेहं समृद्धिमत् ॥ क्वचिद्गंगातटे रम्ये तृणकुट्यां स्त्रियाऽवसत् ॥ १४ ॥ शिवार्चाभिरतः शांतो यदृच्छालाभतुष्टधीः ॥ कन्यका द्वौ सुतौ तस्य तेप्यासञ्छांतवृत्तयः ॥ १५ ॥ अथ तद्देशनृपतिः क्वचित्पर्वणि सानुगः ॥ स्नातुं गंगां ययौ तत्र तृणकुट्याः समीपतः ॥ १६ ॥ संस्थाप्यांशुकभूषादि दूतांश्चाहूय रक्षितुम् ॥ स्नानं चक्रेऽथ जाह्नव्यां याचकेभ्यस्ततो ददौ ॥ १७ ॥ दानं कृताह्निकश्चाथ दधौ भूषांशुकानि सः ॥ तत्र नापश्यदेकं हि रत्नहारं हिरण्मयम् ॥१८॥ रक्षकैरेव हारः स हृतो राजाऽतिभूषणः ॥ किं स्मृतिश्चैकहारस्य तस्येत्थं निश्चयांतरैः ॥ १९ ॥ राजाथ रक्षकान्प्राह हारस्त्वेको न दृश्यते ॥ यूयं कथं स्थितास्त्वत्र सुताः किं वांधतां गताः ॥ २० ॥ तेथाहुर्न वयं सुप्ताः पश्यंतोऽत्रैव संस्थिताः ॥ न कश्चिच्चागतोऽत्रापि कथं हारो गतः प्रभो ॥ २१ ॥ कुटीस्थस्य द्विजस्यैतौ पुत्रौ कन्या च भूपते ॥ चरंत्यत्र त्रयश्चाराद्धारस्तैरेव संहृतः ॥ २२ ॥ दत्तः पित्रेथवा मात्रे क्षिप्तो वा पुलिने क्वचित् ॥ शोधनीयोऽद्य तेष्वेव हारस्तेषां न तत्परः ॥ २३ ॥ श्रुत्वेति नृपतिर्गत्वा कुटीं प्राह द्विजं रुषा ॥ रत्नहारो हृतोस्माकं क्रीडद्भिस्तव बालकैः ॥ २४ ॥ तुभ्यं दत्तोऽथ ते पत्न्यै स देयो नो द्विजोत्तम ॥ नैवान्योऽत्रागतः कश्चिद्रक्षकैरिति कथ्यते ॥ २५ ॥ किं त्वमत्र तदर्थं हि स्थितो भूत्वातिनिःस्पृहः ॥ वाक्यं श्रुत्वा नृपस्येत्थं मनस्याह द्विजस्तदा ॥ २६ ॥

इति योज्यम् ॥ १९ ॥ २० ॥ २१ ॥ आरात्समीपे चरंतौ ॥ २२ ॥ २३ ॥ २४ ॥ न अस्मभ्यम् ॥ २५ ॥ एतदर्थं चौर्यकरणार्थम्॥२६॥

अत्र गंगातीरे सः दुःसंगः प्रातः अलंघ्यमनिवार्यम् ॥ २७ ॥ बालकैर्वा कथं स हारो दृष्टः स्यात् ॥ २८ ॥ स्तेयिनश्चोराः ॥ २९ ॥ ३० ॥ अंततः कुट्यां नृपतेरित्युत्तरान्वयि । आक्षेपं मिथ्याभिरोपवचनम् ॥ ३१ ॥ क्षुद्रानल्पानश्मनः पाषाणान् गंगाया इत्युत्तरान्वयि ॥ ३२ ॥ ३३॥३४॥

अहं दुःसंगभयतः पुरं त्यक्त्वा वने स्थितः ॥ प्राप्तोऽत्रापि स दैवेन ह्यलंघ्यं प्राक्तनं खलु ॥२७॥ नृपस्त्वाह द्विजोऽथेत्थं दृष्टो नैव मया नृप ॥ हारस्ते मम पत्न्या वा बालकैर्वा कथं हि सः ॥२८॥ कुट्याः सर्वे बहिः स्थाने वयं यास्यामहेऽधुना ॥ त्वयांऽतः शोधनीयोऽसौ लब्धश्चेत्स्तेयिनो वयम् ॥२९॥ इत्यादि बहुधोक्तोऽपि नृपः प्राह पुनर्द्विजम् ॥ ब्राह्मणत्वान्न दंड्यस्त्वं मुधा किं वल्गसेऽधुना ॥ ॥ ३० ॥ संशोध्य देहि मे हारं पत्न्यां बालेषु वांततः ॥ नृपतेरित्थमाक्षेपं दृष्ट्वासौ ब्राह्मणोत्तमः ॥ ३१ ॥ पादुकां श्रीगुरोः स्मृत्वा बहिः कुट्याः समाययौ ॥ गंगायाः पुलिने गत्वाऽश्मनः क्षुद्रान्स्वमुष्टिना ॥ ३२ ॥ गृहीत्वाऽदर्शयद्राज्ञे प्राहेत्थं निःस्पृहाग्रणीः ॥ पश्यामूनि हि रत्नानि राजंस्ते संति वा न च ॥ ३३ ॥ अपश्यद्भूपतिस्तावद्रत्नान्येवाखिलानि च ॥ द्युतिमंति ह्यमौल्यानि यथा नो संति भूतले ॥३४॥ नृपः प्राहाथ मनसि मदग्रेऽद्यामुना किल ॥ क्षुद्राश्मानो धृता मुष्टौ कथं रत्नान्यमून्यहो ॥ ३५ ॥ द्विजोऽयं प्राकृतो नैव सिद्धवर्योऽस्ति निःस्पृहः ॥ मयाऽज्ञात्वास्य सामर्थ्यं दुर्वाक्यैः क्लेशितो मुधा ॥३६॥ क्रुद्धश्चेदधुनायं मां सकुलं नाशयिष्यति ॥ प्रार्थनीयस्ततः सिद्धो यथा स्यात्करुणाकरः ॥ ३७ ॥ इत्थं कृत्वा मतिं राजा साष्टांगं प्रणनाम तम् ॥ मुहुः प्राहाथ रक्षेति शठं मामपराधिनम् ॥ ३८ ॥ कृतागःस्वपि संतो हि क्षमाढ्या इति विश्रुतम् ॥ सिद्धोऽथाह नृपं चेत्थं त्वयागो न कृतं मम ॥ ३९ ॥ यतः स्वकर्मणैवायं प्राणी याति सुखासुखे ॥ देहः प्राक्कर्मजन्यो हि तद्भुक्त्यै धार्यतेऽखिलैः ॥ ४० ॥ राजाथाह द्विजं स्वामिंस्त्वं रत्नाकर एव हि ॥ त्वत्करस्पर्शतोऽश्मानो ह्यमौल्या रत्नजातयः ॥ ४१ ॥

॥ ३५ ॥ ३६ ॥३७॥३८॥ आगोऽपराधः ॥३९॥ याति प्राप्नोति तद्भुक्त्यै कर्मभोगाय ॥४०॥ त्वत्करस्पर्शमात्रेणाश्मानो रत्नानि बभूवुः ॥४१॥

रत्नाकर इति पृथिव्यां प्रसिद्धो बभूव ॥ ४२ ॥ चतुर्विंशत्यधिकशतसंख्यं रत्नाकरानंदं प्रणमति सिद्धेश्वर इति । तत्त्वं पूर्णाभिषेकादि मंत्ररहस्यम् ॥ ४३ ॥ लोलटानंदनाथ इति । एकः एकाकी ॥ ४४ ॥ ४५ ॥ यतस्तत इति उत्तरपूर्वार्द्धयोरध्याहारः ॥ ४६ ॥ अत्र विद्याप्राप्तये ॥ ४७॥

राजाथ तं सिद्धवरं प्रपूज्य नानोपचारैर्वसुभिश्च वस्त्रैः ॥ ययौ ततः सानुचरः पुरं स्वं रत्नाकरः सोऽथ भुवि प्रसिद्धः ॥४२॥ सिद्धेश्वरः प्राह निजं हि तत्त्वं यो लोलटायाथ ययौ सुसिद्धिम् ॥ ऊर्ध्वं चतुर्विंशतितः शताख्यं रत्नाकरानंदगुरुं नताः स्मः ॥४३॥ लोलटानंदनाथस्तु शुश्रूषां श्रीगुरोः पराम् ॥ कुर्वन्बाल्येऽखिलाश्चापि विद्या एकः समभ्यसत् ॥ ४४ ॥ प्राप्तविद्यं तमाहेदं गुरू रत्नाकराभिधः ॥ त्वया ममातिशुश्रूषा कृता तुष्टोऽस्म्यहं तथा ॥ ४५ ॥ अखिलाः सफलाः संतु विद्या एकस्य ते सदा ॥ त्वं सर्वेभ्योऽधिकां सेवां कृतवान्न तथापरे ॥४६॥ गुरुशुश्रूषया विद्या किंवा विद्या धनेन च ॥ अथवा विद्यया विद्या नोपायोऽस्ति चतुर्थकः ॥ ४७ ॥ सेवैवोक्ता गुरोराद्या त्रिष्वेतेष्वपि सत्तमैः ॥ विद्याभ्यासस्तु तत्पूर्वः ततस्ताः सफलास्त्वयि ॥ ४८ ॥ इत्युक्त्वास्मै ददौ दीक्षां सर्वमंत्रमयीं गुरुः ॥ द्विषंतोऽथाऽमुना सर्वे नासौ तैर्गुरुबंधुभिः ॥ ४९ ॥ प्राप्तविद्यास्ततः सर्वे ययुः स्वं स्वं निकेतनम् ॥ स्वदेशीयं नृपं गत्वा सर्वेऽप्यासुस्तदाश्रिताः ॥ ५० ॥ नृपायादर्श्य विद्यानां स्वीयानां वैभवं पृथक् ॥ लोलटानंदनाथस्तु तिष्ठन्गेहे शिवार्चकः ॥ ॥ ५१ ॥ अध्यापयामास तदा विद्याः सर्वाः किलैकलः ॥ यदृच्छालब्धवृत्त्यासौ तुष्टः साध्व्या स्त्रियान्वितः ॥५२॥ सहाध्यायिन इत्याहुरथ तस्य नृपाश्रिताः ॥ आनेतव्योऽत्र यत्नेन लोलटस्तु नृपाज्ञया ॥ ५३ ॥ यस्मिंश्चक्रेऽधिकां प्रीतिं सर्वेभ्योऽस्मद्गुरुः पुरा ॥ तथाप्ययं यथालब्धं भुंजश्चास्ति निराश्रयः ॥ ५४ ॥ वयं तु स्वेच्छया भोगान्नृपयोग्याननेकधा ॥ भुंजंतोऽत्राखिलाश्च स्मः संपादितनृपाश्रयाः ॥ ५५ ॥ कृत्वामुनाखिलैर्यदस्माभिश्चावमन्यताम् ॥ किं लोलटोऽत्र सर्वान्नो गुर्वाशीरपि जेष्यति ॥ ५६ ॥

एतेषु विद्याप्राप्तिसाधनेषु तत्पूर्वः गुरुपूर्वकः ते तव ततः कारणात् ताः विद्याः ॥ ४८ ॥ द्विषंतो द्वेषकर्तारो बभूवुः असौ लोलटः गुरुबंधुभिर्द्वेषं न चकार ॥ ४९ ॥ ५० ॥ आदर्श्य दर्शयित्वा वैभवं महत्त्वम् उत्तरार्द्धमुत्तरनिबद्धम् ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ अमुना लोलटेन सह । अव

मन्यतामपमानितव्यः । गुरोराशीर्यस्य स नोऽस्मान् जेष्यति किं नेत्यर्थः ॥ ५६ ॥ रहोगतमेकांतगतम् ॥ ५७ ॥ अस्माकं कृतं पोषणं येन ॥ ५८ ॥
॥ ५९ ॥ ६० ॥ तमित्याद्युत्तरगामि ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ मया त्वमाहूत इति संबंधः ॥ ६५ ॥ ६६ ॥ तत इत्युत्तरान्वयि॥६७॥

इति निश्चित्य ते सर्वे नृपं प्राहूरहोगतम् ॥ राजन्नेकोऽस्ति ते राष्ट्रे विद्यागर्वान्वितो द्विजः ॥ ५७ ॥ स निंदत्यखिलांश्चास्मांस्त्वां चास्मत्कृतपोषणम् ॥ मन्यते स्वयमेवैको विद्वान्धीमांश्च भूतले ॥ ५८ ॥ समाहूयात्र दूतेन चागते च ततो वयम् ॥ जेष्यामः शास्त्रवादेन यथा गर्वोऽस्य नश्यति ॥ ५९ ॥ कीर्तिस्ते भविता राजंस्तावकाः स्मो यतो वयम् ॥ श्रुत्वेति नृपतिर्दूतं प्रेषयामास तं प्रति ॥ ६० ॥ लोलटो दूतवाक्येन ययौ स्वग्रामतो नृपम् ॥ शिष्याढ्योऽथ सभां प्राप्तस्तं दृष्ट्वाथ सभास्थिताः ॥६१॥ उत्तस्थुर्नृपमुख्यास्तत्तेजसा निष्प्रभा इव ॥ वरासने निवेश्यैनं यथास्थानं स्थितास्ततः ॥६२॥ लोलटः प्राह नृपतिं राजंस्त्वद्दूतवाक्यतः ॥ आगतोऽस्मि तवाज्ञां कस्त्वद्राष्ट्रस्थो हि लंघयेत् ॥ ६३ ॥ कुर्वञ्छिवार्चनं नित्यं शिशूनध्यापयन्त्सदा ॥ यदृच्छालब्धवृत्तिस्तेऽभीष्टेच्छुः सुखमस्म्यहम् ॥६४॥ नृपः प्राहाथ ते स्वामिञ्छ्रुता कीर्तिर्मयाद्भुता ॥ त्वद्दर्शनेच्छुना किंचिच्छ्रोतुकामेन ते मुखात् ॥ ॥ ६५ ॥ आहूतस्त्वमथाहासौ लोलटो नृपतिं पुनः ॥ सर्वशास्त्रविदः संति पंडितास्ते सदस्यमी ॥ ६६ ॥ तेषामग्रे मया राजन्किमेकेनैव चोच्यताम् ॥ आज्ञा तथाप्यलंघ्या ते ततः किंचिद्यथामति ॥ ६७ ॥ उच्यते चेदिमे सर्वे मयि संति दयालवः ॥ नास्ति मे योग्यता राजन्वक्तुमेषां किलाग्रतः ॥ ६८ ॥ बुधैः सहासीदथ लोलटेन शास्त्रोक्तिभिर्विप्रतिपत्तिरत्र ॥ मध्येऽखिलानां ध्वनिरस्य तत्रासीद्वायसानामिव कोकिलस्य ॥ ६९ ॥ ते तर्कमीमांसकशब्दशास्त्रैर्वेदांतवाक्यैः पृथगेकदैव ॥ एकेन चक्रुर्निखिलाश्च वादं श्रीभट्टपादेन पुरेव बौद्धाः ॥ ७० ॥ श्रीलोलटाख्येन निरुत्तरास्ते कृतास्तदीयोक्तिविखंडनैर्हि ॥ कोलाहलं चक्रुरथापि सर्वे प्रदर्शयंतः स्वजयं नृपाय ॥ ७१ ॥

॥ ६८ ॥ विप्रतिपत्तिर्महान्वादः अत्र सभायाम् अस्य लोलटस्य ॥ ६९ ॥ मीमांसैव मीमांसकं मीमांसाशास्त्रं पुरा शंकरावतारसमये ॥ ७० ॥ ७१ ॥

तेषां ध्वनौ यत्कर्कशत्वं तेन हेतुना श्रुतिव्यथः श्रुत्योर्व्यथा यस्य ॥ ७२ ॥ हि यस्मात्सतां द्वेषो मानजयौ हंति नाशयति ॥ ७३ ॥ प्राक्पूर्वं विषयानुवादं वादविषयोपक्रमं क्षणं क्षणमात्रं शुश्राव ततस्तुष्टः सन्नेनं लोलटम् ॥ ७४ ॥ सुकोपी महत्कोपवान् इहास्मिँल्लोलटे हि यस्मादाश्रयिणां संगृहीतानां पापपुण्ये आश्रये संग्रहकर्तरि स्तः भवतः मत्संश्रयैर्युष्माभिः कृतो महदपमानादिदोषो मां स्पृशतीत्यर्थः॥ ७५॥साधवः परदुःखेन दुःखिता भवंति इति भावः॥ ७६॥

ज्ञात्वैव राजापि तदीयचेष्टाः श्रुतिव्यथस्तद्ध्वनिकर्कशत्वात् ॥ तानाह तूष्णीं भवतेषदार्याः शृणोम्यहं लोलटमंजुशब्दान् ॥७२॥ सभ्याः सतृष्णा इव तद्ध्वनौ हि यूयं जितास्तेन मयेति बुद्धम् ॥ तूष्णीं स्थितास्ते प्रभुणेति चोक्ता द्वेषः सतो मानजयौ हि हंति ॥७३॥ राजाशृणोत्प्राग्विषयानुवादं क्षणं ससभ्योऽथ च लोलटोक्तम् ॥ तुष्टः प्रपूज्यैनमपारवित्तं दत्त्वाह दासोऽस्मि तवेति भूयः ॥७४॥ तान्पंडितान्प्राह नृपः सुकोपी मिथ्येह दोषाः कथिता भवद्भिः ॥ यूयं न योग्याः किल मत्सभायां स्तश्चाश्रये ह्याश्रयिपापपुण्ये ॥ ७५ ॥ कृतापमानान्विदुषो नृपेण दृष्ट्वैव खिन्नो हृदि लोलटोऽभूत् ॥ निजापकारिण्यपि दुःखिते हि ये साधवस्तेऽपि सुदुःखिताः स्युः॥७६॥ श्रीलोलटोऽथाह नृपं च राजन्दासोऽसि चेद्देहि किलेप्सितं मे ॥ मद्बंधवः संति तवाश्रितास्तान्प्राग्वत्पुनः पोषय मद्धिताय ॥७७॥ तथेति राज्ञा बहुसत्कृतोऽसौ श्रीलोलटः स्वाश्रममाप शिष्यैः ॥ लोलाः समस्ता अपि टे ध्वनौ हि यस्येति तं लोलटमाहुरार्याः ॥ ॥७८॥ख्यातः स चासीद्भुवि सिद्धवृंदे सिद्धेश्वरः श्रीगुरुसेवयैव ॥ न साधनं श्रीगुरुसेवयान्यत्समं कलावस्ति च भुक्तिमुक्त्योः ॥७९॥ विद्वद्वरः सर्वनृपार्चितांघ्रिर्दत्त्वा रहस्यं च निजात्मजाय ॥ सिद्धिं ययौ सांघ्रिशताख्यमेनं श्रीलोलटानंदगुरुं नताः स्मः ॥ ८० ॥

बंधव एकगुरुशिष्याः॥ ७७॥स्वाश्रमं शिष्यैः सह प्राप। लोलटशब्दार्थमाह । लोलाः सतृष्णाः ध्वनौ यस्य 'लोलश्चलसतृष्णयोः' इत्यमरः।यद्वा लोलः पंडितजये चंचलः ध्वनिर्यस्य ' टः पुमान्करटे धूमे चापेर्के कितवे ध्वनौ ' इत्येकाक्षरनिघंटः ॥ ७८ ॥ स लोलटः ख्यातः आसीत् गुरुसेवया समं साधनम् ऐहिकामुष्मिकफलयोर्भोगमोक्षयोः प्रापकं कलावन्यत्किमपि नास्तीत्यर्थः ॥ ७९ ॥ पंचविंशाधिकशतसंख्यं लोलटानंदनाथं प्रणमति विद्वद्वर इति । निजात्म

जाय वक्ष्यमाणपुत्राय रहस्यं मंत्रशास्त्रगोप्यं पूर्णाभिषेकादि सांग्निशतं सपादशतसंख्यम् ॥ ८० ॥ सर्गोक्तगुरुकथाश्रवणादिफलं क्रमेणाह त्रिनेत्र इति । त्रिनेत्रस्त्रिलोचनस्तस्य रत्नाकरलोलटयोश्च कथाः उत्तमभक्तिमान् शृणुयाद्वा पठेत् सोऽत्रलोके भोगमोक्षौ त्रयाणां फलभूतौ ॥ ८१ ॥ इति श्रीगुरुपरंपरा चरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां सप्तमः सर्गः ॥ ७ ॥ अष्टमेऽप्यष्टपद्यैश्च मातंगादिदिवाकरात् । देशिकाः कथिता आख्यासप्तगाथाः क्रमात्रयः

त्रिनेत्ररत्नाकरलोलटानां कथाः पठेद्वा शृणुयात्सुभक्तिः ॥ ज्ञानं सुकीर्तिं च यशोऽत्र लब्ध्वा भुक्त्वाथ भोगान्परमेति धाम ॥ ८१ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे त्रिलोचनानंदादिगुरुत्रयकथावर्णनं नाम सप्तमः सर्गः ॥ ७ ॥ श्रीदेशिकेंद्र उवाच ॥ लोलटानंदपुत्रस्तु धीमांस्तेजस्विनां वरः ॥ पितुरेवाखिलाः प्राप विद्याः सांगाः सुशिक्षया ॥ १ ॥ षोडशाब्दवयाः सोऽथ प्राहेत्थं पितरं नतः ॥ पितर्मयेत्थं प्राग्वृत्तं श्रुतं राज्ञः सभांतरे ॥ २ ॥ त्वयैकेन जिताः सर्वे पंडिताः शास्त्रवादतः ॥ राज्ञा त्वं सत्कृतोऽस्त्यं तं पंडितास्तु तिरस्कृताः ॥ ३ ॥ पुनस्तवैव वाक्येन राज्ञा तेषां स्थितिः कृता ॥ अधुनाहं च गच्छामि द्रष्टुं राज्ञः सभां तथा ॥ ॥ ४ ॥ विद्वद्भ्योखिलविद्यानां परीक्षां दातुमादितः ॥ अभ्यस्तानां हि विद्यानां किं फलं चेद्गृहे स्थितिः ॥ ५ ॥ आज्ञापय ततो मां त्वं मदुक्तं यदि मन्यसे ॥ अथाह लोलटः पुत्रं किमर्थं गम्यते त्वया ॥६॥ प्रत्यब्दमेत्य राजा च धनं दत्तेऽमितं स्वयम् ॥ तत्रत्याः पंडिताः सर्वे बाल्यान्मे द्वेषिणोपि हि ॥ ७ ॥ मत्पुत्रस्य करिष्यंति ते प्रीतिं तु कुतोऽधुना ॥ निवारितोपि पित्रेत्थं पुत्रः पितरमब्रवीत् ॥ ८ ॥ पितर्मय्यखिलाः प्रीतास्युर्यथैव वशाः परम् ॥ तथा मे साधनं ब्रूहि यतस्त्वं सर्ववित्तमः ॥ ९ ॥ पुत्रेण प्रार्थितश्चेत्थं विचार्यात्मनि लोलटः ॥ मंत्रं श्रीराजमातंग्याः संन्यासध्यानमाददौ ॥ १० ॥ अंगादिमनुभिर्युक्तं तथा सावरणं क्रमात् ॥ पुरश्चर्याविधानं च निर्दिश्याह पुनः सुतम् ॥ ११ ॥

॥ ८ ॥ लोलटानंदपुत्र इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ चेद्गृहे निवासश्चेत्तर्हि किं फलं यशोधनसत्कारादिरूपं भवति अपि तु नेत्यर्थः ॥ ५ ॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ राजमातंग्याः श्यामायाः न्यासध्यानसहितं मंत्रं गुरुमुखैकवेद्यं अर्पितवान् ॥ १० ॥ अंगोपांगप्रत्यंगमंत्रैर्युक्तमावरणदेवता

सहितमिति पूर्वान्वितम् । निर्देश्योपदेश्य ॥११॥ पंचांगां जपहोमतर्पणमार्जनब्राह्मणभोजनरूपांगसहिताम् ॥ १२ ॥ भविष्यंतीत्यध्याहारः । क्वचिदन्यत्र स्थलेत्युत्तरान्वयः ॥ १३ ॥ ते इति कर्मणिषष्ठी त्वां जेष्यतीति संबंधः । यथोदितं यथोक्तं पूजादि ॥ १४ ॥ १५ ॥ तद्वयम् ॥ १६ ॥ अखिलवरप्रा

पूजापूर्वं कुरुष्वास्य पुरश्चर्यां सुभक्तितः ॥ पंचांगां हि ततो देवी प्रसन्ना ते भविष्यति ॥ १२ ॥ तस्याः प्रसादात्ते सर्वे वश्याः प्री तास्तथा त्वया ॥ निर्जिताः सर्वशास्त्रज्ञाः क्वचिद्वादेपि ते सुत ॥ १३ ॥ न कश्चिदपि शास्त्रज्ञो जेष्यतीत्थं भविष्यति ॥ इत्थमुक्तः सुतः पित्रा यथोदितमथाकरोत् ॥ १४ ॥ प्रसन्ना राजमातंगी चेप्सितं सकलं ददौ ॥ तस्मै प्राहेति त्वं वत्स यदा भयमुदेष्यति ॥ ॥ १५ ॥ तदा मां स्मर तत्सर्वं नाशयित्वैव ते हितम् ॥ करिष्ये नूनमित्युक्त्वांतर्दधे जगदीश्वरी ॥ १६ ॥ पित्रेथाखिलमुक्त्वासौ लोलटाय ततः सुतः ॥ तं नत्वास्माद्गृहीत्वाज्ञां सहाध्यायियुतो ययौ ॥ १७ ॥ राज्ञः सभां नृपो दृष्ट्वा ज्ञात्वा तं लोलटात्मजम् ॥ स्थापयामास निकटे बहुमानपुरःसरम् ॥ १८ ॥ पंडितान्प्राह राजाथ लोलटस्यात्मजोस्त्ययम् ॥ अल्पोपि वयसा प्रौढो विद्वान्धीमान्गुणाकरः ॥ १९ ॥ अनेन सह युष्माभिः किंचिच्छास्त्रोक्तिभिः क्षणम् ॥ वक्तव्यमिति मे वांछा भवतां रोचते न वा ॥ २० ॥ श्रुत्वेत्थमाहुर्नृपतिं बुधास्ते राजन्न ते वक्तुमपीदमिष्टम् ॥ यत्त्वत्सभायां लघुना महद्भिर्वादः कवीनां रसमेति हास्यम् ॥ २१ ॥ अधीतिमेवाथ करोतु नित्यं ह्यस्मत्समीपेऽणुवयाः किलायम् ॥ अध्यापयामो हि वयःसमानांश्चैतस्य तैरस्त्वथ वात्र वादः ॥ २२ ॥ श्रीलोलटिस्तानसमंजसांश्च ज्ञात्वैव चाहेति न साम्यमेव ॥ महद्भिरल्पस्य यथा हि पत्रैः पत्रस्य केतक्यभिवद्द्रुमस्य ॥ २३ ॥

स्यादि ॥ १७ ॥ राज्ञः सभामिति पूर्वान्वितम् ॥ १८ ॥ १९ ॥ २० ॥ इदमनेन वादं कुरुतेतिवाक्यं हास्यरसमेति हास्यास्पदं भवति । वृ० इंद्रवज्रा ॥ २१ ॥ अणुवया अल्पवयस्कः । वयः समानान्तत्समानवयस्कान् शिष्यान् एतस्य लोलटपुत्रस्य तैः शिष्यैः सह वादो भवतु ॥ २२ ॥ लोलटिः

लोलटपुत्रः मम पंडितैः सह साम्यं नास्त्येव अत्र दृष्टांतः केतकीवृक्षस्य महद्भिः पत्रैः सहाल्पस्य पत्रस्य पुष्पगतस्य समत्वं हीति निश्चयेन नास्ति तथा लघो र्मम तैः पंडितैस्तुल्यत्वं नास्तीत्यर्थः॥२३॥यद्वाक्यतो लोलटवाक्येन वो युष्मान्प्रति अन्नदाताऽश्रयप्रदोयं नृपो बभूव तत्पुत्रोहं मूर्खैस्तिरस्कृतोस्मि उपकारके पुत्रात्मनि लोलटे मयि अपकुर्वतामेतेषां कृतघ्नत्वेन भाषणानर्हत्वमस्तीत्यर्थः ॥ २४ ॥ बालादपि सुभाषितग्राहिणां युष्माकं न मत्कृतपराजयेन

न भाषणार्हाश्च मयापि यूयं बाल्यान्मुधा मत्पितरं द्विषंतः ॥ यद्वाक्यतो वस्तु नृपोन्नदाता तिरस्कृतस्तस्य सुतोऽहमज्ञैः ॥ २४ ॥
ग्राह्यं हि बालादपि चेत्सुवाक्यमज्ञाय पूर्वोक्तमिदं भवद्भिः ॥ मौढ्यात्कृता मेऽद्य तिरस्कृतिर्हि पराजयः स्यान्महतां न बालात् ॥
॥ २५ ॥ श्रुत्वेति बालोक्तमपि प्रगल्भं सर्वे गताभा इव तेजसास्य ॥ खद्योततुल्यास्तु दिवाकराग्रे नृपेण दृष्टाः सदसि स्थितेन ॥
॥ २६ ॥ तं चाथ संपूज्य नृपोंऽशुकाद्यैः संस्थाप्य मातंगवरे नगर्याम् ॥ संभ्रामयन्वाद्यनिनादपूर्वं नाम्नाह मातंगदिवाकरेति ॥
॥२७॥ दिवाकराभोऽयमभूत्सभायां खद्योततुल्याश्च बुधाः समस्ताः ॥ मातंगवर्यास्थितिसत्कृतोऽत्र ततोस्तु मातंगदिवाकराख्यः ॥
॥ २८ ॥ सत्कृत्य राजा तमनेकधाथ संप्रैषयल्लोलटमात्मदूतैः ॥ पितागतं पुत्रमभीक्ष्य लोभान्नमंतमुत्थाप्य समालिलिंग ॥ २९ ॥
श्रुत्वाखिलं वृत्तममुष्य दूतैस्तुष्टस्ततो लोलटसंज्ञकोऽस्मै ॥ दीक्षां च दत्त्वाखिलमंत्रपूर्णां चक्रेऽस्य मातंगदिवाकराख्याम् ॥ ३० ॥
श्रीराजमातंग्यभिधाप्रसादाद्यः ख्यात उर्व्यां तु दिवाकराभः ॥ ततस्तु मातंगदिवाकराद्यानंदः प्रसिद्धोऽत्र परंपरायाम् ॥ ३१ ॥
उपास्तिदार्ढ्येन बभूव सिद्धो दामोदरायाह रहस्यकं यः ॥ गुरुं तु मातंगदिवाकरं षड्विंशोत्तरं पूर्णशतं नताः स्मः ॥ ३२ ॥

लघुत्वमित्यर्थः ॥ २५ ॥ २६ ॥ तं लोलटपुत्रं मातंगवरे गजेंद्रे संस्थाप्य ॥ २७ ॥ मातंगदिवाकराभिधानार्थमाह दिवाकरेति । मातंगवर्ये याने आस्थितिः उपवेशनं तेन सत्कृतः पूजितः अत्र नगर्याम् ॥ २८ ॥ आत्मदूतैः सह पिता लोलटः ॥ २९ ॥ दूतैर्दूतमुखैः वृत्तं पंडितपराभवादि अस्मै पुत्राय ॥ ३० ॥ तत्रत्यापि दीक्षाविधौ पूर्वोक्तं नाम कृतवानित्याह श्रीति । मातंग्यभिधायाः श्यामायाः प्रसादात् ॥ ३१ ॥ षड्विंशत्यधिकशतसंख्यं

मातंगदिवाकरानंदं प्रणमति उपास्तिदार्ढ्येनेति स्पष्टम् ॥ ३२ ॥ सिद्धिं गते इति गुरौ लोलटे ॥ ३३ ॥ ३४॥ एकदेत्युत्तरान्वयि अत्र सरसि ॥ ३५॥ शुक्रे शुक्रवारे ॥ ३६ ॥ अस्माकं मध्ये ॥ ३७ ॥ अप्सु रोहंतीत्यब्रूंहि तेषाम् अब्रुहां कमलानां श्रुत्वेत्युत्तरान्वितम् ॥ ३८ ॥ कृतावश्यकः कृताह्निकः

श्रीदेशिकेंद्र उवाच ॥ सिद्धिं गते गुरौ सोऽथ श्रीमातंगदिवाकरः ॥ शिष्येभ्योऽध्यापयामास बहुविद्याः पृथक्स्वयम् ॥ ३३ ॥ अध्यापयंश्च सततं नित्यपूजां सुभक्तितः ॥ चकार ललितांबाया आगमोक्तप्रकारतः ॥ ३४ ॥ एकदा स गतः शिष्यैः संध्यां कर्तुं सरोवरम् ॥ रवेरस्तेऽथ दृष्ट्वात्र कमलानि लसंति च ॥ ३५ ॥ शिष्यानाहेति कमलैः सहस्रैर्नामभिर्मया ॥ किलार्चनीया श्रीचक्रे श्वः शुक्रे परदेवता ॥३६॥ पूर्तिश्चेत्कमलानां हि भवद्भिः क्रियतेऽखिलैः ॥ शिष्याश्चाहुः किलास्माकं कस्तवाज्ञां हि लंघयेत् ॥ ३७ ॥ अब्रुहां पूर्तिरस्माभिर्यत्नतः क्रियतेऽखिलैः ॥ श्रुत्वेति मुदितः शिष्यैः श्रीमातंगदिवाकरः ॥ ३८ ॥ गेहं गतस्ततः प्रातः कृतावश्यः सरो ययौ ॥ स्थितः स्वयं सरस्तीरे गत्वा शिष्याः सरोंततः ॥ ३९ ॥ छित्त्वांबुजानि संगृह्य ययुः सर्वे गुरोः पुरः ॥ एकीकृत्य पृथक्स्थानि गणितान्यखिलानि तैः ॥ ४० ॥ सहस्रपूर्तिर्नैवासीद्गुरुः प्राह तदाखिलान् ॥ पुनरानीयतां गत्वा कमलानि प्रपूर्तये ॥ ॥४१॥ तेऽथाहुर्नैव संत्यत्र कमलानि क्वचित्प्रभो ॥ गुरुश्चिंतान्वितोऽथाह किं कार्यमिति चाखिलान् ॥ ४२ ॥ तावत्केचिद्गुरुं प्राहुः शिष्याः स्वामिन्सुदूरतः ॥ दृश्यंते कमलान्येव पर्वतस्य भृगोरधः ॥४३॥ इतो गंतुं जलं भूरि दुर्गमोस्ति ततो भृगुः ॥उपायस्तत्र गमने कल्पनीयोऽखिलैरिह ॥४४॥ केचिदाहुर्दूरवारामानंत्यात्र गतिस्त्वितः ॥ गिरेरूर्ध्वं ततो गत्वा बद्ध्वा दामानि वृक्षतः ॥ ४५ ॥

गत्वेत्युत्तरान्वयि ॥ ३९ ॥ ४० ॥ प्रपूर्तये सहस्रसंख्यापूर्तये ॥ ४१ ॥ अत्र सरोवरे ॥ ४२ ॥ सुदूरतः बहुदूरजले भृगोः 'कडा' इति प्रसिद्धस्य 'प्रपातस्त्वतटो भृगुः' इत्यमरः ॥ ४३ ॥ तत्र कमलसमीपे ॥ ४४ ॥ दूरवारां दीर्घोदकानां इतः समीपे गंतुं न शक्यते उत्तरार्द्धमुत्तरान्वयि । वृक्षतः

वृक्षे ॥ ४५ ॥ तैर्दामभिः आनीयंताम् अस्माभिरित्यर्थः इत्याद्युत्तरान्वयि ॥ ४६ ॥ ४७ ॥ व्यस्तपतिततीक्ष्णपाषाणयुक्तम् अक्षितः नेत्रैरधो द्रष्टु मयोग्यमिति भृगुविशेषणानि पूर्वबद्धानि ॥ ४८ ॥ दामभिर्दुर्गं दुर्गमम् ॥ ४९ ॥ एकतमः कश्चिच्छिष्यः ॥५०॥ भवद्भिरल्पापि चिंता न कार्या यन्मया कर्तव्यमुच्यते तद्भवद्भिः क्रियते चेत्तर्हि कमलानि मयानीयंते । ननु तत्र तव पतनं स्यादितिचेत्तर्हि गुरुसेवया निमित्तभूतया मे कुतो भयं स्यान्न

तैः शनैर्भृगुमुत्तीर्यानीयंतां कमलान्यथ ॥ इत्युक्त्वा यत्नतो ग्रामाद्दामान्यानीय तेऽखिलाः ॥ ४६ ॥ सरस्तीरेणैव ययुः कृच्छ्रादूर्ध्वं गिरेस्तु ते ॥ पश्चाद्भृगुं ते ददृशुर्भयदं गंतुमक्षमम् ॥ ४७ ॥ लघुकंटकवृक्षाढ्यं व्यस्ततीक्ष्णाश्मभिर्युतम् ॥ अत्युच्चमूर्ध्वतोऽधस्ता द्द्रष्टुमप्यक्षितोऽक्षमम् ॥ ४८ ॥ दुर्गं भृगुमवेक्ष्येत्थं दामभिश्च तदाखिलाः ॥ मिथः प्राहुर्वतास्माभिः किं कार्यमधुनाखिलैः ॥ ४९॥ वक्तव्यं किं च गुरवे सहस्रांबुजपूर्तये ॥ इति जल्पत्सु सर्वेषु तावदेकतमोऽब्रवीत् ॥ ५० ॥ कार्या न चिंतात्र भवद्भिरल्पाऽनीयंत एकेन मयांबुजानि ॥ चेद्वाक्यमेकं क्रियते भवद्भिर्भीः स्यात्कुतो वै गुरुसेवयैव ॥ ५१ ॥ बद्ध्वोदरं मे सुदृढेन दाम्ना दीर्घेण धृत्वो र्ध्वमथाखिलैस्तत् ॥ निक्षेपणीयोऽहमधः शनैश्च यथा न बंधात्पतनं हि मे स्यात् ॥ ५२ ॥ श्रुत्वेति सर्वैः स तथैव बद्धो क्षिप्तस्तदा सोथ भृगोरधस्तात् ॥ स्मरन्हृदा देशिकपादयुग्मं तान्प्राह वो मास्तु मदीयचिंता ॥५३॥ धृत्वागमूलानि दृढं कराभ्यां क्षिपन्पदाग्रे क्वचिदश्मसंधौ ॥ शनैः क्षिपद्भिस्त्वखिलैः स दाम्ना धृतः शनैः प्राप्त इतोंबुमध्ये ॥ ५४ ॥ तत्रास चाल्पं जलमंबुजानि यत्रासुरेतानि बहूनि छित्त्वा ॥ बद्ध्वा शुकेनेक्षति पृष्ठतोसावूर्ध्वं तथा तैः स निरीक्षितोधः ॥ ५५ ॥

कुतोपीत्यर्थः । इंद्रवज्रावृत्तम् ॥५१॥ यद्भवद्भिः कर्तव्यं तदाह । बद्ध्वेति । तद्दाम सर्वैर्धृत्वा शनैरधो अहं निक्षेपणीयः यथा बंधात्कटिस्थरज्जुबंधनान्मे पतनं न स्यात्तथा विसर्जनीय इत्यर्थः ॥ ५२ ॥ ५३ ॥ अगमूलानि वृक्षमूलानि पादाग्रे पाषाणसंधौ निक्षिपन् शनैर्विसृजद्भिः शिष्यैर्दाम्ना धृतः सन्नितः पर्वताग्रात्सकाशादुदकमध्ये स गुरुभक्तः प्राप्तः शनैरिति द्विरुक्त्या सर्वविशेषणेषु शनैः पदसंबंधः ॥ ५४ ॥ तत्राधोभागे वस्त्रेण पृष्ठे बध्वा ऊर्ध्वगमनार्थमूर्ध्व

शिष्याश्रितपर्वताग्रमसौ पश्यति तथा तैरधोभागेऽसौ दृष्ट इत्यर्थः ॥ ५५ ॥ बहुकमलप्राप्त्या संतोषयुक्तैः ॥ ५६ ॥ स्रवदस्रं स्रवद्रक्तं त्वग्वसनाभ्यां सह क्षतांगं छिन्नदेहं भिन्नत्वग्वस्त्रमित्यर्थः । किमेतत्कर्म सर्वैः सुखं स्थित्वा कृतं यतोऽयमेवैको हतः घातितोऽस्ति ॥ ५७ ॥ नोऽस्माकम् । धीरैर्भाविचिंता न कार्या हि यस्माद्भावि अवश्यं भावि तदीश्वरैरपि दुर्निवार्यमस्ति ॥ ५८ ॥ अस्माकं सर्वापराधान् ॥ ५९ ॥ तं कमलहर्त्तारं बलिनः शिष्यस्य पृष्ठे अंगेषु

तैः कर्षितोथ त्वरयैव दाम्ना संतोषयुक्तैर्बहुपंकजाप्त्या ॥ तीक्ष्णाश्मभिः कंटकगुल्मपुंजैर्विघर्षितः प्रापित ऊर्ध्वमेव ॥ ५६ ॥
दृष्ट्वाखिलास्तं स्रवदस्रमंगैर्निश्चेष्टितं त्वग्वसनक्षतांगम् ॥ प्राहुर्मिथः किं कृतमेतदज्ञैः स्थित्वाखिलैः स्वस्ति हतोऽयमेकः ॥ ५७ ॥
किं शिक्षयिष्यत्यथ नो गुरुर्वा दुरत्ययं दास्यति शापमेव ॥ धीरैर्न कार्या खलु भाविचिंता ह्यलंघ्यमीशैरपि यच्च भावि ॥ ५८ ॥
संदर्शनीयो गुरुरेव शीघ्रं सरस्तटे तिष्ठति योऽस्मदर्थे ॥ दयालुरस्मान्निखिलापराधान्क्षंतुं समर्थोऽस्ति स एव नान्यः ॥ ५८ ॥ अथा
खिलास्तं परिमार्ज्य वस्त्रैः किंचिच्छ्वसंतं बलिनश्च पृष्ठे ॥ बद्ध्वाऽगृहीत्वा कमलानि चापुर्भयान्विताः श्रीगुरुमंगकंपाः ॥ ६० ॥
नत्वा तमग्रे कमलानि चास्य निधाय वृत्तं निखिलं तदोक्त्वा ॥ तं दर्शयित्वा गुरवे विचेष्टं स्थिताः पुरो बद्धकराः सुनम्राः ॥ ६१ ॥
दृष्ट्वेति मातंगदिवाकरस्तं सुविह्वलः श्रीगुरुपादुके च ॥ स्मरञ्जलं स्वीयकमंडलुस्थं सिषेच सन्मंत्रितमेतदंगे ॥ ६२ ॥ तावत्स पूर्वो
पम उत्थितश्च पश्यत्सु सर्वेषु ननाम मूर्ध्ना ॥ श्रीदेशिकं प्राह च दुर्लभा ते सेवैव देहस्तु भवेभवेऽपि ॥ ६३ ॥ अथाह सर्वान्गुरुर
स्य भक्तिर्दृष्टा भवद्भिः कृततुच्छदेहा ॥ सर्वत्र नास्याः स्थितिरात्तपुण्यैर्भवैरनेकैः किल लभ्यतेऽसौ ॥ ६४ ॥

कंपो येषां ते ॥ ६० ॥ ६१ ॥ तं शिष्यं सन्मंत्रैरभिमंत्रितं जलम् । एतदंगे व्यथितशिष्यशरीरे ॥ ६२ ॥ तव सेवा दुर्लभाऽस्ति देहस्तु जन्मजन्मनि लभ्येत गुरुसेवाऽतिदुर्लभेत्यर्थः ॥ ६३ ॥ कृततुच्छदेहा कृतः कर्मणि गुरुसेवारूपे तुच्छः तिरस्कृतो देहो यस्यामस्या गुरुभक्तेः आत्तपुण्यैः आत्तं संपादितं

पुण्यं येषु तैरनेकजन्मार्जितपुण्यैरित्यर्थः असौ गुरुभक्तिर्लभ्यते ॥ ६४ ॥ चतुर्थ्यां श्रीमात्रे नम इत्यादि चतुर्थ्यन्तोच्चारणेन ॥ ६५ ॥ तस्मै कमलसंपादकाय कजार्थं कमलप्राप्त्यर्थं ॥ ६६ ॥ सप्तविंशत्यधिकशतसंख्यं दामोदरानंदं प्रणमति प्राताख्य इति प्राप्तनामा ॥ ६७ ॥ कुलीनया स्त्रिया सह॥६८॥

ज्ञात्वांबुजानां तु सहस्रपूर्तिं गुरुर्ययौ शिष्ययुतः स्वगेहम् ॥ चकार देव्यर्चनमंबुजैस्तैः सहस्रनामानि वदंश्चतुर्थ्या ॥६५॥ दीक्षां ददौ भक्तिमते च तस्मै शुभे मुहूर्तेऽखिलमंत्ररूपाम् ॥ दामोदरेत्यस्य स नाम चक्रे यः स्वोदरे दाम दधौ कजार्थम् ॥६६॥ प्राताख्य इत्थं गुरुसेवयाद्धा ख्यातो बभूवाथ गुरोः प्रसादात् ॥ तं सप्तविंशत्यधिकं शताख्यं दामोदरानंदगुरुं नताः स्मः ॥ ६७॥ अथ दामोदरानंदो गृहीत्वाज्ञां गुरोर्ययौ ॥ स्वगेहं हि ततः पित्रा कृतोद्वाहः कुलीनया ॥६८॥ सदैवाध्ययनं कुर्वन्गुरोः पादांबुजं स्मरन् ॥ अन्यांश्चाध्यापयामास शिवार्चनपरायणः ॥ ६९ ॥ कालतः पितरौ तस्य परं प्राप्तौ ततः स्वयम् ॥ आसीत्पत्न्यान्वितो गेहे शिष्यैश्चाध्ययनार्थिभिः ॥ ७० ॥ सदात्मलाभसंतुष्टो यदृच्छालब्धजीविकः ॥ बभूव तस्य पुत्रोऽथ शुभलक्षणलक्षितः ॥ ७१ ॥ जातषण्मासको बालो रिंगमाणोतिचंचलः ॥ एकाकिनी गृहे माता बालसंगोपनेऽक्षमा ॥ ७२ ॥ कुर्वंतोऽपि सदाधीतिं शिष्याः संपालयंति तम् ॥ स्तन्यमात्रं पिबन्मातुः सदा शिष्यांतिके शिशुः ॥ ७३ ॥ आसीच्चाध्ययनं शृण्वंस्ततोऽन्यन्नास्य कर्णगम् ॥ शिष्यास्तं लालयामासुः सदा गीर्वाणभाषया ॥ ७४ ॥ ततोऽथाब्दवयाः किंचिद्वभाषे भाषया तया ॥ संपूर्णेऽथ द्वितीयेऽब्दे चावदद्विशदाक्षरैः ॥ ७५ ॥ याच्यमानोऽन्नपेयादि नान्यां भाषां वदत्यसौ ॥ संपूर्णेथ तृतीयेऽब्दे यद्यच्चाध्ययनं श्रुतम् ॥ ७६ ॥ तत्तत्प्राह मुखेनैव श्रवणात्सकृदेव हि ॥ पिता बालस्य चापल्यं दृष्ट्वा प्राहाखिलानिति ॥ ७७ ॥

अन्यान्शिष्यान् ॥ ६९ ॥ ७० ॥ पूर्वार्द्धे पूर्वान्वयि ॥ ७१ ॥ आसीदित्यध्याहारः ॥ ७२ ॥ अधीतिमध्ययनं तं दामोदरपुत्रं स्तन्यं दुग्धमित्युत्तरान्वयि ॥ ७३ ॥ ततः अध्ययनशब्दात् अन्यद्वालकर्णगतं नासीत् ॥ ७४ ॥ अब्दवयाः एकवर्षवयस्कः तया संस्कृतभाषया ॥ ७५ ॥ उत्तरार्द्धमुत्तरा

न्वयि ॥ ७६ ॥ ७७ ॥ तत उपनयनात् ॥ ७८ ॥ वेदोच्चारणे अधिकारप्रापिकाम् ॥ ७९ ॥ वसंततिलकावृत्तम् ॥ ८० ॥ अंजः अनायासेन दधौ धृतवान् ॥ ८१ ॥ सनाथः श्रुतधरादिसुखः श्रुतधरानंदनाथ इत्यर्थः ॥ ८२ ॥ अष्टाविंशत्यधिकशतसंख्यं श्रुतधरानंदं प्रणमति य इति । श्रुताद्यं धरं श्रुतधरम् । उपजातिवृत्तम् ॥ ८३ ॥ सर्गोक्तमातंगदिवाकरादिगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह कथा इति । शत्रुभ्यो जयं गुरुप्रसादं विद्वत्त्वं च भक्त्या

अहो नास्य कृतं चौलं चौपनीतिस्ततः पुरा ॥ वेदमंत्रांश्च वक्त्येष कथं कार्यं किलाधुना ॥७८॥ गर्भतः पंचमेऽब्देथ प्रारब्धे त्वरया पिता ॥ उपनीतिं चकारास्य वेदोच्चाराधिकारदाम् ॥ ७९ ॥ अध्यापयत्यहरहः सकलांश्च शिष्यान्यद्यत्पिता तदखिलं श्रवणात्सकृद्धि ॥ धृत्वा धिया पठति सम्यगसौ कुमारो नाध्यापितुं तमणुरास पितुः प्रयासः ॥ ८० ॥ वेदान्हि शास्त्रसहितान्निखिलानि तंत्राण्यंजो दधौ सदितिहासपुराणगाथाः ॥ यल्लौकिकं च सकलैः कथितं स्ववृत्तं श्रुत्वा सकृच्छ्रुतधरं तमथाहुरार्याः ॥ ८१ ॥ ख्यातः क्षितौ श्रुतधरोऽथ बभौ प्रगल्भश्चक्रे विवाहमथ तस्य पिता सुपत्न्या ॥ दीक्षां ददौ सकलमंत्रमयीं च तस्मै नाम्ना कृतः श्रुतिधरादिसुखः सनाथः ॥ ८२ ॥ योल्पे वयस्येव दधौ श्रुतं हि यद्वैदिकं लौकिकमप्यथाजः ॥ तमष्टविंशत्यधिकं शताख्यं धरं श्रुताद्यं गुरुमानताः स्मः ॥८३॥ कथास्तु मातंगदिवाकराद्यो गुरुत्रयस्यापि पुमाञ्छृणोति ॥ जयं ह्यरिभ्यश्च गुरोः प्रसादं विद्वत्त्वमप्याशु लभेत भक्त्या ॥ ८४ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे मातंगादिगुरुत्रयकथावर्णनं नामाष्टमः सर्गः ॥ ८ ॥ श्रीदेशिकेंद्र उवाच ॥ आसीच्छ्रुतधरानंदः सिद्धिं प्राप्ते गुरौ गृहे ॥ पत्न्याढ्यो निःस्पृहः शांतश्चात्मवान्सर्ववित्तमः ॥ १ ॥ एकस्माद्वा बहुभ्यश्च सकृदेवाखिलं श्रुतम् ॥ धारयत्यंजसा सम्यगयामित्यस्य भूतले ॥ २ ॥

शीघ्रं लभेत ॥ ८४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे टीकायामर्थस्फूर्त्यभिधायामष्टमः सर्गः ॥ ८ ॥ सर्गे च नवमेऽशीतिपद्यैः प्रोक्ताश्च देशिकाः ॥ चत्वारः शर्मवर्माद्याः सिद्धांत्याः कवयोऽत्र हि ॥ ९ ॥ आसीदिति ॥ १ ॥ अस्य श्रुतधरस्य इति । श्रुतधारणरूपां ख्यातिं श्रुत्वेत्यग्रिमनिबद्धम् ॥ २ ॥

॥ ३ ॥ ४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५ ॥ आत्मतामात्मभावं ज्ञानमित्यर्थः ॥ ६ ॥ अग्रे संप्रदायप्रवृत्त्यर्थं कथामाह शर्मवर्मेति ॥ ७ ॥ ८ ॥ परं शर्म परमानंदः । मम यथा भवेत्तामुयात्तथा भवद्भिरुच्यताम् ॥९॥१०॥ हरीशयोः हरिहरयोः ॥११॥ नृपस्तदखिलं श्रुत्वेत्युत्तरान्वयि ॥१२॥१३॥

ख्यातिं श्रुत्वा ययुस्तस्य दर्शनार्थं सुदूरतः ॥ राजानोऽन्येऽपि ते सर्वे स्वस्ववृत्तं पृथक्पृथक् ॥ ३ ॥ प्राहुर्नानाविधाख्यानैरेकदैव सुविस्तरम् ॥ पुनः पप्रच्छुस्तत्तस्मै सर्वं श्रुतधराय च ॥ ४ ॥ यथाश्रुतं वदत्येष नेषन्न्यूनमथाधिकम् ॥ केचित्षण्मासतो वर्षाद्वित्र्यब्देभ्योप्यनंतरम् ॥ ५ ॥ पुनरेत्य पप्रच्छुस्तं सर्वं प्राह स पूर्ववत् ॥ मुमुक्षूञ्च्छरणं प्राप्तान्सम्यग्वक्ति स चात्मताम् ॥ ६ ॥ शर्मवर्मा नृपोथासीदुत्तरस्यां दिशि प्रभुः ॥ सर्वसंपत्समृद्ध्याढ्यः पुत्रपौत्रसुहृद्वृतः ॥ ७ ॥ भुक्त्वाखिलान्स्वयं भोगान्राज्ये स्थाप्यात्मजं ततः ॥ पप्रच्छसाधून्गत्वासौ मुहुर्नत्वातिनम्रधीः ॥ ८ ॥ लब्ध्वेदं मानुषं जन्म यथा शर्म भवेत्परम् ॥ तथा ममोच्यतां नूनं सुविचार्य दयालुभिः ॥ ९ ॥ इत्थं पृष्टास्तमाहुस्ते केचिद्राजंस्तपः कुरु ॥ तपसैव यतः पूर्वं सिद्धिं प्राप्ता महर्षयः ॥ १० ॥ प्रशशंसुः परे दानं तीर्थयात्रामथापरे ॥ केचिद्यज्ञादिकर्माणि नामान्येके हरीशयोः ॥ ११ ॥ कलौ नाम्नैव सिद्धिः स्यादित्थमाहुः पुरातनाः ॥ केचिद्योगं परे मुद्राः श्रुत्वा तच्चाखिलं नृपः ॥ १२ ॥ न मेने शर्मदं किंचित्सुधीश्चातिविचारवान् ॥ ययौ श्रुतधरानंदं भ्रमन्दैवात्स भूपतिः ॥ १३ ॥ तपःकांतियुतं शांतं दृष्ट्वा श्रुतधरं नृपः ॥ नत्वेत्याहाथ मे ब्रूहि नृदेहे शर्म चाक्षयम् ॥ १४ ॥ श्रुत्वेत्याह श्रुतधरस्तं नृपं विनयान्वितम् ॥ संतुष्टः संस्मरंश्चित्ते श्रीगुरोः पादुके मुहुः ॥ १५ ॥ श्रीश्रुतधर उवाच ॥ धन्योसि लब्ध्वात्र नृदेहमाद्यं त्वं पृच्छसे भूप यतोद्य शर्म ॥ आयांत्यनेकाश्च मदीक्षणाय पृष्टं न केनापि हि शर्म मह्यम् ॥ १६ ॥

शर्म सुखं सुखप्राप्तिम् ॥ १४ ॥ १५ ॥ धन्योसीति । हे नृप अत्र कर्मभूमौ आद्यं ज्ञानसाधनत्वेन श्रेष्ठं मनुष्यदेहं लब्ध्वाऽद्य शर्म पृच्छसे यतः अतस्त्वं धन्योऽसि मदीक्षणाय मद्दर्शनायानेकजनाः यद्यपि आगच्छंति तथापि केनापि मह्यं शर्म न पृष्टम् अतस्त्वं धन्य इत्यर्थः । इंद्रवज्रावृत्तम् ॥ १६ ॥

अयं देह एवात्मास्तीति मत्वा सर्वे तस्यैव सुखार्थं प्रयतंते अहो महदाश्चर्यं नाशवद्भिः स्त्र्याद्यैः सह देहनाशं पश्यंतोपि ते न पश्यंति किल॥ १७॥स्वर्गोऽपि तादृक् देहवच्चिरकालेन नाशं गच्छति तस्मात्स्वर्गात् स्तंबादिकाजांतं ब्रह्मादिस्तंबपर्यंतम् " तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । परस्यांते कृतात्मानः प्रविशंति परं पदम्" इत्यादिश्रुतिस्मृतिषु स्वर्गसहितब्रह्मादिस्तंबपर्यंतानां क्षयिष्णुत्ववर्णनेन न तदास्थाकरणं युक्तमित्यर्थः॥ १८॥ यस्मादेवं नाशगामि तस्मात् देहप्रीत्या देहिनामिह लोके परलोके च शर्म न भवेदेव यो देहादन्यदात्मतत्त्वं वेत्ति

देहोऽयमात्मेत्यखिलाश्च मत्वा तस्यैव शर्मार्थमहो यतंते ॥ स्त्रीपुत्रवित्तैरपि नाशवद्भिः पश्यंति किं नाऽखिलदेह नाशम् ॥
॥ १७ ॥ स्वर्गोऽपि तादृक्चिरनाशगामी पतंति तस्मादपि भुक्तपुण्याः ॥ स्तंबादिकाजांतमपि क्रमेण यात्येव नाशं खलु कालगत्या ॥ १८ ॥ तस्मान्न शर्माखिलदेहभाजामिहापरत्रापि च देहसौख्यात् ॥ यो वेत्ति देहात्परमात्मतत्त्वं कैवल्यशर्माऽक्षयमेष भुंक्ते ॥ १९ ॥ न तत्तपोभिर्नियमैश्च वेद्यं न तीर्थयात्राभिरनेकदानैः ॥ न केवलैर्नामसुकीर्तनैश्च नूनं सतां तत्तु कृपैकवेद्यम् ॥ २० ॥
श्रुत्वेति नत्वा मुहुराह राजा श्रीदेशिकं मे भगवन्वद त्वम् ॥ तच्चात्मतत्त्वं शरणागताय श्रुत्वेति सोऽप्याह दयान्वितोऽथ ॥ २१ ॥
श्रुतधरानंद उवाच ॥ देहेंद्रियप्राणमनोधियां यः पारोक्ष्यसाक्षी सविता यथाह्नाम् ॥ तदुद्भमांतस्थितिमुख्यहेतुस्त्रयं न तेषां हि विनामुनैतत् ॥ २२ ॥

स एषोऽक्षयं कैवल्यसुखं भुंक्ते । देहादिविषयनैरपेक्ष्येणैव निर्निमित्तानंदप्राप्तिरित्यर्थः ॥ १९ ॥ ॥ नन्वेतादृशसुखप्राप्तिः केन साधनेन भवतीत्यत आह नेति । तत् शर्म ॥२०॥ स श्रुतधरः ॥ २१ ॥ तत्रादौ जगज्जन्मादिकारणं साक्षिस्वरूपमाह देहेति । पारोक्ष्येणौदासीन्येन साक्षी द्रष्टा अह्नां दिवसानां तद्गतपदार्थानां वा द्रष्टा सूर्य इव । तेषां दिवसानां देहादीनां च उद्भमांतस्थितिषु उत्पत्तिस्थितिलयेषु मुख्यहेतुरसाधारणकारणं यस्तेनाऽमुना सूर्येणात्मना च

विना तेषामहोरात्रादीनां देहादीनां चैतन्यम् उत्पत्त्यादिकं न भवतीत्यर्थः ॥ २२॥ परस्परं विरुद्धासु जाग्रदाद्यवस्थासु तुरीयं त्रिषु संततमित्यविरुद्धमात्मतत्त्व मुपदिशति वेत्तीति यश्च जागृतौ स्वविषयानिंद्रियैर्जानाति स्वप्नेपि मनःस्थैर्मनोमात्रविलसितैरिंद्रियैर्मनोमात्रविलसितान्रथादिविषयान्पश्यति । अथ तत्प्रलये सेंद्रियमनोनाशे सति यः साक्षात्सुषुप्तिसंबंधिसुखमनुभूय जागृतौ सुखमहमस्वाप्सं न किंचिदप्यवेदिषमिति वक्ति जनानिति शेषः । तथा चावस्थात्रयेपि अखंडात्मस्थितिरित्यर्थः ॥ २३ ॥ स एवैकोऽनंतः परिच्छेदहीनः सर्वगतो देहादिसंगरहितश्चात्मतया सोऽहमस्मीत्यभेदेन ज्ञेयः त्वया ज्ञातव्यः दृश्यनाशेऽपि मेघपंक्तिनाशेऽपि आकाशवदक्षयो नाशरहितोऽस्ति ॥ २४ ॥ किं चैकः स मायोत्थगुणैः सृष्ट्यादिकालोत्पन्नसृष्ट्यादिभिर्वायुवेगैस्तरंगयुक्तः समुद्र इव विश्व

वेत्तींद्रियैर्जागरणेऽखिलार्थान्स्वप्नेपि पश्यत्यथ तैर्मनःस्थैः ॥ सुप्तेः सुखं तत्प्रलयेऽपि योद्धाऽनुभूय वक्त्येव हि जागृतौ तत् ॥ ॥२३॥ ज्ञेयः स एवात्मतया किलात्मा ह्येकोऽप्यनंतोऽखिलगोप्यसंगः ॥ दृश्ये विनष्टेऽपि सदाक्षयोऽयं व्योमेव मेघावलिसंक्षयेपि ॥ ॥ २४ ॥ एकः स मायोत्थगुणैर्विभाति विश्वाकृतिश्चोर्मियुतो यथाब्धिः ॥ वायोर्जवैरेव ततः पृथङ्नो किलात्मनो विश्वमिवोर्मयोऽब्धेः ॥ २५ ॥ इत्थं तमात्मानमनंतमेकं ज्ञात्वाघपुण्यैर्न विलिप्यसेऽत्र ॥ तदुत्थदुःखैश्च सुखैश्च राजन्कैवल्यशर्माक्षयमेव लब्ध्वा ॥ २६ ॥ श्रुत्वेति तुष्टो नृपतिस्तदुक्तं शर्मैव मेनेऽथ गुरुश्च तस्मै ॥ दीक्षां ददौ नाम च शर्मवर्मानंदं चकारास्य गतभ्रमस्य ॥ २७ ॥ कल्याणवाचकं शर्म शिवं चाथ परं शिवम् ॥ शर्ममाहुस्ततोस्याख्या शर्मवर्मेत्यभूत्पुरा ॥ २८ ॥

रूपो भाति । ततः कारणादात्मनः सकाशादब्धेरूर्मय इव विश्वं पृथङ् नास्त्येव तथा चायं प्रयोगः विश्वम् आत्मरूपं तदाश्रितत्वात् यद्यत्राश्रितं तत्तदात्मकमेव यथा समुद्राश्रितास्तरंगाः समुद्रात्मका इति । तस्मात्सर्वत्र सर्वदात्मैव सच्चिदानंदरूपः सन्पृथक्पृथङ्नामरूपादिना प्रकाशत इत्यर्थः ॥ २५ ॥ इत्थमेवं प्रकारेणाघपुण्यैः पापपुण्यैः । अत्र देहे लोके वा तदुत्थैः पापपुण्योद्भवैः सुखदुःखैश्च न लिप्यसे । कैवल्यरूपं शर्म सुखं ब्रह्मानंदमित्यर्थः ॥ २६ ॥ मेने आत्मरूपत्वेन निश्चितवान् । अथ गुरुः दीक्षां पूर्णाभिषेकरूपाम् ॥२७॥ यतः शर्मशर्वशब्दयोरेकार्थवाचित्वं ततः परा द्वितीया आख्या शर्वः परशिवः

तत्सुखं वा वर्म कवचमिव संसारभयाद्रक्षकं यस्येति नामद्वयमित्यर्थः ॥२८॥ एकोनविंशोत्तरशतसंख्यं शर्मवर्मानंदं प्रणमति । पृच्छन्निति ॥ २९ ॥ ३० ॥ सपुत्र इति । द्वयोरन्वयः ॥ ३१ ॥ अत्र मठे तद्योग्यभोग्यं तस्मै राज्ञे योग्यं भोग्यमन्नवस्त्रादि । सेवकांश्च संस्थाप्य ततः स्थानाययौ स्वनगरमित्यर्थः॥

पृच्छन्य इत्यक्षय शर्म सद्यः ख्यातोऽभवद्वै भुवि शर्मवर्मा ॥ तं सिद्धवर्यं हि शतोर्ध्वमूनत्रिंशोन्मितं स्वीयगुरुं नताः स्मः ॥ २९ ॥ श्रीदेशिकेंद्र उवाच ॥ शर्मवर्मानंदनाथोऽथावसद्गुरुसंनिधौ ॥ स्वराज्यात्तस्य पुत्रोऽपि द्रष्टुं स्वपितरं ययौ ॥ ३० ॥ स गुरुं शर्मवर्माणं नत्वा संपूज्य भूमिपः ॥ पितरं सिद्धतां प्राप्तस्ततः शिल्पिभिरुन्नतम् ॥ ३१ ॥ मठं तस्य निवासाय कारयित्वात्र चाखिलम् ॥ तद्योग्यभोग्यं संस्थाप्य सेवकांश्च ययौ ततः ॥३२॥ तत्रावसच्छर्मवर्मा भुंजन्भोगांश्च निःस्पृहः ॥ चक्रे शिवार्चनं शांतो जपन्मंत्रांस्तथाखिलान्॥३३॥बभूव सिद्धमंत्रोऽसौ प्रसिद्धो धरणीतले ॥ अथासीद्ब्राह्मणः कश्चित्सर्वविद्याविशारदः ॥३४॥ काव्यं नानाविधं चक्रे सुरसं सदलंकृति ॥ तथापि नासीत्तत्काव्यं कस्याप्यंतःसुदोषदम् ॥ ३५ ॥ रसज्ञमपि राजानं गत्वा कौशल्यतः कविः ॥ तन्नामगुणशौर्याढ्यं तदौदार्यप्रशंसनम् ॥ ३६ ॥ स्वकाव्यं तत्पुरो वक्ति सार्थं मधुरया गिरा ॥ तथापि न ददौ सोऽपि कवयेऽस्मै कपर्दिकाम् ॥ ॥ ३७ ॥ इत्थं भ्रमन्बहून्देशान्सकुटुंबोपजीवकम् ॥ अप्यर्थं न क्वचिल्लेभे सदा दारिद्र्यपीडितः ॥ ३८ ॥ स कविः स्वतनोस्त्यागे मतिं कृत्वा भ्रमन्क्वचित् ॥ देवालयमथापश्यदंबिकायास्तु निर्जनम् ॥ ३९ ॥ देव्यग्रतो महावाप्यां स्नात्वैवार्द्रांशुकोऽस्वपत् ॥ त्यक्तपानाशनो यावत्त्र्यहोरात्रं ततोऽबिका॥४०॥अदृश्यैव तमाहेति त्वं गत्वा शर्मवर्मणः॥मठं तस्मान्महामंत्रान्गृहाणादौ सुसिद्धिदान्॥४१॥

॥३२॥ तत्र पुत्रनिबद्धमठे ॥३३॥ अग्रे संप्रदायप्रवृत्तिमाह अथादिना ॥३४॥ सुरसमुत्तमरसयुक्तं अलंकारयुक्तम् ॥ ३५ ॥ रसज्ञमिति सार्धान्वयः । कौशल्यतः कुशलतया तत्तद्गुणशौर्ययुक्तम् । तेषांतेषां राज्ञामुदारतायाः प्रशंसनं यस्मिन् ॥३६॥ तत्पुरः तदग्रे स राजादिः ॥३७॥ ३८॥ ३९ ॥ तावत्ततो

अविकेत्यर्थे योज्यम् ॥ ४० ॥ ४१ ॥ मंत्रसंस्थिता मंत्राधीना ॥ ४२ ॥ ४३ ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धमग्रगामि ॥ ४४ ॥ अखिलं देवीप्रसादादि ॥ ४५ ॥ ४६ ॥ गोभिलनामार्थमाह गाव इति सार्द्धेन । गा इंद्रियाणि । प्रत्यग्वृत्त्या विषयपरावृत्त्या परमात्मन्यभिलाति अभिगृह्णाति ऐक्यं गमयतीति स गोभिलः स्मृतः ॥ ४७ ॥ किंच यथा सूर्यकिरणास्ततः सूर्यात्पृथङ् न संति ॥ ४८ ॥ तथा च तेषु किरणेष्वैणवारीक्षा

ताञ्जपस्व ततोऽहं ते भविष्येऽखिलसिद्धिदा ॥ स्मृतिमात्रेण दृश्या च यतोऽहं मंत्रसंस्थिता ॥ ४२ ॥ ते मंत्रास्तु गुरौ संति तस्मात्तं शरणं व्रज ॥ इत्थमाज्ञापितो देव्या स कविः संभ्रमन्ययौ ॥ ४३ ॥ शर्मवर्ममठं ख्यातं सर्वसंपत्समावृतम् ॥ तत्रासीनं शर्मवर्मानंदं भूस्थमिवामरम् ॥ ४४ ॥ दृष्ट्वा नत्वाग्रतस्तिष्ठन्वृत्तं प्राहाखिलं कविः ॥ प्रार्थयन्मां निमज्जंतमुद्धरेति भवार्णवे ॥ ४५ ॥ शर्मवर्मा निशम्येत्थं प्रेरितोंऽतः परांबया ॥ ददौ तस्मै महामंत्रान्गणेशादीन्विधानतः ॥ ४६ ॥ गोभिलानंद इत्यस्य नाम चक्रे यथार्थकम् ॥ गावः सर्वाणींद्रियाणि प्रत्यग्वृत्त्या परात्मनि ॥ ४७ ॥ योऽभिलात्यभिगृह्णाति तेनासौ गोभिलः स्मृतः ॥ यथा सूर्यस्य बहवः किरणा न ततः पृथक् ॥४८॥ मृषा तेष्वैणवारीक्षा ह्येवं गोष्वीक्षते जगत् ॥ लब्धनामा गुरोरित्थं महामंत्रान्गुरूदितान् ॥ ४९ ॥ जजाप नियमेनासौ शिवार्चनरतोऽखिलान् ॥ सिद्धमंत्रो बभूवाथ तस्य काव्यं तदाखिलाः ॥ ५० ॥ मेनिरे रुचिरं श्रुत्वा राजानोऽपि मुदान्विताः ॥ तमाहूय प्रयत्नेन श्रुत्वा काव्यमनेकशः ॥ ५१ ॥ आनर्चुरंशुकाद्यैस्तं बहुमानपुरःसरम् ॥ गोभिलोऽभूत्कविः ख्यातः पंडितेष्वपि काव्यतः ॥ ५२ ॥ चक्रे निबंधान्विषयेषु सर्वेष्वप्यस्य चोक्तिस्त्वखिलप्रमाणा ॥ यद्धर्मशास्त्रादिषु सन्निबंधेष्वस्त्येव वाक्यं खलु गोभिलस्य ॥ ५३ ॥

मृगजलदर्शनं मृषा मिथ्यास्ति तथेंद्रियाण्यात्मनः पृथक् न संति तथा च तेषु गोषु कल्पितं जगत्पश्यति स्थूले सूक्ष्मकारणानामुत्तरोत्तराधिष्ठानत्वेन सर्वाधिष्ठानं ब्रह्म पश्यतीत्यर्थः । इत्थमनुभवेन पूर्वोक्तेनेत्युत्तरार्द्धमुत्तरान्वयि ॥ ४९ ॥ अथाद्युत्तरनिबद्धम् ॥ ५० ॥ तमाद्युत्तरान्वयि ॥ ५१ ॥ पूर्वकर्तृकं पूर्वार्द्धम् । काव्यतः काव्यहेतोः ॥ ५२ ॥ सर्वेषु धर्मशास्त्रादिषु अस्य गोभिलस्य निखिलानां सर्वेषां प्रमाणभूता । इंद्रवज्रावृत्तम् ॥ ५३ ॥

त्रिंशदुत्तरशतसंख्यं गोभिलानंदं प्रणमति इत्थमिति ॥५४॥ तस्य गोभिलस्य आसीदिति पूर्वोत्तरार्द्धयोरध्याहारः ॥ ५५ ॥ श्रुत्वेत्याद्युत्तरानिबद्धम् । श्रुतेः कर्णस्य एकवचनं बहुवचनोपलंभकम् ॥५६॥ मावसंज्ञः तेषु शिष्येषु वरः श्रेष्ठः ॥ ५७ ॥ एकत्रिंशोत्तरशतसंख्यं मयूरानंदं प्रणमति इत्थमिति ॥५८॥

इत्थं प्रसिद्धो भुवि काव्यकर्ता मयूरसंज्ञाय ददौ रहस्यम् ॥ त्रिंशोत्तरं तं शतसंख्यमेनं श्रीगोभिलानंदगुरुं नताः स्मः ॥५४ ॥ श्रीदेशिकेंद्र उवाच ॥ मयूरानंदनाथस्तु तस्य शिष्यो महाकविः ॥ यस्य काव्यं तु मधुरं मयूरस्य यथा ध्वनिः॥५५॥श्रोतुं तत्काव्यमायांति राजानः पंडितास्तथा ॥ श्रुत्वा तस्य मुखेनैव काव्यं सुखकरं श्रुतेः॥५६॥ नृपास्तमर्हयामासुः पंडितैश्चानुमोदिताः ॥ शिष्याश्च कवयोऽस्यासुर्माघस्तेषु वरः स्मृतः ॥५७॥ इत्थं प्रसिद्धो मधुरप्रबंधो माघाय यः प्राह रहस्यजातम् ॥ तं चैकत्रिंशोर्ध्वशतं मयूरानंदं गुरुं वै शिरसा नताः स्मः॥५८॥ माघानंदश्च कविराडासीत्ख्यातः कलावथ ॥ यत्काव्यं सुप्रशंसंति निर्दोषमिति चाखिलाः ॥५९॥ एकदा कवयः सर्वे क्वचित्पर्वणि चागते ॥ क्षेत्रराजं प्रयागाख्यं स्वस्वदेशात्समाययुः॥६०॥ एकत्र सदसि स्थित्वा स्वस्वकाव्यानि तेऽखिलाः ॥ प्रशशंसुस्तथान्यस्य काव्ये दोषं ददुर्मिथः ॥६१॥ माघानंदोऽपि तत्रासीत्स्वस्वकाव्यप्रशंसनम् ॥ निंदां च परकाव्यस्य श्रुत्वाप्येषां मिथः स्वयम् ॥६२॥ नैव किंचिदुवाचासौ तूष्णीं मूक इव स्थितः ॥ मिथस्ते कवयः प्राहुः स्वस्वकाव्यप्रशंसिनः ॥६३॥ निंदंतः परकाव्यानि वयं सर्वे तथाप्यसौ ॥ माघानंदः स्वीयकाव्यं न प्रशंसति वा क्वचित् ॥ ६४ ॥ न निंदत्यन्यकाव्यं च ख्यातिस्त्वस्यास्ति सर्वतः ॥ माघानंदः काव्यकर्तेत्यतः सर्वैः किलाधुना॥६५॥अत्रैवास्माभिरेतस्य काव्यं यत्नेन शोध्यताम् ॥ स्थितोऽयं मूकवद्यस्मान्न दोषं वक्ति कस्यचित्॥६६॥तस्मात्सदोषमस्यास्ति काव्यमित्थं मतिर्हि नः॥परेषां दोषकथनात्स्वदोषस्तैश्च कथ्यते॥६७॥

माघानंद इति ॥ ५९ ॥ ६० ॥ ६१ ॥ स्वस्वेत्याद्युत्तरान्वयः एषां कवीनां काव्यस्य मिथो निंदां श्रुत्वेति संबंधः ॥ ६२ ॥ स्वस्वकाव्यप्रशंसाकर्तारो वयं स्म इति संबंधः ॥६३॥६४॥ माघानंदः काव्यकर्तेति सर्वत्रास्य ख्यातिरित्यत्र चास्तीति योज्यम् । यत एवमत इत्याद्युत्तरान्वयि ॥ ६५ ॥ अत्रैव प्रसंगे

कस्यचित्काव्ये इति शेषः ॥ ६६ ॥ ६७ ॥ इति पूर्वोक्तहेतोः दृश्यतामस्माभिरित्यध्याहारः । इत्थमित्याद्युत्तरान्वयि ॥ ६८ ॥ छिद्रदृष्टयः न्यूनत्वदर्शिनः । तत्काव्ये माघानंदकाव्ये ॥ ६९ ॥ पूर्वार्द्धेऽस्तीत्यध्याहारः सत्सु उत्तमेषु अस्माकं काव्येषु दोषाः संमार्जिताः दूरीकृता अपि अन्ये ये दोषास्ते क्वचित्क्वचित्संतीति तीतृयस्थेनान्वयः ॥ ७० ॥ तान्काव्यदोषानाहुः छंदोभंगः आर्यादिवृत्तभंगः यतिभंगः अवसानभंगः मयरसतजभनेति गणव्यत्ययः पूर्वापरव्यत्यासः एकार्थकरणे विरुद्धान्यार्थप्राप्तिर्दोषः । अपशब्दः अशुद्धवर्णोपन्यासः अर्थभंगता मुख्यार्थविनाशः ॥ ७१ ॥ अन्ये रसालंकाररहितत्व

इत्ययं तु स्थितो मूकस्तत्काव्यं दृश्यतामतः ॥ इत्थं कृत्वा मतिं तेऽस्य काव्यं चैकाग्रचेतसः ॥ ६८ ॥ शोधयामासुरखिलाः पद्मश्छिद्रदृष्टयः ॥ नासीदीषच्च तत्काव्ये दोषोऽथाहुर्मिथोऽखिलाः ॥ ६९ ॥ इदमेव किलादोषं काव्यं सर्वगुणाकरम् ॥ सत्स्वेव काव्येष्वस्माकं दोषाः संमार्जिता अपि ॥ ७० ॥ छंदोभंगो यतेर्भंगो दुर्वारो व्यत्ययो गणे ॥ अर्थान्तरापत्तिदोषश्चापशब्दोऽर्थभंगता ॥ ॥ ७१ ॥ एवमन्येऽपि दोषा ये तेऽपि संति क्वचित्क्वचित् ॥ माघानंदस्य काव्यं तु रहितं सर्वदोषतः ॥ ७२ ॥ मास्त्वीषदप्यघं यस्मिंस्तस्मान्माघोऽयमीरितः ॥ दोषहीनः कविर्माघः परनिंदादिवर्जितः ॥ ७३ ॥ तादृशं तस्य काव्यं च माघाख्यं बुधसत्कृतम् ॥ कालिदासस्य काव्ये तु सद्भिरुक्तोपमा परा ॥ ७४ ॥ कस्यचित्पदलालित्यं काव्येऽन्यस्यार्थगौरवम् ॥ माघे त्रयं च गोदायामिव तीर्थत्रयोदितम् ॥ ७५ ॥ श्रीहर्षोक्तं नैषधाख्यं कालिदासोदितं द्वयम् ॥ रघुवंशः कुमारश्च महांति त्रीण्यमून्यपि ॥ ७६ ॥

समाप्तपुनरात्तत्वादयः सर्वदोषतः सर्वदोषैः ॥७२॥ मेति निषेधार्थकमव्ययं नाघं दोषो यस्मिन्स माघः ॥७३॥ तादृशं दोषरहितम् ॥७४॥ कस्यचिद्वक्ष्यमाणस्य दंडिनः पदलालित्यं ललितपदत्वम् । अन्यस्य वक्ष्यमाणभारवेरर्थगौरवमर्थबाहुल्यम् । माघे माघकाव्ये त्रयम् । उपमापदलालित्यार्थगौरवरूपमस्तीत्यर्थः । तत्र दृष्टांतः तीर्थत्रये उक्तं फलम् "रेवातीरे तपः कुर्यान्मरणं जाह्नवीतटे । दानं दद्यात्कुरुक्षेत्रे तत्त्रयं गौतमीतटे" । इति गोदायां यथास्ति तथेत्यर्थः । तथाचोक्तम् । "दंडिनः पदलालित्यं भारवेरर्थगौरवम् । उपमा कालिदासस्य माघे संति त्रयो गुणाः" इति ॥ ७५ ॥ ७६ ॥

तेषां महतां काव्यानां मध्ये इदं महत्काव्यमस्ति ॥ ७७ ॥ आद्यैः श्रेष्ठैः । स्वकर्तुर्नाम्ना ऐक्ययुक्तमन्यन्नास्ति माघकाव्यस्य तु कर्ता माघ एव इत्यर्थः । इंद्रवज्रावृत्तम्॥ ७८॥द्वात्रिंशदधिकशतं संख्यं माघानंदं प्रणमति कविरिति। सकलमुज्झितं त्यक्तं काव्यतः सदाचरणतः अघं दोषो येन तं माघानन्दं सततं नताः स्मः ॥७९॥ सर्गोक्तगुरुचतुष्टयकथाश्रवणादिफलं क्रमेणाह य इति ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां नवमः सर्गः ॥९॥

तेषामपीदं माघाख्यं काव्यं हि महतां महत् ॥ काव्येषु माघ इत्यस्य ख्यातिः सत्सु भविष्यति ॥७७॥ माघाख्यकाव्यं कविभिः किलेत्थं निर्दोषमुक्तं च गुणाढ्यमाद्यैः ॥ नैवेदृशं काव्यमनिंदितं हि स्वकर्तृनामैक्यवदन्यदस्ति ॥ ७८ ॥ कविर्यं इत्थं सकलोज्झिताघो गोपालसंज्ञाय ददौ रहस्यम् ॥ द्वात्रिंशदूर्ध्वं शतकं हि माघानंदं गुरुं तं सततं नताः स्मः ॥ ७९ ॥ यः शर्मवर्मादिचतुर्गुरूणां कथाः पठेद्वा शृणुयात्सुभक्तिः ॥ ज्ञानं च सर्वत्र जयं सुवाक्त्वमाप्नोति निर्दोषयशः स मर्त्यः ॥ ८० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे शर्मवर्मादिचतुर्गुरुकथावर्णनं नाम नवमः सर्गः ॥९॥ श्रीदेशिकेंद्र उवाच ॥ गोपालानंदनाथस्तु वेदशास्त्रार्थकोविदः ॥ बोपदेवेति तस्यासीत्ख्यातं नामापरं क्षितौ ॥ १ ॥ यश्चापस्तंबशाखावान्स्वीयसूत्रेण चाकरोत् ॥ याज्ञिके पद्धतिं ख्यातामाहुर्बोपनभट्टिकाम् ॥ ॥ २ ॥ कश्चिन्नृपः प्राग्भुवि रामचंद्रोऽमात्योऽस्य हेमाद्रिरिति प्रसिद्धः ॥ सभापतिः पंडितबोपदेवः सख्यं द्वयोर्मंत्रिविदोः किलासीत् ॥ ३ ॥ हेमाद्रिराहेति कदाचिदेनं श्रीबोपदेवं बहुशः प्रणम्य ॥ अध्यापनात्स्याद्विदुषः प्रसिद्धिः शिष्यैः परा ग्रंथकृतां प्रबंधैः ॥ ४ ॥ सा मादृशां चाविदुषां कथं स्याद्धनादिदानैरपि सुस्थिरा कौ ॥ नाम्नैव मेऽतः कुरु सन्निबंधं सर्वत्र विद्वद्भिरपीज्यते यः ॥५॥

पंचोत्तरशतश्लोकैर्दशमेऽत्र च देशिकाः ॥ उक्ताः सप्त पृथग्गाथा गोपालानंदतः क्रमात् ॥ १० ॥ गोपालानंदनाथ इति ॥ १ ॥ स्वीयसूत्रेण स्वशाखासूत्रानुसारेण याज्ञिके पद्धतिं प्रयोगं चकार तां बोपनभट्टिसंज्ञिकामाहुः॥ २॥अस्य रामचंद्रस्यामात्यः हेमाद्रिः सभापतिः सभायां धर्माधर्मवक्ता पंडितो बुद्धिमान्बोपदेवः मंत्रिविदोः हेमाद्रिबोपदेवयोः सख्यं मित्रत्वम् आसीदिति क्रियाया वाक्यचतुष्टये संबंधः । इंद्रवज्रावृत्तम्॥ ३॥अध्यापनाद्धेतोः॥ ४॥सा प्रसिद्धिः कौ

पृथिव्यां अतः मे प्रसिद्ध्यर्थं मन्नाम्ना युक्तमेकमुत्तमग्रंथं कुरु यो ग्रंथः पंडितैः सत्क्रियते तम् ॥ ५ ॥ ६ ॥ यद्वाक्यं हेमाद्रिग्रंथवचनं यः स्वकीर्तिविषये निरिच्छः स्वस्वकृतग्रंथे अन्यनाम हेमाद्रिनाम कृतवान् ॥ ७ ॥ ननु स्वकृतग्रंथे कथमन्यनाम चक्र इत्यतः हि यस्मात्संतः सर्वात्मसुखरताः संतः देहाश्रितां कीर्त्ति नेच्छंति खलु । यदि समुद्रतरंगाः नदीं प्राप्तास्तर्हि तस्य समुद्रस्य समृद्धिर्न्यूना भवति किं अपि तु पुनर्वर्द्धत एव तथा सर्वात्मकस्य विदुषः सर्वकीर्त्यात्मकीर्तित्वभावनया स्वदेहमात्रकीर्त्यायुक्तं स्वग्रंथे हेमाद्रिनामनिबंधनमिति भावः ॥ ८ ॥ भागवताभिप्रायवती हरिलीला,

संप्रार्थितोऽत्यंतमिति स्वकीर्त्यै हेमाद्रिणासावखिलाप्तविद्यः ॥ श्रीबोपदेवः स्मृतिगर्भितार्थं हेमाद्रिनाम्नैव चकार बंधम् ॥ ६ ॥ यद्वाक्यमार्यैः श्रुतितुल्यमेव संगृह्यते स्वीयनिबंधकेषु ॥ चक्रेऽन्यनाम स्वकृतेऽपि योऽद्धाऽनीहः स्वकीर्त्यामिति बोपदेवः॥७॥ नेच्छंति संतः खलु देहनिष्ठां कीर्तिं हि सार्वात्मसुखे निमग्नाः ॥ नद्यां गताश्चेदुदधेस्तरंगाः किंवासमृद्धिर्ह्रसते हि तस्य ॥८॥ कृतास्तथा तेन परे निबंधाः श्रीमद्धरेर्भागवते त्रयं च ॥ लीलाहरेर्भागवतार्थवक्त्री मुक्ताफलं भागवतं तथाल्पम् ॥९॥ श्रीबोपदेवास्थितिनिर्णयं वै चक्रे तथायांति नृपं तु मूढाः ॥ स्वं याचितुं दापयति स्म तेन तन्मौर्ख्यसंगोपनतो हि तेभ्यः ॥१०॥ गोपालमाहुस्तमथान्यमौर्ख्यसंगोपनात्पूर्वगुरोः स माघात् ॥ दीक्षां स चापाखिलमंत्ररूपां नामापि गोपालसुखं प्रसिद्धम् ॥ ११ ॥ इत्थं प्रसिद्धो भुवि बोपदेवो ददौ रहस्यं नृपशेखराय ॥ त्रित्रिंशदूर्ध्वं शतसंख्यमेनं गोपालसौख्यं गुरुमानताः स्मः ॥ १२ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रीराजशेखरानंदश्चासीदात्मविदांवरः ॥ वेदवेदांगतत्त्वज्ञः काव्यकर्ताऽखिलप्रियः॥१३॥ शिवोपास्तिं दृढां चक्रे सांगां सर्वोपचारतः ॥ स्वाभिन्नां देवतां ध्यायन्गुरुमंत्रमयीं हृदा॥१४॥उपतस्थुर्दृढोपास्त्याऽणिमाद्याः सिद्धयोऽथ तम् ॥ अनीहमपि चाक्षुब्धं समुद्रमिव निम्नगाः॥१५॥

मुक्ताफलं, लघुभागवतमिति ग्रंथत्रयमित्यर्थः ॥९ ॥ ये मूढाः नृपं प्रति धनं याचितुमायांति तेभ्यः पंडिताभासेभ्यः तन्मूर्खत्वगोपनहेतोः तेन राज्ञा करणेन धनं दापयति । राज्ञः सकाशाद्धनं दापयतीत्यर्थः ॥१०॥ माघानंदात्पूर्वोक्तगुरोः सकाशात् गोपालसुखं गोपालानंदम् ॥ ११ ॥ त्रयस्त्रिंशदधिकशतसंख्यं प्रणमति इत्थमिति । नृपशेखराय राजशेखराय रहस्यं पूर्णाभिषेकादि ॥१२॥श्रीति॥१३॥ गुरुदेवतामंत्रैक्यरूपां देवतामात्माभिन्नां ध्यायन् ॥१४॥अक्षुब्धं

क्षोभरहितं स्वतः पूर्णत्वादित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ १८ ॥ १९ ॥ देशिकाय गुरवे राजशेखरायेति पूर्वान्वयि ॥ २० ॥ चतुस्त्रिंशदधिकशतसंख्यं राजशेखरानंदं प्रणमति एवमिति । राजैश्वर्येण राजमान्यत्वेन राजशेखरानंदो राजगुरुस्तम् ॥ २१ ॥ पंचत्रिंशदधिकशतसंख्यं

सिद्धिभिस्ताभिरैश्वर्यं तस्यासीदतुलं भुवि ॥ यद्राज्ञामपि चालभ्यं प्रजाभ्यो गृह्णतां करम् ॥ १६ ॥ स्वतश्चागत्य राजान आनर्चुस्तं सुभक्तितः ॥ रत्नादीनि महार्हाणि ददुर्वस्तूनि चादरात् ॥ १७ ॥ संप्रार्थ्य बहुशश्चैनं धनिनोऽन्येऽपि तादृशाः ॥ शिष्याश्च बहवोऽस्यासुः सदा सेवापरायणाः ॥ १८ ॥ गजाश्चाश्वास्तथा भृत्याः सेवार्थं वै नृपार्पिताः ॥ ग्रामाश्चासन्हि तत्रत्य प्रजाभिर्दीयते करः ॥ १९ ॥ देशिकायेति हृष्टास्य महदैश्वर्यमक्षयम् ॥ तं राजशेखरानंदमित्याहुः साधवोऽखिलाः ॥ २० ॥ एवं किलैश्वर्यमहत्तया यो राज्ञामपि श्रेष्ठतया प्रसिद्धः ॥ तमुच्चतुस्त्रिंशशतं हि राजयुक्शेखरानंदगुरुं नताः स्मः ॥२१॥ शिष्योऽस्य चाणक्य इति प्रसिद्धश्चकार यः काव्यमशेषमान्यम् ॥ आत्मानुभावोऽखिलमंत्रविच्च तं पंचरामोच्छतकं नताः स्मः ॥ २२ ॥ ततः प्रसिद्धो भुवि कृष्णमिश्रः प्रबोधचंद्रोदयमुख्यकाव्यम् ॥ चक्रेऽखिलज्ञोऽपि विदां मुदे तं षट्त्रिंशदूर्ध्वं शतकं नताः स्मः ॥ २३ ॥ श्रीदेशिकेंद्र उवाच ॥ कृष्णमिश्रानंदनाथस्यासीच्छिष्यः सुबुद्धिमान् ॥ क्षेमेंद्र इति विख्यातः सर्वमंत्ररहस्यवित् ॥ २४ ॥ शिवसूत्रे कृतं येन भाष्यमद्वैतमंडितम् ॥ सर्वं शिवमयं यत्र वर्णितं श्रुतिवाक्यतः ॥ २५ ॥

चाणक्यानंदं प्रणमति शिष्य इति । अस्य राजशेखरस्य शिष्यः पूर्णाभिषिक्तः काव्यं वृद्धचाणक्यसंज्ञकम् आत्मनोऽनुभवः साक्षात्कारो यस्य तम् ॥ २२ ॥ षट्त्रिंशदधिकशतसंख्यं कृष्णमिश्रानंदं प्रणमति तत इति । चाणक्यगुरोः सकाशात्सर्वमंत्रप्राप्त्या प्रसिद्धः । प्रबोधचंद्रोदयसंज्ञकं मुख्यं श्रेष्ठं काव्यं यश्चकार

तम् ॥ २३ ॥ २४ ॥ २५ ॥ उत्तरार्द्धमग्रबद्धम् ॥ २६ ॥ २७ ॥ २८ ॥ कृताः अनुष्ठिताः फलदा आसन् ॥ २९ ॥ तत्र क्षेमेंद्रनिवासदेशे अत्र सरसि ॥ ३० ॥ तत्रत्यास्तद्देशीयाः शालिभिर्निर्वहंति उपजीवंति ते जना उभयान्वयि । तद्वापे शालिबीजारोपणविषये क्षमाः समर्था नासुः ॥ ३१ ॥ ॥ ३२॥ तदा सः क्षेमेंद्रः अंतः हृदये । उपजातिवृत्तम्॥ ३३॥जलप्राप्त्यर्थं जनानां क्षुद्रकलहैर्युक्तम्॥ ३४॥कृषिक्रियान्कृषीवलान् । कर्षयंतं जलस्यावधिः

जन्माभूद्द्रविडे यस्याधीतिः काश्यां कृतामुना ॥ कृष्णमिश्रगुरोरेव लब्ध्वा मंत्रांस्तथाखिलान् ॥ २६ ॥ ततो ययौ स्वदेशं स पितृमातृसुतोषदः ॥ पित्रा कृतविवाहोथ गार्हस्थ्यं विधिनाचरन् ॥ २७ ॥ चक्रे शिवार्चनं सांगं जपन्नित्यं महामनून् ॥ पुरश्चरणतः सिद्धास्तस्यासन्मनवोऽखिलाः ॥२८॥ ये ये प्रयोगास्तं प्रोक्ताः कृतास्तेचाऽमुनाऽखिलाः ॥ बभूवुः फलदाः शीघ्रं गावो वत्सेक्षिता इव ॥ २९ ॥ कदाचित्तत्र देशेऽथ बभूवावर्षणं महत् ॥ सरांस्यासन्हि शुष्काणि खनित्वात्र जलं पपुः ॥ ३० ॥ तत्रत्याः शालिनिर्वाहास्तद्वापे न क्षमाः क्वचित् ॥ दुर्भिक्षेण च धान्यानां नापुः स्वोदरपूर्णताम् ॥३१॥ धान्यसंग्रहिणः केचित्तेऽपि तस्करपीडिताः॥ इत्थं देशो बभूवासौ जलावर्षणदुःखितः ॥ ३२ ॥ स सिद्धमंत्रोऽप्यखिलाञ्जनांस्तान्क्षुत्पीडितांस्तस्करमर्दितांश्च ॥ दृष्ट्वान्वितोऽतः कृपया महांतं तडागमेकं प्रययौ सशिष्यः ॥३३॥ददर्श शुष्कं तदनेकगर्तैरीषज्जलैरप्यजलैश्च युक्तम्॥जलाप्तये सत्कलहैः प्रजानामाढ्यं क्वचिद्यष्टिसुताडनैश्च ॥ ३४ ॥ तूष्णीं स्थितांस्तत्रतटेऽतिखिन्नान्कृषिक्रियानित्थमुवाच साधुः ॥ तडागमेतत्क जलावधीक्षून्शालीन्समृद्धानकरोद्वदध्वम् ॥ ३५ ॥ श्रुत्वेति तेऽप्याहुरसुं किमर्थं मुधा यतः खेदयसे वचोभिः ॥ वृष्टिर्हि देवेंद्रवशा तयैव तडागपूर्तिर्न परैर्मनुष्यैः॥३६॥तान्साधुरित्थं पुनराह नैतन्मिथ्यावचः पश्यत चोषसीदम्॥जलावधिं चास्य यथार्थमुक्त्वाऽथाहुस्तमेके जलसेतुमत्र ॥३७॥ ततो ययौ साधुरसौ स्वगेहं रात्रौ प्रसुप्तेष्वखिलेषु चैकः ॥ गत्वा तडागं तु लिलेख सेतौ यंत्रं ह्यधो वारुणमूर्ध्वमैंद्रम् ॥३८॥

अस्य कियज्जलं सदिक्षून् शालींश्च पोषयति तद्यूयं कथयत ॥ ३५ ॥ ननु प्रतिवार्षिकजलावधि जलपूरणं कर्तुं पृच्छामीत्यत आहुः वृष्टिरिति । वाक्यत्रये भवतीत्यध्याहारः ॥ ३६ ॥ अद्य जलावधिं सत्यतयोक्त्वा इदं सर उषसि काले पश्यत जलसेतुं जलमर्यादाम् ॥ ३७ ॥ इंद्रवारुणयंत्रे मंत्रशास्त्रोक्ते अधो

वारुणं जलसंग्रहाय ऊर्ध्वं वृष्ट्यर्थमैंद्रम् ॥ ३८ ॥ मंत्रान्गुरुमुखावगतान् । ततः यामार्द्धानंतरं । वाक्यद्वययोजनया तच्छब्दद्विरुक्त्यदोषः ॥ ३९ ॥ यतः यस्याः । अत्रैव तस्यां भूमावेवेंद्रो ववर्ष । नान्यत्र हि यस्माद्देवो मंत्रमूर्तिः ॥ ४० ॥ सामर्थ्यं जलार्पकत्वरूपमेतस्य साधोः सामर्थ्यं जनाः न ज्ञातवंतः ॥ ४१ ॥ ते पौराः

मंत्राञ्जपन्वारुणकांस्तथैंद्रान्स्थितः स तत्रैव दृढासनेऽथ ॥ स्मरन्गुरोः पादसरोरुहं च यामार्द्धमागात्स ततः स्वगेहम् ॥ ३९ ॥
भूमेर्यतो गच्छति वारि तस्मिंस्तडागकेऽत्रैव ववर्ष हींद्रः ॥ सहायवान्यो वरुणेन सेतौ यथा जलं मंत्रतनुर्हि देवः ॥ ४० ॥ प्रात
र्जलाढ्यं ददृशुस्तडागं प्रत्यब्दवर्षासु यथेदमासीत् ॥ आश्चर्ययुक्ताः सकलाश्च पौराः सामर्थ्यमेतस्य विदुर्न साधोः ॥ ४१ ॥
मिथस्त इत्याहुरहो न मेघो न वृष्टिरल्पापि गृहोर्ध्वतो नः ॥ कथं तडागं त्विदमेव वार्भिः पूर्णं हि शुष्काण्यखिलानि संति ॥ ४२ ॥
सेतुं तडागे किल वारिणस्तु पप्रच्छ येभ्यो विदितं च तैस्तत् ॥ तेऽथाहुरेतत्सकलं च साधोः सामर्थ्यमेतस्य पदे नमंतः ॥ ४३ ॥
ज्ञात्वास्य सामर्थ्यमथाखिलास्तं निन्युः पृथक्स्वस्वतडागपूर्त्यै ॥ संप्रार्थितः सोऽपि चकार सर्वैस्तत्तत्तडागान्बहुतोयपूर्णान् ॥ ४४ ॥
बभूव तस्मिन्विषये समृद्धिर्व्रीह्यादिकानां सजलैः सरोभिः ॥ तुष्टाश्च तत्रत्यजनाः सुभिक्षादुदारवाग्भिः प्रशशंसुरेनम् ॥ ४५ ॥ क्षेमाय
नो यस्तु वर्षं चापः सुसिद्धमंत्रैः सहसेंद्रतुल्यः ॥ क्षेमेंद्रमित्याहुरतोऽखिलास्तमुत्सप्तरामोर्ध्वशतं नताः स्मः ॥ ४६ ॥ श्रीदेशिकेंद्र
उवाच ॥ क्षेमेंद्रानंदनाथस्य शिष्यश्चाद्वैतशास्त्रवित् ॥ जयमाधवसंज्ञस्तु सदाचाररतः शुचिः ॥ ४७ ॥ द्वैतशास्त्रविदं जित्वा प्रापेदं
नाम विश्रुतम् ॥ आत्मानुभूत्यानंदाख्यः सर्वमात्मेति लब्धधीः ॥ ४८ ॥ न्यवसद्द्राविडे देशे शिवार्चनपरायणः ॥ शिष्यानध्यापय
न्नित्यमद्वैतं शास्त्रमादरात् ॥ ४९ ॥

॥ ४२ ॥ यः साधुः यान्प्रति जलावधिं पप्रच्छ तस्य वैभवं तैरेव ज्ञातमित्यर्थः । एतद्दृष्ट्यादिकम् ॥ ४३ ॥ ४४ ॥ एवं साधुम् ॥ ४५ ॥ क्षेमेंद्रशब्दार्थं द्योतयन्सप्तत्रिंशदधिकशतसंख्यं प्रणमति क्षेमायेति । क्षेमाय वृष्ट्यादिना पोषणाय इंद्रतुल्यस्तम् ॥ ४६ ॥ क्षेमादि सार्द्धान्वयः ॥ ४७ ॥ ४८ ॥ ४९ ॥

जयमाधवनामार्थभूतां कथामाह कश्चिदित्यादिना ॥ ५० ॥ ५१ ॥ प्राग्भावाधांतरंगाः पूर्वकृतपापयुक्तचेतसः । शालिनीवृत्तम् ॥ ५२ ॥ अन्ये सुज्ञाः भेदमार्गं द्वैतमतम् । सुनिष्ठाः सुबुद्धयः ॥ ५३ ॥ आ साकल्येन भ्रमन् शिष्यैः संगतैः सुवादादुत्तमवादेन जेतुं समर्थैः ॥ ॥ ५४ ॥ यथा निष्प्रभोऽपि कीटः पतंग आत्मनाशाय दीपं प्रति गच्छति हि तथा मूर्खतमः गुरुं जेतुं ययौ ॥ ५५ ॥ यतोऽल्पविद्भिः वादकरणमल्प

कश्चिन्माधवशर्मासीद्द्वैतशास्त्रविदां वरः ॥ दंभवान्द्वैतभक्तस्यैव विष्णुपूजारतः सदा ॥५०॥ शिष्यांश्चाध्यापयन्द्वैतं शास्त्रमद्वैतदोषधीः ॥ बभ्राम सकलां पृथ्वीं द्वैतमार्गप्रवृत्तये ॥ ५१ ॥ मूढाः केचिद्दंभमेतस्य दृष्ट्वा वाङ्माधुर्यं छद्मयुक्तचेतसोपि ॥ मोहाविष्टाः प्राग्भवाधांतरंगाः स्वीचक्रुस्तन्मार्गमद्वैतिनोपि ॥ ५२ ॥ ज्ञात्वैवान्येऽत्यंतनिंद्यं हि भेदमार्गं यस्मिन्नैव सार्वात्मसिद्धिः ॥ नो जग्मुस्तद्दर्शनायापि धर्मं पूर्वाचीर्णेऽमी सुनिष्ठाः कुलीनाः ॥ ५३ ॥ इत्थं देशांश्चाभ्रमन्माधवाख्यः शुश्रावाथो ख्यातिमद्वैतवेत्तुः ॥ साधोस्तस्यानेकशिष्यैर्धरायां वेदांतज्ञैर्जेतुमीशैः सुवादात् ॥ ५४ ॥ तैरेवासौ निर्जितोऽथापि चैताञ्छिष्यान्मत्वा तं गुरुं जेतुमागात् ॥ कीटो दीपस्यांशुभिर्निष्प्रभोऽपि यात्येवासुं ह्यात्महत्यै यथाज्ञः ॥५५॥ द्वैताचार्योऽहं कथं चाल्पविद्भिर्वादं कुर्वेऽतः सुशर्मेन्द्रशिष्यम् ॥ जेष्येऽद्वैताचार्यमस्मिञ्जिते तु स्थास्यत्युर्व्यां मन्मतं सुस्थिरं वै ॥ ५६ ॥ इत्थं चित्ते चिंतयन्माधवाख्यः प्राप्तः साधोरग्रतस्तस्य भूम्नः ॥ दृष्ट्वैश्वर्यं द्वैतवादी गतश्रीश्चाभूदर्कस्येव कांत्या प्रदीपः ॥५७॥ तेनात्यंतं सत्कृतोऽत्यादरेण स्थातुं तद्वन्माधवो न क्षमोऽभूत् ॥ सर्वात्म्यैक्यैश्वर्यभाजा कथं हि साम्यं देहात्म्यैक्यबुद्धिर्लभेत ॥ ५८ ॥ अथाह साधुं स च माधवाख्यः कथं त्वदीयाः खलु पूजयंति ॥ देवं त्वभिन्नात्मधियात्र वाच्या कः पूजकः पूज्य इति व्यवस्था ॥ ५९ ॥

त्वायातः शर्मेंद्रशिष्यं क्षेमेंद्रशिष्यं प्रति जेष्य इति संबंधः ॥५६॥ भूम्नः महतः ॥५७ ॥ तद्वत्साधुरिव स्थातुं समतयोपदेष्टुं न हि परिच्छिन्नस्यापरिच्छिन्नेन साम्यमित्यर्थः ॥ ५८ ॥ त्वदीयाः अद्वितीयमतस्थाः कथमुपास्यमभेदेन पूजयंति । तत्र पूजकपूज्यव्यवस्था त्वया वाच्या । उपजातिवृत्तम् ॥ ५९ ॥

यदि सेवकोहं स्वामीचेत्यात्मानं मनुते तदा तत्र पूज्यपूजकयोर्मध्ये केन कस्य सेवा कर्तव्येति वद । यतः सेव्यसेवकैक्ये पूज्यपूजकानवस्था भवति । अतः कारणात् स्वीयान्स्वमतस्थान्प्रति मां च प्रति कथयेत्यर्थः ॥ ६० ॥ माधवोक्तं बहुधा तिरस्कुर्वन् ॥ ६१ ॥ उपास्योपासकाभेदं कथयितुमुपास्य स्वरूपं तावदाह । य इत्यादि पंचभिः । सर्वब्रह्मांडेंऽतर्बहिर्भावेन प्रकाशतेऽसौ देव इत्युच्यते । अतति व्याप्नोति सर्वभूतेषु तमात्मानं वदंति ॥ ६२ ॥ तदिति ब्रह्मविशेषणतया नपुंसकत्वं स चात्मा बृहद्रूपतया ब्रह्म भवति । तदेव बहुशक्तित्वान्निर्गुणोनंतगुणशक्तिश्चोच्यते । भातीति वा सर्वत्राध्याहारः ।

चेत्स्वाम्यहं भृत्य इति स्म पश्येत्कार्यात्र सेवा वद कस्य केन ॥ अतोऽनवस्थाहरणाय च त्वं स्वीयान्पृथक्पूजकपूज्यभावम् ॥६०॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं तदोक्तः किल माधवेन सोऽद्वैतसिद्धांतविदां वरिष्ठः ॥ स्मरन्गुरोः पादयुगं तमाह तिरःप्रकुर्वन्बहुधा तदुक्तिम् ॥६१॥ साधुरुवाच ॥ अंतर्बहिर्दीव्यति यः किलैकोऽखिलेऽपि कांडेत्र स एव देवः ॥ यो गूढ एवातति भूतमात्रेऽतः संतमात्मानममुं वदंति ॥ ६२ ॥ बृहत्तया ब्रह्म तदूरुशक्तियों निर्गुणोऽनंतगुणाकरश्च ॥ सदाशिवोऽखंडसुखस्वरूपी तथेश्वरोऽनंतजगन्नियंता ॥६३॥ स एव रुद्रोखिलशोकहर्ता स्याद्व्यापकत्वाच्च स एव विष्णुः ॥ ब्रह्मा स एवास्ति समष्टिजीवो यत्कल्पनैव ह्यखिलाश्च जीवाः ॥ ६४ ॥ शास्ता गणानामपि यो गणेशः प्रकाशकत्वाच्च स एव भानुः ॥ शक्तिः स एवास्त्यखिलात्तशक्तिः स एक एवेति विभात्यनेकः ॥ ६५ ॥ कश्चित्पुमान्गेहपतिर्यथैकः पित्रंगनाबंधुमुखैः पृथक्त्वात् ॥ विभाव्यतेऽस्मिन्न मनाक्च भेदस्तथैव देवेष्वखिलैर्मतैः स्वैः ॥ ६६ ॥

यतोऽखंडसुखस्वरूपस्ततः शिवस्तथानेकजगन्नियंतृत्वेनेश्वरश्च ॥ ६३ ॥ सर्वेषां शोकहर्ता यः स रुदं शोकं द्रावयतीति रुद्रः यत्कल्पना ब्रह्मणः कल्पनैव अखिलाः समस्ताः जीवा व्यष्टिरूपा भवंति स समष्टिजीवो ब्रह्मेत्युच्यते हि ॥६४॥ गणेश इति । विनायकनाम गणेशपुराणे प्रसिद्धम् । अखिलानां आत्ता शक्तिर्येन स एव शक्तिरित्युच्यते । इति प्रकारेण स एक एव सन् भक्तकामनापूर्तयेऽनेकरूपो विभाति ॥६५॥ एकस्यानेकाभिधानेन वाच्यत्वं दृष्टांतेन

द्रढयति । कश्चिदिति । यथा कश्चिद्गृहपतिः पुरुषः स्वयमेवैकः सन् पित्रादिभिः कर्तृभिः पृथक्त्वेन पुत्रपतिभ्रात्रादिरूपेण विभाव्यते तस्मिन्पुरुषे वाचकभेदेपि वाच्यभेदो न किंचिदस्ति तथा देवतायां गाणेशादिस्वस्वमतैर्नामभेदेपि स्वरूपभेदो नास्तीत्यर्थः ॥ ६६ ॥ एवमुपास्यस्वरूपमुक्त्वा पूजास्वरूपं तत्कल्पितत्वेन तद्रूपमेवेति सदृष्टांतमाह तेनेति । तेनेश्वरेण सर्वजगदात्मशक्त्याऽऽत्मन्येव कल्पितं यथा चित्रकारेण भित्तौ चित्राणि तस्माच्च चित्रकर्तुर्ऋते चित्रकारं विना चित्रगतचेष्टाः न भवंति । तथा ईश्वरं विना जीवकृतचेष्टाः न भवंति । ईश्वर एव नानारूपो विभातीत्यर्थः ॥ ६७ ॥ एवमीश्वराभिन्नत्वं जीवस्य प्रतिपाद्य तत्र सर्वश्रुतिसंमतिं दर्शयति । इत्थमिति । इत्थं पूर्वदृष्टांतेनात्मनि परमेश्वराद्भेदो नास्ति । अत्राभेदे बह्वयः श्रुतयः प्रमाणभूता "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन । इह नानेव पश्यति मृत्योः स मृत्युमाप्नोति" इत्याद्याः श्रुतयोऽद्वैतमात्मानं वर्णयंतीत्यर्थः । यैरेतच्छ्रुतिवाक्य

तेनाखिलं कल्पितमात्मशक्त्यात्मन्येव भित्ताविव लेखकेन ॥ चित्राणि नस्यात्खलु चित्रचेष्टा ईशादृते जीवकृतास्तथैव ॥ ६७ ॥
इत्थं न भेदः खलु चात्मनीषत्प्रमाणभूताः श्रुतयोत्र बह्व्यः ॥ नांगीकृतं वै श्रुतिवाक्यमद्धा ते वेदबाह्या इति किं न वाच्यम् ॥६८॥
चेदुच्यतेर्थांतरमेव कैश्चिद्द्वैतार्थसिध्यै निखिलश्रुतीनाम् ॥ वक्रार्थतस्तैः खलु दुःखितास्ता ऋज्वर्थगाः पांथ इवाध्ववाक्यात् ॥६९॥
पुराणवाक्यैरपि भेदयंति केचित्तदेकं श्रुतिवाक्यसिद्धम् ॥ पितामहस्येव विवाहकाले तत्पौत्रवाक्यैः कुलमस्य चाद्यम् ॥ ७० ॥

जातं नांगीक्रियते ते वेदबाह्या इति न वाच्यं किम् अपि तु वेदनिंदकत्वान्नास्तिका इत्यर्थः ॥ ६८ ॥ नन्वेकमित्यादिषु द्वैतसिद्धमेकत्वम् । इहेति । ब्रह्मणि नानात्वनिषेधेनान्यत्र द्वैतसत्यत्वम् । अनानारूपे नानात्वदर्शनमित्याद्यर्थकश्रुतिभिर्द्वैतसिद्धिर्दृढीक्रियत इति चेदेतादृशानर्थकारिणि पुरुषे श्रुत्यर्थभंगेनेश्वरकोपं सदृष्टांतमाह—चेति वक्रार्थकरणेन तैः श्रुतयः कृतदूषणा बभूवुः । अध्ववाक्याद्वक्रगत्या पांथा इवेत्युपलक्षणं बहुवचनस्य यथा पांथा मार्गं हित्वाऽमार्गगमनेन दुःखिता भवंति। तथाऽद्वैतप्रतिपादकश्रुतये ऋज्वर्थगाः सरलार्थगामिन्योऽपि द्वैतार्थकथनेन दुःखिताः भवेयुः तेन तदुत्पादकेश्वरप्रकोपोऽवश्यं भवेदित्यर्थः ॥ ६९ ॥ किं च पुराणवाक्यैरिति । पितामहविवाहकाले पौत्रप्रवचनैः श्रेष्ठं कुलं नाभिपद्यते तदा तस्यावस्थित्यसंभवान्न निंद्यते । तथावा

चीनैः पुराणवाक्यैः प्रबलतरश्रुत्यर्थस्य द्वैतपरत्ववर्णनमयुक्तमित्यर्थः ॥ ७० ॥ अतः कारणादंतरंगे मनोगतभेदेऽत्र जन्मनि कुतः सुखं न कुतोऽपीत्यर्थः ॥ ७१ ॥ भेददृष्ट्या मूर्खत्वप्राप्तिमाह । इदं मम तवेदमित्यादिभेदो मूर्खैरपि विभाव्यते तथाऽज्ञत्वभेदेन पश्यति चेन्मूर्खसुज्ञभेदः कथं स्यात् ॥ न कथमपीत्यर्थः ॥७२॥ ननु सर्वत्राभेदेनाद्वैतसिद्ध्या भेदानुगृहीतवर्णाश्रमादिव्यवस्थापालनं न स्यादित्याशंक्यांतर्बाह्यदृष्टयंगीकारेणाभेदस्य भेदस्य च व्यवस्थासं

अतो न कार्यः खलु भेद एव कुत्रापि भेदान्न भवेद्धि सिद्धिः ॥ भृत्येशयोः स्त्रीवरयोरपीषद्भेदेंतरंगेति सुखं कुतोत्र ॥७१॥ इदं ममेदं तव चेति भेदः संज्ञायतेऽज्ञैरपि लोकसिद्धः ॥सुज्ञस्तथा पश्यति चेन्निजांतः सुज्ञाज्ञभेदः कथमत्र वाच्यः ॥७२॥ वर्णाश्रमैर्योस्ति च बाह्यभेदः स कार्य एवाखिलसंग्रहाय ॥ संपश्यतांतः सकलैकतां वै यस्येति धीः प्राहुरमुं हि सुज्ञम् ॥ ७३ ॥ इत्थं स चोक्तो गुरुणाथ तूष्णीं ययौ ततो वक्तुमनीश ईषत् ॥ तत्याज नैवात्ममतं द्विभेदं प्राक्कर्मपाशैर्दृढबद्धचेताः ॥ ७४ ॥ जयं किलापेति च माधवाख्याद्यश्चोदितोऽसौ जयमाधवोऽतः ॥ तमष्टरामोर्ध्वशतातसंख्यमद्वैतविच्छ्रेष्ठगुरुं नताः स्मः ॥ ७५ ॥ श्रीदेशिकेंद्र उवाच ॥ जयमाधवसौख्यस्य शिष्योऽनंतसुखाभिधः ॥ सर्वविद्यानिधिः काव्यकर्ताऽनंतगुणाकरः ॥ ७६ ॥ द्राविडेष्वेव जन्मास्योपनीतो जनकेन सः ॥ विद्याः सर्वाः सकृत्पाठाज्जग्राह जयमाधवात् ॥ ७७ ॥ दृष्ट्वानंतगुणाढ्यं तं तस्मै दीक्षां ददौ गुरुः ॥ सर्वमंत्रमयीं तुष्टो योगं ज्ञानं च शाश्वतम्॥७८॥अनंतानंद इत्यस्य नाम श्रीगुरुणा कृतम् ॥ पित्रा कृतविवाहोऽथ स बभ्रामाखिलां धराम्॥७९॥

भवादित्याह वर्णाश्रमैरिति । अखिलसंग्रहाय लोकोपकाराय इति धीर्यस्य स इतिधीरेवं बुद्धिमान् । स सुज्ञः । लोकसंग्रहायैव बाह्यदृष्ट्या भेददर्शनं न वस्तुत इत्यर्थः ॥ ७३ ॥ इत्थमिति । द्विभेदं द्वयोरुपास्योपासकयोर्भेदो यत्र तद्वैतमतम् ॥ ७४ ॥ अष्टत्रिंशदधिकशतसंख्यं जयमाधवानंदं नामार्थप्रदर्शनपूर्वकं प्रणमति जयो माधवाद्यस्य तम् ॥ ७५ ॥ जयमाधवानंदस्येति । अनंतसुखोऽनंतानंदः सर्वविद्यासमुद्र आसीत् ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥

॥ ८० ॥ ८१ ॥ ८२ ॥ साचाराः तत्तद्देशाचारसहिताः ॥ ८३ ॥ सर्वतः सर्वस्य ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ यतो गुरौ तुष्टे इहामुत्र सिद्धिलाभस्ततः सर्वं गुरुकार्यार्थमेव संपाद्यते ॥ ८७ ॥ पत्न्या सह ॥८८॥ ते सर्वदेशस्थाः शिष्याः उत्तरार्द्धमुत्तरान्वयि । तद्देशवैभवं तत्तद्देशाचारम् ॥

एकाकी सर्वदेशेषु वसंश्चाहानि कानि चित् ॥ तत्तद्देशीयसंगेन तत्तद्भाषाः समभ्यसत् ॥ ८० ॥ यस्मिन्देशे यथाचारः कुलीनैः शास्त्रवित्तमैः ॥ क्रियते तं तथैवासौ समशिक्षच्च कृत्स्नशः ॥ ८१ ॥ अदर्शयन्स्वविद्वत्त्वं मलिनांशुकविग्रहः ॥ भोजनाच्छादनाकांक्षी पांथवन्मन्यतेऽखिलैः ॥ ८२ ॥ एवं वर्षद्वयाद्भाषाः साचाराः सर्वदेशगाः ॥ समभ्यस्य ययावेकः स्वगुरुं जयमाधवम् ॥ ॥ ८३ ॥ नत्वा प्राहाखिलं वृत्तं तत्तद्देशीयमादितः ॥ अभ्यासं सर्वभाषाणामाचारस्य च सर्वतः ॥ ८४ ॥ गुरुस्तुष्टोऽथ तं प्राह त्वां चाऽनंतगुणाकरम् ॥ ज्ञात्वैव नाम ते वत्सानंतानंदेति वै कृतम् ॥ ८५ ॥ श्रीगुरुं पूजयामासानन्तानन्दोऽन्यदेशतः ॥ अन्वग्वा पादितैर्वित्तैर्वृक्षेभ्यः कुसुमैरिव ॥८६॥ संपाद्यतेऽखिलं सद्भिः शिष्यैर्गुर्वर्थमेव हि ॥ ऐहिकामुष्मिकी सिद्धिर्गुरौ तुष्टे भवेद्यतः ॥ ८७ ॥ गृहं गत्वाथ सोऽनंतानंदः पत्न्यावसत्सुधीः ॥ अध्यापयत्सर्वविद्याः शिष्यांश्चाखिलदेशगान् ॥ ८८ ॥ मेनिरे तेऽखिलाः स्वस्वदेशस्थमिति तं पृथक् ॥ यस्य शिष्यस्य या भाषा तस्मै तद्देशवैभवम् ॥ ८९ ॥ वर्णयित्वा वदत्यन्यदेशनिंदां च भाषया ॥ पृथगेवेति सर्वांश्च परभाषास्वतद्विदः ॥ ९० ॥ शिष्यैरथासौ भुवि दिग्जयाय देशान्ययौ द्वैतमतं प्रभिंदन् ॥ भग्नं पुरा श्रीगुरुणा तथापि स्थितं क्वचिन्मान इवात्रपस्य ॥ ९१ ॥ याति स्म यंयं विषयं स तत्तद्देशस्थवेषाशनभाषणानि ॥ करोति चाचारमपीषदूनाधिकं न तत्तद्विषयस्थितेभ्यः ॥ ९२ ॥ देशं न केप्यस्य विदुः स्वदेशस्थितं तमाहुस्त्वखिलाः किलैनम् ॥ आचार्यमद्वैतविदां च मत्त्वा ह्यद्वैतिनोऽमुं त्वयजन्सुभक्त्या ॥ ९३ ॥

॥ ८९ ॥ भाषया तत्तद्भाषया अतद्विदः अर्थानभिज्ञान् ॥ ९० ॥ अभावनंतानंदः अत्र यस्य निर्लज्जस्याभिमान इव क्वचित्स्थितं द्वैतं नाशयत् ॥ ९१ ॥ तत्तद्देशनिवासिपंडितेभ्यः न्यूनाधिकं वेषादिकं न करोति किंतु तत्तुल्यमेव करोतीत्यर्थः ॥ ९२ ॥ अयजन् पूजयामासुः ॥ ९३ ॥

भेदिनो द्वैतमतस्थाः।अन्यैः शिष्यैरेव जिताः यथा ते घूकाः सूर्यप्रकाशाश्रितकाकैर्जिता भवंति॥९४॥प्रकाशिता विश्वस्मिन्सर्वजगति कीर्तिर्यस्य ईशं विश्वेशम्॥
॥९५॥तत्र काश्यां सर्वदेशस्थाः पंडिता आसुस्ते स्वस्वदेशेषु अद्वैतवेत्तारः वेदांतवेत्तारस्तेषु श्रेष्ठं मेनिरे ॥९६॥ द्वैतप्रभेत्तुः द्वैतमतभेदकस्य इह काश्याम्॥
॥ ९७ ॥ सः अनंतानंदः अखिलवेदमातुः सरस्वत्या वाग्मी वाक्कुशलः ॥ ९८ ॥ हे सरस्वति । जयमाधवगुरुर्दयायुक्तः सन्नल्पवयस्कायापि मह्यं तव सर्व

निलिल्युरेवास्य निरीक्ष्य तेजोऽर्कस्येव घूकाः किल भेदिनो ये ॥ केचित्त्वनंतं यथुरेव जेतुं जिताश्च तेऽन्यैरिव तेऽह्नि काकैः ॥९४॥
अनंत इत्थं निखिलेषु देशेष्वत्यादरात्पूजित एव सर्वैः ॥ काशीं ययौ काशितविश्वकीर्तिः स्नातुं हि गंगां शिवमीक्षितुं च ॥ ९५ ॥
आसुश्च तत्राऽखिलदेशसंस्थाः सुपंडितास्ते तमनंतसंज्ञम् ॥ अज्ञातदेशं खलु मेनिरेऽमुं चात्मात्मदेशाऽद्वयवेत्तृमुख्यम् ॥ ९६ ॥
ज्ञात्वाथ केचिज्जयमाधवस्य तं शिष्यमद्वैतविदां वरस्य ॥ द्वैतप्रभेत्तुस्तमनंतसंज्ञं सन्मानयामासुरिहाऽखिलास्ते ॥९७॥ काश्मीरदेशं
प्रययौ ततोऽसौ पीठं हि यत्राखिलवेदमातुः ॥ सरस्वतीं तां प्रणमन्सुभक्त्या संपूज्य तुष्टाव च वाग्म्यनंतः ॥ ९८ ॥ श्रीअनंतानंद
उवाच ॥ अल्पायापि ददौ गुरुस्त्वतिदयस्त्वन्मंत्रजातं मया तुष्ट्यै जप्तमतो भवत्यपि तवास्तुष्टा ददौ मेऽखिलाः ॥ विद्याश्चाखिल
देशगा अपि गिरः सन्मानतां सर्वतो वांछेऽहं तव पीठमद्य जननी चेद्योग्यता देहि मे ॥ ९९ ॥ मत्पूर्वैर्गुरुशंकरप्रभृतिभिश्चाधिष्ठितं
यत्पुरा तेषामेव च विद्ययाहमपि सद्वंशोऽस्मि विद्याजनिः ॥ श्रीविद्यारहितास्तु नैतदमले शक्ताः किलारोहणे वृक्षं वै पशवो यथा हि
गदितो विद्याविहीनः पशुः ॥ १०० ॥

मंत्रान्ददौ मया च तज्जपः कृतः तेन भवती त्वमपि तुष्टा सती सर्वविद्याः सर्वदेशभाषाश्च मह्यमर्पितवती । एवं सति अधुना सर्वदेशे सन्मानं त्वत्पीठाश्रयेणे
च्छामि । मम योग्यतास्ति चेज्जननी मातृरूपा त्वमेतत्पीठं देहि । शार्दूलविक्रीडितं वृत्तम् ॥ ९९ ॥ विद्यया विद्याबलेन यत्पुरा यैः शंकरादिगुरुभिरा

श्रितं तेषां सद्वंशेऽहं विद्याजनिः ज्ञानजनिः विद्यावंशोत्पन्नोऽस्मीत्यर्थः । ये तु श्रीविद्यापंचदशीज्ञानरहिताः ते एतत्तव पीठमारोढुं पशवो वृक्षमिव न समर्थाः हि यस्माद्विद्याविहीनः पशुर्भवति । तत एतद्विपरीताय त्वद्भक्तायैतत्पीठमर्पयेत्यर्थः ॥ १०० ॥ अनंतविदाऽनंतपंडितेन इत्यर्थः ॥ १०१ ॥ अदः इदं पीठं तत्रत्यविदः काश्मीरदेशस्थपंडिताः ॥ १०२ ॥ रहस्यं पूर्णाभिषेकादि भाष्यकर्ता शंकराचार्यः अब्जपादाय पद्मपादाय ॥ १०३ ॥ एकोनविंशदधिकशतसंख्यमनंतानदं प्रणमति । इत्थमिति । पूर्वोक्तप्रकारेण विद्वत्तमैर्महापंडितैः इज्यांघ्रिं पूज्यचरणम् ॥ १०४ ॥ एतत्सर्गोक्तगोपालानंदादिसप्तगुरुचरित्र

श्रीदेशिकेंद्र उवाच ॥ संप्रार्थितानंतविदेति देव्याविर्भूय सत्पुत्रमिवामुमाह ॥ त्वमेव वत्साद्य गृहाण पीठं श्रीहर्षवत्प्रागखिलांश्च जित्वा ॥ १ ॥ उक्त्वेति सांतर्दधे आदिवाणी चोद्युक्तमारोढुमदस्त्वनंतम् ॥ श्रुत्वेति तत्रत्यविदो ययुस्ताञ्जित्वैव जग्राह गिरः स पीठम् ॥ २ ॥ अध्यापयंस्तत्र बहूंश्च शिष्यान्विद्वत्तमो बिल्हण एव तेषु ॥ रहस्यमूचेऽखिलमप्यमुष्मै यथाब्जपादाय च भाष्यकर्ता ॥ ३ ॥ इत्थं युतोऽनंतगुणैरनंतानंदं तमाहुस्तत एव सर्वे ॥ विद्वत्तमेज्यांघ्रिमुदूनचत्वारिंशच्छताख्यं गुरुमानताः स्मः ॥ ४ ॥ गोपालानंदनाथात्प्रपठति चरितं सप्तसद्देशिकानां भक्त्याढ्यो यः शृणोति क्षितिमतिविमलां कीर्तिमाद्यां श्रियं च ॥ कर्तृत्वं काव्यजातेनवरससुगतिं चाभयत्वं सदा वै वादे वाऽऽजौ जयित्वं सकलगुणवतां श्रेष्ठतां चाप्नुयात्सः ॥ १०५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे गोपालानंदादिसप्तगुरुवर्णनं नाम दशमः सर्गः॥१०॥श्रीदेशिकेंद्र उवाच ॥ श्रीशंभुः पार्वतीमित्थं प्राह कैलास एकदा ॥ वेदांतिनोऽपि कवयः काव्यं नवरसात्मकम् ॥१॥ कुर्वंत्येव परित्यज्य कर्माण्यन्यानि दूरतः॥समाधेरधिकं सौख्यं तेषां वै कवितारसे॥२॥

श्रवणादेः फलं क्रमेणाह गोपालेत्यादिना । आद्यां श्रेष्ठां कीर्तिं श्रियं काव्यभेदानां कर्तृत्वम् । वादे वाऽजौ युद्धे । जयित्वं विजयित्वम् । सर्वगुणिनां मध्ये श्रैष्ठ्यं क्रमेण गोपालराजेश्वरचाणक्यकृष्णमिश्रक्षेमेंद्रजयमाधवानंतानंदकथाश्रवणादिनाप्नुयात् ॥ १०५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां दशमः सर्गः ॥१०॥सर्गे एकादशे खेंदुशतपद्यैस्तु बिल्हणः ॥ वर्ण्यते कविवर्यो योऽभवच्छंभुः शिवान्वितः ॥११॥ काव्यरसास्वादनाय भूमिं गतं शिवासहितं शिवमेव बिल्हणानंदं सुचारित्रेण वक्तुमुपक्रमते।श्रीशंभुरित्यादिना।काव्यानंदस्य ब्रह्मानंदरूपत्वमाह । वेदांतिनोऽपीत्युत्तरान्वयि ॥१॥ सौख्यं दश्यत

इति संबंधः ॥ २ ॥ ३ ॥ स्वर्गे दुर्लभान् । तथाचोक्तम् "इक्षोर्विकारो मतयः कवीनां गवां रसो बालकचेष्टितानि ॥ तांबूलमन्नं युवतीकटाक्ष एते पदार्था नहि संति नाके" ॥ ४ ॥ ५ ॥ पूर्वार्द्धं पूर्ववद्धम् । उत्तरार्द्धमुत्तरगामि ॥ ६ ॥ ७ ॥ पृथिव्यां बिल्हण एवैकस्तदा कविरासीदित्यत्र प्राचीनं काव्यं प्रमाणत्वेन बध्नाति—वास इति । शुभ्रमेव वासः । नान्यत्पीतादिकं वर्णनीयमिति सर्वत्र योज्यम् । स्वच्छत्वाच्छुभ्रवस्त्रस्य प्राशस्त्यमित्यर्थः । कामोद्दीपकत्वाद्वसंत एव ऋतुः । सुगंधकोमलाश्रयत्वेन शरदृतुगतमल्लिकैव पुष्पं । महतामपि क्षुद्रैरपि पुष्पबाणैर्बाधकत्वान्मदन एव धन्वी ।

दृश्यते दुर्लभं यत्तु स्वर्गेऽपि मरुतामतः ॥ मयावतीर्यते वेत्तुं तत्सुखं धरणीतले ॥ ३ ॥ शृंगारचतुरा त्वं चावतरावां ततोऽखिलान् ॥ तांबूलादींश्च भोक्ष्यावो भोगान्स्वर्दुर्लभानपि ॥ ४ ॥ स्वल्पेनैवाथ कालेनायास्यावः स्वस्थलं प्रिये ॥ इत्थं देवीं समादिश्यावतीर्णो बिल्हणाऽभिधः ॥ ५ ॥ विद्यापीठे च काश्मीरे शंभुर्द्विजकुले स्वयम् ॥ पित्राकृतोपनीतिः स विद्याश्चानंतदेशिकात् ॥ ६ ॥ लब्ध्वा सर्वाश्चाचिरेण काव्यकर्ता बभूव च ॥ नासीत्तत्सदृशः कश्चित्काव्यकर्तावनीतले ॥ ७ ॥ वासः शुभ्रमृतुर्वसंतसमयः पुष्पं शरन्मल्लिका धानुष्कः कुसुमायुधः परिमलः कस्तूरिकाऽस्त्रं धनुः॥ वाणी तर्करसोज्ज्वला प्रियतमा श्यामा वयो नूतनं मार्गः शांभव एव पंचमलया गीतिः कविर्बिल्हणः ॥ ८ ॥

सर्वोत्तमत्वात्कस्तूरिकागंध एव गंधः । दूरस्थघातित्वाद्धनुरेवास्त्रं सर्वानंदकत्वात्तर्करसालंकृतिविलसितैव वाणी । ज्ञातयौवनसुखत्वात् श्यामा षोडशवार्षिकी सैव प्रियतमा । सर्वसाधनसंपत्त्याश्रयत्वान्नूतनं तारुण्यमेव वयः । ज्ञानप्रदत्वाच्छांभवः शिवाराधनात्मक एव मार्गः संप्रदायः । आत्मसुखद्योतकत्वात्पंचमलयवत्येव गीतिर्गायनं सर्वालंकारचतुरत्वाद्बिल्हण एव कविः । बवयोरभेदाद्बिदा ज्ञानेन लाति अनुगृह्णाति सर्वान्स बिल्हः स चासौ णश्चानंदरूपः । सर्वोत्तम

इत्यर्थः ॥ ८ ॥ तस्मै बिल्हणाय । उत्तरार्द्धमुत्तरान्वयि ॥ ९ ॥ अथायुत्तरान्वयि ॥ १० ॥ ११ ॥ शक्त्यवतारं तया सह बिल्हणविलासं वक्तुं पूर्व प्रसंगमाह—अथादिना ॥ १२ ॥ भोगी उत्तमविषयभोक्तेति पूर्वार्द्धे पूर्वान्वयि । विदुषां गुणवतां च प्रीतिकारकः ॥ १३ ॥ स्त्रियः पतिसेवारताः । श्रेष्ठ जनाः भार्यया प्रीताः यस्य नगरे वसंतिस्म ॥ १४ ॥ सर्वतः सर्वाभ्यः पत्नीभ्यः प्रियाः ॥ १५ ॥ ईशकला शिवस्य शक्तिः । दूत्या दूतीमुखेन गृहमेत्य साध्य चंद्रा

इत्थं प्राचीनकवयः प्रशशंसुर्हि बिल्हणम् ॥ अनंतानंदनाथश्च तस्मा एवा खिलान्मनून् ॥ ९ ॥ ददौ पीठं च भारत्याः सद्गुणाकरमूर्तये ॥ ततः प्राप परां सिद्धिं बिल्हणोऽथ स पीठगः ॥ १० ॥ शिष्यानध्यापयामास कविः काश्मीरमंडले ॥ विद्वांसोऽस्याखिलाः शिष्यास्तेषु दंडी वरः कविः ॥ ११ ॥ अथासीद्गुर्जरे देशे यज्ञानलपुरं महत् ॥ तत्र राजा वीरसिंहो वीरवर्यश्च दर्पदः ॥ १२ ॥ भोगी शुभगुणी विद्वद्गुणवत्प्रीतिवर्द्धनः ॥ नगरे यस्य चत्वारो वर्णाः सद्धर्मतत्पराः ॥ १३ ॥ नार्यः कार्यरताः पत्युर्भार्ययार्यजना रताः ॥ अवंतीनृपतेः कन्यामुपयेमे स भूपतिः ॥ १४ ॥ सर्वासु नृपपत्नीषु पट्टराज्ञी बभूव सा ॥ लावण्यकल्पवल्लीयं नृपतेः सर्वतः प्रिया ॥ १५ ॥ तस्यामवातरदथेशकला सुलग्ने दूत्या निशम्य नृप एत्य विलोक्य कन्याम् ॥ चंद्राननां मृगदृशं शुभल क्ष्मयुक्तां नाम्नाऽकरोच्छशिकलामिति सार्थकेन ॥ १६ ॥ ज्योत्स्येव साथ ववृधे हि चकोरकस्य संवर्द्धयंत्यनुदिनं मुदमेव राज्ञः ॥ संरिंगणेन हसितेन सुवीक्षितेनाव्यक्तेन चापि वचसा क्रमतस्तु चाह्नाम् ॥ १७ ॥ पंचाब्दिकाथ कविकाव्यरसाश्रयाणि वाक्यानि चाह नृपतिस्तु समीक्ष्य तस्याः ॥ बाल्ये प्रगल्भधिषणां वचसः पटुत्वमध्यापनाय दुहितुः कविवर्यमैच्छत् ॥ १८ ॥

ननां कन्यां दृष्ट्वा शशिकलामिति अर्थयुक्तनाम्ना युक्तां चकार । वसंततिलकावृत्तम् ॥ १६ ॥ चकोरस्येव राज्ञो मुदं रिंगणादिना वर्द्धयंती । ज्योत्स्ना चंद्रकलायुक्ता रात्रिरिवाह्नां क्रमतः दिवसक्रमेण ववृधे ॥ १७ ॥ कविकाव्येषु ये रसालंकारादयस्तदाश्रयभूतानि वाक्यान्युवाच । राजा तु स्वकन्यायाः

प्रौढबुद्धिं वाक्पटुत्वं च दृष्ट्वा तस्या अध्यापनाम कविश्रेष्ठमिच्छितवान् ॥ १८ ॥ दंडिने शिष्याय । विषयान्देशान् ॥१९॥ राजपुरोहितः कविश्रेष्ठं बिल्हणमागतं श्रुत्वा स्वकन्याध्ययनेच्छुं राजानं प्रति । देवपूजिता वेदमाता यत्र सरस्वती तत्र काश्मीरदेशेऽस्ति । तस्मादत्रास्मिन्ननलपुरे गुणज्ञं त्वां प्राप्त इत्युक्तवान् ॥ २० ॥ काश्मीरकस्य काश्मीरदेशस्थस्य ॥ २१ ॥ अर्थनया प्रार्थनया स्वसदृशेऽमौल्यात्मासनतुल्ये ॥ २२ ॥ अथ बिल्हणकविः राज्ञे तस्य

काश्मीरकेऽथ कविबिल्हण आत्मपीठं यद्दंडिने खलु ददौ च रहस्यमंत्रान् ॥ ज्ञात्वैव तां भुवि गतां विषयान्भ्रमन्स प्रापाथ गुर्जरपतिं नृपवीरसिंहम् ॥ १९ ॥ श्रुत्वाऽऽगतं कविवरं नृपतेः पुरोधाः प्राहात्मजाध्ययनकांक्षिणमेनमित्थम् ॥ यत्रास्ति वेदजननी सुरपूजिताऽस्मात्प्राप्तोऽत्र बिल्हणकविर्गुणकोविदं त्वाम् ॥ २० ॥ आकर्ण्य बिल्हणकवींद्रमुपागतं तं राजा पुरोधसमुवाच तमानयेति ॥ ख्यातस्य बिल्हणकवेरिह दर्शनं हि काश्मीरकस्य खलु दुर्लभमेव मन्ये ॥ २१ ॥ सोऽथानयत्सपदि मानपुरःसरं तं राजाग्रतः सदसि चार्थनया पुरोधाः ॥ दृष्ट्वैव बिल्हणकविं नृप उत्थितोऽमुं स्थाप्यासने स्वसदृशे च ननाम भूयः ॥ २२ ॥ प्राहाशिषो नृपतयेऽथ कविः सुपद्यैस्तद्धैर्यशौर्यगुणवित्त्ववदान्यताढ्याः ॥ शृंगारमुख्यनवभिः सुरसैर्मनोज्ञाः सद्रूपकादिभिरलंकृतिभिश्च मान्याः ॥२३॥ बिल्हण उवाच ॥ त्वद्धैर्यं वीक्ष्य राजन्कनकगिरिरितो दूरतोऽभूत्तथाब्धिर्गांभीर्यं क्षारवारिर्भ्रमति रविरथो वीक्ष्य शौर्यं तथेंदुः ॥ कीर्तिं श्रुत्वा कलंकी वितरणभयतोऽभूत्सुरो यो नृधर्मा यक्षेशोऽथाखिलज्ञे भवति हि कुगते दैवनिष्ठो विधिश्च ॥ २४ ॥ स्त्रीभिः शृंगारकेलिः परहरणपटुर्वीरसिंहः कृपाढ्यो नम्रान्कीर्त्याद्भुतोऽल्पैर्युधि सहासि भयात्तेऽखिला धर्मशीलाः ॥ बीभत्साः शत्रवस्ते युधि मरणगतास्त्वं हि रौद्रेऽपराधे शांतः साधौ सदास्तु त्वयि हरिहरयोर्नित्यवात्सल्यमेव ॥ २५ ॥

धैर्यशौर्यगुणत्वोदारत्वयुक्तान् शृंगारादिनवरसविलसितानुत्तमरूपकाद्यलंकारैः सत्कृतानाशीर्वादान्राज्ञे सुपद्यैर्ददौ ॥ २३ ॥ सुरो देवयोनिर्यः कुबेरः सः त्वत्कृतदानेन भीतियुक्तः सन् मनुष्यधर्माऽभवत् । भवति त्वयि पृथिवीं गते सति ब्रह्मा दैवपरोऽभवत् । अत्र वीरसिंहराज्ञः असंभाव्यगुणवर्णनादतिशयोक्तिरलंकारः । स्रग्धरावृत्तम् ॥ २४ ॥ सकलरसाश्रयत्वेन वर्णयन्नाशीर्वादयति स्त्रीभिरिति । राज्ञः क्वचिद्रसाश्रयत्वं क्वचिदन्यनिष्ठस्योद्दीपकत्वं क्वचिदालंब

नत्वं तत्र स्त्रीभिः सह शृंगारकेलिः शृंगारक्रीडावान् । अत्रालंबनं स्त्रियः उद्दीपका राकादिः । राज्ञि स्थायीभावः शृंगाररसः अनङ्गः फलं वीररसाश्रयो राजा शत्रुसंग्रामभूमी रसकरणभूतौ आलंबनोद्दीपनविभावौ । शत्रुजयः फलं करुणाश्रयो राजा । नम्रजनतत्प्रार्थनादिविभावौ परदुःखहानिः फलम् । अद्भुत रसाश्रयो राजा । पराक्रमकीर्त्यादिविभावौ । अलौकिकत्वं फलं हास्याश्रयो राजा । अल्पपुरुषास्तद्युद्धं च विभावौ कौतुकं फलम् भयरसाश्रयाः सर्वपुरुषाः । राजा तत्पराक्रमश्च विभावौ । धर्मशीला इति रसफलं बीभत्साश्रयाः शत्रवः । राजयुद्धपटुत्वादिविभावौ । मरणं गता इति फलम् । रौद्राश्रयो राजा । अप

काश्मीरतोऽहमपि वर्षयुगेन राजन्पश्यन्गुणज्ञमपि नैजगुणप्रसिद्ध्यै ॥ अत्रागतः क्व च गुणज्ञमवेक्ष्य न त्वां श्रीवीरसिंह गुणवन्मुखगीतकीर्ते ॥ २६ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं हि बिल्हणनिबंधितपद्यशब्दैस्तुष्टः पुरोधसमथाह स वीरसिंहः ॥ स्नानांशुकासनविलेपनभोजनाद्यैः सद्योजनां कुरु कवेर्हि यथा सुतोषः ॥ २७ ॥ आनीय दूतकरतस्तनयां तयाथ राजा नतिं कविवराय च कारयित्वा ॥ प्राहेति शिक्षय कवे त्वमिमां सुशास्त्रैर्योल्पाप्यहो सकलबुद्धिमतां वरिष्ठा ॥ २८ ॥ कन्यामथाह तनयेऽखिलखेलनं त्वं त्यक्त्वैव चाद्यदिनतः स्ववयःसमाभिः ॥ शास्त्राण्यतोऽनुदिनतो मुहुरभ्यसंती तिष्ठस्व बिल्हणकवेस्तु समीप एव ॥ २९ ॥ तस्थावसौ नृपगृहे कविबिल्हणोऽथ तां शिक्षयञ्छशिकलां क्रमशः सुशास्त्रैः ॥ भोगैर्नृपेण निखिलैः समयोचितैश्च सन्मानपूर्वमतितोषितचित्तवृत्तिः ॥ ३० ॥ साहर्निशं नृपसुताखिलबाललीलास्त्यक्त्वैव बाल्यवयसाप्यचिरेण सर्वाः ॥ आदाय बिल्हणकवेः किल शास्त्रविद्याश्चित्ते पितुर्नृपवरस्य मुदं ततान ॥ ३१ ॥ इत्थं कृतां कविवरेण सुशिक्षितेन कन्यां निरीक्ष्य च नृपोऽखिलविद्वरिष्ठाम् ॥ प्राणाधिकामपि तयोरुभयोश्चकार प्रीतिं तदा दुहितृबिल्हणयोः सुतुष्टः ॥ ३२ ॥

राधि तदाचरणं च विभावौ । दंडादि फलम् । शांत्याश्रयो राजा । साधवस्तत्सेवा च विभावौ । आत्मसुखं फलम् । त्वयि त्वन्निमित्तं वात्सल्याश्रयौ हरिहरौ । राजा तन्निष्ठा च विभावौ । कृतार्थता फलम् । वात्सल्यं करुणारसेऽन्तर्भाव्यं भक्तिरसं शांतिरसेऽन्तर्भाव्य । एवं नवरसचतुरे त्वयि विषये हरिहरयोर्वात्सल्यं गवि वत्सविषयमिव भवत्विति भावः ॥ २५ ॥ वर्षयुगेन वर्षद्वयेन स्वगुणप्रसिद्ध्यै गुणवतां मुखैर्वर्णितकीर्तेः वसंततिलका वृत्तम् ॥ २६ ॥ २७ ॥ दूतकरतः दूतहस्तेन ॥ २८ ॥ अतः बिल्हणकवेः सकाशात् । अनुदिनतः प्रतिदिनेषु ॥ २९ ॥ ३० ॥ ३१ ॥ इत्थंकृतामेवं शिक्षितां सुंदरं शिक्षितं

शिक्षा यस्य तेन ॥ ३२ ॥ कामस्य निवासयोग्येन शरीरेण शुशुभे ॥ ३३ ॥ वचसा वसुधेवामृतरूपिणीव खंजरीटी पक्षिविशेषः । गमनेन हंसीव विभाति । कवेर्बिल्हणस्य चेतोहरा बभूव ॥ ३४ ॥ त्वत्प्रीतिव्यतिरिक्तं मया कर्तव्यं नास्तीत्यर्थः ॥ ३५ ॥ काले द्वादशादिवर्षे योग्यं स्त्रीभोगादिकं निश्चित्य " गांधर्वसमयान्मिथः " इति याज्ञवल्क्यस्मृतौ परस्परसंतोषनिमित्तो यो विधिस्तेन पाणिं जगृहे ॥ ३६ ॥ यूनोस्तरुणयोः

एकादशाधिकवयाः कुसुमायुधस्य संस्थानयोग्यवपुषा शुशुभे मृगाक्षी ॥ किंचित्प्रकाशितकुचामणुलब्धलज्जां चाशिक्षयत्कविरिमामथ कामशास्त्रम् ॥ ३३ ॥ सा कामशास्त्रनिपुणा वचसा सुधेव दृष्ट्या विभाति चतुरा किल खंजरीटी ॥ गत्या तथैव वरटा हसितेन रम्या चेतोहरा शशिकलेति कवेर्बभूव ॥ ३४ ॥ ज्ञात्वाथ कामहृदयं स्वगुरुं धियैव प्राहेति तं शशिकला बहु चार्थयंती ॥ स्वामिन्कुरुष्व तव चेतसि रोचते यत्प्रीतेर्न ते हि मम जन्मनि साध्यमन्यत् ॥ ३५ ॥ तामप्यनंगशरविद्धहृदं विदित्वा वाक्येन बिल्हणकविः स्मितपूर्वकेन ॥ कालोचितं हृदि विचिंत्य च कर्म पाणिं गांधर्वकेण विधिना जगृहे स तस्याः ॥ ३६ ॥ सुज्ञोऽपि बिल्हणकविर्वशतां स्मरस्य प्राप्तस्तथा शशिकलाखिलशास्त्रनेत्री ॥ यूनोस्तयोरिति बभूव तदा सुशिष्यागुर्वोरपि ह्यघटितं घटितं तदानीम् ॥ ३७ ॥ तस्मिन्हि राजसदने बहुपुष्पमाले सच्चंदनैणमदकेसरलिप्तकुड्ये ॥ शृंगारसाधनयुतेऽथ रहो विलासश्चासीन्नृपेंद्रसुतया कविबिल्हणस्य ॥ ३८ ॥ मंचे ह्युदंचितवितान उदाढ्यशय्ये तां लज्जितां शशिकलां करतः प्रगृह्य ॥ आलिंग्य गाढमधरे सरदं प्रचुंबन्रोमांचितां कविवरो बुभुजेतिगूढम् ॥ ३९ ॥

सतोः ॥ ३७ ॥ बद्धाः पुष्पमाला यस्मिन्नुत्तमचंदनकस्तूरीकेसरलिप्तानि कुड्यानि यस्मिन् कामोद्दीपनपदार्थयुक्ते राजगृहे एकांते तयोर्विलास आसीत् ॥ ३८ ॥ उदूर्ध्वं शोभितविताने उत्कृष्टा चासौ आढ्या युक्ता शय्या यस्मिंस्तस्मिन्मंचे शशिकलां हस्तेन प्रगृह्य सरदं सदंतं यथा स्यात्तथा ॥ ३९ ॥

विद्याप्रदस्य प्रत्युपकाराय दातुं योग्यमन्यददृष्ट्वा गुरुदक्षिणार्थं भक्त्या स्वदेहं ददौ ॥ ४० ॥ गणरात्रं बह्व्यो निशाः अतिक्रांताः । तदुभयोश्चेष्टितम् ॥ ॥ ४१ ॥ उभयोरेतत्कृत्यस्य एतौ कामपराविल्यस्य संभवो मम मनसि न प्रतिभाति ॥४२॥ कीर्तिनाशकावपकीर्तिकरौ स्वशरीरदुःखदं हस्तपादादिगात्रमपि अतिदुःखे सति लोके यथा छिद्यते तथैतौ घातयामीत्यर्थः ॥४३॥ एताः परिचारिकाः इदं तयोर्विलासादिचेष्टितम् ॥४४ ॥ यत्र तयोर्निवासस्तत्र गत्वा



तांबूलचंदनविलेपनपुष्पपूर्वं तं पूजयंत्यनुदिनं गुरुमंबुजाक्षी ॥ भक्त्या ददौ निजतनुं गुरुदक्षिणार्थं विद्याप्रदोपकृतये समवेक्ष्य नान्यत् ॥ ४० ॥ इत्थं गतं हि गणरात्रमथैतयोस्तु मंदस्मितेन च मिथः सकटाक्षदृष्ट्या ॥ ज्ञात्वा रहः शशिकलां कविना रमंतीं प्राहुर्नृपाय च रहःपरिचारिकास्तत् ॥ ४१ ॥ दूतीमुखेन नृपतिस्तु निशम्य सर्वं प्राहेति ताः खलु न संभव एव मेऽतः ॥ कृत्यस्य चास्य परिभाति कविस्वपुत्र्योर्ह्यध्यापनाध्ययननिष्ठधियोः सदैव ॥ ४२ ॥ युष्माभिरेतदत एव परीक्ष्य सम्यग्वाच्यं हि मह्यमखिलं च यथा तथैव ॥ चेत्तावसुप्रियतमावपि कीर्तिनाशौ हन्म्येव गात्रमिव नैजतनुप्रतापम् ॥ ४३ ॥ अंतःपुरं ययुरथेति नृपोक्तिमेताः श्रुत्वा पुनर्ददृशुरेव तयोश्चरित्रम् ॥ राज्ञः पुरः पुनरपीति जगुर्न मिथ्याऽस्माभिः समीक्षितमिदं पुनरेव साक्षात् ॥ ४४ ॥ श्रुत्वा नृपोऽपि सकलं च धियातिधीरो गत्वा स्वयं निशि यतोऽस्ति तयोर्निवासः ॥ तिष्ठन्बहिस्तमसि गूढतयैक एव शुश्राव बिल्हणकवि स्वसुतावचांसि ॥ ४५ ॥ तावत्कविः शशिकलामिति चाह सुभ्रूस्त्यक्त्वाखिलान्पितृसुहृन्निजबंधुमुख्यान् ॥ प्राप्तोऽहमेक इह दैवव शात्सुदूरं न त्वां विनास्ति च परः सुहृदेव कश्चित् ॥ ४६ ॥

॥४५॥ यावद्राजा शुश्राव तावत्कविः शशिकलां प्राह सुभ्रूरित्यादिकविभाषणे शशिकलाविषयत्वेन दृष्टिविषयत्वेन चार्थद्वयोपन्यासाद्वक्ष्यमाणराजभाषणसमये कविकृतशशिकलविषयार्थापह्नुत्या चालंकारबाहुल्यं भवति । तदुक्तम् "उपमेयं समीकर्तुमुपमानेन योज्यते । तुल्यैककालक्रियया यत्र सा तुल्ययोगिता " इति दृष्टयुपमानेनोपमेयस्त्रीसमीकरणात्तुल्ययोगितालंकारः । "उक्तसिद्धयर्थमन्यार्थन्यासो व्याप्तिपुरःसरः । कथ्यतेऽर्थांतरन्यासः " इति । अत्र स्त्रियः

अतिप्रियत्वसिद्ध्यर्थमन्यार्थस्य दृष्टेरतिप्रियत्ववर्णनादर्थांतरालंकारः । " नैतदेतावदेवैतदित्यपह्नवपूर्वकम् । उच्यते यत्र सादृश्यादपह्नुतिरियं मता । " उपमेयस्त्रीवाच्यतानिषेधेन उपमानदृष्टिप्रकारकोपमेयप्रकाशनादपह्नुत्यलंकार इत्यादयः । हे सुभ्रूः । शशिकलापक्षे सुष्ठु भ्रुवौ यस्याः । दृक्पक्षे सुष्ठु भ्रूः यस्यास्तस्याश्च संबुद्धिः । पित्रादीन् सर्वान् त्यक्त्वाऽहमेक एवात्र सुदूरं दैवयोगात्प्राप्तोऽस्मि । त्वां शशिकलां दृष्टिं च विनाऽन्यः सुहृत् प्रियंकरो हितकर्ता च कश्चिदेव नास्ति ॥ ४६ ॥ किं च । कमलेव लक्ष्मीरिव स्वीकृतरूपा । अन्यत्र कमलमिव स्वीकृतरूपा । कमलसदृशी त्वमीषत् किंचिदेवावयवादिकम् । अन्यत्राधोभागं वा प्रतिदिनं स्फुरयंती विक्षिपंती । पक्षे चालयंती सती मां प्रति अप्रियं वदसि । अन्यत्र अप्रियं वामनेत्राधोभागस्फुरणस्य दुष्टफलत्वेनानिष्टं

चेदप्रियं वदसि मां त्वमपीषदेव संस्फूरयंत्यनुदिनं कमलात्तरूपा ॥ खेदं प्रयाति च ततो विशदं मनो मे नातः कुरुष्व विमले मयि रुष्टतां वै ॥ ४७ ॥ चेन्मे त्वया क्षणमपीह भवेद्वियोगः स्वांगस्थया सहगया प्रियया तवाहम् ॥ आज्ञानुगः किमपि नाकगतं च पश्ये लब्ध्वा तवैव विरहाब्धिमहांधकारम् ॥ ४८ ॥ कार्या त्वया मयि ततः करुणैव नित्यं नैव स्मृतिः खलु ययात्मजनस्य मे स्यात् ॥ स्यात्ते घृणेषदपि चेन्मयि वै तदा मे चेतः स्मरत्यतिभयान्निजताताबंधून् ॥ ४९ ॥

वदसि सूचयसि यदि तर्हि ततो निर्मलमपि मन्मनः खेदं विषादं प्राप्नोति । अतः कारणाद्धे विमले मयि रोषं मा कुरु ॥ ४७ ॥ किं च स्वांगस्थया वामांकगतया । अन्यत्र स्वांगं स्वशरीरावयवभूतं मुखं तत्र स्थितया सहगया सहचारिण्या प्रियया त्वया मे क्षणमात्रं वियोगो राहित्यं यदि भवेत् तर्हि तवाज्ञानुगः आज्ञापालकः अन्यत्र त्वद्वशवर्त्यहं त्वद्विरहजन्यः समुद्रजन्यः समुद्रतुल्यो मोहांधकारो मोहस्तं पक्षे त्वद्विरहसमये समुद्रसदृशो महानंधकारस्तमः तं प्राप्यांकंगतं समीपगतं किमपि न पश्यामि ॥ ४८ ॥ यतोऽहं सर्वथा त्वदधीनस्ततस्त्वया मयि स्वात्मार्पणेन अन्यत्रेष्टस्थानस्फुरणेन नित्यं करुणैव कर्तव्या यया करुणया मह्यं स्वजनस्य स्मरणं न भवेत् । मयि किंचिदपि तवाघृणाऽदर्शनरूपा । अन्यत्रानिष्टस्थानस्फुरणरूपाऽवरूपा यदि स्यात्तदा मम चित्तमति

भयेन स्वपित्रादीन्स्मरति ॥४९॥ नैजललनां स्वस्त्रियमिव यदवदत्तदश्रृणोदिति संबंधः । कामातुरस्य विचारो नास्तीति यत्तदद्य मया दृष्टमित्यर्थः ॥५०॥ शुद्धांतगाभिरंतःपुरचारिकाभिः । "अंतःपुरं स्यादवरोधनम् । शुद्धांतश्चावरोधश्च" इत्यमरः । यदुक्तं तत्सत्यमेव । हि यस्मान्मयि वृत्तिरुपजीविका यासां ताभिः । अघं पापवचनं मयि मत्समीपे मृषा किमुच्यते । अपि तु सत्यमेवेत्यर्थः । अखिलं कन्यादूषणादि । अयं बिल्हणकविः ॥ ५१ ॥ हे वित् हे

एवं गुरुस्त्ववदद्देष हि छात्रिणीं च कामीव नैजललनां नृप आशृणोत्तत् ॥ ज्ञात्वेति चाह मनसा न विचार एव कामाभिभूतमनसः खलु दृष्टमद्य ॥ ५० ॥ शुद्धांतगाभिरधुनेरितमेव सत्यं मद्वृत्तिभिर्मयि मृषा हि किमुच्यतेऽघम् ॥ ज्ञातं मयाखिलमथापि न दृष्टमद्धाऽतः सूक्तिभिः कविरयं खलु भाषणीयः ॥ ५१ ॥ कृत्वेति निश्चयमथाह नृपः कवींद्रं त्वं कां प्रसादयसि विद्वद् तन्निशीथे ॥ ज्ञात्वेति भूपवचनं कविरक्षि वामं संमर्दयन्नृपमथाह बहिः समेत्य ॥ ५२ ॥ श्रीबिल्हण उवाच ॥ राजन्हगेव मम वामगताऽस्फुरच्चाधस्ताद्यथा स्वजनदुष्फलसूचिका वै ॥ सा प्रार्थिता किल मयापि शुभाततेयद्य यद्वर्ण्यते कविभिरल्पमपीज्यवाक्यैः ॥ ५३ ॥ श्रुत्वा कवीरितमिदं नृपतिस्तदुक्तं पूर्वं प्रसादनमसौ मनसैव सर्वम् ॥ आपश्यदर्थमिह हग्विषयं हि विद्वान्प्रासादिकस्य वचनेऽपि गिरस्तु नान्यत् ॥ ५४ ॥ तावद्ययौ शशिकला च नृपेऽतितूष्णींभूते प्रणम्य तमथाह गुरुर्मदीयः ॥ विद्यावतां गुणवतां च पितर्गरिष्ठस्तं वीक्षितुं मम हगेव सदातितृष्णा ॥ ५५ ॥ इत्थं नृपः सुधिषणौ स्वसुताकवींद्रौ वीक्ष्याह चांतरिति काम वशौ न चैतौ ॥ कामाभिभूतमनसोर्हि कुतस्तु सद्धीः साक्षान्ममाग्रत इयं भयहीनवाक् च ॥ ५६ ॥

विद्वन् । त्वं निशीथसमये कां प्रसादयसि तद्वद ॥ ५२ ॥ यद्यस्मात्कविभिरल्पं क्षुद्रमपि उत्तमवाक्यैर्वर्ण्यते ॥ ५३ ॥ स विद्वान्राजा इह पद्यचतुष्टये हग्विषयमेवार्थं मनसा आ साकल्येनापश्यत् । हि यस्माद्गिरः सरस्वत्याः प्रासादिकस्य प्राप्तप्रसादस्य वचने अन्यन्मृषावचनं किंचिन्नास्तीति ज्ञातवानित्यर्थः ॥ ५४ ॥ अतितृष्णा । उत्कंठितैव भवति ॥ ५५ ॥ अंतर्मनसि हि यस्मात्कामाभिभूतस्येयमुत्तमबुद्धिर्निर्भयवाक्यं साक्षान्ममाग्रे कथं स्यान्न कथम्

पीत्यर्थः ॥ ५६ ॥ गुरौ धीर्निष्ठा यस्याः सा शीलेनोत्तमबुद्ध्या उत्तमगुणैश्च युक्तायां तस्यां मम कन्यायाम् ॥ ५७ ॥ यद्यपि बाह्यदृग्भिः सामान्यदृग्भिः शुद्धांतगाभिरंतःपुरगाभिः परिचारिकाभिरुत्तमगुणवतोरनयोर्बिल्हणमत्सुतयोरिति समानशीलत्वेन मिथः प्रीतिं दृष्ट्वा तु वृथा दुष्कल्पना कामसक्तावित्यारोपः कृतस्तथापि गुणवेत्रा मया स्वांतःकरणे उभयोर्विषये सा कल्पना नांगीकृता ॥ ५८ ॥ इत्थंमतिरेवं बुद्धिमान् ॥ ५९ ॥

विद्यागुणातिशयमस्य कवेर्निरीक्ष्य तस्मिन्दधौ मम सुता गुरुधीः स्वचित्तम् ॥ शीलेन सद्धिषणया सुगुणैश्च तस्यां छात्रिण्यसाविति मतिं कविबिल्हणश्च ॥ ५७ ॥ शुद्धांतगाभिरनयोर्हि मिथस्त्वितीक्ष्य प्रीतिं मुधा सुविदुषोरपि बाह्यदृग्भिः ॥ दुष्कल्पना खलु कृतापि मया न सत्या सा स्वीकृता गुणविदा ह्युभयोर्निजांतः ॥ ५८ ॥ इत्थंमतिर्नृपवरोनुदिनं निशीथे त्वेको ययौ गृहगतेषु सभाजनेषु ॥ बद्धो गुणैः शशिकलाकविवर्ययोश्च नो वेद गूढमणु चाप्यनयोश्चरित्रम् ॥५९॥ श्रुत्वा क्षणं शशिकलाकविभाषणानि राजा रसज्ञचतुरोथ च याति शय्याम् ॥ तस्मिन्गते विविधकामकलाप्रभेदैस्तौ चक्रतुः सुरतकेलिमुभौ युवानौ ॥ ६० ॥ प्राहैकदा शशिकलां रमणः कविस्तां खल्वावयोर्विदितमेव रहोगतं यत् ॥ शुद्धांतगाभिरिति संकथितं च राज्ञेतश्चागतो निशि स गूढ इहैक एव ॥ ६१ ॥ तेनावयोरपि रहोगतभाषणानि श्रुत्वेति संशयवतैव च मेपि पृष्टम् ॥ तद्गोपितं खलु मयापि गिरः प्रसादाद्यात्येव भूप इह नित्यमथापि रात्रौ ॥ ६२ ॥ राज्ञावयोर्यदि निरीक्षितमेतदद्धा नित्यागमादिह च दैववशात्कदाचित् ॥ वध्योऽभविष्यमसुभिः सह तेन शस्त्रैर्यद्वंशलांछनमहागसि कः क्षमावान् ॥ ६३ ॥

शय्यां निद्रास्थानम् ॥ ६० ॥ रहोगतमेकांतवर्तमानम् ॥ ६१ ॥ तेन राज्ञा मे मह्यं यत्पृष्टं तद्भाषणादिकं यद्यपि गोपितम् ॥ ६२ ॥ एतदावयोः सुरतं तर्हि प्राणैः सहाहं शस्त्रैः करणैः तेन राज्ञा वध्यः घातयितुं योग्यो भविष्ये। यद्यस्मद्वंशदूषणरूपे महापराधे सति कः क्षमावान्न कोऽपीत्यर्थः ॥ ६३ ॥

इह मयि प्रथमां त्वत्पाणिग्रहणात्पूर्वं या तां मतिं निश्चयं कुरु । आत्मविषयान्स्वदेशान् अवनीशं पृथिवीपतिं वरं वरय स्वीकुरु ॥ ६४ ॥ वृक्षोज्झिता वृक्षेण त्यक्ता ॥ ६५ ॥ करतः करेण असुसंकटे प्राणोत्क्रमणेऽप्यंगीकृतं जनम् ॥ ६६ ॥ अन्यं पतिं कुर्वंति तत्राह । स्वप्नेऽपीति । उत्थिता जागृताहं कुतोऽन्यं पतिं स्मरामि न कथमपीत्यर्थः । अन्यं त्वदन्यम् । अतोऽहं भवता न त्याज्या ॥६७॥ भवदाश्रयास्त्वदाश्रया ये ते प्राणाः न स्थास्यंति स्थितिं

तस्मान्ममाद्यदिनतस्त्वमिमं कुसंगं त्यक्त्वैव कुर्विह मतिं प्रथमां सुशीले ॥ यास्येऽहमात्मविषयान्सुहृदीक्षणाय त्वं चात्मरूपसदृशं वरयावनीशम् ॥ ६४ ॥ प्रोक्तेति सा शशिकला कविबिल्हणेन वृक्षोज्झिता लघुलतेव पपात चोर्व्याम् ॥ मूर्च्छा मवाप्य महतीमथ बिल्हणस्तामुत्थापयन्नपरितश्च सिषेच वारि ॥ ६५ ॥ प्राहाथ तं नृपसुता शृणु कांत नैव त्याज्याहमद्य भवता करतो गृहीता ॥ गांधर्वकेण विधिना त्वसुसंकटेऽपि नांगीकृतं सुकृतिनो विसृजंति धीराः ॥ ६६ ॥ स्वप्नेऽपि नैव मनसापि पतिं त्वदन्यं कांतं स्मरामि च कुतः पुनरुत्थिताऽहम् ॥ वाचा दृशाप्यखिलवृत्तिभिरिंद्रियाणां गृह्णामि नान्यमिति नो भवताहमुज्झ्या ॥ ॥ ६७ ॥ स्याच्चेत्त्वया क्षणमपीह च मे वियोगः स्थास्यंति नासव इमे भवदाश्रया ये ॥ स्थातुं क्षमं न जलजैरजले तडागे केऽपि स्वजीवनमृते हि नजीविताः स्युः ॥ ६८ ॥ श्रुत्वामुना शशिकलोदितमित्थमस्याः प्राणाधिकात्मनि च भक्तिरिति स्वबुद्ध्या ॥ ज्ञातं ततः कविरिदं सुदतीं रुदंतीं प्राहाहमिंदुवदने न विसर्जये त्वाम् ॥ ६९ ॥ प्राणाः प्रयांतु मम दुर्मरणात्त्वदर्थं ग्रामाद्गतिर्भवतु मे खरयानतश्च ॥ दुर्वाक्यतोऽखिलजनाश्च शपंतु मां वै कुर्वंतु वा पतितमप्यखिलाश्च विप्राः ॥ ७० ॥ धर्मः प्रणश्यतु परः प्रभवत्व धर्मो नाहं बिभेमि नरकादतिदुःखदाच्च ॥ श्रीमद्गुरोः पदरजःसुपवित्रमूर्धा नेक्ष्यो यमेन हि कुतः पुनरस्य दूतैः ॥ ७१ ॥

न करिष्यंति । न जीवितं येषां ते नजीविताः मृताः नञर्थस्य नशब्दस्य जीवितपदेन सुप्सुपेति समासः । त्वद्वियोगेनाहं मरिष्यामीत्यर्थः ॥ ६८ ॥ अमुना बिल्हणेन । अस्याः भक्तिर्मयि प्राणाधिकास्तीति ज्ञातम् ॥ ६९ ॥ दुर्मरणाद्राज्ञा प्रापितदुर्मरणेन । पतितं प्रायश्चित्तिनम् ॥ ७० ॥ परो धर्मः ब्राह्मणत्वादि

रूपः । अधर्मः खरयानादिः श्रीमद्गुरोः पादरजसा सुपवित्रमस्तकोऽहं यमेनापि न दर्शनीयः । किं पुनस्तस्य दूतैरिति । " येन पूतस्तरति दुष्कृतानि " इति श्रुत्या गुरुचरणाश्रितानां कुतोऽपि भयं नास्तीत्यर्थः ॥ ७१ ॥ ७२ ॥ पुरोहितः एकमेकाकिनं तं राजानं प्राह । भवता त्वयेदं बिल्हणचरित्रं न ज्ञातं किम् अपि तु ज्ञातमेव । अतः श्रुतमप्यघं दोषोऽपकीर्तेर्हेतोस्त्वयोपेक्षितं किम् ॥ ७३ ॥ दुर्वृत्तकौ दुराचरणौ परस्परं सुहृदयो तव त्वया न दंड्यौ

इत्थं वचोभिरमुना परिसांत्विता सा जाता प्रसन्नवदना स्मितशोभिवक्त्रा ॥ एवं हि तौ शशिकलाकविबिल्हणाख्यौ चिक्रीडतू रतिविदौ नृपवीरगेहे ॥७२॥ शुद्धांतगाभिरखिलं नृपतेः पुरोधाश्चाकर्ण्य वृत्तमनयोरनयं रहःस्थम् ॥ एकांतमाह भवतेदमथो न किं भो ज्ञातं ह्युपेक्षितमघं श्रुतमप्यकीर्तेः ॥ ७३ ॥ दुर्वृत्तकौ च सुहृदौ स्वसुताकवींद्रौ दंड्यौ न चेतसि तवेति ममापि भाति ॥ श्यामां प्रियामपि च भर्तृहरिर्जघान दुर्वृत्ततः प्रियमथापि भवेद्ध्यनिष्टम् ॥ ७४ ॥ त्वं वीरसिंह नृपवीरवरार्चितांघ्रिः सद्धर्मपालनपटुः प्रथितः पृथिव्याम् ॥ वर्णाश्रमास्तव भयान्निजधर्मनिष्ठास्त्वद्गेह एव कथमेष महानधर्मः ॥ ७५ ॥ नैवाग्रतस्तव जनैः किमपीपदेव भीत्योच्यतेऽथ नृप पृष्ठत एव सर्वैः ॥ यज्जल्प्यते तदहमत्र न वक्तुमीशस्तस्मात्तदेव कुरु नैव यतोऽपकीर्तिः ॥ ७६ ॥ इत्थं नृपः स्वकुलपूजितवाक्यमुग्रं श्रुत्वा रुडग्निविशिखाखिलतप्तगात्रः ॥ आहूय मंत्रिण उवाच महागसां यो दंडः स बिल्हणकवेर्द्रुतमेव कार्यः॥७७॥

दंडार्हौ नस्त इति मच्चित्ते प्रतिभाति । एवं मा कुर्वित्याह । पूर्वं भर्तृहरिः श्यामां स्वभार्यामपि दुर्वृत्ततः दुष्टाचरणहेतोः हतवान् हि यस्मात् । दुर्वृत्त इति काकाक्षिवदुभयान्वयि । प्रियमप्यनिष्टं भवति ॥ ७४ ॥ धर्मरक्षकस्य राज्ञस्तु तवैतन्न युक्तमित्याह त्वमिति ॥ ७५ ॥ पृष्ठतः पश्चात् । यतो येनापकीर्तिर्न स्यात्तत्कुरु॥७६॥कुलपूजितवाक्यं पुरोहितवाक्यं श्रुत्वा क्रोधाग्निज्वालाभिः अखिलं सर्वं तप्तं गात्रं देहो यस्य। महागसां महापराधिनाम् ॥ ७७ ॥

ते प्रधानपुरोहिताः अधिहंतॄन्पापिमारकान्प्रत्याहुः । यद्यपि राज्ञा ब्राह्मणे शरीरदंडाभावविदुषा दंडमात्रमुक्तम् । तथापि ते कविमानरुषः कवि
सत्कारजनितकोपवंतो वधायैवाज्ञां ददुरित्याह । वध्य इति । यतो महागाः महापराधी ॥ ७८ ॥ त आज्ञापिताश्चोरहंतारो यत्र बिल्हणोऽस्ति तद्राज
मंदिरं ययुः बहिःस्थिताः संतो बिल्हणं प्रति ये महापराधिनस्ते यत्र हन्यंते तत्र त्वं राज्ञा वधार्होसीति ज्ञापितः सत्रागच्छेत्यर्थः ॥ ७९ ॥ मनस्वी स्व
तंत्रः त्यक्तांगमुख्येषु देहादिषु ममता येन सः ॥ ८० ॥ अप्सरोभिरिति स्वस्य शिवभावगोपनार्थमुक्तम् । भवती त्वमपि स्वतंत्रा सती अगाधगुणमुत्तम

श्रुत्वेति ते तु कविमानरुषोऽधिहंतॄन्प्राहुर्हि बिल्हणकविर्नृपमंदिरस्थः ॥ वध्यो नृपेण कथितोऽस्ति यतो महागास्तस्माद्भव
द्भिरधुना विनिहन्यतां सः ॥ ७८ ॥ तेऽप्याययुर्नृपतिमंदिरमस्ति यत्र श्रीबिल्हणस्तमिति चाहुरिमे बहिस्थाः ॥ राज्ञाद्य वध्य उदित
स्त्वमथैहि यत्र हन्यंत एव निखिलाश्च महागसो ये ॥ ७९ ॥ श्रुत्वेति बिल्हणकविः सहसा तदुक्तिं स्वांतः स्मरन्गुरुपदाब्जयुगं मन
स्वी ॥ त्यक्तांगमुख्यममतो द्रुतमुत्थितोऽथ प्राहेति तां शशिकलां शरदिंदुवक्त्राम् ॥ ८० ॥ गच्छाम्यहं शशिकलेऽद्य किलाप्सरोभी
रंतुं भवत्यपि सुखादिह चावसंती ॥ यास्यत्यगाधगुणसत्पतिमात्मतंत्रा नैवागमिष्यति पुनः कविबिल्हणोऽत्र ॥ ८१ ॥ ज्ञात्वा तयेति
मम हृत्प्रियकृत्कवींद्रस्त्वेभिर्नृपेण यमदूतसमैः किलाद्य ॥ प्राणैर्विहन्यत इतोऽहमपि स्वकीयांस्त्यक्षाम्यसूनिति धिया स्थितमेव
तूष्णीम् ॥ ८२ ॥ प्राप्तो बहिः कविवरोऽथ सुपूजितस्तत्कालोचितांशुकसुखैर्नृपतेस्तु दूतैः ॥ निन्युस्त एव बहुवाद्यनिनादतोऽमुं
यांतं पुरो ययुरथेक्षितुमेव पौराः ॥ ८३ ॥

पतिं यास्यति प्राप्स्यति ॥ ८१ ॥ तया शशिकलयेति ज्ञात्वा इतः परमहमपि स्वप्राणांस्त्यजामीति बुद्ध्या तूष्णीमास्थितं भावप्रधानो निर्देशः । तूष्णीं
स्थितासीदित्यर्थः । इति किं नृपेण कर्त्रा मन्मनःप्रियकर्तायं बिल्हणोद्य प्राणैः सहैभिः करणैर्वध्यते ॥ ८२ ॥ तत्काले मरणकाले योग्यवस्त्रादिभिः पूजि
तः । ते दूताः बहुवाद्यनिनादतः बहुवाद्यपुरःसरम् । अमुं बिल्हणं पुरः ग्रामान्निन्युः । अथ पौरा अमुं पुर इत्युभयान्वयि । ग्रामाच्च द्रष्टुं ययुर्गृहाद्बहिरि

त्यर्थः ॥८३॥ तदाऽतिवेगेन युक्ताः । अर्द्धकृतकंडनादिकार्याः । काश्चित्करेषु अर्द्धवस्त्राणि परिधानार्थं धृतानि याभिस्ताः । करेष्वर्धवेण्योऽर्धानुष्ठितवेणीबंधाः । एकाक्षिकज्जलयुक्ताः करेषु पादभूषाः यासां ताः उपलक्षणं पादकरभूषाणाम् । तथा नार्यः स्त्रियोऽपि कवींद्रं द्वाःसौधजालनिलया द्वारस्थानात्सौधस्थानाज्जालस्थानाच्च ददृशुः।बिल्हणदंडस्याश्चर्यत्वं मन्यमाना इत्यर्थः॥८४॥आत्तानि प्राप्तानि शास्त्राणि यस्य स इतरे जनाः माहागा महापराधकर्ता राज्ञा एवे त्याहुः अन्ये बत इति खेदे यद्यपि महापराधी तथापि अग्र्यो ब्राह्मणो न हन्यते अयं तु राजा किमर्थमेनं हंतीत्यर्थः॥८५॥उभयोः शशिकलाबिल्हणयोः विदं पंडितं तत्समः स्त्रीसमः इतो राजतः ॥ ८६ ॥ नग्नासिभिर्विकोशखड्गधरैः । अधिष्ठितः आरोपितः शूलो यस्याम् इष्टदमिच्छितपूरकम् ॥८७॥

नार्यस्तथातिरभसार्धितकंडनाद्याः काश्चित्करार्द्धवसनाश्च करार्द्धवेण्यः ॥ एकाक्षिकज्जलयुताः करपादभूषा द्वाःसौधजालनिलया ददृशुः कवींद्रम् ॥८४॥ प्राहुर्मिथोऽथ वनिताः पुरुषाश्च केचित्कामोपमोऽतितरुणः कविरात्तशास्त्रः ॥ राज्ञा न वध्य इतरेऽथ जगुर्महागाः प्राहुः परे द्विजवरोऽयमतो न वध्यः॥८५॥ अन्ये तदाहुरुभयोश्च समेऽपराधे हंत्येनमेव विदमप्यथ नात्मजां सः॥ प्राहुः परे द्विजवरादपि नार्यवध्या तस्यै च तत्सम इतो भवितैव दंडः ॥ ८६ ॥ इत्थं वदत्सु पुरवासिषु राजदूतैर्नग्नासिभिः कविरधिष्ठितशूलभूमौ ॥ नीतोऽथ तं जगुरिभेऽद्य तवांतकालस्तस्मात्स्मरेह निजदैवतमिष्टदं यत् ॥ ८७ ॥ जीवेषु दुर्लभतमं खलु मानवत्वं वर्णस्तथाद्य इह चाखिलमानवत्त्वम् ॥ विद्वत्त्वमत्र च कविष्वपि पूर्वता ते पूर्णेऽखिले न तव धीर्गुहपूर्वताते ॥८८॥ सुज्ञोऽपि कर्मण इहाखिलगर्हिताय यश्चेत्प्रवृत्त उत तस्य जनिर्हिताय॥ नो वै भवेदपि किलाविदनिंद्यवृत्तिः सौख्याज्जनेऽस्य भुवि साधुरिति प्रसिद्धिः॥८९॥

जीवेषु जीवयोनिषु मानवत्वं मनुष्यत्वमतिदुर्लभमस्ति । आद्यो ब्राह्मणवर्णस्तत्रापि दुर्लभः । च पुनः इह ब्राह्मणवर्णत्वे अखिलेभ्यः सर्वेभ्यो मानवत्वं सन्मानवत्वम् । अत्रापि विद्वत्त्वं तत्रापि कविषु पूर्वता प्रथमता तव मुख्यतास्तीत्यर्थः । एवमखिले नृजन्मादिके पूर्णे सति तव बुद्धिः गुहपूर्वताते गुहपूर्वाः स्कंदादयस्तेषां ताते पितरि शिवे । यद्वा गुहस्य पूर्वताते प्रथमपितरि शिवे । अग्निस्तु द्वितीयः पितेति पुराणप्रसिद्धम् तस्मिन् शंकरे तव बुद्धिर्नास्तीत्यर्थः ॥ ८८ ॥ ननु मद्बुद्धिः शिवे नास्तीति कथं ज्ञातमिति चेदाहुः । सुज्ञ इति । सुज्ञः पंडितोऽपि सर्वैर्निंदितं यत्कर्म तदर्थं प्रवृत्तश्चेत्तर्हि जने लोके

सौख्यात्सुखेनास्य साधुरीति प्रवृत्तिर्भवति किल । निंद्यकर्मकरत्वं शिवचिंतके न युक्तमित्यर्थः ॥ ८९ ॥ किंच । उत्तमविद्यया सत्कवितयोत्तमभाषणेन च न दूषणं यस्य तेन त्वया पृथिव्यां महत्त्वं यद्यपि प्राप्तं तथापि तन्महत्त्वं तव राजकन्यया यः स्मरः कामः तेन गतं नष्टम् । तत्र दृष्टांतः । निजस्यात्मनः अस्मरणं विस्मृतिस्तया जडधीः जडदेहात्मबुद्धिस्तया जीवनमात्रस्य कं सुखं ब्रह्मसुखं यथा नष्टं भवति तथेत्यर्थः ॥ ९० ॥ अधुना मरणसमये प्राप्तेऽपि हास्येन हास्ययुक्तमुखेन तवांतर्मनसि योजना यथा परहृदां शत्रुबुद्धीनां जनानामंतो नाशो भवति तथा भाति दृश्यसे । शत्रुमरणे यत्सुखं तत्सुखवानिव प्रतिभासीत्यर्थः । अद्य त्वां प्रति तीक्ष्णं शूलं प्रति वयं रोपयाम यस्मात्तस्मात्त्वं यः स्वहस्ते त्रिशूलं धत्ते तं स्मर॥९१॥किंच । हे कवे अतिकांतं सुंदरं शशि

सद्विद्यया कवितया च सुभाषणेन प्राप्तं त्वया भुवि महत्त्वमदूषणेन ॥ तत्तेगतं हि नृपकन्यकया स्मरेण जीवस्य कं जडधियेव निजास्मरेण ॥ ९० ॥ प्राप्तेऽपि चांतसमये तव योजनांतर्हास्येन भाति हि यथा परहृज्जनांतः ॥ त्वां रोपयाम इह चाद्य हि तीक्ष्णशूलं तस्मात्स्मरावहति यः स्वकरे त्रिशूलम् ॥ ९१ ॥ स्मृत्वा हृदा शशिकलास्यमिहातिकांतं भूयः कवे हि हससीक्षसि नां तिकांतम् ॥ नो विस्मृता हि भवतापि च सासुनाशा व्यर्थांतिके मृतिमतेव निजाशनाशा ॥ ९२ ॥ दूतोदितं वचनमित्थमसौ निशम्य त्यक्त्वैव भूधृततनोरभिमानमाद्यम् ॥ रूपं स्मरञ्छशिकलां स्वकलां स्वलोकं नेतुं हि लौकिक इवेत्यखिलानुवाच ॥ ९३ ॥ या बाल्येऽप्यतिधीमती हि सकलं शास्त्राणि मत्तः स्वयं जग्राहाशु सुभाषिणी बुधवराज्जेतुं क्षमा शास्त्रतः ॥ नान्या यत्सदृशीऽप्रिया ससुमतिः सा मन्मनोवर्तिनी सा मत्प्राणसखी कथं शशिकला नाद्यापि चागच्छति ॥ ९४ ॥

कलाया मुखं मनसा स्मृत्वा त्वं हससि । अंतिके समीपे अंतमृत्युं न पश्यसि । यथांतिके समीपे मृत्युमता आसन्नमरणेन निजाशनाशा स्वभोजनाशा क्रियते तथा त्वयाऽद्यापि असुनाशा असूनां नाशो यया त्वन्मृत्युजनका सा शशिकला तु नो विस्मृतास्ति यन्निमित्तं तव मृत्युः प्राप्तोऽस्ति । तस्याः स्मरणं संप्रति व्यर्थमित्यर्थः॥९२॥असौ बिल्वणः पृथिव्यां यो धृता तनुर्देहस्तस्या अभिमानं त्यक्त्वैवाद्यं मुख्यं रूपं स्वरूपं स्मरन् आत्मकलारूपिणीं शशिकलां निजलोकं प्रति नेतुं लौकिकपुरुषवत्सर्वानुवाच॥९३॥या शशिकला यया शशिकलया सदृशाऽन्या प्रिया नास्तितया मन्मन इव मम मनोगतामिव वर्तते । सा मत्प्राणप्रिया

शशिकलाऽद्यापि अधुनापि नागच्छति न प्राप्नोति । शार्दूलविक्रीडितं वृत्तम् ॥ ९४ ॥ या शशिकला प्रौढा सती पूर्वार्द्धे वाक्यचतुष्टये भातीति क्रिया न्वयः ॥ ९५ ॥ सुमंदहास्ययुक्तं वदनं यस्याः सा । कामतः कामपूरेण ॥ ९६ ॥ अदः इदं तांबूलम् ॥९७॥ संश्वासौ दृढयोः कुचयोः स्पर्शश्च तेन युक्तमस्या आलिंगनं स्मृत्वा संस्फुरति रोमांचितो भवति । औष्ठौ च स्फुरत उत्तमश्लोकप्रयाणे प्रसंगे ॥ ९८ ॥ इत्थमिति कविबिल्हणसंज्ञको यो विग्रहो

या प्रौढा शरदिंदुसन्निभमुखी वै खंजरीटी दृशा वाचा कोकिलमंजुला गमनतो भात्येव या हंसिनी ॥ मत्तो वै किल कामशास्त्रमखिलं चाधीत्य तत्पारगा सा मत्प्राणसखी कथं शशिकला नाद्यापि चागच्छति ॥ ९५ ॥ यत्स्वर्गेऽपि सुदुर्लभं सुमनसां योषित्कटाक्षेक्षणं मां तेनैव सुमंदहास्यवदना पश्यत्यभीक्ष्णं हि या ॥ वाक्येनामृतवर्षिणापि किल मां चक्रे वशं कामतः सा मत्प्राणसखी कथं शशिकला नाद्यापि चागच्छति ॥ ९६ ॥ तांबूलं मरुतां च दुर्लभमदः सोपस्करं मां मुहुर्दत्त्वा चंदनपुष्पहारसुरभिद्रव्यैरलंकृत्य च ॥ रेमे स्वास्तरणे हि मंचकवरे या नित्यमद्धा मया सा मत्प्राणसखी कथं शशिकला नाद्यापि चागच्छति ॥ ॥ ९७ ॥ स्मृत्वालिंगनमेव सद्दृढकुचस्पर्शाढ्यमस्यास्तु मे कायः संस्फुरतीह चुंबनवशादोष्ठौ च या मां क्षणम् ॥ त्यक्त्वा क्वापि न संस्थिताद्य मम सच्छ्लोकप्रयाणोत्सवे सा मत्प्राणसखी कथं शशिकला नाद्यापि चागच्छति ॥ ९८ ॥ इत्थं शिवेन कविबिल्हणविग्रहेण वाक्यैः स्मृता शशिकला निजशक्तिरेषा ॥ उत्तुंगसौधनिलया कविमीक्षमाणा स्मृत्वा शिवः कविरहं हि शिवेत्यजानात् ॥ ॥ ९९ ॥ स्वर्दुर्लभानिह तु भोक्तुमुभौ च भोगान्धृत्वा तनू सुरुचिरे क्षितिगौ किलावाम् ॥ ज्ञात्वा चिरेण कवितामुखसौख्यमत्रायास्याव आत्मपदमाह शिवः पुरेति ॥ १०० ॥

देहो यस्य तेन शिवेन कर्त्रा वाक्यैः स्मृता उच्चप्रासादवासिनी स्वशक्तिरेषा शशिकला कविः शिवोऽस्तीत्यहं शिवोऽस्मीति स्मृत्वाऽजानात् बोधं प्राप्ता जागृतिं प्राप्तेवासीदित्यर्थः ॥ ९९ ॥ एतदेवाह । स्वर्गे दुर्लभान्भोगान्भोक्तुं सुंदरशरीरे धृत्वा क्षितिगौ संतौ कवितादिसौख्यं ज्ञात्वाऽत्र कैलासे स्वस्थानं प्रति शीघ्रं

धास्याव इति मां पुरा शिव आह ॥ १०० ॥ अथैनं स्मरंती सा शशिकला पत्युः बिल्हणस्य गतिं शूलसमीपगमनं च ज्ञात्वा तेन सह युक्ता च स्वपुरं कैलासं गंतुं नभस आकाशाच्चपला विद्युदिव प्रासादादधोदेशे वेगेन सुभ्रूः सहसा पपात ॥ १०१ ॥ सकलकांतयो निधीयंते यस्यां सा मूर्तिर्यस्य । महत्ते जोरूपामित्यर्थः ॥ २ ॥ वरयानं विमानम् । अस्मादाकाशात् । नदंतो ये विकृता विरूपाश्च ते सौम्याः शांतास्ते च ते गणाश्च तैर्युक्तम् ॥ ३॥ अखिलाः पौराः राजसेवकाश्चास्य विमानस्य कौ पृथिव्यामद्भुतम् ॥ ४ ॥ इमे शिवगणाः इति बहुधा प्राथ्यं धृतस्वरूपं शिवं याने संस्थाप्य शिवलोकं निन्युः

इत्थं स्मरंत्यथ गतिं स्वपुरे च पत्युर्ज्ञात्वाथ गंतुमपि तेन युता स्वयं सा ॥ उत्तुंगसौधसदनात्सहसा पपाताधस्ताज्जवेन नभसश्चपलेव सुभ्रूः ॥ १ ॥ पश्यत्सु पौरमनुजेषु ततोतिशीघ्रं शूलाग्रसंस्थितकविं प्रययाविमां तु ॥ द्रष्टुं न कश्चिदपि चास समर्थ एनां स्प्रष्टुं कुतः सकलकांतिनिधानमूर्तिम् ॥ २ ॥ दृष्ट्वागतां शशिकलां स्वकलां कविस्तामालिंग्य गाढ मथ खं च ददर्श यावत् ॥ तावद्ययौ रविसमं वरयानमस्माद्राद्यैर्नदद्विकृतसौम्यगणैश्च युक्तम् ॥ ३ ॥ दृष्ट्वैव यानमखिला श्च निपेतुरुर्व्यां नैव क्षमाः किल निरीक्षितुमस्य तेजः ॥ केचित्स्थिताः शिवपदाब्जरताः सुभक्ताः पश्यंत एतदखिलं परमद्भुतं कौ ॥ ४ ॥ उत्तीर्य यानत इमे कविरूपमीशं नत्वा गणाः स शिव एहि च लोकमीश ॥ संप्रार्थ्य पाहि न इतीह धृतात्मरूपं संस्थाप्य यान इत ऐशपदं च निन्युः ॥ ५ ॥ ते भौतिके च वपुषी किल हासयुक्ते चालिंगिते हि मिथ उज्झितयाममूर्च्छाः ॥ दृष्ट्वा नृपाय जगु रेत्य सविस्मयास्ते श्रुत्वा सविस्मयनृपोऽत्र ययौ समंत्री ॥ ६ ॥ यैर्दृष्टमेतदखिलं कथितं हि वृत्तं राज्ञे निशम्य स च धिङ्मुहुरात्र दन्स्वम् ॥ प्राहेति मत्प्रियतमौ स्वसुताकवींद्रौ यद्विक्कृतौ पराधियाऽविदितौ मुधेशौ ॥ ७ ॥

॥ ५ ॥ तयोः शशिकलाबिल्हणयोः ते तत्र पतिते भौतिके पंचभूतात्मके परस्परसमालिंगिते वपुषी देहौ दृष्ट्वावलोक्य । उज्झिता त्यक्ता याममूर्च्छा यामपर्यंतस्थायिनी मूर्च्छा यैस्ते दूतास्तदुभयोर्निर्याणं नृपाय कथयामासुः । आश्चर्ययुक्तो नृपोऽपि तत् श्रुत्वाऽत्र शूलभूमिं प्रति मंत्रिसहितो ययौ ॥ ६ ॥ यैरेतद्वृत्तं दृष्टं तैः सर्वं राज्ञे कथितं स च राजा सर्वं श्रुत्वा स्वमात्मानं मुहुः धिगिति आवदन्सन्निति प्राह । इति किम् । मम प्रियतमावात्मजाबिल्हणौ ईशौ

गौरीशंकराविति अज्ञात्वा परधिया पुरोहितधिया धिक्कृतौ तिरस्कृताविति यत्तद्व्यर्थेत्यर्थः ॥ ७ ॥ अत्र स्थले । अत्र प्राकारमध्ये संस्थाप्य पूजादिकां सर्वव्यवस्थाम् । अखंडं यथास्यात्तथा कृतवान् ॥ ८ ॥ चत्वारिंशच्छतसंख्यं बिल्हणानंदं प्रणमति–य इति । यः काव्यरसजन्यं सुखं ज्ञातुं शक्तिसहितः पृथिव्यां बिल्हणाख्योऽभवत् तं प्रणताः स्मः । इंद्रवज्रा वृत्तम् ॥ ९ ॥ सर्गोक्तबिल्हणकथाश्रवणादेः फलं चाह–य इति । इह लोके सकलभोग

कृत्वाथ तत्र नृपतिस्तु तयोः समाधेः प्राकारमद्भुतमथात्र हि पार्वतीशौ ॥ संस्थाप्य चार्चनमुखाखिलतद्व्यवस्थां चक्रे सुभक्तिनिरतः स्वयमप्यखंडम् ॥८॥ योऽद्धा शिवः काव्यरसोत्थसौख्यं ज्ञातुं सशक्तिर्भुवि बिल्हणोऽभूत् ॥ तं ख्यातकीर्तिं वयमूर्ध्वचत्वारिंशच्छतं स्वीयगुरुं नताः स्मः ॥ ९ ॥ यो बिल्हणस्य चरितं शृणुयात्सुभक्त्या वा श्रावयेदपि पठेदिह मानवार्यः ॥ विद्वान्धनी सकलभोग विलासयुक्तस्तिष्ठन्क्षितौ च परमेति गुरोः प्रसादात् ॥११०॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धे बिल्हणानंदगुरुकथावर्णनं नाम एकादशः सर्गः ॥११॥ श्रीदेशिकेंद्र उवाच ॥ बिल्हणानंदशिष्योऽथ दंड्यानंदोऽथ विश्रुतः ॥ कविः काश्मीरपीठस्थः सर्वशास्त्रविशारदः ॥१॥ दंडिनः पदलालित्यं प्रसिद्धं जगतीतले ॥ नासीत्तत्सदृशः कश्चित्कविरन्यः क्षितावपि ॥२॥ स कदाचिद्बुधः शिष्यैः परीक्षन्सकलान्कवीन् ॥ बभ्राम पृथिवीं कृत्स्नां राजवर्यैः सुपूजितः ॥ ३॥ यत्र यत्र कविं कंचित्पश्यत्येष तमादितः॥ कवितालक्षणं सर्वं पृच्छति स्माखिलार्थवित् ॥ ४ ॥ धात्वर्थं शब्दशुद्धिं च समासं वृत्तलक्षणम् ॥ गणानां देवतानां वै शुभाशुभफलानि च ॥ ५ ॥

वांस्तिष्ठेत् । च पुनः परं निरतिशयानंदं पदमेति प्राप्नोति । वसंततिलका वृत्तम् ॥११०॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायामेकादशः सर्गः ॥ ११ ॥ सर्गे तु द्वादशे चैकाशीतिपद्यैस्त्रयः स्मृताः । देशिकाः क्रमतो दंड्यानंदाद्यत्कथानकैः ॥१२॥ बिल्हणानंद इति । आसीदित्यध्याहारः ॥ १ ॥ पदलालित्यं ललितपदत्वम् ॥ २ ॥ ३ ॥ पृच्छतिस्म पप्रच्छ सर्वार्थज्ञः ॥ ४ ॥ धात्वर्थमित्यादिश्लोकाणामन्वयः । धात्वर्थः प्रकृति

प्रत्ययविचारः गणादिकं विस्तारभिया न लिख्यते ॥५॥ नष्टोद्दिष्टे छंदःशास्त्रप्रसिद्धे । यतः नष्टोद्दिष्टाभ्यां वृत्तभेदज्ञानं संख्याज्ञानं च भवति ॥६॥ क्रिया प्रत्ययविशिष्टो धात्वर्थस्तस्य प्रकारम् । अन्यद्बंधादिकं च सर्वान्कवीन्पप्रच्छ॥७॥कश्चित्कविर्व्याकरणज्ञ आसीदिति वाक्यत्रये योज्यम् ॥ ८ ॥ ९॥१०॥ असर्वविदां किंचिज्ज्ञानाम् ॥ ११ ॥ वाक्यदंडमाह । कथमित्यादिना । राजसंतोषेण द्रव्यलाभो भवतीत्यनेनैव हेतुना वस्तुतः । अविचारेण गुणदोषा

नष्टोद्दिष्टे च वृत्तानां भेदसंख्यास्थिती यतः ॥ अर्थांतरे कोशवाक्यं पदसंधिप्रमाणताम्॥६॥क्रियास्वरूपभेदं च रसालंकृतिलक्षणम्॥ इत्थमन्यच्च बहुधा पप्रच्छासौ कवींस्ततः ॥ ७ ॥ पृष्टेषु लक्षणेष्वेवं कवितायाः कविः क्वचित् ॥ नासीद्वक्तुं क्षमः कोऽपि तानि सर्वाणि चैकलः॥८॥ कश्चिद्व्याकरणाभिज्ञः छंदोविद्यापरः कविः ॥ रसेषु निपुणः कश्चिद्वेत्ति भेदैरलंकृतीः॥९॥कश्चिच्छृंगारचतुरः कश्चिद्यमककाव्यकृत् ॥ इत्येकैककलाभिज्ञास्तत्रैकोपि न सर्ववित् ॥१०॥ दंड्यानंदोऽसर्वविदां तेषां काव्यमनेकशः ॥ दूषयित्वाखिलैर्दोषैर्वाक्यैश्चादंडयत्कवीन् ॥११॥ कथं सदोषा कविता युष्माभिः क्रियतेऽखिलैः ॥ राज्ञां तोषात्स्वर्णलाभहेतुनैवाविचारतः ॥ १२ ॥ येन यस्य गुणानुर्व्यां प्रथितुं कविता कृता ॥ शुभाशुभोभयोः सा तु शुभाशुभफलप्रदा ॥ १३ ॥ अतः शुभैव कर्तव्या कविता दोषवर्जिता ॥ यतिभंगाद्राज्यभंगकारिण्यर्थांतराच्छ्रियम् ॥ १४ ॥ अन्यस्मै दापयत्येषा श्रुत्या कटुरियं मनः ॥ सततं खेदयत्येवान्येऽपि दोषास्त्वनेकशः ॥ १५ ॥ संति तान्वर्जयित्वैव कर्तव्या कविताऽखिलैः ॥ यास्ति काश्मीरपीठस्था सरस्वत्यखिलेश्वरी ॥ ॥ १६ ॥ कल्याणमेव सर्वेषामिच्छंती वागधीश्वरी ॥ योजितोऽहं तयैवाद्धा जगन्मात्राखिलान्कवीन् ॥ १७ ॥ दुष्काव्यकर्तॄन्सच्छास्त्रैर्दंडितुं चाखिलश्रिये ॥ नाद्यप्रभृति कर्तव्या तस्माद्दुष्कविताखिलैः ॥ १८ ॥

विवेकेन भवद्भिः कविता क्रियते ॥ १२ ॥ येन कविना यस्य राजादेः । सा तु शुभाशुभकविता उभयोः कविराज्ञोः शुभाशुभफलप्रदा भवति ॥ १३ ॥ यत उभयोरशुभप्रदा सदोषकविताऽतः राज्यभंगस्य कारिणी । अर्थांतराद्विरुद्धान्यार्थेन श्रियमन्यस्मै दापयतीति संबंधः ॥ १४ ॥ श्रुत्या श्रवणमात्रेण कटुश्चेन्मनः खेदयति ॥ १५ ॥ संतीति पूर्ववद्वम् ॥ १६ ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धेऽस्मीत्यध्याहारः ॥ १७ ॥ पूर्वार्द्धं पूर्वसंबंधि ॥ १८ ॥

॥१९॥ अथाद्युत्तरबद्धम् ॥ २० ॥ मृगभास्करे मकरसंक्रांतौ ॥ २१॥२२॥२३॥ पूर्वार्द्धे सेत्यस्यान्वयः ॥२४॥ सर्वैरिति सार्द्धान्वयः ॥२५॥
॥ २६ ॥ २७ ॥ आसुरित्यध्याहारः ॥ २८ ॥ वाग्बीजं मंत्रशास्त्रप्रसिद्धमित्यादीञ्जपंत इति संबंधः ॥ २९ ॥ ३० ॥ तदाद्युत्तरान्वयि ॥ ३१ ॥

श्रीदेशिकेंद्र उवाच ॥ इत्थं चादंडयन्सर्वान्कवीन्दंडीति चाभिधाम् ॥ सत्यां कुर्वन्ययौ दंड्यानंदः काश्मीरमंडलम् ॥ १९ ॥ प्रसिद्धो ऽभूत्तदोर्व्यां स दंडीत्थं कविदंडनात् ॥ अथ ते कवयः सर्वे दंडादंडिकृताद्धृदि ॥ २० ॥ व्याकुलाः प्रययुर्माघे प्रयागं मृगभास्करे ॥ स्थिताश्चैकत्र सदसि प्राहुरित्थं मिथस्त्वहो ॥ २१ ॥ वयं मुधैव दुर्वाक्यैर्दंडिना दंडिताः खलु ॥ स एव किं कविः पृथ्व्यां तत्समोऽस्मासु नैव किम् ॥ २२ ॥ वाक्चापल्याद्वयं तस्य तूष्णीं भूताः सुबुद्धयः ॥ गर्जनात्कुस्वरस्येव गायकाः सप्तसुस्वराः ॥ २३ ॥ तस्यैवास्ति प्रसन्ना किं जगद्वागधिदेवता ॥ समं याऽवति सर्वांश्च यथा माता निजाञ्छिशून् ॥ २४ ॥ सर्वैर्गत्वाद्य काश्मीरपीठस्थां वागधीश्वरीम् ॥ जपहोमादिभिः कृत्वा तां स्वाभीष्टफलप्रदाम् ॥ २५ ॥ तस्याः प्राप्य वरान्स्वेष्टान्दंडी दंड्योऽखिलैरपि ॥ यथा नेत्थं पुनः कुर्याद्विदुषां मानखंडनम् ॥ २६ ॥ इत्थं निश्चित्य ते सर्वे ययुः काश्मीरमंडलम् ॥ सरस्वत्यग्रतः स्थित्वा चक्रुरुग्रं तपोऽखिलाः ॥२७॥ सर्वे निरशनास्तेषु केचित्पादाग्रतः स्थिताः ॥ केचिदूर्ध्वकराः केचिद्दृढासनगताश्चिरम् ॥२८॥ प्रदक्षिणं बभ्रमुश्च केचिद्देव्यालयाद्बहिः ॥वाग्बीजं कामबीजं च लज्जाबीजमथापरे॥२९॥ देव्याः सप्तशतीस्तोत्रं जपंतश्च स्थिताः परे ॥ अर्चयंतः परे यंत्रे वाग्देवीं तद्विधानतः ॥३०॥ होमं चक्रुस्ततः स्वस्वजपस्य दशमांशतः ॥ न यदाभूत्प्रसन्ना सा तदा स्वांगानि शस्त्रतः ॥३१॥ छित्त्वाग्नौ होतुमिच्छंतस्ते सर्वे शस्त्रपाणयः॥ तावदाविर्बभौ देवी प्रत्यक्षं वागधीश्वरी॥३२॥वपुस्तेजोमयं रम्यं दर्शयंती स्वलीलया॥ अगुणापि च सद्भक्तप्रीत्यै तद्ध्येयरूपिणी॥३३॥क्षौमं बिभ्रत्यमौल्यं शशिरुचिवसनं मौक्तिकानां च भूषाः कंठेऽमौल्याक्षसूत्रं वपुषि च रजनीं कुंकुमं सल्ललाटे॥पाण्योःसत्कंकणानि श्रुतिमयममलं पुस्तकं चाद्यवीणां पद्भ्यां भूषाक्वणद्भ्यां कविजनवरदा भारतीसा रराज॥३४॥

॥ ३२ ॥ वपुरित्यादि पूर्वान्वयि ॥ ३३ ॥ अमौल्यमक्षसूत्रं मंगलसूत्रम् । रजनीं हरिद्राम् । “निशाख्या कांचनी पीता हरिद्रा वरवर्णिनी” इति कोशे।

निशेत्यनेन यानि रात्रिनामानि तानि हरिद्रानामानीति दर्शितम् । भूषाभिः कणतस्ताभ्यां पद्भ्यां शोभिता द्वितीयांतान्विभ्रती सा सरस्वती शुशुभे । स्रग्धरा वृत्तम् ॥३४॥ चतुर्थ्यामुत्तमव्रतक्षमासौ चंद्रमिवाग्रभागे स्थितां वाग्देवताम् । अत एव वाचां वाणीनामधीश्वरीं नियंत्रीं सरस्वतीं मुहुर्नत्वोत्तमकवितायुक्तवाण्या ते कवयस्तुष्टुवुरित्यर्थः । आख्यानकी वृत्तम् । तल्लक्षणं च । "आख्यानकी तौ जगुरू ग ओजे जतावनोजेजगुरू गुरूश्चेत्" इति ॥३५॥ तत्रादौ वाग्बुद्धिरूपत्वं सरस्वत्या निश्चित्याहुः । हे मातः अखंडं प्रवृत्ता सर्वेषां वाणी वाग्रूपा त्वमेवासि । अमतानां कुमतस्थानां मतिजन्यं भ्रमप्रमादविप्रलिप्साकरणापाटवरूपदोषम् । यद्वा बुद्धिपूर्वं कृतं हठादाचरितं खंडयती नाशयती सा धीः बुद्धिरूपा चासीयदि । तव रूपम् आद्यैः अः विष्णु आद्यो येषां तैर्ब्रह्मादिभिरपीषत्किंचिदपि अज्ञेयमवेद्यं तर्हि वयम् आद्या येषां तैः कविभिस्तव स्तवनं किं कार्यम् । कथं कर्तव्यम् । न कथमपीत्यर्थः । इंद्रवज्रा वृत्तम् ।

दृष्ट्वाग्रतो वागधिदेवतां ते विधुं चतुर्थ्यामिव सद्व्रतांते ॥ नत्वा मुहुस्तुष्टुवुरात्मवाचामधीश्वरीं सत्कविताढ्यवाचा ॥ ३५ ॥ मातस्त्वमेवाखिलवाण्यखंडा धीश्चामतानां मतिजन्यखंडा ॥ त्वद्रूपमज्ञेयमपीषदाद्यैः कार्या स्तुतिस्तेद्य किमस्मदाद्यैः ॥ ३६ ॥ ब्रह्माहमित्थं शिववागपूर्वा विश्वस्य माता त्वमसीह पूर्वा ॥ सृष्ट्यादिकर्त्रीं त्वमजादिवाण्या नास्त्येव कांडेऽण्वपि देववाण्या ॥ ३७ ॥ वाण्या गुरोः साधुजनैः क्रमेणादृश्योऽयमात्मा श्रुतिविक्रमेण ॥ विज्ञायते बुद्धिबलानुभाव्यः परोपि चाभ्यासबलेन भूयः ॥ ३८ ॥

॥ ३६ ॥ किं च प्रथमवाग्रूपायास्तव विश्वजननीत्वेन सर्वोत्तमात्वमाहुः । ब्रह्मेति । अहं ब्रह्मास्मीत्याकाराऽपूर्वापरशिवस्य वा सैव विश्वप्रादुर्भावकर्त्री विश्वस्य जगतः पूर्वा प्रथमा त्वं मातासि । अजादिवाण्या ब्रह्मविष्णुरुद्ररूपया वाण्यैव सृष्ट्यादिकर्त्री भवसि । हे देवि कांडे ब्रह्मांडेऽवाण्या वाण्यभावेनाणु किंचिदपि पदार्थजातं नास्ति ब्रह्मादीनां नाममात्रत्वेन नाम्नश्च वाग्रूपत्वात्त्वमेवेदं सर्वं भवसीत्यर्थः ॥ ३७ ॥ एवं सरस्वत्याः जगत्कारणत्वमुक्त्वात्मज्ञानहेतुत्वेन स्तुवंति । वाण्येति । साधुभिः कर्तृभिः तृतीयांतैः करणैः । तत्र गुरोर्वाण्येति श्रवणेन श्रुतिविक्रमेण श्रुतिबलेन युक्तो यः क्रमस्तेन पूर्वापरश्रुत्या लोचनरूपेण मननक्रमेण भूयोऽभ्यासबलेन विजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाहरूपेण निदिध्यासनेन च परः कार्यकारणाभ्यां परः ।

अत एवादृश्यः इंद्रियागोचरोऽपि य आत्मा स बुद्धिबलानुभाव्यः अनुभवितुं साक्षात्कर्तुं योग्यो भवति । तथा च "आत्मा वा रे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति श्रुतौ मननादिहेतुभूतस्य श्रवणस्य गुरुमुखावगतवाग्रूपत्वेन त्वमेवात्मप्राप्तिसाधनमित्यर्थः ॥ ३८ ॥ ननु मम ब्रह्माद्यवेद्यत्वं वर्णयतां भवतां मद्वर्णने कथं प्रवृत्तिः जातेत्याशंक्य बुद्धिवाग्रूपा त्वमेव प्रवर्तयसीत्याहुः । नेति । सर्वव्यवहारकारणत्वेन बुद्धिवाग्व्यतिरिक्तं तत्त्वं नास्त्येव । अतो द्विरूपिणी त्वमेवासि किल । वाग्ध्युपसर्पणेन वाग्बुद्धिप्रवृत्त्याऽस्माभिस्त्वं स्तुता यदि तर्हि दुग्धार्पणेन क्षीराब्धिपूजेव भवतीत्यर्थः ॥ ३९ ॥ वयं तु यतः उदीरिताः उच्चारिता अखंडं निरंतरं भवत्याः वाग्रूपायाः गुणाः काव्यालापादयो गुणा यैस्तेऽतः कारणादस्मासु तव कृपा भवतु । ननु भवत्सु का कृपा कर्तव्ये

न बुद्धिवाग्भ्यां परतत्त्वमेव द्विरूपिणी चासि किल त्वमेव ॥ त्वं चेत्स्तुता वाग्ध्युपसर्पणेन क्षीराब्धिपूजेव पयोऽर्पणेन ॥ ३९ ॥
उदीरिताखंडभवद्गुणास्तु वयं ह्यतोस्मासु च ते घृणास्तु ॥ वाग्धीस्वरूपाद्बहिरंतरंगा जानासि चास्मत्कृतहृत्तरंगान् ॥ ४० ॥
श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा कविकृतं स्तोत्रं तुष्टा तानाह वागिति ॥ सहस्रपाठतः पुंसां प्रज्ञावर्द्धनमस्त्वदः ॥ ४१ ॥ मत्त एवाखिलं विश्वमतः प्रियमिदं मम ॥ तत्रापि मानवास्तेषु वर्णाश्चत्वार एषु च ॥ ४२ ॥ ब्राह्मणास्तत्र विद्वांसः शास्त्रज्ञास्तेषु तेष्वपि ॥ वेदज्ञाश्च विदाधिक्यात्पूर्वतो मे प्रियाः परे ॥ ४३ ॥ कवयस्त्वखिलेभ्योऽपि यतस्तैर्वृत्तयोऽखिलाः ॥ त्यक्ता इंद्रियजा एव सदा काव्यानुचिंतनात् ॥ ४४ ॥ यथानेकविधं काव्यं कर्तुं तैर्युज्यते मतिः ॥ तथा तथा स्फुराम्यस्यामहं तदधिदेवता ॥ ४५ ॥

त्यत आहुः । धी वाक्स्वरूपांतः धीरूपत्वेन बहिर्वाग्रूपत्वेनांतर्बहिर्गता त्वम् । अस्मत्कृतान्हृत्तरंगान्मनोरथान् जानासि । दंडिनः पराभवेनास्मांस्तोषयेत्यर्थः ॥ ४० ॥ वाक् सरस्वती । अदः स्तोत्रं प्रज्ञावर्धनं बुद्धिवर्द्धकम् ॥ ४१ ॥ दंडिनः पराभवं कुर्विति यदुक्तं तत्र तस्य सर्वोत्तमत्वेन पराभवानर्हत्वमाह— मत्त इत्यादिभिः । सर्वं विश्वं मत्त एव जातं तत्र विश्वस्मिन्मनुष्याः प्रिया इति सर्वत्र योज्यम् । एषु वर्णेषु ब्राह्मणा इति योज्यम् ॥ ४२ ॥ ज्ञानेनाधिक्यत्वाद्वेदज्ञाः ॥ ४३ ॥ सर्वेभ्यः कवयः प्रियाः । यत इंद्रियवृत्तिरहिताः ॥ ४४ ॥ अस्यां बुद्धौ । तदधिदेवताबुद्ध्यधिदेवता ॥ ४५ ॥

व्यतः । अनेकैः काव्यैः संतोष्य ॥ ६१ ॥ ६२ ॥ नृप इत्याद्यग्रान्वयि ॥ ६३ ॥ दंडिनं प्रत्यानेतुमिति शेषः । नृपदर्शननिमित्तम् ॥ ६४ ॥ शब्दार्थाभ्यां सच्छ्रुतीः सती श्रुतिः श्रवणं यासां ता आशिषः । अत्र रूमभाषाम् ॥ ६५ ॥ सुरवर्मणं इंद्ररूपत्वं वर्णयितुं तस्यालौकिकत्वमाह । श्रीमदिति । हे सुरवर्मक हे सुरवर्मन् । श्रीमती वाग्देवता जगन्माता सरस्वती यस्मिन्मंडले देशे वर्तते तद्देशस्य राजा त्वं नीत्या नाम्ना चापः श्रेष्ठोऽमरो देवोऽसि । हि यस्मात् सरस्वतीप्रांतस्थितजनान् शास्तुमल्पबुद्धिः कश्चित् नृपः कथं समर्थः । न कथमपीत्यर्थः ॥ त्वं तु मर्त्यलोके सर्वभूतले विभवादैश्वर्येण देव इव क्रिया

संतोष्याहुर्निजं दुःखमादितो दंडिना कृतम् ॥ राजन्दंडचस्त्वया दंडी यतस्त्वद्देशगोऽस्त्ययम् ॥ ६२ ॥ संतोषो भविताऽस्माकमेनं देहीश दक्षिणाम् ॥ नृपः श्रुत्वेत्युग्रदंडः प्रजादंडनलालसः ॥ ६३ ॥ दंडिनं प्रेषयामास दूतं त्वरितविक्रमम् ॥ दूतश्चाययावायौ दंडी स शिष्यो नृपदर्शने ॥ ६४ ॥ आशिषश्चावदन्राज्ञे बह्वीः शब्दार्थसच्छ्रुतीः ॥ शृण्वत्स्वेवाखिलेष्वत्र कविष्वेकः स निर्भयः ॥ ६५ ॥ दंड्युवाच ॥ श्रीमद्वागधिदेवताखिलजगन्मातास्ति यन्मंडले तस्य त्वं सुरवर्मकार्यनृपतिर्नीत्याख्ययाद्यामरः ॥ धीप्रांतस्थनरान्नृपोऽल्पधिषणः शास्तुं कथं हि क्षमस्त्वं मर्त्येऽखिलभूतलेऽत्र विभवाद्भासि त्वमर्त्यक्रियः ॥ ६६ ॥ ये त्वां प्राहुरसद्धियो नरमिति त्वं तर्हि नोविदि तैः श्रेष्ठं वैभवतो वदंति कवयो ये काव्यतस्तैरपि ॥ दानोत्कर्षतयाऽमृतोपमगिराथो ब्राह्मणाराधनाद्देव्याश्चार्चनतोऽनुमानित इलां प्राप्तस्त्वमिंद्रो मया ॥ ६७ ॥ दैवी तेऽस्तु सदैव संपदचला सौख्यं यथा चोभयो राजाधीश्वरलोकयोः प्रभविता तस्मात्परं चांजसा ॥ तुभ्यं चाशिष आब्रुवान्हि विषयेऽस्य[illegible]त्पीठगः श्रीदेव्याः स्वगुरोश्च लब्धविभवश्चादंडयन्दुष्कवीन् ॥ ६८ ॥

वान्प्रतिभासि । शार्दूलविक्रीडितवृत्तम् ॥६६॥ किंच ये असद्बुद्धयस्त्वां मनुष्यमित्याहुस्तैर्न ज्ञातोऽसि । ये च कवयस्त्वां स्वकाव्यैश्वर्येण श्रेष्ठं वदंति तैरपि न ज्ञातोऽसि । मया तु दानाधिक्येनामृतवाण्या ब्राह्मणसत्कारेण देवार्चनेन च हेतुचतुष्टयेन धरां प्राप्त इंद्रस्त्वमनुमानितो निश्चितोऽसि । यथोक्तम् । "स्वर्गच्युतानामिह जीवलोके चत्वारि चिह्नानि वसंति देहे । दानप्रसंगो मधुरा च वाणी देवार्चनं ब्राह्मणतर्पणं च ॥" इति ॥६७॥ एवमिंद्ररूपत्वं प्रसाध्याशिषो

ददाति—त इति । हे राजेंद्र यया संपदा ऐहिकामुष्मिकं ते सुखं तस्मात्परं च मोक्षाख्यं सुखं चानायासेन भविष्यति सा दैवी संपत् स्थिरा तुभ्यं सदाऽस्तु शाश्वा भवतु । दैवीसंपच्च । "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥" इत्यादिना नातिमानितेत्यंतेन गीतासूक्ता । तुभ्यमेताश्चाशिषश्च प्रयुंजन्सरस्वत्या उत्तमपीठस्थो गुरोः सकाशाल्लब्धसामर्थ्यः दुष्टान्कवीन्दंडयन्नहमत्र देशे स्थितोऽस्मीत्यर्थः ॥ ६८ ॥ अथ सुरवर्मा नृपः दंडिनोक्तामाशिषं हृदि स्वानुभवेन सत्यां मेने सुरवर्मा पृथिव्यां राजवंशे सरस्वत्याः पूजादिव्यवस्थां कर्तुमवतीर्णो य इंद्रोऽस्ति सोहम

नृप इति सुरवर्मा दंडिनोक्तां निशम्याशिषमथ हृदि मेने स्वानुभूत्यापि सत्याम् ॥ भुवि नरपतिवंशे योऽवतीर्णोऽमरेंद्रः सकलनि
गममातुः कर्तुमिज्यादिसंस्थाम् ॥ ६९ ॥ इदमिनवरभोगैर्विस्मृतं तेन भूयः स्मृतमथ कविवाक्यात्तं ननामातिभक्त्या ॥ कविवरम
तिवित्तैः पूजयित्वाऽमुनाढ्यो निजबलविभवाभ्यां स्थानमापाशु मातुः ॥ ७० ॥ अथ गिरमुपचारैः पूजयित्वा महार्हैर्निगमगतवचो
भिश्चास्तवीद्भक्तिनम्रः ॥ अनुदिनमपि पूजां चाक्षयामंबिकायाः प्रभवितुमथ वित्तं योजयामास राज्यात् ॥ ७१ ॥ सकलविषयभो
गेषूज्झिताशः स्वपुत्रं निपुणमथ स राज्ये योजयित्वात्मतंत्रः ॥ गुरुवरमतिनम्रो दंडिनं प्रार्थ्य तस्मात्सपदि सकलमंत्रान्प्राप चात्मा
नुभावम् ॥ ७२ ॥ कवय उपगताः प्राग्दंडितुं दंडिनं ये नृपतिमथ तमित्थं वीक्ष्य तत्पुत्रभीत्या ॥ निजगृहवसुदारान्प्रोज्झ्य देशांतर
स्थाः खलु महदतिचारः स्याद्धि दुःखस्य हेतुः ॥ ७३ ॥ इति सभयकवीनां कस्यचित्सूनुरासीन्निजगृहगतकृत्यं मातृतोऽसौ नि
शम्य ॥ पितृमुखनिखिलानां चाभयार्थं तदेको लघुरपि सुरवर्मानंदमेवाययौ सः ॥ ७४ ॥

स्मीति ज्ञातवानित्यर्थः मालिनीवृत्तम् ॥ ६९ ॥ इदमिन्द्रत्वं राजभोगैर्विस्मृतं यत्तद्दंडिवाक्येन पुनः स्मृतं तं प्रति परमभक्त्या ननाम । अमुना दंडिना युक्तः सैन्यैश्वर्याभ्यां च युक्तः सरस्वतीस्थानं जगाम ॥ ७० ॥ निगमगतवचनैर्वेदोक्तवचनैः अक्षयां सततं प्रवृत्तां प्रभवितुं प्रवर्तितुम् ॥ ७१ ॥ भोगविषये त्यक्ताशः ॥ ७२ ॥ इत्थं दंडिवशतां गतं तत्पुत्रभीत्या राजपुत्रभयेन ॥ ७३ ॥ कस्यचिद्ब्राह्मणस्य निजगृहगतानां पित्रादीनां कृत्यं वर्तमानम् । पित्रा

दयो ये सर्वे तेषामभयप्राप्तये ॥७४॥ हे भूमन् हे श्रेष्ठ । त्वद्गुरुं दंडिनम् ॥७५॥ एतान्कवीन् ॥७६॥अथ शिशुस्तेषां मत्पुत्रभयं नास्तीति सुरवर्मवाक्येन । तत्पुरः सुरवर्मण अग्रे । अमून् कवीन्कविवरसुरवर्माणौ दंडिराजानौ । प्राक् नृपेण पूर्वं राज्ञा सुरवर्मणाऽज्ञप्तानि देयानि वार्षिकवित्तानि येषां ते स्वगृहे स्थिता बभूवुः ॥ ७७ ॥ तं ब्राह्मणबालकं गुरूक्त्या दंडिवचनेन । तथाऽख्यां नाम च ददौ । तस्य सार्थकत्वमाह । भयवदिति । भयवतां भीरूणाममितसंघं बहु

मुहुरमुमतिनम्रः सन्नमंश्चेदमाह लघुशिशुरपि भूमंस्त्वद्गुरुं प्राग्द्विषंतः ॥ कवय उत भयाब्धास्त्वत्सुतात्त्यक्तगेहाः कुरु सुतधनभार्याद्य न्वितांस्तान्दयाब्धे ॥७५॥ शिशुमिति च वदंतं प्राह चाश्चर्ययुक्तो लघुमपि सुरवर्मानंद इत्यानयैतान् ॥ न च भयमपि तेंऽतस्त्वत्रावहं त्वात्मजान्मेऽण्वपि न स खलु विप्रान्दंडयत्याज्ञया मे ॥ ७६ ॥ अथ शिशुरखिलांस्तान्छोधयित्वा स्वकीयैर्न भयमिति गुरूक्त्या चानयत्तत्परोऽभूत् ॥ कविवरसुरवर्माणौ प्रणेमुर्ह्रिया तेऽथ च निजगृहसंस्थाः प्राङ्नृपाज्ञप्तदेयाः ॥ ७७ ॥ सुधियमिति समी क्ष्यास्मै हि मंत्रान्गुरूक्त्याऽदिशदथ सुरवर्मानंद आख्यां तथैव ॥ भयवदमितसंघं रक्षितुं तत्कुलेऽभूदिति गुरुरपि नाम्ना प्राह तं भैरवेति ॥ ७८ ॥ इत्थं सुरेंद्रो भुवि योऽवतीर्णो वागीश्वरीज्यास्थितये नरेन्द्रः ॥ तं द्व्यब्धिचंद्रं सुरवर्मसौख्यं वयं मुहुः स्त्रीयगुरुं नताः स्मः ॥ ७९ ॥ यो राजभीतेश्च ररक्ष भीरून्प्राग्दंडिनं ये कुधियो द्विषंतः ॥ तं भैरवानंदमुदक्त्रिचत्वारिंशच्छतं स्वीयगुरुं नताः स्मः ॥ ८० ॥

समुदायं रक्षितुं यस्तेषां कुलेभूदिति हेतोर्गुरुः सुरवर्मापि तं नाम्ना भैरवेत्याह । भीरूणामयं रक्षकोऽपत्यं वा भैरवस्तेषामुद्धारक इत्यर्थः ॥ ७८ ॥ द्विचत्वारिंशदधिकशतसंख्यं सुरवर्मानंदं प्रणमति । इत्थमिति । वागीश्वरीज्यास्थितये सरस्वतीपूजास्थापनाय ॥ ७९ ॥ त्रिचत्वारिंशदधिकशतसंख्यं भैर

वानंदं प्रणमति । य इति ॥ ८० ॥ सर्गोक्तगुरुत्रयकथाश्रवणादिफलमाह । त्रिगुरुरिति । दंडिनः सकाशात् । आत्मभावत्रयाणां फलम् ॥ ८१ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां द्वादशः सर्गः॥ १२॥ सर्गे त्रयोदशेऽध्यष्टपद्यैः पंचोदिताः क्रमात् । त्रिविक्रमानंदतश्च देशिकाः सत्कथानकैः ॥ १३॥ भैरवानंदनाथस्येति ॥ १ ॥ सती कृपा यस्मिंस्तस्मात् ॥ २ ॥ सदैव प्रसन्नासीदित्यन्वयः ॥ ३ ॥ तत्र दृष्टांतः । सर्वेभ्यः पुत्रेभ्यः अत्य

त्रिगुरुचरितमेतद्दंडिनो यःशृणोति पठति च परभक्त्या सद्गुरोः प्राप्तमार्गः ॥ सकलविबुधमान्यश्चाखिलैश्वर्ययुक्तः सकलभयविमुक्तः प्राप्नुयादात्मभावम् ॥ ८१ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धे दंड्यानंदादिगुरुत्रयवर्णनं नाम द्वादशः सर्गः ॥ १२ ॥ श्रीदेशिकेंद्र उवाच ॥ भैरवानंदनाथस्य शिष्यश्चासीत्सुविश्रुतः॥ त्रिविक्रमानंद इति त्रिलोक्यां तस्य विक्रमः ॥१॥ गुरोर्विद्याः क्रमात्सर्वाः प्राप्य मंत्रांश्च सत्कृपान् ॥ सिद्धिं लब्धुमनुष्ठानं चक्रे भक्त्या गिरःपुरः ॥२॥ महामंत्राज्जपन्देव्याः सर्वेंद्रियनिवृत्तधीः॥ प्रसन्नाथ जगन्माता तस्य गुर्वंघ्रिसन्मतेः ॥ ३ ॥ सदैवासीद्यथा माता सर्वेभ्योऽतिलघोः शिशोः ॥ स्मृतिमात्राद्ददावस्मै दर्शनं च यदीप्सितम् ॥ ४ ॥ साक्षात्तं भाषते नित्यं प्रेम्णांबा बालकं यथा ॥ इत्थमेकांतभक्तोऽसावेकदेत्याह मातरम् ॥ ५ ॥ मातस्त्रैलोक्यजीवानां धीवाण्योस्त्वं हि देवता ॥ मन्ये काश्मीरपीठस्थां नान्यां त्रैलोक्यसंस्थितौ ॥ ६ ॥ कलावपि यतस्तेंबाखंडपूजादिपूर्तये ॥ इंद्र एवावतीर्णोऽत्र सुरवर्मेति भूपतिः ॥ ७ ॥ अखंडं तव पूजादि संस्थाप्यागात्पुनर्दिवम् ॥ मद्गुरोर्गुरुरेवासौ त्वदर्थं भूगतो हरिः ॥ ८ ॥ पूज्या त्रिष्वपि लोकेषु त्वमेवासीति मे मतिः ॥ भूस्थास्त्वां पूजयंत्येव यत्नादागत्य दूरतः ॥ ९ ॥ भूम्यधःस्थाश्च नाकस्थास्त्वां नैवायांति पूजितुम् ॥ अथ वागीश्वरी प्राह तं भक्तं शृणु बालक ॥ १० ॥ पाताले देवलोके च स्थाने मे त्वतिविश्रुते ॥ तत्रत्यास्तत्र तत्रैव पूजयंति यथात्र वै ॥ ११ ॥

ल्पस्य बालकस्य प्रसन्ना मातेव । स्मृतिमात्रात्स्मरणमात्रेणास्मै त्रिविक्रमाय ॥ ४ ॥ साक्षादिंद्रियगोचरत्वेन ॥ ५ ॥ त्रैलोक्यस्य संस्थितौ पालनविषये काश्मीरपीठस्थाम् ॥ ६ ॥ हेंऽब हेमातस्तव ॥ ७ ॥ संस्थाप्य प्रवर्त्य । हरिरिंद्रः ॥ ८ ॥ ९ ॥ १० ॥ यथात्र लोकेऽत्रस्थाः पूजयंति तथा तत्रस्था

स्तत्रैव पूजयंतीति योज्यम् ॥ ११ ॥ सर्वतः सर्वासु । मातरित्युत्तरान्वयि ॥ १२ ॥ चेदित्यग्रे बद्ध्यम् ॥ १३ ॥ स्वर्गे अधश्च पाताले स्थिता ॥१४॥ ॥ १५ ॥ १६ ॥ तयोः शेषबृहस्पत्योः ॥ १७ ॥ स्वस्थाः स्वस्थचित्तास्ते स्वरधःस्थाः ॥ १८ ॥ अंतस्थाः मंदिरमध्यगताः । सात्त्विकतामसान्स्वर

सान्निध्यं सममेवास्ति मम मूर्तिषु सर्वतः ॥ प्राह भक्तः पुनस्तां च मातः काश्मीरपीठगा ॥ १२ ॥ धीवाग्देवी त्रिलोकानां त्वमे वासीति मे मतिः ॥ चेदित्थं निश्चयो मेऽस्ति त्वयि भक्तिर्दृढा गुरौ ॥ १३ ॥ अर्चितुं स्वरधस्थात्त्वामत्रैवायांतु चैकदा॥नो चेत्प्राणां स्त्यजाम्येव मुधाऽभक्तस्य जीवनम्॥१४॥ज्ञात्वेत्थं निश्चयं तस्य देवी काश्मीरपीठगा॥ धीभ्रांतिं वाङ्निरोधं च चक्रेऽधः स्वर्निवा सिनाम् ॥१५॥सहसा वाङ्निरोधेन धीभ्रांत्या चातिदुःखिताः ॥ ययुश्चाधःस्थिताः शेषं स्वर्गस्थाः शरणं गुरुम् ॥१६॥ तयोर्वाक्ये न ते सर्वे गत्वा काश्मीरपीठगाम् ॥ निशीथेऽभ्यर्चयन्देवीं ज्ञात्वैतद्भक्तवैभवम् ॥१७॥ देवीं नत्वाग्रतो भक्तं चोक्त्वास्मै वृत्तमादितः॥ वाग्भिः स्तुत्वा गिरं स्वस्थाः सद्धियस्ते ययुस्ततः॥१८॥ शुश्रुवुर्वाद्यघोषं तु बहिः पौराः किलाश्रुतम्॥ददृशुः स्वरधःस्थांश्चांतस्थाः सात्त्विकतामसान् ॥ १९ ॥ केचित्तत्र तपःसिद्धाः संवादं सार्थमादितः ॥ विदुर्भक्तेन तैः साकमत्यद्भुतमिवाखिलैः ॥२०॥ सिद्धेभ्यः सर्ववृत्तांतं प्रातः श्रुत्वाद्भुतं जनाः ॥ देवीभक्तं प्रणेमुस्तं ससिद्धाः प्रेमसंप्लुताः ॥ २१ ॥ गुरोः कृपावलाद्देव्याः प्रसादात्स्वरधः स्थितैः ॥ पूजिता येन भूदेवी सोऽतः प्रोक्तस्त्रिविक्रमः ॥२२॥ इत्थं त्रिलोकेष्वपि विक्रमोऽस्य ख्यातो हि देव्याश्च गुरोः प्रसादात् ॥ तं वेदवेदांद्रुमितं वरेण्यं त्रिविक्रमानंदगुरुं नताः स्मः ॥ २३ ॥ श्रीदेशिकेंद्र उवाच ॥ अथासुर्बहवः शिष्याः श्रीत्रिविक्रमसद्गुरोः ॥ सर्वे विद्वत्तमा एव गुरुभक्ताः सुबुद्धयः ॥ २४ ॥ सर्वे चाभिलषंतस्ते महामंत्राधिकारिताम् ॥ गुरोः पीठाधिकारं चाथांतः प्राहेति सद्गुरुः ॥ २५ ॥ मच्छिष्यास्तु समाः संति विद्ययाथ धियाखिलाः ॥ लोकनीत्याऽथ सद्वृत्तया मयि नम्रतयापि च ॥ २६ ॥

धस्थान् ॥ १९ ॥ २० ॥ तं त्रिविक्रमानंदम् ॥ २१ ॥ येन भक्तेन हेतुभूतेन ॥ २२ ॥ चतुर्विंशदधिकशतसंख्यं त्रिविक्रमानंदं प्रणमाति इत्य मिति ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

धीबलाद्बुद्धिसामर्थ्येनापि न्यूनाधिकत्वं न्यूनत्वमधिकत्वं न दृश्यते ॥ २७ ॥ समैव समानैवास्ति ॥ २८ ॥ तां भक्तिमित्युत्तरान्वयि ॥ २९ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ३० ॥ ३१ ॥ शय्यां शयनम् ॥ ३२ ॥ ३३ ॥ भवद्भिरयं स्फोटो मास्पृश्यतां अस्य स्फोटस्य ॥ ३४ ॥ उपायः

क्रियते मम सेवापि समानैवाखिलैरपि ॥ नैषन्न्यूनाधिकत्वञ्च दृश्यते धीबलादपि॥२७॥आरोढुं मम पीठं च लब्धुं मंत्राधिकारिताम् ॥ इच्छा समैव सर्वेषां कस्मै देयं द्वयं मया ॥ २८ ॥ चेतसा चिंतयन्नित्थं शिष्यान्प्राह त्रिविक्रमः ॥ सर्वेष्वपि समैवास्ति मत्प्रीतिस्तां तु योऽधिकाम् ॥२९॥ सेवाभैर्वर्धयत्यस्मै दास्ये पीठं मनूनपि ॥ श्रीदेशिकेंद्र उवाच ॥ गुरूदितामिति श्रुत्वाहर्निशं तेऽखिला अपि ॥ ॥ ३० ॥ त्यक्त्वान्यत्सर्वमेवासुगुरुसेवारताः परम् ॥ नैवापश्यद्गुरुर्न्यूनं चाधिकं सकलेष्वथ ॥ ३१ ॥ एकदांतर्गृहे शय्यां व्यथाव्या जात्रिविक्रमः ॥ चक्रे हूंकारशब्दैश्च दर्शयन्महतीं व्यथाम् ॥ ३२ ॥ जंघोरुमध्यतो जानोरधस्ताच्चीरवाससा ॥ पक्वमाम्रफलं बद्ध्वा स्फोट इत्याह चाखिलान् ॥ ३३ ॥ मा स्पृश्यतामयं चेत्थं दूरात्सर्वान्यवारयत् ॥ प्राह चैकेन भिषजा शमनेऽस्य निरूपितः ॥ ॥ ३४ ॥ उपायस्तं पुमान्कर्तुं न शक्तः कोऽपि दृश्यते ॥ श्रुत्वेत्याहुस्तदा शिष्याः कथ्यतां क्रियतेऽद्य सः ॥ ३५ ॥ अर्थैः प्राणै र्वयं तु स्मस्त्वदधीनाः किलाखिलाः ॥ इत्थं बहुविधैर्वाक्यैस्तथेत्युक्त्वा ययौ बहिः ॥ ३६ ॥ घर्षयंश्चोरुमूलाभ्यां पृथ्वीं संदर्शयन्व्य थाम् ॥ तं महास्फोटमखिलान्दर्शयामास दूरतः ॥३७॥ मुहुः स्रवद्रसं पूयमिति चावेदयन्हठम् ॥ प्राह सत्रानयं स्फोटः पुंसैव यदि केन चित् ॥३८॥ मुखेन चोषितः शीघ्रं शमं गच्छति नान्यथा ॥ इत्थं श्रुत्वाखिलाः शिष्यास्तथान्येपि समीपगाः॥३९॥ नशेकुश्चो षितुं स्फोटं बीभत्सं पूयवर्द्धनम्॥अथ कश्चिच्छिष्यवर्यो गुरुदुःखेन दुःखितः॥४०॥वक्त्रेण चोषितुं स्फोटं ययौ गुरुसमीपतः॥तद्वैकृतम नादृत्य स्फोटं वक्त्रेण चास्पृशत् ॥४१॥ तावद्गुरुश्चाम्रफलं बहिर्निष्कास्य तत्करे॥ ददौ पश्यत्सु सर्वेषु तुष्टोऽसाम्रफलं तु सः ॥४२॥

पूर्वान्वयि । त्वयैपायः कथ्यतामस्माभिः सः क्रियते ॥ ३५ ॥ ३६ ॥ ३७ ॥ स्रवद्रसं अयमित्याद्युत्तरान्वयि ॥ ३८ ॥ तोषितः गृहीतरसः । इत्थमित्याद्युत्तरान्वयि ॥ ३९ ॥ पूयं वर्द्धयति तम् । अथाद्युत्तरान्वयि ॥ ४० ॥ तस्य स्फोटस्य वैकृतं बीभत्सरूपत्वम् ॥ ४१ ॥ ४२ ॥

कृत्रिमं कपटः युष्माकं सम्यग्भक्तिं ज्ञातुं मयैवं कृतमित्यन्वयः ॥ ४३ ॥ अत्र शिष्येषु एकः मुख्यशिष्यः सर्वमंत्ररहस्यम् ॥ ४४ ॥ अथ मंत्रान् षोडश्यादीन् ॥ ४५ ॥ पूर्वार्द्धं पूर्ववद्धं । पाणिनिसूत्रवार्तिककर्ता ॥ ४६ ॥ पंचचत्वारिंशदधिकशतसंख्यं वररुच्यानंदं प्रणमति य इति ॥४७॥ अंकानां वर्णैः संख्या । सा च यथा । " कटपयवर्गभवैरिह पिंडान्त्यैरक्षरैरंकाः । नेञि च शून्यं ज्ञेयं तथा स्वरे केवले कथिताः " इत्यादिरूपा । तदर्थश्च । कादिनव ।

दृष्ट्वेत्याहुर्मनस्यन्ये कृत्रिमं गुरुणा कृतम् ॥ गुरुस्तानाह युष्माकं भक्तिं सम्यक्परीक्षितुम् ॥ ४३ ॥ इत्थं कृतं मया त्वेकः सम्यग्ज्ञातः परीक्षया ॥ दास्येऽतः सर्वमेवास्मै नास्मात्प्रियतमः परः ॥ ४४ ॥ इत्युक्त्वास्मै ददौ पीठं चाद्यमंत्रांस्त्रिविक्रमः ॥ सर्वेभ्योऽस्मिन्वरां प्रीतिं दर्शयन्नाम चाकरोत् ॥ ४५ ॥ वररुच्यानंद इति तस्य भक्त्यातितोषितः ॥ आसीद्वररुचिः सोऽथ पाणिनेः सूत्रवाक्यकृत् ॥ ४६ ॥ यः सर्वशिष्याधिकभक्तितोऽद्धा पीठं गुरोः प्राप महामनूंश्च ॥ वयं गुरुं तं वररुच्यभिज्ञं पंचाब्धिचंद्रप्रमितं नताः स्मः ॥ ४७ ॥ पंडितेष्वखिलेष्वासीत्ख्यातो वररुचिर्भुवि ॥ येनोक्ता वर्णतः संज्ञा त्वंकानां साखिलैर्बुधैः ॥ ४८ ॥ गृह्यते मंत्रशास्त्रादौ प्रामाण्येनांकसंग्रहे ॥ पाणिनेः सूत्रवाक्यानि स्वशिष्येभ्यः समादिशत् ॥ ४९ ॥ बह्वर्थान्यर्णतोऽल्पानि शिष्या वाक्यानि चाखिलाः ॥ ज्ञातुं नासम्यक्शक्तास्ते तेष्वेको वेद बुद्धिमान् ॥५०॥ कृष्णशर्माथ तं सर्वे श्रेष्ठत्वाद्भट्टसंज्ञया ॥ कृष्णभट्टमिति प्राहुः प्रीतिं चास्याकरोद्गुरुः ॥५१॥ स्वपीठं मंत्रजातं च दत्त्वास्मा एव नाम च ॥ कृष्णभट्टानंद इत्थं चकारास्य सुशोभनम् ॥५२॥

टादिनव । पादिपंच । याद्यष्टौ । पिंडान्त्यैरिति द्वितीयसंकेतपर्यंतैरंका ज्ञेयाः नेति च हलूवर्जितस्वराश्च शून्यं विज्ञेयमिति तदर्थः । सेत्याद्युत्तरान्वयि ॥ ४८ ॥ अंकग्रहणे प्रमाणत्वेन स्वीक्रियते ॥ ४९ ॥ अर्णतः वर्णैः । अल्पानि । अल्पवर्णानीत्यर्थः ॥ ५० ॥ कृष्णशर्मा पूर्वान्वितः ॥ ५१ ॥ अस्मै कृष्णभ

द्राय ॥ ५२ ॥ षट्चत्वारिंशदधिकशतसंख्यं कृष्णभट्टानंदं प्रणमति । य इति ॥ ५३ ॥ स्वस्यात्मनः गुरोर्वररुचेः सकाशात् ॥ ५४ ॥ तेषु कृष्णभट्ट शिष्येषु ॥ ५५ ॥ ५६ ॥ ५७ ॥ वर्यतां श्रेष्ठत्वम् ॥ ५८ ॥ सप्तचत्वारिंशदधिकशतसंख्यं गुहेश्वरानंदं प्रणमति । स्थित्वेति ॥ ५९ ॥ ६० ॥

यो वेद सम्यग्गुरुणोक्तवाक्यान्यतः स वै प्राप च भट्टसंज्ञाम् ॥ वयं गुरुं षट्चतुरुत्तरं तं श्रीकृष्णभट्टाभिधमानताः स्मः ॥ ॥ ५३ ॥ कृष्णभट्टानंदनाथः स्वस्य शिष्यान्बहूनथ ॥ सूत्राण्यध्यापयामास गृहीतानि यथा गुरोः ॥ ५४ ॥ कश्चित्तेष्वखिलैः साकं व्याख्यानं प्राप देशिकात् ॥ स्थित्वा गुहायामेकांते पठत्येकोऽन्यवर्जितः ॥ ५५ ॥ सदा गुहायां तिष्ठंतं तमन्ये सहपाठकाः ॥ गुहेश्वरमिति प्राहुर्विनोदेन सदैव हि ॥ ५६ ॥ विद्या तेनाखिलेभ्योपि सम्यगेकांतसेवनात् ॥ ज्ञाता गुरुर्ददौ तस्मै प्रीतो मंत्ररहस्यकम् ॥ ५७ ॥ गुहेश्वरानंद इत्थं चक्रेस्याख्यां च शोभनाम् ॥ पीठं चास्मै ददौ सर्वशिष्याणामपि वर्यताम् ॥ ५८ ॥ स्थित्वा गुहायामतिपाठतो यः सर्वज्ञतां प्राप गुरोः प्रसादात् ॥ तं सत्यवेदेंदुमितं बुधेज्यं गुहेश्वरानंदगुरुं नताः स्मः ॥ ५९ ॥ काश्मीरनगरेऽथासीत्कश्चिद्ब्राह्मणसत्तमः ॥ विद्वान्भार्यान्वितः शांतः सर्वसंपत्समावृतः ॥ ६० ॥ सरस्वत्यर्चको नित्यं पांथातिथ्यन्नदः शुचिः ॥ बभूवेत्थंविधस्यास्य पुत्रो वयसि चांतिमे ॥ ६१ ॥ संतुष्टोऽसौ ददौ दानान्यनेकान्यात्मजोद्भवे ॥ पुत्रे वर्षोनवयसि दैवात्पंचत्वमाप सः ॥ ॥ ६२ ॥ लब्धपत्यापि तद्भार्या गंतुं पत्यान्विता दिवम् ॥ मनो दधेऽथ विप्रेभ्योऽखिलं दत्त्वार्भकं लघुम् ॥ ६३ ॥ सरस्वत्यग्रतो नीत्वा भूमौ स्थाप्य कृतांजलिः ॥ प्रार्थयामास तां देवीं पोषयेति निजात्मजम् ॥ ६४ ॥ सत्युवाच ॥ मातस्त्वमेवात्रसि सर्वजीवा जीवंति केचिन्मृतमातृकाश्च ॥ सत्यां जनन्यामपि यांति नाशं नातः शिशुं पाति च देहमाता ॥ ६५ ॥ प्राक्कर्म यस्यास्ति तथैव याति सुखासुखे मृत्युभवौ च जंतुः ॥ जीवाः स्वकर्मग्रथिताः किलैतान्पातुं च हंतुं न परः समर्थः ॥ ६६ ॥ धीनिश्चयादिंद्रियतो शुभं सत्ते कर्म कुर्वंत्यथ धीप्रवृत्त्या ॥ गच्छंति तत्तत्फलमर्थगतैं कश्चिद्धनं सर्पभृतिं यथान्यः ॥ ६७ ॥

मार्गस्थातिथिभ्योऽन्नप्रदाता । अंतिमे वयसि वृद्धावस्थायाम् ॥ ६१ ॥ आत्मजोद्भवे पुत्रजन्मनि । वर्षोनवयसि एकाब्दन्यूनवयस्के ॥ ६२ ॥ अथ युत्तरान्वयि ॥ ६३ ॥ निजात्मजं स्वपुत्रम् ॥ ६४ ॥ प्रार्थनामेवाह—हे मातरिति ॥ ६५ ॥ ६६ ॥ बुद्धिनिश्चयेनेंद्रियद्वारा ते जीवाः अशुभं शुभं

वा कर्म कुर्वंति । अथ जन्मांतरे कर्मानुरूपबुद्धिप्रवृत्त्या तेषां शुभाशुभकर्मणां फलं सुखदुःखरूपं प्राप्नुवंति।यथा कश्चिदर्थगर्ते धनलोभार्थं प्रवृत्तशुभकर्मभिः धनं प्राप्नोति । अन्यः पापकर्मभिः धनरक्षकसर्पान्मरणं प्राप्नोति । तथा सर्वे जीवाः स्वकर्मणैव सर्वेशुभाशुभभाज इत्यर्थः ॥ ६७ ॥ नन्वस्य माता त्व मेनं पालयेत्यत आह । बुद्धिरूपिणी त्वमेव सर्वांतर्गता शुभाशुभकर्म कर्तुं तत्फलं च दातुं समर्थासि । भवत्यास्त्वत्तोऽन्यो न प्रवृत्तः समर्थः । फलं सुख

धीरूपिणी त्वं निखिलांतरंगाऽशुभं शुभं कर्म च कर्तुमीशा ॥ फलं च दातुं न परो भवत्यास्त्वत्कल्पनैवास्ति फलं च कर्म ॥ ॥६८॥ पत्या सहाऽहं तु दिवं प्रयातुं यत्त्वत्प्रवृत्त्या कृतनिश्चयास्मि ॥ त्वं मातृपित्रूनममुं च रक्ष बालं प्रयास्ये च दिवं नमस्ते॥६९॥ श्रीदेविजेंद्र उवाच॥सरस्वतीमिति स्तुत्वा मुहुर्नत्वा च सा सती ॥ अग्रेऽस्याः स्थाप्य बालं स्वर्ययौ पत्या यथाविधि॥७०॥ गतायां मातरीत्थं स मुहूर्ताद्बालको भृशम् ॥ रुरोद क्षुधितः कोऽपि नासीद्देव्यालये तदा॥७१॥सरस्वत्येव साक्षात्तं स्वांकमारोप्य सद्घृणा ॥ पाययामास च स्तन्यं यत्सुरैरपि दुर्लभम् ॥७२॥चिक्रीडेऽथ शिशुस्तुष्टः करांघ्रीनूर्ध्वमप्ययः॥निनयंश्च हसन्दीपान्पश्यन्देव्यालयास्थि तान् ॥ ७३ ॥ तावद्गुहेश्वरानंदः प्राप्तः श्रीमातृदर्शने ॥ नत्वा देवीं तदंकस्थं ह्यपश्यद्बालकं लघुम् ॥ ७४ ॥ देव्याः प्रसादमित्युक्त्वा गृहीत्वा द्रुतमर्भकम् ॥ नीत्वानपत्यो भार्यायै ददौ तुष्टः स सर्ववित् ॥७५॥ सापि बालं पुपोषैनं संतुष्टा भर्तृशासनात् ॥ प्राह सार स्वतं नाम्ना तत्प्रसादाद्गुहेश्वरः॥७६॥चूडाकर्म तृतीयेऽब्दे कृत्वा बालस्य चादिशत्॥सारस्वतं बीजमस्मै यज्जपात्सर्वसिद्धिदम् ॥७७॥

दुःखरूपं तज्जनकं कर्म च तव कल्पनामात्रं भवति । नाहमेनं पालयितुं समर्थास्मीत्यर्थः ॥ ६८ ॥ तस्मात्त्वमेव पालयेति प्रार्थयति । यद्यस्मात्तव प्रेरणया निमित्तभूतयाऽहं पत्या सह स्वर्गं प्रति गंतुं कृतनिश्चयास्मि । तस्मात्त्वमेनं पालय । तुभ्यं नमोऽस्तु ॥ ६९ ॥ ७० ॥ मुहूर्तादनंतरम् ॥ ७१ ॥ सद्घृणा उत्तमकृपायुक्ता ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ तत्प्रसादात्सरस्वतीप्रसादाद्धेतोः ॥ ७६ ॥ सारस्वतं बीजं वाग्बीजं जपात् जपमात्रेण ॥७७॥

॥ ७८ ॥ ७९ ॥ ८० ॥ शब्दानुभूतये शब्दज्ञानाय ॥ ८१ ॥ तस्य सारस्वतस्य परं द्वितीयम् ॥ ८२ ॥ अष्टचत्वारिंशदधिकशतसंख्यं सारस्वता नंदं प्रणमति य इति । गिरः सरस्वत्याः उपजातिवृत्तम् ॥ ८३ ॥ एतत्सर्गोक्तत्रिविक्रमादिगुरुपंचककथाश्रवणादेः फलं क्रमेणाह । त्रिविक्रमाख्यादिति । त्रिविक्रमवररुचिकृष्णभट्टगुहेश्वरसारस्वतानंदानां कथाश्रवणपाठादेः फलानि क्रमेण ज्ञेयानि ॥ ८४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभि

कृतोपनयनं वर्षे चाष्टमे तं स्वयं गुरुः ॥ वेदानध्यापयत्सांगाञ्छास्त्राण्यपि तथा क्रमात् ॥ ७८ ॥ मंत्रजातं ददौ चास्मै तथा पीठाधिकारिताम् ॥ सारस्वतानंद इति नाम चक्रेऽस्य शोभनम् ॥ ७९ ॥ अथ सारस्वतानंदः पुरश्चरणतो मनून् ॥ जप्त्वा प्रापाखिलाः सिद्धीर्योद्धा स्तन्यं गिरोऽपिबत् ॥ ८० ॥ चक्रे व्याकरणं चाद्यं ग्रंथं सारस्वताभिधम् ॥ शब्दानुभूतये धातुप्रत्ययैः सिद्धमंजसा ॥ ८१ ॥ अनुभूत्याचार्य इति तस्य नामाभवत्परम् ॥ प्रसिद्धः सर्वसिद्धेषु विद्वत्सु च बभूव सः ॥ ८२ ॥ यो बाल्य एवाप गिरःप्रसादं विद्याः समस्ताश्च गुहेश्वराख्यात् ॥ तमष्टवेदेंदुमितं प्रसिद्धं सारस्वतानंदगुरुं नताः स्मः ॥ ८३ ॥ त्रिविक्रमाख्याद्गुरुपंचकस्य योऽदश्चरित्रं शृणुयात्पठेद्वा ॥ लभेत्सुकीर्तिं निखिलप्रियत्वं श्रैष्ठ्यं च सत्पुत्रमथात्मलाभम् ॥ ८४ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे त्रिविक्रमादिगुरुपंचककथावर्णनं नाम त्रयोदशः सर्गः ॥ १३ ॥ श्रीदेशिकेंद्र उवाच ॥ कथां भर्तृहरे विद्वन्प्राचीनस्याप्यणूदिताम् ॥ शृणु यो बहुवर्षांते मंत्रान्प्रापावराद्गुरोः॥१॥रासभः शापतः शंभोर्दूतः प्राग्गंधमादनः ॥ जातोऽवंत्यां कलावेव द्वादशाब्दैस्ततः पुनः॥२॥ तदुच्छापाद्राजकन्याकरमुक्ताक्षतान्स्पृशन् ॥ प्राप दिव्यं निजं रूपं कामिनी कामदीपकम् ॥३॥

धायां त्रयोदशः सर्गः॥१३॥उच्चतुर्दशसर्गे तु बाणाद्रिमितपद्यतः । सारस्वताद्भर्तृहरेर्दीक्षां प्रापेति वर्ण्यते ॥१४॥ कथामिति।अणूदितां पूर्वार्द्धे विक्रमादित्यकथाप्रसंगेन यथा स्यात्तथा कथिताम्।अवरात् निकृष्टात्सारस्वतानंदात्॥१॥रासभ इत्यादिना उक्तकथानुवादः।द्वादशाब्दैरित्युत्तरान्वयि ॥२॥ तदुच्छापात

शिवकृतशापमोक्षणाद्धेतोः आत्मरूपं प्राप । गंधमादन इत्यनुवृत्तिः ॥ ३ ॥ ४ ॥ ५ ॥ सः गंधमादनः एताः स्त्रियः पुत्रा इत्युत्तरा न्वयि ॥ ६ ॥ उत्तरार्द्धमुत्तरान्वयि । ज्येष्ठं भर्तृहरिम् ॥ ७ ॥ कनिष्ठं भट्टिसंज्ञं स्वामात्ययुक् सुमतिप्रधानयुक्तः उत्तरार्द्धमुत्तरबद्धम् ॥ ८ ॥ अस्य भर्तृ



अथावंतीनृपस्योभे चित्रसेनस्य कन्यके ॥ वव्राते तं दिव्यरूपं शारदा च सुलोचना ॥ ४ ॥ मंत्रिणः सुमतेः कन्या वव्रे मत्स्योदरी तथा ॥ बभूवुरथ तास्तिस्रो गर्भिण्यो गंधमादनात् ॥ ५ ॥ प्रययौ सोऽथ कैलासं संस्थाप्यैता नृपालये ॥ पुत्रास्तासां भर्तृहरिर्विक्रमो भट्टिरित्यमी ॥६॥ बभूवुः सद्गुणाः सर्वे वयसा द्वादशाब्दिकाः ॥ चित्रसेनोऽनपत्योऽथ कृत्वा ज्येष्ठं नृपं तथा ॥७॥ कनिष्ठं मंत्रिणं चासौ ययौ स्वामात्ययुग्वनम् ॥ विक्रमो मध्यमस्तत्र दुःखितो राज्यवर्जितः ॥ ८॥ ययौ देशांतरं भट्टिश्चामात्योऽप्यस्य दुःखतः ॥ राज्यं भर्तृहरिश्चक्रे बंध्वोर्देशांतरस्थयोः ॥ ९ ॥ वव्रे राजसुतां श्यामां तया सह मुमोद च ॥ बुभुजेऽनेकभोगांश्च योद्धा शत्रुभयप्रदः ॥ १० ॥ भार्यायामतिसक्तोऽसौ रूपवत्यामथाकरोत् ॥ शृंगारशतकं नीतेः शतकं चावितुं विशः ॥ ११॥ प्रजाः पुत्रसमं पाति दंडयत्यपि नीतिवत् ॥ दानदो याचकेभ्यो यः सन्मानाद्विदुषो मुहुः ॥१२॥ राज्ञि भर्तृहरौ नासीदपमृत्युश्च चोरभीः॥ नाधिव्याधिश्च देशेषु जना आसन्सुखान्विताः ॥ १३ ॥ उज्जयिन्यां द्विजः कश्चित्कुटुंबी नित्यकर्मकृत् ॥ दारिद्र्यपीडितोऽत्यंतं बालास्तस्यान्नकांक्षिणः ॥ १४ ॥ किंचिन्न्यूनदशाब्दां च कन्यामुद्वाहितुं धनम् ॥ न स प्राप तदा भार्या साध्वीत्याह पतिं मृदु ॥१५॥ कन्यानुद्वाहिता स्वामिन्दशाब्दोर्ध्वं पितुर्गृहे ॥ तिष्ठंती पातकं पित्रे ददात्यस्मादसद्गतिः ॥१६॥ इत्थं महद्वचस्तस्माद्विवाहोऽस्याः कथं भवेत् ॥ धनं विनेति चोक्त्वा तं तूष्णीमास पतिव्रता ॥ १७ ॥

हरेः अमात्यो भट्टिश्च बंधुदुःखेन दुःखितः सन्ययौ ॥ ९ ॥ १० ॥ विशः जनान् अवितुं रक्षितुं नीतिशतकं कृतवान् ॥ ११ ॥ विदुषे च सन्मानपूर्वकं मुहुर्दानप्रदः ॥ १२ ॥१३॥ आसीत् आसन्निति क्रिययोरध्याहारः ॥१४॥१५॥ अविवाहिता पित्रे पातकं दत्ते येन दुर्गतिर्भवति ॥ १६ ॥ इत्थं महतां

वाक्यमस्ति। तच्च वाक्यं संवर्तेनोक्तम्। "अष्टवर्षा भवेत्कन्या नववर्षा च रोहिणी। दशवर्षा भवेद्गौरी ह्यत ऊर्ध्वं रजस्वला॥" इत्युक्त्वा "गौरीदानान्नागलोकं वैकुंठं रोहिणीं ददत्। कन्यादानाद्ब्रह्मलोकं रौरवं तु रजस्वलाम्" इति ॥ १७ ॥ निर्धनस्य दरिद्रिणः ॥ १८ ॥ १९॥२०॥२१॥२२॥ साहसं देहत्यागम् ॥ २३ ॥ प्राक्तनादैवयोगेन ॥ २४ ॥ आकल्पं कल्पपर्यंतमेतत्पूर्वनिबद्धम्। उत्तरार्धमुत्तरान्वयि ॥ २५ ॥ इदमाद्युत्तरान्वयि ॥ २६ ॥

इत्युक्तं श्रुत्वेति विप्रस्तामपृष्ट्वैव वनं निशि ॥ एकाकी प्रययौ जन्म धिक्कुर्वन्निर्धनस्य हि ॥ १८ ॥ प्रातः सोऽथ वने घोरे सर्पव्याघ्रभयाकुले ॥ ददर्श निर्जने तत्र जीर्णं देवालयं महत् ॥ १९ ॥ वापीं पूर्णजलां चाग्रेऽथास्यां स्नात्वार्द्रवस्त्रवान् ॥ गत्वालयेऽथ चापश्यन्मूर्तिं देव्याः पुरातनीम् ॥२०॥ तां नत्वास्याः पुरः स्थित्वा गायत्रीजपमेकधीः ॥ सततं च त्र्यहोरात्रं चकारासौ दृढासनः॥ ॥ २१ ॥ देवी नाभूत्प्रसन्नास्मै तदाश्मानमुरस्यसौ ॥ बद्ध्वा वाप्यां देहपाते किलोद्युक्तः क्षुधाकुलः ॥ २२ ॥ तावदस्याग्रतः साक्षाद्देव्याविर्भूय वत्सला॥ तमित्याह द्विजेदानीं मुधा मा कुरु साहसम् ॥२३॥ याच्ञां विना न वित्तं ते लभ्यते प्राक्तनात्क्वचित् ॥ गृहाणेदं फलं दिव्यं यो भुंक्ते सोमरो भवेत् ॥ २४ ॥ आकल्पमिति सोक्त्वास्मै फलं दत्त्वा तिरोदधे ॥ नत्वा सोऽन्तर्हितां देवीं मूर्तिमस्याः प्रपूज्य च ॥ २५ ॥ वन्यैः पुष्पैः फलैस्तानि भुक्त्वा चाप गृहं सुखी ॥ उक्त्वाखिलं स्त्रियेऽथातः प्राहेदं फलमद्भुतम् ॥ ॥ २६ ॥ कस्मै देयमथ स्वेन भक्षितं चेद्दरिद्रिणा ॥ लब्ध्वामरत्वं किं भक्ष्यं याच्ञानिर्वाहिणान्वहम् ॥२७॥ राजा भर्तृहरिर्दानी चानेकजनपोषकः ॥ तस्मै देयं फलं सोपि धनं दास्यति भूरि मे ॥ २८ ॥ इत्थं निश्चित्य गत्वाऽसौ राज्ञः सदसि वै द्विजः ॥ ददौ राज्ञेऽखिलं चोक्त्वा तत्फलं ह्यमरत्वदम् ॥ २९ ॥

स्वेनात्मना यदि भक्षितं तर्हि अमरत्वं लब्ध्वापि दरिद्रिणा किं भक्ष्यं भक्षणीयम्। यतः याच्ञा भिक्षया निर्वाह उपजीविका यस्य तेन मया भक्षितेऽपि दरिद्रिणो मम दुःखमेव स्यादित्यर्थः ॥ २७ ॥ दानी दानकर्ता मे मह्यम् ॥ २८ ॥ अखिलं देवीप्रसादादि अमरत्वं मृत्युनिवारकम् ॥ २९ ॥

अस्य ब्राह्मणस्य आजन्म जन्म मर्यादीकृत्य वर्तत इत्याजन्म आरभ्यावसानपर्यंतं जीवकं निर्वाहकम् ॥३०॥ आत्मनि मनसि अदः वक्ष्यमाणम् ॥३१॥ ॥३२॥ फलं भक्षयितुं योग्यं यया फलभक्षका भवतु । यतः फलभक्षमाचिरं तरुण्येव स्थास्यतीत्यन्वयः ॥३३॥ अहं किंचिद्वृद्धो भविष्यामि चेत्तर्हि पौष्टिकान्पुष्टिकरान्कूष्मांडपाकादीन् रसान्भुक्त्वाऽनया सह रंस्ये यतोऽहं विषयासक्तमानसोऽस्मीति शेषः॥३४॥अनन्यगां पतिव्रतां ज्ञात्वा मत्वा॥३५॥३६॥

मत्त्वा राजापि तत्सर्वं गृहीत्वा फलमुत्तमम् ॥ ददौ धनं च विप्राय यदस्याजन्मजीवकम् ॥३०॥ द्विजस्तुष्टो ययौ गेहं सभां चोत्सृज्य भूपतिः ॥ गत्वांतर्भवने पश्यन्स्त्रियमात्मन्यदोऽब्रवीत् ॥ ३१ ॥ भविष्येऽमर एवाहं भक्षितं चेत्फलं मया ॥ सदैव तरुणोऽहं तु स्त्री मे वृद्धा भविष्यति ॥ ३२ ॥ तदा न रतियोग्या सा भग्नदंता जरत्कुचा ॥ सैवातः फलभक्षास्तु तरुण्येव यतश्चिरम् ॥ ३३ ॥ स्थास्यतीयदहं वृद्धश्चेद्भविष्यामि पौष्टिकान् ॥ रसान्भुक्त्वाऽनया रंस्ये विषयासक्तमानसः ॥ ३४ ॥ निश्चित्येति नृपो ज्ञात्वा कामी चानन्यगां स्त्रियम् ॥ गाढमालिंग्य तामाह गृहीत्वा स्वकरे फलम् ॥३५॥ त्वयैतद्भक्ष्यतां सुभ्रूः फलं मृत्युजरापहम् ॥ सदा तारुण्य मेवास्तु त्वयि मत्प्रीतिवर्द्धनम् ॥ ३६ ॥ विलंबो नात्र कर्तव्यः प्रत्यूहः श्रेयसो यतः ॥ देव्याः प्रसादतः प्राप्तं विप्रायेदं तपस्विने ॥ ३७ ॥ तेन मे कृपया दत्तं मयाप्यस्मै धनं बहु ॥ नाश्रद्धां कुरु रंभोरु फलेऽस्मिन्मर्त्यदुर्लभे ॥ ३८ ॥ पत्युर्वाक्यमिति श्रुत्वा स्मित पूर्वमुवाच सा ॥ मलिनाद्य कथं भोक्ष्ये श्वः स्नात्वा भक्ष्यते मया ॥ ३९ ॥ शुद्धया तदिति प्रोच्य पेट्यां स्थाप्यामुना निशि ॥ रेमे कामाढ्यहृदया मोहयंती नृपांतरम् ॥ ४० ॥ नृपः प्रातः कृतावश्योऽमात्यगुरुभिः सभां ययौ ॥ फलं साथ ददौ मूढा स्वजारायाश्वसेविने ॥ ४१ ॥

यतः श्रेयसे श्रेयःसाधनाय प्रत्यूहो विघ्नो भवति । अतस्त्वया विलंबो न कर्तव्यः ॥ ३७ ॥ ३८ ॥ मलिना कथं भोक्ष्ये फलमित्यपकर्षः । अतः श्वःप्रभाते स्नात्वा शुद्धया मया तत्फलं भोक्ष्यत इति संबंधः ॥ ३९ ॥ तत्फलम् रभयान्वयि । अमुना पत्या । नृपांतरं नृपमनः ॥ ४० ॥ कृतम् अ

र्थं स्नानादि येन सः ॥ ४१ ॥ अत्र दृष्टांतः पूर्वार्द्धे सः अश्वसेवी ॥ ४२ ॥ दुर्धिया दुर्बुद्धिना तेन गोरक्षकेण वेश्यायाः या गोमलकर्मिणी दासी तस्यै दत्तम् । सा गोमलकर्मिणी ॥ ४३ ॥ अमरत्वमित्याद्युत्तरान्वयि ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥४९॥ तत्कृतं श्लोकमाह । यामिति । यां पत्नीमहं चिंतयामि इष्टामिति भावयामि । सा मयि विरक्ता प्रीतिरहितास्तीति निश्चः प्रीत्यभावेनात्याश्वसेविनमित्यर्थः । सा च पत्नी अन्यम् अश्वसेविनं जार

श्रौतं हविः प्रसादाप्तं शुने प्रीत्यै यथा कुधीः ॥ स ददौ राजदास्यै सा राजगोरक्षकाय च ॥ ४२ ॥ वेश्यागोमल कर्मिण्यै दत्तं तेन च दुर्धिया ॥ स्वामिन्यै सा च दत्त्वैव वेश्यायै चेदमब्रवीत् ॥ ४३ ॥ मातस्त्वमेन भुक्त्वेदं स्वामिनी मे भवामरा ॥ मनस्याहाथ सा वेश्याऽमरत्वं नीचजन्मनि ॥ ४४ ॥ ममातिनिंद्यमाभाति तस्मादेतन्नृपाय वै ॥ देयं भुक्त्वामरश्चेत्स पालयिष्यति वै बहून् ॥ ४५ ॥ निश्चित्येति धिया वेश्या सभां गत्वा नृपाय सा ॥ फलं दत्त्वाह भो राजंस्त्वयैतद्भक्ष्यतां किल ॥ ४६ ॥ अमरत्वप्रदं यस्मान्नान्यस्मै दीयतामिदम् ॥ राजा ज्ञात्वा स्वकीयं तद्गृहमेत्याह च स्त्रियम् ॥ ४७ ॥ किं कृतं तत्फलं दुष्टे ब्रूहि नोचेन्म रिष्यसि ॥ भीता साथ नृपं प्राह दत्तं तच्चाश्वसेविने ॥ ४८ ॥ स्त्र्यादीनां कामदुर्वृत्तं ज्ञात्वा भर्तृहरिस्तदा ॥ विगर्हयंश्च सकलान्श्लो कमेकमसौ जगौ ॥ ४९ ॥ यां चिंतयामि सततं मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः ॥ अस्मत्कृते च परितु ष्यति काचिदन्या धिक्तां च तं च मदनं च इमां च मां च ॥५०॥ इत्यादिबहुशश्श्लोकैः निंदां कामिजनस्य सः ॥ तच्च वैराग्यशतकं ख्यातं भर्तृहरीरितम् ॥ ५१ ॥ ददाह हृदयं राज्ञः कोपो भार्यापराधजः ॥ तच्छांत्यै नीतिशतकं प्राकरोत्तं सोऽस्मराद्धिया ॥ ५२॥

मिच्छति । स जनोऽश्वसेवी अन्यस्यां दास्यामासक्तः । एवं परंपरया काचिदन्या वेश्या अस्मत्कृते अस्मदर्थं परितुष्यति । फलदानेन तुष्टा भवति । एवं कामवासनयाऽतिसाहसकारिणो निंदति धिगिति । वसंततिलकावृत्तम् ॥ ५० ॥ तत्कामिनिंदात्मकम् ॥ ५१ ॥ रुषः कोपस्य । पूर्वमात्मकृतं नीतिशतकं स्मृ

हे विद्वन्नित्याद्युत्तरान्वयि ॥ १७ ॥ मत्तः ऊनं वयो येषां ते सर्वे पंच वेदाः इत्याद्यन्वयि ॥ १८ ॥ सर्वेषां मध्ये अतः मूर्खत्वहेतोः ॥ १९ ॥ बहिष्कृतोऽस्मीति पूर्वेण योज्यम् । इह ह्रदे । इत्थमित्याद्युत्तरान्वयि ॥ २० ॥ २१ ॥ अत्र नर्मदातीरे । अथेत्युत्तरान्वयि । एकाहर्निशम् एकाहोरात्रम् ॥ २२ ॥ ॥ २३ ॥ स्वापे निद्रायां विस्मृतं अध्ययनं जागृतो यथा वक्ति तथा कण्ठेन पुस्तकं विना मुखं गता [illegible] ॥ २४ ॥ [illegible]

दृष्ट्वा नत्वाग्रतः स्थित्वा वृत्तं प्राहादितोऽखिलम् ॥ विद्वन्निर्गतः स्वामिन्[illegible] ॥ १७ ॥ [illegible] मुखतोऽक्षरम् ॥ वक्तुं नैव समर्थोऽस्मि मदूनवयसोऽखिलाः ॥ १८ ॥ पंचापि वेदाः शुद्धाः [illegible] ॥ [illegible] सर्वेषां पित्रातस्ताडितो भृशम् ॥ १९ ॥ बहिः कृतो गृहात्तस्तोऽहं देहं त्यक्तुमिहोद्यतः ॥ इत्थं तद्वचनमाकर्ण्य [illegible] ॥ ॥ २० ॥ स्नापयित्वाथ वाग्बीजं तस्मै भर्तृहरिर्ददौ ॥ श्रद्धाढ्यः स च तद्बीजं जजापैकाग्रमानसः ॥ २१ ॥ तस्यो[illegible] योगवांस्तस्य सिद्धये ॥ अथैकाहर्निशं जप्त्वा तद्बीजं स द्विजः पराम् ॥ २२ ॥ सिद्धिं प्राप यया [illegible] ॥ आत्मनेथ परेभ्यश्च तत्सर्वं स्मृतिमागतम् ॥ २३ ॥ कंठेनैवाभ्रवीत्स्वाने विस्मृतं जागृतो यथा ॥ नत्वा भर्तृहरिं भूयः श्रोतुं [illegible] स्थितम् ॥ २४ ॥ अथ तस्मै ददौ मंत्रान्गुरुः संप्राप्तसिद्धये ॥ कंठपंडित इत्याख्यां चक्रे तस्य यतोऽद्भुता ॥ २५ ॥ [illegible] रितं सर्वं पितुर्यच्छ्रुतं पुरा ॥ स्वकृताः कारिकाश्चास्मै प्राह सर्वाः स्वभूतये ॥ २६ ॥ योगं ज्ञानं तथादिश्य ययौ भर्तृहरिस्ततः ॥ क्षितावास्तेऽपरोऽद्यापि क्वचिद्योगसमाधिमान् ॥ २७ ॥ भूत्वापि दृश्यतेऽन्यत्र सर्वसिद्धयन्वितो यतः ॥ श्रुत्वात्मजस्य वृत्तांतं कस्माच्चिदथ तत्पिता ॥ २८ ॥ तं कंठपंडितं निन्ये स्वगृहं तुष्टमानसः ॥ पितरं प्राह पुत्रोऽथ पितर्यत्ताडितं त्वया ॥ २९ ॥

करणे हेतुः । यत इत्याद्युत्तरान्वयि ॥ २५ ॥ स्वभूतये संपद्भवनायेत्यर्थः ॥ २६ ॥ २७ ॥ क्वचिदित्युत्तरान्वयि । अन्यत्र सदाविख्यातिरेकस्थले । दृश्यते यतोऽयं सर्वसिद्धियुक्तः । एवं भर्तृहरिचरित्रशेषं समाप्य अग्रे कथाप्रवृत्तिमाह । श्रुत्वेत्युत्तरान्वयि । आत्मजस्य कंठपंडितस्य । कस्माच्चित्पुरुषात् ॥ २८ ॥ हे पितः त्वया

ताडितमिति यद्बहिःकृतमिति यत्तत्सर्वं त्वत्कर्म ममानुग्रहाय बभूवेत्यन्वयः ॥ २९ ॥ कुशलैस्तक्षभिस्ताडितः पाषाणोऽपि देवत्वं प्राप्नोति किं पुनर्वाच्यं मानवो देवत्वं यातीति ततः कारणात्सद्भिः पित्रादिभिः स्वीयाः श्रिये कल्याणाय ताडनीयाः ॥ ३० ॥ ३१ ॥ ३२ ॥ पंचाशदधिकशतसंख्यं कंठपंडितानंदं प्रणमति । मूढ इति । पितृशासनात्पितृशिक्षया । गुरुं भर्तृहरिं लब्ध्वा ततस्तस्मात्परां सिद्धिं प्राप कंठेनैव यः सत्पंडितस्तम् ॥ ३३ ॥ अथेति

बहिष्कृतं च तत्सर्वं बभूवानुग्रहाय मे ॥ कोथोपि नूनं महतां ह्युपकारकरः क्वचित् ॥ ३० ॥ देवत्वं याति चाश्मापि ताडितः कुशलै र्यथा ॥ किं पुनर्मानवाः सद्भिस्ताड्याः स्वीयास्ततः श्रिये ॥ ३१ ॥ अथ पित्रा कृतोद्वाहः शिष्यान्नध्यापयन्गृहून् ॥ मत्तं आदेशाय न्कांश्चित्सिद्धवशी बभूव सः ॥ ३२ ॥ मूढोऽपि लब्ध्वा पितृशासनाद्यो गुरुं ततः प्राप परां च सिद्धिम् ॥ खबाणचंद्रप्रमितं हि कंठ सत्पंडितानंदगुरुं नताः स्मः ॥ ३३ ॥ अथासीद्योजनाद्दूरं नर्मदाया उदक्पुरम् ॥ राजा तत्र प्रजापालो यवनः क्रूरशासनः ॥ ३४ ॥ ज्योतिर्वृत्तिर्द्विजस्तत्र शिवदत्त इति श्रुतः ॥ कंठपंडितशिष्योऽसौ सर्वविद्याविशारदः ॥ ३५ ॥ विशेषाज्ज्योतिषं वेत्ति पृथक्सिद्धांतभे दतः ॥ परदेव्यर्चको नित्यं श्रीमद्देव्याः प्रसादतः ॥ ३६ ॥ दृष्ट्वा दृष्ट्वापि तच्छास्त्रं यत्तेनोक्तं मुखेन तत् ॥ सत्यमेवाभवद्भौममांतरं दिव्यसम्पदः ॥ ३७ ॥ स एकाक्येव पत्न्याढ्यः संति भृत्याश्च तद्गृहे ॥ धनं धान्यं समृद्धं गोमहिष्यश्वादि चापरम् ॥ ३८ ॥ एकदा स द्विजः प्रातस्तत्रमायां नृपतेः सभाम् ॥ पचांगं तु श्रावयितुं त्वरया चैकलो ययौ ॥ ३९ ॥ विलंबो भवितेत्यंबार्चायां पर्वावि शेषतः ॥ पंचांगं प्राह सदसि ज्योतिर्विन्नृपसन्निधौ ॥ ४० ॥ दर्शोऽद्य पौर्णिमेत्याह देवीपूजात्वरांतरः ॥ शृण्वत्स्वथाखिलेष्वाह दैव ज्ञमिति भूपतिः ॥ ४१ ॥ सत्याममायामप्यद्य पौर्णिमा कथ्यते त्वया ॥ त्वं भ्रांतः किं द्विजो भूत्वा निंद्यपानरतोऽसि किम् ॥ ४२ ॥

॥ ३४ ॥ आसीत इत्यध्याहारः ॥ ३५ ॥ सिद्धांतभेदतः ब्रह्मसिद्धांतादिभेदेन । उत्तरार्द्धे आसीदित्यध्याहारः । श्रीदेव्याः प्रसादतः प्रसादेनेत्युत्तरान्वयि ॥ ३६ ॥ तच्छास्त्रं भौमं भूमिगते ज्योतिःशास्त्रे विषयं नष्टवस्त्वादिकम् । आंतरं मनोगतं प्रश्नकर्तुरभिप्रायादि दिव्यं वृष्ट्यनावृष्ट्यादि । यन्मुखेनोक्तं तत्सत्यमभवत् । ॥ ३७ ॥ ३८ ॥ ३९ ॥ पर्वविशेषतः पर्वनिमित्तेन । पूजायां विलंबो भविष्यतीति बुद्ध्या अथाऽऽगमो न भविष्यतीति निश्चयेनेत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥

॥ ४३ ॥ वाक्योच्चारात् मिथ्याभाषणेन । इत्थं राज्ञा आभाषितो राजानं प्राहेति तृतीयेनान्वयः ॥ ४४ ॥ तन्मयीं गुरुरूपाम् ॥ ४५ ॥ ॥ ४६ ॥ ४७ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४८ ॥ ताः सुवासिनीः प्रति परः परःशिवश्चासावीश्वरश्च नियंता तस्मिन् । अमी ब्रह्मादयः कल्पिताः । यतः नित्ये कल्पनाधिष्ठानभूते । अत एवामले कर्तृत्वादिदोषरहिते । ततो निर्गुणे । उत पुनः निष्क्रिये एतत्कुतः एकरूपे अद्वितीये । सः पर

त्वयोक्ता पौर्णिमैवाद्य चेद्रात्रौ पूर्णचंद्रमाः ॥ विलोक्यतेऽखिलैस्तर्हि त्वद्वाक्यस्य प्रमाणता ॥ ४३ ॥ नोचेत्त्वं दंड्यसे मिथ्यावाक्योच्चारात्सभास्थले ॥ इत्थमाभाषितो राज्ञा ज्योतिर्विच्छिवदत्तकः ॥ ४४ ॥ ज्ञात्वात्मनान्यथैवोक्तममायां पौर्णिमेति च ॥ श्रीगुरोः पादुके चासौ स्मरन्देवीं च तन्मयीम् ॥ ४५ ॥ राजानं प्राह नैवेदं वाक्यं चैवानृतं भवेत् ॥ चेद्रात्रावद्य पूर्णेंदुः सर्वैरप्यवलोकितः ॥ ४६ ॥ तर्ह्येव दर्शयिष्येऽहमस्मिँल्लोके किलाननम् ॥ एतावदेव राजानमुक्त्वासौ स्वगृहं ययौ ॥ ४७ ॥ स्नात्वा कृताह्निकश्चक्रे श्रीदेव्याः पूजनं परम् ॥ स्वस्थेनैव हृदंबायाः पूजां कृत्वा सुवासिनीः ॥ ४८ ॥ संपूज्य ब्राह्मणांस्तांश्च ददौ मिष्टान्नभोजनम् ॥ देव्यग्रतस्ततः स्थित्वा तां तुष्टावेत्यनन्यधीः ॥ ४९ ॥ शिवदत्त उवाच ॥ मातस्त्वमादिरजविष्णुभवादिकानां त्वत्कल्पिता हि सकलाश्च परेश्वरेऽमी ॥ नित्येऽमलेऽगुण उताक्रिय एकरूपे कर्तुं न सोऽपि हि भवेत्त्वदृतेऽणु चेशः ॥ ५० ॥ स्वातंत्र्यमस्ति सकलं हि तवैव कर्तुं चाकर्तुमंब विपरीतमपि प्रकर्तुम् ॥ त्रैलोक्यमेतदखिलं तव खेलनं वै यद्रोचते हृदि तदंब तथा करोषि ॥ ५१ ॥ काले परातपयुतेऽपि तरूंस्त्वमार्द्रपत्रान्करोषि बहुशीतयुतेऽप्यपर्णान् ॥ शुष्के दृषद्धृदि विनिर्गमकेऽपि जंतून्पास्यंबुतस्त्वमसीति मातरसि स्वतंत्रा ॥ ५२ ॥

मेश्वरोपि त्वां विना न किंचित्कर्तुं समर्थ इत्यर्थः ॥ ४९ ॥ ५० ॥ खेलनं क्रीडासाधनम् ॥ ५१ ॥ कर्तुं अकर्तुं विपरीतं कर्तुं समर्थत्वमाह । काले इति । तीव्रोष्णयुक्ते वसंतादिकाले वृक्षानार्द्रान् करोषि बहुशीतयुक्तेपि पर्णरहितान्करोषि । जलरहितेपि पाषाणमध्ये निर्गमरहितेऽपिशब्देनोपलक्ष्यते

प्रवेशरहितेपीति भेकादिजंतूनुदकेन रक्षसि । अतस्त्वमेव सर्वत्र स्वतंत्रासीत्यर्थः ॥५२॥ आदिमाता त्वमेव निजतंत्रा स्वतंत्रा शक्तिरसि । मे मह्यं ध्यानोदिता ध्यानोक्ता अणु अल्पं मयोक्तं सत्यं कर्तुं त्वामहं प्रार्थये ॥ ५३ ॥ किं तत्सत्यं कर्तव्यमित्यत आह । दर्श इति । पूर्णा पौर्णिमा । शेषं स्पष्टम् ॥ ५४ ॥ अमुष्य शिवदत्तस्य ताटंके कर्णभूषणे भास्करशशाङ्काविवेत्युपमानोत्तरपदः कर्मधारयः ताभ्यां सूर्यचंद्राभ्यां विशेषा कांतिर्यस्याः । अथ तयोरेकं ताटंकम् । कलंकरहितं चंद्रं चंद्रसदृशं नगरे ऊर्द्ध्वं चिक्षेप ॥ ५५ ॥ यो न दृष्टः श्रुतोस्तीत्याश्चर्येण परस्परं प्राहुः ॥ ५६ ॥ स्वयंत्रे श्रीचक्रे । अथ दृष्टः शशी येन

इत्थं त्वमादिजननी निजतंत्रशक्तिः प्राप्तासि मे गुरुमुखेन सुमंत्ररूपा ॥ ध्यानोदितापि हृदि भासि ममाशुनापि त्वां प्रार्थये हमणु कर्तुमृतं मयोक्तम् ॥ ५३ ॥ दर्शे मया नृपपुरः कथिताद्य पूर्णा भ्रांत्याथ देवि निशि पूर्णविधूदयात्ताम् ॥ सत्यां कुरु त्वमखिलं खलु कर्तुमीशा नोचेत्त्यजाम्यहमसून्पुरतस्तवात्र ॥ ५४ ॥ ज्ञात्वेति निग्रहममुष्य तदाविरासीत्ताटंकभास्करशशांक विशेषकांतिः ॥ देवी प्रदोषसमयेऽथ तयोः किलैकं चिक्षेप खेऽथ नगरेऽप्यकलंकचंद्रम् ॥ ५५ ॥ पौराः कलंकरहितं विधुमीक्ष्य पूर्णे नास्माभिरिंदुरखिलैश्च कदाप्यमायाम् ॥ दृष्टः श्रुतोऽथ सकलश्च कलंकहीनः सोस्तीति चाहुरतिविस्मयतो मिथस्ते ॥ ५६ ॥ ताटंकतः सकलचंद्रमिति प्रकाश्य सांतर्दधेऽखिलजगज्जननी स्वयंत्रे ॥ भक्तेन तेन भजतातिनमस्कृताथ भुक्तं च दृष्टशशिनापि सप त्निकेन ॥ ५७ ॥ सूर्योदयावधि शशी निखिलैर्नृपाद्यैर्दृष्टोंबिकामथ ययौ श्रुतिभूषणं तत् ॥ राजा सलज्ज इति दूतमुखैर्द्विजं चा प्याह्वयत्सुखयितुं पुरमुख्यदानैः ॥५८॥ नासौ ययावथ नृपः स्वयमेत्य दातुं तं प्रार्थयत्पुरसुखं न तदाशृणोत्सः ॥ मिथ्या तथापि खलु दुःखमयं प्रपंचं ज्ञात्वाऽखिलं गृहगतं च ददौ द्विजेभ्यः ॥ ५९ ॥

तेन पत्नीसहितेन भोजनं कृतम् ॥५७॥ अथ तद्देवीप्रक्षिप्तं श्रुतिभूषणं कर्णभूषणं ताटंकमंबिकां प्रति ययौ । ग्रामादिदानैस्तोषयितुम् ॥५८॥ आ आदरेण प्रार्थितवान् । ननु बहुयत्नैर्याचितुं प्रवर्तते । तद्ग्रामधनादिकं प्रार्थनया स्वयं प्रदातुं प्राप्तस्य राज्ञो वचनं विदुषा शिवदत्तेन कथं तिरस्कृतमितिचेत्तत्राह । स इति उभयान्वयि । यद्यपि सर्वप्रपंचो मिथ्या तथापि तं दुःखमयम् आदौ अंते मध्ये दुःखं दुःखरूपं सुविचारेण ज्ञात्वा सर्वं गृहगतं धनधान्यादि पदार्थ

जातं च ब्राह्मणेभ्यो ददौ । अयमर्थः । यद्यपि राजैश्वर्यस्य पृथिव्यां परमानंदत्वम् । तथापि दरिद्रपरमानंदे राजैश्वर्यसुखे ब्रह्मानंदस्य लेशमात्रत्वश्रवणेन न तत्र तुच्छत्वबुद्धिमता शिवदत्तविदुषा युक्तमेव कृतमिति । " एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति " इति श्रुतिरिति च ॥५९॥ पत्न्या सह स च कंठपंडितानंदः । चंद्रादर्शे दर्शेपि चंद्रस्य पूर्णस्य विलोकनेन दर्शितं मुखं येन तं चंद्राननः आदिर्यस्य तं सुखस्वरूपं चंद्राननानंदम् ॥६०॥ एकपंचा

पत्न्या ययौ गुरुमसौ शरणं निरीहं ज्ञात्वैनमेव हि ददौ स च पूर्णदीक्षाम् ॥ दर्शेऽपि चंद्रसुविलोकनदर्शितास्यं चंद्राननादिमसुखं च चकार नाम्ना ॥६०॥ राज्ञे त्वमायामपि पूर्णिमां यः प्रोच्याखिलाब्जेन चकार सत्याम् ॥ तमूनपंचाशदुदक्छताख्यं चंद्राननानंदगुरुं नताः स्मः ॥६१॥ देशिकेंद्र उवाच ॥ अथ चंद्राननानंदः पत्न्या देशातटे मनम् ॥ शृण्वन्गुरोश्च वेदांतं निशाशो सुलनाशः ॥ ६२ ॥ एकदेत्याह तं पत्नी प्रार्थयंत्यतिभक्तितः ॥ विद्वांसोऽप्यसुखेऽसिलास्त्वां दैवज्ञोत्तमं पते ॥ ६३ ॥ दशास्तव [illegible] दृष्टाः प्रागाशुसिद्धिदाः ॥ धनं यैरथ्ना: प्रापुरनपत्याः सुतानपि ॥ ६४ ॥ समाऽतः [illegible] किंचिदुद्भवसि पावकः ॥ नैवापत्यमभूच्चैकं काचित्कन्याथ वा सुतः ॥ ६५ ॥ एकस्तर्हि सुतो भूयादिति मे वांछितं प्रभो ॥ निःस्पृहोऽपीति भार्योक्तं [illegible] चंद्राननस्तदा ॥ ६६ ॥ अपूर्णपंचपंचाशदब्दामृतुमतीं क्वचित् ॥ ता ज्ञात्वाऽथ शुभे लग्ने पुंगर्भलग्नत्यसौ ॥ ६७ ॥ [illegible] चकारास्यां गर्भाधानं भविष्यदित् ॥ बभूव गर्भिणी सापि पूर्णे गर्भेऽथ सद्दिने ॥ ६८ ॥ शुभग्रहेक्षिते लग्ने सुषुवे सा सुतं सती ॥ चंद्राननः स्वयं तस्याऽपश्यज्जातकमादितः ॥ ६९ ॥ विद्वान्दोर्घायुरित्यादि शुभमेवाखिलं फलम् ॥ ज्ञात्वाब्दे पंचमेऽस्य [illegible] डांतमद्भुतम् ॥ ७० ॥ प्रार्थयामास तच्छांत्यै स्वेष्टां देवतामसौ ॥ देवीदत्तेति नामास्य कृतं बालो दिने दिने ॥ ७१ ॥

शदधिकशतसंख्यं चंद्राननानंदं गुरुं प्रणमति—राज्ञ इति । अखिलाब्जेन पूर्णचंद्रेण ॥ ६१ ॥ अथेति ॥ ६२ ॥ ६३ ॥ ६४ ॥ उद्भवसि [illegible] वयोः ॥ ६५ ॥ निस्पृहेत्यादि द्वयोरन्वयः ॥ ६६ ॥६७॥ सद्दिने शुभदिवसे सुतं [illegible] इत्यन्वयः ॥६८॥६९॥ ज्ञात्वान्वयः ॥७०॥ [illegible]

मित्युत्तरान्वयि ॥ ७१ ॥ क्रीडामेवाह कदाचिदिति सार्द्धत्रयेण ॥ ७२ ॥ ७३ ॥ ७४ ॥ इत्थमित्युत्तरान्वयि । सर्वैः सह धावन् ॥ ७५ ॥ ७६ ॥
इत्यंतं पूर्वान्वयि वज्रघाताद्युत्तरान्वितम् ॥ ७७ ॥ ह्रद इत्युत्तरयुतम् ॥७८॥ नर्मदा भक्तपुत्रं भक्षितुं नीतं ज्ञात्वा स्वसमीपे स्थापयामासेत्यन्वयः ॥७९॥

ववृधे शुभचिह्नोऽथ रूपवान्पितृसौख्यदः ॥ चिक्रीडेऽथ वयस्यैः स पंचमेऽब्देऽतिचंचलः ॥ ७२ ॥ कदाचिन्नर्मदोत्तुंगकूले क्रीडन्स बालकैः ॥ एकस्यैव करे सर्वैः पार्थक्येन चपेटिकाः ॥ ७३ ॥ दत्त्वा पलायनं कार्यं तेनैकेन ततो जवात् ॥ स्पृश्यते योऽखिलेष्वेकः स पश्चाच्च चपेटिभाक् ॥ ७४ ॥ सर्वेष्वेकतमं स्प्रष्टुं तेन कार्यं पलायनम् ॥ इत्थं क्रीडनके धावन्देवीदत्तोऽखिलैः सह ॥७५॥ एक एव हि चागाधे पपाताधो महाह्रदे ॥ हाहाकृत्वा वयस्यैस्तु तत्पितृभ्यां समीरितम् ॥ ७६ ॥ पुत्रो वां पतितोऽगाधे क्रीडन्नेनांभसीति च ॥ वज्रघातसमं वाक्यं श्रुत्वैवैत्याथ तत्स्थलम् ॥ ७७ ॥ हा पुत्र क्व गतोऽसि त्वं त्यक्त्वा नौ शोकसंकुलौ ॥ ह्रदे यः पतितो बालो मकरेणाथ तत्पदम् ॥ ७८ ॥ धृत्वासौ त्विवरे नीतः कूलाधस्तान्निरंभसि ॥ नर्मदैव तदा साक्षान्निजभक्तस्य बालकम् ॥ ७९ ॥ स्वां तस्थमकरेणांतर्नीतमत्तुं निजालये ॥ ज्ञात्वेत्थं तं तदा नीत्वा स्थापयामास चान्तिके ॥८०॥ बहिश्चंद्राननानंदः शिश्वर्थं विलपन्मुहुः ॥ स्मरन्देवीं ह्रदेत्याह नर्मदेयं च तन्मयी ॥८१॥ यस्याश्चेदनुपलाः सम्यक्पूजिताश्चानुसिद्धिदाः ॥ किं पुनर्मे सुतं स्वान्तर्मग्नं नो दास्यति स्तुता ॥८२॥ अगाधेस्मिञ्जले नान्यस्तूपायः पुत्रलब्धये ॥ निश्चित्येति चकारासौ भक्त्या श्रीनर्मदास्तुतिम् ॥८३॥ चंद्रानन उवाच ॥ शर्मदेतीरिता त्वं बुधैर्नर्मदे शर्मदा मेऽधुनात्रैव मातर्भव ॥ एक एवात्मजः सद्गुणः पुण्यतो लब्ध ऊर्ध्वं वयस्यप्सु मग्नस्तव ॥ ८४ ॥

॥ ८० ॥ तन्मयी देवीरूपास्ति ॥८१॥ यस्याः नर्मदासंबंधिनः अनु अनंतरं सिद्धिप्रदाःस्तुता सती सुतं दास्यति न किम् । अपि तु दास्यत्येव ॥८२॥
॥८३॥ हे नर्मदे बुधैस्त्वं सुखदा उक्तासि । हे मातः संप्रति त्वं मम शर्म'शर्म शातसुखानि च'इति शर्मशब्दस्य सुखवाचित्वम् ।एक एव पुत्रो वृद्धावस्थायां

निशम्य हर्षाढ्यः सन् सचैलं स्नात्वा बिल्वमूले द्विजैः सह पुण्याहवाचनादिमंगलं चक्र इति सपादद्वयोरन्वयः ॥ ७ ॥ सर्वयुक्तः बिल्वमूलदेशं गत्वा ॥८॥ ॥ ९ ॥ सापत्यां पुत्रसहिताम् । यानतः शिबिकादिना ॥ १० ॥११॥ अस्य शिशोर्जातकर्मरूपं मंगलमिति पूर्वेणान्वयः । क्रमात्तत इति परेण योज्यम् ॥



सांगं शिवार्चनं कृत्वा शिष्यैराहूय याज्ञिकान् ॥ सुवासिनीश्च सर्वाढ्यः स्वयं गत्वा स्थलं हि तत् ॥८॥ नार्मदेयानंदनाथः सचैलं नर्मदाजले ॥ स्नात्वाथ मंगलं चक्रे बिल्वमूले द्विजैः सह ॥ ९ ॥ जातकर्म विधायास्य शिशोरथ ससूतिकाम् ॥ सापत्यां यानतो निन्ये वस्त्रैराच्छाद्य वाहकैः ॥ १० ॥ द्वादशेऽह्नि चकाराथ नाम बालस्य तुष्टधीः ॥ बिल्वमंगलमित्येव बिल्वमूले यतः कृतम् ॥ ॥ ११ ॥ मंगलं जातकर्मास्य ततः स ववृधे शिशुः॥ कृतोपनीतिः पित्रासौ पंचमेऽब्दे क्रमात्ततः ॥१२॥ विद्याः प्रापाखिलाः शीघ्रं पितुरेवातिबुद्धिमान् ॥ कृतोद्वाहाय पुत्राय नार्मदेयोऽखिलान्ददौ ॥ १३ ॥ मंत्रान्दीक्षाविधानेन सिद्धिं प्राप स्वयं ततः ॥ पुरश्चर्याविधानेन जप्त्वा मंत्रान्सुनिष्ठया॥१४॥ श्रीबिल्वमंगलानंदः सिद्धमंत्रो बभूव च ॥ मंत्रसामर्थ्यतः प्राप्य कवित्वे शक्तिमद्भुताम्॥१५॥ सच्छब्दार्थानि काव्यानि कविमान्यानि चाकरोत् ॥ एकदा स ययौ यात्रां कर्तुं वाराणसीं पुरीम् ॥ १६ ॥ स्वर्णद्यां मुदितः स्नात्वा नत्वा विश्वेश्वरादिकान् ॥ दत्त्वा दानान्यनेकानि व्यासकाशीं च जाह्नवीम् ॥ १७ ॥ समुत्तीर्य ययौ तत्र प्रणमन्व्याससमीश्वरम् ॥ चकारकुक्षये मेऽस्तु नमो व्यासाय धीमते ॥ १८ ॥ इत्थमाह तदा व्यासो वृद्धब्राह्मणवेषवान् ॥ बिल्वमंगलमित्याह कोऽसि त्वं तेद्भुतं मया ॥ १९ ॥

॥ १२ ॥ १३ ॥ एकपादः पूर्वान्वयी । ततः स्वयं नार्मदेयः सिद्धिं प्राप्तो बभूव । उत्तरार्द्धमुत्तरान्वयि ॥ १४ ॥ उत्तरार्द्धमुत्तरान्वितम् ॥ १५ ॥ ॥ १६ ॥ स्वर्णद्यां भागीरथ्यां जाह्नवीं समुत्तीर्य व्यासकाशीं ययावित्यन्वयः ॥ १७ ॥ चकाराः कुक्षौ जठरे यस्य तस्मै ॥ १८ ॥ इत्थमाहेति पूर्व

बद्धम् । तेऽद्भुतं मयेत्युत्तरेणान्वयः ॥ १९ ॥ यतो हेतोः ॥ २० ॥ पूर्वार्द्धं पूर्वगतमुत्तरार्द्धमूर्ध्वगतम् ॥ २१ ॥ २२ ॥ मनुष्यो भूत्वा व्यासादधिकज्ञा नवानसि किम् । किंतु अल्पज्ञ एवासीत्यर्थः ॥ २३ ॥ २४ ॥ यतो भ्रांतिः पुरुषस्वभावोऽस्ति । तया चकाराणां बाहुल्यं चकार ॥ २५ ॥ चकार बाहुल्यं दर्शयति । द्रोणं च भीष्मं च जयद्रथं चेत्यादिरूपां चकाराधिकतां गीताशास्त्रेपि यश्चकारेति पूर्वेण योज्यम् । नवीनकवयोप्येवं चकाराधिकतां न

धाष्टर्यं दृष्टं यतः साक्षाद्व्यासो नारायणांशजः ॥ विभागकर्ता वेदानां यः पुराणानि चाकरोत् ॥२०॥ भारतं पंचमं वेदं वर्णाश्रमसुधर्म वत् ॥ उपकाराय जीवानामज्ञानभ्रांतचेतसाम् ॥२१॥ जीवात्मैक्यप्रकाशानि ब्रह्मसूत्राणि चाह यः॥ चकारकुक्षिमित्थं तं त्वं ब्रूषे केन हेतुना॥२२॥ततः सुज्ञोऽसि किं भूत्वा मानवोऽथ स चाब्रवीत् ॥ विप्ररूपधरं व्यासमज्ञात्वा बिल्वमंगलः॥२३॥बिल्वमंगल उवाच॥ व्यासस्तु नारायण एव सत्यो योऽस्मद्गुरूणां च गुरुस्तथापि ॥ कुर्वन्पुराणान्यथ भारतं च पद्यानि चक्रे बहुवृत्तभेदैः ॥ २४ ॥ तस्य प्रबंधातिशयेन जाता भ्रांतिर्यतः पूरुषधर्मरूपा ॥ तयाऽसमर्थः खलु पादपूर्तिं कर्तुं चकाराधिकतां चकार ॥ २५ ॥ द्रोणं च भीष्मं च जयद्रथं चेत्यादिं हि गीताभिधशास्त्रकेऽपि ॥ नूत्नाः प्रबध्नंति च नैव हीत्थं स्वकाव्यकेऽतः स मयापि चोक्तः ॥ २६ ॥ चकारकु क्षिर्लघुनापि मेद्य शिष्यस्य चागः क्षमतां गुरुर्वै॥पितेव पुत्रस्य हि संति संतः क्षमापराश्चेति किल श्रुतं मे॥२७॥श्रीदेशिकेंद्र उवाच॥ बिल्वमंगलवाण्येत्थं ज्ञात्वैनं संप्रदायिनम् ॥ प्रियपुत्रं पितेवाह व्यासो विप्रतनू रुषा ॥ २८ ॥ व्यास उवाच ॥ कालिदासादयः पूर्वं बभूवुः कवयोऽमिताः ॥ केनापीत्थं न तेपूक्तं व्यासकाव्येपि दूषणम्॥२९॥त्वयैव कथितं गर्वस्तेभ्यस्ते दृश्यतेऽधिकः ॥ चकाररहितं पद्यं द्वात्रिंशद्वर्णतोऽधुना ॥३०॥ त्वं कुरुष्व मया वृत्तं यावत्ते कथ्यतेऽखिलम् ॥ एकस्मिन्पद्य एवादः समाप्य तु ततोऽधिकाः॥३१॥

कुर्वंति अतो हेतोः स व्यासो लघुनापि मया चकारकुक्षिरित्युक्त इत्यन्वयः ॥ २६ ॥ किंच गुरुर्भगवान्व्यासः स्वशिष्यस्य ममापराधं क्षमतु । यथा पिता पुत्रस्यापराधक्षमां करोति । हि यस्मात्साधवः क्षमापराः संतीति मया श्रुतमस्ति ॥२७॥ संप्रदायिनम् आत्मसंप्रदायिनम् । विप्रतनुः ब्राह्मणरूपः ॥२८॥ अमिताः बहवः ॥ २९ ॥ दूषणं कथितं उत्तरार्द्धमुत्तरबद्धम् ॥ ३० ॥ यावद्वृत्तं वर्तमानम् । एकस्मिन्नेव पद्ये अदः इदं वृत्तं समाप्तं भवतु ॥ ततः

पृथक्तः अधिकवर्णाश्च नायांतु न भवंत्विति संबंधः ॥३१॥ वर्तमानमाह राज्ञ इति । राज्ञः पुत्रस्य पुत्रो यदा जातस्तदा राजद्वारे मेघोदकेन । भित्तिरपतत् । तस्याः अधः श्वा मृत इति ॥ ३२ ॥ अद इदं वक्ष्यमाणम् ॥ ३३ ॥ गलद्वारि पतदुदके सति द्वारे पतद्भित्तौ सत्यां शुनि मृते सतीति सत्यंतानि पदानि ॥ ३४ ॥ द्वात्रिंशदक्षरसंख्या मह्यं या त्वयोक्ता तत्र एकोनैः कप्रत्ययांतैरुक्तं वर्तमानस्य पूरणं मया कृतं तत्त्वया सम्यगवलोक्यतामित्यन्वयः ॥ ३५ ॥

वर्णोश्चायांतु नैवाथ राज्ञः पुत्रस्य चाभवत् ॥ पुत्रः कूष्मांडखंडाख्यो राजद्वारे तदापतत् ॥ ३२ ॥ भित्तिर्मेघगलद्वा भिस्तदधः शुनको मृतः ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वैवेति कथां चक्रेऽदः पद्यं बिल्वमंगलः ॥ ३३ ॥ बिल्वमंगल उवाच ॥ राजद्वारि गलद्वारि पतद्भित्तौ मृते शुनि ॥ राजपुत्रस्य पुत्रोभून्नाम्ना कूष्मांडखंडकः ॥ ३४ ॥ कृत्वेत्थं पद्यमाहाथो श्रीव्या सं बिल्वमंगलः ॥ द्वात्रिंशद्वर्णसंख्या मे त्वयोक्ता तत्र चाक्षरैः ॥ ३५ ॥ एकोनैरुक्तवृत्तस्य पूर्तिः सम्यग्विलोक्यताम् ॥ चकारोऽत्र न चैकोऽपि महत्ता श्रीगुरोरियम् ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ दृष्ट्वेत्थं कविताशक्तिं बिल्वमंगलशर्मणः ॥ व्यासः प्राह मनस्येवं सामर्थ्यं गुरुभक्तिजम् ॥ ३७ ॥ गुरुभक्तेः परं नैव साधनं वै कलौ युगे ॥ गुरुभक्त्यैव जेष्यंति कलौ देवांश्च मानवाः ॥ ३८ ॥ यथा मामिति चोक्त्वांतो व्यासस्तं पुनरब्रवीत् ॥ व्यासोऽहमेव चास्मीति चकारकुक्षये नमः ॥ ३९ ॥ मह्यमुक्तं त्वयाऽतोऽत्राविर्भूतो ब्राह्मणाकृतिः ॥ अथ ते कविताशक्तिं त्वां चास्मत्संप्रदायिनम् ॥४०॥ ज्ञात्वास्मि तुष्टो नैवान्यो मामित्थं वक्तुमीश्वरः ॥ गुरुभक्त्या प्तकविताचातुर्यादखिलेष्वपि ॥४१॥ श्रेष्ठस्त्वं कविवर्येषु त्वां दृष्ट्वा कवयोऽखिलाः ॥भयाढ्याः संभविष्यंति निर्बला इव राक्षसम् ॥४२॥

एकचकारोपि अत्र नास्ति एतच्छ्रीगुरोर्माहात्म्यमित्यर्थः ॥ ३६ ॥ यथा मामयं जितवांस्तथा गुरुभक्त्या कलौ मनुष्याः देवान् जेष्यंति इति संबंधः ॥ ३७ ॥ ३८ ॥ अंतः मनसि इत्युक्त्वा इतिपदमुभयान्वयि । इति अब्रवीत् । चकारकुक्षये नम इति मह्यं त्वयोक्तमित्युत्तरार्द्धे ॥ ३९ ॥ अथायुक्त रान्वयि ॥ ४० ॥ गुरुभक्त्या प्राप्तकविताचातुर्येण सर्वेषु कविश्रेष्ठेषु त्वं भविष्यसीत्यन्वयः ॥ ४१ ॥ राक्षसं दृष्ट्वा भयाढ्या भवंति तथा ॥ ४२ ॥

॥ ४३ ॥ मम गुरूणां पूर्वो देशिकः गुरुस्त्वं ममेदं चकारकुक्षित्वभाषगत्वं दुर्जनत्वं क्षमस्व । यत् यदा पुत्रो मलविसर्गं स्वोत्संगे करोति तदा पितुः कोपो न जायते । तथा मद्भाषणेन कोपं मा कुर्वित्यर्थः । उपजातिवृत्तम् इंद्रवंशावंशस्थमिश्रणात् ॥ ४४ ॥ ४५ ॥ आ सर्वतो भयं येषां ते आभयाः ॥ ४६ ॥ तानि काव्यानि कौ पृथिव्याम् ॥ ४७ ॥ शिवोपासकोपि यो बिल्वमंगलः कृष्णलीलारसयुक्तं करुणामृतसंज्ञकं ग्रंथं चकार ॥ ४८ ॥ त्रिपंचा

कविराक्षस इत्थं ते नाम ख्यातं भविष्यति ॥ श्रीदेशिकेंद्र उवाच ॥ व्यासं दृष्ट्वा नमश्चाथ प्राहेत्थं बिल्वमंगलः ॥ ४३ ॥ बिल्वमंगल उवाच ॥ क्षमस्व दौर्जन्यमिदं ममाखिलं त्वं मद्गुरूणामपि पूर्वदेशिकः ॥ यदात्मजोंके खलु विड्विसर्जनं कुर्यान्न रोषो ऽण्वपि जायते पितुः ॥ ४४ ॥ श्रीदेशिकेंद्र उवाच ॥ स्तुत इत्यादि बहुशो बिल्वमंगलशर्मणा ॥ तत्रैवांतर्दधे व्यासः पश्यतस्तस्य धीमतः ॥ ४५ ॥ प्रसिद्धोऽथ बभूवासौ कवी राक्षसनामतः ॥ नन्नास्तं कवयः सर्वे महांतोप्यासुराभयाः ॥ ४६ ॥ चक्रे ऽनेकानि काव्यानि प्रसिद्धान्येव तानि कौ ॥ शिष्यानध्यापयामास तानि शास्त्राणि चात्मवान् ॥ ४७ ॥ शैवोपि चक्रे यो विष्णोः शिवाभिन्नस्य वर्णनम् ॥ करुणामृतसंज्ञं श्रीकृष्णलीलारसान्वितम् ॥४८॥ यो व्यासमुक्त्वापि चकारकुक्षिं चातोष्ययच्चोदितपद्यनोऽसुम् ॥ गुरुं हि बिल्वोत्तरमंगलं त्रिपंचाशदाढ्यं शतकं नताः स्मः ॥ ४९ ॥ अथैकदा ययौ शिष्यैर्बहुभिर्बिल्वमंगलः ॥ विंध्यादिवासिनीं देवीं द्रष्टुं भागीरथीतटे ॥५०॥ मासमेकं स्थितस्तस्याः समीपे भक्तितत्परः ॥ नित्यं रात्रौ पृथग्द्रव्यैः पूजयंस्तां पृथग्विधम् ॥ ५१ ॥ सहस्रनामतोऽथासावुत्पलैरर्चितुं शिवाम् ॥ शिष्यानाज्ञापयत्तेपि सर्वे प्रातर्वनाद्वनम् ॥ ५२ ॥ विचिन्वंतो ययुस्तानि सरांस्यापुर्नचोत्पलम् ॥ एकमप्यथ ते क्षुत्तः खिन्नाश्चातपपीडिताः ॥ ५३ ॥

शदधिकशतसंख्यं बिल्वमंगलानन्दं प्रणमति य इति । उदितपद्यतः उक्तश्लोकेन । बिल्वोत्तरमंगलं बिल्वमंगलं त्रिंशत्पंचाशद्युक्तं शतकं त्रिपंचाशदधिकशतसंख्यं नताः स्मः ॥ ४९ ॥ ५० ॥ ५१ ॥ तेपि शिष्याः प्रातर्वनाद्वनांतरं प्रति ययुरित्यन्वयः ॥ ५२ ॥ तानि सरांसि विचिन्वंतोप्येकं कमलं न

आपुः । अथायुत्तरान्वयि । ते शिष्याः क्षुत्तः क्षुधया ॥ ५३ ॥ ५४ ॥ आतपेन उष्णेन अतिपीडिताः ॥ ५५ ॥ निःस्वो दरिद्रः पुराकृतादैवयोगेन श्वशुर गृहे स्थापिता अंगना पत्नी येन सः ॥ ५६ ॥ तं बिल्वमंगलं । सार्द्धश्लोकेन विचारं करोति । विनेति चेदित्युत्तरान्वयि ॥ ५७ ॥ ५८ ॥ असुनाशे मरणसमये अमृतमिव । तत्सरः दृष्ट्वा मुमुदे । उक्तसंख्यया सहस्रसंख्यापरिमितानीत्यर्थः ॥ ५९ ॥ अल्पानि स्वरूपतः अधिकानि संख्यया। उत्तरार्द्धं परान्वयि

यथुर्निवृत्य मध्याह्ने स्वर्णदीमत्र चाप्लुतिम् ॥ कृत्वा भिक्षाशिनस्तस्थुर्वैचयित्वा गुरुं पुरे ॥ ५४ ॥ तेष्वेकः श्रीगुरोराज्ञां मान्य न्क्षुत्प्रपीडितः ॥ आतपाक्रांतदेहोपि बभ्रामोत्पललब्धये ॥ ५५ ॥ उत्पन्नोऽसौ कुले राज्ञो निःस्वोथापि पुराकृतात् ॥ पित्रा बाल्ये कृतोद्वाहः श्वशुरस्थापितांगनः ॥५६॥ गुरुसेवारतः सोऽभूज्ज्ञात्वा तं सिद्धवैभवम् ॥ विनोत्पलैर्नैव यास्ये श्रीगुरुं चेदमूनि मे॥५७॥ नो लभंते तदा देहं त्यक्ष्याम्येवेति निश्चयात् ॥ अमन्ददर्श सहसाथोत्पलाच्छादितं सरः॥५८॥ तद्दृष्ट्वैव मुमोदासुनाशे लब्ध्वा सुधा मिव ॥ लघून्येव स चिच्छेदाथोत्पलान्युक्तसंख्यया ॥ ५९ ॥ अल्पाधिकान्यपि ततः स बबंध बृहत्पटे ॥ अलब्धाशनपानोऽसौ क्षुधितोथ पराह्णके ॥ ६० ॥ शनैर्ययौ वहन्मूर्ध्ना तानीत्यं श्रमवान् गुरुम् ॥ इतः पूर्वं तु गुरुणा ज्ञातं शिष्यास्तु ये गताः ॥ ६१ ॥ उत्पलार्थं निवृत्तास्ते चालब्ध्वा कमलानि हि ॥ मां प्राप्तुं सभयाः संति पुरेऽस्मिन्निति तानथ ॥ ६२ ॥ आहूय केनचिदसौ निकट स्थितेन शिष्येण चातिलघुनेत्यखिलानुवाच ॥ मा भीतिरस्तु मम कार्यमिदं भवद्भिर्यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥६३॥ भूमिं प्रपश्यत इमानतिलज्जयाढ्यानग्रस्थितानिति गुरौ प्रवदत्यरुष्टे ॥ सोऽप्यागतः स्वशिरसोत्पलभारवाही दृष्ट्वा गुरुः सकरुण मुत्थित आलिलिंग ॥ ६४ ॥

॥ ६० ॥ तानि कमलानि गुरुं बिल्वमंगलानंदम् । इतः शिष्यागमनात्पूर्वं गुरुणा इतिपर्यंतं ज्ञातम् ॥ ६१ ॥ प्राप्तुं तान् अथेत्युत्तरान्वयि ॥ ६२ ॥ असौ बिल्वमंगलानंदः लघुना अल्पवयस्केन इदं कमलप्राप्तिरूपं वृत्तं च वसंततिलकावृत्तम् ॥६३॥ अरुष्टे अक्रुद्धे गुरौ इमान् शिष्यान् । प्रवदति सति यः

कमलार्थं गतः स आगतः गुरुः सकमलमेनमालिंगितवान् ॥ ६४ ॥ तत्र गुरुसमीपे सर्वशिष्येषु सत्सु स एव रराज ॥६५॥६६॥ तस्माद्विंध्याचलस्थानात स्वपुरं नर्मदातीरगतं नगरम् । इहैव पुरे देवीसपीपनगरे त्यक्त्वा अहं राजा इति बुद्धिर्येन आत्ततुष्टः दैवलब्धेन संतोषवान् ॥ ६७ ॥ चतुःपंचाशदधिकशत संख्यमुत्पलराजानंदं गुरुं प्रणमति । य इति । अखिलवर्जितं सर्वैशिष्यैस्त्यक्तं कमलानयनरूपं कार्यं चकार तं । अधिकचतुःपंचाशद्भिः सह शतसंख्यं गुरुं

तत्राखिलेष्वपि रराज स चोत्पलैः स्वैः पृष्ठोद्धृतैरथ गुरुश्च सुतुष्टचेताः ॥ आदाय तानि कमलानि वदन्सहस्रनामानि विश्वजननीं विधिना त्वियाज ॥६५॥ श्रीबिल्वमंगलगुरुः प्रददावमुष्मै पूर्णां समस्तमनुभिर्विधिनाथ दीक्षाम्॥ आख्या कृतास्य गुरुणोत्पलराज इत्थं यस्माद्रराज निखिलेष्वपि चोत्पलैर्यः॥६६॥तस्माद्ययावथ गुरुः स्वपुरं सशिष्यस्तस्थाविहैव पुर उत्पलराज एकः ॥ संत्यक्तरा जकुलधीः सह भार्ययातस्तुष्टः सुसिद्धमनुरर्चितवान्सदांबाम्॥६७॥यः कार्यमुक्तं गुरुणातिकष्टादेकश्चकाराखिलवर्जितं च॥ तं श्रीगुरुं चोत्पलराजसंज्ञमुद्रेदबाणाढचशतं नताः स्मः॥६८॥श्रीदेशिकेंद्र उवाच ॥ अथासीद्ब्राह्मणः कश्चित्तस्मिन्देव्याः पुरे कुली ॥ एकाकी धर्मपत्न्याढ्यः कुलाचाररतः सुधीः ॥ ६९ ॥ अनपत्यस्य तस्याभूत्पत्नी दैवेन गर्भिणी ॥ काले पुत्रं च सुषुवे सुमुहूर्ते सुलक्षणम्॥ ॥ ७० ॥ दशाहमध्य एवाथ मृता दैवेन सूतिका ॥ ब्राह्मणः सोऽतिदुःखाढ्यश्चाक्षमः शिशुपोषणे ॥ ७१ ॥ धृत्वा कराभ्यां तं बालं रात्रावंबालयं गतः ॥ संस्थाप्य पुरतो बालं तामित्याह कृतांजलिः ॥ ७२ ॥ ब्राह्मण उवाच ॥ मुख्या त्वं खलु शक्तिरेतदखिलं स्तंबादिविध्यंतकं नानाशक्तिभिरंब पासि हरिकेशोऽपि क्षमास्त्वहते ॥ नो स्युः कर्तुमिहेपदेव हि कुतोऽन्येऽतस्त्वमेवेश्वरी गर्भस्था नपि पासि किं निजपुरःस्थं मच्छिशुं नावसि ॥ ७३ ॥

नताः स्मः ॥ ६८ ॥ कुली कुलवान् ॥ ६९ ॥ ७० ॥ ब्राह्मण इत्युत्तरान्वयि ॥ ७१ ॥ ७२ ॥ हेंब त्वं मुख्या शक्तिः मूलप्रकृतिः खलु । एतद्ब्रह्मादि स्तंबपर्यंतं जगत् स्वांशभूताभिः नानाशक्तिभी रक्षसि। ननु रक्षणादिषु विष्ण्वादयः प्रसिद्धा इति चेत् । हरिकेशः विष्णुब्रह्मेशा अपि त्वां विना किंचिदपि कर्तुं न समर्थाः । शक्तिसामर्थ्यपदयोरेकार्थत्वादित्यर्थः । अन्ये कुतः समर्थाः अतो हेतोस्त्वमेवेश्वरी । गर्भस्थानपि रक्षसि । स्वाग्रस्थं मत्पुत्रं न रक्षसि

किम् । अपि तु रक्षस्येव । शार्दूलविक्रीडित वृ० ॥ ७३ ॥ इत्थमित्याद्युत्तरान्वयि ॥ ७४ ॥ ७५ ॥ तदायग्रगामि ॥७६॥ सुतः सकाशात् । तदेत्युत्तरान्वितम् ॥७७॥७८॥ तत्परिचारकाः सेवाधारिणः ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ द्विज इत्याद्युत्तरान्वयि ॥८३॥८५॥ क्षुधित इति पूर्वान्वयि ।

श्रीदेशिकेंद्र उवाच ॥ इत्थं स्तुत्वा परां शक्तिमग्रे तस्याः शिशुं द्विजः ॥ निधाय चिंतारहितस्तस्य बालस्य पोषणे ॥७४॥ ययौ गेहं ततश्चक्रे स्वपत्न्याश्चौर्ध्वदेहिकम् ॥ त्यक्त्वा प्रापंचिकं संगं वभ्रामोर्व्यां स चात्मवान् ॥ ७५ ॥ अथ बालो रुरोदासौ देव्यग्रे क्षुत्प्रपीडितः ॥ नासीद्देव्यालये कोऽपि तदा देवी दयान्विता ॥ ७६ ॥ तमुद्धृत्य सुतः स्वांके चापाययदसुं पयः॥ स्वीयं स्तन्यं तदा बालो मुमूर्षुरिव चामृतम् ॥७७॥ पीत्वा तुष्टोऽभवत्त्यक्त्वा रोदनं चरणौ करौ ॥ आंदोलयंश्च चिक्रीडे देव्याऽधः स्थापितो भुवि ॥ ७८ ॥ अथ प्रातर्ययुर्देव्यालये तत्परिचारकाः ॥ ददृशुश्चाग्रतोंऽबायाः शिशुं तमतिकोमलम् ॥ ७९ ॥ मिथोऽथाहुरयं बालः केनात्रैव शिवाग्रतः ॥ त्यक्तः क्वास्य गता माता पिता वेदं महाद्भुतम् ॥ ८० ॥ त्यक्तः कयापि दुष्कर्मकारिण्या चात्र निर्जने ॥ स्वजायाः सपत्न्याः किं द्वेषाद्वाऽप्रजया शिशुः ॥ ८१ ॥ इत्यादि बहुशस्तर्कांस्तेषु कुर्वत्सु चाययौ ॥ श्रीमानुत्पलराजाख्यः कर्तुं देव्याः प्रपूजनम् ॥ ८२ ॥ स दृष्ट्वैव शिशुं ज्ञात्वा तानाहेति त्रिकालवित् ॥ उत्पलराज उवाच ॥ द्विजः कश्चिन्मृतस्त्रीकः शिशुं पोषितुमक्षमः ॥ ८३ ॥ आदिशक्त्यै समर्प्यामुं निश्चितो निर्ममो ययौ ॥ शक्त्यैव कुमारोऽयं तथायं पायितो निशि ॥ ८४ ॥ श्रुत्वेतश्चेति चाकर्ण्य निःशंकाः परिचारकाः ॥ ततश्चोत्पलराजाख्यः संपूज्य परदेवताम् ॥८५॥ संस्तुत्य बहुशः स्तोत्रैस्तयांतः प्रेरितः शिशुम् ॥ गृहीत्वा तां नमस्कृत्य गेहं गत्वा मुदान्वितः ॥ ८६ ॥ अनपत्यः स्वपत्न्यै तं ददौ बालकमद्भुतम् ॥ सशंका सा शिशुं त्रातुमप्यास्ता वदंबिका ॥ ८७ ॥ तस्याः पूर्णौ स्तनौ चक्रे पयसाखिलहृद्गता ॥ पुपोषाथ सुतं साध्वी ततश्चोत्पलराट् स्वयम् ॥ ८८ ॥

तत इत्यादि द्वयोरन्वयः ॥८५॥८६॥ अदुग्धा सा पत्नी शिशुं त्रातुं यावत्सशंका तावदंबिका इत्याद्युत्तरान्वयि ॥८७॥ तत इत्युत्तरान्वयि ॥ ८८ ॥

एतन्नामकरणे हेतुमाह । यद्यस्मात्स्वयमित्युत्तरान्वयि ॥ ८९ ॥ सर्वज्ञः श्रेष्ठः कृत इत्यर्थः ॥ ९० ॥ ९१ ॥ इत्थं मुक्तं पंचपंचाशदधिकशतसंख्यं शक्तिकुमारानंदं प्रणमति अमातृक इति ॥ ९२ ॥ सर्गोक्तबिल्वमंगलादिगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह । श्रीति ॥ ९३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामनर्थस्फूर्त्यभिधायां षोडशः सर्गः ॥ १६ ॥ उत्सन्नदशको वक्ति शतपद्यैस्तु देशिकान् ॥ अरसीठाकुरानंदाद्यनुरुच्यार्थिजैः पृथक्

जातकर्मादिसंस्कारांश्चक्रेऽर्भस्य यथाविधि ॥ तस्य नामाकरोच्छक्तिकुमार इति यत्स्वयम् ॥ ८९ ॥ परशक्त्या पायितश्च स्वस्तन्येनैव योऽथ सः ॥ पंचमेऽब्दे चोपनीतो गुरुणाखिलवित्तमः ॥ ९० ॥ कृतश्चास्मै ददौ मंत्रान्कृतोद्वाहाय सद्गुरुः ॥ जप्त्वा तान्सिद्धमंत्रोऽभूत्काव्यकर्ता सुबुद्धिमान् ॥ ९१ ॥ अमातृको यश्च समर्पितोऽद्धा चित्रादिशक्त्यै स्वपयः सुदुग्धः ॥ तथा कृतः शक्तिकुमारसंज्ञं तं पंचपंचाशदितं नताः स्मः ॥ ९२ ॥ श्रीबिल्वमंगलकवेस्तु गुरुत्रयस्य भक्त्या शृणोति च पठेद्य इदं चरित्रम् ॥ कर्तुं कवित्वमतिकौशलमार्यतां च देव्याः प्रसादमपि संलभते स मर्त्यः ॥ ९३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे बिल्वमंगलादिगुरुत्रयकथावर्णनं नाम षोडशः सर्गः ॥१६॥ श्रीदेशिकेंद्र उवाच ॥ कान्यकुब्जीयविप्रेषु सत्कुले मिश्रसंज्ञके ॥ आविरासीत्सिद्धवर्यः कश्चित्स्वेच्छाजनिः कविः ॥१॥ जन्मतश्चात्मसंतुष्टः सदा विक्षेपवर्जितः ॥ ददौ माता यदा स्तन्यं तदैवासौ मुदापिबत् ॥२॥ स्तन्येऽदत्तेपि मात्रैवमेव रोदिति कर्हिचित् ॥ इत्थं शिशुः पंचवर्षो जातोऽथास्य पिताकरोत् ॥ ३ ॥ उपनीतिं ततः सोऽपि सावित्रीं प्राप्य तन्मनाः ॥ जजापैनां सदैकांते कल्पयित्वोपलं लघु ॥४॥ देवतां पूजयन्नाम्यैः कुसुमैरसैः फलैः ॥ नैवेद्यं चार्पयत्यंतर्ध्याननिष्ठः स्थिरांतरः ॥ ५ ॥

॥ १७ ॥ कान्यकुब्ज इति । कान्यकुब्जदेशस्थितविप्रेषु मिश्रसंज्ञककुले ॥ १ ॥ २ ॥ आदत्त इति च्छेदः ॥३॥ उपनीतिमिति पूर्वान्वितम् । सा गायत्र्येवैका मनसि यस्य सः पाषाणे गायत्रीं कल्पयित्वा सदैकांते सावित्रीं जपवान् व्याहृतिराहित्यसाहित्याभ्यां गायत्रीसावित्र्योर्भेदः ॥ ४ ॥ अरसैःकुत्सि

तरसयुक्तैरर्कधत्तूरादिफलैः ॥ ५ ॥ ६ ॥ अन्नं संतोषयुक्तः पूर्वान्वयि । चेद्भोजनार्थमनाहूतस्तर्हि यथास्थितः पूजानंदे एव स्थित आसीत् ॥ ७ ॥ यतः आत्मज्ञानी ॥ ८ ॥ तामित्युत्तरान्वयि ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ फलैरिति पूर्वार्द्धं पूर्वान्वितम् ॥ १३ ॥ १४ ॥ नौ आवाम् ॥ १५ ॥ १६ ॥

यदा मात्रा स चाहूतस्तदोत्थायाशनाय यत् ॥ दत्तं तथा तदश्नाति स्वाद्वस्वाद्वमितं मितम् ॥ ६ ॥ अन्नं संतोषयुक्तश्चे दनाहूतो यथास्थितः ॥ एवं द्वादशवर्षोऽद्धा पित्रैवाध्यापितोऽन्वहम् ॥ ७ ॥ नैवाधीते तु कुरुते मात्रा संबोधितो मुहुः ॥ मितमेव वदत्यन्यैर्नैवेषदपि चात्मवान् ॥ ८ ॥ न गायत्र्या परं मंत्रं देवतामपि वेत्त्यसौ ॥ तामेवावाह्य पाषाणे लब्धद्रव्यैः प्रपूज यन् ॥९॥ जपत्यपि सदैवैनामित्थमासीदनन्यधीः ॥ अथैकदा पिता प्राह स्वपत्नीमतिरुष्टधीः ॥१०॥ नास्मै देहीषदप्यन्नमद्यप्रभृति चान्वहम् ॥ चेत्त्वयाज्ञां ममाश्रुत्वाण्वप्यन्नं सूनवेऽर्पितम् ॥ ११ ॥ तेन साकं बहिष्कुर्वे त्वामहं गेहतः खलु ॥ भुक्त्वा यथेच्छं पा षाणं पूजयत्ययमल्पधीः ॥ १२ ॥ फलैरन्नैः कुसुमैर्यानीक्षंतेऽपि नो जनाः ॥ पूजाविधिं न जानाति मुधा भक्तिं करोत्यसौ ॥१३॥ ॥ १३ ॥ पाषाणे किं भवेत्तुष्टा देवता प्रतिमां विना ॥ नैवाधीते करोत्यल्पामपि नित्योदितां मया ॥ १४ ॥ वृथापुष्टाय दत्त्वास्मै भक्ष्यं किं स्यात्फलं वद ॥ वृथापुष्टो योधुना नौ पोषिता किं स वृद्धयोः ॥ १५ ॥ इत्थमाज्ञापिता भर्त्रा सती सात्यंतदुःखिता ॥ उपोषितं सुतं त्यक्त्वा नासीद्भोक्तुं स्वयं क्षमा॥१६॥पितुर्मतमिति ज्ञात्वाऽरसान्यपि फलान्यसौ॥भक्त्या समर्प्य देव्यै च तान्येवाभ क्षयत्सुधीः ॥ १७ ॥ मात्रेऽप्यथाह मातस्त्वं किं मदर्थमुपोषिता॥ मदन्नदास्ति गायत्री देवता विश्वपोषिणी ॥ १८ ॥ इत्थं निश्चय वान्नित्यं देव्यर्पितफलानि सः ॥ अर्कधत्तूरमुख्यानि सर्वाण्युष्णतमान्यपि ॥ १९ ॥ भुक्त्वा शांतः सदैवासौ पुष्टदेहः सुकांतिमान् ॥ आसीदित्थममुं ज्ञात्वा जनाः प्राहुर्मिथोऽखिलाः ॥ २० ॥ नृभिर्भोक्तुमशक्यानि नीरसान्यपि नित्यशः ॥ भुक्त्वान्याशनहीनोऽसौ सदा विक्षेपवर्जितः ॥ २१ ॥ पुष्टदेहोऽतितेजस्वी देवस्तस्मान्न नास्त्ययम् ॥ अरसानि फलान्येव भुंक्तेऽयमरसीठाकुरः ॥ २२ ॥

॥ १७ ॥ यद्यस्मात् ॥ १८ ॥ इत्थमिति परान्वयि ॥ १९ ॥ २० ॥ २१ ॥ ना मनुष्यो नायमस्ति । अरसान्यश्नातीति अरसी स चासौ ठाकुरो देव

तैः कान्यकुब्जविप्रैः प्रोक्त इति योज्यम् ॥ २२ ॥ ठाकुरशब्दस्य देववाचित्वे हेतुमाह । यत इति ॥ २३ ॥ मयेत्यादि उत्तरबद्धम् । इति देवरूपिणम् ॥
॥२४॥ भो इत्यग्रगामि ॥२५॥ यद्वचनम् । यद्यस्माच्छास्ता शिक्षयितास्मि ॥ २६ ॥ २७ ॥ २८ ॥ २९॥ शक्तिकुमारानंदोपीति परेण युक्तम् ॥

तैः प्रोक्तोस्मिन्यतो देशे देवमाहुर्हि ठाकुरम् ॥ अरसीठाकुरः सोऽथ प्रसिद्धः कान्यकुब्जके ॥ २३ ॥ देवबुद्ध्यैवार्चयंस्तं ते जनाश्चोपचारतः ॥ लज्जितस्तत्पितेत्याह मया त्वामित्यजानता ॥२४॥ पुत्रबुद्ध्या यदुक्तं न स्मर्तुमप्यधुनार्हसि ॥ अरसीठाकुरश्चाह पितरं भो पितस्त्वया ॥२५॥ यदुक्तं तेन नैवेषद्दोषश्शास्तासि मे यतः ॥ रोषयुक्तः पितुर्वाक्ये यः पुत्रः स मलः स्मृतः ॥२६॥ इत्थं संतोष्य पितरं मातरं च स योगिराट् ॥ आसीन्नित्यं यथापूर्वं कुर्वन्देवीजपार्चने ॥२७॥ कीर्तिं श्रुत्वा ययौ द्रष्टुं तत्र शक्तिकुमारकः ॥ अरसीठाकुरं चैनं तीर्थयात्रामिषाद्भ्रमन् ॥ २८ ॥ तं दृष्ट्वा सहसोत्थायारसीठाकुर आत्मवान् ॥ ननाम दंडवद्भूमौ ज्ञात्वा ब्रह्मविदां वरम् ॥ ॥ २९ ॥ सुज्ञोऽपि संप्रदायार्थमरसीठाकुरो गुरुम् ॥ प्रार्थयामास दीक्षार्थं सोऽपि ज्ञात्वाधिकारिणम् ॥ ३० ॥ पूर्णां दीक्षां ददौ तस्मै प्रसिद्धं नाम चाकरोत् ॥ अरसीठाकुरानंदं श्रीमाँच्छक्तिकुमारकः ॥ ३१ ॥ निःस्पृहस्यापि चक्रेऽस्य विवाहं श्रीगुरुर्बलात् ॥ सपत्नीकं गृहे स्थाप्य तं सम्यग्देवतार्चकम् ॥ ३२ ॥ ययौ शक्तिकुमाराख्यः स्वस्थानं यत्र चांबिका ॥ अरसीठाकुरश्चासीत्पितरौ तोषयन्गृहे ॥ ३३ ॥ यः सिद्ध एवावतरत्सुवंशे जन्मप्रभृत्यैव सदात्मनिष्ठः ॥ तं चारसीठाकुरमुद्रसेषुशतात्तसंख्यं गुरुमानताःस्मः ॥ ॥ ३४ ॥ श्रीदेशिकेंद्र उवाच ॥ अरसीठाकुरानंदः सदैवात्मसुखे रतः ॥ निःस्पृहः सर्वकामेभ्यः स्वर्गमप्यर्पितं जनैः ॥ ३५ ॥

॥ ३० ॥ ३१ ॥ सपत्नीकमित्युत्तरान्वयि ॥ ३२ ॥ अंबिका विंध्याद्रिवासिनी ॥ ३३ ॥ षट्पंचाशदधिकशतसंख्यं अरसीठाकुरानंदं प्रणमति । य इति
॥ ३४ ॥ सार्धान्वयः ॥ ३५ ॥

उत्तररामचरितं पूर्वान्वयि । तद्रामचरित्रम् ॥ ६० ॥ कविकृतं प्राचीनश्लोकमाह । नाटकविषये भवभूतिः श्रेष्ठो वा वयं वा वयमेव वा श्रेष्ठा न भवभूतिः । उत्तररामायणचरित्रे तु भवभूतिर्विशिष्टोऽस्ति ॥ ६१ ॥ एवं काव्यकर्तृषु प्रशंसां तस्योपवर्ण्य प्रकृतमनुसरति—काव्यकर्तेति ॥ ६२ ॥ सप्तचत्वारिंशदधिकशतसंख्यं भवभूत्यानंदं प्रणमति—भवादिति ॥ ६३ ॥ ६४ ॥ यो लक्ष्मीवान् स लक्ष्मणः । " लक्ष्मीवाँल्लक्ष्मणः

उत्तरं रामचरितमथाहुस्ते मिथोऽखिलाः ॥ प्रशंसंतोऽखिलेभ्योऽपि काव्येभ्योऽधिकमेव तत् ॥ ६० ॥ कवय ऊचुः ॥ नाटके भव भूतिर्वा वयं वा वयमेव वा ॥ उत्तरे रामचरिते भवभूतिर्विशिष्यते ॥६१॥ काव्यकर्ता बभूवासौ प्रसिद्धो बहुकाव्यनः ॥ भवभूतिर्मिश्र संज्ञोऽखिलकाव्यकृतां वरः ॥ ६२ ॥ भवाद्बभूवास्य हि भूतिवृद्धिर्यः काव्यकर्ताऽखिलराजपूज्यः ॥ वयं गुरुं तं भवभूतिसंज्ञं सत्येषु चंद्रप्रमितं नताः स्मः ॥ ६३ ॥ श्रीदेशिकेंद्र उवाच ॥ भवभूतेः सुतोऽथासीच्छुभे काले सुलक्षणः ॥ ददौ दानान्यनेकानि तुष्टचित्तः स देशिकः ॥ ६४ ॥ जातकर्म विधायास्य द्वादशेऽह्नि तथाऽकरोत् ॥ नाम लक्ष्मण इत्यस्य यो लक्ष्मीशो हि गर्भतः ॥ ६५ ॥ व्रतबंधोत्तरं विद्यास्तस्मै चाध्याप्य स क्रमात् । विवाहाद्ध्र्वं ददौ मंत्रान्पूर्णदीक्षाविधानतः ॥६६॥ मंत्राणां जपतोऽस्याऽऽसुः सुलभाः सिद्धयोऽखिलाः ॥ बभूव लक्ष्मणानंदो मंत्रवेत्ताऽथ शास्त्रवित् ॥ ६७ ॥ प्रसिद्धो जगतीपृष्ठे सर्वसंपत्समृद्धिमान् ॥ गुरौ सिद्धिं गते चक्रे चाद्यं पूजाविधिं स्वयम् ॥६८॥ यः पूजितो गर्भत एव भूपैर्लक्ष्मीशबुद्ध्यैव गृहं सदैव ॥ तमष्टपंचाशदुदक्छताख्यं श्रीलक्ष्मणानंदगुरुं नताः स्मः ॥६९॥ लक्ष्मणानंदनाथस्यानपत्यस्यातिकालतः ॥ रघुदिनैर्देवतार्चाद्यैर्व्रतैश्चायासतः कृतैः ॥७०॥ स्वकृतैर्जपपाठाद्यैः पुत्रोऽभूच्छुभलक्षणः ॥ जातकर्माणि पुत्रस्य ददौ दानानि देशिकः ॥७१॥ देवीप्रसाद इत्यस्य नाम चक्रेऽतिशोभनम् ॥ अतिप्रेम चकारास्मिंल्लक्ष्मणानंद आत्मजे ॥७२॥ कुर्वन्पूजादिकर्माणि लालयत्यंकतः सदा ॥ द्विवर्षोऽथ शिशुःसोऽभूद्वाचेषद्विशदार्णया ॥७३॥

श्रीलः श्रीमान् इत्यमरः ॥ ६५ ॥ ६६ ॥ ६७ ॥ गुरौ भवभूत्यानंदे ॥ ६८ ॥ अष्टपंचाशदधिकशतसंख्यं लक्ष्मणानंदं प्रणमति—य इति ॥ ६९ ॥ सार्द्धान्वयः तृतीयांतैः साधनैः ॥ ७० ॥ ७१ ॥ ७२ ॥ अंकतः उत्संगे वाचेत्युत्तरान्वयि । विशदार्णया स्पष्टवर्णया ॥ ७३ ॥

कैडथं क्रीडासाधनम् । अथायुत्तरसंबंधि ॥७४॥ यद्याच्यते तन्न लब्धं चेदुग्रं रोदितीत्यन्वयः ॥७५॥ कदाचित् ग्रीष्मर्ताविति पगन्वयि ॥७६॥ अत्र प्रासादे शिशुरित्याद्युत्तरान्वयि ॥७७॥ कलंकेन मध्ये चिह्नितम् ॥७८॥ स्वर्गस्थ इत्यादि दास्य इत्यंतं लक्ष्मणानंदवाक्यम् ॥७९॥ तन्नृपगृहस्थमित्याद्युत्तरान्वयि

यद्यत्प्रार्थयति कैड्यं कष्टाल्लभ्यमथापि तत् ॥ ददात्येव पिता यत्नादथ बालस्त्रिवर्षकः ॥ ७४ ॥ स्पष्टमेव वचो ब्रूते लघुरप्यतिमंजुलम् ॥ कदाचिद्याचितं तेन क्रीडार्थमतिदुर्लभम् ॥ ७५ ॥ न लब्धं चेद्रोदितीत्थं न शांतस्तद्दतेऽप्यपि ॥ ग्रीष्मर्तौ पूर्णिमारात्रौ घर्मततः पिता क्वचित् ॥ ७६ ॥ सशिशुर्हर्म्यतश्चोर्ध्वे स्थले ज्योत्स्नाप्रकाशिते ॥ ययावत्र शिशुः पश्यन्नूर्ध्वं चंद्रं प्रकाशितम् ॥ ७७ ॥ रमणीयं सुचक्राभं चित्रितं मध्यतोऽकतः ॥ पितरं प्राह मे देहि क्रीडार्थमधुनैव तम् ॥ ७८ ॥ इत्थं मुहुर्वदंश्चक्रे रोदनं स शिशुर्भृशम् ॥ स्वर्गस्थोऽयं न केनापि स्प्रष्टुं चेंदुर्हि शक्यते ॥ ७९ ॥ कथं देयो मया तेऽद्य मुधा मा रोदनं कुरु ॥ भूस्थं याचस्व चान्यत्तन्नृपगेहस्थमप्यहम् ॥ ८० ॥ दास्य एवेति बहुधा पित्रोक्तोऽपि शिशुर्न सः ॥ तूष्णीमास करे दत्ते मिष्टभक्ष्येऽपि शार्करे ॥ ८१ ॥ अत्युच्चै रुदतस्तस्य शुष्काः कंठोष्ठतालुकाः ॥ आसुव्याकुल एवासौ निष्प्राण इव चापतत् ॥ ८२ ॥ लक्ष्मणानंद इत्थं तं बालं दृष्ट्वा सुदुःखितः ॥ श्रीगुरोः पादुकामंत्रं स्मरंस्तच्छीर्षमस्पृशत् ॥ ८३ ॥ पत्न्यानीय जलं यत्नान्निक्षिप्यास्य मुखे तथा ॥ सिषेचांगेषु बालोऽथ प्राप्तसंज्ञो रुदन्पुनः ॥ ८४ ॥ देहि तन्मेति कांतं यद्वोर्ध्वस्थमिति चाब्रवीत् ॥ श्रुत्वेत्थं तं पितेत्याह भो बाल भवताधुना ॥ ८५ ॥ मूकस्थित्यैव मत्प्रोक्तं जप्यते चेत्क्षणं खलु ॥ तदाश्वेव ददाम्येनमिदं तुभ्यं नभःस्थितम् ॥ ८६ ॥ श्रुत्वेति तूष्णीमेवाभूद्बालस्तस्मै पिताब्रवीत् ॥ चांद्रं बीजं जपस्वेति तमुक्त्वाथ शिशुश्च तत् ॥ ८७ ॥ जजापैकाग्रमनसा बाल्यचांचल्यमात्यजन् ॥ यामार्द्धावधि खाधस्तात्तावत्प्राप्तोऽथ चंद्रमाः ॥ ८८ ॥

॥ ८० ॥ शर्करायुक्ते ॥ ८१ ॥ ८२ ॥ ८३ ॥ बालोऽथेत्युत्तरबद्धम् ॥ ८४ ॥ बालस्य चंद्रानभिज्ञस्य युक्तस्तदिति नपुंसकत्वनिर्देशः । भो बालेत्यपरान्वयि ॥ ८५ ॥ मत्प्रोक्तमंत्रम् ॥ ८६ ॥ चंद्रस्य बीजं कोशे सुप्रसिद्धम् । अथ तद्बीजमित्युत्तरान्वयि ॥ ८७ ॥ आसाकल्येन त्यजन् यामार्द्धावधि

जजाप । तावच्चंद्रमाः अधस्तात्प्रापेत्यन्वयः ॥ ८८ ॥ स एणवाहं मृगवाहनम् । अमूल्यभूषणवस्त्राणि दधानं स्वकिरणैः बहुशीतं समर्पयंतम् । उपजाति वृत्तम् ॥ ८९ ॥ ईषद्वक्तुं समर्थो नासीत् । तज्जनको लक्ष्मणानंदः ॥ ९० ॥ तत्रादौ चंद्रस्य सृष्टिस्थितिलयकर्तृत्वेन वर्णयन् स्तौति । भूतानीति । भूतानि अन्नाद्भवंति अन्नमोषधीभ्यः ओषधयस्त्वत्तो भवंति यतः ततस्त्वत्तोऽस्य जगत उत्पत्तिरस्ति । सदान्सूर्यकिरणजन्यं तापं स्वकिरणैर्हत्वा पालकोऽपि भवसि । पक्षमासादिभेदेनायुष्यक्षयहेतुत्वेन संहर्ता च भवति ॥९१॥ इदानीं देवान्प्रति अमृतप्रदत्वेनामृतरूपं वर्णयति। देवा इति । देवास्त्वत्तः सकाशादमृतं पिबंतः संतोऽमरसंज्ञां प्राप्य स्वर्गे निवसंति । कृष्णप्रतिपदमारभ्य कलानां क्षयं देवान्प्रत्यमृतदानेन लब्ध्वापि पुनः पुनर्देवेभ्योऽमृतं त्वमर्पयस्येव । अमृ

सोऽपश्यदिंदुं शिशुरग्रसंस्थं सुशुभ्रतेजोमयमेणवाहम् ॥ अमूल्यभूषांशुकधारिणं तं प्रसर्पयंतं बहुशीतमस्रैः ॥ ८९ ॥ तच्छैत्यतः कंपितदेह एष सशब्ददंतैरणु वक्तुमीशः ॥ नासीत्तदा तज्जनकस्तमिंदुं ज्ञात्वैव तुष्टाव समोष्णशीतः॥९०॥लक्ष्मणानंद उवाच ॥ भूतानि चान्नादिदमोषधीभ्यस्तास्त्वत्त उत्पत्तिरतोऽस्य पाता ॥ हत्वार्कतापं च भवान्स्वगोभिश्चायुःक्षयात्पक्षमुखेन हंता॥९१॥ देवा भवत्तोऽमृतमापिबंतः स्वर्गेऽपि तिष्ठंत्यमरत्वमाप्य ॥ लब्ध्वा सुधाया व्ययतः कलानां क्षयं ददास्येव सुधां सुरेभ्यः ॥ ९२ ॥ त्वां विघ्नहर्तापि ललाटदेशे धत्तेऽथ शंभुर्गिरिजा च मौलौ ॥ त्रिष्वेक एवासि भवान्किलांशात्संतोषयन्स्वभ्रमणाज्जगच्च ॥९३॥ किं वर्ण्यतां वैभवमद्य तेऽज्ञैर्यद्ब्रह्मविष्णवीशमनस्त्वमेव ॥ तदन्यतद्दैवतमत्र कांडे हीपत्र चिंत्यं त्वदृते कुतोऽपि ॥ ९४ ॥

तदानेन कलानां नाशेऽपि तवामृतप्रदत्वं न हीयत इत्यर्थः ॥ ९२ ॥ किं च त्वां गणेशः स्वललाटदेशे धारयति । गौरीशंकरौ च मुकुटे धारयतः । एवं त्रिषु स्थानेषु अंशरूपेण भवानेक एव स्थितोऽस्ति । स्वभ्रमणेन जगदपि संतोषयन् । नानारूपस्त्वं स्वमंडलगतोऽपि अंशरूपेण गणेशादीनपि संतोषयसीत्यर्थः॥९३॥जगति त्वद्व्यतिरिक्तं किंचिन्नास्तीत्याह।किमिति।अज्ञैरस्माभिस्तव सामर्थ्यं किं कथं वर्ण्यतां न कथमपि यद्यस्माद्ब्रह्मादीनां मनस्त्वमेवासि। तदन्यद्दैवतं तेभ्यो ब्रह्मादिभ्योऽन्येषां सर्वदेहिनां तस्य मनसो दैवतं चासि । अतस्त्वदृते काण्डे ब्रह्मांडे चिंतितुं मनोविषयीकर्तुं योग्यं किंचिन्नास्ति । कुतोऽपि साक्षाच्चक्षुरादिविषयं भवति न कुतोऽपि । तथा च तव समष्टिमनोरूपत्वेन सर्वेषां मनसो नियंतृत्वेन च मनोमात्रविलसिते जगति न किंचित्त्वदतिरिक्तमिति

भावः । यथोक्तं योगवासिष्ठे "अंकुरस्य यथा पत्रलतापुष्पफलश्रियः । मनसोऽस्य तथा जाग्रत्स्वप्नविभ्रमभूमय" इति ॥ १४ ॥ एवं सर्वेषां पोषणादिकार्ये कर्ता यतस्त्वमेव भवसि ततो मम कार्यं न करोषि किं अपि तु करिष्यस्येव । किं तव कार्यमिति चेत्तत्राह । सहेति बालभावान्ममायं पुत्रस्त्वया सह क्रीडां कर्तुमिच्छावानस्ति खलु । अतस्त्वमनेन सह क्रीडां कुर्वित्यर्थः॥१५॥ एवं स्तुतश्चासाविंदुश्चेंद्रो लक्ष्मणानंदपुत्रस्य बालभावमभिप्रायं ज्ञात्वांशरूपेणा स्येति कर्तरि षष्ठी । अनेन बालेन दृशावलोकितः । ततस्तत्र तिष्ठन्बालेन सह क्रीडां कर्तुं वासं कुर्वन्मनु अदर्शनमानः । एवं उत्तमनिष्ठायुक्तैर्भक्तैर्निमित्त

इत्थं त्वमेवाखिलकार्यकर्ताऽतः किं न मत्कार्यमिदं करोषि ॥ सह त्वया क्रीडितुमिच्छुरेव पुत्रो ममायं खलु बालभावात् ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ स्तुतः सचेंदुर्लघुबालभावं ज्ञात्वांशतोऽस्यैव दृशा स दृष्टः ॥ तिष्ठंस्ततोऽदर्शनमाप मंत्रैरित्थं सुनिष्ठैः सुलभास्तु देवाः ॥ १६ ॥ तुष्टोऽथ बालोऽपि सदैव चंद्रं पश्यन्स चिक्रीड इलातलेऽपि ॥ पश्यंति नान्येऽण्वपि तं कदाचिद्ब्रह्मामृताब्धौ यथा (?) पूर्णयोगी ॥ १७ ॥ जातोपनीतिः स्वगुरोः स विद्याः प्रापाथ मंत्रान्कृतसद्विवाहः ॥ क्रीडादिचंद्रेत्यभिधा कृताऽस्य क्रीडार्थमिंदुं हि ययाच एषः ॥ १८ ॥ बाल्ये विधुं क्रीडितुमेव रात्रौ लेभे गुरोः सत्कृपयास्य बीजात् ॥ तं न्यूनपंचाढ्यशतं हि मूर्ध्ना क्रीडादिचंद्रं गुरुमानताः स्मः ॥ १९ ॥

भूतैर्मंत्रैर्देवाः सुप्राप्या भवंति । हीति निश्चयेन ॥ १६ ॥ इलातले पृथिव्यामपि चिक्रीडे तं चंद्रं बालेन क्रीडनमन्ये न पश्यंति । तत्र दृष्टांतः ब्रह्मरंध्रेऽमृतयुक्तं चंद्रं पश्यन्योगी यथान्यैर्न दृश्यते तद्वत् ॥ १७ ॥ जाता उपनीतिरुपनयनं यस्य स्वगुरोर्लक्ष्मणानंदप्रकाशाद्विद्याः प्राप्तवान् । पितास्य क्रीडाचं द्रेति नाम कृतं हि यस्मात्क्रीडार्थं चंद्रं याचितवान् ॥ १८ ॥ एकोनपंचाशदधिकशतसंख्यं क्रीडाचंद्रं प्रणमति । बाल्य इति । अस्य चंद्रस्य बीजात् तन्त्र पादित्यर्थस्तम् ॥ १९ ॥

सर्गोक्तचतुर्गुरुकथाश्रवणादेः फलं क्रमेणाह । य इति । यथेच्छं इच्छापूरणम् ॥ १०० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे टीकायामर्थ स्फूर्त्यभिधायां सप्तदशः सर्गः ॥ १७ ॥ उदष्टादश एकांकपद्यैः शार्ङ्गधरः स्मृतः ॥ भिषग्ग्रंथकरः श्रेष्ठकाव्यकर्त्ता च भारविः ॥ १८ ॥



यश्चारसीठाकुरतश्चतुर्णां पठेच्चरित्रं शृणुयात्सुभक्त्या ॥ आत्मानुभूतिं च कवित्वशक्तिं लक्ष्मीं यथेच्छं फलमाप्नुयात्सः ॥ १०० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे अरसीठाकुरानंदादिचतुर्गुरुकथावर्णनं नाम सप्तदशः सर्गः ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ अथासीद्द्राविडे देशे ब्राह्मणो गार्ग्यगोत्रजः ॥ वेदवेदांगतत्त्वज्ञो महादेव इति श्रुतः ॥ १ ॥ पुत्रस्तस्यातितेजस्वी साक्षाद्विष्णुरिवापरः ॥ अभूद्यस्य करे सव्ये शार्ङ्गचिह्नमतः पिता ॥ २ ॥ नाम्ना शार्ङ्गधरं चक्रेऽथाब्दे पंचम एव सः ॥ उपनीतस्ततः प्राप विद्याः पित्रादितः क्रमात् ॥ ३ ॥ विशेषविद्याभ्यासार्थं ययौ काशीमथाखिलाः ॥ विद्यास्तत्र समभ्यस्य सर्वमान्यो बभूव च ॥ ४ ॥ क्रीडाचंद्रानंदनाथस्तत्र यात्रार्थमंजसा ॥ ययौ तं मंत्रशास्त्रज्ञं ज्ञात्वा शार्ङ्गधरः स्वयम् ॥ ५ ॥ संप्रार्थ्य पूर्णां जग्राह दीक्षां तस्माच्च देशिकात् ॥ अथ शार्ङ्गधरानंदो जप्त्वा मंत्रान्सुभक्तितः ॥ ६ ॥ काव्यकर्ता बभूवासावथ देशं निजं ययौ ॥ तोषयन्पितरौ तस्थौ गृहेऽथोपयमत्पिता ॥ ७ ॥ चक्रे तस्य ततः श्रुत्वा वैद्यशास्त्रमशेषतः ॥ पितुरेवाकरोत्तस्मिन् ग्रंथं शार्ङ्गधरः स्वयम् ॥ ८ ॥ तन्नाम्नैव प्रसिद्धोऽसौ भिषजां प्रीतिवर्द्धनः ॥ तथान्येऽपि कृतास्तेन ग्रंथा उर्व्यां सुविश्रुताः ॥ ९ ॥ यश्चात्मवेत्तापि चकार वैद्यशास्त्रीयकाव्यं तु परोपकृत्यै ॥ षष्ट्युत्तरं तं शतसंख्यमिज्यं गुरुं वयं शार्ङ्गधरं नताः स्मः ॥ १० ॥

अथेति ॥ १ ॥ सव्ये वामे अत इत्यादि परान्वयि ॥ २ ॥ पित्रादितः गुरुभ्यः ॥ ३ ॥ तत्र काश्याम् ॥ ४ ॥ तमित्याद्युत्तरान्वयि ॥ ५ ॥ अथाग्रगामि ॥ ६ ॥ अथ पिता शार्ङ्गधरस्य विवाहं चक्रे इति संबंधः ॥ ७ ॥ ८ ॥ तन्नाम्ना शार्ङ्गधरनाम्ना ॥ ९ ॥ षष्ट्यधिकशतसंख्यं शार्ङ्गधरानंदं प्रण

मति य इति । वैद्यशास्त्रीयं वैद्यकशास्त्रप्रतिपादकं काव्यं परोपकाराय चक्रे ॥ १० ॥ भारव्यानंदनाथकथां विस्तरेण वक्तुमुपक्रमते—आसीदित्यादिना । देवाद्रौ यो दुर्गेशः दुर्गाधिपतिः कश्चिद्राजा तत्प्रधानाश्रयवान् काशीनाथ आसीत् ॥ ११ ॥ तयोरित्युत्तरान्वयि ॥ १२ ॥ अन्येभ्योपि गुरुभ्यः अथ तत्पिता काशीनाथः कर्षकः फलालाभेन ऊषरभूमाविवास्मिन्नारायणविषये संतुष्टो नासीदित्यन्वयः ॥ १३ ॥१४ ॥ पूर्वार्द्धं पूर्वान्वयि । परीक्षितः कृत

श्रीदेशिकेंद्र उवाच ॥ आसीद्देवाद्रिदुर्गेशः प्रधानाश्रयवान्बुधः ॥ काशीनाथ इति ख्यातः शास्त्रवित्सन्मतिः कविः ॥ ११ ॥ आसतुस्तस्य पुत्रौ द्वौ शिवनारायणाभिधौ ॥ अध्यापितावुभौ पित्रा तयोर्ज्येष्ठः सुबुद्धिमान् ॥ १२ ॥ विद्याः प्राप पितुः सर्वा स्तथान्येभ्योप्यतिद्रुतम् ॥ तथा नैवावरोत्यंतमंदधीरथ तत्पिता ॥ १३ ॥ नास्मिंस्तुष्टः फलालाभादूषरे कर्षको यथा ॥ एकदा पंडिताः प्राप्ताः सचिवस्य गृहे क्वचित् ॥ १४ ॥ उत्सवे दक्षिणां लब्धुं स्वस्वविद्यापरीक्षया ॥ यजमानमतात्सर्वैः शिवशर्मा परीक्षितः ॥ १५ ॥ एक एवाखिलैः शास्त्रवादैरणुवयाः परैः ॥ तं जेतुं न बुधाः शेकुः पतंगा इव दीपकम् ॥ १६ ॥ अप्रकाश्यात्म विद्यायास्तेऽल्पतां सचिवं तदा ॥ धूर्ता इत्याहुरल्पोऽपि तवाश्रितसुतः सुधीः ॥१७॥ लघोर्नैतस्य वै वादोऽस्माभिर्वृद्धैस्तु शोभते ॥ न स्मोऽमुं त्वप्रियं वक्तुं परुषं च वयं क्षमाः ॥ १८ ॥ अस्माभिः प्रीतिरेवास्य त्वत्संस्थाने स्थितस्य च ॥ प्रीत्या नामास्य कुर्मो ऽन्यद्विद्याधिक्यप्रकाशकम् ॥ १९ ॥ विद्यया योऽखिलान्कृत्वा मूकानस्मान्सदस्ययम् ॥ भाति ताराः प्रलोप्यैकः कांत्या रविरिवांबरे ॥ २० ॥ तस्माद्भारविरेवायं विद्याकांत्या रविप्रभः ॥ श्रुत्वेति सचिवस्तुष्टः पूजयामास पंडितान् ॥ २१ ॥ भारविं च विशेषेण महार्हांशुकभूषणैः ॥ अथ श्रीद्वारकायात्रां कर्तुं मार्गेण देशिकः ॥ २२ ॥

परीक्ष आसीत ॥ १५ ॥ परैर्वयोवृद्धैः पंडितैः कर्तृभिरित्ययं पूर्वान्वयि ॥ १६ ॥ धूर्तास्ते स्वविद्याया अल्पत्वं संगोप्य सचिवं प्रत्याहुः । तवाश्रितस्य काशीनाथस्य पुत्रो बुद्धिमानस्ति ॥१७॥१८॥ पूर्वार्द्धे अस्तु क्रियान्वयः ॥ १९ ॥२०॥ भया कांत्या रविरिव वर्तते स भारविः ॥२१॥ पूर्वार्द्धे स

पूजयामासेत्यध्याहारः ॥ २२ ॥ २३ ॥ तस्मै नृप आमाशनं आमान्नार्पणेन भोजनं ददौ । भारविरित्युत्तरान्वयि। अमुं शार्ङ्गधरम् ॥ २४ ॥ गुरुरित्युत्तरान्वयि ॥ २५ ॥ उत्तरार्द्धं परान्वयि ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ इज्यमानिने ऽहंपूज्य इत्यभिमानवते ॥ ३२ ॥

ययौ शार्ङ्गधरानंदस्तद्दुर्गनगरं क्वचित् ॥ तद्दर्शनाय दुर्गेशमंत्री स्वाश्रितमुख्ययौ ॥ २३ ॥ सर्वज्ञं तं गुरुं ज्ञात्वा संपूज्या माशनं ददौ ॥ भारविश्चात्मविच्छेत्तुं मत्त्वा मंत्रज्ञमप्यमुम् ॥ २४ ॥ प्रार्थयन्मंत्रदीक्षार्थमप्यत्यल्पवयाः सुधीः ॥ गुरुः शार्ङ्गधरोप्येनं प्राप्तविद्यं च सद्धियम् ॥ २५ ॥ विज्ञाय प्रददौ दीक्षां पूर्णां भारवये मुदा ॥ दिनानि कानिचित्प्रीत्यै भारवेः सचिवस्य च ॥ २६ ॥ स्थित्वा सशिष्यः प्रययौ पुरीं द्वारवतीं ततः ॥ महामंत्रान्गुरोर्लब्ध्वा ताञ्जपन्भारविस्तथा ॥ २७ ॥ देवतां पूजयं ल्लेभे काव्यशक्तिमनिंदिताम् ॥ काशीनाथः पंडितायोऽथोद्वाहं सुतयोर्द्वयोः ॥ २८ ॥ चक्रे संयोज्य सद्बुद्ध्याऽनुरूपे पंडितात्मजे ॥ आत्मजं भारविं सुज्ञं नारायणमथाबुधम् ॥ २९ ॥ ज्ञात्वा पितातिसंतुष्टश्चातुष्टोऽभून्निजांतरे ॥ तथापि बाह्यतः प्रीतिं चक्रे नारायणे च सः ॥ ३० ॥ भारविं परुषैर्वाक्यैः सदा क्लेशयति क्रुधा ॥ सुमौल्यं वस्त्रभूषादि दत्ते नारायणाय च ॥ ३१ ॥ तथा भारवये नैव विदुषेऽपीज्यमानिने ॥ क्लेशितः परुषैर्वाक्यैः पित्रा वस्त्रादितस्तथा ॥ ३२ ॥ तुच्छीकृतः सदाथाह मनस्येवं स भारविः ॥ सुज्ञोऽपि साहसं कर्तुं चिंतयन्वृद्धिलोमधीः ॥ ३३ ॥ भारविरुवाच ॥ विद्वानहं सन्मतिराप्तशीलः सर्वत्र पूज्यः सचिवाद्धनादि ॥ लब्ध्वाहमेता खिलमर्पयामि पित्रे तदीयत्र च सन्निधौ मे ॥ ३४ ॥ मन्ये हृदीशौ पितरौ सतीशौ करोमि सेवामुभयोश्च भक्त्या ॥ पत्नी न मेऽसत्कुलजा कुशीला करोति मन्मातृमतं हि कृत्यम् ॥ ३५ ॥ भ्रात्रेऽबुधायापि न वच्मि चोग्रमस्वाप्तयेऽस्वंबरभूषणाय ॥ नास्यां जनौ दुर्व्यसनं कुवृत्तं चाद्यं मम प्राक्तनमेव चोग्रम् ॥ ३६ ॥

रुधा विपरीता बुद्धिर्यस्य ॥ ३३ ॥ आत्मानि पितृकोपं संभावयितुं स्वदोषमुद्भावयन्निराकरोति–विद्वानिति त्रयेण । तद्धनं मत्समीपे किंचिन्नास्ति । इंद्रवज्रावृत्तम् ॥ ३४ ॥ आख्यानकीवृत्तम् ॥ ३५ ॥ भ्रात्रे नारायणाय अस्वाप्तये न स्वामिर्धनप्राप्तिर्यस्य तस्मै द्रव्यासंपादकायेत्यर्थः । अघं बलिष्ठं भार

व्यमेवोग्रमस्ति ॥ ३६ ॥ अवरे कनिष्ठे लोभयुक्तः इतः पितुः सकाशात् । इत इत्युभयान्वयि । अत्रे नारायणेऽसद्वाक्यं केनापि न श्रुतम् ॥ ३७ ॥ ननु पित्रोक्तं दुर्भाषणं पुत्रेण सोढव्यमिति चेत्तत्राह । अवाच्यमपीति । पित्रा तु बालाय तस्य चांचल्यनिवृत्तये विद्याप्राप्तये चावाच्यमप्युच्यते । अथ मर्ख त्वेन स एव तत्सोढुं समर्थः । महान्वयसा विद्यया च प्रौढः तद्भाषणं सोढुं न समर्थ इत्यर्थः ॥ ३८ ॥ ननु प्रौढेनापि त्वया सोढव्यमेवेत्यत आह—मूर्खोऽपि महांश्चेत्पितृदुर्वचनं सोढुं न समर्थः तर्हि विद्वान्कुतः सहेत । हि यस्माल्लोकेनागतषोडशाब्दवयस्कान्पुत्रान्पित्रादयः शिक्षयंति । तदुक्तम् "लालयेत्पंचवर्षाणि

यतः कुवाक्यैस्तु तिरस्करोति मामेव तातोऽवरलोभयुक्तः ॥ न जन्मतः साधुवचो मयीतः श्रुतं च केनाप्यवरैः किलासत् ॥ ३७ ॥ अवाच्यमप्युच्यत एव पित्रा बालाय तच्चापलतानिवृत्त्यै ॥ विद्याप्तये चाथ समर्थ एतत्सोढुं स एवाज्ञतया महान्न ॥ ३८ ॥ महान्न मूढोऽपि समर्थ एव सोढुं पितुर्दुर्वचनं सदैव ॥ विद्वान्कुतोनागतषोडशाब्दाङ्गिछशून्हि लोके खलु शासयंति ॥ ३९ ॥ मद्दर्शनायैव गृहागतेषु विद्वत्सु शृण्वत्स्वपि मां दुरुक्त्या ॥ विनिंदतीत्येव पितांबया मे संकेतितोपि क्षणमूकतायै ॥ ४० ॥ नाहं समर्थः खलु सोढुमेतच्छस्त्रप्रहारादपि दुःखदं मे ॥ हन्म्येव शय्यागतमद्य रात्रौ तातं ततो मच्छ्रुतिगा न दुर्वाक् ॥ ४१ ॥ इत्थं स निश्चित्य निशीथकालेंऽतर्गेहशय्यागमवेक्ष्य तातम् ॥ दधौ कराभ्यामुपलं महान्तं पित्रेण एवोज्झितुमुद्भवाक्षात् ॥ ४२ ॥ ज्ञानं किलोऽज्झंति विदोऽपि रोषाच्छैत्यं यथापोऽनलतः प्रतप्ताः ॥ नान्योऽस्ति कोपेन समोऽपकारी विदां च विद्योति तमेव हन्यात् ॥ ४३ ॥

दशवर्षाणि ताडयेत् । प्राप्ते षोडशवर्षे तु पुत्रं मित्रवदाचरेत् । " इत्यर्थः ॥ ३९ ॥ किं च मात्रा क्षणं क्षणपर्यंतं मूकत्वाय सूचितोपि निंदत्येव ॥ ४० ॥ ननु त्वयापि कुतो न सह्यत इत्याह । शस्त्रप्रहारादिति । शस्त्रप्रहाराद्धिकदुःखप्रदं सोढुं न समर्थोऽस्मि ततोऽद्य रात्रौ शय्यागतं पितरं नाशयाम्येव । ततः पितृमरणानंतरं दुर्वचनं मम श्रवणारूढं न भविष्यति ॥ ४१ ॥ अंतर्गृहगतशय्यास्थितपितरम् ॥ ४२ ॥ यस्मात्कोपवशा ज्ञानिनो ज्ञानं त्यजंति । यथाऽऽपोऽग्निना

प्रतप्ताः शीतत्वं त्यजंति । तस्मात्कोपतुल्यो ज्ञानिनामपकर्तान्यः कोपि नास्तीति हेतोस्तं विद्वान्नाशयेदेव । हि अत्यावश्यकत्वाय हि एवंति च ग्रहणम् ॥
॥ ४३ ॥ येन पित्रा निमित्तेन भ्रातर्विय: तं पितरं दृषत्तः पाषाणेन हंतुं समुद्यतः प्रवृत्तो यावत्तावदस्य भारवेः सती पतिव्रता माता इह गृहांतः पतिसेव
नाय भ्राता ॥ ४४ ॥ दुनोषि दुःखं करोषि ॥४५॥ अवरे कनिष्ठे । उभयोर्माता उभयोर्हितकर्त्री॥४६॥ असौ लाभः । आद्यं ज्येष्ठम् । शालिनीवृत्तम्॥
॥ ४७ ॥ आयुर्यशोवृद्धिकारणत्वमेवाह । पुत्र इति । पित्रादीनां दुर्वाक्येन पुत्रादिर्दुःखं न प्राप्नुयाच्चेत्तर्हि इह परलोकेऽपीवं निर्विघ्नतया कृतार्थताजनकं

येनाभवद्भारविरात्तविद्योऽप्यद्धा निहंतुं पितरं दृषत्तः ॥ समुद्यतस्तावदिहास्य माता यथौ सतीशांघ्रिनिपीडनाय ॥ ४४ ॥ जातः
पतिश्चाथ विनिद्र एवं पतिव्रतेत्याह वचः सुनम्रा ॥ स्वामिन्मुधैवात्मजमात्तविद्यं ज्येष्ठं सुशीलं च दुनोषि वाक्यैः ॥ ४५ ॥ सदावरे
प्रीतियुतोऽसि भूषावस्त्रैरलंकृत्य तमेव मूर्खम् ॥ ब्रूह्यत्र किं कारणमत्र विद्वन्पृच्छाम्यहं त्वामुभयोश्च माता ॥४६॥ काशीनाथस्तामथे
त्याह लोभो ज्येष्ठेत्यंतं मेऽस्ति नैवावरेऽसौ ॥ सुज्ञं ज्ञात्वाऽऽद्यं सदा क्लेशयेऽहं वाक्यैर्यस्यायुर्यशोवृद्धिकामः ॥ ४७ ॥ पुत्रः पित्रोः
स्त्री च पत्युर्गुरोस्तु शिष्यः क्लेशांश्चेन्न गच्छेद्दुरुक्त्या ॥ भुंक्तेऽमोघं त्वत्र चामुत्र सौख्यं नो चेद्दुःखं हीदमज्ञो न वेत्ति ॥ ४८ ॥
नातः किंचित्प्रोच्यते मूर्खपुत्रे मूर्खस्तुष्टः स्याद्धि छंदोनुरोधात् ॥ श्रुत्वा पित्रोर्वाक्यमित्थं मिथोऽसौ पश्चात्तापाद्भारविश्चाऽऽस तप्तः ॥
॥४९॥ प्राहेत्यंतः किं पितुश्चित्तमित्थमज्ञात्वैनं चाभवं हंतुकामः ॥ मात्रैवाहं पितृहत्योरुपापात्त्रातस्तातश्चापमृत्योः किलेत्य ॥५०॥

सुखं प्राप्नोति न चेत्पित्रादिवाक्यं न सहते यदि तर्हि दुःखमेव भवति । ननु ज्येष्ठ इव मूर्खपुत्रः किमितीहामुत्र सुखप्रदो नास्तीत्यत्राह । इदमिति । इद मज्ञ
चनं मूर्खपुत्रो नवेति एतन्मम हितमिति न जानाति । सुज्ञपुत्रस्यैवैतत्तिरस्करणं युक्तं न मूर्खपुत्रं प्रति तस्याविचारित्वादिति भावः ॥ ४८ ॥ यतः अवि
चारी अतो हेतोः छंदोनुरोधात् स्वभावानुसारेण । तप्तो दुःखितः ॥ ४९ ॥ अतः मनसि इति पश्चात्तापमाह । एत्य प्राप्य पितृसमीपमित्यर्थः ॥ ५०॥

आवाक्यैः पित्रादिवाक्यैः प्रायश्चित्तं कर्त्तव्यम् आद्यं प्रथमं यद्यस्माद्वाग्देहावपि अदोवृत्तिवृत्ती अमुष्य मनसो वृत्त्या वृत्तिर्ययोस्तौ मनोवृत्तिपरतंत्रौ तथा च । " मनःकृतं कृतं राम न तु कायकृतं कृतम् । येनैवालिंगिता कांता तेनैवालिंगिता सुता । " इति योगवाशिष्ठवाक्ये । देहेंद्रियादीनां मनोमात्र विलसितत्वेन मनःकृतपापस्यैव परमप्रत्यवायजनकत्वमित्यर्थः। "यदेव मनसा मनुते तदेव वाचा वदति" इत्यादि। "मनःपूर्वरूपं वागुत्तररूपम्" इंद्रियप्रवर्त्तकत्व श्रवणात्तस्यैव पापहेतुत्वदर्शनम् ॥ ५१ ॥ एतादृशपापनिमित्तेनाहं सद्भिः दर्शनयोग्योऽपि नास्मि कुतः स्पर्शनयोग्य इत्यर्थः । अमुत्र तु पद्यशेषेणोक्तम्॥

जातं मत्तो मानसं पातकं वै प्रायश्चित्तं कार्यमस्यार्यवाक्यैः ॥ श्रुत्याप्युक्तं मानसं पापमाद्यं यद्वाक्कायावप्यदोवृत्तिवृत्ती ॥ ५१ ॥
नास्मात्पापाद्दर्शनीयोऽस्मि सद्भिरत्रामुत्राप्यंधतामिस्रमुख्ये॥ स्थित्वानंतैः कोटिमुख्यैर्युगानां नैवार्होऽहं सत्कुले जन्म लब्धुम् ॥५२॥
उक्त्वेत्यंतः सोऽथ शय्यां गतोऽपि निद्रां नैषत्प्राप चिंताक्तचेताः ॥ उत्थायोषस्येव तातं प्रणम्य वृत्तं स्वीयं तन्निवेद्याह भूयः ॥५३॥
प्रायश्चित्तं ब्रूहि तातास्य येन निष्पापोऽहं सौख्यभाक् चोभयत्र॥नो चेच्छस्त्रैर्मां जहि त्वं कृपाब्धे त्वद्दोःस्त्यक्तासुःपरं धाम यास्ये॥५४॥
पुत्रेणोक्तस्तं पितेत्याह नूनं प्रत्यक्षं स्यात्पापमस्मिन्युगे तु ॥ पुण्यं चाद्यं मानसं नो फलायेत्याहुःश्रेष्ठास्त्वं त्यज जातः स्वदुःखम् ॥५५॥
पित्राप्युक्तोऽसावितीदं न पापं मेने मिथ्याऽथो पिताऽस्मै सुदीर्घम् ॥ प्रायश्चित्तं प्राह गाः पालयेति वर्ण्येकाशी त्यक्तनिद्रो द्वादशाब्दम् ॥
॥५६॥इत्याज्ञप्तो भारनिश्चेतसाह गावः पाल्याश्चेद्गृहेऽन्यत्र वा मे ॥ ह्रीरेवातेष्वागतेषु क्वचिन्मां द्रष्टुं तस्मात्पालये स्त्रीपितुर्गाः ॥५७॥
॥ ५२ ॥ ५३ ॥ अस्य पापस्य येन प्रायश्चित्तेन । उभयत्र इह परलोके । त्वद्दोर्भ्यां निमित्ताभ्यां त्यक्ताः असवः प्राणाः येन सोहं परमस्थानं गच्छामि ॥ ५४ ॥ अस्मिन्कलियुगे श्रेष्ठाः युगधर्मविचारवंतः ॥ ५५ ॥ वर्णी ब्रह्मचारी एकाशी एकवारभोजनकर्ता सन्द्वादशाब्दं गाः पालय ॥ ५६ ॥ गृहे स्थित्वा गोपालनं कृतं चेत्तदाऽऽतेषु मां द्रष्टुं गृहागतेषु सत्सु मम लज्जा स्यात्तस्माद्धेतोः श्वशुरस्य गाः पालयामि । येषामागतानां लज्जा प्राप्तिस्तद्गृहे स्थित्वा गवां पालने कृते सति लज्जाया अत्यंतच्छेदेन सुलीनताद्वारा प्रायश्चित्तपदार्थः सम्यक्संपादितो भविष्यतीति भावः ॥ ५७ ॥

इति चिंतयँल्लज्जां त्यक्त्वा स्वपादेनैव श्वशुरगृहं भारविर्ययौ । स्वकृतदोषमुक्त्वा प्रणमन्तं प्रति पुनराह । पित्रादिना वियोगसंभवाद्वियोगिनी वृत्तम् ॥ ५८ ॥ पितृवचनेनाहं स्वकृतदोषनाशाय द्वादशवर्षपर्यंतं तव गाः प्रपालयामि खलु । अत्र एतद्विषये तव त्वत्कर्तृकः प्रतिषेधश्चेत्तर्हि मत्प्राणनाशः स्यात् ॥ ५९ ॥ श्वशुरस्तु जामातुरित्याग्रहं ज्ञात्वा परमसंकटेन तथेत्याह।व्रति विद्वान्भारविः ब्रह्मचारी नक्तभुक् पादुकारहितः सञ्छ्वशुरस्य गाः पालयति स्म ॥ ६० ॥ स्वपितृगृहगतास्य पत्नी जलादि भारवये दूरतो ददौ। सोपि गोपालनाय गच्छन्किरातार्जुनीयसंज्ञं काव्यं आ व्यापकं यथा लोके तथा कृतवान्॥६१॥प्रति

प्रययाविति चिंतयन्द्रुद्रा श्वशुरस्यैव गृहं स भारविः॥ परिहाय ह्रियं स्वपादतः कृतमुक्त्वा पुनराह तं नमन् ॥५८॥ तव गाः परिपालये पितुर्वचसांताय कृतैनसोऽधुना ॥ खलु भास्करवर्षमत्र चेत्प्रतिषेधस्तव मेऽसुसंक्षयः ॥ ५९ ॥ श्वशुरः स्वसुताधवाग्रहं त्विति हृद्वाह तथेति संकटात् ॥ विदपालयदस्य गास्ततः स च वर्णी निशिभुग्घ्यपादुकः ॥ ६० ॥ वनिता पितृगेहगा ददौ व्रतिनेऽस्मै तु जलादि दूरतः ॥ स गवामपि पृष्ठतो भ्रमन्सुकिराताभिधकाव्यमाकरोत् ॥ ६१ ॥ व्यलिखत्कृतपद्यमंजसा रविपत्रेऽनुदिनं शलाकया ॥ कुरुते ऽखिलपत्रसंग्रहं स च गोष्ठेऽयुजि भित्तिगेंऽबरे॥६२॥ प्रययुस्त्वथ बंधुपूजने निजगेहाच्छ्वशुरस्य कन्यकाः॥ अयजन्बहुवस्त्रभूषणैर्निज बंधूनथ ताश्च तत्पिता ॥ ६३ ॥ स्वपतिं रहसीति भारविं वनिता चाह किलातिनम्रवाक् ॥ भगवन्स्वसृभिर्हि बंधवः कृतपूजास्तु मयैव नाखिलाः ॥ ६४ ॥ प्रिययेत्युदितः स तत्करे कृतपद्यांकितपत्रमुद्ददौ ॥प्रददात्ययुतार्द्धमस्य यस्तदवाप्तेरिदमस्तु तद्गृहे॥ ६५ ॥

दिनमनायासेन कृतं कृतं पद्यमर्कपत्रे स लिखितवान् । सर्वपत्राणां संग्रहं च गोष्ठे स्थाने अयुजि अयुक्ते धान्यादिना रिक्ते भित्तिगतांबरे चकार ॥ ६२ ॥ अथ तस्य श्वशुरकन्यकाः दीपावल्यां बंधुजननिमित्तं स्वगृहान्प्राप्ताः वस्त्रभूषणैर्बंधून्पूजितवत्यः तत्पिता च ताः पूजितवान् ॥ ६३ ॥ तदा भारविपत्नी च मृदुवाक् स्वपतिं प्रतीति प्राह । इति किम् हे भगवन्मद्भगिनीभिरेव सर्वे बंधवः पूजिताः मया तु न पूजिता इति ॥ ६४ ॥ इति पत्न्योक्तो भारविः स्वकृतकिरातगतपद्येन चिह्नितमर्कपत्रं तस्या हस्ते उद्यम्य ददौ न स्पृष्टवानित्यर्थः । यः पंचसहस्राण्यपणदाः प्रदास्यति तस्य गृहे इदं पत्रं तदवाप्तेः धन

प्रातिपर्यंतं तिष्ठतु । पुनस्तस्मै उक्तधनं दत्त्वा एतत्पत्रमानयिष्यामीत्यर्थः ॥ ६५ ॥ इति पूर्वोक्ता वाक् धनवतां गृहान्गत्वा तत्पत्न्या श्रद्धया कथिता । पत्या दत्तं पद्यांकितमर्कपत्रं च सर्वेभ्यो धनवद्भ्यो मुहुर्दर्शितम् ॥ ६६ ॥ ते धनवन्तः पंचमहस्रमुद्रास्तस्यै न ददुः । इयं भ्रांतास्ति किं पद्येनायुतार्द्धं धनं कथं प्राप्तं स्यात् । किमिदं पद्यमस्माकं मृत्युनाशकमस्तीत्यादि ताश्चाहुः ॥ ६७ ॥ अथ केनचिद्बुद्धिमता तत्पत्रं दृष्टं स च मनस्याह । इयं द्विजकन्याऽन्यथा मिथ्यावक्त्री नास्ति निश्चयेन मम गृहीतं धनं दास्यति । यदि न तदा दैवयोगेनेदमेव फलप्रदं भवेत् ॥ ६८ ॥ इति तत्पत्रं गृहीत्वा अयुतार्द्धं

न पतिवागनयेति भक्तितो धनिनामेत्य गृहान् समीरिता ॥ लिखितं रविपत्रमप्यदस्त्वखिलेभ्यश्च निदर्शितं मुहुः ॥ ६६ ॥ न ददुस्त्वयुतार्द्धमत्र ते धनिकाः प्राहुरियं किमुन्मतिः ॥ अयुतं दलितं हि पद्यतः कथमाप्तं किमिदं मृतेर्हरम् ॥ ६७ ॥ सुधियेक्षितमेव केनचित्त्वथ चाहेति स नेयमन्यथा ॥ खलु दास्यति मद्धनं न चेत्सफलं स्यादिदमेव दैवतः ॥ ६८ ॥ इति तत्परिगृह्य संददावयुतार्द्धं स कवींद्रयोषिते ॥ निजकेलिगृहेऽथ मार्गतोऽङ्कितपद्यं स्वयमूर्ध्वमान्यसत् ॥ ६९ ॥ स्वपितुर्गृहमेत्य सा सती प्रमुदापूपुजदंशुकादिभिः ॥ निजबंधुमुखानथावदन्निशि भर्त्रेऽखिलमेव विस्तरात् ॥ ७० ॥ धनिकः प्रययावथैकदा मणिमुक्ताकरमात्तसेवकैः ॥ वनितां स्वगृहे स्थितां सतीमणुगर्भां प्रवसन्न वेद सः ॥ ७१ ॥ सुषुवे नवमासतः सुतं सुदती साऽऽत्मधवे त्रिदेशगे ॥ मुदितैर्गृहगैस्तदोत्सवः खलु तस्याः श्वशुरादिभिः कृतः ॥ ७२ ॥ ववृधे स च बालकस्ततः कृतलोभस्तु पिता महीभुवैः ॥ अथ भास्करवत्सरैर्ययौ शिशुतातः कृतरत्नसंग्रहः ॥ ७३ ॥ त्रिदिनैरखिलाब्दपूर्णता भवितातः सहगांस्त्यजन्ययौ ॥ तुरगाद्वरं प्रकाशितं निशि भृत्येन परे न जाग्रतः ॥ ७४ ॥

धनं ब्राह्मणपत्न्यै ददौ । स्वक्रीडागृहमागतः द्वारोपरि अर्कपत्रांकितं श्लोकं स्वतः स्थापितवान् ॥ ६९ ॥ स्वपितुरिति । प्रमुदा हर्षेण ॥ ७० ॥ मणिमुक्ताकरं रत्नमुक्तानां समुद्रम् । आप्तैः सेवकैः सह ययौ । तदा स धनवान् गृहगतां स्वपत्नीमल्पगर्भवतीं न वेद ॥ ७१ ॥ ७२ ॥ भास्करवर्षैर्द्वादशवर्षानंतरम् ॥ ७३ ॥ दिनत्रयेण द्वादशाब्दपूर्तिर्भविष्यति । द्वादशोर्ध्वं च सुहृदां दर्शनं न विधीयते । यतः अतः सहचरान्विसृजन्वेगवताश्वेन गृहमा

ययौ । अररं कपाटं भृत्येनोद्घाटितं तदाऽररे गृहगताः जाग्रतः जागरिताः नामुः ॥ ७४ ॥ उद्धूर्ध्वं गृहं । महतैकादशोर्ध्ववयसा स्वपुत्रेण सह दीपप्रका शिते शय्यागृहे पत्नीं ददर्शेत्यन्वयः ॥ ७५ ॥ स पुत्रं न जानाति खलु । अयं जारोऽस्तीति निश्चित्योभयोर्वधे कृतबुद्धिः स उद्धृतखड्गः सन्नूर्ध्वावलो कनेनोपरिस्थापितं द्विजपत्न्या दत्तपर्कपत्रोल्लिखितं दृष्ट्वोच्चारितवान् ॥ ७६ ॥ किरातद्वितीयसर्गगतपद्यमाह । सहसेति । अविचारेण कार्यं न कर्तव्यम् अविचारस्तु दुःखानां परमत्यतं पदं स्थानं प्रापक इत्यर्थः । विवेकिनं हि पुरुषं संपदः प्राप्ताः भवंति । यतस्ता गुणाश्रयिण्यः । विचारवति पुरुषे शांत्या

वनितामथ वीक्षितुं ययौ निजशय्यासदने ददर्श ताम् ॥ महता स्वसुतेन निद्रितामुरुमंचे बहुदीपसंप्रथे ॥ ७५ ॥ न सुतं खलु वेत्ति मंचगः खलु जारोऽयमिति द्वयोर्वधे ॥ कृतधीरथ पद्यमंकितं ह्युपरीक्ष्यापठदुद्धृतासिमान् ॥७६॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ॥ वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ७७ ॥ पदशोऽखिलपद्यमुच्चरंस्तदभिज्ञः स निवृत्य साह सात् ॥ सुमतिर्युवतात्ववेक्ष्य तं विमना रुद्धपथोऽस्वपद्बहिः ॥ ७८॥ ससुतोरसि जागृताऽथ सा सुदती द्वारमिहेक्ष्य चावृतम् ॥ सह गामतिमंदमाह्वयच्छिशुरुच्चैरखिलांश्च गेहगान् ॥७९॥ प्रययुः सकलाश्च गेहगाः शिशुरंतः किमिति स्म जल्पति ॥ अररे बहिरीक्ष्य शृंखलां गदितं तैरिति केन तत्कृतम् ॥८०॥ ससुता तरुणी गृहांततः कथमेतद्धररं समावृतम् ॥ कृतमेतदनावृतं च तैः शिशुरातः सकलैश्च चुंबितः ॥ ८१ ॥

दयो गुणास्तद्वति च सुखश्रियोऽनुकूलाः भवंतीत्यर्थः ॥ ७७ ॥ तदभिज्ञो व्युत्पन्नः साहसादुभयोर्वधात्परावृत्त्य युवतौ वटेषु गावो दुह्यंत इतिवत्सामीप्ये सप्तमी । स्त्रीसमीपे तं पुत्रमपि जारमिव दृष्ट्वा विमनस्कः सन्रुद्धपथः प्रतिबद्धद्वारो बहिर्निद्रां कृतवान् ॥ ७८ ॥ ससुता धनिकपत्नी इह बहिर्भागे सहगां सहचारिणीं मंदम् अल्पस्वरं यथा स्यात्तथा गृहस्थान्पितृव्यादीनाह्वयत् ॥ ७९ ॥ एतद्द्वाररोधनं केन कृतमिति ते गृहगतान् उक्तवन्त इत्यर्थः ॥ ॥ ८० ॥ गृहांततः गृहमध्येऽस्ति एतद्गृहस्य प्रतीहारः कथमावृतः । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । तैश्चैतद्गृहमनावृतं प्रतिबंधरहितं कृतं प्रय

तेन द्वारमुद्घाटितमित्यर्थः । आप्तो लब्धः ॥ ८१ ॥ स च धनिकः वस्त्रांतर्गतोऽपि जाग्रन् एवेदं वदति । इदं पद्यं सर्वेन आ आमर्वत्र अमृतं अमृतरूप मासीत् । अतः पश्चात्पंचसहस्रमुद्राः स्त्रियाः पुत्रस्य च रक्षणेन मम प्राप्ताः किल । तस्मादमृतरूपेण पद्येनैव मद्विचारजनकेन स्त्रीपुत्रौ रक्षितावित्यर्थः॥८२॥ निखिलेभ्यो गृहवर्तिभ्यो निजवृत्तं त्वरयाऽऽगमनादिसर्वं कथितवान् । इमे गृहगताः पद्येन निमित्तेन या शिशुस्थितिस्त्वत्पत्न्याः सपुत्रजीवनं तस्माद्वयमद्य रक्षिताः ॥ ८३ ॥ गुरुमानेनार्यमानेन उक्तवत्सरैर्द्वादशवत्सरैः व्रतं गोपालनात्मकम् । अयं भावः । यद्यपि द्वादशादिवर्षप्रतिज्ञासु चान्द्रमानेन वर्षपूर्तिं कुर्वंति । तथापि पितृघाते प्रवृत्तस्य भारवेर्महापातकित्वस्मरणेन तत्प्रत्यवायपरिहाराय प्रवृत्तस्य बार्हस्पत्यमानेन त्रयोदशवर्षात्मकेनैवाब्दपूर्तिकरणं युक्तम् ।

स च वस्त्रगतोऽपि जाग्रतो वदतीदं खलु पद्यमामृतम् ॥ अयुतार्धमितः किलागतं मम पुत्रस्य तथावनात्स्त्रियाः ॥ ८२ ॥ धनिकोऽथ समुत्थितोऽखिलं निखिलेभ्यो निजवृत्तमादिशत् ॥ तमथाहुरिमेऽद्य रक्षिता किल पद्येन वयं शिशुस्थितेः ॥ ८३ ॥ अथ भारविरुक्त वत्सरैर्गुरुमानाद्व्रतमुत्समापयत् ॥ वदति स्म वरांबरादियुक् श्वशुरं गा इति पालयान्यतः ॥८४॥ सचिवो यजमान आशृणोद्व्रतपूर्तिं त्विह भारविं ययौ ॥ तमथार्च्य सुवस्त्रभूषणैर्गृहमेहि स्वकमाह चेत्यमुम् ॥८५॥ स किलागतमथार्कपत्रगं व्यलिखत्तेऽवकतोऽत्र पद्यकम् ॥ तदवीक्ष्य च योषितेऽब्रवीदयुतार्धात्पुनरानयेति तत् ॥ ८६ ॥ सचिवात्तधनेन सार्थकद्धनिनेऽसौ न धनेन तद्ददौ ॥ अथ तद्धठतो दधन्हृदांकितपद्यं तु ददौ धनाहृते ॥ ८७ ॥

तेन च यावत्कालपर्यंतं स्थितस्य भारवेर्वक्ष्यमाणा धनिकस्थापितपद्यानयनप्रवृत्तिरुपपन्ना भवति । अन्यथा चांद्रमानेन वर्षपूर्तिकरणे तु तस्य द्वादशमासात्मकवर्षरूपत्वेन द्वादशवर्षप्रवासिनो धनिकस्यागमनानंतरं प्रवृत्तस्य भारवेस्तावत्कालं स्थायित्वानुपपत्त्या विरोधः स्यादिति ॥ ८४ ॥ सचिवो मंत्री इह तच्छ्वशुरगृहे । अत्र पत्रेषु तद्धनिकाय दत्तं पत्रमदृष्ट्वा अयुतार्धात्पंचसहस्रमुद्राप्रदानेन । तद्धनिकाय दत्तं पद्यांकितपत्रमानयेति पत्नीमाह॥८५॥८६॥ सचिवात्तधनेन प्रधानप्राप्तधनेन सा भारविपत्नी धनेन धनग्रहणेन । तत्पत्रं हठतः बलात्कारेण हृदा मनसा धारयन् लिखितपद्यं धनं विना तस्यै ददौ ।

महदुपकारादर्थग्रहणं न युक्तमित्यर्थः ॥ ८७ ॥ लिखितं पद्यं स भारविः ॥ ८८ ॥ ८९ ॥ भारवेः प्रथा प्रख्यातिः यस्मात्तत्किरातार्जुनीयं काव्यं महत्सु काव्येषु आख्यया नाम्नाऽर्थगौरवेण भुवि विततमास । भारवेरर्थगौरवमिति प्रसिद्धेर्महाकाव्यमित्यर्थः ॥ ९० ॥ सर्गोक्तशार्ङ्गधरानंदादिगुरुद्वयकथाश्रव

लिखितं कवये ददौ सती स किरातं ह्यलिखत्ततोऽखिलम् ॥ श्वशुरेण च पूजितो ययौ सह पत्न्या सचिवादिभिः पुरम् ॥ ॥ ८८ ॥ सुखिनौ पितरौ कवीक्षणादथ काव्यं भुवि भारविप्रथम् ॥ विततं किल तन्महाख्ययास किराताभिधमर्थगौरवात् ॥ ॥ ८९ ॥ यस्याधिकार्थाद्विततं महाख्यं किरातसंज्ञं बुधमान्यकाव्यम् ॥ तमेकषट्पूर्ध्वशतात्तसंज्ञं श्रीभारविं सद्गुरुमानताः स्मः ॥ ॥ ९० ॥ चरितं शार्ङ्गधरस्य भारवेश्च प्रपठेद्भक्तियुतोऽथ वा शृणोति ॥ न भवेत्तस्य भवे हि रोगबाधा न च मूर्खस्य जनिर्हि तस्य वंशे ॥९१॥ इति गुरुपरंपराचरित्रे उत्तरार्धे अष्टादशः सर्गः ॥१८॥ श्रीदेशिकेंद्र उवाच ॥ द्विजो गोविंदशर्मासीद्देशे कर्णाटके क्वचित् ॥ विशेषान्मंत्रशास्त्रज्ञः श्रुतिस्मृतिसुकर्मकृत् ॥१॥ तत्पत्नी च रमा नाम साध्वी भर्तृहिते रता ॥ धनं धान्यं गोकुलं च संकुलं तद्गृहेऽखिलम् ॥ २ ॥ नासीदपत्यमेवास्य तदर्थं देवताग्रतः ॥ तत्तन्मंत्रैरनुष्ठानं चक्रेऽनेकस्थलेषु सः ॥ ३ ॥ दिनैः सप्तभिरेवास्य प्राहुः साक्षाद्धि देवताः ॥ नापत्यं तव दैवेऽस्ति मा मुधैव कुरु श्रमान् ॥ ४ ॥ स क्रमन्देवतास्थानान्यथ वाराणसीं ययौ ॥ तत्र यात्राविधिं कृत्वा विश्वेशं च तथाऽर्थयत् ॥ ५ ॥ सोऽपि सप्तदिनैराह प्रत्यक्षं पूर्ववद्द्विजम् ॥ अथ श्रांतो द्विजोऽत्यंतं मनस्याहेति भूतले ॥ ॥ ६ ॥ यावत्यो देवतास्तास्तास्तत्तन्मंत्रैर्मयाऽखिलाः ॥ अनुष्ठितास्तु सर्वाभिरुक्तं नापत्यमस्ति ते ॥ ७ ॥

णादेः फलमाह—भवे जन्मनि ॥९१॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायामष्टादशः सर्गः ॥१८॥ उद्गनविंशकेऽष्टांकपद्यैर्भरवतः स्मृताः। चत्वारो देशिकास्तत्तत्कथाभिस्तु पृथक् पृथक् ॥१९॥ द्विज इति। श्रुतिस्मृतिषु यत्सुकर्म तत्करोति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ अर्थयत्प्रार्थयत ॥५॥ स विश्वेशः पूर्ववत्

तव दैवेऽपत्यं नास्ति । भूतले इति परान्वयि ॥ ६ ॥ ७ ॥ महान्बलिष्ठः ॥ ८ ॥ प्रयत्ने आलस्यं मा भवतु न फलत्येव वृथा न भवति । यत्तु महोग्रं दैवतमिह काश्यामेव तत्पुरतः तत्स्तोत्रपाठादिकमहमधुना करिष्यामीति योज्यम् ॥ ९ ॥ इत्थमित्युत्तरान्वयि ॥ १० ॥ यो बटुभैरवः इह काश्यामत्युग्रत्वादाच्छादितोऽस्ति ॥ ११ ॥ तत्र तत्समीपे शुद्धसत्त्वमिश्ररजस्तमोरूपध्यानैश्चतुर्भिश्चतुर्मूर्तिरसौ तेजस्वी

सत्यं प्रारब्धमेवातो मुधा मंत्राश्च देवताः ॥ तथापि गुरुणास्त्युक्तं प्रयत्नः प्राक्तनान्महान् ॥८॥ नैवालस्यं प्रयत्नेऽस्तु फलत्येव वृथा न सः ॥ यत्त्वत्युग्रमिहैवास्ति दैवतं तत्पुरोऽधुना ॥९॥ कुर्वे तत्स्तोत्रपाठादि भावि यत्तद्भविष्यति ॥ इत्थं निश्चित्य विप्रोऽसौ बटुभैरवसन्निधौ ॥१०॥ चक्रे तत्स्तोत्रपाठांस्तु निराहारस्त्वहर्निशम् ॥ योऽत्युग्र इह सर्वेभ्यस्त्वतश्चाच्छादितः सदा ॥११॥ सप्ताहं तत्र पाठनाथाविर्भूतो निशीथके ॥ शुद्धसत्त्वान्वितसत्त्वरजस्तामससंज्ञकैः ॥ १२ ॥ ध्यानैश्चतुर्भिरेवासौ चतुर्मूर्तिरतिप्रभः ॥ क्रोधात्पाठांश्च कारासावतस्तं तामसो ब्रवीत् ॥ १३ ॥ कृष्णवर्णकरालास्यो दर्शनाद्भीरुभीतिदः ॥ भक्ष्यं मे देहि पूर्वं त्वं पश्चाद्दास्ये वरांस्तव ॥ १४ ॥ इत्युक्तः स द्विजः प्राह क्रोधात्तं बटुभैरवम् ॥ अहमेवास्मि ते भक्ष्यमित्युक्त्वास्याग्रतः स्वयम् ॥ १५ ॥ नम्रग्रीवोऽचलोऽतिष्ठन्निःशंको निर्भयो मृतौ ॥ दृष्ट्वेत्थं निश्चयं तस्य भैरवस्तामसोऽपि सः ॥ १६ ॥ सौम्यवाचा द्विजं प्राह तन्मनोऽभीप्सितं स्वयम् ॥ अनुष्ठितास्त्वया बह्वचो देवताः पुत्रकामतः ॥१७॥ न पुत्रोऽस्ति हि ते भालेऽहं तथापि मृषैव तत् ॥ कुर्वे त्वत्पुत्रतां प्राप्स्ये गच्छ वत्स सुखं गृहान् ॥ १८ ॥ इत्युक्त्वांतर्दधे देवोऽथासौ विप्रोऽपरेऽहनि ॥ देवतुष्ट्यै यथाशक्ति विप्रेभ्यो भोजनं ददौ ॥ १९ ॥ ततः प्राप्तो निजं देशं तस्य भार्याथ कालतः ॥ सगर्भा चाभवत्काले सुषुवे भैरवं सुतम् ॥२०॥ कृष्णवर्णं वर्धितोष्ठमुद्रवं चारुणेक्षणम् ॥ इत्थं दृष्ट्वा शिशुं विप्रो भैरवोऽयमिति स्फुटम् ॥२१॥ ज्ञात्वा भैरवमित्यस्य चक्रे नामातितुष्टधीः ॥ वत्रे भीष्म ... ऽथोपनीतश्च पंचमे ॥२२॥

बटुभैरवः आविर्भूत इति संबंधः ॥ १२ ॥ असौ गोविंदः ॥ १३ ॥ पूर्वार्धं पूर्वान्वयि ॥ १४ ॥ इत्यादि परेणान्वेति ॥ १५ ॥ दृष्ट्वेत्याद्युत्तरान्वितम् ॥ १६ ॥१७॥१८॥१९॥२०॥ तस्य भैरवरूपत्वमेवाह कृष्णवर्णमिति सार्धान्वयः । वर्धितोष्ठं बृहदोष्ठम् उद्रवम् उत्कृष्टशब्दम् ॥ २१ ॥ २२ ॥

वर्ष इति पूर्वान्वितम् ॥ २३ ॥ २४ ॥ पूर्वार्द्धे पूर्ववद्धम् ॥ २५ ॥ तत्र कर्णाटके तं भारविमित्यायुत्तरान्वयि ॥ २६ ॥ २७ ॥ द्विपश्चधिकशतसंख्यं भैरवानंदं प्रणमति—य इति । अबाधः भूतप्रेतादिबाधारहितः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ पूर्वार्द्धे तर्हीत्यध्याहारः ।

वर्षेऽथाध्यापितः पित्रा सांगं वेदं समभ्यसत् ॥ तथा सर्वाः शास्त्रविद्याः स द्रुतं प्राप चाभ्यसन् ॥ २३ ॥ यांति दर्शनतो यस्य दुर्बाधाश्च शमं नृणाम् ॥ अथ तस्मै ददौ कन्यां तादृशीं भैरवीं कलाम् ॥ २४ ॥ अवतीर्णामिति ज्ञात्वानंताख्यः सर्वविद्द्विजः ॥ तौ समौ रूपशीलाभ्यामासतुः प्रेमसंश्रुतौ ॥ २५ ॥ भारविः कविवर्योऽथ यात्रां कुर्वन्हि दक्षिणाम् ॥ ययौ देवशर्मात्तत्र तं ज्ञात्वा भैरवः स्वयम् ॥ २६ ॥ मंत्रज्ञो देवतांशोपि दीक्षां जग्राह तांत्रिकीम् ॥ संप्रदायप्रवृत्त्यर्थं शरणागतवत्सलः ॥ २७ ॥ यश्चावतीर्णो भुवि भैरवोद्धा यद्दर्शनादेव पुमानबाधः ॥ वयं द्विपत्र्यूर्ध्वशतातपरूयं तं भैरवानंदगुरुं नताः स्मः ॥ २८ ॥ श्रीदेशिकेंद्र उवाच॥भैरवानंदनाथं तं बृहदोष्ठाक्षिनासिकम् ॥ दंतालकं कृष्णवर्णं दीर्घहस्तांघ्रिमध्यकम् ॥२९॥ तत्पत्नीं च तथाकारां दृष्ट्वाप्याहुर्मिथो जनाः ॥ साक्षाद्भैरव एवायं तत्पत्नी भैरवी कला॥३०॥द्वावेतौ भुगतौ नूनं लोकबाधोपशांतये॥ इति बुद्ध्याऽयजंस्तं ते सर्वेप्यं शुक्भूषणैः॥३१॥केचिदाहुरिमौ नूनं ब्रह्मणा निर्मितौ समौ ॥ अपत्यमनुरूपं चेदेताभ्यां संभविष्यति ॥३२॥ न कश्चिदपि तं द्रष्टुमीशः केनाथ गृह्यते ॥ भैरवानंद इत्यादि दूराद्दुर्जनवल्गितम् ॥ ३३ ॥ श्रुत्वेत्याहानंतरास्तां मेऽपत्यं कांतं न मत्समम् ॥ त्रिलोक्यां रमणीयाम्भिशेषपत्नी रतेः परा ॥ ३४ ॥ सैवास्तु मम कन्यात्र पद्मिनी पद्मलोचना ॥ इति संकल्पितं तेन सत्यसंकल्पचेतसा ॥ ३५ ॥ अथाभवत्तस्य पत्नी सगर्भा काल आगते ॥ सुषुवे नवमासांते कन्यां चाखिलसुंदरीम् ॥ ३६ ॥ अवतीर्णां शेषपत्नीं ज्ञात्वा भैरवदेशिकः ॥ पद्मिनीति च नामास्याश्चकारात्यंततुष्टधीः ॥ ३७ ॥ वर्द्धमानां तु तां कन्यां शुक्ले चंद्रप्रभामिव ॥ दृष्ट्वात्यंतं लालयंति त्यक्त्वा कार्यं सदा जनाः ॥३८॥ पंचवर्षोत्तरं साथ पितुरभ्यासशालिनी ॥ सकृदुक्त्याखिलाः प्राप विद्याः स्त्रीत्वेऽपि सन्मतिः ॥३९॥

उत्तरार्धमुत्तरान्वयि ॥ ३३ ॥ अंतः मनसि आस्तां भवतु । उत्तरार्द्धं परान्वयि ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ सकृदुक्त्या सकृत्पाठमात्रेण॥ ३९ ॥

॥ ४० ॥ यद्यप्यनया सदृशो वरो न दृश्यतेऽथापि गुणवते वराय दातव्या ॥ ४१ ॥ ४२ ॥ ४३ ॥ न केनाप्यसौ कन्या व्रियेत इति संबंधः । प्रकाशय त्वमित्यध्याहारः । नागिनीरूपत्वमिति शेषः ॥ ४४ ॥ कश्चिदिति पूर्वान्वयि । सर्वेऽस्य सुंदरी कन्यैवास्तु भवतु ॥ ४५ ॥ मृत्युप्रदा निशीथे नागिनीरूपा केन गृह्यते स्वीक्रियते न केनापीत्यर्थः । तदाप्रभृति तां नागम्मां ते कर्णाटकस्था जनाः प्राहुरिति संबंधः । अम्माशब्दोऽत्रार्यार्थः कर्णाटके

अष्टवर्षाथ सा जाता सर्वावयवसुंदरी ॥ तस्याः कर्तुमथोद्वाहं पिता प्राह स्त्रियं रहः ॥ ४० ॥ कस्मै देया मया कन्यानुरूपो नानया वरः ॥ दृश्यते मर्त्यलोकेऽस्मिन्गुणिनेऽथापि दीयताम् ॥ ४१ ॥ श्रुत्वेत्थं भर्तृवाक्यं सा पतिं प्राह शनैः प्रभो ॥ नागिनीयं क्वचित्स्पष्टं दृश्यते हि निशीथके ॥ ४२ ॥ न कश्चिन्मद्दते वेत्ति तुभ्यमेवाधुना मया ॥ उक्तमेतज्जनैर्ज्ञातं चेन्न केनापि कन्यका ॥ ॥ ४३ ॥ व्रियेतासौ ततः स्वामिन्न कुत्रापि प्रकाशय ॥ श्रीदेशिकेंद्र उवाच ॥ दंपत्योरिति संवादं कुड्यांतरित आऽशृणोत् ॥ ४४ ॥ कश्चित्सोऽप्याह कस्मैचिदित्थं सर्वे विदुर्जनाः ॥ मिथोथाहुर्जनाश्चास्तु कन्येयं सर्वसुंदरी ॥ ४५ ॥ मृत्युप्रदा निशीथेऽद्धा नागिनी केन गृह्यते ॥ तदाप्रभृति तां कन्यां नागम्मामिति ते जनाः ॥ ४६ ॥ प्राहुः कर्णाटकाश्चाथ ज्ञात्वेत्याह पिता सुताम् ॥ कश्चिदुद्वाहितुं नेशस्त्वामप्यखिलसुंदरीम् ॥ ४७ ॥ यतस्त्वं नागिनी भासि निशीत्युक्तं तया वृथा ॥ श्रुतं केन न जाने तज्जनाः सर्वे विदुः कथम् ॥ ४८ ॥ अथ तातं सुता प्राह नागिन्येवास्मि सर्वदा ॥ मानुषी तव संकल्पाज्जातेदं वेत्सि नो पितः ॥ ४९ ॥ मर्त्यो वरः किमर्थं मे मद्वरोऽनंत ईश्वरः ॥ मर्त्यायुःकालमत्यल्पमिह स्थित्वा व्रजामि तम् ॥ ५० ॥ एवं ज्ञात्वा स्थितिं तस्याः पूर्णां दीक्षां ददौ गुरुः ॥ नागम्मायै ततः कालाद्ययौ सिद्धिं स देशिकः ॥ ५१ ॥ या शेषपत्न्येव किलावतीर्णा मर्त्यैतिरूपा गुरुनिश्चयेन ॥ नागम्मिकाशक्तिमिमां त्रिषष्ट्याधिकं शताख्यं गुरुमानताः स्मः ॥ ५२ ॥

प्रसिद्धः ॥ ४६ ॥ ४७ ॥ तया पत्न्या केन श्रुतं कथं सर्वे जना विदुः । तदहं न जानामि ॥ ४८ ॥ ४९ ॥ मे मत्यं मनुष्यो वरः किमर्थं भवतु यतः मद्वरः शेषोऽस्ति । अत्यल्पमनुष्यायुषः कालपर्यंतमिह लोके स्थित्वा पश्चादनंतं प्रति गच्छामि ॥ ५० ॥ ५१ ॥ त्रिषष्ट्यधिकशतसंख्यं नागम्माश

किंगुरुं प्रणमति । येति । गुरुनिश्चयेन । भैरवानंदसंकल्पेनावतीर्णामिति संबंधः ॥ ५२ ॥ ५३ ॥ ५४ ॥ जना इति सपादेनान्वयः ॥ ५५ ॥ अस्या नागम्मायाः दृशावलोकनमात्रेण अत्र कर्णाटके ॥ ५६ ॥ ५७ ॥ उत्तरार्द्धमुत्तरावद्धम् ॥ ५८ ॥ आसीदित्यध्याहारः ॥ ५९ ॥ ज्ञातवत्या

श्रीदेशिकेंद्र उवाच ॥ सिद्धिं गते गुरौ साथ नागम्मांबाऽखिलान्मनून् ॥ जजापोक्तविधानेन पूजयंती च देवताम् ॥ ५३ ॥ तस्यांश्चक्षु र्निपातेन महाहेरपि दंशजम् ॥ विषं शीघ्रं शमं याति शिवस्मृत्येव पातकम् ॥५४॥ जनाः श्रुत्वेति तत्कीर्तिं सर्पदष्टान्जनान्बहून् ॥ सजीवान्गतजीवांश्च समानीयापि दूरतः ॥ ५५ ॥ जीवयंति दृशैवाऽस्यास्तदा नैवात्र सर्पभीः ॥ इत्थं तां विश्रुतामंबां देवतां मेनिरे जनाः ॥ ५६ ॥ आनर्चुर्वस्त्रभूषाद्यैर्देवतामिव पीठगाम् ॥ नार्यः कुर्वंति तत्सेवामभ्यंगोद्वर्तनादिभिः ॥ ५७ ॥ नराश्च देवताबुद्ध्या तदाज्ञावशवर्तिनः ॥ एकदा सिद्धमंत्रान्सा जपंत्येकाकिनी निशि ॥५८॥ स्थित्वा रहो निजाभिन्नां ध्यायंती मंत्रदेवताम् ॥ जपान्ते थांजसा तस्याः स्वपतिः स्मृतिमागतः ॥ ५९ ॥ तावद्वाविर्बभूवास्याः पुरः शेषो नृदेहवान् ॥ ज्ञातवत्यानया रेमे स्वपत्न्याऽमोघदर्शनः ॥ ६० ॥ साथ तं प्रणमंत्याह कौमारव्रतिनी पतिम् ॥ गर्भाढ्या चेदहं स्वामिन्निंदितास्मीह चाखिलैः ॥ ६१ ॥ शेषोथाह प्रियां कैश्चिद्यदा त्वं निंद्यसे नरैः ॥ तदैव भग्ना तज्जिह्वा यथेषद्वक्तुमक्षमा ॥ ६२ ॥ कुमुदो नाम नागस्ते भविताऽमर्त्यधीः सुतः ॥ इत्युक्त्वांतर्दधे देवोऽथाभूत्सा गर्भिणी सती ॥ ६३ ॥ निनिंदुस्तां जनाः सर्वे कौमारव्रतिनी कथम् ॥ गर्भिणीति तदैवैषां भग्ना जिह्वाऽक्षमोदितुम् ॥ ६४ ॥ ज्ञात्वांबायाः प्रभावं ते मूकास्तां शरणं ययुः ॥ बहुशः प्रणमंतोऽस्याः पुरः प्रांजलयः स्थिताः ॥ ६५ ॥ ज्ञात्वाखिलं तन्नागम्मा सर्वज्ञा प्राह तानिति ॥ भर्तृहीना सगर्भाहमतः सर्वैश्च निंदिता ॥६६॥ फलमेतत्तदुत्पन्नं जिह्वाभेदश्च मूकता ॥ गुरुसंकल्पतः शेषपत्न्यहं मर्त्यजन्मनि ॥ ६७ ॥

स्वपतिमिति शेषः ॥ ६० ॥ अस्मि भवामि ॥ ६१ ॥ किंचिद्वक्तुमसमर्था यथा तथा तेषां जिह्वा भविष्यति ॥ ६२ ॥ अमर्त्यधीः देवताबुद्धिः ॥ ६३ ॥ भग्ना बभूव ॥ ६४ ॥ ६५ ॥ तत् निंदाकारणम् ॥ ६६ ॥ तस्या निंदयोत्पन्नं फलमेतदस्ति । गुरोर्भैरवानंदस्य संकल्पेन मनुष्यजन्मनि शेषपत्न्यहं

जाताऽपि ॥ ६७ ॥ गर्भाढ्या गर्भिणी जाता ॥ ६८ ॥ ६९ ॥ ईशवाचः शेषनाग(?)णस्य स्मरणं यस्याः सा नागम्मा ॥ ७० ॥ ७१ ॥ ७२ ॥
चतुःषष्टयधिकशतसंख्यं कुमुदानंदं प्रणमति–शेषादिति । अन्यतः अन्येभ्यः श्रुत्वा सर्वविद्याः प्राप यः तं नताः स्मः ॥ ७३ ॥ ७४ ॥ ७५ ॥

स्वपत्युरेव गर्भांश्चानंतादिच्छातनोरिह ॥ नातः कार्याथ मन्निंदा यतोहं नास्मि लौकिकी ॥ ६८ ॥ इत्थमुक्त्वाखिलांस्तीर्थं गुरुपादुकयोर्ददौ ॥ तत्पीत्वैव सुजिह्वास्ते ततस्तां तुष्टुवुर्मुहुः ॥ ६९ ॥ अथ सा सुषुवे पुत्रं सुंदरं शुभलक्षणम् ॥ चक्रेऽस्याख्यां च नागम्मा कुमुदेतीशवाक्स्मृतिः ॥ ७० ॥ पंचवर्षोऽथोपनीतः प्राप विद्यास्ततोखिलाः ॥ श्रुत्यादीनां व्रजञ्छालाः श्रुत्वैवाध्यापनात्सकृत् ॥ ॥ ७१ ॥ नोर्व्यां तदा क्वचिद्धीमान्विद्वांश्चान्योऽस्ति तत्समः ॥ अथ माता ददौ दीक्षां तस्मै प्रौढाय तांत्रिकीम् ॥ ७२ ॥ शेषात्कुमार्यामभवद्य आप मंत्रांश्च मातुः सकलाश्च विद्याः ॥ श्रुत्वान्यतस्तं कुमुदाभिनंदमुदक्चतुःषष्टिशतं नताः स्मः ॥ ७३ ॥
श्रीदेशिकेंद्र उवाच ॥ उद्धाय कुमुदानंदं नागम्मा भौतिकं वपुः ॥ त्यजंती सत्यसंकल्पानंतं प्राप पतिं सती ॥ ७४ ॥ शिष्यानध्यापयन्काशीं ययौ स कुमुदाभिधः ॥ तस्थौ तत्रैव विश्वेशे भक्तिमान्विदुषां प्रियः ॥ ७५ ॥ कश्चिद्द्विजार्भकोऽथासीत्प्रतिष्ठानेऽतिबुद्धिमान् ॥ मातृतातविहीनोऽसावुपनीतः परैर्द्विजैः ॥ ७६ ॥ विप्राणां निलये क्वापि ह्यश्रात्येपोऽखिलप्रियः ॥ क्रयविक्रयगेहानि गत्वाट्टे धनिनां स्वयम् ॥ ७७ ॥ वक्ति न्यूनाधिकं तेषां गणने ज्ञातमेव तैः ॥ प्रीत्यास्मै तेंऽशुकं केचिद्ददुर्भक्ष्यं च शार्करम् ॥ ॥ ७८ ॥ शास्त्रिणां वैदिकानां च गत्वा शालास्तथा शिशुः ॥ सकृच्छ्रुत्वा स्वयं वक्ति वैदिकं चोपपादितम् ॥ ७९ ॥ शास्त्रीयमथ तद्बुद्ध्या धीमान्कश्चिन्न दृश्यते ॥ क्षेत्राणि महता भूमौ जनस्थानमुखान्यथ ॥ ८० ॥ भ्रमतानेन ना लब्धो धीमान्विद्वत्सु कुत्रचित् ॥ भ्रमन्सोऽथ ययौ काशीं सर्वांस्तत्रत्यपंडितान् ॥ ८१ ॥ परीक्षन्स ययौ यत्र कुमुदानंददेशिकः ॥ शिष्यानध्यापयञ्छास्त्राण्यथामुष्योपपादने ॥ ८२ ॥ छिद्रं नाण्वपि सोऽपश्यद्विप्रार्भो धीप्रवेशने ॥ भुवि धीमंतमेकं तं मत्वेत्याह नमन्मुहुः ॥ ८३ ॥

अग्रे संप्रदायप्रवृत्त्यर्थं कथामाह । कश्चिदित्यादिना ॥ ७६ ॥ ७७ ॥ तैर्गणने संख्याविचारे यन्न्यूनाधिकं यदज्ञातं तत्स्वयं वक्ति ॥ ७८ ॥ ७९ ॥
शास्त्रीयं शास्त्रविषयमिति पूर्वगामि । उत्तरार्धमुत्तरान्वयि । महता प्रौढेन ॥ ८० ॥ सर्वानित्युत्तरान्वयि ॥ ८१ ॥ अथामुष्य कुमुदानंदस्य प्रतिपादन

इत्युत्तरान्वपि ॥ ८२ ॥ ८३ ॥ परेणान्येन कृतोपनयनः । सर्वेषां बुद्धिमत्त्वस्य परीक्षको जातोऽस्मि । उपजातिवृत्तम् ॥ ८४ ॥ येभ्यः सर्वं विद्यादि मया श्रुतम् । अत्रत्येषु कश्चिदेकोपि गुरुर्ननिश्चितोऽस्ति । वर्णैः सहांकाः अंकविद्याः । शिशून्प्रति योंकवक्तांऽकाध्यापकः । तस्मान्मया लब्धाः इति परेण योज्यम् ॥ ८५ ॥ तेषामंकानां च लेखनम् । श्रुतयो वेदाः । सकृच्छ्रुत्वा लब्धा इत्येकवचनद्विवचनबहुवचनपरिणामेन सर्वत्र योज्यम् । तत्तत्प्रवक्तुः सकाशादिति च योज्यम् ॥८६॥८७॥ बुद्ध्याधिक्येन येभ्यो यच्छ्रुतं तेषां तेषां छिद्रान्वेषणेन या तेषां मूकत्वमाप्तिस्तया ते तुच्छीकृता इत्यर्थः । गुरुत्वे

बाल्ये मृतौ मत्पितरावथाहं परोपनीतश्च परान्नपुष्टः ॥ भ्रमन्स्वतंत्रोऽखिलबुद्धिमत्त्वपरीक्षकश्चाभवमंजसैव ॥ ८४ ॥ न कश्चिदेकोपि च निश्चितोऽत्र गुरुर्हि येभ्यः श्रुतमेकदैव ॥ लब्धं मया सर्वमिदं किलांजः शिश्वंकवक्तुः सह वर्णतोंऽकाः ॥ ८५ ॥ तल्लेखनं च श्रुतयोथ सांगाः सत्तर्कमीमांसकशाब्दवादाः ॥ तत्तत्प्रवक्तुश्च तथापरं च संगीतकं वाद्यनिनादनृत्ये ॥ ८६ ॥ नाट्यं भिषक्छास्त्रमथाखिलाश्च कलास्त्वनेकास्तु पुराणगाथाः ॥ भाषाश्च लिप्योऽखिलदेशसंस्थाः श्रुतं हि यद्यत्सकलं च दृष्टम् ॥ ८७ ॥ यस्माच्छ्रुतं यच्च स एव बुद्ध्याधिक्येन तच्छिद्रनिरीक्षणेन ॥ तुच्छीकृतो मूकतया मयेत्थं श्रद्धा न कुत्रापि धृता गुरुत्वात् ॥ ८८ ॥ विद्वांस उर्व्यां बहवः किलासन्काश्चिन्न धीमानथ तेषु दृष्टः ॥ अभ्यासतो लभ्यत एव विद्या न धीरतो दुर्लभ एव धीमान् ॥ ८९ ॥ सत्यां मतौ स्यात्सुलभैव विद्या दृष्टौ यथा दृश्यनिरीक्षणं च ॥ धियैव विद्या रचिताः किलाद्यैर्बुद्धिः स्वयंभूरथ विश्वकर्त्री ॥ ९० ॥ किं वर्ण्यतां धीरखिलाधिकैव ययाकलय्य त्वदतेऽखिलं च ॥ त्यक्तं मयोच्छिष्टमिवाधुना त्वां दृष्ट्वैव धीमंतमिवैकमुर्व्याम् ॥ ९१ ॥

कुत्रापि श्रद्धा न कृता ॥ ८८ ॥ अभ्यासेन विद्या प्राप्यते । तस्याः कर्मानुसारित्वादतो बुद्धिमान्दुर्लभः ॥ ८९ ॥ सुबुद्धौ सत्यां विद्या सुलभा भवति । दृष्टौ सत्यां यथा दृश्यं सुसुखेनैवावलोक्यते । आद्यैर्व्यासादिभिः बुद्ध्यैव सर्वा विद्याः सर्वग्रंथाः कृताः । बुद्धिस्तु स्वयमन्यानिरपेक्षत्वेनैव जाता सती विश्वं करोति । देहतादात्म्यनिश्चयस्य बुद्धिरूपत्वेन तस्या एव निखिलप्रपंचावभासकत्वमित्यर्थः ॥ ९० ॥ बुद्धेरेव सर्वोन्नतत्वं स्ववृत्तेन दर्शयति ।

किमिति । वर्णनमात्रबुद्धिबलत्वात्सर्वोत्तमा बुद्धिरेवास्तीति मया कथं वर्णनीयम् । यया बुद्ध्या त्वां विना सर्वं श्रुतज्ञानमाकलय्य पृथिव्यामेकं त्वामेव बुद्धि
मंतं दृष्ट्वोच्छिष्टमिव मया त्यक्तम् । अलौकिकबुद्धिमानहमिति मन्यमानेन मया तव बुद्धेरत्यलौकिकत्वदर्शिनात्मनो बुद्धिमत्त्वं त्यक्तमित्यर्थः ॥ ११ ॥
मम सद्गुरुस्त्वमेव मां प्रति बुद्धिगर्वेण यन्महतां निंदनं तद्रूपान्नाशानुद्धर । महत्पापोद्धरणं सद्गुरुं विना नैव भवतीत्यर्थः । इति बहुधा संवादिने भाषमाणा
यास्मै बुद्धिमते कुमुदानंदो मंत्रान्ददौ ॥ १२ ॥ तस्य गुरुकृपयातिबुद्धिमत्तां दर्शयति । काशीमित्यादिना ॥ १३ ॥ अगोः राहोः स्पर्शात्पूर्वं यः

त्वमेव मत्सद्गुरुरुद्धराघान्मां बुद्धिगर्वार्यविनिंदनाख्यात् ॥ संवादिनेऽस्मै बहुधेति मंत्रान्ददौ कृपाढ्यः कुमुदाभिनंदः ॥ १२ ॥
काशीं कदाचित्कवयोऽथ भूस्थाः सर्वे ययुः सूर्यग्रहे द्युनद्याम् ॥ स्नातुं स्थितास्ते तट एव राहोः स्पर्शं प्रतीक्षंत इमेऽकविंबे ॥ १३ ॥
मिथस्तदाहुः कवयोऽत्र पद्यं स्पर्शादगोः प्राक्कुरुते कविः सः ॥ इत्थं ब्रुवत्स्वेव चकार पद्यं तेषु स्थितोऽसौ कुमुदार्यशिष्यः ॥१४ ॥
ज्ञानेन काव्यं हि तदस्ति भानौ यतोऽखिलज्ञानद एव चोद्यन् ॥ तस्मिंस्तु राहुग्रहणात्मचिंते पद्यं कथं कार्यमहो कवींद्रैः ॥ १५ ॥
श्रुत्वेति पद्यं कवयस्तमीक्ष्य गुरुं च तस्याहुरमोघबाणः ॥ करोति यल्लक्षितकार्यमाशु काव्यं तथायं कुमुदार्यबाणः ॥ १६ ॥ ख्यातः
कविष्वेवमभूद्धि बाणः कविः पृथिव्यां द्रुतकाव्यकर्ता ॥ तं पंचषष्ट्यूर्ध्वशतात्मसंख्यं बाणाभिधं श्रीगुरुमाननाम स्म ॥ १७ ॥

पद्यं करोति । स एव कविर्भविष्यति । एवं ब्रुवत्सु तत्स्वेव स्थितः कुमुदशिष्यः पद्यं चकार ॥ १४ ॥ तदेव पद्यमाह । ज्ञानेनेति । पद्यकरणं ज्ञानेन
भवति तज्ज्ञानं सूर्ये सूर्याधीनमस्ति । यतोऽसौ भानुरुद्यन्सर्वेषां ज्ञानप्रदो भवति । तस्मिन्सूर्ये राहुस्पर्शनचिंताग्रस्ते सति कविवर्यैः पद्यं कथं कर्तव्यम् ।
बुद्धिप्रवर्तकस्य सूर्यस्य चिंतातुरत्वेन बुद्धिप्रेरणाभावादेतैः कविभिः पद्यं न क्रियत इत्यर्थः ॥ १५ ॥ यद्यथाऽमोघो बाणो लक्षितं वेधनरूपं कार्यमाशु
करोति । तथायं कुमुदानंदस्य बाणोऽस्ति । बाणवच्छीघ्रकाव्यं करोतीत्यतोऽयं बाण इत्यर्थः ॥ १६ ॥ पंचषष्ट्यधिकशतसंख्यं बाणानंदं प्रणमति ।

ख्यात इति देशिकेंद्रवाक्यम् ॥१७॥ सर्गोक्तभैरवानंदादिगुरुचतुष्टयस्य कथाश्रवणादेः फलं क्रमेणाह । भैरवत इति । भूतबाधा सर्पबाधाऽपुत्रत्वदुःखं दुर्बुद्धित्वदुःखं च भैरवनागम्माकुमुदबाणानंदानां कथाश्रवणादिफलानि । आर्यागीतिच्छंदः ॥ १८ ॥ इति गुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायामेकोनविंशः सर्गः ॥१९॥ उद्दिंशके तु षट्सप्तपर्वैर्वाक्पर ईर्यते । गुरुभक्तवरश्चाथ शिवः कौ नंदिवर्धनः ॥२०॥ प्रागुक्त इति । मतादाज्ञया ॥ १ ॥ २ ॥ तं

भैरवगुरुतश्चरितं चतुर्गुरूणां शृणोति यो भक्त्या ॥ नो तस्य भूतबाधाप्यहिबाधाऽपुत्रदुर्धियोर्बाधा ॥ १८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भैरवादिचतुर्गुरुकथावर्णनं नाम एकोनविंशः सर्गः ॥ १९ ॥ श्रीदेशिकेंद्र उवाच ॥ प्रागुक्तो यः शिवस्वामी तस्य वंशेऽथ चाभवत् ॥ कांच्यां गणेशस्वामीति नंदिस्वामिसुतः सुधीः ॥ १ ॥ पितुरेव श्रुतीर्लब्ध्वा जातोद्वाहोऽपि स द्विजः ॥ पितुर्मताद्ययौ काशीं शास्त्राध्ययनलालसः ॥२॥ सम्यगध्यापयत्येष बाणानंदो बहूनपि ॥ शिष्यांछ्रुत्वेति तं गत्वा नत्वाहाध्यापयेति माम् ॥ ३ ॥ तथेत्यध्यापयत्सर्वैः सहैनं बाणदेशिकः ॥ गणेशस्वामी संतिष्ठन्सदा गुरुसमीपतः ॥ ४ ॥ यदा यादृग्गुरोर्वाक्स्यात्करोत्येव तदा तथा ॥ यदा स्नानं कुरुष्वेति गुरुणोक्तस्तदैव तत् ॥ ५ ॥ करोतीत्थं भोजनादि गुरुवाक्परमेव सः ॥ चेन्निर्गतं गुरोर्वाचः कार्यं दुष्करमप्यसौ ॥ ६ ॥ करोति देहं विस्मृत्य न वाचोऽस्य परा तनुः ॥ गुरुवाक्परतां तस्य दृष्ट्वेत्थं सहपाठकाः ॥ ७ ॥ प्राहुस्तं वाक्परं सर्वे ह्याख्या कृत्यसमा भवेत् ॥ बाणानंदोऽपि संतुष्टो लौकिक्यास्य च सेवया ॥ ८ ॥ संतोषाच्छ्रीगुरोः प्राप शीघ्रं विद्याश्च सोऽखिलाः ॥ बाणानंदो ददौ प्रीत्या मंत्रांश्चास्मै विधानतः ॥ ९ ॥ वाक्परानंद इत्यस्य चक्रे नाम च कृत्यवत् ॥ ययावथ गुरोराज्ञां गृहीत्वा स्वपुरं हि सः ॥ १० ॥ यो दुष्करं चापि चकार कार्यं वाचोदितं श्रीगुरुणा तथैव ॥ षट्षष्टिकोर्ध्वं शतसंख्यमेनं श्रीवाक्परानंदगुरुं नताः स्मः ॥ ११ ॥

नत्वा मामध्यापयेत्याह ॥ ३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥४॥ तथा गुरुवाक्यसदृशम् । यदायुत्तरान्वयि । चेदित्युत्तरान्वयि ॥५॥६॥ देहं विस्मृत्यानवलोक्य । यतोऽस्य गुरोर्वचनाद्भिन्नो देहो नास्ति ॥ ७ ॥ हि यस्मान्नाम आचरणसदृशं भवति । अलौकिक्या सर्वाधिकया ॥ ८ ॥ ९ ॥ १० ॥ षट्षष्ट्य

विकसतसंख्यं वाक्परानंदं प्रणमति । य इति । वाचा करणेन गुरुणा कर्त्रा ॥ ११ ॥ वाक्परानंदनाथ इति ॥ १२ ॥ १३ ॥ विदुषां नृपाणां नमस्कारो यस्मै सः । तैर्नमस्कृत इत्यर्थः ॥ १४ ॥ उत्तरार्धमुत्तरश्लोकम् । अनशन उपोषितः ॥ १५ ॥ १६ ॥ दशदोः दशबाहुरित्यादिसार्धश्लोकः पूर्वान्वितः । त्र्यक्षश्चासौ पंचास्यश्च शिवया सहितः ॥ १७ ॥ उत्कचो रोमांचितः ॥ १८ ॥ सर्वेषु देवेषु सर्वदातॄणां मध्ये । तदर्थं मोक्षार्थं अर्थाऽल्पबुद्धिः ।

श्रीदेशिकेंद्र उवाच ॥ वाक्परानंदनाथोथ निष्ठन्कांच्यां निजालये ॥ शिष्यानध्यापयन्नित्यं जपपूजापरोभवत् ॥ १२ ॥ अग्रणीः सोमगानां यस्तच्छाखाचारवान्स्त्रिया ॥ युतः सत्याऽन्नदो नित्यं दीनांधकृपणान्भृशम् ॥ १३ ॥ तस्यानुकूलमखिलं धनधान्यं च गोकुलम् ॥ नासीदपत्यमप्येकं विद्वद्भूपनमस्कृतेः ॥ १४ ॥ कदाचित्प्रार्थितः पत्न्या त्वपत्यार्थं स्वयं ययौ ॥ देवमेकाम्रेशानं संपूज्यानशनस्त्र्यहम् ॥ १५ ॥ षडर्णां प्रजपंश्चैवं विद्यामेकाग्रमानसः ॥ स्थितोऽग्रतस्तृतीयेह्नि ह्याविर्भूतो निशीथके ॥ १६ ॥ दशदोस्त्र्यक्षपंचास्यो भूतिधृक् सशिवः शिवः ॥ गंगाधरश्चंद्रचूडो गजव्याघ्रत्वगंबरः ॥ १७ ॥ मुंडमालोग्रहास्याढ्यो वरं ब्रूहीति संवदन् ॥ दृष्ट्वाऽमुं वाक्परो नत्वा साश्रुद्दक्चोत्कचोऽब्रवीत् ॥ १८ ॥ त्वमेव सर्वेष्वपि मोक्षदोसि स्तुवंति सिद्धाश्च तदर्थमेव ॥ तं त्वां कथं चाहमपत्यमेकं याचे कपर्दिं धनदं यथार्थीः ॥ १९ ॥ पत्न्या नियुक्तोस्मि तदर्थमेव चाराधितुं त्वामहमद्य दृष्ट्वा ॥ मन्ये तितुच्छं तव दर्शनात्तत्सदेदमेवास्तु दृशेति देहि ॥ २० ॥ श्रुत्वेति शंभुस्तमथाह भक्त मदंश एवास्तु तवार्यपुत्रः ॥ यथाद्य सामीक्ष्य तवातिसौख्यं तदीक्षणेनापि तथास्त्वखंडम् ॥ २१ ॥ उक्त्वेति चांतर्हित ईश एवं नत्वोपसि प्राप स चात्मगेहम् ॥ कालादभूत्तद्वनिता सगर्भा पुत्रं शिवांशं सुषुवेतिकांतम् ॥ २२ ॥

अल्पधना यथाऽर्थीरिति वदल्पार्थेनञ् । उपजातिवृत्तम् ॥ १९ ॥ तदर्थमपत्यार्थं पत्न्यैव त्वामाराधितुं नियुक्तोस्मि । त्वामुभयार्थमपि । त्वामद्य दृष्ट्वा त्वद्दर्शनापेक्षया तदपत्ययाचनं वाऽत्यल्पं मन्ये । अतः सदा नेत्रेणेदं तव सदा दर्शनमेव वरं देहि ॥ २० ॥ तदीक्षणेन पुत्रदर्शनेनापि ॥ २१ ॥ कालात्कालां

तरेण । इंद्रवज्रा० ॥२२॥ अग्रिमज्ञाः भविष्यवेत्तारः। उपजाति० ॥ २३ ॥ शीघ्रविद्याप्राप्तौ दृष्टांतः । फलानीत्युपसिक्तः समीपवाप्यादिजलसेचितो यः शाखाद्रुः शाखावृक्षः आम्रादिर्महावृक्षः शाखां छित्वोपवनादौ रोपितो वृक्षभूतः स यथा शीघ्रं फलानि प्राप्नोति तद्वत् ॥ २४ ॥ विवाहितश्चकारात्ति

पिताख्यया सांबमथाकरोत्तं मत्त्वैव शंभोर्वचनात्तदंशम् ॥ लक्ष्माणि दृष्ट्वास्य तमाहुरेषः साधारणो नेति विदोग्रिमज्ञाः ॥ २३ ॥ सद्वीवपुःकांतिभिरह्नि चाह्नि विवर्द्धमानोष्टशरत्स बालः ॥ पित्रोपनीतोद्भुतमाप विद्याः फलानि शाखाद्रुरिवोपसिक्तः ॥ २४ ॥ विवाहितश्चोत्तमकन्ययाथ विद्वत्तमोग्नीन्स दधार गृह्यात् ॥ अध्यापयंश्छिष्यसमूहमेकः सोमादिकान्छ्रेष्ठक्रतूंश्चकार ॥ २५ ॥ स दीक्षितः सांब इति प्रसिद्धो देशेपि दूरे ह्यरणिप्रदाता ॥ मंत्रान्ददौ वाक्परदेशिकोस्मै पूर्णेन दीक्षाविधिना क्रमेण ॥ २६ ॥ जपन्स मंत्रानपि पूजयंश्च स्वदेवतामात्तसुखोपि लोके ॥ कुर्वन्प्रवृत्तिं भुवि सिद्धवर्यः प्रोक्तोखिलैः सद्भिरनादिपूज्यः ॥ २७ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ काशीं ययौ शिष्यैर्दीक्षितश्चाग्निभिः सह ॥ शिवांशोपि शिवं द्रष्टुं विश्वेशं लोकसंग्रही ॥ २८॥ कृत्वा यात्राविधिं सांगं तत्रत्यान्पुपुजे द्विजान् ॥ शृण्वञ्छ्रुतीश्च वेदांतान्मीमांसातर्कशाब्दिकैः ॥ २९ ॥ यतींश्च पुपुजे भक्त्या भक्ष्यैर्मिष्टैस्तथांशुकैः ॥ विद्याधिक्येन तत्रत्यैः पंडितैश्चातिमानितः ॥ ३० ॥ अवसद्वर्षमात्रं स काश्यां विद्वज्जनप्रियः ॥ एकदा स गतः स्नातुं मध्याह्ने मणिकर्णिकाम् ॥ ३१ ॥ तावन्मार्गे समायातः पातकी येन चाहताः ॥ द्वादश ब्राह्मणास्तस्मान्महतः पातकाद्द्विजैः ॥ ३२ ॥ बहिष्कृतो न केप्याहुः प्रायश्चित्तार्हतामिह ॥ सतिर्यक्पतितो मार्गे दीक्षितस्य निरुध्य च ॥ ३३ ॥

त्रैत्यपकर्षः । गृह्यात्स्मार्ताग्नेः सकाशात् ॥२५॥ वाक्परदेशिको वाक्परानंदगुरुः ॥२६॥ अनादिपूज्य अनादिकुलपरंपरापूज्यः पूज्यकुलोत्पन्न इत्यर्थः ॥ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ बहिष्कृत इति पूर्वान्वयि । इहास्मिन्पातकिनि प्रायश्चित्तयोग्यतां न केप्याहुः ॥ ३३ ॥

॥ ३४ ॥ अस्मात् स्थानात् । तद्धनं विचार्येत्युत्तरान्वयि ॥ ३५ ॥ ३६ ॥ अथागुनगान्वयि । चोरसंगेन चोरसेवया ॥ ३७ ॥ मद्गृहे इति परान्वयि ॥ ३८ ॥ ३९ ॥ उत्तरदलमुत्तरान्वयि ॥४०॥४१॥ इति पूर्वेणान्वयोंकम् । अत्रत्यान् काशीस्थान् । अथागुनगान्वयि । आर्यतां श्रेष्ठत्वम् ॥ ४२ ॥

तं दृष्ट्वा दीक्षितः प्राह कोसि किं पतितः पथि ॥ स चाहाहं विशुद्ध्यर्थं किंचनं महद्दनमः ॥ ३४ ॥ तद्धेतोरुत्थानमस्मान्मे नोचेदुल्लंघ्य गच्छताम् ॥ दीक्षितः प्राह वृत्तं स्वं ब्रूहि सर्वं विचार्य तत् ॥ ३५ ॥ मयात्रत्यैः पंडितैश्च क्रियते तव शुद्धता ॥ अथोत्थायाह पापीत्थं दीक्षितं दूरतो नमन् ॥ ३६ ॥ ब्राह्मणोहं कुटुंबाढ्यः स्ववृत्त्या पोष्यपोषणे ॥ न क्षमोथ मया चोरसंगात्तत्परिचर्यया ॥ ३७ ॥ धनं लब्धं हताः केचिद्विप्राश्चान्येपि पोषितम् ॥ कुटुंबं तद्धनं कालाद्व्ययीभूतं च मद्गृहे ॥ ३८ ॥ दशाब्दानूढकन्या च पुत्रः पंचदशाब्दकः ॥ नोपनीतो हि संस्कारश्चोभयोर्नोच्यते द्विजैः ॥ ३९ ॥ बहिष्कृतोहं मच्छुद्धेः प्रायश्चित्तं च नोच्यते ॥ महाक्षेत्राणि सर्वाणि गत्वा तत्रत्यपंडिताः ॥४०॥ स्व शुद्धये प्रार्थिताः केपि प्राहुः कर्माहतां न मे ॥ येषां क्वापि गतिर्नास्ति तेषां वाराणसी गतिः ॥ ४१ ॥ इति श्रुत्वेह चागत्यात्रत्यान्प्रार्थितवान्बुधान् ॥ तेपि चक्रुर्न मच्छुद्धिमथाकर्ण्यार्यतां तव ॥ ४२ ॥ पतितोत्र च ते पादरजःस्पर्शेच्छया यतः ॥ प्रायश्चित्ताहतां लप्स्ये निश्चयोयं ममाचलः ॥ ४३ ॥ दीक्षितः पतितं प्राहात्रत्याः स्युर्यैविकारिणः ॥ तानेव शरणं गच्छ नाहमत्राधिकारवान् ॥ ४४ ॥ एवमुक्त्वा ययौ स्नातुं दीक्षितः पतितोपि सः ॥ निराकृतोपि तत्पृष्ठे याति दूरादनन्यधीः ॥ ४५ ॥ स्नात्वाथ दीक्षितः कृत्वावश्यं विश्वेशमीक्षितुम् ॥ ययौ तावत्स पृष्ठस्थः पतितः पतितस्खलन् ॥ ४६ ॥

यतः पादरजस्पर्शेन । लप्स्ये लब्धुमिच्छामि ॥ ४३ ॥ ४४ ॥ ४५ ॥ पतितः पातकी विष्णुगडाग्न्यालिहितगोपानपाषाणेन पदेऽभिहतः स्खलन्सन् ।

पपातेत्यर्थः ॥ ४६ ॥ शिरसि स्रवद्रक्तश्च बभूव । अथायुत्तरान्वयि ॥४७॥ तच्छिवशिवेत्युच्चारणम् । अवव्रतः पापिनश्चिह्नं तु यद्ब्राह्मणास्थियुक्तध्वजकपालयोर्धारणं भिक्षार्थं रक्तशरावधारणरूपम् । याज्ञवल्क्येनोक्तम् । शिरःकपाली ध्वजवान् भिक्षाशी कर्म वेदयेत् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयादिति ब्रह्मघातकचिह्नमधुना त्वं जाह्नव्यां त्यजेत्यन्वयः ॥ ४८ ॥ अस्यां भागीरथ्याम् ॥ ४९ ॥ तावदघचिह्नं त्यजेति दीक्षितेन यदुक्तं तत्कृत्वा दीक्षि

विश्वेशद्वारसोपानदृषदाभिहतः पदे ॥ शिरस्यपि स्रवद्रक्तोऽथोच्चैः शिवशिवेति च ॥ ४७ ॥ व्यथितः प्राह तच्छ्रुत्वाग्रस्थितः सांबदीक्षितः ॥ निवृत्त्य पृष्ठतश्चैनमित्थमाहाधुनात्यज ॥ ४८ ॥ स्वर्णग्राममघवच्चिह्नं स्नात्वा चास्यां मया सह ॥ भोजनं कुरु निष्पापस्त्वं जातोसि न संशयः ॥ ४९ ॥ तमित्यादिश्य विश्वेशं गत्वा नत्वा प्रपूज्य च ॥ दीक्षितः प्रययौ स्वीयं स्थानं तावत्स चागतः ॥ ५० ॥ कृत्वा यदुक्तमेतेन सह भोक्तुं च हर्षितः ॥ वैश्वदेवादिकं कृत्वा दीक्षितोथाविना सह ॥ ५१ ॥ स्वीयैश्च बुभुजेऽघघ्नं शिवनामेति निश्चयात् ॥ तत्रत्याः केचिदायांति नित्यं दीक्षितदर्शने ॥ ५२ ॥ तैर्दृष्टः पातकी पंक्तौ दीक्षितस्य कृताशनः ॥ तेभ्योखिलैश्च काशीस्थैः श्रुतं पातकिना सह ॥ ५३ ॥ दीक्षितो बुभुजेद्येति ततः सर्वेपि मीलिताः ॥ विश्वेशाग्रसभास्थाने तत्र चाहूय दीक्षितम् ॥५४॥ प्राहुस्तेनभिवाद्यैव कथं पातकिना सह ॥ कृतं हि भोजनं यस्मिन्प्रायश्चित्ताहतामपि॥५५॥ क्षेत्रस्थाः केपि न प्राहुः काशीस्थाश्चातिपातकात् ॥ किं तेनाचरितं पुण्यं महापौघहरं यतः ॥ ५६ ॥ प्रायश्चित्तमकृत्वैव कृतः पांक्तो महानघी ॥ विद्याधीशः क्षेत्रदेवो विद्यापीठमिदं ततः ॥ ५७ ॥

तेन सह भोक्तुं हर्षितः सन्स चागत इति योज्यम् ॥ ५० ॥ उत्तरार्द्धमुत्तरगामि ॥ ५१ ॥ शिवनाम पातकनाशकमिति निश्चयेन बुभुजे । दीक्षितदर्शननिमित्तं ये आयांति आगच्छंति तैः पातकी दृष्ट इति संबंधः ॥ ५२ ॥ तेभ्य इत्याद्युत्तरान्वयि ॥ ५३ ॥ तत इत्याद्युत्तरान्वयि ॥ ५४ ॥ यस्मिन्नति पापहेतोः प्रायश्चित्तयोग्यत्वं क्षेत्रस्थाः काशीस्थाश्च केपि नाहुस्तेन सह त्वया कथं भुक्तमिति संबंधः ॥ ५५ ॥ यतः यत् ॥ ५६ ॥ क्षेत्रदेवो विश्वेशो

विद्यार्थीश्वरोस्ति । ततो हेतोरिदं विद्यास्थानम् ॥ ५७ ॥ पूर्वार्धं संनीति ब्राह्मणं चेत्यमस्तीति आज्ञप्तम् ॥५८॥ श्रुत्युक्तं स्वनाम शिवनाम कर्तुं
मर्यादार्थं कर्तुमब्रवीत ॥ ५९ ॥ तत्र प्रायश्चित्तमकृत्वैव कथं शंका इति यदुक्तं तत्र सर्वं प्रायश्चित्तं तेन शिवनामोच्चारणमात्रेण कृतमित्याह । प्रायश्चित्तै
रिति । दीर्घकालमाचरितैः कृच्छ्रचांद्रायणाद्यैः यत्पापं न नश्यति यच्चास्मिन्ब्रह्मांडे कर्तुं न समर्थस्तत्सर्वं पातकं शिवेति सकृदुच्चारणमात्रेण नश्यति । शालि
नीवृत्तम् ॥ ६० ॥ ननु शिवनाम्नः पापनाशकत्वं क्व दृष्टमित्याशंक्य तत्र श्रुतिं प्रमाणयति । य इति । यः पापाचारी चांडालसाम्यं प्राप्तः स च
शिवेति वाचा वदेत्तर्हि तेन सहाश्रीयात्तेन संवसेत् ग्रामं कुर्यादिति पश्चादरेण साक्षाच्छ्रुतिः प्राह । तथा च श्रुतिः । "अपि वा यश्चांडालः शिवेति वाचं

विद्वांसो वदवश्चात्र श्रुतिस्मृत्यर्थकोविदाः ॥ अस्मिन्क्षेत्रे हि मुञ्जन न योग्यं कर्तुमीदृशम् ॥५८॥ इत्यादि बहुशः पृष्टः सांबः काशी
स्थपंडितैः ॥ साक्षाच्छिवः स्वनामत्तं श्रुत्युक्तं कर्तुमब्रवीत ॥५९॥ श्रीसांब उवाच ॥ प्रायश्चित्तैः कृच्छ्रचांद्रायणाद्यैर्दीर्घाचीर्णैर्यन्न
नश्यत्यघं यत् ॥ ब्रह्मांडेस्मिन्कर्तुमीशो न कश्चित्तन्नश्यत्येतत्सकृच्छिवेत्येकवाचा ॥ ६० ॥ यश्चांडालसाम्यं प्रयातः पापाचारी
चेत्स वाचा शिवेति ॥ वक्ताश्रीयात्तेन साकं वसेच्च प्राहैतत्साक्षात्सादरेण श्रुतिश्च ॥ ६१ ॥ इत्थं श्रुत्या नाम शंभं तु गीतं तस्माद्धोच्चैः
प्रस्खलन्द्विः किलायम् ॥ निष्पापात्तश्चैकपंक्तौ मयापि श्रीनाथाज्ञयाद्य क्रमेणेन साकम् ॥ ६२ ॥ श्रुत्वेत्येवं पंडितास्ते पुनश्च श्रौतं
वाक्यं तद्धि नामप्रशंसि ॥ भक्तिर्लोके चास्तु नाम्नीति नोचेन्नश्यत्येवानादिमत्कर्मनाशः ॥ ६३ ॥

वदेत्तेन सह संवसेत् । तेन सह भुंजीयात्" इति । तथा च विष्णुभागवते । "यद्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसंगादघमाशु हंति तत्" इति तथा च श्रुतिस्मृ
तिप्रसिद्धप्रायश्चित्तापेक्षया केवलं स्मृत्युक्तकृच्छ्रादिप्रायश्चित्ताचरणस्याकिंचित्करत्वादिति भावः ॥ ६१ ॥ कथमनेन भोजनं कृतमित्यस्योत्तरमाह ।
इत्थमिति । अयं ब्राह्मणः स्खलन्द्विवारं श्रुतिप्रसिद्धं शिवनामोच्चैरुक्तवान । अतोयं निष्पापोऽस्ति मयापि श्रुतिवाक्यप्रमाणहेतोस्तेन सह भोजनं कृतम् ।
प्रायश्चित्तपदस्य पश्चात्तापवाचित्वात्पश्चात्तापवतानेन सर्वमनुष्ठितमित्यर्थः ॥ ६२ ॥ अपि वा यश्चांडाल इति श्रुतिवाक्यं यत्तच्छिवनाम्नि लोकानां भक्ति

सिद्ध्यर्थं नाम प्रशंसापरमस्ति । अन्यथा अनादिपरंपराप्राप्तोयं कृच्छ्रचांद्रायणादिसत्कर्ममार्गो नष्ट एव भवेत् ॥ ६३ ॥ शिवनाम्नैवास्य पापं नष्टमित्यत्र प्रत्यक्षं प्रमाणं कांक्षंत आहुः । नाम्नेति । यद्ययं पाषाणमयो नंदी पृष्ठदेशे वर्द्धितमुखः सन्नेतत्पातकिहस्ते तृणादि भक्ष्यं भक्षयिष्यति तर्हि तदा ब्रह्महत्योद्भवमेतस्य पापं नष्टमिति सर्वैरस्माभिर्मन्यते किल । अन्यथा नेत्यर्थः ॥ ६४ ॥ एवं श्रुत्वा शिवनाम्ना पवित्रब्राह्मणं प्रत्याह । त्वमत्र विश्वेशसन्निधौ तृणमानीय नंदिनः पृष्ठभागे त्यक्त्वा शिवनाम्नाहं पूतश्चेत्तर्हि तृणभक्षणार्थमयं नदी वर्द्धितमुखो भवत्विति उच्चारयेत्यर्थः ॥ ६५ ॥ दीक्षितेनोक्तं यावत्स कृतवांस्तावद्दीक्षितेनोभयान्वयि । अद इदं नंदिनस्स्तोत्रं कृतम् । तत्र दृष्टांतः । आपत्काले गुप्तरूपत्वेन स्वामिना कर्त्रा भृत्यस्य स्तोत्रं यथा क्रियते तथेत्यर्थः ।

नाम्ना नष्टं ब्रह्महत्योत्थपापमित्थं सर्वैर्मन्यते चेत्किलायम् ॥ नंदी भक्ष्यं भक्षयिष्यत्यमुष्य हस्तादत्तं पृष्ठतोवर्द्धितास्यः ॥ ६४ ॥
आकर्ण्यैत्थं दीक्षितो नाम पूतं प्राहानीयात्रास्य पश्चात्तृणं च ॥ त्यक्त्वा ब्रूहि ब्रह्महाहं शिवोक्त्या चेत्पूतोतुं नंद्यदोवर्धितास्यः ॥६५॥
चक्रे चोक्तं सोपि तद्दीक्षितेन तावत्स्तोत्रं नंदिनोदः कृतं हि ॥ भृत्यस्येशेनेव संछन्नरूपादापत्काले तद्धि वेत्त्येव भृत्यः ॥ ६६ ॥
दीक्षित उवाच ॥ अग्रणीस्त्वमसि शैवगणेषु वेत्सि वैभवमतः शिवनाम्नः ॥ भुंक्ष्व तार्णकवलं मुखवृद्ध्या दर्शय त्वमधुना श्रुतिवाक्यम् ॥६७॥ खंडितुं वृषमदं वृषभस्त्वं चार्थितोसि मुनिना शिखिनाम्ना ॥ दीर्घचीर्णतपसास्य शिखायाश्चावतीर्ण इह चेश्वरमूर्तिः ॥
॥ ६८ ॥ प्राश्य जन्मनि पयोपि पयोब्धौ रक्षकांश्च जितवान्हि सविष्णून् ॥ पीतमंशुकमपि स्वविषाणाद्दत्तमेव हरये वरदाय ॥६९॥

तदीशकृतं स्तोत्रं भृत्यो वेत्ति तद्वत्सांबदीक्षितकृतं स्तवनं नंदिकेश्वरो जानातीत्यर्थः ॥ ६६ ॥ तत्रादौ स्वेष्टं प्रार्थयते । हे नंदिन् त्वं शिवगणश्रेष्ठोसि अतः शिवनाम्नः सामर्थ्यं जानासि । अतस्तृणकवलं मुखवर्द्धनेन भुंक्ष्व । तेन च श्रुतिवाक्यं शिवनाम्नः पापनिवृत्तिप्रतिपादकमृतं सत्यमस्तीति दर्शय त्वया तृणभक्षणे कृते सति शिवनाम्नः सामर्थ्यमेतं जानीयुरित्यर्थः । स्वागतावृत्तम् ॥ ६७ ॥ एवं स्वेष्टं संप्रार्थ्य काशीखंडोक्तकथानुसारेण स्तौति । खंडितुमिति । शिखिनाम्ना मुनिनेंद्रगर्वहरणाय त्वं प्रार्थितोसि । बहुकालानुष्ठिततपसा हेतुना तस्य शिखास्थानाद्ब्रह्मादीश्वरत्रयमूर्तिस्त्वं प्रादुर्भूतोसि ॥ ६८ ॥ किं च जन्मकाले क्षीरसमुद्रे दुग्धं पीत्वा विष्णुसहितान्क्षीराब्धिरक्षकाञ्जितवानसि । तदा वरदायापि विष्णवे वरप्रदानेन त्वया स्वशृंगदेशात्पीतमंशुकमर्पितं

तेन पीतांबरधारी विष्णुर्जातः ॥ ६९ ॥ इंद्रमदहरणं यथा कृतं तदाह । नंदनात्तृणगन इति । नंदनवने भक्षितनृणेन भवतेंद्रो निर्जितोस्ति । स चेद्रः स्वसहायार्थं शिवं प्रति स्वर्गं निनाय । तं सगणं निर्जित्य वरप्रदस्य शंभोरपि वरदो भूत्वा तस्य वाहनं स्वयं जातोसि ॥ ७० ॥ तथा च त्वमेव जगतः पालनसंहारोत्पत्तिकर इत्याह । पातीति । विष्णुस्त्वदर्पितवस्त्रानुगृहीतः सन्सर्वान्रक्षति । शिवोपि त्वद्गमनसामर्थ्येन सर्वान्संहरति । विधिर्ब्रह्मा त्वज्जातिनिमित्ता या कृषिस्तस्याः सकाशादुत्पन्नान्नेन हेतुना रेतोजननद्वारा सृजति हि । तस्माद्वै निश्चयेन देवनात्रयरूपस्त्वमसि । अतो महाशक्तस्त्वं ममैनां प्रार्थनां

नंदनात्तृणतो भवतेंद्रो निर्जितः स शिवमत्र निनाय ॥ तं विजित्य सगणं त्वथ शंभोर्वाहनं त्वमभूर्वरदस्य ॥ ७० ॥ पाति विष्णुरिह ते धृतवस्त्रो हंति शंभुरपि ते गतिवीर्यात् ॥ त्वत्कृषेर्हि जनिताद्विधिरन्नाच्चाखिलान्सृजति वै त्रितनुस्त्वम् ॥ ७१ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं स्तोत्रं दीक्षितोक्तं निशम्य नंदी पश्चाद्वर्धयित्वा निजास्यम् ॥ तार्णं ग्रासं भक्षयामास तेषु पश्यत्स्वेवात्यद्भुतं मेनिरे ते ॥ ७२ ॥ नत्वा सर्वे दीक्षितं पंडितास्ते प्राहुः साक्षात्त्वं शिवो नैव मर्त्यः ॥ स्थाणुर्नंदी वर्धितोयं त्वयास्यात्तस्मान्नाम्ना नंदिवर्धापनस्त्वम् ॥७३॥ ब्रह्मघ्नं तं पावयित्वा शिवोक्त्या नंद्यास्यर्ध्या सा कृतता श्रुतेर्वाक् ॥ एवं लब्ध्वा नंदिवर्धापनाख्यां सांबः काश्याः शिष्ययुक् प्राप कांचीम् ॥ ७४ ॥ यश्चावतीर्णः शिव एव कांच्यां श्रीसांबसंज्ञोथ विवर्ध्य काश्याम् ॥ नंद्यास्यकं नंदिविवर्द्धनोभूत्तं सप्तषष्ट्याढ्यशतं नताः स्मः ॥ ७५ ॥

स्वीकुर्वित्यर्थः ॥ ७१ ॥ तं ब्राह्मणार्पितं तृणग्रासं भक्षितवान् । ते काशीस्था अत्याश्चर्यं मेनिरे । शालिनीवृत्तम् ॥ ७२ ॥ स्थाणुः पाषाणमयोपि नंदी त्वयास्यान्मुखाद्वृद्धिं प्रापितो यस्मात्तस्मात्त्वं नाम्ना नंदिवर्द्धनो भवेत्यर्थः ॥ ७३ ॥ ब्रह्मघ्नमिति देशिकोक्तिः। नंद्यास्यस्य नंदिमुखस्य वृद्ध्या कृता सत्या कृता शिष्ययुक्तः सांबदीक्षितो काश्याः सकाशात्कांचीं प्राप्तः ॥ ७४ ॥ सप्तषष्ट्यधिकशतसंख्यं नंदिवर्धनानंदं प्रणमामि । य इति । नंदिमुखं विवर्ध्य नंदि

वर्धननामा यो जातस्तं नताः स्मः ॥ ७५ ॥ एतत्सर्गोक्तवाक्परनंदिवर्धनगुरुद्वयकथाश्रवणादेः फलमाह । गीतिः ॥७६॥ इति श्रीगुरुपरंपराचरित्रोत्त रार्धटीकायामर्थस्फूर्त्यभिधायां विंशः सर्गः ॥ २० ॥ उदेकविंशकैकांकार्थैः षट्देशिकाः स्मृताः । मुक्तापीडात्क्रमेणैव पृथक् तत्तत्कथानकैः ॥ २१ ॥ नंदिवर्द्धनसंज्ञस्येति । द्वयोः आसीदित्यध्याहारः ॥ १ ॥ २ ॥ ३ ॥ अज्ञात्वैवेति पूर्वान्वयि । उत्तरार्धे ददर्शेति क्रियाध्याहारः ॥४॥ तेन राज्ञा हेतु

वाक्परनंदिविवर्द्धनचरितं प्रपठेच्छृणोति वा भक्त्या ॥ सत्पुत्रतां सुकीर्तिं लब्ध्वा परमेति मद्गुरोर्बोधात् ॥७६॥ इति श्रीगुरुपरंपराच रित्रोत्तरार्द्धे वाक्परनंदिविवर्द्धनानंदगुरुद्वयकथावर्णनं नाम विंशःसर्गः ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ नंदिवर्द्धनसंज्ञस्य पुत्रः कांचीपुरस्थितः ॥ वेदवेदांगतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ १ ॥ लब्ध्वापितुर्महामंत्राजस्त्रपूजापरायणः ॥ शिष्यांश्चाध्यापयन्नित्यम ग्निहोत्रादिकर्मकृत् ॥ २ ॥ सोप्येकदा गतः काशीं शिष्यैः पत्न्या च बांधवैः ॥ मार्गे व्रजन्ददर्शाथ साधून्दंभान्वितान्बहून् ॥ ३ ॥ अज्ञात्वैव महामंत्रानुपदेष्टॄन्निजेच्छया ॥ कांश्चिच्छूद्रांश्च दंभाढ्यान्ब्राह्मणाधिक्यमानिनः ॥ ४ ॥ मनस्याहायमन्यायः कथनीयो नृपाग्रतः ॥ शिक्षणीयाश्च तेनामी करिष्यंति यथेति नो ॥ ५ ॥ निश्चित्येति नृपं ज्ञात्वा यवनं तस्य मंत्रिणम् ॥ गोपालाख्यं ययौ सुज्ञं तीव्रदंडं कृतागसाम् ॥ ६ ॥ मानितो मंत्रिणाऽथास्मै वृत्तं प्राह स देशिकः ॥ देशिक उवाच ॥ व्रजता तीर्थयात्रार्थं दृष्टोऽन्यायो मया त्विह ॥ ७ ॥ राजभंगकरो नूनं स निवार्योऽधिकारिणा ॥ अज्ञात्वैव मनून्दंभात्संतश्चोपदिशंति हि ॥ ८ ॥ केचिच्छूद्राश्च विप्रादीनुपदिश्यात्तपूजनाः ॥ राष्ट्रभंगकरं चैतदत्रागमवचः शृणु ॥ ९ ॥ अपूज्या यत्र पूज्यंते पूज्यानां च व्यतिक्रमः ॥ त्रीणि तत्र प्रजायंते दुर्भिक्षं मरणं भयम् ॥ १० ॥

भूतेन अमी दंभिनः साधवः शिक्षणीयाः।मयेति शेषः । यथा इति।उपदेशं न करिष्यंति॥५॥अपराधवतां तीव्रो दंडो यस्मात्तं स ययौ॥६॥इह त्वद्देशे ॥७॥ स अन्यायः । तमेवाह अज्ञात्वेति॥८॥स्वीकृतपूजा भवंति । एतद्ब्राह्मणैः शूद्रपूजनम्॥९॥आगमवाक्यमाह । अपूज्या इति। व्यतिक्रमः व्यत्ययः॥१०॥

॥ॐ॥अथ कन तदुपदेशः कर्तव्य इत्यत आह । ब्राह्मण इति ॥ १२॥१३॥ राजेति विरागिणामेनोजगद्वं योन्यत्र।अनघेति मंत्रिसंबोधनं तेन निष्पापे त्वय्येतदयुक्तमित्यर्थः ॥१४॥ ते त्वया मत्तः मया निमित्तेन ॥१५॥१६॥ संत इत्युभयान्वयि ॥ १७ ॥ १८ ॥ स नंदिवर्द्धनपुत्रः ॥ १९ ॥ २० ॥

अपरीक्ष्य गुरुं मंत्रान् यो गृह्णाति तथैव तान् ॥ अविदित्वैव यो दत्ते तौ द्वौ निरयसेविनौ ॥ ११ ॥ ब्राह्मणः पूर्णदीक्षावान् शांतो निस्पृह आत्मवान् ॥ सर्वान्मंत्रान्समादेष्टुं सोधिकारी न चापरः ॥ १२ ॥ इत्याद्यागमवाक्यानि चाविदित्वा धनार्थिनः ॥ संतस्त्वाधुनिकाः संति गतानुगतिका जनाः ॥ १३ ॥ प्रजाश्चाधर्मकारिण्यस्ताश्चेद्राज्ञा न वारिताः ॥ क्लिश्यते तत्कृतात्पापादिहा मुत्रापि चानघ ॥ १४ ॥ तस्मात्पाचारितव्यास्ते साधवो बहुमानतः ॥ प्रष्टव्याश्च ततो मत्तः समक्षं शृण्वता त्वया ॥ १५ ॥ नंदिवर्द्धनपुत्रेण मंत्रिवर्य इतीरितः ॥ साधून्पाचारयामास स्वदूतैर्देशदेशतः ॥ १६ ॥ तेपि दंभान्विताः शीघ्रं ययुः संतोऽद्य मंत्रिणा ॥ पूज्यंते वस्त्रभूषाद्यैरिति बुद्ध्या त्वरान्विताः ॥ १७ ॥ नृत्यंतो वीणया तालमृदंगाद्यैश्च गर्जनाम् ॥ कुर्वंतो मीलिताः सर्वे प्रधानद्वार बाह्यतः ॥ १८ ॥ मंत्रिणा भोजिताः सर्वे स्थिताश्चैकत्र तान्पृथक् ॥ पप्रच्छ देशिकः सोथ प्रौढवाण्येति मंत्रवित् ॥ १९ ॥ देशिक उवाच ॥ मंत्रोपदेशः शिष्येभ्यो भवद्भिः क्रियतेऽखिलैः ॥ मंत्रं दातुं ग्रहीतुं च कोऽधिकारीति कथ्यताम् ॥ २० ॥ कः कालः कश्च देशोत्र सिद्धार्णाख्यधनर्णयोः ॥ कथं शुद्धिस्तु देवस्य कस्य किं बीजमीरितम् ॥ २१ ॥ ऋषिश्छंदो देवता च ध्यानं मुद्रार्चनादिकम् ॥ त्रिवर्णांश्चोपदिश्यंते भवद्भिः किं त्रिसेविभिः ॥ २२ ॥ स्वधर्मः श्रेयसेऽल्पोपि महांश्चान्यो हि दुःखदः ॥ पृष्टाः सर्वेऽमुनेत्यादि बहुशो नोचुरण्वपि ॥ २३ ॥ अज्ञातमंत्रास्तत्तेजोजिताश्चामात्यभीरवः ॥ तूष्णीं स्थितानथाहोच्चैः साधून्मंत्रीति भर्त्सयन् ॥ ॥ २४ ॥ मंत्र्युवाच ॥ यूयं मंत्रोपदेष्टारो युष्मान्पृच्छति मंत्रवित् ॥ सर्वे तद्विषयं तस्य किं न ब्रूथाद्य चोत्तरम् ॥ २५ ॥

सिद्धारिचक्रं ऋणधनशुद्धिः । कस्य बीजं का देवता कथिता॥२१॥ऋषिच्छंदादिकं सर्वं कथ्यताम् । एवं ब्राह्मणसाधून् पृष्ट्वा शूद्रांश्चाह । किमर्थं त्रिवर्णसेवकैर्भवद्भिरुपदेशः क्रियते ॥ २२ ॥ २३ ॥ अमात्याद्दंडकर्तुः सचिवाद्भयवंत इति । पूर्वार्द्धं पूर्वान्वयि ॥ २४ ॥ तद्विषयं मंत्रविषयम् ॥ २५ ॥

राष्ट्रेऽधर्मप्रवृत्त्या राज्ञो दुःखदाः ॥ २६ ॥ राष्ट्रस्थितानां दुःखकराः । तत्र निदर्शनं अवर्षणमिति ॥ २७ ॥ २८ ॥ साधुलांछने साधुचिह्नवति पुरुषे ॥
॥ २९ ॥ ३० ॥ ३१ ॥ नंदिवर्द्धनपुत्रस्य नामप्राप्तिप्रयोजनमाह दांभिका इति ॥ ३२ ॥ द्वितीयनामप्राप्तिप्रयोजनमाह मुक्तामयैरिति । आपीडैः

अज्ञाता उपदिश्यंते भवद्भिर्मनवोऽखिलाः ॥ यतः प्रजानां दुःखं स्याद्राष्ट्राधर्माच्च भूपतेः ॥२६॥ राष्ट्रदुःखकरा नूनं शूद्रैर्या साधुतास्थितिः ॥ अवर्षणं रामराज्ये प्राक्शूद्रतपसा ह्यभूत् ॥ २७ ॥ नातः परममंत्रज्ञैर्ब्राह्मणैरपि मत्प्रजाः ॥ उपदेश्यास्तथा शूद्रैः सर्वथैव ममाज्ञया ॥ २८ ॥ ममाज्ञाभंगिनो ये तु तानहं देशतो बहिः ॥ निर्वासयिष्ये को दंडोऽन्यः कार्यः साधुलांछने ॥ २९ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमुक्तास्तु विण्मूत्रोत्सर्जनादिमिषात्ततः ॥ ययुश्चैकैकशः सर्वे मंत्रिणा वारितास्तदा ॥ ३० ॥ केचिन्मुक्ताश्च सर्वज्ञास्तत्रासंस्तान्स देशिकः ॥ मंत्रिणा पूजयामास बहुमानपुरःसरम् ॥ ३१ ॥ दांभिकाः पीडिता इत्थं मुक्ताश्चापीडितास्तथा ॥ येन तस्याभवन्नाम मुक्तापीड इति श्रुतम् ॥ ३२ ॥ मुक्तामयैस्तथाऽऽपीडैः पूजितो मंत्रिणा यतः ॥ मुक्तापीडानंदनाथः प्रोक्तः सर्वज्ञपंडितैः ॥ ३३ ॥ विलिल्युरेव तन्नाम श्रुत्वा दांभिकसाधवः ॥ ययौ काशीं पथा वीक्ष्य दांभिकानिति शिक्षयन् ॥ ३४ ॥ पीडां ययुर्दंभिन एव संतोऽपीडां यतः सर्वविदोऽथ मुक्ताः ॥ तमष्टषष्ट्याढ्यशतं हि मुक्तापीडाभिधं श्रीगुरुमानताः स्मः ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ मुक्तापीडानंदनाथः कृत्वा यात्रां त्रिकस्थलीम् ॥ स्वीयैर्गत्वा ततोऽयोध्यामथागान्मथुरापुरीम् ॥ ३६ ॥ आसीत्कश्चिद्द्विजस्तत्र विद्वान्संपत्समावृतः ॥ कस्माच्चिद्देशिकाल्लब्धुं महामंत्रान्सदेच्छति ॥ ३७ ॥ नैव प्राप गुरुं कंचिन्मंत्रनेतारमंजसा ॥ मुक्तापीडभयाद्व्यासंस्तदा लीनाश्च मांत्रिकाः ॥३८॥ दैवात्प्राप्तमिति श्रुत्वा मुक्तापीडाख्यदेशिकम् ॥ सर्वमंत्रविदां श्रेष्ठं ख्यातं दांभिकशिक्षकम् ॥३९॥ तं ययौ शरणं भक्त्या ब्राह्मणः स तु माथुरः ॥ तं ज्ञात्वा नैष्ठिकं दीक्षां मुक्तापीडस्तदा ददौ ॥ ४० ॥

भूषणैः ॥ ३३ ॥ ३४ ॥ अष्टषष्ट्यधिकशतसंख्यं मुक्तापीडानंदं प्रणमति । यतः यस्मात् ॥ ३५ ॥ त्रिकस्थलीं काशीगयाप्रयागरूपां त्रिस्थलीम् ॥
॥ ३६ ॥ तत्र मथुरायां इच्छति इच्छितवान् ॥ ३७ ॥ तदा मुक्तापीडानंदभयेन मंत्रज्ञाः गुप्ता आसन् । हि निश्चये ॥ ३८ ॥ दैवादिति

सार्द्धान्वयः ॥ ३९ ॥ ४० ॥ पूर्णामिति पूर्वान्वयि ॥ ४१ ॥ पूर्वार्द्धं पूर्वान्वयि उत्तरार्द्धमुत्तरान्वयि ॥ ४२ ॥ ४३ ॥ एकोनसप्तत्य
धिकशतसंख्यं माथुरानंदं प्रणमति । य इति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ धर्मकीर्तिमिति पूर्वान्वयि ॥ ४८ ॥ तत्रस्मृति

पूर्णी चाख्यां चकारास्य माथुरानंद इत्यसौ ॥ ततः कांचीं ययौ स्वीयैर्मुक्तापीडो धरातले ॥ ४१ ॥ शिक्षयित्वा ततः सर्वान्कीर्तिं कृत्वा सुविश्रुताम् ॥ माथुरानंदनाथस्तु मथुरायां वसन्सुधीः ॥ ४२ ॥ प्रजपन्कृपया मंत्रांस्तथात्माभिन्नदेवताम् ॥ पूजयन् सिद्धवर्योऽभूत्ख्यातः साधुजनाग्रणीः ॥ ४३ ॥ यः प्राप मंत्रानखिलांश्च मुक्तापीडाद्विशिष्टान्मथुरानगर्याम् ॥ तमूनसप्तत्यधिकं शताख्यं श्रीमाथुरानंदगुरुं नताः स्मः ॥ ४४ ॥ श्रीदेशिकेंद्र उवाच ॥ माथुरानंदनाथस्य पुत्रोथापीत्सुधीः कृती ॥ सांगवेदाशयाभिज्ञः स्मृतितात्पर्यवित्शुचिः ॥ ४५ ॥ पितुरेवाखिलान्मंत्राँल्लब्ध्वा सर्वागमैः सह ॥ आगमोक्ताखिलान्धर्मांश्चक्रे सांगान्सुनिष्ठया ॥४६॥ श्रुतिस्मृत्यागमोक्तांश्च धर्मान्सांगान्प्रकुर्वतः ॥ कीर्तिस्तस्याभवल्लोके तयाहुस्तमथाखिलाः॥४७॥धर्मकीर्तिमिति ख्यातं नामास्यैतद्बभूव च ॥ प्रष्टुं त्रिधर्मान्दूरात्तं विद्वांसोपि समाययुः ॥ ४८ ॥ तंत्रस्मृतिश्रौतगतान्हि धर्मान्कुर्वन्स्वयं चादिशदेष सर्वान् ॥ गुरुं तु सप्तत्यधिकं शताख्यं तं धर्मकीर्त्याभिधमानताः स्मः ॥ ४९ ॥ श्रीदेशिकेंद्र उवाच ॥ अथासीत्पूर्वविषये ब्राह्मणः शास्त्रवित्तमः ॥ भक्तिमान्देवताचार्यां नैवार्चनविधिं त्वसौ ॥ ५० ॥ वेत्ति मंत्रांश्च याथार्थ्याद्गृहीतुं चाखिलं गुरोः ॥ देशं बभ्राम नैवाप श्रौतस्मार्ताविरोधतः ॥ ५१ ॥ स्वाभिन्नदेवताभक्तं गुरुं मंत्रविदां वरम् ॥ अथाशृणोद्धर्मकीर्तिं त्रिधर्मसमवर्तिनः ॥५२॥

कशतसंख्यं धर्मकीर्त्यानंदं प्रणमति तंत्रेति ॥ ४९ ॥ पूर्वविषये पूर्वदेशे मैथिलसंज्ञके । नैवेत्याद्युत्तरान्वयि ॥ ५० ॥ श्रौतस्मार्ताविरोधेन स्वाभिन्नदेवतोपासकं मंत्रविच्छ्रेष्ठं गुरुं नैव स प्रापेत्यन्वयः ॥ ५१ ॥ त्रिषु धर्मेषु श्रौतस्मार्तोपासनारूपेषु सम्यग्वर्तते यस्तस्य कीर्तिं दूराच्छुश्रावेत्यन्व

न्वयः ॥ ५२ ॥ हेतुं निमित्तं कृत्वा ॥ ५३ ॥ सद्धर्महेतुना उत्तमधर्मशांतिकारणेनागतोयमिति हेतुना हेतुकानंद इत्यनेन गुरुणा धर्मकीर्तिनास्य नाम कृतमिति योज्यम् ॥ ५४ ॥ सर्वमंत्ररहस्यम् ॥ ५५ ॥ एकसप्तत्यधिकशतसंख्यं हेतुकानंदं प्रणमति त्रिधर्मसाम्यमिति । त्रिधर्माणां साम्यं यस्मात्तं विचिन्वन् यो धर्मकीर्तेः सकाशात्तत् श्रौतस्मार्तोपासनासमत्वं प्राप्तः तं नताः स्मः ॥ ५६ ॥ स्वविषयं स्वदेशम् ॥ ५७ ॥ ५८ ॥ सुब्रह्मण्यस्य स्कंदस्य

कीर्तिं दूरात्स एवातो गुरुरस्तु ममेत्यसौ ॥ कृत्वा हेतुं धर्मकीर्तिं मथुरावासिनं ययौ ॥ ५३ ॥ बहुशः प्रार्थयित्वास्माद्दीक्षां पूर्णां स चाग्रहीत् ॥ सद्धर्महेतुना दूरादागतोऽयमतोऽमुना ॥ ५४ ॥ हेतुकानंद इत्यस्य नाम श्रीगुरुणा कृतम् ॥ सर्वं लब्ध्वा गुरोः सोऽथ सिद्धवर्यो बभूव च ॥ ५५ ॥ त्रिधर्मसाम्यं हि गुरुं विचिन्वन्हेतोस्तदेशाप च धर्मकीर्तेः ॥ यश्चैकसप्तत्यधिकं शताख्यं तं हेतुकानंद गुरुं नताः स्मः ॥ ५६ ॥ श्रीदेशिकेंद्र उवाच ॥ हेतुकानंदनाथोथ गत्वा स्वविषयं गृहे ॥ तस्थौ मंत्राञ्जपन्नित्यं पूजयन्स्वेष्टदेवताम् ॥ ५७ ॥ पुत्रस्तस्य बभूवाथ सल्लक्षणगुणाकरः ॥ उपनीतः प्राप्तविद्यः कृतोद्वाहः क्रमेण सः ॥ ५८ ॥ जगृहे स्वपितुर्मंत्रान्पूर्णदीक्षाविधानतः ॥ अथार्चनं चकारासौ सुब्रह्मण्यस्य भक्तितः ॥ ५९ ॥ नित्यं सावरणं भक्त्या पुरश्चर्याविधानतः ॥ जजाप मंत्रं तस्यैव दशार्णं वर्णलक्षतः ॥६०॥ बभूव सिद्धमंत्रोऽथ हेतुकात्मज आत्मवान् ॥ दर्शनाद्दुद्रुवुस्तस्य सर्पा नागाश्च दूरतः ॥६१॥ यत्करस्पर्शनादेव महाहेरपि दंशजम् ॥ विषं याति शमं चेत्थं सिध्या प्राहुरथाखिलाः ॥ ६२ ॥ तं नागवैद्यमित्येव ख्यातं नामास्य चाभवत् ॥ दूरान्निन्युः सर्पदष्टं यत्नात्तं विषशांतये ॥ ६३ ॥ जपेन तु स्कंदमनोर्हि सिद्धिं यः प्राप नागोत्थविषप्रहंता ॥ गुरुं द्विसप्तत्यधिकं शताख्यं तं नागवैद्याभिधमानताः स्मः ॥ ६४ ॥

॥ ५९ ॥ नित्यमावरणसहितमिति पूर्वान्वयि । वर्णलक्षतः दशलक्षसंख्यया ॥ ६० ॥ ६१ ॥ ६२ ॥ तं नागवैद्यमिति पूर्वान्वयि । इतीत्युभयान्वयि । सर्पदष्टं पुरुषं तं नागवैद्यं प्रति निन्युः । जना इति शेषः । नयतेर्द्विकर्मकत्वम् ॥ ६३ ॥ द्विसप्तत्यधिकशतसंख्यं नागवैद्यानंदं प्रणमति । जपेनेति ॥ ६४ ॥

॥ ६५ ॥ तीर्थेषु मज्जनक्षेत्राणि पश्यन्निति संबंधः । पूर्वदेशम ॥ ६६ ॥ अथानयोर्ज्येष्ठो भोज इति संबंधः ॥ ६७ ॥ वृद्धः पिता द्वयोरन्यत राय राज्यं दातुं यदा इच्छावान् तदा मिथः प्रीत्या न स्वीकृतवंताविति योज्यम् ॥ ६८ ॥ राज्यानंगीकारे हेतुमाह। चेदित्युत्तरान्वयि । मत्सरं द्वेषम् ॥

श्रीदेशिकेंद्र उवाच ॥ नागवैद्यानंदनाथः कदाचित्पर्यटन्महीम् ॥ तीर्थयात्रामिषात्पुंसां जहारार्तीः स्वसिद्धितः ॥६५॥ मज्जनक्षेत्राणि तीर्थेषु पश्यन्प्राप्तः स पुष्करम् ॥ स्नात्वा तत्र व्रजन्पूर्वं चापश्यन्नगरं महत् ॥ ६६ ॥ धार्मिकस्तत्र राजासीद्द्वौ पुत्रौ तस्य चासतुः ॥ युवानौ बलसंपन्नौ कृतोद्वाहावथानयोः ॥ ६७ ॥ जेष्ठो भोजः कनिष्ठस्तु जयसिंहाभिधः सुधीः ॥ वृद्धः पिता निजं राज्यं द्वयो रन्यतराय च ॥६८॥ दातुमिच्छुर्मिथः प्रीत्या न स्वीचक्रतुरेव तौ ॥ चेल्लब्धं राज्यमेकेन तेनान्यो मत्सरं हृदि ॥ ६९ ॥ करिष्यति कुतः प्रीतिर्नौ स्याच्चाधुनिकी यथा ॥ इत्यस्वीकृतराज्यौ तौ मिथः प्रेमान्वितौ पितुः ॥ ७० ॥ आज्ञया दुर्जयाञ्छत्रून्वशं चक्रतुरो जसा ॥ ग्रीष्मर्तावातपोत्तापादेकदा तौ सरोवरम् ॥ ७१ ॥ जग्मतुः क्रीडनार्हाब्धौ सुप्ते पितरि तद्द्वयौ ॥ उत्तीर्य यानात्संस्थाप्य वस्त्राद्यं सरसस्तटे ॥ ७२ ॥ तद्रक्षणेनुगान्युक्त्वा क्रीडनं चक्रतुर्जले ॥ चिरं विक्रीडनाच्छ्रांतो भोजः प्राप्तः सरस्तटम् ॥ ७३ ॥ तावद्बिलान्महासर्पो निर्गतो गंतुमंभसि ॥ स्पृष्टो भोजेन चांघ्य्रग्रादहष्टोपि ददंश तम् ॥ ७४॥ तद्विषात्पपातोर्व्यां सोऽतिवाताद्दिव द्रुमः ॥ सहसा पतितं दृष्ट्वा भोजं भृत्याः समाययुः ॥ ७५ ॥ ददृशुस्ते महाहिं तं विशंतं स्वबिलं जवात् ॥ न शेकुर्हंतुमंतस्थं हाहाचक्रुस्तदाखिलाः ॥ ७६ ॥ बंधुर्महाध्वनिं श्रुत्वा जलात्तत्राययौ द्रुतम् ॥ महाहिदष्टं तं श्रुत्वा ज्येष्ठं चुक्रोश दुःखितः ॥ ७७ ॥

॥ ६९ ॥ इत्याद्युत्तरान्वयि ॥ ७० ॥ उत्तरार्द्धं परान्वितम् । आतपेन उष्णेन उत्कटतापवंतौ ॥ ७१ ॥ क्रीडनार्हैर्वस्त्रैर्युक्तौ तस्मात्पितुर्भयं यथो स्तौ पितारि सुप्ते सति सरोवरं ययतुः । उत्तीर्येत्युत्तरवद्धं यानत अश्वादिभ्यः ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ बंधुर्जयसिंहः ॥ ७७ ॥

वरास्तरणे ॥ ७८ ॥ वज्रघातसमं यथास्यात्तथा अत्र भोजममीदे ॥ ७९ ॥ जीवने जीवननिमित्तम् ॥ ८० ॥ अनसुं निष्प्राणं प्राणैः कंठस्थितैः सद्भिः मंत्रितोदकस्य मुखे प्रक्षेपो यदि तर्हि सर्वविषनाशको भवति अन्यथा नेत्यर्थः ॥ ८१ ॥ ८२ ॥ ८३ ॥ मार्गान्मार्गेण मृतमित्युत्तरान्वयि ॥ ८४ ॥ ॥ ८५ ॥ तं सुब्रह्मण्यं अस्य भोजस्य ॥ ८६ ॥ द्वादशहस्तः षण्मुखः शिवपुत्रः सूर्यसदृशतेजस्वी देवसेनापतिर्मयूरस्थितः स्कंदो महाविषमृतं भोज

तमुद्धृत्याथ वृक्षाधः शाययित्वा वरास्तरे॥ तस्थुः समंताद्दुःखाढ्याः केचिद्गत्वा नृपं जगुः ॥ ७८ ॥ वज्रघातसमं श्रुत्वा सर्पदष्टं सुतं पिता ॥ सामात्योत्र ययौ पत्न्या सस्नुषोपि तदा स्खलन् ॥७९॥ भोजं निष्प्राणमालोक्य शुशोचाथ नृपोऽखिलैः ॥ आनीतास्तत्र चामात्यैर्मांत्रिकास्तस्य जीवने ॥८०॥ दृष्ट्वानसुं तं प्राहुस्ते विना प्राणैः कथं भवेत् ॥ मंत्रैः संजीवनं चास्य प्राणैः कंठगतैरपि ॥ ॥ ८१ ॥ मंत्रितांब्वास्यनिक्षेपश्चाशीविषविषापहः ॥ श्रुत्वेत्थं मंत्रिणस्तस्य देहं संस्कर्तुमुद्यताः ॥ ८२ ॥ शुशोचाथ पितात्यंतं स्मृत्वा मातापि तद्गुणान् ॥ स्मृत्वास्य पत्नी बंधुश्च द्वयोः प्रीतिमलौकिकीम् ॥ ८३ ॥ तावत्तत्राययौ मार्गान्मार्गेणाखिलार्तिहा ॥ मृतं श्रुत्वाहिदंशेन गत्वा तस्य समीपतः ॥८४॥ शोचंतं प्राह तत्तातं शोकं मा कुरु चात्मजम् ॥ जीवयिष्ये मंत्रसिद्ध्या सुब्रह्मण्य प्रसादतः ॥ ८५ ॥ इत्युक्त्वा मंत्रितं तोयं सिषेचांगेस्य चानने ॥ निक्षिप्य देवं ध्यायंस्तं प्रार्थयत्यस्य जीवने ॥ ८६ ॥ श्रीनामदेव उवाच ॥ द्विषड्भुजः षण्मुख ईशपुत्रः कुमार आदित्यसमानतेजाः ॥ श्रीदेवसेनेट् च मयूरसंस्थोऽसुं जीवयत्वद्य विषान्महाहेः ॥८७॥ यस्य स्मृतेः कीर्तनतः प्रयांति नागा इवार्काभ्युदयाच्च चोराः ॥ जपान्मनोर्यस्य विषं सुधेव भावात्स चाहेर्विषतोद्य भोजम् ॥ ८८ ॥ चेद्देशिकांघ्र्योर्मम भक्तिरस्ति तथैव वैशाखपदेऽस्य मंत्रे ॥ त्रिष्वेष्वभिन्नत्वमहं यदीक्षे जीवत्वयं नागविषात्तदस्तु ॥ ८९ ॥

मद्य जीवयतु । उपजातिवृत्तम् ॥८७॥ यस्य स्मरणकीर्तनाभ्यां सूर्योदयेन चोरा इव नागाः प्रगच्छंति । यस्य मंत्रजपेन विषममृतमिव भवति । स सर्वविषा भोजं रक्षतु ॥ ८८ ॥ चेद्यदि गुरुचरणयोर्मम भक्तिरस्ति । तद्वद्वैशाखपदे विशाखस्य स्कंदस्येदं वैशाखं तस्मिन्पदे अस्य मंत्रे भक्तिरस्ति । त्रिषु

तेषु गुरुदेवतामंत्रेषु चेदभिन्नत्वमहं पश्यामि तर्हि नागविषेण प्राप्तमृत्युरयं जीवतु । " विशाखः शिखिवाहनः " इत्यमरः ॥८३॥ अथ नागविषेण गतप्राणो तमाह । हे भोज त्वं देवोसि देहादिसंगरहितः सन् मृत्युं जित्वाऽऽत्मसुखेन विहारं कुरु । हि यस्माद्देहसंग एव दुःखप्रदस्ति नान्यत् । किन्नूतदेहाद्यसंगाद्दुःखनिवृत्ति समाधिमूर्च्छासु दुःखाभावेन सुखदर्शनाद्देहतादात्म्यावस्थायामेव दुःखं भवतीत्यर्थः॥९०॥ अथ नागवैद्यगुरुणा मस्तकात्पादपर्यंतं तस्य देहं स्वकरेण स्पृष्ट्वा तत्करं धृत्वोत्थापितः सन् नेत्रे उन्मील्य पित्रादीन्सर्वान्ददर्श ॥ ९१ ॥ तच्छब्दौ पित्रादिवाचिनौ तव जीवनकर्तायं नागवैद्यो विष्णुः शिवोवास्ति किम् ॥

श्रीदेशिकेंद्र उवाच ॥ अथाह तं नागविषात्तसुं च देवो भवान्भोज विजित्य मृत्युम् ॥ देहाद्यसंगो विहरस्व सौख्याद्दुःखं हि तत्संगतिरेव नान्यत् ॥ ९० ॥ शीर्षात्ततोंघ्र्यंतममुष्य देहं स्पृष्ट्वा करात्तस्य करं च धृत्वा ॥ उत्थापितः श्रीगुरुणाय सोऽक्षिण्युन्मील्य पित्राद्यखिलानपश्यत् ॥९१॥ तान्प्राह यूयं किमिहागताश्च तेप्याहुरस्माहिविषेण मृत्युम् ॥ प्राप्तस्त्वमित्यत्र वयं समेतास्त्वज्जीवदोयं किमजोथ शंभुः॥९२॥श्रुत्वेति भोजस्तमथाह नत्वा त्वया करस्पर्शत एव मृत्योः॥ त्रातस्तथाज्ञानमनादि नष्टं ममाखिलं भाति मृषैव दृश्यम् ॥ ९३ ॥ नाहं तनुर्नेंद्रियवर्गकोंतर्नैवासवः किं मम तातमुख्याः ॥ सर्वैभ्य एवास्मि विमुक्तसंगः स्वयंप्रकाशोहमनादिदेवः ॥ ॥९४॥ उक्त्वेति तस्मादुदतिष्ठदेकः पश्यत्सु तातप्रमुखेषु भोजः ॥ बहूदिनः स्थातुमथाखिलैश्च गृहेषु नासीन्मतिनिश्चयोस्य॥९५॥ सिद्धेन देशान्भ्रमता ययौ स श्रीनागवैद्येन च भोजदेवः ॥ प्रोक्तोथ तत्रत्यनरैर्यतोस्य मृत्योः समुत्थानमिवामरस्य ॥ ९६ ॥

॥ ९२ ॥ तं नागवैद्यानंदं करस्पर्शतः हस्तस्पर्शेन अहं रक्षितः तथा मम अनादि अज्ञानं नष्टं सर्वं दृश्यं मृषा दृश्यते । महानुपकारस्त्वया कृत इति भावः॥ ॥९३॥ महत्कृपाजन्यं स्वानुभवं दर्शयति नेति । अहं देहो न । इंद्रियसमुदायो न । अंतः अंतरिंद्रियाणि मनःप्रभृतीनि न । प्राणाः नाहमस्मि । यदि तर्हि मम पित्रादयः संति किम् । अपि तु न । तर्हि कोसीति चेत्तत्राह सर्वसंगरहितः स्वयंप्रकाशोऽनादिदेवः परशिवोस्मि ॥ ९४ ॥ तस्मात्स्थानाद्गृहेषु स्थातुं सर्वैर्यद्यपि प्रार्थितस्तथापि गृहेष्विन्त्युभयात्क्वपि । गृहेषु स्थातुं भोजस्य बुद्धौ निश्चयो नाभवत् ॥ ९५ ॥ अस्य भोजस्यामरस्येवोत्थानं मृत्योः सकाशा

यतो जातं ततो हेतोस्तत्र निवासिभिर्भोजदेव इति प्रोक्तो नागवैद्येन सह ययौ ॥ १६ ॥ तस्मै भोजाय समस्ताञ्जनानात्मसमान्ज्ञानिनः कर्तुं आत्मदयाः शात्मदयाः ॥ १७ ॥ त्रिसतत्यधिकशतसंख्यं भोजदेवानंदं प्रणमति य इति । अहिदंशात्सर्पदंशेन उक्तं सर्वं मंत्ररहस्यं यस्मै तं नताः स्मः ॥ १८ ॥ एतत्सर्गोक्तमुक्तापीडानंदादिषड्गुरुपठनादेः फलं क्रमेणाह मुक्तापीडादिति । शालिनीवृत्तम् ॥ १९ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधाया

तस्मैददावात्मविदेपि मंत्रान्छ्रीनागवैद्यो भुवि संप्रदायम् ॥ प्रवर्तितुं ह्यात्मसमान्समस्तान् कर्तुं यतंत्यात्तदयाश्च मुक्ताः ॥१७॥ यो राजपुत्रोपि मृतोहिदंशात्संजीवितोसौ गुरुणोक्तसर्वः ॥ गुरुं त्रिसतत्यधिकं शताख्यं श्रीभोजदेवाभिधमानताः स्मः ॥ १८ ॥ मुक्तापीडात्षड्गुरूणां पठेद्यो गाथां शत्रुभ्यो जयं सत्सुतं च ॥ धर्मं निष्ठामीप्सितार्थान्सुसिद्धिमात्मज्ञानं संलभेद्वा शृणोति ॥ १९ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे मुक्तापीडादिषड्गुरुवर्णनं नाम एकविंशः सर्गः ॥ २१ ॥ श्रीदेशिकेंद्र उवाच ॥ आसीद्गोदातटे कश्चिद्ब्राह्मणो मधुसूदनः ॥ श्रुतिस्मृतिपुराणज्ञोऽतेवास्यध्यापकः सदा ॥ १ ॥ चत्वारस्तस्य पुत्राश्च विद्वांसस्ते कृतोद्वहाः ॥ करोत्यखंडितं कर्म श्रौतं स्मार्तमतंद्रितः ॥ २ ॥ इत्थं ख्यातस्य विप्रस्य प्राप्तोदग्रयसो गृहम् ॥ चोराणामधिपो वृद्धस्त्यक्तचौर्यः प्रतप्तधीः ॥ ३ ॥ दातुं भूरि धनं तस्मै ययौ स्वकृतशांतये ॥ ज्ञात्वाऽपिनं तं चोरेशं नास्माज्जग्राह तद्धनम् ॥ ४ ॥ पापभीरुर्द्विजो थासौ निषिद्धस्तत्सुतैः स्त्रिया ॥ नैव त्याज्यं धनं भूरि किमर्थं तत्र संस्थितम् ॥ ५ ॥ नान्ये पापेन लिप्यंते कलौ कर्त्रैव लिप्यते ॥ इत्याग्रहात्स्वकीयानां कष्टात्तन्मधुसूदनः ॥६॥ दैवमेव परं मत्वा जगृहेऽस्माद्वयं वहन् ॥ दृष्ट्वा भूरिधनं लब्धं तुष्टाः पुत्रादयस्ततः ॥ ॥ ७ ॥ कालेनाभूत्कृष्णकुष्ठी मधुसूदनसत्तनौ ॥ वैवर्ण्यतोतिलज्जाढ्यस्तिष्ठत्यंतर्गृहे द्विजः ॥ ८ ॥ आच्छाद्यांशुकेरंगं गच्छत्येष बहिः क्वचित् ॥ मणिमंत्रौषधैर्दानैरपि वैवर्ण्यता न सा ॥ ९ ॥

मेकविंशः सर्गः ॥ २१ ॥ चतुर्दशोर्ध्वशतकपर्यंद्द्वाविंश उह्लडे । कर्पूरानंद उक्तोस्ति चात्मवेत्ता कुटुंबकः ॥२२॥ आसीदिति ॥१॥२॥ इत्थमिति मार्ध्यान्वयः ॥ ३ ॥ प्राप्तं उदग्रवयोवृद्धत्वं यस्य । प्रतप्तधीः पश्चात्तापयुक्तः । तस्मै मधुसूदनाय स्वकृतशांतये आत्मकृतचौर्यादिदोषनिवारणार्थं गृहं ययौ ॥ ॥ ४ ॥ पापभीरुर्द्विज इति पूर्वान्वितम् । तत्र धने ॥ ५ ॥ इत्याद्युत्तरान्वयि । तद्धनम् ॥ ६ ॥ अस्माच्चोरात् तत इत्युत्तरान्वयि ॥ ७ ॥ ८ ॥ ९ ॥

शशामेति क्रिया पूर्वान्विता ॥ १० ॥ गांगेंऽभसि गंगोदके इत्यादि सार्द्धान्वयि । विद्वानपि कुवर्णतो या लज्जा तया युक्तः अतो वेदांतान् शृण्वन् ॥ ११ ॥ ॥ १२ ॥ या पापहंत्रीति वर्ण्यते । सा गंगापि यन्नाशे मत्पापनाशे न समर्थाभूत् यतो एवं चिंतयति सति इह काश्यां गुरौ नागदेवानंदे । पूर्वार्द्धं पूर्वान्वितं उत्तरं तूत्तरान्वितम् ॥ १३ ॥ मणिश्रुत्यां मणिकर्णिकायां शिवदर्शननिमित्तं गच्छंतं भोजानंदम् ॥ १४ ॥ प्राङ् पूर्वं नत्वा ॥ १५ ॥ आदौ स्ववृत्तांतं कथयति श्रीति ।

शशामाथ स्वयं चक्रे प्रेषोच्चारं स धर्मवित् ॥ भार्या स्यात्मजेष्वेको ययौ काशीं यतिः शनैः ॥ १० ॥ गांगेंऽभसि स्नात्वा नित्यं विश्वेशादीन्नमंस्तथा ॥ वेदांतान्दूरतः शृण्वन्ह्रिया विच्च कुवर्णतः ॥ ११ ॥ तस्यां काश्यां न लब्धाशीर्दुःखीत्यात्मविनयी ॥ कस्मा त्पुण्याद्धि वैवर्ण्यं मे गमिष्यत्यघापहात् ॥ १२ ॥ गंगापीशा न यन्नाशे याघहंत्रीति वर्ण्यते ॥ इत्थं चिंतयतीहा गाङ्गोजदेवो भ्रमन्मुखम् ॥ १३ ॥ सिद्धिं गते गुरौ भूत्वा यतिः कांत्यापरो रविः ॥ स्नात्वाद्धात्रि मणिश्रुत्यां गच्छंतं शिवदर्शने ॥ १४ ॥ दृष्ट्वा तेजोनिधिं दूराद्यतिः प्राङ्मधुसूदनः ॥ नत्वेत्याहाग्रतस्तिष्ठन्भोजदेवं कृतांजलिः ॥ १५ ॥ यतिरुवाच ॥ स्त्रीपुत्रलोकोऽहमदःसुतुष्ट्यै स्वीकृत्य दुर्दानमतः कुवर्णः ॥ जातोतिगौरोपि कृता उपायाः सुवर्णलब्ध्यै ह्यभवं यतिश्च ॥ १६ ॥ एत्यात्र नित्यं हरिपादजाप्सु स्नापन्हि विश्वे शमुखांश्च पश्यन् ॥ नैवानघोहं हि यतोंगकुष्ठी त्वमंतकोस्येति च वच्मि ते भाः ॥ १७ ॥ तं भोजदेवोथ निनाय गंगां संस्नाप्य देहेस्य ममर्द भूतिम् ॥ तेजःप्रदाष्टाक्षरसौरमंत्रात्संमंत्रितां सिद्धमनुर्दयाढ्यः ॥ १८ ॥ ध्यायंश्च कर्पूरनिभं शिवं तं शीर्षादिपादांतमलुप्त कायम् ॥ स्पृशन्करेणाथ मनुं च शैवं पंचार्णमाहाघहरं श्रुतौ च ॥ १९ ॥

अमीषां पुत्रादीनां सुतोषाय आत्मनः सुवर्णलब्ध्यै उत्तमवर्णप्राप्तये । उपजाति वृ० ॥ १६ ॥ अत्र काश्यामेत्य गंगोदके स्नात्वा विश्वेशादीन्द्रष्ट्वापि यतो देहे कुष्ठी स्यातोहं निष्पापो नाभवं त्वत्कांतिस्तु मे कुष्ठनाशकत्वं त्वय्यस्तीति सूचयति । अतस्त्वं मम दुःखं नाशयेत्यर्थः । आख्यानकीवृत्तम् ॥ १७ ॥ अथ प्रार्थनानंतरं तेजःप्रदेनाष्टाक्षरसौरमंत्रेण मंत्रशास्त्रसिद्धेनाभिमंत्रितां विभूतिं तस्य देहे ममर्द यतोयं सिद्धमंत्रो दयायुक्तो जात इति शेषः । इंद्रवज्रा० ॥ १८ ॥ शिवं शिवरूपं

अमुष्य गोविंदस्य देहम् । श्रुतौ कर्णे पंचवर्णम् । शिवमंत्रं च भोजदेव उपदिष्टवान् । उपजाति वृ० ॥ १९ ॥ केशकूपोद्गमात् [illegible]
णास्य तनोः सकाशात्क्रिमयो निर्गताः स्वयमेव दग्धाश्च । तत्र दृष्टांतो यथा आत्मतत्वश्रवणेनात्मव्यतिरिक्तविषयबुद्धयो दग्धा भवंति तथेत्यर्थः । [illegible]
वज्रा० ॥ २०॥ अब्जश्चंद्र इव । कर्पूरसुखं कर्पूरानंदम् ॥ २१ ॥ २२ ॥ चतुःसप्तत्यधिकशतसंख्यं कर्पूरानंदं प्रणमंति विद्वांसिनि । गुरुनः भोजनं[illegible]

तावत्तनोर्नैर्यथुरस्य केशकूपोद्गमाच्च क्रिमयोतिकृष्णाः ॥ पक्षान्वितास्ते स्वयमेव दग्धाः श्रुत्वात्मतामर्थधियो यथान्याः ॥ २० ॥
कर्पूरगौरः स च पापनाशेऽभूत्प्रावृडंतेब्ज इवातिकांतिः ॥ तस्मै ददौ सर्वमनून्गुरुस्तन्नामापि कर्पूरसुखं चकार ॥ २१ ॥
काश्यां हि कर्पूरसुखः किलासीद्ययौ भ्रमन्गामथ भोजदेवः ॥ सम्मेनिरे सिद्धवरं हि काशीस्थिताश्च कर्पूरसुखं सुखेन ॥
॥ २२ ॥ विद्वान्प्रगृह्यापि च दुष्टवित्तं कुष्ठी ततोभूद्गुरुतः सुकांतिः ॥ यस्तं चतुःसप्ततियुक्शताख्यं कर्पूरकानंदगुरुं नताः स्मः ॥
॥ २३ ॥ श्रीदेशिकेंद्र उवाच ॥ प्रतिष्ठानात्पूर्वतोथापग्रामे गौतमीतटे ॥ गोविंदः कुलकर्ण्यस्य सती नीरेति धर्मिणी ॥ २४ ॥
पुत्रं सा सुषुवेत्यंतकांतिमंतं सुलक्षणम् ॥ विठ्ठलेति च तन्नाम कृतं पित्राब्दकेष्टमे ॥ २५ ॥ उपनीतोथ गत्वासौ प्रतिष्ठानं सुबुद्धि
मान् ॥ अधीत्य वेदान् शास्त्राणि षोडशाब्दो ययौ ततः ॥ २६ ॥ स्वग्रामं पितरं चाह तीर्थयात्रामहं पितः ॥ कुर्वे यतो न पूर्तिः स्या
द्ब्रह्मचर्यस्य तां विना ॥२७॥ श्रुत्वा पितातिसंतुष्टो विद्वांसं वीक्ष्य चात्मजम् ॥ प्राह गच्छ पुनः शीघ्रमागच्छेति सुखाय नौ ॥२८॥
तथेति पितरौ नत्वा ययौ तीर्थानि विठ्ठलः ॥ द्वारकां सोमनाथं च प्रभासं सप्तशृंगगाम् ॥ २९ ॥ देवीं ततस्तु घृष्णेशं जनस्थानं
त्रिवीक्षणम् ॥ भीमाशंकरमस्मात्स भ्रमन्प्रातोलकावतीम् ॥ ३० ॥

सकाशादुत्तमकांतिर्यो जातस्तं नताः स्मः ॥ २३ ॥ कुटुंबानंदकथां विस्तरेण वक्तुमुपक्रमते । प्रतिष्ठानादिति । आपग्रामे अपेगाव इति लोकप्रसिद्धे । [illegible]
धर्मिणी पत्नी नीरानाम्नी आसीदित्यध्याहारः ॥ २४ ॥ अष्टमे वर्षे इत्युत्तरान्वयि ॥ २५ ॥ ततः स्वग्रामं ययाविति संबंधः ॥ २६ ॥ २७ ॥ नौ
आवयोः सुखार्थम् ॥ २८ ॥ सप्तशृंगस्थां देवीमिति संबंधः ॥ २९ ॥ त्रिवीक्षणं त्र्यंबकं ययावित्यनुवृत्तिः । अस्माद्भीमाशंकरस्थानात्[illegible]

वर्ती अळंदीति प्रसिद्धो ग्रामः ॥ ३० ॥ तत्रत्योलकावर्तास्थः ॥ ३१ ॥ सिद्धपंतनामा इति पूर्वान्वितम् । स्वामिन्नित्याद्युत्तरान्वितम् ॥ ३२ ॥ यद्

स्मादवदागमेन पवित्रं स्यात् ॥ ३३ ॥ अत्रैव तद्गृहे एव ॥ ३४ ॥ ३५ ॥ उत्तरार्द्धमुत्तरान्वितम् । सिद्धपंत इति पूर्वान्वितम् ॥ ३६ ॥ यदीत्याद्युत्त

सुस्नातो विठ्ठलो मंत्रं गायत्र्याः संजपन्स्थितः ॥ कचिद्देवालये तावत्तत्रत्यः कश्चिदाययौ ॥ ३१ ॥ सिद्धपंताख्य तेनासौ ब्रह्मचारी निलोकितः ॥ तेजस्वी तं नमन्प्राह स्वामिन्भुक्त्यर्थमद्य मे ॥ ३२ ॥ आगम्यतां गृहं यत्तत्पूतं युष्मत्समागमात् ॥ तथेत्युक्त्वाह्निकं कृत्वार्धाहेसौ तद्गृहं गतः ॥ ३३ ॥ भुक्त्वा स्वाद्वन्नमत्रैव स्थितो रात्रौ कृतादरः ॥ स्वप्नेद्धा सिद्धपंतस्य रात्रावागत्य विठ्ठलः ॥ ३४ ॥ प्राहेत्थं रुक्मिणी कन्या देयास्मै ब्रह्मचारिणे ॥ व्रजंतं प्रातरुत्थाय ब्रह्मचारिणमाह सः ॥ ३५ ॥ सिद्धपंत इति स्वामिन्नाम्नो मामाह विठ्ठलः ॥ स्वप्नेप्यद्यैव कन्येयं देया तुभ्यमिति स्फुटम् ॥ ३६ ॥ स्वीकार्यातस्त्वयात्रैव स्थित्वेयं सुविधानतः ॥ अथाह विठ्ठलस्तं च यदि मामपि विठ्ठलः ॥ ३७ ॥ आज्ञापयिष्यतीत्थं च मन्ये सत्यं वचस्तव ॥ सिद्धपंतः पुनः प्राह नानृतं वच्मि तेग्रतः ॥ ३८ ॥ त्वमप्याज्ञाप्यसेनेन रात्रावत्र स्थिरो भव ॥ इत्याकर्ण्य स्थितश्चात्र विठ्ठलस्तं हि विठ्ठलः ॥ ३९ ॥ स्वप्ने निश्येत्य स प्राह स्वीकार्या रुक्मिणी त्वया ॥ अस्यां चावतरिष्यंति शिवविष्णुस्वयंभुवः ॥ ४० ॥ सादिमायाश्च चत्वारोऽज्ञानुद्धर्तुं भवार्णवात् ॥ इत्थं स्वप्नं प्रातराह सिद्धपंताय विठ्ठलः ॥ ४१ ॥ सोतितुष्टः समालोक्य सुतिथिं चेह रुक्मिणीम् ॥ विठ्ठलाय विधानेन दत्वोत्सवमथाकरोत् ॥ ४२ ॥ विवाहोर्ध्वं द्विमासं चावसत्तत्रैव विठ्ठलः ॥ एकादश्यामथाषाढ्यां पुंडरीकपुरं ययौ ॥४३॥ यात्रार्थं सिद्धपंतस्तु जामात्रा कन्यया स्त्रिया ॥ दंपती तौ पांडुरंगं नामयित्वानमत्स्वयम् ॥ ४४ ॥ पत्न्याढ्यः स्वपुरीं गंतुमुत्सुकस्तावदाह तम् ॥ विठ्ठलः श्वशुरायैव यात्रार्थं गम्यते मया ॥ ४५ ॥

रान्वयि ॥ ३७ ॥ ३८ ॥ असौ विठल इति श्रुत्वा तद्गृहे स्थितस्तं स्वप्ने विठ्ठलो रात्रावागत्य स प्राहेति योज्यम् ॥ ३९ ॥ ४० ॥ आदिशक्ते...

ताश्चत्वारः संसारसमुद्रादज्ञानिन उद्धर्तुं अस्यामवतरिष्यंतीति पूर्वेण योज्यम् ॥ ४१ ॥ इह सुमुहूर्ते ॥ ४२ ॥ ४३ ॥ पूर्वार्द्धं पूर्ववद्बद्धम् । सिद्धपंत इत्यनु

वृत्तिरुत्तरार्द्धे ॥ ४४ ॥ ४५ ॥ रामेशस्य यात्रार्थमिति पूर्वान्वयि । आदौ पितृगृहं मा याहि ॥ ४६ ॥ तस्मात्पुंडरीकक्षेत्रात् अहोबलाख्यो नृसिंहः तत इत्युत्तरगामि ॥ ४७ ॥ वायव्यलिंगं कालहस्तीश्वरम् ॥ ४८ ॥ रामेशमित्यादि पूर्वान्वये । कृष्णावेण्योः संगमे स्नात्वाऽलकावतीं प्राप इति संबंधः ॥ ४९ ॥ मानितः सत्कृतः । पित्रोश्चरणदर्शननिमित्तं गच्छामीति संबंधः ॥ ५० ॥ स च सिद्धपंतः ॥ ५१ ॥ पितरौ नीरागोविंदनामानौ । अथ

रामेशस्य निशम्येति विठ्ठलं श्वशुरोऽब्रवीत् ॥ गत्वागच्छाशु मद्गेहं मा गच्छादौ पितुर्गृहम् ॥ ४६ ॥ तथेति विठ्ठलस्तस्माच्छ्रीशैलं प्रथमं ययौ ॥ अहोबलमहानंदिकार्तिकेयान्क्रमात्ततः ॥ ४७ ॥ वायवं शिवलिंगं च वेंकटाद्रिं च कांचिकाम् ॥ श्रीरंगं कुंभकोणं च चिदंबरमथागमत् ॥ ४८ ॥ रामेशं दर्भशयनं पद्मनाभं जनार्दनम् ॥ गोकर्णं करवीरं च कृष्णावेण्योश्च संगमे ॥ ४९ ॥ स्नात्वालकावतीं प्राप्तो मानितः श्वशुरेण सः ॥ श्वशुरं विठ्ठलः प्राह पित्रोश्चरणदर्शने ॥ ५० ॥ गच्छामीति सचाहाथायास्येहं कन्यया स्त्रिया ॥ अथ सर्वे ययुस्तस्मादपग्रामं तु गोरथैः ॥ ५१ ॥ श्वश्रूश्वशुरपत्न्याढ्यः पितरौ विठ्ठलो नमन् ॥ कुशलं प्राह दृष्ट्वा तौ सपत्नीकमथात्मजम् ॥ ५२ ॥ संतुष्टौ सीतया रामं कौशल्यादिश्रथाविव ॥ यात्रार्थं विठ्ठलो गत्वा नयत्पत्नीं हि राघवः ॥ ५३ ॥ सीतामिवार्पिरक्षार्थमित्युभावूचतुश्च तौ ॥ दिनानि कानिचित्स्थित्वा श्वशुरो विठ्ठलस्य च ॥ ५४ ॥ नत्वा तत्पितरौ कन्यां स्थाप्येहागात्स्त्रिया गृहम् ॥ विठ्ठलोथावसद्गेहे पश्यन्वेदांतमात्मधीः ॥ ५५ ॥ गायंच्छ्रीकृष्णनामानि निरीहो विषयेषु च ॥ कालेन पितरौ तस्य परलोकं गतौ ततः ॥ ५६ ॥ नापश्यद्गृहकृत्यं स दुःखिता रुक्मिणी तदा ॥ श्रुत्वेत्थं सिद्धपंतोथा ययौ तत्र विलोक्य च ॥ ५७ ॥ न्यूनं प्रापंचिकं सर्वं विठ्ठलं प्राह मद्गृहम् ॥ भवतागम्यतां पत्न्या निर्वाहो न गृहे यतः ॥ ५८ ॥

तौ पत्न्यायुक्तं पुत्रं दृष्ट्वा संतुष्टौ बभूवतुरिति योज्यम् ॥ ५२ ॥ तत्र दृष्टांतः सीतायुक्तं रामं दृष्ट्वा संतुष्टौ कौशल्यादशरथौ यथेति । विश्वामित्रयज्ञरक्षार्थं गतो रामः सीतामिवास्मत्सुतो यात्रार्थं गत्वा पत्नीमानीतवानिति । तावूचतुरिति संबंधः ॥ ५३ ॥ उत्तरार्द्धमुत्तरगामि ॥ ५४ ॥ ५५ ॥ पूर्वार्द्धं पूर्वान्वितम् । तत इत्युत्तरगामि ॥ ५६ ॥ इत्थं जामातुः प्रांचे औदासिन्यं श्रुत्वा सिद्धपंतो अपग्रामं ययौ । तत्र जामातृगृहे विलोक्य चेत्युत्तरान्वये ॥ ५७ ॥ यतोऽस्मिन्गृहे

निर्वाहो न भवति ततो मम गृहं पत्न्यासह गम्यतां त्वं मद्गृहमागच्छेत्यर्थः ॥ ५८ ॥ तथेत्युक्त्वा पत्न्या सहालकावतीं ययौ परमार्थरतः ईश्वरचिंतनादिसक्तः ॥ ५९ ॥ मुखेन विठ्ठलनामानि उच्चारन्निति पूर्वान्वितम् ॥ ६० ॥ द्रुतं शीघ्रं मे मह्यम् ॥ ६१ ॥ तद्वचः भर्तृवाक्यम् ॥ ६२ ॥

ययौ तथेति रुक्मिण्या विठ्ठलोप्यलकावतीम् ॥ तस्थौ श्वशुरगेहेसौ परमार्थरतः सदा ॥ ५९ ॥ एकादश्यां किलाषाढ्यां पुंडरीकपुरं व्रजन् ॥ पांडुरंगेक्षणाकांक्षी सदास्याख्याः पठन्मुखात् ॥ ६० ॥ ऋतुमत्यां च रुक्मिण्यां नापत्यमभवद्द्रुतम् ॥ स तामाहाथ सन्न्यासं गृह्णाम्याज्ञां च देहि मे ॥ ६१ ॥ तूष्णींभूताथ साध्वी सा पितरं प्राह तद्वचः ॥ पिता प्राहेति नैवाज्ञां देहि त्वं तरुणी यतः ॥ ६२ ॥ नाज्ञां दास्यति भार्येयं ज्ञात्वा तामाह विठ्ठलः ॥ काशीं गच्छामि जाह्नव्यां स्नात्वायास्ये पुनर्गृहम् ॥ ६३ ॥ गच्छेति प्राह साध्वी सा श्वशुरश्च ततो ययौ ॥ विठ्ठलोत्यंतसंतुष्टो कीरः पंजरतो यथा ॥ ६४ ॥ गत्वा प्रयागं स्नात्वासौ त्रिवेण्यां मकरे रवौ ॥ काशीं ययौ ततो दैवात्कर्पूरानंदसन्मठे ॥ ६५ ॥ स्थितो नित्यं हि गंगायां स्नान्भाष्यादिकश्रुतिः ॥ पश्यन् विश्वेशमुख्यांश्च नित्ये कालं स विठ्ठलः ॥ ६६ ॥ सहवासाद्बुद्धिमंतं ज्ञात्वामुं श्रीगुरुर्ददौ ॥ मंत्रानशेषान्योगं च ज्ञानमात्मप्रकाशकम् ॥ ६७ ॥ चैतन्यानंद इत्यस्य नाम श्रीगुरुणा कृतम् ॥ अथैकदा गुरुं प्राह चैतन्यानंद इत्यसौ ॥ ६८ ॥ सन्न्यासदीक्षा मे देया यतो मोक्षो न तां विना ॥ गुरुः प्राहासि तरुणस्त्वं तवास्ति किमंगना ॥ ६९ ॥ गुरुं प्राह स चैकोहं न भार्यापितरौ च मे ॥ सत्यं मत्वास्य वचनं सन्न्यासं प्रददौ गुरुः ॥ ७० ॥ महावाक्योपदेशांतं प्रेषोच्चारणपूर्वकम् ॥ चैतन्यानंद इत्थं स यतिर्भूत्वाभवत्सुखम् ॥ ७१ ॥ यात्रिभ्योऽथाशृणोज्जातो जामाता मस्करीति च ॥ सिद्धपंतोतिदुःखाढ्यो रुक्मिण्या भार्ययाप्यभूत् ॥ ७२ ॥ इयं वार्तामृतैवास्तु चिंतयंतीति रुक्मिणी ॥ अनुष्ठानं चकाराथ ह्यश्वत्थस्य प्रदक्षिणाः ॥ ७३ ॥ पिबंतीसत्पयो नित्यं त्यक्ताभ्यंगा निमज्जनी ॥ शीतलासेव कंचुक्या धत्ते श्वेतांबरं तथा ॥ ७४ ॥

॥ ६३ ॥ पंजरान्मुक्तः शुक इव संतुष्टः ॥ ६४ ॥ तत इत्याद्युत्तरान्वयि ॥ ६५ ॥ भाष्यादीनां श्रवणं यस्य ॥ ६६ ॥ श्रीगुरुः कर्पूरानंदः ॥ ६७ ॥ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ किंचिद्दुग्धं पिबंती । श्वेतकंचुक्या सह शुभ्रवस्त्रं धत्ते दधार ॥ ७४ ॥

मंगलसूत्रं विना भूषणं हरिद्राकुंकुमं विनांगलेपं सा न दधारेत्यनुवृत्तिः। रात्रिशब्दो हरिद्रावाची। इत्थं व्रतं चकार॥७५॥ ७६ ॥स्वजनदर्शनाद्भीतश्चैतन्याभिधो विट्ठलो मठे एवावसत् ॥ ७७ ॥ रुक्मिणी यमश्वत्थं प्रदक्षिणं करोति तस्य छायामाश्रित्य मध्याह्नेऽत्युष्णपीडितः कर्पूरानंदः शिष्यैः सह स्थितोभवदिति योज्यम् ॥७८॥ दृष्ट्वेत्याद्युत्तरान्वयि ॥ ७९ ॥ ८० ॥ ८१ ॥ पुत्रादिभिस्तव कीर्तिवर्द्धनं यथा स्यात्तथा नारायणः शुभं कल्याणं करोतु ॥ ८२ ॥

नाक्षसूत्राद्विना भूषां लेपं कुंकुमरात्रितः ॥ भूमौ शयाना षण्मासं चकारेत्थं पतिव्रता ॥७५॥ पुण्यातिशयतस्तस्याः कर्पूरानंदसद्गुरोः॥ यात्रां कर्तुमभूद्बुद्धिर्निष्कामस्यापि दक्षिणाम् ॥७६॥ काश्याः स निर्ययौ शिष्यैर्यात्रार्थं दक्षिणां दिशम् ॥ मठ एवावसद्भीतश्चैतन्यः स्वजनेक्षणात् ॥ ७७ ॥ ययौ भ्रमन्नथो दैवात्कर्पूराख्योऽलकावतीम् ॥ भ्रमत्येषा यमश्वत्थं रुक्मिणी तु प्रदक्षिणम् ॥७८॥ छायामाश्रित्य तस्यैव मध्याह्नेत्युष्णपीडितः ॥ तस्थौ शिष्यैश्च दृष्ट्वैतांस्तृषितान्रुक्मिणी यतीन् ॥७९॥ त्यक्त्वानुष्ठानमुद्धृत्य कूपाद्वारि सुशीतलम् ॥ पानार्थं प्रददौ तत्तत्पात्रेष्वेका त्वरान्विता ॥८०॥ ननामाथाऽखिलान्सुभ्रूः संतुष्टानंबुपानतः ॥ नमंतीं तामथाहेति कर्पूरानंददेशिकः ॥ ८१ ॥ नारायणः शुभं कुर्यात्तेऽपत्यैः कीर्तिवर्द्धनम् ॥ श्रुत्वाशिषमिमां सुभ्रूः सासीत्किंचित्स्मितानना ॥ ८२ ॥ स्मितास्यामीक्ष्य तामाह कर्पूरानंद आत्मवान् ॥ मातः कथं त्वया हास्यं कृतं मिथ्या न मद्वचः ॥ ८३ ॥ नत्वा तं रुक्मिणीत्याह स्वामिन् भर्ता यतिर्मम ॥ जातः काश्यां कथं तेन विनापत्यं भवेद्वद ॥ ८४ ॥ गुरुः प्राह कथं त्यक्त्वा स्त्रियं त्वां तरुणीं यतिः ॥ पतिर्जातोस्य दीक्षादः प्रायश्चितीति वाक्स्मृतेः ॥ ८५ ॥ चिह्नानि वद पत्युः किं मन्मठस्थः पतिस्तव ॥ सा चाह गौरस्तरुणः समांगो देवतार्चकः ॥ ८६ ॥ वेदांतश्रवणाकांक्षी मत्पतिः सस्मिताननः ॥ श्रुत्वांकानि विदित्वास्याश्चैतन्याख्यं पतिं गुरुः ॥८७॥

मद्वाक्यं मिथ्या न भविष्यति ॥ ८३ ॥ ८४ ॥ अस्य तव पत्युः सन्न्यासदाता प्रायश्चित्ती भवेत् इति स्मृतिवचनमस्ति ॥ ८५ ॥ गौर इत्यादि पतिलक्षणानि परान्वयवंति ॥ ८६ ॥ पूर्वार्द्धे अस्तीत्यध्याहारः। कर्पूरानंदगुरुः चिह्नानि श्रुत्वा रुक्मिण्याः पतिं चैतन्यानंदं ज्ञात्वा तां प्राहेत्यन्वयः ॥८७॥

अस्मै आप्ताय मया उच्यते त्वत्यतिशान्तिविचार इति शेषः । पिता सिद्धपंतः ॥ ८८ ॥ तव सुतामुज्झ्य त्यक्त्वा ॥ ८९ ॥ अद्यैव यात्रां त्यक्त्वा काशीं गत्वा दंपतीवियोगजन्यपापभयेन युक्तोहमेतस्याः पतिं संन्यासान्निवर्त्यानया योजयिष्ये इति योज्यम् ॥ ९० ॥ श्रुत्वेत्याद्युत्तरान्वये ॥ ९१ ॥ ९२ ॥

तां प्राह ते कमप्याप्तमानयास्मै मयोच्यते ॥ तयाहूतः पिताथासौ ननामामुं यतीश्वरम् ॥ ८८ ॥ नमंतं तं यतिः प्राह जामाता तेऽविमुक्तके ॥ यतिर्जातो युवैवोज्झ्य त्वत्सुतां तरुणीं स्त्रियम् ॥ ८९ ॥ अन्यायिनं निवर्त्यैनं यतिधर्मात्स्त्रियाधुना ॥ योजयेऽहं पापभीत्या त्यक्तयात्रो विमुक्तकम् ॥ ९० ॥ गत्वाद्यैव भवांश्चैनां प्रगृह्यैहि मया सह ॥ श्रुत्वेत्थं सिद्धपंतोपि संतुष्टः कन्यया सह ॥ ९१॥ यतिसंगाद्ययौ काशीमथाहूय रहो गुरुः ॥ चैतन्यं प्राह भो ब्रूहि सत्यं भार्यास्ति वा न ते ॥ ९२ ॥ श्रुत्वा भीतः स चाहांतर्मदेशादागतो गुरुः ॥ ज्ञात्वै व सर्वं मद्वृत्तं मां पृच्छत्यथ किं मया ॥९३॥ वाच्यमस्मै यतः पूर्वमुक्तं नास्तीति मेंगना ॥ विचिंत्येति च तं तूष्णीं स्थितं प्राह गुरुः पुनः ॥९४॥ सत्यं वद न भीस्तेस्तु स चास्तीत्यब्रवीच्छनैः ॥ तां चाहूयाथ चैतन्यानंदमाह गुरुस्त्वया ॥ ॥ ९५ ॥ स्वीकार्येयमपत्यानि चास्यां कुर्वाज्ञया मम ॥ न पापं नापकीर्तिस्ते कीर्तिरेव भविष्यति ॥ ९६ ॥ कुटुंबानंद इत्येव कृतं नाम तवाद्यतः ॥ कुटुंबभरणाद्धेतोः पारंपर्यं तदेव हि ॥९७॥ सिद्धपंतो गृहीत्वाथ कन्यां जामातरं ययौ ॥ स्वग्रामं ब्राह्मणाः श्रुत्वा यतिना स्त्रीपरिग्रहम् ॥ ९८ ॥

अथ मयास्मै गुरवे किं वक्तव्यमिति संबंधः ॥ ९३ ॥ ९४ ॥ त्वयेत्याद्युत्तरान्वये ॥ ९५ ॥ ननु संन्यासं त्यक्त्वा पत्नीस्वीकारः कथं कार्य इति चेत् ममाज्ञया न दोष इत्याशीर्वादयति । नेति ॥ ९६ ॥ तदेव पारंपर्यं गुरुपरंपरायां स्थितं भवतु ॥ ९७ ॥ अथ कर्पूरानंदवचनानंतरम् । ब्राह्मणा इत्यु

त्तरांन्वयि। यतिना कृतं स्त्रीपरिग्रहम् ॥ ९८ ॥ तत्रत्याः अलकावनीस्थाः ॥ ९९ ॥ १०० ॥ त्रीन्पुत्रानेकां कन्यामिति चत्वार्यपत्यानि सुषुवे इति पूर्वान्वयः। शिवविष्णुब्रह्माण आदिमाया चैते जनान्संसारादुद्धर्तुं ततः रुक्मिणीकुटुंबानंदमकाशान्मनुष्यरूपिणः स्युर्जाताः ॥ १०१ ॥ तेषामभि कारानुरूपनामप्राप्त्यर्थं तेषां बाल्यावस्थानुभवमाह। बभूवुरित्यादित्रयेण। ज्येष्ठो गुरुः प्राह अल्पसुखप्राप्तिहेतोः ममेंद्रियाणां विषयेषु प्रवृत्तिर्नास्ति। एभ्यो विषयेभ्यः सदा मम निवृत्तिः परावृत्तिर्भवतु। सापेक्षविषयसुखापेक्षया निरपेक्षनिवृत्तिसुखमेव परमानंदरूपत्वाद्धिततरमित्यर्थः। उपजातिवृत्तम् ॥ १०२ ॥ मध्यमः पुत्रो गुरुमाह सर्वं दृश्यं मृषैव मम भाति आत्मा तु एकः सदा सर्वगतः स्वप्रकाशोऽवभाति। तस्यैवात्मन अखंडं विस्मृतिरहितं ज्ञानं मम भवतु। मनुष्यस्य

तत्रत्यास्तं बहिश्चक्रुः कुटुंबाख्यं यतिं स्त्रिया ॥ कुटीं कृत्वा बहिर्ग्रामात्तस्थौ भार्यान्वितो यतिः ॥ ९९ ॥ याचयित्वा पुरे धान्यं चक्रे निर्वाहमात्मवान् ॥ पत्युः सा सुषुवेऽपत्यान्यथ चत्वारि रुक्मिणी ॥१००॥ त्रीन्पुत्रान्कन्यकां चैकां भूगताः शिवविष्ण्वजाः॥ आदिमाया तथोद्धर्तुं नॄन्भवात्स्युर्नृरूपिणः ॥ १०१ ॥ बभूवुरेते वयसा महांतो ज्येष्ठो गुरुं प्राह ममेंद्रियाणाम् ॥ प्रवृत्तिरेषु न चाल्पसौख्यान्निवृत्तिरेभ्योऽक्षयसौख्यदास्तु ॥ १०२ ॥ पुत्रस्तथा मध्यम आह दृश्यं मृषैव मे भाति हि सत्य आत्मा ॥ एकः सदा सर्वगतः स्वतंत्रो ज्ञानं हि तस्यैव ममास्त्वखंडम् ॥ १०३ ॥ कनिष्ठ इत्याह च मातृपित्रोः स्वज्येष्ठबंध्वोरपि सर्वदैव ॥ कार्या हि सेवा सुगमो यया मे सोपानमार्गः पदमेतुमाद्यम् ॥ १०४ ॥ श्रुत्वेति नाम्नाथ निवृत्तिदेवं ज्येष्ठं तथाज्ञानविकाशिनं च ॥ मध्यं हि तत्तन्मनसेप्सितेन सोपानदेवं त्ववरं पितासौ ॥ १०५ ॥

ज्ञानाभावे पशुवज्जन्म निरर्थकमित्यर्थः ॥१०३॥ कनिष्ठो गुरुमित्याह इति किं एतदाह। हे गुरो मातापित्रोर्ज्येष्ठभ्रात्रोश्च सेवैव मया सर्वदा कर्तव्यास्ति। सेवां करोमीत्यर्थः। यया सेवया उत्तमपदं प्राप्तुं सोपानमिव यो मार्गः मृग्यते शोध्यते ब्रह्मतत्त्वमनेनेति मार्गः। मोक्षसाधनसंपत्तिःसुलभा भवतु। गुरुसेवयै व सर्वसाधनसिद्धिः स्यादन्यथोपायशतैर्न भवतीत्यर्थः ॥१०४॥ एवं पुत्राणामुत्तमाधिकारं ज्ञात्वा तन्मनोऽभीप्सितत्वेन तन्नाम पित्रा कृतमित्याह। श्रुत्वेति पितासौ कुटुंबानंदः पुत्राणामिति वाक्यं श्रुत्वा ज्येष्ठपुत्रं नाम्ना निवृत्तिदेवमित्याह। मध्यमं ज्ञानेन विकासिनं ज्ञानदेवं अवरं कनिष्ठं सोपानदेवम्॥१०५॥

एवं कन्याया अप्यनुभवसदृशं तन्नाम पित्रा कृतमित्याह । कन्यामिति सपादैकपद्येन । मुक्ता पतिपुत्रादिबंधरहिता आत्मनः सकाशात्सुखं यस्याः सा ॥ ॥ १०६ ॥ श्रुतिमातरं गायत्रीम् ॥१०७॥ तेषु पुत्रेषु कुटुंबानंदात्संप्रदायक्रममाह । निवृत्तिदेवायेति । अस्माज्ज्ञानदेवात्तज्ज्ञामंत्ररहस्यज्ञा मातपूर्णाभिदेदे त्यर्थः ॥१०८॥ ननु सोपानदेवस्य संप्रदायप्राप्तिः कुतो नास्तीत्यत आह । सोपानदेव इति । ज्येष्ठानां सेवाकर्ता। तत्र दृष्टांतः । सीतापतिसेवासक्तो हनूमा

कन्यां पिताथाह च ते विवाहं कुर्वे सुरूपेण च सद्वरेण ॥ सा चाह भर्त्रा तु न मेस्तु बंधस्तिष्ठामि मुक्तैव सदात्मसौख्या ॥ ॥ १०६ ॥ मुक्तेति तन्नाम चकार तस्याः पुत्रान्कृताह्वान् श्रुतिमातरं प्राक् ॥ उक्त्वाह वेदांश्च गुरुः सशास्त्रांस्ते चाददुः प्राक्पठितानिवाशु ॥ १०७ ॥ निवृत्तिदेवाय ददौ रहस्यमंत्रान्हि योगं च तथात्मतत्त्वम् ॥ श्रीज्ञानदेवोऽखिलमाप तस्मा न्मुक्तांबिकास्माच्च बभूव तज्ज्ञा ॥ १०८ ॥ सोपानदेवस्तु सदा वरिष्ठसेवाभिसक्तो जगृहे न मंत्रान् ॥ सीतेशसेवारतमारुतिः प्राक् वरानिवान्यानपि रामदत्तान् ॥ १०९ ॥ कुटुंबकानंद इति प्रवर्त्य सत्संप्रदायं शिवविष्णुधातॄन् ॥ ज्ञात्वात्मजांश्चापि सुतां परांबां स्वप्नं ह्यभूत्तद्धृदि सत्यमाह ॥ ११० ॥ आज्ञां च मेने सफलां गुरोः स कृतार्थतां स्वस्य तथैव पत्न्याः ॥ यतिश्च पत्न्या शुशुभे स पुत्रैर्वृष्ट्या यथार्कश्च समृद्धधान्यैः ॥ १११ ॥ तं मेनिरे त्वात्मविदो यतींद्रं कुटुंबिनं चात्मसुखे निमग्नम् ॥ निर्निंद्रुरन्येऽखिलपंच कृष्णं मत्वात्मतुल्यं कुधियो यथा प्राक् ॥ ११२ ॥ यो विठ्ठलोद्धा यतिरात्मजांस्त्रीनजीजनच्चैकसुतां स्वशक्त्या ॥ तं पंचसप्तत्य धिकं शताख्यं कुटुंबकानंदगुरुं नताः स्मः॥११३॥कर्पूरकानंदकुटुंबनाथकथां पठेद्यः शृणुयाच्च भक्त्या॥ सर्वविनाशं सदपत्यलब्धिं लभेत्पुमान्सद्गुरुपादसक्तः ॥ ११४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे कर्पूरानंदकुटुंबानंदगुरुकथावर्णनं नाम द्वाविंशः सर्गः ॥२२॥

न्यथा श्रीचरणसेवातिरिक्तं नेच्छितवानिति सत्यं जातमित्याह ॥१०९॥११०॥ गुरोः कर्पूरानंदस्य ॥१११॥ सर्वरक्षकमात्मतुल्यं मनुष्यम् ॥११२॥ पंचसप्तत्यधिकशतसंख्यं कुटुंबानंदं प्रणमति । य इति।अजीजनत् उत्पादितवान् । स्वशक्त्या रुक्मिण्या युक्तः तं कुटुंबानंदं नताः स्मः ॥११३॥ एतत्सर्गो क्तगुरुद्वयकथाश्रवणादेः फलमाह।कर्पूरानंदेति।आख्यानकी वृत्तम्॥११४॥इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां द्वाविंशःसर्गः ॥२२॥

उत्रयीविंशके त्वष्टाशीतिपद्यैर्निवृत्तितः । गुरुत्रयस्य कथिता कथा सोपानभक्तियुक् ॥ २३ ॥ अथेति । त्वयेति कर्तृपदाध्याहारः ॥ १ ॥ तान् पुत्रान् ॥ २ ॥ अखिलैः पुत्रैः सह । अथेत्युत्तरान्वयि ॥ ३ ॥ प्रणमन्नित्याद्युत्तरान्वयि ॥४ ॥ इति श्रुतिवचनमस्ति " यावतीर्वै देवतास्ताःसर्वा

श्रीदेशिकेंद्र उवाच ॥ अथैकदा पतिं प्राह रुक्मिणीति पतिव्रता ॥ लौकिकायैव संस्कार्याः स्वामिन्पुत्रा द्विजोत्तमैः ॥ १ ॥ विवाहितुं सुतांस्तांश्च विचार्यादौ हि पंडितान् ॥ प्रायश्चित्तं च कर्तव्यं यथैतैरुच्यतेऽखिलम् ॥ २ ॥ कुटुंबानंद आकर्ण्य सत्युक्तमखिलैः पुरे ॥ गत्वा स्थित्वामलेस्थानेथात्र सोपानदेवतः ॥ ३ ॥ ब्राह्मणास्तु समाहूतास्तत्रत्याः पंडिताः परे ॥ सर्वे स्थितास्ते चैकत्र प्रणमंस्तान्कुटुंबकः ॥ ४ ॥ तिष्ठन्प्रांजलिराहेदं यूयं वेदविदोखिलाः ॥ भवत्स्वेवाखिलाः संति देवताः श्रुतिवागिति ॥ ५ ॥ दर्शनान्मेगतं पापं वः सूर्यस्य यथा तमः ॥ तथापि लोकरीत्या मे प्रायश्चित्तं यदुच्यताम् ॥ ६ ॥ ममापराधः क्षंतव्यो भवद्भिर्हि दयापरैः ॥ पुत्रास्त्रयोमी संस्कार्याः कन्या वैवाहकर्मणा ॥ ७ ॥ श्रीदेशिकेंद्र उवाच ॥ कुटुंबानंदगदितं श्रुत्वा प्राहुर्द्विजाश्च तम् ॥ त्वं महापातकी नूनं प्रायश्चित्तं न ते क्वचित् ॥ ८ ॥ ग्रंथेषु दृश्यते दोषो महानेवाखिलेष्वपि ॥ यतिर्भूत्वा स्त्रियं गच्छेद्यः पुमान्काममोहितः ॥ ९ ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ इत्यादिस्मृतिवागाह त्वादृशेऽद्य न निष्कृतिम् ॥ १० ॥ प्रायश्चित्तं कुरुष्वातस्त्वं देहांतं न चान्यथा ॥ ब्राह्मणोक्तमिति स्मृत्वा कुटुंबानंद आत्मवान् ॥ ११ ॥ प्रपंचात्स निवृत्तोभूदपश्यन्पृष्ठतो ययौ ॥ तस्य पृष्ठे रुक्मिणी च दीपस्येव प्रभानुगा ॥ १२ ॥ तौ द्वाविंद्रायणीतोये जानुमात्रे गताविह ॥ एकीभूतौ दर्शयंतौ तडित्तुल्यां प्रभां तदा ॥ १३ ॥ अंतर्द्धिं प्रापतुः सद्यः पश्यत्स्वेवाखिलेष्वपि ॥ मत्वाश्चर्यं मिथः प्राहुर्ब्राह्मणा इति तेऽखिलाः ॥ १४ ॥

वेदविदि ब्राह्मणे वसंति " इति श्रुतिः ॥ ५ ॥ यत्प्रायश्चित्तं तदुच्यतां भवद्भिरिति शेषः ॥ ६ ॥ ७ ॥ ८ ॥ प्रायश्चित्तमित्यादिपरान्वितम् ॥ ९ ॥ सर्वदोषाधिक्यं दर्शयति । यतिरिति सार्द्धेन ॥ १० ॥ ब्राह्मणोक्तमिति परगामि ॥ ११ ॥ १२ ॥ एकीभूताविन्याद्युत्तरान्वयि ॥ १३ ॥ १४ ॥

॥ १५ ॥ देहतः देहेन सह तादृशं निमज्जनयोग्यम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ स्वपदं प्रापावितिति मेनिरे इति पूर्वसंबंधः ॥ २० ॥
॥ २१ ॥ तत्पत्रं भवद्भिः प्रतिष्ठानस्थब्राह्मणेभ्यो दातव्यमिति संबंधः ॥ २२ ॥ २३ ॥ २४ ॥ प्रतिष्ठानमिति पूर्वान्वितम् । कचिदित्यादि परान्वयि

दंपती क्व गतावेतौ पश्यत्स्वस्मासु सर्वतः॥केचिदाहुर्योगिनौ तौ योगशक्त्या परं गतौ॥१५॥परेप्याहुर्योगिनोपि नैवं गच्छंति देहतः॥
तन्निमज्जनमंतः स्यान्नर्यंत्वपि न तादृशम् ॥ १६ ॥ अथाहुरपरेमूभ्यामिंद्रजालं हि शिक्षितम् ॥ तेनात्रादृश्यतां प्राप्यान्यत्र दृश्यौ
भविष्यतः ॥ १७ ॥ अन्येऽथाहुर्न कर्तव्या निंदा कस्यापि केनचित् ॥ बहिः कोस्ति कथं चांतः केनेत्थं ज्ञायतेऽखिलम् ॥ १८ ॥
कुटुंबाख्योतितेजस्वी रुक्मिण्यपि पतिव्रता ॥ इत्थं जल्पत्सु सर्वेषु निवृत्त्याद्यास्तु मेनिरे ॥ १९ ॥ रुक्मिणीविठ्ठलावेतौ स्वेच्छया
धृतविग्रहौ ॥ प्रवर्त्य संप्रदायं कौ पुनः प्राप्तौ निजं पदम् ॥ २० ॥ मत्वेत्थं पितरावंतर्हितौ नत्वाऽथ तान्द्विजान् ॥ निवृत्तिदेव
इत्याहास्माभिः कार्यं किमुच्यताम् ॥ २१ ॥ तेऽथाहुश्च प्रतिष्ठानं भवद्भिरखिलैरपि ॥ गंतव्यं पत्रमस्माभिर्दीयते तच्च दीयताम् ॥
॥ २२ ॥ तत्रत्यब्राह्मणेभ्यस्तैर्दृष्ट्वा पत्रं यथोच्यते ॥ तथैव पत्रं तेषां चास्मन्नाम्ना नीयतामिह ॥ २३ ॥ तद्दृष्ट्वैव वयं ब्रूमः प्रायश्चि
त्तादि वोऽखिलम् ॥ तथेति जग्मुः स्वस्राद्यास्त्रयस्ते बंधवो द्रुतम् ॥ २४ ॥ प्रतिष्ठानं तु गोदायां स्नात्वादौ विविशुः पुरम् ॥ क्वचि
देवालये स्थित्वाऽहूय विप्रान्कनिष्ठतः ॥ २५ ॥ तेभ्योलकावतीस्थानां दत्त्वा पत्रमथाखिलाः ॥ नत्वा निवृत्तिमुख्यास्तांस्तिष्ठंतो
बद्धपाणयः ॥ २६ ॥ प्राहुः पत्रं विलोक्यैतन्नः प्रायश्चित्तमुच्यताम् ॥ अथ दृष्ट्वाखिलं पत्रं तानूचुर्ब्राह्मणास्तदा ॥ २७ ॥ प्रायश्चि
त्तार्हता नैव युष्माकं यतिजन्मनाम् ॥ मृद्भांडानां सुराद्रीणां यथा प्रक्षालनार्हता ॥ २८ ॥ प्रायश्चित्तैर्न युष्माभिर्द्विजत्वं लभ्यते
किल ॥ शूद्रैरिव सदाचीर्णैः कृच्छ्रचांद्रायणादिभिः ॥ २९ ॥

कनिष्ठतः सोपानदेवेन ॥ २५ ॥ २६ ॥ प्राहुरिति क्रिया पूर्वान्विता । नः अस्मान् ॥ २७ ॥ यतेः सकाशाज्जन्म येषां तेषाम् । मृद्भांडादीनां यथा प्रक्षा

लनेन शुद्धिर्नास्ति तथेत्यर्थः ॥ २८ ॥ २९॥ यद्द्विजत्वं पक्ष्यादिष्वप्यस्ति । "पक्षिसर्पाण्डजा द्विजाः" इत्यनुशासनात् । तेन द्विजत्वेन संसाराच्चे विमुक्ताः किम् । द्विजत्वमात्रेण बंधान्मुक्तिर्नास्तीत्यर्थः । इंद्रवज्रावृत्तम् ॥ ३० ॥ भगवन्नाम्नैव सर्वदोषनिवृत्तिर्भवतीति दृष्टांतैर्दर्शयति। प्रागिति द्वाभ्याम् । भृशुंडिकथा गणेशपुराणे । एतावृषिवर्यौ जातावित्यर्थः । सत्यव्रतचरितं देवीभागवते । वाग्बीजं जपन्नज्ञोपि सुज्ञो जात इत्यर्थः ॥ ३१ ॥ अघात् पापात् । सांबदीक्षितः नंदिना तृणं भक्षयित्वा द्विजेषु पांक्तं पंक्तिपावनं चकार ॥ ३२ ॥ यथैते पवित्रास्तथा वयमपि नामभक्त्यैव पवित्रा भवाम इत्याह । नामानीति । इह

श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेति तानाह निवृत्तिदेवोऽस्माकं द्विजत्वस्य न चास्ति वाञ्छा ॥ यद्वर्तते पक्षिभुजंगमेषु किं तेन ते संसृतितो विमुक्ताः ॥३०॥ प्राग्वाल्मिकिस्तस्करनायकोपि मरेति जप्त्वैव महर्षिवर्यः ॥ तथा भृशुंडी च गणेशनाम सत्यव्रतोऽज्ञो गिरमज्ञसुज्ञः ॥ ३१ ॥ कलावपि ब्राह्मणघातिनं च काश्यां हि सांबः शिवनामतोघात् ॥ तं मोचयित्वा स चकार पांक्तं संभक्षयित्वास्य वृषात्तृणं च ॥ ३२ ॥ नामानि तस्माद्वयमुच्चरंतः शिवस्य विष्णोश्च गणेशदेव्योः ॥ रवेस्तथा संसृतितो विमुक्ताः सर्वे भविष्याम इहात्तभक्त्या ॥३३॥ श्रुत्वेति विप्राः पुनराहुरेतांश्चेद्भक्तिरात्ता विमलाऽखिलेशे ॥ द्विजत्वलब्धौ हि भवद्भिरत्र वाच्यं न चेद्बहुदुःखदायाम् ॥ ३४ ॥ श्रुत्वेति वाक्यं स निवृत्तिदेवः श्रीज्ञानदेवस्य च नाम गृह्णन् ॥ तमाह गंतव्यमितोखिलैर्हि नास्मद्द्विजत्वं क्रियते किलैतैः॥३५॥ते ज्ञानदेवेति निशम्य नाम मिथो मुखानीक्ष्य सुहास्ययुक्ताः॥तावत्पथागान्महिषं सुवाहस्तं ज्ञानदेवाभिधमित्थमाहुः ॥ ॥३६॥ श्रीज्ञानदेवोपि निशम्य चेत्थं तान्प्राह युक्तं गदितं भवद्भिः ॥ ज्ञानेन यो दीव्यत इंद्रियाढ्ये जडेपि देहेस्य सतो यथार्कः॥३७॥

पंचायतनदेवतासु प्राप्तभक्त्या हेतुभूतया ॥ ३३ ॥ भवतां भक्तिरीश्वरे आत्ता प्राप्ता चेत्तर्हि द्विजत्वप्राप्तिविषये भवद्भिः किंचिदपि न वाच्यम् । यतो बहुदुःखदायाम् । ईश्वरचरणनिष्ठावतां भवताम् । दुःखफलकद्विजत्वसिद्ध्या किं प्रयोजनमित्यर्थः ॥ ३४ ॥ अस्माकं द्विजत्वप्राप्तिर्यैर्न क्रियते अत इतःस्थानाद्गंतव्यमित्यर्थः ॥ ३५ ॥ ते ब्राह्मणाः । अंबुवाही उदकभारवाही । तं महिषं ज्ञानदेवमिति उपहासेनाहुः ॥ ३६ ॥ इति तच्छ्रुत्वाह ज्ञानि

श्रुत्वा तां सत्यां कर्तुकामो ज्ञानेश्वरो महिषमुखाद्वेदप्रवचनेनात्मनो महत्त्वं प्रकटीकरिष्यन्नाह । युक्तमुक्तं भवद्भिरिति । अयं महिषो ज्ञानदेव इति भवद्भिर्य दुक्तं तत्सत्यमस्ति यतोयं महिषांतर्वर्त्ती स्वप्रकाशज्ञानेन इंद्रिययुक्ते जडदेहेपि प्रकाशते । अतोस्य ज्ञानदेवेति नाम सत्यमेव भवतीत्यर्थः ॥ ३७ ॥ इति श्रुत्वा ब्राह्मणाः प्राहुः । यदि त्वमात्मसदृशमेनं वाचयिष्यसि तर्हि ज्ञानदेव इति यत्तव तथास्य च नाम सत्यं भविष्यति । इंद्रवज्रावृत्तम् ॥ ३८ ॥ श्रीज्ञानदेवोपि तथेति एनमात्मतुल्यं वाचयिष्ये इत्युक्त्वा स्वाग्रे महिषमानीय तत्पृष्ठगतं भारमपाकृत्य तस्य शिरः अंगं च स्वकरेण स्पृशन् वाग्बीजं कर्णे शनैः

विप्राः पुनः प्राहुरयं न वक्ति त्वया समं चेदमुमात्मतुल्यम् ॥ त्वं वाचयिष्यस्यथ नाम सत्यं यज्ज्ञानदेवेति च ते तथास्य ॥३८॥ तथेति चाग्रेथ तमानयित्वोत्सृज्यास्य भारं च शिरः करेण ॥ श्रीज्ञानदेवोंगमपि स्पृशन्वाग्बीजं श्रुतौ प्राह शनैः समर्थः ॥३९॥ ब्रूयाश्च वेदान्महिष त्वमेव यज्ज्ञानदेवेत्यखिलैस्तवाख्या ॥ कृतास्ति सत्यां कुरु तां न मिथ्या भूयाद्वचो वेदविदामभीप्राम् ॥ ४० ॥ श्रीज्ञानदेवेन कृपार्द्रदृष्ट्या निरीक्षितोसौ महिषस्तदाह ॥ मनुष्यवाचैव ऋचो यजूंषि सामानि चाथर्वणमंत्रजातम् ॥ ४१ ॥ अंगानि यत्पृष्टमदो निशम्य सविस्मयास्तेऽखिलपंडिताश्च ॥ प्राहुर्मिथोत्यद्भुतमीक्षितं यन्मनुष्यवाचाह पशुश्च वेदान् ॥ ४२ ॥ नैवं श्रुतं दृष्टमपीति पूर्वमग्रे भविष्यत्यपि नैव नैव ॥ नामी मनुष्याः खलु संति देवाः किं कृत्यमित्थं हि भवेन्नृधर्मैः ॥ ४३ ॥

प्राह । ज्ञान्येव कर्तुमकर्तुमन्यथाकर्तुं समर्थोस्तीत्यर्थः । उपजातिवृत्तम् ॥ ३९ ॥ तं प्रत्याह ब्रूहीति । हे महिषाद्य त्वं वेदानुच्चारय तव ज्ञानदेव इति नामैतैर्यत्कृतं तत्सत्यं कुरु वेदज्ञानां वाक्यं मिथ्या मा भवतु ॥ ४० ॥ महतां कृपादृष्ट्याऽघटितं घटत इत्यर्थः ॥ ४१ ॥ षडंगानि चाह । ननु अल्पकालेनैतत्कथमुच्चारितवानत आह । यत्तैर्वेदादिषु मंत्रादिकं पृष्टं तदाहेति । अदः इदं सर्वं वेदादि महिषमुखाच्छ्रुत्वा साश्चर्या मिथः प्राहुः । पशुरपि मनुष्यवाचा वेदान्प्राहेति यत्तदद्भुतं दृष्टमिति । आख्यानकी वृ०॥४२॥ नैव नैवेति वीप्सा केनापि न दृष्टं न श्रुतमिति सूचनार्था । मनुष्यैर्भवति किं अपि तु

न । तस्मात्कुटुंबानंदपुत्रा देवाः संति खलु । इंद्रवज्रावृत्तम् ॥ ४३ ॥ वर्षाकाले गंगा यदि कालुष्यं कलुषभावमिता प्राप्ता तर्हि अन्याः नद्याः उदकैर्मार्जनयोग्या भवति किम् । अपि तु न । युष्माकं प्रायश्चित्तं नास्तीत्यर्थः । शालिनीवृत्तम् ॥ ४४ ॥ अमूनिवृत्त्यादीन् । ते विप्राः माहिषो यस्या सीत्स द्विजो निजगृहं निवृत्त्यादीन् निनाय ॥ ४५ ॥ तेन विप्रेण सत्कृताः संतः आत्मचर्चा आत्मचिंतनादिकं चक्रुः ॥ ४६ ॥ ततः क्षयाहः

प्राहुर्विप्रास्ते निवृत्त्यादिकांश्च प्रायश्चित्तं नैव युष्माकमस्ति ॥ कालुष्यं चेत्स्वर्णदी प्रावृषीता किं सम्मार्ज्यान्यापगावारिराद्या ॥ ४४ ॥ विप्राः सर्वेमूनमंतः स्तुवन्तो जग्मुश्चैतैः सन्नताः स्वान् गृहांस्ते ॥ आसीन्नाम्नं माहिषो यस्य विप्रो निन्ये चैतान्प्रार्थयन्स्वीयगेहम् ॥ ॥ ४५ ॥ तस्थुर्गेहे तस्य तत्सत्कृतास्ते प्रातः स्नात्वा गौतमीस्वच्छतोये ॥ कृत्वोपास्याचां दिनार्धे च भुक्त्वा चक्रुः शेषे[illegible] च रात्रौ ॥ ४६ ॥ प्राप्तं विप्रस्यास्य तातक्षयाहस्तस्मिन्विप्रान्भोक्तुमाह द्विजोसौ ॥ नैवैतस्यामंत्रणं तैर्गृहीतं प्रोक्त्वा चेत्थं त्वद्गृहे संत्यपांक्ताः ॥ ४७ ॥ विप्रोथासौ गेहमेत्यातिखिन्नस्तस्थावेनं ज्ञानदेवस्तदाह ॥ किं ते वक्त्रे म्लानता दृश्यतेथाहासौ श्राद्धाहः पितुर्मेद्य चास्ति ॥ ४८ ॥ भोक्तुं विप्राश्चात्र नायांति गेहे मेऽतश्चिंतं दुःखभूतान्निशम्य ॥ तं प्राहाथ ज्ञानदेवः कुरु त्वं पत्न्या पाकं चानयेद्धा पितॄन्वै ॥ ४९ ॥ श्रुत्वेत्येवं पाकमेवाथ पत्न्याऽनेकैः शाकैः सूपसत्पायसाद्यैः ॥ सुस्वाद्वन्नैः कारयित्वाथ गाहं कृत्वा दृश्यं चारभच्छ्राद्धमंत्रान् ॥ ५० ॥ दार्भेष्वेवावाहयद्ब्राह्मणेषु देवान्पूर्वान् स्वात्तदैवायगुस्ते ॥ तद्गेहांतःस्थाजिरेऽनेन धौतांघ्र्यब्जास्तस्थुः स्वस्वपीठे क्रमेण ॥ ५१ ॥

पितुः श्राद्धदिनं आह निमंत्रयामास तत्र गृहे निवृत्त्यादयः प्रत्यवायिनः संतीत्युक्त्वामंत्रणं न जगृहुः ॥ ४७ ॥ किं किमर्थं असौ विप्र आह ॥ ४८ ॥ ननु श्राद्धदिवसेपि किन्निमित्ता चिंता इत्यत आह । भोक्तुमिति । अत्र श्राद्धाह्नि अद्धा साक्षात् पितॄनर्यमादीन् आनयिष्ये ॥ ४९ ॥ श्राद्धमंत्रानुपलक्षण मेतच्छ्राद्धप्रयोगस्य । श्राद्धारंभं कृतवानित्यर्थः ॥ ५० ॥ तदा दर्भकृतेष्वेव ब्राह्मणेषु देवान् पितॄनावाहितवान्तदैवाकाशाद्र्यमादयः प्राप्ताः । तद्गृहांत

र्गतांगणे विप्रेण कृतपादपूजाः स्वस्वासाने स्थिता इत्यर्थः ॥ ५१ ॥ तत्तदा प्रतिष्ठानवासिनः के कुत्स्ना ब्राह्मणा अत्र प्राप्ता इति परस्परं प्रोचुः । मार्गा न्मार्गेण अर्यमादीनां सर्वपितृत्वेन तत्तत्पितृरूपा बभूवुरित्यर्थः ॥ ५२ ॥ मुख्यपितॄनिति । सर्वत्र श्राद्धेऽर्यमपादयोऽन्नं भुक्त्वा तदन्नं तत्तत्पितृभ्यो जन्मांत रगतेभ्यः समर्पयंतीति हरिवंशे प्रसिद्धमिति भावः ॥ ५३ ॥ देवानां विश्वेदेवानां पितॄणां चात्र ब्राह्मणगृहे । अज्ञस्य महिषस्य । ज्ञाः ज्ञानिनः । पितरो देवाश्च तेन ज्ञानदेवेन निमित्तभूतेन नागमिष्यंति किम् । अपि तु आगमिष्यंत्येव ॥ ५४ ॥ असौ गृहपतिः तैर्निवृत्त्यादिभिः ॥ ५५ ॥ अत्र एतु निवृत्त्या

तत्क्षेत्रस्थाः श्राद्धमंत्रान्निशम्यान्योन्यं प्रोचुश्चागताः केऽत्र विप्राः ॥ भित्तेरूर्ध्वं काष्ठसोपानमार्गाद्गत्वा स्वान्स्वान्पूर्वजांस्ते न्वपश्यन् ॥ ५२ ॥ प्रोवाचैको मत्पितान्यो ममेति सर्वेऽप्यूचुर्मुख्यतातान्विलोक्य ॥ गत्वा गेहान्याहुरस्माभिरेतच्छ्राद्धी यान्नं व्यर्थमेवोज्झितं वै ॥ ५३ ॥ स्वर्गात्साक्षाद्देवपित्रागमोऽत्र जातो नूनं ज्ञानदेवप्रसादात् ॥ वेदान्योऽद्यात्मस्य वक्त्रेण चाह ज्ञाः किं तेनायांति नो तातदेवाः ॥ ५४ ॥ विश्वेदेवाः कव्यभाजस्तथैव तृप्ताः स्वं स्वं लोकमापुस्ततोऽसौ ॥ विप्रस्तुष्टश्चाकरोद्भोजनं तैरज्ञो द्धारायावतीर्णैर्भवाब्धेः ॥ ५५ ॥ विप्रास्तत्रत्यास्तु तान्प्रातरेत्य नत्वा स्तुत्वाहुर्न मर्त्याः किलैते ॥ प्रायश्चित्तं ये वदंत्यत्र मूढा इत्थं पत्रं ते ददुर्वै विलिख्य ॥५६॥ साक्षादिमे शंभुरमेशवेधसः पृथ्वीं गताश्चाज्ञहिताय विद्यया ॥ लोकान्पुनानाः कुत एष्वघागमः शुनो यथेतिः श्रुतिवेदिकाग्निषु ॥ ५७ ॥ श्रीदेशिकेंद्र उवाच ॥ निर्गंतुकामं तत्क्षेत्राद्गुरुमाहेति चार्थयन् ॥ ज्ञानदेवः शृणु स्वामि न्ज्ञानवान्महिषोऽस्त्ययम् ॥ ५८ ॥ इहैव चेत्स्थितः सर्वान्वेदगुह्यमतंद्रितः ॥ कथयिष्यति सर्वेभ्य त्यक्तवर्णाश्रमक्रियाः ॥ ५९ ॥

दिषु ये प्रायश्चित्तं वदंति ते मूढाः संति । अथानंतरं इत्थं वक्ष्यमाणं पत्रं विलिख्य तेभ्यो ददुः ॥ ५६ ॥ तदेव पत्रमाह । साक्षादिति एते निवृत्त्यादयश्च त्वारो विद्यया मूलप्रकृत्या सहिताः शिवविष्णुब्रह्माणः अज्ञहिताय पृथिवीं प्राप्ता लोकपवित्रताकर्तृषु निवृत्त्यादिषु पापागमः कुतो भवति न कुतोपीत्यर्थः। तत्र दृष्टांतः । श्रुतिवेदिकाग्निषु श्रौतेषु वेदिकासहिताग्निषु यथा शुनः इतिः गमनं न संभवति तथैव एतेषु पापसंभवो नास्तीत्यर्थः ॥५७॥ इति पत्रं गृहीत्वा प्रति

ष्ठानादलकावतीं निवृत्त्यादयो ययुरित्याह । निर्गंतुकाममिति गुरुं निवृत्तिदेवम् ॥ ५८ ॥ ५९ ॥ भविष्यंत्येवेति क्रिया पूर्वान्विता । श्रुत्वेत्याद्युत्तरान्वि तम् । अदः इदं ज्ञानदेववचनम् ॥ ६० ॥ तस्य महिपस्य स्वामिनः सकाशादमुं महिषं गृहीतवान् । यथा मार्गेण योजयितुं द्विजाश्च निर्गताः ॥ ६१ ॥ तत्रस्थाः द्विजाः तेषां निवृत्त्यादीनां वियोगेन दुःखान्विताः संतः क्रोशादपि निवृत्त्य यदा न ययुस्तदा ज्ञानदेवः शीघ्रं वयमागमिष्याम इत्यादि बहूक्तिभि स्तान्न्यवर्त्तयदिति वाज्यम् ॥ ६२ ॥ ६३ ॥ पूर्वार्धे पूर्वान्वयि ॥ ६४ ॥ गीताया मुख्यार्थस्य बोधिकां तद्देशभाषाटीकां युक्तां चकार ॥ ६५ ॥ ज्ञान

भविष्यंत्येव नैवातः स्थाप्योयमिति मन्मतम् ॥ श्रुत्वा निवृत्तिदेवोदः सत्यं मत्वाथ माहिपम् ॥ ६० ॥ प्रार्थयित्वैव तस्येशाज्जगृहेमुं ततोखिलाः ॥ निर्ययुस्ते प्रतिष्ठानात्पथा योजयितुं द्विजाः ॥ ६१ ॥ तत्रत्याश्च वियोगेन तेषां दुःखान्वितास्ततः ॥ निवृत्ता नाभ वन्क्रोशादपि तांश्च न्यवर्तयत् ॥ ६२ ॥ ज्ञानदेवः किलायामोऽचिरेणेति बहूक्तिभिः ॥ गोदां ततः समुत्तीर्य ययुस्ते प्रवरातटे ॥६३॥ विष्णोः स्थानं निवासाख्यं मोहिनीरूपधारिणः ॥ तस्थुस्तत्राथ तत्रत्यैः प्रार्थिताः सत्कृताः सदा ॥ ६४ ॥ तिष्ठन् श्रीज्ञानदेवोत्र गीतामुख्यार्थबोधिनीम् ॥ चकार टीकां तद्देशभाषयाऽज्ञहिताय च ॥ ६५ ॥ ज्ञानदेवीति विख्याता सद्भिः सन्मानिताखिलैः ॥ गुरवे दर्शयामास ज्ञानदेवोथ तां गुरुः ॥ ६६ ॥ दृष्ट्वानेकसुदृष्टांतां रहस्यार्थप्रकाशिनीम् ॥ हरेरप्युक्तितात्पर्यं सम्यगत्र प्रकाशि तम् ॥ ६७ ॥ मत्वेत्थं ज्ञानदेवांतः कवितांहंकृतिस्त्वणु ॥ मास्त्वित्थं चावदज्ज्ञात्वापीमं सद्बुद्धिमत्तमम् ॥ ६८ ॥ श्रीनिवृत्तिरु वाच ॥ या कृष्णेनार्जुनायोक्ता सर्वश्रुतिशिरोमयी ॥ गीता तस्यास्त्वयाप्यर्थः पारोक्ष्याद्विशदीकृतः ॥ ६९ ॥ दत्तैकेन सितैकस्मै भक्षितान्येन चादरात् ॥ ताभ्यामन्येन सात्यापि न लब्धाथापि वर्णिता ॥ ७० ॥

देवी ज्ञानेश्वरीति विख्याता सा सर्वैः सत्पुरुषैः मानितास्ति । गुरुः निवृत्तिदेव इत्याद्युत्तरान्वयि ॥ ६६ ॥ अनेकदृष्टांतयुक्तां गूढार्थप्रकाशिकां ज्ञानेश्वरीं दृष्ट्वा अत्र अस्यां कृष्णोक्तितात्पर्यं सम्यक्प्रकाशितं मत्वा ज्ञानदेवस्यांतःकरणे कवितांहंकृतिर्माभवतु इत्थं इति हेतोः ज्ञानदेवं बुद्धिमंतं ज्ञात्वापि आहेति द्वयोरन्वयः ॥ ६७ ॥ ६८ ॥ सर्वश्रुतिशिरोमयी सर्वोपनिषदर्थरूपा पारोक्ष्यात्परोक्षत्वेन ॥६९॥ तत्र दृष्टांतः । एकेनैकस्मै शर्करा दत्ता तेन च प्रीत्या

भक्षिता ताभ्यां दातृगृहीतृभ्यामन्येन न माताऽथापि वर्णिता । भगवतार्जुनाय ज्ञानामृतमर्पितं चेत्तर्हि स्वानुभवं विना केवलं तयोरनुभवमात्रवर्णनेन न तत्
नुभवसिद्धिरित्यर्थः ॥ ७० ॥ ७१ ॥ अमृतानुभवाख्यं ग्रंथम् ॥ ७२ ॥ वर्णित इति पूर्वान्वयि ॥ ७३ ॥ ७४ ॥ अपरा शिवकल्याणीति विख्याता

यथा तथैव ते भाति कवितानुभवादृते ॥ तस्मात्कुरु त्वं कवितां यथात्मानुभवोस्ति ते ॥ ७१ ॥ श्रीदेशिकेंद्र उवाच ॥ गुरूक्तमिति
चाकर्ण्य ज्ञानदेवस्तदात्मवान् ॥ अमृतानुभवं चक्रे यत्रात्मानुभवः स्फुटम् ॥ ७२ ॥ वर्णितोनोस्य तात्पर्यं नैवात्मानुभवादृते ॥
विद्वद्भिरपि चैवैष ज्ञायतेथ कुतः परैः ॥ ७३ ॥ अमृतानुभवस्यास्य प्राकृतस्यापि केनचित् ॥ पंडितेन कृता व्याख्या तत्त्वाभिज्ञेन
संस्कृता ॥ ७४ ॥ प्राकृता शिवकल्याणी नाम्ना ख्याता तथापरा ॥ ज्ञानदेवेन गुरवेप्यमृतानुभवोखिलः ॥ ७५ ॥ दर्शितः सोपि
दृष्ट्वामुं मेने स्यात्मानुभावताम् ॥ अथैकदाह मुक्तांबा निवृत्तिं परमं गुरुम् ॥ ७६ ॥ गंतव्यमथ चास्माभिर्जन्मस्थानमितोखिलैः ॥
तथेति निर्ययुस्तस्मान्निवृत्त्याद्याः समाहिषाः ॥ ७७ ॥ अथ मार्गे व्रजन्प्रातः सिद्धं स सहितस्तदा ॥ कृत्वा समाधिमरय्ऽमी लि
लिपुर्गोमयादिभिः ॥ ७८ ॥ पुपुजुश्चाथ तत्स्थानं ख्यातमासीत्ततोखिलाः ॥ अलकाख्यां पुरीं गत्वाऽत्रत्यविप्रेभ्य आदरात् ॥ ७९ ॥
प्रतिष्ठानस्थविप्राणां ददुः पत्रमथाखिलैः ॥ पूर्वमेव श्रुतामीषां कीर्तिस्तत्र कृता तु या ॥ ८० ॥ दृष्ट्वा पत्रं च तैस्ते मानिताः शिर
विष्णवजाः ॥ मुक्ताख्या च परांबेति तस्थुस्तत्राथ ते सुखम् ॥ ८१ ॥ सच्चर्चया विनानेपत्कालं निन्युरहर्निशम् ॥ तत्रत्याः संगतोमीषां
जाता आत्मविदोखिलाः ॥८२॥ मेनिरेमून्गुरूनत्र पुपुजुश्चातिभक्तितः ॥ बहवोत्र ययुस्तेषां दर्शनार्थं च साधवः ॥ ८३ ॥ योद्धारती
र्णः शिव एव बाल्यात्प्रवर्तयच्चार्थत इंद्रियाणि ॥ तं पट्कसत्यत्ताधिकं शताख्यं निवृत्तिदेवं गुरुमानताः स्मः ॥ ८४ ॥

टीकास्ति ॥ ७५ ॥ अमुं ग्रंथं अस्य ज्ञानदेवस्यानुभावतां अनुभवत्वम् ॥ ७६ ॥ जन्मस्थानमलकावतीम् । तस्मान्निवासस्थानात् ॥ ७७ ॥ ७८ ॥
तत इत्युत्तरान्वयि ॥ ७९ ॥ अखिलैः अलकास्थितैः या तत्र प्रतिष्ठाने कीर्तिः कृता सा श्रुता ॥ ८० ॥ ८१ ॥ ८२ ॥८३॥ षट्समत्याधिकशताख्यं

निवृत्त्यानंदं प्रणमति । य इति । बाल्यावस्थामारभ्यैवेंद्रियाणि विषयेभ्यो निवर्तितवान् तं नताः स्मः॥८४॥सतत्यधिकशतसंख्यं ज्ञानदेवानंदं प्रणमति । य इति ॥ ८५ ॥ श्रीगुरुभक्तं सोपानदेवं प्रणमति य इति । ब्रह्मैवावतीर्णः अखिलं कार्यजातं त्यक्त्वा गुरुभक्तिमेव यः कृतवान् तं नताः स्मः ॥ ८६ ॥ अष्टसप्तत्यधिकशतसंख्यं मुक्तांबाशक्तिगुरुं प्रणमति । येति । निर्मलं ज्ञानं प्रवर्तयंती । सति ब्रह्मणि मूढजीवांश्च प्रवर्तयंती या साक्षादवतीर्णा तां नताः स्मः ॥ ८७ ॥ सर्गोक्तनिवृत्त्यानंदादिगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह । निवृत्तिदेवादिति । गुरोः सुभक्तिमिति सोपानदेवकथाफलम् ॥ ८८ ॥ इति श्रीगु

यो विष्णुरेवावतराद्धि येन व्यक्तीकृता वेदमयी च गीता ॥ तं सतसप्तत्यधिकं शताख्यं श्रीज्ञानदेवं गुरुमानताःस्मः ॥८५॥ यश्चावतीर्णो वि धिरेव चक्रे त्यक्त्वाखिलं सद्गुरुभक्तिमेव ॥ वयं मुहुस्तं गुरुभक्तवर्यं सोपानदेवाभिधमानताःस्मः ॥ ८६ ॥ याह्यवतीर्णा विशदात्मवि द्या प्रवर्तयंती सति चाज्ञजीवान् ॥ तामष्टसप्तत्यधिकं शताख्यं मुक्तांबिकाशक्तिगुरुं नताःस्मः ॥ ८७ ॥ निवृत्तिदेवाच्च गुरुत्रयस्य कथां पठेद्यः शृणुयाच्च भक्त्या ॥ विरक्तिबोधौ च गुरोः सुभक्तिं जीवन्विमुक्तिं च लभेत्स मर्त्यः ॥ ८८ ॥ इति श्रीगुरुपरंपराचरित्रेोत्तरार्द्धे निवृत्तिदेवादिगुरुत्रयकथावर्णनं नाम त्रयोविंशोध्यायः ॥ २३ ॥ श्रीदेशिकेंद्र उवाच ॥ आसीत्तत्रालकावत्यां द्विजः कश्चित्तु वार्धुषिः॥ परनिंदापरो नित्यं परोत्कर्षैतिदुःखितः ॥१॥ निवृत्तिदेवमुख्यानां सदा द्वेषं करोत्यसौ ॥ वदतीमे यतः पुत्राः सर्वथैषां मुखं कोऽवेत् ॥ ॥ २ ॥ न विलोक्यं यतोमीषां न जातिर्न च वर्णता ॥ अत्रत्यास्तु सदा गत्वाऽमून्नमंत्येव दुर्धियः ॥ ३ ॥ विद्वांसोपि न कुर्वंति धर्मा धर्मविचारणम् ॥ यन्मुखं तु निरीक्ष्यैव सचैलं स्नानमाचरेत् ॥ ४ ॥ गुरवस्तेभिमन्यंते किमुत्कर्षात्कलेरिति ॥ वल्गत्येष सदैवेत्थं श्रुत्वाप्येनं पुरस्थिताः ॥ ५ ॥

रुपरंपराचरित्रटीकायामर्थस्फूर्त्यभिधायां त्रयोविंशः सर्गः ॥ २३ ॥ उच्चतुर्विंशके तूनविंशोर्द्ध्वशतपद्यकैः ॥ मल्लाटानंदतः प्रोक्ताश्चत्वारो देशिकाः क्रमात् ॥ २४ ॥ आसीदिति । वार्धुषिर्वृध्द्या जीवकः । “ वृध्या जीवस्तु वार्धुषिः ” इत्यमरः ॥ १ ॥ नावलोक्यमिति पूर्वान्वयि । एषां यतिपुत्राणां मुखं ॥ ॥ २ ॥३॥४॥ किं कलेरुत्कर्षेण यतिपुत्रा अपि ते गुरव इत्यभिमन्यंते । पंडितैरिति शेषः । इत्थं एवमुभयान्वयि । श्रुत्वा इत्याद्युत्तरान्वयि । एवं मल्लाटं

खलं मत्वा ग्रामस्थाः किमपि नोचुः ॥ ५ ॥ ६ ॥ अष्टाहं यथास्यात्तथा । अयमर्थः एकैकवीथिषु प्रतिदिनं गत्वा जनेभ्यः ऋणं गृह्णाति अष्टमे पुनः पूर्ववीथ्यामटति । यद्यपि तन्नाम विश्वनाथेत्यस्ति तथापि तं भल्लाटं प्राहुरित्यन्वयः ॥७॥ भल्लेन सहाटति भल्लाटस्तं सद्बुद्धयः । अज्ञास्तु भल्टं प्राहुः यथा

नैषदाहुः खलं मत्वा महतां हि खलाद्भयम् ॥ सदाटति पुरे हस्ते गृहीत्वा भल्लमेव सः ॥६॥ याचयन्नृणमष्टाहं नित्यमेकैकवीथिषु ॥ विश्वनाथेति तन्नाम तथाप्याहुरमुं जनाः ॥७॥ भल्लहस्तोटतीत्येनं भल्लाटमिति सद्धियः ॥ भल्टं प्राहुरज्ञास्तं पलाशं पलशं यथा ॥ ॥ ८ ॥ भल्लाटोसौ प्रसिद्धोत्र दुर्वचो वक्ति चाखिलान् ॥ तर्जनं ताडनं चाल्पे तस्य स्वाभाविकी क्रिया ॥ ९ ॥ भयं वहंति सर्वेस्य यतोसावृणदोभवत् ॥ ऋणान्नो भीः प्रपंचेन्यानृण्यान्निर्भयता नृणाम् ॥ १० ॥ श्रीदेशिकेंद्र उवाच ॥ निवृत्तिदेवो मुक्तांबा दीपान्नल्या मथैकदा ॥ प्राहेत्थं मंडकाः कार्यास्त्वयाद्यैव किशोरके ॥ ११ ॥ तथेत्युक्त्वा कुलालस्य गेहं गत्वोरुभाजनम् ॥ गृहीत्वास्माद्ययौ मार्गान्मुक्तांबा तावदागतः ॥ १२ ॥ भल्लाटश्च पथानेन दृष्ट्वैनां दूरतोब्रवीत् ॥ तर्जयन्परुषैर्वाक्यैर्भर्त्सयंश्च दुरुक्तिभिः ॥ १३ ॥ भल्लाट उवाच ॥ निर्लज्जे त्वं कथं मार्गान्मत्पुरस्ताद्धि गच्छसि ॥ वीक्ष्यैव त्वन्मुखं स्नानं क्रियते धर्मवित्तमैः ॥ १४ ॥ कार्यार्थं गच्छतः किम्मे सन्मुखं रिक्तभाजनम् ॥ हस्ते गृहीत्वा प्राप्तासि जातो दुःशकुनश्च मे ॥ १५ ॥ हनिष्येनेन भल्लेन त्वां चेत्कार्यं न मे भवेत् ॥ गृहमेत्यैव ते दुष्टे किं स्यात्वद्बंधुभिर्मम ॥ १६ ॥ एवमुक्त्वा स भल्लेन भीषयन्दूरतोंबिकाम् ॥ भाजनं च बिभेदाथ त्यक्त्वा भग्नं च भाजनम् ॥ १७ ॥ ययौ कुलालगेहं सा याचितुं भाजनं पुनः ॥ गत्वास्याः पृष्ठतः प्राह कुलालं भल्टो रुषा ॥ १८ ॥

पलाशं लौकिकाः पलशं वदंति ॥८॥ अत्र संप्रदाये॥९॥१०॥ हे किशोरके इति कन्यासंबोधनं ज्येष्ठो भ्राता पितुः सम इत्यभिप्रायेण॥११॥ अस्मात्कुलालगृहात् मार्गेण ययौ यावत्तावदनेनैव मार्गेण भल्टः प्राप्त इति संबंधः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ अथादि परान्वयि ॥ १७ ॥ १८॥

॥ १९ ॥ ऋणं त्वत्त इति पूर्वे । स कुलालः ॥ २० ॥ उच्चैरुरोदेति पूर्ववद्वम् ॥ २१ ॥ बाह्यं दुःखस्य प्रतीतिमात्रमेव वस्तुतो न सत्यम् । अंतरात्मनि तु शोको नास्त्येव । मृगजलं धूलिसंयोगेन कांतिहीनं चेत्तत्प्रतिष्ठितः सूर्यो मलिनो न भवति यथा. तथा मायोत्पन्नदेहादिदुःखेनात्मा दुःखवान्न भवतीति संबंधः ॥ २२ ॥ द्वयमंतर्बाह्यदुःखद्वयम् ॥ २३ ॥ २४ ॥ तस्यायुः अयुष्यं धिगस्तु येन गुर्वनुज्ञा न कृता स जीवन्मृत उच्यते ज्ञानिभिः । ननु



भाजनं नैव देह्यस्यै यस्माद्दुःशकुनोनया ॥ कृतो मे चेद्दास्येव ग्रहीष्येद्यैव चाखिलम् ॥ १९ ॥ ऋणं त्वत्तो निशम्येत्थं सोऽस्यै नो भाजनं ददौ ॥ अलब्ध्वा भाजनं देवी दुःखिता स्वगृहं गता ॥ २० ॥ रुरोदोच्चैर्ज्ञानदेवस्तामित्याहाथ किं स्वसः ॥ दुःखिता त्वमृतं ब्रूहि दुःखं बाह्यमुतांतरम् ॥ २१ ॥ बाह्यं भात्येव नो सत्यमतस्त्वात्मनि नैव शुक् ॥ भासमानं रवेर्गोपु जलं चेद्धूलितो विरुक् ॥ ॥ २२ ॥ नार्कस्ताद्दक्तथा दुःखी नात्मा मायोत्थदुःखतः ॥ श्रुत्वेत्याहाथ मुक्तांवा न मे दुःखद्वयं त्वणु ॥ २३ ॥ गुरूक्ताज्ञा मया नाभूत्तेनैवास्मि सुदुःखिता ॥ गुरूक्तं न कृतं येन तस्य जन्म हि निष्फलम् ॥२४॥ धिग्विद्यां धिक्तपोथायुः स जीवन्मृत उच्यते॥ निवृत्तिदेवो यान्प्राह मां कुरुष्वाद्य मंडकान् ॥ २५ ॥ तदर्जनाय चानीतं कुलालाद्भाजनं मया ॥ पथि मां मल्लटोपश्यत्तेनाहं तु दुरुक्तिभिः ॥ २६ ॥ तर्जिता भाजनं चाथ स्फोटितं मल्लघाततः ॥ याचितुं भाजनं भूयोहं गताथैत्य मल्लटः ॥ २७ ॥ कुलालं प्राह नैवास्यै भाजनं दीयतामिति ॥ अलब्ध्वा भाजनं गेहं प्राप्ताहं मंडकान्कथम् ॥ २८ ॥ करिष्येद्यैव दुःखं मे गुरूक्ताकरणान्महत् ॥ ज्ञानदेवोथ तां प्राह स्नात्वा कृत्वाशु मंडकान् ॥२९॥ मर्जयाद्यैव मे पृष्ठे श्रुत्वेत्थं सा तथाकरोत् ॥ ज्ञानदेवं तदाहेति मंडकास्तु मया कृताः॥३०॥प्राणापानौ ज्ञानदेवोथ नाभावेकीकृत्वा तौ समाने नियोज्य॥उत्थाप्योदानं च कंठेपि नीत्वा भ्रूमध्येग्नेर्धारणां संदधार ३१॥

त्वया काज्ञोल्लंघितेत्यत आह । निवृत्तिदेव इति ॥२५॥ तेनाहमित्याद्युत्तरान्वयि ॥२६॥ अथाद्युत्तरबद्धम् ॥ २७ ॥ अहमद्य मंडकान् कथं करिष्ये इति संबंधः॥२८॥२९॥३०॥ अथ ज्ञानदेवः प्राणापानौ एकीकृत्य समाने नियोज्योदानं चोत्थाप्य भ्रूमध्ये नीत्वाग्निधारणां चकार । शालिनी वृ० ॥३१॥

निम्ने निम्नीभूते ॥ ३२ ॥ नन्वग्निधारणया तस्य देहः कुतो न दग्ध इत्यत आह । सुस्रावेति । ब्रह्मरंध्रे य इंदुस्तस्माद्यदमृतं सुस्राव तत्सुषुम्णा मार्गेण शरीरेऽनाप्य तेनाग्निं शांतं चक्रे । एवं सामर्थ्यवान्योगी सदा शांतो बभूव ॥ ३३ ॥ एतैः समयैर्निरपराधकर्ताहं शिष्यः शिक्षितुं योग्योस्मि ॥ ॥ ३४ ॥ भोजनांतं भोजनसमाप्तिम् ॥ ३५ ॥ ३६ ॥ व्यंजनानि चेति पूर्वान्वयि । अमुं भल्लटं निरीक्ष्येत्युत्तरान्वयि । यावद्विलोपयति तावद्भल्लट

ज्वालाश्चाग्नेर्निर्ययुस्तस्य वक्त्राद्दक्कर्णेभ्यो नासिकायाश्च वह्नयः ॥ निम्ने पृष्ठे तत्तदेहस्य देवी प्रत्यक्र सर्वान्मंडकान्भर्जति स्म ॥ ३२ ॥ सुस्रावेंदोरमृतं ब्रह्मरंध्रे तच्चानीयांगे सुषुम्णापथेन ॥ अग्निं शांतं चाकरोत्तेन योगीत्थंसामर्थ्योप्यास शांतः सदैव ॥ ३३ ॥ तिष्ठंस्तूष्णीं भल्लटाख्यो बहिस्तादल्पाद्रंध्रात्सर्वमेवैतदीक्ष्य ॥ प्राहामी नो मानवाः संति हीशा एतैः शिक्ष्योहं किला गःकृद्य ॥ ३४ ॥ प्रार्थ्यास्तस्मात्साधवोमी दयाढ्याः स्वीकर्तव्यं नूनमुच्छिष्टमेषाम् ॥ निश्चित्येत्थं भोजनांतं प्रतीक्षंस्तस्थौ तत्रैवात्मनिंदां प्रकुर्वन् ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ कृताह्निको निवृत्त्याख्यो बंधुभ्यां बुभुजे ततः ॥ मंडकान्ससितादुग्धान्मुक्तां बापरिवेषितान् ॥ ३६ ॥ व्यंजनान्यपि ते भुक्त्वा तृप्ताश्चोत्थातुमुद्यताः ॥ तावद्ययौ बहिस्तात्स भल्लटोमुं निरीक्ष्य च ॥ ३७ ॥ ज्ञानदेवो द्रुतं पात्रं स्वीयमुत्थाप्य पृष्ठतः ॥ विलोपयति तावत्स गृहीत्वा कवलं ततः ॥ ३८ ॥ बुभुजे च पपातास्य पादयोर्भल्लटो रुदन् ॥ तं प्राहेति तदुच्छिष्टभक्षणादाशु सन्मतिः ॥ ३९ ॥ भल्लट उवाच ॥ महाखलोहं न मया स्तुतिस्तु स्वप्ने हि कस्यापि कृता किलाल्पा ॥ मर्माणि संशोध्य धियाखिलानां निंदोक्तिरेवानिशमाह्निकं मे ॥ ४० ॥ भयं वहंत्येव च मे महांतो ये शास्तुमी शाश्च किमल्पसत्त्वाः ॥ निंदासमं नैव भयं हि लोके तत्याज रामोपि यतः प्रियां प्राक् ॥ ४१ ॥

स्ततः कवलं गृहीत्वा बभक्षेत्यन्वयः ॥ ३७ ॥ ३८ ॥ अस्य ज्ञानदेवस्य तं ज्ञानदेवं प्रार्थितवान् ॥ ३९ ॥ तत्रादौ स्वापराधान्दर्शयति । महाखल इति । सर्वेषां मर्माणि संशोध्य निंदोक्तिः कृता । एतदेव ममाह्निकम् । अहन्यहनि क्रियमाणं मम कृत्यमित्यर्थः ॥ ४० ॥ ये शासनसमर्थास्ते महांतोपि

मत्तो भयं वहंत्येव किं वक्तव्यमल्पबला भयं वहंतीति । निंदासमानं भयजनकमन्यन्नास्ति । यतो निंदाहेतोः पूर्वं रामोपि प्रियां भार्यां त्यक्तवान् । तस्मा त्सर्वभीतिजनकनिंदासमं पापं नास्तीत्यर्थः ॥ ४१ ॥ किं च सुखदुःखे दैवयोगेनैव भोक्तुं योग्ये न पुनः प्रयत्नपरिहार्ये इति निश्चयेनाहं तु देवे कर्म फलदातारि विश्वासं न कृतवान् । कुतः पुनरितरेषु साधुषु दंभेनान्यद्रव्यहरणकर्तृषु विश्वासं करोमि । तस्मात्सत्पुरुषाभासेषु साधुषु देवेषु च विश्वासरहि तोहमित्यर्थः । उपजातिवृत्तम् ॥ ४२ ॥ सत्पुरुषाभासत्वं तेषु दर्शयति । अज्ञायेति । तत्त्वं ज्ञात्वा नोपदिशंति किं तु मंत्रादिज्ञानरहिताः दंभेन बहून् शिष्या न्मोहयित्वा उपदिशंति । हरेः विधीज्या विधियुक्तपूजा च तैर्न ज्ञायते किं तु द्रव्यहरणमेव ज्ञायते द्रव्यहरणार्थमेव साधुत्वं प्राप्ता इत्यर्थः ॥ ४३ ॥ किं च

सुखासुखे दैवत एव भोग्ये सदेत्यहं निश्चयतो न कुर्वे ॥ श्रद्धां तु देवेषु कुतः परेषु सत्सूरुदंभात्परवित्तहृत्सु ॥४२॥ अज्ञाय मंत्रान्हि समादिशंति संमोह्य शिष्यांस्तु बहूंश्च दंभात् ॥ ज्ञानं न योगोपि हरेर्विधीज्या तैर्ज्ञायतेऽर्थाहृतिरेव तत्त्वम् ॥४३॥ मां देव एवादिशदे त्य मंत्रान्प्रत्यक्षमित्यात्मप्रशंसयान्ये ॥ वदंति हृत्कल्पितसंप्रदायं ज्ञाताः किलैतैर्न च मूलमंत्राः ॥ ४४ ॥ संतीति संतः खलु ये सदं भास्तैर्नो जिताः कामसुखाः सुखाप्त्यै ॥ त्वमेव कामादिजयीक्षितोतस्त्वादृक् न साधुर्भविता न भूतः ॥ ४५ ॥ संत्रासिताज्ञेन मया दुरुक्त्या त्वां चाह मे वृत्तमसौ रुदंती ॥ मुक्तापि देहात्मधिया स्ववाक्यैर्मां शास्तुमीशा भवताप्यणूक्ता ॥ ४६ ॥ गुरूदितस्याकरणं हि दुःखं तयोक्तमन्यन्न ततः स्वपृष्ठे ॥ कृता त्वया मंडकपक्वतेति योगान्न योगी श्रुत ईक्षितोपि ॥ ४७ ॥

मां देव एव प्रत्यक्षं स्वप्ने वा एत्य मंत्रानुपदिष्टवानित्यात्मप्रशंसयान्ये साधवो मनःकल्पितं संप्रदायं परंपरारूपं कथयंति । तैरेतैर्मंत्रा न ज्ञाताः खलु मंत्रवत्त्वान भिज्ञा एवेत्यर्थः ॥ ४४ ॥ इत्येवंप्रकारेण दंभयुक्ताः संतो बहवः संति तैः सुखप्राप्त्यै कामादयो न जिताः अतस्त्वमेव कामादिजयकर्ता मया दृष्टोसि त्वत्स दृशो न भूतो न भविष्यति त्वमेव सर्वोत्तमः साधुरित्यर्थः ॥ ४५ ॥ ननु मय्येवोत्तमसाधुत्वं त्वया कथं ज्ञातमित्याशंक्याह । संत्रासितेति । मूर्खेण मया त्रासितासौ मुक्तांबा रुदंती सती त्वांप्रति मम वृत्तं कथयामास । देहात्मधिया रहितां मां शिक्षयितुं समर्था ज्ञानवत्यपि मुक्तांबा त्वया स्ववाक्यैरात्मप्रति पादकवचनैः किंचिदुपदिष्टाऽसीत् । इति मया गुप्तरूपेण ज्ञातमित्यर्थः ॥ ४६ ॥ गुरुवचनाकरणमेव दुःखहेतुर्नान्यत्किंचिद्दुःखकारणमस्तीति मुक्तां

त्वया कथितं तुभ्यमिति शेषः । त्वया स्वपृष्ठे योगाग्निप्रतते मंडकमर्जनं कृतं अतस्त्वत्सदृशयोगी न श्रुत इत्यर्थः ॥ ४७ ॥ एतेनवाग्निशरणासामर्थ्यं केनापि कर्त्रा वाचा अवर्णनीयम् । बुद्ध्याऽतर्क्यं चैवास्ति । यद्वा केन ब्रह्मणापि वर्णनीयं किं वक्तव्यं मया वर्ण्यत इति यतस्त्वं । विष्णुरेवावतीर्णोसि अतस्त्वं पापसंवादपराधिनं मां रक्ष ॥ ४८ ॥ अपराधिषु द्वेषकर्तृषु कृपाकरत्वं विष्णुरूपे त्वयि दृष्टमित्याह । त इति । यस्तव कृष्णरूपस्य चरणे उग्रबाणं मुसलावशिष्टलोहमहनत् । स जरा नाम व्याधः सदेहः स्वपदं त्वया नीतः । तथा द्वेषिणौ शिशुपालदंतवक्त्रौ अन्ये कंसादयश्च स्वपदं नीताः ।

वाण्या धिया वाच्यमतर्क्यमेव त्वद्वैभवं केन च वर्ण्यते तत् ॥ त्वं विष्णुरेवाऽऽहितावतीर्णो मां पाहि चागस्कृतमप्यचौवात् ॥ ४८ ॥
त्वत्पाद एवाहनदुग्रबाणं प्राक् यस्त्वयासौ स्वपदं किरातः ॥ नीतो द्विषंतावपि चैद्यपुत्रावन्ये च नाहं हि तथा महागाः ॥ ४९ ॥
श्रीदेशिकेंद्र उवाच ॥ ज्ञानेश्वरोऽथेति निशम्य तस्य स्तुतिं तमुत्थाप्य करेण शिर्षे ॥ स्पृशंश्च तां मुक्तवतीमथाह मुक्तामिति ब्रूहि रहस्य मस्मै ॥ ५० ॥ आज्ञापितेत्थं गुरुणाथ मंत्रान् मुक्तांबिकास्मै निखिलाञ्जगाद ॥ ज्ञानं च योगाभ्यसनं तथास्याख्यां भल्लटानंदमि ति स्म चक्रे ॥ ५१ ॥ सिद्धिं ययौ त्र्यंबकके निवृत्तिर्ज्ञानेश्वरः सिद्धिमितोलकायाम् ॥ मुक्तांबिका तच्चरणानुगाथ सोपानदेवः पुरि सासवाटे ॥ ५२ ॥ श्रीदेशिकेंद्र उवाच ॥ सिद्धिं गतेषु सर्वेषु देशिकेषु बभूव सः ॥ भल्लटानंदनाथस्तु सिद्धवर्योतिविश्रुतः ॥ ५३ ॥
शिवमेवाखिलं पश्यन्नदो यत्र स्वतःस्फुरत् ॥ शिव एवानृतं भाति पृथग्वार्वाविवोर्मयः ॥ ५४ ॥ इत्थंमतिः शिवार्चावान्क्वचिज्जपपरः क्वचित् ॥ तद्ध्याननिष्ठः शिष्येभ्यः क्वचिन्मंत्रोपदेशकृत् ॥ ५५ ॥ प्राकृतां कवितां कृत्वा स्वोपास्यं वर्णयन्क्वचित् ॥ नृत्यन्नुच्चैः प्रगायंश्च प्रेमाश्रुश्चोत्कचांकितः ॥ ५६ ॥

न तथाहं महापराध्यस्मि । विष्णुरूपस्त्वमतो मां शरणागतं संसाराद्रक्षेत्यर्थः ॥ ४९ ॥ ५० ॥ योगाभ्यासं पूर्णाभिषेकं कृतवतीत्यर्थः ॥ ५१ ॥ एवं संप्रदायं भवत्स्वे निवृत्त्यादयः सिद्धिं प्राप्ता इत्याह सिद्धिमिति । त्र्यंबकके त्र्यंबकक्षेत्रे । मुक्तांबा तस्य ज्ञानदेवस्य चरणानुगा । अलकावत्यां सिद्धिं प्राप्ता इत्यर्थः ॥ ५२ ॥ ॥ ५३ ॥ सर्वमिदं विश्वं शिवरूपं पश्यन् यद्यस्मात् । अदः इदं विश्वं स्वतः स्फुरत्स्वप्रकाशं न भवति । समुद्रे तरंगा इव शिवे सच्चिदानंदेऽनृतं जडं कल्पितं विचारेण प्रतीयत इत्यर्थः ॥ ५४ ॥ इत्थंमतिः एवंनिश्चयवान् शिवपूजकः क्वचिदासीत ॥ ५५ ॥ उत्कचांकितः रोमांचचिह्नितः ॥ ५६ ॥

आसीदित्यध्याहारः ॥ ५७ ॥ सुरोन्मादी मदिरामदांधो यथा वस्त्रं विस्मरति तथा देहं विस्मरन्निति पूर्वान्वितम् । स भल्लटः बिल्वपर्णांकितं शिवम् ॥ ॥ ५८ ॥ ५९ ॥ एकोनाशीत्यधिकशतसंख्यं भल्लटानंदं प्रणमति । सन्निंदक इति । साधुनिंदकः । वार्धुषिः । ज्ञानदेवस्य कृपावलोकनेन यः प्रसिद्धो बभूव । एकोनाशीतियुक्तं शतं तत्राख्या यस्य तं नताः स्मः ॥ ६० ॥ द्राविडे देशे यत्र गौतमस्य न्यायशास्त्रकर्तुः स्थानं तत्र नवद्वीपसंज्ञकस्थानेऽमुना

क्वचिद्देहधिया पूर्वं स्वकृतं संस्मरन्रुदन् ॥ हसंश्चात्मातिजानंदाद्देहमप्यस्मरन्निजम् ॥ ५७ ॥ वासो यथा सुरोन्मादी तिष्ठतीत्थं स हस्तके ॥ भल्लं बिभ्रन्बिल्वपर्णांकितं स्वापेथ जागृतौ ॥ ५८ ॥ एकदा स भ्रमन्प्राप्तः द्रष्टुमामर्दके शिवम् ॥ तत्रत्यैः सत्कृतोत्रैव तस्थौ नागेशसन्निधौ ॥ ५९ ॥ सन्निंदकः प्राग्द्विजवार्धुषिर्यः श्रीज्ञानदेवेक्षणतोथ सिद्धः ॥ एकोनिताशीतिशताख्यमेनं श्रीभल्लटानंदगुरुं नताः स्मः ॥ ६० ॥ श्रीदेशिकेंद्र उवाच ॥ अथासीद्द्राविडे विप्रस्तर्काधीतिः कृताखिला ॥ नवद्वीपेमुना यत्र प्रख्यातं गौतमासनम् ॥ ६१ ॥ लब्ध्वा भट्टाभिधां तस्मात्ततो निर्गत्य पंडितान् ॥ भट्टस्वामीति नामासौ लेभे सर्वत्र विश्रुतम् ॥ ६२ ॥ स विद्वानपि संलब्धुं मंत्रशास्त्रमशेषतः ॥ विचिन्वन्मंत्रवेत्तारं भल्लटानंदमाशृणोत् ॥ ६३ ॥ तदर्थं तत्पुरं गत्वा तम दृष्ट्वा ततो भ्रमन् ॥ प्राप्तोथामर्दकं तत्र तं चापश्यच्छिवालये ॥६४॥ भल्लहस्तं च भल्लाग्राधस्ताद्वीक्ष्य शिवाकृतिम् ॥ प्राहेत्येष कथं मंत्रवेत्ता शंभोरुपासकः ॥६५॥ यः कुंतं शिवलिंगोर्ध्वे निधायैव स्वपत्यभीः॥शिवोर्ध्वे निहितः कुंतो बुद्ध्या वा स्वपतांजसा ॥६६॥

विप्रेण सर्वतर्काधीतिः न्यायशास्त्राध्ययनं कृतम् ॥ ६१ ॥ तस्माद्गौतमस्थानाद्भट्टसंज्ञां लब्ध्वा ततः तत्र पंडितान् जित्वा भट्टस्वामीति नाम लेभे ॥ ॥ ६२ ॥ आसमंताद्विख्यातं भल्लटानंदं श्रुतवान् ॥ ६३ ॥ तदर्थं भल्लटानंदप्राप्त्यर्थं तत्पुरमलकावतीम् ॥ ६४ ॥ भल्लाग्रस्याधोभागे शिवाकृतिं शिवलिंगं च दृष्ट्वा ॥ ६५ ॥ कुंतं भल्लं अभीर्निर्भयः । शिवलिंगोर्ध्वमनेन भल्लो बुद्धिपूर्वं स्थापितो वानायासेन पतित इत्येनं प्रति मया प्रष्टव्यमिति

संबंधः ॥ ६६ ॥ हे साधो त्वं शिवलिंगे भल्लं संस्थाप्य निर्दयः कथं स्वपिषि ॥ ६७ ॥ [illegible] ॥
[illegible] नास्मीति योज्यम् ॥ ६८ ॥ तस्मात्त्वमेव भल्लमन्यत्र स्थाप्य शिवविषये योऽपराधस्तं क्षमस्वेत्यर्थः ॥ ६९ ॥ [illegible] ॥ ७० ॥
[illegible]मेवाह तत्रेति । शिवाकृतिः शिवलिंगं । अन्यत्र निन्ये स्थापितवान् भल्लमित्यनुवृत्तिः ॥ ७१ ॥ [illegible] ॥

पतितश्चेति प्रष्टव्यं भट्टस्वामीति चाह तम् ॥ उच्चैः कथं भल्लमीशे स्थाप्य [illegible] ॥ ६७ ॥ [illegible]
प्रहारः किं योग्यस्तेखिलसद्विदः ॥ तं शनैर्भल्लटानंदः प्राहेत्थमद्भुतक्षमः ॥ ६८ ॥ [illegible]
प्य स्थापयान्यत्र क्षमस्वागः शिवे मम ॥ ६९ ॥ भट्टस्वामी निशम्येत्थं कुंताग्रं [illegible] ॥ अन्यत्र स्थाप[illegible]
भवत् ॥ ७० ॥ तत्रापि बिल्वपत्राधश्चाविरासीच्छिवाकृतिः ॥ ततोप्यन्यत्र निन्येसौ तत्राप्याविर्बभौ शिवः ॥ ७१ ॥ [illegible]
भ्रामितं तद्भल्लाग्रं तेन सर्वतः ॥ शिवलिंगान्याविरासन्द्वादशैवाग्रभल्लके ॥ ७२ ॥ भट्टस्वामीति [illegible]
पत्रं तु भल्लाग्रे शिवं सर्वत्र पश्यता ॥ ७३ ॥ समर्पितमनेनातो यत्र यत्रास्य संस्थितिः ॥ तत्र तत्र स्वयं शंभुः [illegible] ॥
॥ ७४ ॥ नेदृशः शिवभक्तोन्यः सर्वत्र शिवदर्शनः ॥ जातः शिवोयं तद्भक्त्या देहस्थोपि न संशयः ॥ ७५ ॥ [illegible]
भट्टस्वामी पपात तम् ॥ प्राहेत्यागः क्षम्यतां मे त्वत्सामर्थ्यमजानता ॥ ७६ ॥ मयाल्पेन यदुक्तं तत्साधो हि दयानिधे ॥ [illegible]
लब्ध्वापि महतां शास्त्रविद्यया ॥ ७७ ॥ अजानन्मंत्रशास्त्रं च येनोपास्या हि देवता ॥ यत्प्रसादादात्मलाभो [illegible]

॥ ७२ ॥ अमुष्य भक्तिरदोभक्तिरद्भुतास्ति । सर्वत्र शिवं पश्यतानेन भल्लाग्रे बिल्वं समर्पितं अजानताऽल्पेन मया यदुक्तं [illegible]
मिति संबंधः ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ अहं शास्त्रविद्यया विद्वत्सु महत्त्वं लब्ध्वापि [illegible]
तस्याः प्रसादेन गुरोः सकाशादात्मलाभो भवतीत्थं बुद्ध्या युक्तो [illegible] ॥ ७८ ॥ [illegible] ॥

॥ ७९ ॥ ८० ॥ उत्तरार्धमुत्तरान्वयि ॥ ८१ ॥ उत्तरार्धं परान्वितम् ॥८२॥ न मन्यते न सत्कार्यते । स्वीयान्पुत्रान्शिष्यांश्चाध्यापयन्स्वदेशे स्थित इत्यर्थः ॥ ८३ ॥ अशीत्यधिकशतसंख्यं भट्टस्वाम्यानंदं प्रणमति । य इति ॥ ८४ ॥ ८५ ॥ स्वर्णलक्षयुक्तोपि शास्त्रविद्यायुक्तोपि वेदविद्यारहितो स्मत्साम्यं न प्राप्नोति ॥ ८६ ॥ वेदाध्ययनाध्यापनाभ्यां परं तद्रहितं श्रेष्ठं न जानीमः यतः कारणादृचो यजूंषि सामानि एषा सतामक्षया श्रुत्युक्ता श्रीर

इत्थं धियात्मवेत्तारं विचिन्वन्मंत्रविद्गुरुम् ॥ त्वामेव शरणं प्राप्तस्त्राहि मां संसृतेर्भयात् ॥ ७९ ॥ श्रीदेशिकेंद्र उवाच ॥ भल्लटानंद आकर्ण्य भट्टस्वामीरितं वचः ॥ पूर्णां दीक्षां ददौ तस्मै विदुषेपि मुमुक्षवे ॥ ८० ॥ भट्टस्वाम्यानंद इति चक्रे [illegible] विश्रुतम् ॥ भल्लटानंदतः सर्वं लब्ध्वा हर्षान्वितस्ततः ॥ ८१ ॥ पत्न्या पुत्रद्वयेनापि शिष्यैर्देशं निजं ययौ ॥ [illegible] ख्यातः शास्त्रविद्याधिकोपि सः ॥ ८२ ॥ वेदविद्याविहीनत्वात्तद्देशीयैर्न मन्यते ॥ स्वीयानध्यापयंस्तत्र [illegible] ॥८३॥ यो द्राविडो गौतमपीठ एव शास्त्राणि लब्ध्वाखिलविद्वदीड्यः ॥ अशीतियुक्पूर्णशतं गुरुं तं भट्टादिकं स्वामिमुखं नतः स्मः॥८४॥ श्रीदेशिकेंद्र उवाच ॥ अधीतशास्त्रौ तत्पुत्रौ विवाहार्हावथासतुः ॥ द्विजास्तद्देशगाः कन्यामुभाभ्यामपि नो ददुः ॥ ८५ ॥ प्राहुः किं स्वर्णलक्षाढ्यः शास्त्रविद्यायुतोप्ययम् ॥ वेदविद्याविहीनत्वान्नैवास्मत्साम्यतामियात् ॥ ८६ ॥ वेदाधीत्यध्यापनाभ्यां जानीमो न [illegible] परम् ॥ ऋचो यजूंषि सामानि चामृता श्रीः सतां यतः ॥ ८७ ॥ श्रुत्युक्तेति स्वामिभट्टसुताभ्यां नैव कन्यका ॥ अवेदाभ्यां [illegible] विद्भिस्त्वस्माभिर्दीयते खलु ॥ ८८ ॥ मिथः प्रवदतामित्थं द्विजानां वाक्यमशृणोत् ॥ कस्यचिद्वदनाद्भट्टस्वाम्यानंदस्ततः [illegible] ॥ ८९ ॥ मंत्रशास्त्रं समालोच्य सर्वविद्यारहस्यकम् ॥ ज्ञात्वा वाग्बीजमेतस्य पुरश्चर्यामथाकरोत् ॥ ९० ॥ पंचांगां [illegible] संगृहीतानि पूर्वजैः ॥ श्रुतीनां पुस्तकान्यासुस्ताडपत्रमयानि च ॥ ९१ ॥

स्तीति योज्यम् । तथा च श्रुतिः। "ऋचो यजूंषि सामानि सा हि श्रीरमृता सताम्" इति ॥ ८७ ॥ इति हेतोः भट्टस्वामी पुत्राभ्यां वेदरहिताभ्याम् [illegible] कन्या न दीयते खलु ॥ ८८ ॥ ततः स्वयमित्युत्तरान्वयि ॥ ८९ ॥ ९० ॥ पचांगां जपहोमतर्पणमार्जनाद्विजभोजनांगसहितामिति पूर्वैर्[illegible]

शिक्षणेऽभूव ॥ ९१ ॥ तैरेव पुस्तकैरेव श्रुतीः वेदान् ॥ ९२ ॥ शिष्याः एकवेदं वेदद्वयं वाऽधीतवंत इत्यर्थः ॥ ९३ ॥ वेदत्रयीध्वनिरित्युत्तरान्वयि॥ ॥ ९४ ॥ अथाद्युत्तरान्वयि। तत्रयी तेषां वेदानां त्रयी ॥ ९५ ॥ अनेकैः शिष्यैः कर्तृभिः ॥ ९६॥ तत्रेत्याद्युत्तरान्वयि ॥९७ ॥ तत्तत्पाठवतः शिशून् पुस्तकैरेव शीघ्रमध्यापयंतं विलोक्यात्र वेदे व्यस्तं विलोमाक्षरादि संकरत्वमन्यस्मै अन्यत्प्रवचनरूपं किंचिन्नास्तीति विलोक्य विस्मिताः संतो मिथः प्राहु

तैरेवाध्यापयामास सुतौ शिष्यांश्च स श्रुतीः ॥ ऋग्यजुःसामसंज्ञाश्चानधीतश्रुतिरप्यसौ ॥ ९२ ॥ वेदत्रयीं ज्येष्ठपुत्रः सांगां चाधीतवांस्ततः ॥ कनिष्ठो ऋग्यजुर्वेदी शिष्यास्त्वेकं द्वयं क्वचित् ॥९३॥ वेदत्रय्या निशम्याथ बहिस्तात् ध्वनिमुन्नतम् ॥ मिथस्तदेति तत्रत्याः प्राहुर्वेदत्रयीध्वनिः ॥ ९४ ॥ श्रूयते हि कथं भट्टस्वामिगेहेपि शास्त्रिणः ॥ थोक्षरं च न वेदस्थं शुद्धं वेत्त्यथ तत्रयी ॥९५॥ शुद्धवर्णस्वरानेकैरप्यहो मधुरैव सा ॥ पठ्यते किं समायाताः केचिदन्येत्र वैदिकाः ॥ ९६ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं वितर्क्य सर्वे ते भट्टस्वामिगृहं ययुः ॥ तत्रासीनं तमालोक्य शिशून्वेदत्रयीं पृथक् ॥ ९७ ॥ अध्यापयंतं तद्वेदैस्तत्तत्पाठवतो द्रुतम् ॥ पुस्तकैरेव नो चात्र व्यस्तं संकरताण्वपि ॥ ९८ ॥ विस्मिताः प्राहुरन्योन्यं जन्मतः श्रुतिपाठकाः ॥ वयं त्वेकश्रुतेर्मूलं विकृतीश्चैकदा पृथक् ॥ ॥ ९९ ॥ न क्षमाः स्मो बहून्वक्तुं श्रुतित्रय्याः कुतः पुनः ॥ अनधीत्य श्रुतिं बाल्ये यः शास्त्राधीतितत्परः ॥ १०० ॥ शुद्धां वेदत्रयीं सांगामेकः सद्विकृतिं बहून् ॥ अध्यापयति नैवेत्थं सामर्थ्यं कस्यचिच्छ्रुतम् ॥१॥ निंदितोयं सुधास्माभिः प्रार्थनीयोऽधुनाखिलैः ॥ इत्युक्त्वा दंडवद्भूमौ प्रणेमुर्बद्धपाणयः ॥ २ ॥

रित्यन्वयः ॥ ९८ ॥ ९९ ॥ एकसमये बहुशिष्यानेकवेदसंहिताजटादिविकृतीश्च वक्तुं वयं न क्षमाः स्मेति पूर्वेण सहान्वयः । कुतः पुनर्वेदत्रयस्य संहिताविकृत्यादि वक्तुं वयं समर्थाः । न समर्था इत्यर्थः । उत्तरार्द्धं परान्वितम् ॥ १०० ॥ सद्विकृतिमुत्तमविकृतिसहितम् ॥ १०१ ॥ १०२ ॥

तत इत्युत्तरान्वयि ॥१०३॥ तत्र तेषु तत्सुतं भट्टस्वामिपुत्रम् ॥ १०४ ॥ लक्ष्मीधरनामकरणे हेतुः पूर्वार्द्धम् ॥ १०५ ॥ ते मैथिलाः प्रत्येकं कन्याः ददुरिति पूर्वान्वितम् ॥ १०६ ॥ उत्तरदलमुत्तरगामि ॥ १०७ ॥ १०८ ॥ एकोत्तराशीतिशतसंख्यं लक्ष्मीधरानंदं प्रणमति । य इति । एक इत्यस्यान्वे

बहुशः प्रार्थयामासुर्द्विजास्तं देशिकं तदा ॥ तेनापि सत्कृताः सर्वे संस्थिता विदुषस्ततः ॥ ३ ॥ चर्चादिभिः परी क्ष्यैतान्शालास्थांस्तत्र तत्सुतम् ॥ त्रय्यधीतिकरं प्राहुर्नाम्ना लक्ष्मीधरं हि ते ॥ ४ ॥ वेदत्रयी यतः प्रोक्ता स तां लक्ष्मीर्हि शाश्वती ॥ भट्टस्वामिसुताभ्यां तच्छिष्येभ्यश्च ददुस्ततः ॥ ५॥ प्रत्येकं ते द्विजाः कन्या भट्टस्वामी ततो ददौ ॥ मंत्रान् ज्येष्ठसुतायैव पूर्णदीक्षा विधानतः ॥ ६ ॥ लक्ष्मीधरानंद इति चक्रे नाम च शोभनम् ॥ अधीतवेदशास्त्रोसौ चक्रे लक्ष्मीधरः सुधीः ॥ ७ ॥ अद्वैतमकरं दाख्यं ग्रंथमात्मविदां प्रियम् ॥ तद्बंधुश्च क्वचित्सूक्ते श्रुतौ भाष्यं किलाकरोत् ॥ ८ ॥ यो बाल्य एवाखिलशास्त्रवेत्ता गुरोः श्रुतीः प्राप च तिस्र एकः ॥ एकोत्तराशीतिशताख्यमेनं लक्ष्मीधरानंदगुरुं नताः स्मः ॥ ९ ॥ अथासीत्कुंभकोणाख्ये क्षेत्रे विप्रोतिसा त्त्विकः ॥ चक्रपाण्याख्यतत्रत्यविष्णुमूर्तीज्यकः सदा ॥ १० ॥ देवस्वामीति पत्न्याढ्यो रामानुजमते स्थितः ॥ पुपूज भक्ति मान्नित्यं विष्णोर्मूर्तिं शिलामयीम् ॥ ११ ॥ विष्णुर्भक्त्याविर्बभावस्य साक्षादग्रे रात्रौ त्वं वरं प्रार्थयेति ॥ प्राहासौ सोप्यास्तु पुत्रो ममास्तां त्वद्भक्त्याढ्योखंडपूजारतस्ते ॥ १२ ॥ श्रुत्वेत्येनं विष्णुरुक्त्वा तथेति प्रापांतर्द्धिं तस्य पत्न्यामथासीत् ॥ वैकुंठस्थोद्धा हरेर्दूत एव तेनाज्ञप्तः स्वीयपूजां विधातुम् ॥ १३ ॥ हरिगणमनुमंतर्ज्ञानवांस्तत्पितापि हरिगणमिति तस्याख्यां ततोसौ चकार ॥ उपनयनमथास्याब्दे कृतं पंचमेपि श्रुतिगणमखिलं शास्त्राणि चापाठु ज्ञोर्भः ॥ ११४ ॥ विष्णोर्हि दूतोखिलसंस्थितस्य तस्याज्ञ याद्धा भुवि चावतीर्णः ॥ वैशेषिकाद्वैतमतेथ तेषां मतं न चित्ते विशदं तु मेने ॥ ११५ ॥

न प्रापुरित्यर्थः । तं नताः स्मः ॥ १०९॥ सदा त्रिकालं चक्रपाण्याख्या या तत्रत्या कुंभकोणक्षेत्रस्था विष्णुमूर्तिस्तस्या ईज्यकः पूजकः ॥११०॥ देव स्वामीति नामवान् ॥१११॥ तत्र निरंतरं पूजाकर्ता।शालिनीवृत्तम्॥११२॥११३॥प्रथमो हरिगणशब्दो विष्णुगणवाची । मालिनी वृ० ॥११४॥ वैशेषिका

द्वैतमते अवतीर्णोपि तेषां मतं निर्दोषं स्वचित्ते न मेने। सर्वश्रुत्यसंमतत्वादिति भावः। उपजातिः ॥ ११५॥ अद्वैतनिःसंशयविज्ञानदीक्षेत्यु [illegible] श्रेष्ठं गुरुत्वार्थं
लक्ष्मीधरानंदं प्राप । अवापेत्युभयान्वयि । तस्माल्लक्ष्मीधरानंदाज्ज्ञानं सर्वमंत्रदीक्षां च प्राप्तवान् ॥ ११६ ॥ [illegible] चक्राणि [illegible]
एव ॥ ११७ ॥ द्व्यशीत्यधिकशतसंख्यं हरिगणानंदं प्रगमति । विशिष्टाद्वैतमत इति । इंद्रवज्रा वृ० ॥ ११८ ॥ [illegible]

स द्वादशाब्दोथ ययौ विचिन्वन्नद्वैतविन्मंत्रविदां वरिष्ठम् ॥ लक्ष्मीधरानंदमवाप तस्मात्स मंत्रदीक्षां सर्वमनूत्यदीक्षाम् ॥ ११६ ॥ हरेर्गणानंदमिति स्वनाम लब्ध्वा गुरोः सर्वमभूत्स सिद्धः ॥ कुर्वन्स देव्यामपि चक्रयाणे [illegible] निखिलस्थ [illegible] ॥ ११७ ॥ विशिष्टकाद्वैतमतेपि भूत्वा बभूव योऽद्वैतमताभिमानी ॥ द्व्यशीतियुक्तं शतसंख्यकं तं हरेर्गणानंदगुरुं नताः स्मः ॥ ११८ ॥ यो भल्लटानंदगुरोः सकाशाच्चतुर्गुरूणां हि कथां शृणोति ॥ सार्वात्म्यतां विद्वरतां सुविद्यां लभेद्धरेर्भक्तिमपीज्यमान्यः ॥ ११९ ॥ इति श्रीगुरु० उत्त० भल्लटादिचतुर्गुरुवर्णनं नाम चतुर्विंशः सर्गः ॥२४॥ श्रीदेशिकेंद्र उवाच ॥ तत्रैव कुंभकोणेथ विद्येश्वर इति श्रुतः ॥ ब्राह्मणः सांगवेदज्ञश्चात्मवाञ्छिवभक्तिमान् ॥१॥ आसीत्सदाचैपश्चशंभुं पत्न्याढ्यः सात्त्विकः सुधीः ॥ कदाचित्प्रार्थितः पत्न्या सोपत्यार्थं तदा स्वयम् ॥ २ ॥ तस्थौ शिवालये शैवं पंचार्णं प्रजपन्मनुम् ॥ त्यक्ताशनस्त्यक्तनिद्रो मनः संयम्य सेंद्रियम् ॥ ३ ॥ सप्ताहं संस्थितश्चेत्थं द्विजस्तत्र निशीथके ॥ आविर्बभौ शिवः शक्त्या तुष्टावैनं निरीक्ष्य सः ॥ ४ ॥ विद्येश्वर उवाच ॥ त्वं द्वादशारकमलेऽखिलहृद्गतोऽसि पश्यंति योगिन इहात्मसुखात्समाधौ॥त्वां ज्ञानिनोप्यखिलगं परिहृत्य भक्त्यानंदं प्रयांति सततं पुलकं दधानाः॥५॥

णादेः फलं क्रमेणाह । य इति । ईज्येषु पूज्येष्वपि मान्यः ॥ ११९ ॥ इति श्रीगु० उ० टी० सर्थ० चतुर्विंशः सर्गः ॥ २४ ॥ उत्तरार्धेऽपि
चैकसप्तपद्यैस्तु कथ्यते ॥ विद्यातीर्थः शिवः साक्षाद्विद्यारण्यस्य यो गुरुः ॥ २५ ॥ तत्रेति सार्धान्वयः ॥ १ ॥ २ ॥ ३ ॥ शिवं दृष्ट्वा तुष्टाव ॥ ४ ॥
हे शंकर सर्वेषां हृदये वर्तमानं यद्द्वादशदलं कमलं कादिठांतवर्णयुक्तं तत्र वर्तसे । इह कमले त्वां योगिनोऽत्मसुखहेतोः समाधिकाले पश्यंति । ज्ञानि

नोपि गुरुकृपया प्राप्तसंप्रदायाः संतस्त्वां सर्वगतं भक्त्या परिगृह्याहमेव शिवोऽस्मीति सगुणेश्वराभेदेन उपास्यानंदं प्राप्नुवंति ॥ ५ ॥ इमे पूर्वोक्ता ज्ञानिनः सगुणसायुज्यमुक्तिसुखसेविनो भवंति । ज्ञानोपासनोभयसुखलाभादियमुत्कृष्टतमा मुक्तिः । यथा चोक्तं भागवते—" सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वम प्यतः । दीयमानं न गृह्णंति विना मत्सेवनं जनाः " इति।"आत्मारामाश्च मुनयो निर्ग्रंथा अप्युरुक्रमे।कुर्वंत्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ " इति च। ये त्वन्ये त्वां त्वामहंग्रहणेन शिवोहमिति भेदनिश्चयेन पूजयंति ते विमलाः संतः सारूप्यमुक्तिभाजो भवंति । इयमेव प्रतीकोपासनाजन्या समानर्ष्टिता सार्ष्टितोच्यते । ये तव मूर्तिमात्मनः पृथक्त्वेनोपास्योपासकभेदेन संसेव्यंते ते स्वर्लोकवासिनो भवंति । इयं तु तत्तल्लोकप्राप्तिरूपा सलोकतामुक्तिरित्यु च्यते । हे ईश्वर हे नियंतः इति मुक्तित्रये तैत्तिरीयश्रुतिः प्रमाणभूतास्ति । तथा च श्रुतिः—" एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकता

सायुज्यमुक्तिसुखभाज इमेथ येन्ये त्वाहंग्रहेण विमलाः परिपूजयंति ॥ सारूप्यगाः पृथगुपास्य तवैव मूर्तिं स्वर्लोकगाः श्रुतिरितीश्वर तैत्तिरेयी ॥ ६ ॥ वर्णाश्रमोत्थनियमांस्तु समाचरंति ये चोर्ध्वरेतस इमेपि समीपगास्ते ॥ मांडूक्यवाक्यमिति मुक्तिचतुष्कमाहुः सायुज्यमक्षयमिहामलबोधलभ्यम् ॥ ७ ॥

माप्नोति " इति ॥ ६ ॥ किं च ये ऊर्ध्वरेतसो वर्णाश्रमोक्तनियमान्सम्यगाचरंति त इमेऽर्चिरादिमार्गेण ब्रह्मादीश्वरसमीपगाः । सामीप्यमुक्तिविषये मांडूक्योपनिषद्वाक्यं प्रमाणम् । तथा च श्रुतिः—" तपःश्रद्धया ये ह्युपवसंत्यरण्ये शांता विद्वांसो भैक्ष्यचर्यां चरंतः । सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः स पुरुषो ह्यव्ययात्मा " इति । सूर्यद्वारेणेत्यस्य सूर्योपलक्षितेनार्चिरादिमार्गेण यत्र स पुरुषो ब्रह्मा वर्तते तत्र यांतीत्यर्थः । इति मुक्तिचतुष्टयं माहु ज्ञानिन इति शेषः । मुक्तिचतुष्टये महावाक्यविचारजन्यज्ञानेन प्राप्यं सायुज्यं सगुणसायुज्यं निर्गुणं वा सायुज्यमक्षयं ज्ञानरहितमस्ति । सलोकता [illegible] सरूपतानां पुण्यक्षये नाशश्रवणात् । क्रमस्त्वत्र न विवक्षितः । तथा च ज्ञानोत्तरमपि सायुज्यताविषये तैत्तिरीयश्रुतिः—" य एवं विद्वानुदगयने [illegible] देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छति । अथ यो दक्षिणे प्रमीयते स पितॄणामेव महिमानं गत्वा चंद्रमसः सायुज्यं गच्छति [illegible]

सूर्याचंद्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति।" इति। अत्र केवलकर्मणा चंद्रलोकप्राप्तिः फलम्। य एवं विद्वानिति। ...च्छब्देनाभिहितप्रतीकोपासनात्रयवतां देवानां महिमानमिति सालोक्यसामीप्यसारूप्याणीति त्रयं फलत्रयं ब्राह्मणो विद्वानिति ब्रह्मज्ञानवान् एतौ कर्मोपासनाप्राप्यौ सूर्याचंद्रमसोर्महिमानौ सातिशयत्वादिदोषवंतौ बुद्ध्याभिजयति अभितः अधःकरोति तस्मादधिकं निरतिशयं ब्रह्मणः परमानंदं प्राप्नोतीत्यर्थः ॥ ७ ॥ तदाप्तिः सायुज्यप्राप्तिर्ज्ञानादृते बहुसाधनैर्न भवति । ज्ञानप्रदस्तु त्वमेवासि नान्यः कश्चित् । "ईशानः सर्वविद्यानाम्" इति श्रुतेः।

ज्ञानादृते न बहुसाधनतस्तदाप्तिर्ज्ञानप्रदस्त्वमसि नैव परस्तु कश्चित् ॥ तं त्वां कथं सुतमनात्मसुमोहदं हि याचे रविं तम इवातितपः प्रसन्नम् ॥८॥ विद्यापतिस्त्वमसि चेद्वरदो ममास्तां विद्यानिधिस्तनय आत्मविवेकवक्ता ॥ येनांजसा भवनिधिर्मम गोष्पदाभोऽनंतोऽपि देव भविताखिलसाधनोग्रः ॥ ९ ॥ श्रीदेशिकेंद्र उवाच ॥ विश्वेश्वरः स्तुत इतीममुवाच देवः पुत्रोऽहमेव तव भक्तवरस्य भूत्वा ॥ प्राङ्न प्रवर्तितमपीह किलात्ममार्गं लुप्तं त्वसद्भिरनुशिष्यत एधयिष्ये ॥ १० ॥ त्वां चांजसा मम समीपगतं भवार्तिर्नो बाधिता तु हिमभीतिरिवाहिताग्निम् ॥ अंतर्द्धिमाप जगदीश इतीममुक्त्वागाद्गृहमेव मुदितः स ततः कृतार्थः ॥ ११ ॥ कालेन चाभवदथास्य वधूः सगर्भा सँल्लग्न एव सुषुवे तनयं सुकांतम् ॥ ज्ञात्वा पिताथ शिवमात्मगृहावतीर्णं विद्यानिधिं सकलवित्तमुवाच नाम्ना ॥ १२ ॥ पंचाब्दिकोऽथ जनकेन स चोपनीतः प्राप श्रुतीश्च पितुरेव स चाशु सांगाः ॥ शास्त्राण्यसौ हरिगणाख्यगुरोस्तु लब्ध्वाभूद्द्वादशाब्दवयसा श्रुतिशास्त्रवक्ता ॥ १३ ॥

'ज्ञानं महेश्वरादिच्छेत्' इति स्मृतेश्च। अतितपसा पूर्वपुण्येन प्रसन्नं त्वां प्रति अनात्मविषयं मोहं ददाति तं पुत्रं रविं प्रति तम इव कथं याचे ज्ञानप्रदाद्ज्ञानादिमोहप्रदपुत्रयाच्ञा न युक्तेत्यर्थः ॥८॥ मोहनिवर्तकं पुत्रं देहीत्याह । विद्यापतिरिति । अखिलसाधनैरुग्रः दुर्निवार्यः ॥ ९ ॥ असद्भिर्लुप्तं ज्ञानमार्गं शिष्यानुशिष्यैः प्रकाशयामि ॥ १० ॥ बाधिता बाधिष्यते ॥ ११ ॥ अखिलवित् सर्वज्ञः । पुत्रस्य विद्यानिधिरिति नाम चक्रे ॥ १२ ॥ १३ ॥

उपयमं विवाहम् । ज्ञानवानपि शिवो विष्णुश्च अत्यल्पे देहसुखे सक्तोभवत् । तस्मात्स्त्रियो बंधहेतव इत्यर्थः ॥ १४ ॥ स्त्रिया निमित्तया । नीहारेणाच्छा दितव्रीह्यादिवन्नित्यसिद्धं स्वप्रकाशमिंद्रियाद्यनुगतमात्मसुखं समीपस्थमपि न दृश्यत इत्यर्थः ॥ १५ ॥ स्त्रीसंगस्य हेयत्वं दर्शयन्नादौ प्रबलबंधकत्वं तावदाह । हास्यादिति स्त्रीः । वर्ष्म देहं दृग्विलासाद्भ्रूविक्षेपमात्रेण । आर्यतां श्रेष्ठत्वं वचसा हरति । स्वयमस्थिरहृदया सती अलीकप्रेम्णा पुरुषमोहकात्मविस्मृतिदा । ईश्वरेणापि न निवार्यते अपरिहार्यसंगेत्यर्थः ॥ १६ ॥ ईश्वरेणाप्यपरिहार्यः स्त्रीसंग इत्युक्तं तदाह । सत्या तनुरिति । पितृमखे दक्षयज्ञे इमां दग्धां दक्षकन्या

कर्तुं त्वथोपयममस्य पिता प्रवृत्तस्तं चाह सोपि मम नांगनयास्तु संगः ॥ येनेश्वरोपि सततं निजसौख्यतुष्टस्तूर्णं मृषा तनुसुखे ऽतिमितेपि सक्तः ॥१४॥ नेषत्सुखं स्फुरति नित्यगतं च भूरि स्वीयं प्रकाशितमपींद्रियधीमनःस्थम् ॥ पुंसः स्त्रिया कृषिपरस्य यथा कृषिस्थं नीहारतः सकलशालिमुखं प्रभाते ॥१५॥ हास्यान्मनो हरति वर्ष्म च दृग्विलासात्स्पर्शेन वीर्यमखिलं वचसार्यतां स्त्रीः ॥ पुंमोहिनी कुहृदयापि मृषातिहार्दान्नापीश्वरेण खलु वार्यत आत्महंत्री ॥ १६ ॥ सत्या तनुः पितृमखेतिरुषैव दग्धा बभ्राम गां शिव इमां प्रवहन्निजांसे ॥ रामोपि कीशशरणः स्ववधूं प्रलब्धुं भ्रात्रात्मजां च चकमे खिलवित्तपस्वी ॥ १७ ॥ तस्मादहं सततमात्मसुखे निमग्नः संन्यासमेव परिगृह्य हृदुज्झितार्थः ॥ स्थास्येखिलं पितरिदं जगदात्मनीक्षंश्चात्मानमत्र हि तवाऽस्तु च मातुराज्ञा ॥ १८ ॥ इत्थं निशम्य तनयस्य वचः पितामुं नाण्वात्मविद्वदति वीक्ष्य मुखं स्वपत्न्याः ॥ माता विलोमवदना सुतमाश्वसंती प्राहेति ते वय इदं न यतिक्रियार्हम् ॥ १९ ॥

तनुं स्कंधे गृहीत्वा पृथ्वीं बभ्राम । विष्णुर्बाणैः शरीरं छित्वा शरीरपतनस्थानेषु देवीक्षेत्राणि विधाय प्राप्तस्वस्थितिं शिवं चकारेति देवीपुराणे भागवते च कथा प्रसिद्धा । कीशशरणः सुग्रीवसाहाय्येच्छावान् । स्त्रीमोहस्य दुर्निवार्यत्वेन बंधहेतुं विवाहं कर्तुं न प्रवृत्तो भवामीत्यर्थः ॥ १७ ॥ संन्यासं ग्रहीतुं भव द्भिराज्ञा प्रदातव्येति प्रार्थयति । तस्मादिति । हृदयात्त्यक्तविषयः । अत्र जगति आत्मानं पश्यन् ॥ १८ ॥ इदं पूर्ववयः यतिक्रियार्हं संन्यासाश्रमयोग्यं

नास्तीत्यर्थः ॥ १९ ॥ अतः मातृपित्राज्ञाभावेन तूष्णींभूतो हरिगणानंदं शरणं जगाम । तस्माद्धरिगणात् ॥२०॥ विद्यानिधिनाम्नः विद्यातीर्थनाम करणे हेतुत्रयं दर्शयति । विद्येति । विद्यानिवासाय वरतीर्थं उत्तमक्षेत्रभूतम् । "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु।" इति तीर्थशब्दस्य क्षेत्रवाचित्वादित्येको हेतुः । तीर्थशब्दस्य संन्यासार्हनामप्रकाशकत्वेनाल्पवयसि तस्य संन्यासप्रवृत्त्यतिशयेन तीर्थपदसंयोगस्य संन्यासयोग्यत्वादिति द्वितीयो हेतुः ।

ज्ञात्वोभयोर्मतमतः पृथगेव तूष्णीं विद्यानिधिर्हरिगणं शरणं जगाम ॥ दीक्षामवाप विधिनाखिलमंत्ररूपां विद्यादितीर्थसुखमित्यभिधां च तस्मात् ॥ २० ॥ विद्यानिवासवरतीर्थममुं स दृष्ट्वा संन्यस्तुमिच्छुमपि बालमनीहमर्थे ॥ पद्मांघ्रिनामकगुरोर्मठनाम चेति हेतुत्रयाद्गुरुरदोस्य हि नाम चक्रे ॥२१॥ विद्यातीर्थानन्द इत्थं हि लब्ध्वा मंत्राजस्रा देवतार्चां चकार ॥ सिद्धोप्यग्रे संप्रदायप्रवृत्तिं कर्तुं योद्धेलावतीर्णः शिवांशात् ॥ २२ ॥ तिष्ठन्पित्रोः सन्निधावात्मनिष्ठः प्राहाद्वैतं शास्त्रमात्मप्रकाशम् ॥ श्रुत्वा द्वावप्यासतुस्तोषयुक्तौ सत्यं मेनेऽतः पिता प्राक् शिवोक्तम् ॥ २३ ॥ प्राहाथासावेकदा मातृतातौ मातः स्नातुं तीर्थजातं पितः श्वः ॥ गच्छाम्याज्ञा दीयतां मे युवाभ्यां नाज्ञाकर्ताऽनीहिनोऽन्यस्त्रिलोक्याम् ॥ २४ ॥ श्रीदेशिकेंद्र उवाच ॥ पुत्रोदितमिति श्रुत्वाथोचतुर्भवता विना ॥ स्थास्यावः कथमत्रावां जलेनेव महावने ॥ २५ ॥ पुत्राः संतीतरे लोके प्रपंचसुखदाः क्वचित् ॥ तत्रापि दुःखदाः पित्रोराज्ञाभंगकराः शठाः ॥ २६ ॥ स्त्रीदेवास्तत्सुहृद्भक्ताः स्वबंधुस्वस्रवंचकाः ॥ कन्यापुत्रातिहार्दाढ्याः स्वीयं भावि न ते विदुः ॥ २७ ॥ जन्मनैवावयोर्दत्तं प्रापंचं तु सुखं त्वया ॥ अन्वयोस्तद्भवं दुःखमद्याद्धेश निराकृतम् ॥ २८ ॥ नावां क्षमौ त्वद्वियोगे कलामात्रेपि वत्सल ॥ देवहूतिर्यथा पूर्वमात्मवेत्र्यपि कापिले ॥ २९ ॥

संन्यासाश्रमेपि पद्मपादसंप्रदायेन प्रवर्तयन् विद्यातीर्थनाम कृतवान् । तीर्थाश्रमयोः पद्मपादसंप्रदायद्योतकत्वादित्यर्थः ॥ २१ ॥ अंशेन पृथिव्यामवतीर्णः ॥ ॥ २२ ॥ प्राग्वरदशिवेनोक्तं पुत्रोहं भवामीति सत्यं मेने ॥ २३ ॥ हे मातर्हे पितः निरिच्छस्य ममाज्ञाकर्ता युवाभ्यामन्यस्त्रिलोक्यां नास्तीत्यर्थः ॥ ॥ २४ ॥ २५ ॥ त्वत्सदृशविद्वत्पुत्रविरहोऽतिदुःसह इत्याह । पुत्रा इत्यादिना ॥ २६ ॥२७॥ तद्दुखं प्रपंचोद्भवं दुःखम् ॥ २८ ॥ कपिलस्य वियोगे

देवहूतिरिव क्षणमात्रमपि स्थातुं न समर्थावित्यर्थः ॥ २९ ॥ ज्ञैः ज्ञानिभिरज्ञानिभिश्च प्रारब्धकर्मफलं भोग्यमेव आयुःसमाप्तिपर्यंतम् । दृष्टचात्मज्ञानेन न नश्यति । यथा मनुष्यैर्मृगैश्च दृग्वारि मृगजलदर्शनं न निवार्यते तथा प्रारब्धं भोगं विनाऽनिवार्यमित्यर्थः ॥ ३० ॥ यद्यप्येवमनिर्हार्यं प्रारब्धं त्वं सर्वाधिष्ठानरूपः शिवः कर्तुमकर्तुमन्यथाकर्तुं समर्थोसि । त्वां सुतं मत्वाऽऽवाभ्यामज्ञबुद्धया प्रोच्यत इत्यन्वयः ॥ ३१ ॥ अज्ञप्रवृत्त्यर्थं अज्ञानिनामुद्धारार्थमेव ज्ञानिनां सत्कर्मसु प्रवृत्तिरित्यर्थः ॥ ३२ ॥ ननु संन्यासग्रहणेऽऽज्ञाभावेन तीर्थाटनार्थमाज्ञां गृहीत्वा देशांतरे संन्यासं स्वीकरोमीत्याशंक्यात्रैव संन्यासं गृहीत्वा

प्रारब्धं भोग्यमेवाज्ञैर्ज्ञैश्च दृष्टचा न वार्यते ॥ यावदायुः सुखं दुखं दृग्वारीव मृगैर्नरैः ॥ ३० ॥ त्वं स्वतंत्रोखिलाधारः कस्त्वामाज्ञप्तुमीश्वरः ॥ तथापि मूढबुध्यैव मत्वावाभ्यां सुतं त्वणु ॥ ३१ ॥ प्रोच्यते तत्र हि तीर्थानि तीर्थीकर्तुं किलेश्वरः ॥ गच्छस्यज्ञप्रवृत्त्यर्थं पूर्णकामोपि निःस्पृहः ॥ ३२ ॥ आज्ञा दत्ता न संन्यासे ह्यावाभ्यामिति तद्धृदि ॥ मा खिन्नो भव चेदिच्छा तत्र तद्ग्रहणं कुरु ॥ ३३ ॥ तत्रापि नावयोरस्तेस्तु वियोगस्त्वं तथा कुरु ॥ वचः स्वीकुरु नौ चैतद्बालस्य पितराविव ॥ ३४ ॥ दृष्ट्वा तीर्थानि सर्वाणि पुनरेह्यत्र पुत्रक ॥ आवत्सरममूनावां धारयावोऽतिकृच्छ्रतः ॥३५॥ श्रीदेशिकेंद्र उवाच ॥ पितृवाक्यमिति श्रुत्वा तथेत्युक्त्वा प्रणम्य तौ ॥ ययौ तीर्थानि चैकाकी विद्यातीर्थः फलास्पृहः॥३६॥द्वारकां प्रथमं प्राप्तो पद्मांघ्रेर्यत्र वै मठः ॥ बभूव यो मुख्यशिष्यः शंकरस्य जगद्गुरोः ॥ ३७ ॥ प्रवृत्तोयं संप्रदायो यस्मादेव पुरातनः ॥ मंत्रज्ञाः कवयो यत्र श्रीहर्षाद्याः सुविश्रुताः ॥ ३८ ॥ तत्र स्याद्धि यतेर्मुख्यात्संन्यासो गृह्यतामिति ॥ गतस्तत्राथ नापश्यन्मंत्रज्ञांश्चात्मवेदिनः ॥ ३९ ॥

तेन त्वयास्मद्वियोगो माभूदित्याह । अत्रेति ॥ ३३ ॥ तत्रापि संन्यासगृहणेपि तव वियोगो न भवेद्यथा तथा त्वमेवं कुरु । बालस्य पितराविवेति दृष्टांतः पुत्रे शिवभक्तिसूचनार्थः ॥ ३४ ॥ वर्षमतिक्रांतं चेत्तर्हि तावत्प्राणान्न धारयाव इत्यर्थः ॥ ३५ ॥ तीर्थफले निस्पृहः ॥ ३६ ॥ जगद्गुरोः शंकराचार्यस्य यः प्रथमशिष्यः पद्मपादस्तस्य मठो यत्र तत्र द्वारकां प्राप्तः ॥ ३७ ॥ यस्मात्पद्मपादाद्यत्र संप्रदाये ॥ ३८ ॥ तन्मठवासिनो यतेः सकाशात्संन्यासग्रहणं

कर्तव्यमिति हेतोस्तत्र मठे गतः सन्मंत्रज्ञान्ज्ञानिनो यतीन्नापश्यत् ॥ ३९ ॥ यतीनिति पूर्वान्वयि ॥ ४० ॥ यतिधर्माभिमानित्वहेतुना न स्वीकृत इति पूर्वेण योज्यम् । तेन पद्मपादेन प्राक् शंकरानंदकथावसरे ॥ ४१ ॥ ततस्तन्मठस्थसकाशाद्गुरूक्तं हरिगणानंदोक्तम् ॥ ४२ ॥ ४३ ॥ श्रीतोटकादि सार्धान्वयः ॥ ४४ ॥ मंत्रज्ञानित्युत्तरान्वयि । अनात्मज्ञानात्मज्ञानरहितान् ॥ ४५ ॥ जगत्पतिं जगन्नाथम् ॥ ४६ ॥ वार्तिककारस्य सुरेश्वरस्य मठे

यतीन्यतस्तन्मठस्थैः संप्रदायो गुरूदितः ॥ उपासनामंत्रमयः स्वीकृतो न पुरातनः ॥ ४० ॥ यतिधर्माभिमानेन ततस्तेन रुषा पिंतः ॥ कुमारिण्यै च बिंबायै प्रागेतद्विस्तरोदितम् ॥ ४१ ॥ विद्यातीर्थोपि संन्यासं जगृहे न ततः सुधीः ॥ स्मरन् गुरूक्तं प्राग्वृत्तं दृष्ट्वाज्ञांश्च यतीनिमान् ॥ ४२ ॥ स्नात्वाथ गोमतीतीर्थे नत्वा द्वारवतीपतिम् ॥ पश्यंस्तीर्थानि च ययावुत्तरां दिशमाशु सः ॥४३॥ श्रीतोटकमठस्थांश्च यतीन्दृष्ट्वा तथाविधान् ॥ नत्वा नारायणं शंभुं स्नात्वा गंगोत्तरीजले ॥ ४४ ॥ स्नपंस्तीर्थेष्वपि ययौ मठं हस्तामलस्य च ॥ मंत्रज्ञांस्तान्यतीन्दृष्ट्वा नात्मज्ञानिति तेष्वपि ॥४५॥ न श्रद्दधे बुधो तीर्थे स्नात्वा नत्वा जगत्पतिम् ॥ बिंबलांबां च तस्मात्स दक्षिणां दिशमाययौ ॥४६॥ मठे वार्तिककारस्य तत्र दृष्ट्वा यतीश्वरम् ॥ सुज्ञं नृसिंहतीर्थाख्यमात्मनिष्ठं विरागिणम् ॥ ॥ ४७ ॥ श्रुत्युक्तयतिकर्माणं वेदशास्त्रार्थकोविदम् ॥ शांतं शंकरभाष्याणि पश्यंतं शिष्यबोधकम् ॥ ४८ ॥ ननाम दंडवद्भूमौ विद्यातीर्थो यथा गुरुम् ॥ तिष्ठन्कृतांजलिः प्राह तं संन्यासाश्रमेच्छया ॥ ४९ ॥ विद्यातीर्थ उवाच ॥ स्वामिन्द्विजोस्मि शरणं तव पादपद्मं पित्रोपनीत इत एव च वेदलब्धिः ॥ सांगाथ शास्त्रसहितं खलु मंत्रजातं लब्धं मया हरिगणाख्यगुरोः प्रसादात् ॥ ५० ॥ ज्ञानं तथात्मसुखदं सरहस्ययोगश्चान्यत्ततः किमपि सत्तम नेष्यनेद्य ॥ पश्याम्यतो जगदजादिपिपीलिकांतं मिथ्यैव चात्मनि गुणेहिमिवात्तबोधः ॥ ५१ ॥

ययाविति पूर्वान्वितम् । तत्र नृसिंहतीर्थं यतिं विद्यातीर्थो ननामेति तृतीयस्थेनान्वयः ॥ ४७ ॥ श्रुत्युक्तं यतिकर्म यस्य तम् ॥ ४८ ॥ यथा गुरुं हरिगणम् ॥ ४९ ॥ इत एवांगसहिता वेदप्राप्तिर्जाता ॥ ५० ॥ हे सत्तम श्रेष्ठ ततः हरिगणानंदगुरुप्राप्तमंत्ररहस्येन मया अन्यत्किमपि नेष्यते न प्रार्थ्यते यतः

प्राप्तबोधः सन्ब्रह्मादिकीटपर्यंतं जगद्रज्जौ सर्पादिवन्मिथ्याभूतं पश्यामीत्यर्थः ॥ ५१ ॥ आत्मनः सच्चिदानंदत्वं विस्मृत्य साहंकारकर्मफलभूतासु योनिषु कष्टेन भ्रमता मया मनुष्यदेहो लब्धः । यत्र देहे आत्मलाभस्तस्मिन्नात्मसुखप्रदे देहे प्रेतभावो मास्तु । संन्यासाश्रमे सति कर्मकांडगतप्रेतत्वनिवृत्तिर्भवतीत्यर्थः ॥ ५२ ॥ संन्यासाश्रमदानेन तत्प्रेतत्वं त्वं निवारय । तत्र संन्यासविषये पद्मपादादिपरंपरावता मया मातृपित्राज्ञा च लब्धास्ति । त्रीन्शंकरानंदमठान्गत्वेहागतेन मया चतुर्थमठे त्वमात्मवेत्ता दृष्टोस्यतस्त्वं मन्मनोरथं पूरयेत्यर्थः ॥ ५३ ॥ किंचेदमुक्तं मयाण्वपि मिथ्या नास्तीति सर्वं भवान्वेत्त्येव ।

विस्मृत्य चात्मविभवं भ्रमतात्वनेकयोनिष्वहंकृतिजकर्मफलासु कष्टात् ॥ लब्धा मया नृतनुरत्र ययात्मलाभः प्रेतत्वमस्तु न तनाविह चात्मदायाम् ॥ ५२ ॥ तत्त्वं हर स्वपितृमातृमतं च तत्र लब्धं मयाब्जचरणाद्यपरंपरेण ॥ गत्वा त्रिशंकरमठानिह चागतेन दृष्टस्त्वमेव चरमे मठ आत्मवेत्ता ॥ ५३ ॥ नैवाणु चानृतमिदं तु मयोदितं हि वेत्स्येव सर्वमपि यत्प्रणिधानवांस्त्वम् ॥ ज्ञात्वाप्यनन्यशरणं कुरु मां कृतार्थं नोपेक्ष्यते हि शरणागत आत्मविद्भिः॥५४॥ श्रुत्वेति चार्थितममुष्य नृसिंहतीर्थो ज्ञात्वाधिकारिणमिमं सुधिया श्रियापि ॥ श्रीशंकरागतपरंपरया निजांगं पश्यन्नराध्यमिति तं तु यतिं चकार ॥ ५५ ॥ पूर्णाभिषेक उदितं गुरुणा तदेव नामास्य चक्र इह योगमठं ततोस्मै ॥ प्राहाखिलोपनिषदां च शिरोवचांसि वक्तृत्वमादिगुरुभाष्यततौ च पाठात् ॥५६॥ मासांततो निजगतिं स नृसिंहतीर्थः प्राप्तश्च योगविभवादथ तत्समाधिम् ॥ कृत्वाब्रवीन्निखिलभाष्यमुखं यथार्थं विद्यादितीर्थयतिराडधिकारवद्भ्यः ॥ ५७॥

यतस्त्वं प्रणिधानवानेकाग्रतया लब्धसर्वात्मसिद्धिः । आत्मविदि शरणागतोपेक्षाकरणं न युक्तमित्यर्थः ॥ ५४ ॥ आत्मानं वृद्धवयस्कं ज्ञात्वा शंकरानंदागतपरंपरया यतिवर्यं चकार ॥ ५५ ॥ पूर्णाभिषेकसमये हरिगणानंदेन यन्नाम कृतं तदेवास्य विद्यातीर्थ इति नाम योगपट्टप्रासं चकार । ततोस्मै विद्यातीर्थायोपनिषदां वेदानां शिरोवचांसि महावाक्यादीनि स कथितवान् । शांतिपाठपूर्वकं शंकरभाष्येषु वक्तृत्वं च प्राह । सर्वमात्मनोधिकारं दत्तवानित्यर्थः ॥ ५६ ॥ ततो मासानंतरं नृसिंहतीर्थगुरुः योगसामर्थ्येन सिद्धिं प्राप्तः । अधिकारवद्भ्यः अधिकारसंपन्नशिष्येभ्यः ॥ ५७ ॥

आर्यवृत्त उत्तमाचरणः । अथ तत्राधिकारे प्राक् कश्चित्पुरुषः पीठे निवासार्थं योजितो यः स विद्वान्सुबुद्धिरल्पवयस्कश्चतुरो ब्रह्मचारी शांतोपि भेदकवचनेन विकृतबुद्धिर्जातः॥५८॥तत्र दुःखं रहसि कथितेन कस्यचित्पुरुषस्य वचसा श्रुत्वा पुरोक्तं पित्रोश्च वचनं स्मृत्वा इत्याह।निजनिर्गमदिवसान्मासगणनाक्रमेण षड्भिर्मासैरिह मठे आगमनं ततोत्र त्रयो मासा अतिक्रांताः इति नवमासा जाताः। अद्यदिनमारभ्य शरदि वर्षपूर्ताववशिष्टास्त्रयो मासाः संतीत्यन्वयः॥५९॥ ततोर्वाग्वर्षपूर्तेः पूर्वं यदि जन्मभूः प्राप्यते तर्हि मातृपितृदर्शनं भविष्यति । यदि वर्षमतिक्रांतं स्यात्तदा पितरौ प्राणत्यागं करिष्यतः । अथ मम तयोर्दर्शनं च

मासद्वयं तत इहावसदार्यवृत्तस्तत्रैव कश्चिदथ पीठनियोजितः प्राक् ॥ विद्वान्सुधीरणुवयाः कुशलोपि वर्णी शांतश्च सोन्य वचसा हृदि दुःखितोभूत् ॥ ५८ ॥ श्रुत्वा तदन्यवचसा रहसीरितेन स्मृत्वा पुरोदितमसौ वचनं च पित्रोः ॥ इत्याह मासगणना न्निजनिर्गमाह्नः षड्भिस्त्विहागम इतश्च गतास्त्रयो मे ॥ ५९ ॥ मासा नवेति शरदुर्वरितास्त्रयोद्य चेत्प्राप्यते स्वजनिभूस्तु ततो मयार्वाक् ॥ ईक्षेत आत्मपितरौ शरदुक्रमश्चेत्प्राणान्विमुंचत इमावथ नो तदीक्षा ॥ ६० ॥ यस्याश्रयाद्धरिगणाख्यनृसिंहतीर्थौ लब्धौ गुरू सुसुखमानकरौ मयाथ ॥ देहस्य तस्य पितरौ किमुपेक्षणीयौ श्रीशंकरोपि यतिराण्निजमातृभक्तः ॥६१॥ श्रीदेशिकेंद्र उवाच ॥ विद्यातीर्थश्चेतसीत्थं विचिंत्याथाहूयैनं वर्णिनं प्राह चेति ॥ पीठस्थोद्यास्तां भवान्मत्सकाशात्सर्वैर्यत्प्राग्योजितश्चागमान्मे ॥ ६२ ॥ श्रुत्वेत्योमित्युक्तवंतं यतींद्रं चक्रे विध्यादेशतो योगपट्टम् ॥ प्राहास्याथो भारतीकृष्णतीर्थं विद्यातीर्थोसौ द्विलोकाफलेच्छुः ॥ ६३ ॥

न स्यात् ॥ ६० ॥ यस्य देहस्याश्रयेणात्मसुखस्य सत्कारस्य च कर्तारौ गुरू मया प्राप्तौ तद्देहस्य पितरौ मया कथमुपेक्षणीयौ । यथा शंकरः स्वमातृभक्त स्तथाहमपीत्यर्थः ॥ ६१ ॥ वर्णिनं ब्रह्मचारिणं मदागमनात्पूर्वं सर्वैर्योजितो भवान्यतस्ततो मत्तः सकाशादद्य पीठस्थितो भव मत्तः संन्यासं गृहीत्वा पीठ स्थितो भवेत्यर्थः ॥ ६२ ॥ इति श्रुत्वा ओमित्यंगीकारिणं तं ब्रह्मचारिणं विधिपूर्वकोपदेशेन यतींद्रं चक्रे । भारतीकृष्णतीर्थमित्यस्य योगपट्टं चाह ।

यतोसौ विद्यातीर्थो द्विलोकाफलेप्सुः इहामुत्र फलभोगविरक्तः । मठाधिकारं नेच्छितवानित्यर्थः ॥६३॥ सर्वैर्मठस्थैः सहैकैकगृहे भुंजानस्तत्र स्थितः । यत्र ब्राह्मणानां वर्षदिवसतुल्यानि सार्द्धशतत्रयमितानि गृहाणि संति तत्रत्यैर्ब्राह्मणैर्वर्षपर्यंतं दीपार्चादि मठव्यवस्था आदिशब्देन मठस्थयतिभोजनादि प्रत्येकगृहेषु क्रियते तदा मठे अन्यो लाभो नासीत् । पृथिव्यामधर्मकर्तॄणां दंडश्च नासीत् । इत्थं तन्मठगतव्यवस्थां दृष्ट्वोपस्युत्थायैकस्तीर्थानि पश्यन्मातृपितृगृहमारे त्यन्वयः ॥ ६४ ॥ ६५ ॥ अब्दांते वर्षपूर्त्यंतदिवसे दंडकमंडलुयुक्तः संन्यासी दृष्ट इत्यर्थः ॥६६॥ आत्तसंन्यासम् प्राप्तसंन्यासम् ॥६७॥ किंचिद्रक्ष्यौ

तस्थौ किंचित्कालमेकैकगेहे चाश्नन्सर्वैर्ब्राह्मणानां हि तत्र ॥ संत्यब्दाहस्तुल्यगेहानि यत्र नित्यं दीपार्चादि तैरप्यंतेऽब्दम् ॥ ॥ ६४ ॥ नान्यो लाभो धर्मिणां दंड उर्व्यां चेत्थं दृष्ट्वा तन्मठीयस्थितिं सः ॥ उत्थायोपस्येक एवाथ तूष्णीं पश्यंस्तीर्थान्याप पित्रोर्गृहं सः ॥ ६५ ॥ प्राप्तोब्दांतेथापराह्णे स्वपित्रोरग्रेऽपश्यत्त्वस्थिशेषावुभौ तौ ॥ विद्यातीर्थो मातरं सन्ननाम दृष्टः पित्रा सांबुपात्रः स दंडी ॥ ६६ ॥ दृष्ट्वा पुत्रं चात्तसंन्यासमेनं तातस्तूर्णं वंदितुं ह्युत्थितोथ ॥ विद्यातीर्थस्तं समालिंग्य भूमौ संस्थाप्यास्याग्रे स्वयं संस्थितोभूत् ॥ ६७ ॥ क्षेमं पृष्ट्वा प्रोचतुस्तौ यतींद्रं त्वद्वाक्येनासून्दधानौ किलावाम् ॥ किंचिद्रक्ष्यौ संस्थितावब्दमूर्ध्वं नेशावेत्या रक्षितौ हि त्वयाद्य ॥ ६८ ॥ स्थित्वाथासौ तत्र पित्रोः समीपे नित्यं भाष्यं प्राह यत्युक्तधर्मान् ॥ कुर्वन् सांगान्वेदविद्वंदितांघ्रिर्विद्यातीर्थः ख्यातकीर्तिर्जगत्याम् ॥ ६९ ॥ प्रवर्तयन्वैदिकतांत्रिकौ यो मार्गौ पृथिव्यां नृतनुः शिवोद्धा ॥ त्र्यशीतियुक्तं शतसंख्यकं हि विद्यादितीर्थं गुरुमानताः स्मः ॥ ७० ॥ गाथामेतां यः पठेद्वा शृणोति विद्यातीर्थस्याखिलां भक्तियुक्तः ॥ विद्वान्मान्यो ज्ञानवान्सत्सुखाढ्यः श्रद्धां देवे सद्गुरौ चालभेत ॥ ७१ ॥ इति श्रीगुरुपरंपराचरित्रे उ० विद्यातीर्थगुरुकथावर्ण० पंचविंशः सर्गः ॥ २५ ॥

अल्पाहारौ अब्दपर्यंतं स्थितौ ऊर्ध्वं स्थातुं न समर्थौ।ततश्च त्वयागत्य रक्षितौ । वर्षांतदिने तवागमनेनास्मत्प्राणरक्षणं जातमित्यर्थः॥६८॥ गुरोर्मातापित्रोश्च कृपासंपादनमात्मकीर्तिकरमिति भावः ॥ ६९ ॥ त्र्यशीत्यधिकशतसंख्यं विद्यातीर्थानंदं प्रणमति । प्रवर्तयन्निति । नृतनुर्यो जातस्तं नताः स्मः विपरीतपूर्वा वृत्तम् ॥७०॥ सर्गोक्तविद्यातीर्थानंदगुरुकथाश्रवणादेः फलमाह ॥७१॥इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां पंचविंशः सर्गः ॥२५॥

त्सर्वेद्विशे तूनविंशोत्तरं शतकपद्यतः । विद्यारण्यस्य बाल्यादिसिद्ध्यंता कथ्यते कथा ॥ २६ ॥ तुंगभद्राख्यनद्यास्तटे हंपीक्षेत्रे विरूपाक्षाश्रिते स्मृतितत्त्वतः स्मृतितात्पर्येण ग्रंथानां कर्ता ॥ १ ॥ उपग्रंथाः वेदांगानि ॥ २ ॥ ततः उपनयनानंतरम् । अधीता इत्यनुवृत्तिः । विकृतयो जटाघनाद्याः ॥ ३ ॥ प्रातिशाख्यनिर्णयेन प्रातिशाख्यपूर्वकवेदाध्ययनकर्ताभवदित्यर्थः । तत इत्युत्तरान्वयि ॥४॥ ५ ॥ मंगलं विवाहमित्यादि पूर्वार्द्धं पूर्वा

श्रीदेशिकेंद्र उवाच ॥ तटिन्यास्तुंगभद्रायास्तटेथासीद्द्विजः सुधीः ॥ वेदशास्त्रार्थवित्कर्ता ग्रंथानां स्मृतितत्त्वतः ॥ १ ॥ माधवाचार्य इत्युर्व्यां विख्यातो विद्वदग्रणीः ॥ अधीता उपग्रंथास्तु येन प्राग्व्रतबंधतः ॥ २ ॥ श्रुतयस्तु ततस्त्रिंशच्छाखीयाः पृथगेव च ॥ तत्त च्छाखीयगुरुतस्तत्तद्विकृतयोपि च ॥ ३ ॥ तत्तत्पाठप्रभेदेन प्रातिशाख्यविनिर्णयात् ॥ देशान्गत्वा पृथग्वेदाध्यायी चाहर्निशं ततः ॥ ॥ ४ ॥ एकपुत्रेण पित्रासावानीतः स्वगृहं बलात् ॥ विवाहं कर्तुमस्याथाकरोद्विद्वत्सुकन्यया ॥ ५ ॥ मंगलं सुसमारंभात्ततोतिधनवा न्पिता ॥ श्वशुरेणापि धनिना पारिबर्हमनेकधा ॥ ६ ॥ दत्तं जामातरं दृष्ट्वा विद्वांसं च सुरूपिणम् ॥ श्वश्रूश्च तोषयुक्तासीज्ज्ञात्वामुं गुणिनं भृशम् ॥ ७ ॥ जाते विवाहे सांगेथ ययावध्ययनाय सः ॥ मात्रा निवारितोप्युक्त्या पित्रा चाधीत्यनन्यधीः ॥ ८ ॥ श्रुतीः सहस्रशाखानां स लेभे सकृदुच्चरन् ॥ माधवोसौ चकाराथ शास्त्राधीतिपरिश्रमम् ॥ ९ ॥ पूर्वं व्याकरणं शास्त्रं मीमांसां सरहस्यकाम् ॥ गौतमीयं ततः सर्वाः स्मृतीश्चाधीतवान्स्वयम् ॥ १० ॥ ज्योतिषं सरहस्यं च लेभे तज्ज्ञात्सवैद्यकम् ॥ नीतयश्च परीक्षाश्च चतुः षष्टिकलाः क्रमात् ॥ ११ ॥ लब्धास्तेन पुराणानि दृष्टान्यष्टादशापि च ॥ इत्यध्ययननिष्ठस्य माधवस्य पिता ज्वरात् ॥ १२ ॥

न्वितम् ॥ ६ ॥ दत्तमिति पूर्ववद्वम् । श्वश्रूश्चकारात् श्वशुरोपि ॥ ७ ॥ अधीतेरध्ययनान्नान्या धीर्यस्य अध्ययनैकतत्परा इत्यर्थः ॥ ८ ॥ ९ ॥ गौत मीयं न्यायशास्त्रम् ॥ १० ॥ सवैद्यकं वैद्यशास्त्रयुक्तम् ॥ ११ ॥ लब्धा इति पूर्वान्वयि । चकारात् उपपुराणैः सह । इत्याद्युत्तरान्वयि । सुतं प्रति स्वग्रामं

तिनायेत्यर्थः । तत इत्युत्तरान्वयि ॥ १२ ॥ १३ ॥ १४ ॥ धनमित्युत्तरबद्धम् ॥ १५ ॥ अनन्यकार्यः विद्यैकनिष्ठ इत्यर्थः ॥ १६ ॥ कलौ पाराशरस्मृतिरिति कलियुगश्रेष्ठायाः । स्वस्याख्या नाम यस्मिन्माधवनिदानमित्यर्थः ॥ १७ ॥ विषयांतरवर्तिनः नानाशास्त्रार्थवंतः ॥ १८ ॥ दास्य इत्यु

पीडितस्तं निनायाथ दूतैश्चैकाकिनं सुतम् ॥ मृतश्च तूर्णमेवासौ पुत्रे गेहागते ततः ॥ १३ ॥ पत्नी तेन गता स्वर्गं माधवः पारलौकिकम् ॥ कृत्वा पत्न्यावसद्गेहे दासदासीसमन्विते ॥ १४ ॥ धनं धान्यं गृहे पित्रा संगृहीतं तदेव सः ॥ अन्नवस्त्रैर्व्ययीकुर्वन्पठन्पश्यञ्छ्रुतीः स्मृतीः ॥ १५ ॥ आसीदनन्यकार्यः स प्राचीनानां विलोकयन् ॥ धर्मशास्त्रप्रबंधांश्च स्वयं चक्रे यथार्थतः ॥ १६ ॥ कालमाधवसंज्ञं च तथा पाराशरस्मृतेः ॥ व्याख्यां कलियुगार्यायाः स्वाख्यं वैद्यनिदानकम् ॥ १७ ॥ अन्यांश्च विविधांश्चक्रे विषयांतरवर्तिनः ॥ निबंधान्सर्वविद्धीमान्माधवाचार्य एकलः ॥ १८ ॥ इत्थं ग्रंथकृतोथास्य पित्रा संपादितं धनम् ॥ व्ययीभूतं हि कालेन दास्यो दासास्ततो गृहात् ॥ १९ ॥ जग्मुरेकैकशो वृक्षान्निष्फलादिव पक्षिणः ॥ पत्न्याथासीत्स चैकाकी धनधान्योनिते गृहे ॥ २० ॥ पश्यञ्छास्त्राणि कुर्वंश्च निबंधान्माधवार्यकः ॥ अथ तस्य गृहाद्दूरात्कश्चित्क्षत्रियवंशजः ॥ २१ ॥ रामवर्मावसत्कृष्यापशुधान्यादिसंग्रही ॥ ज्ञात्वासौ माधवार्यस्य गृहवृत्तं स्वयं ददौ ॥ २२ ॥ नित्यं भक्ष्यमितं धान्यं तस्य भार्यान्वितस्य हि ॥ तदेव पक्त्वा तत्पत्नी भोजनाय ददौ सती ॥ २३ ॥ माधवायानिशं शास्त्रालोकिने जरदंबरा ॥ सदिनेपि न मिष्टान्नं पक्तुमीशास्तपाचिनी ॥ ॥ २४ ॥ अलब्धतैला चाभ्यंगे पतिं प्राहेति सुंदरी ॥ पत्न्युवाच ॥ त्वं हि विद्वद्वरो भूत्वा वस्त्रान्नाद्यापदः कथम् ॥ २५ ॥ मया सह मुधा प्राप्तो गुणज्ञं नृपतिं क्वचित् ॥ गत्वास्मै स्वीयविद्याश्च दर्शयित्वा धनं बहु ॥ २६ ॥

त्तरबद्धम् ॥ १९ ॥ २० ॥ पूर्वदलमुत्तरगतं उत्तरदलमुत्तरगामि ॥ २१ ॥ २२ ॥ पूर्वार्द्धं पूर्वगतम् ॥ २३ ॥ पूर्वार्द्धं पूर्वगतम् । आप्तं लब्धं पचति सात पाचिनी ॥ २४ ॥ विद्वानपि त्वं मया सहान्नवस्त्रादिदुःखानि कथं वृथा प्राप्तोसीत्यन्वयः ॥ २५ ॥ गुणज्ञमित्याद्युत्तरान्वयि ॥ २६ ॥

अल्पविद्यैरपि देशान् गत्वा धनवद्भ्यो राजभ्यश्च सकाशाद्बहुधनं संपाद्यते । सर्वज्ञेन त्वया तु न संपाद्यत इत्यन्वयः ॥ २७ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ॥ २८ ॥ किं कथम् ॥ २९ ॥ गायंतं जपंतं त्रायते सा गायत्री ॥ ३० ॥ यया गायत्र्या स्वयं सृष्टिकरणे समर्थोऽभूत् ॥ ३१ ॥ ३२ ॥ अंगतः पंचांगैः सह पुरश्चरणं चक्रे ॥ ३३ ॥ तन्मितं पत्नीपरिमितम् ॥ ३४ ॥ दारिद्र्यनिवृत्तिर्नाभूत् ॥ ३५ ॥ स तदा दुःखितः सन्महाह्रदे देहत्यागे यदा

किं न संपादयस्यत्र को लाभः शास्त्रवीक्षणात् ॥ अल्पविद्यैश्च गत्वैव देशान्संपाद्यते धनम् ॥ २७ ॥ धनिकेभ्यो नृपेभ्यश्च सर्वज्ञेन न किं त्वया ॥ श्रीदेशिकेंद्र उवाच ॥ माधवार्यः स्त्रियेत्युक्तः सतीं तामनु चाब्रवन् ॥२८॥ मनस्येवाथ चाहेति विद्वदार्येण वै मया ॥ स्वयं गत्वाल्पभूपालाः प्रार्थनीयाः किमल्पदाः ॥२९॥ नूनमाराधनीयाद्य वेदमातैव चिन्मयी ॥ गायतां त्राणतः प्राहुर्गायत्रीं विबुधोत्तमाः ॥३०॥ विश्वामित्रर्षिणा पूर्वं यस्याश्चाराधनात्परा ॥ सिद्धिर्लब्धा ययेशोऽसौ कर्तुं सृष्टिं पृथक् स्वयम् ॥३१॥ तामिष्टदेवतां त्यक्त्वा किमल्पाराधनात्फलम् ॥ निश्चित्येत्थं हृदा चक्रे गायत्र्याराधनं ततः ॥३२॥ मार्गेण वैदिकेनैव पुरश्चरणमंगतः ॥ साध्वः श्रुतितत्त्वज्ञः पिबन्नित्यं पयोऽप्यणु ॥ ३३ ॥ रामवर्मा ददात्येतत्पत्न्यै धान्यं च तन्मितम् ॥ एवं द्वादशवर्षेषु पुरश्चरणसप्तकम् ॥ ३४ ॥ चकार माधवार्योऽसौ होमादौ द्विगुणं जपम् ॥ इत्थं जातेष्वनुष्ठाने न दारिद्र्यनिवर्तनम् ॥ ३५ ॥ कदाचिदपि दृष्टांतो नैवाभूत्स तदांतरे ॥ दुःखितस्तुंगभद्रायास्तटे गत्वा महाह्रदे ॥ ३६ ॥ देहत्यागे कृतमतिस्तदा तं प्राह देवता ॥ अदृश्यैवेति किं व्यर्थं दुर्लभां मानुषीं तनुम् ॥ ३७ ॥ त्यजस्यत्र ह्रदे पश्य पृष्ठभागे किमस्ति तत् ॥ अशरीरवचः श्रुत्वाथापश्यत्पृष्ठतश्चिताः ॥ ३८ ॥ दग्धप्रायाश्च सप्तेत्थं दृष्ट्वा विस्मितमानसम् ॥ पुनस्तं प्राह सा देवी ह्यदृश्यैव त्वया पुरा ॥ ३९ ॥ जन्मांतरेषु सप्तैता ब्रह्महत्याः कृताः खलु ॥ दग्धास्तास्त्वधुना सर्वाः पुरश्चरणसप्तकात् ॥ ४० ॥ पूतस्त्वं नात्र संदेहो न तथापि भवेन्मम ॥ दर्शनं ते यतः पूर्वं न मन्मंत्रोपदेशकृत् ॥ ४१ ॥

कृतनिश्चयस्तदा तं देवताऽदृश्यैव इति प्राहेत्यन्वयः ॥ ३६ ॥ किमित्युत्तरगामि ॥ ३७ ॥ ३८ ॥ दग्धप्रायाः सप्तेति पूर्वबद्धम् । त्वया पुरेति पूर्वेण योज्यम् ॥ ३९ ॥ ४० ॥ यतः पूर्वं मन्मंत्रोपदेष्टा गुरुः पिता । आमरणपर्यंतमध्ययनार्थं न सेवित इत्यर्थः । अध्ययनासक्तेन त्वया पितृसेवा न

कृतेत्यर्थः॥४१॥४२॥उत्तरार्द्धमुत्तरान्वितम्। श्रुतावुपनिषदि गुप्तवर्णकं गुप्ताक्षरं मंत्रं गृहाणेत्यन्वयः॥४३॥गायत्रीमंत्रस्तु वेदेन स्पष्टमुक्तः। श्रीविद्यामंत्रो हि। "कामो योनिः कमला वज्रपाणिर्गुहा हंसा मातरिश्वाभ्रमिंद्रः" इत्यादिसंकेतेनोक्तोतिरहस्यत्वादिति भावः ॥ ४४ ॥ यदर्थं तवानुष्ठानश्रमस्तत्सर्वं धनं लाभालाभादिसहेतुकं कथयिष्ये इत्युक्त्वा सा तूष्णींभूतासीत्। माधवोपि तच्छ्रुत्वा गृहं ययौ ॥ ४५ ॥ स माधवः मंत्रप्राप्तये गुरुं पश्यन्गच्छामि देशा

गुरुः संसेवितस्तातश्चाधीत्यर्थं किलामृतेः ॥ गुरुतुष्टिं विना नैव तुष्टा स्याद्देवता क्वचित् ॥ ४२ ॥ तस्मात्त्वं मंत्रद्रष्टारं गच्छाद्य शरणं गुरुम् ॥ सेवातुष्टममुं कृत्वाऽस्मान्मंत्रं गुप्तवर्णकम् ॥ ४३ ॥ श्रुतावपि गृहाणास्य पुरश्चरणमादरात् ॥ कुरुष्व तद्विधानेन ततोद्धा मां त्वमीक्षसे ॥ ४४ ॥ कथयिष्येखिलं तभ्यं यदर्थं त्वत्परिश्रमः ॥ उक्त्वेति तूष्णींभूता सा माधवः सत्यमेव तत् ॥ ४५ ॥ मत्वा गृहं ययौ रामामाहूयोक्ताखिलं पुनः ॥ स तमाहाद्य गच्छामीक्षन्गुरुं मंत्रलब्धये ॥ ४६ ॥ गुरोर्लब्ध्वा मनुं भक्त्या पुरश्चर्यां करोम्यहम् ॥ भविष्यत्येव वरदा देवी मे न मुधा श्रमः ॥ ४७ ॥ यद्ददाति प्रसन्ना सा तत्तथास्तु न मेण्वपि ॥ कृतं तत्राश्रयाद्यस्माद्द्वादशाब्दं तपो मया ॥ ४८ ॥ श्रुत्वेत्थं स तथेत्युक्त्वा भोजयामास वै द्विजान् ॥ तस्य गेहे द्वादशाब्दं त्यक्तभक्ष्यस्य भुक्तये ॥ ४९ ॥ माधवार्योपि बुभुजे पत्न्याढ्योऽथ परेऽहनि ॥ देवीप्रेरणया काष्ठां दक्षिणां स ययौ भ्रमन् ॥ ५० ॥ परीक्षन्मंत्रद्रष्टारं माधवोऽति विचक्षणः ॥ दैवात्प्राप्तः कुंभकोणं क्षेत्रं ब्राह्मणसंकुलम् ॥ ५१ ॥ स्नात्वाब्धिगायां कावेर्यां कृत्वाऽवश्यं पुरं ययौ ॥ कुंभेश्वरं क्षेत्रनाथं नत्वा तस्थौ तदालये ॥ ५२ ॥ अपराह्णे ययुस्तत्र ब्राह्मणाः शिवदर्शने ॥ ये ये तांस्तान्समीक्षन्स ददर्शैकं यतिं सुधीः ॥ ५३ ॥ तपस्तेजस्विनं शांतं समंताद्बुधवेष्टितम् ॥ ज्ञात्वा दृष्ट्वैव मंत्रज्ञं गायत्रीप्रेरितांतरः ॥ ५४ ॥ ननाम दंडवद्भूमौ स्थितश्चाहेति सांजलिः ॥ स्वार्थपूर्तिमयाच्येऽस्मिन्दर्शयन्नप्यसंग्रहे ॥ ५५ ॥

निति शेषः ॥ ४६ ॥ ४७ ॥ ४८ ॥ द्वादशवर्षपर्यंतमुपोषितस्य पारणासिद्धये ब्राह्मणान्भोजयामास ॥ ४९ ॥ काष्ठां दिशम् ॥ ५० ॥ ५१ ॥ अब्धिगायां समुद्रगामिन्याम् ॥ ५२ ॥ शिवदर्शननिमित्तं यतिं विद्यातीर्थम् ॥ ५३ ॥ सपादश्लोकान्वयः ॥ ५४ ॥ धनसंग्रहरहिते याच्ञानर्हेऽस्मिन्य

तावपि निजार्थपूर्तिं तत्संभवं वा पश्यन्नाह ॥ ५५ ॥ अहं विप्रः कृताध्ययनोऽपि ब्राह्मणो धनरहितोऽस्मि । यतोऽनन्यसेवी अन्यसेवाकर्ता नाहमस्मि । तर्हि कस्य सेवां करोषीत्याह । स्वार्थसिद्धये सेवार्हं गुरुं परीक्षन्नत्र कुंभकोणे प्राप्तोऽस्मि । अभीष्टप्रदत्वेन सेवितुं योग्यो भवानपि सेवाकांक्षारहितो मया दृष्टोऽस्ति । भवानेव सेवितुं योग्यो नान्ये सेव्या इत्यर्थः । इंद्रव० ॥ ५६ ॥ ननु धनरहितस्त्यक्तेषणः सेवेच्छारहितोऽहं धनकामेन त्वया कथं सेवितुं योग्योऽस्मीत्याशंक्य मंत्रविदि त्वयि मंत्रसिद्धिद्वारा सर्वार्थपूरकत्वं दृष्टांतेन निश्चित्य मंत्रान्प्रार्थयामीत्याह द्वाभ्याम् । शाब्दमिति । शब्दाश्रयं शब्दमात्रस्वरूपं वा अविषयमिंद्रियागोचरं अलेपं मेघसंबंधरहितमप्याकाशम् अदः इदं उदकप्राप्तये तृषार्तश्चातकोऽवलोकयति । यथा वा कृषिकर्ताऽवृष्टौ सत्यां श्रिये सस्यसं

माधव उवाच ॥ दरिद्रविप्रोऽहमनन्यसेवी सेव्यं परीक्षन्निह निजार्थलब्ध्यै ॥ प्राप्तोऽत्र दृष्टो हि भवान् सुदूरे सेव्योप्यसेवेच्छुरभीष्टदत्वात् ॥ ५६ ॥ शाब्दं च खं निर्विषयं विलेपं तृषार्त ईक्षत्यथ चातकोऽदः ॥ अवाप्तये शुष्ककृषीडवृष्टौ श्रिये तथा त्वां भज आप्तकष्टः ॥ ५७ ॥ अनन्यदृष्ट्योरिति वीक्षणात्खेऽप्यंजोंबुदाश्चातककृष्यधीशोः ॥ तुष्ट्यै तथांघ्रीक्षणिनस्तवांजः कृपा हृदुत्थास्तु ममापि तुष्ट्यै ॥५८॥ श्रुत्वेति बुद्ध्वाऽऽशयमस्य सिद्धश्चैहीति हस्तेन चकार संज्ञाम् ॥ साकं ययौ तेन च माधवोऽसौ तत्तातगेहं युतमात्मविद्भिः ॥ ५९ ॥

प्तये आकाशमवलोकयति । तथाहं प्राप्तदुःखः सन्त्वां भजामि । उदकाश्रयमेघसंबंधरहितमप्याकाशं चातकैः कृषीशैश्चोदकार्थं मेघाधिष्ठानत्वेन यथाऽवलोक्यते तथाहं संपदिच्छुस्त्यक्तेषणं धनरहितमपि त्वां गुरुं सिद्धिप्रदमंत्रहेतुत्वेन भजामीत्यर्थः ॥ ५७ ॥ यथा चातकादिराकाशं पश्यन् जलं प्राप्नोति । तथाऽहमपि मंत्रलब्ध्या सिद्धिमाप्स्यामीत्याह । अनन्यदृष्ट्योरिति । न आकाशादन्यत्र दृष्टिर्ययोश्चातककृषीशोः चातकश्च कृषीट् च । विपरीता शुष्कधान्या या कृषिस्तदधिपः चातकश्च तयोरवलोकनेन तत्संतोषायाकस्मान्मेघाः प्रादुर्भवंति यथा तथा तव चरणं द्रष्टुर्मम संतोषाय कृपा तव हृदि उत्पन्ना भवतु । त्वत्कृपालेशमात्रेण सर्वं मत्प्रियं भविष्यतीत्यर्थः ॥ ५८ ॥ तेन विद्यार्थिभिः सह ज्ञानिभिर्युक्तं तस्य पितुर्गृहं प्रति ययौ ॥ ५९ ॥

हरिनामसंघं प्रातर्भजनम् ॥ ६० ॥ विहितं स्नानादि । श्रुतीः वेदान् पठन्वटेन जलमानीतवान् ॥६१॥ अत्र गृहे श्रुतीहाः श्रवणेच्छावंतो बुधा आयांति । अर्थंतोऽर्थविषये अज्ञास्ते क्वापि स्थले मिथ एव वादं कुर्वंतीत्यन्वयः ॥ ६२ ॥ ते सर्वे गुरवे विद्यातीर्थाय किंचिद्विषयं वक्तुं समर्था न बभूवुः । आर्य वाक्यं सयुक्तिकमुत्तमं वचनमुच्चैर्वदति ॥ ६३ ॥ तन्माधववचनं पूर्वं विद्वानयमिति जानन्नपि मासपर्यंतं श्रुत्वा गुरुस्तमाह । नैचं नीचार्हं संमार्जनादि

तस्थावसावत्र बुधोपि सेवां कुर्वन् समुत्थाय निशांत्ययामे ॥ संमार्जनाद्यं प्रकरोति पूर्वं शृण्वन्गुरूक्तं हरिनामसंघम् ॥६०॥ स्नात्वा रवेः प्रागुदयेऽथ नद्यां स्नातस्य वस्त्राण्यपि सद्गुरोः सः ॥ संक्षाल्य कृत्वा विहितं घटेन श्रुतीः पठंश्चांबु समानयच्चः ॥ ६१ ॥ प्रातश्च कृत्वा विहितं गुरुस्तु भाष्यं हि शारीरमुखं स्वपित्रे ॥ मात्रे च वक्त्यत्र बुधाः श्रुतीहाश्चायांति ते क्वापि तदर्थतोऽज्ञाः ॥६२॥ कुर्वंति वादं मिथ एव नेषच्छक्ताः प्रवक्तुं गुरवेऽखिलास्ते ॥ श्रुत्वाऽखिलानामपि वाक्यमुच्चैर्वदत्ययं माधव आर्यवाक्यम् ॥६३॥ मान्यं गुरोस्तद्भवतीति मासं श्रुत्वाह जानन्नपि सद्गुरुस्तम् ॥ विद्वद्वरस्त्वं कथमत्र नैचं कृत्यं करोष्येव वदात्र तत्त्वम् ॥६४॥ श्रुत्वेति तं माधव आनमंश्चाव दत्कृतः श्रीश्रुतिमातुरेव ॥ जपो मया द्वादशवर्षमुक्तं तयापि चादर्शनयेति मह्यम् ॥६५॥ त्वं मंत्रद्रष्टारमुपैहि तस्माद्गृहाण मंत्रं श्रुतिगुप्त वर्णम् ॥ जपस्व मां द्रक्ष्यसि वक्ष्यतेऽथ मयापि सर्वं तव हृद्गतं यत् ॥६६॥ ततोहमीक्षन्गुरुमागतोत्र देव्याः किल प्रेरणयाऽन्यथा न ॥ त्वमेव दृष्टोऽखिलमंत्रद्रष्टा ततः कुरुष्वाद्य च मां कृतार्थम् ॥ ६७ ॥ श्रीदेशिकेंद्र उवाच ॥ विद्यातीर्थानंद इत्थं तदुक्तं श्रुत्वा ज्ञात्वा तं तपःशुद्धकायम् ॥ सेवानिष्ठं त्यक्तविद्याभिमानं चास्मै मंत्रैः संददौ पूर्णदीक्षाम् ॥६८॥ विद्याः सर्वाः संति यस्मिन्हि सांगा वह्न्यः साग्राः स्युर्यथारण्यकेऽतः ॥ विद्यारण्यं प्राह नामास्य सिद्धिः संन्यासतो नेति जानंस्तदर्हम् ॥ ६९ ॥

कृत्यं अत्र तत्त्वं कथय ॥ ६४ ॥ श्रुतिमातुर्गायत्र्याः अदर्शनया गुरुरूपया ॥ ६५ ॥ गायत्र्युक्तं कथयति त्वमिति । श्रुतिगुप्ताक्षरं वेदानुच्चारितम् ॥ ॥ ६६ ॥ ततः गायत्रीवचनानंतरम् । देव्या गायत्र्याः । कृतार्थं मंत्रैः पूर्णम् ॥ ६७ ॥ वृत्तम् ॥ ६८ ॥ माधवस्य विद्यारण्यनामकरणे हेतुद्वयमाह ।

विद्या इति । यस्मिन्माश्रवे षडंगसहिता वेदाः संति यथा संपूर्णाः लताः अरण्ये संति अतोऽस्य विद्यारण्यनाम गुरुः प्राह । संन्यासं विनाऽस्य सिद्धिः संपत्त्या द्विप्राप्तिर्नास्तीति जानंस्तदर्हं संन्यासयोग्यं विद्यारण्यं नाम प्राह ॥ ६९ ॥ स विद्यारण्य इति मंत्राल्लब्ध्वा तं मंत्रं जजाप । यं प्राज्ञविद्याः श्रीविद्याभिध माहुः । यश्च मंत्रो निष्पापपुंसा चरमजन्मनि लभ्यः । अथवा पृथिव्यामवतीर्णेन साक्षाच्छिवेन प्राप्यः तं जजाप । यथोक्तम् "यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम् । तेनैव लभ्यते विद्या श्रीमत्पंचदशाक्षरी ॥" इति ॥ ७० ॥ इंगितज्ञा भक्ताभिप्रायज्ञानवती । अदेहापि भक्तेच्छया स्वीकृतदेहा सती मध्यरात्रौ प्रादुर्बभूव ॥ ७१ ॥ रक्तवर्णां कृपायुक्तनेत्रां करचतुष्टयेनायुधचतुष्टयधरां अणिमादिसिद्धिरूपकिरणवतीं सर्वभूषणयुक्तां देवीं ददर्श ॥ ७२ ॥

श्रीदेशिकेंद्र उवाच ॥ लब्ध्वेति मंत्रान्स जजाप यं श्रीविद्याभिधं प्राहुरुपात्तमंत्राः ॥ गतैनसा योंत्यभवे हि लभ्यो वेलावतीर्णेन शिवेन साक्षात्॥७०॥ गुरूक्तमार्गेण समर्च्य देवीं तस्थौ जपन्मंत्रमसावनिद्रः ॥ भक्तेच्छयोपात्ततनुर्ह्यदेहाप्याविर्बभौ सार्द्धनिशीगितज्ञा ॥७१॥ सोत्यारुणां सत्करुणायुताक्षीं पाशांकुशौ पुष्पशरान्सचापान् ॥ करैर्दधानामणिमादिकांशुं देवीं ददर्शाखिलभूषणाढ्याम् ॥७२॥ तां दंडवत्कौ प्रणमंश्च तिष्ठन्कृतांजलिः साश्रुदृगुत्कचोर्णः ॥ सगद्गदैरित्थमुवाच चित्ते निधाय गुर्वंघ्रिरतिं त्वखंडाम् ॥ ७३॥ विद्यारण्य उवाच ॥ त्वमेव मातः खलु वेत्सि सर्वं यज्जीवकृत्यं सदसच्च मिश्रम् ॥ यतोसि सर्वांतरगातिसूक्ष्मा तत्तत्क्रियातुल्यमतौ स्फुरंती ॥ ॥ ७४ ॥ हरीशविध्यंतरगा त्वमेव तत्तद्गुणैस्तत्समकृत्यकर्त्री ॥ अंभो यथा सर्वरसांतरस्थं रुचिं हि तत्तद्गुणतस्तनोति ॥ ७५ ॥ तथा त्वमेवाखिलसिद्धिरूपा यतोऽणिमाद्यास्तु तवांशभूताः ॥ ताभिस्त्वमेवासि तपोनुरूपा जालानुरूपा हि यथार्ककांतिः ॥७६॥

कौ पृथिव्याम् आनंदाश्रुदृष्टिः रोमांचयुक्तः सः अखंडां गुरुचरणप्रीतिं हृदि निधाय गद्गदवर्णैस्तामित्थमुवाच । गुरुकृपया देवतालाभदर्शनेन सदा तच्चिंतन मेव युक्तमित्यर्थः ॥ ७३ ॥ तत्तत्कर्मानुरूपबुद्धिदात्री सर्वांतर्गतातिसूक्ष्मा वासनारूपासि यतस्ततस्त्वं जीवानां सदसन्मिश्रकार्यजातं जानासि ॥ ७४ ॥ त्वमेव विष्ण्वाद्यंतर्गता सती सत्त्वादिगुणैस्तत्तद्योग्यपालनादिकर्त्री भवसि । यथा जलमेव सर्वरसांतर्गतं सत् । तत्तद्गुणैर्भिन्नरुचिं जनयति । तथा त्वमेव विष्ण्वादिषु पालनादिशक्तिरूपेत्यर्थः ॥ ७५ ॥ यथा विष्ण्वादिरूपा तथा त्वमेवाखिलसिद्धिरूपासि । यतोऽणिमादयः सिद्धयस्त्वदंशभूताः संति ।

ताभिस्त्वमेव तपोनुकूला भवसि । यथा सूर्यकांतिर्जलानुरूपा अल्पा महती वा भवति तद्वत् ॥ ७६ ॥ हे मातस्त्वमेवं सामर्थ्यवत्यपि गुरुं विनाऽन्यसाधनैर्न किंचिद्ददासि । यथा जलयुक्तोपि कूपो रज्जुबद्धपात्रं विनाऽन्यप्रयत्नैरुदकं न ददाति । तद्वत् गुरुकृपयैव त्वत्प्राप्तिरित्यर्थः ॥ ७७ ॥ एतदेवात्मवृत्तेनाह । यत इति द्वाभ्याम् । यतः यदा ततः तदा केवलदर्शनमपि न दत्तम् ॥ ७८ ॥ त्वया पूर्वोक्तं दर्शनं ददामीत्येकं सत्यं कृतम् । हे अर्तिहरे दारिद्र्यस्य मे दुःखहंत्री । यदन्यत्त्वयोक्तं कथयिष्येऽखिलं सर्वमिति तत्कुरु । ऐश्वर्यं देहीत्यर्थः ॥ ७९ ॥ दंततः दंतप्रकाशेनाध्वांतं अंधकाररहितं गृहं यया

त्वं मातरित्थंविभवापि नेषद्गुरुं विना साधनतो ददासि ॥ कूपो जलाढ्योपि न रज्जुबद्धं भांडं विनांभस्तु यथान्ययत्नैः ॥७७॥ यतो मया द्वादशवर्षमुग्रं तपः कृतं त्वन्मनुमेव जप्त्वा ॥ ततस्त्वया केवलदर्शनं नो दत्तं गुरोर्वाक्यमशृण्वतो मे ॥७८॥ दृष्टा मयाद्यासि गुरोः प्रसादादेवैरदृष्टा हि तपोभिरुग्रैः ॥ सत्यं कृतं प्रागदितं त्वयैकमन्यच्च कुर्वर्तिहरेऽस्विनो मे ॥ ७९ ॥ श्रीदेशिकेंद्र उवाच ॥ विद्यारण्येनेति संप्रार्थिता सा प्राहेत्येनं दंततोऽध्वांतगेहा ॥ मन्मंत्राभ्यां त्वं ह्युभाभ्यां च सिद्धो नैवादेयाः सिद्धयस्तेऽखिलाश्च ॥८०॥ तत्राप्येकोऽस्त्यंतरायो महान्यद्यस्यास्तेऽयं देह एषा न तुष्टा ॥ माता त्वत्तः स्वल्पमप्यादिदेवी तस्माद्देहेऽस्मिन्न सौख्यं तवेषत् ॥८१॥ आयुर्नाशेऽमुं विसृज्यान्यदेहं लब्ध्वा सौख्यं भोक्ष्यसे स्वर्दुरापम् ॥ अत्रोपायः पृच्छ्यतां देशिकायेत्युक्त्वांतर्धिं प्राप तत्रैव देवी ॥ ८२ ॥ विद्यारण्योपीत्थमाकर्ण्य खिन्नो निद्रां रात्रौ नालभद्देशिकेंद्रम् ॥ प्रातर्नत्वेत्याह चोक्तं हि देव्या रात्रौ साक्षान्नात्र देहे सुखं ते ॥८३ ॥ तस्माद्देहं दुःखदं त्यक्ष्य एनं विद्यातीर्थोऽथाब्रवीद्भक्ष्यतेत्र ॥ स्त्रीच्छा चेत्ते नास्ति संन्यासमेहि स्याद्देहोऽन्योऽस्मिंस्ततो भुंक्ष्व सिद्धीः ॥८४॥

दंतकांत्या प्रकाशितगृहेत्यर्थः । उभाभ्यां गायत्रीश्रीविद्याभ्यां अदेया न भवंति । किंतु सर्वाः सिद्धयो देया एवेत्यर्थः ॥ ८० ॥ तत्रापि सिद्धिप्रदाने एको महाविघ्नोऽस्ति । यद्यस्मात् यस्याः सकाशात्तवायं देहो जातः 'न मातुः परदेवता' इति वाक्ये या च देवताभ्यः श्रेष्ठा सा माता त्वत्तः त्वत्सकाशात् अल्पापि न तुष्टा । त्वया किंचिदपि मातृतोषो न कृत इत्यर्थः । तस्मादस्मिन्देहे तव किंचिदैश्वर्यसुखं नास्तीति ॥ ८१ ॥ स्वर्दुरापं स्वर्गदुर्लभम् । अत्र जन्मनि सुखप्राप्त्युपायः ॥ ८२ ॥ अत्र जन्मनि ते सुखं नास्तीति रात्रौ देव्या यदुक्तं गुरवे प्राह ॥ ८३ ॥ यस्मादेवं तस्मात् । अत्र विषये मया उच्यते

त्वं शृणु । स्त्रीति । एहि प्राप्नुहि । सिद्धीः सिद्धिसुखानि ॥ ८४ ॥ धनरहितः पत्न्या सुखी भवति किं नेत्यर्थः ॥ ८५ ॥ ८६ ॥ उपास्यार्चा देवतार्चनम् । मह्यमुपासनात्यागात्कृतघ्नताप्राप्तिर्मा भवतु । इति हेतोरुपासनां न त्यक्तवान् ॥ ८७ ॥ ८८ ॥ ८९ ॥ कौ पृथिव्याम् ॥ ९० ॥ ९१ ॥

श्रीदेशिकेंद्र उवाच ॥ गुरूदितामिति श्रुत्वा विद्यारण्यस्तमब्रवीत् ॥ सन्यासमेव गृह्णामि किं पत्न्या त्वधनी सुखी ॥८५॥ विद्यातीर्थोपि संन्यासं ददौ तस्मै विधानतः ॥ योगपट्टं पूर्वनाम्ना विद्यारण्येति चाकरोत् ॥ ८६ ॥ विद्यारण्यो यतिर्भूत्वाऽप्युपास्यार्चां तु भक्तिमान् ॥ न तत्याज कृतघ्नत्वापत्तिरस्तु ममेति नो ॥ ८७ ॥ स यतिस्त्वेकदा रात्रौ देवतां पूजयन्मनुम् ॥ जपन्स्थितस्तदा सर्वाश्चाविरासन्हि सिद्धयः ॥ ८८ ॥ अणिमाद्यास्तमाहुश्च किं त्वयापेक्ष्यतेऽधुना ॥ राज्यं बलं गजाश्वादि कोशो वा निधयो नव ॥ ॥ ८९ ॥ नृपाः सर्वेपि ते दासाः पंडिताश्च परेखिलाः ॥ भविष्यंत्येव नो कश्चित्तवाज्ञाभंगकृद्धि कौ ॥ ९० ॥ खंडयित्वा मतं द्वैतमद्वैतं स्थापयिष्यति ॥ गुरोर्मठीयसंस्थां च सर्वत्राज्ञां स्वधर्मतः ॥ ९१ ॥ त्वयान्यदिष्यते यद्यत्प्राप्यते तत्तदाशु वै ॥ नैवालभ्यं चेषदपि पश्यानुभवमिच्छया ॥ ९२ ॥ श्रीदेशिकेंद्र उवाच ॥ विद्यारण्यो निशम्येत्थं ज्ञात्वैताः स्ववशेखिलाः ॥ प्राह चाहं स्मरिष्ये वस्तदेक्ष्येऽदोयथार्थताम् ॥ ९३ ॥ तथेत्यंतर्दधुः सर्वाः सिद्धयोथ स चोषसि ॥ गुरुं नत्वाखिलं चोक्त्वेत्याहाद्य स्वजनिस्थलम् ॥ ॥ ९४ ॥ गत्वैव रामवर्माणं राजानं सिद्धितोधुना ॥ कुर्वे यस्याश्रयादेवाहं तपः कृतवानिह ॥ ९५ ॥ नैवानुभवितुं योग्यं तत्फलं यतिना मया ॥ जाते नृपेस्मिन्कुर्वेहं तद्व्याजादीप्सितं हि यत् ॥ ९६ ॥ गुरुः श्रुत्वेति भाविज्ञस्तथेत्याहाथ देशिकम् ॥ विद्यारण्यो नमंश्चेदं प्रोवाचाचिरतः पुनः ॥ ९७ ॥

इच्छानुरूपमनुभवं पश्य ॥ ९२ ॥ एताः सिद्धयः स्वाधीनाः संतीति ज्ञात्वाह । यदा स्मरिष्यामि तदा । अदः इदं भवदुक्तं सत्यमनृतं वा पश्यामि ॥ ॥ ९३ ॥ अद्य स्वजनिस्थलमित्युत्तरान्वयि ॥ ९४ ॥ ९५ ॥ यदीप्सितं मठसंस्था धर्मस्थापनादि ॥ ९६ ॥ अचिरतः शीघ्रमायास्य इति

योज्यम् ॥ ९७ ॥ हे भवतापहन् भवदुःखनाशक ॥ ९८ ॥ उक्तस्थलं पूर्वनिवासस्थानं पांपीनगरी तद्देशगा जनाः इमां पांपीं हंपीमित्याहुरित्यन्वयः ॥ ॥ ९९ ॥ कैष्किंधः किष्किंधाश्रयश्चाद्रिर्यत्रास्ते इति संबंधः ॥ १०० ॥ सीतेत्याद्युत्तरान्वयि ॥ १०१ ॥ तत्स्थलमिति परान्वितम् ॥ १०२ ॥ ॥ १०३ ॥ दंडसमं साष्टांगम् । एवं यतिवेषेण किं फलमित्यर्थः ॥ १०४ ॥ प्राक् प्रथमम् ॥ १०५ ॥ यदर्थं स्मृतिः कृता तत्कार्यमस्माभिः क्रियते

आयास्येऽथोच्यतामाज्ञा भवता भवतापहन् ॥ यथाशक्ति करिष्येऽहं तामाज्ञामचिराद्गुरो ॥ ९८ ॥ यथावुक्तस्थलं पंपासरो यत्र सुवि श्रुतम्॥पंपादेवी च पांपीति पुरी तद्देशगा इमाम्॥९९॥ हंपीमाहुर्विरूपाक्षः शिवो हरिहरात्मकः ॥ यत्रास्ते ऋष्यमूकाख्यः कैष्किंधश्च गुहाश्रयः ॥ १०० ॥ अद्रिर्यत्रावसन्वालिसुग्रीवाद्याः प्लवंगमाः ॥ सीताविरहदुःखेन रामः सुग्रीवसख्यवान् ॥ १०१ ॥ वार्षिके ह्यव सत्र गह्वरं तच्च राजते॥रामलक्ष्मणमूर्त्याढ्यमित्थं ख्यातं हि तत्स्थलम्॥१०२॥विद्यारण्यो ययौ स्थित्वा विरूपाक्षालये ततः॥तत्पू जकेन तत्रैव रामवर्माणमाह्वयत्॥१०३॥सोथागत्य यतिं दृष्ट्वा माधवार्यं सुविस्मितः ॥ नत्वा दंडसमं प्राह किमित्थं यतिचर्यया॥१०४॥ विद्यारण्योपि वृत्तांतं सर्वमुक्त्वाह तं पुनः ॥ राजानं त्वां करिष्येऽहं प्राक् क्षत्रियकुलोद्भवम्॥१०५॥ श्रीदेशिकेंद्र उवाच ॥ विद्यारण्य स्त्वेनमुक्त्वेति सिद्धीः सस्मारैताश्चाविरासंस्तदग्रे ॥ प्राहुस्तं ताः किं कृता नः स्मृतिस्ते कार्यं ब्रह्मस्माभिरुत्साध्यते तत् ॥ १०६ ॥ एताश्चैषोथाब्रवीद्रामवर्मायं पृथ्वीशः कार्य एतद्धि कृत्यम् ॥ प्रोचुश्चेत्थं सिद्धयोयं यशस्वी रेवोदक्तो दक्षिणाब्धिर्हि यावत् ॥ १०७ ॥ आकर्ण्येत्थं रामवर्माणमुच्चैर्विद्यारण्यः प्राह सेनां नवीनाम् ॥ संगृह्यास्मादिग्जयायाशु गच्छ राजा नूनं त्वं भविष्यस्यशत्रुः॥१०८॥ विद्यारण्योक्तिं वचो रामवर्मा श्रुत्वेत्यंतः श्रद्दधेऽमुं प्रणम्य ॥ सेनां कृत्वा कृष्णवर्मानुजेन जेतुं पृथ्वीं निर्ययौ चानयास्मात् ॥१०९॥

॥ १०६ ॥ एताः सिद्धीः । एष विद्यारण्यः । यावदुत्तरे रेवादक्षिणे समुद्रः तावद्यशस्वी राजायं भविष्यति इति सिद्धयो विद्यारण्यं प्रोचुः ॥ १०७ ॥ उच्चैरित्यनेन पूर्वभाषणं उपांशु ज्ञेयम् । अस्मात्स्थानात् । अशत्रुः शत्रुरहितः ॥ १०८ ॥ अंतः मनसि कृष्णवर्मनाम्ना भ्रात्रा सह । अनया सेनया च सह

अस्माद्विद्यारण्यसकाशात् ॥ १०९ ॥ ऐभ्यः सकाशात् तेन करभारवित्तेन सेनावृद्धिं कृत्वा देशं स्वाधीनं चक्र इत्यर्थः ॥ ११० ॥ हि यस्मादेवं सिद्धिसामर्थ्यमस्ति ॥ १११ ॥ पूर्वतो दिक्त्रये समुद्रः उत्तरे रेवासीत् । एवं मध्यगतां भूमिं अब्दांघ्रिणा मासत्रयेण लब्ध्वा मे गुरुर्विद्यारण्यो दूरं स्यादिति हेतोरधिकाशां न चकार ॥ ११२ ॥ गुर्व्या महत्या सेनया दिग्जयिनमात्मानं प्रकाशयन् ॥ ११३ ॥ इभाद्गजस्कंधात् उत्तीर्य किंचित्पादचारी अद

यायाः श्रेष्ठा राजधान्यः स तत्र गत्वा जिग्ये तत्पतीन्राजमुख्यान् ॥ जग्राहैभ्योसौ करं तेन गुर्व्या चम्वा देशं स्वस्य वश्यं चकार ॥ ११० ॥ अश्वस्थं तं खेटकुंतासिहस्तं हन्तुं शत्रून्दक्षमुग्रं रणस्थम् ॥ द्रष्टुं नेशोनेन योद्धुं कुतोद्धा राजा कश्चिद्दीतिसिद्धिप्रतापः॥१११॥आसीदब्धिः पूर्वतो दिक्त्रयेपि रेवोदक्तश्चांतरस्थां स भूमिम् ॥ एवं लब्ध्वाब्दांघ्रिणा नाधिकाशां चक्रे दूरं स्याद्गुरुमें भियेत्थम् ॥ ११२ ॥ गुर्वंघ्रीक्षात्युत्सुको रामशर्माथागात्स्थानं तुंगभद्रातटस्थम् ॥ गुर्व्या चम्वा राजचिह्नैरिभस्थो दिग्जेतृत्वं द्योतयंश्चातिवाद्यैः ॥ ११३ ॥ उत्तीर्येभात्पादचारी स किंचिद्विद्यारण्यं दंडवत्संननाम ॥ तिष्ठंश्चाग्रे बद्धपाणिस्तमाह राज्यं तेदो मां वदाज्ञां स्वदासम् ॥ ११४ ॥ प्राक् त्र्याशाब्धिर्नर्मदोदङ्मया भूर्लब्धाल्पेनाप्यंजसा त्वद्बलेन ॥ मूकं कुर्याद्वाक्पटुं पंगुमद्रिं चोत्क्रामंत देशिकेंद्रस्तत्कृपैव ॥११५॥ विद्यारण्योप्यशृणोत्तस्य वाक्यं मेने स्वाज्ञावर्तिनीः सर्वसिद्धीः ॥ यत्प्राक्कृष्या वृत्तिकृत्सोधुनैकः पृथ्वीं जिग्ये दक्षिणाब्धींदुजांताम् ॥ ११६ ॥ नीत्वा गेहे सद्गुरोरंगनां तां संपूज्यैष स्वर्णभूषांशुकाद्यैः ॥ दासीं तस्याः स्वांगनामेव भृत्यांश्चान्यान्कृत्वास्थापयन्मातरं सः ॥ ११७ ॥

इदं राज्यं तवैवास्ति । अहं तव दासो मामाज्ञापय ॥ ११४ ॥ प्राक्त्र्याशाब्धिः पूर्वतस्त्रिदिशासु समुद्रो यस्याः नर्मदा उदक् यस्याः सेयं भूमिरल्पकालेन तव सामर्थ्येन बहुयत्नमंतरा मया प्राप्ता यतः देशिकेंद्रसत्कृपा मूकं वाक्पटुं पंगुं पर्वतोल्लंघिनं करोति ॥ ११५ ॥ यद्यस्माद्दक्षिणाब्धिश्चासौ इंदुजाता च दक्षिणसमुद्रान्नर्मदापर्यंतामित्यर्थः ॥ ११६ ॥ सद्गुरोर्विद्यारण्यस्यान्यान् गृहस्थितान् भृत्यान्कृत्वा स रामवर्मा मातरं गृहं नीत्वा स्थापितवान् ॥ ११७ ॥

चतुरशीत्यधिकशतसंख्यं प्रणमति । य इति ॥ ११८ ॥ सर्गोक्तविद्यारण्यकथाश्रवणादेः फलमाह । विद्यारण्यस्येति । आत्मीयमात्मविषयम् ॥ ११९ ॥
इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे टीकायामर्थस्फूर्त्यभिधायां षड्विंशः सर्गः ॥ २६ ॥ उत्सवविशेषेलाभूपवैः स्वर्णततिः स्मृता । मठस्थितिर्जयो विद्यारण्य
स्यास्माद्गुरूदयम् ॥ २७ ॥ रामराजेति । अत्र हंपीनगरे सुधामये राजसदनैर्वा युक्तम् । अट्टैर्व्यापारस्थानैश्चारवश्चतुष्पथा यत्र ॥ १ ॥ चक्र इत्यनुवृत्तिः

यो माधवो ग्रंथकृदेष भाष्यं चक्रे यतित्वे निखिलश्रुतीनाम् ॥ तं वेदनागेंदुमितं हि विद्यारण्याभिधं स्वीयगुरुं नताः स्मः ॥ ११८ ॥
विद्यारण्यस्येति यः सिद्धिलब्धिं शृण्वन् भक्त्या चापठन्मर्त्यवर्यः ॥ सर्वाः सिद्धीः संलभेद्दुर्लभाश्चात्मीयं ज्ञानं मोक्षदं देशिकेंद्रात् ॥
॥ ११९ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे विद्यारण्यानंदसिद्धिप्राप्तिवर्णनं नाम षड्विंशः सर्गः ॥ २६ ॥ श्रीदेशिकेंद्र उवाच ॥
रामराजोथ चक्रे च राजधानीं सुगोपुराम् ॥ सौधैर्गृहैः सुशोभाढ्यामट्टैश्चारुचतुष्पथाम् ॥ १ ॥ विरूपाक्षालयस्याग्रे तथा गोपुरमु
न्नतम् ॥ प्राकारं च चतुःशालं मंडपं सौधनिर्मितम् ॥ २ ॥ विद्यारण्यस्तु तत्पांपाक्षेत्रं वाराणसीसमम् ॥ कर्तुं विलोक्य सल्लग्नं
ग्रहदृष्टिबलान्वितम् ॥ ३ ॥ प्रासादवास्तुसामग्रीं कृत्वा राज्ञाथ याज्ञिकान् ॥ स यतींद्रो द्विजान्प्राह स्वस्तिवाचनपूर्वकम् ॥ ४ ॥
वास्तुपूजादिहोमश्च भवद्भिस्तद्वलिस्तथा ॥ क्रियतामूर्ध्वतः शंखं स्थित्वा सन्नादयाम्यहम् ॥ ५ ॥ तदैव वास्तुनिक्षेपः कार्यः पूर्वं न
चोत्तरम् ॥ उक्त्वा तस्थौ गोपुरोर्ध्वं विद्यारण्यो विलोकयन् ॥ ६ ॥ सूक्ष्मं कालं तु संस्थाप्य शंकुं तच्छायया सुधीः ॥ काशीतुल्य
मिदं क्षेत्रं करोत्येव स्वसिद्धितः ॥ ७ ॥

॥२॥ विद्यारण्य इत्यादि परान्वितम् ॥३॥ याज्ञिकान्वास्तुकर्माभिज्ञान् द्विजान् । स्वस्तिवाचनपूर्वकमिति परान्वितम् ॥४॥ ऊर्ध्वतः गोपुरोर्ध्वभागे ॥
॥ ५ ॥ पूर्वं न चोत्तरमिति शंखशब्दसमकालं वास्तुनिक्षेपो भवद्भिः कार्य इत्यर्थः । इत्युक्त्वा शंकुं संस्थाप्य तच्छायया सूक्ष्मकालं विलोकयन् गोपु
रोर्ध्वे तस्थावित्यन्वयः ॥ ६ ॥ स्वसिद्ध्या काशीसमं क्षेत्रं सिद्धः करोतीति ज्ञात्वा विघ्नेशो मुहूर्तात्पुरा शंखं दध्मावित्यन्वयः ॥ ७ ॥

सर्वबुद्धिनियंता । तत्र पांपीक्षेत्रे तत्काशीसमत्वमसहमानः ॥ ८ ॥ तद्गणपतिरेत्य ॥ ९ ॥ कंबुशब्दं शंखशब्दं स चकार । तं श्रुत्वा द्विजाः द्विवारं ध्वनिः किमर्थं जात इति विस्मिता बभूवुरित्यर्थः ॥ १० ॥ तद्द्वयोः शंखयोर्नादनं वादनं जातमिति द्विजेभ्यः श्रुत्वा गणेशनिर्मितं विघ्नं ज्ञात्वा सर्वानाहेति संबंधः ॥ ११ ॥ अत्र क्षेत्रे काशीसाम्यमसहता विघ्नेशेन शंखनादेन विघ्नः कृतोऽस्ति ॥ १२ ॥ १३ ॥ राजा रामवर्मा तां समुद्रनर्मदामध्यस्थाम् ॥

सिद्धोऽयमिति विघ्नेशो ज्ञात्वा निखिलधीश्वरः ॥ तच्चासहंस्तत्र विघ्नं कुर्वंश्चांतर्हितः पुरा ॥ ८ ॥ दध्मौ शंखध्वनिं श्रुत्वा याज्ञिकास्तु त्वरान्विताः ॥ चक्रिरे वास्तुनिक्षेपं विद्यारण्यो न वेत्ति तत् ॥९ ॥ प्राप्ते मुहूर्तसमये कंबुशब्दं चकार च ॥ श्रुत्वा सुविस्मिताः किं द्विर्ध्वनिरित्यखिला द्विजाः॥१०॥ततो यथावधः सोपि विद्यारण्यो निशम्य तत्॥द्विःशंखनिनदं ज्ञात्वा विघ्नं विघ्नेशनिर्मितम्॥११॥सर्वां श्चाह न वै वास्तुनिक्षेपो मन्मुहूर्तके ॥जातोऽसहिष्णुना काश्याः साम्यमस्य हि धुंडिना॥१२॥ कृतो विघ्नः शंखनादादतोदः क्षेत्रमद्यतः॥ काशीतुल्यं वर्षशतं सिद्धितो मे भविष्यति ॥१३॥ अथ तस्यां राजधान्यां तिष्ठन्राजा तु तां भुवम् ॥ बुभुजेऽन्यनृपैर्दत्तकरः शास्ताऽखिलप्रभुः ॥ १४ ॥ सेनावृद्धिं चकारासौ दंडितुं चोत्पथान्नृपान् ॥ रथेभाश्वांघ्रिगैः शूरैः स्वं दत्वा भूरि मासिकम् ॥ १५ ॥ व्ययी भूतं कोशवित्तं सैनिकार्पणतोऽखिलम् ॥ आनीतं करवित्तं च न तत्पूर्तिकरं यतः ॥ १६ ॥ तदा चिंतान्वितो राजा विद्यारण्यं रहः स्थितम् ॥ नत्वाग्रे प्रांजलिः स्थित्वा प्राहेत्थं प्रार्थयन्भृशम् ॥ १७ ॥ राजोवाच ॥ जन्मैव केवलमभून्मम राजवंशे दैवेन वृत्तिरखिलैरपि यस्य कृष्या ॥ तेनाबलेन च मया ह्यधनुर्विदापि लब्धं हि राज्यमनरि त्वनुकंपया ते ॥ १८ ॥ नैवास्ति दैहिकबलं तु मया प्यपीश लब्धं मयाद्य सुकृतेन कृपाबलं ते ॥ न त्र्योकसोपि भयदा हि सुवृष्टिरिंद्रो मे भूमिपास्तु करदास्त्वहयोऽत्र शांताः ॥ १९ ॥

॥ १४ ॥उत्पथानुन्मत्तान् । भूरि धनं मासवेतनकं दत्वा रथगजाश्वपदातिभिः सेनावृद्धिं चकार॥ १५॥सैनिकेभ्योऽर्पणेन कोशो वित्तं क्षयं गतम्।करभारद्रव्यं तत्पूर्तिकरं शूराणां मासवेतनपूर्तिकरं यदा नासीत् ॥१६॥१७॥ दैवयोगेन केवलं राजवंशे केवलं जन्ममात्रं ममाभवत् । वृत्तिश्चोपजीविका सर्वैर्बंध्वादिभिः सह यस्य मम कृषिकर्मणाऽभवत् । तेन निर्बलेन धनुर्विद्यारहितेन मया अनरि निःशत्रुकं राज्यं तव कृपयैव प्राप्तम् ॥ १८ ॥ ननु दिग्विजयेन त्वया

राज्यं प्राप्तं किं मत्कृपयेत्याशंक्याह । मम शारीरं बलं किमपि नास्ति । तथापि पूर्वपुण्येनाधुना तव कृपाबलं तु मया लब्धम् । कुत इत्यत आह नेति । त्र्योकसः स्वर्गभूमिपातालस्था मम भयप्रदा न भवंति । हि यस्मादत्र मद्राज्ये इंद्रः सुवृष्टिः यथाकालं वृष्टिकर्ता राजानः करदाः सर्पास्तु शांताः संति अतएव कृपाबलमेव मम राजहेतुर्न दिग्विजयादिरित्यर्थः ॥ १९ ॥ एतादृशे सर्वकृपासाधकेऽपि अत्र कृपासामर्थ्ये मया श्रद्धा ऊनसदृशी कृता । अल्पश्रद्धावानहमस्मीत्यर्थः । अतोऽल्पश्रद्धाहेतोर्मूढेन मया सेनावृद्धिः कृता । तैः सैनिकैर्हेतुभूतैः करप्राप्तं कोशस्थं वित्तं व्ययीभूतमस्ति । बहुसैनिकानां तेषां प्रतिमासेषु वेतनदानेन द्रव्यव्ययो जात इत्यर्थः ॥ २० ॥ किं चाधुना धनं दातुं अल्पमपि मम समीपे नास्तीति हेतोः हृद्गतचिंतया

एतादृशेऽपि गुरुवर्यकृपाबलेत्र श्रद्धेषदूनसदृशा हि कृता मयाऽतः ॥ मूढेन सैनिकजनाः परिवर्द्धितास्तैः प्राप्तं व्ययं हि करकोशगतं च वित्तम् ॥ २० ॥ तेभ्यस्तु दातुमधुना धनमण्वपीश नो मत्समीप इति हृद्गतचिंतयाहम् ॥ त्वां प्रार्थये त्रिदिनतः खलु मास पूर्तिस्तेषां तु दारुणतमाऽसुहरैव याच्ञा ॥२१॥ शृण्वंति किंचिदपि तद्धनदाः सुवृद्ध्यायोंक्त्या नृपाश्च खलु जीवहरापराधे ॥ मृत्युश्च योगविभवादुपशाम्यतीह नो शस्त्रिणः सहचरास्तु पलं स्वदाने ॥ २२ ॥ चेद्गम्यते बहिरिमेपि मया सहैवांतःस्थोहमंबुहरणेपि भवा म्यनीशः ॥ तैश्चासुहा क्रियत एव कलिर्महान्मे ज्ञातस्तवांघ्रियुगुलादधुनाऽऽश्रयोऽन्यः ॥ २३ ॥

युक्तोऽहं त्वां प्रार्थयामि अद्य दिनतः त्रिदिनैर्मासपूर्तिर्भविष्यति । तेषां वेतनयाच्ञा त प्राणहरा अतिदारुणैवास्ति । अतो महत्संकटं प्राप्तमित्यर्थः ॥२१॥ तद्यच्ञायाः प्राणहरत्वमाह द्वाभ्यां शृण्वंतीति । ये वृद्ध्या ऋणप्रदास्तेपि तत् कालांतरे ऋणं दास्यामीति वचनं किंचिकालपर्यंतं शृण्वंति । मरणांतापराधे सति श्रेष्ठप्रार्थनया नृपाश्च शृण्वंति । मृत्युं निवारयंतीत्यर्थः । किं बहुना मृत्युरपि योगसामर्थ्येनोपशाम्यति निवृत्तो भवति । यद्यप्येवं तथापि शस्त्रधारिणः सेवकास्तु स्वदाने वेतनधनदाने पलमात्रं न शृण्वंति । यदा तैर्याच्यते तदैव दातव्यमित्यर्थः ॥ २२ ॥ यदा बहिर्गम्यते तदा मया सहैवायांति गृहस्थितोहं चेत् तदा उदकानयनेपि नाहं समर्थः । यतस्तैर्मत्प्राणनाशको महान्कलहः क्रियते । अतस्तव चरणकमलद्वंद्वादन्य आश्रयो मम नास्ति । एवं तव चरणे

ल्पविश्वासकरणेन वर्द्धितसैनिकस्य मम कोशक्षयजन्यं भयं निवारयेत्यर्थः ॥ २३ ॥ अभीष्टं इच्छितधनप्राप्तिः ॥ २४ ॥ मंत्रं श्रीविद्यामंत्रम् ॥ २५ ॥ ॥ २६ ॥ मातेति त्रिभिः प्रार्थयति । यथा माता बालकशब्दं दूरान्निशम्य मत्पुत्रः पीडितोऽस्ति किमिति तस्योच्चशब्देन प्राप्तशंका सती शीघ्रं निकटं प्रयाति तथा त्वमपि राजप्रार्थनया प्राप्तदुःखं मां ज्ञात्वैवाधुना इह प्राप्तासि । अतो योग्यं तवागमनमित्यर्थः ॥ २७ ॥ ननु किं तद्राजप्रार्थनया दुःख मित्याशंक्यादौ राजप्रार्थनाप्रयोजनमाह । राज्ञेति । राज्ञा बहुसैनिकवृद्धिः कृतास्ति हि । अस्याः सेनावृद्धेः पूर्तिः धनार्पणेन मासवेतनपूर्तिः करप्राप्तको शगतवित्तेन न भवति । तेभ्यो दातुमण्वपि द्रव्यमिह राजगृहे नास्ति । इति हेतोरेष राजा चिंतायुक्तोऽस्ति तस्मै त्वं बहुवित्तं देहि । यतस्त्वदर्पितवित्तेन

श्रीदेशिकेंद्र उवाच ॥ राजोक्तमिति चाकर्ण्य विद्यारण्यस्तमब्रवीत् ॥ मा चिंतां कुरु राजन्श्वस्तवाभीष्टं भविष्यति ॥ २४ ॥ श्रुत्वेत्थं नृपतिस्तुष्टस्तं नत्वांतःपुरं ययौ ॥ निशीथेऽथ जपन्मंत्रं विद्यारण्यः पराविक्राम् ॥ २५ ॥ सस्माराविर्बभूवासावणिमादिकलान्विता ॥ नत्वैनां दंडवत्प्राह विद्यारण्यः कृतांजलिः॥२६॥विद्यारण्य उवाच॥माता यथा र्भकरवं तु निशम्य दूराच्छीघ्रं प्रयाति हि तदुच्चरवात्तशंका॥ आर्तः किमित्थमधुना त्वमिहागतासि ज्ञात्वैव मां नृपवरार्थनयात्तदुःखम् ॥ २७ ॥ राज्ञा कृता हि बहुसैनिकवृद्धिरस्याः पूर्तिर्न तस्य करकोशगताच्च वित्तात् ॥ तेभ्योणु दातुमिह नेति सचिंत एषोस्मै देहि वित्तममितं हि यतोंब कीर्तिः ॥ २८ ॥ चेद्भूगतं धनमिनाय ददासि भूरि कैरीक्ष्यतेमितभटैः परिगुप्तमस्त्रैः ॥ राज्ञा सहाखिलजनैर्यदकिंचनैश्च सल्लभ्यतेधिकृतिवद्धि तथांब देहि॥२९॥तेनेति विश्व जननी विनुता तमेषा प्राहापराह्ण इह योजनकौ किल श्वः ॥हैम्यर्द्धयाममनुपातयत ईशमित्राद्वृष्टिर्मया तु गृहगाऽस्तु गृहे नृपेऽन्या ॥३०॥

तस्य मम च कीर्तिः स्यात् । अलौकिकधनार्पणेन कीर्तिं कुर्वित्यर्थः ॥ २८ ॥ यदि भूम्यादिगतं वित्तं ददासि तर्हि तेन कीर्तिर्न स्यादतः सर्वैर्लभ्यं राज्ञा विशेषतो लभ्यं धनं देहीत्याह । चेदिति इनाय राज्ञे भटैः कर्तृभिः शस्त्रैः रक्षितं कैरवलोक्यते न कैरप्यवलोक्यते । भूमिगतवित्तार्पणेन कीर्तिर्न स्यादि त्यर्थः । निर्धनैः सर्वजनैः सह यथा लभ्यते तथाऽधिकारानुरूपं धनं देहि । राज्ञः पांथीस्थसर्वजनानां च धनार्पणेन दुःखं निवार्य पृथिव्यां कीर्तिं कुर्वि त्यर्थः ॥ २९ ॥ योजनकौ योजनमात्रभूमौ हैमी सुवर्णमयी वृष्टिरर्धयामपर्यंतं मया कुबेरसकाशात्पात्यते । सा सुवर्णवृष्टिः गृहगता गृहेऽस्तु । गृहेषु पतितं

गृहपतिभिर्ग्राह्यं अन्यत्र पतितं राज्ञा ग्राह्यमित्यर्थः ॥ ३० ॥ इत्युक्त्वा ललितांबाऽदर्शनं प्राप्ता । एवं विद्यारण्योपि अन्यदिवसे दर्शनायागतं राजानमु वाच । अद्यापराह्णे सुवर्णवृष्टिर्भविष्यति । सा त्वया ग्राह्या । सर्वेषां गृहगता गृहिभ्यो देयेत्यर्थः ॥ ३१ ॥ ३२ ॥ ब्राह्मणैः पुण्याहवाचनं कृत्वा दानेन संतुष्टैर्द्विजैस्तथाप्तैश्च सह भुक्त्वा वेदमंत्रैर्द्विजोक्ताशीर्वादान् जगृहे ॥ ३३ ॥ परित उभयसंबंधि आत्मवीरैः विश्वस्तपुरुषैः सह योजनभुवः परितः । सम यानिकषादियोगे द्वितीया। बभ्राम परितो भटाढ्यामिति च योजनात्परतो धनरक्षकवीरयुक्तामित्यर्थः। इह राज्ये सुवर्णवृष्ट्यर्थं तदैव देव्याज्ञासमकालमेव कुबेरेणा

उक्तेति चाप ललिताऽदृशिमेष चान्येऽह्नीक्षागतं नृपमुवाच किलापराह्णे ॥ स्याद्धेमवृष्टिरिह योजनतस्त्वया सा ग्राह्याऽथ यस्य गृहगा गृहिणे च देया ॥ ३१ ॥ श्रुत्वेति भूपतिरभून्मुदितो गुरूक्त्यां श्रद्धान्वितश्च निजसैनिकवीरमुख्यान् ॥ प्राहेति योजन मिता परिरक्ष्यतां भूः पौराश्च नो निजगृहाद्बहिरेव यांतु ॥३२॥ आदिश्य भूप इति नित्यविधिं विधायानर्चेशसूनुमथ पुण्यदिनं च विप्रैः ॥ संवाच्य दानमुदितैः सह तैस्तथाप्तैर्भुक्त्वाशिषश्च जगृहे श्रुतिभिस्तदुक्ताः ॥ ३३ ॥ आरुह्य सोश्वमतिवेगमथात्मवीरैर्ब भ्राम योजनभुवं परितो भटाढ्याम् ॥ देव्याज्ञयैव धनदेन किलात्मदूताः संप्रेरिता इह तदैव सुवर्णवृष्ट्यै ॥ ३४ ॥ तैः स्वर्णपूरित विमानवरैस्तु हैमैराच्छाद्य खं हि कृतमत्र सुपीतवर्णम् ॥ नार्कं जनाश्च ददृशुर्ह्यनिलोतिचंडस्तावद्ववौ बहुरजःपिहिता नृदृष्टिः ॥ ॥ ३५ ॥ तथापराह्णसमये ववृषुस्त्रिमाषस्वर्णा अखंडजलबिंदुसमाः सुमुद्राः ॥ धाराभिराभिरखिलाः श्रमिणो यथाल्पाश्माघाततोथ विविशुर्गृहमेव पौराः ॥ ३६ ॥ स्थित्वा गवाक्ष इत उद्ददृशुः सुवर्णवृष्टिं हि सेतुमुपलभ्य च सैनिकास्ते ॥ शेकुर्ग्रहीतुमपि के न तदा सुवर्णं बभ्राम सेतुपरितो नृपतिः स्ववीरैः ॥ ३७ ॥

त्मदूताः संप्रेरिता आज्ञप्ताः ॥ ३४ ॥ तैः कुबेरसेवकैः कर्तृभिः सुवर्णेन पूरितैः सुवर्णविमानैः आकाशमाच्छाद्य पीतवर्णं कृतम् । तदा जनाः सूर्यं न ददृशुः । तावत्प्रचंडो वायुर्ववौ तेन जनदृष्टिर्बहुरजोयुक्ता पिहिता बभूव ॥ ३५ ॥ अथ ते धनदानुगाः अपराह्णे त्रिमाषसुवर्णपरिमिताः अखंडजलबिंदुस मानाः सुमुद्रा ववृषुः । धाराभूताभिराभिर्मुद्राभिः अल्पोपलप्रहारेणेव सर्वे पौराः श्रमवंतः संतोथ स्वगृहं विविशुः ॥ ३६ ॥ पौरा इत्यनुवृत्तिः स्वस्वग

व्योम्नि स्थित्वा सुवर्णवृष्टिम् उत ऊर्ध्वं यथा स्यात्तथा ददृशुः।ते च सैनिकाः सेतुमुल्लंघ्य ददृशुः तदा सुवर्णं ग्रहीतुं केपि न समर्थाः।तदा नृपोपि वीरैः सह सेतु पारितो बभ्राम ॥ ३७ ॥ तत्सुवर्णवृष्टिरूपम् । कोशरहितं तीक्ष्णखड्गं बिभ्रन् न भुवि पदं यस्य तादृशोऽश्वो वाहनं यस्य स अभूपदाश्वः । वेगवराश्वा रूढ इत्यर्थः । विवाहः गरुडवाहश्चक्रधरो विष्णुर्विश्वमिव तद्वनं रक्षति ॥ ३८ ॥ योजनभूमौ किं वृत्तं तदाह । जीर्णेति । यथात्र वने जीर्णद्रुमपर्ण

आनंदमग्नमनसाखिलवैभवं तन्मेने गुरोः स गुरुपादयुगं स्मरंश्च ॥ बिभ्रन्विकोशखरखड्गमभूपदाश्वस्तत्पाति विश्वमिव चक्रधरो विवाहः ॥ ३८ ॥ जीर्णा यथात्र तरुपर्णततिर्विशीर्णा स्वर्णादभूदखिलभूरपि पीतवर्णा ॥ तार्णादिगेहरचना सहसैव चूर्णा वर्णाश्च तत्र निजगेहसुवर्णपूर्णाः ॥ ३९ ॥ वाद्यानि सेतुपरितश्च निनेदुरुच्चैः कीर्तिं नृपस्य जगदुर्बहु मागधाद्याः ॥ स्थित्वा सुदूरमिति चार्थिन आहुरेतेन्योन्यं हरिष्यति नृपः खलु निःस्वतां नः ॥ ४० ॥ यामार्द्धमेव भुवि योजनमात्रधाम्नि कृत्वेति हेममयवृष्टिमितः स्वधाम ॥ यानैर्ययुः शिवसखानुचरास्तदाभूद्व्योमाति चाच्छमनिलोतिजवोपि शांतः ॥४१॥ राजा ततः शकटवाजिरथोष्ट्रयूथैः पश्चादहर्निशमिदं तु निनाय कोशम् ॥ स्वर्णाद्रिरेव लघुरत्र विभाति राज्ञः किं प्रेषितो गिरिवरेण सुतः स्वतत्यै ॥ ४२ ॥ गेहांगणेषु पतितं च ददौ गृहिभ्योन्यत्सर्वमेव जगृहे नृपतिः सुवर्णम् ॥ दत्तं नृपेण निजसैनिकमासवित्तं ये चार्थिनोतिधनिनश्च कृताः सुभूपाः ॥ ४३ ॥

विस्तारः पक्वपर्णास्तरणरूपः तद्वत् । सुवर्णेन पीतवर्णा योजनांतरगता सर्वभूमिरभवत् । तृणगृहरचना सहसा चूर्णाभवत् । तत्र क्षेत्रे चतुर्वर्णाः स्वस्वगृहे सुवर्णेन पूर्णा अभवन् । महत्सिद्धिवैभवं विद्यारण्यस्येति भावः ॥ ३९ ॥ वाद्यानीति यदा । अर्थिनः याच्ञाकर्तारः निःस्वतां दारिद्र्यम् ॥ ४० ॥ अत्र धाम्नि पांपीनगरे अच्छं स्वच्छम्॥४१॥इदं धनं पंचदशदिनैः कोशं निनाय गिरिवरेण मेरुपर्वतेन । स्वतत्यै धनवृद्ध्यै प्रेषितः पुत्रः किमयं इति राजकोश

स्थाने लघुः सुवर्णपर्वत एव भाति ॥ ४२ ॥ ४३ ॥ भूषणशब्दस्य पर्यायो देशभाषया बुक्कण इत्यर्थः ॥ ४४ ॥ निजगुरुं विद्यारण्यं यतस्तव दासोऽतः स्वकार्यकरणे आज्ञां कुरु ॥ ४५ ॥ कृतिलेखकैः कुशललेखकैः ॥ ४६ ॥ अत्र ग्रंथेषु तव नाम त्वदाश्रितस्य मम पूर्वं माधवेति नाम चास्तु । हेऽव नीश यावद्ग्रंथास्तावदुभयोः कीर्तिर्विख्यातास्तु । उक्तसमं यथोक्तं चकार ॥ ४७ ॥ निजगुरोर्विद्यातीर्थस्य । इतः पांपीक्षेत्रसकाशाद्विद्यारण्यः स्वगुरुं

भूषास्त्ववाप्य नृपतेः खलु निर्धनास्ते विप्रास्तदीयवनिताश्च तथापरेपि ॥ तं सर्वभूषणमिति प्रवदंति भूपं प्रोक्तः स चाखिलजनैरिति बुक्कणाख्यः ॥ ४४ ॥ इत्थं स बुक्कणनृपः क्षितिलब्धकीर्तिर्नित्यं नमन्निजगुरुं वदतीति नम्रः ॥ लब्धं मयाखिलमिदं तु तवाशिषै वाज्ञां मां कुरुष्व निजदासमतः स्वकृत्ये ॥ ४५ ॥ श्रुत्वा नृपोक्तिमतिनिस्पृह आह विद्यारण्यस्तमित्थमिह पूर्वगृहे च संति ॥ ये मत्कृतास्तु नृपते बहवो निबंधास्ताँल्लेखयेति बहुधा कृतिलेखकैस्त्वम् ॥ ४६ ॥ नामात्र बुक्कणनृपस्य तवाश्रितस्य मेप्यस्तु पूर्वमथ चोभयकीर्तिरुर्व्याम् ॥ ख्याता हि यावदवनीश्वर मे निबंधाः श्रुत्वेति भूप इदमुक्तसमं चकार ॥ ४७ ॥ गच्छाम्यहं निजगुरोस्तु पदेक्षणाय श्रुत्वा गुरूक्तिमिति भूपतिना नृयानम् ॥ विप्राश्च सेवितुममुं पृतनां च दत्वा प्रस्थापितो गुरुरितः स्वगुरुं सुवाद्यैः ॥४८॥ ये बुक्कणस्य नृपतेः पथि मंडलेशा आनर्चुरेत्य विदुषं नृपदेशिकं ते ॥ स्वर्णांशुकैः पृतनयाशनमुख्यमस्मै दत्वा प्रणेमुरिति चाप गुरोः पुरं सः ॥ ४९ ॥ ग्रामाद्बहिर्यतिरसाववतीर्य यानात्पद्भ्यां ययौ धृतकमंडलुदंड ईशम् ॥ सत्कृत्य तत्र च मृदाम्रदलोपवीतैः प्रद्योतिकं नम इतो हरिवाक्चकार ॥ ५० ॥ दत्वाशिषं यतिवरोपि तथैव चास्मै पप्रच्छ वृत्तमखिलं निकटस्थिताय ॥ सोप्यादितः स्वगुरवे ऽखिलसिद्धिवृत्तमुक्त्वाह सर्वमिदमीश्वर ते प्रसादात् ॥ ५१ ॥

विद्यातीर्थं प्रति गंतुं प्रस्थापितः ॥ ४८ ॥ सेनया सहास्मै भोजनादिकं दत्वा प्रणेमुः इति क्रमेण ॥ ४९ ॥ ग्रामात्कुंभकोणात् ईशं गुरुं पद्भ्यां ययौ । मृत्तिका आम्रपल्लवं यज्ञोपवीतं शौचार्थं मंगलार्थं दंडार्थं च उपायनस्थानीयैरेतैः तं सत्कृत्य इनः अस्मै गुरवे हरिरिति मुहुर्वक्ता सन् प्रद्योतकवंदनं चकार । प्रद्योतकवंदनं यतिधर्मेषु प्रसिद्धं विस्तरभयान्न लिख्यते ॥ ५० ॥ सुवर्णवृष्ट्यादि सर्वं सिद्धिभवम् । गुरुप्रसादो महाफल इत्यर्थः ॥ ५१ ॥

अत्र कुंभकोणे अदःस्थितये कुरोर्निवासाय सर्वपदार्थयुक्तं मठं कृत्वास्य सेवार्थं भृत्यान् स्थापितवान् ॥ ५२ ॥ पाठात् शांतिपाठेन ॥५३॥ यथा सत्कमले रतस्य भ्रमरस्य चित्रगतं कमलं नापेक्षितं तथा त्वया निर्मितोयं मठः आत्मसुखव्यातस्य ममानपेक्षितोस्ति निरतिशयानंदसुखापेक्षया तदितरसुखस्यातितुच्छत्वेनेच्छाविषयत्वाभावान्न काचित्सेवा मयाज्ञाप्यत इति भावः ॥ ५४ ॥ ननु भवान्निस्पृहोपि गुरुसेवया मम कृतकृत्यतायै कदाचिदाज्ञा कर्तव्येत्याशंक्य मठसंस्थया धर्मसंस्थारूपा गुरुसेवा त्वया कर्तव्येत्याह तत्रेत्यादिना । यद्यप्यहं निरपेक्षस्तथापि मया किंचिदुच्यते । जडोप्ययं देहः प्रेतत्वं त्यक्त्वा

संपूज्य देशिकमसौ विधिवत्स्वकीयैस्तस्मै ददौ नगरगैर्निखिलैः सुभिक्षाम्॥ कृत्वात्र सन्मठमदःस्थितयेऽखिलाढ्यं सेवार्थमस्य विनिवेशितवान्सुभृत्यान् ॥५२॥ ज्ञात्वाथ देशिक इमं परिपूर्णकामं शारीरकाद्यखिलभाष्यगणं च पाठात् ॥ तस्मै श्रुतिस्मृतिविदे समुवाच विद्यारण्योऽब्रवीदथ गुरुं वद मेल्पसेवाम्॥५३॥ शिष्योदितं वच इदं तु निशम्य विद्यातीर्थस्तमाह मठ आत्मसुखाकुलस्य ॥ त्वन्निर्मितो मम च सत्कमले रतस्यालेलेख्यवारिजमिवास्ति हि कान्यसेवा ॥ ५४ ॥ तत्रापि तुभ्यमणु चोच्यत एष देहः प्रेतत्वमुज्झ्य सुजडोऽसुलयेपि पूज्यः ॥ जातो मठत्र निहितोस्ति मयैव कृष्णतीर्थो यतिः स्वसुखभाक् तव पूर्वबंधुः ॥ ५५ ॥ श्रीशंकरस्य च कलौ श्रुतिधर्ममुर्व्यां संस्थापकस्य हि मठास्तु चतुःककुप्सु ॥ स्थित्यै वृषस्य कथितास्त्रिषु तेषु विद्वन्नो धर्मताण्वपि यतेश्च विनैव तस्मात् ॥५६॥ सद्धर्मिणः श्रुतिगतार्थविदोऽतिशांतास्तस्मिन्मठे हि यतयो दिशि दक्षिणस्याम् ॥ प्राक्तोऽखिलाश्च सदृशा इह योधुनापि सन् कृष्णतीर्थयतिरीदृश एव सद्धीः ॥ ५७ ॥

प्राणनाशेपि संन्यासाश्रयेण पूज्यो यत्र जातोस्ति । यत्र संन्यासो गृह्यत इत्यर्थः । तत्र मठे स्वसुखसेवी तव प्रथमबंधुः कृष्णतीर्थाख्यो मयैव स्थापितोस्ति ॥ ॥ ५५ ॥ कोसौ मठ इत्याह कलौ वेदधर्मं पृथिव्यां स्थापयितुं शंकरस्य मठाः वृषस्य धर्मस्य स्थापनार्थं चतुर्दिक्षु कथिताः । तस्माद्यतेः कृष्णतीर्थाद्दते तेषु त्रिमठेषु हे विद्वन्किंचित् धर्मो नास्ति । धर्मवद्यत्याश्रयेण स एव दक्षिणमठो धर्मवानित्यर्थः ॥ ५६ ॥ दक्षिणदिशि शृंगगिर्याश्रिते तस्मिन्मठे उत्तमधर्मवंतो वेदार्थविदोपि शांताः संन्यासिनः प्राक्तः प्राचीनसंप्रदायक्रमेण सर्वे समानाधिकाराः संति । इह यतिषु संप्रति वर्तमानः कृष्णतीर्थयतिरेव

ईदृशः त्वत्सदृशो बुद्धिमानित्यर्थः ॥ ५७ ॥ एतादृशे धर्मवत्यपि मठे अल्पापि दीपादिव्यवस्था नास्ति । क्षेत्रवासिभिः सार्द्धशतत्रयगृहवद्भिः विप्रैरेवेह मठे भोजनादिकं समर्प्यत इत्यर्थः । अस्मान्मठाद्यतितो यतेः सकाशाद्धर्मदंडो भुवि न भवति ॥ ५८ ॥ अतः पृथिव्यां धर्मदंडस्थापनं कुर्वित्यर्थमाह । श्रीति ॥ ५९ ॥ ते त्वया अन्येषां मठानां च तत्तदनुरूपं यथा स्यात्तथा इनात् राज्ञः सकाशात्कर्तव्या । इह पृथिव्यां त्वं द्वैतमतस्थैर्लुप्ततुल्यमद्वैतं आगमोक्त्या शास्त्रप्रतिपादनेन प्रकाशय ॥ ६० ॥ इतः कुंभकोणाद्गुरूक्तचिह्नैः छत्रचामरसुवर्णयष्टिजयवाद्यैर्विद्वज्जनैश्च सह गुरूक्तं कर्तुं ययौ ॥ ६१ ॥

एतादृशेऽपि न मठेष्वपि दीपमुख्या संस्थास्ति भोजनमिहार्प्यत एव विप्रैः ॥ क्षेत्रस्थितैः शरदहोमितगेहगैश्चाथास्मान्मठान्न यतितो भुवि धर्मदंडः ॥ ५८ ॥ श्रीशंकरेणैव विधर्मिणः प्राक् संदंड्य धर्मनिरताश्च कृतास्ततोऽन्यः ॥ शास्ता न कश्चिदिति कौ गतधर्मिणो ये तांश्चाज्ञयैव मम संप्रति दंडय त्वम् ॥ ५९ ॥ दीपाशनादिरपि सन्मठसंस्थितिस्तेऽन्येषां च तत्तदनुरूपमिनाद्धि कार्या ॥ अद्वैतमार्गमिह आप्यकृता प्रवृत्तं द्वैतैश्च लुप्तसममुन्नय चागमोक्त्या ॥ ६० ॥ आज्ञापितः स्वगुरुणेति तदैव विद्यारण्यो ययावित इमं त्वभिवंद्य भूयः ॥ सेनान्वितो गुरुसमीरितमुख्यचिह्नैर्विद्वज्जनैश्च गुरुणोदितमेव कर्तुम् ॥ ६१ ॥ पश्यन्स शंकरमठान्वरुणस्य दिक्तः संपूजितो नृपवरैरपि विद्वदाद्यैः ॥ सेनान्वितः प्रतिदिनाशनमुख्यदानैश्चानर्घ्यवस्त्रवरभूषणपुष्पगंधैः ॥ ६२ ॥ संदंडयंश्च विविधोत्पथगांस्तदुक्तदंडैस्तु शास्त्रवचनैः श्रुतिशास्त्रदृष्ट्या ॥ द्वैतार्थवादनिरतानपि वेदवाक्यैर्जित्वा प्रवर्तयति चाद्वयमार्गमाद्यम् ॥ ॥ ६३ ॥ प्रत्यग्दिशोऽखिलगुरोस्त्रिमठांतरस्थान्देशान्भ्रमन्स इति तन्मठसंस्थितिं च ॥ चक्रे समीपगनृपैरखिलाप्तविद्यः सम्यक्तपाः प्रबलसिद्धिरतोऽखिलेज्यः ॥ ६४ ॥

वरुणस्य दिक्तः पश्चिमदिक्तः । नृपवरैः कर्तृभिः प्रतिदिनेषु भोजनार्पणादिभिः पूजितः ॥ ६२ ॥ तेषां धर्मिणां मुक्ताः दंडाः प्रायश्चित्तादयो येषु तैः शास्त्रवाक्यैः संदंडयन् शिक्षयन् । आद्यं आदिनाथात्प्राप्तम् ॥ ६३ ॥ प्रत्यग्दिशः पश्चिमदिक्सकाशात् अखिलगुरोः शंकरस्य मठत्रयमध्यवर्तिदेशान् भ्रमन् इति क्रमेण सर्वाश्च ताः प्राप्ता विद्या यस्य । अतो हेतोरिति हेतुगर्भितविशेषणानि । उत्तमतपस्वी दृढसिद्धिः सर्वपूज्यः सः समीपदेशस्थैर्नृपैस्त

न्मठव्यवस्थां चकार ॥ ६४ ॥ अपाङ्मठं दक्षिणमठं समीपदेशान्त्यक्त्वा पथा केवलमार्गेणैव करवीरक्षेत्रं ययौ । यत्र महालक्ष्मीर्जयति सर्वोत्कर्षेण वर्तते ॥ ६५ ॥ तस्मात्क्षेत्रात् । अत्र वृक्षसमीपे अस्माद्देशात् अग्रे गंतुं न समर्थाः संतः तत्रैव तस्थुः ॥ ६६ ॥ इति वायुं दृष्ट्वा तेनोदकसेचनेन ॥ ६७ ॥ उन्नृयानात् उत्कृष्टशिबिकया । क्षितिजयेनोच्चतासूचकैः । मत्तः सर्वेभ्यश्च अधिकविद्वांस्त्वमेवासि किम् ॥ ६८ ॥ ननु त्वं कोसीत्याशंक्यात्मवृत्तं कथयति । विद्वत्तम इत्यादिना । विधितः मंत्रतः कौलतश्च मत्कर्मसु किंचिन्न्यूनं नाभवत् ॥ ६९ ॥ अथ भूगतो विष्णुरपि रामो

द्रष्टुं गुरूदितमपाङ्मठमुत्सुकोसौ त्यक्त्वाकगानिति हि तद्विषयान्पथैव ॥ क्षेत्रं ययौ जयति यत्र महादिलक्ष्मीस्तामार्चयत्तदधिपेन च पूजितः सः॥६५॥तस्माद्व्रजन्पथि महोन्नतपिप्पलं सोपश्यद्ववौ च सहसा पवनोत्र चंडः॥ सर्वे रजःपिहितदृष्टय ईषदस्मान्नेशाः पुरस्तु गमने त इहैव तस्थुः॥६६॥दृष्ट्वेति सोप्यखिलवित्स्वकमंडलुस्थं संमंत्र्य वारि च यतिस्तु सिषेच चोर्ध्वम्॥तेनाभवत्पवनशांतिरथ द्रुमोर्ध्वे दृष्टोखि[illegible]र्बहुकरालवपुः पिशाचः ॥६७॥ सोथाब्रवीदिति यतिं तु नृयानसंस्थं त्वं कोसि गच्छसि ममाग्रत उन्नृयानात्॥ चिह्नैर्युतः क्षितिजयोन्नतिसूचकैश्च विद्वान् त्वमेव किमिहाखिलतोपि मत्तः ॥ ६८ ॥ विद्वत्तमोहमपि शृंगगिरिभट्टसंज्ञस्त्रेतायुगे मम जनिः सुकुले किलासीत् ॥ वेदक्रियारतमतिः सततं न किंचिन्मत्कर्मसून्नमभवद्विधिकालमंत्रैः ॥ ६९ ॥ रामोथ रावणवधेन च शंकितोभूद्ब्राह्मणोयमिति विष्णुरपि क्षितिस्थः॥दातुं तु कालपुरुषं स्वकृताघशांत्यै सद्ब्राह्मणं सततकर्मठमैक्षदार्यः॥७०॥ते बभ्रमुः क्षितिमथ क्वचिदीक्ष्य नेदृग्विप्रं पप्रच्छुरपि कश्चिदिदं गृहीतुम् ॥ नेशोथ मामपि समेत्य तथाहुरुक्तं विद्याक्रियोन्नतिमतापि मया तथेति ॥७१॥ साक्षाद्धरेर्धृततनोरतिदुर्ग्रहं च लब्ध्वापि दानमहमीक्ष्य मुखं तदीयम्॥भूत्वागताघ उत तस्य पदं हि यास्ये स्वर्णादिकोदरमिति प्रगृहीतमेतत्॥७२॥

रावणवधेन ब्राह्मणोयमिति ब्राह्मणहत्यया शंकितः सन् स्वपापशांत्यै कालपुरुषदानं कर्तुं कर्मनिष्ठं सद्ब्राह्मणं निजाश्रितपंडितैः शोधितवान् ॥ ७० ॥ इदं कालपुरुषदानम् । नेशो न समर्थः । तथा दानं गृहाणेति मामूचुः । मयापि विद्याकर्मगर्वितेन । तथा दानं गृह्णामीत्युक्तम् ॥७१॥ अतिदुर्ग्रहं दुष्प्रतिग्रहं दानं गृहीत्वा राममुखमवलोक्य निष्पापो भूत्वा तत्पदं गच्छामीति हेतोः । स्वर्णादिकमुदरे यस्य तत्कालपुरुषदानं मया गृहीतम् ॥ ७२ ॥

दत्त्वैव मदग्रपृष्ठो वसिष्ठवाक्येन मह्यं मुखमदर्शयन् गतः ॥७३॥ बहुश्रेष्ठद्विजान्त्यक्त्वा मह्यं स्वपापहरं दानं ददौ । अहं सर्वश्रेष्ठ इति गर्वेण देहांते पिशाचोऽभवम् ॥ ७४ ॥ द्वियुगं युगद्वयपर्यंतं अत्राश्वत्थवृक्षे नृमतितः मनुष्यबुद्धितः पिशाचतुल्याः कृता इत्यर्थः ॥ ७५ ॥ मया किंचित्पृच्छ्यते नोचेत् उत्तरं न ददासि चेत् त्वं मम दासो भविष्यसि । भुवि आर्यनीचौ कौ भवतः इति त्वं ब्रूहि । अन्यथा त्वं अस्मिन्वृक्षे तिष्ठ ॥ ७६ ॥ दृष्टांतपूर्वकमु

रामस्तु मां वसनभूषणतः प्रपूज्य दत्त्वैव तद्धि निरगाच्च मदग्रपृष्ठः ॥ सोदर्शयन्निजमुखं गुरुवाक्यतो मे स्थित्वा चिरं च गतवानहमात्मगेहम् ॥ ७३ ॥ विद्याक्रियाभिरहमेव महान्किलोर्व्यां रामोऽखिलेष्वपि निजाघहरं च दानम् ॥ मह्यं ददौ द्विजवरान्बहुशोपि हित्वेत्थं गर्वितोहमभवं हि पिशाचकोंते ॥ ७४ ॥ स्थित्वा मया द्वियुगमत्र न कश्चिदेव दृष्टो हि मादृशबुधोथ जितास्त्वनेकाः ॥ ते भ्रंशिता नृमतितश्च पिशाचतुल्याः कश्चिन्न गच्छति बुधस्तु पथामुनातः ॥ ७५ ॥ प्राप्तस्त्वमेव बहुवत्सरतोथ किंचित्पृच्छामि ते वदसि चेद्वशगस्तवाहम् ॥ नोचेन्मम त्वमथकौ भुवि चार्यनीचौ त्वं ब्रूहि चेन्न वदसीह तरौ हि तिष्ठ ॥ ७६ ॥ श्रुत्वेति तं यतिरुवाच च योखिलज्ञोऽहंताविवर्जितमतिः स जनेषु वर्यः ॥ चेत्तद्युतोप्यखिलविच्च स सर्वनीचो ज्ञेयो भवान्बुधवरोपि यथा पिशाचः ॥ ७७ ॥ इत्युत्तरात्स च परास्त इतः पिशाचोधस्ताद्ययाविति यतिं प्रणमन्नुवाच ॥ नूनं त्वयास्मि विजितो वशगस्तदाहं स्थास्ये यथा वदसि मां हि तथा स्थितः सन् ॥ ७८ ॥ आकर्ण्य चेति तमसौ तु सुमंत्रिताद्भिः कृत्वा तिरोहिततनुं लघुवायुरूपम् ॥ पेट्यां निवेश्य शकटे च निधाय पेटीं स्वीयैश्च शृंगगिरिमठं यतिराप मार्गात् ॥ ७९ ॥ किंचित्सपादगतिमान्विधिवद्धि कृष्णतीर्थं प्रणम्य पुरतः स्थित आह चेत्थम् ॥ शिष्यो गुरोस्तव किलावर एवं बंधुर्गुर्वाज्ञयैव कृतवांस्त्रिमठीयसंस्थाम् ॥ ८० ॥ संदंड्य चोत्पथरतानखिलांस्तथोर्व्यामद्वैतमार्गममलं किल संप्रकाश्य॥प्राप्तोस्मि शंकरगुरोश्चरमं मठं त्वत्स्थितया सुधर्मसहितं वरमेव तेभ्यः॥८१॥

त्तरमाह । य इति । तद्युतः अहंकारयुक्तश्चेत्सर्वज्ञोपि यः सर्वेभ्यो नीचो भवति । यथा पंडितमान्योपि भवान्पिशाचो जातः । अहंकाररहितस्साहित्ये एव उत्तमत्वम् । नीचत्वप्रयोजक इत्यर्थः ॥ ७७ ॥ परास्तः दत्तोत्तरः इतो वृक्षाधोभागे ययौ तथा स्थितिः त्वदाज्ञापालनकर्ता सन् त्वदधीनो भवामि ॥ ॥ ७८ ॥ मार्गेण शृंगगिरिमठं प्राप्तः ॥ ७९ ॥ किंचित्पादचारी विद्यातीर्थस्य शिष्योहं कनिष्ठस्तव गुरुबंधुरित्यर्थः ॥ ८० ॥ तव निवासेन सुध

मियुक्तं मठत्रयाच्छ्रेष्ठम् ॥ ८१ ॥ उत्थितश्चासौ कृष्णतीर्थश्च ॥ ८२ ॥ तत्रत्यस्तद्देशस्थः भूपतिः अखिलतः सर्वैः सह ॥ ८३ ॥ धनधान्ययुक्ते अत्र मठे ॥ ८४ ॥ उक्तधर्मं यथोक्तवर्णाश्रमादिधर्मं पालयितुमाज्ञां नियोज्य स्वपंडितान्प्रेष्य उरुधामसंस्थान्महानगरेषु स्थितान्कृत्वा धर्मरक्षार्थं तत्र तत्र स्थापयित्वेत्यर्थः । इहैव शृंगपर्वते विद्यारण्यः स्थितः ॥ ८५ ॥ सत्कृतिना कुशलपुरुषेण पाषाणमूर्तिं कृत्वा अत्र मूर्तौ मे निबंधतः आज्ञया ये मठं द्विषंति

आज्ञां वदाद्य तव भृत्य इवास्मि नान्यः श्रुत्वालिलिंग इममुत्थितकृष्णतीर्थः ॥ पप्रच्छ चैव कुशलं स्वगुरोस्तु तस्मै स्वीयं तथाह निखिलं च मठीयवृत्तम् ॥ ८२ ॥ ज्ञात्वैव बुक्कणनृपस्य गुरुं हि विद्यारण्यं समागतमथात्र ययौ स्वपुर्याः ॥ तत्रत्यभूपतिरमुं पुपुजे ह्यनर्घ्यवस्त्रादिभिस्त्वखिलतश्च ददौ सुभिक्षाम् ॥ ८३ ॥ तस्मान्नृपाद्यतिवरोऽस्य मठस्य संस्थां चक्रे सुदीपवरभोजनदानमुख्याम् ॥ जीर्णं चकार सुनवं मठमत्र भृत्यान्संयोज्य कार्यकुशलान्धनधान्ययुक्ते ॥ ८४ ॥ ऐश्वर्यमत्र नृपतुल्यमसौ नियोज्य ह्याज्ञां च सर्वभुवि पालयितुं सुधर्मम् ॥ संप्रेष्य नैजविबुधानुरुधामसंस्थान्कृत्वेति चावसदिहैव गुरुर्गुहायाम् ॥ ८५ ॥ कृत्वाश्ममूर्तिमथ सत्कृतिना पिशाचं पेठीस्थमत्र विनिवेश्य तमाह चाज्ञाम् ॥ तान्पीडयेति किल ये मठमुद्विषंति त्वं पालयाथ मठगांश्च निबंधतो मे ॥ ८६ ॥ कृत्वेति संस्थितिमसावखिलां मठस्य स्थित्वात्र वार्षिकशरदृतमाश्वतुष्कम् ॥ पृष्ट्वातिलोभवचनैर्यतिकृष्णतीर्थं नत्वा भ्रमन्भुवि ययाववशिष्टदेशान् ॥ ८७ ॥ संपूजितः पथि नृपैरथ सेनयागाच्छ्रीरंगपट्टनमहाधिप इंदुराजः ॥ यो बुक्कणाय करदः पुपुजे यतींद्रं बह्वादरेण विनिवेशितमाद्यगेहे ॥ ८८ ॥ यद्देशिकः श्रुतिगताः किल वेत्ति शाखाः सार्थाश्च पंचदश वित्स्मृतिशास्त्रकोऽपि ॥ येनायनात्तु विजिताः क्षितिगाऽद्वयज्ञास्तेनाख्यया जगुरमुं भुवि सायणार्यम् ॥ ८९ ॥ सोथाययौ हि विजिगीषुधियैव विद्यारण्यं नदीव तरसाब्धिमितः परेच्छुः ॥ युक्तः प्रवाहलघुभिस्त्वनुयायिभिश्च विद्यावरत्ननिकरं सुधिभिस्त्वनंतम् ॥ ९० ॥

तान्पीडय । मठस्थांश्च पालयेत्याज्ञां ददौ ॥ ८६ ॥ वर्षाऋतुशरदृतुपर्यंतं स्थित्वा ॥ ८७ ॥ आद्यगेहे उत्तमगृहे निवेशितं पुपुजे ॥ ८८ ॥ यद्देशिकः इंदुराजगुरुः वित् विद्वान् । अयनात् षण्मासैः क्षितिगताः अद्वयज्ञाः वेदांतिनः । तेन कर्मणा सायणार्यं जगुः ॥ ८९ ॥ सः सायणार्यः

स्वबुद्ध्या विद्यारण्यं विजिगीषुः अब्धिं नदीव वेगेनाययौ । कीदृशः । इतः विद्यारण्यात्परेच्छुः परं उत्कृष्टत्वं इच्छति सः पक्षे इतः समुद्रात्परं तीरं इच्छति सा । अनुयायिभिः शिष्यैर्युक्तः पक्षे प्रवाहेण लघुभिः अल्पनदीभिर्युक्तेत्यर्थः । विद्याख्यरत्ननिकरं विद्या इव आद्यरत्नानि श्रेष्ठरत्नानि तेषां निकराः समूहाः यस्मिन् तम् । अनंतं अनंतजलमित्यर्थः । यद्वा विद्या एव आद्यरत्नानि तेषां निकरा यस्मिन्तं विद्यारण्यम् ॥ १० ॥ आनम्रतोपलनम्रं छलनम्रः सम नमस्कारतुल्यं कर्म येन सः यतः आढ्यगर्वः गर्वाढ्यः अनम्रहृदयः बहिर्नम्रः । किंचित् हास्ययुक्तः स्वकीयवदनानि स्वशिष्यवदनानि पश्यन् तं प्राह ॥ ११ ॥ श्रुतीरितमताद्वेदोक्तप्रमाणेन सत्यमबाधितमुक्तं प्रतिपादितम् । अद्वैतमते ये श्रद्धावंतस्ते कुत्रचिल्लीना अधुना तवानुग्रहेण बलवंतो जाताः ॥

तस्थौ स देशिकसमीप इवातिधूर्तस्तं चानमन्कृतनमःसम आढ्यगर्वः ॥ प्राहेनि तं यतिमनम्रहृदूर्ध्वनम्रः पश्यन्स्वकीयवदनान्यनु सस्मितास्यः ॥११॥ सायणाचार्य उवाच ॥ जित्वा मया क्षितिगताद्वयधर्मनिष्ठान्द्वैतं श्रुतीरितमताद्भुवि सत्यमुक्तम् ॥ श्रद्धालवोऽद्वय मते क्वचिदेव लीनास्ते चाधुना भवदनुग्रहतो बलिष्ठाः ॥ १२ ॥ श्रुत्यापि सिद्धमतमेतदहो नृपाणां तुच्छीकृतं हि बलतोऽल्पजपैर्न शानाम् ॥ अद्वैतमुत्प्रकटितं हि यतोऽस्त्यधर्मश्चार्थान्मृषा प्रवदतामिह संगतानाम् ॥ १३ ॥ ब्रह्मैकमेव वदति श्रुतिरद्वितीयं द्वैतं कि लातिशयतः कथितं तयात्र ॥ नानेह नेति किमतः पुनराह नेति नानात्वमत्र विमलं सुविकाशयंती ॥ १४ ॥ आस्तिक्यतोऽथ जगतः स्थिरता खलूक्ता श्रुत्यैव चातिविशदा वचसा ध्रुवा द्यौः ॥ इत्यादिना जगदतः श्रुतिसत्यमेव ब्रह्मापि वेदवचनैर्न कुतो द्वितीयम् ॥१५॥

॥१२॥ ननु द्वैतमतस्य प्रमाणरहितस्य त्यागेन तेषां युक्तं मदाश्रयेण एकमेवाद्वितीयमित्यादि श्रुतिसिद्धाद्वैतमतस्वीकरणमित्याशंक्य द्वैतमतस्य श्रुतिसिद्धत्वं प्रतिजानन् । अद्वैतस्य श्रुतिसिद्धत्वमाक्षिपति द्वाभ्यां श्रुत्येति । एतत् अस्माकं द्वैतमतं बलतः आश्रयेण अल्पजपैः क्षुद्रदेवतामंत्रजपैः । यतः अद्वैतमते तेषां अधर्मोऽन्यायोऽस्ति । कुतइति चेत्तदाह । विशेषणद्वयेन । विषयान्मिथ्याभूतं प्रवदताम् इह विषयेषु संसक्तानामिति । विषयासक्तानां विषयमिथ्यात्ववचनं न युक्तमित्यर्थः ॥१३॥ ब्रह्मेति । एकं ब्रह्म अस्त्येव नास्तीति नेत्यर्थः । कीदृशम् अद्वितीयम् । आत्मनंताद्वितीयं यस्य तदद्वितीयमित्यर्थः । नेह नानास्ति किंचन । इह जगति नानाविधं द्वैतं नास्तीति न अपि तु अस्तीति च न इति पदच्छेदे । पुनर्नकारेणामलमबाधितं नानात्वश्रुतिराह ॥१४॥ एवमद्वैतस्य श्रुतिसिद्धत्वं

निरस्य प्रतिज्ञातं द्वैतस्य श्रुतिसिद्धत्वमाह । आस्तिक्य इति । घटः सन्पटः सन्नित्यादिप्रतीतौ सन्मत्ययेनास्तित्वहेतोः । ध्रुवाद्यौरित्यादिना वचसा श्रुत्या च जगतः स्थिरत्वमतिस्पष्टमुक्तमेव खलु । अतः स्थिरत्वोक्त्या जगदिदं श्रुतौ सत्यमेवोक्तम् । ननु सत्यं ज्ञानमनंतं ब्रह्मेति ब्रह्मणः सत्यत्व मुक्तं तत्रांगीकरोति । ब्रह्मापि वेदवचनेन सत्यमस्तु । द्वयोर्ब्रह्मजगतोः सत्यत्वं कुतो नास्ति किंतु अस्त्येव श्रुत्यनुभवसिद्धत्वादित्यर्थः ॥९५॥ द्वैतं त्यक्त्वाऽद्वैतमतस्वीकरणं वृथेत्याह । विश्वेत्यादिना । पृथग्धियः भेदबुद्धयः ॥९६॥ किं च अज्ञेन अल्पज्ञानेन मूर्खेणेति अद्वैतसत्यत्वं वक्तुं युक्तं सुज्ञैस्तु वक्तुं न योग्यमित्यर्थः । परोक्षत इति विद्यारण्यमुखमवलोक्येति ज्ञेयम् । तदुक्तेः सायणार्यवचनस्य । भेदात्खंडनेन उवाच ॥ ९७ ॥ वृथातिभाषमाणस्य खलस्य वचनानि स्मृत्वा सुज्ञैः किमपि नोच्यते तदा इतः सुज्ञान्स्वस्य जयं कथयति । मूकोयं पराजितोस्तीति वदति । तथापि श्रुतिसिद्धमिदमद्वैतं अन्यैः

विश्वस्थितास्तु सकलास्तव तन्ममेदमित्यादिनानुदिनमेव पृथग्धियो वै ॥ संतीति सत्यपि मुधाद्वयमाहुरेतैर्न ज्ञायते निगमवाक्श्रुतानुभूतिः ॥ ९६ ॥ अज्ञेन शोभत इतीरितमार्यसुज्ञैर्नेत्थं परोक्षत उवाच गुरोः पुरः सः ॥ तस्मिन्सुतेजसि च वक्तुमनीश्वरोद्धाथैनं यतीश्वर उवाच सदुक्तिभेदात् ॥ ९७ ॥ विद्यारण्य उवाच ॥ सुज्ञैः खलस्य वचनानि मुधातिवक्तुः श्रुत्वापु नेर्यत इतः स्वजयं स वक्ति ॥ सिद्धं न लीयत इदं न च वर्द्धतेन्यैस्तात्पर्यमेति निगमस्य कुतोर्थबुद्धिः ॥ ९८ ॥ राज्ञो वशान्हि किल देहधियोल्पमंत्रैः कुर्वंति नात्ममतयोऽस्पृहिणोर्थलब्ध्यै ॥ नाधर्मिणोप्यथ न चार्थभुजोप्यसंगात्पश्यंत इंद्रियगतिं हि निजार्थगां ये ॥९९॥

युष्मदस्मदाद्यैः खंडकस्थापकैः न लीयते न वर्द्धते च अद्वैतसुप्रकटितमित्युक्तं तद्वृथेत्यर्थः । श्रुतिसिद्धं द्वैतमित्युक्तं तत्र विषयबुद्धिनां वेदाभिप्रायानभिज्ञत्वमाह तात्पर्यमिति ॥ ९८ ॥ मंत्रैर्नृपान्वशीकुर्वंतीति यदुक्तं तत्राह राज्ञ इति । देहात्मबुद्धयोऽर्थलाभाय राजवशीकरणे प्रवृत्ताः । आत्मज्ञानिनस्तु न । यतस्ते विषयप्राप्तौ निस्पृहाः । यतोस्त्यधर्मो विषयासक्तानामिति च यदुक्तं तत्र नाधर्मो न ते विषयासक्ताश्चेत्याह नेति । यतस्तेऽसंगत्वेन इंद्रियवृत्तिं स्वस्वविषयगतां पश्यंतः । 'गुणा गुणेषु वर्त्तंत' इति असंगात्मदृष्ट्या नाधर्मिणो न विषयासक्ताश्चेत्यर्थः । अत्रायं प्रयोगः । सर्वे ज्ञानिनः स्वधर्मनिष्ठाः विषयानासक्ताश्च भवंति असंगाद्यात्मनिष्ठत्वात् । य एवं स्वधर्मनिष्ठाः विरक्ताश्च न भवंति । ते असंगत्वेनात्मनिष्ठा न भवंति इति केवलव्यतिरेकदृष्टांतः यथाऽज्ञा इति

यथोक्तम् । " किं तेन न कृतं पापं चौरेणात्मापहारिणा । अन्यथा स्थितमात्मानमन्यथा प्रतिपद्यते " इति ॥ ९९ ॥ एकमेवाद्वितीयं ब्रह्म नेह नानेति श्रुतिसिद्धमद्वैतं पराकृत्य द्वैतसिद्धिरिति यदुक्तं तच्च तदर्थानभिज्ञैर्मूर्खैरुक्तमित्याह । अमलं संगरहितं सदा त्रिकाले सत्यं ब्रह्म प्रकारायेत न कोपि । ब्रह्मैकमेवास्ति । किं च न इत्येकं पदम् । किंचिदपि नानास्तीत्येवं श्रुत्यर्थमज्ञात्वा मूढाः विपरीतद्वैतपरत्वं प्राहुः । अयं भावःएकमेवाद्वितीयमिति पदैः सजातीयविजातीयस्वगतरूपभेदत्रयं निवार्यते । किं च नेति वचनेन शशविषाणादिवद्द्वैतस्यालीकत्वेन तुच्छत्वं चोच्यते । अद्वितीयमित्यत्र दीर्घाकारप्रश्लेषेण चेति नेति पदच्छेदेन च यथार्थार्थानभिज्ञा द्वैतिनो मूर्खा एवेति । तथा च श्रुत्युत्तरं "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति य इह नानेव पश्यति मृत्योः स मृत्युमाप्नोति " इत्यादि ॥ १०० ॥ ननु ध्रुवा द्यौरित्यादिना कथं द्वैतं सत्यमुच्यत इत्याशंक्य कर्मकांडगतत्तच्छ्रुतेराशीर्वादपरत्वेन द्वैतसत्यत्वानभिधा

**ब्रह्माद्वयं यदमलं श्रुतिसिद्धमेव तत्कः पुमान्प्रकटयेद्धि सदैव सत्यम् ॥ एकं तदेव न किलान्यदिहास्ति नाना ज्ञात्वार्थमेवमविदो विपरीतमाहुः ॥१००॥ सत्यं वदंति जगदेतदहो ध्रुवा द्यौः श्रुत्याथ ते न विदुरेव किलार्थमस्याः ॥ आशीःपरा श्रुतिरियं हि नृपस्य राष्ट्रेल्पायुष्मतीव हि मृकंडसुतायुरुक्तिः ॥ १०१ ॥ आत्मत्वविस्मृतिरसौ तनुधीः फलेच्छुः कर्माण्यहंकृतिवशात्कुरुतेनु जन्म ॥ भुंजंश्च तानि मुहुरेव तथा प्रकुर्वन् जीवस्तु गच्छति तनो हि भवाभवौ च ॥ १०२ ॥ यावत्पुरा कृतधिया फलभुक्तिरस्य तावच्छरीरयुगयं तव तन्ममेति ॥ आत्मत्वकल्पितमपीश्वरमायया दः प्रत्यग्धियानुभववान्हि यथाल्पनिद्रः ॥ १०३ ॥**

नादित्याह । सत्यमिति । ध्रुवा द्यौरित्यादिश्रुत्या जगत्सत्यत्वं वदंति ते तस्याः श्रुतेरर्थं न विदुः यतो नृपराज्ये आशीर्वादपरा इयं श्रुतिः यथाल्पायुष्ये पुत्रादौ मार्कंडेयायुष्योक्तिः तथा " ध्रुवा द्यौः ध्रुवा पृथ्वी ध्रुवासः पर्वता इमे ध्रुवं विश्वमिदं जगत् ध्रुवो राजा विशामयम् । ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ध्रुवं त इंद्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् " इति श्रुत्या चिरकालस्थायित्वमुच्यते न द्वैतसत्यत्वमित्यर्थः ॥१०१॥ सर्वे पृथग्धियः संतीति यदुक्तं तत्र भेदबुद्धीनां ज्ञानरहितत्वेन जन्ममरणाद्यनर्थप्राप्तिमाह । आत्मेति आत्मत्वविस्मृतिमान् । अतएव देहबुद्धिरसौ जीवः फलेच्छुः सन् अहंकारवशेन प्रतिजन्म सुकर्माणि करोति तानि कर्माणि फलरूपेण परिणतानि भुंजन् पुनश्च तान्याचरन् ततो हेतोर्जीवो जन्ममरणे प्राप्नोति॥१०२॥ किं च । यावत्प्रारब्धकर्मणा

सुखदुःखभोगः प्रवर्तते । तावच्छरीरयुक्तो जीवो भवति तव तन्मम इदमिति अदः द्वैतआत्मनि ईश्वरमायया कल्पितमस्ति । पृथग्धिया भेदबुद्ध्यानुभववान् । भेददृष्टिरित्यर्थः । अल्पनिद्रः स्वप्नस्थः । पुरुषो यथा स्वप्नगतरथादीन् भेदेन पश्यति । तथा भेदबुद्धिरपि भ्रांतत्वान्न वेदार्थज्ञः । नानुभववांश्च भवति । अद्वैतनिष्ठास्तु भ्रांतत्वाभावेन भेददृष्ट्यभावेन च वेदज्ञाः अनुभववंतश्च भवंतीति भावः ॥ १०३ ॥ ननु घटः सन्नित्यादि प्रतीत्या जगत्सत्यत्वं प्रतीयत इत्याशंक्य ज्ञानप्राप्तिपर्यंतं सत्यजगत्प्रतीतावपि ज्ञानोत्तरं न सत्यत्वमिति सदृष्टांतमाह स्वाप्नमिति । जागृन्मात्रे स्वप्नगतं वस्तु जातं असत्यं वदति यथा तथा गुरोः सकाशात्प्राप्त ज्ञानो विद्वान्विश्वं असत्यं पश्यति । ज्ञानं विना देहादिसंसारोऽनृतो न भवति स्वप्नसंसारो यथा जागृतिं विना मिथ्या न भवति । तथात्मज्ञानपर्यंतमधिष्ठाननिष्ठा सन्निति प्रतीतिर्घटादौ न लीयते । जागृतिवदात्मज्ञानेन तु आत्मनिष्ठैव भाति न घटादि

स्वाप्नं त्वसद्वदति जागृत एव विश्वं ज्ञान्येव पश्यति तथा गुरुलब्धबोधः॥ ज्ञानादृते न भव एष किलानृतः स्यात्स्वप्नो यथा न च मृषा किल जागृतेर्वै ॥१०४॥ ज्ञात्वा मृषाप्यखिलमुक्तवदेव सर्वैस्तुल्यं करोति निजवानपि संग्रहाय ॥ धृत्वा मृषापि कुरुते वनितात्वमस्या श्चेष्टाः पुमान्खलु यथा जनरंजनाय ॥ १०५ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा निजोदितवचोहरभाषणानि त्यक्तोन्नतिः स च ननाम गुरुं स्वमूर्ध्ना ॥ सत्संगतः खलपरोपि च सद्भवः स्यादशमेंदुनेव जलवान्किल सोमकांतः ॥ १०६ ॥ संप्रार्थयन्यतिवरं पुनरित्यु वाचासौ मद्भवोद्भयमतीयगृहेखिलाढ्ये ॥ बाल्ये मृतौ हि पितरौ निकटस्थितेनाहं द्वैतिना मम धनेन च पोषितोऽस्मि ॥ १०७ ॥

निष्ठेत्यर्थः॥ १०४ ॥ ननु सर्वमिथ्यात्वे ज्ञानवंतः कथं देहात्मदृष्ट्या कर्मसु प्रवृत्तिरित्याशंक्य बाधितानुवृत्त्या देहात्मदृष्टिः कर्मसु प्रवृत्तिश्च न विरुध्यत इत्याह। ज्ञात्वेति । सर्वं जगन्मिथ्येति ज्ञात्वा उक्तवद्यथोक्तं नित्यनैमित्तिकादिकमेव सर्वं जनसदृशं आत्मवानपि लोकोपकारार्थं करोति । तत्र दृष्टांतः । यथा पुरुषो मृषा स्त्रीवेषं धृत्वा एतस्याश्चेष्टाः अनुकरणानि जनरंजनाय करोति भवत्सदृशानामज्ञानिनामुद्धारार्थम् । ज्ञानिनामस्माकं युक्तं बाधितानुवृत्त्या देहादि व्यवहारेण सुज्ञत्वमित्यर्थः॥ १०५॥ स्ववचनं हरन्ति खंडयंति तानि भाषणानि गुरुदत्तोत्तराणि श्रुत्वा उन्नतिं स्वगर्वं खलपरः खलसंगी । चंद्रेण सोमकांतपाषाणो यथा जलवान्भवति तथा सद्भवः उत्तमजन्मवान्भवति ॥ १०६ ॥ मद्भवो मम जन्म अखिलाढ्ये सर्वसंपत्तियुक्ते आसीत ॥ १०७ ॥

तत्संगतो मद्बुद्धिरित्थं द्वैतनिष्ठा बभूव वेदस्य पंचदशशाखाः । इतरेभ्यः गुरुभ्यः शास्त्रम् । इतः द्वैति संगेनाद्वैतद्वेष्टा यः सोहं तवदर्शनेनाद्वैतनिष्ठावान् जातोस्मि ॥८॥ बोधाज्ज्ञानोपदेशेनातव चरणरजःकणेच्छावान् सायणाचार्येणेत्युच्चारिते सति असौ विद्यारण्यः आत्मपरैः शिष्यैस्तं स्नापयन् सभूतिं विभूतिसहितं इतः विभूत्या स्मार्तक्रियया स्मृत्युक्तप्रायश्चित्तक्रियया उज्झितमहाघं त्यक्तमहापापं चकार ॥९॥ तेन सायणानंदेनान्वितो युक्तो यस्तेन विद्यारण्येन यद्भाष्यं उभयोः विद्यारण्यसायणानंदयोः ॥ १० ॥ उरुकाननगतिं बृहदारण्यभाष्यम् । पद्धतिं ज्ञानमार्गरूपं ग्रंथं । गुरुं विद्यातीर्थं प्रति गत्वा निजं स्वं वृत्तांत

तत्संगतो मम मतिस्तु बभूव चेत्थं लब्ध्वापि पंचदश सद्गुरुतश्च शाखाः ॥ वेदस्य शास्त्रमितरेभ्य इतोऽद्वयद्विट् सोहं दृशैव तव नैज कुलाभिमानी ॥ १०८ ॥ त्वं मां कृतार्थमधुनैव कुरुष्व बोधाद्दासोस्मि तेंघ्रिरजइच्छुरितीरितेसौ ॥ तं स्नापयन्गुरुरथात्मपरैः स भूतिं स्मार्तक्रियोज्झितमहाघमितश्चकार ॥ १०९ ॥ तस्मै ददौ स विधिनाखिलमंत्रदीक्षां नामास्य सायणसुखं च कृतं प्रसिद्धम् ॥ तेनान्वितेन धरणीं भ्रमता श्रुतीनां भाष्यं कृतं यदुभयोरपि नामयुक्तम् ॥ १० ॥ कृत्वोरुकाननगतिं स च पंचदशाख्यां पद्धतिं विमलबोधकरीं बुधानाम् ॥ गत्वा गुरुं निजमवोचदसौ निशम्य मेने निजावतरणे कृतकृत्यतां सः ॥ ११ ॥ सिद्धिं ययौ गुरुरथा स्य मठे हि विद्यारण्यः स्वशिष्यमुपयोज्य ययौ स हांपीम् ॥ राज्ञार्चितोथ करवीरसुपुष्पिताद्र्योश्चासौ नृपात्कृतमठोत्र निवेशय न्स्वान् ॥ १२ ॥ काशीं ययौ यतियुतोखिलपूजितोत्र भाष्याण्यथात्रितनयेन च शोधितानि ॥ हांपीं ययौ यतिरिहापि निवेश्य शिष्यं प्रापात्मतां मुनिनुतः सकलाप्तसिद्धिः ॥ १३ ॥

मुवाच स च तच्छ्रुत्वा स्वजन्मनि कृतकृत्यत्वं मेने । अहं तव पुत्रो भूत्वा शंकरावतारेण मया प्राक्प्रवर्तितं ज्ञानमार्गं दुष्टैर्नाशितम् । पुनः शिष्येण पृथिव्यां प्रकाशयिष्ये । इत्युक्तमवतारकृत्यं कृतं मेन इत्यर्थः ॥ ११ ॥ अथ गुरुर्विद्यातीर्थः सिद्धिं प्राप्तः । अस्य मठे स्वशिष्यं योजयित्वा हांपी ययौ । अथ राज्ञा रामवर्मणा पूजितः करवीरक्षेत्रे पुष्पगिरौ च नृपात्कृतमठः राज्ञा मठं कारयित्वाऽत्र मठे स्वशिष्यान् स्थापयन् काशीं ययावित्यन्वयः ॥ १२ ॥ अत्र काश्यां दत्तात्रेयोऽस्य भाष्याणि शोधितवान् । यतिर्विद्यारण्यः इह हांपीक्षेत्रगते मठे शिष्यं निवेश्य मुनिवंदितः सर्वाः प्राप्ताः सिद्धयो यस्य स स्वस्व

रूपं भासः ॥ १३ ॥ तं सायणानंदं निजसुखाय ज्ञानेनात्मसुखप्राप्तये । स पूर्वोक्तः सायणानंदः ॥ १४ ॥ राजा इंदुराजः । निजसुताय कृष्णराजाय विद्यारण्यभाष्यं विद्यारण्यकृतवेदभाष्यम् ॥ १५ ॥ पंचाशीत्यधिकशतसंख्यं सायणानंदं प्रणमति प्रागिति । पूर्वं द्वैतनिष्ठोपि यस्तं विद्यारण्यगुरुरद्वैतनिष्ठं चकार । अमुं नताः स्मः । इंद्र० ॥१६॥ षडशीत्यधिकशतसंख्यमिंदुराजानंदं प्रणमति राजेति । सर्वं त्यक्तात्मज्ञानवान् बभूव । उत् ऊर्ध्वं षडधुताशीतिर्यस्माचास्मिन्शते शतसंख्यायां नाम यस्य तं नताः स्मः ॥ १७ ॥ सर्गोक्तकथाश्रवणादेः फलमाह विद्यारण्यस्येति । सायणस्य इंद्विनस्येंदुरा

प्राप्तः स्वदेशमथ सायणविद्वदार्यः संगाद्गुरोः सकललब्धसुसिद्धिरेषः ॥ तं प्रार्थयन्निजसुखाय स चेंदुराजस्तस्मै ददौ सकलमंत्रमयीं स दीक्षाम् ॥१४॥ ज्ञानं सयोगमखिलं स्वगुरोरवाप्य राजा ददौ निजसुताय समृद्धराज्यम् ॥ तिष्ठन् गुरोर्निकट एव सदैव विद्यारण्यस्य भाष्यमथ पंचदशीं शृणोति ॥१५॥ प्राग्द्वैतनिष्ठः श्रुतिशास्त्रवक्ताथोऽद्वैतनिष्ठं कृतवान् गुरुस्तम् ॥ पंचान्विताशीतिशताख्यमेनं श्रीसायणानंदगुरुं नताः स्मः ॥ १६ ॥ राजापि चोज्झ्याखिलमात्मबुद्धिर्बभूव यः श्रीगुरुभक्तियुक्तः ॥ उत्षडयुताशीतिशताख्यमिज्यं तमिंदुराजं गुरुमानताः स्मः ॥ १७ ॥ विद्यारण्यस्येति सदिग्जयं हि प्रत्यग्दिक्तः श्रीमठानां च संस्थाम् ॥ आत्मत्वाप्तिं सायणस्येंद्विनस्य श्रुत्वा चोक्त्वा दिग्जयी चात्मवान्स्यात् ॥ ११८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे विद्यारण्यदिग्विजयसायणेंदुराजानुग्रहवर्णनं नाम सप्तविंशः सर्गः ॥ २७ ॥ श्रीदेशिकेंद्र उवाच ॥ इंदुराजस्य पुत्रोथ कृष्णराजः सुबुद्धिमान् ॥ कृष्णभक्तोऽप्यसौ राज्यं चकार पितुराज्ञया ॥ १ ॥ पित्रा दत्तं कृष्णमंत्रं जपन्नेकाग्रमानसः ॥ राजोपचारतः कृष्णं पुपुजेनन्यभक्तितः ॥ २ ॥ सुरभीण्यत्र पुष्पाणि द्रव्याण्यपि च यत्नतः ॥ दूतैरानाय्यार्पयति राधायुक्कृष्णमूर्तये ॥ ३ ॥

जस्य ज्ञानप्राप्तिं श्रुत्वा उक्त्वा पठित्वा दिग्विजयकर्ता ज्ञानवांश्च भवेत् । भक्तिमान् पुरुष इति शेषः ॥ ११८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां सप्तविंशः सर्गः ॥ २७ ॥ उदष्टविंशे चैकोर्ध्वशतपद्यैः समीरिताः । रामकृष्णानंदमुख्यानां कृत्यानां क्रमशः कथाः ॥ २८ ॥ इंदुराजस्येति ॥ १ ॥ न अन्यः आत्माभिन्नदेवताव्यतिरिक्त उपास्यो यस्यां तया भक्त्या राजोपचारैः पूजितवान् ॥ २ ॥ राधायुक्तायै कृष्णमूर्ति

माये सुगंधपुष्पाणि द्रव्याणि कस्तूर्यादीनि च असौ अर्पयति ॥ ३ ॥ इंदुराजमित्रः पितृतः अत्यंतविश्वासयुक्तः इंदुराजेन कृतविश्वास इत्यर्थः । बुद्धिमान् स एव तस्य मंत्री सन् राजाज्ञया स्वयं राजकीयं व्यवहारदर्शनादि चक्रे ॥ ४ ॥ तथातनुः तथाऽऽकृतिमान् ॥ ५ ॥ वेणुमित्युभयसंबंधि । हस्ताभ्यां वेणुधर्ता उत्तममुखकमलेन वेणुं वादयन् कांतेन राधायाः हस्तेनालिंगितदेहो भूषणयुक्तः कृष्णः कृष्णनामकभक्तराजेनावलोकितः ॥ ६ ॥ अथानंदाश्रुर्नृपः प्रेमरशनया बद्धं श्रीकृष्णं रोमांचितदेहेन प्रणमन् कंठे गद्गदवर्णो वक्तुं समर्थो नाभवद्यदा तदा लक्ष्मीपतिः प्रेमपूर्णः सन् भक्तमाह ॥ ७ ॥

तन्मंत्रींदुसखोत्यंतविश्वासी पितृतः सुधीः ॥ राजकीयं तु कुरुते सर्वं राजाज्ञया स्वयम् ॥ ४ ॥ तुष्टस्तद्भक्तितः कृष्णो थाविरासीत्तदग्रतः ॥ निर्गुणोपि स्वभक्तेन यथा ध्यातस्तथातनुः ॥ ५ ॥ दृष्टः कृष्णः पीतवासाः कराभ्यां बिभ्रद्वेणुं वादयन्सन्मुखेन ॥ आश्लिष्टांगः कांतराधाकरेण नानाभूषः कृष्णभक्तेश्वरेण ॥ ६ ॥ राजाथैनं सन्नमन् भक्तिदाम्ना बद्धं साश्रुर्विग्रहेणोर्ध्वरोम्णा ॥ वक्तुं नेशः कंठतो गद्गदार्णः श्रीशः प्राहैनं तदा प्रेमपूर्णः ॥ ७ ॥ श्रीभगवानुवाच ॥ कलौ भक्तिरेवास्ति मे भूप मान्या क्रिया तामृते स्यान्न चार्चासमान्या ॥ त्वया सा कृताऽतः किलाभीष्टमाद्यं वरं ब्रूहि मे दास्य एवाणिमाद्यम् ॥ ८ ॥ श्रीदेशिकेंद्र उवाच ॥ नृपो थाह तं सिद्धयो मे न तास्तु मनोवृत्तिरेव त्वदङ्घ्र्योर्नतास्तु ॥ तथापीश ते रासमिच्छामि दृक्तः सुद्रष्टुं भवेद्यस्त्वहंधीः सुदृक्तः ॥ ॥ ९ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं राज्ञार्थितः श्रीपतिरखिलगतो योऽखिलं चापि यस्मिन्व्योम्नि व्योमेव तस्याभवदिति मतिरुद्वा समीक्षत्वयं मे ॥ तावत्तत्रैव राजा वनमतिविततं यद्धि वृंदावनाख्यं वृक्षैर्युक्तं लताभिः कुसुमपरिमलं गोपभावो ह्यपश्यत् ॥ १० ॥

हे नृप कलौ भक्तिरेवोत्कृष्टतमा तां विनान्यत्कर्म नटाचरितपूजासमानं भवति । सा भक्तिस्त्वया कृतास्ति अतस्त्वमिच्छितं उत्तमवरं मे ब्रूहि मह्यं कथय । तमणिमादिसिद्धिरूपं वरं दास्याम्येव॥८॥अथ नृपो हरिमाह । तास्तु सिद्धयो न संतु किन्तु मे मनोवृत्तिः तव चरणयोर्नता नम्रास्तु । यद्यप्यन्यवरेच्छा नास्ति तथापि हे ईश दृक्तः दृष्ट्या तव रासक्रीडां सुद्रष्टुमिच्छामि । यद्यस्माद्रासदर्शनात् अहंधीः देहादिष्वहंबुद्धिरपि जनः सुदृक्तः शोभना दृक्ता यस्य सफलदृष्टिर्भवेदित्यर्थः ॥ ९ ॥ एवं राज्ञा प्रार्थितो यः श्रीपतिः कृष्णस्तस्य अयं राजा ममोत्कृष्टां रासक्रीडां पश्यतु इति बुद्धिरभवत् । ननु तत्काले तद्देशे

जातां रासक्रीडामेतत्काले एतद्देशे दर्शयितुं कथं बुद्धिरभवदित्याशंक्याह । सर्वगतः । सर्वं च यस्मिन् । तत्र दृष्टांतः व्योम्नि व्योमेव घटाद्याकाशे महाकाश मिव । यद्वा व्योमेव सर्वगतः । व्योम्नीव सर्वं जगत् यस्मिन्वर्तते सर्वस्मिन्सर्वात्मके सर्वाधिष्ठाने सर्वं न चित्रमित्यर्थः । राजापि रासक्रीडां दृष्टवानित्याह तान्‌ दिति सार्धषड्भिः । यावत्कृष्णस्य भक्तेच्छापूरणाय बुद्धिरभवत्तावद्राजा गोपभावः गोपालोहं कश्चिदिति भावनावान् विस्तृतं कुसुमानां सुगंधो यस्मिन्तद्व नमपश्यत् । स्रग्धरावृत्तं तल्लक्षणम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ १० ॥ अत्र वने उदयं प्राप्तः पूर्णचंद्र आसीत् । अमलः विकासमानः शरदृतुश्चात्राभवत् । अत्रोत्तमसरोवरेषु उत्तमभ्रमरयुक्तानि चंद्रप्रकाशेन विकसितानि इंदीवराण्यासन् । कुंदद्रुमस्कंधगतैः पुष्पैः कृत्वा परि

प्रोद्यत्पूर्णेंदुरत्राभवदमलशरत्काल इंदीवराणि प्रोद्यंतींदोः प्रकाशाद्भ्रमररवयुतान्यत्र सत्पल्वलेषु ॥ कुंदद्रुस्कंधपुष्पैः परिमलविततानंददो मंदवातः कालिंद्यंभोगतिश्चातपभवभयहा चास्ति चैतद्गतानाम् ॥ ११ ॥ कृष्णस्तत्र मयूरपिच्छविलसन्मौलिः सुवंशीरवात्सम्मोह्यानयदंजसैव रमणीर्गोपीस्त्यजंतीः पतीन् ॥ सोपश्यन्निव ताः स्थितोऽथ तमिमाः प्राहुश्च हित्वाखिलं प्राप्तास्त्वां मुरलीवशाः किमिह नस्त्वन्नो दृशापीक्षसे ॥ १२ ॥ ताभिः संप्रार्थितोसावितिमृदुवचनैर्वीक्षितो भ्रूविलासैर्भक्त्या तुष्टोखिलाभिः सह बहुतनुमानेक एवाद्यनंतः ॥ गोप्योरेको द्वयोः सन् ग्रथितकरयुगस्तत्पृथक्कंधरोर्ध्वं मालावृत्ते हि मण्योः शुशुभ इह यथा हैमयोरिंद्रनीलः॥१३॥

मलः सुगंधो विस्तृतो यस्मिन्स चासावानंदप्रदो यो मंदवायुः सोऽभवत् । एतद्गतानां वृंदावननिवासिनामुष्णजन्यक्लेशनिवारको यमुनोदकप्रवाहश्चाभवत् । एकश्चकारो भिन्नभिन्नवाक्यत्वाय अन्योऽनुक्तसमुच्चायक इत्यर्थः ॥ ११ ॥ तत्र कृष्णः मयूरपिच्छेन विकसन्मुकुटो यस्य सः । पतित्यागशीलास्ताः गोपीः उत्तमवेणुनादेन मोहयित्वांजसैवानीतवान् । यदा स हरिस्ता गोपीरपश्यन्निव स्थितः अथ तदा इमास्तं प्राहुः । हे कृष्ण वेणुनादलुब्धाः सर्वं गृह पतिपुत्रादिकं त्यक्त्वा त्वामिह प्राप्ताः नोऽस्मान्नेत्रेणापि त्वं नावलोकयसि किं भक्तोपेक्षा त्वयि नोचितेत्यर्थः ॥१२॥ इति ताभिः भ्रूविलासैः सहावलोकितः आदिः सर्वादिभूतश्चासावंतरहितश्चात एव बहुदेहवानभवत्। द्वयोर्गोप्योर्मध्ये एकः कृष्णः यावत्यो गोप्यस्तावद्रूप इत्यर्थः।एतादृशः सन् तासां पृथक्पृथक् ग्रीवो

र्ध्वभागे बद्धकरद्वंद्वः सुवर्णमणिमध्ये इन्द्रनीलमणिरिव मालासदृशमंडले शुशुभे॥१३॥एवं रासमंडले कमलपत्राक्षो भगवान्सकलगोपीभिः सह पादभूषणशब्दैर्मधुरैरुच्चस्वरेणोच्चारितैरनेकसंगीतभेदैश्च कृत्वा नृत्यति । कस्मिन्सति विद्याधरैर्वादिते वाद्यजाते नृत्यसदृशमभिनंदति सति आकाशात्पुष्पाणि वर्षति तैः स्वस्वस्त्रीयुक्तैरिंद्रादिदेवैः पश्यद्भिः सद्भिः । अथ रासक्रीडामिश्रितयुवतिभिः जलक्रीडां चकार । अत्र नृत्यतीति वर्त्तमानक्रियया ब्रह्मविदनुभवमात्रत्वं ब्रह्मांडजातस्येति ज्ञाप्यते । एतादृशाभिप्रायेणैव हरिवंशे पुष्करप्रादुर्भाववृत्ते दर्शनात् । एवं सर्वग्रंथेषु । अस्मिन् गुरुपरंपराचरित्रे च भूतार्थे वर्तमानक्रियानिर्देशो दृष्टिसृष्टिन्यायेन ब्रह्मविद्ब्रह्मैव भवतीति श्रुत्या च ब्रह्मवित्कल्पितमेवातीतानागतं जगदिति सुधीभिर्विचारणीयमिति भावः ॥ १४ ॥ उक्तमनर्थ

इत्थं रासाख्यवृत्ते सकलयुवतिभिर्नृत्यतींदीवराक्षः शब्दैः पद्भूषणोत्थैर्मधुरनिगदितानेकसंगीतभेदैः ॥ विद्याध्रैर्वाद्यजाते सदृशमभिनदत्यंबरात्क्ष्याब्ददेवैः पश्यद्भिः पुष्पवर्षैः श्रमितयुवतिभिश्चाप्सु चक्रेथ केलिम् ॥ १४ ॥ श्रीशेनामूः सुवाक्यैस्सगपृथगमितालिंगनैः प्रेमहासैर्भूयः सम्मानिताश्चासुरथ हृदयतो गर्वितास्तात्रदेषः ॥ प्रापांतर्धिं ह्यदृक्षामुमतिविरहतश्चान्विचिन्वंत्य एकां कृष्णेनांसेन नीतां धृतनिजवरतां तद्विसृष्टामपश्यन्॥१५॥इत्युक्तास्ता भ्रमंत्यो जगुरिति नृहरे त्वद्वियोगाद्वयं तु नेशाः प्राणांश्च धर्तुं ह्यथ तव चरिताख्यामृताज्जीवनं नः ॥ मृद्वंघ्री दर्शय त्वं कुरु कुचयुगुले कामशांत्यै न चेत्थं स्तुत्याविर्भूय चक्रेखिलसुखमथमाच्छादयस्वेच्छयेदम् ॥१६॥

वाक्यैर्नेत्रकटाक्षैः पृथक् अनेकालिंगनैः भूयः प्रेमरहस्यादिभिः श्रीकृष्णेन गोप्यो यदा सम्मानितास्तदा मनसि गर्विता आसुः बभूवुः । तावत्कृष्णोन्तर्धानं प्राप्तः । ततो गोप्यो ह्येनं कृष्णमनवलोक्यातिविरहेण कृष्णं शोधयंत्यः सत्यः एकां गोपीं ददृशुः । किंभूतां कृष्णेन कर्मा स्कंधे वाहितां धृता निजात्मनि वरता यया तां सर्वोत्तमाहमित्यभिमानवतीमित्यर्थः । अत एव कृष्णेन त्यक्ताम् ॥ १५ ॥ तथा युक्तास्ताः सर्वा गोप्यो भ्रमंत्यः सत्यः हे नृसिंह हे कृष्ण हे माधव तव विरहेण वयं प्राणधारणं कर्तुमसमर्थाः हि निश्चयेन । अथापि तव चरित्रामृतेनास्माकं जीवनं जातम् अतस्त्वं मृदुचरणं दर्शयन् कामशांत्यर्थं नोस्माकं कुचयुगुले कुरु स्थापयेत्यर्थः । भगवानित्थं स्तुत्या प्रकटो भूत्वाऽखिलसुखं रासक्रीडारतिभोगं पुनर्जलक्रीडादिसर्वसुखं चकार ।

च पुनः इदं राज्ञे दर्शितं रासक्रीडादि सर्वं अयं प्रसन्नः श्रीकृष्णः स्वेच्छयाऽऽच्छादितवान् ॥ १६ ॥ एवं राज्ञा दृष्टां रासक्रीडां हरिरुपसंहृत्य स्वयं च गुप्तोऽ भवदित्याह । तावदिति । यावत्कृष्णः स्वेच्छया रासक्रीडामुपसंहृतवान्न तावद्राजा स्वगृहं दृष्टवान् । अग्रे राधायुक्तं कृष्णं चापश्यत् । तं वक्तुमसमर्थः केवलं ननाम । स हरिश्च नृपं वक्ति अस्य रासस्य कर्त्री एषा राधास्ति किल । किं बहुना यद्दृश्यजातं सर्वमस्याः सकाशाद्भवति । अहं तया एतयाच्छादित इवास्मि । न तु आच्छादित इत्यर्थः । एवंभूतं मां मूढाः न विदुः । त्वं तु सद्गुरोरिंदुराजानंदात् मां ज्ञात्वा परं पदं प्राप्स्यसि । इत्युक्त्वा स ईशो हरिरंत

तावद्राजा ह्यपश्यत्स्वगृहमपि पुरः कृष्णमाढ्यं स्वशक्त्याऽनीशो वक्तुं ननाम प्रवदति स नृपं चास्य कर्त्री किलैषा ॥ यद्दृश्यं सर्वमस्याः पिहित इव तयाहं विदुर्नैव मूढास्त्वं ज्ञात्वा सद्गुरोरेष्यसि परमिति चोक्त्वाप चांतर्धिमीशः ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ प्रातर्गुरुं गत्वा राजा सर्वं न्यवेदयत् ॥ तं प्राप्तसिद्धिं ज्ञात्वैव पूर्णां दीक्षां ददौ गुरुः ॥ १८ ॥ तस्मै नामापि चक्रेऽस्य रासकानंद इत्यथ ॥ यतो रासं ददर्शासौ हरेर्भक्त्या कलावपि ॥ १९ ॥ ज्ञानं चाह यतः पश्यत्यात्मानमखिलं पुमान् ॥ इंदुराजस्ततः सिद्धिं ययौ गुरुपदस्मृतिः ॥ २० ॥ यो मर्त्यभावेऽपि ददर्श साक्षाद्रासं हरेर्भक्तियुतोऽतिमर्त्यम् ॥ सप्ताधिकाशीतिशताब्ध्ययुक्तं तं रासकानंदगुरुं नताः स्मः ॥ २१ ॥ श्रीदेशिकेंद्र उवाच ॥ गोविंदराजस्तत्पुत्रो राज्यं पित्रा समर्पितम् ॥ कुर्वन्नपि न सक्तोऽत्र भ्रमन्सर्वमिवानिलः ॥२२॥ संगादथ पितुर्ज्ञात्वा सर्वं मायाप्रकल्पितम् ॥ राज्यं दत्त्वा स्वपुत्राय श्रीरंगालयमास्थितः ॥२३॥

र्धानं प्राप्तः ॥ १७ ॥ गुरुमिंदुराजानंदम् । सर्वं कृष्णदर्शनादि ॥ १८ ॥ तस्मै कृष्णाय राज्ञे इति पूर्वान्वयि ॥ १९ ॥ अखिलं जगत् आत्मानमात्मरूपं यतः ज्ञानेन पश्यति तज्ज्ञानमाह । गुरुपादयोः स्मरणं यस्य ॥ २० ॥ सप्ताशीत्यधिकशतसंख्यं रासकानंदं प्रणमति । य इति । अतिमर्त्यं मर्त्यानामदृश्यम् । इन्द्रवज्रा वृ० ॥२१॥ तस्य कृष्णराजस्य पुत्रः सर्वं भ्रमन्नसक्तो वायुरिव राज्यं कुर्वन्नत्र राज्ये सक्तो नाभवत् ॥ २२ ॥ विष्णुमंदिरे

स्थितोऽभवत् ॥ २३ ॥ आत्मतामात्मज्ञानम् ॥ २४ ॥ रासकानंदः सिद्धिं प्राप्तः । अथ गोविंदानंदः सिद्धोभवत् ॥ २५ ॥ अष्टाशीत्यधिकशतसंख्यं गोविंदराजानंदं प्रणमति । ज्ञात्वेति । अखिलं जगद्गुरोः सकाशान्मृषेति ज्ञात्वा त्यक्त्वा च श्रीरंगाख्यदेवसमीपे एवावसत् तं नताः स्मः ॥ २६ ॥ तत्र श्रीरंगपट्टने ॥ २७ ॥ यूनस्तरुणस्य । भिषग्भिर्वैद्यैः कर्तृभिः ॥ २८ ॥ धान्यादिभिरसंपन्ने रहिते ॥ २९ ॥ सैव मां पुष्णातीति व्यस्तं विपरीतं

ज्ञात्वा तं रासकानंदस्त्यक्तसंगं हरिप्रियम् ॥ पूर्णां दीक्षां विधानेन ददौ तस्मै तथात्मताम् ॥ २४ ॥ गोविंदराजानंदेति कृत्वा नामापि विश्रुतम् ॥ स्वयं सिद्धिं गतोऽथासौ सिद्धो गोविंदसंज्ञकः ॥ २५ ॥ ज्ञात्वा मृषा यो गुरुतोऽखिलं च त्यक्त्वावसद्देव समीप एव ॥ अष्टाधिकाशीतिशताख्ययुक्तं गोविंदराजं गुरुमानताः स्मः ॥ २६ ॥ अथासीद्ब्राह्मणस्तत्र वेदवेदांगपारगः ॥ विद्यादेव इति ख्यातः पत्न्या युक्तः स्वकर्मकृत् ॥ २७ ॥ यूनोऽपि तस्य दैवेन गलत्कुष्ठो महानभूत् ॥ भिषग्भिर्न शशामासौ दत्तैरपि महौषधैः ॥ २८ ॥ पत्नी धान्याद्यसंपन्ने गेहे चैकाकिनी सती ॥ अणूत्थानेऽप्यनिशं तं सेवते क्षालयत्यनु ॥ २९ ॥ रुजातिव्यथितो विप्रश्चैतस्याहेति खिन्नधीः ॥ भार्या पोष्या मया नूनं व्यस्तं पुष्णाति सैव माम् ॥ ३० ॥ तातदत्तं व्ययीकृत्य भूषणाद्यपि नित्यशः ॥ न व्यथा व्यथयत्येषा मां भार्यापोषणाधिकम् ॥ ३१ ॥ मृतिरेवास्तु मे शीघ्रं धिग्जीवनमिदं स्त्रिया ॥ इत्यात्मानं गर्हयतः पस्त्यमस्यांजसा ययौ ॥ ३२ ॥ दैवाद्गोविंदराजाख्यो भ्रमन्ह्यात्ममयास्थितिः ॥ तं दृष्ट्वा व्यथितं विप्रं दयया भस्म मंत्रितम् ॥ ३३ ॥

जातमित्यर्थः ॥ ३० ॥ पूर्वार्द्धं पूर्वान्वयि । भार्यया यत्पोषणं तस्मादधिकं कुष्ठव्यथा मां न व्यथयति । किं तु पत्न्या स्वभूषणव्ययेन मम निर्वाहोऽति दुःखप्रद इत्यर्थः ॥ ३१ ॥ अस्य विद्यादेवस्य पस्त्यं गृहम् । 'निशांतपस्त्यसदनम्' इत्यमरः ॥ ३२ ॥ पूर्वार्द्धं पूर्वान्वितमुत्तरार्द्धमुत्तरान्वितम् ॥ ३३ ॥

न पूयं शोणितं च यस्मिन् ॥ ३४ ॥ ३५ ॥ ३६ ॥ अद इदमारोग्यम् ॥ ३७ ॥ गत्वा श्रीरंगपट्टनमिति शेषः । तमित्युत्तरान्वयि ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥ एकोननवत्यधिकशतसंख्यं भान्वानंदं प्रणमति य इति । रोगेण प्राप्तदुःखोऽपि भानुसदृशकांतिमान् जातस्तं नताः स्मः ॥ ४१ ॥

उद्धूलयति हस्तेन तदंगेऽमृतवर्षिणा ॥ तावदव्रणमस्यांगं बभूवापूयशोणितम् ॥ ३४ ॥ स्वत उत्थाय विप्रोऽसौ प्रणनाम च देशिकम् ॥ अथाष्टार्णां सौरविद्यां ददौ तस्मै स योगिराट् ॥ ३५ ॥ जपेति च तमादिश्य ययौ चेच्छागतिस्ततः ॥ अथ सोऽपि जजापैनं मंत्रं श्रद्धान्वितः सुधीः ॥ ३६ ॥ त्रिमासं जपतस्तस्याभूद्देहः सूर्यकांतिमान् ॥ न रोगो न च वैकल्यं मेनिरेऽदोऽद्भुतं जनाः ॥ ३७ ॥ विद्यादेवः स्वयं गत्वाथानमद्भक्तितो गुरुम् ॥ तं दृष्ट्वा भानुमत्कांतं शांतं चाखिलविद्गुरुः ॥ ३८ ॥ हृदासिद्धिं मत्वास्मै पूर्णां दीक्षां ददावथ ॥ भान्वानंदेति नामास्य कृतं तेनार्कतेजसः ॥ ३९ ॥ ततः ख्यातः क्षितावेष भान्वानंदः शुभंवित् ॥ गोविंदराजानंदश्च परं प्रापात्मवित्तमः ॥ ४० ॥ यो वेदवेत्तापि रुजात्तकष्टो गुरोः प्रसादादथ भानुकांतिः ॥ नवाढ्यभूसंमितमेव भान्वानंदं गुरुं तं वयमानताः स्मः ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ पत्न्येतस्याथ च शुभदिने व्याससमेत्यर्यपुत्रं शौरेर्वक्तुं प्रकटमखिलान्युत्तराधाविलासान् ॥ स्वेच्छादेहं सुषुव इह तज्जन्मकाले गृहोर्ध्वे दिव्यः शब्दो जयजयजयेत्याविरासीत्सुदीर्घम् ॥ ४२ ॥ भान्वानंदः सकलविदिमं शब्दमाकर्ण्य मेने कश्चिद्योगी नृतनुरधुना मद्गृहेऽद्यावतीर्णः ॥ एवं बुद्ध्वाप्यखिलसदृशं जातकर्मास्य कृत्वा नाम्ना चक्रे प्रथमजययुग्देवमेनं द्युशब्दात् ॥ ४३ ॥

एतस्य भान्वानंदस्य पत्नी कृष्णस्य राधया सह विलासं प्रकटं यथा तथा सर्वान्प्रति वक्तुं स्वेच्छाशरीरं व्याससमं श्रेष्ठं पुत्रं शुभदिने सुषुवे । इह भान्वानंदनिवासस्थाने दिव्यशब्दो दीर्घकालपर्यंतमाविरासीत् । मंदाक्रांता । " मंदाक्रांता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् " इति लक्षणात् ॥ ४२ ॥ अखिल...

सर्वजनतुल्यम् आकाशगतशब्देन जयदेवाभिधं कृतवानित्यर्थः ॥ ४३ ॥ लघुर्लघ्वयाः ॥ ४४ ॥ अस्य जयदेवस्य विवाहम् उत्तमकुलप्रसूतकन्यया पद्मावतीनाम्न्या कृतवान् । उत्तमशृंगारादिरसयुक्तबंधे ग्रंथविषये कविश्रेष्ठोऽभवत् ॥ ४५ ॥ निजकाव्यरसात् स्वकाव्यरसेन । तोटकं वृत्तम् ॥ ४६ ॥ असौ पत्न्या वियोगं न सहते । सा च तेन वियोगं न सहते इति तयोः परस्परं बहुहार्दं बहुप्रेमासीत् । उभौ कवितारसाभिरतौ संतौ परस्परं सुखयुक्तावासतुः ॥ ४७ ॥ उभयोः परस्परं मनःसंकल्पमाह द्वाभ्याम्—कविरिति । हृदि मनसि । गुणिनी गुणवती । वियुतिर्वियोगः ॥ ४८ ॥ सुदती

पंचाब्दोऽभूदितरशिशुभिर्नैव तुल्योऽतिधीमाञ्छ्रुत्वैवान्यैः स वदति लघुः श्रौतशास्त्राणि सार्थम् ॥ तातश्चक्रे तदुपनयनं सांगवेदं सशास्त्रं तस्माच्छ्रुत्वा सकृदथ शिशुः सर्ववेत्ता बभूव ॥ ४४ ॥ विद्यादेवोऽप्युपयममथास्याकरोद्बुद्धिमत्या पद्मावत्या सुकुलसुतया थाखिलान्प्राह मंत्रान् ॥ तस्मै चागादथ पदमजं तत्सुतश्चाखिलांस्तान्मंत्राञ्ज्ञात्वाखिलकविवरोऽभूत्सुशृंगारबंधे ॥ ४५ ॥ जयदेवकविर्निजकाव्यरसान्नृपतीन्धनिकान्स्ववशानकरोत् ॥ धनमेत इमे स्वयमेत्य ददुर्न बहिः स्वगृहात्क च याति च सः ॥४६॥ प्रियया णवापि नो वियुतिं सहते कविनापि च सेति तयोस्तु मिथः ॥ बहुहार्दमुभौ कवितारसताभिरतावितरेतरसौख्ययुतौ ॥४७॥ कविराह हृदीति च रूपवतीं गुणिनी सुमतिर्मयि हार्दयुता ॥ वनितेयमहो मम वेत्ति परं किल काव्यमतो न तया वियुतिः ॥ ४८ ॥ सुदतीति हृदा वदतीति पतिर्मम मारतनुः स्मरशास्त्रकृती ॥ मयि हार्दमसौ कुरुते कविराडपि चास्तु भवेभव एष वरः ॥ ४९ ॥ वनितामतिरात्मरतः कविराडथ सापि तथा सहवासवशात् ॥ इति चासतुरेकहृदाविव तावथ चाह पतिं गुणिनीति वचः ॥ ५० ॥ इति पूर्वपरं न च लोभततिर्वनितावरयोर्विदभूद्भविता ॥ अथ चाह कविः सखि लोभ इतोऽप्यधिकं हरिणा सह राधिकया ॥ ५१ ॥

पद्मावती । मारतनुर्मदनाकृतिः । जन्मजन्मनि पतिरेष एवास्तु ॥ ४९ ॥ वनितायां पत्न्यां मतिः श्रद्धा विश्वासो यस्य । "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः श्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति धीश्रद्धाशब्दयोरेकार्थनिष्ठत्वम् । एतादृशोऽपि आत्मरतः । सापि तथा भर्तृबुद्धिः आत्मरता च ॥ ५० ॥ हे विद् आवयोरिव कयोश्चित्स्त्रीपुरुषयोः प्रेमविस्तारः किं पूर्वं जातः किं वा अग्रे वा भविष्यति इति प्रश्न आस आसीत् ॥ ५१ ॥

बहुसक्तिः बहुप्रीतिः । भगवद्भक्ता अपि इच्छया स्त्रीदर्शनेच्छावंतो न भवंति भगवान्कथं स्त्रीसक्त इत्यर्थः ॥ ५२ ॥ गदितः प्रार्थितः स्मृतिः स्मरणम् ऐत् प्राप । गुणवान् हरिरपि लोहे चुंबकमणिवत् भक्ताधीनोऽस्ति भक्तेच्छापूरणाय तथा तथा वर्तत इत्यर्थः ॥ ५३ ॥ हे कांते इतो मत्तः कृष्णगुणान् शृणु । श्रवणमात्रेण सर्वसुखदान् । इति तां वदन् जयदेवकविः कृष्णराधिकयोर्दृढभक्तिसूचिकाः प्रख्याताष्टपदीर्बबंध ॥ ५४ ॥ अष्टपदीनां प्रथितत्वमाह । जयदेवकविसकाशान्मधुराष्टपदीश्रवणार्थं प्रख्याताः कवयः परे क्षितिपाः राजानश्चाययुः । सर्वे श्रवणाच्छ्रवणमात्रेण मोहं प्राप्ताः संतः इमे पूर्वोक्ताः

पतिमाह सती कथमास पुरा प्रिय राधिकया हरिणा गुणिना ॥ बहुसक्तिरधोक्षजपादरता अपि नैव दृशा वनितास्पृहिणः ॥ ५२ ॥
जयदेवकविर्वरकृष्णगुणेष्विति वै गदितोंगनया स्मृतिमैत् ॥ पुनराह वधूं गुणवानपि सोऽयसि चौंबकवत्स च भक्तवशः ॥ ५३ ॥
शृणु कांत इतोऽस्य गुणाञ्छ्रुतितोऽखिलसौख्यकरान्प्रवदन्निति ताम् ॥ हरिराधिकयोर्दृढभक्तिपराः प्रबबंध कविः प्रथिताष्टपदीः ॥
॥ ५४ ॥ जयदेवकवेर्मधुराष्टपदीश्रवणाय ययुः कवयोऽपि परे ॥ क्षितिपाः प्रथिताः सकलाः श्रवणान्मुमुहुस्तमिमे युयुजुश्च नतिम् ॥
॥ ५५ ॥ बुधजाश्च ततः प्रपठंति कवेर्बहुगीतविभेदत आप्तुमिमे ॥ न समर्थधियस्त्विह चैकतमः कविसेवनतो जगृहे सकलाः ॥
॥ ५६ ॥ निखिलाश्च ततो जगृहुर्न कवेः स किलाऽऽह सुशासनतो निखिलान् ॥ इति तस्य महेश्वरनाम कृतं निखिलैश्च ततो भुवि संप्रथितम् ॥ ५७ ॥

कव्यादयश्च तं जयदेवं नतिं नमस्कारं युयुजुः तस्मै नमस्कारमकुर्वन्नित्यर्थः ॥ ५५ ॥ ततो बुधजाः पंडितपुत्राः कवेः जयदेवात् बहुगीतविभेदेन अष्टपदीः प्राप्तुं प्रपठंति तथापि इमे समर्थधियः अष्टपदीग्रहणधारणसमर्थबुद्धयो न बभूवुः । इह पंडितपुत्रेष्वेको बुद्धिमान् गुरुसेवया सर्वाष्टपदीः जगृहे । सर्वमेव गुरुकृपया संपद्यत इत्यर्थः ॥ ५६ ॥ ततः जयदेवशिष्यात्सर्वे गृहीतवंतः कवेर्जयदेवान्न केऽपि जगृहुः । तत्र कारणमाह स जयदेवशिष्यः सुशासनत उत्तमशिक्षया सर्वान्प्रति अष्टपदीराह इति हेतोस्तस्य सर्वैर्महेश्वरेति नाम कृतं तच्च भुवि विख्यातमासीत् । महानीश्वरः शिक्षको महेश्वर इत्यर्थः ॥ ५७ ॥

जयदेवकविः इमं पूर्वोक्तशिष्यं स्वभक्तिरतं स्वकृतकाव्यवेत्तारं पूर्णं कृतपूर्णाभिषेकं महेश्वरानंदनामानं कृतवान् ॥ ५८ ॥ नवत्युदक्पूर्णशतं नवत्यधिक शतसंख्यं जयदेवानंदं प्रणमति—य इति । वध्वां पत्न्यां सुहार्दी अतिप्रेमयुक्तोऽपि सदात्मनिरतो यस्तं नवत्यधिकशतसंख्यं जयदेवानंदं नताः स्मः ॥ ॥ ५९ ॥ एकनवत्यधिकशततमं महेश्वरं प्रणमति—य इति । अखिलतः सर्वपंडितपुत्रोऽपि बुद्धिमान् । यः गुरोः सकाशात्सर्वाः अष्टपदीः प्राप्तवान् । एकाधिकनवत्या सह शताख्यं शतसंख्यमेकनवत्यधिकशतसंख्यमित्यर्थः ॥ ६० ॥ महेश्वरानंदनाथ इति ॥ ६१ ॥ अष्टपदीनां मुमुक्षु...

जयदेव इमं निजभक्तिरतं कृतकाव्यविदं च समीक्ष्य ततः ॥ सकलैर्ऋतुभिः परिपूर्णममौ ह्यकरोच्च महेश्वरसंज्ञमपि ॥ ५८ ॥ प्र
ख्यात एवाष्टपदीप्रकर्ता वध्वा सुहार्दी च सदाऽऽत्मसक्तः ॥ तं देशिकं श्रीजयदेवसंज्ञं नवत्युदक्पूर्णशतं नताः स्मः ॥ ५९ ॥ य
एक एवाखिलतोऽपि धीमान्प्रापाखिलाश्चाष्टपदीर्गुरोस्तु ॥ शताख्यमेकाधिकया नवत्या महेश्वरानंदगुरुं नताः स्मः ॥ ६० ॥ श्रीदे
शिकेंद्र उवाच ॥ महेश्वरानंदनाथस्तिष्ठन्कर्णाटके सुधीः ॥ अध्यापयत्यष्टपदीः पंडितांश्च यथार्थतः ॥ ६१ ॥ शृंगाररसताधिक्या
द्विषयेच्छुप्रियास्तु ताः ॥ कारुण्याच्च मुमुक्षूणां स्वार्थाच्छांतादनीहिनाम् ॥ ६२ ॥ सर्वेऽपि लोलुपास्तासु द्वैतिनोऽद्वैतिनः परे ॥
नारदाच्छुश्रुवुर्देवाः स्वर्गेऽप्यष्टपदीस्तवम् ॥ ६३ ॥ तेऽप्यासंस्तच्छ्रोतुकामास्तेषां ज्ञात्वा गुरुर्मनः ॥ महेश्वरानंदसुतो जातः प्राप्तु
मिमाः स्वयम् ॥ ६४ ॥ पित्रोपनीतः पंचाब्दः सांगवेदार्थवित्तमः ॥ कृतोद्वाहश्च सत्पत्न्या प्रौढोऽथाष्टपदीः पितुः ॥ ६५ ॥

जनसेव्यत्वमाह शृंगाररसाधिक्यात्करुणरसाधिक्याच्च विषयिणां मुमुक्षूणां तु स्वार्थात्स्वस्यात्मनः अर्थः प्राप्तिस्तस्मादनीहिनां निष्कामानां शांतात् शांतरसा
श्रयत्वात्ताः अष्टपद्यः प्रिया बभूवुः । मुक्तमुमुक्षुविषयिणो हि शांतिः द्वैतोपरमस्तदर्थं परमात्मप्राप्त्यर्थं श्रवणसुखार्थं चाष्टपदीरता इत्यर्थः ॥ ६२ ॥ तासु
अष्टपदीषु सर्वे लोलुपाः श्रवणाध्ययनविचारेषु लुब्धा बभूवुः । अष्टपदीरूपं स्तवम् ॥ ६३ ॥ ते देवा अपि तच्छ्रोतुकामाः अष्टपदीश्रवणेच्छवो बभूवुः ।
गुरुर्बृहस्पतिः तेषां देवानां मनः अष्टपदीश्रवणलुब्धं ज्ञात्वा इमा अष्टपदीः प्राप्तुं स्वयं महेश्वरानंदपुत्रो जातः ॥ ६४ ॥ अथाद्युक्तमन्वयि ॥ ६५ ॥

अर्थसहितैः संगीतभेदैः सह ॥ ६६ ॥ त्रिविधान्मुक्तमुमुक्षुविषयिणः । अमूः अष्टपदीः ॥ ६७ ॥ रहोगतानाम् एकांतवासिनाम् अदर्शनमार्ग मित्यर्थः ॥ ६८ ॥ ता अष्टपदीः अशृणोत् श्रुतवती । ह्रिया लज्जया युक्ता वायुरहिते भित्तेः कोणे सर्वेषां पृष्ठभागे स्थिता ॥ ६९ ॥ मुहुर्नवा नवीनपुरुषाः अष्टपदीश्रवणार्थमग्रतः महेशपुत्राग्रभागे आययुः । अथ पूर्वगता जनाः किंचित्किंचित्पृष्ठदेशे बभूवुः । तदा बहुसंमर्दे सति कोणस्थिता सा सूतिका अंगेन डिंभमाच्छाद्यापि अमुष्य पुत्रस्य रक्षां कर्तुम् ईश्वरा समर्था नासीत् बहुसंमर्दे बालं गृहीत्वा गमनमेवानुचितमित्यर्थः ॥ ७० ॥ अग्रस्थैः

जग्राह सार्थसंगीतभेदैरद्धा बृहस्पतिः ॥ गायंस्ताः सुस्वरेणैव मृदंगेन च वीणया ॥ ६६ ॥ वदत्स्वर्थं च विशदं रंजयांश्चिदिवस्थजनान् ॥ श्रोतुं ययुर्नराः स्त्रीभिर्बालैर्लघुभिरप्यमूः ॥ ६७ ॥ कदाचिदित्यष्टपदीर्महेशानंदनात्मजे गायति गायकार्यैः ॥ संमर्दे आसीत्पुरुषाङ्गनादिबालातुराणां तु रहोगतानाम् ॥ ६८ ॥ काचिन्नवयस्य च सूतिका स्त्री ह्यनाप्तमासं लघुमर्भमंके ॥ कृत्वाशृणोत्ताः स्व ह्रियाखिलानां पृष्ठस्थिताऽवातसुकुड्यकोणे ॥ ६९ ॥ मुहुर्नवाश्चाययुरग्रतोऽथ पूर्वेऽपि पृष्ठेष्वनुसंबभूवुः ॥ सा कोणमाच्छाद्य च डिंभमंगात्रैवेश्वरा कर्तुमसुष्य रक्षाम् ॥ ७० ॥ तां पृष्ठतोऽनीक्ष्य निजांघ्रिघातैर्ममर्दुरग्रस्थविमर्दितांगाः ॥ जनास्तथास्यां च निपेतुरेकेऽथासीत्तदा साऽनसुरर्भयुक्ता ॥ ७१ ॥ कथासमाप्तौ स्वगृहांस्तु सर्वे ययुस्तदीयः श्वशुरादयोऽपि ॥ तौ मंचकेऽनीक्ष्य च सूतिकार्भौ पुरे शुचा बभ्रमुरीक्षितुं ते ॥ ७२ ॥

पुरोगामिजनैर्विमर्दितम् अंगं येषां ते जनाः पृष्ठतः पृष्ठभागे सार्वविभक्तिकस्तसिल् । तां सूतिकामनीक्ष्य अदृष्ट्वा स्वचरणघातैर्ममर्दुः । तथा एकेऽस्यां सूतिकायां निपेतुः । अथ सा तदा अर्भयुक्ता बालयुक्ता अनसुः गतप्राणा आसीत् ॥ ७१ ॥ तदीयाः सूतिकासंबंधिनः श्वशुरादयोऽपि स्वस्वगृहान्ययुः । ते श्वशुराद्याः मंचके सूतिकायुक्तं बालम् अदृष्ट्वा शुचा शोकेन युक्ताः संतः सूतिकाबालौ द्रष्टुं नगरे बभ्रमुः ॥ ७२ ॥

इमे श्वशुराद्या भ्रमंतो निशि कथास्थानं प्राप्ताः संतः इह कोणे अनमू गतप्राणौ तौ सूतिकाबालौ वीक्ष्य रुरुदुः । रोदनशब्दं श्रुत्वा तत्र महेशपुत्रोऽप्यागतो बभूव ॥ ७३ ॥ स च तां सपुत्राम् अज्ञातगतिं श्वशुरादिभिरपरिज्ञातगमनां कथाश्रवणार्थं प्राप्तामिति शेषः । सूतिकां जनपदैर्मृतां ज्ञात्वा सर्वदुःखहर्तुर्विष्णोः कथायां सबालसूतिकामरणरूपं दुर्निमित्तं कथमासीदित्याह । एतद्दुर्निमित्तं मा भूदित्यर्थः ॥ ७४ ॥ अथ स महेश्वरसूनुः कृष्णमनाः कृष्णैकचित्तः सत्पुत्रान्वितां सूतिकामूर्ध्वमुखीमग्रतः स्थाप्य निजैः स्वकीयैस्तालादिवादकैः सह संपूर्णाष्टपदीरुच्चारितवान् ॥ ७५ ॥ तत्तदा प्रेमयु-

प्राप्ताः कथास्थानमिमे भ्रमंतो दीपप्रकाशेन निशीह कोणे ॥ वीक्ष्यानमू तौ रुरुदुश्च शब्दं श्रुत्वागतस्तत्र महेशसूनुः ॥ ७३ ॥ स वीक्ष्य तां बालयुतां नृपाद्यैर्मृतां किलाज्ञातगतिं कथार्थम् ॥ ज्ञात्वाह विष्णोः सकलार्तिहर्तुः कथं कथायामिति दुर्निमित्तम् ॥ ७४ ॥ बालान्वितामूर्ध्वमुखीमथाग्रे संस्थाप्य तां कृष्णमनाः स नृत्यन् ॥ उदीरयामास निजैः सुकंठैः प्रेमान्वितश्चाष्टपदीः समस्ताः ॥ ७५ ॥ तद्गायतः प्रेमयुजोऽक्षितोऽस्याश्रुबिंदवोऽभस्य समातृकस्य ॥ पीयूषतुल्यास्तु मुखे निपेतुः सचेतनो चाथ बभूवतुस्तौ ॥ ७६ ॥ दृष्ट्वाद्भुतं वृत्तमथाखिलास्ते भूयः प्रणम्याहुरितोऽग्रसंस्थाः ॥ पीयूषतुल्याश्रुसुवर्षणेन पीयूषवर्षं मृतजीवनाद्धि ॥ ७७ ॥ पीयूषवर्षाद्भुवि विश्रुतोऽभूद्यथार्थतो योऽष्टपदीप्रवक्ता ॥ तिष्ठत्यमुष्मिन्हि कथां प्रवक्तुं संमर्द एवानुदिनं बभूव ॥ ७८ ॥ महेशसौख्येन हरेः सुभक्तो ज्ञातोऽस्य निष्ठाष्टपदीषु चाद्या ॥ पूर्णः कृतोऽथाखिलमंत्रतोऽसौ पीयूषवर्षाग्रसुखश्च नाम्ना ॥ ७९ ॥

क्तस्य गायतोऽस्यामृततुल्या अश्रुबिंदवः मातृसहितस्य बालस्य मुखे निपेतुः अथ तावत्सूतिकाबालकौ चेतनायुक्तावास्ताम् । कृष्णभक्तिरघटनघटनापटीयसीति भावः ॥ ७६ ॥ अथ सर्वे मिलितास्ते तदद्भुतं वृत्तं दृष्ट्वा तं प्रणम्याग्रे स्थिताः संतः इतः परम् अमृततुल्याश्रुवर्षेण हेतुना यन्मृतयोः सूतिकाबालयोः जीवनाद्धेतोस्तं महेशसूनुं पीयूषवर्षं प्राहुः ॥ ७७ ॥ पीयूषवर्षात् अमृतवर्षणात् विख्यातोभवत् । यथार्थतः याथार्थ्येनाष्टपदीप्रवक्ता । अमुष्मिन् पीयूषवर्षानंदे ॥ ७८ ॥ महेशानंदेन हरेः सुतरां भक्तोऽयमिति ज्ञातः अस्याष्टपदीषु आद्या परमा निष्ठा च ज्ञाता । अथाखिलमंत्रतः सर्वमंत्रैः

पूर्णः पूर्णाभिषिक्तः कृतः ॥ ७९ ॥ द्विनवत्यधिकशततमं पीयूषवर्षानंदं प्रणमति—जीव इति । देवान्प्रत्यष्टपदीविंकुं ५. जीवः बृहस्पतिरेवाऽवतीर्णः सन्नत्र लोके आभिरष्टपदीभिः हेतुभूताभिर्मृतान्प्रति जीवनप्रदोऽभूत्तं नताः स्मः ॥ ८० ॥ पीयूषवर्षानंदेन अश्रुजपीयूषजीवितः अश्रुरूपेण यज्जातं पीयूषममृतं तेन जीवितः ॥ ८१ ॥ अतः गुरुवैभववर्द्धनाय बालत्वे मृतोऽपि असौ इंद्रांशो बालकः गुरोरश्रुपीयूषताम् अमृताश्रुत्वमखिलान्दर्शयन् स्वजीवनेना

जीवोऽवतीर्णोऽष्टपदीः सुरांश्च वक्तुं मृताञ्जीवनदोऽत्र चाभिः ॥ तं नेत्रनन्दोर्द्धशतात्तसंख्यं पीयूषवर्षं गुरुमानताः स्मः ॥ ८० ॥ श्रीदेशिकेंद्र उवाच ॥ यश्चासीत्सूतिकाबालोऽश्रुजपीयूषजीवितः ॥ पीयूषवर्षानंदेन स जातो द्वादशाब्दकः ॥ ८१ ॥ योंऽशादिंद्रोऽवतीर्णः कौ वर्द्धितुं गुरुवैभवम् ॥ बालत्वेऽपि मृतोऽतोसावश्रुपीयूषतां गुरोः ॥८२॥ दर्शयंश्चाखिलान्कीर्तिं चकारास्य स्वजीवनात् ॥ सद्गुरोर्दर्शनाकांक्षी नान्यान्वक्तीषदप्यदः ॥ ८३ ॥ अज्ञात्वा तस्य हृदयं मूकं प्राहुर्जनास्तु तम् ॥ उपायांश्च बहूंश्चक्रे तद्वाग्लब्ध्यै धनी पिता ॥ ८४ ॥ तथापि नाल्पं वक्त्येषोऽथास्मै मूकाय सोऽददात् ॥ गायत्रीं तन्मंत्रितांभः पाययित्वा विधानतः ॥ ८५ ॥ पुपोष दुःखाच्चासंध्याध्ययनं तं विवर्द्धितम् ॥ इत्थं व्यतीयुरब्दा वै द्वादशाथ गुरुः स्वयम् ॥ ८६ ॥ पीयूषवर्षानंदः प्राग्ज्ञातवृत्तस्तमर्भकम् ॥ प्रौढं ज्ञात्वांजसैवागात्तत्पितुर्गृहमेकदा ॥८७॥ पितुः समीपमासीनः स शिशुर्दूरतो गुरुम् ॥ दृष्ट्वोत्थाय स्वयं वेगात्साष्टांगं प्रणनाम तम् ॥८८॥ चिरं स्वांघ्री चात्यजंतं शिशुमाह गुरुस्तदा ॥ उत्तिष्ठोत्तिष्ठ बाल त्वं कोऽसि वृत्तं निजं वद ॥ ८९ ॥ यथा शीघ्रं भवेत्तेऽर्थ तथैवाहं करोमि च ॥ श्रुत्वेत्थमुत्थितः सोऽर्भः सांजलिः प्राह देशिकम् ॥ ९० ॥

स्य गुरोः कीर्तिं चकारेति संबंधः ॥ ८२ ॥ स गुरुदर्शनेप्सुरन्यान् जनान्किंचिदपि न वक्ति ॥८३॥८४ ॥ ८५ ॥ न संध्याऽध्ययनं च यस्य । विवर्द्धितं वृद्धिं प्राप्तं पुत्रं दुःखेन पुपोष पालयामास । पितेत्यध्याहारः ॥ ८६ ॥ प्राक् ज्ञातं वृत्तं मूकत्वरूपं येन ॥ ८७ ॥ ८८ ॥ चिरकालं स्वचरणा

वनुत्सृजंतम् ॥ ८९ ॥ ९० ॥ स्ववृत्तांतं कथयन्परमानंदसुखं प्रार्थयते मयेति षड्भिः । सर्वदा दुःखप्रदा ये विषयास्तेषां स्पृहिण्याः अभिलाषवत्याः बुद्धेः संगात्तादात्म्याध्यासादात्मतत्त्वं मम विगतं हीति निश्चयेन । यथा दुष्टस्त्रियः पारतंत्र्याद्विदो ज्ञानिनोपि द्विजस्य नैजं स्वकीयं सत्कर्म संध्यादि तद्वत् । दुःसंग एवात्मविस्मृतिहेतुरित्यर्थः ॥ ९१ ॥ महानपरिच्छिन्नोऽप्यहं तेन बुद्धिसंगेन लघुतां परिच्छिन्नत्वं प्राप्तोऽत एव दुःखी नानाप्रकारान् नीचायतनानि कुशरीराणि भ्रमन् शर्म सुखं नैव प्राप्तवान् । दैवयोगात्सतां स्थानं कर्मभुवं भूलोकं गतोऽस्मि प्राप्तोऽस्मि ॥ ९२ ॥ इह लोके मद्भिः कृतानि कर्माणि दृष्ट्वा मम बुद्धिरपि तथा कर्माणि कर्तुं प्रवृत्ताऽभवत् । सा बुद्धिः कर्त्री मया साधनभूतेन तथैव कर्माणि कारयामास । किं कृत्वा अनल्पेच्छु

शिशुरुवाच ॥ ममात्मतत्त्वं विगतं हि संगाद्धियः सदा दुर्विषयस्पृहिण्याः ॥ दुरंगनाया इव पारवश्याद्द्विजस्य सत्कर्म विदोपि नैजम् ॥
॥ ९१ ॥ तेनागतोऽहं लघुतां महांश्च भ्रमन्हि नीचायतनानि दुःखी ॥ नैवाप्तवाञ्छर्म ततस्तु दैवात्स्थानं सतां कर्मभुवं गतोऽस्मि ॥
॥ ९२ ॥ दृष्ट्वाथ कर्माणि च सत्कृतानि मद्धीस्तथा कर्तुमिह प्रवृत्ता ॥ सा कारयामास मया तथैवाज्ञात्वा ह्यनल्पेच्छु च तद्धृदज्ञा ॥
॥९३॥ अहंधिया यत्कृतवांश्च कर्म तेनाप्तवानल्पसुखं च लोकम् ॥ तत्राक्षयं नैव सुखं मयींद्रेऽप्यजाधिकारस्पृहया किलाऽऽसीत् ॥
॥९४॥ स्वर्गाद्वरं लोकमिमं तु मन्येऽल्पायुर्जरादुःखमिहानुभूय ॥ विरागिणः स्वर्गगतास्तु नैव कल्पायुषः सौख्यभुजः सदेति॥९५॥

अल्पेच्छु स्वर्गादिसुखेच्छावन्न भवतीत्यनल्पेच्छु तद्धृत् तेषां निष्कामकर्मकर्तॄणां हृदयम् अज्ञात्वा यतः अज्ञा ज्ञानहीना बुद्धिपारतंत्र्येण मया स्वर्गप्राप्त्यर्थं कर्माणि कृतानीत्यर्थः ॥ ९३ ॥ अहंधिया अहं करोमीति बुद्ध्या यत्कर्म कृतवान् तेन कर्मणाऽल्पसुखम् आत्मसुखापेक्षयाल्पं सुखं यस्मिंस्तं स्वर्गं प्राप्तोऽस्मि । तत्र स्वर्गे मयि इंद्रे सत्यपि अजाधिकारस्पृहया ब्रह्माधिकारप्राप्तीच्छया अक्षयं सुखं नासीत् ॥ ९४ ॥ अक्षयसुखप्राप्ति वैराग्येणैव भविष्यति इति दर्शयन्वैराग्यप्रापकस्य भूलोकस्य स्वर्गादधिकत्वमाह । स्वर्गादिति । जनाः इह लोके अल्पम् आयुष्यं जरादुःखं चानुभूय विरागिणो भवंति । स्वर्गगतास्तु कल्पायुषश्चिरजीविनोपि विरागिणो नैव भवंति । यतः सदा सौख्यभुजः सुखिनः । अयं भावः सदा सुखसेविनां विष

येषु दोषदर्शनाभावेन वैराग्याभावान्निर्निमित्तब्रह्मसुखप्राप्तिर्न भवतीति ॥ ९५ ॥ यतः अक्षयसुखप्राप्तिः स्वर्गे नास्ति । अतः स्वः स्वर्गं त्यक्त्वा महत्पा
दरजोभिषेकेण परमानंदं प्राप्स्ये इति हेतोर्मया जन्म प्राप्तं तस्मात्कारणाद्धे देशिक गुरो मह्यं तदेव परमं सौख्यं देहि । नान्यत्किमपीच्छामीत्यर्थः ॥
॥ ९६ ॥ भवत्कृपाश्रयत्वमपि पूर्वमेवासीदित्याह । त्रात इति । भवता पूर्वं बाल्यावस्थायामहं स्वाश्रुपीयूषवर्षणेन मृतेर्मरणाद्रक्षितोस्मि । तदादि तद्दिनमा
रभ्य त्वद्दर्शनेच्छुरहम् अज्ञैर्मूर्खैः कर्तृभिः मोहेन जनो बध्यते इति हेतोः परान् जनांस्तु मनाक् किंचिदपि न वच्मि न ब्रवीमि । मोहबंधनिवृत्त्यर्थं त्वद्दर्श

अतः स्वरुत्सृज्य मयात्र जन्म लब्धं महत्पादरजोऽभिषेकात् ॥ लप्स्ये परं सौख्यमितीह तस्मात्तदेव मे देशिक देहि नान्यत् ॥९६॥
त्रातोऽस्मि बाल्ये भवता निजाश्रुपीयूषवर्षेण मृतेस्तदादि ॥ त्वद्दर्शनेच्छुर्न मनाक्परांस्तु वच्मीति मोहात्खलु बध्यतेऽज्ञैः ॥ ९७ ॥
श्रुत्वेति बालस्य वचो गुरुस्तं नीत्वा मठं प्राह च मंत्रजातम् ॥ नामास्य देवेशसुखं चकार यतोवतीर्णोऽस्ति भुवींद्र एषः ॥ ९८ ॥
लब्ध्वा गुरोर्ज्ञानमसौ सयोगं सदाभ्यसन्मुक्तसमस्तसंगः ॥ सेवामदंभेन च तस्य कुर्वन्ख्यातिं पृथिव्यामुभयोश्चकार ॥ ९९ ॥ य
इंद्र एवाध्यवनीह भूत्वा जीवस्य चक्रेऽवनिगस्य सेवाम् ॥ तं रामनंदोर्ध्वशताप्तसंख्यं देवेशसौख्यं गुरुमानताः स्मः ॥ १०० ॥

नार्थं च मूकत्वं मया धृतमित्यर्थः ॥ ९७ ॥ मंत्रजातं प्राह पूर्णाभिषेकं कृतवानित्यर्थः । यत एष इंद्रो भुवि अवतीर्णोस्ति ततोऽस्य देवेशानंदं नाम
चकार ॥ ९८ ॥ असौ देवेशानंदः गुरोः पीयूषवर्षात् योगसहितं ज्ञानं लब्ध्वा सदाभ्यसन्मुक्तसंगो बभूव । तस्य गुरोः सेवामदंभेन गर्वराहि
त्येन कुर्वन्पृथिव्यामुभयोः आत्मनः गुरोश्च ख्यातिं विख्यातिं चकार ॥ ९९ ॥ त्रिनवत्यधिकशततमं देवेशानंदं प्रणमति—य इति । यः देवेशानन्दः
इह अध्यवनि अस्यां पृथिव्यामित्यर्थः । भूत्वा अवतीर्य । अवनिगस्य पृथिवीं गतस्य जीवस्य बृहस्पतेः सेवां चक्रे । तं नताः स्मः ॥ १०० ॥

रासकानंदादिसप्तगुरुकथाश्रवणफलं क्रमेणाह—श्रीरासकाख्यादिति। ऐशम् ईश्वरत्वं महेशानंदकथाश्रवणात् ॥ १०१ ॥ इति श्रीगुरु[illegible]
कायामर्थस्फूर्त्यभिधायामष्टाविंशः सर्गः॥ २८ ॥ एकोनत्रिंशके पद्यैर्नवत्या देशिकान्वयः । सर्वज्ञसिंहभूपाद्याः प्रोक्तास्तत्तत्कथानकैः ॥ २९ ॥ पीयूष[illegible]
पीयूषवर्षानंदनामा आत्मवानात्मज्ञः स वाक्पतिः योगाद्योगाभ्यासेन भौतिकं वपुस्त्यक्त्वा कृतकार्यः सन् स्वर्गं ययौ ॥ १ ॥ [illegible]

श्रीरासकाख्याद्गुरुसप्तकस्य कथां शृणोत्येष हि विष्णुभक्तिम् ॥ ज्ञानार्ति[illegible] कविशक्तिमैशं दीर्घायुरैश्वर्यमथाल[illegible] ॥ १०१ ॥
इति श्रीगुरुपरंपराचरित्रे उत्तरार्धे रासकानंदादिसप्तगुरुकथावर्णनं नामाष्टाविंशः सर्गः ॥२८॥ श्रीदेशिकेंद्र उवाच ॥ पीयूषवर्षानंद[illegible]
योगाद्भौतिकमात्मवान्॥वपुस्त्यक्त्वा ययौ स्वर्गं कृतकार्यः स वाक्पतिः॥१॥देवेशानंदनामा तु गुरौ सिद्धे गते मठे॥ [illegible]
गात्सौख्यं न प्राप्तवान्क्वचित्॥२॥ निधाय संप्रदायं कौ स्वर्गंतावुत्सुकोऽपि सः ॥ नापश्यद्बुद्धिमंतं शिष्यं मंत्र[illegible]
मठमथैकाकी संभ्रमन्दिशमुत्तराम्॥ ययौ यत्र महापुर्यां धर्मसिंहो नृपः सुधीः ॥४॥ नयानयौ प्रजानां यः स्वयं जानाति [illegible] ॥
दूराद्यांति जनास्तं च नयानयविचारणे ॥ ५ ॥ आसीत्तस्य सुतश्चैकः सत्ताङ्कः पितृवः सुधीः ॥ क्रीडन[illegible]
न्यायौ च वेत्ति सः ॥ ६ ॥ तत्पुरे धनवान्विप्रो द्विभार्यस्तस्य चाभवत् ॥ कनिष्ठायां सुतः कालात्[illegible]स्य तोषदः ॥ ७ ॥ [illegible]
स्त्री तस्य साध्व्यासीद्भर्तृचित्तानुयायिनी ॥ सपत्न्यास्तु सुतं तुष्टा लालयंत्यात्मजं यथा ॥ ८ ॥ कथ्यतेऽस्याः सुतः [illegible]
थास्तु गेहगैः ॥ भर्तात्यंतं तुतोषास्यां ज्येष्ठायां सुस्वभावतः ॥ ९ ॥ पत्युः प्रेमानपत्यायामसहंतीति चावरा ॥ [illegible]
पुत्राय सपत्न्याश्चाग्रतो निशि ॥१०॥ तं निवेश्य स्वयं पत्या सुष्वापांतर्दुराशया॥ उत्थाय स्वयमेवाथ सांजनं शिशुं कराद्[illegible]॥११॥

वियोगेन ॥ २ ॥ भुवि संप्रदायं स्थापयित्वा स्वर्गं गंतुमुत्कंठितोऽपि मंत्रधारणे समर्थं बुद्धिमंतं शिष्यं नापश्यत् ॥ ३ ॥ ४ ॥ [illegible] ॥
॥ ५ ॥ तस्य धर्मसिंहस्य ॥ ६ ॥ कालात्कालेन तोषदः सुखदः ॥ ७ ॥ ८ ॥ अस्याः ज्येष्ठायाः पुत्र इति सर्वैर्ज्ञायते [illegible]
कनिष्ठायाः पुत्र इति कथ्यते । सपत्न्या अपि बाले ज्येष्ठायाः प्रीत्यतिशयादित्यर्थः ॥ ९ ॥ अवरा कनिष्ठा ॥ १० ॥ पूर्वार्धे पूर्वान्वयि [illegible]

चरान्वयि ॥ ११ ॥ कराद्धस्तेन संस्पृश्य । सहसा इत्युत्तरान्वयि ॥ १२ ॥ किंचिदपि वक्तुं क्षमा नाभवत् । शब्दादाक्रोशशब्देन बहिः पुनरर्मा अगात् । परे बहिःशालागृहगताश्चांतर्गृहे अगुः ॥ १३ ॥ अवरा कनिष्ठा ॥ १४ ॥ शायित इति पूर्वान्वितम् । व्यसुः गतप्राणः कृतः ॥ १५ ॥ आखुभुक् बिडालः यथा मुमूर्षुमाखुं हननेच्छया लालयति तद्वत् ॥ १६ ॥ अस्याः सपत्न्याः ॥ १७ ॥ १८ ॥ चाराद्दूतमुखात् । सत्यमंकं स्त्रीपुत्र

संस्पृश्य च गतप्राणं ज्ञात्वा चक्रे महाध्वनिम् ॥ सहसाकर्ण्य तं शब्दं ज्येष्ठोत्थायाग्रतः शिशुम् ॥ १२ ॥ व्यसुं दृष्ट्वातिदुःखार्त्ता वक्तुं नाण्वपि च क्षमा ॥ पतिश्चागाद्बहिः शब्दाद्गेहस्थाश्चाखिलाः परे ॥ १३ ॥ पतिं दृष्ट्वावरेत्याह मिथ्याश्रु पापकारिणी ॥ कनि ष्ठोवाच ॥ विश्वासेन मया बालः सपत्न्याः पुरतो निशि ॥ १४ ॥ शायितोऽथानया नूनं विषं दत्त्वा व्यसुः कृतः ॥ मत्तः प्रेमान पत्यायामप्यस्यां क्रियते त्वया ॥ १५ ॥ मद्बालं लालयत्येषा मुमूर्षुमाखुमिवाखुभुक ॥ न ज्ञात्वा त्वं मनश्चास्याः कोपाविष्टः सदा मयि ॥ १६ ॥ बालेन सह गच्छामि नास्थाः संगस्तु मे पुनः ॥ त्वं सुखं विहरस्वाद्यानपत्यश्चानपत्यया ॥ १७ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्यादि बहुशः श्रुत्वा कनिष्ठादुर्वचांस्यथ ॥ ज्येष्ठयैव हतो बाल इति सर्वे जगुर्जनाः ॥ १८ ॥ पतिः सत्यं न मेनेऽग्र बाल्याज्ज्येष्ठास्वभाववित् ॥ चारान्नृपोऽपि बुध्वेदं दूतैः सत्यमंकं द्विजम् ॥ १९ ॥ आनयामास नयवित्साहसिज्ञतये पुरः ॥ अत्रापि नृपेणाह कनिष्ठा त्यक्तह्रीर्नृपम ॥ २० ॥ सपत्न्या मे हतो बालः शायितोऽस्याः पुरो यतः ॥ स्थास्येऽहं न क्षणं प्राणैर्भाता मेऽपी दृशी गतिः ॥ २१ ॥ नृपः श्रुत्वेति तद्वाक्यं सत्यं प्राहाखिलानिदम् ॥ सपत्न्यैव हतो बालः पुरोऽस्याः शायितो निशि ॥ २२ ॥ कोऽन्यस्तं हंतुमत्रागाद्गृहस्यापि विषार्पणात् ॥ दंडनीयेयमेवाद्य नीतिशास्त्रानुसारतः ॥ २३ ॥

सहितं द्विजं पुरः समीपे आनयामासेति संबंधः । साहसिज्ञप्तये साहसकर्तुर्ज्ञानाय । यतो नयवित् नीतिज्ञः ॥ १९ ॥ २० ॥ प्राणैः सह क्षणमपि न स्थास्ये मरिष्यामीत्यर्थः । यतः कारणान्ममापि ईदृशी बालसदृशी गतिर्भविष्यतीत्यर्थः ॥ २१ ॥ २२ ॥ विषार्पणेन हंतुं कोन्यः प्राप्तः न कोपीत्यर्थः ।

इयमेव ज्येष्ठैव नीतिशास्त्रानुसारेण दंडनीया ॥ २३ ॥ २४ ॥ स्ववाक्यस्य प्रामाण्यद्योतनाय प्राचीनवाक्यमुदाहरति—वत्सोच्छिष्टमपि [illegible]
रूपं यथा यज्ञे ग्राह्यम् । मंगले विवाहे ॥ २५ ॥ एवम् आचारतः सदाचारेण । शास्त्रत्वेन उक्तं मम बालस्य भाषितं सुभाषितमिति [illegible]
मया अणु किंचिदुच्यते इत्युक्त्वा स बालः स्त्रियौ प्रत्याह ॥ २६ ॥ तत्र बालहत्यासाहसमसाध्वीकृतं मत्वा साध्वीस्त्रियं ज्ञातुम् [illegible]
सर्वजनेषु पश्यत्सु सत्सु या स्त्री विवस्त्रा सती घटयुक्ता इतः सभासकाशात्तटाकं प्रति गच्छति अस्मात्तटाकादुदकपूर्णं घटमानीय शिवलिंगे [illegible]

तेऽपि श्रुत्वा तथेत्याहुरथ क्रीडन्नृपार्भकः ॥ दूराच्छ्रुत्वा नृपस्याग्रे स्वयमेत्येति चाब्रवीत् ॥ २४ ॥ बाल उवाच ॥ [illegible]
हविर्यज्ञे ह्युच्छिष्टान्नं तु मंगले ॥ सदस्यार्यैस्तथा ग्राह्यं बालादपि सुभाषितम् ॥ २५ ॥ इत्थमाचारतो वाक्यं [illegible]
खिलैः ॥ उच्यतेऽणु मयेत्युक्त्वा प्रगल्भं सोऽब्रवीत्स्त्रियौ ॥ २६ ॥ या गच्छतीतः सदसो विवस्त्रा तटाकमस्मादुदकं प्रपूर्णम् ॥ [illegible]
पश्यत्स्वखिलेषु शंभौ समर्पयेत्सत्यवतीतरा न ॥ २७ ॥ श्रुत्वा कनिष्ठैव तदेत्युवाच यथांबुपूर्णः कलशस्तटाकात् ॥ [illegible]
शिवेऽर्प्यते किं ह्रीः स्यादृतायास्तु समेंद्रियेभ्यः ॥२८॥ श्रुत्वेति सर्वेऽपि शशंसुरेनां सोऽर्भो नृपं प्राह तरुण्यनग्ना ॥ [illegible]
नृसुहृत्पुरोऽपि घटेन सा किं न विपाच्छिशुघ्नी ॥ २९ ॥ विचार्य बालोक्तमपीदमंतर्मत्वा नृपः सद्धिषणोऽपि सत्यम् ॥ [illegible]
तामूर्ध्वकशाधरौ द्वौ तत्पार्श्वयोश्चोग्रदृशौ नियोज्य ॥ ३० ॥

सत्यभाषणवती इतरा एवं कर्माकर्त्री सत्यवती न भवति । असत्याद्दोषवती च भवेदित्यर्थः ॥ २७ ॥ इति श्रुत्वा तदाऽऽभार्या कनिष्ठोवाच । [illegible]
तायाः सत्यवाक्यायाः मम समेंद्रियेभ्यः समानावयवेभ्यो जनेभ्यः लज्जास्ति किम् । सत्यवक्त्रा स्वसत्यप्रतिपादनायायोग्यमपि कर्म [illegible] ॥
एनां कनिष्ठां । सः अर्भो राजपुत्रः नृपं प्राह । या तरुणी नग्ना सती नृणां सुहृदां पुरः अग्रे घटेन शिरोगृहीतेनांबु उदकम् आनयित्री [illegible]
न भवेत्किम् अपि तु कनिष्ठैव बालघ्नीत्यर्थः ॥ २९ ॥ सद्धिषणः सुबुद्धिर्नृपोऽपि सत्यं मत्वा उत्थाय तस्याः पार्श्वयोः उग्रदृष्टी [illegible]

नियोज्य स्वयं क्रूरत्वेन कनिष्ठां द्विजभार्यां प्रत्याहेत्यन्वयः ॥ ३० ॥ गृहेंऽत्तर्गृहे युवां स्त्रियौ द्वे तृतीयः पतिः एत एव संति । अत्र त्रयाणां मध्ये केन कया वा शिशुर्हतः । इदं सत्यं वदस्व नो चेदाभ्यां दूतधृताभ्यां कशाभ्यां मया ताडयसे ॥ ३१ ॥ अथ सा कनिष्ठा एका असहायिनी अबला भीता सती नृपे सुकोपे अत्यंतं क्रुद्धे सति सर्वान् जनान् क्रुद्धानपश्यत् । तदाऽस्यां ज्येष्ठायां पतिप्रीतिमसहमानया मया विषेण बालो घातित इत्याह ॥ ३२॥ तत्र सभायां जनाः मिथः प्राहुः । निजपुत्रघातिनी माता न दृष्टा न श्रुता अस्माभिरिति शेषः । इत्थं स्वबालघातनं कस्यापि मनसापि चिंतितुं योग्यं न भवति । अयं राजपुत्रः शिशुरपि एतत्साहसं व्यक्तं चकार संदिग्धार्थं युक्त्या स्पष्टीकृतवानतोयं सर्वज्ञ इत्यर्थः ॥ ३३॥ एवं राजपुत्रस्य बुद्धिमत्तां प्रदर्श्य

क्रौर्यात्स्वयं प्राह गृहे युवां द्वे पतिस्तृतीयोऽत्र शिशुस्तु केन ॥ हतो वदस्वेदमृतं हि नो चेदाभ्यां कशाभ्यामतिताड्यसे त्वम् ॥ ३१ ॥
भीताऽबला साऽथ नृपे सुकोपे क्रुद्धांश्च सर्वान्समपश्यदेका ॥ मयाऽसहंत्या पतिलोभमस्यां विषाच्छिशुर्घातित इत्युवाच ॥ ३२ ॥
प्राहुर्जनास्तत्र मिथो हि माता दृष्टा श्रुता नो निजबालहंत्री ॥ कस्यापि नेत्थं मनसापि चिंत्यं व्यक्तं चकारैतदयं शिशुश्च ॥ ३३ ॥
देवेशानंद इत्थं प्रबलतरमतिं वीक्षमाणोऽर्भकस्य गत्वा तत्राथ मत्वा वरधिषणमिमं पार्थिवं प्राप पश्चात् ॥ दृष्टा राज्ञाऽमरः [illegible] इव सहसोत्थाय नत्वा तदंघ्री पृष्टः पीठार्चितस्त्वं क इह च किमथायात इत्थं स चाह ॥ ३४ ॥ देवेशानंद उवाच ॥ देवो [illegible] ऽभून्मम गुरुरखिलज्ञश्च पीयूषवर्षानंदो मात्रान्वितं मां मृतममृतमयात्स्वाश्रुतोऽजीजयद्यः ॥ राजंश्चास्याद्धि [illegible] तत्रान्दुर्लभांस्तान्दातुं नैवाहमीशे वरधिषणमखिलं च प्रमन्मूनयाचीम् ॥ ३५ ॥

तस्मात्संप्रदायप्रवृत्तिं दर्शयति—देवेशानंदइत्यादिना । देवेशानंदः यदृच्छया तत्र गत्वा अर्भकस्य राजपुत्रस्य प्रबलतरमतिम् अतितीव्रबुद्धिं वीक्षमाणः तं बालकं वरधिषणं बुद्धिमंतं मत्वा पश्चात् पार्थिवं धर्मसिंहं प्रति गतवान् । अथ राज्ञातितेजस्वी सः भुवं प्राप्तो देव इव दृष्टः सहसा संभ्रमेणोत्थाय देवेशानंदं नत्वा पीठे आसनेऽर्चितः सत्कृतो देवेशः कस्त्वं किमर्थमायात आगत इत्थं राज्ञा पृष्टः कामप्र इत्यर्थः । अथानंतरं स च देवेशानंदोऽप्याह । [illegible] विशेषः । स्रग्धरावृत्तम् ॥ ३४ ॥ यो गुरुः मात्रा सह मृतं मां प्रति अमृततुल्याश्रुभिः अमृतायुर्वर्षणेनेत्यर्थः । अजीजयत् । [illegible]

लैभान्मंत्रान्प्राप्तवानस्मि । सर्वां भूतधात्रीं पृथ्वीं भ्रमन् तान् मंत्रान् शिष्याय दातुं वराधियं श्रेष्ठबुद्धिं शिष्यं नैवेक्षे न पश्यामि । रहस्यमंत्रोपदेशे बुद्धिमा...
ध्योऽपेक्षितः अतः सर्वभूम्यां संचरता मयात्यंतं बुद्धिमान् तव पुत्रो दृष्टः । एतद्बहोगतं बालवृंदं श्रेष्ठसमुदायसमीपे इह धिया स्वबुद्ध्यैव विशदं स्पष्टं
कृतवान् । यच्चरमजन्मनि लभ्यते तत् श्रीविद्यादिमंत्रजातम् अस्मै तव पुत्राय देयमिति बुद्ध्यात्र तव समीपे हे नृप अमुष्य बालस्य पितरं भवंतम् अनु
योक्तुं प्रष्टुम् ' प्रश्नोऽनुयोगः पृच्छा च ' इत्यमरः । प्राप्तोऽस्मि ॥ ३५ ॥ ३६ ॥ तपसा तेजस्विनोऽस्य देवेशस्य मंत्रसामर्थ्यं द्रष्टुं नृपस्तं प्राह ॥ ३७ ॥

दृष्टः पुत्रस्तवैवाखिलभुवि चरताऽयं मयात्यन्तधीमान्बालोऽप्येतद्बहोगं विशदमिह धियैवाकरोच्छ्रेष्ठसंघे ॥ देयं सन्मंत्रजातं त्विह चरमजनौ लभ्यते यत्तदस्मै प्राप्तोऽस्म्यत्रेति बुद्ध्या नृप पितरममुष्यानुयोक्तुं भवंतम् ॥३६॥ श्रीदेशिकेंद्र उवाच ॥ नृपः प्राहाथ तं साधुं मंत्रसामर्थ्यमीक्षितुम् ॥ तपस्तेजस्विनोऽस्यापि पश्यन्पुत्रं च सांजलिः ॥३७॥ धर्मसिंह उवाच ॥ भवादृशानां सेवैवास्माभिः कार्या हि बाहुजैः ॥ गृह्यंते ब्राह्मणैर्मंत्राः परोपकृतये किल ॥३८॥ वयसापि लघुर्बालोऽस्मै किं मंत्रोपदेशनम् ॥ सदा क्रीडनसक्ताय बटवे भाग्य शांतिवत् ॥ ३९ ॥ तथापि मंत्रसामर्थ्यं चेद्भवान्दर्शयिष्यति ॥ अधुनैव ततो मंत्रांस्त्वत्तो गृह्णातु मेऽर्भकः ॥ ४० ॥ इत्थमाकर्ण्य राजोक्तं ज्ञात्वा तद्धृदयं गुरुः ॥ चक्रे विष्णोः स्तुतिं मातृहतबालप्रजीवने ॥ ४१ ॥ देवेशानंद उवाच ॥ यो विष्णुरेकोऽखिल हृत्सु तिष्ठन्पात्येव सर्वानपि सर्वदुःखात् ॥ स एव मात्रा हतमर्भमेनं संजीवयत्वद्य विषाग्निदग्धम् ॥ ४२ ॥ येनैव मातुर्जठरे स्थितोंगं संकोच्य रज्ज्वेव जरायुणासौ ॥ बद्धोऽग्नितप्तः क्षुधितस्तृषार्तस्त्रातोऽवयाऽत्तं च समर्प्य नाभेः ॥ ४३ ॥

परोपकृतये परोपकाराय ॥ ३८ ॥ किं किमर्थं निरर्थमित्यर्थः ॥ ३९ ॥ ४० ॥ ४१ ॥ बालजीवनेन स्वसामर्थ्यं दर्शयन्विष्णुं प्रार्थयते—यइति चतुर्भिः । य एको विष्णुरखिलहृदयेषु तिष्ठन्सर्वदुःखात्सर्वाञ्जीवान्रक्षत्येव । स एव विष्णुः मात्रा हतमेनं बालकं विषाग्निनांतर्दग्धं संजीवयतु ॥ ॥ ४२ ॥ गर्भस्थितावपि स एव रक्षक इत्याह—येनेति । अंगं संकोच्य मातुरुदरे स्थितः येन विष्णुनैव कर्त्रा । रज्ज्वेव जरायुणा बद्धः जाठराग्निना तप्तः

क्षुधितस्तृषार्तोऽसौ जीवः अंबया मात्रा अन्नं भक्षितमन्नादिरसं नाभेः सकाशान्नाडीद्वारा समर्प्य ज्ञातः रक्षितः ॥ ४३ ॥ अथ जन्मनि जन्मकाले अस्य बालस्य तृप्त्यै स्वमातरि दुग्धं येन विष्णुना कृपया प्रकटीकृतम् । तथैव कृपयास्य बालस्य विषबाधा मास्तु । यथांधस्य भुक्तौ भोजनकाले मक्षिकाणां बाधा न भवति तद्वत् ॥ ४४ ॥ यो विष्णुः पुरा प्रह्लादसंज्ञं भक्तम् अस्य मात्रा कयाधूनाम्न्या दत्ताद्विषादक्षितवान्यथा तथैव पूर्वजन्मनि भक्तमेनं द्विज पुत्रं ज्ञात्वा एष सर्वज्ञो विष्णुः पायात् रक्षतु । मातृदत्तविषादित्यपकर्षः ॥ ४५ ॥ देवेशानंदइति सार्धान्वयः ॥ ४६ ॥ विष्णुना गुप्तो रक्षितोऽयं मंत्र

जन्मन्यथाविष्कृतमस्य तृप्त्यै स्वमातृदुग्धं कृपयैव येन ॥ तथैव बाधास्य विषस्य मास्तु भुक्ताविवांधस्य हि मक्षिकाणाम् ॥४३॥ प्रह्लादसं ज्ञं हि पुरास्य मात्रा दत्ताद्विषाद्यस्तु ररक्ष भक्तम् ॥ प्राग्जन्मभक्तं हि तथैव चैनं ज्ञात्वैव पायादखिलज्ञ एषः ॥४४॥ देवेशानंद उक्त्वेत्थं कमंडलुजलं शिशौ ॥ संमार्ज्यास्यांगुलिं वक्रे क्षिप्त्वामृतमयीं ततः ॥४५॥ स्पृशंस्तदंगं हस्तेन प्राहेतींद्रः स भूगतः ॥ जीवत्वपमृतेर्विष्णु गुप्तोऽयं मंत्रवैभवात् ॥ ४७ ॥ वदतीत्थं हि देवेशानंदेंद्रुनमिवाभवत् ॥ सचेतनः शिशुः पश्यत्स्वविलेषु रुरोद सः ॥ ४८ ॥ संतुष्टो धनिकोऽथागाद्गृहं भार्यात्मजाऽन्वितः ॥ प्रशशंसुर्जनाः सर्वे तं साधुं मृतजीवनम् ॥ ४९ ॥ धर्मसिंहोऽतिलज्जाढ्यः प्रणम्य बहुशो गुरुम् ॥ प्राहाज्ञत्वाद्धि सामर्थ्ययुक्तं ते तत्क्षमस्व सन् ॥ ५० ॥ तमुवाचाथ देवेशो नापराधोऽण्वपीह ते ॥ भवितव्यसमा धीर्हि न यात्पालयतः प्रजाः ॥ ५१ ॥ ततः प्रार्थनया राज्ञस्तत्पुत्रं स्नाप्य मंगलम् ॥ संस्थाप्य पुरतस्तस्मै पूर्णां दीक्षां ददौ गुरुः ॥ ५२ ॥

सामर्थ्येनापमृतेः अपमृत्योः सकाशात् जीवतु ॥ ४७ ॥ ४८ ॥ मृतं जीवयति तम् ॥ ४९ ॥ हे सन् साधो ॥ ५० ॥ नयात् नयेन प्रजाः पाल यतः राज्ञो बुद्धिर्भवितव्यसमा भविष्यसदृशी भवति । यतः इदानीमेतादृशं त्वयोक्तं मंत्रप्रत्ययदर्शनाय । तेनायं मृतो बालकोऽपि जीवितमाप्तः । ततः तव बुद्धिः एतज्जीवनोन्मुखी जातेति युक्तमेव ॥ ५१ ॥ तत्पुत्रं राजपुत्रं मंगलं यथा स्यात्तथा स्नाप्य पुरतः संस्थाप्य पूर्णाभिषेकं कृतवानित्यर्थः ॥ ५२ ॥

बुद्धिबलेनान्यैर्ज्ञातुमशक्यम् एकांतगतं सर्वं वेत्ति यतस्ततः सर्वज्ञसिंहभूपत्यानंद इति नाम तस्य कृतवान् ॥ ५३ ॥ देवेशः एवं संप्रदायं पृथिव्यां स्थाप्य युक्तेर्योगसामर्थ्यात्स्वः स्वर्गं ययौ । हि यस्मान्महतां स्वेच्छया जन्म देहिनामुपकाराय भवति ॥ ५४ ॥ ५५ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५६ ॥ ॥ ५७ ॥ चतुर्नवत्यधिकशततमं सर्वज्ञसिंहभूपत्यानंदं प्रणमति—य इति । यः सर्वज्ञसिंहः बाल्ये वयसि अन्येन रहसि कृतं पापं वेद । तेन रहोगतज्ञानेन

सर्वज्ञसिंहभूपत्यानंदनामाकरोद्यतः ॥ सर्वं वेत्ति रहोगं च योऽन्याज्ञेयं च धीबलात् ॥ ५३ ॥ स्थाप्येत्थं संप्रदायं कौ देवेशः स्व ययौ युतेः ॥ स्वेच्छाजनिर्हि महतामुपकाराय देहिनाम् ॥ ५४ ॥ सर्वज्ञसिंहभूपत्यानंदो लब्ध्वा गुरोर्महत् ॥ राज्यं त्वनासक्तमनाः शिवार्चातत्परोऽवसत् ॥ ५५ ॥ चारैर्ज्ञात्वा प्रजावृत्तिं तत्कृत्यं वेत्ति धीबलात् ॥ प्रजास्तद्बुद्धिसामर्थ्यं बाल्याज्ज्ञात्वाद्भुतं सदा ॥ ॥ ५६ ॥ भीत्या स्वधर्मनिष्ठाश्च स्वयमेत्य करं ददुः ॥ मेनिरे गुरुमेवैनं नृपमप्यात्मवित्तमम् ॥ ५७ ॥ यो वेद बाल्येऽन्यरहःकृतावं तुष्टो गुरुस्तेन च मंत्रदोऽस्मै ॥ चतुर्नवत्यूर्ध्वशतं गुरुं तं सर्वज्ञसिंहं क्षितिपं नताः स्मः ॥ ५८ ॥ श्रीदेशिकेंद्र उवाच ॥ देवेशानंद नाथेन विष्णुस्तुत्यापमृत्युतः ॥ जीवितो यः सबालोऽथ पंचाब्दो व्रतवान्पितुः ॥ ५९ ॥ विद्वद्द्वयोऽथ समभ्यस्य वेदशास्त्राणि बुद्धिमान् ॥ कृतोद्वाहश्च पित्रासौ धनिनातिसुरूपया ॥ ६० ॥ आसन्भोगाश्चानुकूलास्तस्याति धनवत्पितुः ॥ तथापि तेष्वनासक्तो मिथ्या पश्यन्स वेदवित् ॥ ६१ ॥ सर्वज्ञसिंहमेवासावात्माप्त्यै शरणं ययौ ॥ ज्ञात्वाविकारिणं सोऽपि पूर्णां दीक्षां ददावितः ॥ ६२ ॥

संतुष्टो गुरुः देवेशानंदः अस्मै महामंत्रप्रदोऽभवत्तं नताः स्मः । उपजातिवृत्तम् ॥५८॥ पितुः सकाशाद्व्रतवान्कृतमौंजीबंध इत्यर्थः ॥५९॥ पित्रा धनिकेन कर्त्रा । अतिसुरूपया स्त्रिया कृतोद्वाहश्चाभवत् ॥ ६० ॥ धनवतः पितुः सकाशात् तस्य विष्णुगुप्तस्य भोगा विषयसंबंधा अनुकूलाः आसन् बभूवुः । तथापि स वेदवेत्ता द्विजबालः भोगान्मिथ्या पश्यंस्तेष्वनासक्तः आसक्तिरहितोऽभवत् ॥६१॥ आत्माप्त्यै आत्मलाभाय इतः परं पूर्णां दीक्षां ददौ ॥६२॥

देवेशानंदस्तवनेन हेतुभूतेन विष्णुना गुप्त इति हेतोराख्यया नाम्ना विष्णुगुप्तः कृतः । अथ सः मंत्राणां जपात्सिद्धमंत्रोऽभवत् ॥ ६३ ॥
॥ ६४ ॥ पंचनवत्यधिकशतसंख्यं विष्णुगुप्तानंदं प्रणमति—मात्रेति । विष्णुः मात्रा दुर्विषेण घातितं यं देवेशानंदसिद्धेनोक्तयात्मस्तुत्या निमित्तभूतया ररक्ष
तं नताः स्मः ॥ ६५ ॥ व्रतांतिमैः व्रतबंधांतैः संस्कारैः ॥ ६६ ॥ संस्कृत इति पूर्वान्वितम् ॥ ६७ ॥ ६८ ॥ भाष्यकृता श्रीशंकरेण यद्भाष्यं

गुप्तः स्तुत्या विष्णुनेति विष्णुगुप्तः स चाख्यया ॥ कृतः श्रीगुरुणा सोऽथ सिद्धो मंत्रजपादभूत् ॥ ६३ ॥ तिष्ठन्गृहेऽपि पत्न्याढ्यो दासदासीयुतो धनी ॥ शैवीं कुर्वन्सदा पूजां निःस्पृहश्चात्मवित्तमः ॥ ६४ ॥ मात्रा दत्तं दुर्विषतोऽथ विष्णू ररक्ष सिद्धोदितयात्मनु त्या ॥ पंचांकचंद्रप्रमितं गुरुं तं श्रीविष्णुगुप्ताभिधमानताः स्मः ॥ ६५ ॥ श्रीदेशिकेंद्र उवाच ॥ विष्णुगुप्ताभिधस्याथ पुत्रोऽभूच्छुभ लक्षणः ॥ जातकर्मादिभिः पित्रा तत्तत्काले व्रतांतिमैः ॥ ६६ ॥ संस्कृतो दशवर्षोऽथ वेदशास्त्राणि चाग्रहीत् ॥ पितुरेव ततः पत्न्या तदुद्वाहं पिताऽकरोत् ॥ ६७ ॥ विष्णुगुप्तसुतो धीमान्सुरूपो मदनोपमः ॥ प्रौढः पत्न्या रूपवत्या रेमेऽसौ कामशास्त्रवित् ॥ ६८ ॥ वात्स्यायनर्षेः सूत्रेऽथ भाष्यं भाष्यकृता कृतम् ॥ अवलोक्य स्वयं तद्धि तदुक्तान्यासनान्यपि ॥ ६९ ॥ अभ्यसत्स्वस्त्रिया कामी रतौ कामविचेष्टनैः ॥ अक्षमाऽभ्यसितुं यानि स्त्री तानि स्वयमभ्यसत् ॥ ७० ॥ कुशलाभिश्च वेश्याभिर्व्ययीकृत्यामितं धनम् ॥ वितानशय्याभूषाभिः पुष्पाणां च सुगंधिनाम् ॥ ७१ ॥ कस्तूरीकेशरादीनां गंधैराढ्यः शिरोगृहे ॥ शृण्वन्गीतं सुरागाढ्यं पश्यन्नृ त्यमनेकधा ॥ ७२ ॥ तांबूलादींस्तथा भोगान्भुंजंश्चानंदवान्सदा ॥ अध्यापयन्कामशास्त्रं शिष्यान्निरलसः कृती ॥ ७३ ॥

वात्स्यायनसूत्रे कृतं स्वयं तत्कामशास्त्रं तत्रोक्तान्यासनानि च स्वस्त्रिया सह कामी कामुको विष्णुगुप्तपुत्रः रतौ रतिसमये कामचेष्टनैरभ्यसदित्यन्वयः ॥ ६९ ॥
यानि आसनानि ॥ ७० ॥ वेश्याभिः सहामितधनव्ययेनाभ्यसदिति पूर्वान्वयि । वेतनादिभिः सुगंधिपुष्पाणां कस्तूर्यादीनां गंधैश्च आढ्ये युक्ते उपरिगृहे शिरो
गृहे सुरागयुक्तं गीतं शृण्वन् अनेकधा नृत्यं पश्यन् भोगान्भुंजन् शिष्यानध्यापयन्नेवं निरलसः कुशलः विष्णुगुप्तपुत्रो भोगभुजां वरः आसीदिति त्रयाणाम्

न्वयः ॥ ७१ ॥ ७२ ॥ ७३ ॥ ज्ञातुं कामशास्त्रमिति शेषः ॥ ७४ ॥ कवयः कवितावित्ताराय कामशास्त्रं ज्ञातुं आययुरिति संबंधः । [illegible]
नरान्वयि ॥७५॥ हि यस्मादिदं ज्ञानिनां किं न शोभनं सर्वं कर्म शोभनमेव योग्यमेवेत्यर्थः॥७६॥भोगानंदाद्भोगसुखेन स्थितानां हास्यवहम्॥७७॥
तत्रादौ भोगसुखे चलत्वं दर्शयति । विस्मृत्येति । इह देहे अहंबुद्ध्यात्मानं विस्मृत्यैनं देहं सत्यं च मत्वा चरं चंचलं देहं चरैश्चंचलैर्भोगैः पुष्णाति । तत्र
दृष्टांतः । अंचंती प्रकाशमाना या लक्ष्मी अत्यल्पा विद्युत् तया चरं गांधर्वं गंधर्वनगरमिव चरैः चलैः भोगैश्चलदेहपोषणे कृतेऽतियुक्तंतापित्यर्थः ॥ ७८ ॥
ननु सर्वेऽप्येवं कुर्वंतीत्यत आह । अहो आश्चर्यं हरेर्माया विचित्रास्ति । या मा भवति नास्ति सा माया नाम्नैव स्वकीयमिथ्यात्वव्यक्ती स्वमिथ्यात्वदर्शि

आसीदित्थं विष्णुगुप्तसुतो भोगभुजां वरः ॥ राजानश्च तथा वेश्यास्तस्माज्ज्ञातुं समाययुः ॥ ७४ ॥ सरहस्यं कामशास्त्रं कवयः
कविताततौ ॥ वेदशास्त्रज्ञमप्येनं कामशास्त्रे विशेषतः ॥७५॥ विचार्य भोगान्भुंजानं ज्ञात्वा तं पंडितास्ततः ॥ भोगभट्टमिति प्राहुर्ज्ञानिनां
किं नहि शोभनम् ॥ ७६ ॥ एकदा भोगभट्टं तं रहस्याहूय तत्पिता ॥ आहेत्थं विदुषां श्रेष्ठं भोगानंदात्स्मितानननम् ॥ ७७ ॥ विष्णु
गुप्त उवाच ॥ विस्मृत्य चात्मानमिहैव देहे त्वहंधियाप्येनमृतं च मत्वा ॥ पुष्णासि भोगैश्च चरैश्चरं हि गांधर्वमंचल्लघुविद्युतेव ॥७८॥
अहो विचित्रास्ति हरेर्हि माया नाम्नैव या स्वीयमृषात्वव्यक्ती ॥ स्वकार्यवर्गस्य भवाभवाभ्यां तद्दर्शनापीयमृतेव भाति ॥ ७९ ॥
पूर्वं च पश्चात्समदेहभाजामकल्पितांतं च पुमान्प्रपश्यन् ॥ पाति स्वदेहं हि तथापि भोगैश्छिद्रोष्णमर्भोऽङ्गुलिभिर्यथाल्पम् ॥ ८० ॥

पादिका । स्वकार्यवर्गस्य विषयभोगादेः भवाभवाभ्यामुत्पत्तिलयाभ्यां तद्दर्शना मृषात्वदर्शना अपि ऋतैव सत्यैव भाति । भोगादीनां मिथ्यात्वान्यथानु
पपत्त्या तत्कारणभूताया मायाया मिथ्यात्वं कल्प्यत इत्यर्थापत्तिप्रमाणेन मायाया मिथ्यात्वमित्यर्थः । आख्यानकीवृत्तम्॥७९॥देहस्य मिथ्यात्वे दोषान्तर
क्तमित्याह । पूर्वं पश्चाच्च स्वदेहोत्पत्तेः पूर्वं पश्चाच्च समानदेहभाजां जनानाम् अकल्पितांतम् अतर्कितमृत्युं पश्यन्नपि चकारात्स्वस्यापि मृत्युं जानन्नपि तथापि
पुमान्स्वदेहं पाति रक्षति । यथाऽर्भो बालः अल्पं छिद्रगतमुष्णं सूर्यातपम् अंगुलिभिः रक्षति तद्वत् । देहस्य रक्षणे कृतेऽपि नाशोऽवश्यंभावीत्यर्थः ॥८०॥

आत्मसुखस्य उत्तमत्वं दर्शयन्भोगसुखस्य पुनस्तुच्छत्वमाह—सुखमिति । आत्मसुखसदृशमन्यत्सुखं नास्ति । " आत्मनस्तु कामाय सर्वं प्रियं भवति " इति श्रुतेः । आत्मविस्मृतितुल्यमन्यद्दुःखं नास्ति । " किं तेन न कृतं पापं चोरेणात्मापहारिणा । अन्यथा स्थितमात्मानमन्यथा प्रतिपद्यते । " इत्यत्रात्मविस्मरणस्य पापहेतुत्वेन दुःखरूपत्वम् । यद्भोगसुखमिह देहेऽज्ञैर्मन्यते । तत् अग्निदग्धे पुरुषे व्यजनस्य तत्संबंधिपवनस्य शैत्यमिव मन्यते । यथाग्निदग्धे व्यजनपवनो व्यर्थस्तथा नाशवति देहे भोगसुखं व्यर्थमित्यर्थः ॥ ८१ ॥ ननु भोगास्वीकारे शरीरयात्रापि न सेत्स्यतीत्याह । ज्ञेति । सर्वं मृषैवास्तीति ज्ञात्वा तेन देहेन भोगान्भोक्तुं तव यत्नो मास्तु । हि यस्माद्यत्नेन कृतं कर्म यथा बाधकं तथाऽजिताऽनायासेन कृतं कर्म कर्तुर्[illegible]

सुखं परं नात्मसुखोपमं हि दुःखं न तद्विस्मृतितुल्यमन्यत् ॥ यद्भोगसौख्यं त्विह मन्यसेऽज्ञैर्यथाग्निदग्धे व्यजनस्य शैत्यम् ॥ ८१ ॥
ज्ञात्वेति देहादि मृषैव तेन भोगांश्च भोक्तुं न तवास्तु यत्नः ॥ स्याद्बाधकं यत्नकृतं यथा हि कर्मार्जितं नैव तथान्न कर्तुः ॥ ८२ ॥
श्रीदेशिकेंद्र उवाच ॥ स भोगभट्टः पितृवाक्यमित्थं श्रुत्वा तदंघ्री प्रणमन्सुनम्रः ॥ प्राहेति सच्छिक्षितवत्सुवाक्यं सतां कुले मूर्खजनिर्हि नो स्यात् ॥ ८३ ॥ भोगभट्ट उवाच ॥ न विस्मृतिः कस्यचिदेव जंतोर्द्रष्टुर्भवेत्सर्वगतात्मनस्तु ॥ प्रियोऽङ्गिनां योऽस्ति हि निर्निमित्तं प्रियं जडं देहसुखं यदर्थम् ॥ ८४ ॥

भवति । " शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् " इति प्रामाण्याच्छरीरयात्रार्थमेव भोगस्वीकारो नेंद्रियप्रीत्यर्थमिति भावः ॥ ८२ ॥ सच्छिक्षितवत् सत्पुरुषेण शिक्षितमिव वाक्यं प्राह । हि यस्मात् सतां कुले मूर्खजन्म न भवेत् ॥ ८३ ॥ आत्मविस्मृतिर्दुःखहेतुरित्युक्तं तत्रात्मविस्मृतिः कस्यापि नास्तीत्याह—नेति हेतुद्वयेन । कस्यापि जंतोः द्रष्टुः साक्षिरूपस्य सर्वगतस्य आत्मनो विस्मृतिर्नास्ति । अंगिनां देहिनां यो निर्निमित्तप्रियोऽस्ति । देहसुखं देहादि सर्वं जडजातं यदर्थम् आत्मार्थं प्रियमस्ति । निर्निमित्तात्मप्रीतौ सर्वप्रतीतिगोचरायां सत्यां द्रष्टरि दृश्यभिन्ने प्रतीयमाने च सति न कस्याप्यात्म

विस्मृतिरिति भावः ॥ ८४ ॥ चलभोगैश्चलदेहं वृथा पुष्णासीत्युक्तं तत्राह । पाषाणमूर्ताविति । देही जीवः केशवादेः पाषाणादिमूर्तौ जडायामपि या असूनां प्राणादीनां प्रतिष्ठा भावना तद्वशतः तावन्मात्रेणैव भोगानुपचारान्समर्प्यैव समर्पणमात्रेणैव कृतार्थो भवेत् यदि तर्हि स्वतः प्राणप्रतिष्ठानिरपेक्षे असुमति प्राणेंद्रियादिमति देहे भोगान्समर्प्य इदं भोगसमर्पणेन कृतार्थत्वं किं न स्यात् किं तु स्यादेव । देहपोषणं जडमूर्तिपूजनापेक्षया बह्वर्थकरमित्यर्थः ॥ ॥ ८५ ॥ ननु देहपोषणस्य बह्वर्थकरत्वे मूर्तिपूजादिरूपस्योपासनाकांडस्यानर्थक्यमित्याशंक्य कृतोपास्तीनामधिकारिणामेव देहपोषणं बह्वर्थकरमित्याह—सत्संगतिरिति । जन्मनि जन्मनि यस्य पुरुषस्य सत्संगतिः भवेत् । तया सत्संगत्या सद्गुरुवर्यस्य लाभो भवेत् । हे ईश्वर हे शास्तः सेवया तस्य सद्गुरुव

पाषाणमूर्तावपि केशवादेरसुप्रतिष्ठावशतो हि देही ॥ भोगान्समर्प्यैव भवेत्कृतार्थः स्वतोऽसुमद्देह इदं न किं स्यात् ॥ ८५ ॥ सत्संगतिर्यस्य भवेद्भवे स्यात्तया ततः सद्गुरुवर्यलाभः ॥ चेत्तत्कृपाहीश्वरसेवयैव प्रोक्तं त्वृतं तस्य न चापरस्य ॥८६॥ अहं त्वनेकेषु भवेषु संगात्सतां हि लब्ध्वाद्य भवत्पदाब्जम् ॥ प्राक्संचितात्तद्विमुखोऽर्थधीश्च नोपेक्ष्यतेथापि निजः किलार्यैः ॥ ८७ ॥ इत्यात्मजोक्तं स च विष्णुगुप्तः श्रुत्वातितुष्टोऽस्य धियाऽऽत्मवत्या ॥ तं मंत्रपूर्णं त्विह भोगभट्टानंदं च नाम्नाऽखिलविच्चकार ॥ ८८ ॥ भोगान्प्रभुंजंश्च सदात्मनिष्ठो दधच्च वेषानिव नाट्यकर्ता ॥ तं षण्णवत्यूर्ध्वशतातसंख्यं श्रीभोगभट्टं गुरुमानताः स्मः ॥ ८९ ॥

र्यस्य कृपा स्याच्चेत्तदा तस्याधिकारिणः प्रोक्तं देहपोषणादि मत्प्रोक्तं ऋतं सत्यफलं भवेदन्यस्य सत्संगादिहीनस्य न च नैव सत्यफलम् । अकृतोपास्तीनामनधिकारिणां हितायोपासनाकांडस्य सार्थक्यमित्यर्थः ॥ ८६ ॥ नन्वेवं तवाधिकारः कुत्रास्तीत्याह—अहमिति । अहं तु अनेकजन्मसु सतां संगेन भवतः श्रीगुरोश्चरणकमलं लब्ध्वा प्राक्संचितकर्मणा तद्विमुखः युष्मच्चरणविमुखोऽर्थधीः विषयबुद्धिश्चास्मि । अथाप्यार्यैः सद्गुरुवर्यैर्निजः निजभक्तः नोपेक्ष्यते किल । श्रीपादुकालाभेनाहं कृतकृत्योऽस्मीत्यर्थः ॥ ८७ ॥ आत्मानुभववत्याऽस्य पुत्रस्य बुद्ध्याऽतितुष्टः संस्तं मंत्रैः पूर्णं कृतपूर्णाभिषेकम् इह संप्रदाये नाम्ना भोगभट्टानंदं चाखिलवित्सर्वज्ञो विष्णुगुप्तानंदगुरुश्चकार ॥ ८८ ॥ षण्णवत्यधिकशतसंख्यं भोगभट्टानंदं प्रणमति—भोगानिति । नाट्य

कारो वेषानिव भोगान्भुंजन्यः सदात्मनिष्ठोऽभवत्तं नताः स्मः ॥ ८९ ॥ सर्गोक्तगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह—सर्वज्ञेति । अजस्य जन्मरहितस्य जन्मनिवर्तकस्य वा । अवनीशतुल्यात्राजभोगसदृशान् ॥ ९० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायामेकोनत्रिंशः सर्गः ॥ २९ ॥ उत्रिंशे कथ्यते सर्गे द्व्यशीत्या पद्यतः कथा । भेरीभांकरमुख्यानां षण्णां तत्सिद्धिसूचिका ॥ ३० ॥ सिद्धिं गत इति सार्द्धान्वयः । गुरौ विष्णुगुप्तानंदे प्रोज्झ्य त्यक्त्वा ॥ १ ॥ अजने निर्जने क्वचिद्देशे एक एवावसत् ॥ २ ॥ सिद्धमनोः सिद्धमंत्रस्य पुरः अग्रे ॥ ३ ॥ उत्तरार्द्धमग्रनि

सर्वज्ञसिंहावनिपात्रयाणां कथां गुरूणां शृणुयात्पठेद्यः ॥ सर्वज्ञतां भक्तिमजस्य विष्णोर्भोगांस्तथाप्नोत्यवनीशतुल्यान् ॥ ९० ॥
इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे सर्वज्ञसिंहभूपत्यानंदादिगुरुत्रयकथावर्णनं नामैकोनत्रिंशः सर्गः ॥ २९ ॥ श्रीदेशिकेंद्र उवाच ॥
सिद्धिं गते गुरौ सोऽथ भोगभट्टोऽतिनिःस्पृहः ॥ लघुपुत्रवतीं भार्यां प्रोज्झ्य गेहं समृद्धिमत् ॥ १ ॥ देशान्बभ्राम चैकाकी समलो
ष्ठाश्मकांचनः ॥ भ्रमन्कर्णाटकं देशं प्राप्तस्तत्राजने क्वचित् ॥ २ ॥ एक एवावसद्दैवान्निरीहस्याप्ययथांजसा ॥ ययुर्भोगाः सिद्धमनोर्ह्य
खिलाः सिद्धयः पुरः ॥ ३ ॥ शिष्याश्च बहवस्तत्र विद्याभ्यासार्थमाययुः ॥ धनिनोऽनिच्छितमपि तत्र भक्ष्यांशुकादिकम् ॥ ४ ॥
स्वयमेत्य ददुस्तत्र भोगभट्टाय निर्जने ॥ ख्यातोऽभूद्भोगभट्टोथ तस्मिन्देशेऽखिलप्रियः ॥ ५ ॥ तत्राल्पदेशनृपतेर्गुरुराप्तसिद्धेः कीर्तिं
निशम्य च ययावथ दर्शनाय ॥ शिष्यैर्नृपादिभिरनेकसुवाद्यघोषपूर्वं रमेशभजनाभिरतोऽभिनृत्यन् ॥६॥ ज्ञात्वागतं तमिति चोत्थित
आसनस्थः श्रीभोगभट्ट इतरैः सह पादचारी ॥ प्रत्याययावभिमुखोसुमथेति चान्तः प्राहास्मदीयपुरतो न च वाद्यघोषः ॥ ७ ॥

बद्धम् ॥ ४ ॥ ५ ॥ तत्र भोगभट्टनिवासस्थाने कस्य चिदल्पदेशस्य नृपतेः गुरुः प्राप्तसिद्धेः भोगभट्टस्य कीर्तिं निशम्य नृपादिशिष्यैः सहानेकसुवाद्यघो षपूर्वकं रमेशस्य विष्णोः भजने अभिरतः भूत्वा नृत्यन् सन् दर्शनाय भोगभट्टानन्दस्य दर्शनाय ययौ तत्स्थानं प्राप ॥ ६ ॥ आसनस्थो भोगभट्टः तं राजगुरुम् आगतं ज्ञात्वा उत्थितः सन् इतरैः स्वकीयशिष्यैः सह पादचारी अमुं राजगुरुमभिमुखः प्रत्याययौ । अथास्मदीयानामग्रे वाद्यघोषो नास्तीत्यं

तर्मनसि प्राह भोगभट्ट इत्यर्थः ॥७॥ अथास्य भोगभट्टस्य कश्चिच्छिष्यः गुरोर्हृद्गताभिप्रायं ज्ञात्वा । हृद्गताभिप्रायज्ञाने हेतुगर्भविशेषणानि । अतिशुद्धहृदयः कविः प्राप्तभक्तिरिति अग्रे पतितं लघुवेणोः कांडं नलिकां स्वमुखे धृत्वा विततं भेरीसदृशशब्दं कृतवान् ॥ ८ ॥ तदेष भेरीशब्दः सर्ववाद्यानां शब्दमल्पं कुर्वन् सुदीर्घविभवादत्यन्तं दीर्घसामर्थ्येनासमंतान्ननाद । नादं श्रुत्वा सर्वे राजगुरोर्वादकाः करे मुखे च धृतान्युत्तमवाद्यानि यैस्ते सुवर्णाः चित्रगताः आलेख्यगतवादका इव तूष्णीं बभूवुः ॥ ९ ॥ अथ साधुः शिष्यैः सहाग्रे समागतं भोगभट्टं सर्वात्मज्ञानेनातिक्रमनीयं वीक्ष्य नत्वा च इति प्राह । इति

शिष्योऽस्य कश्चिदथ सद्गुरुहृत्स्थकामं ज्ञात्वाऽतिशुद्धहृदयः कविराप्तभक्तिः ॥ धृत्वाग्रतः प्रपतितं लघुवेणुकांडं भेरीस्वनं स्वमुखतो विततं चकार ॥ ८ ॥ कुर्वंल्लघुं निखिलवाद्यरवं तदैष शब्दः सुदीर्घविभवात्परितो ननाद ॥ श्रुत्वाखिलाः करमुखोद्धृतसाधुवाद्यास्तूष्णीं बभूवुरिव चित्रगताः सुवर्णाः ॥ ९ ॥ शिष्यैः समागतमथैनमवेक्ष्य साधुस्तं भोगभट्टमखिलात्मधियातिकांतम् ॥ नत्वेति चाह खलु सिद्धय उज्झितार्थमंजः प्रयांति न तु यत्नकरं च सेच्छम् ॥ १० ॥ श्रीभोगभट्ट इममाह तदेति साधुं जाने गुरोः पदयुगं न ततोऽन्यसिद्धीः ॥ त्यक्त्वा ह्यखंडसुखदं निखिलार्तिनाशं कश्चाणुसौख्यमिह वाञ्छति चाग्रकष्टम् ॥ ११ ॥ इत्थं मिथः प्रवदतोर्बहुभाषणानि साध्वोः सदंभगतदंभहृदोर्बभूवुः ॥ सत्कृत्य भोजनसुखैस्तमथोपचारैश्च प्रैषयन्निजपुरं गुरुभोगभट्टः ॥१२॥ तं शिष्यवर्यमपि सद्धृदयं सुमंत्रैः पूर्णं विधाय विधिना स च भोगभट्टः ॥ भेरीसमत्वकरणाद्दृढनेन भेरीभांकारसंज्ञमखिलह्यवरश्चकार ॥ १३ ॥

किं सिद्धयः उज्झितार्थं त्यक्तविषयं पुरुषं प्रति अंजः अनायासेन प्रयांति सेच्छं विषयेच्छावंतं सिद्धिप्राप्तये प्रयतमानं पुरुषं प्रति तु न प्रयांतीति ॥ १० ॥ तदा श्रीभोगभट्टः इमं साधुं प्रति इत्याह । इति किम् । अहं गुरोश्चरणद्वंद्वं जाने ततोऽन्याः सिद्धीर्न जानामि हि यस्मादखंडसुखदं तापत्रयनाशकं वस्तु परित्यज्य अल्पसुखम् अग्रे प्रथमं कष्टं दुःखं यस्य तद्वस्तु इह लोके को वांछति । न कोऽपीत्यर्थः ॥ ११ ॥ सदंभगतदंभहृदोः सदंभादंभमनसोः साध्वोः प्रवदतोः सतोः बहुभाषणानि बभूवुः । तं राजगुरुम् ॥ १२ ॥ तं पूर्वोक्तभेरीशब्दकर्तारं सद्धृदयं शुद्धचित्तम् उत्तमैर्मंत्रैर्विधिना पूर्णं पूजाभिषिक्तं विधाय

कत्वा सर्वज्ञोत्तमः स भोगभट्टः मुखेन भेरीसमत्वानुकरणेन भेरीभांकारसंज्ञं चकार । भेर्याः भांकारः शब्दानुकरणं यस्मादित्यर्थः ॥ १३ ॥ सप्तनवत्य धिकशतसंख्यं भेरीभांकारानंदं प्रणमति—ईशतुष्ट्यै गुरुप्रीतये अन्यवाद्यानि अजयत् तुच्छीकृतवान् । तं नताः स्मः ॥ १४ ॥ पूर्वेण वयसा युक्तोऽप्यर्थेषु विषयेषु निःस्पृहः आसीत् ॥ १५ ॥ १६ ॥ १७ ॥ तदेव बाबेति नाम ॥ १८ ॥ सस्त्रियः स्त्रीयुक्ताः नाभुः ॥ १९॥ पित्रा भेरीभांकारानंदेन सहालकावतीम् अलंदीक्षेत्रम् ॥ २० ॥ आस्मात्परं भिन्नं तद्ब्रह्मचैतन्यं चिन्त्यतां सर्वैरिति शेषः ॥ २१ ॥ जडदेहादेरध्यासेन बंधो मोक्षश्चैतन्यचिंत

यश्चान्यवाद्यानि मुखेन भेरीसमस्वनेनाजयदीशतुष्ट्यै ॥ अगांकचंद्रप्रमितं च भेरीभांकारकं तं गुरुमानताः स्मः ॥ १४ ॥
श्रीदेशिकेंद्र उवाच ॥ गुरोः समीपगो भेरीभांकारानंद आत्मवान् ॥ पूर्वेण वयसाऽप्यर्थेषु निःस्पृहोऽर्थेषु सर्वदा ॥ १५ ॥ पत्नीमुद्वहतीं
श्रुत्वा गुरुणा प्रेषितो गृहम् ॥ अथ तस्याभवन्पुत्रास्त्रयः कांत्यार्कसन्निभाः ॥ १६ ॥ राघवः केशवः कृष्णः कृताः पित्रेति नामतः ॥
कनिष्ठं लालयंत्याह माता बाबेति सर्वदा॥१७॥ तदेव विश्रुतं नाम तस्याभूदथ ते त्रयः ॥ उपनीताः क्रमात्पित्रा बाल्याद्वै [illegible] ॥ १८ ॥ प्राहुर्वेदांतसिद्धांतान्न विदुर्यान्महत्तमाः ॥ ब्रह्मचारिण एवासुः पित्रोक्ताश्च न सस्त्रियः ॥१९॥ एकदा ते त्रयः पित्रा द्रष्टुं ज्ञाने श्वरोत्सवम् ॥ अनेकसाधुवृंदाढ्यं ययुः प्रीत्यालकावतीम् ॥ २० ॥ मिलिताः साधवस्तत्र मिथः प्राहुरिदं जगत् ॥ जडमस्मात्परं ब्रह्म चैतन्यं तद्विचिंत्यताम् ॥ २१ ॥ जडाध्यासाद्भवेद्बंधो मोक्षश्चैतन्यचिंतनात् ॥ श्रुत्वेत्थं राघवः प्राह कथं विश्वमिदं जडम् ॥
॥२२॥ चिदेव सर्वं स्फुरतीदमार्याः स्फूर्तिर्यतः स्याच्चित एव धर्मः ॥ न धर्मिणो याति पृथक्च धर्मो यद्धर्मवत्तु तदेव तत्स्यात् ॥२३॥

नेन च मोक्षो भवेत् । इदं विश्वं जडं कथं भवेन्न कथमपीत्यर्थः ॥ २२ ॥ एवं विश्वस्य जडत्वं मुक्तो निराकृत्य युक्त्या सर्वस्य चैतन्यरूपत्वं साध यति—चिदित्यादिचतुर्भिः । हे आर्याः इदं जगच्चैतन्ययुक्तमेव स्फुरति । यतः कारणात्स्फूर्तिश्चैतन्यस्यैव धर्मोऽस्ति । किं च स्फूर्तिरूपो धर्मो धर्मिणश्चैतन्यात्पृ थङ्न याति जडधर्मत्वं न प्राप्नोति । घटः स्फुरति देहः स्फुरतीत्यादिप्रतीतौ यत्तु जडं यद्धर्मवत् यस्य चैतन्यस्य स्फुरणधर्मेण युक्तं प्रतीयते तज्जडं तदेव

भवेत् चैतन्यमेव भवति । स्फुरणरूपधर्मान्यथानुपपत्त्या जडस्य चैतन्यरूपत्वं कल्प्यत इत्यर्थः ॥ २३ ॥ किंचादः इदं जगच्चैतन्येनैव प्रकाशते । यदा तु दृश्यस्य द्रष्टुः सकाशाद्भिन्नत्वं मन्यते तदोपादानत्वमंगीकरोति—क्वचिदित्यादिना शेषपद्येन । अयं भावः । " एकोहं बहुस्यांप्रजायेय । स ऐक्षत लोकानुसृजै " इत्यादिश्रुतिभिः निमित्तत्वमुपादानत्वं च चैतन्यस्य यथा प्रतिपाद्यते तथा स्वानुभवेनापि स्वान्यादिवच्चैतन्यस्यैवाभिन्नसाक्षित्वेन निमित्तोपादानत्वमिति ॥ २४ ॥ किं च वृक्षरूपकत्वेन सर्वस्य चैतन्यत्वमाह बीजादिति । जनैर्यथा वृक्षो बीजान्न पृथग्वर्ण्यते बीजस्य प्रतीतिरस्य वृक्षस्य प्रतिफलेषु भवति । तथा अदः इदं सर्वं चितः पृथक् नास्ति किल अस्य सर्वस्यानेकतायां भिन्नभिन्नरूपत्वेऽपि चैतन्यस्फूर्तिर्भवति ॥ २५ ॥

संकाशितं यत्तु चितैव नित्यं क्वचित्स्थितिर्नैव विना चितोस्य ॥ स्वर्णाद्यथालंकृतयो न भिन्नास्तथैव चैतन्यमिदं न चान्यत् ॥२४॥ बीजान्न वृक्षः पृथगीऽर्यते वै स्फूर्तिर्हि बीजस्य फलेफलेऽस्य ॥ चितस्तथा नैव पृथक्किलादोऽस्यानेकतायामपि चित्प्रतीतिः ॥ २५ ॥ चैतन्यमेवेदमतः श्रुतिश्च प्राह स्फुटं पूरुष एव सर्वम् ॥ जडं पृथक्चिच्च समीर्यते यैर्ज्ञातं न तैस्तत्त्वमिहेति मद्धीः ॥२६॥ श्रीदेशिकेंद्र उवाच ॥ साधवस्त इति श्रुत्वा वयोल्पस्यापि भाषणम् ॥ विस्मिताः प्राहुरन्योन्यमहो बालोऽप्ययं श्रुतेः ॥ २७ ॥ सिद्धांतान्वक्ति चार्यैर्न ज्ञातास्तत्त्वतस्तु ये ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमुक्ताऽखिलाः संतस्तन्नामाहुस्तदेति च ॥ २८ ॥ श्रुतं राघवचैतन्यं चैतन्याखिलकीर्तनात् ॥ तदाप्रभृति बंधूनां त्रयाणामपि चाभवत् ॥ २९ ॥

ननु बीजस्येव चैतन्यस्य विकारित्वं स्यादित्याशंक्य विवर्ताधिष्ठानत्वेनाविकार्यत्वमंगीकुर्वन्नुपसंहरति—चैतन्यमिति । "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् " इति श्रुतिः पुरुषपदेन सर्वस्य चैतन्यत्वं प्राह । जडं चैतन्यं यैः पृथग्वर्ण्यते ज्ञायते च तैस्तत्त्वं न ज्ञातं इति मद्धीः मम निश्चयोऽस्ति । सर्वचैतन्यज्ञानिन एव साधव इत्यर्थः ॥ २६ ॥ साधव इति । वयसाल्पस्यापि बालस्य । अहो इत्याद्युत्तरान्वयि ॥ २७ ॥ आर्यैः श्रेष्ठैः तत्त्वतो यथार्थतः ॥ २८ ॥ सर्वचैतन्यस्याखिले सर्वत्र वर्णनेन श्रुतं विश्रुतं यथा स्यात्तथा राघवचैतन्यं नामाहुरिति पूर्वान्वितम् । बंधूनां राघवचैतन्यं केशवचैतन्यं बाबाचैतन्य

मितिवाक्याढ्या चैतन्योपनामयुक्ताऽऽख्याऽभवत्। पूर्णदीक्षया पूर्णदीक्षाविधानेन मंत्रान्ददावित्यन्वयः॥२९॥३०॥ अवरो बावाचैतन्यः अखिलं मंत्रशास्त्र रहस्यम् ॥ ३१ ॥ प्राकृते महाराष्ट्रभाषायां कविः अभंगादिनिर्माणकर्ता ॥ ३२ ॥ ३३ ॥३४॥३५॥३६॥ अष्टनवत्यधिकशतसंख्यं राघवचैतन्यानंदं

आख्या चैतन्यवाक्याढ्या निःस्पृहाणां सुविश्रुता ॥ ज्येष्ठायाथ ददौ भेरीभांकारः पूर्णदीक्षया॥३०॥ मंत्रान्राघवचैतन्यानंदं नामास्य चाकरोत् ॥ तस्मात्केशवचैतन्यस्तस्मात्प्रापावरोऽखिलम् ॥३१॥ तस्यैवासीत्तुकारामः शिष्यो यः प्राकृते कविः ॥ निःस्पृहस्तत्कथा लोके प्रसिद्धातो न वर्णिता ॥ ३२ ॥ श्रूयतां राघवादीनां त्रिबंधूनां पुनः कथाम् ॥ निःस्पृहास्ते त्रयः शांताः सदा वेदांतभाषिणः॥ ॥ ३३ ॥ नैकत्र संस्थितिस्तेषां स्वतंत्राणां सदात्मताम् ॥ पश्यतां सर्वभूतेषु दयाढ्यानां महात्मनाम् ॥३४ ॥ तान्सिद्धान्मेनिरे संतो निर्निंदुर्दुर्धियः खलाः ॥ कदाचिद्विप्रवेषास्ते वेदशास्त्रार्थभाषिणः ॥ ३५ ॥ कदाचिद्यावनं वेषं कृत्वाहुस्तन्मतं परम् ॥ मेनिरे यवनाश्चैतान्सिद्धाञ्ज्ञात्वाऽखिलप्रियान् ॥ ३६ ॥ इत्थं जगच्चिन्मयमेव पश्यन्सावात्म्यसौख्यानुभवे निमग्नः ॥ नागांकचंद्रं खलु राघवादिचैतन्यकं तं गुरुमानताः स्मः ॥३७ ॥ श्रीदेशिकेंद्र उवाच ॥ कश्चिद्विप्रसुतः पित्रा निर्बुद्धः पठनाक्षमः ॥ गृहाद्बहिष्कृतः सोऽथ ययौ राघवदेशिकम् ॥ ३८ ॥ श्रुत्वा तस्याखिलं वृत्तं दयाढ्यः प्राह तं गुरुः ॥ सेवापरो भवास्माकं तवाभीष्टं भविष्यति ॥ ॥ ३९ ॥ एवमुक्तः स तत्सेवां निर्व्यलीकतयाऽकरोत् ॥ व्रजंस्तेषां स्वयं चाग्रे भ्रमत्स्वेतेषु बंधुषु ॥ ४० ॥ दध्मौ शंखं महानादं तदागमनसूचकम् ॥ इत्थं शंखधरं मार्गे सेवासक्तं गुरुस्थितौ ॥ ४१ ॥

प्रणमति—इत्थमिति । स्पष्टम् ॥ ३७ ॥ ३८ ॥ ३९ ॥ निर्व्यलीकेन निष्कपटमनसा । उत्तरार्द्धमुत्तरान्वयि ॥४०॥ उत्तरार्द्धमुत्तरान्वयि । गुरुस्थितौ

गुरुगृहे ॥ ४१ ॥ अथाधुत्तरान्वयि ॥ ४२ ॥ सद्वियं सद्बुद्धिम् ॥ ४३ ॥ अफला निष्फला ॥ ४४ ॥ पूर्णाभिषेकदीक्षया संप्रदायप्रवर्तकं चकार ॥ ॥ ४५ ॥ नवनवत्यधिकशतसंख्यं शंखधरानंदं प्रणमति—पित्रेति । विमुक्तस्त्यक्तोऽपि संप्रदाये श्रेष्ठो योऽभवत्तं नताः स्मः ॥ ४६ ॥ कदाचिदिति । हि यस्मात्तवालिके ललाटे संततिर्भवित्री दृश्यते नूनमित्यन्वयः ॥ ४७ ॥ ४८ ॥ द्विजानिति पूर्वान्वयि । द्विजाः ॥ ४९ ॥ तत्र हेतुः स्वतंत्राचार

प्राहुः शंखधरं सर्वे जनास्तं गुरुसेविनम् ॥ अथ राघवचैतन्यः सेवासक्तं निरीक्ष्य तम् ॥ ४२ ॥ कृपया तस्य शिरसि हस्तं दत्त्वैव सद्धियम् ॥ चकाराथावसत्तेषां सन्निधावेव शंखभृत् ॥ ४३ ॥ शृण्वन्वेदांतवाक्यानि मिथ उक्तानि तैः सदा ॥ बभूव ब्रह्मविद्वर्यः सतां सेवा हि नाफला ॥ ४४ ॥ एवं राघवचैतन्यः पूर्णया दीक्षयाऽकरोत् ॥ नाम्ना शंखधरानंदं संप्रदायप्रवर्तकम् ॥ ४५ ॥ पित्रा विमुक्तोऽपि गुरोः प्रसादाद्यः संप्रदायप्रवरो बभूव ॥ एकोनितं तं द्विशतं हि शंखधराभिधं स्वीयगुरुं नताः स्मः ॥ ४६ ॥ कदाचिद्राघवः प्राह कनिष्ठं केशवं हसन् ॥ पत्नी कार्या त्वया बंधो संततिर्हि तवालिके ॥ ४७ ॥ भवित्री दृश्यते नूनमित्थमाज्ञापितो ययौ ॥ केशवः संभ्रमन्पृथ्वीं पत्नीच्छुर्याचयन्बहून् ॥ ४८ ॥ द्विजास्ते न ददुः केऽपि मूढाः कन्यां विदां वरम् ॥ सुरूपं तरुणं चामुं ज्ञात्वाप्यार्यकुलोद्भवम् ॥ ४९ ॥ स्वतंत्राचारिणं सोऽथ प्रातः कुलपुरं महत् ॥ तत्रत्यो यवनो राजा मृता तस्यात्मजा सुदृक् ॥५०॥ संजीवितां केशवेन मंत्रैस्तुष्टो नृपो ददौ ॥ यूने यवनवेषाय केशवाय सुरूपिणे ॥ ५१ ॥ अथ तस्यां बभूवास्मात्संततिः पुत्रपौत्रिकी ॥ प्रवीणा यावने शास्त्रे चात्मवेत्री श्रियान्विता ॥ ५२ ॥ मत्वा तं यवनाः सर्वे योगिनं केशवाभिधम् ॥ केसोदराजमित्याहुरात्मज्ञं भेदवर्जितम् ॥५३॥ समाधिस्तस्य तत्रैव पूजितो यवनैः सतः ॥ प्रसिद्धस्तद्भवानां च प्रोक्तेत्थं केशवस्थितिः॥ ॥ ५४ ॥ श्रीदेशिकेन्द्र उवाच ॥ प्राप्तो राघवचैतन्यः परां सिद्धिमथास्य कौ ॥ भौतिकं पतितं तत्र वादोऽभूद्यवनैर्द्विजैः ॥ ५५ ॥

वंतमिति पूर्वान्वयि । कुलपुरं कलबुर्गेतिप्रसिद्धम् । सुदृक् सुनेत्रा ॥ ५० ॥ ५१ ॥ ५२ ॥ भेदवर्जितं भेददृष्टिरहितम् ॥ ५३ ॥ सतः साधोः समाधिः तद्भवानां तद्वंशीयानां समाधयस्तत्र नगरे प्रसिद्धाः संति ॥ ५४ ॥ राघवस्थितिमाह—प्राप्तइतिषड्भिः । भौतिकं शरीरम् ॥ ५५ ॥

उत्तरार्द्धमुत्तरान्वयि ॥५६॥ तेनैव बाबाचैतन्येन । क्षणात् क्षणेन निष्कासितं यदा तदाद्भुतं जातम् ॥५७॥ अदरे वामभागे पौष्पः पुष्पाणां राशिरभूत् ॥ ॥ ५८ ॥ उभयांशकः ब्राह्मणयवनयोः अंशः कृपालेशो यस्मात ॥ ५९ ॥ उक्तवत्सव्यदक्षिणभेदेन ॥ ६० ॥ ततस्तत्र विषये देशे ॥ ६१ ॥ शंखधरात्संप्रदायप्रवृत्तिमाह—आसीदित्यादिना । गुरूपमः राघवचैतन्यसदृशः ॥ ६२ ॥ पराभट्टारिकां परशिवाभिन्नांबिकां देवीम् ॥ ६३ ॥ शत

यवनाः प्राहुरस्माकं सिद्धोऽयं ब्राह्मणास्तथा ॥ विवदत्सु मिथस्तेषु बाबाचैतन्य आत्मवान् ॥ ५६ ॥ वस्त्रेणाच्छादयद्देहं राघवस्याखिलात्मनः ॥ क्षणान्निष्कासितं वस्त्रं तेनैवासीत्तदाद्भुतम् ॥ ५७ ॥ सव्यभागेऽस्य तुलसीराशिः पौष्पोऽपरे ऽप्यभूत् ॥ दृष्ट्वेत्थं विस्मिताः सर्वे तान्प्राहेति स योगिराट् ॥ ५८ ॥ ब्राह्मणैः सव्यतः पूजाऽपसव्ये यवनैः सदा ॥ कार्याथात्रैव रचितः समाधिश्चोभयांशकः ॥ ५९ ॥ उक्तवत्पूज्यतेऽद्यापि ब्राह्मणैर्यवनैरपि ॥ समाधिर्विश्रुतोऽलंदपुरे राघवसद्गुरोः ॥ ६० ॥ बाबाचैतन्ययोगींद्रसमाधिर्विषये ततः ॥ बभूव ब्राह्मणैः पूजा क्रियतेऽस्य विधानतः ॥ ६१ ॥ श्रीदेशिकेन्द्र उवाच ॥ आसीच्छंख धरानंदो ब्रह्मचारी गुरूपमः ॥ भट्टारकस्तस्य शिष्यो मंत्रशास्त्रविशारदः ॥ ६२ ॥ अयजत्सोऽनन्यभावात्पराभट्टारिकांबिकाम् ॥ आत्मनिष्ठोऽपि सच्छिष्यसंप्रदायप्रवृत्तये ॥ ६३ ॥ योऽभिन्नभक्त्यैव समर्च्य देवीं प्रातस्तथाख्यां भुवि मंत्रवेत्ता ॥ गुरुं तमिज्यं द्वि शतातसंख्यं भट्टारकानंदममुं नताः स्मः ॥ ६४ ॥ पुत्रो भट्टारकस्यासीद्विष्णुभक्तिपरायणः ॥ विष्णुशर्मेति विख्यातः काव्यकर्ताऽ खिलप्रियः ॥ ६५ ॥ पंचोपाख्यानकाव्यं योऽनेकाख्यानैः सुनीतिदम् ॥ दुर्वृत्तानां नृपार्भाणां सद्वृत्तायाकरोत्सुधीः ॥ ६६ ॥ तं धीमंतं पिता वीक्ष्य पूर्णां दीक्षां ददावथ ॥ विष्णुशर्मानंद इति नाम्ना सद्गुरुणोदितः ॥ ६७ ॥ यो बाल्यतः श्रीहरिभक्तियुक्तः काव्या नि चक्रे भुवि विश्रुतानि ॥ एकोत्तरं तं द्विशतातसंख्यं श्रीविष्णुशर्माणमिहानताः स्मः ॥ ६८ ॥

द्व्यसंख्याकं भट्टारकानंदं प्रणमति—य इति । तदाख्यां भट्टारकाभिधानं यः प्रातस्तं नताः स्मः ॥ ६४ ॥ विख्यातः राजाश्रितत्वेन प्रख्यातः ॥ ६५ ॥ सुनीतिदम् उत्तमनीतिप्रापकं सद्वृत्ताय सदाचरणाय ॥ ६६ ॥ ६७ ॥ एकाधिकद्विशततमं विष्णुशर्मानंदं प्रणमति—य इति स्पष्टार्थम् । आख्यानकी

वृत्तम् ॥ ६८ ॥ अथेति । पुराणश्रवणे आदरः प्रीतिर्यस्य ॥ ६९ ॥ शांकरं शंकरकृतम् । श्रुत्यर्थं पुराणश्रवणार्थं यांति आयांति ॥ ७० ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि ॥ ७१ ॥ क्रमागतं क्रमेण प्राप्तगोवर्द्धनोद्धारणं श्रुत्वा सर्वे श्रोतार इति वक्ष्यमाणवाक्यं प्राहुरिति संबंधः ॥ ७२ ॥ तद्वाक्यमाह–अहोइति ॥ ७३ ॥ इत्थं विष्णुमहत्त्वसूचकम् । पितृसंगेनात्मनि संस्थितिः निश्चयो यस्य सः ॥ ७४ ॥ अस्य जगतः सर्गादिकारणस्य हरेः अदः इदं गोवर्द्धनोद्धरणरूपं कर्म अत्यद्भुतम् अत्याश्चर्यकरं नास्ति । येन हरिणा आत्मनीदं कल्पितं यदा तदा गोवर्द्धनो न कल्पितः किम् अपि तु

अथासीद्विदुषां श्रेष्ठः पुत्रः श्रीविष्णुशर्मणः ॥ पितुः सेवारतोऽत्यंतं पुराणश्रवणादरः ॥ ६९ ॥ नित्यं वक्ति पिता भाष्यं प्रातः शांकरमात्मवित् ॥ दिनशेषे पुराणं च श्रुत्यर्थं यांति भावुकाः ॥ ७० ॥ विद्वांसश्चात्मनिपुणाः शांताः सूक्ष्मार्थवेदिनः ॥ अथैकदा विष्णुशर्मा विष्णोर्भागवतं सुधीः ॥ ७१ ॥ कथयामास सर्वेभ्यः श्रद्धालुभ्यः क्रमागतम् ॥ गोवर्द्धनोद्धारणं वै हरेरद्भुतकर्मणः ॥ ॥ ७२ ॥ श्रुत्वाखिला इति प्राहुरहो कर्माद्भुतं हरेः ॥ उद्धृतो यत्सप्तवर्षेऽमुना गोवर्द्धनो महान् ॥ ७३ ॥ श्रोतृवाक्यं निशम्येत्थं विष्णुशर्मसुतो हसन् ॥ तांश्चाहाल्पवयाश्चेति पितृसंगात्मसंस्थितिः ॥ ७४ ॥ विष्णुशर्मसुत उवाच ॥ नात्यद्भुतं कर्म हरेरदोऽस्य सर्ग स्थितिप्रत्यवहारहेतोः ॥ येनाखिलं कल्पितमात्मनीदं गोवर्द्धनः किं न च कल्पितोऽयम् ॥ ७५ ॥ किं प्राकृतास्ते निजकल्पितस्य भारं न मेरोरपि धर्तुमीशाः ॥ लीलातनोस्तस्य हि शब्दमात्रमदोऽधनस्येव नटस्य राज्यम् ॥ ७६ ॥ गोवर्द्धनोद्धर इतीदममुष्य नाम्नानंताभिधासदृशमेव वरं न मन्ये ॥ गोवर्द्धनोद्धर इहास्ति गुरोः प्रसादाद्यस्तं नमामि मनुजेष्वपि देवतुल्यम् ॥ ७७ ॥

कल्पित एव । आख्यानकीवृत्तम् ॥ ७५ ॥ एवं कल्पितगोवर्द्धनस्योद्धारणेनाश्चर्यकरत्वं दृष्टांतेनाह–किमिति । ये प्राकृतजनास्ते स्वकल्पितस्य मेरो भारं धर्तुं न समर्थाः किम् अपि तु समर्था एव । हि यस्माल्लीलातनोस्तस्य हरेः अदः इदं विश्वम् अधनस्य दरिद्रस्य नटस्य राज्यमिव शब्दमात्रं भवति । “ वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ” इति श्रुतौ विकारस्य शब्दमात्रत्वमित्यर्थः ॥ ७६ ॥ किंच गोवर्द्धनोद्धरइति कृष्णस्य नामाऽनंतनाम

सदृशमहं मन्ये । वरं श्रेष्ठम् । मनुष्येषु गुरुप्रसादेन यो गोवर्द्धनोद्धरोऽस्ति तमिह लोके देवतुल्यमहं नमामि ॥ ७७ ॥ ननु गुरुप्रसादेन कथं गोवर्द्धनोद्धारकत्वं मनुष्यस्येत्याशक्य गोवर्द्धनोद्धरपदस्यार्थमाह—गोशब्द इति । गोशब्द इंद्रियपरोऽस्ति अर्थसंघे विषयसमुदाये स्वस्वगतिभिस्तेषामिंद्रियाणां वर्द्धनं वृद्धिः यस्मान्मनसः सकाशाद्भवेत्तद्गोवर्द्धनम् इंद्रियप्रवर्तकं मनः ऊर्ध्वमुद्धरति प्रत्यक्प्रवणं यः करोति स पुरुषश्रेष्ठो गोवर्द्धनोद्धरनामा भवति । जितचित्त एव गोवर्द्धनोद्धर इत्यर्थः ॥ ७८ ॥ ते श्रोतारः । अमुनायं गोवर्द्धनपदस्यार्थः सम्यगुक्तः ततः कारणादितः परं गोवर्द्धनोद्धरइति नाम्नायमुर्व्यां प्रख्यातोस्तु इत्थं प्राहुः ॥ ७९ ॥ सद्भ्यः सत्पुरुषेभ्यः प्राप्ता आख्या नाम यस्य तं विलोक्य मंत्रान्ददौ । तदानंदाभिधां गोवर्द्धनो

गोशब्द इंद्रियपरोऽस्ति भवेद्धि यस्मात्तद्वर्धनं स्वगतिभिस्तु तदर्थसंघे ॥ गोवर्द्धनं मन इहोद्धरतीदमूर्ध्वं गोवर्द्धनोद्धर इति प्रवरः स पुंसाम् ॥७८॥ आकर्ण्य चाल्पवयसोऽपि वचस्त इत्थं प्राहुर्हि सम्यगुदितोऽर्थ इतोऽमुनायम् ॥ गोवर्द्धनोऽद्धरपदस्य ततोस्तु नाम्ना गोवर्द्धनोद्धर इति प्रथितोऽयमुर्व्याम् ॥ ७९ ॥ श्रीदेशिकेंद्र उवाच ॥ सद्भ्यः प्राप्ताख्यमुद्वीक्ष्य स्वात्मजं तुष्टधीर्ददौ ॥ तस्मै मंत्रान्विष्णुशर्मा तदानंदाभिधामपि ॥८०॥ योल्पे वयस्यात्मविदां पुरस्तान्नामार्थमाहाऽऽत्मपरं हि सम्यक् ॥ तं द्व्युत्तरं हि द्विशतात्तसंख्यं गोवर्द्धनाख्योद्धरमानताः स्मः ॥ ८१ ॥ पठेत्तथा यः शृणुयाच्च भेरीभांकारतः षड्गुरुसच्चरित्रम् ॥ सिद्धीशताज्ञानशिवाजभक्तिमनोजयांश्चापि लभेत्स मर्त्यः ॥८२॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भेरीभांकारादिषड्गुरुकथावर्णनंनाम त्रिंशः सर्गः ॥३०॥

श्रीदेशिकेंद्र उवाच ॥ गोवर्द्धनोद्धरानंदस्यासन्पुत्रास्त्रयः प्रियाः ॥ उपनीताः कृतोद्वाहाः पित्रा बाल्यात्सुलालिताः ॥ १ ॥

द्धरानंदनामापि ददौ ॥८०॥ द्व्यधिकशतद्वयसंख्यं गोवर्द्धनोद्धरानंदं प्रणमति—य इति। आत्मविदां ज्ञानिनामग्रे गोवर्द्धनोद्धरनामार्थम् आत्मपरं यःसम्यगाह। तं द्व्युत्तरं यथा स्यात्तथा। गोवर्द्धनाख्यस्य मनस उद्धारकं गोवर्द्धनोद्धरानंदं नताः स्मः॥८१॥ भेरीभांकारानंदाद्गुरुषट्कचरित्रस्य पाठादेः फलं क्रमेणाह। पठेदिति । सिद्धिं ईशत्वमीश्वरतां ज्ञानं शिवभक्तिम् अजभक्तिं विष्णुभक्तिं मनोजयं च लभेत् ॥ ८२ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां त्रिंशः सर्गः ॥३०॥ एकत्रिंशेथ वै पद्यैर्नवत्या देशिकास्त्रयः।वर्ण्यंते धनपालाद्याः पृथक्तत्तत्कथानकैः ॥ ३१ ॥ गोवर्द्धनोद्धरेत्यादि ॥१॥

॥ २ ॥ ३ ॥ आबाल्याद्बालत्वमारभ्य विदुषामपि जेतारः ॥ ४ ॥ विद्यावनो विद्यारण्यस्तदाद्याः । सदर्चायाभुजगपूजायां मंत्रसाधने च मूर्खोऽनभिज्ञः ॥ ५ ॥ तद्विद्याधनं पुस्तकान्येव भांडानि तेषु पूर्वजैः पूर्वगुरुभिः क्षिप्तं स्थापितं मयापि तत्राल्पं तद्धनं क्षिप्तम् अग्रतः अग्रे

विद्वान्नैकोऽपि तत्रासीत्पितर्यध्यापकेऽपि च ॥ नानिष्टं वक्ति तेभ्योऽणु पिता चाध्यापयंन्सदा॥२॥ विंशोनाधिकवर्षेषु तेषु जातेष्वथां तरे ॥ पिता चिंतातुरोऽत्यंतं प्राहेत्थं श्रीगुरुं स्मरन् ॥३॥ गोवर्द्धनोद्धर उवाच ॥ अहो विद्याकुलेऽस्माकं त्वासुः सर्वेऽपि पंडिताः ॥ श्रीहर्षाद्यास्तु जेतारश्चाबाल्याद्विदुषामपि ॥ ४ ॥ कालिदासादिकवयः सिद्धा विद्यावनादयः ॥ नैकोऽप्यत्राभवन्मूर्खः सदर्चामंत्रसाधने ॥ ५ ॥ विद्यैव धनमस्माकं वयं स्वर्णेच्छवो न हि ॥ पारंपर्येण पूर्वैर्यद्दत्तं प्राप्तं मयापि तत् ॥ ६ ॥ क्षिप्तं पुस्तकभांडेषु पूर्वजैस्तन्मयाप्यणु ॥ अधुना पालकस्तस्य दृश्यते नैव चाग्रतः ॥ ७॥ स्वर्णाद्यं नीयते चोरैर्दंडाद्राज्ञा तु गृह्यते ॥ विभज्यते बंधुभिस्तु भोक्तुं नैकेन तत्क्षमम् ॥८॥ विद्याधनं तु यस्यास्ति तस्य भोक्ता स एव हि ॥ स्वदेशे परदेशे वा न भीस्तस्यान्यतोऽण्वपि ॥९॥ स्वर्णं तु हीयते दानादिदं तेनाधिकं भवेत् ॥ अदत्तं चेत्क्षयं याति कस्मै देयं मया हि तत् ॥१०॥ ग्रहीतुं न क्षमाः पुत्राः प्राक्तनान्मे त्रयोऽप्यमी ॥ स्वर्णादिधनमप्यस्ति मद्गृहे तस्य पालने ॥११॥ न चिंताण्वपि मच्चित्ते यथा पुस्तकपालने ॥ इत्थं विचिंत्य चित्तेऽसौ देवताराधनं जपैः ॥ १२ ॥ चकार मूलमंत्राणां स्मरञ्छ्रीगुरुपादुकाम् ॥ तदेष्टदेवता साक्षादाविर्भूता तदग्रतः ॥ १३ ॥ कार्या न चिंतेत्याहैनं पौत्रस्ते भविता सुधीः ॥ विद्वद्वरो यस्य शिष्यः कीर्त्या विश्वप्रपूरकः ॥ १४ ॥ उक्त्वेत्यंतर्हिता साथाकर्ण्य गोवर्द्धनोद्धरः ॥ चेतसासीत्सुसंतुष्टः सत्यं मत्वेष्टभाषणम् ॥ १५ ॥

॥ ६ ॥ ७ ॥ विद्याधनस्य स्वर्णधनाच्छ्रेष्ठत्वमाह—स्वर्णाद्यमित्यादिना ॥ ८ ॥ ९ ॥ दानात् दानेन । इदं विद्याधनं तेन दानेनाधिकं वृद्धिं गतम् ॥ ॥ १० ॥ तस्य पालने इत्यग्रवद्वम् ॥ ११ ॥ उत्तरार्द्धमुत्तरान्वयि । मूलमंत्राणां जपैरिति संबंधः ॥ १२ ॥ १३ ॥ यस्य पौत्रस्य यः शिष्यः

कीर्त्या विश्वप्रपूरकः जगद्व्यापको भविता ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ विद्याधनस्यावनात्पालनाद्धेतोः ॥ २० ॥ त्र्यधि
कद्विशततमं धनपालानंदं प्रणमति—विद्वत्कुल इति ॥ २१ ॥ २२ ॥ विद्वद्भिः युक्तम् अविमुक्तकं काशीक्षेत्रम् ॥ २३ ॥ त्रिस्थलीं काशीगयाप्र

कालेनाथास्य सुषुवे ज्येष्ठपुत्रांगना सुतम् ॥ शुभलक्षणसंपन्नं मेनेऽसौ देवतांशजम् ॥ १६ ॥ देवतावचनान्नूनं विद्याधनसु
पालकः ॥ भवितायमतश्चक्रे धनपालाभिधं च तम् ॥ १७ ॥ उपनीतः पंचवर्षः प्राप विद्याः पितामहात् ॥ बभूव द्वादशा
ब्दोऽसौ सर्वविद्याविशारदः ॥ १८ ॥ विद्वत्पुत्र्या कृतोद्वाहः शुशुभे विद्यया श्रिया ॥ पितामहेन मंत्रैश्च कृतः पूर्णोऽधिकारवान् ॥
॥ १९ ॥ धनपालानंद इति नाम्ना विद्याधनावनात् ॥ ख्यातोऽभूद्विदुषां श्रेष्ठः संप्रदायप्रवर्तकः ॥ २० ॥ विद्वत्कुले पालयितुं हि
विद्यां धनं च योऽभूल्ललिताप्रसादात् ॥ वयं गुरुं तं धनपालसौख्यं त्र्यूर्ध्वं च पूर्णद्विशतं नताः स्मः ॥ २१ ॥ श्रीदेशिकेंद्र उवाच ॥
धनपालाभिधः शिष्यान्बहूनध्यापयन्सुधीः ॥ यस्य यस्यां रुचिस्तस्मै तां तां विद्यां पृथग्जगौ ॥ २२ ॥ एकदा स ययौ शिष्यैः
सकुटुंबोऽविमुक्तकम् ॥ विद्वान्विद्वद्युतं हंसो हंसाढ्यं मानसं यथा ॥ २३ ॥ क्रमेण त्रिस्थलीं यात्रां कृत्वा काश्यामथावसत् ॥ मानि
तः पंडितैः सर्वैः पुपूज क्षेत्रगानसौ ॥ २४ ॥ स्वदेशगमनोद्योगं ज्ञात्वाथाहुर्बुधा इमम् ॥ अत्रैव स्थीयतां विद्वन्क्षेत्रशोभा भवादृशैः ॥
॥ २५ ॥ ज्ञात्वेत्थं स मनस्तेषां तस्थौ तत्रैव देशिकः ॥ तत्रत्येनैव राज्ञाऽसौ कृताखिलसुयोजनः ॥ २६ ॥ तिष्ठन्कुटुंबसहित
स्तत्राप्यध्यापयन्बहून् ॥ ययुर्गौडार्भकाश्चास्माद्विदुषोऽध्ययनाय वै ॥ २७ ॥ सर्वांश्चाध्यापयत्याशु बोधकृद्धनपालवित् ॥ कश्चिन्मु
रारिशर्मासीत्तत्र गौडार्भकोल्पधीः ॥ २८ ॥ पठितं बहुवारं च नासौ कंठस्थवादिदम् ॥ वक्तुमीशस्तदा प्राहुः सहाध्यायिन इत्यमुम् ॥
॥ २९ ॥ मुरारे धीप्रकाशार्थं स्तोत्रं प्रज्ञाप्रवर्धनम् ॥ पठस्वाशु प्रकाशस्ते धियस्तेन भविष्यति ॥ ३० ॥

यागरूपाम् । क्षेत्रगान् क्षेत्रस्थान् ॥ २४ ॥ भवत्सदृशैः क्षेत्रस्य शोभाऽस्ति ॥२५॥२६॥२७॥ धनपालाख्यो वित् ज्ञानी ॥ २८ ॥ २९ ॥ ३० ॥

॥ ३१ ॥ पठेति पूर्वेनिबद्धम् । तेन स्तोत्रेण ॥ ३२ ॥ विद्वांसश्च स्थेति पूर्वान्वितम् । मंदमतिरहं गुरोः सकाशादेव ॥ ३३ ॥ अस्मात्स्तोत्रमंत्रादि कात् । उत्तरार्द्धमुत्तरान्वयि ॥ ३४ ॥ अस्मात्स्तोत्रमंत्रादिसाधनात् । इति पूर्वोक्तं मत्वा गुरुर्दयापरश्चेत्तदैव विद्यां आप्नोति केवलमनुष्ठानशतैरपि न

गुरोर्गृहीत्वा वाग्बीजं वा जपस्वाथ वा गिरः ॥ स्तोत्रं प्रतित्रयोदश्यामेकविंशतिसंख्यया ॥ ३१ ॥ पठितेनापि धीमांद्यं तव नूनं गमिष्यति ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्याह मुरारिस्तान्यूयं सर्वेऽपि पंडिताः ॥३२॥ विद्वांसश्च तथापीषद्धद्मि मंदमतिश्च वः ॥ गृहीत्वैव गुरोः स्तोत्रमंत्राद्यं यदि वा जपेत् ॥३३॥ देवतास्मात्प्रसन्नापि विद्यां वक्ति स्वयं किमु ॥ विद्यालब्ध्यै किलानेनानुष्ठानाद्बहवः श्रमाः ॥३४॥कृता इति गुरुश्चित्ते मत्वास्माच्चेद्दयापरः ॥ तदैव विद्यामाप्नोति नानुष्ठानशतैरपि॥३५॥ गुरोः कृपां विना तस्माद्विद्यास्यै नान्यसाधनम् ॥ सा भवेत्सेवयैवातः कुर्वे सेवामहं गुरोः ॥३६॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमुक्त्वा मुरारिः स स्नानाशनमुखे क्रियाः ॥ त्यक्त्वा सर्वास्त्वहोरात्रं गुरुसेवापरोऽभवत् ॥ ३७ ॥ गुरुशय्यागृहद्वारि रात्रौ स्वपिति यद्गुरुः ॥ उत्थाय ब्रूते दुःसाध्यं तमप्यपि करोति तत् ॥ ३८ ॥ दिवाप्यग्रे सदा तिष्ठन्गुरोर्वक्त्रविनिर्गतम् ॥ तदैवानीय दत्तेऽसौ स्वदेहाशां च संत्यजन् ॥ ३९ ॥ कदाचिद्गुरुणोक्तोऽसौ जलार्थं कूपमाययौ ॥ जलनिष्कासने भांडे बद्ध्वा रज्जुरणूनिता ॥४०॥ तत्राहिं वीक्ष्य तत्पुच्छं रज्जौ बद्ध्वांबु चाहरत् ॥ ददौ चानीय गुरवे सर्पदष्टकरोऽपि सः ॥ ४१ ॥ क्षणान्मूर्च्छामवापैतद्विषाद्वीक्ष्याथ तं गुरुः ॥ हा कृत्वा किमिति प्राह शिष्याः कूपं ययुस्तदा ॥ ४२ ॥

लभते । स्तोत्रपाठादिकर्तुरपि गुरुकृपयैव विद्याप्राप्तिर्भवतीत्यर्थः ॥ ३५ ॥ सा कृपा ॥ ३६ ॥ ३७ ॥ उत्थाय प्रबुद्धो भूत्वा यत्कर्तव्यं ब्रूते तत्तमप्यं दकारेऽपि करोति । स इति शेषः ॥ ३८ ॥३९॥४०॥ अदःपुच्छम् अमुष्य सर्पस्य पुच्छम् ॥ ४१ ॥ एतद्विषात्सर्पस्य विषेण स मूर्च्छामवाप ॥४२॥

ते शिष्या आहुः । सर्पदंशादिति शेषः । उत्तरार्द्धमुत्तरान्वयि ॥ ४३ ॥ कृतं त्वयेति शेषः ॥ ४४ ॥ कूपांबूद्धृतये कूपांबुनिष्कासनाय त्वया सर्पो बद्ध इति यत्तत्साहसमिति पूर्वान्वयि । रज्जुरंबुतः उदकात् न्यूनाऽभवत् ॥ ४५ ॥ अन्यरज्ज्वाप्तौ अन्यरज्ज्वानयने विलंबः स्यादतो मया पूर्तये उदकपर्यंतप्रवेशाय सर्पो बद्धः ॥ ४६ ॥ अयं देहो भवेभवे । प्रतिजन्मनि देहप्राप्तिः भवतीत्यर्थः ॥ ४७ ॥ गुरुस्तु नृदेह एव भवति । अतो हेतोर्गुरुसे

रज्जुबद्धमहिं दृष्ट्वा गुरवे प्राहुरेत्य ते ॥ सर्पदष्टं मुरारिं तं गुरुर्ज्ञात्वा दयापरः ॥ ४३ ॥ मंत्रैस्तं निर्विषं चक्रे सोऽप्युत्थाय गुरोः पुरः ॥ स्थितस्तं गुरुरप्याह किमिदं साहसं कृतम् ॥ ४४ ॥ मुरारे यदहिर्बद्धः कूपांबूद्धृतये त्वया ॥ गुरुं नत्वा मुरारिश्च प्राहोना रज्जुरंबुतः ॥ ४५ ॥ बद्धोऽहिः पूर्तयेह्यन्यरज्ज्वाप्तौ स्याद्विलंबनम् ॥ तथापीश मया येन हस्तेनाहिर्धृतो महान् ॥ ४६ ॥ न स पाणिर्जले क्षिप्तो विषबाधाभयात्त्वपि ॥ गुरोर्नैवाधिको देहः स्यादयं हि भवेभवे ॥ ४७ ॥ गुरुर्नृदेह एवातः कृताऽऽशा न मया तनोः ॥ स सर्पस्तु न हंतव्यो गुरुसेवाप्रपूर्तिकृत् ॥ ४८ ॥ रज्जुबंधान्मोचितव्यो यश्चोग्रोऽप्युपकारकः ॥ श्रीदेशिकेंद्र उवाच ॥ गुरुः शिष्यैर्ययौ कूपं रज्जुबद्धो महोरगः ॥ ४९ ॥ दृष्टः सर्वैर्न केऽप्येनं बंधान्मोचयितुं क्षमाः ॥ मुरारिः स्वयमेवाथ तं मुमोचातिनिर्भयः ॥ ॥ ५० ॥ गुरुभक्तिकरस्पर्शाच्छांतस्तूष्णीं ययौ स च ॥ इत्थं सेवारतं प्राह मुरारिं गुरुरेकदा ॥ ५१ ॥ विद्याः संपादिताः सर्वास्त्वया सेवाबलेन मे ॥ पुस्तकैरेकदाऽथापि ताः पठस्व ममाग्रतः ॥ ५२ ॥ सर्वविद्यानिधिस्त्वं हि भविष्यसि महाकविः ॥ इत्थमाज्ञां गुरोः श्रुत्वा मुरारिश्च तथाकरोत् ॥ ५३ ॥ बभूव विदुषां श्रेष्ठो वेदशास्त्रार्थकोविदः ॥ सरहस्याः सर्वविद्याः कृपयैव गुरोः स्वयम् ॥ ५४ ॥ पुस्तकानि समालोच्य ज्ञातवान्कृतनिश्चयः ॥ काव्यकर्तान्यकाव्यानां दूषकस्तत्प्रमाणवित् ॥ ५५ ॥

वायास्त्वरितजलार्पणरूपायाः पूर्णताकरः स सर्पो न हंतव्यो भवद्भिरिति शेषः ॥ ४८ ॥ क्रूरो यः सर्प उपकारको जातः ॥ ४९ ॥ सर्वैर्दृष्ट इति पूर्वान्वयि ॥ ५० ॥ ५१ ॥ एकदा एकवारम् ॥ ५२ ॥ ५३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५४ ॥ तस्य काव्यस्य प्रमाणवित् प्रामाण्यज्ञः ॥ ५५ ॥

पुरा युष्माभिर्यदुक्तं वः युष्माकं तद्वचनं मया न श्रुतं नानुष्ठितमित्यर्थः ॥५६॥ गुरुकृपयैव विद्या प्राप्यते । अभ्यासेन दिष्टात् दैवेन च विद्या प्राप्यत इति मतद्वयमस्ति । "पूर्वदत्तेन या विद्या ।" "अभ्यासस्सारिणी विद्या" इति च मतद्वयमस्तीत्यर्थः । मुरारेस्तु विद्यादात्री गुरोः कृपेति तृतीयो मार्गोऽस्ति । अथवा "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते" इति वाक्येन शुश्रूषापदेन गुरुकृपायास्तृतीयं विद्या[illegible]त्वमित्यर्थः ॥ ५७ ॥ विद्यासमुद्रस्य बहिर्भागेऽन्तर्भागे च अंतः पारः योऽन्यैः पंडितैर्न श्रुतः कुतः पुनः दृश्यतेऽवलोक्यते । स मया गुरुकृपयैव दृष्टः ॥

सहाध्यायिन एत्यासौ प्राह चोक्तं पुराखिलैः ॥ युष्माभिर्जपपाठाद्यं न मया वः श्रुतं हि तत् ॥५६॥ कृपयैव गुरोर्विद्याभ्यासादि[illegible] तद्वयम् ॥ पंथा मुरारेस्तृतीयो विद्यादात्री गुरोः कृपा ॥५७॥ कृपयैव गुरोर्नूनं विद्याब्धेर्बहिरंततः ॥ दृष्टो मयांऽतो यश्चान्यैर्न श्रुतोऽस्ति क्व दृश्यते ॥५८॥ केचिद्वदंति विद्याब्धेरंतोऽस्माभिर्विलोकितः ॥ यथोर्ध्वतो विभिर्गत्वांतःस्थं न ज्ञायतेऽबुधैः ॥५९॥ नार्चिता देवता काचिन्न तन्मंत्रजपः कृतः ॥ नार्चनीयं संविदाद्यं द्रव्यं वाऽऽस्वादितं मया ॥ ६० ॥ गुरोः कृपाबलादन्यन्न विद्याप्त्यै बलं हि मे ॥ श्रीदेशिकेंद्र उवाच ॥ धनपालानंद इत्थं मुरारिं विदुषां वरम् ॥ ६१ ॥ ज्ञात्वाऽकरोन्मंत्रपूर्णं सर्वोपास्तिप्रवर्तकम् ॥ गुरुरानंद नामापि चकारास्य दयानिधिः ॥६२॥ मुरारिः स चकाराथ नाटकं विदुषां प्रियम् ॥ अनर्घराघवाख्यं हि यदल्पैर्न बुध्यते ॥६३॥ मुरारिनाटकमिति प्राहुश्चाधुनिकास्तु तत् ॥ स विख्यातो बभूवोर्व्यां मुरारिर्नापरः कविः ॥ ६४ ॥ यो देवतार्चारहितोऽपि विद्वत्तरः पृथिव्यां गुरुसेवयैव ॥ तं वै चतुर्युग्द्विशतात्तसंख्यं मुरारिसंज्ञं गुरुमानताः स्मः ॥ ६५ ॥

॥ ५८ ॥ विद्यासमुद्रस्यांतोऽस्माभिर्दृष्ट इति केचिद्वदंति । यथा विभिः पक्षिभिः ऊर्ध्वमार्गेण पारं गत्वाप्यंतःस्थं समुद्रांतर्गतं न ज्ञायते । तथा तैर्विद्यांतर्गतं विद्यारहस्यं न ज्ञातमित्यर्थः ॥ ५९ ॥ मया तु साधनांतराण्यकृत्वापि गुरुकृपाबलेनैव विद्या प्राप्तेत्याह—नेति सार्द्धेन । तस्याः देवतायाः मंत्रजपो न कृतः । अर्चनयोग्यं संविदादिद्रव्यं नास्वादितम् ॥ ६० ॥ गुरोः कृपयैव विद्याप्राप्तिर्जातेत्यर्थः । उत्तरार्द्धमुत्तरान्वयि ॥ ॥ ६१ ॥ सर्वेषां शिष्याणाम् उपास्तिप्रवर्तकं मंत्रोपदेष्टारम् ॥ ६२ ॥ अल्पैरल्पज्ञैः ॥ ६३ ॥ ६४ ॥ चतुरधिकद्विशततमं मुरारिनंदं न[illegible]

मति—यं इति । यो देवताचार्यरहितोऽपि गुरुकृपयैव विद्वच्छ्रेष्ठोऽभवत्तं नताः स्मः ॥ ६५ ॥ न्यूनाधिकया न्यूनाधिकाधिकारत्वेन मिथः स्पर्धायुक्ता आसुः॥ ॥ ६६ ॥ तेषु शिष्येषु एको द्राविडः शिष्यः सर्वान्प्रति नम्रस्ताञ्छिष्यानिति प्राहेति संबंधः ॥ ६७ ॥ हे आर्याः विद्यया विद्यावंशेन जन्मना जन्मवंशेन चात्र लोके बंधवो द्विविधाः कथिताः सर्वे वयमेकगुरोः प्राप्तविद्याः संतः एकोदरभवा एकजन्या बंधव इव स्युः इत्यन्वयः ॥ ६८ ॥ तत्रैकोदरेषु ज्येष्ठाः

श्रीदेशिकेन्द्र उवाच ॥ मुरारेश्चासुरमिताः शिष्याः सच्छास्त्रवेदिनः ॥ मिथः स्पर्धायुताः सर्वे न्यूनाधिकतया तु तैः ॥ ६६ ॥ सदैव कलहश्चासीद्गौडैर्द्राविडकैरपि ॥ तेष्वेको द्राविडः शांतः सर्वनम्रोऽथ तानिति ॥ ६७ ॥ प्राहार्याः कथिताः सद्भिर्बंधवो द्विविधाः किल ॥ विद्यया जन्मनाप्यत्राखिलास्त्वेकगुरोर्वयम् ॥ ६८ ॥ प्राप्तविद्यास्ततो नूनमेकोदरभवा इव ॥ तत्र ज्येष्ठाश्चावराः स्युः सुज्ञै रज्ञैश्च तैर्मिथः ॥ ६९ ॥ कलहोपि भवत्येषामधिकोनापितुर्धनात् ॥ वयं त्वत्राखिलाः सुज्ञाः समानवयसस्तथा ॥ ७० ॥ धिया गृह्णाति यो यावत्तावद्विद्याधनं गुरुः ॥ ददात्येव हि तत्तस्मै विद्याब्धेर्नोनता क्वचित् ॥ ७१ ॥ संधिरेव ततोऽस्मासु कलहस्य न विद्यते ॥ इति ब्रुवन्स सर्वैश्च प्रेम्णा बंधुसमः सदा ॥ ७२ ॥ आसीत्तेऽप्यासुरमुना प्रेमाढ्याः कुशलेच्छवः ॥ सुबंधुमिति तं प्राहु र्नामैवासीत्ततोऽस्य तत् ॥ ७३ ॥ श्रीगुरुश्चाभवत्तुष्टः स्वभावात्तस्य सात्त्विकात् ॥ पूर्णां दीक्षां ददौ तस्मै सुबंध्वानंदनाम च ॥ ॥ ७४ ॥ स लब्ध्वापि गुरोः सर्वं कवितां कर्तुमक्षमः ॥ संकटाब्धोऽतिविद्वांश्च सुबंधुः प्राह चांतरे ॥ ७५ ॥ प्राप्तो विद्वत्कुले दैवादहं चाखिलविद्यया ॥ काव्यं कर्तुं नैव शक्ता बुद्धिर्मे विदुषोऽप्यणु ॥ ७६ ॥ काव्यकर्तार एवास्मिन्कुलेऽस्मद्देशिकावधि ॥ अहमेव कथं मंदः प्राक्तनात्कवितातती ॥ ७७ ॥

कनिष्ठाश्च भवंति तैश्च सुज्ञैरज्ञैश्च मिथः परस्परं न्यूनाधिकात्पितुर्धनाद्धेतोः कलहोऽपि भवतीत्यन्वयः ॥ ६९ ॥ विद्यावंशे तु कलहकारणं नास्तीत्याह वयं त्वित्यादिसार्द्धेन ॥ ७० ॥ ७१ ॥ कलहस्य संधिः प्रवेशस्थानम् अस्मासु नास्ति । बंधुसम आसीदित्युत्तरेण संबंधः ॥ ७२ ॥ कुशलेच्छवः कल्याणेच्छवः ॥ ७३ ॥ ७४ ॥ अंतरे मनसि ॥ ७५ ॥ प्राप्तः जातः ॥ ७६ ॥ अस्मद्देशिकावधि धनपालानंदगुरुपर्यंतं कवितातती कविताकरणे मंद

मंदबुद्धिरेवाहं दैवात्कथमस्मि ॥ ७७ ॥ ७८ ॥ अन्वयुंक्त पप्रच्छ। तत्संकटं वक्तुं न समर्थोऽस्मीति संबंधः ॥ ७९ ॥ तन्नाशं संकटनाशं केनापि कर्मणा त्वं वद। सप्तषष्ट्यक्षरयुक्तामैंद्रीं विद्यां जपस्वेत्यन्वयः ॥ ८० ॥ वासव इंद्रस्तया विद्यया ॥ ८१ ॥ तस्मिन्निंद्ररूपे मनो यस्य ॥ ८२ ॥ हे इंद्र सतां कवीनामेव कुलं प्राप्याणुकाव्यकरणे शक्तो नास्मि ॥ ८३ ॥ अद इदम् मयाऽधुना तव बुद्धिर्दत्ता इत्यन्वयः ॥ ८४ ॥ यया बुद्ध्या। सेत्याद्युत्तरान्वयि

मभेदं संकटं भूरि धीमांद्यं वित्कुले यतः ॥ संकटस्यास्य नाशोऽथ भविता केन कर्मणा ॥७८॥श्रीदेशिकेंद्र उवाच ॥ इत्थं चिंतायुतो भूत्वा गुरुं नत्वान्वयुंक्त सः ॥ भगवन्संकटे घोरे पतितोहं न तन्मुखात् ॥ ७९ ॥ वक्तुं शक्तोस्मि तन्नाशं वद केनापि कर्मणा ॥ श्रीगुरुश्चाथ तं प्राह सप्तषष्ट्यक्षरान्विताम् ॥ ८० ॥ ऐंद्रीं विद्यां जपस्वाथ प्रसन्नो वासवस्तया ॥ नाशयिष्यति वै नूनं संकटं ते यद स्ति तत् ॥ ८१ ॥ इत्याज्ञया गुरोर्विद्यां जजापैंद्रीं स तन्मनाः ॥ प्रसन्नो वासवः प्राह तत्त्वं ब्रूहि स्वसंकटम् ॥ ८२ ॥ सुबंधुस्तं प्रण म्याह लब्ध्वापींद्र सतां कुलम् ॥ कवीनामेव नो शक्तः काव्यं कर्तुमहं त्वणु ॥ ८३ ॥ संकटं हीदमेवादो नाशय त्वं दयानिधे ॥ इत्थं संप्रार्थितः प्राह वासवस्तं मयाधुना ॥ ८४ ॥ धीर्दत्ता ते यया काव्यं करिष्यसि विदां प्रियम् ॥ उक्त्वेत्यंतर्हितो देवः स गत्वाथ गुरोः पुरः ॥ ८५ ॥ प्रणमंस्तं क्रमात्सर्वं कथयामास चाप्तधीः ॥ श्रुत्वा गुरुश्च तं तुष्टस्तदोवाच ममाज्ञया ॥ ८६ ॥ काव्यं कुरु यतो दत्ता वासवेनैव धीश्च ते ॥ नाम्ना वासवदत्तेति विख्यातं तद्भविष्यति ॥ ८७ ॥ कृताथ कविता तेन गुरुदेवाज्ञयाऽखिला ॥ ख्याता वासवदत्ता सा वासवप्राप्तधीबलात् ॥ ८८ ॥

॥ ८५ ॥ यतः कारणादिंद्रेण तव बुद्धिर्दत्ताऽतो ममाज्ञया काव्यं कुर्वित्यन्वयः ॥ ८६ ॥ तत्काव्यम् ॥ ८७ ॥ इंद्रात्प्राप्तबुद्धिबलेन वासवदत्तेतिख्याता प्रसिद्धाऽभवत् ॥ ८८ ॥

पंचाधिकद्विशतसंख्यं सुबंध्वानंदं प्रणमति—य इति । उपजातिवृत्तम् ॥ ८९ ॥ सर्गोक्तधनपालादिगुरुत्रयकथाश्रवणादेः फलं क्रमेणाह । कथामिति ॥ ९० ॥ इति श्रीगुरुपरंपराचारित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायामेकत्रिंशः सर्गः ॥३१॥ उद्वात्रिंशे त्रिसप्तत्या पद्यैरर्धोदिता कथा । हरदत्तस्य विदुषो भूजातस्य गुहस्य वै॥३२॥ हरदत्तानंदस्य स्कंदावतारत्वमाह—अथेत्यादिचतुर्भिः अथेति ॥१॥ अंबां देवीम् ॥ २ ॥ इच्छास्तीत्यध्याहारः पूर्वार्द्धे । पुरा

यो वासवाद्लब्धमतिश्चकार ख्यातं हि काव्यं सकलेषु सत्सु ॥ पंचोत्तरं तं द्विशतातसंख्यं सुबंधुसंज्ञं गुरुमानताः स्मः ॥ ८९ ॥ कथां गुरूणां धनपालसंज्ञाच्छ्रुत्वा त्रयाणामथ वा पठित्वा ॥ विद्वद्वरो बुद्धिमतां च मान्यः पुमान्भवेत्काव्यकृतां वरिष्ठः ॥ ९० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे धनपालादिगुरुत्रयकथावर्णनं नामैकत्रिंशः सर्गः ॥ ३१ ॥ श्रीदेशिकेंद्र उवाच ॥ अथाप्तविद्यः प्रययौ सुबंधुर्विषयं निजम् ॥ गृहीत्वाज्ञां गुरोर्नद्याः कावेर्यास्तु समीपतः ॥ १ ॥ प्रवर्तयन्संप्रदायं तस्थौ तत्र शिवार्चकः ॥ अथै कदा वदत्यंबां कैलासे षण्मुखः स्वयम् ॥ २ ॥ मातर्मे चेतसीच्छेति पेयं स्तन्यं पुनस्तव ॥ कलावेव पुनर्जातः पाखंडमतशांतये ॥ ॥ ३ ॥ भट्टपादाभिधानो मे मातासीत्प्राकृता तदा ॥ त्वत्स्तन्यं न तदा लब्धं बाल्याच्चापेक्षितं हि यत् ॥ ४ ॥ अथ देवी सुतं प्राह द्राविडे त्वं द्विजात्मजः ॥ भव तत्रैव मत्स्तन्यं पिब त्वं मृतमातृकः ॥ ५ ॥ कीर्तिं कृत्वा ततः शीघ्रं पुनरेहि ममांतिकम् ॥ रामानुजः कुंभकोणेऽथासीत्कृष्णस्तदंगना ॥ ६ ॥ तन्मतीयसुताऽथापि तत्पितुर्गृहसान्निधौ ॥ गृहं शैवनरस्यासीत्तत्कन्यासहवासतः ॥ ७ ॥ बाल्यात्सा शिवभक्त्याढ्या तन्न जानाति तत्पतिः ॥ सानपत्या मनस्याह नमंती शिवमेकदा ॥ ८ ॥

शंकरावतारसमये॥ ३॥भट्टपादनामाहं जात इति पूर्वान्वये॥४॥५॥एवं स्कंदावतारमुपक्रम्य तज्जन्मादिकं कथयति। रामानुज इत्यादिना । कृष्णः कृष्णनामा तस्यांगना स्त्री तन्मतीयस्य रामानुजमतस्थस्य कन्यासीदित्यन्वयः ॥६ ॥ तस्याः कृष्णपत्न्याः पितुः गृहसमीपे शिवोपासकस्य गृहमासीत् । तत्कन्यायाः शैवकन्यायाः सहवासतः संगेन बाल्यादारभ्य शिवभक्तियुक्ता सा कृष्णपत्नी आसीदिति संबंधः ॥७॥ तत्पतिः कृष्णः तत पत्न्याः शिवभक्तियुक्तत्वं न

जानाति । सा कृष्णपत्नी एकदा शिवं नमंतीत्याह ॥ ८ ॥ इति किं तदाह—चेदिति । अस्य पुत्रस्य ॥ ९ ॥ तदीयाः रामानुजमतस्थास्तत्तिन्नादयः कुलोचितं रामानुजकुलोचितं विष्णोर्नाम कर्तुमुद्यता बभूवुरित्यन्वयः ॥ १० ॥ एतान्रामानुजान् । उत्तरार्द्धमुत्तरान्वयि ॥ ११ ॥ अपत्यदं पुत्रप्रापकं तदेव हरदत्तेति नाम स्तात् भवतु । कर्णयोर्दत्तांगुलय इति हरनामश्रवणेन त्रस्ता इत्यर्थः ॥ १२ ॥ अथ ते सर्वे बहिः स्थिताः संतः द्वारत इति

चेत्पुत्रो भविता मेस्य हरदत्ताभिधां खलु ॥ करिष्यामीति कालेन तस्याः पुत्रो बभूव च ॥ ९ ॥ कार्तिकेयः स जातोद्धा तेजस्वी शुभलक्षणः ॥ द्वादशेह्नि तदीयास्तु शिशोर्नाम कुलोचितम् ॥ १० ॥ उद्युक्ताः कर्तुमेतान्सा शनैः प्राहेति सूतिका ॥ हरदत्तेति नामास्य मया प्राक्चानपत्यया ॥ ११ ॥ प्रोक्तं कुंभेश्वरं नत्वा स्तात्तदेव ह्यपत्यदम् ॥ श्रुत्वेत्थं कर्णयोर्दत्तांगुलयस्ते यथुर्द्रुतम् ॥ ॥ १२ ॥ प्राहैका सूतिकैवाथ हरदत्ताभिधां शिशोः ॥ श्रुत्वेति द्वारतो व्यक्तमथ तेऽपि बहिः स्थिताः ॥ १३ ॥ कथमस्मत्कुले जाता दुष्टेयं कुलदूषिका ॥ यन्न श्राव्यं किलास्माभिरस्यास्तद्धृदि वर्त्तते ॥ १४ ॥ न पुनर्दर्शनीयेयं दृष्टा चेत्स्नानमाचरेत् ॥ कृत्वेत्थं निश्चयं सर्वे तामेकां तत्यजुर्गृहे ॥ १५ ॥ अनन्नपाना सुष्वाप सापत्या सा दिनत्रयम् ॥ न बालोथालभत्स्तन्यं मातुश्चानशनादणु ॥ ॥ १६ ॥ भृशं रुरोद क्षुधितोऽथो मृता सा दिनत्रयात् ॥ व्योममार्गेण गच्छंतौ पार्वतीशावथो गृहे ॥ १७ ॥ शनैः शुश्रुवतुर्बालरोदनं स्वगणैः सह ॥ देवी शंभुं वदत्येष सेनानीर्मत्पयः पुनः ॥ १८ ॥

सूतिकाकृतं हरदत्तनाम स्पष्टं श्रुत्वा इत्थं कथमित्यादि सार्द्धश्लोकोक्तं निश्चयं कृत्वा तामेकां सूतिकां गृहे तत्यजुस्त्यक्तवन्त इति त्रयाणामन्वयः ॥ १३ ॥ तच्छिवनाम हृदि मनसि ॥ १४ ॥ इयं पुनर्न दर्शनीयाऽस्माभिरिति शेषः ॥ १५ ॥ नान्नं पानं च यस्याः सा सापत्या पुत्रसहिता ॥ १६ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १७ ॥ एष बालः सेनानीः स्कंदः मत्सकाशात् पयः दुग्धं पुनरिच्छन्नेवात्तजन्मा अत्र गृहे प्राप्तजन्मास्तीति संबंधः ॥ १८ ॥

इच्छया इच्छामात्रेणागात् । बालगृहमिति शेषः । शिशुमित्यग्रान्वयि ॥ १९ ॥ अंतरेंऽतरिक्षे ॥ २० ॥ अंबायाः देव्याः सकाशादात्तं प्राप्तं सत्पयः उत्तमदुग्धं यस्मै सः । अथायुत्तरान्वयि ॥ २१ ॥ अंतर्गृहे बालः किं मृतोऽस्ति यतो नो रोदिति । अत ईक्ष्यताम् अवलोक्यताम् । अस्माभिरिति शेषः । हि यस्माद्बालस्यापराधो नास्ति तस्मादयमस्माभिः पोष्यः पालनीय इत्यर्थः ॥ २२ ॥ इति संतुष्टा आसुः ॥ २३ ॥ अरनालप्रबंधो रामानुजमते

इच्छन्नेवातजन्माऽत्र मातात्रत्या मृतास्य हि ॥ पाययेऽमुं पयश्चेत्थमुक्त्वागादिच्छया शिशुम् ॥ १९ ॥ अंके स्थाप्यापाययच्च यथेष्टं स्तन्यमादरात् ॥ पुनर्यानं ययौ तावद्गणैः स्तंभितमंतरे॥२०॥न रुरोद शिशुस्तुष्टः सुष्त्वापांबात्तसत्पयाः॥ अथ रामानुजाः प्रातश्चा श्रुत्वा रोदनं शिशोः ॥ २१ ॥ प्रादुर्भूतः किं बालोंऽतर्यतो नो रोदितीक्ष्यताम् ॥ नापराधो हि बालस्य पोष्योऽयं वंशवर्द्धनः॥२२॥ इत्थमुक्त्वाथ गत्वांतर्जगृहुर्निद्रितं शिशुम् ॥ श्वासैर्ज्ञात्वा सूतिकां च मृतामिति मुदान्विताः ॥ २३ ॥ अरनालप्रबंधोक्त्या ममृजुस्तां शिवादरात् ॥ दूषितामिति मत्वा ते प्रारब्धाच्छ्रुत्यनादराः ॥२४॥ संचस्करुश्च पुपुषुर्धेनुदुग्धार्पणाच्छिशुम् ॥ ववृधे स हि पीतांबाप यास्तेजोधिको बभौ ॥ २५ ॥ अन्नादोऽथ क्रमाज्जातोऽष्टाब्दः पित्रोदितव्रतः ॥ वेदैश्चाध्यापितः शास्त्रैर्द्वादशाब्दो बभूव सः ॥ २६ ॥ ज्ञात्वा श्रुत्यश्रद्धधानान्पित्रादीञ्छिवनिंदकान् ॥ अशिवं तत्कुलं मेने त्यक्तुमिच्छुश्च तद्गतिम् ॥ २७ ॥ विद्वत्सु कुलवृद्धेषु कदाचि न्मिलितेष्वसौ ॥ भस्मरुद्राक्षमालाश्च धृत्वा तस्थौ तदग्रतः ॥ २८ ॥ दृष्ट्वा हाहेति ते प्रोचुः किमिदं बालचेष्टितम् ॥ कुलदूषक चिह्नाढ्यस्ताड्योयं बालकोऽखिलैः ॥ २९ ॥ केचिदूचुर्बालमात्राद्द्रुतं निष्कास्यतां शनैः ॥ केचिन्मार्जयितुं भस्माक्षान्निष्कास यितुं तनोः ॥ ३० ॥

प्रसिद्धः । तदुक्तप्रकारेण प्रारब्धदैवयोगेन श्रुत्यनादराः श्रुतिषु अश्रद्दधानास्ते रामानुजास्तां संचस्करुरिति नियोज्यम् ॥ २४ ॥ पीतमंबापयः पार्वतीदुग्धं येन सः ॥ २५ ॥ पित्रोदितव्रतः कृतव्रतबंधन इत्यर्थः ॥ २६ ॥ तद्गतिं तत्संप्रदायम् ॥ २७ ॥ २८ ॥ २९ ॥ उत्तरार्द्धमुत्तरान्वयि ।

तनोः देहात् । अक्षान्रुद्राक्षान् ॥ ३० ॥ ३१ ॥ अद्धा साक्षाद्गुहः स्कंदः ॥ ३२ ॥ शैवमतं प्रतिपादयन्नादौ स्वाचरणस्य श्रुतिस्मृतिसिद्धत्वमाह—चिह्नानीति । एतानि भवद्धृतानि युष्माभिर्धृतानि चिह्नानि गोपीचंदनादिनोर्ध्वत्रिपुंड्रशंखचक्रतप्तमुद्रादीनि द्विजानां ब्राह्मणानां न भवंति वै इति निश्चयेन किं तु अश्रुतितः श्रुतिप्रामाण्याभावादन्यजातेः शूद्रस्य चिह्नानि भवंति । अश्रुतित इत्युपलक्षणं स्मृतिप्रामाण्याभावस्य । यत एतानि ब्राह्मणचिह्नानि न भवंति अतस्तानि विमुच्य त्यक्त्वा श्रुतिचोदितैरित्युपलक्षणं स्मृतिचोदितैरित्यस्य । चकारसत्त्वात् । भस्मरुद्राक्षधारणादिचिह्नैर्युक्तोऽस्म्यहमिति शेषः । अत्र भस्मरुद्राक्षधारणे भवतां निषेधः किमर्थमस्ति । श्रुतिस्मृतिप्रामाण्याप्रामाण्यं चोक्तम् । तथा हि । ब्राह्मणानधिकृत्य श्रूयते । "अथातो भस्मधारणं व्याख्यास्यामः भूत्यै न प्रमदितव्यम्" इति विभूतिधारणे प्रमादो न कर्तव्य इत्यर्थः। यद्यपि "श्रोणामेक उदकं गामवाजति" इत्यादिषु एके उपासकाः श्रोणां श्लक्ष्णां

ययुर्बालसमीपेऽसौ लीलयाग्रेऽक्षिपत्करौ ॥ ताभ्यामेव युवानोऽपि पेतुस्ते धनुरावधि ॥ ३१ ॥ लज्जिताश्चोत्थितास्तूष्णीं तस्थुर्दूरं भयाकुलाः ॥ हरदत्तोऽथ तान्सर्वान्निर्भयोद्धा गुहोऽब्रवीत् ॥ ३२ ॥ हरदत्त उवाच ॥ चिह्नानि नैतानि हि वै द्विजानां भवद्धृतान्यश्रुतितोऽन्यजातेः ॥ अतो विमुच्य श्रुतिचोदितैश्च युक्तोऽस्मि किं चात्र भवन्निषेधः ॥ ३३ ॥

गां मृदं गोपीचंदनादिरूपां उदकम् अवाजति मिश्रयति धारणार्थमित्याद्यर्थवतीषु श्रुतिषु ब्राह्मणादिसाधारण्येनोपासनाभेदेन च तत्तद्देवताचिह्नानि धार्यत्वेनोक्तानि तथापि तानि शूद्रविषयाणि तत्तदुपासनाकाले वा धार्याणि भवंति । न सर्वदा धार्याणि । भस्मधारणस्य ब्राह्मणविषयत्वस्मरणात्तथा च स्मृतयः । "एकजातेरयं धर्मो यद्विष्णोर्लिंगधारणम्" इति निर्णयसिंधौ च—"शंखं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिः कार्यः सर्वस्माद्द्विजकर्मणः । यथा श्मशानजं काष्ठं सर्वकर्मबहिष्कृतम् । तथा मुद्रांकितो विप्रः सर्वकर्मसु गर्हितः" वासिष्ठे लैंगे "रक्षार्थं मंगलार्थं च पवित्रार्थं च भामिनि । मद्भक्तानां लांछनार्थं भस्म दत्तं मया पुरा । सर्वदा धारयेद्भस्म न तिष्ठेत्तद्वते क्वचित् । भस्महीनललाटत्वमब्राह्मण्यानुमापकम्" । अनुमापकमित्यनेनानुमानं दर्शितम् । अयं प्रयोगः । शूद्रोऽयं भस्महीनललाटत्वात् । यत्सत्त्वे यत्सत्त्वमित्यन्वयव्याप्तिः स्ववर्णविहितकर्तरि शूद्रे । यदभावे यदभाव इति व्यतिरेकव्याप्ति

ग्रहस्थानं यथा सदाचारवान्ब्राह्मणः । किं च—" बाह्यमोक्षेण किं मोक्षलक्षणं भस्मधारणम् । भस्मना नित्ययुक्तस्य ज्ञानमुत्पद्यतेऽचिरात् । तेनाधीतं श्रुतं तेन सर्वं कर्म्माण्यनुष्ठितम् । येन मर्त्येन शिरसि त्रिपुंड्रं भस्मना कृतम् । लुप्तवर्णाश्रमाचारस्त्यक्तसर्वक्रियोऽपि सन् । विभूत्यैव त्रिपुंड्रांकधारणान्मोक्षमाप्नुयात् । विभूतिधारणं त्यक्त्वा कर्म कुर्वंति ये नराः । तेषां नैव विनिर्मोक्षः कल्पकोटिशतैरपि । स्तेयं कृत्वा गुरुदारांश्च गत्वा मद्यं पीत्वा ब्रह्महत्यां च कृत्वा भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः " इति शातातपवचनम् इत्यादिबहुश्रुतिस्मृतिप्रमाणविहितं ममाचरणमस्तीत्यर्थः ॥ ३३ ॥ ननु पुरुषोत्तमश्रीविष्णोश्चिह्नानि तदुपासकैर्धार्याणीत्याशंक्य शिवोपासनापेक्षया विष्णूपासनस्याल्पत्वं दर्शयति त्यक्त्वेति । महांतं देवं ब्रह्मविष्णुरुद्रेषु ईशं नियंतारं शंकरं त्यक्त्वा यः पुरुषेषूत्तमोपि स कथं पूज्यः पूजितुं योग्यः । जनैरिति शेषः । हि यस्माद्यो विष्णुरनेकजन्मभिः कृत्वा मनुष्यवद्धा

त्यक्त्वा महादेवमथ त्रिदेवेष्वीशं कथं यः पुरुषोत्तमोऽपि ॥ पूज्यो नृवद्यस्तु बहूनि कर्माण्यद्धा करोत्येव भवैर्ह्यनेकैः ॥ ३४ ॥ एकेन बद्धो बलिरात्तसर्वो भक्तोऽप्यथैकेन पुलस्त्यपुत्रः ॥ कैलासमुत्क्षेप्तुमितोमितर्द्ध्या युतः कृतो वाच्य इहेज्य आर्याः ॥ ३५ ॥ भुवं पदाक्रम्य हरिस्तथापोऽस्पृशत्तदावातरदुग्रगंगा ॥ तद्धीरधोंऽघ्रिस्त्वथ सा धृतेशात्रितः स वाच्योऽत्र क इज्य आर्याः ॥ ३६ ॥

साक्षात्स्वयं करोति । मनुष्यमात्रेषूत्तमस्य विष्णोरुपासनापेक्षया " महेशान्नापरो देवो महिम्नो नापरा स्तुतिः " इति देवेषूत्तमस्य महादेवस्योपासनं युक्तमिति भावः । आख्यानकीवृत्तम् ॥ ३४ ॥ ननु भक्तरक्षणार्थं मनुष्यवदाचरणं विष्णोर्योग्यमस्तीत्याशंक्य तस्य भक्तरक्षकत्वं व्याहतं शिवस्य चाकुंठितमिति दर्शयति—एकेनेति । एकेन विष्णुना आत्तं गृहीतं सर्वस्वं यस्य स बलिर्बद्धोऽस्ति वामनावतारे भक्तसर्वस्वापहरणेन भक्तरक्षकत्वं व्याहतम् । अथैकेन शिवेन कैलासमुत्पाटयितुम् इतः प्राप्तोऽपि रावणः ऋद्ध्या ऐश्वर्येण युक्तः कृतः । हे आर्याः अनयोर्मध्ये पूजनीयो भवद्भिर्वाच्यः । यतो भक्तरक्षकयोर्हरिहरयोर्मध्ये यथार्थत्वेन भक्तरक्षकः शिवोऽस्ति अतः शिव एव पूजनीय इत्यभिप्रायः ॥ ३५ ॥ ननु विष्णोश्चरणोदकरूपा भागीरथी कथं महत्तमेन शिवेन शिरसि धार्यते इति चेज्जगद्रक्षणाय विष्णोश्च पालनाय शिवेन गंगा शिरसि धृतेत्यभिप्रायेणाह—भुवमिति । हरिस्त्रिविक्रमावतारे पादेनोर्ध्वाधोभूमि

पालकत्वात्पशुपालको हरिरेव भवति। यो जीवः पतिं त्यक्त्वा ज्ञानप्रदत्वेन नियंतारं पशुपतिं त्यक्त्वा गोपगोरक्षकं कृष्णम् इयाच्छरणं गच्छेत्सः अज्ञः मूर्खो भवति " ज्ञानं महेश्वरादिच्छेत् " इति ज्ञानाय पशुपतिः सेव्यो न गोपाल इत्यर्थः ॥ ४१ ॥ विष्णोर्विश्वपालकत्वमंगीकृत्यापि शिवस्यैव पूज्यत्वमाह--विश्वमिति। विष्णुर्विश्वं निजान् भक्तांस्तावद्रक्षति यावत्प्रलयकर्ता रुद्रः प्रलयं कर्तुं क्रुद्धो न भवति तावदित्यर्थः। यः शंकरः प्रलयकालेऽपि भक्तान्प्रति काश्यां संस्थाप्य स्थापयित्वा तां काशीं स्वशूले धृत्वा नृत्यं करोति प्रलयकालेऽपि शिवस्य भक्तरक्षकत्वं यथा तथा विष्णोर्नास्तीत्यर्थः ॥ ४२ ॥ ननु काशीं शूले संस्थाप्य भक्तान्रक्षतीत्युक्तं यदि तर्हि पूर्वकल्पगतः कोऽपि शिवभक्तो न दृश्य इति चेत्तत्राह- त्रात इति। शिवेन मृतेः प्रलयकालात् मार्कंडेयो रक्षितोऽस्ति। एवं सप्तकल्पा व्यतीयुः अतिक्रांताः। कृष्णेन तु ब्राह्मणशापेनात्मकुलमपि यादवकुलं दग्धं नाशितम्। इहानयोः कः

विश्वं हरिः पाति निजांश्च तावत्क्रुद्धो न यावत्क्षयकृद्धि रुद्रः ॥ संस्थाप्य काश्यां प्रलयेऽपि भक्तांस्ताञ्छूलमुद्धृत्य करोति नृत्यम् ॥ ॥४२॥ त्रातः शिवेनास्ति मृतेर्मृकंडोः पुत्रो व्यतीयुः किल सप्त कल्पाः ॥ शापाद्द्विजस्यात्मकुलं च दग्धं कृष्णेन कः सेव्य इहोच्यतां मे ॥४३॥ जनार्दनं मोक्षदमित्थमाहुस्तद्दत्तमोक्षः खलु नाक्षयो हि ॥ श्रुतिर्विदैवाह तमन्यतो न ज्ञानं महेशादिति शंभुरिज्यः ॥४४॥ त्यक्त्वा फलाशां बहुजन्मभिर्यैः कृतातिपुण्यैर्विमलांतरंगाः ॥ ज्ञानेच्छवस्ते खलु शंभुभक्ताः कुतोऽर्थकालुष्यहृदात्तपापाः ॥ ४५ ॥

सेवितुं योग्यः भवद्भिर्मह्यं कथ्यताम्। तस्माच्छिव एव भक्तरक्षको नान्य इत्यर्थः ॥ ४३ ॥ ननु मा भूद्विष्णोर्भक्तरक्षकत्वं तथापि मोक्षप्रदत्वप्रसिद्ध्या तदुपासनं युक्तमिति चेत्तत्राह। जनार्दनमिति। यद्यपि " मोक्षं जनार्दनादिच्छेत् " इति जनार्दनं मोक्षप्रदमाहुस्तथापि तेन जनार्दनेन दत्तो मोक्षः अक्षयो नास्ति खलु। हि यस्मात् " ज्ञानादेव तु कैवल्यं नान्यः पंथा विद्यतेऽयनाय " इति विदा ज्ञानेनैव तम् अक्षयं मोक्षमाह। अन्यतोऽन्यस्मान्न भवतीत्याह--"ज्ञानं महेशात्" इति हेतोः शंभुरेव पूज्यः। ज्ञानं विना कैवल्यं विना सलोकतादिमोक्षो नाक्षयस्तस्माच्छ्रुतिसिद्धमोक्षप्रदोऽपि शिव एवेत्यर्थः॥ ४४॥ एवं शिवोपासनां दृढीकृत्य शिवभक्तानां दुर्लभत्वं दर्शयन्नुपसंहरति। त्यक्त्वेति। ये पुरुषाः फलाशां सकामबुद्धिं त्यक्त्वा बहुजन्मभिः कृतानि यान्यति

पुण्यानि तैर्विमलं शुद्धम् अंतरंगमंतःकरणं येषां ते ज्ञानेच्छावंतो भवंति ज्ञानार्थं शंभुभक्ताश्च भवंति खलु । तथा च श्रुतिः " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति । यज्ञेन दानेन तपसाऽनाशकेन " इति वेदानुवचनेन ब्रह्मचर्यधर्मेण यज्ञेन दानेनेति वानप्रस्थधर्मेण तपसेति वानप्रस्थधर्मेण अनाशकेन विषयानशनेन संन्यासधर्मेण ब्राह्मणाः ब्रह्म भवितुमिच्छवः विविदिषंति इति सन्प्रत्ययान्तेन वेत्तुमिच्छंति ज्ञानेच्छां जनयंतीति तदर्थः । अघैर्विषयैः कालुष्यं मालिन्यं तेन हृदा मनसा आत्तं स्वीकृतं पापं यैस्ते कुतो ज्ञानेच्छवः कुतस्तरां शिवभक्ता भवंति । बहुपुण्यलभ्या शिवभक्तिरित्यर्थः ॥४५॥४६॥४७॥

श्रीदेशिकेंद्र उवाच ॥ इत्थं रामानुजाः श्रुत्वा हरदत्तोदितं वचः ॥ नेशाः प्रत्युत्तरं वक्तुं तस्थुः क्रुद्धाश्च मूकवत् ॥४६॥ शनैः केचिन्मिथः प्रोचुर्वध्योयमखिलैश्च तान् ॥ प्राक्तद्वीर्यविदोऽथाहुरेकः सर्वांश्च हंत्ययम् ॥ ४७ ॥ अथ नत्वाखिलांस्तस्माद्धरदत्तो ययौ गुरुम् ॥ सुबंधुं कुंभकोणात्प्राक्कावेर्यंकेऽतियोजने ॥ ४८॥ तत्रापश्यत्समासीनं साक्षादानंदरूपिणम् ॥ शिष्यान्वेदांतशास्त्राणि बोधयंतं यथार्थतः ॥ ४९ ॥ आत्मानंदांबुधौ मग्नं पश्यंतं विश्वमात्मनि ॥ आत्मानं विश्वगं चेत्थं सुबंध्वानंददेशिकम् ॥ ५० ॥ तं नत्वा दंडवद्भूमावुत्थाय च कृतांजलिः ॥ हरदत्तोब्रवीत्साक्षाद्गुहोप्यज्ञ इवैत्य सः ॥ ५१ ॥ हरदत्त उवाच ॥ अहं हीशपुत्रोऽमरैस्तारकांतेऽग्निरुक्तः स लब्ध्वास्य वीर्यं द्विसंगे ॥ सतीष्वाक्षिपत्ताश्च गंगांभसीतोऽभवं षण्मुखः शत्रुयूथापकारी ॥ ५२ ॥ मयाहंधियैवासुरास्तारकाद्याः शिवार्चाबलात्संहताः संगरेऽथ ॥ सुरैः स्वीयसेनाधिपश्चोदितोऽहं ततोहंकृतिर्मेऽधिकैव प्रवृद्धा ॥ ५३ ॥

प्राक् पूर्वं शिवचिह्ननिष्कासनात् तस्य हरदत्तस्य पराक्रमज्ञाः । हंति हनिष्यति । कुंभकोणात्प्राक् पूर्वमतिक्रांतयोजने कावेरीतीरे ॥४८॥४९॥ आत्मादिपूर्वान्वयि ॥ ५० ॥ साक्षात्स्कंदोऽप्यज्ञ इव ज्ञानरहित इवाब्रवीत् ॥ ५१ ॥ ईशपुत्रः शिवसुतोऽस्मि । कथमित्यत आह । अमरैस्तारकासुरस्य नाशेऽग्निरुक्तः शिववीर्येण पुत्रं जनयेति प्रार्थितः सोऽग्निः द्वयोः शिवपार्वत्योः संगेऽस्य शिवस्य वीर्यं सतीषु कृत्तिकासु चिक्षेप । ताश्च गंगोदके शिववीर्यमाक्षिपन् । इतः गंगोदकाच्छत्रुसंघहंता षण्मुखोऽहमभवम् ॥ ५२ ॥ किंच मया कर्त्रा अहंधिया देहात्मबुद्ध्या शिवोपासनाबलेन तारकाद्याः दैत्याः

संग्रामे हताः । अथानंतरं देवैश्चाहं स्वसेनाधिपतिरुक्तोऽस्मि । ततो मेधिकोऽहंकारः प्रवृद्धः । दृढाहंकारो जातोस्मीत्यर्थः ॥ ५३ ॥ तेनाहंकारेणात्म सुखं न जातमित्याह--सदेति । सर्वाज्ञाननाशकयोः गौरीशंकरयोः सन्निधौ सदा स्थितस्यापि अहंकारिणो ममाल्पोऽप्यात्मसुखानुभवो नासीदित्यर्थः । तत्र हेतुः बहुस्पर्द्धया गणेशेन भूयः क्रीडत इति । न ज्ञानगंधोऽप्यहंकारवता प्राप्यत इति भावः ॥५४॥ किंच यतः बह्वायुष्मतां सदा सुखसेविनां देवानां वैरा ग्याभावादात्मलाभो न भवति । अतः कारणात्कलौ बौद्धमतखंडनाय मया भट्टपादनाम्ना जनिः जन्म मनुष्यलोके गृहीतम् । शिवाज्ञया भट्टपादोऽहं जात इत्यर्थः ॥ ५५ ॥ क्रियया कर्मणाघं पापं वेदनिंदारूपं येषु ते । अमिताः बौद्धाः इंद्रावतारभूतेन सुधन्वनाम्ना हेतुभूतेन हता मया कर्मैरप्यकर्माः । तदाऽ

सदापीशयोः संनिधौ सुस्थितस्याखिलाज्ञानहंत्रोर्गणेशेन भूयः ॥ बहुस्पर्धया क्रीडतोऽहंधियो मे न चाल्पात्मसौख्यानुभूतिः किलासीत् ॥ ५४ ॥ न नाकस्थितानां सुकल्पायुषां हि सदा सौख्यभाजां भवेदात्मलाभः ॥ मयातोऽजनिर्भट्टपादाख्ययापि कलौ मर्त्यलोके धृता बौद्धहत्यै ॥५५॥ हताश्चामितास्तत्र बौद्धाःक्रियाघाः सुधन्वन्नरेंद्रान्महेंद्रावतारात् ॥ शिवश्चावतीर्णस्तदाऽद्वैतसिद्ध्यै ततोप्यात्मतां नाप्तवान्कर्मठोऽहम् ॥ ५६ ॥ अतः प्राप्तजन्माहमात्मत्वलब्ध्यै बभूवात्र दिष्टाच्छिवद्रेष्टृसंगः ॥ तिरस्कृत्य सर्वा न्भवत्पादयुग्ममितोऽस्मीश रक्षाधुनाहंकृतेर्माम् ॥ ५७ ॥ न मां जेतुमीशोऽस्ति कश्चित्रिलोक्यां स चाहं जितोऽहंतया हंत या हि ॥ निबध्यात्र देहे सुखं स्वीयमेव न चेषद्वरं स्प्रष्टुमीशो भवामि ॥ ५८ ॥ श्रीदेशिकेंद्र उवाच ॥ सुबंधुरिति चाकर्ण्य शिवभक्तिप्रवृत्तये ॥ ज्ञात्वावतीर्णं सेनान्यं सिद्धः प्राहेति तं हसन् ॥ ५९ ॥

द्वैतसिद्ध्यर्थं शंकरोऽवतीर्णोऽभवत् । अतः शंकराचार्यादहमात्मत्वं न प्राप्तवान् । यतः कर्मठः तुषाग्निप्रवेशे देहांतप्रायश्चित्ते निष्ठावान् । तस्मिन्कर्मणि कर्म कर्तृत्वाभिमानेन न ज्ञानलाभ इत्यर्थः ॥ ५६ ॥ अतः कारणादात्मज्ञानलाभार्थं प्राप्तजन्माहमस्मि । दिष्टाद्दैवयोगात् । सर्वान् रामानुजान् । इतः शरणं प्राप्तः त्वम् अहंकृतेः अहंकारान्मां रक्ष गुरुकृपयैवाहंकारनाशो भवतीत्यर्थः ॥ ५७ ॥ आत्मसुखाच्छादको दुर्जयोऽहंकार इत्याह--नेति । तथा पूर्वोक्त याहंतयाऽहंकारेणाहं जितोऽस्मि हि निश्चयेन । हंतेति खेदे । या हि अहंता अत्र देहे निबद्धा व्याप्तास्ति । स्वकीयमेव वरमात्मसुखम् ईषत्स्प्रष्टुं समर्थो न

भवामि अतस्तन्नाशेनात्मसुखं प्रापयेत्यर्थः ॥ ५८ ॥ ५९ ॥ अहंकारनाशको रुद्र एवाहंकारदेवतात्वादित्याह--य इति । यः रुद्रः आदितः मूलतः तस्याः अहंकृतेः देवता रुद्र उक्तो यस्माद्रुद्राधीनाहंकृतिरित्यर्थः ॥ ६० ॥ रुद्रशब्दार्थं कथयति--शोक इति । सर्वशोकः देहाहंकृतिजन्योऽस्ति यस्मात् सतां स्वभक्तानां रुत् रोदनरूपं तं शोकम् अहंकारनाशेन द्रावयति तस्माद्रुद्रः प्रकीर्तितः । यथोक्तं काशीखंडे--"रुत् दुःखं दुःखहेतुर्वा द्रावयत्येष नः प्रभुः । रुद्र इत्युच्यते सद्भिः शिवः परमकारणम् " इति स्मृतिः । ' तरति शोकमात्मवित् ' इति श्रुतौ । आत्मज्ञानिनः अहंकारनाशेनैव शोकतरणाद्रुद्र

सुबंधुरुवाच ॥ यः स्वीयांघ्रिरतानां हि हंत्यहंकृतिमादितः ॥ तस्याधीनैव सा यस्माद्रुद्रस्तद्देवतोदिता ॥ ६० ॥ शोको हंकृतिजः सर्वस्तं रुतं द्रावयत्यसौ ॥ सतामहंकृतेर्नाशात्तस्माद्रुद्रः प्रकीर्तितः ॥ ६१ ॥ तत्सुतस्त्वं तदीयेज्याप्रवृत्त्यै सत्तनुर्भुवि ॥ त्वां स्पृशेत्किमहंकारो यथा वह्निं पिपीलिका ॥ ६२ ॥ संग्रहायैव लोकानां तवेदं श्रीहरिर्यथा ॥ ययौ सांदीपिनिं ज्ञप्त्यै तथा मां त्वं न चान्यथा ॥ ६३ ॥ श्रीदेशिकेन्द्र उवाच ॥ वदतीत्थं गुरौ भूयः स न्नत्वाण्वपि नाब्रवीत् ॥ उत्थाप्यालिंग्य हस्ताभ्यां चाग्रे संस्थाप्य तं गुरुः ॥ ६४ ॥ पूर्णां दीक्षां ददौ मंत्रैर्हरदत्ताय धीमते ॥ वसन्गुरोः समीपेऽसौ तत्सेवातत्परः सदा ॥६५॥ शुश्रावानेकवेदांतवाक्यान्यात्मानुभाविनः ॥ जजाप च महामंत्रान्पुरश्चर्याविधानतः ॥ ६६ ॥ अभ्यसन्योगमप्येष प्राणायामैर्गुरूदितैः ॥ सिद्धवर्यो बभूवासौ गुरुं देवधियार्चयन् ॥ ६७ ॥ सिद्धिं गते गुरौ सोऽथ शिवार्चातत्परः सदा ॥ चकार कवितां ख्यातां विषयेष्वखिलेष्वपि ॥६८॥ शिष्याश्च बहवोऽप्यासुर्धनिनोऽधनिनोऽपि च ॥ बालवृद्धयुवानश्च गुरौ देवधियोऽखिलाः ॥६९॥

स्यैवाहंकारनाशकत्वमस्ति । तस्माज्ज्ञानेन अहंकृतिनाशनद्वारा दुःखनिवर्तको रुद्र एवेत्यर्थः ॥ ६१ ॥ तत्पुत्रस्त्वं तदीयेज्यायै तत्पूजाप्रवृत्त्यर्थं पृथिव्यां सत्तनुः उत्तमदेहवान् जातोऽसीति शेषः । अग्निं पिपीलिका इव त्वामहंकारः किं स्पृशेत् । अपि तु न स्पृशेदेव ॥ ६२ ॥ तवेदं गुरूपसदनं लोकसंग्रहार्थमेवास्ति यथा श्रीहरिः कृष्णो ज्ञप्त्यै ज्ञानप्राप्तये सांदीपिनिं गुरुं ययौ तथा त्वं लोकशिक्षार्थमागतोऽसि । अन्यथा तवागमनं नास्ती त्यर्थः ॥ ६३ ॥ उत्तरार्धमुत्तरान्वयि ॥ ६४॥ उत्तरार्धं परान्वयि ॥६५॥ आत्मानुभाविनः आत्मज्ञानवतः गुरोः सकाशात् ॥६६॥६७॥ विषयेषु

देशेषु ॥६८॥६९॥ दूरादिति । स्कंद एवेति ज्ञातः ॥ ७०॥ अर्थिषु सकामेषु विख्यातः तेषां कामपूरणेन प्रसिद्धः निजेप्सितं स्वेच्छितं प्रापुः ॥ ७१ ॥ हरदत्तस्य मुक्तमुमुक्षुविषयिप्रियत्वमाह । अर्थिनो विषयिणः मंत्रादिना सिद्धिप्राप्त्यर्थं मुमुक्षवः आत्मप्राप्त्यर्थं सिद्धजनाः मुक्ताः तत्सान्निध्य-जातस्वानंदासिद्धयर्थं हरदत्तानंदं ययुः । उपजातिवृत्तम् ॥ ७२ ॥ सर्गोक्तहरदत्तकथाश्रवणादेः फलमाह—शंभोरिति । शिवप्रशंसा हरदत्ताय वर्णिता अहंकृतेर्भीतिः अमुना हरदत्तेन गुरवे सुबंध्वानंदाय उक्ता सा येन श्रुता पठिता वाऽस्ति तस्यास्य श्रोतुः पाठकर्तुश्चाहंभीतिम् अहंकारभयं हत्वा शंभुः उत

नूतनुर्गुह एवेति शिवपूजाप्रवृत्तिकृत् ॥ अलौकिकैर्गुणैः कांत्या ज्ञातः शिष्यैः परैश्च सः ॥ ७० ॥ विख्यातः स बभूवोऽर्थी सत्सु विद्वत्सु चार्थिषु ॥ दृष्ट्वैव तत्कृतान्ग्रंथान्केचिदापुर्निजेप्सितम् ॥७१॥ दूरायशुस्तं बहवोऽर्थिनो ये मंत्रादिसिद्ध्यै हि तथात्मलब्ध्यै ॥ मुमुक्षवः सिद्धजनाश्च तस्मादानंदवृद्ध्यै हरदत्तसिद्धम् ॥ ७२ ॥ शंभोः प्रशंसा हरदत्तगीता चाहंकृतेर्भीर्गुरवेऽमुनोक्ता ॥ येन श्रुता वा पठितास्य शंभुर्हत्वा त्वहंभीतिमुतात्मदः स्यात् ॥७३॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे हरदत्तकथायां द्वात्रिंशः सर्गः ॥३२॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं ख्यातः क्षितौ सिद्धः प्राप्तानंदश्च निर्ममः ॥ शिवार्चां चाकरोन्नित्यं हरदत्तः प्रवृत्तये ॥ १ ॥ तुलसीबिल्वपत्राणि दूर्वाश्च कुसुमान्यपि ॥ दीयंते नित्यमानीय शिष्यैर्यत्नेन चादरात् ॥ २ ॥ दुर्लभान्यत्र पुष्पाणि न लभ्यंते हि संनिधौ ॥ दूरादानीय चैकेन भ्रमता योजनावधि ॥ ३ ॥ पुष्पाण्यपि सुगंधीनि दीयंते गुरवे मुदा ॥ चेष्टाध्यंते गुरोरन्यैस्तैश्च शोध्येन दूरतो न ॥ ॥ ४ ॥ सर्वेऽथाहुः किलास्माकं भ्रमतामपि दूरतः ॥ अल्पान्यपि न लभ्यंते पुष्पाण्येव कुतोऽन्वहम् ॥ ५ ॥

पुनः आत्मप्रदः स्यात् । आत्मज्ञानप्रापको भवति ॥ ७३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां द्वात्रिंशः सर्गः ॥ ३२ ॥ उद्दिष्टे त्रिंशे त्रिनवतिपद्यैर्द्वाविंशकान्गृहैः । स्वर्निन्ये शिष्यवर्यान्स्वान् हरदत्त इतीर्यते ॥ ३३ ॥ पूर्वसर्गोक्तां हरदत्तकथां विस्तरतो वर्णयति—इत्थं ख्यात इत्यादिना । प्रवृत्तये संप्रदायप्रवृत्तये ॥ १ ॥ २ ॥ अत्र दुर्लभानि यानि पुष्पाणि तेषां प्राप्तिः समीपे नाभवत् । तदा योजनपर्यंतं भ्राता एकेन केनचिच्छिष्येण सुगंधवंति तानि पुष्पाणि दूरादानीय संतोषेण गुरवे दीयंत इत्यन्वयः ॥ ३ ॥ ४ ॥ सर्वे शिष्याः आहुः । परस्परमिति शेषः । दूरतः दूरे

भवतामस्माकम् । कर्मणि षष्ठी । अस्माभिरल्पपुष्पाण्यपि न प्राप्यंते । एष शिष्यः प्रत्यहं बहूनि पुष्पाणि कुत आनीय सर्वेभ्यो गुरवेऽपि दत्ते समर्पयतीत्य न्वयः॥ ५ ॥ अतः परमस्मभ्यं पुष्पार्पणादयं शिष्यः सर्वैः पुष्पाकरनाम्ना वाच्यः ॥ ६ ॥ अत्र पुष्पाकरे । उत्तरार्द्धमुत्तरान्वयि ॥ ७ ॥ तुष्टिः संतोषः ॥ ८ ॥ ९ ॥ ये जनाः ॥ १० ॥ ११ ॥ आत्मनो जन्मसाफल्यं मत्वा शिवालयं कैलासं गंतुम् ऐच्छत् इच्छितवान् ॥ १२ ॥ १३ ॥ अथे दानीम् आदिनाथतः सदाशिवेश्वररुद्रविष्णुब्रह्मरूपान् आदिगुरून् अनुग्रहतिरोधानसंहारस्थितिसृष्टिकर्तृत्वेन वर्णयन् श्रीशंकरं सर्वज्ञत्वेन वर्णयति

आनीय दत्ते सर्वेभ्यो गुरवेऽपि बहून्यतः ॥ पुष्पाकरोऽखिलैर्वाच्योऽस्मभ्यं पुष्पार्पणादयम् ॥६॥ इति पुष्पाकरं प्राहुस्तं सर्वे श्रीगुरोः पुरः ॥ सर्वेभ्योत्राधिका प्रीतिर्हरदत्तगुरोरपि ॥७॥ आसीत्पुष्पार्पणेनैव सतां तुष्टिर्हि भक्तितः ॥ अथ तस्मै ददौ पूर्णां दीक्षां भक्तिमते गुरुः ॥ ८ ॥ पुष्पाकरानंद इति नाम चक्रेऽस्य शोभनम् ॥ आसीत्पुष्पाकरानंदः सेवासक्तः सदा गुरोः ॥ ९ ॥ हरदत्तेन ये दृष्टाः कृपया दूरतः क्वचित् ॥ शिवभक्ताश्च तेऽप्यासुः स्पृष्टाः किं बोधिताः पुनः ॥ १० ॥ यदोर्व्यां संस्थितः सिद्धो हरदत्तस्तदाखिलाः ॥ शैवा आसुः किलान्येऽपि गूढं चक्रुः शिवार्चनम् ॥ ११ ॥ हरदत्तोऽखिलानित्थं ज्ञात्वोर्व्यां हि शिवार्चकान् ॥ मत्वात्मजनिसाफल्यं चैच्छद्गंतुं शिवालयम् ॥ १२ ॥ निशीथेऽथ कदाचित्स हरदत्तोऽखिलेष्वपि ॥ स्वपत्सु प्रार्थयामास ध्यात्वा शंभुं शिवान्वितम् ॥ ॥ १३ ॥ हरदत्त उवाच ॥ शिवेशानाध्यक्षस्त्वमसि निखिलानां च मरुतां नृणामन्येषां च त्वदृत ह्युदितं चाशिवमिदम् ॥ यतस्त्वं चिद्रूपः सकलहृदयस्थोऽसि हि ततो जगच्चेष्टायुक्तं भवति जडमज्ञं चलमपि ॥ १४ ॥

शिवेति । हे शिव स्वप्रकाश ज्ञानस्वरूप हे ईशान अंतर्यामिरूपेण सर्वनियामक त्वं सर्वेषां देवानां नृणाम् अन्येषां जीवानां चाध्यक्षः श्रेष्ठः सर्वोत्त मोऽसि । त्वदृते त्वां विना इदं दृश्यजातम् अशिवममंगलम् उदितं कथितम् । महद्भिरिति शेषः । यस्त्वं चिद्रूपः स्वप्रकाशः सर्वेषां हृदयस्थः साक्षिरूपोऽसि । ततः कारणात् जडं परप्रकाशम् अज्ञं स्वकीयपरकीयज्ञानरहितमपि चलमस्थिरं जगत् चेष्टायुक्तं भवति । सच्चिदानंदरूपः सर्वोत्तमः सर्वसाक्षिरूपः आदिना

थस्त्वमेव सर्वरूप इत्यर्थः । शिखरिणी वृत्तम् ॥ १४ ॥ एवमादिनाथस्यैव सर्वरूपत्वं सामान्यतो निरूप्य विशेषतो दर्शयन्स्तौति । त्वमेवायं सर्वकारणः अंतस्थाः पूर्वप्रलयसमये लीना अखिलगतयः सर्ववृत्तयो यस्मिन् स लीनवृत्तिरादिनाथस्त्वमसि । अथ त्वा त्वाम् आकाररहितं गुणहीनम् अतिसौख्यात् अखंडसुखरूपत्वात् शिवं सदाशिवं चानुग्रहकर्तारं प्राहुः । सदाशिवरूपेणादिनाथ एवानुग्रहकर्त्ता भवसीत्यर्थः । भवान्सदाशिवरूपः । एको न रमे। " स एकाकी नारमत " इति श्रुतिप्रसिद्धशुद्धविद्यावृत्तिमानित्यर्थः । अथ इयं गतिः एकोऽहं न रमे इत्याकारा वृत्तिः निर्गुणनिराकारमपि सदाशिवं त्वां निराकारसगुणरूपम् इशम् ईश्वरनामकं करोति । कीदृशम् ईदृशम् अखिलांतर्हितम् अखिलविश्वं पूर्वं प्रलयसमये अंतर्हितं तिरोहितं यस्मिंस्तम् । एकोऽहं नरमे इति शुद्धविद्यारूपया वृत्त्या " अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः " इति श्रुतिप्रसिद्धो निराकारसगुणेश्वररूपस्तिरोधान

त्वमाद्यश्चांतस्थोऽखिलगतिरथोऽनुग्रहकरं निराकारं त्वाहुस्त्वगुणमतिसौख्यादपि शिवम् ॥ भवान्नैको रेमे गतिरियमथ त्वां हि कुरुते निराकारं चेशं सगुणमखिलांतर्हितमिति ॥ १५ ॥ त्वमन्येच्छुस्तेऽसौ समगुणगतिः साकृतिगुणं करोति त्वां श्रुत्या तव तनुरतो रुद्र कथिता ॥ लये तिष्ठत्येतत्त्वयि सकलमित्याद्य उदितः शिवश्चेशो रुद्रस्त्रिभिरपि च कृत्यैः खलु भवान् ॥ १६ ॥

कर्ता त्वमेवासीत्यर्थः ॥ १५ ॥ तथा त्वमेव वृत्तिभेदेन रुद्ररूपोसीत्याह—त्वमिति । यदा त्वमन्येच्छुः " स द्वितीयमैच्छत् " इति श्रुतिप्रसिद्धद्वितीयेच्छावृत्तिमान् भवसि तदा असौ इयं समगुणगतिः समाः एकरूपाः गुणाः यस्यां सा गतिः वृत्तिः गुणगर्भिणी वृत्तिस्त्वामीश्वरं साकृतिगुणं साकृतिं सगुणं च सगुणं साकारं रुद्ररूपं च करोतीत्यर्थः । अतः कारणात् हे रुद्र रुद्ररूप श्रुत्या " या ते रुद्र शिवा तनूरघोरा पापकाशिनी " इत्यादिरूपया तव तनुः कथिता तस्मात्त्वमेव गुणगर्भिण्या द्वितीयेच्छारूपया वृत्त्या रुद्ररूपोऽसीत्यर्थः । लये प्रलये एतत्सर्वं जगत्त्वयि लयकर्तरि रुद्ररूपे तिष्ठति एवं भवान् त्रिभिः अनुग्रहतिरोधानसंहाररूपैः कृत्यैः कार्यैर्निमित्तभूतैः शिवः सदाशिवः ईश्वरः रुद्रः इति रूपत्रयवानाद्यः आदिनाथ उदितः कथितोऽसि । महद्भिरिति शेषः । वृत्तिवृत्तिमतोर्भेदांगीकारेण निर्गुणनिराकारनिराकारसगुणसगुणसाकारभेदेन च श्रुतिप्रसिद्धेन अनुग्रहतिरोधानसंहारकर्ता सदाशिवेश्वररुद्ररूपस्त्व

मेव भवसीत्यर्थः ॥ १६ ॥ अतः परं सगुणसाकारवान्पालनकर्त्ता विष्णुरूपोऽपि त्वमेवेत्याह । जगदिति । हे ईश हे रुद्र त्वं स्वस्मिन्प्रलयकर्तरि स्थितं जगद्विकासयितुं बहुस्यामिति संकल्पं कुरुषे यदा तदा इयं तव गतिः बहुस्यामिति वृत्तिः तत्त्वानां पुरुषादिपंचविंशतितत्त्वानां जननी भेदेन उत्पादिका भवति। यदा एतानि तत्त्वानि जगत्प्रकटं कर्तुमीशानि समर्थानि न भवंति तदा एको असहायः गूढः गुप्तो विष्णुस्त्वमिह तत्त्वेषु चरसि प्रविशसि । कीदृशः । " एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा " इत्यादिरूपया कथितश्चासौ देवः प्रकाशमानः अखिलः सर्वगत इति रुद्ररूपस्त्वमेव बहुस्यामित्य ध्यासेन विष्णुरूपोसीत्यर्थः ॥ १७ ॥ किं च विष्णुरूपस्त्वमेव विराड्रूपो ब्रह्मासीत्याह—स इति । स सूत्रात्मा विष्णुरूपस्त्वं स्वकीयमिदं तत्त्वगतं जगत

जगत्स्वस्थं भूयः प्रकटयितुमीशोथ कुरुषे बहु स्यां संकल्पं तव गतिरियं तत्त्वजननी ॥ न चेशान्येतानि प्रकटमथ कर्तुं जगदि हाचरस्येको गूढः श्रुतिकथितदेवस्त्वमखिलः ॥१७॥ स सूत्रात्मा विष्णुर्जगदथ मया पालयत इदं निजं तत्त्वांतःस्थं त्विति च सतता ध्यासनपरः ॥ विराट् प्रोक्तश्चार्यैर्विविधजगदुत्पत्तिनिपुणः स वेधा जीवानां सुखविततये कर्मठमतिः ॥१८॥ भवंत्यस्मात्पूर्वं मुनय उत देवाश्च मनवस्ततो जीवाः सर्वेजगदिति भवान्वर्तयति वै ॥ स्वसंकल्पादेवामुमथ तव मायामिति जगुस्तया नो लिप्तस्त्वं हृद शितितयांतःपय इव ॥ १९ ॥

मया पाल्यत इति निरंतराध्यासनपरः सन् आर्यैर्महद्भिः विराट् प्रोक्तः । विविधजगतः उत्पत्तौ निपुणः समर्थः स विराड्रूपः वेधाः ब्रह्मा जीवानां सुख विततये आनंदविस्ताराय सुखप्राप्त्यर्थमिति यावत् । कर्मठमतिः कर्मकरणयोग्या मतिर्बुद्धिस्तद्वृत्तिर्वा यस्य स बभूव । विष्णुरूपस्त्वमेव पालयामीति वृत्त्य ध्यासेन कर्मवृत्तिमान्ब्रह्मा भवसीत्यर्थः ॥ १८ ॥ एवं ब्रह्मपर्यंतमादिनाथस्यैव रूपमिति प्रथमं संक्षेपेण प्रदर्श्य तस्यैव विविधजगद्रूपत्वं वर्णयति—भवं तीति । अस्माद्ब्रह्मरूपात्त्वत्त एव प्रथमं मुनयः सनकाद्याः उत पुनः देवा इंद्राद्याः मनवः स्वायंभुवाद्यास्ततः सर्वे जीवाश्च भवंति इत्येवं प्रकारेण भवांस्त्व मेव स्वसंकल्पादेव जगत्प्रवर्तयसि । अथामुं संकल्पम् । एकोऽहं न रमे । बहुस्यामित्यादिवृत्तिरूपं तव मायामिति जगुः । महांत इति शेषः । तया मायया त्वं

लिप्तो नास्मि । तत्संबंधरहित इत्यर्थः । तत्र दृष्टांतः यथा जलह्रदस्य शितितया नैल्येन अंतर्ह्रदांतर्गतं पयो न लिप्यते तद्वत् । अधिष्ठानरूपस्त्वम् अध्यस्त मायासंबंधरहितत्वेनानेकरूपोऽसीति भावः ॥ १९ ॥ ननु तर्हि भेदः स्यादत आह—यद्यपि संबंधरहितत्वं तथापि या माया रवितः सूर्यात् प्रभा यथा तथा त्वत्तः ईषदपि भिन्ना न भवति यत एवमभिन्ना ततः सा मुनिभिः चिच्छक्तिरित्युक्ता चिदेव शक्तिरित्यभेदेन वर्णिता इत्यर्थः । युवाभ्यामेव प्रकृति पुरुषाभ्यामेवांतर्बहिरपि सर्वं जगद्व्याप्तम् अहं च गुरुकृतात् गुरुकृतेन सुबोधात् सुबोधेन ज्ञानप्रकाशेन दृढमतिः दृढनिश्चयः सन् युवाभ्यामन्यत्किमपि न पश्यामि । गुरुकृपयैव सर्वत्राभेदज्ञानं भवतीत्यर्थः॥२०॥ एवमात्मनः कृतकृत्यतां मन्वानः स्वलोकगमनाय शिवं प्रार्थयति—भवद्रूपमिति । मया भवद्रूपं

तथापि त्वत्तो याऽण्वपि खलु नं भिन्ना हि रवितः प्रभेवातः प्रोक्ता मुनिभिरपि चिच्छक्तिरिति सा ॥ युवाभ्यामेवांतर्बहिरपि जगद्व्याप्तमखिलं न पश्येऽहं चान्यद्गुरुकृतसुबोधाद्दृढमतिः ॥ २० ॥ भवद्रूपमद्धा जनिरपि मया नैव विदितं भवद्रूपं सूक्ष्मं ह्यगुणमजडं चाखिलसमम् ॥ न चैवेदं लभ्यं गुरुमृत इति ज्ञातमथ वां कृतार्थश्चायास्ये भुवनमहमंघ्रीक्षणमतिः॥२१॥ श्रीदेशिकेंद्र उवाच ॥ हरदत्तस्तुतिं श्रुत्वा कैलासस्थोऽपि सर्वगः ॥ उमां शंभुरिति प्राह हसन्पश्यंस्तदाननम् ॥ २२ ॥ श्रीमहादेव उवाच ॥ सर्वेषां ज्ञानदाताहं सिद्धाश्चायांति मां मुहुः ॥ प्रष्टुमात्मानुभूतिं हि मत्पुत्रोऽद्धांकगो गुहः ॥ २३ ॥ मत्तो नैवाप विज्ञानं स्वल्पे मयि तातधीः ॥ दिष्ट्यात्मजन्मनोर्व्यां तल्लब्धं तेन गुरोः सतः ॥ २४ ॥

प्रकृतिपुरुषाभ्यां गौरीशंकराभ्यां जन्म यद्यपि प्राप्तं तथापि निर्गुणमजडं स्वप्रकाशम् अखिलसमं सर्वत्र समानं सूक्ष्मं गम्यं युवयोः रूपं न ज्ञातम् इदं सूक्ष्मं रूपं गुरुम् ऋते गुरुकृपां विना नैव प्राप्यमस्ति केनापीति शेषः । इति हेतोः मया ज्ञातं सुबंधुगुरुकृपया विदितं युवयोः अर्थश्च शैवमतप्रतिष्ठारूपः कृतोऽस्ति अथ युष्मच्चरणदर्शनेच्छुरहं भवनं कैलासम् आयास्ये आगमिष्यामीति ॥ २१॥ २२ ॥ साक्षान्मत्पुत्रः स्कंदः अंकगः समीपस्थोऽपि मयि पितृभक्तिमान् मत्तः सकाशाद्विज्ञानं नैवाप न प्राप्तवानित्यन्वयः ॥२३॥ पृथिव्यां प्राप्तजन्मना तेन गुहेन सद्गुरोः सकाशात्तज्ज्ञानं प्राप्तम् एतद्दिष्ट्या योग्यमित्यर्थः ॥ २४ ॥

अद्वयोक्तिभिर्वेदांतवाक्यैः ॥ २५ ॥ मर्त्ये मर्त्यलोके पंचाशदब्दपर्यंतमसौ स्थितोऽस्ति तत्पंचाशदब्दम् अत्र लोके पलमपि पलतुल्यमपि न भवति यथोक्तं । "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते । पितामहसहस्राणि विष्णोस्तु घटिका स्मृता । विष्णोर्द्वादश लक्षाणि पलमेकं सदाशिवः " इति मर्त्यभूः मनुष्यजन्मा ॥ २६ ॥ यानाद्विमानयानेन ॥ २७ ॥ कावेर्यंके कावेरीसमीपे ॥ २८ ॥ २९ ॥ ३० ॥ कश्चिच्छिष्यः तत्र भृंगिवचनम् ॥ ३१ ॥

जित्वा जिनांश्च मद्वेष्टन्मद्भक्तिः स्थापिता भुवि ॥ सोऽधुना दर्शनेच्छुर्नावस्तौषीदद्वयोक्तिभिः ॥ २५ ॥ पंचाशदब्दं मर्त्येऽसौ तस्थौ नात्र पलं च तत् ॥ तावतैवावयोर्मेने वियोगं मर्त्यभूरयम् ॥२६॥ गणैरानीयतां यानात्पूर्वं भृंगी तमीक्षताम् ॥ इत्थमुक्त्वाऽब्रवीच्छंभुर्भृंगिणं गच्छ भूतलम् ॥ २७ ॥ कावेर्यंके नृजन्मास्ति हरदत्ताख्यया गुहः ॥ ब्रूहि नौ कुशलं तस्मै प्रेष्यते यानमित्यपि ॥ २८ ॥ तथेति कामचार्येष तदग्रेऽवातरच्च तम् ॥ नत्वा प्राहेशयोः क्षेमं ततो यानागमं च स्वात ॥ २९ ॥ ध्यानाति हरदत्तोऽपि भृंगिवाक्यं निशम्य तत् ॥ उन्मील्य नयने दृष्ट्वालिलिंगाशु मुदान्वितः ॥ ३० ॥ तं नत्वा पुनरेवागाच्छिवं भृंगी तदा निशि ॥ कश्चिच्छुश्राव सर्वं तज्जागृतश्च बहिः स्थितः ॥ ३१ ॥ प्रातः प्राहाखिलेभ्योऽथ शिष्याः श्रुत्वातिदुःखिताः ॥ हरदत्तं ययुर्नत्वा प्राहुः प्रांजलयः स्थिताः ॥ ३२ ॥ शिष्या ऊचुः ॥ त्यक्त्वाखिलानिच्छसि यानमूर्ध्वं किं त्वं गुरो त्वद्गमने वयं हि ॥ स्थास्यामहेऽनन्यमनोऽसवश्च नो त्वामृते वारि झषा इवार्य ॥ ३३ ॥ त्वमेव तातो जननी च बंधुः सुहृद्धनं प्राणमनोधियो नः ॥ यतस्त्वयानंतभवेष्वलभ्यं तदक्षयं दत्तमनंतसौख्यम् ॥ ३४ ॥

॥ ३२ ॥ शिष्याः आत्मनः कैलासगमनाय हरदत्तगुरुं प्रार्थयंत आहुः । त्यक्त्वेत्यादिचतुर्भिः । हे गुरो त्वं सर्वांस्त्यक्त्वा कैलासगमनमिच्छसि किम् । हे आर्य त्वद्गमने सति वारि उदके मत्स्या इव अनन्यमनोऽसवः त्वत्परमनःप्राणाः वयं त्वां विना न तिष्ठामः ॥ ३३ ॥ ननु पित्रादिमंतो यूयं कथं मम वियोगेन विरहिण इत्यत आहुः त्वमिति । यतस्त्वयाऽनेकजन्मसु अप्राप्यं यदविनाश्यनंतं सुखमस्माकं दत्तम् । ततः कारणात् त्वमेव पित्रादिरूपः

प्रियोऽसि । निर्निमित्तप्रियोऽसीत्यर्थः ॥ ३४ ॥ एवं सर्वोत्तमत्वेन स्तुत्वा गुरुणा सह कैलासं गंतुं प्रार्थयंति—त्वमिति । शिवपुत्रस्त्वमत्रशिष्टप्रारब्धकर्मणोऽप्यस्मान् इतः परं कैलासं नेतुं समर्थोऽसि तत्र दृष्टांतः । रामो यथाब्धेः सकाशाद्वानरान्पाषाणैस्तारितवान् तथा भवसमुद्रादस्मांस्तारय । गुरुकृपया प्रारब्धमपि निवर्तत इत्यर्थः ॥ ३५ ॥ अदः इदं शरणागतत्राणरूपं तव व्रतमस्ति अस्मदुपेक्षयास्य व्रतस्य भंगो भवेत् । अतस्तद्व्रतं पालय । शीघ्रचरणवियोगं मा कुर्वित्यर्थः ॥ ३६ ॥ अवशिष्टकर्मणा हेतुभूतेन न नेतुं योग्याः अथवा शरणागतत्वात्कैलासं नेतुं योग्याः शिष्याः संतीति मनसि पश्यन् विचारयन् तान् शिष्यान्प्राह । मया शरणत्राणव्रतं करिष्णुना यूयमुपेक्षणीयाः त्यक्तुं योग्या न भवथ खलु । इत्थमेवं चित्ते मनसि यद्यपि वर्तते तथा

त्वं नेतुमीशः किल हीशजोऽस्माञ्छेषक्रियांश्चोर्ध्वमितो यथाब्धेः ॥ संतारयामास कपींश्च रामस्त्वं तारयास्मांस्तु तथा भवाब्धेः ॥ ॥३५॥ त्रातुं त्वमस्मत्सदृशान्भवाब्धेः प्राप्तः स्वलोकाच्छरणागतान्हि ॥ अदो व्रतं तेऽस्मदुपेक्षयाऽस्य भंगो भवेत्तत्परिपाल्यतां ॥ ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ आकर्ण्य वाक्यं हरदत्त इत्थं तान्प्राह चित्तेन विचारयंश्च ॥ नेयाः स्वलोकं शरणागतत्वादेतेऽवशिष्ट क्रियया न वेति ॥ ३७ ॥ हरदत्त उवाच ॥ नोपेक्षणीयाः खलु यूयमित्थं चित्ते तथापि क्रिययाऽऽत्तदेहाः ॥ सर्वेऽथ वो भोगभृते क्रियांतस्तस्माद्विना नैव गतिः परत्र ॥ ३८ ॥ स्वःसन्निधौ वै शतसानुगोऽपि पांडुः सभार्यः सुकृती सुरांशः ॥ नाण्वप्यसौ हीश इतोऽपि गंतुं गच्छत्सु चान्यर्षिषु किं ततोऽन्ये ॥ ३९ ॥

पि प्रारब्धकर्मणा सर्वेऽपि प्राप्तदेहाः । अत्र भोगक्षयं विना अमुत्र भोगलाभो न भवतीत्यर्थः । यदि ज्ञानाग्निना सर्वकर्मनाशे सति न प्रारब्धकर्मनाशः तथापि क्रियांतः भोक्तुः प्रारब्धकर्मनाशः भोगसमाप्तिं विना न भवति प्रारब्धनाशं विना दिव्यलोकगमनं न भवति । तथा हि " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन " इति भगवद्गीतावचने ज्ञानिनः सर्वकर्मदाहे सति प्रारब्धकर्मनाशो न भवति । कुतः " नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि " इति । " अवश्यंभाविभावानां प्रतिकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः " इत्यादिप्रमाणैः प्रारब्धस्य भोगेनैव क्षयः । तस्मात्प्रारब्धकर्मक्षयं विना परलोकप्राप्तिर्न भवतीत्यर्थः ॥ ३७ ॥ ३८ ॥ स्वरिति । स्वर्गस्य समीपे यः शतसानुः शतशृंगपर्वतस्तत्समीपगतो भार्यायुक्तः पांडुराजः पुण्यकर्ता

सुरांशः गंधर्वांशोऽपि अन्येषु ऋषिषु दिव्यलोकं गच्छत्सु सत्सु इतो लोकात्स्वर्गं प्रति अल्पमपि गंतुं समर्थो नाभवत्। अन्ये मनुष्याः कर्मणा भोगनाशं विना स्वर्गं गंतुं समर्था भवंति किम्। नैव समर्था इत्यर्थः। अत्रेयं भारतकथा। पांडुराजः कुंतीमाद्रीभ्यां पत्नीभ्यां युक्तः कदाचिच्छतशृंगपर्वतसमीपं गतो यत्र स्वर्गिणां वाग्रवः श्रूयते। तत्र स्थाने ऋषयः पर्वतोपारि गत्वा ब्रह्मादीनां दर्शनार्थमुद्युक्ताः तदा पांडुराजोपि स्वर्गं गंतुं प्रवृत्तस्तदा भोगक्षयं विना गंतुं समर्थो नाभवत्। ततो मुनयः स्वर्गलोकं जग्मुः प्रारब्धक्षये पांडुरपि स्वर्गं जगामेति। तस्माद्यूयं भोगसमाप्तौ कैलासं प्राप्स्यथेत्यर्थः ॥ ३९ ॥ संचितक्रियमाणप्रारब्धकर्मणां व्यवस्थामाह स्यादिति। ज्ञानेन संचितकर्मनाशो भवति। अहं क्रियावान्कर्मकर्ता नास्मि अकर्तास्मीति निश्चयेन ज्ञानोत्तरं यद्वर्तमानं क्रियमाणं निश्चयेन क्षयमेति न स्पृशतीति यावत्। तथा च श्रुतिः "यथा पुष्करपत्रमापो न लिप्यंते एवमेवं विदि पापं कर्म न श्लिष्यते" इति। पापं कर्मेत्युपलक्षणं पुण्यकर्मणः। "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति श्रुतौ साधुकृत्यां पुण्यक्रियां पापकृत्यां

स्याज्ज्ञानतः संचितकर्मनाशो नाहं क्रियावानिति निश्चयेन ॥ यद्वर्तमानं क्षयमेति नूनं प्राक्कर्म नो भोगमृते विदां वा ॥ ४० ॥
देहादि तत्कर्म च यो मृषैव पश्यत्यदोदुःखसुखे च तद्धीः ॥ यश्चात्मसौख्येऽस्ति सदा निमग्नः स्वर्भूपदे तस्य रवेर्यथैव ॥ ४१ ॥
नेषच्च तत्कर्म किलास्ति शेषं गंतुं स देहेन च दिव्यमर्हः ॥ संतीह चेच्छागतयो हि सिद्धास्तेषां सदापावृत ऊर्ध्वमार्गः ॥ ४२ ॥

पापक्रियाम्। सुहृदः स्तावकाः पुण्यकर्म गृह्णंति। द्विषंतो निंदकाः तस्य ज्ञानिनः पापकृत्यां गृह्णंतीति श्रवणात् क्रियमाणस्य संबंधो ज्ञानोत्तरं न भवति। प्राक्कर्म प्रारब्धं कर्म विदां ज्ञानिनामपि भोगं विना नाशं नैति। यद्यपि ज्ञानिनः प्रारब्धकर्म न नश्यति तथापि ज्ञानिनो ज्ञानदशया नास्त्येव लोकदृष्ट्या तु दृश्यते तस्माज्ज्ञानिनः प्रारब्धनाशो भोगं विना न भवति ॥ ४० ॥ ननु ज्ञानिनोऽप्यवश्यं भोगसिद्धौ दुःखित्वं स्यात्। दुःखित्वे च ज्ञानित्वं न स्यादिति चेदाह देहादिति। यो ज्ञानवान् देहादि सर्वं तत्संबंधि कर्म च मृषैव पश्यति। तद्धीः तस्य बुद्धिः अदोदुःखसुखे अमुष्य देहस्य संबंधिनी सुखदुःखे अपि मृषा पश्यति यश्च सदात्मसुखे निमग्नोस्ति तस्य ज्ञानिनः यथा रवेः सूर्यस्य स्वर्भूपदे स्वर्गभूलोकौ प्रकाश्यत्वेन समाने तथा स्वर्भूपदे समे भवतः। भूलोकनिवासिनो ज्ञानिनः स्वर्गसुखं नेच्छंति। सुखदुःखे च समे पश्यंतीत्यर्थः ॥ ४१ ॥ सर्वत्र गमने स्वतंत्रो ज्ञानवानित्याह—नेति। तस्य समदर्शिनो

ज्ञानिनः कर्म किंचिदपि शेषमवशिष्टं नास्ति । च पुनः स देहेन सह दिव्यं स्वर्गादिलोकं गंतुमर्हः योग्योऽस्ति । इह लोके स्वेच्छागतगो ये सिद्धाः संति तेषाम् ऊर्ध्वमार्गः दिव्यलोकमार्गः सदा अपावृतः अनावृतोऽस्ति । सदा समदर्शिनो गुरुभक्ताः स्वर्गगमनाय जन्मांतरस्वीकाराय अत्रैव निवासाय वा स्वतंत्रा भवंतीत्यर्थः ॥ ४२ ॥ अन्येषां स्वर्गादि दुर्लभमित्याह—यूयमिति । यूयं ज्ञानिनो वयं ज्ञानिन इत्थमेवम् अंतर्मनसि मत्वैव वर्णाश्रमधर्मेषु रुष्टाः विमुखाः उत्तमभूषणवस्त्रमिष्टान्नभक्षणादिभोगैः संतुष्टा अभुक्तभोगाः असमाप्तप्रारब्धभोगाः ये ते स्वर्गं गतुं समर्थाः भवंति किम् अपि तु न भवंति । विषयपराणां परलोको दुर्लभ इत्यर्थः ॥ ४३ ॥ सर्वान्प्रति स्वः स्वर्गं नेतुं समर्थोऽपि साक्षाद्गुहः स्कंदः स्वेच्छया तनुर्देहो यस्य तान् सर्वानेवं संतर्ज्य भीतिं

यूयं वयं ज्ञानिन इत्थमंतर्मत्वैव वर्णाश्रमधर्मरुष्टाः ॥ तुष्टाः सुभूषांबरमिष्टभक्ष्यैः स्वर्गंतुमीशाः किमभुक्तभोगाः ॥ ४३ ॥ श्रीदेशिकेंद्र उवाच ॥ स्वर्नेतुमीशोऽप्यखिलान्गुहोद्धा स्वेच्छातनुस्तान्हरदत्त इत्थम् ॥ संतर्ज्य चानात्मविदां धियं हि न्यवर्तयत्स्वर्गमना द्विदां नो ॥ ४४ ॥ एकैकशोऽथ स्वगृहान्ययुर्ये स्त्रीपुत्रवित्तादिधियस्तनुस्वाः ॥ द्वाविंशतिस्त्वात्मविदः स्वदेहगेहोज्झितस्वाः कृतदेशिकाप्ताः ॥ ४५ ॥ प्राहुर्गुरुं तेऽथ मुहुर्नमंतस्त्यक्त्वा तवांघ्री न गृहान्व्रजामः ॥ पतंतु देहास्त्वसवो व्रजंतु स्वर्वा परं धींद्रियवृत्तिभिश्च ॥ ४६ ॥ ज्ञात्वैव तेषामिति निश्चयं स द्वाविंशतिं प्राह गृहान्व्रजंतु ॥ भवंत एवानुजपुत्रदारान्पृष्ट्वैव चायांतु मया सहोर्ध्वम् ॥ ४७ ॥

प्रदर्श्य अनात्मविदाम् आत्मज्ञानहीनानां बुद्धिं स्वर्गं प्रति यद्गमनं तस्मान्न्यवर्तयत् निवर्तितवान् । विदां ज्ञानिनां तु बुद्धिं न निवर्तितवान् । ते देहाभिमानिनो विषयाशां परित्यज्य हरदत्तेन सह कैलासं गंतुमुद्युक्ता न बभूवुः । अन्ये बभूवुरित्यर्थः ॥ ४४ ॥ तनुस्वाः तनुषु देहादिषु स्वं स्वत्वं येषां देहात्मबुद्धय इत्यर्थः । द्वाविंशतिः शिष्या ज्ञानिनस्तु स्वदेहगेहेषु उज्झितं त्यक्तं स्वत्वं यैस्ते कृतः देशिकः गुरुः आप्तः सुहृत् यैस्ते तथा बभूवुः कैलासं गंतुं गुरुचरणैकनिष्ठा बभूवुरित्यर्थः ॥ ४५ ॥ ते द्वाविंशतिः स्वः स्वर्गं वा अथवा परं नरकादिलोकम् इंद्रियवृत्तिभिः सह व्रजंतु ॥ ४६ ॥ सः हरदत्तः

ऊर्ध्वं कैलासम् ॥ ४७ ॥ स्वीयेभ्यः स्त्रीपुत्रेभ्यः ॥ ४८ ॥ स्वर्यानस्य स्वर्गमनस्य प्राप्त्यातिहृष्टाः।उग्रात्तपसः महत्तपसा यन्न लभ्यं तत्कैलाससुखं गुरुः अनायासेनार्पयति । तत्र वः युष्माकं दुःखं किमर्थम् ॥४९॥ अथो अनंतरम् । वैधव्यं विधवात्वरूपं अपैत्र्यं पितृभावरूपं गतबंधुमत्त्वरूपं इति स्वदुःखं

तथेति गत्वा सदानि सर्वैः स्वीयेभ्य उक्तं गुरुणाऽऽत्मनां हि ॥ कैलासयानं तदथाखिलास्ते श्रुत्वैव दुःखाद्रुरुदुस्तदोच्चैः ॥४८॥ स्वर्यान लब्ध्या सहसातिहृष्टा द्वाविंशतिस्ते स्वजनांस्तदाहुः ॥ नो लभ्यमुग्रात्तपसस्तदंजो दत्ते गुरुर्दुःखमथात्र किं वः ॥ ४९ ॥ प्राहुः स्त्रियोऽथो भवदूर्ध्वयानेऽस्माभिस्तु वैधव्यमसह्यमत्र ॥ पुत्रैस्त्वपैत्र्यं गतबंधुमत्त्वं तद्वंधुभिश्चेत्यखिलैः स्वदुःखम् ॥ ५० ॥ नवं गृहं यद्बहुधान्यवित्तं स्त्रियः सुरूपाः सततं व्रजंतीः ॥ पुत्रांश्च कांतं वपुरत्र हित्वा स्वः किं मुधा गच्छथ वै युवानः ॥ ५१ ॥ तान्कांश्चिदंबा जनको वरिष्ठबंधुः स्वसाप्तः श्वशुरोपि तत्स्त्री ॥ प्राहुर्हि वृद्धाः कथमद्य हित्वा शोकान्वितान्नः प्रतियात चोर्ध्वम् ॥ ॥ ५२ ॥ सर्वे पुनः प्राहुरिमे गृहैश्चेत्सोपस्करैर्धान्यधनैर्गुरुर्वः ॥ नेष्यत्यथास्माभिरसौ कृपाब्धो वयं तदा स्याम सुखान्विता वै ॥ ॥ ५३ ॥ नो चेद्विषाच्छस्त्रविघाततो वा त्यक्षामहेऽसून्भवदग्र एव ॥ ततोऽखिलानामपि चांत्यकर्म कृत्वैव गच्छंतु सुखं भवंतः ॥ ॥ ५४ ॥ श्रीदेशिकेंद्र उवाच॥ श्रुत्वाखिलानामिति साहसोक्तिं ते चाहुरंतर्गुरुराह नेष्ये ॥ द्वात्रिंशसंख्यान्छित्रलोकमित्थं किं पस्त्य युक्तानथ नेष्यतीमान् ॥ ५५ ॥ लभ्यः कुतः कर्मभुजां हि नाकोऽस्मान्नेष्य इत्थं कृपया गुरोर्भक्त ॥ नैषा मृषाद्धा नूतनोर्गृहस्य विघ्नोत्र नः प्राक्तनतोऽन्यथा न ॥ ५६ ॥ किं चोच्यतामद्य गुरोः समीपं गत्वेति तस्थुर्गृह एव तूष्णीम् ॥ प्रागाद्ययामान्निशि यान मत्र स्वाचाययौ कृष्णतपश्चतुर्थ्याम् ॥ ५७ ॥

निवेदितमिति शेषः ॥ ५० ॥ स्वः स्वर्गं युवानः तरुणा यूयम् ॥ ५१ ॥ येषामंबादय आसुस्तान्प्रति । तत्स्त्री श्वशुरपत्नी ॥ ५२ ॥ इमे मात्रादयः ॥ ५३ ॥ ५४ ॥ पस्त्ययुक्तान् स्थावरगृहयुतान् । "निशांतपस्त्यसदनम्" इत्यमरः ॥ ५५ ॥ ५६ ॥ किमुच्यतां किं वाच्यम

स्माभिरिति शेषः । माघमासकृष्णपक्षचतुर्थ्याम् आद्ययामात्प्रथमप्रहरात्प्राक् निशि आकाशायानं विमानमाययौ ॥ ५७ ॥ तेन विमानेन । चंद्रस्य प्रकाशः अर्ककांतिः अधिकं यथा तथास्ति अथापि सौम्यः । अद्य चतुर्थ्यां विलक्षणोऽयं चंद्रोदय इत्यर्थः ॥ ५८ ॥ तावदाकाशात्तैर्ग्रामस्थै र्वाद्यशब्दः श्रुतः । बहुकांत्या कमनीयं शिवगणैः कर्तृभिः आर्यशब्दैः संस्कृतशब्दैः शब्दितं वाच्यमानमिव कृतं विमानं च दृष्टं हरदत्तमठे समीपभूमौ आगतम्

प्रकाशितं तेन पुरं स्वकांत्या पौरास्तदाहुः प्रहरार्द्ध एव ॥ इंदोः प्रकाशोधिकमर्ककांतेः सौम्यस्तथापीदमहो किमद्य ॥ ५८ ॥ तावच्छ्रुतस्तूर्यरवश्च खात्तैरूर्ध्वं तु दृष्टं बहुकांति कान्तम् ॥ यानं गणैः शब्दितमार्यशब्दैर्गुरोर्मठेऽवातरदंकगोऽव्याम् ॥ ५९ ॥ प्राहुर्गु रुर्गच्छति नाकमद्यानेनैव चेद्द्रष्टुमिदं व्रजामः ॥ नेष्यत्ययं नश्च ततः स्वगेहे स्थेयं हि गेहान्न वरं सुखं स्वः ॥ ६० ॥ ते तच्छ्रुत्वेत्थं गृह एव मत्वा द्वाविंशकास्त्वार्यरवाच्च कांत्या ॥ यानागमं स्वीयभयादनीशास्तद्द्रष्टुमंतः स्वगुरुं स्तुवंतः ॥ ६१ ॥ ततो हि यानत्प्रमथादिकास्तु नत्वा गुरुं तं हरदत्तरूपम् ॥ प्रोचुर्भवद्दर्शनवांछयैव संप्रेषितं यानमिदं शिवेन ॥६२ ॥ तान्प्राह सोऽपीत्थमहं मुधैव याने नैकोतितुष्टोऽस्मि शिवात्मजो हि ॥ रामस्त्वयोध्यामिव शंभुभक्तान्द्वाविंशकान्नेष्य इतोऽद्य गेहैः ॥ ६३ ॥ तानानयध्वं द्रुतमेव यूयं गत्वैव गेहेषु पृथङ्ममोक्त्या ॥ शैवास्तथोक्ता गृहमेत्य तत्तत्प्रोचुर्गुरुर्वः स्मरति द्युयाने ॥ ६४ ॥ अनन्यदृष्टानथ तान्निरीक्ष्य द्वाविंशकाः प्राहुरिदं नमंतः ॥ स्त्र्यादिस्वकीयास्तु वदंति गेहैः सोपस्करैर्नश्च नयध्वमूर्ध्वम् ॥ ६५ ॥

॥ ५९ ॥ ग्रामस्थाः प्राहुः अनेन यानेन नाकं स्वर्गं वयं द्रष्टुं व्रजामश्चेत्तर्हि अयं हरदत्तः नोऽस्मान्नेष्यति ततो हेतोः स्वः स्वर्गे । अस्मद्यानाभावेनकार्यत्वम् । स्वर्गसुखं गृहसुखाच्छ्रेष्ठं नास्ति । ॥ ६० ॥ ते ग्रामस्थाः यानागमं विमानप्राप्तिं मत्वा तद्यानं गंतुं स्वीयानां स्त्रीपुत्रादीनां भयेन भविष्यतीति निश्चयेन । गृह एव स्थितवंतः ॥ ६१ ॥ ६२ ॥ एकोहमूर्ध्वगमने संतुष्टो नास्मि । देहैः सह ॥ ६३ ॥ द्युयाने कैलासगमनविषये ॥ ६४ ॥ अन्यैरदृ

ष्टान् ताञ्छिवगणान् ॥ ६५ ॥ इति साहसं श्रुत्वा वयं तुष्णीं स्मः तूष्णींभूता इत्यर्थः । अथ सर्वं गुरवे निवेद्यं भवद्भिरिति शेषः ॥ ६६ ॥ ननु एते अनधिकारिणः कथं नेतव्या इत्यत आह आत्मविदः ज्ञानिनः ॥ ६७ ॥ नेतुं योग्ये विमानश्रेष्ठे नियोज्याः स्थापनीयाः भवद्भिरिति पूर्वैः सह योज्यम् ननु कथमेते देहगेहैर्भौतिकैः सह नेतव्या इत्यत आह—हि यस्मादात्मविद्भिर्दृष्टं स्पृष्टं यत्तेभ्यो ज्ञानिभ्यः पृथक् नास्ति इति आद्यैः श्रेष्ठैरुक्तम् ॥ ६८ ॥

नो चेदसुत्यागमिहैव कुर्मः श्रुत्वा वयं साहसमेव तूष्णीम् ॥ स्मश्चाथ सर्वं गुरवे निवेद्यं स्वःस्यात्कुतः कर्मशरीरिणां नः ॥ ६६ ॥
तेऽथाययुः सद्गुरुमुक्तमेतैस्तं चाब्रुवन्सोऽपि निशम्य भूयः ॥ तांश्चाह सोपस्करगेहभार्यात्मजाप्तभृत्याश्च सधान्यवित्ताः ॥
॥ ६७ ॥ द्वाविंशकाश्चात्मविदः सदेहा नेतुं क्षमे यानवरे नियोज्याः ॥ स्पृष्टं च दृष्टं हि यदात्मविद्भिस्तन्नैव तेभ्यः पृथगुक्तमाद्यैः
॥ ६८ ॥ श्रीदेशिकेंद्र उवाच ॥ ब्रह्मादिदेवैरपि यास्त्यलंघ्या स्वेच्छानृदेहस्य हि तारकारेः ॥ दूतैः श्रुताज्ञाऽथ गृहांश्च तेषां गतोदितं
तेभ्य इदं गुरूक्तम् ॥ ६९ ॥ श्रुत्वैव तुष्टा ससुतास्त दाराद्वाविंशतिः स्वस्वगृहास्थितास्ते ॥ गेहानि दूतैर्बलवद्भिरेषामुत्पाट्य मूलानि निहि
तानि याने ॥७०॥ तेषां समीपे लघुतार्णगेहेऽथासीज्जरंती विधवातिनिःस्वा ॥ तामाहुस्तेऽद्य विमानमेहि तान्साब्रवीदद्य तपश्चतुर्थी
॥ ७१ ॥ मया गणेशाय किलार्प्यतेऽस्यां त्रिसप्तसंख्याकृतमोदकैस्तु ॥ नैवेद्यमेतेषु च पाचितेषु यास्ये ततः स्थेयमिहैव सर्वैः
॥७२॥ श्रुत्वेति सर्वे जहसुस्ततोत्र संस्थापितोऽसौ हरदत्त एतैः ॥ पुष्पाकरस्तं प्रणमंस्तदाह त्यक्त्वैव मां गच्छसि किं त्वमेकम् ॥७३॥
तं सांत्वयन्प्राह गुरुस्त्वमेकस्तिष्ठन्पृथिव्यां शिवभक्तिमग्र्ये ॥ संवर्द्धयस्वाखिलमेव वेत्सि कैलासगस्यापि ममात्र वृत्तम् ॥ ७४ ॥

स्वेच्छया नृदेहो यस्य । तारकारेः गुहस्य या आज्ञा ॥ ६९ ॥ मूलान्मूलदेशादुत्पाट्य ॥ ७० ॥ तेषां द्वाविंशतिशिष्याणाम् । अल्पे तृणगृहे जरंती अतिवृद्धा अतिदरिद्रा विधवा स्त्री आसीत् । अद्य माघकृष्णचतुर्थी अस्ति ॥ ७१ ॥ अस्यां चतुर्थ्याम् एतेषु मोदकेषु पाचितेषु सत्सु नैवेद्यम् अर्प्यते निवेद्यते । ततोऽहं यास्ये तावत्पर्यंतं सर्वैः स्थातव्यमित्यर्थः ॥ ७२ ॥ एतैः शिवगणैः ॥ ७३ ॥ कैलासगतस्यापि मम सर्ववृत्तम् अत्र लोके

त्वं जानासि ॥ ७४ ॥ तं पुष्पाकरानंदम् ॥ ७५ ॥ गृहसमीपजनैस्त्यक्ताम् ॥ ७६ ॥ आत्मनोपि कैलासगमनाय गणेशं प्रार्थयति त्वमिति पंचभिः । जनैः स्मृतः मरुतां देवानां मध्ये विघ्नहर्ता.यतस्ततो विघ्नेश इत्यार्यैरुक्तोऽसि । त्वत्पूजया स्वर्गगमनाय विघ्नो बभूव यथा स्वच्छाकाशे सूर्येण तमःप्राप्तिस्तथा विघ्नहरपूजायां नामार्थापलापिका विघ्नप्राप्तिरित्यर्थः ॥ ७७ ॥ किंच सिद्धास्तव मंत्रजपेनोत्तमसिद्धिं प्राप्नुवंति । अतस्त्वां सिद्धीश्वरं प्राहुः । संप्रति विप रीतमित्याह । ते तव पूजैव मे मह्यं स्वः स्वर्गस्य असिद्धिप्रदा जाता । यथा शीतनिवारको वह्निः शैत्यकारको भवति । तथा सिद्धीश्वरे त्वयि असिद्धिप

तं स्थापयित्वा स्वमठेऽथ तस्माद्ययौ सुयानेन ततः षडास्यः ॥ सर्वैश्च दृष्टो हरदत्तसंज्ञः कैलासगैर्ज्ञानिभिरात्मतुष्टैः ॥ ७५ ॥
या प्राक्स्थितासीद्गृह एव वृद्धा देवाय नैवेद्यमथार्पयित्वा ॥ तं प्रार्थयंती नय मां गणेश त्यक्तां गृहांकस्थजनैरपीति ॥ ७६ ॥
त्वं विघ्नहर्ता मरुतां स्मृतोऽतो विघ्नेश उक्तोऽसि सदा किलार्यैः ॥ त्वत्पूजया स्वर्गमने हि विघ्नः स्वच्छेंऽबरेऽर्केण तमोवदेतत् ॥ ७७ ॥
सिद्धाश्च ते मंत्रजपात्सुसिद्धिं व्रजंति सिद्धीशमतो जगुस्त्वाम् ॥ अर्चा तवैव स्वरसिद्धिदा मेऽग्निः शीतहा शीतकरो यथाभूत् ॥
॥ ७८ ॥ आराधनात्ते तु कुधीश्च सद्धीः ख्यातोऽसि बुद्धीश इति त्रिलोक्याम् ॥ भवत्सपर्याऽमतिदा द्युगत्यै चन्द्रो निशायामिव तापकर्ता ॥ ७९ ॥ शास्ता त्वमेकः प्रमथादिकानां धृतं त्वयाऽतस्तु गणेशनाम ॥ तस्थुर्गणास्ते न तवार्चनांतं भृत्या इनस्येव कृतापमानाः ॥ ८० ॥ विघ्नेश सिद्धीश मतीट् गणेश नामानि ते स्वस्वकृतिक्षमाणि ॥ व्यस्तानि तान्यद्य मम द्युरोधात्स्वर्मां गृहाद्व्यां नय तन्निवृत्त्यै ॥ ८१ ॥

दत्वमयुक्तमित्यर्थः ॥ ७८ ॥ किं च तवाराधनेन कुबुद्धिरपि सुबुद्धिर्भवति । अतस्त्रैलोक्ये त्वं बुद्धीश्वर इति ख्यातोऽसि । अधुना तु विपरीतमि त्याह—भवतः तव सपर्या पूजा द्युगत्यै मम स्वर्गगमनाय अमतिदा बुद्धिदा न भवति रात्रौ चंद्रस्तापकरो यथा तथा बुद्धिपतेः पूजा मद्बुद्धिनाशिनीत्यर्थः । ॥ ७९ ॥ एवमपि गणेशनामानर्थक्यमपीत्याह—शास्तेति । ते गणाः तव पूजासमाप्तिपर्यंतं न स्थितवंतः । क इव इनस्य राज्ञः कृतः अपमानो यैस्ते भृत्या इव एवं गणास्तवाधीनाः यतो न भवंति अतस्तव गणेशनाम्नो वैयर्थ्यमित्यर्थः ॥ ८० ॥ एवं नामचतुष्टयवैयर्थ्यं प्रदर्श्य. तत्सार्थक्याय मां

कैलासं नयेति प्रार्थयति—विघ्नेशेति । स्वस्वकृतिक्षमाणि स्वस्वकार्यसमर्थानि संति तानि नामानि मम गुरोघात्स्वर्गरोधाद्यस्तानि विपरीतार्थकानि जातानि । तन्निवृत्त्यै स्वनाम्नो व्यर्थत्वपरिहाराय गृहयुक्तां मां प्रति स्वः स्वर्गं नयेत्यर्थः ॥ ८१ ॥ विकटो गणेशः एषः स्कंदो मम भक्तां वृद्धां विहाय त्यक्त्वा स्वभक्तान् गृहैः सह दिवं निन्ये इति गुहेन स्पर्धान्वितः सन् भक्तामयानां यानेन विमानेन रहितां सकुटीं पर्णकुटीसहितां हि निश्चयेन दिवं नेष्ये इति हृदा मनसा मनोनिश्चयेनेत्य आविरासीदिति द्वयोः संबंधः ॥ ८२ ॥ हस्त्याननो गजाननः अब्जालिको भालचंद्रः आत्मनो दंतं पाशम् अंकुशम्

स्तुतस्तयेत्थं विकटो गुहेन स्पर्धान्वितो ह्येष दिवं स्वभक्तान् ॥ निन्ये विहायेह ममातिभक्तां नेष्ये ह्ययानां सकुटीं हृदेति ॥ ८२ ॥
हस्त्याननोऽब्जालिक आत्मदंतपाशांकुशाभीतिभृदाविरासीत् ॥ बालार्ककोट्यंगरुचिस्तथाऽसौ निरीक्षितः स्वांगण उन्नतांगः ॥
॥ ८३ ॥ बहिः स्वनत्यै त्वरयाव्रजंत्याः समूलगेहं निजशुंडयाऽसौ ॥ निनाय कैलसमुमेश्वराग्रे ययौ गृहद्वारमियं तु यावत् ॥ ८४ ॥
विघ्नेश्वरं स्वांगणसंस्थमेव मेने शिवस्यापि समीपगं सा ॥ तुष्टा गणेशस्य मुखे स्वहस्तात्समार्पयन्मोदकमेकमेकम् ॥ ८५ ॥
तत्राययौ चाथ विमानमस्मादुत्तीर्य सर्वे ददृशुः सभाग्रे ॥ तद्वेहमेनां च समर्पयंतीं वक्त्रे गणेशस्य सुमोदकान्हि ॥ ८६ ॥ मिथोऽ
खिलाः प्राहुरहो विमानमृते कथं चात्र समागतेयम् ॥ गृहान्वितापीदमुमात्मजस्य कृत्यं चतुर्थीव्रततोषितस्य ॥ ८७ ॥ नत्वा षडा
स्योऽथ शिवं शिवां च स्वस्याग्रजं प्रांजलिराह चेत्थम् ॥ मर्त्याश्च गेहाप्रयुताः किलात्रानीताः क्षमध्वं मम कृत्यमित्थम् ॥ ८८ ॥
शिवोऽब्रवीत्तं भवता कृतं यत्तन्मे हृदिस्थं भुवि भक्तिवृद्ध्यै ॥ नोचेत्कथं तैः समवाप्यतेयं येषां गतिर्नो हिमवत्यपि स्यात् ॥८९॥

अभीतिमभयमुद्रां च बिभर्ति स एतादृशः आविर्बभूव । बालसूर्याणां कोटिरिवांगकांतिर्यस्य उन्नतांगः उच्चदेहोऽसौ गणेशस्तया वृद्धया स्वांगणे दृष्टः ॥ ८३ ॥ असौ गणेशः स्वनमस्कारार्थं बहिराव्रजंत्यास्तस्या मूलदेशसहितं गृहं स्वशुंडया कैलासं प्रति गौरीशंकरसमीपे तावन्निनाय यावदियं गृहद्वारसमीपं ययौ तावदित्यर्थः ॥८४॥ शिवस्य समीपगतमपि स्वांगणस्थितमेव मेने । स्वहस्तात् स्वहस्तेन ॥ ८५ ॥ पश्चाद्धरदत्तविमानं प्राप्तमित्याह । तत्रेति । तत्र कैलासे ॥ ८६ ॥ मिथ इति ॥ ८७ ॥ स्वस्याग्रजं गणेशं च नत्वाऽऽह ॥ ८८ ॥ यत् पृथिव्यां भक्तिवृद्ध्यर्थं शैवमतस्थापनं मम मनोगतं तद्भवता कृतं येषां

मनुष्यशरीरधारिणां हिमवति पर्वतेऽपि गतिः पादचारेण गमनं न स्यात् न भवितुमर्हतीत्यर्थः । तैरयं मल्लोकः नोचेन्मदिच्छां विना मनुष्यशरीरेण कथमत्रागम्यते त्वत्कृतशैवमतस्थापनेन कैलासे सदेहमनुष्यागमनं मयांगीकृतमिति भावः ॥८९॥ ये हरदत्तेन नीताः अत्र कैलासे स्थिताः तेषां गेहभूः गृहाधारा भूमिः मूलतः गृहोत्पाटनेन संजातैर्गर्तैः सगेहांस्तान्हरदत्तः ऊर्ध्वं निन्ये इति सूचयति कथयति जनेभ्य इति शेषः । तथा च—कर्णाटकगृहगर्तैर्हरदत्तमाहात्म्यं वर्ण्यते ॥ ९० ॥ षडधिकद्विशतसंख्याकं हरदत्तानंदं प्रणमति—य इति । कौ पृथिव्याम् उक्त्वा प्रतिपाद्य । तं नताः स्मः ॥ ९१ ॥ सप्ताधिकद्विशतसं

मर्त्याश्च ये दिव्यशरीरिणोऽत्र भूत्वा स्थिताः क्लेशजराविहीनाः ॥ निन्ये सगेहान्हरदत्त ऊर्ध्वं तद्गेहभूः सूचयतीति गर्तैः॥९०॥ योद्धा गुहः कौ शिवभक्तिमुक्त्वा द्वाविंशकान्गेहयुतांश्च निन्ये ॥ कैलासमेनं हरदत्तसंज्ञं गुरुं षडूर्ध्वं द्विशतं नताः स्मः ॥ ९१ ॥ दत्त्वैव पुष्पाणि गुरोः सुतोषं कृत्वालभन्मंत्ररहस्यमस्मात् ॥ तमूर्ध्वसप्तद्विशतात्तसंख्यं पुष्पाकरानंदगुरुं नताः स्मः ॥ ९२ ॥ चरितमतिरहस्यं संप्रदायैकगम्यं क्वचिदपि न शठायाऽश्रद्दधानाय वाच्यम् ॥ पठति परमभक्त्या यः सदेदं शृणोति भुवि सकलसुखाढ्यो याति कैलासमंते ॥ ९३ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धे साशिष्यहरदत्तानंदकथावर्णनंनाम त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

श्रीदेशिकेंद्र उवाच ॥ शिष्याः पुष्पाकरस्यापि विद्वांसः सततं गुरोः ॥ सेवासक्तास्तथाप्येषु ह्यासीदेकोऽतिबुद्धिमान् ॥ १ ॥ सर्वेभ्योऽप्यधिकां सेवां चकारासौ गुरोः सुधीः ॥ संतुष्टः श्रीगुरुस्तस्मै ददौ मंत्ररहस्यकम् ॥ २ ॥ त्रिधया सेवया बुद्ध्या तं ज्ञात्वा चाखिलोत्कटम् ॥ उत्कटानंदमित्यस्याकरोन्नामापि देशिकः ॥ ३ ॥ यः सेवयात्युत्कटया हि बुद्ध्या चातोषयत्स्वीयगुरुं त्रिदा च ॥ उदष्टपूर्णद्विशतात्तसंख्यं तमुत्कटानंदगुरुं नताः स्मः ॥ ४ ॥

ख्याकं पुष्पाकरानंदं प्रणमति दत्त्वेति । सुतोषं संतुष्टम् अस्माद्धरदत्तानंदात् तं नताः स्मः ॥ ९२ ॥ सर्गोक्तहरदत्तकथापठनादिफलमाह चरितमिति । मालिनीवृत्तम्॥९३॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकयामर्थस्फुर्त्यभिधायां त्रयस्त्रिंशः सर्गः॥३३॥ उच्चतुस्त्रिंशके पद्यैश्चतुरष्टमितैः कथा ॥ उत्कटाख्यात्सप्तदशगुरूणां कथ्यते क्रमात् ॥ ३४ ॥ शिष्या इति ॥ १ ॥ २ ॥ अखिलोत्कटं सर्वोत्कृष्टम् ॥ ३ ॥ अष्टाधिकशतसंख्यमुत्कटानंदं प्रणमति यइति ।

विदा ज्ञानेन उत्कृष्टबुद्ध्या च स्वगुरुं तोषितवात् तं नताः स्मः ॥ ४ ॥ ५ ॥ ६ ॥ सहपाठकाः सहाध्यायिनः ॥ ७ ॥ नवाधिकद्विशतसंख्यकमानंद देवानंदं प्रणमति नैसर्गिकैरिति । स्वाभाविकैः । तं नताः स्मः ॥ ८ ॥ दशाधिकद्विशतसंख्याकं विमर्शानंदं प्रणमति ब्रह्मेति । विमर्शो विचारः इदं विश्वं विचारेणानंदो यस्य तं नताः स्मः ॥ ९ ॥ एकादशाधिकद्विशततमं पूर्णानंदं प्रणमति ब्रह्मेति । यथा नभस्तथा बहिः अंतः अस्मिञ्जगति पूर्णं ब्रह्मैवास्ति

उत्कटानंदनाथस्य शिष्येष्वेकोतिसात्त्विकः ॥ धीमान्विद्वांश्च नान्येषां न्यूनं चाधिकमीक्षते ॥ ५ ॥ चेदुक्तोऽन्यैर्विनोदेन हसत्येव न वक्ति तान् ॥ कदाचिन्नैव विक्षिप्तः सदानंदान्वितः सुधीः ॥ ६ ॥ आनंददेवमित्याहुस्तं सर्वे सहपाठकाः ॥ तत्स्वभावाद्गुरुस्तुष्टः पूर्णं मंत्रैश्चकार तम् ॥७॥ नैसर्गिकैरेव गुणैर्गुरुं यः संतोष्य तस्मात्समवाप मंत्रान् ॥ नवोत्तरं तं द्विशतात्तसंख्यमानंददेवाभिधमानताः स्मः ॥ ८ ॥ ब्रह्मैव चानंदमयं हि यस्य यो वै विमर्शोऽपि ततो न भिन्नः ॥ सदेति पश्यंतमिदं विमर्शानंदं दशोर्ध्वं द्विशतं नताः स्मः ॥९॥ ब्रह्मैव पूर्णं बहिरंतरस्मिन्यथा नभश्चेति सदानुभूतिम् ॥ एकादशोर्ध्वं द्विशतं हि पूर्णानंदं गुरुं तं सततं नताः स्मः ॥ १० ॥ अथासीद्द्राविडे राजा वीरस्वामीति विश्रुतः ॥ अत्युग्रशासनस्तस्य त्रेसुः शासनतः प्रजाः ॥ ११ ॥ नाशृणोन्मंत्रिणोक्तं च कुतः सोऽन्योदितं पुनः ॥ पूर्णानंदं ययुस्तस्य प्रजाः शरणमेकदा ॥ १२ ॥ प्रणम्य देशिकं सर्वास्तिष्ठंत्यः कृतसंपुटाः ॥ प्रार्थयामासुरात्मेक्षं स्वोदंतकथनेप्सवः ॥ १३ ॥ प्रजा ऊचुः ॥ त्वं पूर्णबोधोसि सदात्मसौख्यमग्नोऽखिलं पश्यासि सौख्ययुक्तम् ॥ नो त्वामधिष्ठानधियात्र दुःखं स्पृशत्यहोंतोऽर्कमिवातिकांत्या ॥ १४ ॥

इति सदानुभवोऽस्ति तं नताः स्मः ॥ १० ॥ अथेति त्रेसुः त्रासं प्राप्ताः ॥ ११ ॥ स राजा ॥ १२ ॥ कृतसंपुटाः कृतांजलय इत्यर्थः । आत्मेक्षम् आत्मदर्शिनम् ॥ १३ ॥ अधिष्ठानधिया साक्षिनिश्चयेन सौख्यमग्न इति व्यवहितेन संबंधः । अहोन्तः अस्तो यथाऽतिकांत्या युक्तं सूर्यं न स्पृशति तथाऽपि

सुखयुक्तं त्वां प्रति दुःखं न स्पृशतीत्यर्थः ॥ १४ ॥ ननु यूयमपि विषयप्राप्त्या सुखिन एवेति चेत्तत्राहुः । सौख्यततौ सुखविस्तारायार्थान्विषयान्वांच्छामहे यद्यपि तथापीमे विषयाः गाढे तमसि अल्पं प्रकाशं विद्युदिव तां सुखततिमल्पां कुर्वंति इति हेतोः अत्र विषयेषु सदा दुःखमेवास्ति विषयसुखे सौख्यप्रतीतावपि पूर्वोत्तरकाले दुःखरूपत्वमेवेत्यर्थः ॥ १५ ॥ किं च नृपोऽप्यस्मान्प्रति खड्गहतानुल्मुकैरिव उग्रैर्दंडैः करग्रहादिभिर्दंडयति । अतस्त्वं ज्ञानमयवचनेनैनं राजानं संशामय शांतं कुरु ॥ १६ ॥ नन्वेतत्सर्वं मम मिथ्यैव प्रतीयते किं तत्प्रेरणयेत्याहुः । मिथ्येति यद्यपि विदुषस्तव ज्ञानदृष्ट्याऽज्ञकृत्यं चित्रगत

वयं तु देहात्मधियः सदार्थान्वांछामहे सौख्यतताविमेल्पाम् ॥ कुर्वंति तां विद्युदिव प्रकाशं गाढे तमस्यत्र सदेति दुःखम् ॥ १५ ॥
इत्थं स्वदुःखव्यथितांश्च दंडैरिवोल्मुकैः खड्गहतान्नृपोऽस्मान् ॥ उग्रैः सदा दंडयति त्वमेनं संशामयोक्त्याऽमलबोधमय्या ॥ १६ ॥
मिथ्या किल ज्ञानदृशाऽज्ञकृत्यं चित्रेण तुल्यं विदुषस्तथापि ॥ चित्रं मुधा मार्जितुमुद्यताज्ज्ञः शिशोर्यथा पाति नृपात्तथा नः ॥१७॥
इत्थं प्रजाप्रार्थनया महोग्रं चागान्नृपं सर्वगतात्मबुद्धिः ॥ द्वास्थैर्नतं कांतिवरं समीक्ष्य राजा स शांतो हि सतामितीक्षा ॥ १८ ॥
उत्थाय सिंहासनतस्तमस्मिन्संस्थाप्य बद्धांजलिराह चेनः ॥ स्वामिन्निरीहस्य तवागमान्मे सार्था जनिर्ब्रूहि यदस्ति कृत्यम् ॥१९॥
श्रुत्वेति तं प्राह गुरुर्न किंचित्कृत्यं ममाथाप्यणु वच्मि तेऽहम् ॥ प्राक्पुण्यतस्त्वं नृपतां प्रयातः पापं मुधैतत्कुरुषेत्र तद्घ्नम् ॥ २० ॥
यतः प्रजाः पीडयसि त्वमुग्रदंडैः पुनस्ताश्च भवान्तरेषु ॥ भूत्वा नृपास्त्वामपि दंडयंत्यो ह्यहंकृतं बाधत एव पापम् ॥ २१ ॥
त्वं तां त्यजातः क्षितिपोहमित्थमंते स्फुरंतीमियमात्मकस्य ॥ हंत्रीं भवांतेर्हि मुधा जयान्यैः क्रीडा सकृद्द्यूतमुखीव रायः ॥ २२ ॥

कर्मसदृशं मिथ्यास्ति तथापि मिथ्यात्वज्ञानेपि ज्ञः यथा चित्रं मुधा मार्जितुमुद्युक्ताच्छिशोर्बालाद्रक्षति तथा त्वमपि नृपान्नः रक्षेत्यर्थः ॥ १७ ॥ कांत्या वरः श्रेष्ठः अतो द्वारपालैर्नतं नमस्कृतं तं दृष्ट्वा राजा शांत आस । हि यस्मात्सतामीक्षा दर्शनम् इति सद्यः सुबुद्धिदमित्यर्थः ॥ १८ ॥ अस्मिन्सिंहासने इनः नृपः ॥१९॥ अत्र लोके तद्घ्नं प्राक्पुण्यनाशकं पापं प्रजापीडनरूपम् ॥२०॥ भवांतरेषु जन्मांतरेषु नृपाः राजानो भूत्वा त्वामपि दंडकर्त्र्यो भविष्यंति हि यस्मात् । अहंकृतं अहंकारपूर्वकं कृतं पापं बाधत एव तस्मात्त्वं प्रजापीडनं मा कुर्वित्यर्थः । उपजातिवृत्तम् ॥२१॥ अतस्त्वं तामहंतां राजाहमिति हृदि

स्फुरंतीं त्यज हि यस्मादियम् अहंता भवांतैः जन्ममरणैर्निमित्तभूतैः आत्मकस्यात्मसुखस्य हंत्री नाशिकास्ति यथा द्यूताख्या क्रीडा जयान्यैर्जयपराजयै रायः धनस्य हंत्री तथात्मधननाशिकाऽहंता त्याज्येत्यर्थः ॥ २२ ॥ अहंकारस्य कल्पितत्त्वमाह देह इति । अहमस्मीति आत्मैक्यरूपा या तव देहेऽनुभूतिरनुभवोऽस्ति सा सर्वेषां जीवानां पृथक्छरीरेपि समानास्ति । यथा बुद्धिबलाख्यक्रीडासाधने नृपादिभेदे काष्ठं समानमेव भवति । तथात्मा सर्वत्र समोऽहंकारस्तु कल्पित एवेत्यर्थः ॥२३॥ तथा त्वमेकात्मदर्शनेन प्रजापीडनं मा कुर्वित्याह—आत्मानमिति । यथा स्वे आत्मनि तथाऽखिलगां सर्वगतां प्रीतिं कुरुष्व । यो

देहेऽहमस्मीति तवानुभूतिः सात्म्यैक्यरूपा हि समाखिलानाम् ॥ पृथक्छरीरेपि नृपादिभेदे काष्ठं यथा बुद्धिबलाख्यखेले ॥ २३ ॥
आत्मानमेकं हि समं निरीक्ष्य प्रीतिं कुरुष्वाखिलगां यथा स्वे ॥ मायोत्थभेदं त्यज दुःखदो यो मायात्मनोह्यस्मृतिरेव नान्या॥२४॥
इत्थं गुरूक्त्या विदितात्मतत्त्वः प्रीतिं स चक्रे स्वसमां प्रजासु ॥ प्राहुस्ततस्तं भुवि राजदेवं मंत्रैश्च पूर्णो गुरुणा कृतोऽसौ ॥ २५ ॥
यश्चोग्रदंडोपि नृपो गुरूक्त्या बभूव शांतो भुवि देवतुल्यः ॥ तं द्वादशोर्ध्वं द्विशतात्तसंख्यं श्रीराजदेवाभिधमानताः स्मः ॥ २६ ॥
यश्चात्मतत्त्वावगमो निरीहः स्वतंत्र एवाखिलगात्मभावः ॥ त्रयोदशोर्ध्वं द्विशतात्तसंख्यं विनायकानंदगुरुं नताः स्मः ॥ २७ ॥
अथासीद्ब्राह्मणः कश्चिद्विद्वान्धीमान्धनी कृती ॥ पत्नी च रूपिणी कांते प्रेमाढ्या सुगुणा सती ॥ २८ ॥ बहुकालेन सुषुवे सा पुत्रं शुभलक्षणम् ॥ संतुष्टः स द्विजस्तस्याकरोन्नाम धनेडिति ॥ २९ ॥ पंचमाब्देऽथोपनीतिं चक्रे बहुधनव्ययात् ॥ द्विजान्योऽथ ददौ कन्यां धनवान्रूपिणीमितः ॥ ३० ॥

भेदः दुःखप्रदस्तं मायाकल्पितं भेदं त्यज । हि यस्मादात्मविस्मृतिरेव माया भवति नान्याऽस्ति । तथा चात्माज्ञानकल्पितं भेदं त्यक्त्वा प्रजापीडया पापं त्वया न कर्तव्यमित्यर्थः ॥ २४ ॥ एवं गुरूक्त्या पूर्णानंदवचनेन ॥ २५ ॥ द्वादशाधिकद्विशतसंख्यं राजदेवानंदं प्रणमति । य इति ॥ २६ ॥ त्रयोदशाधिकद्विशतसंख्याकं विनायकानंदं प्रणमति । य इति । आत्मतत्त्वस्यावगमः प्राप्तिर्यस्य । निरीहः निरिच्छः सर्वगतः आत्मभावो यस्य एतादृशो यः स्वतंत्रोऽभवत् । तं विनायकानन्दं नताः स्मः । विगतः नायको नियामको यस्य स स्वतंत्र इत्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ बहुधनव्ययाद्बहुधनव्ययेन

इतः अस्मै धनेशाय ॥ ३० ॥ ३१ ॥ तं व्यापारम् ॥ ३२ ॥ ३३ ॥ पूर्वार्द्धं पूर्वान्वितम् । निवृत्तमतिक्रांतम् ॥ ३४ ॥ ३५ ॥ स्वभूषांतात् स्वभूषणव्ययेन उत्तरार्द्धं परान्वयि ॥ ३६ ॥ वल्लभः पतिः तस्य सेवैव पतिव्रतायाः धर्मोऽस्ति सा सेवा तव गृहे न स्यात्खलु ॥ ३७ ॥ सधनस्य संपन्न स्यान्यस्य गृहात् गृहवासात् निःस्वे धनरहितेऽपि स्वगृहे वासो वरः श्रेष्ठोऽस्ति ॥ ३८ ॥ यतः यस्मिन्स्वगृहे अन्येन कलहो न भवति । हि यस्मात्तेन



वैवाहिकः समारंभस्तदासीद्धनिनोर्महान् ॥ स बालो द्वादशाब्दात्प्राग्वेदाञ्छास्त्राणि चाभ्यसत् ॥३१॥ पिता व्यापारनिपुणः पुत्रस्तं नाणु वेत्त्यसौ ॥ अथ दिष्टान्मृतस्तातस्तेन माता दिवं ययौ ॥ ३२ ॥ लघ्वी पत्नी स्वयं चैक आसतुर्दंपती गृहे ॥ वर्षार्द्धेन गतं सर्वं धनेशोऽप्यधनोऽभवत् ॥ ३३ ॥ तद्व्यापारानभिज्ञो हि लघुश्चाधीतिलंपटः ॥ भांडादिव्ययतस्तस्य निवृत्तं चतुरब्दकम् ॥ ३४ ॥ दैवादष्टादशाब्देऽस्याक्षिणी गते रुजा ॥ अथांधस्यापि तत्पत्नी सेवां चक्रेऽधनस्य च ॥ ३५ ॥ नित्यं मिष्टान्नमेवासौ स्वभूषांताददौ सती ॥ पित्रा संबोधिता बाला पत्यागच्छेति मद्गृहम् ॥ ३६ ॥ साब्रवीद्वल्लभो देवः स्त्रियाः प्रोक्तो न चेतरः ॥ तत्सेवैव सतीधर्मः सा नो स्यात्त्वद्गृहे खलु ॥ ३७ ॥ त्वत्स्नुषाः कलहिन्यो हि द्वेषिण्यश्च सदा मया ॥ सधनान्यगृहाद्वासो निःस्वेऽप्यात्मगृहे वरः ॥३८॥ यतो नैवान्यकलहस्तेनांतः खिद्यते नु हि ॥ भ्रातुः स्वसुः पितुर्मातुर्वल्लभः सुखदः स्त्रियाः ॥३९॥ लोकयोश्चैवमुक्त्वा तं गृह एवावसत्सती ॥ आसीत्सेवारता पत्युरनसूया यथा पुरा ॥ ४० ॥ सा तन्मलादिं हरति त्वथेयं स्नात्वान्वहं स्नाप्य किलोष्णवार्भिः ॥ मृद्वासने स्थाप्य धृतांबरं तं कृताह्निकं भोजयतीच्छितान्नैः ॥ ४१ ॥

कलहेन अनु अनंतरम् अंतर्मनसि खिद्यते जन इति शेषः ॥ स्त्रियाः पतिः भ्रात्रादिभ्यः सुखप्रदोऽस्ति ॥ ३९ ॥ लोकयोरिहपरलोकयोः सुखद इति पूर्वान्वितम् । तं पितरम् ॥४०॥ सेयं पतिव्रता अन्वहं तस्यांधस्य वल्लभस्य मलादिकं हरति । आदौ स्वयं स्नात्वा पश्चात्तमुष्णोदकैः संस्नाप्य इच्छितान्नैः

इष्टैरन्नैः भोजयति ॥ ४१ ॥ मृद्वास्तरणे उच्चे पर्यंकादौ ॥ ४२ ॥ ४३ ॥ हे वल्लभ देव इत्थम् इति वल्लभं समाह्वयत् । सेति शेषः ॥ ४४ ॥ हि
यस्मात्कौ पृथिव्यां वल्लभादन्यो दाता नास्तीत्यर्थः ॥ ४५ ॥ यः वल्लभः । इंदिरेव लक्ष्मीरिवानन्ययाचिनीत्यर्थः ॥ ४६ ॥ रात्राविति ॥ ४७ ॥

तांबूलमस्मै च समर्प्य भुंक्ते स्वयं तदुच्छिष्टमनन्यचित्ता ॥ तस्येच्छयाऽन्नन्तु समर्प्य रात्रौ मृद्वास्तरे स्वापयतीयमुच्चे ॥ ४२ ॥
दत्त्वाथ तांबूलममुष्य पादौ संमर्दयंती विमलांतरंगा ॥ नेंद्रं स्वपत्युर्वरमीक्षते सा पतिव्रतेत्थं पतितत्पराऽभूत् ॥ ४३ ॥ समाह्वयद्व
ल्लभ देव चेत्थं तं वल्लभं वक्ति हि देवबुद्ध्या ॥ भूषाद्यथास्याः प्रगतं व्ययं सा प्राहेति चित्ते पतिदेवबुद्धिः ॥ ४४ ॥ भो नास्ति वै
वल्लभदेव तुष्ट्यै कर्तुं हि नैवेद्यमिहाणु धान्यम् ॥ नैवाहमन्यानपि तातमुख्यान्याचे हि दाता न च वल्लभात्कौ ॥ ४५ ॥ साक्षान्मदर्थं
नृतनुर्हरिरियं सर्वांतरंगोऽप्यखिलान्नदाता ॥ नूनं स दास्यत्यखिलं मदिष्टं सोक्त्वेति सुष्वाप निशींदिरेव ॥ ४६ ॥ रात्रावथान्यप्रम
धनानां नृपस्य चै तत्कुलदेवतास्तु ॥ स्वप्ने समागत्य किलाहुरेतान्पूज्यांघ्रपत्नी त्वखिलैः सतीयम् ॥ ४७ ॥ तुष्टा हि सा चेद्वयमेव
तुष्टाः सर्वं च दास्यामह ईप्सितं वः ॥ धान्यं न तस्याः सदनेऽधुनास्ति नैवेक्ष्यते किं सधनैर्भवद्भिः ॥ ४८ ॥ ते प्रातरुत्थाय
ययुश्च सत्याः स्वयं गृहं तंदुलमुख्यधान्यम् ॥ घृतं सितां चान्यदिह क्षिपंतः साष्टांगमेनामनमन्सुनम्राः ॥ ४९ ॥ स्वेष्टाज्ञयान्न
नमथार्चितुं तान्कृतोद्यमान्वीक्ष्य सतीत्युवाच ॥ किलार्चनीयो मम वल्लभोयं तस्य प्रसादाद्ध्यखिलेप्सितं वः ॥ ५० ॥ ततोखिलास्ता
वयजन्सुवस्त्रैर्महोपचारैर्विविधैः सदन्नैः ॥ उमामहेशाविव चासतुस्तौ कौ चेष्टदौ पूजनतोऽखिलानाम् ॥ ५१ ॥

॥ ४८ ॥ ते नृपादयः । स्वयं ययुः सितां शर्कराम् । अन्यद्वस्त्रादिकम् । इह सतीगृहे आक्षिपंतस्त्यजंतः नम्राः लीनाः संतः एनां सतीम् आनमन् नम
स्कुः ॥ ४९ ॥ स्वेष्टानां स्वकुलदेवतानाम् आज्ञया वः युष्माकम् अखिलम् ईप्सितं भविष्यतीत्यध्याहारः ॥ ५० ॥ अयजन् पूजयामासुः दर्प सती

वल्लभौ पूजनतः पूजनेन कौ पृथिव्याम् इष्टदौ इष्टपूरकौ ॥ ५१ ॥ जातौ बभूवतुः । तादिज्यया तयोः पूजया ॥ ५२ ॥ तस्मात्संप्रदायप्रवृत्तिमाह—प्राप इति । पूर्णतया पूर्णाभिषेकदीक्षया ॥ ५३ ॥ एतान् मन्त्रान् ॥ ५४ ॥ चतुर्दशाधिकाद्विशतसंख्यं वल्लभानंदं प्रणमति धनान्वित इति । निःस्वो धनहीनः विद्वक् विगतदृष्टिरपि पत्न्या देवतुल्यः कृतो यस्तं नताः स्मः ॥ ५५ ॥ पंचदशाधिकाद्विशतमितं स्वभावानंदं प्रणमति य इति । स्व[illegible]सौख्यं स्वभावानंदम् ॥ ५६ ॥ षोडशाधिकद्विशतसंख्यं हरिहरानंदं प्रणमति हरेरिति । नुः शब्दस्य नरशब्दस्य च यथा नामतः नाममात्रेणैव भेदः स्यात् ।

ख्यातौ सतीवल्लभदेवसंज्ञौ जातौ पृथिव्यामथ दूरतस्तौ ॥ यया यया कामनया ययुर्यै तां तां तदापुश्च तदिज्यया ते ॥ ५२ ॥
प्राप्तोऽथ सत्याः सदनं स्वतंत्रो विनायकानंद इमं सती सा ॥ संप्रार्थयद्वल्लभमंत्रलब्ध्यै मंत्रान्ददौ पूर्णतया स चास्यै ॥ ५३ ॥
मंत्राञ्जपन्वल्लभदेवसौख्यो बभूव सिद्धोऽथ तयोस्तु पुत्रः ॥ जातः स्वभावेन गुणाकरोऽसौ तस्मै ददौ वल्लभदेव एतान् ॥ ५४ ॥
धनान्वितो यस्तु बभूव निःस्वो विद्दक्च पत्न्या भुवि देवतुल्यः ॥ कृतो हि तं वल्लभदेवसौख्यं चतुर्दशोर्ध्वं द्विशतं नताः स्मः ॥ ५५ ॥
यो जन्मतः सर्वगुणाकरोऽभूत्पित्रा कृतश्चाखिलमंत्रपूर्णः ॥ शतद्वयात्पंचदशोर्ध्वसंख्यं स्वभावसौख्यं गुरुमानताः स्मः ॥ ५६ ॥
हरेर्हरस्याण्वपि नैव भेदोऽद्धा नुर्नरस्येव हि नामतः स्यात् ॥ इत्थं धियाढ्यं हरियुग्घराख्यमुत्षोडशात्तद्विशतं नताः स्मः ॥ ५७ ॥
हरिहरसुखशिष्यो धर्मनारायणाख्यः सपदि विदिततत्त्वः सद्गुरोश्चैकदोक्त्या ॥ इति स वदति धर्माः संति न ब्रह्मणीदं गदितमखिलकृद्भिस्तद्धि निर्धर्ममाद्यम् ॥ ५८ ॥

अर्थतो भेदो नास्ति । तथा हरेः हरस्य साक्षादणु अपि किंचिदपि भेदो नास्ति । इत्थं बुद्धया आढ्यं युक्तं हरियुग्घराख्यं हरियुक्तं हराख्यं हरिहरानंदम् ॥ ५७ ॥ हरिहरसुखस्य हरिहरानंदस्य शिष्यः एकदोक्त्या एकवारवचनेन सद्गुरोः सकाशाद्विदितम् आत्मतत्त्वं येन स इति वक्ष्यमाणप्रकारेण वदति । तदाह इदं विश्वं ब्रह्मणि नास्ति । तर्हीदमाद्यं ब्रह्म सर्वसत्पुरुषैः निर्धर्मकं धर्मरहितं गदितमुक्तमस्ति । निर्धर्मे ब्रह्मणि जगदुत्पत्त्यादिधर्मा नास्त्येवेत्यर्थः ॥ ५८ ॥

ननु जगदुत्पत्त्यादिधर्मो ब्रह्मणि प्रतीयते । कथं निर्धर्मं ब्रह्मोच्यते इत्याशंक्योपाधिसंबंधेन दृश्यते न वस्तुत इत्याह । कचिदिति । कचित्कदाचित् एते सृष्ट्यादिधर्माः निजगत्या स्वगत्या कालकर्मस्वभावरूपया स्वमाययेति यावत् । इह ब्रह्मणि दृश्यंते । यथा जले निजगत्या तत्तद्देशकालवायुसंबंधरूपया स्ववृत्त्या आवर्तः वैलोम्यं विलोमगतिः भंगस्तरंगः एते दृश्यंते तद्वत् ब्रह्मणि धर्मा उपकल्पिता इत्यर्थः । एषामावर्तवैलोम्यभंगानामुद्भवः उत्पत्तिः अस्तित्वं सत्ता स्थितिरितियावत् । नाशः जलमृते जलादन्यत्र न भवंति । इह एषु आवर्तादिषु वारि उदकमखिलगं सर्वगतं चकारादसंगं चास्ति । तस्मादुपाधिकल्पितधर्माणाम् अनित्यत्वेन नित्यधर्मत्वायोगात् नित्यधर्मस्य चानित्यत्वायोगात् निर्धर्मकत्वं ब्रह्मण इत्यर्थः ॥ ५९ ॥ एवं विवर्ताधिष्ठानेनैव ब्रह्मणो निर्धर्मत्वं प्रसाध्य श्रुतिप्रामाण्येन ब्रह्मणि धर्मप्रादुर्भावमाह ॥ श्रुतिरिति । कालेन निराकारसगुणरूपेण ईश्वरेण निमित्तभूतेन यः कर्मप्रसंगः प्राक्

क्वचिदिह निजगत्या चेद्धि दृश्यंत एते जल इव निजगत्याऽऽवर्तवैलोम्यभंगाः ॥ न च जलमृत एषामुद्भवास्तित्वनाशास्त्वखिलगमिहवारिं ब्रह्म चासंगमेव ॥ ५९ ॥ श्रुतिरपि वदतीतः कालकर्मप्रसंगात्पुरुष उत च माया चिज्जडोत्पत्तिमाभ्याम् ॥ जलकृषितइवाद्यादंकुरो द्रुश्च धान्यं तुषततिरपि बीजे ब्रह्मणीदं तथैव ॥६०॥ इति पुरुषमुखं वै नाम नारायणेति कथितमपि हि वेदेऽस्त्यास्ति सर्वं सदर्थात् ॥ चित इह खलु नांशो राश्च भोग्यं त्व ई ये वसत उत पुमाद्ये ब्रह्मणो धर्ममित्थम् ॥ ६१ ॥

ल्पगतजीवानां कर्मपरिणामस्तेन पुरुषः माया च भवतीति श्रुतिर्वदति उत पुनः आभ्यां प्रकृतिपुरुषाभ्यां चिज्जडोत्पत्तिं च वदति—यथाऽऽदौ जलेन वृष्ट्यादिरूपेण कृषितः कृषिकर्मणा च अंकुरः द्रुः द्रुमः धान्यं यवादि तुषततिस्तुषविस्तारः एते बीजे भवंति तथेदं विश्वं ब्रह्मणि भवति । तथा च श्रुतिः । “ अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ” इति । अजामेकामिति ब्रह्माश्रया मूलप्रकृतिः सजातीयप्रजाजननाय यदा लोहितशुक्लकृष्णा त्रिगुणात्मिका तत्तत्कर्मपरिपाकवती भवति । तदा अजः कालरूपी ईश्वरोऽपि तां जुषमाणोऽगीकुर्वन् अनु अनंतरं शेते जीवरूपेण प्रतिबिंबितो भवति । यदा जीवरूपेण कालरूपेण च भोगसमाप्तिर्भवति । तदा प्रलयकाले अन्यः अजः निर्धर्मब्रह्मरूपः ईश्वरः प्रकृतिं त्यजति । तस्माज्जीवादृष्टवशात्प्रकृतिपुरुषसंबंधेन चिज्जडयोः प्रादुर्भावतिरोभावौ ब्रह्मणि भवत इति भावः ॥ ६० ॥ एवमेवार्थो नारायणनाम्नि

दृश्यत इत्याह—इतीति । पुरुषमुखं पुरुषादिकं सर्वं नारायणात नाम्नैवास्तीति सर्वं कथितम् । ननु कथमस्तीति चेत्तत्राह । इह नाम्नि यः ना नृशब्द[illegible] यः स चितः अंशः अंश इवांशः चित्प्रतिबिंबो जीवोऽस्ति । रा इति रैशब्दस्य धनवाचकत्वाद्भोग्यमस्ति । "अर्थैरैविभवा अपि" इत्यमरः । उत पुनः अः ई: पुमाद्ये पुमान् पुरुषः आद्या प्रकृतिश्च ये यकारे वसतः इकाराकारसंयोगे यणादेशेन यकारो भवति । स तयोः ईकाराकारयोरुभयोर्वाच्ययोः प्रकृतिपुरु[illegible] वाचक इत्यर्थः । ईकाराकारयोः प्रकृतिपुरुषवाचकत्वं च "अकारो वासुदेवः स्याल्लक्ष्मीरीकार उच्यते" इति कोशेन द्रष्टव्यम् । इह नारायणना[illegible] सर्वत्र संबध्यते । णः णकारः 'णश्च निर्वृतिवाचकः' इति कोशे केवलसुखवाचकः यः सः निर्धर्मं धर्मरहितं ब्रह्म तद्वा[illegible] इत्थं प्रकारेण सर्वं नस्[illegible] जातम् अत्र नारायणे तन्नाम्नि च सदर्थात् उत्तमार्थत्वेनास्ति । तथा च श्रुतिः—"अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्युपनिषत् । श्वेता[illegible] तरशाखायां "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्" इति । भोक्ता नाशब्दस्य वाच्यः भोग्यं रैशब्दस्या[illegible] प्रेरिता प्रकृतिपु[illegible]

इति हि सकलधर्माः संत्यधर्मे स्फुरंतोऽप्यत इह मम निष्ठा नाम्नि नारायणेऽस्ति ॥ सततमिदमतोहं कीर्तयेऽन्यांस्तु धर्मान्[illegible]
न च कुर्वेऽहं यतो नो तदन्यः ॥ ६२ ॥

पुरुषः यवर्णवाच्यः ॥ णवर्णवाच्यं निर्धर्मं ब्रह्म । मे मह्यमिति तदर्थः । तैत्तिरीयोपनिषदि तद्विकल्पब्रह्मविदनुभवो यथा "अहमन्नमहमन्न[illegible] अहमन्नादोहमन्नादोऽहमन्नादः । अहं२ श्लोककृदहं२ श्लोककृदहं२ श्लोककृत् । अहमस्मि प्रथमजा ऋता स्यात्" इति । क्रमशस्तन्नाद्विवरणं[illegible] । अहं भोग्यम् अन्नादो भोक्ता श्लोककृत्प्रकाशकर्ता प्रकृतियुक्तः पुरुषः । विष्णुपुराणे च "परस्य ब्रह्मणो रूपं पुरुषं प्रथमं द्विजाः । व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम् । प्रधानपुरुषाव्यक्तकालानां परमं हि यत् । पश्यंति सूरयः सत्यं तद्विष्णोः परमं पदम्" इति । अत्रापि पुरुषपदेन भोक्ता व्यक्तं भोग्यम् [illegible] यकारे गुप्तं ईपदवाच्यं प्रधानं काल ईश्वरः यत्तत्पदाभ्यां णेति वर्णवाच्यं निर्गुणं ब्रह्म । द्विजेति गरुडसंबुद्धिरित्यभिप्रायः । श्रीदेशिकचरणैरप्येतत्पदार्थो नारा यणपदस्य गुरुभागवते दर्शितः । "भोक्ता भोग्यं भोगो लक्ष्मीनारायणो हि तद्धेतुः ॥ सर्वश्रुतिसारमयो भगवान्निजभक्तपालको जयति" इति । तथा च—सर्वस्य वाङ्मात्रविलसितत्वान्निर्धर्मं ब्रह्मैव नारायणेतिनाम्ना प्रादुर्भावतिरोभावशालीति भावः ॥ ६१ ॥ इति सूर्यादयः सकलधर्माः स्फुरन्तोऽ[illegible]

अथमें ब्रह्मणि नारायणनाम्नि च संति विवर्तरूपेण वर्तंते । अतः कारणादिह नारायणनाम्नि मम निश्चयः श्रद्धा चास्ति । यतोऽहं नारायणभिन्नो नास्मि अतोऽहमिदं नारायणनाम निरंतरं कीर्तये । अन्यान्धर्मान्न करोमि । नारायणरूपान्सर्वधर्मान्पश्यामीति भावः ॥ ६२ ॥ एवं तस्य निर्णयमुपवर्ण्य सप्तदशाधिकद्विशततमं धर्मनारायणानंदं प्रणमति—ज्ञात्वेति । नारायणनाम्नः सम्यगर्थम् उत्तमार्थं ज्ञात्वैव यः तदुच्चारणं नारायणनामोच्चारणमेव धर्मं सर्वधर्मसार्थक्यजनकं मेने निश्चितवान् । तं धर्मनारायणं सर्वधर्माः नारायणे यस्य तं नताः स्मः ॥ ६३ ॥ अष्टादशाधिकद्विशततमं सुभगानंदं प्रणमति य इति । देवानामपि यद्दुष्प्राप्यं तत्सर्वसौभाग्यं सर्वज्ञत्वाद्यैश्वर्यं यः प्राप तं सुभगानंदं नताः स्मः ॥ ६४ ॥ एकोनविंशतिशतसंख्याकं परिमलानंदं प्रणमति—सुगंधेति

ज्ञात्वैव नारायणसम्यगर्थं मेने तदुच्चारणमेव धर्मम् ॥ शतद्वयात्सप्तदशोर्ध्वसंख्यं तं धर्मनारायणमानताः स्मः ॥ ६३ ॥ यः सर्वसौभाग्यमुपास्तिदार्ढ्यात्प्रापामराणामपि दुर्लभं यत् ॥ गुरुं वयं तं सुभगाख्यसौख्यमष्टादशोर्ध्वं द्विशतं नताः स्मः ॥ ६४ ॥ सुगंधपुष्पादि समर्प्य यस्तूपास्त्ये ह्यभूद्दूरसुगंधदेहः ॥ तं सद्गुरुं पारिमलाख्यसौख्यमुदूनविंशद्द्विशतं नताः स्मः ॥ ६५ ॥ रेवाऽब्ध्योः संगमक्षेत्रेऽथासीद्विप्रः सुधीर्धनी ॥ नापत्यं दिष्टतस्तस्य साधनैरपि सत्स्त्रियः ॥६६॥ रेवामेवाथ भक्त्यासौ बलिभिश्चोपचारतः ॥ अयजत्तत्प्रसादेन पुत्रोऽभूत्तस्य सत्तनुः ॥ ६७ ॥ रेवादासेति नाम्नासौ कृतो ह्यस्याः प्रसादजः ॥ महाजातः सोऽपि रेवाभक्तोऽनन्यमतिः सदा ॥६८॥ प्रत्यक्षमूर्ती रेवास्मा इत्थं प्राहैकदा निशि ॥ गच्छात्मज्ञं गुरुं वत्स शरणं मंत्रवित्तमम् ॥ ६९ ॥ मंत्राँल्लब्ध्वात्मतां चास्माद्विद्धि मद्रूपमद्वयम् ॥ गुरुं विना न भक्त्यापि ज्ञेयाऽहं तु यथार्थतः ॥ ७० ॥

परिमल एव पारिमलस्तदाख्यं पारिमलानंदमित्यर्थः ॥ ६५ ॥ रेवादासात्संप्रदायप्रवृत्तिं कथयंस्तद्वृत्तांतमाह रेवाऽब्ध्योरित्यादिना । सा[illegible] स्त्री यस्य तस्य अपत्यं नासीत् ॥ ६६ ॥ सत्तनुः उत्तमदेहः ॥ ६७ ॥ हि यस्मादस्या रेवायाः प्रसादेन जातः अतः रेवादास इति नाम्ना कृतः पित्रेति शेषः । न अन्यस्मिन् रेवाव्यतिरिक्ते मतिः उपास्यबुद्धिर्यस्य स रेवाभक्तोऽभवत् ॥ ६८ ॥ प्रत्यक्षा मूर्तिर्यस्याः सा रेवाऽस्मै रेवादासाय एकदा निशि इत्थं वक्ष्यमाणं प्राह ॥ ६९ ॥ अस्माद्गुरोः सकाशात् मंत्रानात्मभावं च लब्ध्वाऽद्वितीयं मद्रूपं विद्धि । यथार्थभक्तिरपि गुरुकृपयैव लभ्यत इति भावः ॥ ७० ॥

॥ ७१ ॥ परिमलं कीर्तिगंधं जिघ्रन् शृण्वन् । "यथा वृक्षस्य पुष्पितस्य दूराद्गंधो वात्येवं पुण्यस्य कर्मणो दूराद्गंधो वाति" इति श्रुतेः ॥ ७२ ॥ गुरुमिति सार्धान्वयः । अर्जितः परिमलो गंधो येषां तैर्धूपैरपरैः आगमोक्तचतुःषष्ट्युपचारैः देवतां पूजयंतं केसराद्यैः स्वादुकं परममुदं परमान्ना दिकं "परमान्नं तु पायसम्" इत्यमरः । अन्नमर्पयंतं तमिह भुवि रविमिव स्थितं रेवादासः ददृशे दृष्टवान् । मालिनीवृत्तम् ॥ ७३ ॥ इत्थं परिमलानंदे गुरुरिति मतिः निष्ठा यस्य स एनं परिमलानंदं ननाम । च पुनः इह स्वस्मिन्मंत्रलब्ध्यै मंत्रप्राप्तये प्रार्थितवान् । स च परिमलानंदः स्वपदनिष्ठं एवं रेवादासं

इत्थमाज्ञापितो देव्या रेवादासो ययौ गुरुम् ॥ विचिन्वन्नैव विश्वासं चक्रे क्वापि विचक्षणः ॥ ७१ ॥ दैवात्परिमलानंदपुरं प्राप्तो ध्रुवन्धराम् ॥ जिघ्रन्परिमलं तस्य समीपं चाययौ शनैः ॥ ७२ ॥ गुरुमथ ददृशेऽसौ देवतां पूजयंतं सुरभिमदुपचारैश्चन्दनानेकपुष्पैः ॥ अभिपरिमलधूपैश्चापरैः सूपचारैः परमसुखमिहान्नं स्वादयुक्केशराद्यैः ॥ ७३ ॥ पिहितनयननासं चार्पयंतं सुकांतिं रविमिव भुवि रेवादास एवं ननाम ॥ गुरुमतिरिह तं च प्रार्थयन्मंत्रलब्ध्यै स च निजपदनिष्ठं वीक्ष्य पूर्णं चकार ॥ ७४ ॥ निदसपि परिलभ्य श्रीगुरोरात्मनिष्ठः स्वपुरमित इह श्रीनर्मदामार्चयत्सः ॥ इति च वदति रेवान्यन्न पूज्यं पृथिव्यां यत उपलगणोऽस्याः पूज्यते देवबुद्ध्या ॥ ॥ ७५ ॥ निखिलजनमनस्तद्दैवतं सोममाहुस्तत इयमपि जाता प्रत्यगेवास्य वृत्तिः ॥ गमनमपि च पश्चाद्दृश्यते स्पष्टमस्या इयमिति गतकामैश्चापि पूज्यैव नूनम् ॥ ७६ ॥

वीक्ष्य विचार्य पूर्णं पूर्णाभिषिक्तं चकार ॥ ७४ ॥ स रेवादासः गुरोः सकाशादिदं ज्ञानमपि परितः साकल्येन लब्ध्वा आत्मनिष्ठः स्वपुरमितः गतः सन् इह स्वपुरे नर्मदामर्चितवान् । इति च वक्ष्यमाणं वदति जनानिति शेषः । इति किं रेवान्यन्नर्मदाव्यतिरिक्तं पूजनीयमुपास्यमिति यावत् । पृथिव्यां नास्ति । यतः कारणादस्याः नर्मदायाः संबंधी पाषाणसमुदायो देवबुद्ध्या पूज्यते । जनैरिति शेषः । यस्याः संबंधेन पाषाणोऽपि देवत्वं प्राप्तः किं पुनर्मनुष्या देवत्वं न प्राप्स्यंति अपि तु प्राप्स्यंत्येव । तस्मान्नर्मदैव सर्वैः पूजनीयेत्यर्थः ॥ ७५ ॥ एवं सकामैः पूज्यत्वमुक्त्वा निष्कामैरपि नर्मदैव पूज्येत्याह—निखिलेति ।

सर्वेषां जनानां यन्मनः तस्य दैवतं सोमम्। आहुर्ज्ञानिन इत्यध्याहारः। ततश्चंद्रादियं नर्मदापि जाता उत्पन्ना। "रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका" इत्यमरः। कीदृशी अस्य चंद्रस्य प्रत्यग्वृत्तिः आत्मप्रवणवृत्तिरूपा। किं चास्या नर्मदाया गमनं पश्चात्पश्चिमदिशि स्फुटं दृश्यते इति हेतोर्गतकामैर्निष्कामैश्च इयमेव पूज्या नूनम्। अयं भावः आत्मप्रवणमनोवृत्तिलाभाय समष्टिमनोरूपस्य चंद्रस्य प्रत्यग्वृत्तिरूपां तज्जन्यां नर्मदां "रेवातीरे तपः कुर्यात्" इति प्रमाणेन सेवमानोऽधिकारी प्रत्यग्वृत्तिशाख्या ज्ञानवान्भवतीति ॥ ७६ ॥ पुनः सकामनिष्कामसेव्यत्वं नर्मदायाः प्रदर्शयन्नुपसंहरति–निखिलेति। नर्मदा सर्वकविभिः सुखप्रदा प्रोक्ता। ततो हेतोः सकामैरियमतिभक्त्या पूजनीया। इह लोके अतः नर्मदातः अन्यदैवतं परं श्रेष्ठम् इज्यं पूजनीयं नास्ति सदेति

निखिलकविभिरुक्ता नर्मदा शर्मदात्री तत इयमतिभक्त्या पूजनीया सकामैः ॥ परमत इह सेहानीहयोर्नाऽन्यदिज्यं त्वितिमतिरिह रेवादास आसीत्सदैव ॥ ७७ ॥ सुज्ञोऽपि चक्रे सततं हि रेवाभक्तिं सुसिद्धैरपि पूज्यपादः ॥ तं विंशकोर्ध्वद्विशतं हि रेवादासाभिनंदं सततं नताः स्मः ॥ ७८ ॥ अनंतकाजांडततौ प्रशस्तं ब्रह्मैकमेवेति सदानुभूतिम् ॥ उदेकविंशाद्विशतातसंख्यं प्रशस्तसौख्यं गुरुमानताः स्मः ॥७९॥ यथा धराऽनेकवसूनि धत्ते तथैव विद्यावसुधारको यः ॥ तमुद्द्विविंशद्विशतातसंख्यं वसुंधरानंदगुरुं नताः स्मः ॥८०॥ प्रफुल्लितं स्यात्कुमुदं निशींदोर्बोधात्प्रपंचोऽपि तथैव यस्य ॥ आसीद्धयं तं कुमुदाभिनंदमुदक्त्रित्रिंशद्विशतं नताः स्मः ॥८१॥

मतिः एवं निश्चयवान् रेवादासः इह रेवातीरे आसीत स्थितोऽभवत ॥ ७७ ॥ विंशोत्तरद्विशतमितं रेवादासानंदं प्रणमति–सुज्ञ इति ॥ ७८ ॥ एकविंशोत्तरद्विशतसंख्यं प्रशस्तानंदं प्रणमति–अनंतेति। अनंतकानामजांडानां ब्रह्मांडानां ततौ विस्तारे प्रशस्तं परिपूर्णं ब्रह्मैकमेवास्ति इति सदा निरंतरम् अनुभवो यस्य तं नताः स्मः। ॥ ७९ ॥ द्वाविंशाधिकद्विशतमितं वसुंधरानंदं प्रणमति–यथेति। धरा पृथ्वी। ॥ ८० ॥ त्रयोदशोत्तरद्विशततमं कुमुदानंदं प्रणमति–प्रफुल्लितमिति। इंदोः प्रकाशेन कुमुदं प्रकाशितं स्यात् यथा तथा बोधेन यस्य प्रपंचः प्रफुल्लितः आनंदयुक्तोऽभवत् तं

नताः स्मः ॥ ८१ ॥ चतुर्विंशाधिकद्विशततमं गोविंदभट्टानंदं प्रणमति—लब्ध्वेति । यः सर्वां न्यायततिं न्यायशास्त्रविस्तारं लब्ध्वा पृथिव्यां यथार्थां भट्टाभिधां भट्टनाम बुधेभ्यः पंडितेभ्यः सकाशात् प्राप्तवान् तं नताः स्मः ॥ ८२ ॥ पंचविंशाधिकद्विशततममानंदानंदं प्रणमति—ब्रह्मेति । शुद्धं विकाररहितम् ॥ ८३ ॥ एतत्सर्गोक्तायाः उत्कटानंदादिसप्तदशगुरुकथायाः श्रवणादिफलमाह—उत्कटानंदात्सप्तदशाख्यानां गुरूणां गाथां कथां भक्त्या यः शृणोति पठेच्च । स विचारेण सप्तदशांगं दशेंद्रियपंचप्राणमनोबुद्धिरूपं लिंगशरीरं त्यक्त्वा तदभिमानं त्यक्त्वा जीवन्मुक्तो भवति ॥ ८४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायांचतुस्त्रिंशः सर्गः ॥ ३४ ॥ उत्पंचविंशके सैकशतपद्यैः प्रकाशकम् ॥ उक्त्वा भास्करजन्मोक्तं भाग्ये काश्यां व्रतं क्रमात् ॥ ३५ ॥ नवसर्गैस्तु गंभीराज्जनिर्विंच नृसिंहतः । दीक्षा प्रकाशतः प्रोक्ता भास्करस्य दिशां जयः ॥ २ ॥ अथ विस्तरेण भास्कराचार्यचरित्रं वर्णयिष्यन् तद्गुरोः प्रकाशानंदस्य वृत्तांतमाह—पुरमित्याद्यष्टाविंशतिपद्यैः । गुर्जरदेशे समुद्रसमीपे सुरतसंज्ञकं यन्नगरमासीत् । अत्रत्यमुक्तानां तत्रत्यमौक्तिकानां कांत्या श्रेष्ठस्त्रियः मौल्यं न पश्यंति । अमितमौल्येन तदुत्पन्नमौक्तिकानां संग्रहं कुर्वंतीत्यर्थः ॥ १ ॥ अत्र सुरतनगरे शुक्लवृत्तिः शुद्धाचारः ॥ २ ॥

लब्ध्वाखिलां न्यायततिं यथार्थां भट्टाभिधां प्राप्य बुधेभ्य उर्व्याम् ॥ तमुच्चतुर्विंशशतद्वयाख्यं गोविंदभट्टं गुरुमानताः स्मः ॥ ८२ ॥ ब्रह्मैव चानंदमयं हि शुद्धं ज्ञात्वा सदा ज्ञानमयो बभूव ॥ तं पंचविंशोर्ध्वशतद्वयाख्यमानंदसौख्यं गुरुमानताः स्मः ॥ ८३ ॥ य उत्कटात्सप्तदशाख्यगाथां शृणोति भक्त्या प्रपठेच्च मर्त्यः ॥ विचारतः सप्तदशांगलिंगं मुक्त्वैव जीवन्भवतीह मुक्तः ॥ ८४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे सप्तदशगुरुकथावर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ श्रीदेशिकेंद्र उवाच ॥ पुरं गुर्जरदेशे यत्सुरतं सागरांतिके ॥ नेक्षंतेऽत्रत्यमुक्तानां कांत्या मौल्यं वरस्त्रियः ॥ १ ॥ महादेवो द्विजोऽत्रासीच्छिवभक्तोऽतिनिःस्पृहः ॥ वाचाऽखंडं शिवं वक्ति शुक्लवृत्तिः सुतुष्टधीः ॥ २ ॥

यथा आमं प्राप्तं तदनुरूपमन्नं तस्य पचनकर्त्री आसीदित्यध्याहारः ॥ ३ ॥ व्रतैर्नक्तव्रतादिभिः युक्तावासतुः ॥ ४ ॥ आदरादादरेण एकं दांपत्यं भोजयित्वा ततस्ताभ्यां दंपतिभ्यां भुक्तं भोजनं कृतम् ॥ ५ ॥ अथ रात्रावुमेश्वरौ गौरीशंकरौ । चिरंटी सुवासिनी 'चिरंटी तु सुवासिनी' इत्यमरः । विप्रो ब्राह्मणस्तद्रूपिणौ संतौ महादेवं साक्षात्प्रत्यक्षमिवाहतुरित्यन्वयः ॥ स्वदंतैर्दिशः भासयंतौ ॥ ६ ॥ सर्वेषु ज्योतिर्लिंगेषु इदं सोमेशाख्यज्योतिर्लिंगम् उभयोः आवयोः उमेशयोः सान्निध्यकरम् अस्ति यतः ऋषिणा व्यासेन सोमेशनाम्ना कथितम् । उमया सहितः ईशः

तस्य पत्न्यपि गंगाख्यातानुरूपान्नपाचिनी ॥ संतुष्टैव सदा चित्ते यथा लब्धांशुकादिना ॥ ३ ॥ सौराष्ट्रदेशे सोमेशं द्रष्टुं तौ जग्मतुः क्वचित् ॥ त्र्यहं बिल्वैस्सुसंपूज्य शंभुं भक्त्याऽऽसतुर्व्रतैः ॥ ४ ॥ नैवेद्यं शंभवेऽदत्त्वा चैकं दांपत्यमादरात् ॥ भोजयित्वा ततस्ताभ्यां भुक्तं रात्रावुमेश्वरौ ॥ ५ ॥ स्वप्न एत्य महादेवं चिरंटीविप्ररूपिणौ ॥ साक्षादिवाहतुर्देवौ भासयंतौ दिशो रदैः ॥ ६ ॥ इदं ज्योतिर्लिंगेष्वनिशमुभयोः सन्निधिकरं यतः सोमेशाख्यं गदितमृषिणा तेषु न परम् ॥ अभिन्नावावां द्वादशसु हि तथात्र स्व उमया सहेडित्थं नाम्ना भजनमपि पूजात्र हि वरा ॥ ७ ॥ युवाभ्यां पद्भ्यागतमिह तथा त्र्यहदिवसैः कृता पूजा भक्त्या निजक रहृतैर्बिल्वसुदलैः ॥ तथैकं दांपत्यं सकलफलदं भोजितमणु त्वनंतं निःस्वैर्यत्कृतमिति सुतुष्टौ हि युवयोः ॥ ८ ॥ सुतः श्रौतस्मा र्तागमविदमलात्मा हि भविताऽऽवयोर्भक्तोऽत्यंतं श्रुतगुरुसुखानंदविभवः ॥ प्रकाशो यत्कीर्तेर्हिमगिरिसुसेत्वंतरगतोऽस्य शिष्येणेशी शे वदति स तदा जागृतिमितः ॥ ९ ॥

सोमेशः इत्युक्तं परम् इतरत् न कथितम् । आवां यद्यपि द्वादशसु ज्योतिर्लिंगेषु अभेदरूपिणौ स्वः । तथाप्यत्र सौराष्ट्रदेशे उमया सहित इट् ईशः इत्थं नाम्ना भजनं पूजा च वरा श्रेष्ठास्ति । केवलमीशभक्त्यपेक्षया सोमेशभजनं बहुप्रीतिकरमिति भावः । शिखरिणीवृत्तम् ॥ ७ ॥ युवाभ्यां पादग मनेन इहागतम् आगमनं कृतम् । तथा त्रिभिः अर्हदिवसैः उत्तमदिनैः स्वकराहृतैर्बिल्वदलैः भक्त्या पूजा कृता । तथा सर्वफलप्रदमेकदांपत्यं भोजितं हि यस्मात् निःस्वैरधनैः अण्वल्पमपि यत्कर्म कृतं तदनंतं भवति । इति हेतोः आवां युवयोः सुप्रसन्नौ स्वः ॥ ८ ॥ तयोर्मनोऽभिलषितं जानंतावाहतुः ।

सुत इति । श्रौतस्मार्तागमवेत्ता शुद्धचित्तः आवयोरत्यंतं भक्तः श्रुतः गुरुमुखादानंदानुभवः ब्रह्मानंदैश्वर्यं येन । एतादृशो युवयोः पुत्रो भविष्यति । किंच यस्य कीर्तिप्रकाशः अस्य शिष्येण भास्कराभिधेन निमित्तभूतेन आसेतुहिमालयांतरे प्रसिद्धः भविष्यतीति शेषः । इति ईशे वदति सति तदा स महादेवाख्यो द्विजः जागृतिं प्रबोधम् इतः प्राप्तः ॥ ९ ॥ १० ॥ सुकालतः उत्तमकाले । सार्वविभक्तिकस्तसिः ॥ ११ ॥ यतः पुत्रस्य दाता साक्षाच्छि



प्रातस्तीर्थजले स्नात्वा नत्वा सोमेश्वरं शिवम् ॥ भुक्त्वा नैवेद्यशेषं तु ययौ पत्न्या निजं पुरम् ॥ १० ॥ अथ कालेन गंगाख्या गर्भिणी सुषुवे सुतम् ॥ लक्षणैः सद्भिरेवाढ्यं कीर्तिमंतं सुकालतः ॥ ११ ॥ जातकर्मादिकं कृत्वा द्वादशेऽह्नि पिताकरोत् ॥ शिवदत्तेति नामास्य दाता साक्षाच्छिवो यतः ॥ १२ ॥ ज्ञात्वा पंचाब्दवयसं सावित्रीं चादिशत्पिता ॥ क्रमेण वेदाञ्छास्त्राणि गुरुभ्यः प्राप सोऽर्भकः ॥ १३ ॥ द्वादशेऽब्दे विवाहश्च पित्रा सत्कन्यया कृतः ॥ जातः षोडशवर्षोऽसौ शिष्यांश्चाध्यापयद्बहून् ॥ १४ ॥ प्रसिद्धः शिवदत्तोऽभूत्पंडितेषु धरातले ॥ पितुश्च शुक्लवृत्तित्वाच्छुक्लं तं नृपनामतः ॥ १५ ॥ प्राहुः सर्वे नृपैश्चान्यैः पूज्यो विद्याधिको ह्यसौ ॥ कन्यार्थैकाऽभवत्तस्य रूपिणी सद्गुणाकरा ॥ १६ ॥ अथानंदानंदनाथो भ्रमन्देशान्निजेच्छया ॥ कृत्वाऽसौ द्वारकायात्रां सुरतं चांजसा ययौ ॥ १७ ॥ दैवात्प्राप्तो गृहं तस्य शिवदत्तस्य धीमतः ॥ अध्यापयन्बहूञ्छिष्यानपश्यच्छास्त्राण्यनेकधा ॥ ॥ १८ ॥ ददर्श शिवदत्तोपि तं सिद्धं कांतविग्रहम् ॥ उत्थाय शिष्यैर्नत्वा तं स्थापयित्वा वरासने ॥ १९ ॥ सांजलिश्चाग्रतो भूत्वा प्राहेदं सिद्धमानमन् ॥ स्वामिंस्तवागमो नूनं मादृशाखिलतापहा ॥ २० ॥ यतो नैवात्मतुष्टस्य सार्वभौमाच्च भूभुजः ॥ वासवाद्ब्रह्मणोऽप्यर्थौ याच्यः किंचिद्धि दृश्यते ॥ २१ ॥

वोऽस्ति । अतः शिवदत्तेति अस्य नाम चकार ॥ १२ ॥ पंच चाब्दानि वयो यस्य स चासौ बालस्तम् ॥ १३ ॥ १४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ॥ १५ ॥ १६ ॥ १७ ॥ उत्तरार्द्धमुत्तरबद्धम् ॥ १८ ॥ उत्तरार्द्धमुत्तरान्वितम् ॥ १९ ॥ मादृशानां सर्वतापहर्ता भवति ॥ २० ॥ वासवादिंद्रा

दपि वाच्यः अर्थो न दृश्यते ॥ २१ ॥ २२ ॥ २३ ॥ अस्मात् सुरतननगरात् ॥ २४ ॥ गुरौ मंत्रे ईश्वरे देवतायां चात्मबुद्धिः ॥ २५ ॥ २६ ॥ वैभवं सामर्थ्यम् अस्तीति शेषः ॥ २७ ॥ षड्विंशोर्ध्वद्विशतसंख्यं प्रकाशानंदं प्रणमति—य इति। पूर्वार्द्धे आसीदित्यन्वयः। इंद्रवज्रावृत्तम् ॥ २८ ॥ प्राङ्मतात् प्राचां मतेन। परमेष्ठिगुरोः भासुरानंदात्रयः गुरवः प्रकर्षेण कथाभिः मयोच्यंते ॥ २९ ॥ कालसामीप्यतः समीपकालत्वेन बहुप्रसिद्धत्वादित्यर्थः। तेषां भासुरानंदादिगुरूणां कथाः विस्तारेण शृणुष्व। यत्र येषु भास्कराचार्यैः कीर्त्या भास्करः सूर्योऽस्ति। लुप्तोपमा। सूर्य इवेत्यर्थः ॥ ३० ॥

प्रपंचोत्थैस्त्रिभिस्तापैस्ततोऽहं बहुजन्मसु ॥ मामात्मामृतवर्षेण निस्तापं कुरु देशिक ॥ २२ ॥ इत्थं संप्रार्थितो वाक्यैरानंदाख्यो गुरुस्तदा ॥ ज्ञात्वाधिकारिणं सिद्ध्या ददौ मंत्रान्विधानतः ॥ २३ ॥ प्रकाशानंदनामापि कृतं विद्याप्रकाशतः ॥ ज्ञानं योगं चोपदिश्य गतोऽस्मात्स्वेच्छया गुरुः ॥ २४ ॥ लब्ध्वेत्थं श्रीगुरोर्मंत्रान्पुरश्चरणतो जपन् ॥ ईजेंऽबिकां विधानेन गुरुर्मंत्रेश्वरात्मधीः ॥ २५ ॥ बभूव सिद्धमंत्रोऽसौ भक्त्याऽभूद्देवता वशा ॥ क्रीडंती कन्यया तस्य नान्येषां दृष्टिगोचरा ॥ २६ ॥ संपदाढ्यमभूद्गेहं बुधाः सर्वे वशं गताः ॥ नृपाश्च शिष्यतां प्राप्ता इत्थं सिद्धेर्हि वैभवम् ॥ २७ ॥ यः शास्त्रवेत्ताखिलमंत्रवेत्ताथांबा गृहस्था दुहितेव यस्य ॥ षड्विंशकोर्ध्वद्विशतं प्रकाशानंदं गुरुं तं सततं नताः स्मः ॥ २८ ॥ श्रीदेशिकेंद्र उवाच ॥ प्राङ्मतादादिनाथादिप्रकाशांताः किलोदिताः ॥ प्रोच्यंते गुरवस्त्वत्र परमेष्ठिगुरोस्त्रयः ॥ २९ ॥ कालसामीप्यतस्तेषां किंचिद्विस्तारतोऽधुना ॥ कथाः शृणुष्व यत्रास्ते भास्करः कीर्तिभास्करः ॥ ३० ॥ बीजापूराभिधं वै फलमिह कथितं रम्यबीजाधिकत्वात्तात्पर्यज्ञास्तथा ये सकलगुणततेः संगृहीताश्च राज्ञा ॥ बीजस्थाने गुणानामिम इति हि पुरे यत्र तेषां निवासात्प्राहुर्बीजापुरं तद्व्यवहृतिकुशलाः किं मुधा वादिनोऽमी ॥ ३१ ॥

तत्रादौ भास्कराचार्यस्य जन्मादि विवक्षुस्तत्पित्रादिवृत्तांतकथनाय तन्निवासस्थानमाह—बीजापूरेति। रम्यबीजैः अधिकत्वात्पुष्टत्वादिह लोके फलं दाडिमफलं बीजापूराभिधं कथितं जनैरिति शेषः। रम्यबीजैः आपूर्यत इति बीजापूरं यथा तथा। राज्ञा ये गुणविस्तारस्य तात्पर्यज्ञाः विद्वांसः संगृहीतास्त इमे यत्र पुरे गुणानां बीजस्थाने भवंति। इति हेतोः तेषां गुणबीजभूतानां विदुषां निवासेन तन्नगरं बीजापूरमिति व्यवहारकुशलाः प्राहुः। अमी व्यवहृतिकुशलाः

मुधा वादिनः मिथ्यावादिनो भवंति किम् । अपि तु सत्यभाषिणो भवंति । गुणबीजभूतैः पंडितैः आसमंताद्राज्ञा पूर्यते व्याप्यते तद्बीजापूरं विद्वदाश्रितमि त्यर्थः । स्रग्धरा वृत्तम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ राजकीयस्य व्यवहारस्य प्रवर्तकोऽभवत् ॥ ३४ ॥ ३५ ॥ ३६ ॥ अस्य गंभीराख्यस्य व्यासकृत कूटपद्यस्यार्थवर्णनेन सभागमने विलंबोऽभवत् । तम् अमात्यं विनेति सार्द्धद्वयान्वयः ॥ ३७ ॥ स्वकीयाज्ञानप्रकाशकम् इदं व्यवहाराक्षमत्वम् अन्यान्

तस्मिन्पुरवरे राजा यवनोऽपि सुबुद्धिमान् ॥ प्रजाश्चापत्यवत्पाति सत्सेवातत्परः सदा ॥३२॥ तस्यामात्यस्तु गंभीररायाख्यो विदुषां वरः ॥ वेदशास्त्रार्थतत्त्वज्ञस्तथा यावनशास्त्रवित् ॥ ३३ ॥ तस्मिन्राज्ञोऽतिविश्वासस्तं विना न क्षणं च सः ॥ तिष्ठत्येवं तु पूर्वैव राजकीयप्रवर्तकः ॥ ३४ ॥ कदाचिदथ सोऽमात्यः स्वगृहे भारतीं कथाम् ॥ स्वयमेवाखिलानाह पंडितान्गृहमागतान् ॥ ३५ ॥ मुहूर्तं कथयत्येव कथां नियमतोऽन्वहम् ॥ ततो राज्ञः सभां याति राजाप्येनं प्रतीक्षते ॥३६॥ एकदास्य विलंबोऽभूत्कूटपद्यार्थकीर्तनात् ॥ तं विना राजकीयस्य प्रवृत्तिं कर्तुमक्षमः ॥ ३७ ॥ इदं चाकथयन्सोऽन्यान्स्वीयाज्ञानप्रकाशकम् ॥ अश्वक्रीडामिषान्नृपोऽथाश्वमारुह्य वेगिनम् ॥ ३८ ॥ तादृशाश्वस्थितैः साकमश्वीयगतिभेदकान् ॥ दर्शयन्मंत्रिणो द्वाराद्ययौ तद्गतमानसः ॥ ३९ ॥ उच्चैः सुस्वरतः श्रुत्वा तत्कालालापसूचकान् ॥ कथाकथनशब्दान्सोऽवरुह्याश्वात्स्वयं ययौ ॥ ४० ॥ गंभीरसदनं चासौ सहसा वीक्ष्य भूपतिम् ॥ पुस्तके चाक्षिपद्वस्त्रं दृष्ट्वा राजेति चाहतम् ॥ ४१ ॥ कथितं सुस्वराद्यत्तन्मयापि श्रूयतामिति ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थलंघ्यां नृपस्याज्ञां गंभीराख्यो निशम्य च ॥ ४२ ॥ स्थापयित्वाऽवरे पीठे राजानं प्राह तां कथाम् ॥ तद्दीयभाषयैवासौ श्रुत्वा राजापि सत्कथाम् ॥ ४३ ॥ गंभीरनामकं प्राह किं नामेदं कथानकम् ॥ स चाह भारतं चैतत्त्वस्ति लक्षमितं महत् ॥ ४४ ॥ पांडवीयकथायुक्तं सर्वधर्मविनिर्णयम् ॥ राजाथाह तदस्माकं भाषया विशदं कुरु ॥ ४५ ॥

प्रति अकथयन् ॥ ३८ ॥ तादृशेषु वेगवत्सु अश्वेषु स्थितैः वीरपुरुषैः सहाश्वगतिभेदान्दर्शयन् ॥ ३९ ॥ ४० ॥ गंभीरसदनं ययाविति पूर्वान्वयि । असौ गंभीररायः ॥ ४१ ॥ इत्याद्युत्तरान्वयि ॥ ४२ ॥ अमात्रित्याद्युत्तरान्वयि ॥ ४३ ॥ किं नामकं कथानकमित्याह ॥ ४४ ॥ सर्वधर्माणां निर्णयो

यस्मिन्निति पूर्वान्वितम् । तद्भारतमस्माकं भाषया यवनभाषया ॥ ४५ ॥ अत्र एतद्विषये राजकीयं च कार्यं प्रवर्त्यतां त्वयेति शेषः । उत्तरार्द्धमुत्तरान्वितम् ॥ ४६ ॥ ४७ ॥ पूर्वार्द्धं पूर्वान्वयि ॥ ४८ ॥ यत्र भारते मम प्रीतिः सर्वेभ्योऽप्यधिकास्ति ॥ ४९ ॥ स गंभीरभारती । सर्वतः सर्वत्र ॥ ॥ ५० ॥ विद् पंडितः इनमान्यः भारतीत्युक्तः ॥ ५१ ॥ विष्णोः सहस्रनाम्नामुत्तमार्थप्रकाशिकाः ॥ ५२ ॥ ताः कारिकाः इत्थमित्याद्युत्तरान्व

नोपेक्षात्र क्षणं कार्या राजकीयं प्रवर्त्यताम् ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थमाज्ञाप्य गंभीरमंत्रिणं यवनो नृपः ॥ ४६ ॥ सभां ययौ सहानेन तांबूलाद्यैश्च सत्कृतः ॥ अथाकरोदादितोऽसौ गंभीरो भारतं स्फुटम् ॥ ४७ ॥ यावन्या भाषया सर्वं लक्षं नृपतितुष्टये ॥ तद्दृष्ट्वा यवनो राजा गंभीराख्यं मुदाब्रवीत् ॥ ४८ ॥ भारतीति तवाख्यास्तु यतो मद्भाषया त्वया ॥ कृतं तादृशदं प्रीतिर्मम यत्राखिलाधिका ॥ ४९ ॥ ज्ञास्यंति यवनाः सर्वे भारताख्यानमुत्तमम् ॥ इत्थं राज्ञा दत्तनामा विख्यातोभूत्स सर्वतः ॥ ५० ॥ गंभीररायः स तदादि चोक्तो विद्भारती सद्भिरपीनमान्यः ॥ केचित्तदाहुर्यवनस्य वाण्या काव्यं कृतं येन कथं स चार्यः ॥ ५१ ॥ अथाकरोत्स गंभीररायभारत्यतंद्रितः ॥ विष्णोः सहस्रनाम्नां च कारिकाः सम्यगर्थदाः ॥ ५२ ॥ दृष्ट्वा ताः पंडिताः सर्वे मेनिरेऽमुं विदां वरम् ॥ इत्थं विख्यातयशसः पत्नी कोणांबिका सती ॥ ५३ ॥ कालेन सुषुवे पुत्रं साधारणगुणाकृतिम् ॥ उपनीतः क्रमात्पित्रा पुत्रो नारायणाभिधः ॥ ५४ ॥ अध्यापितश्च यत्नेन विद्वान्सामान्य एव सः ॥ दृष्ट्वा बभूव तं तातो नातितुष्टो जनन्यपि ॥ ५५ ॥ एकस्यां गेहसंस्थायां कोणांबायां कचित्सभाम् ॥ गते पत्यौ तदा गेहं सिद्धः कश्चित्स्वयंगतिः ॥ ५६ ॥ निःस्पृहोऽपि स भाविज्ञः प्राप्तः प्राक्तनतो गृहम् ॥ सती दृष्ट्वा प्रणम्यामुं स्थापयित्वाऽऽसनोत्तमे ॥ ५७ ॥

यि ॥ ५३ ॥ साधारणाः सामान्याः गुणा आकृतिश्च यस्य तम् ॥ ५४ ॥ ५५ ॥ एकस्यामेकाकिन्यां गृहस्थितायां पत्यौ सभां गते सति स्वयंगतिः स्वतंत्रः कश्चित्सिद्धो दैवयोगाद्गृहं प्राप्त इत्यन्वयः ॥ ५६ ॥ भाविज्ञः भविष्यज्ञः उत्तरार्द्धमुत्तरान्वयि ॥ ५७ ॥

॥५८॥ तेन सामान्यैकपुत्रेण पतिश्च संतुष्टो न भवति अंतः कारणात् ॥ ५९ ॥ पितुः गंभीररायादधिकविद्यायुक्तः । पूर्वार्द्धं पूर्वान्वितम् ॥ ६० ॥ सार्धेन पुत्रविशेषणानि ॥ ६१ ॥तद्भासरव्रतं रविवारव्रतम् ॥६२॥ पुत्रदमिति पूर्वान्वितम् । तेन व्रतेन ॥६३॥ पूर्वार्द्धं पूर्वान्वयि ॥ ६४ ॥ आश्विने जयः जय तिथिर्विजयादशमीति यावत् । तस्या ऊर्ध्वम् अनंतरं भाग्यनगरं गंतुकामो यदाऽभवत् तदा कोणांबा अहमागमिष्ये इति आदरात्पतिं प्राहेत्यन्वयः॥६५॥ अत्र

भक्त्या संपूज्य तिष्ठंती पप्रच्छेत्थं कृतांजलिः ॥ कोणांबोवाच ॥ स्वामिन्पुत्रो ममैकोऽस्ति विद्वान्पित्रा समो न सः ॥ ५८ ॥ तेनाहं नातिसंतुष्टा पतिश्चातः सतां वरः ॥ प्रार्थये त्वां सुतो मेऽस्तु ख्यातः कीर्त्यैव भास्करः ॥ ५९ ॥ पितुश्चाधिकविद्याढ्यो निग्रहानुग्रहे प्रभुः ॥ श्रुत्वेति सिद्धस्तां प्राह पुत्रस्ते भविता ध्रुवम् ॥ ६० ॥ कीर्त्या शंकर एवान्यो भाष्यकर्तातिविश्रुतः ॥ विद्वाञ्छ्रीहर्षतुल्योऽयं तेजस्वी भास्करोपमः ॥६१॥ कालिदाससमः काव्ये वाक्पतिर्भाषणे स्वयम् ॥ भास्कराराधनं किंचित्कुरु तद्भासरव्रतम् ॥ ६२ ॥ पुत्रदं तेन भविता पुत्रो भास्कर एव ते ॥ श्रीदेशिकेंद्र उवाच ॥ एवमुक्त्वा गतः सिद्धः साऽकरोद्भास्करव्रतम् ॥ ६३ ॥ श्रावणाकाद्य दिवसाद्यावन्माघाद्यसप्तमी ॥ संप्राप्ते श्रावणे भूयो गर्भं पत्युर्दधार सा ॥ ६४ ॥ अथ कार्यवशाद्राजाज्ञयाश्विनजयोर्ध्वतः ॥ गंतुकामो भाग्यपुरं यदा गंभीरभारती ॥ ६५ ॥ आगमिष्येऽहमित्याह कोणांबा पतिमादरात् ॥ नानुभूतः कदाचित्ते वियोगो हि मयाण्वपि ॥ ६६ ॥ बहुकालं स्थितिर्वोऽत्र भवित्रीतीर्यतेऽखिलैः ॥ कथं तावदहं स्थास्ये त्वां विना मो यथा झषः ॥ ६७ ॥ प्रार्थितो बहुधेत्थं स पत्न्या गंभीरभारती ॥ सापत्यया तया यानैर्हस्त्यश्वांघ्रिचरैः सह ॥६८॥ ययौ भाग्यपुरं तत्र तस्थौ गेहे सुविस्तरे ॥ सदाचारात्कर्म कर्तुः कृच्छ्राद्राजसभागतिः ॥ ६९ ॥ क्वचिदेवाभवत्तस्य तेन कार्यविलंबता ॥ वैशाखशुद्धे चाम्यर्क्षतुर्यपादेऽमले दिने ॥ ७० ॥

भाग्यनगरे अवस्थितिः बहुकालपर्यंतं भविष्यतीति सर्वैः कथ्यते ॥६६॥६७॥भाग्यपुरं ययावित्यपकर्षः ॥ ६८ ॥ अत्र सुविस्तृते गृहे संस्थितः । सदाचारेण कर्म कर्तुस्तस्य गंभीराख्यस्य राजसभागमनं कष्टेन क्वचिदेवाभवदित्यन्वयः॥६९॥तेन क्वचिद्गमनहेतुना कार्यस्य राजकार्यस्य विलंबोऽभवत् । उत्तरार्द्धं

मुत्तरसन्धिं । अग्न्यर्क्षस्य कृत्तिकानक्षत्रस्य चतुर्थचरणे अमले निर्दुष्टे॥ ७० ॥सती कोणांबा गंभीरपत्नी ॥ ७१ ॥ जन्मकालस्यात्युत्तमत्वमाह—अजेति । आर्यजोद्भवे गंभीरपुत्रजन्मनि सूर्येंदुभौमगुरुशुक्राः मेषवृषभमकरकर्कमीनस्थिताः संतः स्वोत्तुंगतया स्वस्वोच्चत्वेन अस्य पुत्रस्य अखिलमौख्यं सर्वमुख्यत्वं प्रजगुः । हि यस्मात्कालरूपाः कालानुरूपफलदाः । सूर्यादीनामुच्चत्वम् "मेषो वृषो मृगः कन्या कर्को मीनस्तुलाधरः । सूर्यादीनां भवेदुच्चं तस्मान्नीचं तु सप्तमम्" इति ज्योतिःशास्त्रे उक्तम् ॥ ७२ ॥ यदा पुत्रो जातस्तदा जेष्ठे तनये सत्यपि सुतस्य जन्म कर्तृ । श्रवणमात्रेण पितुः अंतःकमलस्य हृत्कमलस्य प्रकाशं आनंदं चक्रे । यथा विधौ सत्यपि द्युपत्युः सूर्यस्योदयः पंकभुवां कमलानां प्रकाशम् अरुणोदयमात्रेण करोति तद्वत् । उपमालंकारः

शुभग्रहेक्षिते लग्ने सुषुवेऽथ सुतं सती ॥ कांत्या भास्करमेवान्यं राजलक्षणलक्षितम् ॥ ७१ ॥ अजगोमृगकर्कमीनसंस्थास्तपनेंदुक्षितिभूसुरासुरेज्याः ॥ निजतुंगतयाऽऽर्यजोद्भवेऽस्याखिलमौख्यं प्रजगुर्हि कालरूपाः ॥ ७२ ॥ श्रवणाद्धि सुतस्य जन्म चक्रे पितुरंतःकमलप्रकाशमाद्ये॥ तनयेऽपि तदा विधौ द्युपत्युर्हृदयः पंकभुवां यथारुणेन ॥ ७३ ॥ अथ तात इमं समीक्ष्य तुष्टोऽम्बुधिरुच्चं द्रमिवात्मजांतरेपि ॥ न सुतेऽपि विनौजसा हि सौख्यं कृतवाञ्जातमथास्य सोऽतिवित्तैः ॥ ७४ ॥ उदितः स च भास्करोथ पित्रा व्रततोऽर्कस्य स एव किं धराभूः ॥ इति तद्वहुकांतितानुमानात्कुशलस्त्वीक्षणतोऽखिलं हि वेत्ति ॥ ७५ ॥ गतिरस्य सदस्यभून्न तावन्नृपतिः क्रुद्ध उताशृणोत्सुतार्तिम् ॥ मुदितोऽथ तदुक्तसिद्धिमाज्ञां स्वयमस्यौकसि चादिशत्सुलेख्याम् ॥ ७६ ॥

"उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः" इति तल्लक्षणात् ॥ ७३ ॥ अथ गंभीराख्यः अन्यपुत्रे सत्यपि इमं कनिष्ठपुत्रं दृष्ट्वा उद्गतं चंद्रं दृष्ट्वा समुद्र इव संतुष्टोऽभवत् । हि यस्मात् पुत्रेऽपि तेजसा विना सौख्यं न भवति । यथा चतुर्दशरत्नपितुः समुद्रस्य तेजोवता पुत्रेणेंदुना संतोषो नान्यपुत्रेण तथा गंभीरराजस्य कनिष्ठपुत्रावलोकनेन संतोषो जात इत्यर्थः । अथ बहुधनैरस्य जातकर्म कृतवान् ॥ ७४ ॥ अर्कस्य व्रतेन पत्न्या कृतेन सः सूर्य एव धरायां भूः जन्म यस्य सोऽस्ति किम् । इति तस्य कांत्या यदनुमानं तर्कस्तस्माद्धेतोः पित्रा स पुत्रो भास्कर इत्युदितः कथित इत्यन्वयः । हि यस्माकुशलपुरुषः दर्शनमात्रेण सर्वं जानाति ॥ ७५ ॥ अस्य गंभीराख्यस्य पुत्रजन्मनिमित्तेन सभायां गमनं यावन्नाभूत् । तावन्नृपतिः क्रुद्धोऽभवत् । उत पुनः गंभीराख्यस्य

सुतप्राप्तिं श्रुतवानथ संतुष्टः सन् तेन गंभीराख्येन उक्तं प्रार्थितं यन्नस्य सिद्धिकरीमाज्ञां सलेख्यां पत्रसहिताम् अस्य गंभीराख्यस्य ओकसि निवासस्थाने स्वयमादिशत् दूतद्वारेणार्पितवान् ॥ ७६ ॥ सः गंभीराख्यः । अतिकष्टवशाद्बहुकष्टेन या आज्ञा न लभ्यास्ति। मयि कोपी च कोपवानपि ताम् आज्ञां ददौ। जन्ममात्रेण महत्कार्यसाधकत्वाद्भाग्यवानयं पुत्र इत्यर्थः ॥ ७७ ॥ इह भाग्यनगरे। स्वपुरं बीजापूरम् ॥ ७८ ॥ स्वपुरेट् बीजापूरपतिः पूर्वतोऽपि अस्मिन् गंभीरपंडिते अतिसंतुष्टबुद्धिरभवत् । सुतेन प्राप्तसौख्यः ॥ ७९ ॥ अथ भास्करः दिनवृद्ध्या पितुरानंदेन सह स्वतन्वा स्वदेहेन ववृधे । तत्र

लिखितां स निरीक्ष्य तां नृपाज्ञां हृदि मेनेऽनुजपुत्रभाग्यमेतत्॥अतिकष्टवशान्न या हि लभ्या मयि कोपी च ददौ यतः स्वदूतात्॥७७॥
तत एष ययौ नृपेक्षणार्थं कृतवान्सत्कृतिमस्य सोऽपि वस्त्रैः ॥इह मासयुगे गते स यानैः स्वपुरं स्त्रीसुतयुक्स्वगात्ससैन्यः ॥ ७८ ॥
स्वपुरेडतितुष्टधीः स्वकार्यं कृतमिष्टं ह्यमुनेति पूर्वतोऽस्मिन् ॥ स्थित एष गृहे सुताप्तसौख्यो नृपकार्याणि च वर्तयन्स्वधार्यः ॥ ७९ ॥
ववृधेऽथ स भास्करो दिनर्द्ध्या सुदिचंद्रः कलयेव चात्मतन्वा ॥ स्वपितुश्च मुदा चकोरकाणां खलु तेजोऽधिकमग्रिमर्द्धिकं हि ॥ ८० ॥
स्वसुतस्य मतेः समृद्धयेऽसौ दशसारस्वतलिंगपद्यकैः ॥ अभिमंत्रितवारिसेचनाद्भुवि संवित्सुतरुं व्यवर्द्धयत्सः ॥ ८१ ॥ द्रुमपर्णरसं
शिशोर्मुखेऽस्याहरहः कंबुमुखादपाययच्च ॥ लघुरप्यथ भास्करस्ततोऽभूद्वरधीः कांतमणिर्यथा सुवर्णात् ॥ ८२ ॥ प्रथमेऽखिलभाषणः
स चाभूत्त्वलिखच्चांकमुखं परे तृतीये ॥ कृतचूडाशिशुः श्रुतेः षडंगान्यथ शिक्षाप्रभृतीनि चाप तातात् ॥ ८३ ॥

दृष्टांतः । शुक्लचंद्रश्चकोरकाणां मुदा सह कलया यथा वर्धते तथेत्यर्थः । हि यस्मादधिकं तेजः अग्रिमर्द्धिकमग्रिमकाले वृद्धिसूचकं भवति॥ ८०॥ अथ स गंभीराख्यः स्वसुतस्य बुद्धेर्वर्द्धनाय दशसंख्यैः सरस्वतीलिंगकैः पद्यैः ऋग्भिः सहस्रमभिमंत्रितोदकेन भुवि संवित्संज्ञकम् उत्तमवृक्षं वर्द्धितवान् । ज्ञानवृ द्धयर्थं संवित्प्रयोगविधानादित्यर्थः ॥ ८१ ॥ च पुनः सः संविद्वृक्षपर्णरसं शंखमुखेन भास्करस्य मुखे अपाययत् । अथाल्पबालोऽपि भास्करः ततो रसेनोत्तमबुद्धिरभवत् । यथा दिव्यरत्नं सुवर्णसंयोगेन उत्कृष्टं भवति तद्वत् ॥ ८२ ॥ यथोत्तमबुद्धिमत्त्वं तथाह—प्रथमइति । प्रथमवर्षे सर्वभाषणकर्ता

भवत् । अंकलेखनं च परे द्वितीयेऽकरोत् । भास्कर इत्यध्याहारः । तृतीये कृतचूडो बालो वेदस्य शिक्षादीनि । शिक्षाकल्पव्याकरणच्छंदोनिरुक्त ज्योतिषाख्यानि अंगानि पितुः सकाशात्प्राप्तवान् ॥ ८३ ॥ अथ नृपस्य वर्षप्रमाणाज्ञया स्त्रीपुत्रसहितः स गंभीराख्यो बुधार्यः नृयानैः चंचलाः अश्वाः येषां येषु वा तैः अश्वारोहैः अश्वयुग्मयैर्वा दासैरपि सह काशीं प्रति श्राद्धादिना पित्रादितुष्टयर्थं ययौ ॥ ८४ ॥ गयायाम् । अविमुक्ते । वेण्यां प्रयागे तत्तच्छ्राद्धादिकं विदुषामीक्षणानि भाषणानि च इच्छति सः ॥ ८५ ॥ इह काश्यां गंभीराख्येन वेदशास्त्रज्ञाः अन्नवस्त्रादिभिः संतुष्टाः कृताः अन्नवस्त्रा दिभिः संन्यासिनोऽपि संतुष्टाः कृताः ॥ ८६ ॥ काशीस्थपंडितास्तु गंभीरभारत्याख्यपंडितस्य निवासस्थानं प्रति नित्यं ययुः । तत्र हेतुगर्भं विशेषणं कुश

सकलत्रसुतो ययौ नृयानैश्चलदश्वैरपि गोरथैः सदासैः ॥ नृपवर्षमिताज्ञया हि काशीं पितृदेवात्मसुतुष्टये बुधार्यः ॥ ८४ ॥ अकरोत्स गयाऽविमुक्तवेणीष्वखिलं तत्तदभीष्टकर्म सांगम् ॥ अवसत्पुनरेत्य काशिकायां विदुषामीक्षणभाषणादिकेच्छुः॥८५॥ श्रुतिपाठकशास्त्र विद्वरिष्ठा इह गंभीरविपश्चितांशुकाद्यैः ॥ परितुष्टधियः कृताश्च सर्वे यतयोऽन्नांशुकमुख्यपूजिताश्च ॥ ८६ ॥ स्थितिमस्य ययुर्बुधास्तु नित्यं कुशलस्यामलभाषणैः सुतुष्टाः ॥ सुलघोरपि भास्कराच्छ्रुतास्तैः श्रुतिषट्कावयवाः सुलक्षणोक्त्या ॥ ८७ ॥ विशदं कलभाषणं निशम्याखिलमान्यं पितरं तदोचुरस्य ॥ सकला उपनेय एष वेदाध्ययनार्हस्य शुभं हि पंचमाब्दम् ॥ ८८ ॥ विदुषामिति सन्निशम्य वाक्यं त्वथ गंभीरविपश्चितास्य गर्भात् ॥ गणितं विरराम तुर्यमब्दं किल मासैरपि पंचमप्रवृत्तिः ॥ ८९ ॥

लस्य गंभीरपंडितस्योत्तमभाषणैरतिसंतुष्टा इति । सुलघोरत्यल्पाद्भास्करात् श्रुतेर्वेदस्य षट्कावयवाः षडंगानि तैः पंडितैः सुलक्षणोक्त्या सुलक्षणवाण्या श्रुताः श्रुतानि ॥ ८७ ॥ तदा सर्वे पंडिताः सर्वमान्यं स्पष्टं मधुरं चास्य भाषणं श्रुत्वा गंभीरपंडितं प्रोचुः । एष पुत्रः उपनयनयोग्योऽस्ति हि यस्माद्वेदा ध्ययने योग्यस्य पंचमवर्षं शुभमस्ति । यथोक्तं मनुना । " ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे " इति ॥ ८८ ॥ इति पंडितानां वाक्यं सम्यङ्नि शम्य गंभीरपंडितेन पुत्रस्य गर्भधारणात् गणितं गणना कृता यदा तदा चतुर्थं वर्षं समाप्तं मासैः पंचमासैः पंचमवर्षप्रवृत्तिर्जाता । अयमर्थः—प्रथमं श्रावणे

भास्करस्य गर्भधारणोक्तिः तस्मान्नवमे मासे वैशाखे कृत्तिकायां जन्मोक्तिः ततो वर्षत्रयानंतरं व्रतबंधकरणे गर्भधारणकालात् श्रावणात्परं षण्मासाति क्रमणं भवति । अग्रिमवैशाखे च जन्मतश्चतुर्वर्षपूर्तिरिति ॥ ८९ ॥ अथ स जनैः जन्मसकाशात्पादोनचतुर्थवर्षे पंडितवाक्यैर्भास्करस्य व्रतबंधं कृतवान् । हि यस्मात् अल्पोऽपि बालः वरधीः श्रेष्ठबुद्धिश्चेत्तदा श्रेष्ठ उच्यते । बालोऽपि सूर्यः श्रेष्ठ उच्यते । जनैरिति शेषः ॥ ९० ॥ अथ सः बह्वर्थगुर्वीं स्वपुत्रो पनीतिं द्रष्टुं सुनम्रवचनैः स्वजनैः काशीस्थबुधानाह्वयत् । हि यस्मात्प्रवासगोऽपि महान् कृपणो न भवति ॥ ९१ ॥ विदा गंभीरपंडितेन जनाश्रयं मंडपं

स जनैश्चतुरब्दके पदोने व्रतमस्य त्वकरोद्बुधोक्तवाक्यैः ॥ वरधीर्वर उच्यते लघुश्चेत्खलु बालोपि हि भास्करो यथाऽऽर्यः ॥ ९० ॥ स निरीक्षितुमात्मजोपनीतिं व्ययगुर्वीं स्वजनैः सुनम्रवाक्यैः ॥ अविमुक्तबुधान् समाह्वयद्धि न महान्स्यात्कृपणः प्रवासगोऽपि ॥ ९१ ॥ अथ मानपुरःसरं विदेत्थं ह्युपहूताः प्रययुर्जनाश्रयं ते ॥ विबुधाः कवयश्च पूज्यपादा उपतस्थुःसकलाः स्वसेतुमंतः ॥ ९२ ॥ प्रददौ श्रुतिमातरं विधानादथ गंभीरविपश्चिदात्मजाय ॥ विबुधैरथ सत्कृतः कुमारोंऽशुकभूषाद्रविणैः समं स्वशक्त्या ॥ ९३ ॥ समपूजयदा त्मजोदयेच्छुः स बुधांस्तेऽथ विलोक्य भास्करं तम् ॥ लघुमप्यखिलप्रगल्भशीलादवलोक्यात्मनि वै सुविस्मयाढ्याः ॥ ९४ ॥ अथ तत्र सभेश्वरो यतींद्रोऽखिलमान्यः स्वसमीप एनमर्भम् ॥ उपहूय हसन्नुवाच शीघ्रं ललनाप्त्यैः कृतवान्व्रतं पिता ते ॥ ९५ ॥ लघुरप्यथ भास्करः प्रगल्भं वच आहेति यतिं हि सर्वमान्यम् ॥ समतीत्य वनव्रतं हि यद्वद्रुतमत्तुं च परिव्रजंत्यभीष्टम् ॥ ९६ ॥

" मंडपोऽस्त्री जनाश्रयः " इत्यमरः । पूज्यपादा यतयः स्वसेतुमंतः स्वमर्यादावंतः ॥ ९२ ॥ अथ स विधानेन सावित्रीं ददौ । अथ पंडितैः कर्तृ भिः । स्वशक्त्या समं यथाशक्तीति यावत् । कुमारो वस्त्रादिभिः सत्कृतः ॥ ९३ ॥ अथ स गंभीरबुधः आत्मजोदयेच्छुः स्वपुत्राभ्युदयेच्छावान् बुधान् काशीस्थपंडितान् समपूजयत् पूजितवान् ते पंडितादयः अल्पं भास्करभट्टं दृष्ट्वा सर्वेषां मध्ये प्रौढशीलेनात्मनि आश्चर्ययुक्ताः बभूवुः ॥ ९४ ॥ सभाचरः सभापतिः एनं भास्करवर्तिनं ललनाप्त्यै स्त्रीप्राप्त्यर्थं शीघ्रं तव पित्रा व्रतबंधः कृतोऽस्तीत्युवाच ॥ ९५ ॥ अथाल्पोपि भास्करभट्टः यतिं प्रति प्रौढं वच

आह । वनव्रतं वानप्रस्थाश्रममुल्लंघ्य अभीष्टमन्नं भोक्तुं यथा द्रुतं परिव्रजंति प्रव्रजंति तथा द्रुतं व्रतबंधः कृतोऽस्ति । परगृहे भिक्षान्नस्वीकरणाय संन्यासो यथा तथा स्त्रीप्राप्त्यर्थं त्वरया मद्व्रतबंधं पिता कृतवानित्यर्थः ॥ ९६ ॥ हि यस्मादितरः देवतांशादन्यो ममाग्रे एवं कुतो वदति तस्मादयं देवतांश इत्यर्थः ॥ ९७ ॥ स्वीयपरेभ्यः स्वकीयपरकीयेभ्यः ॥ ९८ ॥ ततः भास्करबटोः व्रतबंधानंतरं सर्वैः सह स्वदेशं ययौ । बीजापूरगतनृपपौरैः । कर्तृभिः । अभिमुखैः नेतुमुत्सुकैः दूरं नगराद्बहिरेत्य स एष गंभीरभारतीगृहं नीतः प्रापितः ॥ ९९ ॥ यानि वाक्यानि पंडितानामपि शीघ्रं नो स्फुरंति परैः पृष्टो भा

इति बालवचो यतिर्निशम्याप्यथ गंभीरबुधं मुदेत्युवाच ॥ खलु बालक एष देवतांशः कुत इत्थं वदतीतरो हि मेऽग्रे ॥ ९७ ॥ अथ ते सकलाः किशोरमेनं प्रशशंसुश्च ययुः स्वकीयधाम ॥ अकरोत्स च कर्म सांगमेतत्प्रददौ स्वीयपरेभ्य ईप्सितं यत् ॥ ९८ ॥ प्रययौ स ततोऽखिलैः स्वदेशं नृपपौरैरभिसम्मुखैः सुवाद्यैः ॥ स्वपुराद्बहिरेत्य दूरमेष बहुसत्कारपरैर्गृहं स नीतः ॥ ९९ ॥ सदने स च भास्करोपि तिष्ठन्वरवाक्यैर्मुदमाततान पित्रोः ॥ विदुषामपि नो स्फुरंति शीघ्रं परपृष्टः समयेंजसाह तानि ॥ १०० ॥ शृणुयात्स पठेच्च भास्करस्यावनिजन्माखिलमंगलं निजांशात् ॥ उपनीतिमथार्यं भाषणं चेत्स हि कीर्त्याभवतीह भास्करोऽन्यः ॥ १०१ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भास्कररायजन्मोपनीतिकथावर्णनं नाम पंचत्रिंशः सर्गः ॥ ३५ ॥ श्रीदेशिकेंद्र उवाच ॥ नृसिंहयज्वाखिलविद्वदार्यो यः शृंगिरीशाश्रितमंत्रवेत्ता ॥ श्रुतिस्मृतिस्वाशयवित्त्वभिन्नोपास्त्या स्वयं भूगतशंभुरेव ॥ १ ॥

स्करस्तानि वाक्यानि अंजसा आह ॥ १०० ॥ एतत्सर्गोक्तकथाश्रवणादिफलमाह । शृणुयादिति । स्वांशेन पृथिव्यां सर्वमंगलकरं जन्म उपनयनमुत्तमभाषणं च यः शृणुयात् पठेच्चेत्तर्हि स भास्करतुल्यो इह लोके भवति भवेत् ॥ १०१ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां भास्करचरित्रे पंचत्रिंशोऽध्यायः ॥ ३५ ॥ उत्षट्त्रिंशे पंचषष्ट्या पद्यैरष्टादशाभ्यसत् । विद्या नृसिंहयज्वाख्याद्भास्करश्चेति वर्ण्यते ॥ ३६ ॥ अथ भास्करस्य विद्याप्राप्तिं वर्णयिष्यन् तद्गुरोर्नृसिंहयज्वनश्चरित्रं संक्षेपेणाह—नृसिंहयज्वेत्यादिना । सर्वविद्वद्वरिष्ठशृंगगिरिपीठाधिष्ठितस्य आश्रितश्चासौ मंत्रवेत्ता च अभेदो

पासनया श्रुतिस्मृतिस्वाशयवित् उत्तमाभिप्रायज्ञः भूमिगतः साक्षाच्छिव एवासीत् ॥ १ ॥ यश्चापस्तंबसूत्रगतानि गाथमयानि अनार्षच्छंदांसि ऋषिछं दहीनानि यजूंषि मंत्रान् श्रुतिप्रमाणेन तन्निबद्धानि ऋषिच्छंदयुक्तानि कृतवान् स एष पृथिव्यां मंत्रद्रष्टा ऋषिरेवासीत् ॥ २ ॥ एवं प्रभावं कोपि न जानाति सर्वे जनास्तं कर्मनिष्ठं वदंति सद्विदोऽपि उत्तमविद्वांसश्च विद्यानां त्रिषट्कस्याष्टादशकस्य वेत्तारम् अन्यं न पश्याम इति वदंति । एवमष्टादशविद्याभिज्ञ इत्यर्थः ॥ ३ ॥ एष नृसिंहयज्वा पंडितरत्नभूवः अतः बहुराजभिः स्वराज्ये निवासयितुं सम्यक् प्रार्थितोऽपि शृंगेरीपीठगताचार्यप्रीत्या हेतुभूतया

गाथमयान्येव यजूंष्यनार्षच्छंदांसि सूत्रोपगतानि तानि ॥ छंदर्षिबद्धानि चकार साक्षाच्छ्रुतेः प्रमाणादृषिरेव सोऽयम् ॥ २ ॥
इत्थं प्रभावं च न वेत्ति कश्चिद्वदंति सत्कर्मरतं हि लोकाः ॥ विद्यात्रिषट्कस्य विदं च नान्यं पश्याम भूमाविति सद्विदोऽपि ॥ ३ ॥
संप्रार्थितः स्थापयितुं स्वराज्ये नृपैरनेकैर्बुधरत्नभूतः ॥ पीठस्थिताचार्यकृतानुरक्त्याऽशृणोन्न केषां च वचो धनाशः ॥ ४ ॥
विद्वद्गुणज्ञोत्तममल्लभूपः श्रुत्वाऽवनौ विद्वरमेनमेत्य ॥ संप्रार्थ्य पीठेशमथाऽऽज्ञयास्य निनाय तं स्वीयपुरं बुधार्यम् ॥ ५ ॥ समृद्धि मद्गेह इमं सशिष्यं त्रियाग्नितत्या च निवेश्य नित्यम् ॥ स संध्ययोरेत्य यदीप्सितं तद्ददाति दूतः समवेक्ष्य चोनम् ॥ ६ ॥
सोमादियज्ञेष्वपि चैकमेकमब्देऽब्दके कारयति स्म तेन ॥ विद्वांस एत्यात्र परे नमंति नृसिंहयज्वानमिलार्यवर्यम् ॥ ७ ॥ नृसिंहयज्व स्थितितोऽथ मल्लभूपस्य संपद्ववृधे दिनेत्या ॥ पुत्रास्त्वपुत्रस्य बभूवुरस्माद्भक्तिः पराभून्नृपतेर्बुधार्ये ॥ ८ ॥

केषामपि वचनं न श्रुतवान् हि यस्मादनाशः धनाद्याशारहितः । यथार्थज्ञानिनो निःस्पृहा भवंतीत्यर्थः ॥ ४ ॥ अथ विदुषां गुणज्ञोत्तमो मल्लभूपाख्यो राजा पृथिव्यां नृसिंहयज्वानं विच्छ्रेष्ठं श्रुत्वा तं प्रत्येत्य पीठस्थं प्रार्थ्यास्याज्ञया तं स्वपुरं प्रति निनाय ॥ ५ ॥ स मल्लभूपः त्रिधा अग्निवितानेन सह सशिष्यमेनं समृद्धियुक्तगृहे निवेश्य नित्यं सायं प्रातस्तत्रेत्य इह न्यूनं किंचिद्दृष्ट्वा यदिच्छितं तद्दूतैः समर्पयति ॥ ६ ॥ एष मल्लभूपः सोमादियज्ञेषु एकमे कम् अब्देऽब्दे तेन नृसिंहयज्वना कारयति स्म साकल्येन कर्ताऽभवत् । राज्ञः बहुधनार्पणेन नृसिंहयज्वना बहुयज्ञाः कृता इत्यर्थः ॥ ७ ॥ नृसिंहयज्वनः

स्थितितः निवासेन मल्लभूपस्य संपत् दिनेत्या दिनगत्या प्रतिदिनमिति यावत् ववृधे। अपुत्रस्य तस्य पुत्रा बभूवुः। अस्मात्पुत्रजननाद्धेतोः पंडितश्रेष्ठे नृसिंहयज्वनि राज्ञः बहुभक्तिरभवत् ॥ ८ ॥ अथ कश्चित् राज्ञो लेखकश्रेष्ठः आस। यः अनंततीर्थीयमती वैष्णवमतस्थः सः अद्वैतविदः अस्य नृसिंहयज्वनः उत्कर्षमसहिष्णुः सन् वृथा तदीयनिंदाम् इति वक्ष्यमाणप्रकारेण राज्ञे आह ॥ ९ ॥ हे राजन् त्वयाऽयमपूज्यो नृसिंहयज्वा कथं पूज्यते। ननु कथमपूज्यस्तत्राह। यः सदा अंतः अंतर्गृहे शास्त्रविरुद्धं कौलमतम् आचरन् बहिरन्यान् प्रति शास्त्रविचारवक्ता भवति। यथा जारपुरुषो बहिः स्वस्य एकपत्नीत्वं कथयन्वर्तते तद्वत्। अयं शास्त्रविरुद्धकर्ता कथं पूज्यत इत्यर्थः॥ १०॥सभ्रातृकस्य तस्य लेखकस्य इत्थं वचनं हृदि सत्यं न मेने एतत्त्वयोक्तं नृसिंहय

अथाऽस कश्चिन्नृपलेखकार्यो योऽनंततीर्थीयमती स चास्य ॥ उत्कर्षमद्वैतविदोऽसहिष्णू राज्ञे मुधेत्याह तदीयनिंदाम् ॥ ९ ॥ लेखक उवाच ॥ राजन्नपूज्यः कथमिज्यतेऽयं सदाचरञ्छास्त्रविरुद्धमंतः ॥ योऽन्यान्बहिः शास्त्रविचारवक्ता शंसन्यथैकांगनतां हि जारः ॥ १० ॥ मुहुः सबंधोरपि तस्य चेत्थं सत्यां न मेने हृदि मल्लभूपः ॥ तं प्राह नैतद्धि नृसिंहयज्वन्यारोप्य मर्केऽपि यथांधकारः ॥ ११ ॥ शृण्वंस्ततोऽसौ सततं त्रिवर्षं तं राजकीयाखिलवर्तिनं नो ॥ न्यक्कर्तुमीशः श्रवणाधिकत्वात्क्रुद्धोऽतिघर्षादिव चंदनोऽग्निः ॥ १२ ॥ राजा तमाहाथ मृषेयमुक्तिर्मयोदिता जल्पसि यां मुहुस्त्वम् ॥ यथा तथा दर्शय तां तु सत्यां नो चेद्धि दंड्यो भवितासि मत्तः ॥ १३ ॥

ज्वनि अर्के अंधकारमिव नारोपणीयमिति तं लेखकं प्रत्याह॥ ११ ॥ततोऽसौ राजा त्रिवर्षपर्यंतं लेखकवाक्यं शृण्वन् राजकीयसर्वकार्यनिर्वाहकं तं दूरीकर्तुमसमर्थः श्रवणाधिक्याद्बहुनिंदाश्रवणेन क्रुद्धोऽभवत्। अतिघर्षणेन यथा शीतोपि चंदनो यथाग्निरेव भवति। "भद्रश्रीश्चंदनोऽस्त्रियाम्" इत्यमरः। तथा शांतोऽपि राजा नृसिंहयज्वनो बहुनिंदाश्रवणेन स्वलेखकाय कुपित इत्यर्थः ॥ १२ ॥ अथ राजा तं प्रत्याह इयं त्वदुक्तिः मृषा उक्तास्ति। अथापि यां मुहुस्त्वं जल्पसि यथा तथा ताम् उक्तिं नृसिंहयज्वा अशास्त्रकर्तास्तीत्येवंरूपां सत्यां यथार्थरूपां दर्शय। तस्य शास्त्रविरुद्धं कर्म दर्शयेत्यर्थः। नो चेन्न दर्शयसि चेत्तर्हि मत्तो

मत्सकाशादंडाहों भविष्यसि ॥ १३ ॥ स तथेति उक्त्वा एकाकिनं नृपतिं हस्ते धृत्वा आर्ये नृसिंहयज्वनि ईशम् अर्चयति सति तद्गेहम् आतः प्राप्तः। अथ असौ नृपः विविधैरर्घैः पूजाविधिभिः स्वोपास्यं यजंतम् अर्चयंतम् अमुं नृसिंहयज्वानम् अवैक्षत अपश्यत् ॥ १४ ॥ यो नृसिंहयज्वा इंद्रियैः सह मनः अंतः निवर्त्यांतर्मुखं कृत्वा स्वयं शिवात्मा भूत्वा शिवार्चने स्थितः सन् अग्रगतमपि राजानं नापश्यत्। यथा सर्वात्मद्रष्टा ज्ञानवान् देहधियं देहात्मबुद्धिं पुरुषं प्रत्यन्यम् आत्मभिन्नं न पश्यति तथा। उपासकोऽपि स्वाभिन्नं सर्वं पश्यतीत्यर्थः ॥ १५ ॥ किं च यः गुरूक्तम् उपास्यदेवतामंत्रम् अंकगतिरूपया मनोमालया या एकाग्रबुद्धिस्तया जजाप किंभूतया बुद्ध्या अलंकारः हेमाकृतिः सुवर्णाकारः माल्यं च तद्रीत्या तदुपमानत्वेन मंत्रेश्वरगुरूणामैक्यकरा ऐक्य भावनाजनिका एका वृत्तिर्यस्यास्तया यथा सुवर्णालंकारमौल्यानि एकरूपत्वेन वर्तते। गुरुमंत्रदेवतैक्येन स्वात्माभिन्नत्वं गत इत्यर्थः ॥ १६ ॥ एवं परमस

तथेति धृत्वा नृपतिं स हस्तेऽप्येकाकिनं चार्चयतीशमार्ये ॥ तद्गेहमातोऽमुमवैक्षतासौ स्वोपास्यमर्घैर्विविधैर्यजंतम् ॥ १४ ॥ मनो हृषीकैश्च निवर्त्य योंतर्भूत्वा शिवात्मापि शिवार्चनस्थः ॥ नापश्यदग्रस्थमपीतमेष सर्वात्मदृग्देहधियं यथान्यम् ॥ १५ ॥ गुरूदितोपास्यमनुं जजाप मनःस्त्रजैकांतधियांकगत्या ॥ मंत्रेशगुर्वैक्यकरैकवृत्त्यालंकारहेमाकृतिमौल्यरीत्या ॥ १६ ॥ तेजीयसां कांडभुवां हि तेजोऽधिष्ठानमाविर्भवदर्कमुख्ये ॥ उपास्यतेऽनन्यधिया तदंतर्येनेति तं द्रष्टुमनीड् नृपोभूत् ॥ १७ ॥ यमीक्षितुं चाहमनीश्वरस्तं किं वच्मि वायुं मशका इवात्र ॥ स्थास्येऽचलः शापपवेर्हि चूर्णो यास्यामि चेदस्य रुडग्निदग्धः ॥ १८ ॥

माधिलाभेन तस्य परमतेजोरूपत्वं प्रादुर्भूतमित्याह तेजीयसामिति। कांडस्य ब्रह्मांडस्य भूरुत्पत्तिर्येभ्यस्तेषां ब्रह्मांडजनकानां तेजीयसां तेजस्विनां सदाशिवेश्वररुद्रविष्णुब्रह्मादीनां यत्तेजोरूपमधिष्ठानं जालमालाकुलं भाति 'विश्वस्यायतनं महत्' इत्युपनिषदुक्तं ब्रह्मतेजः अर्कमुखे सूर्यादौ आविर्भवत् आविर्भूतमस्ति। "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति गीतायां यत्सूर्यादिप्रकाशकमुक्तं तत् अंतः हृदि अनन्यधिया अभेदधीवृत्त्या येन नृसिंहयज्वना उपास्यते तं द्रष्टुं राजा अनीट् असमर्थोऽभवत्। "ब्रह्मविद्ब्रह्मैव भवति" इति श्रुतेः। ब्रह्मतेजोरूपस्य तस्य दर्शने देहात्मबुद्धिरसौ न समर्थ इत्यर्थः ॥ १७ ॥ एवं दृष्ट्वा स राजा मनसि चिन्तयन्नाह यमिति। यं द्रष्टुमहमसमर्थस्तं प्रति वायुं मशका इव किं वच्मि। न किमपि वक्तुं समर्थः

इत्यर्थः । अत्र स्थाने यदि अचलः स्थास्ये स्थितो भविष्यामि तदा शापवज्रेण चूर्णो भविष्यामि । चेत् यास्यामि गमिष्यामि तर्हि अस्य रुडाग्निना कोपाग्निना दग्धो भविष्यामि । उभयतोऽपि संकटमित्यर्थः ॥ १८ ॥ एवमसौ नृपो हृदि चिंतयन् तं लेखकं गर्हयन् अस्य गुरोर्नृसिंहयज्वनोऽग्रे पुरः प्रांजलिस्तिष्ठन् पदे तच्चरणौ वीक्ष्य दृष्ट्वा हि निश्चयेन स्वोपास्यं स्मरन्नासीत् ॥ १९ ॥ सभृत्यं लेखकसहितम् । अन्यवाक्याल्लेखकवचनेन ॥ २० ॥ हे नृप या च व्यवहारकाले देहबुद्धिरहमस्मि तावन्नृपादिकान् पृथक् पश्यामि । यदा यागकाले स्वोपास्ये अभेदबुद्धिरस्मि तदा देहात्मबुद्धीन् अद्वयभावनाविघातकान् शत्रुरूपान्पश्यामि । अभेदभावनाजनके यागकाले उपासकचित्तविक्षेपकत्वेन विघातकानां पशुदृष्टीनां गमनं नाशकरं भवति अतस्त्वया

इत्थं नृपोऽसौ हृदि चिंतयंस्तं विगर्हयँल्लेखकमग्रतोऽस्य ॥ तिष्ठन्पुरो वीक्ष्य पदे तदीये ह्यासीन्निजोपास्यमपि स्मरंश्च ॥ १९ ॥
उन्मील्य नेत्रे स नृसिंहयज्वाथापश्यदग्रे च नृपं सभृत्यम् ॥ उवाच भूपागमनं त्वकालकृतं स्वनाशाय किमन्यवाक्यात् ॥ २० ॥
देहात्मधीर्यावदहं नृपास्मि तावन्नृपामात्यसुहृद्रिपूंश्च ॥ स्वोपास्यके भिन्नमतिर्यदाहं पश्यामि देहात्ममतीन्हि शत्रून् ॥ २१ ॥
यथा हि पूर्वार्जितकर्मजालं पुंबुद्धिमाकृष्य च तेन कालः ॥ दत्ते फलं तत्सदृशं हि पुंसे काले कृतं तत्फलदः स एव ॥ २२ ॥
तस्माद्द्रुतं गच्छ नृपात्मगेहं भाव्यन्यथेशादपि नो कुतोल्पात् ॥ श्रुत्वेति राजातिरुषोस्य वाक्यं ततो ययौ चाशु गृहं सुभीतः ॥२३॥
साक्षान्निजोपास्यकृताज्ञयाग्नीन्नृसिंहयज्वा हवनीयमुख्यान् ॥ कृत्वाऽरणौ त्यक्तसमृद्धगेहः स्त्रीशिष्ययुग्द्राक्पदगो ययौ प्राक् ॥ २४ ॥

वृथात्रागमनं कृतमिति भावः ॥ २१ ॥ अस्तु नाम यथा हि पूर्वार्जितं कर्म भवति तेन कर्मसंघेन निमित्तभूतेन कालः पुरुषबुद्धिमाकृष्य कर्मसदृशं फलं पुरुषायार्पयति । हि यस्माद्यस्मिन्काले यत्कृतं तस्य फलदः स एव भवति । अत्र गमने तव कर्मानुरूपा बुद्धिर्जातेत्यर्थः ॥ २२ ॥ तस्मात्त्वं स्वगृहं प्रति सत्वरं गच्छ यद्भवितव्यं तदीश्वरेणापि अन्यथा न भवति कुतोल्पेन भवतीति । तदुक्तं "यदभावि न तद्भावि भावि चेन्न तदन्यथा" इति । ततो राजा कोपवतोऽस्येति वाक्यं श्रुत्वात्यंतं भीतः सन् आशु गृहं ययौ ॥ २३ ॥ यदा नृसिंहयज्वा साक्षात्स्वोपास्यदेवताज्ञयाऽऽहवनीयाद्यग्नीनरणौ कृत्वा समारोप्य

त्यर्थः । त्यक्तं समृद्धं गृहं येन स्त्रिया शिष्येण च युक्तः पदगः पादचारी सन् पूर्वं द्राक् ययौ ॥ २४ ॥ यद्राज्ञोऽनिष्टं सूचितं तदाह–इत इति । इतः परं स राजा त्वरया गृहमेत्य एकं गुणवंतं पुत्रम् अश्वक्रीडायां महाश्वात्पतितं मृतं श्रुत्वा शोकेन मृततुल्यदेहः सन् भूमौ पपात । महत्कोपे सद्यः फलं भवतीत्यर्थः ॥ २५ ॥ धृतमंगं यस्य सुतसंस्कारे कष्टेनानीतः द्वादशाघस्रकृत्यं द्वादशाहकृत्यम् । तदा स्वनगरादिज्यगतिं नृसिंहयज्वनो गमनं श्रुतवान् ॥ ॥ २६ ॥ ततः क्रुद्धोऽसौ राजा स्वलेखकश्रेष्ठौ वृथानिंदकौ कशाभिर्मृत्युपर्यंतं दूतैस्ताडितवान् । अथ तौ पिशाचौ संतौ स्त्रीसहितं राजानं शय्यासनादौ

इतः स राजा त्वरयेत्य गेहं श्रुत्वाश्वकेल्यां स्वसुतं महाश्वात् ॥ पतंतमेकं गुणिनं मृतं च शुचापतत्क्षौ मृततुल्यदेहः ॥ २५ ॥ उत्था
पितोऽमात्यमुखैः स कृच्छ्रान्नीतो धृतांगः सुतसंस्कृतौ च ॥ कुर्वंस्तथा द्वादशवस्रकृत्यं तदाशृणोदिज्यगतिं स्वपुर्याः ॥ २६ ॥
क्रुद्धस्ततोऽसौ निजलेखकार्यौं कशाभिरामृत्यु तताड दूतैः ॥ तौ पीडयंतावथ तं पिशाचौ शय्यासनादौ सततं स्त्रियाढ्यम् ॥२७॥
निवारणायाथ तयोः स चक्रे सुमंत्रविद्भिर्बहुभिः प्रयत्नम् ॥ दानैः सुरार्चाद्विजभोजनैश्च तथापि नैवप्रशशाम पीडा ॥ २८ ॥
नृसिंहयज्वानमथो व्रजंतं स्थानं स्वकीयं तु पथीक्ष्य शिष्यैः ॥ बहिर्हि नारायणपत्तनात्तत्सुदेशमुख्यः सुरविप्रभक्तः ॥ २९ ॥
तेजःप्रगल्भं तमसौ बुधार्यं मेने ननामाथ च दंडतुल्यः ॥ संप्रार्थ्य भक्त्याखिलयुक्तगेहे चास्थापयत्स्त्र्यभियुतं सशिष्यम् ॥ ३० ॥
श्रुत्वा स्थितं तत्र स मल्लभूपः स्वार्त्यर्थनमिच्छुश्च दिदृक्षुरेनम् ॥ स्वयं ययौ नास्य चकार वीक्षां द्रष्टोऽपि कृच्छ्रात्तमुवाच नेवत् ॥ ३१ ॥

सततं पीडयंतौ पीडाकरौ बभूवतुः ॥ २७ ॥ तयोः पिशाचभूतयोर्लेखकयोः ॥२८॥ अथ नारायणपेठ इतिप्रसिद्धनगराद्बाह्यतो मार्गे शिष्यैः सह स्वस्थानं प्रति गच्छंतं नृसिंहयज्वानं दृष्ट्वा देवब्राह्मणभक्तः कश्चित्तस्मिन् सुदेशमुख्यः तेजसा प्रौढं तं पंडितश्रेष्ठं मेने निश्चितवानित्यन्वयः ॥ २९ ॥ अथासौ देशमु ख्यस्तं साष्टांगं ननाम च पुनः स्त्रिया अग्निभिश्च युक्तं सशिष्यं तं भक्त्या संप्रार्थ्य सर्वसंपद्युक्तगृहे स्थापितवान् ॥ ३० ॥ स मल्लभूपो नृसिंहयज्वानं नारा यणपत्तने स्थितं श्रुत्वा पिशाचकृतस्वपीडानिवारणेच्छावान् एनं दिदृक्षुः सन् तत्र ययौ । सोपि तस्य वीक्षां दर्शनं न चकार कृच्छ्राद्देशमुख्यप्रार्थनादिना

दृष्टोऽपि स तम् ईषत्किंचिदपि नोवाच । निःस्पृहस्य तृणं जगदिति भावः ॥ ३१ ॥ असौ मल्लभूपः कुतश्चित्कस्माचित् लैंगात् लिंगधारिणः संकाशात् अस्य मतं स्वीकुर्वन् पूर्वधर्मान्नष्टः भ्रष्टोऽभवत् । अथ पिशाचबाधाया मुक्तोऽभवत् । तदाप्रभृति अस्य राज्ञः गुरू पूज्यौ द्विजैशौ द्विजश्च ऐशो लिंगी चास तुः ॥ ३२ ॥ तत्र पुरे नारायणपत्तने । आर्यात् श्रेष्ठात् । पृथिव्यां विख्यातात् अस्मान्नृसिंहयज्वनः । एतन्निवासेन बहुसंतुष्टा इत्यर्थः ॥ ३३ ॥ ॥ ३४ ॥ ततः पितुः सकाशात् ॥ ३५ ॥ एवं नृसिंहयज्वनोऽधिकारमुपवर्ण्य तस्य भास्करेण संगं वर्णयितुं प्रवासमाह—ययाविति । स्त्रियम् अग्नीन्

ययौ निराशः स्वपुरं ततोऽसौ लैंगात्कुतश्चिन्मतमस्य गृह्णन् ॥ प्राग्धर्मनष्टोऽथ पिशाचमुक्तस्तदाप्रभृत्यस्य गुरू द्विजैशौ ॥ ३२ ॥ नृसिंहयज्वाथ वसन्पुरेऽत्र चाध्यापयामास बहून्सुविद्याः ॥ तत्रत्यविप्रादय आसुरस्मात्तुष्टाः सदार्याद्भुवि विश्रुताश्च ॥ ३३ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ तस्याभवत्पुत्रो यज्वनः शुभलक्षणः ॥ स्वामीशास्त्रीति तन्नाम भाविज्ञेनामुना कृतम् ॥ ३४ ॥ कृतचूडस्तृतीयेऽब्दे वेदांगानि समभ्यसत् ॥ पंचमाब्देऽथोपनीतः सोऽभ्यसच्च ततः श्रुतीः ॥३५॥ ययावथ नृसिंहाख्यः शृंगेरिं स्वीयदर्शने ॥ सपुत्रशिष्यश्चाग्नीन्स स्त्रियं शिष्यं च होमदम् ॥ ३६ ॥ निधाय पत्तनेत्रत्यविश्वासायागमे पुनः ॥ दृष्टाः संभाषिताः स्वीयास्तेषां गेहे सकृत्सकृत ॥ ३७ ॥ भुंजन्मासद्वयं स्थित्वा पीठेशयतिलोभवान् ॥ निश्चक्राम ततो गंतुं स्वाग्निस्थानं पथांजसा ॥ ३८ ॥ बीजापूरं ययौ तत्र स्थितोसौ भारतीगृहे ॥ भास्करं शिशुमत्रैक्षत्प्रौढं तेजीयसां वरम् ॥ ३९ ॥ प्रपठंतमृचोभीक्ष्णं यथायैश्च न पठ्यते ॥ संकेतितः सुतोनेन यजूंष्याह च तान्यतः ॥ ४० ॥

होमादिकर्तारं शिष्यं च नारायणपत्तने पुनरागमनविषये तत्रस्थानां विश्वासाय स्थापयित्वा सशिष्यः स्वीयानामात्मीयानामुपासकानां दर्शनार्थं शृंगिरिं ययाविति सार्द्धान्वयः ॥ ३६ ॥ दृष्टाः नृसिंहयज्वनेति शेषः । तेषां स्वीयानामित्युत्तरान्वयि ॥ ३७ ॥ पीठस्थयतेः श्रियः ततः शृंगिरिस्थानं नारायणपत्तनं गंतुं निर्गतः पथा अनायासेन बीजापूरं ययावित्यन्वयः ॥ ३८ ॥ तत्र बीजापूरे । अत्र भारतीगृहे ॥ ३९ ॥ यथा श्रेष्ठैरपि न पठ्यते तथा अभीक्ष्णं

निरंतरम् ऋचः ऋग्वेदमंत्रान्त्रपठंतमिति पूर्वान्वितम् । अनेन भास्करबटुना संकेततः नृसिंहयज्वसुतः यजूंषि यजुर्मंत्रानाह । अतः स्वपुत्राज्ञानि यजूंषि श्रुत्वेति परेण योज्यम् ॥ ४० ॥ भास्करोक्तिवत् भास्कराध्ययनवन्न मेने । स नृसिंहयज्वा ॥ ४१ ॥ वयसा अल्पः प्रौढवदध्ययनकर्ता तं भास्करमतिकार्येण बहुकार्यकर्ता मयैवैकदा एकवारं स्वेच्छयाऽयं शिशुः अध्याप्यते इति योज्यम् ॥ ४२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४३ ॥ न अन्यस्यापेक्षा यस्य सः पंचिकाभिर्ब्राह्मणवाक्यैः सह ॥ ४४ ॥ पूर्वार्द्धं पूर्वान्वयि । श्रुतेर्वेदस्य विकृतितः किंचिज्जटादिविकृतिभिः सह । सार्ववित्र

श्रुत्वा नृसिंहयज्वांतर्न मेने भास्करोक्तिवत् ॥ भारती तावदायातः समायास्तमुवाच स ॥४१॥ केनार्भः शिक्ष्यते ह्येष प्रौढाध्यायीव योल्पकः ॥ गंभीरवित्तमाहेति मयैवाध्याप्यते क्वचित् ॥ ४२ ॥ शिशुरेपोतिकार्येण चैकदा तु निजेच्छया ॥ स्वयमेव ततो ह्रस्वं दीर्घं प्लुतमपुस्तकः ॥ ४३ ॥ यथावद्वक्ति चानन्यापेक्षः क्रीडन्निजेच्छया ॥ इत्थमृक्संहितां सांगां पंचिकाभिरधीतवान् ॥ ४४ ॥ यदान्यपि क्रमं किंचित्सकृद्विकृतितः श्रुतेः ॥ प्राप्तेषत्सप्तमाब्दोयमित्यध्यायी पुनस्त्वहम् ॥ ४५ ॥ नाध्यापयितुमीशो हि वीक्षन् राजक्रियाः सदा ॥ नृसिंहाख्योथ गंभीरविदुषं चाब्रवीदिति ॥४६॥ मत्पुत्रोयं मयैवाहर्निशमध्याप्यतेखिलैः ॥ उपनीतस्त्रिवर्षाणि व्यतीयुस्तत्र चाभवत् ॥ ४७ ॥ कृत्स्ना यजुःसंहिता च पदक्रमयुतामला ॥ तावतैव जनैरुक्तः सुधीरेष सुवाखिलैः ॥ ४८ ॥ भास्करेण समोऽयं किं यस्त्वतः श्रवणात्सकृत् ॥ त्र्यब्दाद्दचः पदैर्वक्ति क्रमाद्विकृतिभिः स्वयम् ॥ ४९ ॥ दृश्यते नामुना तुल्यः स्वाध्याय्येव महत्स्वपि ॥ इत्थं सुधीस्त्वेक एवाध्यापनीयोऽल्पबुद्धिभिः ॥ ५० ॥

क्किकस्तसिः । "सकृत्सहैकवारे स्यात्" इत्यमरः । प्राप्तं किंचित्सप्तमाब्दं यस्य सोऽयमध्यायी उक्ताध्ययनवानस्ति । पुनस्त्वहमित्युत्तरान्वयि ॥ ४५ ॥ राजक्रियाः राजकार्याणि पश्यन्कुर्वन्नित्यर्थः ॥ ४६ ॥ अयं स्वामीशास्त्री अखिलैः सर्वशिष्यैः सह उपनीतः सकाशात् तत्र त्रिवर्षेषु सर्वा यजुःसंहिताऽभवदिति संबंधः । अनेनाधीतेत्यर्थः ॥ ४७ ॥ तावतैव तावदध्ययनमात्रेणैव ॥ ४८ ॥ यः भास्करः मौंज्यूर्ध्वं त्र्यब्दात् त्रिवर्ष मात्रेण ॥ ४९ ॥ महत्स्वपि शिष्येषु अमुना तुल्यः स्वाध्यायी उत्तमाध्ययनकर्ता नैव दृश्यते । एवं बुद्धिमानेक एवाध्यापयितुं योग्यः । अल्पबुद्धिभिरि

त्यग्रे योज्यम् । अल्पबुद्धिभिः अध्यापयितुः श्रमकरैर्बहुशिष्यैरध्यापितैः किमस्ति । न किमपि फलमित्यर्थः ॥ ५० ॥ अमुना मत्पुत्रेण सह ॥ ५१ ॥ आगच्छतु मद्गृहमिति शेषः । आत्मजात् आधिक्येनातिशयेन प्रियः यतः अत्यंतं बुद्धिमान् ॥ ५२ ॥ यानगमिति पूर्वार्द्धं पूर्वान्वितम् । अश्वादियानगतं परान्सेवकान् तेभ्यो द्विजेभ्यः दत्तं गंभीराख्येनेति शेषः ॥५३॥ सुखात् सुखेन॥५४॥ कचिदपि ह्रस्वदीर्घमत्यजन् अविस्रजन्सकृदुदितमुक्तं विकृतिसहितं यजुर्वेदम् इति प्रकारेण अब्दाद्वर्षमात्रेण प्राप्तवान् । द्विकशरदि अन्यं सामवेदं तृतीये वर्षे अथर्वणवेदं प्राप्तवानित्यर्थः । मालिनीवृत्तम् ॥ ५५ ॥ लिखितं पत्रं

अध्यापितैः किं बहुभिः श्रमदैर्बहुवत्सरम् ॥ मयैवाध्याप्यते तस्माद्भास्करोऽयं सहानुना ॥ ५१ ॥ आगच्छत्वात्मजाधिक्यात्प्रियो ह्यत्यंतबुद्धिमान् ॥ इत्थं श्रुत्वैव गंभीररायश्च प्रैषयत्सुतम् ॥ ५२ ॥ यानगं सेवकान्दत्त्वा शिक्षानार्हान्द्विजान्परान् ॥ व्ययार्थं बहु वित्तं च दत्तं तेभ्योऽभंतुष्टये ॥ ५३ ॥ नृसिंहयज्वा स्वस्थानं ययौ स्वीयैः सभास्करः ॥ भास्करो गुरुपुत्रेण सहाधीत्यवसत्सुखात् ॥ ५४ ॥ अथ पठति नृसिंहाध्यापितो भास्कराख्यः सकृदुदितमपीषच्चात्यजन्ह्रस्वदीर्घम् ॥ सविकृतिमिति चापाब्दाद्यजुर्वेदमन्यं द्विकशरदि तृतीयेऽथर्वणीयांश्च मंत्रान् ॥ ५५ ॥ लिखितमथ तदास्मै प्रेषयामास तातो ह्युपयममतिरस्याश्वाद्ययौ सोऽपि गेहम् ॥ स्थित इह स च रुक्मण्णाख्यसत्पंडिताच्च नवरसबहुधातुच्छंदआपाप सर्वम् ॥ ५६ ॥ कृतवति च विवाहं तस्य ताते तितुष्टः श्वशुर इममपश्यद्भास्करं भास्कराभम् ॥ जनक इव गुणाढ्यं राघवं चाथ तस्मै गजतुरगनृदासीः पारिबर्हं ददौ सः ॥ ५७ ॥ श्रीदेशि केंद्र उवाच ॥ तिष्ठन्कृतोपयम एष गृहेऽल्पकालं छंदःकिरीटिवरसंज्ञमथो निबंधम् ॥ छंदःसुभास्करसमं त्वपरं च चक्रे ह्येकादशा तशरदप्यखिलार्यमान्यम् ॥ ५८ ॥

तातः गंभीरभारती अस्य भास्करस्योपयमे विवाहविषये बुद्धिर्यस्य । सोऽपि भास्करोऽपि अश्वादश्वेन गृहं ययौ । इह स्वग्रामे स्थितो नवरसान्बहुधोक्तान् छंदःशास्त्रादिकं सर्वं प्राप ॥ ५६ ॥ ताते गंभीराख्ये पुत्रस्य विवाहं कृतवति सति अतिसंतुष्टः श्वशुरः इमं जामातरं सूर्यसदृशम् अपश्यत् । अथ तस्मै गजादिकं पारिबर्हं गुणयुक्तं रामं प्रति जनक इव ददौ ॥ ५७ ॥ कृतविवाहो भास्करः गृहेल्पं कालं तिष्ठन् छंदःकिरीटिसंज्ञं ग्रंथं छंदसां भास्करसमं सूर्य

तुल्यं छंदोभास्करमिति यावत् । अपरं छंदःकौस्तुभं च ग्रंथं सर्वविद्वन्मान्यं कृतवान् । एकादशाप्ताः प्राप्ताः शरदो वर्षाणि यस्य सः एकादशवर्षोऽपि छंदःशास्त्रे ग्रंथत्रयं कृतवान् इति महदाश्चर्यमिति भावः ॥ ५८ ॥ वर्णादिकवर्षेण आयुर्धनुःश्रुतियुगम् आयुर्वेदं धनुर्वेदं च प्राप्तवान्किल । बहुगायनप्रयोगयुक्तं गांधर्ववेदं च तथैव वर्षेण प्राप्तवान् । शिल्पशास्त्रप्रयोजकं स्थापत्यम् । अर्थशास्त्रं च शरत्तः वर्षेण प्राप्तवान् ॥ ५९ ॥ समग्रं सूक्ष्माभिप्रायसहितं मीमांसकं पूर्वोत्तरमीमांसाशास्त्रम् अनुमितिकं न्यायशास्त्रम् अष्टादशसंख्याकममलं शुद्धं पुराणानां गणं चकारादुपपुराणं च सम्यग्विचार्य षोडशवर्षो भास्करः इत्यष्टादशविद्याः प्राप्तवान् । यथोक्तं "पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥" एता एव आयुर्वेदधनुर्वेदगांधर्ववेदार्थ

नारायणाख्यपुरमेत्य नृसिंहसंज्ञादायुर्धनुःश्रुतियुगं स किलाप वर्षात् ॥ गांधर्वकं च बहुगानयुतं तथैव स्थापत्यमद्भुतसुशिल्पकरं शरत्तः ॥ ५९ ॥ सम्यग्विचार्य च षडंगमसौ समग्रं मीमांसकानुमितिकाऽखिलधर्मशास्त्रम् ॥ अष्टादशामलपुराणगणं च विद्याः सोऽष्टादशेति समवाप हि षोडशाब्दः ॥ ६० ॥ जातो युवातिरुचिरांगगतिः सुदीर्घबाह्वंघ्रिरुन्नतकपालविशालवक्षाः ॥ शोभाढ्यमांसलतनुः परिधानवासस्त्वष्टादशोन्नतकरैः सममस्य चासीत् ॥ ६१ ॥ तर्के गौतम एव पाणिनिरसौ शाब्दे परो जैमिनिर्मीमांसासु सुधर्मशास्त्रकथने साक्षान्मनुर्भूगतः ॥ वाण्यां वाक्पतिरेष काव्य उशनाः पौराणिके व्यासवद्भाष्ये शंकरपाद इत्थमवनौ श्रीभास्करः सर्वदृक् ॥ ६२ ॥ गंभीरः स्वसुतं हि भास्करमिमं ज्ञात्वा नृसिंहाद्गुरोर्विद्याष्टादशकस्य मर्मभिदमासेतु क्षितौ गोत्रपात् ॥ आगत्यात्र रथैः स्वकीयसहितः पुत्रेण तं चार्चयद्वस्त्रैर्भूरिसुभूषणैर्बहुधनैश्चागाद्गृहान्सात्मजः ॥ ६३ ॥

शास्त्रोपांगसहिताश्चाष्टादश विद्या भवंतीति ॥ ६० ॥ एवं नृसिंहयज्वनः सकाशात्सर्वविद्याप्राप्तिमुक्त्वा भास्करस्य शरीरैश्वर्यमाह । जात इति—अस्य परिधानवस्त्रम् अष्टादशसंख्याकैरुन्नतपुरुषकरैः सम्मतमासीत् ॥ ६१ ॥ तत्तद्विद्यासु भास्करपंडितस्य पूर्णत्वमाह । तर्क इति—तर्कशास्त्रे तदुत्पादको द्वितीयो गौतम एवासीत् । एवं सर्वत्र । शाब्दे व्याकरणशास्त्रे अपरः पाणिनिः मीमांसासूत्रेषु जैमिनिः । धर्मशास्त्रे मनुः । भाषणे बृहस्पतिः । काव्ये शुक्रः । पुराणे व्यासः । भाष्ये श्रीशंकरः । एवं श्रीभास्कराचार्यः पृथिव्यां सर्वज्ञ आसीत् । शार्दूलविक्रीडितम् ॥ ६२ ॥ गंभीरभारती स्वपुत्रं भास्करं नृसिंहगुरोः सका

शात्पृथिव्यां गोत्रपात् हिमालयात्सेतुपर्यंतं विद्यानामष्टादशकस्य मर्म भेदम् अष्टादशविद्याभिज्ञं ज्ञात्वा अत्र नारायणपत्तने आगत्य तं नृसिंहयज्वानं पुत्रेण पुत्रहस्तेन वस्त्रादिभिरर्चितवान् । च पुनः स पुत्रो गृहमगात् ॥ ६३ ॥ श्रीभास्करः स्वगृहे वसन् सन् एकोऽपि सन्मतीन्सर्वान् शिष्यान् वेदान् आगमान् शास्त्राणि तत्तद्विधं तत्तत्प्रकारकम् साकल्येनाध्यापयन्नासीत् । वर्द्धितं यशो येन स चासौ पुत्रश्च तस्माद्धेतोः गंभीरभारती तुतोष । क इव दिनैर्वर्द्धितयशःपुत्रादिंदोः अब्धिरिव । हि यस्माच्चंद्रः अपक्षयी क्षयवान् इति हेतोः भास्करेण समस्तुल्यो न भवति अतः अर्कात्संतुष्टः कश्यपः अत्रौपम्यः उपमायोग्योऽस्ति॥६४॥एतत्सर्गोक्तभास्करविद्याप्राप्तिश्रवणादेः फलमाह—त्रिषट्केति । यो नक्तं सायंकालम् एकान्नभोक्ता सन्भास्कराचार्यस्य इमां त्रिषट्कविद्याप्राप्तिम्

श्रीमद्भास्कर आत्मसद्मनि वसंस्त्वध्यापयत्सन्मतीन्वेदांस्तद्वदथागमांश्च निखिलानेकोऽपि तत्तद्विधम्॥गंभीरोऽथ तुतोष वर्धितयशःपुत्रादिवाब्धिर्दिनैरिंदोरिंदुरपक्षयीति न समोऽर्कात्कश्यपोत्रौपमः ॥ ६४ ॥ त्रिषट्कविद्याप्तिमिमां निशम्य यो भास्करस्य प्रपठेच्च भक्त्या ॥ त्रिसंध्यमेकान्नभुगेव नक्तं मूर्खोऽपि विद्वान्भवितेति नूनम् ॥ ६५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धे भास्करविद्याभ्यासवर्णनं नाम षट्त्रिंशः सर्गः ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ पितुर्बृहद्वपुश्चैष विनयाद्भास्करस्त्वणुः ॥ जनैर्दृष्टोऽथ तत्पत्न्या पद्मावत्याऽपरः स्मरः ॥ १ ॥ यवनोऽत्रत्यनृपतिर्ज्ञात्वामात्यसुतं च तम् ॥ सुबुद्धिं राजकीये स्वे नियोक्तुं मनसाऽकरोत् ॥ २ ॥ अथ गंभीररायाख्यभारतीशाज्ञया ययौ ॥ तद्देशमखिलं पश्यन्प्रजानां सुनयानयौ ॥ ३ ॥

अष्टादशविद्याप्राप्तिं निशम्य श्रुत्वा भक्त्या त्रिकालं प्रपठेच्च स मूर्खोऽपि विद्वान्भविता नूनं निश्चयेन भविष्यतीत्यर्थः॥६५॥इति श्रीगुरुपरंपराचरित्रोत्तरार्धेटीकायामर्थस्फूर्त्यभिधायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥ उत्सप्तत्रिंशके पद्यैस्त्र्यगैः पित्रुक्तभास्करः । दिग्जयार्थी गुरुं गत्वाऽजयदार्यानितीर्यते ॥ ३७ ॥ अथ भास्करस्य दिग्विजयं विस्तारेण वर्णयिष्यंस्तत्प्रवासमुपक्रमते पितुरित्यादिभिः । अथ भास्करो जनैः पितुर्गंभीराख्याद्बृहद्वपुः दृष्टो विनयेनाल्पोवलोकितः तत्पत्न्या पद्मावत्या द्वितीयो मदनो दृष्टः एवं सर्वप्रियोऽभवदित्यर्थः ॥ १ ॥ मनसाऽकरोन्निश्चितवानित्यर्थः ॥ २ ॥ ईशाज्ञया राजाज्ञया ॥ ३ ॥

अष्टादशभिर्नृभिर्युक्तायां शिविकायां स्थितेन सुतेन भास्करेण युक्त इति पूर्वान्वितम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अमितं बहु अच्छं स्वच्छम् अंभः तोयं यस्यास्तस्याः सरितो नद्यास्तीरे ॥ ९ ॥ ससैन्य इति पूर्वान्वयि । कश्चित्सिद्ध आसीदित्यध्याहारः । यदा पुत्रादिसहितो गंभीरभारती तत्र प्राप्त स्तदैव भक्तिमानपि स सिद्धः शिवमूर्तिं तेजोहीनामपश्यदित्यन्वयः ॥ १० ॥ तथाभूतं कांतिरहितम् । नित्यं कांतियुक्ता मूर्तिर्दृश्यते । अद्य कथं कांतिही

अश्वैर्गजैर्गजैश्चान्यैः स्वयं सच्छिबिकास्थितः ॥ सुतेनाष्टादशत्राव्यशिबिकास्थेन चान्वितः ॥ ४ ॥ क्वचिद्गजेन चाश्वेन पद्भ्यां याति क्वचिद्द्रुतम् ॥ भास्करः सहितः शिष्यैः स्वस्वाध्ययनतत्परैः ॥ ५ ॥ गच्छन्नित्थं स्वपित्राढ्यः परमैश्वर्यवान्सुधीः ॥ ग्रामेग्रामे करोत्येष प्रजानां च नयानयौ ॥ ६ ॥ लेखकेभ्यो राजकीयवित्तलब्धिव्ययादिकम् ॥ स्वयं सम्यक्तया पश्यन्सम्यक्कार्यं करोत्यसौ ॥ ॥ ७ ॥ राजकार्यक्षमं दृष्ट्वात्मजं गंगीरभारती ॥ स्वीयं कार्यममुष्मै च दातुमेव मनो दधे ॥ ८ ॥ इत्थं भ्रमन्स गंभीरो मध्याह्ना तपशांतये ॥ अवतस्थेऽमिताच्छांभःसरित्तीरे द्रुमाकुले ॥ ९ ॥ ससैन्योऽथ ततो दूरं कश्चित्सिद्धोऽतिनिःस्पृहः ॥ शिवभक्तः शिवं ध्यायन्पूजाकाले तदैव हि ॥ १० ॥ शैवीं मूर्तिं कांतिहीनामपश्यद्भक्तिमानपि ॥ विस्मितोऽथ तथाभूतं संपूज्य मनसेश्वरम् ॥ ११ ॥ उन्मील्य नयने चैष बहिरेत्य निजाश्रमात् ॥ अपश्यत्तन्नदीतीरे सैन्यं सर्वं शिवाकृति ॥ १२ ॥ मनस्येवं विचार्यासौ योगवान्भूतभव्यवित् ॥ कृतवान्निश्चयं षष्ठमूर्तेरीशस्य संभवः ॥ १३ ॥ ज्ञानाधिक्यप्रकाशाय भास्कराख्यस्य भूतले ॥ जात इत्थं सदा तिष्ठत्स्वाश्रमेऽस्येक्षणेच्छया ॥ १४ ॥ जाताखिलावश्यकभोजनोऽथ गंभीरराय: ससुतोऽपराह्णे ॥ तं ख्यातसिद्धं प्रययौ च दूरे नाम संस्थाप्य फलाद्यमग्रे ॥ १५ ॥

नेति विस्मितः । अथाद्युत्तरान्वयि ॥ ११ ॥ १२ ॥ शिवस्य षष्ठमूर्तेरिति "भूरंभांस्यनिलोऽनलोऽम्बरमहर्नाथो हिमांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकम्" इति शिवाष्टमूर्तिषु षष्ठस्य सूर्यस्य संभवः ज्ञानाधिक्यप्रकाशनाय जात इति निश्चयं कृतवानित्यन्वयः ॥ १३ ॥ अस्य भास्करस्य दर्शनेच्छया इत्थं सदा मनसा स्वाश्रमेऽतिष्ठत ॥ १४ ॥ अथ जातं संपादितं सर्वम् आवश्यकम् ज्ञानादिकं भोजनं च यस्य स पुत्रसहितो गंभीर

गारती तं प्रसिद्धं सिद्धं दूतैः सह ययौ । च पुनः फलादिकमग्रे संस्थाप्य ननाम ॥ १५ ॥ स तस्याग्रभागे स्थितः अथ यः पूर्वं दृष्टोऽपि एतेन गंभीरा एवेन किंचिदपि नोवाच । स सिद्धोऽद्य संप्रति परैः विहीनमेकाकिनम् एनं रहसि स्वयं समाहूय इति वक्ष्यमाणमुवाच ॥ १६ ॥ तदेवाह–पुत्र इति । तवायं भास्कराख्यः पुत्रः लौकिकः इतरसदृशो नास्ति । किं तु अष्टमूर्तेः शिवस्य षष्ठोंशः सूर्यः श्रेष्ठैरुक्तो यः सोऽयमद्य ज्ञानप्रकाशार्थं पृथिव्यामवतीर्णोऽस्ति ॥ १७ ॥ अयं च त्वया राजकार्ये न योज्यः यतोऽयं राजा यवनः । 'न नीचो यवनात्परः' इति परैः श्रेष्ठैः नीचजातिरुक्तः किल । हि यस्माद्देवांशो

स्थितस्तदग्रेऽथ पुरेक्षितोऽपि यः किंचिदेतेन न चाह सोऽद्य ॥ स्वयं समाहूय परैर्विहीनं गंभीररायं रहसीत्युवाच ॥ १६ ॥ सिद्ध उवाच॥ पुत्रस्तवायं न च लौकिको यः साक्षाच्छिवस्याष्टतनोर्हि षष्ठः ॥ प्रोक्तः परैर्भास्कर एव सोऽद्य ज्ञानप्रकाशाय धरावतीर्णः॥१७॥
योज्यस्त्वयायं न च राजकीये राजा यतोऽयं यवनः कुजातिः ॥ परो न नीचो यवनात्किलोक्तः कथं हि तद्दास्यमियात्सुरांशः॥१८॥
अस्यावतारः कुमतांतकारी संस्थापकश्चाखिलसन्मतानाम् ॥ प्राक्छंकराचार्यगुरोर्यथातो गच्छत्वभिज्ञोऽखिलदिग्जयाय ॥ १९ ॥
सिद्धोक्तमाकर्ण्य वचः स्वपुत्रोत्कर्षाकरं सत्यमसौ हृदीदम् ॥ मेनेऽतिविद्यातिगुणातितेजःशीलैरिहाथ स्वपुरं ययौ तत् ॥ २० ॥
गंभीररायः सुतमाह दैवान्ममात्मजस्त्वं श्रुतिविद्वरिष्ठः ॥ योग्यं न कर्तुं तव राजकीयं यतोऽतिनीचा यवनस्य सेवा ॥ २१ ॥

यवनसेवकत्वं कथं प्राप्नुयात् । तस्मात्त्वया राजकार्ये पुत्रो न योजनीय इत्यर्थः ॥ १८ ॥ ननु राजकार्ये न योज्यश्चेत्किं कार्यमनेन कार्यमित्याशंक्याह । अस्यावतारः कुमतानां वेदविरुद्धप्रस्थानानां नाशकर्ता सत्संप्रदायानां स्थापनकर्तास्ति । यथा पूर्वं श्रीशंकराचार्यगुरोरवतारो धर्मसंस्थापनायाधर्मखंडनाय जातस्तथायमित्यर्थः । अतः अभिज्ञः सर्वज्ञोऽयं तव पुत्रः सर्वदिग्जयाय गच्छतु ॥ १९ ॥ स्वपुत्रोत्कर्षस्याप्रमंतात्कारकं जनकं सिद्धवाक्यं श्रुत्वा इह भास्करे अतिविद्यादिभिः सत्यमिदमवतारादिकं हृदि मेने । अथ तद्वीजापूराख्यं स्वनगरं ययौ । गंभीराख्य इति शेषः ॥ २० ॥ दैवयोगेन वेदविच्छ्रेष्ठस्त्वं

मत्पुत्रोऽभवः जातोऽसि ॥ २१ ॥ भूयः प्रवर्द्धितान्वृद्धिंगतान् छेदितकंटकवृक्षान् पुनर्वर्द्धितानिव निर्मूलान्कुरु । दिग्विजयाय गच्छेति भावः ॥ २२ ॥ ननु कथं दिग्विजये ममाधिकार इत्यत आह—त्वामिति । यस्य तव त्रिषट्सुविद्यानाम् अष्टादशसंख्याकानामुत्तमविद्यानां मर्मज्ञो नृसिंहयज्वा गुरुरस्ति । अस्य शिष्यस्त्वमेव तत्सदृशोऽसि इति हेतोः पृथिव्याम् इतरस्त्वां जेतुं न समर्थः । एवं तवाधिकारोऽस्तीत्यर्थः ॥ २३ ॥ किं च किरणाः सूर्यमिव एते सर्वे पंडिताः त्वा त्वां प्रति आयांतु । ननु एकं मामेव जेतुं कोऽपि न समर्थोऽस्ति यदि तर्हि पंडितैः किं प्रयोजनमित्यत आह—दृशा अवलोकनमात्रेण आत्ता स्वीकृता शोभा यैरिति । अवलोकनमात्रेण तव शोभार्थमिति यावत् । अमीषां हस्त्यादीनां सुचर्या उत्तमनिर्वाहो येन तत् अमितं बहु धनं दास्या

त्वं गच्छ जेतुं भुवि दुर्मतस्थान्प्राक्छंकरार्यैर्विजितांश्च भूयः ॥ प्रवर्द्धिताञ्छेदितकंटकद्रूनिवाथ तांस्त्वं कुरु मूलहीनान् ॥ २२ ॥
त्वां जेतुमीशो हि परो न चोर्व्यां त्रिषट्सुविद्याखिलमर्मभेत्ता ॥ नृसिंहयज्वा गुरुरस्य शिष्यस्त्वमेव तत्तुल्य इहेति हेतोः ॥ २३ ॥
त्वां यांतु चैतेऽप्यखिला बुधाश्च यथांशवोऽर्कं हि दृशात्तशोभाः ॥ हस्त्यादियानैरपि भृत्यवर्गैर्दास्येऽमितं वित्तमदः सुचर्यम् ॥ २४ ॥
आज्ञा कृता शंकरपूज्यपादैः कार्यं स्वकर्मेत्यखिलद्विजेभ्यः ॥ पाल्या स्वतोऽन्यैरपि पालनीया ज्ञानं यथान्येषु भवेद्यथाधि ॥ २५ ॥
आज्ञां निशम्येति पितुर्ययौ गां स भास्करः शिष्यवरैर्विदाढ्यः ॥ सुभृत्ययानैर्विमतान्सुशास्त्रैर्जेतुं नृपोऽरीनिव शस्त्रसंघैः ॥ २६ ॥
प्राप्तः प्रतिष्ठानमथो स पूर्वं प्राहुर्जनाः क्षेत्रवरं यतोदः ॥ तत्रत्यविप्रैर्बहुसत्कृतोऽसौ राज्ञाऽप्यभून्मन्त्रिपुरोहिताद्यैः ॥ २७ ॥

मि । त्वया ऐश्वर्ययुक्तेन गंतव्यमित्यर्थः ॥ २४ ॥ ननु शृंगगिरिपीठस्थितस्याज्ञां विना कथमेतादृशैश्वर्येण मया दिग्विजयाय गंतव्यमिति चेत्तत्राह । आज्ञेति श्रीशंकरभगवत्पूज्यपादैः सर्वद्विजेभ्यः स्वस्वकर्मकार्यमेवेति आज्ञा कृता । सा स्वयं धार्या । अन्यैरपि पालनीया च । यथा ज्ञानंस्वयं लब्ध्वा अन्येभ्योप्युपदेशाय भवेत् तथा कर्मकांडमपीत्यर्थः । अतो यथाधि धियमनतिक्रम्य यथामतीत्यर्थः । तामाज्ञां कुरु । स्वपरधर्मरक्षणार्थं शंकराचार्येण पूर्वमेव वयं सर्वे ब्राह्मणमात्राः आज्ञापिताः । अतो मठस्थस्य आज्ञा नोपेक्षणीयेति भावः ॥ २५ ॥ गां पृथिवीम् । जेतुमिति शेषः । विमतान् वैदिकमतविरुद्धमतस्थान् ॥ २६ ॥ यतः कारणाज्जनाः अदः इदं प्रतिष्ठानं क्षेत्रेषु श्रेष्ठमाहुः अतः सः प्रथमं प्रतिष्ठानं प्राप्तः । राज्ञापि तत्रस्थेन मन्त्रिपुरोहिताद्यैः

साहितेन । सहार्थे तृतीया । बहु सत्कृतोऽभवत् । सर्वैः सत्कृत इत्यर्थः ॥ २७ ॥ अत्र प्रतिष्ठाने ऋग्वेदिनां यजुर्वेदिनां च परस्परं चिरेण वैरमासीदिति हे तांस्ते पृथक्पृथक् यथा परस्परम् ईक्षा दर्शनं न भवेत्तथा पंडितवर्यं प्रति गत्वा तं प्रति तथाऽऽनुकूल्यस्यार्थनं चक्रुः ययाचिरे । अस्मत्पक्षेऽनुकूलो भवास्म त्पक्षेनुकूलो भवेति याचितवंतः ॥ २८ ॥ पक्षद्वये येये श्रेष्ठविद्वांसः तांस्ताञ्जित्वा स्ववशांश्च कृत्वा तैः परस्परं सख्यं कृतवान् तदा ते प्रतिष्ठानस्थाः सर्वे भास्करम् इष्टदेवं सूर्यं मेनिरे, मन्यंते स्म ॥ २९ ॥ सर्वेषां नृपस्य विदुषां स्विनां धनिनां च प्रीत्या संतोषेण । कतिचिन्मासान् कतिचिन्मासपर्यंत मिति यावत् । तस्थौ स्थितः । अथात्र प्रतिष्ठाने राजसभायां गुरोः सकाशात्स्वीकृतमंत्रो ज्ञानवान्कश्चिदुत्तमलेखक आसीत् ॥ ३० ॥ स लेखकः

बह्वृग्यजुःशाखिकुले मिथोभूद्वैरं चिरेणेति पृथक्पृथक्त्वात् ॥ गत्वा बुधार्थं न मिथो यथेक्षा तथानुकूल्यार्थनमत्र चक्रुः ॥ २८ ॥
पक्षद्वये ये वरशास्त्रिणो वै निर्जित्य तांस्तान्स्ववशांश्च कृत्वा ॥ सख्यं च तैरेष मिथश्चकार ते मेनिरे भास्करमिष्टदेवम् ॥ २९ ॥
तस्थौ पुरेस्मिन्कतिचित्स मासान्प्रीत्याखिलानां नृपवित्स्विनां वै ॥ अथात्र सल्लेखक आत्तमंत्रोंतर्निष्ठ आसीन्नृपतेः सभायाम् ॥ ३० ॥
स भास्करं वीक्ष्य सुतेजसाढ्यं प्रगल्भवाग्धीवपुषं सुविद्यम् ॥ अजेयमन्यैरपि लोभदं च मेने कुलीनं तमिति स्वचित्ते ॥ ३१ ॥
प्रसाद एतस्य तु देवतायाः कस्याश्चिदंगैर्मनुसंजपाद्यैः ॥ नूनं यतः क्षेत्रवरेऽत्र बुद्ध्याऽजेयोऽखिलार्यैर्न पुरा किलान्यः ॥ ३२ ॥
मंत्रान्स्वयं वेत्त्युत सिद्धमंत्रो गुरोः प्रसादादयमुत्प्रभावः ॥ सम्यक्तया ज्ञेयमिदं किलेति धिया ययौ भास्करमेष नित्यम् ॥ ३३ ॥

लोभदं प्रीतिकरम् इति वक्ष्यमाणं स्वचित्ते मेने । विचारितवान् ॥ ३१ ॥ तमेव विचारमाह—प्रसाद इति । एतस्य भास्करस्य मंत्रजपहोमतर्पणमार्जन ब्राह्मणभोजनाख्यैः पुरश्चरणांगैः कृत्वा कस्याश्चिद्देवतायाः प्रसादोस्ति नूनम् । यतः अस्मिन्क्षेत्रवरेऽन्यः विद्वान् सर्वैः क्षेत्रस्थपंडितैः । कर्तृभिः । बुद्ध्या अजेयः जेतुमयोग्यः नासीत् । किं तु जेय एवासीत् । अयं तु अजेयोऽस्ति तस्माद्देवताप्रसादवानयं भास्करो दृश्यते इत्यर्थः ॥ ३२ ॥ किं चायं मंत्रान्स्व तो जानाति उताथ वा गुरोः प्रसादेन सिद्धमंत्रः सन्नुत्कृष्टप्रभावोऽस्ति इदं मया सम्यग्ज्ञातुं योग्यमस्तीति बुद्ध्या एष भास्करं प्रति ययौ । ज्ञानदर्शनार्थं

मिति शेषः ॥ ३३ ॥ आम्नायविन्मंत्रशास्त्रज्ञो लेखकः विद्यागुरोः सकाशात्प्राप्त उत्तमप्रसादो यस्य तं मेने । अष्टादशविद्याप्रदातुः गुरोः केवलकृपया भास्कर उत्कृष्टप्रभावोऽस्ति कृपयाष्टादशविद्याप्राप्त्यैव तेजस्वी दृश्यते गुरुदेवताप्रसादेन स्वयं वा मंत्रशास्त्रं न जानातीति निश्चितवानित्यर्थः ॥ ३४ ॥ कदाचिल्लेखकोऽमुं भास्करं प्रत्याह । एवमित्थं त्वं चतुःषष्टितंत्रैर्विना सर्वज्ञोऽसि । सौभाग्यचिह्नैर्हरिद्राकुंकुमकंठभूषाद्यैर्विना सर्वभूषणयुक्ता अंगना न शोभते तथा त्वं सर्वज्ञोऽपि मंत्रशास्त्रं विना न शोभावानित्यर्थः ॥ इति हेतोस्तज्ज्ञं मंत्रशास्त्रज्ञं प्रति आशु शरणं गच्छ । तस्मात्त्वमुत्कृष्टोऽपि मंत्रशास्त्रज्ञानेनात्युत्कृष्टो भविष्यसीत्यर्थः॥ ३५॥इति श्रुत्वा भास्करो नृसिंहयज्वाख्यं गुरुं स्मृतवान् । स्वनिंदां कुर्वन्मनस्याह । अज्ञेन मया पूर्वं गुरुतः नृसिंहयज्वनः सकाशात्सुमार्गः

श्रुतीः पठंतं स्मृतिशास्त्रमुख्यं पश्यंतमन्यानपि पाठयंतम् ॥ आम्नायवित्तं च विलोक्य मेने विद्यागुरोराप्तवरप्रसादम् ॥ ३४ ॥ रहस्यमुं लेखक आह चेत्थं त्वं सर्ववेत्तासि विनैव तंत्रैः ॥ सौभाग्यचिह्नैरिव सर्वभूषांगनेति तज्ज्ञं शरणं व्रजाशु ॥ ३५ ॥ श्रुत्वेति सस्मार स भास्करोंतर्नृसिंहयज्वाख्यगुरुं स्वनिंदाम् ॥ कुर्वन्मनस्याह मया बुधेन न स्वीकृतः प्राग्गुरुतः सुमार्गः ॥ ३६ ॥ लप्स्येऽधुना मंत्रतर्तिं कुतस्तां विनाऽफलाः स्युः सकलाश्च विद्याः ॥ एतद्धृतं मंत्रमयास्तु देवास्तैस्तत्प्रसादस्तमृतेऽफलास्ताः ॥ ३७॥ अतोऽयमेवाखिलमंत्रलब्ध्यैः संप्रार्थनीयः क्व परोद्य लभ्यः ॥ इत्थं मतिस्तं प्रणमन्बुधार्यः प्राहेति मे देहि मनूंस्त्वमेव ॥ ३८ ॥

उपासनामार्गः नांगीकृतः मंत्रशास्त्रज्ञोऽपि नृसिंहयज्वा मया मंत्रोपदेशार्थं न शरणीकृत इत्यर्थः ॥ ३६ ॥ अधुना मंत्रविस्तारं कस्माद्गुरोः प्राप्स्यामि तां मंत्रतातिं विना सर्वा विद्याः सफलाः कुतो भवंति। न कुतोऽपि सफला इत्यर्थः । एतदेवाह—एतदिति । देवास्तु मंत्रमयाः भवंति । तैर्मंत्रैस्तेषां देवतानां प्रसादो भवति तं प्रसादं विना ताः विद्या निष्फला भवंति । मंत्रशास्त्रं विना सर्वज्ञत्वं वृथा भवतीति तदनेन योग्यमुक्तमित्यर्थः ॥ ३७ ॥ यत एवं मंत्रशास्त्रं सौभाग्यकरम् अतोऽयमेव मया सर्वमंत्रप्राप्त्यर्थं प्रार्थनीयः । अद्य संप्रति परोऽन्यो मंत्रज्ञः क्व लभ्यः न क्वापि लभ्यो भवति । नृसिंहयज्वनोऽतिक्रांतत्वात्तादृशो मंत्रज्ञो दृश्यते । अतोऽयं प्रार्थनीय इत्यर्थः । इत्थंमतिः इति निश्चयवान्पंडितश्रेष्ठो भास्करस्तं लेखकं प्रणमन् त्वमेव मंत्रान्देहीति प्राह ॥ ३८ ॥

अथ लेखको भास्करं प्रत्याह । वेदशास्त्रेषु सुज्ञं त्वां प्रत्युपदेष्टुं मम तु अधिकारो नास्ति । ननु त्वामृते मंत्रज्ञो न दृश्यते इत्यत आह । सर्वज्ञस्त्वं सुरतन गरस्थितात्प्रकाशानंदात् मंत्रान्गृहाण । स त्वदुपदेशे सुयोग्योऽस्तीत्यर्थः ॥ ३९ ॥ इति श्रुत्वा भास्करस्तूष्णीं बभूव । अथ स भास्करः स्वशिष्यादीनां भक्ष्यादौ विषये भक्षणार्थमिति यावत् । षण्मासपर्याप्तं धनं प्रियात्मशिष्यसमीपे स्थापयित्वा निशीथकाले निरगान्निर्गतः । सुरतनगरं प्रतीति शेषः । मंत्र प्राप्तये अत्युत्कंठित इत्यर्थः ॥ ४० ॥ एकः असहायः वस्त्रद्वययुक्तो भास्करः सर्वमैश्वर्यं त्यक्त्वा अलक्ष्या अप्रकटा या आर्यता महत्त्वं तया अप्रकटः महत्त्वेन मंत्रान्प्राप्तुं बुधार्योऽपि यथा निरर्णः निरक्षरस्तथा सूरतपुरं पद्भ्यामेव जगाम । सर्वाभिमानत्यागपूर्वकं गुरुचरणे यदा लीनो भवति तदैव गुरुकृपा

तं लेखकोऽथाह न मेऽधिकारस्त्वां तूपदेष्टुं श्रुतिशास्त्रसुज्ञम् ॥ त्वं सर्ववित्सूरतपूःसुसंस्थप्रकाशसौख्याद्धि गृहाण मंत्रान् ॥ ३९ ॥
श्रुत्वेति तूष्णीमथ भास्करार्यः स्वशिष्ययानानुगभक्ष्यमुख्ये ॥ षण्मासपर्याप्तधनं निधाय प्रियात्मशिष्ये निरगान्निशीथे ॥ ४० ॥
एको द्विवस्त्रः परिहाय सर्वं पद्भ्यामलक्ष्यार्यतया जगाम ॥ तत्सूरताख्यं पुरमाप्तुमेव मंत्रान्बुधार्योऽपि यथा निरर्णः ॥ ४१ ॥
पृच्छन्पुरेऽगाच्छिवदत्तशुक्लगेहं समृद्ध्याढ्यमनेकशिष्यैः ॥ वेदांतमीमांसकतर्कमुख्यस्वाध्यायिभिश्चागमवेत्तुकामैः ॥ ४२ ॥
दास्याप्तभृत्यैर्युतमत्र चातः स्वोपास्यमात्मैक्यधियार्चयंतम् ॥ आसीनमेकं समपश्यदेनं प्रकाशसौख्यं स धरार्कतुल्यम् ॥ ४३ ॥
श्रीदेशिकस्तं स्वपुरस्समीक्ष्य तेजस्विनं चात्तमलाढ्यवस्त्रम् ॥ महांतमापद्गतिगं हि मत्वा वसेति संकेतितवाक्प्रपस्थः ॥ ४४ ॥
अथावसद्भास्कर आर्यगेहे गोलेपको मार्जयितांबुहर्ता ॥ संशोधयन्भांडमुखं च वासांस्याक्षालयँल्लब्धमुतान्नमश्नन् ॥ ४५ ॥

भवतीति भावः ॥ ४१ ॥ पुरे सूरतनगरे शिवदत्तशुक्लगृहं पृच्छन् तद्गृहमगात् । कीदृशम् ऐश्वर्ययुक्तं वेदांतादिस्वस्वाध्ययनकर्तृभिः आगमवेत्तुकामैर्मंत्र शास्त्रलिप्सुभिः अनेकशिष्यैर्युक्तम् ॥ ४२ ॥ दास्याप्तभृत्यैर्युक्तमिति पूर्वान्वितम् । अत्र च गृहे अंतर्यागमंदिरे आत्मैक्यबुद्ध्या स्वोपास्यदैवतं पूजयंतं पृथिव्यां सूर्यसदृशम् एनं प्रकाशानंदमपश्यद्भास्कर इति शेषः ॥ ४३ ॥ श्रीदेशिकः प्रकाशानंदः स्वपुरः स्वाग्रस्थितं स्वीकृतमलिनवस्त्रमपि तेजस्विनं दृष्ट्वा महांतम् आपद्गतिगं प्राप्तं मत्वा वस वासं कुरु इति संकेतितवान् पदं हस्तेन सूचितवान् । यतो जपस्थः मौनमाश्रित इत्यर्थः ॥ ४४ ॥ अथ आर्यगेहे

प्रकाशानंदगृहे भास्करस्वरूपं संगोप्य भृत्यवृत्त्या आवसत् । किं कुर्वन् । गोः पृथिव्याः गोमयादिना लेपनं संमार्जन्या मार्जनं कुर्वन्नित्यर्थः । तथा उदकमा हरन् भांडादिकमुद्वर्तयन् वासांसि क्षालयन् तथा लब्धान्नमश्नन् ॥ ४५ ॥ यया कन्यया सहांबिका देवी क्रीडति सा आर्यस्य प्रकाशानंदस्य कन्येति सेव मानं भास्करं दृष्ट्वा स्वपितरं प्राह । एष नवीनपुरुषः साधारणः सामान्यो नास्ति । यतः बाहिरतितेजस्वी तथांतः हृदये सुबुद्धिरस्ति । तस्मात्कश्चिदयं महा पुरुषो दृश्यत इत्यर्थः ॥ ४६ ॥ इति कन्यावाक्यं श्रुत्वा भास्करं प्रष्टुं मतिर्यस्य स प्रश्नकामः अध्यापनादिकर्मसक्तः सन् दूरं यथा तथा सदा कार्यपरेण भास्करेण संभाषणं कर्तुम् अवकाशं न लेभे । एवं बहुकालोऽतिक्रांत इत्यर्थः ॥ ४७ ॥ एवं यदा सेवासक्तो भास्करस्तदा दिल्लीस्थराज्ञः आश्रिताः

वीक्ष्येति तं भास्करमार्यकन्या ययांबिका क्रीडति सा स्वतातम् ॥ प्राहेति साधारण एष नैव यतोऽतितेजाः सुमतिस्तथांतः ॥४६॥
श्रुत्वेति तं प्रष्टुमतिर्गुरुश्चाथाध्यापनाचाह्निककर्मसक्तः ॥ संभाषितुं तेन न चावकाशं लेभे सदा कार्यरतेन दूरम् ॥ ४७ ॥ तदा
ययुर्गां सकलां जयंतो दिल्लीस्थराजाश्रितपंडितार्याः ॥ स्वस्वीयपूःस्थैरपि पंडितार्यैः संमाननीयाः स्वपुरात्पुरोगैः ॥४८॥ आज्ञेति
दिल्लीस्थनृपस्य सर्वान्राज्ञोऽथ सर्वेऽपि तथैव चक्रुः ॥ संप्रार्थितः सूरतगेन राज्ञा गंतुं पुरस्ताच्छिवदत्तशुक्लः ॥ ४९ ॥ राजाशया
त्तत्पुरतोऽभिगंतुं दृष्ट्वोद्यतं श्रीशिवदत्तशुक्लम् ॥ संकोचितस्वाह्निकभग्नचित्तं कृतांजलिर्भास्कर इत्थमाह ॥५०॥ श्रीभास्कर उवाच ॥
किं पंडितास्ते भवदग्रगत्या यांतीह नायांत्यथ तां विना हि ॥दौर्भिक्ष्यमेत्यग्रगतागताभ्यां यथा न भीः संग्रहिणस्तथाल्पा ॥ ५१ ॥

पंडितश्रेष्ठाः सकलां गां पृथ्वीं जयंतः आययुः । सुरतपुरमिति शेषः । स्वस्वनगरस्थैः स्वस्वनगरात्पुरोगामिभिः पंडितार्यैः एते पंडितार्याः सम्यक् माननी याः सत्कार्याः इति सर्वराज्ञः प्रति दिल्लीस्थराज्ञः आज्ञापि आसीदिति योज्यम् ॥ ४८ ॥ अथ सर्वेऽपि राजानः पंडिताश्च तथैव पंडितानां सत्कारं चक्रुः । यदा ते सुरतपुरं प्राप्तास्तदा सुरतगेतेन राज्ञा पुरस्ताद्गंतुं शिवदत्तशुक्लः प्रकाशानंदः संप्रार्थितः ॥ ४९ ॥ राजाशयाद्राजप्रार्थनया तेषां पंडि तानां पुरतोऽभिगंतुमुद्युक्तम् संकोचितेन संकोचं प्राप्तेन स्वकीयाह्निककर्मणा भग्नं चित्तं यस्य । पंडितपुरोगमने आह्निककर्मलोपो भविष्यतीति विक्षिप्तचित्त मित्यर्थः । एतादृशं गुरुं दृष्ट्वा भास्करः कृतांजलिः सन् इत्थं वक्ष्यमाणवाक्यमाह ॥ ५० ॥ हे गुरो भवतामग्रगमनेन ते पंडिता इह आयांति किम् ।

तां विना भवतोऽग्रगतिं विना नायांति किम् अपि तु भवदग्रगमने अगमने वा आयांत्येव यथा दौर्भिक्ष्यं दुःखेन भिक्षा यस्मिन् महर्घता अग्रे गमनेन अगमनेन वा आयात्येव । ततो दौर्भिक्ष्याद्भयं संग्रहिणो धान्यादिसंग्रहवतः न भवति तथा पंडितेभ्यो भयं विद्वच्छिष्यवतो विद्यासंग्रहवतस्तव नास्तीति भावः ॥ ॥ ५१ ॥ भास्करस्येदं वचनं यत् सदुक्त्या सुवाण्या कन्यया च अनुमोदितं तत् । अध्यापनप्रवचनाभिकांक्षी प्रकाशानंदोऽतिसंतोषेणांगीकृतवानित्यर्थः ॥ ५२ ॥ अथ ते पंडिताः नृपेण । कर्त्रा । स्वगत्या स्वगमनेन सत्कृताः संतः वाद्यवादैः सह सुरतपुरं प्रीत्या गताः । राज्ञेत्यपकर्षः । उत्तमगृहे प्रवेशिताः उत्तमभक्ष्यैरन्नादिभिः सम्यक् तृप्तिं प्रापिताः यद्यपि तथापि संतुष्टाः न बभूवुः । प्रकाशानंदस्यासन्मुखगमनमसंतोषकरम् ॥ ५३ ॥ चत्वारो भ्रातरः पंडिताः

स भास्करीयं वचनं सदुक्त्यानुमोदितं कन्यकयापि तद्धि ॥ अध्यापनप्रावचनाभिकांक्षी मेनेऽतिमोदाच्छिवदत्तशुक्लः ॥ ५२ ॥ अथागतास्तेऽपि पुरं नृपेण संमानितास्तूर्यरवैः स्वगत्या ॥ निवेशिनाः सद्भवने सुभक्ष्यैः संतर्पिता नैव तथापि तुष्टाः ॥५३॥ चत्वार एकोत्तरशास्त्रिणोऽत्यात्ते बंधवोऽनादरणेन रुष्टाः ॥ दीपं पतंगा इव ते प्रकाशानंदं ययुर्जेतुमतद्विदोऽल्पाः ॥ ५४ ॥ तेऽथोद्धतास्तेन च पूर्वपक्षं चक्रुर्जितः शब्दपरः कनिष्ठः ॥ सुशब्दतर्कज्ञ उतापरोऽपि सच्छब्दमीमांसकतर्कविच्च ॥ ५५ ॥ ज्येष्ठश्चतुःशास्त्रविदेव चक्रे वादं महांतं शिवदत्तकेन ॥ त्रिभिश्च शास्त्रैः स जितस्तदासौ वेदांतवादं च चकार तेन ॥ ५६ ॥

अंत्यात्कनिष्ठात् एकोत्तरशास्त्रिणः एकैकाधिकानि शास्त्राणि येषु । कनिष्ठ एकशास्त्रवान् । तज्ज्येष्ठो द्विशास्त्रवान् । तज्ज्येष्ठस्त्रिशास्त्रवान् तज्ज्येष्ठश्चतुःशास्त्रवानित्यर्थः । ते च प्रकाशानंदानादरणेन क्रुद्धाः संतो दीपं पतंगा इव तं जेतुं ययुः । यतः अतद्विदः तत्सामर्थ्यानभिज्ञाः यतः अल्पाः अल्पज्ञाः विद्वांसोऽपि ते सर्वज्ञं जेतुं परिभवार्थमेव प्राप्ता इत्यर्थः ॥ ५४ ॥ अथ ते उद्धताः जल्पकाः तेन प्रकाशानंदेन सह वादं चक्रुः । च पुनस्तेन प्रकाशानंदेन शब्दपरो व्याकरणज्ञः । अपरो न्यायव्याकरणज्ञः । अपरो मीमांसातर्कव्याकरणज्ञश्च जितः एवं बंधुत्रयं जितमित्यर्थः ॥ ५५ ॥ ज्येष्ठश्चतुःशास्त्रवित् मीमांसातर्कव्याकरणवेदांतज्ञ एव शिवदत्तशुक्लेन महांतं चतुःशास्त्रशंकोत्थापनभूयिष्ठं वादं कृतवान् । यदा गुरुणा शास्त्रत्रये स जितः तदा स पंडितः प्रकाशानंदेन

सह वेदांतशास्त्रे वादं चकार ॥ ५६ ॥ तत्रादौ वेदांतसिद्धांतं प्रतिपादयति—सत्यमिति । ब्रह्म सत्यं कालत्रयाविनाशि यतः स्वतःस्फूर्ति स्वप्रकाशं कुतः। अमलं जाड्यमलरहितं तत्र हेतुः । अनंतमपरिच्छिन्नं देशकालवस्तुपरिच्छेदशून्यमित्यर्थः। तदपि कुतः। अभेदं सजातीयविजातीयस्वगतभेदशून्यम् । अत एवैकमसहायं ततो निर्निमित्तसुखरूपं तदेवेशं सर्वनियामकं चास्ति । यथायथं च हेतुहेतुमद्भावः । अत्र ब्रह्मणि विश्वं कीदृशम् अत्रापि यथायथं हेतुहेतुमद्भावः । असत् सद्भिन्नं परेण प्रकाशते तत् परप्रकाश्यम् । अघौघं दोषयुक्तं सांतं नाशवत् भिदा परस्परभेदेन युक्तं बहु अनेकं दुःखि सुखहीनम् अनीशमसमर्थं च वर्तते एवं वेदांतशास्त्रसिद्धांतो भवतीत्यर्थः ॥ ५७ ॥ वेदांतशास्त्रस्य सिद्धांतमंगीकृत्य सति कुड्ये सर्वं चित्रमिति न्यायेन विश्वस्य ब्रह्मणि सत्त्वासत्त्वे एव न घटेते इति पृच्छति—विश्वमिति । विरुद्धधर्मकं विश्वं वर्तते न वा वर्तत इति संप्रति कथय त्वमित्यध्याहारः । ब्रह्मणि अस्ति वा नास्ति

पंडित उवाच ॥ सत्यं स्वतःस्फूर्त्यमलं ह्यनंतमभेदमेकं सुखरूपमीशम् ॥ ब्रह्मात्र चासत्परकाश्यघौघं सांतं भिदाढ्यं बहुदुःख्यनीशम् ॥ ५७ ॥ विश्वं किलेदं विपरीतधर्मं तिष्ठत्यथो नेत्यधुना वदार्य ॥ चेद्ब्रह्मणीदं वसतीति सूर्ये दृष्टा स्थिता नैव तमःस्थितिर्हि ॥५८॥ स्वतः प्रवृत्तं यदि विश्वमेति ह्यनः सचित्तः किमृते नरादेः ॥ गुणाः स्वतंत्रा यदि विश्वकृत्ये तान्कल्पितानेव च माययाहुः ॥ ५९ ॥ किं कल्पितैरश्वमुखैर्हि यानं भवेद्धि कर्त्री यदि तस्य माया ॥ नाम्नैव सा स्वीयमृषात्वमाहेत्थं संशयोऽतः परिहार्यतां मे ॥ ६० ॥

इति विप्रतिपत्तिः । तत्रायं दूषयति । चेदिति । सूर्यतमसोरिव जडाजडयोरेकत्र स्थितिरेव न संभवति । अत्रायं प्रयोगः । ब्रह्मविश्वे अनेकत्रास्थितिके तत्र हेतुः विरुद्धधर्मवत्त्वात् । सूर्यतमसोरिवेत्यन्वयदृष्टांतः । द्रव्यगुणादिवदिति व्यतिरेकदृष्टांतः । तस्मादेकत्र स्थित्यभावाद्ब्रह्माश्रयत्वं विश्वस्य न घटत इत्यर्थः ॥ ५८ ॥ परिशेषाद्द्वितीयपक्षमनूद्य दूषयति । स्वत इति । विश्वस्य ब्रह्मणश्चैकत्र स्थित्यभावे तत्संबंधं विनापि स्वतःप्रवृत्तिर्वाच्या ततोऽपि दूषणम् । यदि विश्वं स्वताश्चित्संबंधं विना प्रवर्तते तर्हि अनः शकटादि जडजातम् । सचेतनं नरादिकं विना स्वतः प्रवर्तते किम् । अपि तु न प्रवर्तते । यदि गुणानां विश्वप्रवर्तकत्वमस्ति तदा ते गुणाः मायया कल्पिताः विश्वकरणे समर्था न भवंति । आहुरित्यत्र वेदांतिन इति शेषः । तस्मात्प्रतीयमाना विश्वस्य प्रवृत्तिः स्वतो न भवति कल्पितगुणैरपि प्रवृत्तिर्न संभवति । अतो न द्वितीयपक्षस्य सिद्धिरित्यर्थः ॥ ५९ ॥ ननु गुणानां कल्पितं प्रवर्तकत्वम

स्त्विति चेत्तर्हि काष्ठादिकल्पितैरश्वाद्यैर्गमनं भवेत् तस्मात्तदपि न संभवतीत्यर्थः। यदि गुणजनिका विश्वकर्त्री माया तस्य प्रवर्तिका तर्हि सा मायेति स्वनाम्नैव मृषात्वमाह—मेति निषेधार्थकमव्ययं निषेधस्य च तदन्यतदभावतद्विरुद्धेषु नञ्। इति प्रमाणेनाभावरूपत्वमस्ति। तथा च अभावरूपिणी सा माया। यद्वा अव्ययानामनेकार्थत्वात्। मा अभावं यातीति माया। यस्मादभावस्य भावप्रवर्तकत्वं न घटते तस्माच्चैतन्याश्रयं विना विश्वस्य प्रवृत्तिः स्वतो गुणैर्मायया च न भवति। चेतनाश्रये च विरुद्धधर्मयोरनुपपत्तिरिति मम संशयोऽतः मनसि वर्तते स निवार्यतामित्यर्थः॥ ६०॥ नो चेत्संशयपरिहारो न कृतश्चेद्युष्माभिरहं जितोऽस्मीति लिखितपत्रमर्पणीयं त्वयेति शेषः। यतः कारणात्सर्वेषामपि भूमिगतानां पंडितानां पराजयकर्ताहमस्मि। तत्र तेषु अल्पज्ञोऽभिमानवान्कि कः पदार्थः॥ ६१॥ एवं वेदांतशास्त्रविषयकं प्रश्नं श्रुत्वा अस्योत्तरं वक्तुमसौ शिवदत्तः अक्षमः असमर्थोऽभवत्। आत्मन आह्निकसंकोचेन

नो चेल्लिखित्वा जयपत्रमेव देयं यतोहं खलु भूगतानाम्॥ जेताखिलानामपि पंडितानां किमल्पवित्तत्र भवान्हि मानी॥ ६१॥
श्रीदेशिकेंद्र उवाच॥ अस्योत्तरं वक्तुमथाक्षमोऽसौ दातुं यदास्मै जयपत्रमेव॥ प्रकाशसौख्यः कृतधीस्तदागात्स भास्करो गुर्वणुताऽसहिष्णुः॥६२॥पूजोपयोग्याखिलभांडमुख्यमुद्वर्तयंश्चार्द्रितभस्महस्तः॥ नत्वा गुरुं प्राह च पंडितं तं नो देहबुद्ध्यात्मधियोर्हि वादः॥ ६३॥ त्वं देहधीरात्मधियं गुरुं यत्पृच्छस्यमुष्योत्तरमुच्यतेऽद्य॥ मयैव पत्पीडककंटकस्य यथोद्गमस्तत्समकंटकेन॥ ६४॥
ब्रह्मैकमेवाद्वयमत्र नैव नानेति सिद्धांतवचः श्रुतेर्हि॥ अतोत्र माया न गुणाश्च विश्वं तदस्तितोक्तिः शशशृंगतुल्या॥ ६५॥

तस्य च बहुजल्पकत्वेन च असमर्थ इवाभवदित्यर्थः। असौ गुरुर्यदा जयपत्रं दातुं कृतनिश्चयोऽभवत्तदा स भास्करो गुरोरणुताया अल्पत्वस्यासहनकर्ता सन्नगात्प्राप्तः॥ ६२॥ पूजोपयोग्यानि सर्वाणि उपकरणादीनि उद्वर्तयन् आर्द्रीकृतं भस्म हस्तयोर्यस्य स भास्करः प्रकाशानंदगुरुं नत्वा तं पंडितं प्रत्याह। देहात्मबुद्धिस्त्वम् आत्मधीर्गुरुः अनयोर्वादो न संभवति। वादे चोभयोस्तुल्यत्वमपेक्ष्यते॥ ६३॥ अद्य तुल्येन देहात्मवता मयाऽस्योत्तरमुच्यते। तत्र दृष्टांतः। यथा पादपीडकस्य कंटकस्योत्पाटनं कंटकेनैव भवति। तथा श्रीचरणपीडकस्याऽनात्मज्ञस्य तत्रोत्पाटनं मयैवानात्मज्ञेनैव क्रियत इत्यर्थः॥
॥ ६४॥ तत्रादौ विश्वं ब्रह्मणि सूर्ये तम इव नास्त्येवेति वेदांतसिद्धांतमंगीकृत्य विवर्ताधिष्ठानेनैव जडाजडयोर्विरुद्धयोरपि एकत्र स्थितिसंभवाद्द्वितीयपक्ष

खंडनमाह–ब्रह्मेति। "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन" इति श्रुतेः सिद्धांतवचनमस्ति हि खलु। अतः अद्वयत्वात्। माया न। गुणाश्च न संति तेषां सत्त्वोक्तिः अंधदृष्ट्या सूर्ये तम इव शशविषाणतुल्या। "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः वाङ्मात्रैवेत्यर्थः ॥ ॥ ६५ ॥ ननु तथा सति कथं प्रतीयते केन हेतुना प्रवर्तते चेत्याशंक्य तत्र दृष्टांतदर्शनेन केवलं माययैव स्वाज्ञानरूपया प्रतीयते प्रवर्तते चेति परिहरन् आदौ प्रश्नांतरमुद्घाटयति–स्वप्नमिति। पुमान्हि मायया अविद्यया विस्मृत्यानेकरूपं स्वप्नं स्वयं पश्यति च पुनः अत्र स्वप्ने स पुमानास्ते साक्षिरूपेण तथैव पुरुषे इदं स्वप्नं भवेत्। एवं सति तदा केन हेतुना भवति अस्य कर्ता च को भवतीति त्वया वक्तव्यं तस्मात्स्वप्नतुल्यं जगद्ब्रह्मणि केवलं प्रतीयत इवेत्यर्थः॥ ६६ ॥ ननु त्वमेव दृष्टांते दार्ष्टांते कथयेत्याशंक्य उभयशंकापरिहाराय स्वप्नजगतोः साम्येन प्रतीयमानत्वं वर्णयति–स्वविस्मृतिरिति द्वाभ्याम्। स्वस्य जाग्रदात्मनो

स्वप्नं स्वयं पश्यति माययैवात्मानं हि विस्मृत्य पुमान्ह्यनेकम् ॥ स्वप्ने स चास्तेऽप्यथ पुंसि तद्धि भवेदिदं केन च कोऽस्य कर्त्ता ॥ ६६ ॥ स्वविस्मृतिः स्वप्नकरी च नान्या मिथ्या तनुस्थैः कफवातपित्तैः ॥ तत्तत्समं पश्यति विस्मृतात्मा नो जाग्रतोऽदोपि तथाज्ञसुज्ञौ ॥ ६७ ॥ किलात्मनो विस्मृतिरेव माया स्वप्नं यथा विश्वमिदं करोति ॥ गुणाः कफाद्या इव भिन्नकार्याः स्वप्नं यथा पुंसि तथात्मनीदम् ॥ ६८ ॥

विस्मृतिरेव स्वकल्पितैर्मिथ्याभूतदेहस्थैः कफवातपित्तैर्गुणैः स्वप्नकर्त्री भवति ततः तत्तत्सदृशं कफादिसदृशं स्वप्नं विस्मृतात्मा स्वप्नस्थः पुरुषः पश्यति। जाग्रत् न पश्यति तथाज्ञसुज्ञौ भवतः। अज्ञस्यात्मविस्मृत्या तत्तद्गुणसदृशं जगत्प्रतीयते। ज्ञानिनस्तु आत्मविस्मृत्यभावान्न प्रतीयत इत्यर्थः ॥ ६७ ॥ दार्ष्टान्ते योजयति–किलेति। यथात्मविस्मृतिरेव स्वप्नं करोति तथा माया विश्वं करोतीति पूर्णदृष्टांतोयम्। यथा वातपित्तकफाः स्वप्ने भिन्नभिन्नकार्या स्तथा सत्त्वाद्याः गुणाः भिन्नभिन्नकार्यजनका भवंति। यथा स्वप्नं पुरुषेऽस्ति तथा ब्रह्मणि इदं विश्वं वर्तते। स्वप्ने कफादिगुणैर्भिन्नकारित्वं चोक्तम्। मुहूर्ततत्त्वे–"चिंताक्रुग्जालपदीर्घं त्रिफलमनिलतः साहसोड्डीनपूर्वं पित्तात्तेजोग्निपीतारुणमपि कफतोंऽब्वाशयैतादि पश्येत्।" इति। अनिलतो वाततः चंक्रा

शयैतादि जलाशयसेतुबंधादि पश्यतीत्यर्थः । विपरीतपूर्वाख्यानकीवृत्तम् ॥ ६८ ॥ ननु ज्ञानिनः आत्मविस्मृत्यभावेऽज्ञवत्कथं तस्य विश्वप्रत्ययो भवति इति चेत्तत्राह । तीव्र इति । सूर्ये मध्याह्नवशात्तीव्रे सति अस्यार्कस्य किरणगतो जलप्रवाहो यद्यपि सर्वैरवलोक्यते तथापि असौ मृगजलप्रवाहो मृगैः सत्योऽवलोक्यते । नृभिर्मृषावलोक्यते । एवं निर्गुणेऽपि ब्रह्मणि अदः विश्वमज्ञानिभिः सत्यमेवावलोक्यते ज्ञानिभिर्मृषावलोक्यते । यथोक्तं योगवासिष्ठे "यथा स्वप्नमूर्तिर्जंतोरसत्या सत्यरूपिणी । अर्थक्रियाकरी भाति तथा मूढधियां जगत् ॥" किंच "भ्रमस्य जागृतस्यास्य जातस्याकाशवर्णवत् । अत्यंताभावसंबोधे यदि रूढिरलं भवेत् ।" अत्रात्यंताभावज्ञाने यदि रूढिरभ्यासदार्ढ्यं तदा कैवल्यप्राप्तौ पर्याप्तं भवतीत्यर्थः । तथा "स्वप्नानुभूतय इमा मरणांतबोधे भ्रांतितरभ्रमदृशः स्फुटसर्गभासः । भ्रांत्यातिवाहिकशरीरगता समस्ता मिथ्योदिता मृगनदीसरणक्रमेण । अस्यार्थः इतरभ्रमदृशः पूर्वपूर्वभ्रमद

तीव्रेऽपि सूर्येंऽशुगतोऽस्य सर्वैर्जलप्रवाहः खलु दृश्यतेऽसौ ॥ सत्यो मृगैश्च नृभिस्तथाज्ञैः सुज्ञैरदो ब्रह्मणि निर्गुणेऽपि ॥ ६९ ॥
विद्वान्भवान्विश्वमिदं मृषेत्थमुक्त्वापि तद्ब्रह्मणि नास्ति वास्ति ॥ वंध्यासुतो गेह इवाद्य पृच्छत्यदो न योग्यं त्वयि विद्वरार्ये ॥ ७० ॥
सिद्धांतवाक्यादिति भास्करीयात्पराजितो बंधुयुतः स विद्वान् ॥ स्थितिं ययौ स्वां विमनास्ततोंतस्तुष्टो गुरुर्भास्करमालिलिंग ॥७१॥

र्शिनः पुरुषस्य दृढतरसंस्कारोदयान्मरणांतबोधे प्राणोत्क्रमणपूर्वक्षणोत्पन्ने भाविभोगानुकूलार्थप्रतिभासे समस्ताः स्वप्नानुभूतिसदृशः स्फुटसर्गभासः अतिवाहिकशरीरगताः मनोमात्रनिष्ठा अपि भ्रांत्या मृगनद्याः सरणं प्रवाहस्तत्क्रमेण तद्रीत्यैव मिथ्या कथिता अपि वस्तुतो न संतीति किं च "आदावेव हि नोत्पन्नं यत्तस्येहास्तिता कुतः । कुतो मरौ जलसरिद्द्वितीयेंदौ कुतो ग्रहः" इति तस्माद्विश्वं वस्तुतो नास्त्येवेति सिद्धांतः ॥ ६९ ॥ अहं सर्वपंडितानां पराजयकर्तेति यदुक्तं तद्वृथोक्तमित्याह—विद्वानिति । विद्वानपि भवान् विश्वस्य मृषात्वमुक्त्वा तस्यास्तित्वनास्तित्वे प्रश्नं कृतवान् । यथा वंध्यासुतो गृहेऽस्ति वा नास्तीति प्रश्नकरणमयुक्तं तथा विद्वच्छ्रेष्ठे त्वयि एतत्प्रश्नकरणमयुक्तं मूर्खवत्प्रश्नकर्तरि त्वयि दिग्जयकर्तृत्वं नास्तीति भावः ॥ ७० ॥ एवं भास्करस्य सिद्धांतवाक्येन पराजितः स विद्वान्बंधुयुक्तो विमनाः सन्स्वस्थानं ययौ । ततो गुरुर्मनसि तुष्टः सन्भास्करमालिंगितवान् ॥ ७१ ॥

एतत्सर्गोक्तकथाश्रवणपाठफलमाह—पराजयेति । पराजयाख्यो योऽनिर्गमः मार्गरहितो गर्तः ततः सकाशात्स्वगुरुमपि प्रकाशानंदं स्वविद्याबलेन यो भास्कर एव स्वयमखिलोर्ध्वं सर्वोत्कृष्टं कृतवान् तस्य कथां यः पुरुषः शृण्वन्पठन्वा सः विद्विजयी विद्वद्विजयकर्ता भवेत् । यद्वा वित् ज्ञानवान् जयवांश्च भवेत् ॥ ७२ ॥ इति श्रीगुरुपरंपराचारित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां सप्तत्रिंशः सर्गः ॥ ३७ ॥ उदष्टत्रिंशके पंचसप्तपद्यैस्तु भास्करः ॥ वित्पत्रहन्मंत्रपूर्णः पितृयार्थीति वर्ण्यते ॥ ३८ ॥ अथ भास्करस्य गुरुकृपया पूर्णाभिषेकादिकं वर्णयति । श्रीगुरुरिति । श्रीगुरुः प्रकाशानंदः धरायां पृथिव्यां न अन्यः विद्वद्वरो विद्व

पराजयानिर्गमगर्ततोपि गुरुं स्वविद्याबलतोऽखिलोर्ध्वम् ॥ चक्रे स्वयं भास्कर एव गाथां शृण्वन्पठन्विद्विजयी भवेत्सः ॥ ७२ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भास्करविजये सप्तत्रिंशः सर्गः ॥ ३७ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रीगुरुर्भास्करं प्राह त्वं धरानन्यविद्वरः ॥ किमर्थं कृतवान्कार्याण्यकार्याण्यपि मद्गृहे ॥ १ ॥ भास्करोऽथ तमित्याह प्रांजलिः प्रणमन्मुहुः ॥ महामंत्रानहं सर्वान्सरहस्यान्विधानतः ॥ २ ॥ वांछे श्रीचरणेभ्यश्चेत्त्वत्कृपा मयि दुर्भगे ॥ प्रकाशानंद आकर्ण्य भास्करोक्तममुं पुनः ॥ ३ ॥ प्राहेत्थं त्वादृशायार्यः को न मंत्रान्हि दास्यति ॥ वेदवेदांगविदुषे वरायैव सुतां सुधीः ॥ ४ ॥ इत्युक्त्वा सोह्निकं चक्रे व्यतीतेऽथ दिने गुरुम् ॥ भास्करः प्रातरित्याह गच्छेऽहं पंडितस्थितिम् ॥ ५ ॥ कुटिलास्ते यतः किंचित्करिष्यंति पुनर्द्रुतम् ॥ तथेत्युक्त मवासोभिर्भूषणैरप्यलंकृतम् ॥ ६ ॥

च्छ्रेष्ठो यस्मात् सर्वोत्तम इत्यर्थः । त्वया अकार्याणि कार्याणि गृहमार्जनादीनि त्वं किमर्थं कृतवानसि ॥ १ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ २ ॥ दुर्भगे मयि तव कृपास्ति चेत्तर्हि श्रीचरणेभ्यः भवद्भ्यः सकाशान्मंत्रान्वांछे इच्छामीत्यन्वयः । उत्तरार्द्धमुत्तरान्वयि । अमुं भास्करम् ॥ ३ ॥ वेदशास्त्रविदुषे वराय कन्यामिव त्वत्सदृशाय शिष्याय मंत्रान्कः आर्यः श्रेष्ठः न दास्यति किं तु दास्यत्येवेत्यर्थः ॥ ४ ॥ स प्रकाशानंदः । पंडितस्थितिं पराजितानां पंडितानां निवासस्थानं गच्छामि ॥ ५ ॥ किमर्थमित्यत आह । कुटिला इति । यतस्ते कुटिलाः अतः किं चिदभिचारादिक करिष्यंति । तन्निवारणार्थं

तत्स्थितिं गच्छामीत्यर्थः । गुरुः प्रकाशानंदस्तथेत्युक्त्वा वस्त्रभूषणैरलंकृतं भास्करं प्रति शिष्यैः सह पंडितस्थानं प्रेषयामासेति संबंधः ॥ ६ ॥ उत्तरार्द्धमुत्त रान्वयि ॥ ७ ॥ स्वास्तरे उत्तमास्तरणे तस्य भास्करस्य तेजसा पराभूताः ॥ ८ ॥ एषां भ्रातृणां मध्ये चतुर्थबंधुः कुत्र गतोस्ति तस्य चेष्टितं मया ज्ञात व्यमिति बुद्ध्या स भास्करस्तेषां निवासस्थानं विलोक्य तानाहेत्यन्वयः ॥ ९ ॥ ईक्ष्यते अवलोक्यते रम्यमेतत्स्थलमस्माभिरवलोकनीयमित्यर्थः । उत्त रार्द्धमुत्तरगामि । तैः बंधुभिः सह प्रदक्षिणं यथा तथा क्रमेणैशान्यां दिशि वस्त्रांतरिते पटव्यवहितस्थले संस्थितं तं चतुर्थबंधुमपश्यदित्यन्वयः ॥ १० ॥

भास्करं प्रेषयामास स्वशिष्यैस्तत्स्थितिं गुरुः ॥ दृष्ट्वैव भास्करं तेऽपि पंडिता बंधवस्त्रयः ॥ ७ ॥ उत्थाय स्थापयामासुः स्वास्तरे तन्महोहताः ॥ चतुर्थबंधुं चादृष्ट्वा भास्करोऽचिंतयद्धृदि ॥ ८ ॥ चतुर्थः क्व गतस्त्वेषां ज्ञातव्यं तस्य चेष्टितम् ॥ इति बुद्ध्याखिलं तेषां स्थितिस्थानं विलोक्य सः ॥ ९ ॥ तानाहेदं स्थलं रम्यं विस्तीर्णं सम्यगीक्ष्यते ॥ इत्युक्त्वाथ तैः साकं पश्यन्प्रादक्षिणं क्रमात् ॥ १० ॥ ईशान्यां तमथापश्यद्वस्त्रांतरितसंस्थितम् ॥ संस्थाप्य कलशे यंत्रं जपन्तं बगलामनुम् ॥ ११ ॥ वादिवाक्स्तंभना यात्र तदुक्तद्रव्यमंबुना ॥ शलाकया क्षिपंतं च धूपयंतं च गुग्गुलम् ॥ १२ ॥ तार्किकान्स्पर्धीज्ञात्वा भास्करस्तच्चिकीर्षितम् ॥ स्खलन्निव पपातांजो वस्त्राढ्यकलशोपरि ॥ १३ ॥ स्फाटितं तेन यंत्रं तद्विकीर्णं कलशादिकम् ॥ हा कृत्यार्दक उत्तस्थौ तद्दृष्ट्वाच्छा दिताननः ॥ १४ ॥ बहिः स्थास्त्रय उद्विग्नाः पतंतं भास्करं करैः ॥ झटित्युत्थापयामासुर्बंधुं मूर्च्छासिच्छाऽद्रुत् ॥ १५ ॥

कीदृशं तं भूर्जपत्रे लिखितं स्तंभनयंत्रं कलशे संस्थाप्य वादिनो वाक्स्तंभनाय तदुक्तं स्तंभनप्रयोगोक्तं द्रव्यमुदकेन सह सुवर्णादिशलाकया अत्र यंत्रे प्रक्षिपंतम् । गुग्गुलुं च धूपयंतमिति पूर्वान्वये योज्यम् ॥ ११ ॥ १२ ॥ तार्किकैरप्यतर्क्यां धीर्यस्य स भास्करस्तस्य चतुर्थबंधोश्चिकीर्षितं ज्ञात्वा स्ख लन्निव वस्त्रयुक्तकलशोपरि अंजः अनायासेन पपात ॥ १३ ॥ तेन पतनेनार्दकः चतुर्थबंधुः ॥ १४ ॥ त्रयो बंधवः । मुधा वृथा या मूर्च्छा तया

अक्षिणी छादयति तम् ॥ १५ ॥ तैस्त्रिबंधुभिः । अथ स भास्करस्तान्बंधूनाहेति संबंधः ॥ १६ ॥ अहं पित्तेन स्खलनाद्धेतोः सुरपूजारतस्य कस्य चित्पुरुषस्यांगे पतितोस्मि किम् । तदप्यहं न जाने असुरपूजारतस्येति गूढाभिसंधिः ॥ १७ ॥ ममांगेनैतस्य पूजकस्य पूजनीयं भंजितं नाशितं किमस्ति अतो भवद्भिर्ममापराधः क्षम्यताम् ॥ १८ ॥ १९ ॥ अचला स्थिरा ॥ २० ॥ त्वं सर्वविद्याभिः पूर्णोसि । त्वत्सदृशाय विदुषे पथि वर्तमानैरस्माभिः किं दातुं योग्यमस्ति न किमपीत्यर्थः । यद्यप्येवं तथापि अल्पं किंचिद्वस्तु तुभ्यं देयमिति मनसि ईप्सितमस्ति ॥ २१ ॥ तदीप्सितम् अस्मत्समीपे यदस्ति

उत्तरीयमणु व्यस्तं तस्योष्णीषं च तैः समम् ॥ कृतं संमार्जिते नेत्रे संस्थितोऽथ स भास्करः ॥ १६ ॥ तानाहाहं हि पित्तेन पतितः स्खलनात्किमु ॥ न जाने कस्य चिच्चांगे सुरपूजारतस्य च ॥ १७ ॥ पूजनीयं किमेतस्य भंजितं च ममांगतः ॥ क्षम्य तामपराधो मे भवद्भिर्विदुषां वरैः ॥ १८ ॥ श्रुत्वेत्थं लज्जिताः सर्वे प्राहुस्तं नम्रकंधराः ॥ नापराधोऽणुरप्यत्रांजसैवापततस्तव ॥ ॥ १९ ॥ जिता धरा किलास्माभिस्त्वादृशः पंडितः परः ॥ नैव दृष्टस्ततोस्मासु कृपा कार्या त्वयाचला ॥ २० ॥ त्वं पूर्णोखि लविद्याभिर्देयं किं त्वादृशाय हि ॥ पांथैरस्माभिरप्यल्पं देयं तुभ्यमितीप्सितम् ॥ २१ ॥ अस्माकं सफलं त्वं तत्कुरु याचस्व किं चन ॥ समीपे नो यदस्त्येव नास्ति तद्दीयतां कथम् ॥ २२ ॥ श्रुत्वा तान्भास्करोऽप्याह समीपस्थं यदस्ति वः ॥ उपयोगि न तद्या चेऽनुपयोग्येव दीयताम् ॥ २३ ॥ पुस्तकान्युपयुक्तानि वित्तं स्त्रीपुत्रपोषणम् ॥ यानमश्वादिवस्त्राणि भांडाद्यं च प्रवासिनाम् ॥ ॥ २४ ॥ भवतामुपयोग्येव नातोऽन्यद्भवदंतिके ॥ तथाप्यनुपयोग्येषचास्ति तद्दीयते यदि ॥ २५ ॥

तद्याचस्व । यन्नास्ति तत्कथमस्माभिर्दीयताम् । न कथमपि दीयते । अतो यत्समीपे वर्तते तत्त्वया याचितव्यमित्यर्थः ॥ २२ ॥ इति श्रुत्वा भास्करोऽपि तानाह । युष्मद्धः समीपे उपयोग्यस्ति न तदहं याचे । यदनुपयोगि तदेव दीयताम् ॥ २३ ॥ २४ ॥ पूर्वोक्तं सर्वं भवतामुपयोग्येवास्ति । अतः एभ्यः अन्यत्किंचिद्भवतां समीपे नास्ति । यद्यप्येवं तथापि यत्किंचिदनुपयोग्यस्ति तद्भवद्भिर्दीयते यदि तर्हि तद्देयमिति योज्यम् ॥ २५ ॥

इमे पंडिताः सर्वे चत्वारोऽपि भ्रातरः इत्थं श्रुत्वा तदस्माभिर्दत्तमित्याहुः । इत्थमित्याद्युत्तरान्वयि ॥ २६ ॥ श्रुत्वेत्याद्युत्तरान्वयि ॥२७॥ असति असत्य भाषणे ईश्वराः समर्थाः नासुः तानि जयपत्राणि॥२८॥महान्व्ययः द्रव्यव्ययः आनीतोऽस्तीत्यर्थः ॥२९॥ तं व्ययमाह—संगृहीतानीति । तानि जयपत्राणि येषां येषां नामभिरंकिता वर्णाः येषु तेभ्यस्तेभ्यः दक्षिणया सह गच्छंतु । एतानि जयपत्राणि पंडितैर्जित्वा संगृहीतानि तेभ्यो यथायथं दक्षिणया युक्तानि प्रवेष्टव्यानीत्यर्थः ॥ ३० ॥ यथा बृहस्पतिः शुक्रान्मृतसंजीविनीहर्तारं कचं पुत्रं दृष्ट्वा संतुष्टोऽभवत्तथा पंडितेभ्य इत्थंप्रकारेण जयपत्रापहारिणं भास्करं

देयमित्थमिति श्रुत्वा दत्तमाहुस्तदाखिलाः ॥ इत्थं निश्चयमाकर्ण्य तदामीषां स भास्करः ॥२६॥ तान्प्राहेत्यथ देयानि जयपत्राणि यानि तु ॥ ततोऽन्यन्नैव याचेहं श्रुत्वेत्थं चकिताश्च ते ॥ २७ ॥ जयपत्रप्रदानेऽतर्दुःखिताश्चासतीश्वराः ॥ नासुर्ददुश्च तान्यस्मै भास्करायाथ पंडिताः ॥ २८ ॥ भास्करस्तानि चादाय ययौ गुरुमतंद्रितः ॥ नत्वा चोक्त्वाखिलं प्राह मयानीतो महान्व्ययः ॥२९॥ संगृहीतानि गां जित्वा जयपत्राणि यानि तैः ॥ यन्नामांकितवर्णानि तेभ्यो यांतु सदक्षिणम् ॥ ३० ॥ दृष्ट्वेत्थं भास्करं तेभ्यो जयपत्रापहारिणम् ॥ तुष्टो गुरुः कचं शुक्रादिव संजीविनीहरम् ॥ ३१ ॥ प्रेषयित्वाथ पत्राणि तेभ्यस्तेभ्यः सदक्षिणम् ॥ शिवदत्तः समीपस्थं भास्करं चेदमब्रवीत् ॥ ३२ ॥ प्रकाशानंद उवाच ॥ दीक्षां गृहाण मंत्राणां दुर्लभानां च मा कुरु ॥ शंकां व्ययेस्ति यद्वित्तं तत्तेऽस्मत्कीर्तिकारिणः ॥ ३३ ॥ वयं यशोधनाः संतो नैव हेम धनं हि नः ॥ श्रीदेशिकेंद्र उवाच ॥ तेनोक्तोऽपीति तूष्णीं स तच्छिष्यैः प्रययौ बहिः ॥ ३४ ॥

दृष्ट्वा प्रकाशानंदः संतुष्टोऽभवदित्यर्थः ॥ ३१ ॥ ३२ ॥ व्यये धनव्यये शंकां मा कुरु त्वमित्यध्याहारः । यदस्मद्गृहे वित्तं तत्तवैवास्ति । कीदृशस्य अस्माकं कीर्तिकारिण इति कीर्तिकर्ता त्वं यद्यदिच्छसि तत्प्रयच्छामीत्यर्थः ॥ ३३ ॥ संतः साधवः हि वयं यशोधनाः स्मः नः धनं हेम सुवर्णं न भवति इति गुरुणोक्तोपि भास्करस्तस्य शिष्यैः सह बहिर्देशं प्रययौ ॥ ३४ ॥

योग्यैः वस्त्रकंचुक्यलंकारादिकैः परदेवता श्रीचक्रेश्वरी च पूजकैरुपासकैश्च सह भास्करेण पूजितेति [illegible] ॥ ४६ ॥ [illegible] । एव-
इयं पूजकैः सह भास्करेणैवं कृते सति अथोनंतरं प्रकाशानंदगुरुः क्रमेण नवकुंडेषु ऋत्विग्भिः होमं कारितवान् ॥ ४७ ॥ [illegible]
यदंभः उदकं तदुद्धृत्य अनेनोदकेन तत्त्वशोधनं तंत्रप्रसिद्धं पूर्वं प्रथमं यथा भवति तथाभिषेकम् [illegible] । गुरुरित्यध्या [illegible] ॥ ४८ ॥ [illegible]

पूजकैर्भास्करेणैवं कृते गुरुरथो हविः ॥ ऋत्विग्भिर्होमयामास नवकुंडेष्वनुक्रमात् ॥ ४७ ॥ [illegible]
मंत्रतः ॥ अभिषेकं भास्करस्य तत्त्वशोधनपूर्वकम् ॥ ४८ ॥ अकरोद्विधिना मंत्रांश्चादिशत्कुलधर्मतः ॥ [illegible]
चांजसाऽस्पृशत् ॥ ४९ ॥ तन्मातृवर्णाद्यं नाम भासुरानंदमित्यसौ ॥ चकार विद्यया कांत्या भासमानस्य [illegible] ॥ ५० ॥
भास्करोपूजयद्भक्त्या महार्हांशुकभूषणैः ॥ गुरुं चान्यान्मंत्रविदो गुरोः पत्नीं च कन्यकाम् ॥ ५१ ॥ [illegible]
यथार्हतः ॥ ददौ चानेकविप्रेभ्यो भोजनं सत्सदक्षिणम् ॥ ५२ ॥ एवं त्रिलक्षवित्तौघाद्वीसां [illegible] भास्करः ॥ [illegible]
घनिभिस्तुष्टमानसैः ॥ ५३ ॥ ततस्तैः पूजितो भक्त्या भास्करो वस्त्रभूषणैः ॥ [illegible]
॥ ५४ ॥ गंतुकामो निजं देशं प्रार्थयामास सद्गुरुम् ॥ गुरुर्विहृत्तमस्यास्य वियोगं [illegible] ॥ ५५ ॥ [illegible]
पुनरेहीत्यनुब्रुवन् ॥ स्वगुर्वंबां हि पृच्छ त्वं तदाज्ञा मत्परेति च ॥ ५६ ॥

धर्मतः विद्याकुलस्य धर्मेण मंत्रान्गुरुरादिशत स भास्करस्तदंगं गुरुशरीरं नाभिस्थानमिति यावत् । अंजसाऽस्पृशत् ॥ ४९ ॥ [illegible]
मातृवर्णो मातृकावर्णो भकारस्तदादि भासुरानंदेति नाम विद्यया कांत्या भासमानस्य तस्य भास्करस्यासौ गुरुश्चकारेत्यर्थः ॥ ५० ॥ ५१ ॥ [illegible]
युक्तम् ॥ ५२ ॥ तस्मै भास्कराय ॥ ५३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५४ ॥ गुरुरित्युत्तरान्वयि ॥ ५५ ॥ [illegible]

दुःखेनाज्ञां ददौ ॥ ५६ ॥ ५७ ॥ सा देवी गुरुमाता च भास्करं प्राह हि यस्मात्सुतो दुहितुरधिकोऽस्ति तस्मात्त्वं ममातिप्रियोऽसीत्यर्थः ॥ ५८ ॥ अंजसा अनायासेन प्राप्तं यदि तदा भवता तत्प्रेष्यं तदहं लप्स्ये प्राप्स्यामि । यद्वा भवतैव लप्स्ये नान्येन लब्धुं योग्यमित्यर्थः । तत्कन्या सा कन्या तस्याः कन्या वा दिव्यमौक्तिकयुक्तः तन्मणिर्नामाभूषणं स त्वया मह्यं प्रेष्य इत्याह ॥ ५९ ॥ ते गुरुस्त्रीकन्यके प्रति तथा आनयामीत्युक्तवान् । अत्रत्येन सुरतनगरस्थेनास्य राज्ञः अश्वारूढैः पादचारिभिः दूतैरन्वितः अस्मात्सुरतनगरात्प्रतस्थे ॥ ६० ॥ दत्तं सर्वम् अन्नादियस्मै सः सर्वाः विद्याः यस्मिन् ।

तथेति भास्करोऽप्यंबां मुहुर्नत्वेति चाब्रवीत् ॥ मातर्गच्छामि मय्यस्तु कृपा दुहितरीव ते॥५७॥भास्करं चाह सा देवी दुहितुर्ह्यधिकः सुतः ॥ नासिकाभूषणार्थं मे वृद्धायाः कांतमौक्तिकम् ॥५८ ॥ प्रेष्यं यद्यंजसा लब्धं लप्स्येहं भवतैव तत् ॥ तत्कन्याप्याह मे प्रेष्यः कांतमुक्ताढ्यतन्मणिः ॥ ५९ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्यूचे भास्करस्ते तथेति राज्ञात्रत्येनाथ दत्ते नृयाने ॥ स्थित्वाऽश्वस्थैः पादगैश्चास्य दूतैर्नूत्नैः शिष्यैश्चान्वितोऽस्मात्प्रतस्थे ॥ ६० ॥ ग्रामेग्रामेऽसौ नृपैर्दत्तसर्वः सद्भिर्द्वद्भिर्मानितः सर्वविद्यः ॥ आगत्येत्थं तत्प्रतिष्ठानमेत्य स्वीयांस्तेषां चित्ततोषं ततान ॥ ६१ ॥ लब्धैर्मंत्रैः पूर्वतोत्यंतकांतिं दृष्ट्वात्रत्याः पूर्वतश्चातितुष्टाः ॥ नीत्वा चैनं स्वस्वगेहेष्वथार्चन्भूषावस्त्रैः शक्तिवित्तैश्च सर्वे ॥६२॥ तस्मात्स्वीयैस्तत्पुरस्थैर्गजाश्वैर्भृत्यैः शिष्यैश्चान्वितो भास्करोगात् ॥ ग्रीष्मर्त्वंते तातुष्ट्यै धरेज्यो बीजापूरं सन्नृयानस्थितो हि ॥ ६३ ॥ उत्तीर्य यानात्पितरौ ननाम तं चालिलिंगेऽथ पिता शिरोस्य ॥ आघ्राय तस्मै कुशलं त्वपृच्छद्गंभीररायः सुतकीर्तितुष्टः ॥ ६४ ॥ वर्षासु गेहेऽवसदेष शिष्यानध्यापयंश्चाथ जजाप मंत्रान् ॥ संपूजयन्वै विधिनाप्युपास्यमंतर्बहिः पंडितगीतकीर्तिः ॥ ६५ ॥

स्वीयाञ्छिष्यान् पश्यन्संतोषं जनयामास ॥ ६१ ॥ पूर्वतः पूर्वापेक्षया अतितुष्टाः अत्रत्याः प्रतिष्ठानस्थाः स्वशक्तिपरिमितवित्तैः ॥ ६२ ॥ तस्मात्प्रतिष्ठानात्तस्मिन्पुरे प्रतिष्ठाने स्थितैर्गजाद्यैः युक्तो धरायां पूज्यो भास्करो ग्रीष्मर्तोरंते समाप्तिसमये गंभीराख्यपितुः संतोषार्थमुत्तमनृपयानस्थितो बीजापूरमगात्मातो हीत्यर्थः ॥ ६३ ॥ पितरौ कोणांबागंभीराख्यौ । सुतस्य कीर्त्या संतुष्टः ॥ ६४ ॥ विधिना तंत्रोक्तविधिना उपास्यमंतर्बहिः यागे यद्वा हृदि सर्वत्र

पूजयन्गृहेऽवसत् ॥ ६५ ॥ तैः सिद्धमंत्रैः निर्गुणापि देवता सगुणरूपेण प्रत्यक्षा सती यथायं सर्वत्र विजयी भवेत् । तथा तं भास्करं प्रति हितमहितं च प्राह कथयामास ॥ ६६ ॥ अनवरः ज्येष्ठः ॥ ६७ ॥ स नारायणः गृहे अहमेव बुद्धिमानहमेव कर्ता सर्वेषां कार्यप्रवर्तक इति मन्यमानः सन्भास्करं द्वेष्टि यावत्सर्गसमाप्ति । हि यस्मादितो राजा यस्य भास्करस्य च अर्थे अर्थविषये । यथोक्तं मासव्ययपरिमितं व्ययं दत्तेर्पयति । वृथायं राज्ञोऽर्थव्ययकर इत्यर्थः ॥ ६८ ॥ तं नारायणकृतद्वेषमाह—भृत्यैरिति । अनुवेलं वेलायां वेलायां अंतर्गृहे भास्करस्य परोक्षमिति यावत् ॥ ६९ ॥ सर्वधर्मज्ञैः भवद्भिः

सिद्धास्तदास्याश्वखिलाश्च मंत्रास्तैर्दैवताप्यक्षिगताऽगुणापि ॥ मातेव साक्षादहितं हितं वै तं चाह सर्वत्र जयी यथायम् ॥ ६६ ॥
इत्थं गृहे तिष्ठति भास्करेऽस्मिन्नारायणाख्योऽनवरोऽस्य बंधुः ॥ वृद्धेऽथ ताते स्वयमेति राजसभां न तेनातितुतोष राजा ॥ ६७ ॥
तथापि सोऽतः स्वयमेव धीमान्गृहेऽस्मि कर्तेति च मन्यमानः ॥ तं भास्करं द्वेष्टि हि यस्य चार्थे मासव्ययं दत्त इनो यथोक्तम् ॥ ६८ ॥
भृत्यैः स्वशिष्यैर्बहुभिश्च यानैर्मुधैव किं तिष्ठति गेह एषः ॥ महान्व्ययः केन सदास्य देय इत्थं स जल्पत्यनुवेलमंतः ॥ ६९ ॥ स
पंडितान्वक्ति च नः कुलेस्ति भक्तिर्हि विष्णोरयमेव तां तु ॥ त्यजंश्च शैवोऽद्य विरुद्धधर्मः किं दंड्यते नाखिलधर्मविद्भिः ॥ ७० ॥
तं पंडिताः प्राहुरयं सदोषः कैरुच्यते भास्कर आर्यतेजाः ॥ यथोर्ध्वगश्चेत्सरजा ह्यधोगैर्विधीयते दिक्षु रजांसि तेषाम् ॥ ७१ ॥
काशीस्थविद्योपि लिलेख पत्रं देशस्थितान्बंधुवशान्हि मत्वा ॥ संलेखितं तैश्च पुरा बुधोक्तं तं वित्तमं यात्रिमुखैर्निशम्य ॥ ७२ ॥

शैवमतानुसारी विरुद्धधर्मोऽयं भास्करः किमर्थं न दंड्यते ॥ ७० ॥ तं नारायणं पंडिताः प्राहुः । महातेजस्वी भास्करो दोषवानिति कैरुच्यते । न कैरपि । हि यस्माद्यैरधोगैरधःस्थैः ऊर्ध्वस्थः सरजा विधीयते क्रियते चेत्तदा तेषामधोगतानां दृक्षु नेत्रेषु रजांसि यथा प्राप्यंते तथाऽल्पैः विद्याधनाभिजनादिरहितैः क्षुद्रपुरुषैर्विद्यादियुक्ते पुरुषे दोषारोपो यदि क्रियते तदा आत्मन्येव दोषारोपः फलति नोत्तमपुरुषे । एवं च भास्करे दोषारोपकर्ता स्वयमेव दोषवान् भवेदिति भावः । उपजातिः ॥ ७१ ॥ एवं स्वपुरस्थपंडितैरुक्तो नारायण उपायांतरं कृतवानित्याह । काशीस्थविद्य इत्यादि । स्वदेशस्थपंडि

तान्भास्करवशान्मत्वा काशीस्थपंडितेभ्यः पत्रं लिलेख । तैश्च काशीस्थपंडितैः कर्तृभिः यात्रिकाणां मुखैस्तं भास्करं विद्वच्छ्रेष्ठं निशम्य पूर्वं बुधैर्यथोक्तं तथायं भास्करो दोषारोपणानर्ह इति सम्यक् पत्रं लिखितमित्यभिप्रायः ॥ ७२ ॥ एवं सर्वपंडितैः निराकृतो नारायणोऽसौ ततः पत्न्या हेतुभूतया भास्करपत्नीं पद्मावतीं वक्रोक्तिभिरद्विषत् द्वेषितवान् यतः अज्ञः ॥ ७३ ॥ एवं बंधोरभिप्रायं भास्करो ज्ञात्वा विक्षेपकरं तस्य संगं त्यक्तुं पितुः आज्ञां लब्ध्वा साग्निः स्त्रीयुतः शिष्यादिभिः सह दिग्विजयार्थं प्रतस्थे ॥ ७४ ॥ एतत्सर्गोक्तकथाश्रवणादिफलमाह । पूर्णाभिषेकमिति । निवृत्तिहीनम् आवृत्तिहीनं परं कैवल्यं

निराकृतो भास्करबंधुरित्थं तैः पंडितैः स्वांगनया च दुष्टः ॥ पद्मावतीं भास्कररायपत्नीं ततोऽद्विषद्वक्रवचोभिरज्ञः ॥ ७३ ॥ ज्ञात्वा बंधोश्चाशयं भास्करार्यस्त्यक्तुं संगं तस्य विक्षेपदं हि ॥ लब्ध्वा पित्राज्ञां ततो दिग्जयार्थं साग्निः शिष्यैर्भृत्यवर्गैः प्रतस्थे ॥ ७४ ॥ पूर्णाभिषेकं शृणुयात्पठेद्वा यः श्रावयेद्भास्करविद्वरस्य ॥ पूर्णोऽखिलार्थैर्भवतीह विद्वान्पूर्णः परं चैति निवृत्तिहीनम् ॥ ७५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भास्करानंदपूर्णाभिषेककथावर्णनं नामाष्टत्रिंशः सर्गः ॥ ३८ ॥ श्रीदेशिकेंद्र उवाच ॥ अथो ययावुदीचीं स ह्यद्वैतं स्थापयन्मतम् ॥ अभिन्नदेवतोपास्तिमचलां चाभिवर्तयन् ॥ १ ॥ पंडितांश्च बहूञ्जिग्येऽभिमानाढ्यांश्च योजसा ॥ तत्तत्पुरेशा ईजुस्तं नृपालाः शरणागताः ॥ २ ॥ शिष्यांस्तांस्तांश्च चक्रेऽसौ वीक्ष्यामुं यांति नो मुधा ॥ केपि निंदंति नैवामुं सर्वे दासा इवाग्रगाः ॥ ३ ॥ क्रूरः शठः पंडिततुल्यमानी धूर्तः परोत्कर्षरुडाजनेर्यः ॥ सकृत्समीक्ष्यैव स भास्करं तं भवेद्यथा किंकर उक्तकर्ता ॥ ४ ॥

च एति प्राप्नोति ॥ ७५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायामष्टत्रिंशः सर्गः ॥ ३८ ॥ उद्भूनचत्वारिंशेऽष्टसप्तपद्येऽकरोद्गुरुः ॥ यव नोच्चाटनाच्छिष्यं भालकीशमितीर्यते ॥ ३९ ॥ अथ भास्करस्य दिग्विजयं वर्णयितुं तस्य राजवशीकरणोपक्रमप्रकारमाह । अथेत्यादिभिः । अभिवर्तयन् कुर्वन् ॥ १ ॥ २ ॥ अमुं भास्करं दृष्ट्वा मुधा न यांति । उपदेशं विना केऽपि न गच्छंति । के इत्युभयान्वयि । अग्रगाः अग्रगामिनो दासा इव भवं ति ॥ ३ ॥ आजनेः जन्मत आरभ्य क्रूरकर्मकर्ता शठः अप्रदाता पंडितोहमित्यभिमानवान् धूर्तः स्वाभिप्रायगोपनकर्ता परोत्कर्षेण रुट् क्रोधो

यस्य एतादृशोपि सः तं भास्करं सकृद्दृष्ट्वैव यथा किंकरस्तथा उक्तकार्यकर्ता भवेत् भवति ॥ ४ ॥ यो भास्करः सिद्धमंत्रैः हेतुभूतैः अपुत्रान्पुत्रयुक्तान करोत् । स्त्रीरहितान् स्त्रिया युक्तानकरोत् । स्थानच्युतान् लब्धस्थानानकरोत् । वित्तहीनान्कुबेरसदृशानकरोत् । लघून् क्षुद्रानुत्तमकीर्तीनकरोत् । एतादृशं तस्य सिद्धिसामर्थ्यमित्यर्थः ॥ ५ ॥ यश्च स्वकीयानामुपहंत्रीं नाशकराम् अन्यैः कृतां कृत्यां स्तंभयन् अथ तत्प्रकर्तॄन् कृत्याकर्तॄन् उच्चाटयंश्च एवमनेक कृत्यैर्जनान् रक्षयन् गां पृथिवीं भ्रमति संचरति । यतः ईशकृत्यः ईश्वरवत्कृत्यं यस्य सः स्वतंत्र इत्यर्थः ॥ ६ ॥ एवं भास्करसामर्थ्यमुपवर्ण्य तस्य राजवशीकरणमाह—येत्यादिभिर्यावत्सर्गसमाप्ति । या नगरी पृथिव्या ललाटस्थितिं प्राप्ता अतस्तामार्या भालकीमाहुः ।-भालके वसतीति भालकी अत्र यो

यः सिद्धमंत्रैरकरोदपुत्रान्पुत्रान्वितान्स्त्रीरहितांस्तयाढ्यान् ॥ स्थानच्युताँल्लब्धपदानवित्तान्कुबेरतुल्यांश्च लघून्सुकीर्तीन् ॥ ५ ॥
संस्तंभयन्योऽन्यकृतां च कृत्यां स्वीयोपहंत्रीमथ तत्प्रकर्तॄन् ॥ उच्चाटयंश्चेत्थमनेककृत्यैर्नॄन्रक्षयन्गां भ्रमतीशकृत्यः ॥ ६ ॥ या
भालदेशस्थितिगा पृथिव्यास्तां भालकीमाहुरतोऽखिलार्याः॥यो भालकेशोऽत्र हि विश्वपूज्यः स कुंकुमाक्तस्तिलकः किलास्याः॥७॥
साऽतः प्रसिद्धा नगरी सुपुण्या लिंगान्यनेकान्यमरैश्च सिद्धैः ॥ संस्थापितान्यत्र हि रामचंद्रश्चास्थापयत्कांतिमदार्यलिंगम् ॥ ८ ॥
भद्रावतीं तां प्रवदंति चार्याः सदा भवेद्भद्रमिह स्थितानाम् ॥ प्राग्यौवनाश्वोऽवसदत्र राजाऽस्मात्प्राप धर्मः खलु श्यामकर्णम् ॥ ९ ॥
तां चाययौ भास्कर आर्यवर्यः सत्पंडितैरुच्छिबिकास्थितैः सः ॥ स म्लेच्छभिक्षुप्रवशस्य राज्ञः पत्न्योपचारैरथ सत्कृतः स्वैः ॥१०॥

भालकेश्वरः विश्वपूज्यो महादेवः सोऽस्याः पृथिव्याः कुंकुमयुक्तस्तिलकोऽस्ति ॥ ७ ॥ सा तत्र निवासिनां पुण्यकर्त्री अतः प्रसिद्धाऽभवत् । अत्र नगर्यां देवैः सिद्धैश्चानेकलिंगानि स्थापितानि । रामश्च विष्णुरपि दंडकवनं प्राप्तो दिव्यं श्रेष्ठलिंगं स्थापितवान् ॥ ८ ॥ तामेवार्याः इह स्थितानां जनानां सदा भद्रं भवेत इति हेतोः भद्रावतीं प्रवदंति । पूर्वं यौवनाश्वनामा राजाऽत्रावसत् । अस्माद्यौवनाश्वाद्युधिष्ठिरः श्यामकर्णमश्वं प्राप्तवान् खलु ॥ ९ ॥ आर्यवर्यः पंडितश्रेष्ठो भास्करः उत्तमशिबिकास्थितैः श्रेष्ठपंडितैः सह तां भालकीं प्रत्याययौ । अथ सः यवनभिक्षुवशंगतस्य तत्रस्थराज्ञः पत्न्या कृर्यां

स्वैः सेवकादिभिः निमित्तभूतैः अन्नादिभिः सत्कृतः सदा यवनभिक्षुसमीपे वसता राज्ञा न सत्कृत इत्यर्थः ॥ १० ॥ ननु किमर्थं यवनभिक्षुरशो राजेत्याशंक्य तत्र हेतुं वर्णयन् आदौ राज्ञो वृत्तांतमाह—राजेति चतुर्भिः । अत्र नगरे चंद्रसेनाख्यो राजा द्विपंचलक्षमितं स्वं धनं यस्यास्तस्याः धरायाः ईट् स्वामी अतिबुद्धिमानासीत् । अस्य बलेन अपाक् दक्षिणतः सर्वदिगीश्वरो भाग्यनगरस्थो राजा दिल्लीश्वरात्सार्वभौमादपि किंचिद्भयं न धत्ते । चंद्रसेनराजाश्रयेण भाग्यनगरस्थो राजा निर्भय आसीदित्यर्थः ॥ ११ ॥ यस्य युद्धे जयप्राप्तिरेवाभवत् । अतः शूरश्रेष्ठैर्जयसिंह इति उक्तः ॥ पुण्यनगरस्थो नागपुरस्थश्च राजा सततम् अस्माच्चंद्रसेनाद्भयं धत्ते ॥ १२ ॥ किंच भाग्यपुरस्थो यवनो राजा शूद्रमपि चंद्रसेनराजानं स्वबंधुमेव मेने ।

राजातिधीमानिह चंद्रसेनो द्विपंचलक्षस्वधरेड्वतास्य ॥ बलादपाक्सर्वदिगीश्वरोऽपि दिल्लीश्वरान्नाणु भयं च धत्ते ॥ ११ ॥ यस्याभवद्युद्धे जय एव युद्धेऽतः शूरवर्यैर्जयसिंह उक्तः ॥ पुण्यस्थितोथोरगपूःस्थितोऽस्माद्राजा च भीतिं सततं हि धत्ते ॥ १२ ॥ म्लेच्छो नृपो भाग्यपुरस्थितोऽसौ तं चंद्रसेनं हृदि भालकीशम् ॥ शूद्रं च मेने निजबंधुमेव तत्प्रीतिरेकत्र विनान्नभुक्त्या ॥ १३ ॥ नृपः क्वचित्प्राह च चंद्रसेनमेकत्र चेत्थं तु मयान्नमत्सि ॥ दास्यामि तेऽहं निजराज्यमर्द्धं भवद्विना बंधुषु नो यदोजः ॥ १४ ॥ तं भालकीशोऽपि तदेत्य वोचन्नैवाधिकं राज्यमदः स्वजातेः ॥ प्रागीश्वरादेव हि जातिलब्धिर्भूसर्वराज्यं तु पराक्रमान्मे ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ प्रत्याख्यातश्चंद्रसेनेन राजाप्येनं म्लेच्छं कर्तुमेवातिसत्त्वम् ॥ नित्यं चित्तेऽचिंतयद्वै तदागान्म्लेच्छेशं तं यावनो भिक्षुरेकः ॥ १६ ॥

एकत्र अन्नव्यवहारं विना तयोः प्रीतिरभवत् ॥ १३ ॥ कदाचिद्यवनराजा चंद्रसेनं प्राह । हे राजन् मया सहैकत्र त्वमन्नं भक्षयसि चेतर्हि तुभ्यं स्वार्द्धं राज्यं प्रदास्यामि । यद्यस्मात्त्वां विना मद्बंधुषु ओजः सामर्थ्यं नास्ति त्वमेव सामर्थ्यवान्मद्बंधुर्भवेत्यर्थः ॥ १४ ॥ अदः इदम् अर्द्धराज्यं स्वजातेरधिकं नास्ति । हि यस्मात्स्वस्वजातिप्राप्तिः पूर्वम् ईश्वरादेव भवति न पुनः पराक्रमेण । भुवः सर्वं राज्यं तु मे पराक्रमेण भविष्यति ॥ "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इति स्मृतेः । राज्यलोभेन स्वजातित्यागो नोचित इति भावः ॥ १५ ॥ अतिसत्त्वम् अतिबलिष्ठम् यावनः यवनजातिः भिक्षुः

'फकीर' इति ख्यातस्तं प्रति अगात ॥ १६ ॥ दिल्लीस्थो यो यवनभिक्षुर्यवनशास्त्रगतं मंत्रजातं वेत्ति जानाति । तैश्च मंत्रैः संमोहनादिकृत्यं जानाति । स नृयाने संस्थः सम्यक् स्थितः सन् मंत्रविद्भिः स्वशिष्यैरश्वाद्यैर्यानैश्च युक्तो भाग्यपुरस्थं यवनराजानम् अगादिति पूर्वेण योज्यम् ॥ १७ ॥ भाग्यपुरस्थो राजा एनं यावनभिक्षुम् उत्तमस्थित्या सत्कृत्य सर्वां तस्य व्यवस्थां चक्रे । स भिक्षुस्तत्र मासपर्यंतं स्थित्वा जारणमारणोच्चाटनसामर्थ्यं राज्ञे

दिल्लीस्थो यो यावनं मंत्रजातं वेत्त्येतैः संमोहनाद्यं च कृत्यम् ॥ शिष्यैः स्वीयैर्मंत्रविद्भिश्च युक्तो यानैरश्वाद्यैश्च संस्थो नृयाने ॥ १७ ॥ सत्कृत्यैनं भाग्यपूःस्थो नृपः सत्स्थित्या चक्रे तद्व्यवस्थां च सर्वाम् ॥ स्थित्वा मासं दर्शयामास राज्ञे सामर्थ्यं यन्मंत्रजातस्य भिक्षुः ॥ १८ ॥ ज्ञात्वा राजा मंत्रसामर्थ्यवंतं तं प्राहेत्थं भालकीशोऽस्ति शूद्रः ॥ शूरः पृथ्व्यां प्रीतिमान्मय्यतस्तं यत्नादस्मद्धर्मनिष्ठं कुरु त्वम् ॥१९॥ राज्ञः श्रुत्वेत्याशयं म्लेच्छभिक्षुश्चागात्स्वीयैर्भालकीं सेनयास्य ॥ पत्रैर्ज्ञात्वा चंद्रसेनस्तमग्रे सेनायुक्तश्चाययौ वाद्यघोषैः ॥ २० ॥ प्राक्संबद्धे पट्टगेहेऽखिलाढ्ये स्वीयैर्युक्तोऽथावसन्म्लेच्छभिक्षुः ॥ यद्यत्तेनापीप्सितं तत्तदस्मै दत्ते राजाज्ञापितैः स्वीयदूतैः ॥ २१ ॥ सायं प्रातः प्रार्थयत्येत्य भिक्षुं राजा स्थित्वाग्रे क्षणं याति गेहम् ॥ ज्ञात्वा भिक्षुः स्वेल्पनिष्ठं नृपं तं स्वीयं कर्तुं मोहयामास मंत्रैः ॥ २२ ॥ राजात्यंतं मोहितोऽथात्मगेहाद्यं विस्मृत्याहर्निशं तत्पुरःस्थः ॥ भिक्षुं वक्ति प्रार्थयन्मां कुरु त्वं मुक्तं भेदाद्याभिमानात्स्वजातेः ॥ २३ ॥

दर्शयामास ॥ १८ ॥ अस्मद्धर्मनिष्ठं यवनधर्मनिष्ठं कुरु ॥ १९ ॥ अस्य यवनराज्ञः पत्रैर्ज्ञात्वा यवनभिक्षुरागमिष्यतीति ज्ञात्वा अग्रे संमुखमिति यावत आययौ ॥ २० ॥ प्राक् पूर्वं संबद्धे अखिलाढ्ये सर्वोपस्करयुक्ते ॥ २१ ॥ स्वे आत्मनि अल्पनिष्ठावंतं । स्वीयं स्वमतस्थं कर्तुम् ॥ २२ ॥ आत्मगेहाद्यं स्वगृहादिकं स्वजातेः संबंधीयो भेदाद्यः भेदः आद्यो मुख्यो यस्मिन् तस्मादभिमानान्मुक्तं कुरु । स्वजात्यभिमानरहितं कुर्वित्यर्थः ॥ २३ ॥

स्वस्यात्मनः आ साकल्येन वशं स्वाधीनम् अस्माकं यवनानां सत् उत्कृष्टं मतं स्वीकुरु । यस्मिन्मते आत्मनि यथा भेदो नास्ति तथा किंचिदपि भेदो नास्त्येव । हि यस्मात् हेतौ कारणे अभिन्ने सति अस्य कार्ये भित् भेदो मृषास्ति । आत्मनि अभिन्ने सति जात्यादिभेदो वृथेत्यर्थः ॥ २४ ॥ वेदांतमतानुकूल्येन यवनजातेः श्रेष्ठत्वं वर्णयति । अब्धेरिति चतुर्भिः । समुद्रस्य तरंगा अनेका भवंति इह तरंगेषु के श्रेष्ठाः के नीचाः अस्पर्शनीयाश्च के स्पर्शार्हाश्च के भवंति । अपि तु न केऽपीत्यर्थः । तद्वत् एकस्यात्मनः अंशभूताः अंशा इव वर्तमानाः संति स्मेति पादपूरणे । अथात्र को म्लेच्छः द्विजो वा अन्यजातिर्वा कोस्ति न कोऽप्यस्ति । तस्मादात्मनि उत्तमनीचभेदो नास्त्येवेत्यर्थः ॥ २५ ॥ भेददर्शिनस्तु दुःखं भवतीत्याह । नीच इति ।

भिक्षुर्ज्ञात्वाऽमुं नृपं स्वावशं तं प्राहास्माकं सन्मतं स्वीकुरु त्वम् ॥ यस्मिन्नेषच्छेद एवात्मनीवाऽभिन्ने हेतौ ह्यस्य कार्ये मृषा भित् ॥ २४ ॥ अब्धेर्भंगाः संत्यनेका इहार्याः के नीचाः के स्प्रष्टुमर्हा अनर्हाः ॥ तद्वच्चैकस्यांशभूताः स्म सर्वे म्लेच्छः कोऽत्राथ द्विजो वान्यजातिः ॥ २५ ॥ नीचोस्म्यन्यः श्रेष्ठ एषोस्ति नीचश्चाहं श्रेष्ठोऽस्मीति विक्षेपतोषौ ॥ स्यातां जातिष्वेव सर्वासु पुंसः स्पृष्टास्पृष्टामानमानैस्तथैव ॥ २६ ॥ नीचोत्कर्षाच्छ्रेष्ठजातेरधर्मः स्यादेवास्मिन्घोरकालेथ नाशः ॥ धर्माधर्मान्नोऽतवृद्धी न जातेर्लाभालाभाभ्यामपां वै यथाब्धेः ॥ २७ ॥ अस्मज्जातिं यौवनीं प्राहुरार्या ह्यस्याश्चैषन्नो जरा स्यात्कदाचित् ॥ पूर्वैः पुण्यैर्लभ्यते सान्यथा नो नृत्वं लब्ध्वा कृत्यमेतद्धि पुंसः ॥ २८ ॥

यवनव्यतिरिक्तजातिषु स्पृष्टास्पृष्टमानापमानैः पुंसः अहं नीचोस्मि अन्यः श्रेष्ठः एष नीचः अहं श्रेष्ठोऽस्मीति विक्षेपसंतोषौ स्याताम् "द्वितीयाद्वै भयं भवति य इतर इतरं पश्यति । अथ तस्य भयं भवति" इति श्रुतेः । भेददर्शिनो दुःखं भवतीत्यर्थः ॥ २६ ॥ एतदेवाह । नीचोत्कर्षेणोत्तमजातेः पुरुषस्याधर्मप्राप्तिर्भवति अस्मिन् अधर्मे सति घोरकाले वर्णसंकरकाले नाशो भवति । श्रेष्ठजातेरिति शेषः । नोऽस्माकं यवनानां जातेः धर्मेणाधर्मेण च अंतवृद्धी न भवतः । यथा उदकलाभालाभाभ्यां समुद्रस्य वृद्धिनाशौ न भवतस्तथा यवनजातेर्धर्माधर्माभ्यां वृद्धिक्षयौ न भवत इति भावः ॥ २७ ॥ तस्मात्सर्वो

त्कृष्टा यवनजातिरित्याह—अस्मदिति । अस्मज्जातिं यौवनीं यूनः इयं । यौवनीं तरुणामिति यावत् । आर्याः श्रेष्ठाः प्राहुः । अस्याः किंचिदपि जरा क्षीणत्वं न भवति । एवं सर्वोत्कृष्टा अभेदवती यवनजातिरस्ति । यतः सा पूर्वपुण्यैर्लभ्यते पूर्वपुण्याभावे न लभ्यते । अतः नृत्वं मनुष्यत्वं प्राप्य पुंसः एतावदेव यवनजातिप्राप्तिरेव कृत्यमस्ति । मनुष्यजन्मनि यवनमतस्वीकरणमेव फलं तेन च जात्यादिभेदनिवृत्तिद्वारा अभेदेनात्मप्राप्तिर्भवतीत्यभिप्रायः ॥ ॥ २८ ॥ तावत् यवनजातेः प्राप्तिपर्यंतम् ॥ २९ ॥ यवनमतेन शुभदिवसं दृष्ट्वा पंचाहोंते पंचदिवसानंतरं त्वामहं म्लेच्छतां प्रापये । तावत्पर्यंतं त्वं

श्रुत्वा भिक्षोर्यावनस्येति राजा साष्टांगं तं चानमन्ह्येष भूयः ॥ प्राहेत्थं मां म्लेच्छजातिं कुरु त्वं नान्नं पानं तावदिच्छेहमल्पम् ॥ २९ ॥
राज्ञः श्रुत्वा वाक्यमित्थं स भिक्षुः सम्यग्दृष्ट्वा स्वान्मनाद्धस्रमेकम् ॥ पंचाहोंते म्लेच्छतां प्रापये त्वां तावद्गेहं गच्छ चाहेति भूपम्
॥ ३० ॥ राजाथैनं प्राह नेच्छामि गेहं गंतुं द्रष्टुं वांगनां कोशमुख्यम् ॥ नेषत्कार्यः श्रीमता मां विलंबो म्लेच्छं कर्तुं मेसवो यांति
नोचेत् ॥ ३१ ॥ वृत्तं राज्ञः कश्चिदित्थं द्विजार्यः प्राहाग्रस्थो भास्करार्याय तावत् ॥ राज्ञः पत्नी चागतामुं नृयानादुत्तीर्याथो
देशिकेंद्रं ननाम ॥ ३२ ॥ तिष्ठंत्यग्रे बद्धहस्तातिनम्रा प्रोवाचेत्थं सर्वविद्भास्करार्यम् ॥ स्वामिज्ञाते भर्तरि त्वन्यजातौ पत्न्या
ग्राह्या प्राक्तना वास्य जातिः ॥ ३३ ॥ रायः प्राहैनां च तज्ज्ञातवृत्तस्त्यक्त्वा धैर्यं मा वदस्वेति देवि ॥ यावन्नांतं स्वेष्टकार्यं हि याति
कुर्याद्यत्नं सन्मती रक्षणेऽस्य ॥ ३४ ॥

गृहं गच्छेति भूपं प्राह॥ ३०॥ श्रीमता त्वया मां प्रति म्लेच्छं कर्तुं किंचिद्विलंबो न कर्तव्यः। नोचेत् विलंबं करिष्यसि चेत्तर्हि मे प्राणाः यांति यास्यंति ॥ ३१॥ एवं राज्ञो यवनजातेः प्राप्तिकारणमुक्त्वा भास्करात् तन्निवारणमाह—वृत्तमित्यादिभिः । इत्थं राज्ञो वृत्तं कश्चिद्द्विजवर्यः भास्करार्याग्रगतः सन् यावत्प्राह तावद्राजपत्नी चामुं भास्करं प्रति प्राप्ता। अथ नृयानादुत्तीर्य भास्करं ननाम ॥ ३२ ॥ बद्धहस्तातिनम्रा साऽग्रे तिष्ठंती सती भास्करं प्रति इत्थं प्राह । अन्या जातिर्यस्य तादृशे पत्यौ पत्न्यास्य जातिर्नवीना ग्राह्या वा प्राक्तना जातिर्ग्राह्या भवति। मया कथं वर्तितव्यमित्यर्थः ॥ ३३ ॥ तस्य राज्ञः ज्ञातं

वृत्तं येन स रायः भास्कररायो राजपत्नीं प्राह । हे देवि एवं धैर्यं त्यक्त्वा मा वद । हि यस्मात् यावत् स्वेच्छितकार्यं नाशं प्रति न याति तावत्स्वगतस्य कार्यस्य रक्षणे सन्मतिः कार्या प्रयत्नं कुर्यात् । अतः स्वकार्यसिद्धिनिश्चयपर्यंतं प्रयत्नः कर्तव्य इत्यर्थः ॥ ३४ ॥ अथ सा राजपत्नी इत्याह । इति किम् । अद्य संप्रति श्वस्तः श्वःकालमारभ्य त्रिदिनानि संति । अत्र दिनत्रये क उपायो भवेत् इति एतत्कार्यं दुःसाध्यमस्तीत्यर्थः । अथ तां प्रति भास्करो विद्वच्छ्रेष्ठ इत्युवाच । इति किम् । तत्रैक उपायोऽस्ति स त्वया योज्यतां भावि यथा भविष्यति तथा भवतु । प्रारब्धप्रकाशकत्वादवश्यं प्रयत्नो विधेय इत्यर्थः ॥ ३५ ॥ तस्य उपायस्यारंभार्थं सहस्रमुद्रास्त्वया दीयतां कार्ये जाते सति तत् वित्तं यथायोग्यं दातव्यम् । ननु कार्यानंतरं दास्यामि कार्यस्य संशये

त्रीण्येवाह्नान्यद्य संतीति साह श्वस्तश्चाथो स्यादुपायोत्र को वै ॥ तां विद्वर्योऽथेत्युवाचास्ति चैकस्तत्रोपायो योज्यतां भाव्यथास्तु ॥३५॥ आरंभार्थं तस्य साहस्रवित्तं जाते कार्ये दीयतां तद्यथावत् ॥ नाल्पा चिंता तेऽस्तु साहस्रवित्ते विश्वासात्स्याद्यत्किलासंभवं हि ॥ ॥ ३६ ॥ राज्ञी श्रुत्वैवेति सद्रत्नहारं कंठान्निष्कास्याग्रसंस्थां स्वदासीम् ॥ प्राहामुं त्वं चातिवित्ते पुमार्ये निक्षिप्यास्मादानय द्राक्सहस्रम् ॥ ३७ ॥ श्रुत्वानीतं तत्तयाप्युक्तरीत्या राज्ञी चैतद्भास्कराग्रे निधाय ॥ नत्वा भूयश्चाब्रवीद्भास्करार्यं नूनं लप्स्ये त्वत्प्रसादात्स्वनाथम् ॥ ३८ ॥ सेत्थं तुष्टाथाययौ स्वीयगेहं रायोऽत्रत्यान्स्वेन चाहूय विप्रान् ॥ चत्वारिंशत्संख्यकान्मंत्रमाह श्रीवाराह्या द्वादशोर्ध्वं शतार्णम् ॥ ३९ ॥ प्रत्यंगांगोपांगमेतस्य चोक्त्वा राज्ञः सर्वान्याजकान्वक्त्रमुख्यैः ॥ वव्रे जप्तुं तं मनुं लक्षमूर्ध्वं द्वे साहस्रे चायुतं मंत्रवेत्ता ॥ ४० ॥

सति आदौ कथं देयमित्यत आह । सहस्रवित्तविषये तव चिंता मास्तु । हि यस्मात् यत् असंभवं तत् विश्वासेन भवति । विश्वासः फलदायक इति भावः ॥ ॥ ३६ ॥ अमुं हारं वित्तवति पुरुषे निक्षिप्य तत्सकाशात्त्वं सहस्रवित्तम् आनयैव ॥ ३७ ॥ इति श्रुत्वा तया दास्या उक्तरीत्या तद्धनमानीतम् । स्वनाथं स्वपतिम् ॥ ३८ ॥ अत्रत्यान् भालकीनिवासिनो विप्रान् वेदाध्ययनसंपन्नान् स्वशिष्येणाहूय चत्वारिंशत्संख्यकान् तान्प्रति द्वादशाधिकशतवर्णं दंडिन्याः मंत्रमाह । जपार्थमिति शेषः ॥ ३९ ॥ एतन्मंत्रस्यांगोपांगादिकं चोक्त्वा मंत्रवेत्ता भास्करः लक्षम् ऊर्ध्वं द्वे साहस्रे अयुतं च द्वादशसह

साधिकैकलक्षपरिमितमिति यावत् । मंत्रजपं कर्तुं राज्ञो याजकान्वस्त्रादिभिर्वृतवान् ॥ ४० ॥ अखिलपूर्तिकारि स्तोत्रं त्रिशतीस्तवम् । द्व्यहर्निट्कालेन द्वे अहोनिशौ यस्मिन् तेन । अथ तृतीयघस्रे तृतीयदिवसे इत्युत्तरान्वयि ॥ उपजा० ॥ ४१ ॥ स यावनभिक्षुः पौरैर्नैवेक्ष्यते नैव दृष्टः । हस्त्यादिभि र्युक्तः श्वानादिभिश्च युक्तः । तदा एते पौराः अद्भुतं जातमित्याहुः ॥ ४२ ॥ अत्र यवनभिक्षुनिवासस्थाने । सायीति यवनभाषायां सत्पुरुषसंबुद्धिः बलेन हठात् ॥ ४३ ॥ अनुगतः सेवकतः नृयानेन ॥ ४४ ॥ यत् अमरैरपि न भाव्यं तत् यावनभिक्षुकोच्चाटनं त्वया कृतम् ॥ ४५ ॥ असौ यवन

उच्चाटयन् यावनभिक्षुकं तं स्वयं जजापाखिलपूर्तिकारि ॥ स्तोत्रं बभूवाथ जपो द्व्यहर्निट्कालेन पूर्णोऽथ तृतीयघस्रे ॥ ४१ ॥
नैवेक्ष्यते यावनभिक्षुकोऽसौ पौरैः सहस्त्यश्वपदातियुक्तः ॥ श्वकुक्कुटैणाव्यजपंजरस्थविहंगमैश्चाद्भुतमाहुरेते ॥ ४२ ॥ एकोऽत्र राजा
भ्रमति स्म सायी सायीति भूयो वदतीति कैश्चित् ॥ स पंचषड्भिर्विधृतो बलेन संप्रापितस्तद्गृहिणीगृहाग्रे ॥ ४३ ॥ दास्योऽतरेत्य
द्रुतमेव राज्ञै नृपागमं प्राहुरियं गवाक्षात् ॥ भ्रांतं समीक्ष्यानुगतो नृयानात्संप्रेषयामास च भास्कराग्रे ॥ ४४ ॥ स्वयं नृयानेन ययौ
च पश्चात्तं भास्करं प्राह मुहुर्नमंती ॥ यन्नामरैर्भावि च तत्कृतं ते ह्युच्चाटनं यावनभिक्षुकस्य ॥ ४५ ॥ कथं गतोऽसौ शकटैर्गजाश्वैः
श्वकुक्कुटाजैरपि पंजरस्थैः ॥ विभीः क्व देशेऽम्बुनिधौ तदंतर्द्वीपेऽथवेदं न च वेद कश्चित् ॥ ४६ ॥ प्राग्जन्मपुण्यातिशयेन मे त्वं
प्राप्तोऽसि सौभाग्यसुजातिदाता ॥ साक्षाच्छिवो वाऽवनिगो मदर्थे नेत्थं मनुष्यैर्हि मुखाच्च वाच्यम् ॥ ४७ ॥ इत्थंप्रभावे त्वयि
चाथ राज्ञो भ्रांतेर्हि दूरीकरणं न चित्रम् ॥ भूस्वर्बिलाकुंठगतौ खगेंद्रे यथोत्क्रमश्चाल्पशिलोच्चयस्य ॥ ४८ ॥

भिक्षुः विभिः पक्षिभिः सह कथं गतः क्व देशे समुद्रे तदंतर्गतद्वीपे वा गतोस्ति इदं कोऽपि न जानाति ॥ ४६ ॥ इत्थं राजा मुक्तो भविष्यतीति मुखे नापि मनुष्यैर्वाच्यं न भवति । कुतः कर्तुमिति भावः ॥ ४७ ॥ यथा भुवि स्वर्गे बिले पाताले च अकुंठा गतिर्यस्य तस्मिन् गरुडेऽल्पपर्वतोल्लंघनं न चित्रं तथा त्वयि राजभ्रांतिदूरीकरणं न चित्रम् । यथा यवनभिक्षुरुच्चाटितस्तथा राज्ञो भ्रांतिनिवारणं करिष्यत्येव भवानिति भावः ॥ ४८ ॥

॥४९॥तस्या उपास्यदेवतायास्तीर्थैः सह ॥५०॥तीर्थविभूतिधारणेन ॥५१॥ नृयानात् शिबिकया । नैजं स्वकीयम् ॥५२॥ सकृत् एकदैव स भिक्षुः क्व गतः । अयं पुरोवर्ती ॥ ५३ ॥ या स्वगृहाद्बहिरल्पं न गच्छति सा मम पत्नी किमर्थमत्रागतवती । यदाहं कुलीनोऽपि यवनजातिं लिलिप्सुः लब्धु

सेत्थं वदंती नृपतिं नृयानादुत्तार्य दूतैरपि भास्कराग्रे ॥ आनीय साष्टांगनतीश्च तेनासौ कारयामास गुरूत्तमाय ॥ ४९ ॥
निवेशितं स्वाग्रत एव भृत्यैस्तं साथि सायीति मुहुर्वदंतम् ॥ स्वोपास्यपूजारतभास्करस्तत्तीर्थैर्ममार्जांकितमंत्रभूतिम् ॥ ५० ॥
उन्मील्य नेत्रे स्वयमास्थितोऽथ तथा द्वितीयेऽह्नि जलं ययाचे ॥ भ्रांतिं विहायाथ तृतीयवस्रे प्राप्तस्मृतिस्तीर्थविभूतिधृत्या ॥ ५१ ॥
सायं ततः प्रातरगान्नृयानाद्राज्ञी निजांतःपुरगा गुरुं तम् ॥ समीक्ष्य तां लज्जित आह भूपः शनैरमात्यं पुरतो नमंतम् ॥ ५२ ॥ राजोवाच ॥ क्वात्रागतोहं क्व गतः स भिक्षुः सर्वैर्गजाश्वैर्नृमुखैः सकृद्धि ॥ कोऽयं सुकांतोस्त्यमरोऽथ सिद्धः स्वयं शिवो वा नृतनुर्हि भूस्थः ॥ ५३ ॥ किं मे तथात्रागतवत्यसौ स्त्रीर्बहिर्न गच्छत्यणु याऽऽत्मगेहात् ॥ यदा कुलीनोप्यहमंत्यजातिं लिलिप्सुरेषापि कथं धियासीत् ॥५४॥स्वधर्मनिष्ठोऽप्यहमंग मंत्रैर्भ्रांतः कृतो यावनभिक्षुकेण॥ दूरीकृता भ्रांतिरथात्र केन साफल्यकर्ता मम जन्मनः सः ॥५५॥
राज्ञेति पृष्टः सचिवः स सर्वं क्रमेण वृत्तं हि जगौ नृपाय ॥ श्रुत्वाद्भुतं भास्करकृत्यमाशु तथायासकृत्तं प्रणनाम सांगम् ॥ ५६ ॥
बद्धांजलिः प्रार्थयतीति तिष्ठन् श्रीभास्करार्यं नृपतिः पुरस्थः ॥ ग्रस्तोपकीर्त्याऽऽगलतोऽविनोहं त्वयैव नंदो हरिणाऽहिनेव ॥ ५७ ॥
न त्वादृशः सिद्धमनुर्युगेस्मिन्दृष्टः श्रुतोवाथ गतेषु तेषु ॥ आसीन्नवेदं न च वेद्मि ये स्युर्महर्षयस्ते तु कजाः स्वतंत्राः ॥ ५८ ॥

मिच्छावान् तदा एषा मत्पत्न्यपि धिया बुद्ध्या कथमासीत् । अस्या मनः कथमासीदित्यर्थः ॥ ५४ ॥ ५५ ॥ सचिवः अमात्यः । सांगं साष्टांगम् ॥ ५६ ॥ यथा श्रीकृष्णेन सर्पग्रस्तो नंदो रक्षितस्तथापकीर्त्या आगलतः कंठपर्यंतं ग्रस्तोहं त्वया रक्षितोऽस्मि ॥ ५७ ॥ अस्मिन्कलियुगे त्वत्स

दृशः सिद्धमंत्रो न दृष्टः श्रुतो वास्ति । अथ गतेषु तेषु पूर्वयुगेषु सिद्धमंत्रः पुरुषः आसीन्न वासीदिदमहं नवेद्मि ये तु कजाः ब्रह्मपुत्राः महर्षयः स्युस्ते स्वतंत्रा आसुः । तथा त्वमपि कर्तुमकर्तुमन्यथाकर्तुं स्वतंत्रोऽसीत्यर्थः ॥ ५८ ॥ उत किं च यो मां प्रति म्लेच्छं कर्तुमुद्युक्तो मंत्रविद्भिरतिवीरैरप्य निवार्यः स त्वयाजसैवोच्चाटितः सन् ऊर्ध्ववायुना पर्णमिव क्वापि न दृश्यते । अतस्त्वमेव महत्तमोऽसीत्यर्थः ॥ ५९ ॥ समुद्रस्य गांभीर्यम् अल्पसरोवरेण शब्दं कुर्वद्भिर्भंगैस्तरंगैर्न वर्ण्यते यथा तथा अल्पेन मया कर्त्रा तवैश्वर्यं सामर्थ्यं वाक्यैः किं वर्ण्यते कथमपि न वर्ण्यत इत्यर्थः ॥ ततः अहं

म्लेच्छं हि मां कर्तुमुतोद्यतो योऽवार्योऽतिवीरैरपि मंत्रविद्भिः ॥ त्वयांजसोच्चाटित एष नैव क्वापीक्ष्यते चोन्मरुतेव पर्णम् ॥ ५९ ॥
वाक्यैर्मयेशं तव वर्ण्यते किं गांभीर्यमब्धेः सरसेव भंगैः ॥ कुर्वे नतीरेव मुहुस्ततोऽहं भवात्त्वया रक्ष्य इवांत्यजातेः ॥ ६० ॥
संप्रार्थितो भास्कर एवमाद्यैर्वाक्यैर्नृपेणाथ दयान्वितोऽसौ ॥ प्राहेति लब्ध्वा ह्यकुतोभयश्रीप्रकाशपादौ न पुनर्भयं ते ॥ ६१ ॥
उच्चाटितुं यावनभिक्षुकं प्राक्चक्रुर्जपं ये द्विजसत्तमास्तान् ॥ संपूज्य राज्ञा बहुवित्तमेभ्यो ददौ यथातुष्टि च भास्करार्यः ॥ ६२ ॥
ततः शुभाह्नेव गणेशबालामनून्नृपायाथ समादिशत्सः ॥ तौ संजपञ्शुद्धमनाः स भूयस्तस्मात्समैच्छद्धृदि पूर्णदीक्षाम् ॥ ६३ ॥
ज्ञात्वाखिलज्ञोऽस्य मनः सुमंत्रान्दातुं स शूद्राय ससंशयोऽभूत् ॥ साक्षात्तदांबा निशि भास्कराय नृपं जगौ चंडकभैरवांशम् ॥ ६४ ॥

केवलं नतीरेव मुहुः कुर्वे करोमि यवनजातेर्यथा रक्षितोऽस्मि तथा भवान् जन्ममृत्युप्रवाहात्त्वयाहं रक्षणीयः ॥ ६० ॥ न कुतोऽपि भयं याभ्यां तौ श्रीप्रकाशानंदपादौ लब्ध्वा ते पुनर्भयं न भविष्यति। श्रीगुरुपादुकामंत्रलाभः सर्वभयनिवर्तक इत्यर्थः ॥ ६१ ॥ राज्ञा निमित्तभूतेन संपूज्य यथासंतोषं बहु वित्तं ददौ राज्ञः सकाशादर्पितवानित्यर्थः ॥६२॥ तौ गणेशबालामंत्रौ जपन् शुद्धमनाः सन् तस्माद्भास्करात् पूर्णदीक्षां हृदि समैच्छत् ॥ ६३ ॥ यदा शूद्राय उत्तममंत्रान् दातुं गुरुः संशययुक्तोऽभवत् तदा साक्षाद्देवी नृपं चंडभैरवांशं भास्कराय निशि जगौ । शूद्रोऽप्ययं राजा चंडभैरवांशत्वात् पूर्णा

भिषेके योग्योऽस्तीत्युवाचेत्यर्थः ॥ ६४ ॥ उदितैः विधानोक्तैः मंत्रितैरुदकैर्विधिवत् अभिषेकं कृत्वा स्त्रीयुक्ताय राज्ञे महामंत्रैः विधानेन पूर्णदीक्षां ददौ ॥ ६५ ॥ स्त्रिया पद्मावत्या युक्तम् उत्तमभूषणादियुक्तं भास्करं रत्नैरभिषिक्तं कृतवान् ॥ ६६ ॥ तोषवता संतुष्टेन ॥ ६७ ॥ स च भास्करः स्वगुरोः प्रकाशानंदस्य पत्न्या उक्तं स्मरन् सुवर्णांकितां मुक्तां नासाभूषणमौक्तिकम् अस्यै गुरुपत्न्यै प्रेषयामास । दुहित्रे गुरुकन्यायै तन्मणिं च प्रेषितवान् ॥ सुरतनगरमिति शेषः । हि यस्मात् भगागमे ऐश्वर्यप्राप्तावपि साधोः अस्मृतिर्विस्मृतिर्नास्ति ॥ ६८ ॥ ततः स भास्करः कलिधर्मप्राप्त्या गृह्यात् गृह्याग्नेः सकाशात् अर्धरीत्या अर्द्धाधानेनेति यावत् सोमपूर्वमग्नीनाधाय स्वयम् अग्निहोत्रहोमं कृतवान् । यतोऽयं मीमांसकाभिज्ञविदां मीमांसाभिज्ञानां विदुषां मध्ये

श्रीप्रेरितोऽस्मै प्रददौ च पूर्णां दीक्षां विधानान्मनुभिर्महद्भिः ॥ पत्न्यान्वितायोदितमंत्रिताद्भिः कृत्वाभिषेकं विधिवद्धुधार्यः ॥ ६५ ॥
मत्त्वा तदात्मानमसौ कृतार्थं पूर्णाभिषिक्तो नृपतिर्गुरुं तम् ॥ रत्नाभिषिक्तं त्वकरोत्स्त्रियाढ्यं तथा सुभूषांशुकसत्कृतं च ॥ ६६ ॥
शिष्याश्च सर्वे गुरुभास्करस्य संपूजिताः पुस्तकयानभृत्यैः ॥ पुरस्थविप्राश्च परेंऽशुकान्नैः संतोषितास्तोषवता नृपेण ॥ ६७ ॥
स्मरन्स चोक्तं स्वगुरोस्तु पत्न्याऽस्यै प्रेषयामास महार्हमुक्ताम् ॥ स्वर्णांकितां तन्मणिकं दुहित्रेऽस्मृतिर्न साधोर्हि भगागमेऽपि ॥ ६८ ॥
ततश्चकार स्वयमग्निहोत्रमाधाय सोऽग्नीनिह सोमपूर्वम् ॥ गृह्यार्द्धरीत्या कलिधर्मगत्या मीमांसकाभिज्ञविदां वरिष्ठः ॥ ६९ ॥
राजा सदा तिष्ठति सोऽग्रतोऽस्य कृतांजलिर्दास इवोक्तकारी ॥ भीतिर्धराशौर्यवतां च यस्मान्चित्रं कृतोपास्तिगुरौ न हीदम् ॥ ७० ॥

वरिष्ठः । तथा हि । पूर्वं गृह्याग्निं स्वीकृत्य ततः श्रौताधानमित्यर्धाधानम् । सहैकतंत्रेण गृह्याग्निश्रौताग्न्योर्ग्रहणं सर्वाधानम् । तेन च अग्निहोत्रं गवालंभमित्यादिना सर्वाधानस्य कलौ निषिद्धत्वात् अर्धाधानपक्षेणाधानं मीमांसातात्पर्यज्ञेन भास्करेण युक्तं कृतमिति भावः ॥ ६९ ॥ धरायां ये शौर्यवंतः शूरास्तेषामपि यस्माद्भयमासीत् स राजा चंद्रसेनः दासवद्भास्कराग्रे तिष्ठतीति इदं कृता उपास्तिः उपासना येन तस्मिन् गुरौ न चित्रम् । उपासकस्य राजवशीकरणकर्तृत्वं नाश्चर्यमिति भावः ॥ ७० ॥

ततोऽसौ राज्ञा सुपूजितः नृयानगतो भास्करः स्वीयैः स्वकीयैः स्त्र्यादिभिः सह तेन राज्ञा दत्तैर्गजाश्वदासैः सह नृयानगतैरष्टादशपंडितैः सह गोरथगतैरग्निभिः दासैश्च सह ययौ। दिग्विजयार्थमिति शेषः ॥७१॥ स च पंडितपूज्यो भास्करः दक्षिणस्यां दिशि भ्रमन् विदा ज्ञानेन दुष्टपंडितान् जेष्यन् यां यां विख्यात राजधानीमगात् तत्तन्नृपतीन् तत्तद्गतराज्ञः शिष्यांश्चकार ॥ ७२ ॥ यस्यावलोकनमात्रेण भूपा दाससमा बभूवुः । यस्य भाषणेन पंडितवर्याः शिष्यतुल्या बभूवुः । यस्य स्मरेण स्मरणमात्रेण उत्तमदेवता कल्पलता इष्टार्थपूरकाऽभवन् । स भास्करो लोके इति जयति सर्वोत्कर्षेण वर्तते ॥७३॥ स च भास्करः इत्थं

ततो ययौ राजसुपूजितोऽसौ स्वीयैश्च तद्दत्तगजाश्वदासैः ॥ नृयानगाष्टादशपंडितार्यैर्नृयानगो गोरथगाग्निदासैः ॥७१॥ भ्रमन्बुधेज्यः स च दाक्षिणस्यां जेष्यन्विदा दुर्नयपंडितांश्च ॥ यां यामगाद्विश्रुतराजधानीं चकार तत्तन्नृपतींश्च शिष्यान् ॥ ७२ ॥ यस्येक्षणाद्दा ससमास्तु भूपाः स्युर्भाषणाच्छिष्यसमा बुधार्याः ॥ सद्देवता कल्पसमा स्मरेण स भास्करार्यो जयतीति लोके ॥ ७३ ॥ कृष्णानदी दक्षिणतः सचेत्थं कावेर्यभिज्ञांकभुवि श्रुतिज्ञान् ॥ विप्रान्सदाचाररतांश्च पश्यन्बभ्राम तत्रैव चिरं सुतुष्टः ॥ ७४ ॥ क्रतूंश्च चक्रे बहुदक्षिणान्स यथाविधान्सोममुखान्विकृत्या ॥ नामानि तत्तत्सदृशानि बिभ्रन्नात्मैकधीश्चागमवर्त्मगामी ॥ ७५ ॥ श्रुत्यर्णकान्नो शृणुयाद्यथांत्यस्तथाग्रहारान्द्विजवासयोग्यान् ॥ नृपैर्ददौ स श्रुतितत्त्ववित्रिद्वयः कावेर्यभिप्रांतगतान्सुधान्यान् ॥ ७६ ॥

रीत्या कृष्णानद्याः दक्षिणे कावेर्यभिज्ञायाः कावेरीनाम्न्या नद्या अंकभुवि समीपभूमौ वेदज्ञान् सदाचारसंपन्नान् विप्रान् पश्यन् तत्रैव कावेरीतीरे चिरं बभ्राम ॥७४॥च पुनः स भास्करो बहुदक्षिणायुक्तान् यथाविधान् यथायोग्यान्सोमादीन् क्रतून् विकृत्या सह कृतवान् । यत्र सकलांगोपदेशः सा प्रकृतिः दर्शपौर्ण मास सोमादिः । यत्र विकलांगोपदेशः सा विकृतिः सौत्रामण्यादिः । सर्वक्रतून् कृतवानित्यर्थः । तत्तत्सदृशानि नामानि सोमयाजीत्यादीनि बिभ्रन् आत्मधीः आत्मनिष्ठोऽपि आगमवर्त्मगामी वेदमार्गानुसारी अभवत् ॥ ७५ ॥ अंत्यः अंत्यजो यथा श्रुतिवर्णान्न शृणुयात् तथा ब्राह्मणवासयोग्यान् अग्रहारान् क्षेत्र

युक्तस्थानानि वेदविद्भ्यो ब्राह्मणेभ्यो नृपैर्निमित्तभूतैः स ददौ । कीदृशान् कावेर्याः अभिप्रांते समीपे वर्तमानान् । सुष्ठु धान्यं येषु तान् । तत्तद्देशगतराजभ्यः सकाशात् ब्राह्मणानां योग्यव्यवस्थां कृतवानित्यर्थः ॥ ७६ ॥ आत्मतृप्तोऽपि स भास्करस्तस्याः कावेर्याः अंके समीपे भास्कराख्यं पुरं नृपार्पित वित्तैः कृतवान् । अत्र भास्करपुरे शिवालयं निर्माय शिष्यान् संयोज्य तत्र पूजादिव्यवस्थार्थं नियोज्य स्वयमपि अनल्पं बहुकालं तस्थौ ॥ ७७ ॥ एत त्सर्गोक्तकथाश्रवणादिफलमाह–इत्थमिति । एवं भास्करगुरोः प्रभावं व्यभिचारकर्तुः यवनभिक्षुकस्य अतिशयेन उच्चाटनं यत् तत्सर्वं सर्गोक्तं यः शृणोति वा प्रपठेच्च तस्य व्यभिचाराद्भयं भवे प्रपंचे न स्यात् ॥ ७८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायामेकोनचत्वारिंशः सर्गः ॥३९॥

स भास्कराख्यं पुरमात्मतृप्तोऽप्यंकेऽथ तस्याः कृतवान्नृपार्थैः ॥ निर्माय शंभ्वालयमत्र शिष्यान्संयोज्य तस्थौ स्वयमप्यनल्पम् ॥ ७७ ॥ इत्थं प्रभावं गुरुभास्करस्यात्युच्चाटनं यद्व्यभिचारकर्तुः ॥ शृणोति वा यः प्रठेच्च तस्य भवे हि नो भीर्व्यभिचारतः स्यात् ॥ ७८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे भास्करचरित्रे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ श्रीभासुरानंदो गंतुं रामेश्वरं ततः ॥ ययौ प्रपश्यन्मार्गेण देवतायतनान्यपि ॥ १ ॥ कुंभकोणं महाक्षेत्रं कुंभेशाद्याः शिवाश्च षट् ॥ चक्रपाण्यादयः श्रीशा द्वादशेति सुरालयाः ॥ २ ॥ यत्र द्वादशसाहस्रगेहा अग्रभुवां सदा ॥ वेदाधीतिमतां स्मृत्या सदाचारानुवर्तिनाम् ॥ ३ ॥ तस्मिन्क्षेत्रवरेऽप्येष किंचित्कालमथावसत् ॥ तस्य विद्याः सदाचारं तत्रत्याः प्रसमीक्ष्य तम् ॥ ४ ॥ समीजुः केचिदस्यासुः शिष्याश्चोपासनाक्रमात् ॥ तस्माद्वेदगिरीशाख्यं शंभुं चाखंडपूजितम् ॥ ५ ॥

उच्चत्वारिंशके पद्यैः सप्ताशीत्यार्यभास्करः ॥ दिग्जयी द्वैतपतिना प्रतिज्ञावानितीर्यते ॥ ४० ॥ अथ भास्करस्य दिग्जयं वर्णयति–अथेत्यादिभिः । ततः भास्करपुरात् कुंभकोणं महाक्षेत्रं ययाविति संबंधः ॥ १ ॥ यत्रेत्यपकर्षः । कुंभेश्वराद्याः षट्शिवाः शिवलिंगानि संति । च पुनः यत्र चक्रपाण्यादयः श्रीशाः लक्ष्मीपतयः षट् विष्णुप्रतिमाः इति द्वादश सुरालयाः देवतास्थानानि संति ॥ २ ॥ यत्र वेदाध्ययनकर्तॄणां स्मृतिप्रामाण्येन सदाचाररतानाम् अग्रभुवां ब्राह्मणानां द्वादशसहस्रगृहाः संति ॥ ३ ॥ एषः भास्करः । उत्तरार्द्धमुत्तरान्वयि ॥ ४ ॥ समीजुः पूजयामासुः । उपासनाक्रमात् मंत्रोपदेशक्रमेण

तस्मात्कुंभकोणात् । उत्तरार्द्धमुत्तरगामि । वेदगिर्याख्यं पक्षितीर्थं निरंतरं पूजितं भक्तैरिति शेषः ॥ ५ ॥ यत्र पक्षितीर्थे । इत्थमित्यादि परान्वयि । विद्वद्भिः पूज्याः सुराः देवता येषु तानि ॥ ६ ॥ सेतुबंधनादादौ पूर्वं रामेण पाषाणरूपिणो नवग्रहाः यत्र स्थापिता इत्यन्वयः ॥ ७ ॥ तत् नवपाषाण संज्ञं तीर्थं रामेश्वरमार्गे अस्तीत्यर्थः । तत्र प्राप्तो भास्करः पत्रद्वारा स्वपितुः गंभीररायाख्यस्य निधनं श्रुतवान् । तथा पित्रा सह मातुः कोणांबायाः गतिं परलोकप्राप्तिं चाशृणोदित्यन्वयः ॥ ८ ॥ सर्वशास्त्रज्ञो भास्करः तत्रत्यैः तत्तीर्थवासिद्विजैश्चानुमोदितः सन् पुत्रधर्मं क्षौरादिकम् इह क्षेत्रे यथावत् कृतवान्

ययौ यत्रर्षयो यांति मध्याह्ने पक्षिरूपिणः ॥ इत्थं क्षेत्राणि संपश्यन्विद्वत्पूज्यसुराणि सः ॥ ६ ॥ ययौ रामेश्वरं लिंगं श्रीरामस्थापितं परम् ॥ स्थापिताः सेतुबंधादौ नव पाषाणरूपिणः ॥ ७ ॥ रामेणैव ग्रहास्तीर्थं नवपाषाणकं हि तत् ॥ प्राप्तस्तत्राशृणोत्पत्रात्स्व पितुर्निधनं तथा ॥ ८ ॥ मातुः सहगतिं पित्रा पुत्रधर्ममिहाकरोत् ॥ यथावत्सर्वशास्त्रज्ञस्तत्रत्यैश्चानुमोदितः ॥ ९ ॥ तीर्थश्राद्धान्यथो कुर्वन्प्राप्तो रामेश्वरं गुरुः ॥ नत्वा रामेश्वरं शंभुमुपचारैः प्रपूज्य च ॥ १० ॥ सेतुबंधे महातीर्थे स्नात्वा दानान्यनेकशः ॥ विप्रेभ्यः प्रददौ चान्नं यथेष्टं देवतुष्टये ॥११॥ ततो रामेश्वरं देवं संस्तुवंस्तत्पुरः स्थितः ॥ रामेश्वरस्य नाम्नोर्थं प्राहात्रत्यबुधांश्च सः ॥ १२ ॥ रामो यस्येश इत्थं वदति शिवभजद्रामविक्षेपकारी रामश्चेशश्च वक्तोभयपृथगितिकृत् सर्वजन्माधिकारी ॥ रामश्चासौ किलेशः प्रवदति रघुपस्येषदंतर्विकारी रामस्येडित्थमर्थी विदितशिवपथो रामसंतोषकारी ॥ १३ ॥

॥ ९ ॥ द्वयोरन्वयः ॥ १० ॥ ११ ॥ १२ ॥ तमेवार्थमाह—राम इति । रामः ईशो यस्येति बहुव्रीहिसमासः । इत्थं यो वदति सः शिवं भजतो रामस्य विक्षेपकारी भवति । आत्मपूज्यस्य पूजकत्वप्राप्त्या विक्षेपकरत्वमित्यर्थः । रामश्च ईशश्च इत्थं समाहारद्वंद्वं वक्ता यः सः उभयो रामेश्वरयोः पृथगिति कृत् पृथक् स्थितिकर्ता भेददर्शी सर्वजन्मसु अधिकारवान् भवति । रामेश्वरयोर्भेदाश्रयणे भेददर्शिनस्तस्य सर्वजन्मग्रहणेऽधिकारवत्त्वमिति भावः । रामश्चा सावीशश्च इत्थं कर्मधारयं वदति यः स पुरुषः रामस्य किंचिदंतर्विकारकर्ता भवति । कर्मधारये हि रामेशयोरभेदे सति सेव्यसेवकभावलोपेन किंचिद्विका

रकरत्वम् । शिवो भूत्वा शिवं यजेदिति प्रमाणेनाभेदोपासनया संतोषबाहुल्यं चेत्यर्थः । रामस्य ईट् ईश्वरः इत्थम् अर्थी अर्थकर्ता यः सः विदितशिवमार्गो रामस्य संतोषकर्ता भवति । तत्पुरुषसमासे उत्तरपदार्थप्रधानत्वाच्छिवस्य च ज्ञानरूपत्वात् ज्ञाननिष्ठस्य सर्वप्रियत्वमिति भावः ॥ १३ ॥ इत्थमिति । अंते वासित्वं शिष्यत्वम् । सकृत् एकदैव ॥ १४ ॥ १५ ॥ मीनाक्षीं मधुरावासिनीम् ॥ १६ ॥ १७ ॥ तदग्रे तत्पुरत इत्युत्तरान्वयि ॥ १८ ॥ १९ ॥



इत्थं रामेशनाम्नोऽर्थं श्रुत्वा तत्रत्यपंडिताः ॥ तुष्टाः सर्वे भास्करस्यांतेवासित्वं सकृद्ययुः ॥ १४ ॥ ततः श्रीभास्करः शिष्यैर्दर्भशायिहरिं ययौ ॥ नत्वात्रत्यैः पूजितोऽसौ मधुरां चागमत्पुरीम् ॥ १५ ॥ मीनाक्षीं सुंदरेशं च नत्वात्रत्यैश्च पूजितः ॥ ययावनंतशयनं पद्मनाभं जनार्दनम् ॥ १६ ॥ पश्यन्नित्थमनेकानि सुरस्थानानि भास्करः ॥ ययौ श्रीशंकराचार्यमठं शृंगिरिसंज्ञकम् ॥ १७ ॥ तत्पीठस्थो यतिश्चासीत्पुरुषोत्तमभारती ॥ वृद्धस्तदग्रे संस्थाप्योपायनं भास्कराभिधः ॥ १८ ॥ मुहुर्नत्वा समुत्थाय तिष्ठन्प्राह कृतांजलिः ॥ कथयन्स्वीयवृत्तांतं यद्वृत्तानुशासनम् ॥ १९ ॥ भास्कर उवाच ॥ यः प्रागिहासीद्धि नृसिंहयज्वा तस्मात्त्रिषट्स्वीकृतवान्सुविद्याः ॥ बीजापुरेशस्य सुमंत्रिणोऽहं गंभीररायस्य सुतः सुकीर्तेः ॥ २० ॥ पिताऽकरोद्यावनभाषया मे प्राक् भारतं सर्वकथायथार्थम् ॥ नामाप तस्माद्भुवि भारतीति यः कारिकाकृत्त्वसहस्रनाम्नाम् ॥ २१ ॥ आज्ञापितस्तेन मठस्थदास्येऽहं धर्मसंस्थापनके धरित्र्याम् ॥ कुर्वंस्तदाज्ञामिह चागतोऽस्मि स्मरन्हृदा श्रीपदमेव भूयः ॥ २२ ॥

आदौ स्ववृत्तांतमाह—य इति । इह शृंगेरीमठे । यो नृसिंहयज्वा तस्मादहमष्टादश सुविद्याः स्वीकृतवानस्मि । च पुनः बीजापुरेशस्य यः सुमंत्री गंभीररायस्तस्य सुकीर्तेः पुत्रोऽहमस्मि ॥ २० ॥ सर्वकथाभिः यथार्थं योग्यार्थकम् । तस्माद्भारतकरणाद्धेतोः । अस्य विष्णोः सहस्रनाम्नां कारिकाकर्ता । अकारो वासुदेवः स्यादित्यकारस्य विष्णुवाचकत्वम् ॥ २१ ॥ धर्मसंस्थापनरूपे मठस्थानां दास्ये सेवायां श्रीपदं भवच्चरणं भूयो हृदा स्मरन् इह प्राप्तोऽस्मि ॥ २२ ॥

ननु मठस्थस्य ममाज्ञां विना कथं त्वया धर्मस्थापनं क्रियत इत्याशंक्याह—नेति । यद्यपि मठस्थाज्ञाभावे ममाधिकारो नास्ति तथापि द्विजन्मप्रदस्य योनितः संस्कारतश्च जन्मदातुर्जनकस्याज्ञा उल्लंघितुं योग्या नास्त्येव । यद्यपि धर्मरक्षणे मठस्थाज्ञापेक्षातः पित्राज्ञा न गरीयसी तथापि मठस्थ सद्धर्मवतः मठस्थात् श्रीशंकराचार्यात् प्राप्तसंप्रदायस्येति सर्वैर्ब्राह्मणैर्धर्मस्थापनं स्वयं च धर्माचरणं कर्तव्यमिति शंकराज्ञासत्त्वात् तद्धर्मपालयितुः पितुराज्ञया धर्मस्थापनं मया कृतमिति भावः । अत्र विषये सदोषो निर्दोषो वायमिति सम्यग्विचार्य गुरुभिर्भवद्भिरहं दंडनीयो नान्यैर्दंडार्ह इत्यर्थः ॥ २३ ॥ संप्रार्थ्येति ॥ २४ ॥ २५ ॥ पृथिव्यां यत्त्वं धर्मस्थापनं करोषि तन्मठस्थं मठकार्यमेवास्ति हि यस्मात् नः गुरुः शंकराचार्यो

न मेऽधिकारोत्र पितुस्तथापि नाज्ञैव लंघ्या द्विजनिप्रदस्य ॥ मठस्थसद्धर्मवतोऽत्र सम्यग्विचार्य दंड्यो गुरुभिर्न चान्यैः ॥ २३ ॥
संप्रार्थ्य वाक्यैरिति तं यतींद्रं स भास्कराख्यः परिपूज्य भक्त्या ॥ भूषाधनैः सद्यतियोग्यवस्त्रैर्ननाम भूयो भुवि दंडतुल्यः ॥ २४ ॥
इत्थं प्रगल्भं वचनं निशम्य विद्वद्वरं ख्यातमथामुमुर्व्याम् ॥ तेजोधिकत्वं च निरीक्ष्य तस्य भक्त्यापि तुष्टो गुरुराह चैनम् ॥ २५ ॥
करोषि यत्त्वं खलु तन्मठस्थमुर्व्यां हि धर्मस्थितये गुरुर्नः ॥ साक्षाच्छिवोऽभून्नृतनुः स चास्मान्संस्थापयामास तदर्थमत्र ॥ २६ ॥
स्थित्वात्र शिष्यैरिदमेव कुर्मस्ते त्वात्ममौख्यं कथयंति लोके ॥ नैवामुमायांति मठं कदाचित्कुतोऽथ पीठस्थितपूजनादि ॥ २७ ॥
ते वित्तलाभस्थितचेतसोऽज्ञाः प्राहुः सुवित्तप्रदमार्यधर्मम् ॥ अल्पस्वदं धर्मविहीनमित्थं त्वं नैव भास्यात्तसमस्तशास्त्रः ॥ २८ ॥

धर्मस्थापनाय मनुष्यजन्मा साक्षाच्छिव एवाभवत् । सोपि अस्मान्धर्मस्थापनार्थम् अत्र मठे स्थापितवान् ॥ २६ ॥ शिष्यैः सह वयमत्र मठे स्थित्वा इदं धर्मस्थापनमेव कुर्मः । ते शिष्यास्तु स्वस्वमुख्यत्वं लोके कथयंति । अमुं मठमपि कदाचित्ते नायांति अथ कुतो मठस्थानामस्माकं पूजनादिकं कुर्वंति अतो न ते मठाज्ञावशवर्तिन इत्यर्थः ॥ २७ ॥ अतस्तेषां धर्मस्थापकत्वाभावात्त्वमेव धर्मस्थापकवरिष्ठ इत्याह । त इति । द्रव्यदृष्टयो विद्याहीनास्ते शिष्याः धनप्रदं धर्मवंतं प्राहुः । अल्पवित्तदं धर्मविहीनं प्राहुः । इत्थम् एवं प्रकारेण त्वं न प्रतिभासि यतः प्राप्तसर्वविद्यः । अतस्त्वमेव तेषु श्रेष्ठ इति भावः ॥ २८ ॥

इतरेषां मठाननुकूलत्वे सति धर्मस्थापकत्वाभावात् त्वमेव मठानुकूलो धर्मं लोके स्थापयेत्याह । अत इति । कृत्यं धर्मस्थापनकार्यम् । मठस्थाः इतरमठस्थाः ॥ २९ ॥ इच्छया विना भास्करेच्छाभावेपि । मुद्राधारिणो दूतान् ॥ ३० ॥ दारैःस्त्रिया पद्मावत्या युक्तः श्रीगुरुणा पुरुषोत्तमभारत्याख्येन सत्कारितः अन्यहस्तेनेति शेषः । स्वस्य यतित्वादिति भावः ॥ ३१ ॥ आगमादागमनेन विलिल्युः लीना बभूवुः । यथा सूर्यागमनेनाकाशम

अतस्त्वमेवाद्य कुरुष्व कृत्यं सर्वं मठस्थं हि यतोऽखिलज्ञः ॥ दास्येऽत्र चिह्नान्यपि यैर्निषेधं न ते मठस्था यतयोऽपि कुर्युः ॥ २९ ॥
उक्त्वेति तस्मै स ददौ यतींद्रो मठस्थचिह्नानि विनेच्छयापि ॥ छत्रं तथा चामरयुग्ममग्रे चरान्समुद्रान्त्रजताढ्यदंडान् ॥ ३० ॥
महार्हवस्त्रैर्वरभूषणैश्च सत्कारितो भास्करवित्सदारः ॥ शिष्यान्वितः श्रीगुरुणाथ नत्वा तं पश्चिमाशां प्रययौ ततोसौ ॥ ३१ ॥
ततः पथा माध्वमठान्गतोऽस्यागमान्मठस्था यतयो विलिल्युः ॥ श्रीभास्करस्येव खमध्यतारास्तद्देशराजादिभिरर्चितोऽसौ ॥ ३२ ॥
गतेऽथ तस्मिन्यतयो मठस्थाः प्रादुर्बभूवुर्मरुतीव मेघाः ॥ रुष्टास्तदीयान्स्वनृपान्विलोक्य भट्टांघ्रिगेनानिव विज्जिनाः प्राक् ॥ ३३ ॥
क्षेत्रं च गोकर्णमथागतोऽसौ महाबलं शंभुमिहोपचारैः ॥ अभ्यर्च्य दानानि ददौ द्विजेभ्यः स निर्ययौ राजसु पूजितोऽस्मात् ॥३४॥
क्षेत्रं ततोऽगात्करवीरसंज्ञं यत्रांबिकाऽस्ते च सदार्यलक्ष्मीः ॥ संपूज्य तां चोपमठे सतीह यतौ च सोऽधर्मकृतः शशास ॥ ३५ ॥
तद्भूपतिश्चास्य बभूव शिष्यस्तथा बुधार्याः सधनाः परेऽपि ॥ वस्त्रादिभिस्तैरभिपूजितोऽसौ ययौ ततो भार्गवरामतीर्थम् ॥ ३६ ॥
संपूज्य देवं च हिरण्यकेशिशाखीयमुख्याञ्जलधेस्तटस्थान् ॥ द्विजान्परीक्षन्स्मृतिमार्गतोऽथ कृष्णोद्भवं प्राप च भास्करार्यः ॥ ३७ ॥

ध्यस्थतारा: विलीना भवंति तथेत्यर्थः ॥ ३२ ॥ वायौ गते सति मेघा इव प्रादुर्बभूवुः । तदीयान् भास्कराधीनान् नृपान्विलोक्य पूर्वं भट्टपादानुकूलात्राज्ञः विलोक्य विद्वांसो जिना इव क्रुद्धा बभूवुः ॥ ३३ ॥ क्षेत्रमिति ॥ ३४ ॥ करवीरे उपमठोऽस्ति तत्र यतौ मठाधिपे सत्यपि अधर्मकर्तॄन् स भास्करः शशास ॥ ३५ ॥ तद्भूपतिः करवीरस्थराजा तथा बुधार्याः धनवंतः परे इतरेऽपि शिष्या बभूवुरित्यर्थः ॥ ३६ ॥ देवं भार्गवरामं स्मृतिमार्गतः शास्त्रमा

र्गेण कृष्णानद्याः उत्पत्तिस्थानं प्राप ॥ ३७ ॥ विराटस्य पुरं वायीक्षेत्रम् । भीमाशंकरम् ॥ ३८ ॥ मयूरधाम मयूरपुरीम् । उदक् उत्तरतटे ॥ ३९ ॥ विप्रेभ्योऽमितदानपूर्वकम् ॥ ४० ॥ अखिलोर्व्यां बुधैः राजभिश्च पूजितुं योग्यः विदः पंडितान् प्रेष्य त्र्यंबकक्षेत्रादतिसत्कारेणाहूत आसीत् ॥ ४१ ॥

ततो विराटस्य पुरं गतोऽत्र विद्वत्तमाः संति बुधाः स सर्वान्॥जित्वाखिलैः पूजित एव तैश्च भीमादिमं शंकरमाययौ च॥३८॥तमर्चयित्वाथ मयूरधाम ययौ समभ्यर्च्य गणेशमस्मात् ॥ गतो जनस्थानमसौ बुद्धाख्यं क्षेत्रं ह्युदक् पंचवटी यतोऽस्ति॥३९॥स गौतमीस्नानमथात्र चक्रे श्राद्धादि विप्रामितदानपूर्वम् ॥ संपूजितोऽत्रत्यनृपादिभिश्चागात्र्यंबकं वित्तमसत्कृतांघ्रिः ॥४०॥ चारैः श्रुतः पुण्यगतेन राज्ञायं चाखिलोर्वीबुधराजपूज्यः ॥ पाचारितस्त्र्यंबकतोऽतिमानाद्यानान्वितान्प्रेष्य विदः स भृत्यान् ॥ ४१ ॥ निशम्य विद्वास्करमागतं स राजा ययौ योजनमार्ययुक्तः ॥ निनाय चार्यैः स्वयमंघ्रिचारी वाद्यैरनेकैर्वरपुण्यधाम ॥ ४२ ॥ न्यायेश्वरो विश्रुतरामशास्त्री दधन्स शीर्षे गुरुपादुके द्वे ॥ साकं नृयानेन हि शिष्यतुल्यो भ्रजत्यथान्ये क्व बुधास्तदार्याः ॥ ४३ ॥ राज्ञाथ संपूजित एप वस्त्रैः सुभूषणैः स्त्रीसहितः सशिष्यः ॥ बुधास्तमेकेऽपि न वक्तुमीशाः पुण्यस्थिताः पुण्यजना इवेशम् ॥ ४४ ॥ शिष्याश्च तस्यासुरिहार्यवर्याः सस्त्रीनृपस्तद्वरलेखकाश्च ॥ ययौ ततः सोऽखिलपूज्यपादश्चोत्तीर्य गोदामुदगार्यदेशम् ॥ ४५ ॥ श्रीसप्तशृंगादिगतांबिकां च घृष्णेशशंभुं प्रणमन्गतोऽसौ ॥ गुरुर्बिडोजोनृपवर्यधानीमिहात्तमानः सुरतं गतोऽस्मात् ॥ ४६ ॥ ऐश्वर्ययुक्तं श्रुतकीर्तिमीक्षन् प्रकाशसौख्योऽग्रगतं स्वशिष्यम् ॥ तुष्टस्तमालिंगितुमुत्थितोऽथ तदंघ्रिशीर्षस्त्विह भास्करोऽभूत् ॥ ४७ ॥ पूजां गुरोरंशुकवित्तगुर्वीं सस्त्रीसुतांतेवसतः स चक्रे ॥ स्वादन्ननैवेद्यमिहास्थितैश्चाजपार्थपद्यैः स्तवनं समंत्रम् ॥ ४८ ॥

॥ ४२ ॥ ४३ ॥ ४४ ॥ उदक् उत्तरदिशि उत्तमदेशम् ॥ ४५ ॥ बिडौजोनृपस्य बडोदराज्ञः ॥ ४६ ॥ तदंघ्र्योः प्रकाशानंदपादयोः शीर्षं मस्तकं यस्य सोऽभवत् । नमस्कारं कृतवानित्यर्थः ॥ ४७ ॥ सस्त्रीसुतांतेवसतः स्त्रीपुत्रशिष्यसहितस्य गुरोः प्रकाशानंदस्य पूजां वित्तेन गुर्वीं बहुवित्तवातीं स

भास्करः कृतवान् । इह सुरतनगरे स्थितैः सह स्वाद्वन्नेन नैवेद्यं कृतवान् । भोजनम् अर्पितवानित्यर्थः । मंत्रैः सह अजपागायत्र्यर्थकैः पद्यैः हंसः सोहमि त्यादिभिः स्तवनं च चक्रे ॥ ४८ ॥ चक्रादिभिः अंकितान् तप्तमुद्राचिह्नितान् । अस्मात्सोमनाथात् ॥ ४९ ॥ निजसंप्रदायं श्रीचक्रपूजादिरूपम् ॥ ॥ ५० ॥ ५१ ॥ तस्मिन्मठे स्थितानां मठाधिकारिणां सुखार्थं किंचित्कालपर्यंतं गुरोः श्रीशंकराचार्यस्य ज्योतिर्मठे उवास ॥ ५२ ॥ तत्रत्यराज्ञा

ततो ययौ द्वारवतीं स कृष्णं स्तुत्वांकितांश्चक्रमुखैर्निषेध्य ॥ सौराष्ट्रसोमं समपश्यदस्मात्पांचालदेशाखिलदेवताश्च ॥ ४९ ॥ काश्मीरसंस्थां गिरमेत्य तस्याः प्रसादतस्तत्र बुधान्स जित्वा ॥ शिष्यांश्च कृत्वा निजसंप्रदायं प्रवर्तयामास नृपार्चितांघ्रिः ॥ ५० ॥ शंभुं महाकालमथोज्जयिन्यामोंकारमानम्य च भूसुराख्यम् ॥ श्रेष्ठं हि तीर्थेष्वपराणि चेत्थं ययौ हरिद्वारमशेषपूज्यः ॥ ५१ ॥ पंचप्रयागानथ गुप्तकाशीं गंगोत्तरीं वीक्ष्य च विश्वपूज्यौ ॥ केदारनारायणकावुवास गुरोर्मठे तत्स्थसुखाय किंचित् ॥ ५२ ॥ गत्वा स शंभुं पशुपत्यभिज्ञं तत्रत्यराजार्चितपान्निवृत्त्य ॥ तस्मादयोध्यां मथुरां च पश्यन्पूर्वं ययौ सोऽथ विहाय काशीम् ॥ ५३ ॥ स गौतमस्याश्रममेत्य तत्र नैयायिकान्सर्वधरेजितांश्च ॥ मीमांसशाब्दीयवचःसुमिश्रैर्वाक्यैश्च जिग्येऽखिलविद्वरिष्ठः ॥ ५४ ॥ प्राच्यान्स जित्वेति बुधान्नृपार्च्यः पीठं दिदृक्षुस्त्वथ कामनेत्र्याः ॥ याद्यापि मासांतरजस्वलात्वं संदर्शयंती विधृतांशुकेद्धा ॥ ५५ ॥ तेनैव वर्णाः सकलाः स्फुटाश्च दृश्यंत एतैर्मनवः पृथग्वै ॥ कुर्वंति तैर्जारणमारणादि तद्देशगाश्चान्यजनार्तिकारि ॥ ५६ ॥

अर्चितौ पादौ यस्य । काशीं विहायेति काशीयात्राया अग्रे वक्ष्यमाणत्वात् ॥ ५३ ॥ सर्वधरायाम् ईजितान् पूजितान् ॥ ५४ ॥ दिदृक्षुः दर्शनेच्छुर भवत् । या कामनेत्री देवी ॥ ५५ ॥ तेनैव रजसा सर्वे वर्णाः अक्षराणि दृश्यंते एतैरक्षरैः पृथक् मंत्राश्च दृश्यंते तैर्मंत्रैः अन्यजनपीडकं जारणमारणादिकं

च तद्देशस्थाः कुर्वंति ॥ ५६ ॥ ५७ ॥ तद्देशोत्पन्नसिद्धमंत्रैः निमित्तभूतैः भयात् भयेन ॥ ५८ ॥ शिबिकांते शिबिकामध्ये स्थितः गुरुचरणौ हृदि यस्य स तां शिबिकां प्रति त्वं तं देशं प्रति मां शीघ्रं नयेति प्राह ॥ ५९ ॥ ऊर्ध्वमार्गेण ॥ ६० ॥ अतिशयेन मंत्रवीर्यं मंत्रसामर्थ्यं यस्य तं मेनिरे ॥ ॥ ६१ ॥ सिद्धमनून् तन्मंत्रितभस्मादीन् तदूर्ध्वं भास्करोपरि सम्यक् चिक्षिपुः। यद्यपि तथापि तैर्मंत्रैस्तस्य भास्करस्य पिशाचसंघैः शिवस्येव किमपि

तेषां भयान्नापरदेशसंस्थास्तद्देशगा इत्थमिलाप्रसिद्धम् ॥ स्त्रियः पुमांसोत्र दिगंबराः स्युः कदाचिदल्पं वसनं दधानाः ॥ ५७ ॥
श्रीभास्करस्यानुगशिष्यमुख्येष्वेकोऽपि नासीदथ तेन साकम् ॥ गंतुं क्षमस्तद्विषयोत्थसिद्धमंत्रैर्भयाज्जारणमारणाद्यैः ॥ ५८ ॥
ज्ञात्वेति तेषां हृदयं गुरुस्तु स्वयं स्थितोऽसौ शिबिकांत एकः ॥ गुर्वंघ्रिहृत्सिद्धमनुं जपंस्तां प्राहेति मां तं नय देशमाशु ॥ ५९ ॥
श्रुत्वा जडापीति सचेतनेव समुत्थिता सा शिबिकोर्ध्वमार्गात् ॥ निनाय तं भास्करमस्ति यत्र देव्यालयस्तत्पुरतः स्थिताभूत् ॥६०॥
तद्देशगास्तां शिबिकां विना नॄन्समागतां वीक्ष्य तदंतरस्थम् ॥ पुमांसमुत्कांतियुतं च चित्ते ते मेनिरे तं त्वतिमंत्रवीर्यम् ॥ ६१ ॥
मंदास्तु केचिन्निजमंत्रवीर्यं परीक्षितुं सिद्धमनूंस्तदूर्ध्वम् ॥ संचिक्षिपुस्तैर्न बभूव किंचित्तस्येश्वरस्येव पिशाचसंघैः ॥ ६२ ॥ तदाखिलाश्चात्तह्रियस्तमित्थं प्राहुर्नमंतोऽथ सुसिद्धमंत्रैः ॥ क्षेत्रे न दृष्टः श्रुतिगोऽन्यदेशाद्वात्रागतः सिद्धमनुस्त्वदन्यः ॥६३॥ साक्षात्ततस्त्वं नृतनुः शिवोऽसि न प्राकृते हीति च मंत्रवीर्यम् ॥ यत्त्वं जडेनैव समागतः प्राग्ज्ञानेड्भित्त्येव स चाल्पमेत्र ॥ ६४ ॥

वाक्स्तंभनादिकं नाभवत् ॥ ६२ ॥ आत्तह्रियः प्राप्तलज्जाः। सुसिद्धमंत्रैरस्माभिरन्यदेशगतस्त्वदन्यः सिद्धमंत्रोऽस्मिन्क्षेत्रे दृष्टो वा श्रुतिगः श्रवणारूढो वा नासीत् ॥६३॥ ततः कारणात्त्वं नृदेहवान्साक्षाच्छिवोऽसि हि यस्मात् पूर्वं भित्त्या ज्ञानेश्वर इव जडयानेनात्र समागत इति यत इति मंत्रसामर्थ्यं प्राकृतपुरुषे

१ तद्देशीयानां ज्ञानेश्वरकथाया अपरिचयेऽपि कविबुद्धिकल्पितसांनिध्यं तत्कथाया अत्र बोध्यम्। नैतेनाप्रामाण्यशंका ग्रंथस्येति ध्येयं सुधीभिः।

नास्ति सोपि ज्ञानेश्वरः अल्पमेव समागत इति कथा प्रसिद्धा । त्वं तु मनुष्यविरहितयानेनात्रागतोऽसीति महाच्चित्रमित्यर्थः ॥ ६४॥६५ ॥ स्वयानात्स्वशिबिकायाः तैः काश्मीरदेशस्थैः सुपूजितः तैर्वाहित इत्युभयान्वयि॥६६॥उरगाख्यं नागपुरम् । अमर्दम् अमर्दकक्षेत्रम् । पर्यलीशं वैद्यनाथं तुळजां तुळजापुरस्थदेवी मार्गेण पश्यन् पंढरीं प्रति गतः ॥ ६७ ॥ इह पंढर्यां पांडुरंगमाहात्म्यं पाद्मपुराणादुद्धृत्य भूमितले विख्यातं चकार । यत् यस्मात् पांडुरंगोऽस्य

संप्रार्थितोऽनेकवचोभिरित्थं स भास्करो यानत उत्ततार ॥ तैरेव संपादितभृत्यकृत्यश्चोक्तोपचारैरयजच्छिवां ताम् ॥ ६५ ॥ कृत्वा स्वशिष्यानखिलान्स्वमार्गसंस्थांश्च संपूजित आर्यवर्यैः ॥ तैर्वाहितात्सोथ ययौ स्वयानात्स्थलं स्वभृत्यादिसमाश्रितं यत् ॥६६॥
ततो जगन्नाथमथोरगाख्यं राजार्चितः पंडितजिद्धयमर्दम् ॥ श्रीपर्यलीशं तुळजां च पश्यन्पथा गतोऽसावथ पंढरीं च ॥ ६७ ॥
माहात्म्यमेष त्विह पांडुरंगं निष्कास्य पाद्माभिधसत्पुराणात् ॥ ख्यातं चकाराखिलभूमिपृष्ठे यत्पांडुरंगोऽस्य कुलोत्थदेवः ॥ ६८ ॥
दिंडीरगं भीमरथीतटस्थं श्रीरुक्मिणीशं विविधोपचारैः ॥ संपूज्य तुष्टाव पदैरपूर्वैर्विप्रान्नदोऽगादथ चंदलांबाम् ॥ ६९ ॥ श्रीचक्रकोणैः सदृशं चकार देव्यालयं वित्कुलदेवतायाः ॥ तस्याः सपर्यां सततं नृपात्तवित्तौर्द्विजैर्योजयति स्म चार्यः ॥ ७० ॥ ततो ययौ राजवरश्रियाढ्यो गुरुः स नारायणपत्तनं च ॥ श्रीस्वामिशास्त्र्याख्यनृसिंहयज्वसुतं दिदृक्षुर्भुवि गीतकीर्तिः ॥ ७१ ॥ श्रुत्वागतं भास्करमार्यशिष्यं स स्वामिशास्त्री पुरतोऽस्य गंतुम् ॥ समुत्थितस्तावदुपाययौ स नतो नतस्तेन धृतः कराभ्याम् ॥ ७२ ॥ तथोद्धृतः स्वाम्यपि भास्करेणालिलिंगतुर्द्वौ मिथ एकचित्तौ ॥ पप्रच्छतुस्तौ च सुखासनस्थौ सुक्षेमतामेकगुरूक्तविद्यौ ॥ ७३ ॥
शिष्यात्समाकर्ण्य च भास्करस्य दिशां जयं यज्वसुतः स्वचित्ते ॥ प्राहैकगुर्वोः समविद्ययोर्नौ धिगस्तु मामेकमनाप्तकीर्तिम् ॥७४॥

भास्करस्य कुलोत्थदेवः कुलदैवतमस्ति । अतस्तन्माहात्म्यप्रख्यातिर्भास्करेण कृतेत्यर्थः ॥ ६८ ॥ ६९ ॥ योजयति स्म योजितवान् ॥ ७० ॥ ॥ ७१ ॥ आर्याः शिष्याः यस्य तम् । स भास्करः तेन स्वामिशास्त्रिणा॥७२॥एकगुरुणा नृसिंहयज्वना उक्ता विद्या ययोस्तौ । सुक्षेमतां सुक्षेमवार्ताम् ॥ ॥ ७३ ॥ एकः गुरुः ययोस्तयोर्नौ आवयोः समविद्ययोः एकम् अप्राप्तकीर्तिं मां धिगस्तु । कीर्तिरहितं जन्म लोके वृथा भवतीत्यर्थः ॥ ७४ ॥

अंगेति देशिकेंद्रसंबुद्धिः । यानानुगांतेवसतां यानसेवकशिष्याणाम् इष्टस्य अन्नादेः लब्ध्या प्राप्त्या तत्र नारायणपत्तने तस्थौ स्थितः ॥ ७५ ॥ अस्मा
न्नारायणपत्तनात्समीपनगरांतरे प्रावृषि वासं कर्तुं तत्र यतिराययौ यत्र सुदीर्घगृहे भास्करो वसति । अत्र गृहे अग्रे समीपे स यतिरंजसाऽवसत् ॥ ७६ ॥
दिशः जिताः यैस्तेषां दिग्जेतृणां चिह्नानि छत्रयष्ट्यादीनि दृष्ट्वा नैजान्स्वशिष्यानाह । अमूनि वाद्यानि । वयमेव दिग्जयिनो वृथैषां दंभ इत्यर्थः ॥७७॥
अमूनीत्यपकर्षः । साकं चिह्नसहितं यथा तथा भवद्भिः सर्ववाद्यानि निवारितव्यानि । तत् तेषां वाक्यम् । तान् यतिशिष्यान् ॥ ७८ ॥ यो यतिर्भ
वतां गुरुः । इति अस्मदग्रे कथमेतानि चिह्नानि धृतवानिति वक्ति । सः स्वयम् अत्र एत्य शास्त्रैर्मां जित्वा अमूनि वाद्यानि वारयतु । हि यस्मात् सर्व

अथांग तत्रत्यजनैर्धनाढ्यैः स भास्करो वार्षिकमासमु तत्र ॥ स्थातुं मुहुः प्रार्थित एष तस्थौ यानानुगांतेवसदिष्टलब्ध्या ॥ ७५ ॥
तावद्ययौ तत्र यतिश्च माध्वमठाधिपः प्रावृषि वस्तुमस्मात् ॥ पुरांतरेऽग्रेऽवसदत्र चांजः स भास्करो यत्र सुदीर्घगेहे ॥ ७६ ॥ श्रुत्वाथ
सायं स च भास्कराग्रे वाद्यानि चिह्नान्यपि दिग्जितानाम् ॥ वीक्ष्याह नैजान्कथमानदंति जगज्जिदस्मत्पुरतस्त्वमूनि ॥ ७७ ॥
निवारितव्यान्यखिलानि साकं श्रुत्वेति ते भास्करमेत्य वक्तुम् ॥ अनीश्वराश्चाहुरथो शनैस्तच्चाकर्ण्य तान्विद्वर इत्युवाच ॥ ७८ ॥
यश्चेति वक्ति स्वयमेत्य जित्वा मां शास्त्रतो वारयतु त्वमूनि ॥मुधा हि दंभाय न चाग्रतो मे जित्वाऽखिलज्ञान्हि हृतानि तेभ्यः ॥७९॥
निवेदितं तैर्गुरवे यथोक्तं श्रुत्वेति कोप्युत्थितवत्स्वपीठात् ॥ गृहाजिरादंतरितालयस्थमुवाच तं भास्करमित्थमुच्चैः ॥ ८० ॥
वादो भवेन्नैव गृहेशयत्योर्व्यस्ताश्रमाचारवतोरतो नौ ॥ भूयात्स पत्रैर्यदि मन्यसे त्वमेवं कृते स्यादवनं हि सेतोः ॥ ८१ ॥

ज्ञान् जित्वा तेभ्यो हृतानि चिह्नानि ममाग्रे वृथा दंभाय न भवंति । अस्माकं दिग्जेतृत्वादेतच्चिह्नधारणं योग्यमस्तीति भावः ॥ ७९ ॥ तैः यतिशिष्यैः
कोपी कोपवान् यतिः । गृहांगणेनांतरितं व्यवहितं यदालयं गृहम् । तत्र स्थितं भास्करम् इत्थं वक्ष्यमाणप्रकारेण उच्चैरुवाच ॥ ८० ॥ मां शास्त्रवादेन
जित्वा चिह्नानि गृहीतव्यानीति यदुक्तं तत्राह । वाद इति । विरुद्धाचारवतोर्गृहस्थसंन्यासिनोर्वादो नैव भवति यतः । अतः स नौ आवयोर्वादोऽस्त्विति
यदि त्वं मन्यसे तर्हि पत्रैर्भवतु । पत्रद्वारा वादं करोमीत्यर्थः । एवं कृते सति सेतोर्मर्यादाया अवनं स्यात् । प्रत्यक्षवादे यतेर्मम गृहस्थस्य च तव साम्येनाश्र

ममहत्त्वं न स्यात् । पत्रैः परोक्षवादे कृते सति न्यूनाधिकभाषणादिमर्यादारक्षणं भविष्यतीत्यर्थः ॥ ८१ ॥ ननु अहमपि मर्यादया भाषणं करोमीति चेत् तत्राह । अत्र नारायणपत्तने अस्मन्मुद्रांकिताः न संति । मया अन्यतो मुद्रांकितव्यतिरिक्तात् अन्नं न ग्राह्यमस्ति तथांबु उदकं च न ग्राह्यमस्ति अतो हेतोः अन्यपुर्यां स्थित्वा मया पत्रं पूर्वपक्षपत्रं लिख्यत एव ॥ ८२ ॥ सांकस्तसमुद्राचिह्नयुक्तः ॥ ८३ ॥ अन्यपूर्तः अन्यनगराद्वा पत्रैः इह वा वादो भवतु । नो चेत्प्रतिज्ञा न क्रियते चेत् तर्हि वाग्भिस्तं वादं समक्षं यथा तथा त्वं कुरु । यथा पूर्वं मंडनेन सह शंकरस्य वादस्तथा गृहस्थसंन्यासि

स्थातुं न शक्यं हि मयात्र चास्मन्मुद्रांकिताः संति न चान्यतोऽन्नम् ॥ ग्राह्यं तथा नांबु ततोऽन्यपुर्यां स्थित्वा मया लिख्यत एव पत्रम् ॥ ८२ ॥ श्रुत्वेति सर्वं स च भास्करस्तमुवाच चेज्जेष्यसि मां त्वमेव ॥ सांकस्तवाहं च भवामि शिष्यस्त्वं चोज्जितो देहि ममेप्सितं यत् ॥ ८३ ॥ इत्थं प्रतिज्ञा यदि चावयोः स्याद्वादोऽपि पत्रैरिह वान्यपुर्याः ॥ नो चेत्समक्षं कुरु तं तु वाग्भिर्यथा पुरा मंडनशांकरीयः ॥ ८४ ॥ श्रुत्वेत्यथो भास्करमार्यकांतिं दृष्ट्वा स्फुरद्बुद्धिममुं विचिंत्य ॥ वादाक्षमस्तेन यतिस्तथेति ययौ सत्पर्यागमभीः स्वशिष्यान् ॥ ८५ ॥ श्रीभास्करश्चावसदार्यवर्यस्तत्रैव पत्राणि यतेः प्रतीक्षन् ॥ न प्रेषयामास च यस्तदीयपत्रोदितं खंडितुमेव दक्षः ॥ ८६ ॥ श्रीभास्करस्येति दिशां जयं यस्तथा प्रतिज्ञां यतिना कृतां च ॥ शृणोति वा श्रावयतीह लोके भवेज्जयी चाखिलसत्प्रतिज्ञः ॥ ८७ ॥ इति श्रीमद्गुरुपरंपराचरित्रे उत्तरार्द्धे श्रीमद्भासुरानंददिग्विजयो नाम चत्वारिंशः सर्गः ॥ ४० ॥ श्रादेशिकेंद्र उवाच ॥ शिष्यस्थानमथाययौ यतिरसौ तैः सत्कृतस्तानिति प्राहाहं पथि भास्करेण बहुधा सूत्रार्थजिज्ञासुना॥अद्वैतेति मतापि चार्थित इमं ज्ञात्वाऽपथस्थं मयाऽस्मै गोप्यं स्वमतं न चोक्तमणु तच्चोल्लिख्य संप्रेष्यते ॥ १ ॥

नोर्वादो भवत्वित्यर्थः ॥ ८४ ॥ तथेत्युक्त्वा वर्षाकालागमेन भयं यस्य स यतिः स्वशिष्यान्प्रति ययौ ॥ ८५ ॥ आर्येषु श्रेष्ठेषु श्रेष्ठः ॥ ८६ ॥ एतत्सर्गोक्तकथाश्रवणादिफलमाह । श्रीभास्करस्येति । अखिले सर्वत्र सती सत्या प्रतिज्ञा यस्य सिद्धवागित्यर्थः ॥ ८७ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायां चत्वारिंशः सर्गः ॥ ४० ॥ शतपद्योदेकचत्वारिंशे भास्करविज्जयः ।। यतेर्बंधुजयोद्वाहो नारायणकथेर्यते ॥ ४१ ॥ अथ पूर्वसर्गांते प्रतिज्ञातं

द्वैतयतेर्भास्करस्य च वादं वक्तुमुपक्रमते । शिष्यस्थानमित्यादिना । अथ सत्यबोधाख्यो यतिः शिष्याणां निवासस्थानमाययौ । तेरसौ यतिः सत्कृतः सन् इति प्राह । इति किम् । अहं मार्गे आगमनमार्गे नारायणपत्तने सूत्राणां ब्रह्मसूत्राणाम् अर्थं ज्ञातुम् इच्छति तेनाद्वैतेतिमता अद्वैतमार्गगता अद्वैतमतस्थेनेति यावत् । भास्करेण बहुधा प्रार्थितोऽस्मि । इमं भास्करम् अपथस्थं स्वविरुद्धमतस्थं ज्ञात्वा मया गोप्यं स्वमतमस्मै किंचिन्नोक्तम् । अधुना तत्किंचिदुल्लिख्य भास्कराय मया संप्रेष्यते । शिष्यमध्ये स्वमहत्त्वप्रतिष्ठार्थमेतद्वचनमिति भावः । शार्दूलयोरिवोभयोर्वादप्रवर्तनात् शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥ इति शिष्यान्प्रति उक्त्वा स यतिः पूर्वपक्षपत्रं लिखितवान् । हे भास्कर इह लोके भवान् धीमान् श्रीमान्विद्यया सूर्यवत्कांत्या उपलक्षितः सुष्ठु

इत्युक्त्वा ह्यलिखत्स पत्रमिह धीश्रीमान् भवान्विद्यया कांत्या भास्करवत्सुलब्धनृतनुर्जीवोऽस्ति नैवेश्वरः ॥ प्राग्जन्मार्जितभोगभुक्च किमथाहं चेश इत्थं धियं धत्सेऽकान्यपि विश्वपूज्यपुरतस्तानि त्यज त्वं द्रुतम् ॥२॥ जीवेशां तु न चैकता हि घटते जीवास्त्वनेकाः पुनर्नानाभोगभुजोऽन्यतंत्रगतयः कल्पानुकल्पोदिताः ॥ ईशस्त्वात्मपरोऽप्यभोगविकृतिश्चैकोऽमुनैक्यं कथं यांत्येते प्रलयेपि कर्दमततौ साम्यं मृदेवोपलाः ॥ ३ ॥

प्राप्तनृदेहः सन् जीव एवास्ति ईश्वरो नैवास्ति । ननु ईश्वरतुल्यैश्वर्यवान् अहं कथं जीवत्वेन वर्ण्यत इत्यत आह । प्राग्जन्मसु अर्जितैः संपादितपुण्यैर्भोगभोक्ता च अस्ति ऐश्वर्यप्राप्तिः पूर्वपुण्यैर्भवति तावन्मात्रेण नेश्वरस्त्वमित्यर्थः । अथ किमर्थम् अहमीश्वरोऽस्मीति बुद्धिं धत्से धारयसि । विश्वपूज्यानामस्माकं पुरतोऽग्रभागे छत्रचामरादीनि चिह्नान्यपि धारयसि अतस्त्वं तानि चिह्नानि द्रुतं त्यज अद्यप्रभृति न धार्याणीत्यर्थः ॥ २ ॥ ननु जीवेश्वरयोरैक्यं श्रुतिप्रसिद्धमस्ति तेन ईश्वरोऽहमिति निश्चयं कुर्वतो मम छत्रादिचिह्नधारणमुचितमिति चेत् । तत्र जीवेश्वरयोरैक्यमेव न संभवति विरुद्धधर्मवत्त्वादित्याह । जीवेशामिति । जीवाश्च ईट् ईशश्च तेषां जीवेश्वराणामेकत्वं तु न घटते । अदंतत्वाज्जीवपदस्य पूर्वनिपातः । तत्र हेतुमाह । जीवास्तु अनेकाः पुनः

नानाभोगभुजः सुखदुःखादिविकारवंतः अन्यतंत्रगतयः परतंत्रवृत्तयः कल्पानुकल्पं प्रतिकल्पं उदिताः उत्पन्नाः संति । ईश्वरस्तु एतद्विरुद्धधर्मवानि- त्याह । ईश्वरस्तु आत्मपरः स्वतंत्रोऽपि भोगविकाररहितः एकश्चास्ति । अमुना ईश्वरेण एकत्वमेते जीवाः कथं यांति न कथमपीत्यर्थः । ननु प्रलये सुषुप्त्यादौ च यथा विरुद्धधर्मयोरेकत्वं प्रतीयते । तथा सृष्टिजाग्रदादिषु एकत्वं स्यादित्यत आह—यांतीति । यथा कर्दमततौ कर्दमविस्तारे बहुकर्दमे इति यावत् । उपला अल्पपाषाणा मृदा मृत्तिकया ऐक्यं यांति । तथा प्रलयसुषुप्त्यादिषु जीवानामीश्वरेणैक्यं भवति । बहुकर्दमे हि उपलाः स्वस्वरूपापरित्यागे नैव मृदा ऐक्यं गता इव प्रतीयंते । तद्वत् प्रलये जीवेश्वरयोर्विरुद्धधर्मयोरपि ऐक्यमिव प्रतीयते न वस्तुतस्तयोरैक्यम् । तत्त्वमस्यादिवाक्येषु च जीवेषु ईश्व- रसादृश्यं प्रतीयते । अन्यथा सुखित्वदुःखित्वपरिच्छिन्नत्वपरतंत्रत्वादिजीवधर्मलोपप्रसंगः स्यात् । तस्मान्न जीवेश्वरयोरैक्यप्रतिपादकं वेदांतशास्त्रं प्रमाणं भवितुमर्हति न च तवापि मुधा दंभवतश्छत्रचामरादिधारणेन लोके प्रतिष्ठासंपादकत्वं युक्तमिति भावः ॥ ३ ॥ इत्थं तत् यतेः पूर्वपक्षयुक्तं पत्रमवलोक्य

इत्थं पत्रमवेक्ष्य तस्य च गुरुस्तस्योत्तरं चालिखत्त्वं साक्षाद्यतिरुज्झिताखिलहृषीकार्थोऽप्यभूर्नेश्वरः ॥ स्थितश्चाहं गृह एव हीशभज- नाज्ज्ञात्वा गुरोस्तं परं यच्छ्रद्धोस्ति स एव वित्किल ममात्मेत्युक्तितश्चेडहम् ॥ ४ ॥

गुरुर्भास्करस्तस्योत्तरं लिखितवान् । तत्रादौ आत्मनि ईश्वरत्वं साधयन् तस्य यतेः अनीश्वरत्वमाह । त्वमिति । त्वं साक्षाद्यतिः संन्यास्यपि उज्झिता- स्त्यक्ताः सर्वेंद्रियार्थाः येन स त्यक्तविषयसंबंधः सन्नपि ईश्वरो नाभूः न जातोऽसि । संन्यासिनोऽपि तवेश्वरप्राप्तिर्नाभवदिति महदाश्चर्यमिति भावः । ननु त्वय्यपि कथमीश्वरत्वसिद्धिर्भवतीति चेत्तत्राह । स्थित्वेति । अहं गृहे गृहस्थाश्रमे स्थित्वापि श्रीगुरोः सकाशात्तं परमेश्वरं ज्ञात्वा ईश्वरभजनेन ईट् ईश्व- रोऽस्मि । ननु तर्हि ईश्वरभजनेन गुरोः सकाशात्परोक्षज्ञानेन वा कथमीश्वरत्वं स्यादिति चेत्तत्र हेतुः । "यो यच्छ्रद्धः स एव सः" इति । "ज्ञानी त्वात्मैव मे मतः" इति उक्तितः गीतासु भगवदुक्तेः । अयं भावः । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः" इति श्रुतेर्गुरोः सकाशात्प- रमात्मनः स्वरूपमसंभावनाविपरीतभावनानिरासपूर्वकं सुश्रद्धया विज्ञायानन्योपासनादार्ढ्येन जीवस्यापीश्वरप्राप्तिर्भवति किं च यो यस्मिन् ईश्वरे परमात्मनि

वा श्रद्धावान् स पुरुषः एव ईश्वर एव परमात्मैव वा भवति न तद्यतिरिक्त इति सावधारणनिर्देशः । तथा च ज्ञानी ज्ञानवान्ममात्मैव भवतीति उभयत्र सावधारणनिर्देशेन सावधारणस्य वाक्यस्य च निश्चितार्थत्वेन चाहमीश्वर एवास्मि कुतस्त्वदारोपितजीवदशावान् भवामीति ॥ ४ ॥ एवमात्मन ईश्वरत्वं प्रसाध्यानेकजीवपक्षं तिरस्कुर्वन् एकजीवपक्षमंगीकरोति । त्वमिति । त्वं जीवान् बहून् वृथा कथयसि किं तु एक एव जीवो नानाकृतिर्भवति । श्रीकृष्णेन च गीतायां "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्थमेवं प्रकारेण स्पष्टमेक एवोक्तः । ननु अंश इत्येकवचनस्य जातौ पर्यवसन्नत्वाज्जीवत्वजातेरनेकविधत्वमिति चेन्न । तत्रैकत्वव्यक्त्या जातेर्बाधो भवति तस्मान्नानेकजीवपक्षाश्रयणमुचितमित्यर्थः । ननु तर्हि कथमनेकत्वेन जीवानां प्रतीतिर्भवति कथं वा पृथक् पृथक् सुखित्वदुःखित्वादिधर्मवत्त्वं चेत्याशंक्य उपाधिवशात्सर्वं सेत्स्यतीति दृष्टांतेन निराकरोति । अर्कस्येति । सूर्यस्य प्रति

त्वं जीवांश्च बहून्मुधैव वदसि ह्येकः स नानाकृतिर्गीतायां च ममांश इत्थमुदितः श्रीशेन चैकः स्फुटम् ॥ अर्कस्य प्रतिबिंबमेकमुदधौ चैतद्द्वयं नेक्ष्यते नानेदं बहुभाजनैः खलु तथा जीवोपि देहैः पृथक् ॥५॥ सोऽपीशान्न कदाचिदेव कुहचिद्भिन्नेषु चोपाधिषु नैवेषत्तु पृथग्भवेरखिलगादुष्णाद्गवाक्षादिगम् ॥ छिद्रेष्वाकृतिभेदवत्स्वपि भिदास्थं नोष्णमन्यद्यथतज्ज्ञानादथ भिन्नमीक्षति शिशुर्जीवं तथानीशदृक् ॥६॥

बिंबं समुद्रे एकमेवास्ति । एतद्द्वयं प्रतिबिंबद्वयं नावलोक्यते । बहुभाजनैः जलपूरितबहुपात्रैरिदं प्रतिबिंबं नानाविधमीक्ष्यते जनैरिति शेषः । तथा एकोऽपि जीवः पृथक् जीवोपाधिभिः पृथक् प्रतीयते न वस्तुतो बहुविधः समुद्रे प्रतिबिंबित एक एव सूर्यः अनेकोपाधिवशादनेक इव भाति न वस्तुतोऽनेकस्तथा एकजीव एवानेकदेहोपाधिवशादनेकजीवभेदेन प्रतीयमान इव भवति न वस्तुतोऽनेकः । तथैवोपाधिवशाज्जलकृतकंपादिवत्सुखदुःखवानिव च प्रतीयते वस्तुतो जीवस्य नानेकत्वं न वा सुखदुःखादिमत्त्वमिति भावः ॥ ५ ॥ नन्वेवं भेदेन प्रतीयमानो जीवः कथमीश्वरेणैकत्वं प्राप्नोतीत्याशंक्य यथार्थज्ञानेन जीवस्येश्वरभावः प्राप्यते इति सदृष्टांतमाह । स इति । स जीवोऽऽीश्वरात्कदाचित्कस्मिन्नपि काले कुहचित् कस्मिन्नपि देशे भिन्नोपाधिषु सत्स्वपि ईषत् किंचिदपि पृथक् नैव भवति यथा गवाक्षादिगतमुष्णमाकृतिभेदवत्सु आकारभिन्नेषु छिद्रेषु भिदा भेदेन आ ईषत्कालपर्यंतं तिष्ठतीति आस्थम् ऋतज्ञानेन

यथार्थज्ञानेन सर्वगताद्रवेरुष्णात्पृथक् न भवति अथ शिशुस्तदुष्णं भिन्नं पृथक् पश्यति । तथाऽनीशदृक् ईश्वरसाक्षात्कारहीनः पुरुषो जीवं पृथक् पश्यति तस्मादुपाधिवशाच्छिद्रगतोष्णवद्भेदेन प्रतीयमानोऽपि जीवो गुरुकृपया यथार्थज्ञाने सति परिच्छिन्नभावं त्यक्त्वाऽपरिच्छिन्नमीश्वरभावं प्राप्नोतीत्यर्थः॥६॥ एवं भास्करस्य दलं पत्रं दृष्ट्वाऽस्य पत्रस्योत्तरे खंडने विषये स यतिः समर्थो नाभवत् । अथ सर्वान्द्वैतपरान् ग्रंथान् धिया विलोक्य निश्चित्य तत्पत्रखंडनम् अलिखत् । तदेवाह । त्वया यदीहाखिलजगति जीव एकोऽस्तीतीर्यते वर्ण्यते तर्हि एकः सुखयुक्तः एको दुःखी एको विद्वान् उत पुनः एकोतिबालिशोऽति मूर्खः इति हेतोस्त्वद्वाक्यं जीव एकोऽस्तीत्याकारकम् उद्बाध्यते उत्कृष्टतया बाधितं भवति । तथा च जीवस्यैकत्वे सर्वेपि सुखिनः स्युः सर्वे वा दुःखयुक्ताः सर्वे विद्वांसः सर्वे वा मूर्खा भवेयुः । अतः सुखित्वदुःखित्वादिपृथक्त्वाद्यन्यथानुपपत्त्यानेकजीवपक्षाश्रयणेन तवैकजीवपक्षवादो नितरां बाध्यत इत्यर्थः

इत्थं वीक्ष्य स भास्करस्य च दलं नास्योत्तरेऽभूत्क्षमो ग्रंथान्द्वैतपरान्विलोक्य सकलांश्चाथालिखत्तद्धिया ॥ जीवस्त्वेक इहेर्यतेऽखिलजगत्येकः सुखाढ्योऽसुखी विद्वानेक उतातिबालिश इति त्वद्वाक्यमुद्बाध्यते ॥ ७ ॥ जीवः सोऽपि न चेश्वरात्पृथगिति स्पष्टं त्वया लिख्यते चेज्जीवेश्वरयोर्न भेदकथनं विश्वप्रवृत्तिः कथम् ॥ विष्णुप्रेरितमायया त्रिगुणया सृष्टं ह्यनाद्यं जगच्छ्रुत्युक्तं ध्रुवमेव जीवसदनं धाता यथेत्युक्तितः ॥ ८ ॥

॥ ७ ॥ एवं भास्करस्यैकजीवपक्षं प्रत्यक्षप्रमाणेन निराकृत्य जीवस्येश्वरभिन्नत्वं सृष्ट्याद्यनुपपत्त्या साधयति । जीव इति । य एको जीवस्त्वयांगीकृतः सोऽपीश्वरात्पृथक् नैवास्तीति त्वया पत्रे लिख्यते । तत्र चेद्यदा जीवेश्वरयोर्भेदकथनं न स्यात्तदा विश्वप्रवृत्तिः कथं भवेत् । तथा हि ईश्वरभिन्नानां पूर्वं प्रलये लीनानां जीवानां कर्मपरिपाकवशेन ईश्वरस्य सृष्ट्यादौ प्रवृत्तिर्भवति । जीवेश्वराभेदे तु किमर्थमीश्वरस्य सृष्ट्यादौ प्रवृत्तिरिति विश्वप्रवृत्त्यन्यथानुपपत्त्या जीवानामीश्वराद्भिन्नत्वं सिद्ध्यतीत्यर्थः । किं च त्रिगुणात्मिकया विष्णुप्रेरितमाययाऽनाद्यं सनातनं जगत्सृष्टमस्ति " धाता यथा पूर्वमकल्पयत् " इत्युक्त्या तज्जीवनिवासस्थानं ध्रुवमेव सत्यमेव उक्तमस्ति । तथा च श्रुतिः " ध्रुवा द्यौर्ध्रुवा पृथिवी " इत्यादि । " ध्रुवं विश्वमिदं जगत् " इत्यादि च ।

तथा च यथा पूर्वं ध्रुवमेव जगदासीत्तथा धाता पूर्ववत् जगत् कल्पितवान् इत्यादिश्रुतिप्रामाण्येन जीवस्य चेश्वराद्भिन्नत्वं नित्यत्वं च सिद्धं भवति । तेन तत्र सिद्धांतव्याघात इत्यर्थः ॥ ८ ॥ श्रीमान् भास्करोपि इत्थं पत्रं दृष्ट्वा तस्मै यतये इति च खंडनपत्रं लिलेख । यत्तु त्वयोक्तम् एकजीवस्य सुखाद्यनुपपत्त्याऽनेकजीवाश्रयणं तन्न संभवति एकस्यैवानेकरूपेण भासमानत्वं न विरुद्धमिति दृष्टांतेन साधयति । यद्यपि खम् आकाशममूर्तं गदितमस्ति नैयायिकैरिति शेषः । तथापि अखिलतः सर्वत्रास्याकाशस्य नीलवर्णो भासः प्रतिभासः स्फुटमस्ति स एकोऽपि नीलप्रतिभासोऽम्बुदतः मेघसंबंधवशात् क्वचिदतिकृष्णश्चासौ रुचिरश्च श्वेतोऽरुणोपि भवति । एवं जीवोऽपि ईश्वरभासः उपाधिसंबंधवशात् सुखी दुःखी वित् ज्ञानी अज्ञानी च भवति । मूर्तत्वं च परिच्छिन्नपरिमाणवत्त्वम् अमूर्तत्वं तु अपरिच्छिन्नपरिमाणवत्त्वम् । एवं चैकस्यानेकरूपेण भासमानत्वाद्दुःखित्वाद्यनेकधर्मोपपत्तेर्नानेकजीवसिद्धिः ॥ ९ ॥ तथा

श्रीमान्भास्कररा‍ण्णिरीक्ष्य लिखितं तस्मै लिलेखेति चामूर्तं खं गदितं तथाप्यखिलतो नीलोऽस्य भासः स्फुटम् ॥ एकः सोऽम्बुदतोऽतिकृष्णरुचिरः श्वेतोऽरुणोऽपि क्वचिज्जीवोऽपीश्वरभास एष सुखवान्दुःखी विदज्ञस्तथा ॥ ९ ॥ योऽमूर्तस्य च खस्य मूर्तसदृशो भासोऽथ मेघांकितोऽपीषत्खान्न पृथक्तथेश्वरगतः स्वभूतलस्थोऽपि सः ॥ धाता पूर्वमकल्पयत्किल यथेत्युक्तिर्मृषा त्वं स्फुटं विश्वस्याह यथेंद्रजालकृददश्चाकल्पयत्पूर्ववत् ॥ १० ॥

जीवेश्वरभेदोऽपि न सिध्यतीत्याह । य इति । अथामूर्तस्याकाशस्य मूर्तसदृशो भासः नीलवर्णप्रतिभासो मेघांकितोऽपि आकाशादीषदपि पृथक् न भवति ईश्वरस्याकाशवत्सर्वगतत्वात् । तत्प्रतिभासस्य जीवस्याकाशनैल्यवत् न पृथक्त्वमित्यर्थः । यत्तूक्तं श्रुत्या जगतो ध्रुवत्वं तदपि न संभवतीत्याह । धातेति । अकल्पयदित्युक्तिर्जगतः कल्पितत्वेन स्पष्टं मिथ्यात्वमाह । यथा इंद्रजालकर्ता इदम् आम्रवृक्षादिकं पूर्ववत्कल्पितवानिति तथा धाता पूर्वकल्पनासदृशं मिथ्यैवाधुनापि कल्पितवान् । कल्पितस्य च मिथ्यात्वसिद्धिरेव भवति । ध्रुवा द्यौरित्यादिश्रुतिस्तु राष्ट्रं धारयतां ध्रुवमित्याशीर्वादपरा न जगत्सत्यत्वपरा । अन्यथा " तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इति न्यायोपबृंहितसिद्धांतश्रुतिविरोधः स्यात् ।

तस्मान्न जीवेश्वरभिन्नत्वं न वा जगत्सत्यत्वं च भवतीत्यर्थः ॥ १० ॥ किं च कारणात्कार्यस्य भिन्नत्वं क्वापि न संभवतीत्याह । स्वर्णादिति । अनेकाख्या कटककुंडलाद्यनेकनामवती अलंकृतिः जातावेकवचनम् । अलंकाराः सुवर्णात्स्वरूपतः तद्भावतः सुवर्णसत्तातोऽपि भेदं न प्राप्नुवंति अलंकारस्य स्वरूपं सत्ता च सुवर्णान्न भिद्यत इत्यर्थः । यद्वदलंकारः सुवर्णान्न भिद्यते तद्वत् पूर्वं मध्ये अंते च स्थितादधिष्ठानरूपाद्ब्रह्मणः सकाशादेतद्विश्वं पृथक् नास्ति । विश्वसत्तास्वरूपे विवर्ताधिष्ठानाद्ब्रह्मणोऽन्यत्र न भवत इत्यर्थः । अत्र श्रुतिप्रमाणमाह—सर्वमिति । अस्मादभिन्नत्वाद्धेतोः सर्वमिदं जगत् ब्रह्मैवास्ति खलु । इति श्रुतिः । इह नाना किंचन नास्तीति च श्रुतिरद्वितीयमेकं परं ब्रह्मैवास्तीति वदति । तथा हि " सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचन एकमेवाद्वितीयं ब्रह्म । अयमात्मा ब्रह्म तत्त्वमसि " इत्याद्याः श्रुतयः सर्वं ब्रह्मैवास्ति न तद्व्यतिरिक्तं किंचिदस्तीति वर्णयंति । न

स्वर्णान्नो भिदमेत्यलंकृतिरनेकाख्या च तद्भावतस्तद्वद्ब्रह्मण एतदस्ति न पृथक्प्राङ्मध्यमांतस्थितात् ॥ सर्वं खल्विदमस्ति तद्धि वदतीत्यस्माद्धि हेतोः श्रुतिर्नानेहास्ति न किंचनेति च परं ब्रह्मैकमेवाद्वयम् ॥ ११ ॥ वर्षांतावधि वाद इत्थमुभयोः पत्रस्थवेदोक्तिभिर्जातोऽयं द्विपुरस्थयोरथ यतिर्नाभूत्क्षमोऽस्योत्तरे ॥ स्वीयैस्तत्पुरतो ययौ द्रुतमथो ज्ञात्वेत्यसौ भास्करं कृष्णांकं गत आनयन्निजपुरस्तं चंद्रसेनान्नृपात् ॥ १२ ॥

च तत्त्वमस्यादिवाक्येषु जीवस्येश्वरसदृशत्वं वर्ण्यत इति वाच्यम् । तत्र सादृश्यप्रतिपादकशब्दाभावादीश्वरत्वमेव प्रतिपाद्यते । तस्मान्न जीवस्येश्वरभिन्नत्वं भवति तेन चास्मन्मतस्याद्वैतस्य सिद्धौ सत्यां द्वैतमतस्थस्य तव वृथैव दंभेन लोके प्रतिष्ठासंपादकत्वं लोकबुद्धिभ्रामकत्वं चास्तीति भावः ॥ ११ ॥ इत्थं पर्जन्यकालसमाप्तिपर्यंतं द्विनगरस्थयोर्यतिभास्करयोः पत्रस्थवेदवचनैः वादोऽयं जातः । अथ यतिः अस्य भास्करपत्रस्य उत्तरे समर्थो नाभवत् यदा तदा स्वकीयैः सह द्रुतं तत्पुरतस्तन्नगराद्ययौ पलायनं कृतवानित्यर्थः । अथासौ भास्करः इति यतिप्रयाणं ज्ञात्वा कृष्णांकं कृष्णातीरं गतः सन् तं सत्यबोधयतिं प्रति चंद्रसेननाम्नो नृपात् नृपेण निजपुरः स्वाग्रभागे आनयत् । स्वपराजये सतीच्छितं दास्यामीति प्रतिज्ञावतो यतेः सकाशात् इष्टलब्ध्यर्थं स्वस

मीपे राजबलेनानीतवानित्यर्थः ॥ १२ ॥ वित् पंडितो भास्कररायः स्वाग्रभागे प्राप्तं यतिं दृष्ट्वा उत्तमासने स्थापितवान् च पुनः मंदहास्येन इत्थं वदति हे यतिवर्य पत्रस्योत्तरमदत्त्वा त्वम् आत्मनिवासाधानकरः प्रयाणकर्ताऽभूः । मत्पत्रोत्तरमदत्त्वा तव पलायनं नोचितमिति भावः । मत्तमयूरं वृत्तम् ॥ १३ ॥ त्वं मां जित्वा चक्रमुखांकं चक्रादिचिह्नयुक्तं कुरु । अथ नोचेन्नो जेष्यसि चेत् तर्हि यदहं याचे तद्व्रतता देयं दातव्यम् । हे आर्य प्राक् पूर्वं नौ आवयोः गदितं प्रतिज्ञातं यत् तत् विस्मृत्याढ्यं विस्मृत्या युक्तं नैवास्ति न विस्मृतमित्यर्थः । हि यस्मादार्यास्त्वादृशश्रेष्ठपुरुषाः एकम् एकवारं जल्पंति । तदन्ये अनार्याः अनेकवारं जल्पंति । तस्मात्सकृत्प्रतिज्ञातं यत्तत्कुर्वित्यर्थः ॥ १४ ॥ अथेति श्रुत्वा पंडितवर्यम् एनं भास्करं यतिश्चाह ते तव किं याच्यं

प्राप्तं स्वाग्रे भास्कररायो यतिमीक्ष्य सन्मानात्तं स्थापितवान्विद्वरपीठे॥मंदाद्धास्याच्चावदतीत्थं किमदत्त्वा पत्रस्योक्तिं यानकरश्चात्मनिवासात् ॥ १३ ॥ जित्वा मां त्वं चक्रमुखांकं कुरु शिष्यं नोचेद्याचे देयमथो तद्व्रतार्य ॥ विस्मृत्याढ्यं प्राग्गदितं नैव हि नौ तज्जल्पंत्यार्या एकमनेकं तु तदन्ये ॥ १४ ॥ श्रुत्वेत्येनं प्राह यतिश्चाथ बुधार्यं याच्यं किं ते ब्रूहि यदेवास्ति समीपे ॥ त्वद्योग्यं तद्दीयत एव प्रियमंतर्विद्वांछा हि क्वापि भवेदेव न मोघा ॥ १५ ॥ रायः प्राहाहं न च याचकवद्यांचां कुर्वे प्रातिज्ञं तु विजित्यात्र भवंतम् ॥ प्रागुक्त्या ते कन्यां पूर्वानुजजनितां तन्वीं याचे यास्ति किलापूर्णदशाब्दा ॥ १६ ॥

याचितुं योग्यं तत्कथय । अस्मत्समीपे त्वद्योग्यं यदस्ति अन्तः मनसि प्रियं तन्मया दीयत एव तुभ्यमर्प्यत एव । हि यस्माद्विद्वांछा विद्वदिच्छा कुत्रापि मोघा निष्फला न भवेत् । यदिच्छसि तद्ददामीत्यर्थः ॥ १५ ॥ इति श्रुत्वा रायो भास्कररायस्तं प्राह । अहं याचक इव याच्ञां न करोमि किंतु प्रातिज्ञं प्रतिज्ञाकर्तारं त्वां वादेन जित्वा प्रागुक्त्या पूर्वप्रतिज्ञया ते तव पूर्वं पूर्वाश्रमे योऽनुजस्तेन जनितामुत्पादितां तन्वीं कन्यां याचे । ननु बहुवयसे तुभ्यमस्माभिरल्पकन्याप्रदानं कथं कर्तव्यं तवापि अल्पकन्यास्वीकरणमनुचितमित्याशंक्याह । या कन्या न पूर्णं दशाब्दं यस्याः सा किंचिन्न्यूनदशवर्षवयस्का

अस्तीत्यर्थः ॥ १६ ॥ ननु तथापि त्वं बहुवयाः प्रतिभासि कथं ते कन्याऽर्पणीयेत्याशंक्याह–त्रिंशदिति । अहं तु त्रिंशद्वर्षेषु किंचिन्न्यूनवयाश्चास्मि किल । "त्रिगुणाधिकवर्षाय न देया जातु कन्यका" इति वचनोक्त एवं दोषोऽपि इह मयि ईषदपि नास्ति किल । अतस्त्वं मत्कुलादौ च संशयहीनः सन् एनां भ्रातृकन्यां देह्येव ॥ १७ ॥ अदः इदं भास्करवाक्यं श्रुत्वा यतिः प्राह । इयं मे पूर्वाश्रमबंधुजन्या कन्या धन्यास्ति खलु चेत् यदि इयं कन्या सर्वत्र पूज्यस्य तव पत्नी भवेत्तर्हि सापि धरायां नृपादिभिः पूज्या भवित्री नूनम् ॥ १८ ॥ अहं च श्रोत्रगतया अस्याः कीर्त्या धन्यो भोयम् । किंच आद्याः श्रेष्ठाः यस्य ते तव सौहृदमिच्छंतः संतः बहुवित्तैः सह कन्यां दातुं कृतप्रयत्ना भवंति । यद्वा ते तुभ्यं कन्यां दातुमिति योज्यम्

त्रिंशद्वर्षैषूनवयाश्चास्मि किलाहं त्रैगुण्योर्ध्वाब्दाय वरायापि न कन्या ॥ देयेत्येवं दोष इहैषन्न किलातो देह्येवैनां संशयहीनश्च कुलादौ ॥ १७ ॥ आकर्ण्यादो भास्करवाक्यं यतिराह कन्येयं प्राग्बंधुभवा मे खलु धन्या ॥ चेत्स्यात्पत्नी चाखिलपूज्यस्य धरायां पूज्या नूनं सापि भवित्री नृपमुख्यैः ॥ १८ ॥ धन्यश्चाहं श्रोत्रगयाऽस्याः खलु कीर्त्या यस्येच्छंतः प्रार्थनया सौहृदमाद्याः ॥ कन्यां दातुं ते कृतयत्ना बहुवित्तैः सोऽजो जामातासि सुहृद्वै खलु जातः ॥ १९ ॥ इत्याद्युक्त्वाऽऽनीय सुतां तां निजबंधोः प्राहाथार्यं सोऽपि च दत्तेयमथापि ॥ ब्राह्मादेवोद्वाहविधानात्पितुरेव स्वीकर्तव्या नेतरदानप्रतिमेयम् ॥ २० ॥ प्राहाथैनं भास्कररायोऽस्तु तथैवाथाप्येषा मे तिष्ठतु पत्न्या निकटे वै ॥ पत्रैरुद्वाहोक्तसुकाले भवदीयैरेत्यैवास्मद्दासमियं सद्विधि देया ॥ २१ ॥

सोयं भास्करोऽनायासेन जामाताऽतिसुहृत् खलु जातोऽस्ति त्वत्सदृशे जामातरि सति अस्माकं कन्यायाश्च महद्भाग्यमिति भावः ॥ १९ ॥ सोऽपि यतिरित्युक्त्वा निजबंधोः सुताम् आनीयार्य भास्करं प्रत्याह । इयं मया तुभ्यं यद्यपि दत्तास्ति तथापि ब्राह्मविवाहविधिना पितुः सकाशात्स्वयां गीकार्या इयम् इतरदानसमाना नास्ति यतः कन्यादानम् इतरदानसमानं न भवति । अतो ब्राह्मविधिना पितुः सकाशात्स्वीकरणमेव युक्तमिति भावः ॥ २० ॥ अथ भास्कररायस्तथैवास्तु इति एनं यतिं प्राह अथापि एषा तावत्पर्यंतं मम पत्न्या निकटे तिष्ठतु । मया प्रेषितपत्रैरुद्वाहोक्तसु

काले भवदीयैर्बंध्वादिभिः कर्तृभिः अस्मद्दासस्थानमेत्यैव सद्विधि यथा स्यात्तथेयं दातव्या ॥ २१ ॥ ननु बालेयं स्वकीयान् त्यक्त्वाऽपरिचितजनसं कुले त्वन्निकटे कथं स्थास्यतीत्याशंक्याह–स्थित्वेति । एषात्र त्रिदिनं स्थित्वा मात्रादीन् स्वकीयान्प्रति गंतुम् । हीति निश्चयेन । इच्छति यदि अथवा स्मदीयानामग्रे वक्तुमक्षमा सती दुःखान्वितचित्ता यदि तर्हि भवद्भिः स्वकीयस्थाने नेतव्या । यदीयं सुखयुक्ता स्वीयान्प्रति गंतुं वा नेच्छति तदा भव द्भिरत्र स्थाप्या अर्पितवस्तुनि भवतां सत्त्वं नहि भवतु । अस्याः नयनं आनयनं वाऽस्मत्सत्त्वैवास्तु । न चार्पितवस्तुनि भवद्भिः सत्ताकरणमुचितमिति भावः ॥

स्थित्वा चैषा चेत्त्रिदिनं हीच्छति गंतु स्वीयान्मात्रादीनथ दुःखान्वितचित्ता ॥ नेया स्वीये स्थान इयं चेत्सुखयुक्ता स्थाप्या दत्ते वस्तुनि सत्त्वं नहि वोऽस्तु ॥ २२ ॥ सत्यबोधोऽथ मत्वेत्थं भास्करार्याग्रहं सुताम् ॥ स्वैकान्वितां च संस्थाप्य ययौ सर्वैः स्थलां तरम् ॥ २३ ॥ यतिबंधुर्निजां कन्यां ज्ञात्वाऽद्वैतवरार्पिताम् ॥ क्षुब्धचित्तोपि नो किंचिद्वक्तुमीशः पुरो यतेः ॥ २४ ॥ मनस्याह हनिष्येऽहमभिचारेण भास्करम् ॥ प्राग्विवाहात्परं वाऽर्यं वैधव्यं दुहितुर्यतः ॥ २५ ॥ गुरुर्वीक्ष्याथ तां दूरात्संकेतादात्मकन्यया ॥ क्रीडंतीं प्रेषयामास पद्मावत्यंकतः शनैः ॥ २६ ॥ भर्तृमानसवेत्री सा तामायांतीं विलोक्य च ॥ तोषयामास मधुरैर्वाक्यैर्मा तात्मजामिव ॥ २७ ॥

॥ २२ ॥ स्वकीयैकान्वितां स्वकीयैकस्त्रीयुक्तां कन्यां स्थाप्य सर्वैः सह स्थलांतरं ययौ ॥ २३ ॥ अद्वैतमतस्थाय वरायार्पितां । यतेः सत्यबोधाख्यस्य पुरः अग्रे वक्तुं समर्थो नाभवत् ॥ २४ ॥ विवाहात्प्राक् परं वा भास्करं नाशयिष्यामि । ननु तेन कर्मणा तव कन्या विधवा भविष्यतीत्याह–आर्य मिति । अतः अद्वैतमतस्थजामातृसंगात् दुहितुर्वैधव्यम् आर्यं श्रेष्ठमस्ति ॥ २५ ॥ अथ गुरुर्भास्करस्तां क्रीडंतीं कन्यां दूराद्दृष्ट्वा संकेतेन तस्या आत्मक न्यया पद्मावतीसमीपे शनैः प्रेषयामास तस्याः वशीकरणार्थमित्यर्थः ॥ २६ ॥ भर्तुर्मानसं कन्यावशीकरणं कर्तव्यमित्यभिप्रायं वेत्तीति सा पद्मावती ॥ २७ ॥

पद्मावतीत्यध्याहारः ॥ २८ ॥ घस्रैर्दिनैः स्ववशम् आत्माधीनतां निन्ये स्वाधीनां चकारेत्यर्थः ॥ २९ ॥ ३० ॥ ३१ ॥ इयं पद्मावती ॥ ३२ ॥ तस्याः कन्याया मात्रे तयाऽऽप्तकन्यया तत् अहं नायास्य इति कन्यावचनम् ॥ ३३ ॥ अथेति द्वयोरन्वयः द्विजातेः कर्मणि स्मृतिवाक्येन अनर्हां ज्ञात्वाऽस्यै प्रायश्चित्तं दातुं चंद्रसेननृपद्वारा काशीस्थबुधान् द्रव्यलोलुपान्पत्रैरानयत्। तप्तमुद्रानिषेधस्तु धर्मशास्त्रे उक्तः। 'शंखं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा। स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः" इति ॥ ३४ ॥ ३५ ॥ स भास्करस्तैः काशीस्थपंडितैः सह बह्वीः स्मृतीः पश्यन्

भक्ष्यं तु मधुरं दत्त्वा स्वांके स्थाप्य तया सह ॥ कुबेराक्षादिभिश्चक्रे क्रीडनं तन्मनो यथा ॥ २८ ॥ स्नानभोजनशय्यादि तस्याः संतोषकारकम् ॥ कुर्वती तां त्रिभिर्घस्रैर्निन्ये सा स्ववशं सती ॥ २९ ॥ यासीदन्या तया साकं मातुराताथ साब्रवीत् ॥ गच्छेऽत्रज्जननी मद्यायासि वा नेति मां वद ॥ ३० ॥ साऽब्रवीत्तां न यास्येऽहं मातरं मेंऽबिका यतः ॥ बह्वपत्या ममैकस्याः स्नेहं नैव करोति सा ॥ ३१ ॥ मातुः स्नेहाधिकेयं हि स्नानाशनविलेपनैः ॥ क्रीडत्यपि मयाऽतोऽहं स्थास्येऽत्रैवानया सह ॥ ३२ ॥ इत्थं बालावचस्तस्याः प्रोक्तं मात्रे तयाथ तत् ॥ शिष्यैः श्रुत्वा यतिः खिन्नो ययौ तस्मात्पुरांतरम् ॥ ३३ ॥ अथ भास्कररायस्तां तप्तमुद्राविदूषिताम् ॥ ज्ञात्वानर्हां द्विजातेर्वै कर्मणि स्मृतिवाक्यतः ॥ ३४ ॥ प्रायश्चित्तं दातुमस्यै चंद्रसेननृपाद्बुधान् ॥ काशीस्थानानयत्पत्रैर्बहुस्वर्णादिलालसान् ॥ ३५ ॥ तैः स पश्यन्स्मृतीर्बह्वीरिदं पाराशरस्मृतौ ॥ प्रायश्चित्तं विलोक्यास्याश्चक्रे विप्रैस्तदुक्तवत् ॥ ३६ ॥ तुष्टाः स्वर्णादिदानेन काशीस्थाश्चाययुस्ततः ॥ वर्णयंतो भास्करस्य विद्यामोजः सुशीलताम् ॥ ३७ ॥

पाराशरस्मृतौ तस्यास्तप्तमुद्रादूषितकन्याया इदं प्रायश्चित्तं विलोक्य तदुक्तवत्स्मृत्युक्तवत् विप्रैर्निमित्तभूतैश्चकार ब्राह्मणद्वारा कृतवानित्यर्थः। यथोक्तं तत्त्वकौस्तुभे वह्निपुराणे—"पूर्वजस्य तनुं दग्धां शंखचक्रादिभिः पृथक्। केशान्संवापयित्वाथ पुनः कर्म समाचरेत् ॥ गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्वकम्। षष्ट्यावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदाहृतम् ॥ ३६ ॥ ३७ ॥

॥ ३८ ॥ तत्र कृष्णातीरे ॥ ३९ ॥ मृषेंदुज्योतिःप्रमुखैः मिथ्याभूतचंद्रज्योतिःप्रमुखैर्वाद्यैः वेश्यानामुक्तिभिर्गायनैर्नर्तनैश्च महान्समारंभ आसीदित्यन्वयः ॥ ४० ॥ वस्त्रैरन्नैरर्थैश्चाखिलानां वासोन्नार्थयाचकानां प्रियः ॥ ४१ ॥ राज्ञा चंद्रसेनेन वधूरंशुकादिभिः पूजितेत्यपकर्षः । श्रेष्ठैः श्रेष्ठपुरुषैर्मिथो ज्ञातिजनाः पूजिताः वधूजनाश्रये वधूमंडपे भास्करं स्वकीयपाचितमन्नं जगृहे माध्वैर्दत्तं किंचिज्जलमपि न गृहीतवान् । सूतसंहितास्थब्रह्मगीतायाम्—"एकस्यामपि पंक्तौ तैः सार्द्धं वैदिकसंस्थितः । मोहेनापि न भुंजीयाद्भुक्त्वा चांद्रायणं चरेत् । न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः" इत्यादि ।

विवाहोक्तेऽथ कालेऽसौ पत्नीपक्षसुहृज्जनान् ॥ पत्रैस्तत्रानयन्माध्वान्पितृबंधुमुखान्नृपात् ॥ ३८ ॥ चंद्रसेननृपः पत्न्या सेनाढ्यस्तत्र चावसत् ॥ वैवाहिकं मंडपादि चकारामात्रसंकुलम् ॥ ३९ ॥ ययुर्माध्वमतीयाश्च धनिनः परिलेखकाः ॥ मृषेंदुज्योतिःप्रमुखैर्वाद्यैर्वेश्योक्तिनर्तनैः ॥ ४० ॥ समारंभो महानासीद्वासोऽन्नार्थाखिलप्रियः ॥ महार्हांशुकभूषाद्यैर्माध्वैः संपूजितो वरः ॥ ४१ ॥ राज्ञा वधूस्ततः श्रेष्ठैर्मिथो ज्ञातिजनास्तथा ॥ वधूजनाश्रयेऽप्यन्नं भास्करः स्वीयपाचितम् ॥४२॥ जगृहे न जलं चैषन्माध्वैर्दत्तं स्मृतिज्ञराट् ॥ पार्वत्याख्यां चकारैनामुद्वाह्येत्थमिहावसत् ॥ ४३ ॥ स्वं स्वं स्थानं ययुः सर्वे द्वैतिनः कन्यकां विना ॥ शिल्पिभिश्चाकरोत्तत्र देवालयमथो गुरुः ॥ ४४ ॥ श्रीचक्राभं तत्र शक्त्या पांडुरंगं न्यवेशयत् ॥ प्रासादवास्तु चक्रेऽस्य बहुवित्तव्ययेन सः ॥ ४५ ॥ ज्ञात्वा भास्कररायोऽसावनपत्यं नृपं ततः ॥ तत्पत्नीं खिन्नचित्तां च पुत्रेष्टिं तमृत्विगन्वितः ॥ ४६ ॥ यज्वा स्वयं चकारांग बह्वन्नां शुकदक्षिणाम् ॥ हविःशेषं प्रसादं च राज्ञ्यै भक्त्याढ्यचेतसे ॥ ४७ ॥

यतः स्मृतिज्ञानां राट् श्रेष्ठः इति योज्यम् ॥ ४२ ॥ स भास्कर इत्यपकर्षः । एनां कनिष्ठवधूं पार्वतीनाम्नीं चकार इत्थं प्रकारेणैनामुद्वाह्य इह कृष्णातीरेऽवसत् ॥ ४३ ॥ तत्र कृष्णातीरे ॥ ४४ ॥ श्रीचक्रसदृशमिति पूर्वान्वितम् । तत्र देवालये शक्त्या रुक्मिण्या युक्तम् ॥ ४५ ॥ ज्ञात्वेति सार्द्धान्वयः । नृपं चंद्रसेनम् ॥ ४६ ॥ अंगेति देशिकेंद्रसंबोधनम् उत्तरार्द्धमुत्तरान्वयि ॥ ४७ ॥

ननु हविःशेषं शूद्रपत्न्यै कथं दत्तवान् इत्यत आह। भैरवशक्त्ये चंद्रसेनस्य भैरवावतारत्वात्। ननु कुत एतज्ज्ञातमत आह त्रिवित् त्रिकालज्ञः। सा राजपत्नी तत् हविः॥ ४८ ॥ ४९ ॥ प्राचीं दिशमिति पूर्वोन्वितम् ॥ ५० ॥ ५१ ॥ इत्याद्युत्तरान्वयि ॥५२॥५३॥ आवयोर्वचः असत्यं न भवेदित्यन्वयः ॥ ॥ ५४ ॥ द्वाभ्यां कन्यापुत्राभ्यामन्यन्नपुंसकम् अपत्यं भविष्यति ॥ ५५ ॥ गुरुं भास्करं तस्मिन्भास्करे अंतरं चित्तं यस्य सः कोऽसौ नारायणाख्य

अद्रिजात्यै च स ददौ त्रिविद्भैरवशक्तये ॥ सा तद्भुक्त्वा दधाराथ पत्युर्गर्भं पतिव्रता ॥ ४८ ॥ गुरुरित्याह राजानं पुत्रस्ते भविता ध्रुवम् ॥ ततो ययौ भास्करार्यः साध्वीमाध्वीयुतोऽखिलैः ॥ ४९ ॥ दिशं प्राचीमथो राजा पत्न्याढ्यो भालकीमगात् ॥ अंतर्वत्नीं धर्मपत्नीं पश्यंस्तुष्टोऽवसत्पुरे ॥ ५० ॥ सिद्धवाक्तावदायातः ख्यातो नारायणाभिधः ॥ तं नत्वा नृपतिः पत्न्या प्राहेयं शास्ति गर्भिणी ॥ ५१ ॥ अस्याः पुत्रोऽथवा कन्या भविष्यति वदाद्य मे ॥ प्राह सिद्धोऽथ कन्यैव भवित्रीति निशम्य सः ॥ ५२ ॥ खिन्नो नृपः पुनः प्राह भास्करार्यो गुरुर्मम ॥ अब्रवीत्पुत्रमेवास्यास्त्वयोक्ता कन्यका कथम् ॥ ५३ ॥ पुनर्नारायणः प्राह त्वया श्रद्धां गुरूदिते ॥ अकृत्वा मे कथं पृष्टं चावयोरुभयोर्वचः ॥ ५४ ॥ नैवासत्यमतोऽपत्यं द्वाभ्यामन्यद्भविष्यति ॥ इत्युक्त्वा स गतः सिद्धः श्रुत्वा राजातिदुःखितः ॥ ५५ ॥ प्रतीक्षन्गुरुमेवासौ तस्थौ पत्न्या तदंतरः ॥ श्रीमयूरेश्वर उवाच ॥ कोऽसौ नारायणः सिद्धः प्रोच्यतां तत्कथानकम् ॥ ५६ ॥ श्रीदेशिकेंद्र उवाच ॥ श्रीरामो रावणं हत्वा प्राप्तोऽयोध्यां तदाखिलाः ॥ सिद्धास्तं वर्णयामासुः कश्चित्तत्रेति चाब्रवीत् ॥ ५७ ॥ हतोऽयं ब्राह्मणोनेन किं तत्क्षत्रियवैभवम् ॥ श्रीरामोऽथ निशम्येति चापश्यत्पृष्ठतः स्वयम् ॥ ५८ ॥ ब्रह्महत्यां करालास्यामुन्नतां रावणाकृतिम् ॥ तां निवारयितुं रामो जपदानादि चाकरोत् ॥ ५९ ॥

सिद्धस्तस्य कथानकं भवद्भिः प्रोच्यतामिति मयूरेश्वरोक्तिः। भास्करवाक्यस्याप्यन्यथाकर्ताऽयं महासिद्धोस्तीति तत्कथाऽवश्यं श्रोतव्येत्यर्थः ॥ ५६ ॥ श्रीदेशिकेंद्रगुरुः प्राचीनकथापूर्विकां नारायणसिद्धस्य कथां प्राह श्रीराम इत्यादि यावत्सर्गसमाप्ति ॥ ५७ ॥ अयं रावणः॥५८॥ पूर्वान्वितम् ॥५९॥

पृष्ठे पृष्ठदेशे प्राप्ताऽभवत् ॥ ६० ॥ ६१ ॥ ६२ ॥ तदाप्रभृति नरावणीतिनाम्ना तत्तीर्थमभवत् तदाख्यया नरावणीत्याख्यया ग्रामोपि विख्यातोऽभवत् । पूर्वार्द्धं पूर्वान्वयि । तत्रेत्यादि उत्तरान्वयि ॥६३॥६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ तादृक् बहुवयस्का

स्नपंश्च बहुतीर्थेषु धरां बभ्राम चाखिलाम् ॥ तथापि साऽभवत्पृष्ठे दर्शयंती भयं मुहुः ॥ ६० ॥ अथाययौ वसिष्ठेन दक्षिणाशां रघूद्वहः ॥ दर्शितं गुरुणा तीर्थं प्राचीनं ब्रह्मनिर्मितम् ॥ ६१ ॥ स्नानमात्रेण तस्मिन्स ब्रह्महत्यां स्वपृष्ठतः ॥ रावणाभां न चापश्यत्तदाप्रभृति चाभवत् ॥ ६२ ॥ नरावणीति तत्तीर्थं ख्यातो ग्रामस्तदाख्यया ॥ तत्र विप्रार्भकः कश्चित्कृतोद्वाहो दशाब्दकः ॥ ६३ ॥ मृतांबाजनकः पत्नीं निधाय श्वशुरालये ॥ सिद्धिकामो भ्रमन्पृथ्व्यां प्राप्तोऽसौ भ्रमरांबिकाम् ॥ ६४ ॥ तत्रारण्ये तपश्चक्रे विजने हिंस्रसंकुले ॥ स्वतःपतितपर्णानि चाश्नन्स्नात्वामले जले ॥ ६५ ॥ जपन्ब्रह्म परं तिष्ठन्देव्यग्रे यतमानसः ॥ कदाचिद्भीषयंतिस्म पिशाचा उग्ररूपिणः ॥ ६६ ॥ न स भीतोऽतिधैर्याढ्योऽथाप्सराश्चागता क्वचित् ॥ तां तपोघ्नीमसौ प्राहाबले नारायणोऽस्म्यहम् ॥ ६७ ॥ न त्वया धर्षितुं शक्यो ह्यंबाश्रयबलाद्बली ॥ पंचत्रिंशद्वर्षमिति तेन तप्तं तपोऽचलम् ॥ ६८ ॥ अथ शुश्राव सहसा स वाचं ह्यशरीरिणीम् ॥ त्वं देवोऽसीति यद्ब्रूषे तत्सत्यं भविता ध्रुवम् ॥ ॥ ६९ ॥ इत्थं श्रुत्वांबिकां नत्वाऽरण्यपुष्पफलार्चिताम् ॥ मत्वा निजतपःसिद्धिं स्वीयं देशमगात्ततः ॥ ७० ॥ अर्वाक्स्वग्रामतः सोऽष्टक्रोशावधिपुरं गतः ॥ तत्र देवालये तिष्ठन्मारुतेश्चाब्रवीदिति ॥ ७१ ॥ चत्वारिंशद्वत्सरोर्ध्वं गतायुः खल्वहं मम ॥ स्त्री च तादृग्घि तस्यास्तु नाधुनापत्यसंभवः ॥ ७२ ॥ कार्या चेदपरा भार्या केन मे दीयतेऽधुना ॥ तपःकृशायोद्वयसे चानाप्ताय दरिद्रिणे ॥ ७३ ॥ चिंतयन्निति शुश्राव गमागमवतां वचः ॥ कस्यचिद्धनिनः कन्यां कुमारीं च दशाब्दिकाम् ॥ ७४ ॥ द्विजस्यैव मृतां ज्ञात्वा स्वशाखीयस्य चाथ सः ॥ ययौ तद्गृहमेकाकी कन्यातातं सुदुःखितम् ॥ ७५ ॥

अपत्यसंभवः पुत्रोत्पत्तिः न भविष्यतीत्यध्याहारः ॥ ७२ ॥ ७३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ७४ ॥ कन्या तातं सुदुःखितं दृष्ट्वेत्युत्तरान्वयि ॥ ७५ ॥

अंत्यकर्मिणोंऽत्यकर्मकर्तुन् ॥ ७६ ॥ त्वं निःस्वे धनहीनेऽपि वृद्धेऽपि मयि स्वकीयैश्वर्यादधिकं मम तत् ऐश्वर्यं तपोबलेन द्रक्ष्यसे अवलोकयिष्यसीति संबं
धः । तपोबलेन ममैश्वर्यप्राप्तिर्भविष्यतीत्यर्थः ॥ ७७ ॥ एवं दारिद्र्यचिंता न कार्येत्युक्त्वा वृद्धत्वचिंता न कार्येत्याह । अथेति मत्पुरः ममाग्रे ॥ ७८ ॥
प्राक् पूर्वमेनां सजीवां कुरु ॥ ७९ ॥ अथैनां तुभ्यमेव दास्ये अस्याः नैःस्व्यं निर्धनत्वं वैधव्यं वा मरणाधिकं न पश्यामि हि यतो धनी धनवानस्मि धन

दृष्ट्वा प्राह तपस्वीति वारयंश्चांत्यकर्मिणः॥मह्यं चेद्दीयते कन्या सजीवा क्रियते मया॥७६॥नो चिंता भवता कार्या मय्यतीतवयस्यपि॥
निःस्वेऽपि त्वं निजैश्वर्याद्धिकं मे तपोबलात् ॥ ७७ ॥ द्रक्ष्यसे ह्यथ ते कन्या भूत्वा पुत्रान्विता मया ॥ प्रपंचे भोक्ष्यति सुखं दिवं
यास्यति मत्पुरः ॥ ७८ ॥ श्रुत्वेदं धनिकस्तस्य वचः सत्यं स वीक्षितुम् ॥ प्राह नारायणं सिद्धं प्राकुरुष्वैनां सजीविताम् ॥ ७९ ॥
तुभ्यमेवाथ दास्येऽहं निःस्वायोद्वयसेऽपि च ॥ नेक्षेऽस्यास्तु मृतेर्नैस्व्यं वैधव्यं ह्याधिकं धनी ॥ ८० ॥ श्रुत्वैवेति वचः सिद्धः
स्मरन्स्वीयेष्टदेवताम् ॥ स्वपात्रस्थं जलं तस्मिन्प्रेते चिक्षेप सत्यवाक् ॥ ८१ ॥ तावदद्भुतमेवाभूत्स्वापादिव मृतेश्च सा ॥ स्वयमेवो
त्थिता वीक्ष्य पित्राद्यास्तां मुदं ययुः ॥ ८२ ॥ ज्ञात्वानुष्ठानमेतस्य पंचत्रिंशच्छरत्कृतम् ॥ भोजयामास तत्पूर्त्यै ब्राह्मणान्धनिकः
स्वयम् ॥ ८३ ॥ निष्कासितजटायाथ कृताभ्यंगाय मंगलैः ॥ नारायणाय विधिना धनिकः स ददौ सुताम् ॥ ८४ ॥ वस्त्रालंकार
सहितां पारिबर्हपुरस्कृताम् ॥ वस्त्रालंकारयुक् सिद्धस्तां गृहीत्वा सुयानतः ॥ ८५ ॥ स्वपुरं स ययौ भृत्यैः स्वीय एव गृहेऽवसत् ॥
अकुड्यारमच्छन्नं वीक्ष्य गेहं स सिद्धवाक् ॥ ८६ ॥ अथाहूय स भृत्येन तत्रत्यं चाधिकारिणम् ॥ तमुवाचेति न ज्ञातस्त्वयाहं स्वपु
रस्थितः ॥ ८७ ॥ पंचत्रिंशद्वर्षमितं कृत्वाहं श्रीनगे तपः ॥ प्राप्तसिद्धिरिहायातो मार्गे चोद्वाह्य कन्यकाम् ॥ ८८ ॥

हीनाया विधवायाः पालने समर्थोऽस्मि अत एनां जीवयेत्यर्थः ॥ ८० ॥ ८१ ॥ मृतेः मरणावस्थातः ॥ ८२ ॥ एतस्य सिद्धस्य पंचत्रिंशद्वर्षपर्यंतं
कृतम् अनुष्ठानं ज्ञात्वा तत्पूर्त्यै अनुष्ठानपूर्णतायै ॥ ८३ ॥ ८४ ॥ पूर्वार्द्धं पूर्वान्वयि । उत्तरार्द्धमुत्तरान्वयि । ॥ ८५ ॥ भृत्यैः श्वशुरार्पितसेवकैः सह ।
उत्तरार्द्धं परान्वयि । न कुड्यानि अररं कपाटं च यस्य अच्छन्नम् आच्छादनरहितम् ॥ ८६ ॥ स्वनगरस्थोहं त्वया न ज्ञातोऽस्मि ॥ ८७ ॥ ननु एताव

स्कालपर्यंतं कुत्र स्थितोऽसीत्याशंक्याह अहं श्रीनगे श्रीशैले पंचत्रिंशद्वर्षपर्यंतं तपः कृत्वा ततः प्राप्तसिद्धिः सन् मार्गे मृतां कन्यां संजीव्य तां चोद्वाह्य इहा गतोऽस्मीत्यन्वयः ॥ ८८ ॥ सोहमच्छन्ने आच्छादनरहिते गृहे स्थितोऽस्मि अतस्त्वमपि अत्र ग्रामे अधिकारवान्मम गृहं सम्यक् कुरु ॥ ८९ ॥ नो चेत् सम्यग्गृहं न करोषि चेत्तर्हि मम सिद्धेर्यथा सामर्थ्यं तथा द्रुतं द्रक्ष्यसे अवलोकयिष्यसि । इत्थमिति परान्वयि ॥ ९० ॥ ९१ ॥ ९२ ॥ पंग वश्च अंधाश्च नवाक् सुत स्त्री येषां ते गदिनो नारायणसिद्धस्य उक्तिभिः स्वस्वेष्टं प्रापुः ॥ ९३ ॥ कदाचित्स नारायणाख्यः सिद्धः श्रीशेन विष्णुना

मृतामपि च संजीव्य सोऽच्छन्नेऽहं गृहे स्थितः ॥ त्वं चात्रत्योऽधिकारीति सम्यक्कुरु गृहं मम ॥ ८९ ॥ नोचेद्द्रक्ष्यसि सामर्थ्यं मम सिद्धेर्द्रुतं यथा ॥ इत्थं श्रुत्वा सिद्धवाक्यं सोऽधिकारी भयान्वितः ॥ ९० ॥ तेजस्विनस्तस्य मुखमीक्षितुं चाक्षमः स्वयम् ॥ पुरस्थैः कारयामास त्रिदिनैस्तद्गृहं महत् ॥९१॥ धनधान्यान्वितं कृत्वा ददौ तस्मै तपस्विने ॥ नित्यमेत्य स्वयं यद्यन्न्यूनं तच्च ददाति सः ॥ ॥ ९२ ॥ बहवोऽथ ययुस्तत्र पंग्वंधावाक्सुतास्त्रियः ॥ गदिनोऽधनिनश्चापुः स्वेष्टं नारायणोक्तिभिः ॥ ९३ ॥ ययौ कदाचित्स च वेंकटाद्रिं श्रीशेरितः पूजितुमत्र गुप्तम् ॥ श्रीचक्रमंतर्न च गंतुमीशो निवारितश्चाखिलपूजकैः सः ॥ ९४ ॥ क्रुद्धः स नारायण एक मुच्चं चाश्मानमीशालयतो बहिस्तात् ॥ संस्थाप्य चाकर्षयति स्म देवं मंत्रैः कलाभिः खलु मंत्रवेत्ता ॥ ९५ ॥ स्वप्ने समेत्याथ च पूजकांस्तान् श्रीवेंकटेशो वदतीति साक्षात् ॥ नयत्ययं मां बहिरेव मंत्रवेत्तातिकोपेन निवारणाद्यः ॥ ९६ ॥

प्रेरितः सन् अत्र पर्वते गुप्तं श्रीचक्रं पूजितुं वेंकटाद्रिपर्वतं प्रति ययौ यदा सर्वपूजकैर्निवारितस्तदा सः अंतर्गंतुं समर्थो नाभवत् । अपरिचितत्वान्निवारित इत्यर्थः ॥ ९४ ॥ एवं निवारितः स नारायणः क्रुद्धः सन् देवालयाद्बहिर्भागे एकमुच्चपाषाणं संस्थाप्य अत्र पाषाणे कलाभिः प्राणेंद्रियावयवैः सह देवं मंत्रैराकर्षयति स्म आकर्षितवान्खलु यतो मंत्रवेत्ता । मंत्रज्ञो हि मंत्रसामर्थ्येन देवं स्ववशं करोतीत्यर्थः ॥ ९५ ॥ अथ साक्षात् श्रीवेंकटेशस्तान्पूजका न्प्रति स्वप्नगतो भूत्वा इति वदति । इति किम् । वः निवारणात्प्रतिबंधेनातिकोपो यस्य सः मंत्रज्ञोऽयं मां देवालयाद्बहिर्नयतीत्यर्थः ॥ ९६ ॥

अथ भवद्भिः स एकः संप्रार्थनीयः निर्जने ममालये प्रवेशनीयः अथ स सिद्धमंत्रैर्मे पूजां करिष्यति यतः पूजनात् मदीया तुष्टिः संतोषः अचला स्थिरा स्यात् ॥ ९७ ॥ इति पूजकैः श्रीविष्णोराज्ञां ज्ञात्वाऽसौ नारायणः स्तुतः सन् देवालये प्रापितः । दत्तारे पिहितकपाटे स्थाने श्रीचक्रसहितं देवं स्वीकृतोपचारैस्तंत्रोक्तविधानेन पूजितवान् ॥ ९८ ॥ नारायणाख्यः सिद्धः इतिप्रभावः एवंसामर्थ्यवान् आसीत् । तस्य सिद्धेश्चरितानि विख्यातानि संति तानि विस्तरभयान्मया नोक्तानि । हि यतः येन भास्करगुरोरुक्तं पुत्रो भविष्यतीति वचनं व्यस्तमन्यथा कृतम् । स महान् सिद्धोऽभवदित्यर्थः ॥ ९९ ॥

संप्रार्थनीयोथ निवेशनीयो भवद्भिरेकोऽजन आलये मे ॥ पूजां करिष्यत्यथ सिद्धमंत्रैस्तुष्टिर्यतःस्यादचला मदीया ॥ ९७ ॥ इत्यर्चकैः श्रीरमणस्य चाज्ञां ज्ञात्वा स्तुतः प्रापित आलयेऽसौ ॥ देवं विधानादयजत्सचक्रं दत्तारे स्वीकृतसूपचारैः ॥ ९८ ॥ नारायणः सिद्ध इतिप्रभावः ख्यातानि सिद्धेश्चरितानि तस्य ॥ नोक्तानि विस्तारभयाद्धि येन व्यस्तं कृतं भास्करदेशिकोक्तम् ॥ ९९ ॥ जयाद्विवाहं गुरुभास्करस्य नारायणस्यापि कथां सुसिद्धेः ॥ शृण्वन् पठन्स्याद्विजयी सुभार्यः सुसिद्धकार्यश्च पुमान्सुभक्त्या ॥ १०० ॥ इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे भास्करानंदचरित्रे एकचत्वारिंशः सर्गः ॥ ४१ ॥ श्रीदेशिकेंद्र उवाच ॥ अथ श्रीभास्करार्यस्तु भ्रमन्कर्णपुरं ययौ ॥ यवनस्तत्र राजासीदविचार्युग्रशासनः ॥ १ ॥ मंत्री तस्याभवन्माध्वसंप्रदायी स भास्करम् ॥ द्वेष्टि येन जितः स्वीयाचार्यः शास्त्रोक्तिभिर्यतः ॥ २ ॥

एतत्सर्गोक्तकथाश्रवणादेः फलमाह—जयादिति । जयशाल्या भास्करस्य विवाहं सुसिद्धेर्नारायणस्य कथां च पुमान्सुभक्त्या शृण्वन् पठन् सन् भास्करकथाश्रवणादिना जयवान् उत्तमभार्यश्च नारायणकथाश्रवणादिना सुसिद्धकार्यश्च स्यात् ॥ १०० ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामेकचत्वारिंशः सर्गः ॥ ४१ ॥ उद्विवेदमिते सप्तदशोर्ध्वे शतपद्यतः ॥ गुरोः कर्णपुरख्यातिः काशीयात्रा च वर्ण्यते ॥ ४२ ॥ अथ भास्करस्य तेजःसामर्थ्यं वर्णयन्कथांतरमाह—अथेत्यादिना । कर्णपुरं कडपकन्नूरेति कर्णाटकभाषाप्रसिद्धम् ॥ १ ॥ स्वीयः द्वैतमतस्थः सत्यबोधाख्य आचार्यः येन भास्करेण

शास्त्रवचनैर्यतो जितस्ततस्तं भास्करं स माध्वो द्वेष्टि द्वेषं कुरुते ॥ २ ॥ ३ ॥ यश्चंद्रसेनराज्ञो गुरुरस्ति स तस्य राज्ञो हिते रतः सन् अन्यान्नृपान् मंत्रैः संमोह्य तद्वशान् करोतीत्यन्वयः ॥ ४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ५ ॥ हे ईश मंत्रमोहितैर्बलिष्ठैरपि नृपैः युद्धमृते युद्धं विना राज्यादिकं चंद्रसेनाय दीयते ॥ ६ ॥ त्वां च तथा चंद्रसेनाधीनं कर्तुं स प्राप्तोऽस्ति अतस्त्वं तं प्रति शासय । यतः हे ईश्वर त्वां मोहितुं प्राप्तो यस्तस्य दंडे समर्थोऽसीत्यर्थः ।

श्रुतस्तेनागतः स्वीये पुरे भास्करदेशिकः ॥ दंड्योयं भूपतेरित्थं बुद्ध्यासौ नृपमब्रवीत् ॥ ३ ॥ प्रधान उवाच ॥ भास्करः पंडितः कश्चित्स्वपुरे चागतो हि यः ॥ चंद्रसेनस्य राज्ञः स गुरुस्तस्य हिते रतः ॥ ४ ॥ संमोह्यान्यान्नृपान्मंत्रैः करोत्येव च तद्वशान् ॥ राज्यं बलं कोशमुखं चंद्रसेनाय तैर्नृपैः ॥ ५ ॥ दीयते बलिभिश्चेशर्ते युद्धं मंत्रमोहितैः ॥ इत्थमेवामुना राज्यं चंद्रसेनस्य वर्द्धितम् ॥ ६ ॥ त्वां च प्राप्तस्तथा कर्तुं शासयातस्तमीश्वर ॥ श्रुत्वेत्थं नृपतिः क्रुद्धः स्वदूतान्प्राह शस्त्रिणः ॥ ७ ॥ श्वो हंतव्यः खड्गघातैश्चंद्रसेनगुरुस्तु यः ॥ भवद्भिर्नात्र कर्तव्यः संशयोऽणुः परोक्तिभिः ॥ ८ ॥ इत्थं दूतेभ्य उदितां नृपस्याज्ञां सभास्थितः ॥ श्रुत्वा कश्चिद्भास्करायाब्रवीच्छिष्योऽस्य दुःखितः ॥ ९ ॥ श्रुत्वाथ दुःखिताः शिष्याः प्राहुर्गुरुमितो द्रुतम् ॥ गंतव्यमेव यावन्नो पुरं साररगोपुरम् ॥ १० ॥ हसंस्तान्भास्करः प्राह न किं मृत्युः पलायनात् ॥ भावि नैवान्यथा क्वापि दुर्भगस्येव दुःखिता ॥ ११ ॥ तथापीशो न मां हंतुं यमः साक्षात्कुतः परे ॥ गुरुदेवीप्रसादेन भवितव्यं विलोक्यताम् ॥ १२ ॥ स्वस्थास्तेऽणु बभूवुश्च श्रुत्वेत्थं गुरुभाषितम् ॥ आंदोलितहृदोऽप्यैशाच्चौग्र्याद्देशिकभूपयोः ॥ १३ ॥

शस्त्रिणः शस्त्रधरान् ॥ ७ ॥ ८ ॥ ९ ॥ यावत्पुरं साररगोपुरं सकपाटं नगरद्वारं यस्मिन् तत् न क्रियते तावत् इतो नगरात् त्वया द्रुतं गंतव्यमित्यर्थः ॥ १० ॥ पलायनेन मृत्युर्न भवति किम् अपि तु भवत्येव । यथा दुर्भाग्यपुरुषस्य दुःखभोक्तृत्वं भवत्येव तथा यद्भविष्यं तदन्यथा क्वापि न भवति ॥ ११ ॥ १२ ॥ देशिकस्य गुरोः ऐशात्सामर्थ्यात् भूपस्य च औग्र्यात् उग्रत्वाद्धेतोरांदोलितं द्विधाभूतं चित्तं येषां ते भास्करस्य जयपराजययोः

शंकितचित्ता बभूवुरित्यर्थः ॥ १३ ॥ अचिंतया चिंताराहित्येन निद्रां कृतवान् । आगमस्नानं तान्त्रिकस्नानम् ॥ १४ ॥ यावत् अरुणोदयः स्यात् तावत् अरुणोदयपर्यंतं तंत्रोक्तपूजाजपादिकं सर्वं चकार । खगोदये सूर्योदये ॥ १५ ॥ होमादिकं नित्यहोमतर्पणादिकमिति पूर्वान्वयि विस्तृते अंगणे उत्कृष्टमंचे मृद्वासनयुक्ते शुचौ पवित्रे ॥ १६ ॥ पूर्वार्द्धं पूर्वान्वितम् ॥ १७ ॥ अथ ते स्वस्वशास्त्रविषयान् पृच्छद्भिरभितः स्थितैः शिष्यैर्युक्तं

देशिकोऽथास्वपत्कृत्वा सायंकृत्यमचिंतया ॥ उत्थायोत्तररात्रौ चागमस्नानं चकार सः ॥ १४ ॥ पूजाजपादि सर्वं च यावत्स्यादरुणोदयः ॥ वैदिकस्नानसंध्ये च ततश्चक्रे खगोदये ॥ १५ ॥ होमादिकमथोद्रास्य देवताश्चाययौ बहिः ॥ विस्तृताजिर उन्मंचे तस्थौ मृद्वासने शुचौ ॥ १६ ॥ शिष्यानध्यापयञ्छास्त्रं स्वयं पश्यंश्च सर्ववित ॥ नृपाज्ञयाऽऽययुस्तावदुन्मत्ताः शस्त्रपाणयः ॥ १७ ॥ चंद्रसेनगुरुः क्वास्ति क्वास्तीत्यूचुर्मुहुर्मुहुः ॥ महामंचे समीक्ष्याथ भास्करं भास्करौजसम् ॥ १८ ॥ पृच्छद्भिः स्वस्वविषयाञ्छिष्यैर्युक्तमभिस्थितैः ॥ अयमेव गुरुर्नूनमित्थं ज्ञात्वेशशासनात् ॥ १९ ॥ हंतुं कृतधियश्चैनमच्छन्नास्यूर्ध्वपाणयः ॥ न क्षमास्तेऽग्रतः किंचित्पदं न्यस्तुं जयद्रराः ॥ २० ॥ प्राक्कृतानेकयुद्धाश्च भास्करीयमहोजिताः ॥ कुडचपृष्ठास्थिताः सर्वे लिखिता इव निश्चलाः ॥ २१ ॥ तावत्प्राप्ताः परे तेऽपि तेषामग्रे तथा स्थिताः ॥ पंचस्तोमा इति प्राप्ताः काष्ठपुत्तलिकोपमाः ॥ २२ ॥ पूर्वयामे गतेऽह्नोऽथ समीपस्थान्नृपोऽब्रवीत् ॥ हतो वा नेति चाद्यापि चंद्रसेनगुरुर्भटैः ॥ २३ ॥

सूर्यतेजसं भास्करं महामंचे स्थितं दृष्ट्वाऽयमेव चंद्रसेनगुरुरितीशशासनाद्राजाज्ञया भास्करं हंतुं कृतनिश्चया बभूवुरित्यन्वयः ॥ १८ ॥ १९ ॥ अच्छन्ना अनाच्छादिता असयः खड्गाः पाणिषु येषां ते जेतृश्रेष्ठा अपि किंचिदग्रे पदं स्थापितुं समर्था न बभूवुः ॥ २० ॥ प्राक् कृतम् अनेकैः सह युद्धं यैस्ते भास्करस्य तेजसा पराभूताः संतः कुडचमिव पृष्ठं येषां ते चित्रवन्निश्चला आसुः ॥ २१ ॥ २२ ॥ हतो वा न हत इति समीपस्थानब्रवीत् ॥ २३ ॥

मदूतैरित्युभयसंबंधि ॥ २४ ॥ हि यतः" आज्ञाभंगो नरेंद्राणामशस्त्रवध उच्यते " इत्यतो हेतोरहं तैः सह वधार्हं भास्करं गत्वा हन्मीत्यन्वयः ॥२५॥ ॥ २६ ॥ गुरुस्थितिं भास्करस्थानमिति पूर्वान्वितम् । जवात् वेगेन ॥ २७ ॥ अथ स यवनो राजा पार्श्वपृष्ठोपबर्हयुक्तेतिरुचिरकशिपौ मंचवर्ये स्थितं भास्करानंदगुरुं धरागतं सूर्यमिवापश्यत । कीदृशं सच्चामराभ्यां वीजितं पुनः कीदृशम् अरुणनिभे अग्रे यस्य तत् अंशुकं संदधानं धारयंतं पुनः किंभूतं मौक्तिकहारवंतं सुभूषम् अरुणकांत्या बहुमौल्ययोर्णया ऊर्णावस्त्रेण युक्तं तेजोरूपं च । नेत्रे मीलयन् भीत्या कंपो यस्य स तथाभूत आसीत्

चारैर्ज्ञात्वा तमाहुस्ते नेति श्रुत्वाह भूपतिः ॥ किं नाद्यापि हतो वध्यो मदूतैरन्यवंचकः ॥ २४ ॥ किं परस्य श्रुता चाज्ञा ममाज्ञो ल्लंघिता नु किम् ॥ आज्ञाभंगोऽशस्त्रवधो राज्ञोऽतस्तैः सहाधुना ॥ २५ ॥ हन्मि वध्यमहं गत्वेत्युक्त्वा पट्टिशमुज्ज्वलम् ॥ नग्नमे वादधत्क्रोधात्कंपितांगः पदा ययौ ॥२६॥ गुरुस्थितिं जवाद्दूतानुल्लंघ्याग्रे गुरोर्गतः ॥ समीपस्थैर्महद्भिश्च क्रुद्धैः शस्त्रधरैर्युतः ॥ २७ ॥ सोऽपश्यन्मंचवर्येतिरुचिरकशिपौ पार्श्वपृष्ठोपबर्हे संस्थं सच्चामरावीजितमरुणनिभाग्रांशुकं संदधानम् ॥ मुक्ताहारं सुभूषं गुरुमरुण भया चोर्णयाऽमौल्ययाढ्यं तेजोरूपं धरागं रविमिव सदृशो मीलयन्भीतिकंपः ॥ २८ ॥ नमन्कराभ्यां मुहुरुत्तलाभ्यां गुरुं निजान्प्राह नृपो धृतासीन् ॥ पराल्लमूर्तिर्निखिलोत्तरोऽयं येनान्यथोक्तोऽद्य स एव वध्यः ॥ २९ ॥ राजोक्तिमाकर्ण्य च भासुराख्यः संकेतयामास करेण सर्वान् ॥ स्थातुं ह्यधस्तेऽपि महापटेऽथ छन्नासियुग्बद्धकराश्च तस्थुः ॥ ३० ॥ राजानमाहाथ गुरुस्तु येन निंदोक्तिभिर्वध्यसमः कृतोऽहम् ॥ स नैव वध्यो हि यतः प्रपंचे नातः परो निंदकतोऽघहारी ॥ ३१ ॥

स्रग्धरावृत्तम् ॥ २८ ॥ उत्तलाभ्यामिति यवनजातौ ऊर्ध्वतलहस्ताभ्यां नमस्कारो विधीयते । पराल्लमूर्तिः परमेश्वरमूर्तिः । अल्लशब्दो यवनभाषायामीश्वर वाची प्रसिद्धः । निखिलोत्तरः सर्वोत्कृष्टः अयं भास्करो येन मंत्रिणाऽन्यथोक्तः स एवाद्य वधार्होऽस्तीत्यर्थः ॥ २९ ॥ आच्छादितखड्गयुक्ताश्च ते बद्ध करा बद्धांजलयः संतः स्थिताः ॥ ३० ॥ अथ गुरुः राजानमाह हे राजन् निंदावचनेन येनाहं वधार्हतुल्यः कृतः स त्वया न वध्यः । यतो निंदकपुरु

ष्यादन्यः पापनाशक आप्तो नास्ति । "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति श्रुतौ द्वेषकर्तरि पापग्राहित्वश्रवणात् । निंदाप्रवक्ताऽत्यंतमाप्तोऽस्तीति भावः ॥ ३१ ॥ हतिः नाशः । हि यतो या हतिः साऽऽयुष्यसमाप्तिं विना न भवति । स्वहस्तच्छेदनकर्त्रा यथाऽत्रेर्नाशो नाभवत् तथा नग्नेनोद्धृतखड्गेनापि हतिर्नो भविता। यथा पूर्वं वागभवानंदकथायां कश्चिन्मेषहनने प्रवृत्तो मेषायुष्यसमाप्त्यभावात् निजहस्तं चिच्छेद । तथा युष्यसत्त्वे न केनापि हन्यत इति भावः ॥ ३२ ॥ च पुनः अमुना तव मंत्रिणा गुरुभक्त्या हेतुभूतया मम निंदा कृताऽसौ गुरुभक्तवर्योऽस्ति । स्वगुरो

हतिश्च मे तत्कृतनिंदया नो कृता त्वया या हि विनाऽऽयुषोंतात् ॥ खड्गेन भग्नेन च नो भवित्री जेत्रा यथात्रेर्निजहस्तहंत्रा ॥ ३२ ॥

गुरोश्च भक्त्यैव कृताऽमुना मे निंदाप्यतोऽसौ गुरुभक्तवर्यः ॥ निंदापहारीति ममापि चाप्तस्तस्मान्मदर्थं च न हन्यतां सः॥३३॥उक्तेति

राजानमनेकयुक्तीर्निवर्तयामास गुरुस्तदंतात् ॥ साधुर्दयाढ्यो हि कृतागसोऽपिच्छेत्तुर्यथा स्वादुरसः किलेक्षुः ॥ ३४ ॥ सपूजि

तोऽथो यवनेन राज्ञा निजाश्रितैर्विप्रवरैर्बुधार्यः ॥ भूषांशुकानेकधनैश्च भक्त्या नमस्कृतोऽगाद्द्रुत चंद्रसेनम्॥ ३५ ॥ स भालकोशः

स्वगुरुं निशम्य समागतं सैन्ययुतस्तमेत्य ॥ नत्वातिवाद्यैश्च निनाय पुर्यां निवेशयामास गृहोत्तमेऽमुम् ॥ ३६ ॥ तस्थौ गुरुः प्रावृ

षि राजभक्त्या तत्रैव सांतेवसदग्निभृत्यः ॥ राज्ञी सुपुत्रं सुषुवेथ राजा तुष्टश्च खिन्नः स्मृतसिद्धवाग्घि ॥ ३७ ॥ नैवोदितं नाम च

तस्य राज्ञा मासोत्तरं राजवधूः सपुत्रा ॥ यानेन गत्वाथ गुरुं तदंघ्र्योः समीपमास्थापयति स्म बालम् ॥ ३८ ॥ दृष्ट्वाथ चिह्नानि

शिशोर्विपुंस्त्वसंसूचकान्येव गुरुस्तदाह ॥ कथं सुतोऽयं विपरीतचिह्नोऽथोक्तं तया सिद्धचारित्रमाद्यात् ॥ ३९ ॥

भक्तिवृद्ध्यर्थं तदन्यनिंदाकरणे दोषाभावोऽस्तीत्यर्थः । निंदया पापहर्ता इति हेतोर्मयि आप्तोऽयं त्वया मदर्थं न हंतव्यः ॥ ३३ ॥ तदंतात् मंत्रिवधात् । हि यस्मात्साधुः कृतागसः कृतापराधस्यापि दयालुर्भवति । यथेक्षुच्छेदकर्तुरतिस्वादुरसो भवति किल तथा साधुरभयप्रदो भवतीत्यर्थः ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ अंतेवसद्भिः शिष्यैरग्निभिः पत्न्या च भृत्यैश्च सहितः । अथ पुत्रजन्मानंतरं राजा संतुष्टः खिन्नश्चाभवत् । हि यतः स्मृता नारायणसिद्धस्य वाक् येन । नपुंसकस्तव पुत्रो भविष्यतीति स्मरणेन खेदयुक्त इत्यर्थः ॥ ३७ ॥ नैवोदितं न कृतम् ॥ ३८ ॥ विपुंस्त्वस्य नपुंसकत्वस्य सूचकानि ।

आम्रात आदितः ॥ ३९ ॥ विपरीततां नपुंसकभावम् । सुमंत्रैः सुमंत्रितोदकैः ॥ ४० ॥ अथ गुरुश्चंद्रसेनं समाहूयाह मयि अश्रद्धया सिद्धवाक्येन च
नपुंसकत्वं प्रातोप्यसौ तव पुत्रो मया मंत्रसामर्थ्येनोत्तमवीर्यवान्कृतोस्ति ॥ ४१ ॥ ४२ ॥ काकर्थकं पद्यं कैमुतिकन्यायबहुलं पद्यम् ॥ ४३ ॥
अथ स भास्करः नृसिंहयज्वगुरुणा रचितां छलार्णसूत्रानुसारिणीं परिभाषां विलोक्य ललितासहस्रनाम्नः स्तवस्य स्पष्टार्थकं भाष्यं यत्पूर्वं शंकरपादैर्न कृतं

सिद्धस्य वाण्या विपरीततां तां ज्ञात्वा गुरुः पुंस्त्वकरैः सुमंत्रैः ॥ बालं सिषेचाऽखिलसिद्धमंत्रो नाम्नाऽकरोत्तं त्वथ रामचंद्रम् ॥ ४० ॥
नृपं समाहूय गुरुस्तमाह ह्यश्रद्धया मय्यथ सिद्धवाचा ॥ जातः सुतस्ते विपरीतचिह्नोऽप्यसौ कृतो मंत्रबलात्सुवीर्यः ॥४१॥ ख्यातश्च
भूयाद्भुवि रामचंद्रनाम्नाखिलानां जयिनां च जेता ॥ श्रुत्वेति राजा मुदितस्तदैवानेकानि दानानि ददौ द्विजेभ्यः ॥ ४२ ॥ पद्मा
वतीं नाम गुरुस्तु पत्नीं कन्यासुवं चाथ निशम्य काले ॥ काकर्थपद्यं क्वचिदंजसेक्ष्य नाम्ना जगौ तां तनयां च काकुम् ॥ ४३ ॥ स
विलोक्य नृसिंहयज्वबद्धां परिभाषां ललितासहस्रनाम्नः ॥ विशदार्थमथाकरोच्च भाष्यं न च पूर्वं कृतमेव शंकरार्यैः ॥ ४४ ॥ सुभवोऽद्य
स एव कर्तुमेतज्जगुरित्थं सुधियोऽप्यनन्यसाध्यम् ॥ अकरोत्किल यः श्रुतेर्हि मूर्ध्नस्त्रिपुराख्योपनिषन्मुखस्य भाष्यम् ॥ ४५ ॥
सुषुवे गुरुभास्कराद्धि माध्वी तनयामेव सुरूपिणीं स वीक्ष्य ॥ ललितामिति तां चकार नाम्ना ललितत्वाच्च मिषान्निजेष्टनाम्नः ॥४६॥
कुहचित्स च भालकीस्थितोऽभूदपि नारायणपत्तने कदाचित् ॥ स्थितवान्क्व च भास्करे पुरेऽपि क्व च कृष्णातटगोऽपि विठ्ठलांके
॥ ४७ ॥ क्वचिदेष सुसंस्तुतो नृपाद्यैर्धनवद्भिर्द्विधनैश्च भक्तियुक्तैः ॥ प्रययावथ तत्तदीयगेहं रवितुल्यश्च सुपश्यतां प्रकाशी ॥ ४८ ॥

तत्कृतवान् ॥ ४४ ॥ सुधियोऽपि स शंकर एवैतद्भाष्यं कर्तुं सुजन्मास्तीत्यम् एवं जगुः हि यतः अन्येन दुःसाध्यं त्रिपुरोपनिषदादेः श्रुतिमूर्ध्नो भाष्यं यः
कृतवान् किल । अतः शंकर एव भास्कराख्योऽवतीर्ण इत्यर्थः ॥ ४५ ॥ मध्वकन्या पार्वतीनाम्नी । निजेष्टनाम्नः स्वेष्टदेवतानाम्नो मिषेण ललितत्वात्
ललितरूपवत्त्वाच्च हेतोर्ललितामिति नाम्ना चकार ॥ ४६ ॥ कुहचित् कदाचित् विठ्ठलांके स्वस्थापितपांडुरंगसमीपे ॥ ४७ ॥ सुष्ठु पश्यतां जनानां

प्रकाशी ज्ञानप्रकाशकर्ता॥ ४८॥अथ कौलिकानां संतोषाय वरिवस्या तांत्रिकपूजादिस्तत्र विषये रहस्यभूतं निबंधं कृतवान्। किं भूतम्। उत्कृष्टा या पंचदशी विद्या तद्गतवर्णानाम् अर्थो यस्मिन्। पंचदशार्थैर्युक्तमिति यावत्। च पुनः स भास्करो वामकेश्वरतंत्रविषये कृतः सेतुः सेत्वाख्यग्रंथो येन स तथाऽभवत् ॥ ४९ ॥ अपि च पुनरात्मज्ञानिनां सुखार्थं चंडभास्कराख्यं निबंधं चक्रे। गणनाथस्य सहस्रनाम सहस्रनामार्थकं खद्योताभिधं ग्रंथमिति यावत्। पद्यैः पद्यनिबंधनैः कृतवान्। गुप्तां गुप्तवत्याख्यां सप्तशतीव्याख्यां कृतवान् ॥ तथा त्र्यंगकमुख्यान् त्र्यचाभास्करादीन् बहुनिबंधांश्चकार ॥ ५० ॥ अथ भास्करस्य काशीयात्रावर्णनमाह—स ययावित्यादि यावत्सर्गसमाप्ति। त्रिषड्भिरष्टादशभिर्नरयानस्थपंडितैर्गजाश्वारूढैश्च पुनः द्वैतवादिन एव इभास्तेषां जये

अथ कौलिकतुष्टये चकार वरिवस्याविषये रहस्यभूतम् ॥ वरपंचदशीगतार्णकार्थं कृतसेतुश्च स वामकेशतंत्रे ॥ ४९ ॥ अपि
चात्मविदां सुखाय चक्रे सुनिबंधं स च चंडभास्कराख्यम् ॥ गणनाथसहस्रनाम पद्यैः स च गुप्तामितरांख्यगर्कमुख्यान् ॥ ५० ॥
स ययावथ काशिकां त्रिषड्भिर्नरयानस्थबुधैर्गजाश्वगैश्च ॥ निजशिष्यवरैर्दिवाकराद्यैर्द्वयवादीभजये मृगेंद्रतुल्यैः ॥ ५१ ॥
त्रिषडुद्धृतयानके स्वयं च स्थित ईक्षन्गुरुराट् सुशास्त्रजातम् ॥ न हि तस्य गमोऽप्यनीक्ष्य शास्त्रं सवितुर्विश्वमिवाखिलज्ञमूर्तेः॥५२॥
ययतुः शुचियानतोऽस्य पत्न्यावरणिभ्यां च सकन्यके समीपम् ॥ वियुतिर्न नदीमुखेऽग्नियुक्ते ह्यरणिस्थाग्निसुपत्निकाभिरुक्ता ॥५३॥

सिंहसदृशैर्दिवाकराद्यैः शिष्यवरैः सह काशीं ययौ ॥ ५१ ॥ स्वयं चाष्टादशपुरुषोद्धृतयाने सुशास्त्राणि पश्यन् स्थितोऽभवत्। हि यतस्तस्य गमनमपि शास्त्रम् अनीक्ष्य नासीत्। यथा सवितुर्गमनं विश्वमनवलोक्य न भवति तथा सर्वज्ञमूर्तेर्भास्करस्य यानमध्ये शास्त्रावलोकनकर्तुर्गमनं शास्त्रमदृष्ट्वा नासीत्। यथाशास्त्रं सर्वज्ञस्याचरणं भवतीति भावः ॥ ५२ ॥ अरणिभ्यां सह अस्य पत्न्यौ च कन्याद्वयसहिते समीपं यथा स्यात्तथा पवित्रयानेन जग्मतुः। हि यस्मादग्नियुक्ते साग्निके पुरुषे अरणिस्थाग्निभिः सुपत्निकाभिश्च वियुतिर्वियोगो महानदीग्रामसीमादौ नोक्ता। साग्निकेन पत्न्या सहैव मार्गे गंतव्यमि

त्यर्थः ॥ ५३ ॥ पथि च मार्गे गच्छन्स्वशिष्यैः सह सर्वैर्भृत्यादिभिर्युक्तो नृपाद्यैः प्रतिनगरे परिपूजितोऽभवत् । अथ क्रमेण सर्वजीवानां मोक्षदात्रीं विश्वनाथधानीं काशीं प्रति प्राप्तवान् ॥ ५४ ॥ अंधसा अन्नेन सह धनं द्विजेभ्यो ददौ । ते च कुलजाः कुलागता इत्यर्थः । पुरोधसः संतुष्टा बभूवुरित्यर्थः ॥ ५५ ॥ दिनपे सूर्ये धनुषि स्थिते सति गयां च स ययौ । तत्र विधिवत् धनतः धनव्ययेन स पितृतुष्ट्यै अन्नैः पिंडान्ददौ । तदा गयानिवासिनो द्विजाः सर्वे संतुष्टमनसो बभूवुः ॥ ५६ ॥ अथ रवौ मकरे सति स प्रयागं ययौ । इह सर्वैः सह कल्पवासं कृत्वा मासपर्यंतं स्थित्वा युवती स्त्रियौ

पथि चैष पुरेपुरे नृपाद्यैर्निजशिष्यैः परिपूजितोऽखिलाढ्यः ॥ क्रमशोऽथ च विश्वनाथधानीं समवापाखिलजीवमोक्षदात्रीम् ॥ ५४ ॥
अकरोन्मणिकर्णिकादितीर्थाप्लुतिमुख्यं विधिवद्गुरुः स काश्याम् ॥ प्रददौ धनमंजसा द्विजेभ्यो मुदितास्ते कुलजाः पुरोधसः ॥ ५५ ॥
दिनपे धनुषि स्थिते गयां च प्रययौ तातमुदे ददौ स तत्र ॥ विधिवद्धनतोऽन्नतश्च पिंडानखिलास्तुष्टहृदो गयाद्विजास्ते ॥ ५६ ॥
मकरेऽथ रवौ ययौ प्रयागं त्विह कृत्वा निखिलैश्च कल्पवासम् ॥ युवती कृतवेणिकासुदाने ह्यकरोद्वै विधिवन्निजैश्च पैत्र्यम् ॥ ५७ ॥
पुनरेत्य च काशिकां स्थितोऽत्राद्यंयदग्र्ययतीन्वरान्नवस्त्रैः ॥ अथ शास्त्रविदो मिथः सुवाग्भिः कृतवादानयजद्यथाधिकारम् ॥ ५८ ॥
श्रुतितः पदतः क्रमाज्जटाद्यात्कृतचर्चान्सदृगादिवैदिकान्सः ॥ इति तेन समर्चिताश्च सर्वे विदुषः क्षेत्रगता विनैव नत्या ॥ ५९ ॥
विदुषस्तु मिथो वदंति काश्यां खलु विद्वत्तम एष भास्करो हि ॥ विबुधान्समपूजयद्यथावत्किमुताहो यतितोऽपि चोन्नतोभूत् ॥ ६० ॥

कृतं वेणिकासुदानं याभ्यां ते । पत्न्योर्वेणिदानं कृतवानित्यर्थः । यथाविधि स्वकीयैः सह पैत्र्यं श्राद्धादिकं पितृकर्म च कृतवान् ॥ ५७ ॥ ५८ ॥ संतश्च ते ऋगादिवैदिकाश्चतुर्वेदिनो वैदिकास्तान् यथाधिकारम् अयजत् इत्यपकर्षः । कीदृशान् । संहिताभिः पदैः क्रमेण जटादिकेन च कृतचर्चान् । इति प्रकारेण सर्वे क्षेत्रस्था विद्वांसस्तेन भास्करेण नत्या नमस्कारेण विनैव समर्चिताः ॥ ५९ ॥ ननु विदुषा भास्करगुरुणा नमस्कारं विना क्षेत्रस्थाः कथं सत्कृता इति चेत् तत्र हेतुं वदन् काशीस्थानां वृत्तमाह । विदुष इत्यादिना । विद्वांसस्तु मिथो वदंति । एष विद्वत्तमोऽस्यां काश्यां यथावद्विबुधान्स

म्यक् पूजितवान् यद्यपि तथापि यतितः संन्यासिभ्योपि उन्नतः अनम्रः किमुताभवत् । अहो आश्चर्यकरं सर्वेषु अस्य उन्नतत्वमिति भावः ॥ ६० ॥ गृहस्थधर्मवानपि यः काशीक्षेत्रं प्राप्तः सर्वविद्याभिज्ञोऽपि यश्चेह काश्यां सर्वद्विजान् विश्वेशसमान्पश्यति किल स यतिभ्योऽपि नतिं कथं न कुरुते ॥६१॥ किं च बहवोऽप्यत्र सुपंडिताः पुरा आगतास्तेऽस्मदादिकेषु ईश्वरबुद्ध्या आसुरीश्वरबुद्धिं कृतवंत इत्यर्थः । अपिशब्दान्नम्राश्च आसुः । अयं त्वेकः सर्वेभ्यः परः श्रेष्ठोऽस्ति किमु । हि यतस्तीर्थवासिषु अस्मासु सकृदपि उक्त्या वाण्यापि न नम्रः आश्चर्यकरमेतच्चरित्रमिति भावः ॥ ६२ ॥ इति बहुधा गृह एव जजल्पुः । गुरोस्तेजसा हतौजसस्तेऽस्य भास्करस्य पुरतो वक्तुं समर्था न बभूवुः । च पुनः सदसि मंत्रं विचारमास्थिताः संत इत्थं वक्ष्यमाणं जगुः ॥

न कथं कुरुते नतिं यतिभ्यो गृहधर्मोऽप्यथ विश्वनाथधानीम् ॥ समगादखिलज्ञ ईक्षतेऽसौ द्विजमुख्यान्किल विश्वनाथतुल्यान् ॥६१॥
बहवोत्र पुरागताः किलासुः सुविदोऽपीशधियाऽस्मदादिकेषु ॥ किमयं हि परोऽखिलेभ्य एकः सकृदुक्त्यापि न तीर्थगेषु नम्रः ॥६२॥
बहुधेति जजल्पुरेव गेहे न च गत्वा पुरतोऽस्य वक्तुमीशाः ॥ महसैव गुरोर्हतौजसस्ते सदसीत्थं जगुरास्थिताश्च मंत्रम् ॥ ६३ ॥ यतिरत्र
निजप्रकाश ईज्यो निखिलैः प्रेष्य उतोक्तितोऽस्य कश्चित् ॥ इह चाह्वयितुं हि भास्करार्यमिति वाच्यं त्वथ चागताय तस्मै ॥ ६४ ॥
यतयेऽपि नतिः कृता त्वया नो न यतेरीज्यतमो गृहस्थ उक्तः ॥ उदितो यदि वक्ति चैष किंचित्सकलैः क्षेत्रगतैः स किं ह्यजेयः ॥६५॥
इति दुर्मनसः स्वयंप्रकाशाग्रत आहुश्च तदीयवृत्तमेतत् ॥ अपि चानयितुं हि सत्तमं तेऽविदितादोविभवाः समादिशंतः ॥ ६६ ॥

॥ ६३ ॥ तदाह । अत्र काश्यां निजप्रकाशः स्वयंप्रकाशाख्यो यतिः सर्वैः पूज्योऽस्ति । अस्य वचनेन भास्करार्यमिहाह्वयितुं कश्चित्प्रेष्यपुरुषः प्रेषितव्यः । अथागताय तस्मै सर्वैरिति वक्ष्यमाणं वाच्यम् ॥ ६४ ॥ यत्प्रष्टव्यं तदाहुः । त्वया यतये स्वयंप्रकाशाख्यायापि नतिः न कृतास्ति । हि यतः यतिपूज्यतमः गृहस्थो नोक्तः प्राचीनैरिति शेषः । इति सर्वैरुक्त एष भास्करो यदि किंचिद्वक्ति विवदिष्यति । तर्हि क्षेत्रस्थैः सर्वैरस्माभिरजेयः किम् अपि तु जेतुं योग्य एव भविष्यति ॥ ६५ ॥ इति ते सर्वे काशीस्थपंडिताः दुर्मनसः दुष्टमनसः स्वयंप्रकाशाग्रे संत्तमं तं भास्करम् आनयितुं समादिशंतः कंचि

त्पुरुषम् आज्ञापयंतः संतः एतद्भास्करवृत्तम् आहुः तत्र हेतुगर्भं विशेषणम् अविदितादोवैभवा इति । न विदितम् अमुष्य भास्करस्य वैभवं सामर्थ्यं यैस्ते भास्करसामर्थ्यानभिज्ञा इत्यर्थः ॥ ६६ ॥ अथ देशिको भास्करः पंडितसकाशाद्द्विजमागतं दृष्ट्वा तेनाऽनुक्तोऽपि तं प्रति स्वयं तवागमनेऽभिप्रायो मया ज्ञात इत्याह । सुज्ञास्तु बाह्यलक्षणेनैवाभिप्रायं जानंतीति भावः ॥ ६७ ॥ तेनाह्वानार्थमागतेन द्विजेन सह सशिष्यो भास्करः सभेशयतिना स्वप्रकाशानंदयतिना सह यत्र सभायां पंडिताः स्थितास्तत्राययावित्यर्थः ॥६८॥सर्वान्प्रति अनत्वा नमस्कारमकृत्वा तेषां पुरस्तादग्रे स्थलांतरे स्वशिष्यैः परिवृतस्तस्थौ

श्रीदेशिकेंद्र उवाच॥द्विजमागतमन्वीक्ष्य तेनानुक्तोऽपि देशिकः॥स्वयमित्याह तं ज्ञातस्तवाशय इहागमे॥६७॥ इत्युक्त्वा यानमारुह्य सशिष्यस्तेन चाययौ ॥ स्थिताः सभेशयतिना सभायां यत्र पंडिताः ॥ ६८॥ अनत्वैवाखिलांस्तस्थौ तत्पुरस्तात्स्थलांतरे ॥ स्वीयैः परिवृतस्तेभ्यः शुशुभे पंडिताग्रणीः॥६९॥भास्करं नेषदूचुस्ते तत्तेजोभिहतश्रियः ॥ गुरुस्तान्स्वयमेवाह वाचस्पतिरिवामरान् ॥७०॥ भासुरानंद उवाच॥न नमामि गृहस्थोऽपि सयतींश्च द्विजानहम् ॥ अतः पाचारितः सर्वैर्ज्ञातोऽयं वो मयाशयः ॥ ७१ ॥ किमहं कर्तुमेनोऽत्र प्राप्तः काश्यामथो नतौ ॥ किं पापमिति चेत्सर्वैरुच्यतेऽद्य यतेरयम् ॥७२॥ कमंडलुः पुरः किंचित्कार्यः पश्चाद्विलोक्यताम् ॥ पापं वा पुण्यमखिलैर्यतः कोपः कृतो मयि ॥ ७३ ॥ श्रीदेशिकेन्द्र उवाच॥ श्रुत्वेत्थं हसद्भिस्तैश्चालितोऽग्रे कमंडलुः ॥ तं ननाम गुरुः कुर्वन्नूर्ध्वमीषत्करावुभौ ॥ ७४ ॥

यदा तदा तेभ्योऽधिकं शुशुभे यतः पंडितश्रेष्ठः ॥ ६९ ॥ ७० ॥ गृहस्थोऽप्यहं सयतीन् द्विजांश्च न नमामि यतः । अतोऽहं सर्वैः पाचारितोऽस्मि । अयं वो युष्माकमभिप्रायो मया ज्ञातः ॥ ७१ ॥ ननु तर्हि किमर्थं त्वया नमस्कारो न क्रियते इत्याशंक्याह—किमिति द्वाभ्याम् । अत्र काश्यामहमेनः पापं कर्तुं प्राप्तोऽस्मि किम् । अथ नतौ नमस्कारे कृते सति किं पापं भवतीति सर्वैर्भवद्भिरुच्यते यदि तर्हि यतेरयं कमंडलुः किंचिदग्रे कर्तव्यः पश्चान्नमस्कारेण पापं वा पुण्यं भवतीति सर्वैर्विलोक्यताम् । यतो हेतोः सर्वैर्मयि कोपः कृतोऽस्ति । अतो मत्सामर्थ्यं द्रष्टव्यमित्यर्थः ॥ ७२ ॥ ७३ ॥ ७४ ॥

कंपिता बभूवुरित्यध्याहारः ॥ ७५ ॥ मया नतानां युष्माकं शिरांसि इत्थं द्विधा भविष्यंति। अथ मम नमस्कारेण पापं पुण्यं वा भवेत्तत्सम्यक् भवद्भि रुच्यताम् ॥ ७६ ॥ अथापि वो युष्माकमाज्ञैवास्ति चेत्तदाहं सर्वान्साष्टांगं नौमि हि यतः क्षेत्रस्थेभ्यो विद्वद्भ्यो विप्रेभ्यस्तु को महानस्ति । न कोऽपि महानतोहं युष्मदाज्ञा चेत् सर्वेभ्यो नमस्करोमीत्यर्थः ॥ ७७ ॥ अदः वचनम् ॥ ७८ ॥ एवं भास्करनमस्कारेण स्वनाशं शंकमानाः स्तुवंति—त्वमिति त्रिभिः । मनुष्याकृतिर्विश्वनाथस्त्वं निजधाम काशीक्षेत्राख्यं तत्र स्थितान् संसारभायेन दीनान् नोऽस्मानव रक्ष । सर्वेषाम् अदः इदं दौर्जन्यं क्षमस्व ।

तावद्द्विधाभवत्तूर्णं दृढस्ताम्रमयोपि सः ॥ दृष्ट्वेत्थं कंपिताः सर्वे पुनस्तानाह भास्करः ॥ ७५ ॥ इत्थमेव भविष्यंति मन्नतानां शिरांस्यपि ॥ भवेत्पुण्यमथो पापं मे नत्या सम्यगुच्यताम् ॥ ७६ ॥ अथाप्याज्ञैव चेद्वोस्ति नौमि सर्वांश्च दंडवत् ॥ क्षेत्रस्थेभ्यस्तु विप्रेभ्यो विद्वद्भ्यश्च महान्हि कः ॥ ७७ ॥ श्रुत्वातिभीतास्ते सर्वे शीघ्रमुत्थाय भास्करम् ॥ मुहुर्नत्वा स्थिताश्चाग्रे प्रोचुः प्रांजलयोऽप्यदः ॥ ७८ ॥ पंडिता ऊचुः ॥ त्वं विश्वनाथो मनुजाकृतिर्नः पाह्यद्य दीनान्निजधामसंस्थान् ॥ क्षमस्व दौर्जन्यमदोऽखिलानां महान्हि नाल्पं कुरुते प्रमाणम् ॥ ७९ ॥ सामर्थ्यमित्थं तु न लौकिकेषु सुवर्णतेजो हि यथान्यधातौ ॥ ततो यदिच्छादितमे तदल्पं दक्षं भवेत्तत्क्रयविक्रयादौ ॥ ८० ॥ मन्यामहेऽन्यान्न च काशिकास्थाः पृथ्वीशधानीस्थितयो यथा स्युः ॥ न स्वाश्रये तेऽपि नृपे बलिष्ठाः क्षेत्रेशमूर्तौ त्वयि वै तथा स्मः ॥ ८१ ॥

हि यतो महान्पुरुषोऽल्पम् अल्पकृतं प्रमाणं न करोति। अल्पापराधो महद्भिर्न लक्ष्यत इति भावः ॥ ७९ ॥ इत्थं सामर्थ्यं हि लौकिकपुरुषेषु नास्ति । यथा सुवर्णसदृशं तेजोन्यधातौ नास्ति । यदि ततः इतरधातुभ्योऽल्पमपि सुवर्णम् आच्छादितं तथापि तत्सुवर्णं तेषां धातूनां क्रयविक्रयादौ दक्षं समर्थं भवति । तथातितेजस्वी भवान् अल्पैरस्माभिरपकृतोऽपि त्वमेवास्मान् जेतुं समर्थोऽसीत्यर्थः ॥ ८० ॥ ननु काशीस्थपंडिता यूयमपि जेतुमशक्याः किमर्थं मामेवं वर्णयथेत्याशंक्य त्वं तु सर्वोत्तमो विश्वेश्वरोऽसीत्याहुः । मन्यामह इति । काशीस्था वयम् अन्यदेशस्थपंडितान्न मन्यामहे यथा राजधानीस्थाः स्वस्व

देशस्थान्न मन्यंते तथेत्यर्थः । अथापि ते राजधानीस्थाः स्वाश्रयभूते नृपे बलिष्ठा न स्युः नैव भवंति । तथा क्षेत्रेशमूर्तौ क्षेत्रज्ञरूपे विश्वेशमूर्तौ त्वयि बलिष्ठाः पराक्रमकरा न स्मो न भवामः । तस्मात्त्वं विश्वेश एवासीत्यर्थः ॥ ८१ ॥ ८२ ॥ अथ मंत्रशास्त्रे काश्यां भास्करप्रकाशं वर्णयन्नाह—कश्चिदि त्यादिषड्भिः । विनोदचेष्टात् विनोदकराचेष्टा यस्य तस्मात् । अवाच्यं गालीप्रदानं तमेव मंत्रं प्राप्तवान् स च तत् गालीप्रदानं मंत्रं मेने ॥ ८३ ॥ स पृथिव्यां भ्रमन् भक्त्या तन्मंत्रं जपन् महानृपस्य प्रधानत्वं प्राप । तस्य मंत्रस्य सामर्थ्येन तदैश्वर्यं मत्वा । अथ सुभग ऐश्वर्यवान् तन्मंत्रस्य न्यासच्छंद

श्रुत्वा ययौ स्वस्थितिमित्थमार्यो देवोपनाम्नो विदुषः सुताय ॥ कन्यां ददौ काकुमथो विधानान्महार्हवस्त्राभरणैर्बुधेज्यः ॥ ८२ ॥
कश्चिद्द्विजश्चास पुरात्र काश्यां व्यापारहीनः सुमतिश्च निःस्वः ॥ संप्रार्थिताच्चाप विनोदचेष्टाद्द्विजादवाच्यं च मनुं हि मेने ॥ ८३ ॥
भ्रमन्धरित्र्यां स जपंश्च भक्त्या प्रधानतां चाप महानृपस्य ॥ मत्वा प्रभावेण हि तन्मनोश्चाऽगान्न्यासलब्ध्यै सुभगोऽथ काशीम् ॥ ८४ ॥
स दृष्टवांस्तत्र गुरुं भ्रमंश्च स्वयंप्रकाशं यतिमेत्य सोऽथ ॥ उक्त्वाखिलं मंत्रमुतर्षिमुख्यं ययाच एतद्यतिनापि बुद्धम् ॥ ८५ ॥ हसन्यतिः
प्राह तमद्य याहि त्वं भास्करं मंत्रविदां वरिष्ठम् ॥ न्यासाद्यवाप्तुं कथयत्यसौ हि श्रुत्वेति चागात्स च भास्करार्यम् ॥ ८६ ॥ स सर्ववि
त्तद्वदितं निशम्य ज्ञात्वाप्यवाच्यं वचनं तदेव ॥ कृत्वा मनुं तत्र वचोभिरस्मै न्यासादिकं दैवतयुक्तमाह ॥ ८७ ॥ स राजमंत्री यतिमेत्य
चोचे पुनस्तदाकर्ण्य स ह्यवोचत् ॥ यद्भाषितं तच्च करोति मंत्रं सर्वागमेऽस्त्यात्मपरः किलैषः ॥ ८८ ॥ रहस्यथो भास्करमेत्य
गुप्तः स्वयंप्रकाशो यतिरप्यसुं सः ॥ नत्वा मुहुः प्रार्थनयापि बह्व्या जग्राह मंत्रान्न विदुस्तदन्ये ॥ ८९ ॥ पद्मावती पुत्रमजीजन
त्तत्फलं वदत्येत्य च दैववित्तम् ॥ मूर्खस्तथाल्पायुरयं तदार्यः श्रुत्वायुषोऽप्यज्ञतयैव दुःखी ॥ ९० ॥

ष्यादिलब्ध्यर्थं काशीमगात् ॥ ८४ ॥ तत्र काश्यां भ्रमन् मंत्रोपदेष्टारं न दृष्टवान् । अथ सः स्वयंप्रकाशमेत्य सर्ववर्तमानं मंत्रं चोक्त्वा ऋष्यादिकं याचित वान् । यतिनापि अनेकभाषाभिज्ञेनैतत् गालीप्रदानं ज्ञातम् ॥ ८५ ॥ त्वं तु न्यासादि अवाप्तुं भास्करं गच्छ ॥ ८६ ॥ स भास्करः ॥ ८७ ॥ तत् मंत्रसामर्थ्यं हृदि मनसि स यतिरुवाच एष भास्करः सर्वागमे सर्वमंत्रशास्त्रे आत्मपरः स्वतंत्रोऽस्ति किल ॥ ८८ ॥ ८९ ॥ अथ पद्मावती भास्कर

पत्नी पुत्रमजीजनत् । तदा दैवज्ञः कश्चिद्भास्करं प्रति मूर्खोल्पायुश्चायं पुत्रो भविष्यतीति तत्फलं जन्मफलं वदति अवदत् । इति श्रुत्वाऽयो भास्करः आ ईषत् आयुषः अल्पायुष्ट्वापेक्षया अज्ञतयैव दुःखी अभवत् । विदुषः पुरुषस्य मूर्खपुत्रेण दुःखं भवतीत्यर्थः ॥ ९० ॥ ज्ञात्वा भास्कराभिप्रायमिति शेषः । मौर्ख्यं मूर्खत्वं स्वदुग्धेनापहृतम् ॥ ९१ ॥ कपोलयुग्मेऽमला दुग्धधारा यस्य तम् । ताम् इष्टदेवताम् । मदंतान्मन्मरणानंतरम् अब्दपर्यंतं सुतो जीवतु । सा देवता तथास्तु इत्याह ॥ ९२ ॥ अस्यां देवतायाम् । कौलं पाडुरंगोपासककुलयोग्यं सवायीपांडुरंगरायेति नामाकरोत् दैवज्ञाय सुवित्तं च

ज्ञात्वेष्टदेवी स्वयमेत्य बालं तं पाययित्वात्मपयः सुगूढा ॥ रहो गुरुं प्राह च ते सुतस्य मौर्ख्यं मया चापहृतं स्वदुग्धात् ॥ ९१ ॥
श्रुत्वेति गत्वाथ शिशुं समीक्ष्य कपोलयुग्मामलदुग्धधारम् ॥ तुष्टः स तामाह पुनर्मदंतादब्दं सुतो जीवतु सा तथाह ॥ ९२ ॥
तिरोहितायामथ जातमस्यां स द्वादशेह्न्येव च नाम कौलम् ॥ तस्याकरोत्सांघ्रिकपांडुरंगरायं विधिज्ञाय ददौ सुवित्तम् ॥ ९३ ॥
पाचारयित्वाखिलपंडितांश्च सन्मानयामास सुतोत्सवेऽसौ ॥ तेथाहुरेनं ललितासहस्रनाम्नः कृतं भाष्यमिति श्रुतं यत् ॥ ९४ ॥
तद्दर्शनीयं यदि रोचतेऽथानाय्य स्वशिष्याद्गुरुणाखिलाग्रे ॥ संस्थापितं तैश्च विलोकितं चच्छलार्णसूत्रादिगमं वरार्थम् ॥ ९५ ॥
ज्ञातं क्वचिन्नो क्व च तत्त्वणुज्ञैः साकल्यतो ज्ञातुमनीश्वरैस्तैः ॥ संकेतितं चेति मिथोऽखिलैस्तु वैगुण्यमत्राण्वपि यद्विलोक्यम् ॥ ९६ ॥
प्राक्काशिकामेत्य न कश्चिदेवं जयीति जातो ह्यथ यन्मनुष्यैः ॥ शास्त्रैरवाच्यं खलु पृच्छतां तत्प्रश्नं तदास्मै कृतवंत इत्थम् ॥ ९७ ॥

ददौ ॥ ९३ ॥ त्वया भाष्यं कृतमस्तीति श्रुतं तत् यदि रोचते तर्हि नोऽस्मभ्यं दर्शनीयमिति संबंधः ॥ ९४ ॥ छलार्णसूत्रादिना गम्यते तत् । वरार्थम् उत्तमार्थकम् ॥ ९५ ॥ तत्तु भाष्यं क्वचित् न ज्ञानं क्वचिज्ज्ञैः पंडितैरल्पं ज्ञातम् । अत्र यद्वैगुण्यं दोषवत्त्वं तदवलोक्यम् । अस्मिन् भाष्ये क्वचिद्दोषोऽवलोक्यतामिति परस्परं संकेतः कृत इत्यर्थः ॥ ९६ ॥ तं संकेतमाहुः प्रागिति पूर्वं काशीक्षेत्रं प्राप्यैवं जयवान्कोपि न जातः इति हेतोः अथ यत् मनुष्यैः कर्तृभिः

शाबरवाच्यं वक्तुमशक्यं तदस्माभिः पृच्छ्यताम् इति संकेतं कृत्वा इत्थं वक्ष्यमाणं प्रश्नं कृतवंतः प्रश्नं चक्रुरित्यर्थः ॥ ९७ ॥ तमेव प्रश्नमाहुर्द्वाभ्याम् । ननु महाचतुःषष्टिकोटियोगिनीगणसेवितेत्यस्य अर्थविषये चतुःषष्टिकोटियोगिनीनां महत्यः इत्थं विशेषणं भवेद्वै तदा महत्तमाः पूज्यतमास्ताः सर्वा योगिन्यो देवताः स्युरिति चेत्तर्हि अखिलानां चतुःषष्टिकोटिसंख्यानां योगिनीनाम् ऋषिच्छंदोविनियोगमंत्रान् यदि त्वं भाष्यकर्ता तर्हि सम्यक् ब्रूहि । यदि कथयसि तर्हि भाष्यकर्तारं त्वां मन्यामह इत्यर्थः ॥ ९८ ॥ ९९ ॥ मया गदितं तैर्लेखकैः आशु यदि लिख्यते तर्हि भवद्भिर्यत् पृष्टं तत्तान्प्रति वच्मि

महाचतुःषष्टिककोटिसंख्यसुयोगिनीसंघसुसेवितार्थे ॥ भवेच्चतुःषष्टिककोटिकानां महत्य इत्थं हि विशेषणं वै ॥९८॥ महत्तमाः पूज्यतमास्तु सर्वाः स्युर्दैवतास्ता इति चाखिलानाम्॥नामर्षियुक्तान्विनियोगमंत्रान्ब्रूह्येव सम्यग्यदि भाष्यकृत्त्वम्॥९९॥श्रीदेशिकेंद्र उवाच॥ तैः पृष्ट इत्थं गुरुराह सर्वान्संलेखकान्वै त्वरयाऽऽनयध्वम्॥तान्वच्मि यत्पृष्टमथो भवद्भिश्चेल्लिख्यते तैर्गदितं मयाशु॥१००॥स्युर्लेखकास्तत्र च येऽखिलांस्तानानाय्य यत्नादिति ते तमाहुः॥सलेखनीकज्जलपात्रपत्रादिकं तु सिद्धं झटितीर्यतां तत् ॥ १ ॥ अथोच्चपीठस्थगुरुः प्रमाणादेवर्षियुक्तान्विनियोगमंत्रान् ॥ प्राहाखिलानस्खलितार्णएको दक्षो मनून्वक्तुमिहोक्तसंख्यान् ॥ २ ॥ न लेखकाः प्रोल्लिखितुं तदेशा गुरूक्तमंत्रांस्त्वखिलानिवैणाः ॥ एकानिलानेकगतीरलंघ्या वेगेन चोल्लंघयितुं प्रवृत्ताः ॥ ३ ॥

॥ १०० ॥ तत्र काश्यां ये लेखकाः स्युरथ प्रयत्नेन तानानीयास्य भास्करस्याभितः लेखनीकज्जलपात्रपत्रादिकं सुसिद्धमस्ति ते काशीस्थपंडितास्तच्छंदर्ष्यादिकं झटिति त्वया कथ्यतामित्येवं भास्करं प्राहुः ॥ १ ॥ प्रमाणान्मंत्रशास्त्रप्रमाणेनाखिलान्सर्वलेखकान्प्रति उक्तसंख्यान् चतुःषष्टिकोटिसंख्याकान् ॥ २ ॥ यदातित्वरया वक्तुं प्रवृत्तस्तदा ते लेखकाः सर्वान् भास्करोक्तमंत्रान्प्रोल्लिखितुं ईशाः समर्था न बभूवुः । यथैणा मृगाः सुवेगाः संतोपि एकस्यानिलस्यालंघ्या अनेकगतीर्वेगेनोल्लंघयितुं समर्था न भवंति तथेत्यर्थः ॥ ३ ॥

तदा क्षेत्रस्थाः सुबुद्धास्तं भास्करं प्रति एकमुखेन पृथिव्यामवतीर्णमनंतं मेनिरे हि । कुत इति चेत् । एकोपि तंत्रप्रमाणैर्युक्ताः सुस्पष्टवर्णा अने कवाचो वदतीति हेतोः । अलौकिकमेतत्सामर्थ्यं भास्करस्येत्यर्थः ॥ ४ ॥ एवं भास्करप्रभावं दृष्ट्वा तदा किं वृत्तमित्याह । शीघ्रवक्तायं मामेव वक्तीति लेखकाः प्रत्येकं हृदि मत्वा तं प्रणम्यानंताः वाचो यस्मात्तेन त्वयोक्तं लिखितुं वयं न समर्थाः स्मेत्याहुः ॥ ५ ॥ मानवो न किं त्वीश्वर एवातोऽल्पानाम स्माकं कृत्यं कापट्येन प्रश्नकरणं चेतसि न धारय अस्माकं अपराधं क्षमस्वेत्यर्थः ॥ ६ ॥ अर्द्धं आर्द्रशरीरं यस्य तस्मिन्भास्करगुरौ स्नातुं चतुरं गोपारि स्थिते सति ॥ ७ ॥ यः शेषोपनामा पंडितः एकः मुख्यः काश्यां धर्मद्रष्टा । यथा भास्करगुरोरल्पमपि वक्तुं अवकाशो न भवेत्तथेति स्नानसंधिं

तं मेनिरे क्षेत्रगताः सुबुद्धा एकास्यतः शेषमिलावतीर्णम् ॥ एकोऽप्यनेकाः सुगमाक्षराश्च युक्ताः प्रमाणैर्वदतीति वाचः ॥ ४ ॥ मामेव वक्त्येष हि शीघ्रवक्ता प्रत्येकमित्थं हृदि लेखकास्तम् ॥ मत्वा प्रणम्याहुरनंतवाचा त्वयोदितं नोल्लिखितुं क्षमाः स्मः ॥ ५ ॥ अथो त्थितास्तेऽखिलपंडिताश्च नत्वा मुहुः प्रांजलयस्थितास्तम् ॥ प्रोचुर्भवान्नैव च मानवोऽस्ति नातोऽल्पकृत्यं कुरु चेतसीदम् ॥६॥ उक्तेति सर्वे स्वगृहं ययुस्ते दिनांतरे प्रातरथार्यवर्यै ॥ स्नातुं स्थितेऽर्धार्द्रशरीर एकः शेषोपनामात्र ययौ बुधार्यः ॥ ७ ॥ यः काशिकायां बुधवर्य एकोऽन्यैर्भास्करोत्कर्षतयातिखिन्नैः ॥ संप्रेषितः संधिमवेक्ष्य यत्नाद्यथावकाशोऽपि न वक्तुमल्पम् ॥ ८ ॥ सोथाब्रवीद्भास्क रमत्र गंगां हित्वा कथं भांडजलाप्लुतिं हि ॥ करोषि चोक्ता स्मृतितो मुधा या त्वयीक्ष्यते नापि रुगादिहेतुः ॥ ९ ॥ उवाच तं भास्कर उक्तमेतत्सत्यं ह्यथोद्धर्तुमिनोदयोऽग्नीन् ॥ भवेत्किलाक्षालितनिर्मलेनास्पृश्या द्युगंगेति च पूर्वमार्गात् ॥ ११० ॥

दृष्ट्वा भास्करोत्कर्षेण दुःखितैरन्यैरल्पज्ञैः संप्रेषित आसीदिति शेषः । शुनः पुच्छमिव खलबुद्धिर्लीनभावं न यातीति भावः ॥ ८ ॥ अथ स शेषोपनामा भास्करमब्रवीत् । भागीरथीं हित्वा त्यक्त्वा गृहे भांडस्थजलेन स्नानं कथं करोषि हि यतः या भांडजलाप्लुतिः स्मृत्या वृथाप्लुतिरुक्तास्ति। किं च त्वयि रोगादिहेतुरपि न दृश्यते । तथा चोक्तम् । " उत्तमं तु नदीस्नानं मध्यमं तु तटाकजम् । कूपस्नानं कनिष्ठं स्याद्भांडस्नानं वृथा भवेत् " इति । त्वय्येतन्न योग्यमित्यर्थः ॥ ९ ॥ अथ भास्करस्तं प्रत्युवाच । एतत् भांडजलस्नानं सत्यं यथार्थमुक्तं यथायोग्यमस्ति किल हि यतः अग्नीनुद्धर्तुं सूर्योदयो

भवति गंगां प्रति गमने यदि सूर्योदयस्तदा होमकालातिक्रमे प्रायश्चित्तापत्तिः स्यात् । च पुनः न क्षालितः निशामलो येन तेन पुरुषेण भागीरथी स्प्रष्टुं योग्या न भवतीति पूर्वमार्गात् प्राचीनसंप्रदायेन हेतुना च गृहे स्नानं योग्यमस्ति । तस्मात्पूर्वं गृहे स्नानं कृत्वानंतरं मध्याह्नस्नानार्थं गंगास्पर्शने यथा शास्त्राचरणं भवति । भांडजलस्नाननिंदा तु एककालस्नानविषया न त्रिकालस्नानविषयेति भावः । भास्करस्य कोपेन विपरीतभावग्राह्या वृत्तं च विपरीत पूर्वाख्यानकीनाम ॥ १० ॥ पीठगतश्चासावार्द्रदेहश्च सर्पिषा घृतेनार्द्रोऽग्निर्यथाऽर्चिर्ज्वालां जनयति तथा भास्करोऽपि ज्वालां जनयेत् किल । यत ईशः निग्रहानुग्रहसमर्थ इत्यर्थः ॥ ११ ॥ आत्मनः शिष्याच्छिष्यमुखेन सर्वं वृत्तं ज्ञात्वा तं भास्कराद्दूरं द्रुतं निनाय भास्करतेजसा दग्धो भविष्यतीति तं

पुनश्च तद्वृत्तमथोद्यतं स ज्ञात्वा गुरुः पीठगतार्द्रदेहः॥ततः क्रुधा कुंडगतो यथार्द्रोऽग्निः सर्पिषार्चिर्जनयेत्किलेशः ॥११॥ स्वयंप्रकाशो यतिरेत्य तावज्ज्ञात्वाखिलं वृत्तमथात्मशिष्यात् ॥ धृत्वा कराभ्यामथ पंडितं तं निनाय दूरं द्रुतमार्यवर्यात् ॥ १२ ॥ तमब्रवीत्क्षेत्र इह त्वमेव वित्स्नानकाले किमु जल्पसीमम् ॥ साक्षाच्छिवोयं नृतनुर्हि कोपी चेत्त्वाग्निनाऽक्ष्णो दहतीव कामम् ॥ १३ ॥ उक्त्वेति तं भास्करपादशीर्षं कृत्वाब्रवीद्वै यतिरित्थमार्यम् ॥ देयं ममैकं भवताऽद्यतो नो केनापि कार्यः स्वमुखेन वादः ॥ १४ ॥ श्रुत्वा तथेत्यार्यवराद्गतोऽसौ संस्थाप्य काश्यां गुरुरिज्यकीर्तिम् ॥ श्रीभास्करेशं च सुविप्रतिभ्यो दत्त्वांशुकाद्यं ह्यकरोत्तदिज्याम् ॥ १५ ॥

रक्षितवानित्यर्थः ॥ १२ ॥ स्वयंप्रकाशस्तं शेषोपनामानमब्रवीत् इह क्षेत्रे त्वमेव ज्ञानवानसि किं यतः स्नानकाले इमं भास्करं प्रति जल्पसि वृथा भाषणं कुरुषे मनुष्यजन्मायं साक्षाच्छिवः कोपवांश्चेत्त्वा त्वां प्रति नेत्राग्निना काममिव दहति दहेदेव । आग्नेयोऽष्टाकपालो भवतीति वत् दहतेर्विध्यर्थकत्वं कमंडलुवन्मरिष्यसीति भावः ॥ १३ ॥ भास्करपादयोः समीपे शीर्षं यस्य तं शेषोपनामकं सुलीनं कृत्वा यतिर्भास्करगुरुं प्रतीत्थमाह । अद्य प्रभृति त्वया कर्त्रा मुखेन वादः केनापि पुरुषेण सह न कर्तव्य इत्येकं त्वया मह्यं दातव्यमस्ति तत्प्रार्थनयाद्यप्रभृति पत्रवादः कर्तव्य इत्यर्थः ॥ १४ ॥ तथा मुखतो

वादं न करिष्यामीति भास्करमुखाच्छ्रुत्वाऽसौ स्वयंप्रकाशो यतिः स्वस्थानं गतः । श्रीगुरुरिति काश्यां पूज्यकीर्तिं स्थापयित्वा भास्करेश्वरं लिंगं च स्थापयित्वा सुविद्भ्यः पंडितेभ्यः यतिभ्यश्च वस्त्रादिकं दत्त्वा तदिज्यां भास्करेश्वरपूजां कृतवान् ॥ १५ ॥ अथ भास्करगुरुणा नृसिंहयज्वगुरोः पुत्रस्य स्वामिशास्त्रिणः इत्थं कीर्तिरिह काश्यां श्रुता माध्वयत्योः समीपे दिवा द्विदीपौ वर्तेते तयोर्हरणं स्वामिशास्त्रिणा वादेन कृतमिति कीर्तिः श्रुता । यदा तदा तस्य दर्शनेच्छुः सन् अस्मात्काशीक्षेत्रसकाशात्स्वदेशान्प्रति स भास्करो ययौ पत्न्यादिभिः सहेति शेषः ॥ १६ ॥ एतत्सर्गोक्तभास्करकथाश्रवणादिफलमाह—य इति । कर्णपूरः कर्णूलनगरस्य नाथो यवनस्तस्य हृतम् ओजस्तेजो येन तस्य भास्करस्य काशीयात्रां यः शृण्वन्पठन् वर्तते सः अपमृत्युतो

अथ श्रुता तेन नृसिंहयज्वपुत्रस्य कीर्तिस्त्विह माध्वयत्योः ॥ दिवा द्विदीपाहृतिरित्थमस्मात्तदीक्षणेच्छुः स ययौ स्वदेशान् ॥ १६ ॥
यः कर्णपूर्नाथहृतौजसोस्य काश्याश्च यात्रां गुरुभास्करस्य ॥ शृण्वन्पठन् सोऽपमृतेर्हि मुक्तोऽविमुक्तयात्राफलमश्नुते च ॥ ११७ ॥
इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे भास्कराचार्यकाशीयात्रावर्णनं नाम द्विचत्वारिंशः सर्गः ॥ ४२ ॥ श्रीदेशिकेंद्र उवाच ॥ भालक्ष्यां वसतोऽथास्य दर्शनार्थं गुरोर्ययौ ॥ विरूपाक्षः सिद्धवरः सिद्ध्या पश्यत्यदर्शनम् ॥ १ ॥ मुक्तसंगोऽपि शुश्राव भाष्याद्यं भास्करोदितम् ॥ आसीनश्चैकदापश्यत्प्रेषितं भास्करोपरि ॥ २ ॥ अभिचारं त्वग्निचक्रसमं चानन्यवीक्षितम् ॥ भास्करं चावदत्सिद्धः पश्यैतन्मृत्यवे तव ॥ ३ ॥ आप्तेन विमतस्थेन शत्रुभावहृदाऽर्पितम् ॥ जपस्व सिद्धमंत्रं त्वं नाशमाशु गमिष्यति ॥ ४ ॥

मुक्तः सन्काशीयात्राफलं प्राप्नोति॥११७॥इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायां अ०स्फू० द्विचत्वारिंशः सर्गः॥४२॥उत्रिचत्वारिंशकेक्षद्वीदुपद्यैस्तु भास्करः ॥ कुर्वन्नानाविधां कीर्तिं स्वधामाप्नेति वर्ण्यते ॥ ४३ ॥ अथ भास्करस्यात्मस्थितिं वर्णयन्नादौ तस्य नानाविधचरित्रं सविस्तरं स्वामिशास्त्रिसमागमं च वर्णयति ॥ तत्रादौ मंत्रसामर्थ्येनाभिचारनिवारणमाह—भालक्ष्यामित्यादिपंचभिः । अथ काशीयात्रानंतरं भालक्ष्यां निवसतो भास्करगुरोर्दर्शनार्थं विरूपाक्षनामा कश्चित्सिद्धवरो ययौ । यः सिद्धिसामर्थ्येन अदर्शनं दृष्ट्यगोचरं पश्यति । स मुक्तसंगोऽपि भास्करोक्तं भाष्यादिकं श्रुतवानिति यत्तदोः संबंधः ॥ १ ॥ २ ॥ न अन्येन वीक्षितमिति पूर्वार्द्धे पूर्वान्वयि । एतत् अभिचारकृत्यम् ॥ ३ ॥ शत्रुभावो हृदि यस्य तेन द्वैतमतस्थेन केनचित्पुरुषेण प्रेषित

मिति पूर्वान्वितम् । नाशमाशु गमिष्यति । अभिचारकृत्यमिति शेषः ॥ ४ ॥ श्वशुरेणैवैतत्कृतम् अन्यतः अन्येन न कृतमिति च गुरुर्भास्करो ज्ञातवान् ॥ ५ ॥ अथ भास्करगुरुः कलौ मंदमतीनामुपासकानामुपासनासिद्ध्यर्थं सूत्रानुसारेणाह्निकपद्धतिं कारितवानित्याह । कावेर्यैकमित्यादिपंचभिः । अथाग्निश्रीपुत्रयुक्तो गुरुः कावेर्यैकं कावेरीसमीपस्थं देशं भास्करपुरं गतः सन् तदा जगन्नाथ इति आर्यं श्रेष्ठं नाम यस्य तस्मादुमानंदात् निमित्तभूतात् परशुरामकृतसूत्रानुसारेण नित्योत्सवाभिधं ग्रंथं कारयामासेति त्रयाणामन्वयः ॥ ६ ॥ काकुनाम्नीं सुतां ललिताया अर्चने उत्कंठितां दृष्ट्वा बृहतीं स्वपद्धतिं ज्ञातुमस

सिद्धवाक्यान्मनुं जप्त्वा तन्नाशं चाकरोद्गुरुः ॥ अवदच्छ्वशुरेणैव कृतमेतन्न चान्यतः ॥५॥ कावेर्यैकमथो देशं गतोऽग्निश्रीसुतादियुक् ॥
काकुनाम्नीं सुतां वीक्ष्य ललितार्चोत्सुकां गुरुः ॥६॥ बृहत्स्वपद्धतिं ज्ञातुं मत्त्वाऽनीशां च तां प्रभुः ॥ उमानंदात्स्वीयशिष्याज्जगन्नाथार्यनामकात् ॥ ७ ॥ श्रीमत्परशुरामीयसूत्रान्नित्योत्सवाभिधम् ॥ निबंधं कारयामासाल्पन्यासार्चाह्निकं तदा ॥ ८ ॥ ग्रंथं तेन कृतं सर्वं तं चावेक्ष्य हसन्निति ॥ प्राहाद्यतोऽस्मत्पद्धत्याऽर्चाद्यं केऽपि च तंद्रिताः ॥ ९ ॥ विलंबान्न करिष्यंति ह्यन्यव्यापारवर्तिनः ॥
नूत्नयाथ तया कन्यां देव्यर्चायां समादिशत् ॥ १० ॥ तावत्प्राप्ता समीपे तु शिवरात्रिरथाखिलाः ॥ श्रीगुरुं प्रार्थयामासुः श्रीशैलं गंतुमुद्यताः ॥ ११ ॥ पद्मावत्याद्यभिप्रायाज्ज्योतिर्लिंगेषु चैकतः ॥ अदृष्टत्वाद्ययौ नाथः सर्वैस्तं मल्लिकार्जुनम् ॥ १२ ॥ तद्यात्रार्थं गतं श्रुत्वा बहुकालमनीक्षितम् ॥ गुरुं शिष्याश्च बहवश्चंद्रसेनादयो ययुः ॥ १३ ॥ नृपाः पंडितवर्याश्च धनिनोऽथेतरे निजैः ॥
गुरुबंधुः स्वामिशास्त्री दिवा दीपद्वयान्वितः ॥ १४ ॥

मर्थां च दृष्ट्वा ॥ ७ ॥ अल्पं न्यासार्चाद्याह्निकं यस्मिंस्तम् ॥ ८ ॥ तं चोमानंदम् । अयत इत्युत्तरान्वयि । तंद्रिताः आलस्ययुक्तपुरुषाः अर्चाद्यं पूजादिकं विलंबाद्धेतोर्न करिष्यंति । हि यतः अन्यव्यापारवर्तिनः बहुव्यापारासक्ताः ॥ ९ ॥ तया नित्योत्सवनिबंधपद्धत्या काकुनाम्नीं कन्यां देव्यर्चाविषये स भास्कर आज्ञापितवान् ॥ १० ॥ अखिलाः शिष्याः ॥ ११ ॥ एकतः एकज्योतिर्लिंगस्यादृष्टत्वात् ॥ १२ ॥ १३ ॥ पूर्वार्द्धे ययुरित्यप

कर्षः । उत्तरार्द्धमुत्तरान्वयि ॥ १४ ॥ तं मल्लिकार्जुनं उत्तरार्द्धमुत्तरान्वयि । शिवनिशि शिवरात्र्याम् ॥ १५ ॥ तस्य मल्लिकार्जुनस्य शिखरदर्शनेन सुधाप्तसुरताया अमृतप्राप्तदेवत्वादपि आधिक्येन संतुष्टाः । "श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते" इति वाक्यान्मोक्षं प्राप्ता इव बभूवुरित्यर्थः ॥ ॥ १६ ॥ सद्यः स्फुरत्सुखं येषां ते । श्रीशैलशिखरदर्शनेन यद्यपि मोक्षसुखं कालांतरे भविष्यति तथापि भास्करगुरोर्दर्शनेन सद्योमुक्तिं प्राप्ता इत्यर्थः ।

ययौ तं चेति तत्राभूत्समाजो हि महत्तमः ॥ शिवनिश्यथ ते शंभुं दृष्ट्वा नत्वा समर्च्य च ॥ १५ ॥ भास्करं चाययुर्द्रष्टुं परेऽह्नि कृतपारणाः ॥ सुधाप्तसुरताधिक्यात्तुष्टास्तच्छिखरेक्षणात् ॥ १६ ॥ ततश्च श्रीगुरुं दृष्ट्वा नेमुः सद्यः स्फुरत्सुखाः ॥ गुरुर्नमस्कृतः सर्वैः स्वामिशास्त्रिणमागतम् ॥ १७ ॥ दृष्ट्वोत्थायालिलिंगामुं समीपे स्थापयन्मुदा ॥ पप्रच्छुः कुशलं सर्वे मिथस्ते प्रेमयंत्रिताः ॥१८॥ स्वामिशास्त्री ततः पृच्छन्काशिकावृत्तमादितः ॥ भास्करार्यं तस्य शिष्याच्चाशृणोज्जयगर्भितम् ॥१९॥अथ श्रीभासुरानंदः स्वामिशास्त्रिणमब्रवीत् ॥ भट्टारकान्माध्वभिक्षो रघुनाथात्त्वया हृतम् ॥ २० ॥ दिवा दीपद्वयं वादात्केलीनृपगुरोस्तथा ॥ कृतो मठच्युतः सत्यवर्यो मल्लनृपाश्रितः ॥ २१ ॥ श्रुत्वैवेति तवोत्कर्षं तुष्टः संजीवनीहृतः ॥ कचस्य मघवेवाहमभवं ह्युत्कचांकितः ॥ २२ ॥ स्वाम्युवाचाथ तं चेति त्वयोर्वीजयिना किमु ॥ वर्णनीयो ममोत्कर्षः पल्वलस्येव सिंधुना ॥ २३ ॥ वर्णयंतौ मिथश्चेत्थं सम्मविद्याविमावथ ॥ चंद्रसेनो नृपः प्राह सर्वैरुक्तः कृतांजलिः ॥ २४ ॥

उत्तरार्द्धमुत्तरान्वयि ॥ १७ ॥ १८ ॥ १९ ॥ केलीनृपस्य गुरोः रघुनाथभट्टारकनामकान्माध्वयतेः सकाशात्त्वया वादेन दिवा दीपद्वयं गृहीतमस्तीत्यन्वयः॥२०॥ तथा मल्लनृपाश्रितः सत्यवर्याख्यो माध्वयतिश्च त्वया मठच्युतः कृतः सम्यक् जातमित्यर्थः ॥२१॥ इति तवोत्कर्षं श्रुत्वा संतुष्टः सन् रोमांचयुक्तोऽभवम् । यथा मघवा इंद्रः मृतसंजीविनीहर्तुः कचस्य गुरुपुत्रस्य उत्कर्षं श्रुत्वा संतुष्टः सन् रोमांचयुक्तोभवत्तथेत्यर्थः ॥२२॥२३॥ सर्वजनैरुक्तः भास्करस्वा

मिशाखिणोर्वादश्रवणार्थं प्रार्थितो नृप इमौ प्राह ॥ २४ ॥ तत्रादौ उभयोः स्नेहाधिक्यात् हरिहरसाम्येन वर्णयति ॥ युवामिति । समविदौ हि युवां पृथिवीं प्राप्तौ हरिहरौ ध्रुवं स्थः। यतः इह युवयोः मत्सरः परगुणासहिष्णुत्वं कश्चिदेकस्मिन्नपि किंचिदपि न दृश्यते । मत्सराभावमाह । गुरोः सुतोपि स्वामिशास्त्री उत पुनः स्वपितृशिष्यं भास्करं प्रति श्रेष्ठं पश्यति । भवानपि भास्करः सर्वाञ्जेत्तीति सर्वजिदपि तं गुरुपुत्रं वरं श्रेष्ठं गुरुमेव पश्यतीति अहो आश्चर्यं युवां धन्यतमावित्यर्थः ॥ पृथिवीवृत्तम् ॥ २५ ॥ युवयोर्दर्शनेनास्माकं महद्भाग्यमिति दर्शयन् स्वस्य सर्वेषां च मनोभिलषितं प्रार्थयति—इहेति । इह स्थानेऽस्माकं बहुपुण्येन सदिति संगतौ सत्या इत्या स्वस्वगत्या संयुक्तौ युवां जाह्नवीयमुनातुल्यौ स्थः । अथ तयोः जाह्नवीयमुनयोर्मध्ये वाक् सरस्वती

युवां हरिहरौ ध्रुवं समविदौ हि पृथ्वीगतौ न चेषदपि दृश्यते यत इह क्वचिन्मत्सरः ॥ गुरोः सुत उतेक्षते स्वपितृशिष्यमप्यार्यकं भवानखिलजिद्वरं च तमहो गुरुं पश्यति ॥ २५ ॥ इहास्मदतिपुण्यतः सदितिसंगतौ जाह्नवीदिनेशतनयासमावथ तयोः सुगूढा तु वाक् ॥ नदीह विशदास्तु सा श्रुतिगवाग्जलैर्हन्मलं हरत्वखिलशृण्वतामिति मनोऽखिलानां च नः ॥ २६ ॥ श्रीदेशिकेंद्र उवाच ॥ तेषां ज्ञात्वेत्यभिप्रायं तानथो भास्करोऽब्रवीत् ॥ गुरुतुल्यो गुरोः पुत्रस्तेन वादः कथं भवेत् ॥ २७ ॥ सामानाधिकरण्याच्चेदावाभ्यां क्रियतेऽधुना ॥ निर्बंधो मे कृतः काश्यां यतिना विद्वरेण च ॥ २८ ॥

नदी तु गुप्तास्ति । इह युवयोः जाह्नवीयमुनातुल्ययोः सा वाणीरूपा सरस्वती स्पष्टा भवतु च पुनः श्रुतिवचनजलैः सर्वेषां शृण्वतां मनोमलं हरतु । इति सर्वेषां नोऽस्माकं मनः मनोगताभिप्रायोऽस्ति । युवयोरुत्तमाधिकारिणोर्वादश्रवणेन तत्त्वबोधोदयादस्माकं मनस्तृप्तिर्भविष्यतीत्यर्थः ॥ २६ ॥ "आत्मा वै पुत्रनामासीति श्रुत्या गुरुपुत्रे गुरुतुल्यत्वादावयोर्वादः कथं भवेत् । वादो हि समाधिकारिणोर्भवति नाधमोत्तमयोर्मर्यादाभंगप्रसंगादित्यर्थः ॥ २७ ॥ ननु वैय्यधिकरण्येन वादे मर्यादाभंगो भवति सामानाधिकरण्यने तु वादे मर्यादारक्षणं स्यादित्याशंक्याह । चेयदि आवाभ्यां सामानाधिकरण्यात् समम् अधिकरणम् अधिष्ठानं प्रीत्याख्यं तस्माद्धेतोः । यद्वा 'साम सांत्वपरं वाक्यम्' इति कोशात्सामाश्रयेण स वादः क्रियते तर्हि काश्यां विद्वच्छ्रेष्ठेन सत्य

बोधाख्ययतिना अद्यप्रभृति समक्षं मुखेन वादस्त्वया न कार्य इति प्रार्थनया प्रतिबंधः कृतोऽस्तीत्यन्वयः॥ २८॥ नौ आवयोर्वादः श्रोतव्य इति भवतामिच्छा स्ति चेत्तर्हि स वादो लोभेन परस्परं क्षेमोक्तिरिव पत्रैर्भवत्विति परपदैः सह योज्यम्॥ २९॥ किं च। हरिहररूपिण्यौ कृष्णावेण्याख्ये नद्यौ यथैकपर्वतात्सिंहाद्रेः सकाशाद्भूत्वापि माहोलिग्रामे प्रेमसंगे प्रेम्णा संगो ययोस्ते भवतः। कृष्णावेण्योः संगो हि परस्परं संमुखो भवति तथा नौ आवयोर्विये। एकगुरोर्नृसिंहयज्वनः सकाशाद्भूत्वा प्रेमसंगे भवेतामिति संबंधः। यथा लोकपवित्रीकरणार्थं तयोर्नद्योः संगस्तथा युष्माकं संतोषायावयोर्विद्यासंगः पत्रद्वारा भवत्वित्यर्थः ॥ ३०॥ ॥ ३१ ॥ पूर्वार्द्धे पूर्वान्वयि ॥ ३२ ॥ शब्दार्थयोर्गौरवं बाहुल्यं यस्मिन् स्वशिष्यतः स्वस्वशिष्यहस्तेनान्योन्यं प्रेषयंताविति पूर्वान्वितम् ॥ ३३ ॥

प्रत्यक्षं मुखतो वादो न कार्य इति याञ्चया॥ श्रोतव्य एव नौ वादश्चेद्वांछा भवतामिति ॥ २९ ॥ पत्रैर्भूयात्स चान्योन्यं क्षेमोक्तिरिव लोभतः ॥ नद्यौ कृष्णेशरूपिण्यौ भूत्वाप्येकगिरेर्यथा ॥ ३० ॥ कृष्णावेण्यौ प्रेमसंगे विद्ये चैकगुरोर्हि नौ ॥ तथेत्याहुर्निशम्येति सर्वे श्रोतुं समुत्सुकाः ॥ ३१ ॥ तयोः सर्वज्ञयोर्वाग्धीचातुर्यं बहुशास्त्रजम् ॥ पृथक्स्थानास्थितावेतावथ पत्रैश्च चक्रतुः ॥ ३२ ॥ सर्वशास्त्रोक्तिभिर्वादं रम्यं शब्दार्थगौरवम् ॥ पंक्तीर्लिखित्वा चान्योन्यं प्रेषयंतौ स्वशिष्यतः ॥ ३३ ॥ यत्सोमेन यजेत वाक्यम लिखत्स्वामी बुधोऽनेकधा शंकोक्त्याथ निवारयन्वचनतो युक्त्यालिखद्भास्करः ॥ कक्षास्तूत्तरतोऽधिकार्णवलिकाश्वासंस्तयोः सुज्ञयोः श्रुत्युक्त्या विमलाशयप्रकटया सत्तर्कमीमांसया ॥ ३४ ॥

तत्रादौ बुधः स्वामिशास्त्री सोमेन यजतेति वाक्यम् अनेकधा शंकोक्त्या सहालिखत। अथ भास्करो युक्त्या सह वचनेन निवारयन् खंडयन् लिखितवान्। पत्रमिति शेषः। तथाहि पूर्वमीमांसाशास्त्रे विधेश्चातुर्विध्यमुक्तम्। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः यथाग्निहोत्रं जुहोतीत्यादि। अंगप्रधानसंबंधबोधको विनियोगविधिः यथा दध्ना जुहोतीत्यादिः। फलस्वाम्यबोधको विधिरधिकारविधिः यथा राजा राजसूयेन यजेत स्वाराज्यकाम इत्यादिः। प्रयोगप्राशुभावबोधकः प्रयोगविधिः यथा दर्शपौर्णमासप्रयोगादिः। तत्र सोमेन यजेतेति उत्पत्तिविधिर्भवति तदा स्वामिशास्त्रिणोऽयं पूर्वपक्षः।

यदि सिद्धांते सोमवता यागेनेष्टं भावयेदिति विशिष्टविधानमंगीक्रियते तदा सोमपदेन सोमवद्ग्रहणे मत्त्वर्थलक्षणा स्यात् । यदि चात्र सोमयागयोरप्राप्तत्वा दुभयविधानं तदापि सोमेनेष्टं भावयेद्यागेन चेष्टं भावयेदिति वाक्यभेदः स्यात् । फलभावनाकरणभूतस्य यागस्येव सोमस्य प्रधानत्वापत्तिश्च भवेत् यागे द्रव्यानुपपत्तिश्च भवेत् । किं च । यजेतेत्यत्र प्रत्ययवाच्यफलभावनायाः करणाकांक्षा तु यजेतेति समानपदोपात्तेन यागेनैव निवर्तते । तदा भिन्नपदोपात्त सोमस्याकांक्षाभावात् न तस्य करणत्वेनान्वयः संभवति । न च यागेन सोमं भावयेदिति वैयधिकरण्येन सोमस्यान्वयो भवतीति वाच्यम् । तथा सति फलभावनाकरणत्वेनान्वितस्य यागस्य सोमार्थत्वापत्त्याऽदृष्टद्वयापत्तिः स्यात् । न हि यागस्य सोमार्थत्वं व्रीहीणामवघातेनेव दृष्टद्वारा संभवति । अतः प्रोक्षणेन व्रीहीणामिवादृष्टद्वारा वाच्यम् । सोमस्य च फलभावनाकरणत्वेनान्वितस्य भस्मीभावान्न दृष्टफलत्वं संभवति । तथा चादृष्टद्वयापाताद्वाक्यभेद प्रसंगाच्च न यागेन सोमं भावयेदित्यन्वयः संभवति । न च सोमेन यागं भावयेदिति सामानाधिकरण्येन वाक्यार्थे सोमस्य यागार्थत्वात् दृष्टफलत्वेन नादृष्टद्वयापत्तिर्नवा फलभावनाकरणस्य यागस्य सोमार्थत्वापत्तिरिति वाच्यम् ॥ तथा सति फलभावनायां धात्वर्थस्य यागस्य करणत्वेनान्वयात् सोमेन यागमिति साध्यत्वेनान्वयानुपपत्तिः सोमेन यागं यागेनेष्टं भावयेदिति वाक्यभेदश्च भवेत् । यदि च यागेन फलभावनायाः करणाकांक्षानिवृत्तौ सत्यां सोम स्येतिकर्तव्यतया अन्वयः क्रियते । तदा सोमस्य द्रव्यस्य नेतिकर्तव्यतयान्वयः संभवति । छिदिक्रियायामुद्यमननिपातनस्येव क्रियाया एवेतिकर्तव्य तयान्वयदर्शनात् । तस्मात्सोमेन यजेतेति नोत्पत्तिविधिः । किं तु विनियोगापरपर्यायो गुणविधिरेव । गुणविधौ चोत्पत्तिवाक्यप्राप्तयागोद्देशेन सोमगुण विधाने धात्वर्थस्य यागस्य साध्यत्वेनान्वयसंभवात् । दध्ना होमं भावयेदितिवत् सोमेन यागं भावयेदित्यन्वये सति न वाक्यभेदो नादृष्टद्वयापत्तिर्न वा मत्त्वर्थ लक्षणापत्तिश्च भवति । न च वाक्यांतरेण यागविधानासंभवाद्यागोद्देशेन सोमगुणविधानं नोपपद्यत इति वाच्यम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेति उत्पत्तिवाक्यविहितयागोद्देशेन सोमगुणविधानसंभवात् । तत्सिद्धं सोमेन यजेतेति वाक्यस्य गुणविधित्वांगीकारेण नोत्पत्तिविधित्वमिति स्वामिशालिन्नः प्रथमा कक्षा । अथ भास्करस्य द्वितीया कक्षा । सोमेन यजेतेत्यत्र उत्पत्तिविधित्वमेव समीचीनं भवति । यागस्याप्राप्तत्वान्न तदुद्देशेन सोमगुणवि

धानमुचितं भवति । न च ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिश्चात्यागोद्देशेन गुणविधित्वसंभव इति वाच्यम् । ज्योतिष्टोमेनेति वाक्यफलसंबंधबोधक-स्याधिकारविधित्वान्नोत्पत्तिविधित्वं संभवति । यदि तत्रोत्पत्तिविधित्वमंगीक्रियते तदा यागविधाने फलसंबंधबोधकस्य स्वर्गकामपदस्यानर्थक्यापात्तः स्यात् । न च ज्योतिष्टोमेनेत्यत्र यागसंबंधबोधकत्वं फलसंबंधबोधकत्वं चास्तु तेन फलपदानर्थक्याभावात्तस्योत्पत्तिविधित्वेन युक्तं यागोद्देशेन सोमेन यजेतेत्यस्य गुणविधित्वमिति वाच्यम् ॥ तथा सति तत्र फलविधाने यागविधाने च वाक्यभेदः स्यात् । किं च वाक्यभेदस्य वाक्यदोषत्वेन गुरुत्वात् । सोमपदे च मत्वर्थलक्षणायाः पददोषस्य लघुत्वाच्च वरं सोमपदे विशिष्टविधानेनोत्पत्तिविधित्वं सोमविशिष्टयागस्यैकस्य विधानात् तत्र वाक्यदोषः संभवति । ननूद्भिदा यजेत पशुकाम इत्यस्य वाक्यस्योत्पत्तिविधित्वमधिकारविधित्वं च यथा भवति तथा ज्योतिष्टोमेनेत्यस्या-प्युभयविधित्वसंभवात्तत्प्राप्तयागोद्देशेन सोमगुणविधानं भवत्विति चेन्न । उद्भिदा यजेत पशुकाम इत्यत्र यागविधायकस्योत्पत्तिवाक्यांतरस्याभावादनन्यग-

यत्पत्रं लिखति स्म भास्कर इतोऽस्यादाय शिष्यो विदे दत्तेमुं प्रणमंस्त्ववेक्ष्य सकलं शिष्यादसौ सार्थकम् ॥ उच्चैर्वाचयति क्षितीट्
श्रवणहृच्छ्रुत्वाभिनूत्नं तु ते विस्मृत्याशनपानकेऽप्युभयतः श्रोतुं विदो यांति च ॥ ३९ ॥

त्योभयविधानेन वाक्यभेदांगीकारात् । ज्योतिष्टोमेनेत्यत्र तु सोमेन यजेतेति वाक्यांतरसंभवान्नोभयविधानमुचितं भवति । किं च सोमेन यजेतेत्यस्य गुणविधित्वेऽपि " विधाने चानुवादे च यागः करणमिष्यते । तत्समीपे तृतीयांतस्तद्वाचित्वं न मुंचति " इति प्रमाणेन यागस्य करणत्वेनान्वयात् सोम-गुणवता यागेनेष्टं भावयेदित्यवश्यं तत्रापि मत्वर्थलक्षणास्वीकारः स्यात् । अतो वरं सोमविशिष्टयागेनेष्टं भावयेदिति सोमविशिष्टयागस्यैकस्य विधानम् । तत्सिद्धं सोमेन यजेतेत्यस्योत्पत्तिविधित्वम् । एवं भास्करस्य द्वितीया कक्षा । एवं सुज्ञयोश्चैतयोर्भास्करस्वामिशास्त्रिणोः कक्षास्तु उत्तरतः उत्तरोत्तरम् अधिका-अर्णा वर्णाः वलिकाः पंक्तयश्च यासु ताः श्रुत्युक्त्या श्रुतिवाक्येन युक्ताः स्युः । किंभूतया श्रुत्युक्त्या विमलाभिप्रायेण स्पष्टया । पुनः किंभूतया सन् तर्कोऽ-नुमानादिर्मीमांसा च अथातो धर्मजिज्ञासेत्यादिविचारो यस्यां तया श्रुत्युक्त्या युक्ताः पूर्वोत्तरपक्षयुक्ताः कक्षा बभूवुः।ताश्च विस्तरभयान्नेह लिख्यंते । शार्दूल-विक्रीडितवृत्तम् ॥ ३४ ॥ एवं तयोर्वादश्रवणार्थं जनानां बहुप्रीतिरासीदित्याह—यदिति । भास्करो यत्पत्रं लिखति स्म लिखितवान् तत्पत्रं इतो भास्करा-

दादाय अर्थपूर्वकं गृहीत्वाऽस्य शिष्यो विदे पंडिताय स्वामिशास्त्रिणेऽमुं प्रणमन् अर्पयति। अथासौ स्वामिशास्त्री सर्वं पत्रं अवेक्ष्य सार्थं यथा स्यात्तथा स्वशिष्यैर्वाचयति। श्रवणे हृत् मनो यस्य स क्षितीट् चंद्रसेनो नृपस्ते च सर्वे विदः पंडिताश्चकाराच्छ्रवणहृदः अभितः साकल्येन नूत्नं नवीनं पत्राभिप्रायं श्रुत्वा तु अन्नपाने विस्मृत्योभयत्र भास्करस्वामिशास्त्रिणोर्निवासस्थाने श्रवणार्थमायांति। अपूर्ववादश्रवणेनैव तृप्ता बभूवुरित्यर्थः ॥ ३५ ॥ इत्थं स्वामिशास्त्री च भास्करस्य पत्रमंकितं पूर्वपक्षशोभितं कृत्वाथ स्वशिष्यहस्तेन प्रेषयति। स भास्कर इदं पत्रं दृष्ट्वा स्वशिष्यतोऽर्थेन श्रावयति। चंद्रसेनादिश्रोतॄनिति शेषः। द्वाभ्यां स्वामिभास्कराभ्यां हृद्गतं सर्वमिदं चातुर्यं शब्दतोऽर्थतश्चेह वादे प्रकाशितं च पुनरेतद्वादमिषेण सर्वविद्यास्तदा क्रमेण प्रकटीकृताः ॥

इत्थं स्वाम्यथ चात्मशिष्यकरतस्तद्भास्करायांकितं कृत्वादादथ वीक्ष्य शिष्यत इदं स श्रावयत्यर्थतः ॥ हृत्स्थं सर्वमिदं प्रकाशितमिह द्वाभ्यां हि शब्दार्थतश्चातुर्यं प्रकटीकृताः क्रमवशाद्विद्यास्तदास्मान्मिषात् ॥ ३६ ॥ कक्षाद्विघ्नचतुर्दशाविरभवञ्छास्त्रार्थयुक्तास्तयोः प्रत्येकं त्विह चैकविंशतिमितास्तत्राऽसमाः स्वामिनः ॥रायस्याथ समाः किलांतिमसमाधानेऽलिखद्भास्करोंतेवासीत्यमृताभिधाऽतग तथा मेऽनुत्तराख्या गुरोः॥ ३७ ॥ मीमांसादिकुतूहलाभिध इहाभूद्ग्रंथ एषोऽवनौ ख्यातः पंडितमंडलेऽखिलबुधैर्यः सत्कृतः सत्तमैः॥ स्वैरं साधुमुखोद्गता बहुविधा वार्ताखिलानामघं हंत्येव प्रवदंति नाण्वपि मुधा संशृण्वतां यद्धि ते ॥ ३८ ॥

॥ ३६ ॥ शास्त्रार्थयुक्ताद्विघ्नचतुर्दशद्विचत्वारिंशन्मितास्तयोः कक्षाः प्रादुर्भूताः। इह कक्षासु एकविंशतिमिताः प्रत्येकमभवन्। तत्रासमाः प्रथमतृतीयपंचमाद्याः कक्ष्याः स्वामिन आसुः भास्करस्य समा द्विचतुराद्या आसुः। अथ भास्करोंऽतिमसमाधाने द्विचत्वारिंशन्मितकक्षायामित्थं लिखितवान्। इत्थं किम्। अंतगतया समीपे अवसाने वा प्राप्तया एतत्कक्षया अंतेवासीति मेऽभिधा कृता सत्याऽभवत् ॥ गुरोरनुत्तराख्या च सत्या बभूवेत्यलिखत्। अनुत्तर इति गुरोर्नाम प्रसिद्धम् ॥ ३७ ॥ मीमांसाकुतूहलाख्यः एष उभयोर्वादरूपो महान् ग्रंथ इह लोके पंडितसंघे स विख्यातोऽभवत्। यो ग्रंथः श्रेष्ठैः सर्वपंडितैः सत्कृतोऽस्ति। स्वैरं स्वेच्छया साधुमुखनिःसृता बहुविधा वार्ता सर्वेषां सम्यक् शृण्वतां जनानां पापं नाशयत्येव हि यस्माच्च साधवः यत् प्रवदंति

तदीषदपि वृथा न भवति। लोकोपकारार्थमेव सतां प्रवृत्तिरित्यर्थः ॥ ३८ ॥ त्रिपंचघस्रैः पंचदशदिनैः । प्रेमविवर्द्धनेन प्रेमाधिक्येन । वृषादिभिः सह तौ भास्करस्वामिशास्त्रिणौ प्रति चंद्रसेनादयः पुपूजुः ॥ ३९ ॥ साम्येन वित् ज्ञानं ययोस्तयोः । यथायं वादस्तथा क्वचिन्न दृष्टः ॥ ४० ॥ सर्वे स्वामिशास्त्रिप्रभृतयः श्रीगुरुं भास्करम् । इंदुसेनश्चंद्रसेनराजा । नैजं स्वकीयं पुरं भालक्याख्यम् । घस्रगणैः बहुदिनैरिति यावत् । अदृष्टम् अनवलोकितम् ॥

त्रिपंचघस्रैरिति तत्र वादस्तयोरभूत्प्रेमविवर्धनेन ॥ नृपादयस्तौ वसनैः पुपूजुः सद्भूषणैः स्त्रीसुतभृत्यदासैः ॥ ३९ ॥ संपूजितास्तत्र समागतास्तैर्विदोऽखिलास्ते मिथ आहुरित्थम् ॥ वादः क्वचित्साम्यविदोर्न दृष्टः प्रेमर्द्धितः पंडितयोर्यथायम् ॥ ४० ॥ ययुस्ततः स्वीयपुराणि सर्वे संप्रार्थयञ्छ्रीगुरुमिंदुसेनः॥ निनाय नैजं पुरमादरेण पत्न्यादिभिर्घस्रगणैरदृष्टम् ॥ ४१ ॥ स्थितवत्यथ भास्करे पुरेऽस्मिन्प्रययौ तत्र च रामदीक्षिताख्यः ॥ शिवरामसतस्तु बंधुपुत्रोऽखिलवित्त्वात्मविदां वरः सुमार्गी ॥ ४२ ॥ नगरे बहवोऽत्र तस्य शिष्याः पटकाराश्च परे द्विजास्तु वैश्याः ॥ धनिनोऽधनिनो गृहेगृहे ते धनवस्त्रैरयजन्गुरुं सुभक्त्या ॥ ४३ ॥ निशि कीर्तनमप्यसौ निजानां गृहमेत्यामललौकिकैः पदैश्च ॥ शिवरामकृतैः करोति वेदाशयभूतैः प्रकटं वदत्यथार्थम् ॥ ४४ ॥ बहुवाङ्मधुरश्रुतेर्हि तस्य ययुरज्ञाश्च तथात्मतत्त्वबोधाः ॥ सुधियोऽप्यभवन्महासमाजोऽहरहश्चात्मविदः सदुक्तिलब्ध्यै ॥ ४५ ॥ प्रतिघस्रमथो तदीयपूजाहनि रात्राविति कीर्तनं समाजात् ॥ इह मासमभूत्ततः समीपे गुरुवासादिदमास चैकघस्रे ॥ ४६ ॥

॥ ४१ ॥ अथ कथांतरमाह—स्थितवतीति । शिवरामसाधोर्बंधुसुतः सुमार्गी सुसंप्रदायवान् ॥ ४२ ॥ अत्र भालक्यां तस्य रामदीक्षितस्य ॥ ४३ ॥ वेदाशयभूतैर्वेदाभिप्रायबहुलैः ॥ ४४ ॥ बह्वी वाचा मधुरा च श्रुतिः श्रवणं यस्मात्तस्य रामदीक्षितस्य कीर्तनं प्रतीति शेषः । आत्मतत्त्वस्य बोधो ज्ञानं येषाम् । आत्मविदः ज्ञानिनः सकाशात् उत्तमवचनप्राप्त्यर्थं प्रतिदिने महान्समाजोऽभवत् ॥ ४५ ॥ प्रतिदिनम् इह रात्रौ समाजात् जनसमुदायेन

मासपर्यंतं कीर्तनमभवत् । एकदिने भास्करनिवासात्समीपे कीर्तनं बभूव ॥ ४६ ॥ तस्य रामदीक्षितस्य शिष्येण प्रार्थितोऽपि भास्करगुरुः प्राकृतं तत्कीर्तनम् अगणय्य तिरस्कृत्य न ययौ । अथ गुरुस्तत्कीर्तनम् अंतरितभित्तिमध्यात् वेदवचनमान्यं विद्वदुक्तिसदृशं श्रुतवान् ॥ ४७ ॥ सता रामदीक्षितेनापि नमस्कृतः निजैः स्वशिष्यैरन्वितोऽत्र कीर्तनमध्ये स्थितः ॥ ४८ ॥ ४९ ॥ हि यतो महद्भिः कन्यादानविषये उत्तमकुलयुक्तविद्वत्त्वं विनान्यन्नावलोक्यते । विदुषे कुलीनाय कन्या दीयत एवेत्यर्थः ॥ ५० ॥ वरतातस्य रामदीक्षितस्य अनुजाः संगवर्तिनश्च ॥ ५१ ॥ नृपतिश्चंद्रसेनो गुरोर्दुहित्रे

न ययावगणय्य लौकिकं तद्गुरुरंतेवसतार्थितोऽपि तस्य ॥ श्रुतवानथ तच्च कुड्यमध्याच्छ्रुतिवाक्यानुमतं विदुक्तितुल्यम् ॥ ४७ ॥
मनसा स परीक्ष्य चात्मवेत्तुर्विदुषः कीर्तनमाययौ स्वयं तत् ॥ स नुतः सकलैः सताप्यथैनं गुरुलालिंग्य निजान्वितोऽत्र तस्थौ ॥४८॥निकटे विनिवेश्य कीर्तनांते समपृच्छत्कुशलं स दीक्षिताय॥गृहपेन सुपूजितोंऽशुकाद्यैर्बुधवर्यः समगात्स्थितिं स्वकीयैः ॥४९॥
गुरुणाथ सुता सुताय साधोर्ललिता बुद्धिमतेऽर्पिता विधानात् ॥ न परं हि क्लिश्यते महद्भिः कुलविद्वत्त्वमृते सुताप्रदाने ॥ ५० ॥
प्रददौ वरभूषणांशुकानि स च जामात्र उतात्मकन्यकायै ॥ सकलाश्च समर्चितास्तथान्ये वरतातानुजसंगगाः सुवस्त्रैः ॥ ५१ ॥
नृपतिश्च ददौ गुरोर्दुहित्रे वरखेटे प्रसमीक्ष्य काकुनाम्नी ॥ व्यथिताथ पिता ददौ तदास्यै प्रियसैदापुरमात्तमेव राज्ञः ॥ ५२ ॥
तनयेति विवाहितात्र माध्व्या गुरुणाज्ञत इतो ययौ स साधुः ॥ स्नुषया सुतशिष्ययुग्गजाश्वानुगतस्तुष्टमतिर्महत्सुताप्त्या ॥५३॥
निरगादथ सद्गुरुः पुरोऽस्याः कृतनारायणपत्तनस्थितीच्छः ॥ निवसन्निह काकुभर्तृवश्यानकरोत्सैदपुराधिकारिणो ये ॥ ५४ ॥

ललितायै उत्तमखेटकद्वयं ददौ । इति दृष्ट्वा काकुनाम्नी कन्या व्यथिता क्षुब्धचित्ताभवत् । अथ तदा भास्करश्चंद्रसेनात्प्राप्तमेव प्रियं सैदापुर नामकं ग्रामं तस्यै ददौ ॥ ५२ ॥ अत्र नगरे गुरुणा मध्वकन्यायास्तनया ललिता इति विवाहिता । गुरुणेत्युभयान्वयि । महतो भास्करात् कन्यालाभेन ॥ ५३ ॥ अस्याः पुरः भालक्याः सकाशात् । कृता नारायणपत्तने स्थितौ इच्छा येन । ये सैदापुरे अधिकारिणस्तान्काकुभर्तुर्देवोपनाम्नो जामातुर्व

श्यानकरोत् ॥ ५४ ॥ ५५ ॥ ५६ ॥ बहुवित्तव्ययवतीम् अंगसहितं वेदादिकं सकृत्प्रवचनेन प्राप्तवान् ॥ ५७ ॥ ५८ ॥ पुत्रार्थं वृतवान् ॥५९॥
गुरोः पत्न्यौ च समानमेव पूजितवान् । हि यतः आर्याः एकया पुत्रवत्या सर्वपत्नीः सपुत्रा आहुः । " एकेन पुत्रिणा सर्वे पुत्रिणो मनुरब्रवीत् " इति

द्रविडांस्तत एत्य भास्कराख्यः पुरि कावेर्यभिधानदीतटेऽसौ ॥ अवसत्स्मृतिवेदकर्मनिष्ठान्सुखयंस्तद्विषयस्थितान्कुलीनान् ॥ ५५ ॥
तनयोऽस्य च पांडुरंगरायस्त्वभवत्पंचशरश्च सद्धियाढ्यः ॥ विदुषां सहवासतोंजसा यः स्फुटशास्त्रीयवचो वदत्यभीक्ष्णम् ॥ ५६ ॥
मितवाग्बहुशांत एष बाल्येऽप्यथ चक्रे गुरुरस्य चोपनीतिम् ॥ बहुवित्तवतीं ततः स बालः सकृदुक्त्या श्रुतिमुख्यमाप सांगम् ॥५७॥
धनवानथ विद्वरश्च कश्चित्प्रियमाध्यस्थनृपेण देशिकेंद्रम् ॥ बहुधार्थितवान्धनादिदानैस्तनयामस्य सुताय दातुमेव ॥ ५८ ॥ बहुरा
जवचोभिरार्यवर्यो निजशिष्यैः कुशलैः समीक्ष्य कन्याम् ॥ वरतुल्यसुरूपिणीं गुणाढ्यामथ वव्रे स्वसुताय रुक्मिणीं ताम् ॥ ५९ ॥
श्वशुरोयजदंबरैः सुभूषैर्वरमुख्यान्विधिवत्स्त्रियौ गुरोश्च ॥ सममेव हि चैकपुत्रवत्याखिलपत्नीः ससुताः किलाहुरार्याः ॥ ६० ॥
बुधतामथ पांडुरंगरायः परदेव्याप्तपयाः किलाशु शास्त्रैः ॥ समवाप गुरोः सुतीव्रबुद्ध्या कृतवान्सत्यमसौ हि सांघ्रिनाम ॥ ६१ ॥
प्रददत्सकलान्विदोऽपि संगे वरयानैर्भुवि दिग्जयाय रायः ॥ तनयं निजमादिशत्स गत्वाऽजयदेव क्षितिपंडितान्समार्द्धात् ॥ ६२ ॥
निजमायुरथाल्पमेव बुद्ध्वा न स सक्तो विषयेषु चेषदासीत् ॥ गुरुलब्धसुबोधतः सदात्मन्यतितुष्टोऽण्वपि नाब्रवीत्परस्मै ॥ ६३ ॥
शुभलक्षणवत्यथास्य पत्नी सुगुणा रूपवती च रुक्मिणीयम् ॥ पतिमाभजतीश्वरं सती चाऽनिशमन्यन्न च पश्यति स्वपत्युः ॥६४॥

न्यायेन युक्तमुभयोर्मात्रोः समानपूजनमिति भावः ॥ ६० ॥ परदेवतासकाशात्प्राप्तं दुग्धं यस्मै सः गुरोः सकाशाद्बुधतां समवाप । सुतीव्रबुद्ध्या हेतुभू
तयासौ भास्करपुत्रः सांघ्रिसवायिपांडुरंगरायेति नाम यथार्थं कृतवान् ॥ ६१ ॥ संगे समागमे । समार्द्धात् षण्मासेन ॥ ६२ ॥ ६३ ॥ आ साकल्येन

भजति सेवते स्म ॥ ६४ ॥ सुनदी कावेरी । अनघेति मयूरेश्वरसंबोधनम् ॥ ६५ ॥ दार्ढ्यांढ्यधियः दृढभावनायुक्तबुद्धयः । अखिलमंत्रदीक्षया पूर्णाभिषेकदीक्षया युक्ताः । कृतैः पूजाजपादिभिः साक्षात्कृताः देवताः यैस्ते ॥ ६६ ॥ भास्करस्य मुख्यशिष्यानाह—क्षितिग इतिद्वाभ्यांम् । क्षितिं प्राप्तो गणेशः वशगाः सर्वदेवता यस्य सः अमूभ्यो देवताभ्यः किंचिदपि न याचते । यतः स्पृहोनः निःस्पृहः । निस्पृहा हि देवताभ्यः सकाशादपि किंचिन्नेच्छंति किं वाच्यं मनुष्यान्नेच्छंतीति युक्तं गुरुगणेशस्याचरणमिति भावः ॥ ६७ ॥ दिवाकराभिधः पृथिव्यां शुकतातो व्यास एवासीत् । शुभपद्धत्याः नित्योत्सव

द्रविडेषु कदाचिदेव तिष्ठत्यथ नारायणपत्तने स रायः॥ सुनदीतटगोपि मूडमुल्यां नृपभक्त्याऽनघ भालकीपुरेऽपि ॥ ६५ ॥ शिव एव गुरुर्न मानशोऽथमिति दार्ढ्याढ्यधियः किलास्य शिष्याः ॥ बहवोखिलमंत्रदीक्षयाढ्याः कृतपूजाजपदृग्गतेष्टदेवाः ॥ ६६ ॥ क्षितिगो मनुजाकृतिर्गणेशः प्रियशिष्यः स च भालकीपुरस्थः ॥ वशगाखिलदैवतस्तथापीषदमूभ्यो न च याचति स्पृहोनः ॥ ६७ ॥ विबुधा चिंतपादिवाकरः कौ शुकतातोखिलकोशवाक् स्वतंत्रः ॥ शुभपद्धतिकृज्जगत्पतिश्च नृप इंद्रादिचमूर्हि भैरवोयम् ॥६८॥ अपरेपि विदां वरास्तथेनाः क्षितिरेषाखिलदेशगास्य शिष्यैः ॥ सहिता क च नो नृपस्त्वशिष्यो भरतेनीक्षितभूश्च नो गुरोर्हि ॥ ६९ ॥ मुडमूल्यपि भास्कराय दत्ता खलु कृष्णातटगा नृपेण भक्त्या ॥ न च कोपि हरेन्मदीयवंशे गुरुदत्तं हि सदेति निश्चयेन ॥ ७० ॥ स यथावथ भालकीं कदाचिन्निजशिष्यान्प्रति रामदीक्षिताख्यः ॥ न गुरोर्वसतिस्तदास तस्यां बहुराजार्थितनैजपूःस्थितेर्हि ॥ ७१ ॥

निबंधाख्यायाः कर्ता जगन्नाथाख्यः । इंद्रादिचमूश्चंद्रसेनो भैरवावतारोयमभवत् । अयमित्यपरोक्षनिर्देशात् तदादिशब्दानां बुद्धिस्थे शक्तिग्रहाच्च ज्ञानिनो दृष्ट्या बुद्धिस्थमेवातीतानागतमिदं जगदिति भावः ॥ ६८ ॥ विदां वराः पंडितश्रेष्ठास्तथा इनाः राजानोस्य शिष्या आसुरित्यपकर्षः । एषा सर्वदेशगता क्षितिरस्य शिष्यैर्युक्ताऽऽसीत् । कश्चिन्नृपो गुरोरशिष्यः शिष्यभिन्नो नासीत् किंतु शिष्य एवासीत । च पुनः भरतखंडे गुरोः कर्मणि षष्ठी गुरुणा अदृष्टभूमिः नासीत् । किं तु दृष्टैवासीत ॥ ६९ ॥ वंशपरंपरया भोगार्थमर्पितेत्यर्थः ॥ ७० ॥ हि यतः बहुराजभिः प्रार्थिता स्वनगरस्थितिर्यस्य स राजधानीं

प्रति गत इत्यर्थः ॥ ७१ ॥ स्वगुरुं रामदीक्षितम् । इनमुख्याश्चंद्रसेनाद्याः अपूर्वार्थेषु दीक्षितवचनेषु गतं चित्तं येषां ते उत्तमार्थलालसा इत्यर्थः ॥७२॥ अत्र कीर्तनसमये । अत्र सभायां सर्वेषु तं अभिनवार्थं वर्णयत्सु सत्सु द्रुतमेव पुनः श्रुतीच्छुः श्रवणेच्छावानभवत् ॥ ७३ ॥ निःस्वो धनहीनाऽभगेन दुर्भगेण मया यत् श्रुतं नास्ति । अश्रुतमस्तीत्यर्थः ॥ ७४ ॥ अत्यादरेण प्रार्थयति । अमितानिति । मिष्टतोन्नात् मिष्टान्नैः ॥ ७५ ॥ ७६ ॥ ७७ ॥

अयजंश्च दिनेदिनेपि शिष्याः स्वगुरुं स्वस्वगृहे निशीनमुख्याः ॥ ययुरेव तदुक्तकीर्तनस्य श्रवणायाभिनवार्थवागगचित्ताः ॥ ७२ ॥ क्वचिदत्र नृपो ययौ विलंबाद्बहुकार्योऽभिनवार्थगौरवोर्ध्वम् ॥ द्रुतमेव तमत्र वर्णयत्सु निखिलेष्वेष पुनः श्रुतीच्छुरासीत् ॥७३॥ अथ सांजलिरब्रवीन्नृपस्तमिव निस्वः सधनं सुनम्रवाण्या ॥ भगवन्नधुनोक्तमेव गद्यं वद सार्थं श्रुतमस्ति नाभगेन ॥ ७४ ॥ अमितान्सुधितान्समागतान्यः कृतवांस्तृप्ततमान्हि मिष्टतोन्नात् ॥ पुनरागतमेकमुत्क्षुधाढ्यं स च तृप्तं न करोति किं सुभाग्यः ॥ ७५ ॥ नृपतेर्वचनं तु निस्पृहार्यः स निशम्याथ च रामदीक्षिताख्यः ॥ अवदत्पुरतः स्थितं तमुच्चैरपि शृण्वत्सु सभास्थितेषु वाक्यम् ॥ ७६ ॥ रामदीक्षित उवाच ॥ आज्ञां हि मह्यं कुरुषे त्वमुक्तं ब्रूहीति गद्यं च यथानुगाय ॥ दत्तं त्वया ग्रामयुगं पुरातो मां सेवकं पश्यसि किं निरीहम् ॥ ७७ ॥ लब्ध्वात्मसाम्राज्यमहं गुरोस्तत्सौख्ये निमग्नः सततं ततोन्यत् ॥ ऐंद्रं च धिष्ण्यं किल तुच्छमीक्षे स्वदः कपर्दीमिव किंतु खेटे ॥ ७८ ॥ श्रीदेशिकेंद्र उवाच ॥ उक्त्वेति राजार्पितमेव पत्रं तत्खेटदानं स नृपस्य चाग्रे ॥ तत्याज तत्त्यागधियैव पूर्वं संस्थापितं कुंचुकपार्श्ववेश्याम् ॥ ७९ ॥ ज्ञात्वा नृपश्चाथ निजार्पितं तद्भीतः स्वदत्तापहरत्वदोषात् ॥ उत्थाय साधुं प्रमणत्नुवाच मा ब्रूहि गद्यं च गृहाण खेटे ॥ ८० ॥

निरीहत्वमेवाह—लब्ध्वेति । आत्मसाम्राज्यं आत्मैश्वर्यम् । ऐंद्रं पदम् । स्वदः कुबेरः कपर्दिकामिव तुच्छं पश्यामि । खेटके तु किम् । कः पदार्थ इत्यर्थः ॥ ॥ ७८ ॥ तयोः खेटयोर्दानपत्रं तस्य दानपत्रस्य त्यागबुद्ध्यैव ॥ ७९ ॥ स्वस्मिन् दत्तापहर्तृत्वदोषेण भीतः सन् ॥ ८० ॥

तत्र मदुक्तौ तव कल्पना अन्यथा विपरीता मा भवतु॥ ८१ ॥ हृदयं हृद्गतम्॥८२॥खेटकसंबंधि देयं धनादि । अनयनीतिस्तदादिकं बहुव्यापारसंबंधमिति यावत् ॥८३॥तयोर्दंडनीत्योः॥८४॥८५॥ देशिको भास्करगुरुरास्य साधोः रामदीक्षितस्य॥८६॥चंद्रचमूश्चंद्रसेनोसौ दत्तापहर्ता मया अद्यत आरभ्य

दासोस्मि ते मद्वदितं क्षमस्व क्षमापरः साधुरिति प्रसिद्धम् ॥ उक्तं मया चाभिनवार्थलब्ध्यै मा कल्पना तत्र तवान्यथास्तु ॥ ८१ ॥
संप्रार्थयन्नित्थमनेकवाक्यैः साधुं तदंघ्री प्रणमंश्च राजा ॥ स्थितस्तदा तं वदतीति साधुर्ज्ञातं मया ते हृदयं नरेंद्र ॥ ८२ ॥ त्वं देव विप्रेषु समानबुद्धिर्बिभेषि दत्तापहृतेस्तथापि ॥ खेटीयदेयानयनीतिमुख्यं सोढुं न शक्तः खलु सात्त्विकोहम् ॥ ८३ ॥ दंडं विना नो हि गतिः प्रजानां स ब्राह्मणैनैव भवेत्क्षमाढ्यैः ॥ त्यागात्तयोस्तुष्टिरतोन्यथाभीर्ममेति तुष्टिं कुरु चोपकारिन् ॥ ८४ ॥ ज्ञात्वेति साधुर्बहुधाग्रहं तत्पत्रं गृहीत्वा स ददौ परस्मै ॥ विप्राय तस्याग्रत एव संतं ततोर्चयन्निस्पृहमंशुकाद्यैः ॥ ८५ ॥ अथाशृणोद्देशिक आप्तसाधोः खेटे नृपेणापहृते किलेति ॥ यथागमंश्चापि नृपेक्षणाय निवर्त्य सर्वान्प्रययौ स पश्चात् ॥ ८६ ॥ प्राहानुगान्भास्कर राय इत्थं मयाद्यतश्चंद्रचमूर्नृपोसौ ॥ दत्तापहृन्नेक्ष्यत एव सर्वैर्मद्दृक्पथं नैति तथा निवार्यः ॥ ८७ ॥ गुरोः प्रतिज्ञामिति चंद्रसेनः श्रुत्वाब्रवीच्चेति सभास्थितान्सः॥भक्तिर्गुरौ मेऽव्यभिचारिणीचेत्त्यक्षाम्यसूंस्तत्पदयुग्म एव ॥ ८८ ॥ अथो भ्रमन्देशिकराट् च देशान् बदामिकादुर्गमिलाप्रसिद्धम् ॥ ययौ समाहूत इहाधिपेन शिष्येण वस्तुं कतिचिद्दिनानि ॥ ८९ ॥ अथेंदुसेनः स्वनृपाज्ञया तद्राज्ये भ्रमन्दुर्जनदंडनाय ॥ प्राप्तोतिसेनो बहिरत्र दुर्गात्स्थितोऽखिलैर्दुर्गपसत्कृतोभूत् ॥ ९० ॥ दुर्गस्थितं भासुरसौख्यनाथं सपंडितं साग्निमथो निशम्य ॥ चारान्नतीः प्रेषितवान् बुधार्यान् गुरुं विना गुप्ततयास्य पत्न्यौ ॥ ९१ ॥

नेक्ष्यते नावलोक्यते । सर्वैर्भवद्भिः स मम दृष्टिपथं यथा न प्राप्नोति तथा निवार्यः ॥ ८७ ॥ ८८ ॥ ८९ ॥ इंदुसेनश्चंद्रसेनः स्वनृपस्य भाग्यपुरस्थ स्याज्ञयाऽतिसेनो बहुसेनायुक्तः अत्र दुर्गसमीपे प्राप्तः सन् दुर्गपेन सत्कृतोभवत् ॥ ९० ॥ अथ चंद्रसेनः सपंडितं साग्निं भासुरानंदनाथं दुर्गस्थितं निशम्य

गुरुं विना पंडितवर्यान् । अस्य पत्न्यौ च साध्वीमाध्व्यौ प्रति दूतद्वारा नतीः नमस्कारान् प्रेषितवान् । आत्मनि कोपयुक्तं गुरुं तु अतिकोपभयान्न प्रेषितवानित्यर्थः ॥ ९१ ॥ आत्मनार्पितः सत्कारो येन तस्य चंद्रसेनस्य नामापि गुरोर्भयेन नोचुः ॥ ९२ ॥ अन्येद्युः स राजा उषःकालादारभ्य गुरुस्थितिम् । अनिवार्यात्कुशलदूतादीक्षन् जानन् शुचिना ग्रीष्मेण, प्रततं अत एव ज्योत्स्नानिशाद्ये चंद्रिकान्वितरात्रिप्रथमप्रहरे अंगणगतमंचे स्थितं भास्करं ज्ञातवान् ॥ ९३ ॥ यश्चंडभैरवोऽज्ञसंसृतिहरं भास्करगुरुं अष्टमूर्तिमध्ये षष्ठ्या सूर्यमूर्त्या पृथिव्यां गृहीतदेहं शिवमेव ज्ञात्वा तस्य सेवां कर्तुं भुवि

श्रुत्वागतं तं नृपमार्यपत्न्यौ बुधाश्च सर्वेऽपि दिदृक्षवोमुम् ॥ तस्यामितात्मार्पितसत्कृतेश्च नामापि नोचुर्गुरुभीतितोमी ॥ ९२ ॥
अन्येद्युरीक्षन्कृतिनोऽनिवार्याद्दूतादुषस्तो गुरुसंस्थितिं सः ॥ तं वेद राजाथ शुचिप्रततं ज्योत्स्नानिशाद्येंऽगणमंचसंस्थम् ॥ ९३ ॥
यश्चंडभैरव इलात्ततनुं हि षष्ठ्या मूर्त्याऽज्ञसंसृतिहरं शिवमेव साक्षात् ॥ ज्ञात्वैव भास्करगुरुं भुवि तस्य सेवां कर्तुं बभूव नृपतिः किल चंद्रसेनः ॥ ९४ ॥ यस्याश्रयप्रद इहास्ति च खड्ग एव तेनैव योऽखिलरिपून् यवनस्य राज्ञः ॥ राज्याभिलाषधिषणान्परितो रुरोधापास्माद्विपंचमितलक्षधनां स गां च ॥ ९५ ॥ राज्यं तदेष निखिलं गुरवे निवेद्याथात्रान्नवस्त्रमितमेव निजं प्रपश्यन् ॥ सेवां गुरोः स कृतवान्स्ववपुर्धनासूंश्चानीक्ष्य दानमिव नैजधनं वदान्यः ॥ ९६ ॥ कृत्वेत्यकृत्रिमतया भजनं गुरोश्च कालाल्पतः स्वसुखसद्मगमनं च मत्वा ॥ द्राक्चंडभैरव इतो गुरुपादनत्या गंतुं स्वलोकमगमद्गुरुमस्य पद्धीः ॥ ९७ ॥

चंद्रसेननामा राजा बभूव किल ॥ ९४ ॥ अस्माद्यवनराज्ञः सकाशात् गां भूमिं च प्राप्तवान् ॥ ९५ ॥ स एषोऽत्र राज्येऽन्नवस्त्रपरिमितमेव स्वकीयं पश्यन् स्वदेहधनप्राणान् चकारात्तज्जन्यक्लेशांश्चानीक्ष्य यथा वदान्यः दानं करोति तथा सर्वभावेन सेवां गुरोश्चकारेत्यर्थः ॥ ९६ ॥ कालाल्पतः कालाल्पत्वेन स्वसुखे आत्मसुखे सद्मगमनं सद्गतिं अल्पकालेन निजलोकप्राप्तिमिति यावत् । मत्वा ज्ञात्वा चंडभैरवश्चंद्रसेनोऽस्य गुरोः पादबुद्धिः सन् इतो लोकाद्गुरु

पादनमस्कारेण स्वलोकं शीघ्रं गंतुं गुरुं जगाम । गुरुचरणयोः प्राणार्पणबुद्ध्या ययाविति भावः ॥ ९७ ॥ आपादतस्तनौ धृतो वरकंबलो येन स सर्वैर् दृष्टो गुरुचरणयोः शीर्षं कृत्वा सव्यं तत्पादांगुष्ठं वदने च कृत्वा प्राणैः सह स्वभुवनं ययौ । गुरुचरणनिष्ठानामपराधकृतामपि उत्तमैव गतिर्भवतीत्यर्थः ॥ ॥ ९८ ॥ ९९ ॥ १०० ॥ वसिष्ठातुंगभद्रांतर्गताया भुवः संबंधी यवनराज्ञः यद्राज्यमस्ति तत्र राज्ये ये बलिष्ठा अपि खड्गादिशस्त्रवंतो वीरास्ते स्वस्वा

आपादतस्तनुधृतासितकंबलश्चादृष्टोखिलैर्गुरुपदोः सहसैव शीर्षं ॥ कृत्वा तदंगुलिवरं वदने च सव्यं प्राणैर्ययौ स्वभुवनं नृपतिः स योगी ॥ ९८ ॥ दृष्ट्वाथ देशिकवरः सपदीममग्रे स्वांगुष्ठमेव परिचोष्य शनैस्त्यजंतम् ॥ कोयं पुमानिदमुवाच तदास्य शिष्यैर्ज्ञातो निवार्य वरकंबलमेष राजा ॥९९॥हाहेति चाहुरखिलास्तु गुरुः समीक्ष्य प्राहामुना किल जितोस्मि निजा प्रतिज्ञा ॥ सत्या कृता तनुमसूंश्च समर्प्य मेऽङ्घ्योर्भूतोपि नैव भविता गुरुभक्त ईदृक् ॥ १००॥ राज्यं नृपस्य यवनस्य महद्वसिष्ठातुंगांतरस्थितभुवः किल तत्र यस्मात् ॥ भीतिं वहंति बलिनोप्यसिमुख्यशस्त्राः स्वेशाधिकामुत समेत्र इवैति नीचः ॥ १ ॥ न प्राकृतः खलु पुमान्नृपवर्य एषोऽद्धा चंडभैरव इलागुरुभक्तिवृद्ध्यै ॥ जातोथ तामिह विवर्ध्य ययौ स्वधाम शोकः किमर्थमिह तस्य सुधैव कार्यः ॥ २ ॥ श्रीदेशिकेंद्र उवाच ॥ नृपगतिमिति दृष्ट्वा दुर्गपः स्वीयचाराद्दलपतिमथ राज्ञःशीघ्रमाहूय चक्रे॥नृपसहचरशूरैस्तत्कुलाद्यैः सशोकैर्नददमितसुवाद्यैः संस्कृतिं वित्तगुर्वीम् ॥ ३ ॥ दलपतिरथ सेनाढ्यो ययौ भालकीं च श्रुतनृपगतिरित्थं विस्मिता राजपत्नी ॥ अनुसृजति शुचो क्ष्णोप्यात्मजाद्रामचंद्राच्छमितविषयवृत्तेश्चाकरोत्कर्म राज्ञः ॥ ४ ॥ अथ गत इह मासे भासुरार्योऽखिलाढ्यः शशिदलनृपधानी मागतोथेनपत्नी ॥ निजतनययुतागाच्छ्रीगुरोर्दर्शनार्थं नरगतिवरयानेनांशुकाच्छादितेन ॥ ५ ॥

मिभयादधिकं अस्माच्चंद्रसेनाद्भयं वहंति नीच इवैति ममाग्रे प्राप्नोति ॥ १ ॥ एषः प्राकृतो नास्ति किं तु साक्षाच्चंडभैरव एव इलायां गुरुभक्तिवृद्ध्यर्थं जातो स्ति तां गुरुभक्तिम् ॥ २ ॥ दलपतिं सेनापतिं नृपस्य चंद्रसेनस्य सहचरैः शूरैस्तस्य कुलाद्यैः सजातीयैः बहुवित्तव्ययां राज्ञः संस्कृतिं चक्रे ॥ ३ ॥ अक्ष्णः शुचः शोकाश्रूणि अनुसृजति । शमिता शांतिं प्राप्ता विषयवृत्तिर्यस्य तस्माद्रामचंद्रनामकपुत्रात् तस्य हस्तेन राज्ञः कर्माकरोत् ॥ ४ ॥ इह दुर्गमध्ये

मासेऽतिक्रांते सति इनपत्नी चंद्रसेनभार्या नरैर्गतिर्गमनं यस्य तेन यानेन गुरोर्दर्शनार्थं ययौ ॥ ५ ॥ गुरोः पुरतः अग्रे यानाद्बहिः प्राप्य । भर्तृहीनदेहा यतस्ततोऽहं पापयुक्तास्मि । मत्पतिस्तु तव पदयोः प्राणार्पणेन बहुपुण्यवानभवत् ॥ ६ ॥ यतस्तव पदि राज्ञा देह एवार्पितः अतस्तस्य राज्ञः सेवकपुत्रराज्यादिकं तवैवास्ति तत्सर्वं त्वमेवाव रक्षेति योज्यम् ॥ ७ ॥ सर्वं मयाऽस्मात्तव पुत्रेण पाल्यते । भुजंगप्र० ॥ ८ ॥ यः सिद्ध्या सिद्धिसाम

पुरत उत गुरोः सा चैत्य यानाद्बहिस्तात्तमिति वद्गति मूर्ध्ना सन्नमंत्यश्रुनेत्रा ॥ पतिरहितवपुश्चाहं गुरो पापयुक्ता पतिरगणितपुण्य स्त्वत्पदास्वर्पणेन ॥ ६ ॥ तव पदि किल राज्ञा देह एवार्पितोतस्तदनुगसुतराज्याद्यं तवैवाद्य सर्वम् ॥ गुरुरिति नृपभार्यावाक्यमाकर्ण्य चेक्षन्नृपसुतमथ साध्वीं सांत्वयन्नित्युवाच ॥ ७ ॥ श्रीभासुरानंद उवाच ॥ ममैवाखिलं राज्यमुख्यं तवायं सुतश्चाथ सर्वं मया पाल्यतेस्मात् ॥ भविष्यत्यसौ ताततुल्यप्रतापी परत्रासकृत प्रीतिकृत्स्वाधिपस्य ॥ ८ ॥ उमापत्यसौख्यान्मनून्देहि चास्मै ममैवास्ति शिष्योपि सिद्ध्याधिको यः ॥ अतश्चंद्रसेनोपि तं नीलकंठप्रधानोक्तितः स्थापयामास पुर्याम् ॥ ९ ॥ न सामान्य एषो गणेशोस्ति साक्षादतोऽस्मिन्मया स्थापितं मंत्रजातम् ॥ सुतं संकटाद्रक्षयिष्यत्यसौ ते न चिंतां कुरु त्वं ततो रामचंद्रे ॥ १० ॥ गमिष्येऽनघेहं तु कावेर्यभिज्ञानदीतीरगं भास्कराख्यं पुरं यत् ॥ ममात्रागमः स्यात्पुनर्वा न चेति न निश्चेतुमीशो वपुर्यत् क्षणस्थम् ॥ ११ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं गुरूक्तं तु निशम्य साध्वी मुहुर्नमंती ससुतांशुकाद्यैः ॥ तं स्त्रीबुधाढ्यं विधिवत्समर्च्य प्रस्थापयामास च साश्रुनेत्रा ॥ १२ ॥ ततो भ्रमन्व्यंकटपर्वतं स समर्च्य लक्ष्मीपतिमुक्तरीत्या ॥ कांच्यां च कामाक्ष्यभिधां च देवीमेकांबरेशं त्वयजाद्विधिज्ञः ॥ १३ ॥

र्थ्येनाधिकः सर्वशिष्यवरिष्ठः । अतश्चंद्रसेनोपि तमुमापत्यानंदं नीलकंठप्रधानवचनेन स्वनगरे स्थापितवान् ॥ ९ ॥ १० ॥ हे अनघे ममात्रागमनं पुनःस्याद्वा न भवेदिति निश्चयं कर्तुं समर्थो नास्मि यत् यस्माद्वपुः क्षणगं क्षणिकमस्ति अतो मदुक्तामाज्ञां पालयेत्यर्थः ॥ ११ ॥ १२ ॥ उक्तरीत्या तंत्रोक्त

प्रकारेण ॥ १३ ॥ तत्र कांच्यां अपयाख्यस्य वंशजं वंशोत्पन्नं प्रभाकराभिधम् ॥ १४ ॥ तं प्रभाकरम् । समागमेन कुर्वन्सहैव गृह्णन् ॥ १५ ॥
॥ १६ ॥ अथ भास्करस्यात्मस्थितिं अभिचारनिमित्तेन वर्णयति । समीप इत्यादि पंचभिः । अस्मान्मध्यार्जुनात्समीप एव स सत्यबोधाख्यो माध्वय
तिर्बंधुदासैः सहाऽऽस्त । तस्य बंधुर्भास्करस्य श्वशुरः अत्र मध्यार्जुने तस्य सत्कारमाकर्ण्य मनसि सुततो बभूव ॥ १७ ॥ अभिचारं कृत्याम् । कन्यायाः
अप्रियं वैधव्यं अनीक्ष्य अगणय्य । अन्यत्र नाशम् ॥ १८ ॥ उमासुखं उमानंदम् ॥ १९ ॥ सिद्धमंत्रेणाभिचारं निवार्य यद्भौतिकं भूतमयं तच्छरीरं

तत्रापयाख्यस्य हि दीक्षितस्य प्रभाकरं वंशजमाहिताग्निम् ॥ पत्न्या युतं भूषणवित्तवस्त्रैः श्रीभास्करार्योऽयजदीशभक्त्या ॥ १४ ॥
कुटुंबिनं तं च समागमेन कुर्वन्स कावेर्यभिधाप्रवाहम् ॥ गत्वाग्रहारे बहुधान्यभूमौ चास्थापयद्योजितसर्ववृत्तिम् ॥ १५ ॥ चिरं
वरं शंभुमखंडपूज्यं संपूज्य तत्रत्यनृपार्चितांघ्रिः ॥ प्राप्तोथ मध्यार्जुनमत्र राज्ञा संप्रार्थितश्चावसदल्पकालम् ॥ १६ ॥ समीप एवास
यतिः पुरेऽस्मात्स सत्यबोधः सह बंधुदासैः ॥ आकर्ण्य तद्बंधुरथात्र मानं श्रीभास्करस्यास मनस्सुतप्तः ॥ १७ ॥ सोऽथाभिचारं
त्वकरोद्दुरात्मा जामातरि श्रीगुरुभास्करेऽपि ॥ शंभौ पुरा दक्ष इवापमानं ह्यनीक्ष्य कन्याऽप्रियमल्पबुद्धिः ॥ १८ ॥ ददर्श तं श्रीगुरु
रग्रतोऽग्निज्वालासमं वेद दुरात्मकृत्यम् ॥ आहूय चोमासुखमाह चाति मयायुषः प्राप्त उताभिचारः ॥ १९ ॥ सिद्धेन मंत्रेण निवार्य
चैनं त्यक्ष्येऽत्र योगेन हि भौतिकं यत् ॥ भवत्वनो मे श्वशुरोपि तुष्टः काको यथा तालफलाप्तितोषः ॥२०॥ त्रयोदशेथो शुचिशुक्लपक्षे
सौम्यायने भासुर आत्मभावम् ॥ गतोऽनूनं देहसुखं च हित्वा नटो यथा कल्पितमंग वेषम् ॥ २१ ॥ कृतं तनोरौर्ध्वकमस्य कर्म
शिष्यैः सुतात्स्वीयसुखस्थितेर्हि ॥ धुंडिव्रतस्थैः खगतेरिवेंदोर्बिंबस्य पूजाऽहि दलांकितस्य ॥ २२ ॥

योगोपायेन त्यक्ष्ये त्यजामि । अतो देहपातेन मम श्वशुरोपि अनायासेन तालफलप्राप्त्या काक इव संतुष्टो भवतु देहपतनं तु दैवयोगेनैव नाभिचारेणेति
भावः ॥ २० ॥ अथोत्तरायणे आषाढशुक्लपक्षे त्रयोदशतिथौ भासुरानंदनाथो मनुष्यदेहादिकं त्यक्त्वात्मभावं गतः । यथा नटः कल्पितवेषं त्यक्त्वा
पूर्वभावं याति तद्वत् गुरोराविर्भावतिरोभावावित्यर्थः ॥ २१ ॥ शिष्यैरुमानंदादिभिः स्वसुखे स्थितिर्यस्यात्मसुखनिमग्नस्यास्य गुरोस्तनुसंबंधि और्ध्वक

कर्म सुतात्पांडुरंगहस्तेन कृतम् । यथा धुंडेर्गणेशस्य व्रतस्थैश्चतुर्थीव्रतकर्तृभिर्नागदलांकितस्य चंद्रबिंबस्य पूजा क्रियते तद्वत् स्वसुखरूपस्य भास्करगुरोर्देह संस्कृतिरिति भावः ॥ २२ ॥ ननु भास्करगुरोरतीतत्वे कालपरिच्छिन्नत्वादपरिच्छिन्नब्रह्मरूपत्वं न स्यादित्याशंक्य तस्य सदा वर्तमानत्वेन कालपरि च्छेदं वारयन्नाह । श्रीभास्कर इति । अष्टमूर्तिषु षष्ठः सूर्यरूपः श्रीभास्करः सदा सर्वगत एव । "सूर्य आत्मा जगतस्तस्थुषश्च" इति श्रुत्या जगतः आत्मरूपोऽस्ति किल स सर्वैर्ज्ञानिभिरेवावलोक्यते मायाख्यविवरे गतैर्दिवाभीतसदृशैरन्यैस्तु न समीक्ष्यते । श्रीसूर्यस्य शिवाष्टमूर्तिषु षष्ठस्य सदा वर्तमानत्वात् तदवतारस्य भास्करस्यापि वर्तमानत्वं ब्रह्मवित् ब्रह्मैव भवतीति श्रुत्या च गुरोर्ब्रह्मरूपत्वाद्व्यापकत्वं सर्वाधिष्ठानत्वं चास्ति । तेन ब्रह्मभावं प्राप्तो भास्करगु

श्रीभास्करोऽस्त्येव सदाखिलस्थः शिवः स षष्ठो जगतः किलात्मा ॥ समीक्ष्यते ज्ञानिभिरेव सर्वैर्नान्यैर्हि मायाविवरस्थघूकैः॥२३॥ मूर्त्यावतीर्णः शिव एव षष्ठ्या कीर्तिं चकाराभिनवां धरित्र्याम् ॥ उत्सप्तविंशाद्विशतं तमार्यं श्रीभासुरानंदगुरुं नताः स्मः ॥ २४ ॥ अगणितगुणकीर्तेर्भास्करस्येति किंचिच्चरितमुदितमेतत्कोऽखिलं वक्तुमीशः ॥ पठति च नवसर्गं यः शृणोत्यार्यकीर्त्या भवति विपुल लक्ष्म्याढ्यः सुपुत्रः सुखात्मा ॥ १२५ ॥ इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे भासुरानंदात्मस्थितिवर्णनं नाम त्रिचत्वारिंशः सर्गः ॥ ४३ ॥ श्रीदेशिकेन्द्र उवाच ॥ अथ पद्मावतीं निन्ये पार्वतीं च शुचान्विताम् ॥ उमानंदोऽखिलैर्विद्भिः पुरं भास्करसंज्ञकम् ॥ १ ॥

रुः सर्वरूपः सर्वात्मकः सर्वत्र सर्वदा देशकालवस्तुपरिच्छेदरहितः सजातीयविजातीयस्वगतभेदशून्योऽस्त्येवेति भावः ॥ २३ ॥ सप्तविंशाधिकद्विशतसं ख्यकं भासुरानंदं प्रणमति । मूर्त्येति । भूरंभांस्यनलो निलोंऽबरमहर्नाथो हिमांशुः पुमानित्यष्टशिवमूर्तिषु षष्ठ्या सूर्यमूर्त्यावतीर्णः सन्पृथिव्यामपूर्वां कीर्तिं यश्चकार तं नताःस्मः ॥ २४ ॥ नवसर्गोक्तभास्करचारित्रस्य पठनश्रवणफलमाह । अगणितेति स्पष्टार्थम् ॥ १२५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटी कायामर्थस्फूर्त्यभिधायां भास्करचरित्रे त्रिचत्वारिंशः सर्गः ॥४३॥ उद्वलस्थचतुश्चत्वारिंशेऽष्टाभ्रेंदु १०८ पद्यतः ॥ पांडुरंगस्थितिश्चोमापत्यजन्मादि वर्ण्यते ॥ ४४ ॥ अथ भास्करशिष्यस्योमापत्यानंदस्य कथां वर्णयन्नादौ पांडुरंगचरित्रमाह । अथेत्यादिपंचदशभिः । अथ भास्करस्यात्मस्थित्यनंतरम् ॥ १ ॥

ते द्वे भास्करभार्ये । स्नुषापुत्राभ्यां रुक्मिणीपांडुरंगाभ्यां युक्ते । शुची विधवाधर्माचरणेन पवित्रे । अथ पुण्यनगरस्थो यो रुक्मिणीपिता स च समुद्रसमीपस्थितं मौक्तिकलवणादीनां क्रयविक्रयकर्द्धिःयुक्तं भास्करगुरोरग्रहारं वार्षिकं स्वदूतैर्लेखकैश्च पश्यन् क्रमेण प्रतिमासेषु अयुतार्द्धधनस्य लाभो येभ्यस्तैर्व्यापारिभिस्तद्वार्षिकधनं दुहितुः स्नेहाज्जामात्रे प्रेषितवानित्यन्वयः ॥ २ ॥ ३ ॥ ततस्तेन धनेन तत्र भास्करपुरे व्ययो निर्वाहोभवत् ॥

तत्रैव तस्थतुर्द्वे ते स्नुषापुत्रान्विते शुची ॥ स्नुषातातोथ पुण्यस्थः सागरस्यांतिके स्थितम् ॥ २ ॥ गुर्वग्रहारं मुक्तादिक्रयविक्रयकृद्युतम् ॥ प्रतिमासायुतार्द्धस्वलाभव्यापारिभिः क्रमात् ॥ ३ ॥ पश्यन्दूतैर्लेखकैश्चाप्रेषयत्तद्धनं स च ॥ जामात्रे दुहितुः स्नेहाद्व्ययस्तत्राभवत्ततः ॥ ४ ॥ रायः श्रीपांडुरंगाख्यो वर्षश्राद्धं गुरोः क्रमात् ॥ कृत्वागात्स्वर्गतिं चाल्पवयाः प्राक्कर्मयोगतः ॥ ५ ॥ पद्मावत्यतिदुःखाढ्या पार्वत्या रुक्मिणीं स्नुषाम् ॥ भास्कराख्ये पुरे स्थाप्य वृद्धैरार्तैः सुचारिणीम् ॥ ६ ॥ ययौ काशीं स्वकीयाढ्याऽकरोत्तत्र यथाविधि ॥ त्रिस्थलीकृत्यमखिलं गुरुपितृसुतोषदम् ॥ ७ ॥ देवो जामातृतातोत्र भुक्त्यै पद्मावतीं निजे ॥ गृहे चामंत्रयत्सर्वकाशीस्थैः पंडितैरपि ॥ ८ ॥ यतिः स्वयंप्रकाशाख्यो विद्वद्वंद्यो निमंत्रितः ॥ पात्रस्थितेषु सर्वेषु परिवेषणतः परम् ॥ ९ ॥ पप्रच्छ देवं स यतिः समारंभोद्य किंपरः ॥ देवस्तं प्राह संप्राप्ता पत्नी विद्भास्करस्य हि ॥१०॥ समाहूताशनायाद्यातोखिलाः पंडितास्त्वया ॥ श्रुत्वा यतिः पुनः प्राह कागता भास्करांगना ॥ ११ ॥ पद्मावतीति सोप्याह क्वास्तीत्याह यतिश्चतम् ॥ दर्शयामास सोंतस्थां यतयेथ नमन्यातिः ॥ १२ ॥ प्रसादं चाग्रहीत्तस्याः स्थितः पंक्तौ तदाखिलैः ॥ ज्ञातं भास्करतोद्धायमुपदिष्ट इति स्फुटम् ॥ १३ ॥

॥ ४ ॥ ५ ॥ पद्मावती काशी ययाविति संबंधः । पार्वत्या वृद्धैरार्तैः सह सुचारिणीं सुचरित्राम् ॥ ६ ॥ ७ ॥ अत्र काश्यां देवोपनामा जामातृतातः स्वगृहे पंडितैरपि सर्वकाशीस्थैः सह पद्मावतीं भोजनार्थं न्यमंत्रयत ॥ ८ ॥ उत्तरार्द्धमुत्तरान्वयि । किंपरः किंनिमित्तकः ॥ ९ ॥ १० ॥ अतस्त्वया सह सर्वे पंडिताः भोजनार्थं समाहूताः । मयेति शेषः ॥ ११ ॥ स देवः । अथेत्याद्युत्तरान्वयि ॥ १२ ॥ तस्याः सकाशात्प्रसादं जगृहे । चकारात्पंक्तौ

च स्थितः । तदा साक्षाद्भास्करेणायमुपदिष्ट इति सर्वैः स्फुटं ज्ञातमिति संबंधः ॥ १३ ॥ अत्र नारायणपत्तने माध्व्या पार्वत्या सह रुक्मिणी आनयत् ॥ १४ ॥ कन्या काकुनाम्नी पंचपुत्रानसूत । अन्या ललितानाम्नी विद्वांसं उत्तमबुद्धिं गंगाधरनामानमेकं पुत्रमसूत । यो गंगाधरो बाल्यतो निस्पृहः सन् यतिरभवत् ॥ १५ ॥ एवं भास्करगुरोरुत्तरकथां निरूप्याथोमापत्यानंदस्य कथां वक्तुं प्रतिजानीते । अथेति ॥ १६ ॥ तस्य जन्मादि कथयन् तत्पित्रादिवृत्तांतमाह दक्षिणस्यामित्यादिना । तेषु सात्विक इत्युत्तरान्वयि ॥ १७ ॥ यः कार्तयुगः कृतयुगसंबंधी काल एव साक्षात्कलावपि अवतीर्णोऽस्ति

जामात्रा कन्ययाथागाद्देशं पद्मावती निजम् ॥ नारायणपुरे स्थित्वाऽनयन्माध्व्यात्र रुक्मिणीम् ॥१४॥ कन्यासून सुतान्पंचाथान्या विद्वांसमुद्धियम् ॥ एकं गंगाधरं बाल्यान्निस्पृहो योभवद्यतिः ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ अथोमापत्यनाथस्य कथां शृणु विद्वां वर ॥ गुरुर्मे परमो यस्तु पुनः साक्षात्पितामहः ॥ १६ ॥ दक्षिणस्यां हि भालक्याः खेटं हल्यभिधं महत् ॥ ब्राह्मणास्तत्र विद्वांसः श्रौतिनस्तेषु सात्विकः ॥ १७ ॥ कालदीक्षित इत्येकश्चासीत्कौंडिन्यगोत्रजः ॥ कालः साक्षात्कार्तयुगो योवतीर्णः कलावपि ॥ १८ ॥ ज्ञानिनः स्वान्वये साधून् समुत्पाद्य च तैर्नरान् ॥ कृतकृत्यान्कलिस्थांश्च कर्तुं ज्ञानोपदेशतः ॥ १९ ॥ उमानाम्नी तस्य पत्नी शक्तिः कालस्य हीशितुः ॥ सात्त्विकत्वान्निजेशस्य सती साप्यतिसात्त्विकी ॥ २० ॥ एवं तौ दंपती शांतौ यदृच्छालाभ तोषिणौ ॥ तयोरथाभवत्पुत्रः सव्यहस्तषडंगुलिः ॥ २१ ॥ सल्लक्षणोतितेजस्वी समीक्ष्यैनं पिताकरोत् ॥ जातं निःस्वोपि विधिवत् द्वादशेऽह्न्येव नाम च ॥ २२ ॥

अतिसात्त्विकत्वादिति भावः ॥ १८ ॥ ननु कृतयुगसंबंधिनः कालस्य कलाववतरणे किं कारणमित्यत आह ज्ञानिन इति पूर्वान्वयि ॥ १९ ॥ कालरूपस्येशितुः शिवस्य शक्तिः शक्तिरूपा उमानाम्नी अस्य भार्याभवत् । शिवस्य कालरूपत्वं च नमः कालायेति श्रुतिप्रसिद्धम् । निजेशस्य स्वपत्युः सात्त्विकत्वात् सापि सती सत्त्वगुणाभवत् । योग्यपत्नीलाभः पूर्वसंबंधं विना न भवतीति भावः ॥ २० ॥ सव्यहस्ते षडंगुलयो यस्य ॥ २१ ॥ पूर्वपादः

पूर्वान्वयी । एनं पुत्रं समीक्ष्य दृष्ट्वा ॥ २२ ॥ प्राक्पादः पूर्वान्वयी ॥ २३ ॥ वररुक् दिव्यकांतिः । दिवसार्द्धे मध्याह्ने अत्र त्वद्गृहे । स्वागता वृत्तम् ॥ ॥ २४ ॥ बाह्यं बहिः स्थानम् । वरं श्रेष्ठं तं द्विजं दृष्ट्वा सम्यक् नतौ संतौ अमुं प्रति तथास्तु आवाभ्यां सदन्नं पच्यत इत्यूचतुः ॥ २५ ॥ सोतिथिस्ता वदब्रवीत् । अथ तपसः माघमासस्य संबंधिनी संकटहरा चतुर्थी अस्ति अतो मम भोजनं दिवा न भवति सर्ववयचतुर्थ्यां रात्रौ चंद्रोदये शिवसुते गणपतौ

यज्ञेश इति सर्वज्ञो ववृधे सोथ बालकः ॥ जातः पंचशरद्बुद्ध्या मंदः कांत्याऽपरो रविः ॥ २३ ॥ कालदीक्षितगृहं सहसागाद्ब्राह्मणोथ वररुक् दिवसार्द्धे ॥ प्राह चेति बहिरेव स तिष्ठन्भोजनं भवतु मेद्य किलात्र ॥ २४ ॥ दंपती गृहगताविति वाक्याद्ब्राह्मणावथ समीक्ष्य तं द्विजम् ॥ सन्नतावमुमथोचतुस्तथा पच्यते त्वरितमेव सदन्नम् ॥२५॥ सोब्रवीन्न च दिवाशनं तु मे संकटांतकतिथिस्तपसोद्य ॥ पूजिते शिवसुते विधूदये भुज्यते त्वखिलवव्यचतुर्थ्याम् ॥ २६ ॥ तौ तमाहतुरथावयोश्च नो ह्यह्नि भुक्तिरतिथेरुपोषणात् ॥ आवयोर्भवतु सद्व्रतं त्वयाऽस्माच्छिशुश्च सुधिया युतो भवेत् ॥ २७ ॥ वीक्ष्य तं शिशुमिमौ स चाब्रवीत्प्राग्भवे शिशुरयं द्विजातिमान् ॥ विन्मयूरपुरगं गणेश्वरं पूजयन्नपि जजाप तन्मनून् ॥ २८ ॥ व्यापकं गणपतिं स च पश्यन्हृद्यं निशि दिवाभजदंतः ॥ नान्यदैक्षत परं गणनाथादेवमास गणपेदृढभक्तिः ॥ २९ ॥ तस्य भक्तिमिति चाव्यभिचाराद्वीक्ष्य विघ्नपतिरास सुमूर्तिः ॥ तं द्विजं वदति किं तवेप्सितं विप्र आह कुरु मां त्वदभिन्नम् ॥ ३० ॥

पूजिते सति मया भुज्यते ॥ २६ ॥ अतिथेरुपोषणाद्धेतोरावयोश्च भोजनं दिवा न भवति । त्वया सह तत् चतुर्थ्याख्यं सद्व्रतं आवयोर्भवतु घटतु त्वया सहावाभ्यामपि व्रतं क्रियत इत्यर्थः । अतो व्रतान्मंदबुद्धिरयं पुत्रश्च सुबुद्धियुक्तो भवेत् ॥ २७ ॥ प्राग्भवे पूर्वजन्मनि वित् ज्ञानवान् । तन्मनून् गणेशमंत्रान् ॥ २८ ॥ अंतः हृदि । गणपेऽडि गणेशे दृढाऽव्यभिचारिणी भक्तिर्यस्य ॥ २९ ॥ अव्यभिचारादव्यभिचारेण तस्य इति भक्तिं दृष्ट्वा

गणपतिः सुमूर्तिरास प्रकटोभवदित्यर्थः ॥ ३० ॥ स पुत्रस्तस्याः विधौ दैवे नास्ति । "विधिर्विधाने दैवे च" इत्यमरः । तवापि मनसि पुत्रविषये किंचिद्वांछास्ति । अतः किंचिद्वासनासत्त्वादस्मिन् जन्मनि तव न मद्रूपताप्राप्तिरित्यर्थः ॥ ३१ ॥ इह जन्मनि किंचित्त्वयि पापमास्ति हीति निश्चयेन । ननु तव दर्शनेन कथं मयि पापसंभव इति चेत्तत्राह । हि यतः वासना विदुषोपि दुस्त्यजास्ति । तथा च योगवासिष्ठे । "वासनावागुराकृष्टो मनोहरिणको नृणाम् । परां विवशतामेति संसारवनगुल्मके" इति । वासनावतोवश्यं जन्म भवतीत्यर्थः । अतोन्यजन्मनि त्वं ममत्वं मम भावं लभस्व । पूर्वजन्मनि संकल्पितमन्यजन्मनि प्राप्यत इत्यर्थः ॥ ३२ ॥ सोयमिति कालदीक्षितं प्रति अतिथिवाक्यम् । इति गणेशात्प्राप्तवरो यः सोयमद्याधुना तव कुले प्राप्तज

विघ्नहा अथ पुनर्द्विजमाहाऽस्मिन्भवे तव वधूर्मम भक्ता ॥ पुत्रमिच्छति विधौ न स तस्यास्ते मनस्यपि सुतेऽस्त्यणुवांछा ॥३१॥पूत एव हि भवान्मयि भक्त्याऽस्ति त्वयीह जनुषीषदघं हि ॥ वासना हि विदुषोपि दुस्त्यजाऽतोन्यजन्मनि लभस्व ममत्वम् ॥ ३२ ॥ सोयमाप्तजनिरद्य ते कुले प्रागणूत्यघभवाधिकांगुलिः ॥ संपतिष्यति किलांजसायदाऽयं गणेश इति बुद्ध्यतां स्फुटम् ॥ ३३ ॥ प्राक्तनास्य ललनात्र भवित्री सत्सुताथ गणनाथवरेण ॥ अद्यतो गणपतेर्निखिलाख्याप्यन्वये व्रतमिदं युवयोश्च ॥ ३४ ॥ रात्रिपोद्गमवतीह चतुर्थी चेद्भवेद्दिनयुगेन भवेद्वा ॥ गाणपैर्निगदितोभयपूर्वा मातृविद्धगणपो यत उक्तः ॥ ३५ ॥

न्मास्ति प्राग्जन्मनि या अणूतिरल्पवासना पुत्रेच्छारूपा तदेवाघं पापं तेन भवा षष्ठांगुलिर्यदाऽनायासेन पतिष्यति तदायं गणेशरूप इति स्फुटं बुद्ध्यतां युवाभ्यामिति शेषः । यथा चंद्रहासे राज्ञि षष्ठांगुल्या नाशोत्तरं सुखमासीत् । तथायमपि षष्ठांगुल्याः पातानंतरं पापनाशेन गणेशरूपः सुखवांश्च भविष्यतीत्यर्थः ॥ ३३ ॥ किंचात्रास्य पत्नी प्राक्तना पूर्वजन्मगता भवित्री गणेशवरेण सपुत्रा च भवित्री । अद्यत आरभ्य युवयोर्वंशे निखिलाख्या सर्वेषां नाम गणपतेरस्तु सर्वे गणपतिनामानो भवंत्वित्यर्थः । इदं चतुर्थीव्रतं चास्तु मौंज्यूर्ध्वं पुरुषैर्विवाहोर्ध्वं स्त्रीभिश्चतुर्थीव्रतं कर्तव्यमित्यर्थः ॥ ३४ ॥ तत्र चतुर्थीव्रतकरणे शास्त्रार्थमाह । रात्रीति । इह संकटचतुर्थी व्रते रात्रिपश्चंद्रस्तदुद्गमवती तदुदयव्यापिनी कर्तव्या । चेद्यदि दिनयुगे दिनद्वये भवेन्न भवेद्वा ।

उभयदिने व्याप्तिरव्याप्तिर्वा भवति तदा उभयपक्षेपि पूर्वा कर्तव्येति गाणपैर्गणपत्युपासकैर्निगदिता कथितास्ति । यतः गणपतिर्मातृविद्धस्तृतीयायुक्तः उक्तः ग्राह्यत्वेन कथितः । ग्रंथकर्तृभिरिति शेषः । यथोक्तं ब्रह्मवैवर्ते । "चतुर्थी च तृतीयायां महापुण्यफलप्रदा । कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी" तिथिचक्रे । " या संकष्टचतुर्थ्यभीष्टफलदा चंद्रोदयव्यापिनी ग्राह्या सा च दिनद्वये यदि तदा कैश्चित्परा कीर्तिता । सा चेयं न दिनद्वये यदि तदा कैश्चित्तु पूर्वोदिता पूर्वा सर्वमते दिनद्वय इयं भावेप्यभावेपि वा " । मातृविद्धो गणेश्वर इति कृत्यरत्नावल्याम् । विधूदये यदा न स्याच्चतुर्थी संकटे व्रते । तृतीयासंयुता कार्या सर्वदा शुभकांक्षिभिः । यद्यपि उभयदिने चंद्रोदयव्याप्तौ पूर्वाऽव्याप्तौ परेति केचिद्वदंति तथापि गणेशगौरीबहुलाव्यतिरिक्ताः प्रकीर्तिताः ।

श्रीदेशिकेंद्र उवाच ॥ श्रुत्वेत्थं द्विजतः स दीक्षित इमं संस्थाप्य हर्षाद्गृहे रात्रौ श्रीगणनाथमब्ज उदिते दूर्वादिभिश्चार्चयत् ॥ नैवेद्यं घृतपाचितैः सुमधुरैर्देवाय सन्मोदकैर्दत्त्वा दैवतवत्प्रपूज्य विधिनाथाऽभोजयद्वांछितम् ॥ ३६ ॥ भुक्त्वा पुत्रयुतो द्विजाय च ददौ तांबूलयुग्दक्षिणां गेहांतोथ स शायितः सुरपुरः क्षिप्तारेर सुस्थले ॥ तद्द्वार्येव बहिः शिशुर्ह्युभयतस्ताभ्यां च शय्या कृतोतथाऽयोषस्यररं निवार्य च गृहे ताभ्यां न दृष्टोऽतिथिः॥३७॥ संशोध्याथ तमंगणादिनिलये दैवे गृहे यत्नतो भूयस्तौ मिथ ऊचतुः कथमहो गेहाद्गतो ब्राह्मणः ॥ ह्यानुद्घाट्य कपाटमण्वपि बहिःस्थं देवगेहस्य वै तस्मान्नैष हि मानवः खलु गणेशोद्धास्ति नौ वंचकः ॥ ३८ ॥

चतुर्थ्यः पंचमीविद्धा देवतांतरयोगत इत्यादिबहुग्रंथसिद्धांतात् गणेशव्रते सर्वथा पूर्वैव कर्तव्या । तेन गणपतिस्तुष्टो भवतीति भावः ॥ ३५ ॥ अब्जे चंद्रे उदिते सति चंद्रोदयकाले इत्यर्थः । शार्दूलविक्रीडितम् ॥ ३६ ॥ अथ क्षिप्तं अर्पितं अररं कपाटं यस्य तस्मिन् अंतर्गेहे सुरपुरः देवताग्रभागे । ताभ्यां दंपतिभ्यां सोऽतिथिः शायितः । बहिर्द्वारभागे स्वपुत्रः शायितः । उभयतः पुत्रपार्श्वयोस्ताभ्यां च निद्रा कृता । अथेत्यपकृष्यते । अथ ताभ्यामुषसि उत्थाय कपाटमुद्घाट्य सोतिथिर्न दृष्टः । एतत्कुले चतुर्थीव्रतस्य प्रवृत्त्यर्थमतिथिरूपेण प्राप्तो गणेशोंतर्धानं प्राप्त इति भावः ॥ ३७ ॥ बहिःस्थं बहिर्बद्धं देवगृहस्य कपाटं किंचिदप्यनुद्घाट्य ब्राह्मणो हि गृहात्कथं गतोस्ति । न कथमपि । किं तु गुप्त एवेत्यर्थः । यतो गुप्तस्तस्मादेष मानवो नास्ति वै । किं तु

साक्षाद्गणेश एवास्ति खलु । हि यतः नौ आवयोः वंचकः । अतिथिरूपेण स्वस्वरूपप्रकाशक इत्यर्थः ॥ ३८ ॥ सव्ये करे अंगुलीनां पंचकं यस्य । यः द्विजः नेक्ष्यते । स गणपतिरस्यैव देहे तिरोहितोस्ति । अस्य षष्ठी चांगुलिः पतितास्ति । तस्य गणपतिरूपस्यातिथेः अस्य पुत्रस्य च किंचिदपि भेदो नास्ति । तत्र हेतुः वचनतः । षष्ठांगुलिः यदा पतिष्यति तदायं गणेशो भविष्यतीति तस्य वचनादयं गणेश एवास्तीत्यर्थः ॥ ३९ ॥ गुरुः पिता अस्य व्रतबंधं आशु शीघ्रं कृत्वा च पुनः तनयं सच्छ्रुतीरध्यापयामास बालो गणेशः गणनाथपूजनपरोभवत् । ननु स्वयं गणेशः सन् कथं गणेशपूजनपरो

प्रातः पुत्रमथोत्थितं ददृशतुस्तौ तेजसाढ्यं करे सव्ये चांगुलिपंचकं वदति तां भार्यां तदा दीक्षितः ॥ देहेऽस्यैव तिरोहितो गणपतिर्यो नेक्ष्यते स द्विजः षष्ठी चापतदंगुलिर्वचनतस्तस्यास्य भेदोऽणु नो ॥ ३९ ॥ नामाथास्य गणेश इत्थमकरोत्त्यक्त्वैव पूर्वं गुरुः श्रुत्वा तद्व्रतबंधमाशु तनयं चाध्यापयसच्छ्रुतीः ॥ बालोभूद्गणनाथपूजनपरो ह्यात्माखिलानां प्रियस्तद्भक्तिस्त्वखिलेषु चास्ति तदिदं नो वेत्ति देहात्मधीः ॥ ४० ॥ श्रीदेशिकेंद्र उवाच ॥ अथाल्पेनैव कालेन दीक्षितः पंचतां गतः ॥ तदोमा दुःखिता पुत्रात्कारयामास तद्गतिम् ॥ ४१ ॥ दारिद्र्यात्सुतमात्मानं नैषा पालयितुं क्षमा ॥ अदूरे चालकाक्षेत्रगतं मारुतिमाययौ ॥ ४२ ॥ प्रसिद्धः स महारुद्रस्तापसानां सुसिद्धिदः ॥ सती सानशनं चक्रे तत्पुरस्ताद्व्यहर्निशम् ॥ ४३ ॥ जपंती तस्य नामैव महारुद्रेति भक्तितः ॥ उपस्याविर्बभूवाथ मारुतिर्वानराकृतिः॥४४॥दृष्ट्वा तं भीषणं भीताथ स भूत्वा नराकृतिः ॥ तामुवाच न चिंतां त्वं कुरु पुत्रस्य चात्मनः॥४५॥

ऽभवदित्याशंक्याह । हि यतः आत्मा सर्वेषां प्रियोस्ति । तद्भक्तिः आत्मभक्तिः सर्वेषु अस्ति । तदिदं आत्मनो निर्निमित्तप्रियत्वं देहबुद्धिर्न वेत्ति । तस्मादात्मभक्तियुक्तस्य गणेशस्य युक्तं गणेशपूजनमिति भावः ॥ ४० ॥ पुत्रात् पुत्रेण तस्य कालदीक्षितस्य गतिम् अंत्यक्रियाम् ॥ ४१ ॥ एषा उमानाम्नी ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

॥ ४६ ॥ ४७ ॥ अंजन्यात्मजस्य हनुमतः ईरिताद्वांछितं पूरयामीति वचनेन अंजसा प्रयत्नमंतरेणोभयोरन्नवस्त्रे लेभे ॥ ४८ ॥ यमतिथौ यमद्वितीयायाम् ॥ ४९ ॥ तत्रैव हलिग्रामे । श्रुत्या यजुर्वेदेन ॥ ५० ॥ मातुलो विनायकः । स्युक्त्या पत्नीवाक्येन कन्यायां मातृसत्त्वं

त्वं साक्षान्मे स्वसा चाहं बंधुस्ते नात्र संशयः ॥ पूरयामीच्छितं सर्वं स्वस्था वस निजालये ॥ ४६ ॥ उक्त्वेत्यंतर्दधे देवः सा नैवेद्यमथाकरोत् ॥ तस्मै नमस्कृतिं चागात्पुत्राढ्या स्वगृहं सती ॥ ४७ ॥ आप्तानन्यांश्च धनिनो याचयंत्यपि सात्मजा ॥ द्वयोरन्नांशुके लेभेऽजसांजन्यात्मजेरितात् ॥ ४८ ॥ तां मत्वा भगिनीं साक्षादारार्तिक्याय मारुतिः ॥ प्रतिवर्षं यमतिथौ याति तद्दर्शनं निशि ॥४९॥ तत्रैवासीदुमाबंधुर्विद्वान्नाम्ना विनायकः ॥ श्रुत्या स्वसुः सुतं स्नेहादध्यापयति सद्धियम् ॥ ५० ॥ सुशीलं प्राप्तविद्यं च ज्ञात्वा तं बुद्धिमत्तमम् ॥ मातुलोऽस्मै सुतां दातुं स्युक्त्या चैच्छत्स्वयं सुधीः ॥ ५१ ॥ ततः पप्रच्छ भगिनीं मम कन्या सुताय ते ॥ कृष्णानाम्नी गणेशाय दीयते यदि रोचते ॥ ५२ ॥ नान्यद्दातुं समर्थोस्मि विना कन्यामहं स्वसः ॥ कृत्त्वामात्रं त्रिंशमितं नृणां दास्येद्धमत्र ते ॥ ५३ ॥ संस्थाप्यार्द्धं गृहे कुर्वे विवाहं विधिनाऽनयोः ॥ मधुवस्त्राक्षसूत्राभ्यां संतोषेण किलावयोः ॥५४॥ अथोमेत्याह तं बंधुमातः कस्त्वद्दते मम ॥ कर्तुं विवाहं पुत्रस्य निःस्वस्याऽपितृकस्य च ॥ ५५ ॥ सुतां विना न चेच्छामि स्वपुत्राय तेंगना ॥ कन्यां भूषांशुकैर्हीनां दृष्ट्वांतः कोपमेष्यति ॥ ५६ ॥ स्वसारं सोब्रवीच्चाथ न ते चिंतास्तु मत्प्रियः ॥ तथैवोक्तोऽहमित्थं हि वर्णयित्वैव तद्गुणान् ॥ ५७ ॥ इत्थमुक्त्वा ययौ गेहं मातुलोथ सबालकः ॥ गणेशो मातरं प्राह दशवर्षोतिबुद्धिमान् ॥ ५८ ॥ गणेश उवाच ॥ कथं मातर्विना द्रव्यं विवाहं मे करिष्यसि ॥ तद्दत्तेंशुकभूषान्नाद्युपयोगीतरच्च यत् ॥ ५९ ॥

पितुरधिकमस्तीत्यर्थः ॥ ५१ ॥ ५२ ॥ अन्यत् धनादिकम् ॥ ५३ ॥ मधुवस्त्रमंगलसूत्राभ्यां आवयोः संतोषेणानयोर्विवाहं कुर्वे ॥ ५४ ॥ ॥ ५५ ॥ ५६ ॥ तद्गुणान् त्वत्पुत्रगुणान् ॥ ५७ ॥ ५८ ॥ तद्दत्ते धनं विना । उत्तरार्द्धमुत्तरान्वयि । इतरत् धनादिकं च ॥ ५९ ॥

॥६०॥ ६१ ॥ ६२ ॥ यत् यस्मान्मे गृहं स बंधुवत् आगच्छति । यमद्वितीयायामिति शेषः ॥६३॥६४॥ यानि अनेकशः अनेकानि ध्यानानि । तैः वीरपंचमुखहनुमत्कवचादिषु उक्तैर्ध्यानैः । एकपादतः एकपादेन केचिदित्यनुवृत्तिः ॥ ६५ ॥ ६६ ॥ देवनैवेद्यैरित्याद्युत्तरान्वयि ॥ ६७ ॥ अथायुक्त



विवाहार्थं कथं लभ्यं विना भक्तिं यथा हरिः॥श्रीदेशिकेंद्र उवाच ॥ अथ मातात्मजं प्राह स्मरंती मारुतीरितम् ॥६०॥ उमोवाच ॥ गच्छ त्वं चालकाक्षेत्रं तत्र देवोस्ति मारुतिः ॥ मम बंधुर्मातुलस्ते तस्मै याचस्व वांछितम् ॥ ६१ ॥ दास्यत्यत्र न संदेहः सर्वं भूषां शुकादिकम् ॥ पाषाणरूपी हनुमान्कथं स्यान्मातुलो मम ॥६२॥ नेति शंकास्तु ते यन्मे गृहमायाति बंधुवत् ॥ श्रीदेशिकेंद्र उवाच ॥ मात्राज्ञप्त इति स्नात्वा भुक्त्वा चागात्पुरं स तत् ॥६३॥ ददर्श मारुतेः स्थानं सकामैस्तापसैर्युतम् ॥ केचिज्जपंति तन्मंत्रांस्थित्वा स्तोत्राणि चासने ॥ ६४ ॥ वीरपंचमुखाद्युक्तैस्तद्ध्यानैर्यान्यनेकशः ॥ स्थिताश्चासनभेदेन तिष्ठंतश्चैकपादतः ॥६५॥ रुद्राभिषेकनिरताः केचित्पूजापराः परे ॥ स्त्रियः प्रदक्षिणं यांतीतीक्षन् देवाग्रतो ययौ ॥ ६६ ॥ तं नत्वा दंडवत्तस्थौ दूरात्पश्यंस्तदर्चनम् ॥ आसायं देव नैवेद्यैर्भक्तैर्दत्तैर्गुडादिभिः ॥ ६७ ॥ ततो जलाशयं गत्वा कृतसायाह्निको ययौ ॥ देवाग्रेथ गतेष्वेव सर्वेष्वेकः स मारुतिम् ॥ ६८ ॥ प्राह मातुल मात्राहं प्रेषितोस्मि तवांतिकम् ॥ निश्चितो हि विवाहो मे मातुलार्पितकन्यया ॥ ६९ ॥ तत्र भूषांशुकाद्यं कस्त्वद्दते दास्यतीति च ॥ एवमुक्त्वैव सुष्वाप यत्रानुष्ठानकृद्द्विजाः ॥ ७० ॥ सुताः स्वामीप्टदर्शतेच्छवः श्रीमारुतेर्हि ते ॥ अथ रात्रौ भालकीस्थगिरिमद्धनिनो ययौ ॥ ७१ ॥ स्वप्ने साक्षान्महारुद्रस्तमाह स्वसृजस्य मे ॥ विवाहायाखिलं देयमन्नभूषादिकं त्वया ॥ ७२ ॥ चालकापुर एवासौ मत्पुरोस्ति शिशुर्लघुः ॥ गत्वेति प्रोच्यतां प्रातर्दास्येऽखिलमिति स्फुटम् ॥ ७३ ॥

रान्वयि ॥ ६८ ॥ ६९ ॥ इति च हेतोः प्रेषितोस्मीत्यर्थः ॥ ७० ॥ पूर्वार्द्धं पूर्वान्वयि । मारुतेः सकाशात् । अथ रात्रौ भालकीस्थितस्य गिरिमद्धनिनः गिर्माजीनाम्नो धनिकस्य स्वप्ने साक्षान्महारुद्रो ययावित्यन्वयः ॥ ७१ ॥ महारुद्र इत्युभयान्वयि ॥ ७२ ॥ ननु कोसौ तव भागिनेय इत्यत

आह । चालकापुर इति । मत्पुरः मदग्रतो । तत्र गत्वा सर्वमहं दास्यामीति स्फुटं त्वया प्रोच्यतामिति संबंधः ॥ ७३ ॥ अश्वतः अश्वेन गिरिमान्धनिक इति पूर्वोत्तरान्वयि ॥ ७४ ॥ मारुतेर्भागिनेयः कोस्तीत्याह । तत्पुरः धनिकाग्रे ॥ ७५ ॥ ७६ ॥ तदर्थं विवाहार्थं यदंशुकादि तत् ॥ ७७ ॥ तत इत्युत्तरान्वयि ॥ ७८ ॥ ७९ ॥ पूर्वार्द्धे पूर्वान्वयि ॥ ८० ॥ ततः स चेत्युत्तरान्वयि ॥ ८१ ॥ ८२ ॥ ८३ ॥ वरं योग्यम् ॥ ८४ ॥

अथ प्रातर्ययौ शीघ्रं चालकापुरमश्वतः ॥ गिरिमान्धनिको नत्वा महारुद्रं तदग्रतः ॥७४॥ स्थितांस्तपस्विनः प्राह स्वसृजः कोत्र मारुतेः॥श्रुत्वेत्थमुत्थितो बालो गणेशस्तत्पुरो ययौ॥७५॥तमब्रवीदहं चास्मि मारुतेः स्वसृजः खलु॥ पुनस्तमाह धनिको विवाहस्ते कदा शिशो ॥७६॥ तदर्थांशुकभूषाद्यं दातुं श्रीमारुतात्मजः ॥ आज्ञापयामास साक्षात् स्वप्ने मां वानराकृतिः ॥ ७७ ॥ यस्मिन्दिने विवाहस्ते तत्प्राक् चाहर्द्वयेन मे ॥ केन चित्सूचना कार्या भालक्यां मद्गृहे ततः ॥ ७८॥ सर्वं गृहीत्वैवायास्ये वैवाहिकमहं द्रुतम् ॥ एवमुक्त्वालिखत्पत्रे हरिद्राकुंकुमादिकम् ॥७९॥ भूषावस्त्रान्नसहितं श्रीमतां मंगले यथा ॥ तत्पत्रं शिशवे दत्त्वा नत्वा देवं ययौ गृहम् ॥ ८० ॥गणेशश्च ददौ पत्रं मात्रे सा बंधुमाह्वयत ॥ तत्पत्रं तत्करे दत्त्वा पश्येत्याह ततः स च ॥ ८१ ॥ पत्रे विलोक्य सकलं वैवाहिकमिहालिखत् ॥ गिरिमान्धनिको दास्येहं प्रागेत्येति चाब्रवीत्॥८२॥यदीदं दातुमायातो धनिको बहुभिस्तदा॥बहुभ्यो वरपक्षेभ्योऽन्नं दास्येहं कुतोऽधनी ॥ ८३ ॥ वरं जातं तवैवाथ नो वेत्स्येप धनी यथा ॥ कुर्वे विवाहं झटिति पूर्वोक्तनियमेन च ॥ ८४ ॥ इत्युक्त्वा तद्दिने चक्रे द्वावप्येकोणुमंडपौ ॥ कुलदैवतनैवेद्यं समर्प्याथः द्वयोः परे ॥ ८५ ॥ दिने विवाहं विधिना मधुवस्त्राक्षतैस्ततः ॥ चकाराथ निशम्येति गिरिमान् धनिको ययौ ॥ ८६ ॥

अथ चापरे दिन इति संबंधः ॥ ८५ ॥ विवाहं विधिनेति । यथाशास्त्रमिति यावत् । अयं भावः । मातुलस्यैव योषेति श्रुत्या । तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । स्मृतौ च मातुलकन्यैव तृतीयोक्ता । तेन च बहुशिष्टाचाराच्च मातुलकन्यापरिणयनं योग्यमस्ति । यस्तु मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव त्यक्त्वा चांद्रायणं चरेदित्यादि निषेधः स माध्यंदिनशाखाविषयो नाश्वलायनापस्तंबादिविषय इत्याद्यन्यत्र ज्ञेयमिति ॥ ८६ ॥

पूर्वपादः पूर्वान्वयी ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ सार्द्धान्वयः ॥ ९३ ॥ सेतवे गुरुं विना मंत्रोच्चारणं न कार्यमिति मर्यादापालनार्थम् । अथादि परान्वितम् ॥ ९४ ॥ ९५ ॥ दृष्ट्वैवेति परान्वयि ॥ ९६ ॥ माधिपं चंद्रम् ॥ ९७ ॥ ९८ ॥ ९९ ॥ यथा

वंशपात्रार्पणारंभे भूषावस्त्रैर्वधूवरौ ॥ अलंचक्रे पुरोधोभ्यां दत्त्वा हर्षाच्च दक्षिणाम् ॥ ८७ ॥ अन्येभ्यो ब्राह्मणेभ्यश्च द्वयोरातान्समातृकान् ॥ वस्त्रैः संतोष्य खेटस्थान् सर्वांश्चान्नेन भूयसा ॥ ८८ ॥ इति जाते विवाहेऽथ गणेशं धनिकोऽब्रवीत ॥ अद्य प्रभृति दास्येहं व्ययं प्रापंचिकं तु ते ॥ ८९ ॥ अन्नवस्त्रादिकं सर्वं मत्तोन्यस्मान्न याच्यताम् ॥ इत्युक्त्वा स्वपुरीं चागात्संस्थाप्याब्दव्ययोचितम् ॥ ९० ॥ प्रतिवर्षं चैकदैव प्रैषयच्चाब्दपूर्तिकृत् ॥ धनधान्यांशुकमुखं भूयश्चेक्षन्स चारतः ॥ ९१ ॥ मात्रा युक्तः स्वपत्न्या च गणेशोथावसत्सुखी ॥ गणेशं पूजयन् भक्त्या तुष्ट आत्मानि चात्मना ॥९२॥ स्वयमेव विलोक्याथ मंत्रशास्त्रमतंद्रितः ॥ गणेशादिमहामंत्रान्ज्ञात्वाप्येषो न वक्रतः ॥ ९३ ॥ साक्षादुच्चारयामास गुरुमिच्छन्हि सेतवे ॥ अथ श्रीभासुरानंदो भालकीं गंतुमंजसा ॥ ९४ ॥ ग्रामं तमाययौ सायं स्वीयैरत्रैव चावसत् ॥ ग्राममुख्यैः सत्कृतश्च तत्राश्वेभनृभिर्युतः ॥ ९५ ॥ तदीक्षायै ययौ प्रातर्गणेशोऽणुकृतक्रियः ॥ दृष्ट्वैव भव्यमूर्तिं तं शिवं मत्त्वा नृरूपिणम् ॥ ९६ ॥ ननाम दंडवद्भूमौ पश्यन्भूयस्तदाकृतिम् ॥ तृप्तिं नैवाप नेत्राभ्यां चकोर इव माधिपम् ॥९७॥ ज्ञात्वामुं मंत्रवेत्तारं पृच्छद्भिः साधकैः शनैः ॥ तिष्ठन्प्रांजलिरित्याह श्रीगुरुं गंतुमुद्यतम् ॥९८॥ गणेश उवाच ॥ स्वामिन्नवेहि मद्वृत्तं दयया निर्धनस्य च ॥ अखिलैः श्रुतदेवस्य यथा यदुपतिः स्वयम् ॥९९॥ ग्रीष्मेर्कानिलभूस्थैः श्रममितस्तापैर्विपत्रे वने यातीतस्तत आश्रयं जलमपीक्षन् भ्रष्टमार्गो यथा ॥ अध्यात्माध्यमराधिभौतिकमयैश्चाग्रे भवेहं तथा मिथ्या मोहवने निजांघ्रिसलिलं देह्याश्रयं चाधुना ॥ १०० ॥

विपत्रे पत्ररहिते वृक्षवति वने भ्रष्टमार्गः कश्चित्पुरुषो ग्रीष्मर्तौ अर्कानिलभूमिजन्यैस्तापैः प्रकर्षेण तापितः सन् आश्रयं छायायुक्तं देशं जलं च पश्यन् इतस्ततो याति । तथाहम् आध्यात्मिकाधिदैविकाधिभौतिकमयैस्तापैस्तप्तः सन् उग्रे पुनःपुनर्भयंकरे संसाराख्ये मिथ्याभूते मोहवने भ्रष्टमार्गः नष्टमार्गस्थिति

तिरस्मि । अतस्त्वं निजचरणोदकं आश्रयं आत्मज्ञानं च देहि । संसारान्मामुद्धरेत्यर्थः । शार्दूलवि० ॥ १०० ॥ कौ पृथिव्यां तनुधरो देहधारी भक्त्या प्राप्तः देवभावो येन । वासनयैव प्राप्तदेहभाव इति यावत् । हि यतः वासना वशिनः स्वतंत्रस्यापि फलं दत्ते ॥ १ ॥ अस्य गणेशस्य सुतः पांडुरंगाख्यः । अमुना गणेशेन ॥ २ ॥ मया पाकः अपरं जलाहरणादिकं कृष्णया तव पत्न्या कथं भविष्यतीति माता प्राह । पुत्रमिति शेषः ॥ ३ ॥

श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा षोडशवार्षिकस्य वचनं हीत्थं गणेशस्य च प्राहांतर्गुरुराडहो लघुरपि प्रौढं वदत्यार्यवत् ॥ नातः प्राकृत एष कौ तनुधरो भक्त्याप्तदेवांशकः प्राप्तो वासनयैव जन्म वशिनोप्येषा हि दत्ते फलम् ॥ १०१ ॥ दृष्टोसौ खलु संप्रदायवितती मेऽग्रेऽधिकारी सुतस्त्वल्पायुर्न परेऽमुना हि सदृशाः शांत्यात्मतेजोमुखैः ॥ विद्वांसोप्यथ पुत्रपौत्रवितती सज्ज्ञानिनोस्यान्वये यास्यंत्येव जानें यतो गणपतेरंशोस्ति साक्षादयम् ॥ २ ॥ निश्चित्येति मनस्यथाह पुरतास्तिष्ठंतमेनं गुरुर्यास्येहं गृहमद्य ते हि मम वै भक्त्याऽधनाश्च प्रियाः ॥ श्रुत्वेत्थं मुदितः स एत्य च गृहं मात्रेखिलं चाब्रवीन्माताऽहाथ कथं भविष्यति मया पाकोपरं कृष्णया ॥ ३ ॥ तावत्तद्गृहमाययुः सहचराः श्रीमद्गुरोराज्ञयाऽऽनीय घटैर्निजैर्हि विमलं पाकं च चक्रुर्द्रुतम् ॥ कृत्वा चातुपतंदुलादिकमिहात्मीयैः परं तद्गृहेऽथैत्याभ्यर्च्य गुरुः स्वमिष्टमकरोद्दीक्षां हि तस्याखिलाम् ॥ ४ ॥ यस्योमा जननी स्वयं गणपतेर्योंशो हि तं चाख्ययोमापत्यं कृतवान् गुरुः सकलवित्सानंदमेवं त्र्यहम् ॥ जातस्तत्र गुरूत्सवः प्रथमकेऽह्न्यस्यान्वधान्यव्ययं श्रुत्वा चारमुखाद्यथौ स धनिकस्तं सांगमेवाकरोत् ॥ ५ ॥ गोप्यं तांत्रिकमेव चाह तनयायै काकुनाम्न्यै गुरुस्तद्भावोपनिषन्मुखं श्रुतिगतं चास्मै समंत्रार्थकम् ॥ नास्माद्भास्करसद्गुरोः प्रियतमः शिष्योतिशिष्यस्य वै साक्षात्तस्य शिवात्मनो गणपतिश्चासौ सुतोतः खलु ॥ ६ ॥

अथ गुरुरिह तद्गृहे स्वकीयमिष्टदैवतमभ्यर्च्य तस्य गणेशस्य पूर्णाभिषेकदीक्षां कृतवान् ॥ ४ ॥ सानंदं उमापत्यानंदमित्यर्थः । धनिकः गिरिमज्ञाख्यकः तमुत्सवं सांगं संपूर्णं चकार ॥ ५ ॥ तनयायै च गुप्तं तांत्रिकसंप्रदायमाह । कन्यायाः वेदेऽनधिकारात् । मंत्रार्थसहितं श्रुतिगतं भावनोपनिषदादि । तच्च

कन्योक्तं तंत्ररहस्यम् अस्मै उमापत्यानंदाय प्राह । यत एवं प्रियतमः अतः साक्षाच्छिवात्मनोस्य भास्करस्यैष गणपतिः सुतोस्ति खलु ॥ ६ ॥ भास्करगुरुणा कर्त्रा पत्न्या कृष्णानाम्न्या सह उपदिष्टो बुद्धिमान् स गणेशाख्यो दीक्षितः इतो हलियामसकाशाद्भालक्यादिपुरेषु तत्तदधिपप्रीत्यै चलन् गच्छन् यो भास्करस्तस्मात्सर्वमंत्रान् लब्ध्वा इमान्न्यासैः सह जपन् स्वोपास्यदेवतां पूजयन् सर्वमंत्रैस्तत्तद्दैवतैश्च सिद्धीः समवाप । सिद्धमंत्रो बभूवेत्यर्थः ॥ ७ ॥ सर्गोक्तकथाश्रवणादिफलमाह ।.इतीति । तन्मयत्वं गणेशरूपत्वम् । नृतनुधराच्छिवरूपाद्भास्करगुरोः सकाशाद्यो मंत्रान्प्राप । तस्य इति

पत्न्या दीक्षित एष तत्र गुरुणा धीमान् गणेशस्ततो भालक्यादिपुरेषु तत्तदधिपप्रीत्यै चलद्भास्करात् ॥ लब्ध्वा सर्वमनून् स दीक्षित इमान्न्यासैर्जपन् पूजयन्स्वोपास्यं समवाप सर्वमनुतः सिद्धीश्च तद्दैवतैः ॥ ७ ॥ इति गणपतिभक्तस्तन्मयत्वं हि लब्ध्वा नृतनुधरशिवाद्यो देशिकात्प्राप मंत्रान् ॥ चरितमिदममोघं पठ्यते श्रूयते चेद्भवति सततमेवाविघ्नतः स्वेष्टसिद्धिः ॥ १०८ ॥ इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे उमापत्यानंदनाथजन्मादिदीक्षांतचरित्रवर्णनं नाम चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ श्रीदेशिकेंद्र उवाच ॥ उषस्युत्थितः सन्नुमापत्यसौख्यः स्मरञ्छ्रीगुरुं तत्पदांभोभिरार्द्राम् ॥ हृदा भावयन्स्वां तनुं रश्मिमंत्राञ्जपत्येव सत्संप्रदायैकगम्यान् ॥ १ ॥ धरां प्रार्थयन् स्वास्तराधोऽङ्घ्रिरिष्टं प्रणम्योक्तशौचो विशोध्यास्यदंतान् ॥ परिक्षाल्य मंत्रैः सुभूतिः सुकल्प्याऽजपां गायतीशादिदेवान्सुगीतैः ॥ २ ॥

सर्गोक्तं चरितं यैः पठ्यते श्रूयते चेत्तेषां सततं निर्विघ्नतः स्वेष्टसिद्धिर्भवति । मालिनी० ॥ १०८ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥ उत्पंचचत्वारिंशेऽक्षधरोर्वीपथतः स्मृता ॥ उमापत्यस्याह्निकश्रीगुरुसेवावरा कथा ॥ ४५ ॥ अथोमापत्यानंदस्याह्निकाचरणं वर्णयति । उषसीत्यादि सप्तदशभिः । उषःकाले उत्थितः उमापत्यानंदः श्रीगुरुं स्मरन् तच्चरणोदकैरार्द्रीकृतां स्वतनुं मनसा भावयन् सन् सत्संप्रदायैकगम्यान् लक्ष्मीमालामंत्रानेव जपति । प्रथमं तदेवानुष्ठानं विहितमित्यर्थः । भुजंगप्रयात० ॥ १ ॥ ततः भूमिं प्रार्थयन् स्वास्तरणस्याधः सव्यक्रमे

णांघ्रिर्यस्य स इष्टदैवतं प्रणम्य मंत्रैः दंतान् संशोध्य मंत्रैर्मुखं च संशोध्य प्रक्षाल्य मंत्रैः सुष्ठु भूतिर्यस्य सोऽजपागायत्रीं सुसंकल्प्य सुगीतैः गीतसाधनैः शिवादिदेवताः गायति । दंतशोधनादिमंत्रास्तंत्रप्रसिद्धाः । अजपागायत्री च गुरुमुखैकवेद्या ॥ २ ॥ अथ वेदोक्तप्रकारेण आगमोक्तप्रकारेण च स्नानं कृत्वा सुवस्त्रो मंत्रैर्भस्मरुद्राक्षमालाश्च धारयन् आपस्तंबसूत्रोक्तं संध्याग्निहोत्रहोमब्रह्मयज्ञादि कृत्वा उपासनासंध्यां तंत्रोक्तां करोति ॥ ३ ॥ प्रातर्विहितं तंत्रप्रसिद्धं नाथपारायणं जपन् त्रिकालोक्तं घटीपारायणं चात्र प्रातःकाले जपन् अथो अनंतरं गणपतिं तस्य महामंत्रेण चतुश्चत्वारिंशदधिकचतुःशतवारं संतर्प्य सूर्यं प्रति श्रुत्युक्तान् तंत्रोक्तान् तृचाभास्करप्रसिद्धान् अर्घ्यान् अर्पयन् तावत्संख्यया प्रणमति ॥ ४ ॥ ततः नृसिंहमंत्रं जपन् लक्ष्मीयुक्तं तं मनसा

अथाप्लुत्य वेदागमाभ्यां सुवस्त्रो दधन् भस्म रुद्राक्षमालाश्च मंत्रैः ॥ स्वसूत्रोक्तसंध्याग्निहोमाजयज्ञादि कृत्वाप्युपास्तेश्च संध्यां करोति ॥ ३ ॥ जपन्नाथपारायणं प्रातरुक्तं त्रिकालेषु घटयाख्यमप्यत्र चाथो ॥ गणेशं तदीयोरुमंत्रात्प्रतर्प्य नमत्यर्कमर्घ्यान्ददन् श्रौततांत्रान् ॥ ४ ॥ मनुं नारसिंहं जपन् तं श्रियाढ्यं हृदा स्वर्णभूषोपचारैः प्रपूज्य ॥ ततो मध्यसंध्यां श्रुतेश्चागमोक्तां घटीतत्त्वकावृत्तियुक्तां करोति ॥ ५ ॥ सुरर्षीन् पितॄन्सूत्रतस्तर्पयित्वा महान्यासपूर्वं नमोरुद्रपाठैः ॥ शिवं चाभिषिच्यार्द्रबिल्वैः समर्च्य जपत्यक्षरैः पंचभिः शैवविद्याम् ॥ ६ ॥ गणेशोऽतितुष्टो भवेत्तर्पणेन नतीष्टो रविः श्रीवरोलंकृतश्च ॥ शिवश्चाभिषेकाद्रहस्यज्ञ इत्थं करोत्येव नित्यं स चाद्वैतवेत्ता ॥ ७ ॥

सुवर्णभूषाभिः सर्वोपचारैः संपूज्य मानसपूजां कृत्वेत्यर्थः । ततः श्रुतेः वेदसंबंधिनीं आगमोक्तां च मध्याह्नसंध्यां घटीपारायणतत्त्वपारायणयुक्तां करोति स इति शेषः ॥ ५ ॥ अथ सः स्वसूत्रानुसारेण देवर्षिपितृतर्पणं कृत्वा महान्यासपूर्वकं नमस्ते रुद्रेति पाठैः शिवं अभिषिच्य बिल्वदलैरभ्यर्च्य पंचाक्षरयुक्तं शिवमंत्रं जपति ॥ ६ ॥ एवं गणेशार्कविष्णुशिवोपासनं नित्यं करोतीत्याह । गणेश इति । गणेशस्तर्पणेनातिसंतुष्टो भवति । गणेशस्तर्पणप्रिय इति वचनात् नतिभिः नमस्कारैरिष्टप्रदो रविर्भवति । नमस्कारप्रियो भानुरिति वचनात् । श्रीवरो विष्णुरलंकृतः सन्नतितुष्टो भवति । अलंकारप्रियो विष्णुरिति वचनात् ।

शिवश्चाभिषेकेणातितुष्टो भवति । अभिषेकप्रियः शिव इति वचनात् । रहस्यज्ञो ब्रह्मवेत्ता सः इत्थं पूर्वोक्तप्रकारेण नित्यमेव करोति ॥ ७ ॥ एवं चतुर्देवतोपास्तिमभिधाय पंचायतनोपासकत्वसिद्ध्यर्थं शक्तिपूजां वर्णयितुं शक्तेः सर्वोत्कृष्टत्वमाह । गणेश इति । गणेशः अर्कः विष्णुः शिवः इति चतुर्भिर्देवैः सहिता या परा शक्तिः सर्वदेवतांतर्यामिणी सा तु पंचायतनगा आत्मना सह पंचायतनाधिष्ठात्री प्रोक्ता । बुधैरितिशेषः । यतः सा चिच्छक्तिश्चिद्रूपा शक्तिः चिति चैतन्यमात्रेपि स्फुरति । च पुनः आत्मैकविषया आत्मैकगम्यास्ति । अतोनया चिच्छक्त्या ऋते विना कश्चिद्गणेशादिः क्वचिद्देशेपि स्पंदितुं स्वस्वव्यापारे प्रवर्तितुमपि इट् ईशः समर्थो न भवति । तथा च गणेशरविविष्णुशिवादिदेवेषु निर्विघ्नप्रकाशपालनसंहारादिकर्त्री तत्तदधिष्ठानरूपा ब्रह्माभिन्ना परा शक्तिरेव सर्वोत्तमास्ति । एतदभिप्रायेणैव पंचदश्यां "इयमात्मा परानंदः परप्रेमास्पदं यतः" इति विद्यारण्यैरियमिति नित्यापरोक्ष

> गणेशोर्को विष्णुः शिव इति चतुर्भिश्च सहिता परा शक्तिः प्रोक्ता त्रिशदमिह पंचायतनगा ॥ यतश्चिच्छक्तिः सा स्फुरति चिति चात्मैकविषयाऽनयतें नो कश्चित्क्वचिदपि न चेट् स्पंदितुमपि ॥ ८ ॥ गणेशादीन् भेदान्कुरुत इह चोपासकधिया स्वयं तत्तच्छक्तिर्भवति किल तत्कार्यैनिपुणा ॥ अतस्तस्याः पूजां विमलमतिमान्मंत्रनिपुणः करोत्युक्त्वा देशं समयमपि वेदांगकुलतः ॥ ९ ॥ समर्च्य द्वारं प्राक् प्रविशति परांबार्चनगृहं भुवं प्रोक्ष्यास्तीर्यासनमिह च तिष्ठन्कजमुखैः ॥ गणेशं नत्वा स्वं गुरुमपि च सव्योत्तरधियाऽर्चयत्यंबागेहे ह्यमृतनिधिमुख्यैश्च मनुभिः ॥ १० ॥

रूपा निर्दिष्टा । "यत्साक्षादपरोक्षात्" इति श्रुतेः । तस्माद्गायत्र्यादिरूपिणीयमेव स्वस्वाधिकारानुरूपं सर्वैरुपास्येति भावः । सर्वश्रुतिशिखराभिप्रायकथनाच्छिखरिणीवृत्तम् ॥ ८ ॥ किंचोपासकानां भक्तिविवृद्ध्यै गणेशादिभेदजनकापि सैवेत्याह गणेशादीनिति । सा चोपासकधिया तत्तद्भक्तनिश्चयेन गणेशादिभेदान्कुरुते । इह गणेशादिषु स्वयं तेषां तेषां भक्तानां कार्यकरणे निपुणा समर्था तत्तच्छक्तिः विघ्नहर्तृत्वादिरूपा भवति । यत एवं सर्वरूपा अतो मंत्रशास्त्रनिपुणो निर्मलमतिमानुमापत्यानंदस्तस्याः पूजां करोति । प्रतिदिनमिति शेषः । पूजाप्रकारमाह उक्त्वेत्यादि परान्वयि ॥ ९ ॥ वेदांगतः ज्योतिषोक्तप्रकारेण कुलतः तंत्रोक्तप्रकारेण च देशं समयं कालं च उक्त्वा देशकालौ संकीर्त्येत्यर्थः । स पूर्वं द्वारं संपूज्य परांबायागमंदिरं प्रविशति । ततः

भूमिं संप्रोक्ष्यासनमास्तीर्य इह आसने कञमुखैः पद्मस्वस्तिकादिभिः शरीरस्थितिप्रकारैरुपविशति । ततो गणेशं स्वगुरुं च स्वस्य दक्षिणोत्तरबुद्ध्या उत्तरे गुरुं दक्षिणे गणेशं च नमस्कृत्यामृतांभोधये नम इत्यादिमंत्रैर्देव्याः मंदिरं अर्चयति । सर्वत्र कर्तृपदाभावे स इत्यध्याहारः ॥ १० ॥ स्ववामभागे जलैः पूर्णं वर्द्धिनीपात्रम् इतरत् पूजाद्रव्यं दक्षिणगतं निधाय स्थूलान् लघून् बहुदीपानभितः प्रज्वाल्य वित् ज्ञानवान् सः भूशुद्धिं भूतशुद्धिं प्राणायामं च कुर्वन् अथ पश्चात् अंतर्बाह्यार्णान् अंतर्बहिर्मातृकावर्णान्न्यसति स्थापयति । निपूर्वस्यासधातोः स्थापनार्थत्वम् । "उपसर्गेण धात्वर्थो बलादन्यत्र नीयते" इति न्यायात् । नियमात् नियमेन क्रमेणेति यावत् । करशुध्यादि च न्यसति । तथा च । अंतर्मातृकान्यासबहिर्मातृकान्यासकरशुद्धिन्यासात्मर

स्ववामेद्भिः पूर्णं कलशमितरद्दक्षिणगतं निधाय प्रज्वाल्योरुलघुबहुदीपान्विदभितः ॥ भुवः शुद्धिं भौतीमसुनियमनं चात्र विदधन्न थांतर्बाह्यार्णान्न्यसति करशुद्ध्यादिनियमात् ॥११॥ समाप्तौ न्यासानां कलशमुखपात्राणि विधिना ह्युदक्प्राक् न्यस्य स्वगुरुमथ संतर्प्य पयसा ॥ ततो मूलाधारात्कबिलनिलयां कुंडलिनिकां स्मरन्स्वेष्टां चक्रावरणत इहाऽऽवाह्य निजतः ॥ १२ ॥ चतुःषष्ट्या भेदैरुपचरति चांबामहरहः क्रमान्नित्यात्र्यौघावरणसहिताम्नायमनुभिः ॥ पयःखंडाद्युक्ताक्षतकुसुमतस्तत्त्वविदितो नवाराढ्ये यंत्रेऽर्च यति ललितां तद्गतमनाः ॥ १३ ॥

क्षान्यासचतुरासनन्यासबालान्यासवशिन्यादिन्यासमूलवर्णन्यासषोढान्यासचक्रन्यासादींश्च करोतीत्यर्थः ॥ ११ ॥ एवं न्यासानां समाप्तौ सत्यां कलशादिपात्राणि सामान्यविशेषार्घ्यादीनि विधिना उत्तरत आरभ्य प्राक् दक्षिणभागे न्यस्य संस्थाप्याथ स्वगुरुं क्षीरेण शिरसि संतर्प्य ततः मूलाधाराद्ब्रह्मरंध्रपर्यंतं स्थितां कुंडलिनीं स्मरन्स्वेष्टदेवतां चक्रावरणतः चक्रगतावरणदेवताभिः सह इह श्रीचक्रे निजतः स्वस्वरूपादुद्धृत्यावाह्योपचरतीत्यग्रे योज्यम् ॥ १२ ॥ चतुःषष्ट्या भेदैरंबामुपचरति । प्रत्यहं चतुःषष्ट्युपचारानर्पयतीत्यर्थः । क्रमेण नित्यामंत्रैः त्र्यौघैः ओघत्रयमंत्रैः नवावरणयुक्ताम्नायमंत्रैः कृत्वा पयोयुक्तद्वितीयखंडादिप्रोक्तपदार्थैः सह युक्तैरक्षतपुष्पैश्च तत्तन्मंत्रदेवताः संतर्प्य इतः परं तत्त्ववेत्ता सः तद्गतमनाः सन् नवचक्रयुक्ते श्रीयंत्रे ललितायां

पूजयति ॥ १३ ॥ ततो धूपं दीपं बहुरसाढ्यं नैवेद्यं अतुलं पुष्कलं देव्यै समर्प्य अखिलं त्रयोदशगुणयुक्तं फलसहिततांबूलं स्वं धनं दक्षिणामिति यावत्। सुंदरं छत्रं चामरव्यजनं च दर्पणं च समर्प्याथ सः नृत्यं गीतं च करोति। तत आरार्तिक्यं मंत्रपुष्पांजलिं ततः पूजांगबलिं च करोति अर्पयति ॥ १४ ॥ अथ मूलं जप्त्वा परशिवशक्तिं बहुधा त्रिशतिसहस्रनामादिभिः स्तौति। ततः बालामंत्रेण उक्ता गतिः क्रमो यस्यास्तां सुवासिनीपूजां उपचरति उपचारैः करोति। ततः बटून् वीरांश्च इच्छितं अर्पयन् संतोषितजनः ततो नैवेद्यात्प्राक्स्थापितादन्नादन्नेन वैश्वानरविधिं वैश्वदेवं कुरुते ॥ १५ ॥ ततः वेदोक्तामागमोक्तां च संध्यां घटीनित्यावृत्त्या घटीनित्यापारायणेन युक्तां कृत्वाऽग्निविधिं अग्निहोत्रहोमं च कृत्वा प्रदोषभजनं च कृत्वा त्रिशत्या सह

ततो धूपं दीपं बहुरसिकनैवेद्यमतुलं समर्प्याबायै स्वं फलसहिततांबूलमखिलम् ॥ सुगीतं सच्छत्रं व्यजनमथ नीराजनविधिं तथाऽऽदर्शं पुष्पांजलिमपि करोत्यर्चनबलिम् ॥ १४ ॥ अथो मूलं जप्त्वा परशिवकलां स्तौति बहुधा सुवासिन्यर्चां चोपचरति हि बालोदितगतिम् ॥ बटून्वीरांस्तत्रेप्सितमनुददंस्तोषितजनस्ततः प्राक्स्थादन्नात्कुरुत इह वैश्वानरविधिम् ॥ १५ ॥ ततः सायं संध्यां श्रुतिनिगदितां चागमगतां घटीनित्यावृत्त्याऽग्निविधिमपि कृत्वेशभजनम् ॥ त्रिशत्या साहस्रं ह्यनुपठति शुद्धादिरिवयोस्त्रिपंचस्रङ्मंत्रैः सुममथ समर्प्यैति शिवताम् ॥ १६ ॥ प्रबुद्धश्चिद्वृत्त्या चरममतिसंस्थोथ कुरुते तुरीयां संध्यां च त्रिगुणगतुरीयानुभवतः ॥ चिरंटीभिर्विप्रैः स्वजनत इहाश्नाति च शिवामथात्मन्युद्वास्य स्वपिति पुनरस्योत्थितिरुषः ॥ १७ ॥

ललितासहस्रनामस्तोत्रं पठति। शिवयोः शिवशक्त्योः शुद्धयादिभेदो यथा स्यात्तथाऽनयोस्त्रिगुणिताः पंचदश ये स्रङ्मंत्राः मालामंत्रास्तैः पुष्पं समर्प्य तत्त्वशोधनद्वारा शिवरूपत्वं प्राप्नोति समाधिं प्राप्नोतीत्यर्थः। पंचदशमालामंत्राश्च शिवशक्तिमिश्रभेदेन शुद्धनमोंतस्वाहांततर्पणांतजयजयांतभेदेन च उपासकेषु प्रसिद्धाः ॥ १६ ॥ अथ चिद्वृत्त्या प्रबुद्धश्चरमा या मतिश्चरमवृत्तिस्तुरीयाभिधा तत्र स्थितः सन् त्रिगुणरूपासु जागृत्स्वप्नसुषुप्तिषु गता या तुरीया। तुरीयं त्रिषु संततमिति समाध्यनुभूता सर्वसाक्षिणी वृत्तिस्तदनुभवेन तुरीयां संध्यां तंत्रोक्तां कुरुते। अथ सुवासिनीभिर्ब्राह्मणैः स्वजनैः सह इहावसरे

अश्नाति । अथ परशिवां आत्मनि उद्वास्य स्वपिति निद्रां करोति । पुनरस्य गुरोरुषःकाले उत्थानं भवति । एवमुमापत्यानंदगुरोर्नित्यकृत्यमित्यर्थः ॥ ॥ १७ ॥ १८ ॥ साक्षाद्दैवतैर्यदि त्वम् ईप्सितं कथयेति उच्यते । तर्हि । यस्तेषु दैवतेष्वपि याच्ञाकर्ता न भाति । स मनुष्येषु याच्ञावान् पुनः कुतो भवेत् । न कुतोपि याचत इत्यर्थः ॥ १९ ॥ अथादि परान्वयि ॥ २० ॥ अयांचानतः यांचारहितस्य दीक्षितस्य उमापत्यानंदस्य व्ययं व्यययोग्यं

श्रीदेशिकेंद्र उवाच ॥ संक्षेपेणेति गदितमुमापत्याह्निकं तु यः ॥ गृहाद्बहिर्न यात्येव सदोपास्त्यगतांतरः ॥ १८ ॥ देवतैर्यदि साक्षाद्वदेप्सितमितीर्यते ॥ यस्तेभ्योपि न याच्ञावान्मानवेभ्यः कुतः पुनः ॥ १९ ॥ गिरिमानेन दत्तेऽस्मै गिरा याच्ञां व्यधोविनत् ॥ गतो मुमूर्षुतां सोथ पुत्रं ज्ञात्वा शठं हृदि ॥ २० ॥ अयांचावद्दीक्षितस्य व्ययं दास्यति कोऽव्ययः ॥ इति चिंतान्वितः प्राणान्न जहौ श्रमवानपि ॥ २१ ॥ नृपामात्यो नीलकंठरायोऽथैत्य तमब्रवीत् ॥ गच्छंति नासवः किं ते कस्मिन् किंचानना स्थिता ॥ २२ ॥ शनैः सोप्यब्रवीद्विप्रोऽयाचको वर्चको मया ॥ दत्तसर्वो कास्य गतिर्हलिखेटे सुमानतः ॥ २३ ॥ नीलकंठोपि तं प्राह याच्ञीवाप्यहं खलु ॥ दास्ये याच्ञां विनाप्यस्मै सर्वं तस्मादसूंस्त्यज ॥ २४ ॥ श्रुत्वेत्थं मंत्रिणो वाक्यं धनी प्राणान् जहौ ततः ॥ नीलकंठो ददौ सर्वमुमापत्यव्ययोचितम् ॥ २५ ॥ जात्या परश्चरप्येष सुज्ञः पूर्वाधिकं गुरुम् ॥ विना याच्ञां प्रेष्यति चाराज्ञात्वा व्ययोद्गमम् ॥ २६ ॥ कालात्तं च मुमुर्षुत्वं प्राप्तं प्राणोत्क्रमाक्षमम् ॥ ज्ञात्वाथैत्य स्वयं राजा चंद्रसेनस्तु पृष्टवान् ॥ २७ ॥

धनम् ॥ २१ ॥ २२ ॥ उः शिवस्तस्यार्चकोऽर्चक ईश्वरार्चकः इत्यर्थः । यांचारहितो मया दत्तं सर्वं निर्वाहकं धान्यादि यस्मै स द्विजः हलिखेटेऽस्ति । अस्य गतिः निर्वाहो हलिखेटके सुमानतः सुसत्कारेण कथं स्यात् इत्यर्थः ॥ २३ ॥ २४ ॥ २५ ॥ पूर्वस्मादधिकं धान्यादि । व्ययोद्गमं धान्यादिसमाप्तिम् ॥ २६ ॥ २७ ॥

१३०

॥ २८ ॥ २९ ॥ गणेशसदनं पृच्छन् सन् तत्र प्रविष्टो राजांऽतर्गृहे आसनस्थं तं गुरुं समीक्ष्य आदरात्प्रीत्या मुहुः सम्यक् पश्यन् तत्पुरतस्तस्था विति तृतीयस्थेनान्वयः ॥ ३० ॥ उमापत्यविशेषणानि ललाटस्थितयाऽतिशुभ्रया विभूत्या भालचंद्रमिव स्थितम् ॥ ३१ ॥ रुद्राक्षयुक्तस्फ टिकमाल्येन मालया " माल्यंमालास्रजौमूर्ध्नि " इत्यमरः। नागयज्ञोपवीतधरमिव स्थितम् । तन्मनूक्तिभिः गणेशमंत्रयुक्तवचनैः ॥ ३२ ॥ नेत्रे निमील्य

किं त्वं न त्यजसि प्राणान्वासना क्व स्थिता वद ॥ सोप्युवाचाखिलं वृत्तमुमापत्यसुखस्य हि ॥ २८ ॥ नृपश्चाथाब्रवीदेनं मया तस्मै द्विजातये ॥ दीयतें सर्वमेवाद्य त्यज प्राणानचिंतयन् ॥ २९ ॥ सोमून् जहावथो राजा हलिखेटं ययौ स्वयम् ॥ पृच्छन्गणेशसदनं प्रविष्टोंतः समीक्ष्य तम् ॥ ३० ॥ आसनस्थं ताम्रकांतिं गणेशमिव चापरम् ॥ भालचंद्रमतिश्वेताविभूत्याऽलिकसंस्थया ॥ ३१ ॥ अक्षस्फा टिकमाल्येन नागयज्ञोपवीतिनम् ॥ दूर्वाभिस्तर्पयंतं च गणेशं तन्मनूक्तिभिः ॥ ३२ ॥ निमील्य नयने चेतस्याविर्भूतविनायकम् ॥ तस्थौ तत्पुरतो राजा संपश्यन्मुहुरादरात् ॥ ३३ ॥ तर्पणांतेथ नयने स चोन्मील्य नृपं पुरः ॥ वीक्ष्य संकेतयामास करेणाथ नृपोऽ ब्रवीत् ॥ ३४ ॥ भासुरानंदशिष्योस्मि भालकीशः श्रुता मया ॥ त्वत्कीर्तिर्नीलकंठोक्ताऽऽनीतस्त्वामीक्षितुं तया ॥ ३५ ॥ दृष्ट्वैव दिव्यां त्वन्मूर्तिं मग्नोहं सुखसागरे ॥ त्वत्संगात्स्यात्कियत्सौख्यं तस्यांतं नैव वेद्म्यहम् ॥ ३६ ॥ त्यक्तुं नेशोस्मि ते संगं तस्मान्मयि दयां कुरु ॥ स्त्रीयैः पुरीं ममैहि त्वं चिरं वस्तुमसंशयम् ॥ ३७ ॥ मद्गृहं स्वगृहं विद्धि सेव्यस्त्वं सेवकोस्म्यहम् ॥ इत्यादि प्रार्थनां श्रुत्वा हसन् प्राह नृपं गुरुः ॥ ३८ ॥ मैवं मां ब्रूहि पारोक्ष्याद्यतस्त्वद्गुरुपादजैः ॥ रजोभिः पूतशीर्षोहं नेंद्रं च गणयाम्यतः ॥ ३९ ॥

चेतसि प्रादुर्भूतः विनायको गणपतिर्यस्यतम् । चित्तगतो गणेशप्रादुर्भावो राज्ञा रोमांचादिबहिर्लक्षणेन ज्ञात इत्यर्थः ॥ ३३ ॥ किमर्थमागतोसीति हस्तेन संकेतं कृतवान् ॥ ३४ ॥ राजोवाच । भासुरानंदेति । तया कीर्त्या त्वद्दर्शनार्थमानीतोस्मि ॥ ३५ ॥ तस्य त्वत्संगजन्यसुखस्य अंतं पर्यवसानं न वेद्मि । अनंतसुखं भविष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥ ३८ ॥ पारोक्ष्यात् अपरिचितरूपेण । एवं मा ब्रूहि । यतस्त्वद्गुरोः भासुरानंदस्य

पादनिर्गतैः रजोभिरहं पवित्रमूर्धाऽस्मि अतः गुरुं विना इंद्रमपि न गणयामि महत्त्वेन तुलयामि ॥ ३९ ॥ हि यतः द्विजेतरः । अतो न स्पृष्टवान् ॥ ॥ ४० ॥ हि यतः अन्यतः अन्यत्र ईदृशी मम गुरुत्वबुद्धिर्न भवति ॥ ४१ ॥ ४२ ॥ परैः गृहस्थितैः सह ॥ ४३ ॥ सन्मुखकरो वासो यस्मिन् ॥ ४४ ॥ ४५ ॥ तदिच्छवः पुत्रादीच्छावंतः ॥ ४६ ॥ कावेरीतीरतः तत्तीरे सर्वैः सह प्राप्तमिति संबंधः ॥ ४७ ॥ स्वस्थितेः भालक्याः सका

नृपोथ गुरुबंधुं तं ज्ञात्वाऽत्यंतं मुदान्वितः ॥ उत्सुकोपि तमाश्लिष्टुं नास्पृशद्धि द्विजेतरः ॥ ४० ॥ नत्वैव दंडवद्भूयस्तिष्ठन्प्रांजलिरब्रवीत् ॥ साक्षान्मद्गुरुरेव त्वं नेदृश्यन्यत्र धीर्मम ॥ ४१ ॥ इत्युक्त्वा न्यवसत्स्वीयैस्तद्दिने तद्गृहे नृपः ॥ दूरात्पूजादिकं पश्यन् प्रसादं चाग्रहीन्निशि ॥ ४२ ॥ अथ प्रातः कृतावश्यं सह पत्न्या समातृकम् ॥ यानैस्तं स्वपुरीं निन्ये पूजोपकरणैः परैः ॥ ॥ ४३ ॥ गणेशदीक्षितं वाद्यैर्नीत्वा पुर्यां वरे गृहे ॥ वासयामास सद्वासे सर्वसंग्रहसंकुले ॥ ४४ ॥ सपत्नीकः स्वयं राजा नित्यमेत्य गुरुं नमन् ॥ न्यूनं समीक्ष्य तद्दूतैरानयत्येव स द्रुतम् ॥ ४५ ॥ विद्वांसोप्यात्मतां ज्ञातुं नित्यमायांति तद्गृहम् ॥ उपासकाश्च मंत्राप्त्यै पुत्राद्याप्त्यै तदिच्छवः ॥ ४६ ॥ भालक्यामित्युमापत्यसौख्यस्तस्थौ स पूर्ववत् ॥ अथाशृणोद्गणेशाख्यः कावेरीतीरतोखिलैः ॥ ४७ ॥ गुरुं प्राप्तं स्थितं षड्भिर्योजनैः स्वस्थितेरपाक् ॥ तं दिदृक्षुरुषस्येवोत्थाय स्नात्वांघ्रितो ययौ ॥ ४८ ॥ गुर्वंघ्रिस्मृत्यहःकर्मा यामशेषदिने गुरुम् ॥ स्वाभिन्नेष्टार्चनांतेंतेवासिभिस्तत्त्वशोधकैः ॥ ४९ ॥ सहात्मत्वप्रकाशार्यमैक्षद्गुरुमुमासुतः ॥ दंडवत्प्रणमन्भूयस्तिष्ठन् प्रांजलिरुत्कचः ॥ ५० ॥ गद्गदार्णोऽब्रवीत्काश्यादीतिमें त्वत्पदेक्षणात् ॥ गुरुणा पृष्टकुशलः क्रमादुक्त्वा प्रणम्य सः ॥ ५१ ॥

शात् अपाक् दक्षिणे षड्भिर्योजनैरंतरितदेशे स्थितमिति यावत् । पूर्वार्द्धे पूर्वान्वयि । अंघ्रितः पादाभ्यां ययौ । गुरोर्दर्शनार्थं पादचारिणा गंतव्यमित्यर्थः ॥ ४८ ॥ गुरुचरणस्मृतिरेवाहःकर्म आह्निकं यस्य सः प्रहरावशिष्टं दिनं यस्मिन् तस्मिन्काले । आत्माभिन्नस्य इष्टदेवतस्यार्चनावसाने यथावित्यनुवृत्तिः । तत्त्वशोधनकर्तृभिः शिष्यैः सहेति परेण संबंधः ॥ ४९ ॥ आत्मत्वप्रकाशेन आर्यं श्रेष्ठं उत्कृष्टम् । उत्तरार्द्धमुत्तरान्वयि ॥ ५० ॥ युष्मच्चरणदर्शनेन

मम काश्यादिका ईतिर्यात्रा जातेति शेषः । "प्रचारस्यंदयोरीतिरीतिर्डिंवप्रवासयोः" इत्यमरः । उत्तरार्द्धमुत्तरान्वयि ॥ ५१ ॥ ५२ ॥ ५३ ॥ ॥ ५४ ॥ ५५ ॥ गुरोर्दर्शनात्सर्वफलप्राप्तिं दर्शयन्नाह स्नानेति । गंगातीरे स्नानाद्याह्निकाचरणेन गंगा अर्चनादिकात् देवता च चिरकालेनाल्पमेव सुखं अर्पयति श्रीगुरुस्तु दर्शनमात्रेणाक्षयं सुखं दत्ते । यथोक्तम् । "नह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनंत्युरुकालेन दर्शनादेव साधवः" इति । तस्मात्सर्वाह्निकफलप्रदं गुरुदर्शनं जातमित्यर्थः ॥ ५६ ॥ मक्षिकया सह भोजनं यथा वृथा भवति तथाऽश्रद्धया मंत्रदीक्षा वृथा भवति । तदुक्तं

साध्वीमाध्वीमातरौ च प्रसादं जगृहे गुरोः ॥ गुरुः स्वाङ्केथोपवेश्योमापत्यानंदमब्रवीत् ॥ ५२ ॥ उपलक्ष्यानिशीथं ते भयाह्निकमु रु श्रुतम् ॥ तत्कृत्वा त्वं त्रिभिर्यामैः प्रातः षड्योजनं कथम् ॥ ५३ ॥ एतावन्त्योऽह्नोभ्यां च याति वा नेति संशयः ॥ अथोमापत्य सौख्यः श्रीगुरुं प्राहेति सांजलिः ॥५४॥ कर्तव्यं चाह्निकं तावद्यावच्छ्रीगुरुदर्शनम् ॥ गुरोर्दीक्षासंभवे तत्किं भिक्षेत्राभमंत्रणादरे ॥ ५५ ॥ स्नानमुख्याह्निकाद्गंगाऽर्चनाद्याद्देवता चिरात् ॥ सुखमण्वेव दत्ते श्रीगुरुस्त्वीक्षणतोऽक्षयम् ॥ ५६ ॥ श्रुत्वागतं गुरुं दूराद्गंतुं शक्तोपि न व्रजेत् ॥ तस्य दीक्षा मुधाऽभक्त्या भुक्तं मक्षिकया यथा ॥ ५७ ॥ नित्यं नैकपुरस्थं तं व्रजेन्नैकगृहस्थितात् ॥ प्राक् भुंक्ते सोपि तादृक् स्यादित्युक्तं बहुधागमे ॥ ५८ ॥ तस्माद्गुरोः परं तत्त्वं नास्त्येवेति विनिर्णयः ॥ सर्वदेवस्वरूपो यः सर्वोर्ध्वे कथितः स्थितः ॥ ॥ ५९ ॥ सर्वशक्तिर्हि जीवानां मुक्तये मानवाकृतिः ॥ मन्यते प्राकृतं तं योऽदर्शनीयः स दुर्भगः ॥ ६० ॥

भगवता । "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इति ॥ ५७ ॥ किं च एकपुरस्थितं गुरुं यः नित्यं न व्रजेत् । दर्शनार्थमिति शेषः । च पुनरेकगृहे स्थितात् गुरोः पूर्वं भुंक्ते । गुरुभोजनात्पूर्वं भोजनं यः करोति । सः तादृक् वृथादीक्षावानि त्यर्थः । इत्यादि आगमे बहुधा उक्तमस्ति ॥ ५८ ॥ यस्मादेवं गुरोर्माहात्म्यं तस्मात्सर्वोर्ध्वे यत्कथितं तत्त्वं तत्र स्थितः ॥ ५९ ॥ सर्वशक्तिर्ही

गुरुर्जीवानां मुक्तिप्राप्त्यर्थं मानवाकृतिर्भवति । तं गुरुं प्राकृतं इतरसदृशं यो मन्यते । स दुर्भाग्योऽदर्शनीयः दर्शनानर्होऽस्ति ॥ ६० ॥ किं च गुरौ श्रद्धारहित तस्य संग एव त्याज्य इत्याह तत्संगादिति । कौलटात् कुलटासंगेन पतिव्रतात्वमिव तस्य संगेन पुण्यं ह्रसते लयं याति । तस्मात् आह्निकश्रद्धापेक्षया गुरौ श्रद्धा गरीयसीत्यर्थः ॥ ६१ ॥ पूर्वार्द्धं पूर्वान्वितम् ॥ ६२ ॥ तत्रेति परान्वयि ॥ ६३ ॥ मया श्रुतमस्ति तत्पुस्तकम् । तस्मै ब्राह्मणाय बहुधा चितम् । अथापि स तत न ददौ ॥ ६४ ॥ ननु कोसौ ब्राह्मणो यस्मात्त्वया पुस्तकं याचितमस्तीत्यत आह नाम्नेति। पूर्वजैरुपादितानि पुस्तकानि यस्य

तत्संगाद्ध्रसते पुण्यं सतीत्वं कौलटादिव ॥ प्रशंसंतं गुरोरित्थं माहात्म्यं तं शशंसिरे ॥ ६१ ॥ दिग्वाकराङ्गो रायशिष्याः सुज्ञाः परेऽपि च ॥ श्रीगुरोः सन्निधौ तस्थावुमापत्यो दिनत्रयम् ॥ ६२ ॥ तमथाह गुरुश्चेत्थं पुराहं पृथिवीं भ्रमन् ॥ गतः कल्याणनगरं तत्र ब्राह्मणमंदिरे ॥ ६३ ॥ वामकेश्वरतंत्रस्य दुर्लभस्यापि पुस्तकम् ॥ श्रुतमस्तीति तत्तस्मै याचितं बहु नो ददौ ॥६४॥ नाम्ना यज्ञेश्वरः श्रौती पूर्वोपादितपुस्तकः ॥ स्वयं नो वेत्ति किंचिच्च तथाप्यत्यंतगर्वितः ॥ ६५ ॥ तस्मात्केनाप्युपायेन निःशेषमानीयतां हि तत् ॥ दुर्वायी वासनां पूर्णां करिष्यति. स मे प्रियः ॥ ६६ ॥ श्रीदेशिकेंद्र उवाच ॥ उमापत्यस्तुखोपीत्यं श्रुत्वा प्रांजलिरब्रवीत् ॥ किमलभ्यं गुरोराज्ञां कर्तुः शिष्यवरस्य हि ॥ ६७ ॥ श्वेतांबरस्य शिष्यः प्राक् देवदासस्तु देवतः ॥ गुरोः सेवोपयोग्यं यल्लेभे किं मानवादिह ॥ ६८ ॥ गुरुमुक्त्वेति नत्वास्मादह्नोंत्यांशे स निर्ययौ ॥ दशक्रोशस्थितं खेटं सायं प्रातश्च चागमत् ॥ ६९ ॥ कुलकर्णिगृहद्वारदेहल्यामथ गेहपौ ॥ नमोस्मै दंपती कृत्वा ददतुश्चोपभोजनम् ॥ ७० ॥ भुक्त्वाऽस्वपच्चास्तरणे गजेशो दंपतीरिते ॥ निशीथेथ यमी कश्चित्पिशाचोऽतर्गमाक्षमः ॥ ७१ ॥

॥ ६५ ॥ तस्मात्सकाशात तत् तंत्रपुस्तकं आनीयतां त्वयेति शेषः ॥६६॥६७॥ प्राक् इति । प्राक् पूर्वार्द्धे कथितमित्यर्थः । इह भवत्सेवायाम् । देशादपि पुस्तकं लभ्यते । किं मनुष्यमात्राल्लभ्यत इति तस्मादहरानयिष्याम्येवेत्यर्थः ॥ ६८ ॥ अह्नः अंत्यांशे सार्द्धप्रहरसमये निर्ययौ । अत्र खेटके कुलकर्णिगृहे द्वारदेहल्यामवसदिति संबंधः ॥ ६९ ॥ उपभोजनं दुग्धपाचितादिभोजनम् ॥ ७० ॥ अंतर्गमनेऽसमर्थोऽभवत् । उमापत्यावंतःस्थेते

त्यर्थः ॥ ७१ ॥ ७२ ॥ सिद्धमंत्रोयं श्वः न तिष्ठति न स्थास्यति । किं तु गमिष्यति । तदा तस्मिन् गते सति मत्सामर्थ्यं दृश्यतां युवाभ्यामिति शेषः ॥ ७३ ॥ अमू दंपती अहं यत्र स्थितस्तदिदं स्थलं नित्यनिवासिनस्तस्य स्थलमस्ति किं ॥ ७४ ॥ यदि तस्येदं स्थलं तर्हि गच्छ पुनरहं नागच्छामि । ततोऽत्र स्वस्थले स तिष्ठतु । उत्तरार्द्धमुत्तरान्वयि । स्वीयं स्वकीयं वस्त्रपात्रादि गृहीत्वा गच्छंतं तमुमापत्यानंदम् । तौ दंपती ॥ ७५ ॥ ७६ ॥

बहिः स्थित्वा दंपती तावित्थमुच्चैरुवाच सः ॥ युवाभ्यां सिद्धमंत्रोंऽतमामुच्चाटयितुं श्रितः ॥ ७२ ॥ सोयं तिष्ठति नेत्रास्मिन् गते मद्बल मीक्ष्यताम् ॥ श्रुत्वापीत्थं पिशाचोक्तं नोचतुस्तौ भयादणु ॥ ७३ ॥ उमापत्यसुखश्चामू प्राह कोसौ गृहाद्बहिः ॥ ऊर्ध्वं स्थितो किं तस्य हीदं नित्यस्थितेः स्थलम् ॥ ७४ ॥ सद्य एव बहिर्यास्ये स्वस्थले सोत्र तिष्ठतु ॥ इत्युक्त्वा स्वीयमादाय गच्छंतं तं विलोक्य तौ ॥ ७५ ॥ तत्पादयोः पतित्वामुं प्रोचतुर्भयविह्वलौ ॥ दंपती ऊचतुः ॥ कुलक्षयकरोस्माकं पिशाचोयं हि निर्दयः ॥ ७६ ॥ आवामेवायुषो दार्ढ्याज्जीवंतौ विंशतिष्विह ॥ नौ च पीडां करोत्येष रात्रावेत्य दिनेदिने ॥ ७७ ॥ कदाचित्तद्वशेऽनः संगो न भवत्यस्य चार्तिभिः ॥ कथं वृत्तिमतोरग्रे वंशवृद्धिर्भविष्यति ॥ ७८ ॥ जीविताशैव नावाभ्यां धार्यतेऽदोभयान्निशि ॥ दिवा चेत्क्रियते निद्रा स्वप्नेऽयं दृश्यते भयात् ॥ ७९ ॥ निश्यावाभ्यां विना कश्चिन्नास्माद्भीत्याऽत्र तिष्ठति ॥ मांत्रिकाश्चामुनानेकाः कूपादावुज्झिता इतः ॥ ८० ॥ सिद्धमंत्रो भवान्ह्येष त्वद्भीत्याऽऽयाति नांतरे ॥ गते त्वय्यधुनैवायं भक्षयत्येव नौ खलु ॥ ८१ ॥ यंत्रमंत्रैरमुं पूर्वमुच्चाट्य ततः कुरु ॥ कीलनं द्वारि तद्वौ च बध्यतेयं दृढं यथा ॥ ८२ ॥ श्रीदेशिकेंद्र उवाच ॥ दंपत्युक्तमिति श्रुत्वाऽब्रवीत्ताविति सद्गुरुः ॥ यंत्रं मंत्रं न जानेहं विना श्रीगुरुपादुके ॥ ८३ ॥

इह गृहे विंशतिपुरुषेषु सत्सु आवामेवायुषो दार्ढ्येन जीवंतौ जीवतस्तौ जीवंतौ । प्राप्तजीवनावित्यर्थः ॥ ७७ ॥ ७८ ॥ अदोभयात् अमुष्माद्भयेन ॥ ७९ ॥ इतः स्थानात् ॥ ८० ॥ ८१ ॥ तद्वौ तत्स्थितिवृक्षेऽयं यथा दृढं बध्यते तथा द्वारदेशे लोहादिना कीलनं कुरु ॥ ८२ ॥ श्रीपुरुषाभ्यामुक्तम् ॥ ८३ ॥

तन्मंत्रात्पादुकामंत्रेण । तत् द्वारं ईक्षितुं न समर्थः । पिशाच इति शेषः ॥ ८४ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ८५ ॥ गणेशाख्योहं भालकी स्थितः मम गुरुर्भासुरानंदः एतौ द्वौ युवाभ्यां स्मर्तव्यौ । युवाभ्यामित्युभयान्वयि । युवाभ्यां पिशाचः पुनर्नावलोक्यते हि । स्मर्तव्यावित्यनेन गुरुपादुकामंत्रस्तयोरुपदिष्ट इति ज्ञेयम् । द्वारिचेति चकाराद्विभूतिं लापितवान् । अस्माद्गृहात् निशीथेपि स निर्ययाविति संबंधः ॥ ८६ ॥ निर्गतमित्याद्युत्तरान्व

तन्मंत्रान्मंत्रितं भस्म सदेदं निकटेस्तु वाम् ॥ द्वारोर्ध्वे मर्दयेहं च तन्नेक्षितुमपि क्षमः ॥ ८४ ॥ यास्यत्येष कुतोर्थांतर्भयं नाम्नाद्वि वामणु ॥ भालकीस्थो गणेशोहं मद्गुरुर्भासुराभिधः ॥ ८५ ॥ स्मर्तव्यौ द्वौ युवाभ्यां नो पिशाचो वीक्ष्यते पुनः ॥ इत्युक्त्वाऽऽभ्यां ददौ भूतिं द्वारि चास्मात्स निर्ययौ ॥ ८६ ॥ निशीथेप्यथ तौ गेहे तद्विश्वासान्मुदासतः ॥ निर्गतं तं बहिर्दृष्ट्वा पिशाचो ज्वलदग्निभम् ॥ ८७ ॥ द्वारं च तादृशं भूत्या चोभयं द्रष्टुमक्षमः ॥ सोपलायद्गणेशोथ भालकीमार्गतो ययौ ॥ ८८ ॥ मेने पिशाचो मत्पृष्ठे लग्नो हंतुं हि मामयम् ॥ नात्र स्थास्ये च नायास्येऽमुं देशं मम नाशकम् ॥ ८९ ॥ निश्चित्येति द्रुतं तस्माद्ययौ देशांतरं ययौ ॥ उभावप्यसुखश्चागादुषस्येव निजं गृहम् ॥ ९० ॥ स्नात्वाह्निकमथो चक्रे चानिशीथं यथोदितम् ॥ पुस्तकं गुरुणोद्दिष्टं लिखितुं पत्रसंचयम् ॥ ९१ ॥ सुकज्जलोरुपात्रं च पूजोपकरणादिके ॥ बध्वाच्छात्र गृहीत्वागात् कल्याणे दीक्षितालयम् ॥ ९२ ॥ तमित्याहाथ कल्याण्याः पूजनं क्रियते मया ॥ सप्ताहमिह तद्भक्तः कल्याणाप्त्यै रहःस्थले ॥ ९३ ॥ उवाचाथो दीक्षितोपि दृष्ट्वा तेजस्विनं च तम् ॥ कुरु मद्वसदने तत्साहित्यं मयार्प्यते ॥ ९४ ॥

यि ॥ ८७ ॥ भूत्या विभूतिलेपनेन द्वारं च तादृशं ज्वलदग्निसदृशम् । उभयं गणेशं द्वारं च द्रष्टुमसमर्थः सन् अपलायत ॥ ८८ ॥ अयं सिद्धः । अत्र वृक्षेऽहं न स्थास्ये च पुनः मम नाशकरममुं देशं च नायास्ये । देशांतरं गच्छामीत्यर्थः ॥ ८९ ॥ ९० ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ९१ ॥ ९२ ॥ कल्याण्याः देव्याः इह त्वद्गृहे ॥ ९३ ॥ तत्साहित्यं पूजाद्रव्यम् ॥ ९४ ॥

॥ ९५ ॥ रात्रावित्यादि परान्वयि ॥ ९६ ॥ इष्टस्य वामकेश्वरतंत्रस्य पुस्तकम् ॥ ९७ ॥ कज्जलात् कज्जलरसेन । यावच्च उपः उपःकाल यावत्पर्यंतं लिलेख ॥ ९८ ॥ ९९ ॥ स पुस्तकं उपःकालावधीति पूर्वान्वितम् । स इत्युभयान्वयि ॥ १०० ॥ तस्मात् नगरात् ॥ १ ॥ २ ॥

तथेत्युक्त्वा गणेशोथ स्नात्वा चक्रेह्निकक्रियाः ॥ नैवेद्यार्थं पायसान्नं दीक्षितोऽस्थापयन्निजैः ॥ ९५ ॥ सुषुपुर्गृहगाः सर्वे रात्रावेक उमासुतः ॥ कृत्वार्चनं झटित्येव भुक्त्वा नैवेद्यमेव सः ॥ ९६ ॥ श्रीगुरोः पादुके स्मृत्वाऽपश्यतत्र बहून्यथ ॥ पुस्तकानि विचिन्वंश्च लेभे तत्रेष्टपुस्तकम् ॥ ९७ ॥ संतुष्टोथ लिलेखासौ सिद्धपत्रेषु कज्जलात् ॥ यावच्चोपस्ततः स्नात्वाऽऽह्निकं चक्रे सुजागृतः ॥ ९८ ॥ उषसो निद्रपूर्वयामावधि चक्रेखिलाः क्रियाः ॥ निद्रितेषु ग्रहस्थेषु भुक्त्वा नैवेद्यमालिखत ॥ ९९ ॥ स पुस्तकमुपःकालावधीत्थं सप्तभिर्दिनैः ॥ संपूर्णं यत्नतश्चक्रे निद्रां जित्वांबिकासुतः ॥ १०० ॥ अष्टमेह्नि तमामंत्र्य प्रातस्तस्मात्स निर्ययौ ॥ न ज्ञातं दीक्षितेनैषत्तस्य पुस्तकलेखनम् ॥ १ ॥ यथास्थितानि चापश्यत्पुस्तकानि स दीक्षितः ॥ विचिन्वन्स गुरुं प्राप्तो गणेशो रजनीमुखे ॥ २ ॥ प्राक्तोऽन्यपुरगं नत्वा निधायाग्रे च पुस्तकम् ॥ तिष्ठन्प्रांजलिराहेदं यदाज्ञप्तं हि तद्गुरो ॥ ३ ॥ वीक्ष्याग्रे पुस्तकं तं च श्रुत्वोक्तं तेन देशिकः ॥ स्वयमादाय मुक्त्वा तद्वामकेश्वरतंत्रकम् ॥ ४ ॥ स्वर्णं शुद्धं सुपत्रं च ज्ञात्वोत्थाय स्वयं मुदा ॥ धृत्वा लिलिंग हस्ताभ्यां गणेशं लब्धपुस्तकम् ॥५॥ प्राप्तसंजीविनीमंत्रं वाक्पतिः स्वसुतं यथा ॥ संस्थाप्यांकेऽपृच्छदमुं गुरुर्लब्धमिदं कथम् ॥ ६ ॥ अथाब्रवीत्क्रमावृत्तं गणेशो गुरवेखिलम् ॥ श्रुत्वा गुरुस्तमाहेति कष्टं त्वं सप्तभिर्दिनैः ॥ ७ ॥

प्राक्तः पूर्वस्थानादन्यपुरगतमिति पूर्वान्वयि । हे गुरो यद्भवताज्ञप्तं तदेतद्वामकेश्वरतंत्रपुस्तकम् । मयाऽऽनीतमिति शेषः ॥ ३ ॥ वीक्ष्येति द्वयोरन्वयः । तं च गणेशं दृष्ट्वा ॥ ४ ॥ स्वर्णं उत्तमवर्णयुक्तम् ॥ ५ ॥ ६ ॥ कष्टमिति परान्वितम् ॥ ७ ॥

[illegible] दिने प्राप्तोसीति च संबंधः ॥ ८ ॥ ९ ॥ १० ॥ नर्तकस्याश्रयेण यथा काष्ठपुत्रिकाणां कष्टं न भवति । यथा वा फूत्कर्तुर्वाद कस्य संबंधिनो आस्यवातात् मुखवाताश्रयेण भेर्याः कष्टं न भवति । तथा श्रीचरणाश्रयेण ममाल्पमपि कष्टं नास्तीत्यर्थः ॥ ११ ॥ तस्य वामकेश्वर तंत्रस्य । यया टीकया । अल्पाः अल्पबुद्धयः । अस्य तंत्रस्य पारं अर्थसाकल्यं प्रतियांति प्राप्नुवंति । यथा श्रीरामकृतसेतुना वानराः समुद्रस्य पारं प्राप्तास्तथेत्यर्थः ॥ १२ ॥ इति श्रुत्वा गुरुस्तस्मै वरं ददाति । ददाविति । ते तव विद्यावंशे जन्मवंशे च सुविद्याः उत्तमविद्यावंतो ममाशीर्वादेन भवंतु ।

प्राप्तोसि निशि जागृत्याऽत्यल्पभुक्त्याप्यथाष्टमे ॥ दिने श्रोतुं च ते कष्टं नान्यः शक्तः करोति कः ॥ ८ ॥ इतोतिदूरं कल्याणं ततः प्राप्तोऽत्र निर्मुखेऽत्यक्तपानाशनोथाभूस्तिष्ठ भुंक्ष्व यथारुचि ॥९॥ श्रीदेशिकेंद्र उवाच ॥ दीर्घाह्निको निशम्येत्थं गुरोराज्ञां कृताञ्जलिः ॥ पादुका एव जग्वा श्रीगुरोश्चासीत्प्रसादभुक् ॥ १० ॥ अथो गणेशो गुरुमित्युवाच तवाश्रयान्नैव ममाणु कष्टम् ॥ स्यान्नर्तकस्येव हि पुत्रिकाणां भेर्याश्च फूत्कर्तुरिवास्यवातात् ॥ ११ ॥ ततो गुरुस्तस्य चकार टीकां सुदुर्गमस्यापि च सेतुसंज्ञाम् ॥ पारं ययाल्पाः प्रति यांति चास्याऽब्धेर्वानराः श्रीपतीसेतुनेव ॥ १२ ॥ ददावुमापत्यसुखाय तुष्टो गुरुर्वरं चेत्थमतः सुविद्याः ॥ भवंतु विद्याजनिजान्वये ते ममाशिषा पुस्तकलब्धितुष्टेः ॥ १३ ॥ धरावतीर्णस्य शिवस्य साक्षाद्गुरोर्हि सेवार्थमभूद्गणेशः ॥ उदष्टत्रिंशद्द्विशतातमंख्यं गुरुं ह्युमा पत्यसुखं नताःस्मः ॥ १४ ॥ श्रुत्वाह्निकं दंपतिभूतबाधानाशं वराप्तिं च गुरोः सुभक्त्या ॥ पठेदुमापत्यसुखस्य योस्य न भूतबाधा न च मूर्खपुत्रः ॥ ११५ ॥ इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे उमापत्यनाथचरित्रवर्णनं नाम पंचचत्वारिंशः सर्गः ॥ ४५ ॥

किंभूतस्य मम पुस्तकलब्ध्या तुष्टिर्यस्य ॥ १३ ॥ देशिकेंद्रोक्तिः । अष्टत्रिंशाधिकद्विशतसंख्यमुमापत्यानंदं प्रणमति । धरावतीर्णस्येति । गुरोर्भास्करस्य । अभूत् अवतीर्णोऽभवत् ॥ १४ ॥ सर्गोक्तकथाश्रवणादिफलमाह । श्रुत्वेति । गुरोरुमापत्यानंदस्य आह्निकं दंपत्योः भूतबाधाविनाशं च भक्त्या यः श्रुत्वा पठेत् । अस्य श्रवणादिकर्तुर्भूतबाधा न भवति । मूर्खपुत्रश्च न भवति । किं तु भूतबाधारहितो विद्वत्पुत्रश्च भविष्यतीत्यर्थः ॥ ११५ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्यभिधायां पंचचत्वारिंशः सर्गः ॥ ४५ ॥

उत्पट्चत्वारिंश उत्रिंशच्छतकपयतः । विनायकजनिंदेवाकरी चोक्तार्यता गुरोः ॥ ४६ ॥ अथोमापत्यानंदस्य पुत्रोत्पत्तिमाह ...
अस्योमापत्यानंदस्य द्वौ तनयौ बभूवतुः । अत्रानयोराद्यं ज्येष्ठं पुत्रं बहुपुण्यैर्हेतुभूतैः कुलवतः कुलीनाज्जनिर्जन्म यस्य तं ज्ञात्वा भालस्थलिप्या ...
च नाम्ना भालचंद्रं चकार । यतः सुज्ञः ज्ञानवान् । भालचंद्रशब्दस्य गणेशवाचित्वात एतत्कुलप्रसूतानां गणेशनामकरणे पूर्वं गिद्धक्रमप्रवृत्तेश्च ...
नाम कृतमित्यर्थः ॥ १ ॥ यस्य षोडशांशो विश्वपालनकर्ता वैकुंठवासी विष्णुः पुराणे देवीभागवते उक्तोस्ति । व्यासेनेति शेषः । आदिकृष्णो ...

श्रीदेशिकेंद्र उवाच ॥ बभूवतुर्द्वौ तनयावथास्याग्रयथाद्यमूचेऽत्र स भालचंद्रम् ॥ ज्ञात्वातिपुण्यैः कुलजन्मानं तं भालस्थलिप्येंदुमना च सुज्ञः ॥ १ ॥ विष्णुश्च विश्वस्थितिकृत्पुराणे यस्योदितः षोडशकोंश एव ॥ गोलोकसंस्थः स किलादिकृष्णस्तस्यांश इष्टोऽस्त्यनुतोस्य साक्षात् ॥ २ ॥ श्रीमयूरेश्वर उवाच ॥ कुत्रास्ति गोलोक इहादिकृष्णः कोथांश एतस्य सखा क एतत ॥ क्रमेण मत्तं कथनीयमाद्यं कथानकं वेद्मि यथाहमल्पः ॥ ३ ॥ श्रीदेशिकेंद्र उवाच ॥ गोलोक ऊर्ध्वं निखिलेभ्य एकः स्वतःस्थितिः कृष्णपदाश्रयेण ॥ जगंत्यनेकानि च यांति सर्गं स्थितिं लयं यत्परितोऽक्षयः सः ॥ ४ ॥ तत्रादिकृष्णो जगतां बहूनां बीजं हि सर्गस्थितिनाशभाजाम् ॥ चैतन्यशक्तिः कथितास्य दुर्गा या निर्गुणस्यादिकला स्वतंत्रा ॥ ५ ॥

कस्थितोस्ति । तस्यादिकृष्णस्य इष्टः सखा अंशश्च यः सुदामाख्यः साक्षात्स एवास्योमापत्यानंदस्यान्यसुतः द्वितीयपुत्रोऽभवत् ॥ २ ॥ आद्यं प्राचीनं कथानकं भवद्भिः कथनीयम् ॥ ३ ॥ देवीभागवतस्थां प्राचीनकथामाह गोलोक इत्यादिना । निखिलेभ्यः सर्वलोकेभ्य ऊर्ध्वं एकः मुख्यः श्रीकृष्णचरणाश्रयेण स्वतः अन्यनिरपेक्षा स्थितिर्यस्य । यस्य परितः अनेकानि जगंति ब्रह्मांडानि उत्पत्तिं लयं चायांति । स तु गोलोकोऽक्षयोस्ति । अक्षय-त्वादित्यर्थः ॥ ४ ॥ बीजं आदिकारणम् । निर्गुणस्यास्यादिकृष्णस्य चैतन्यशक्तिर्दुर्गाख्यास्ति । या आदिकला यतः स्वतंत्रा जगज्जन्मादिष्वन्यनिरपेक्षा ॥ ५ ॥

निर्धर्मब्रह्मणः सकाशात् दुर्गाकृष्णाख्यौ धर्मौ समकालं प्रादुर्भूतौ । तस्मादेकधर्मत्वाद्दुर्गा कृष्णस्य भगिनी भवति । तेन कृष्णेन स्मृता सती प्रादुर्भवति । यतः इंगितज्ञा कृष्णचेष्टितज्ञानवती । तस्माच्चैतन्याविर्भावतिरोभावे स्वतंत्रशक्तिमान्कृष्ण इत्यर्थः ॥ ६ ॥ कृष्णस्य प्राणशक्तिः राधा प्रख्याताऽस्ति । या कृष्णस्यार्धांगाश्रिता लक्ष्म्यादिशक्तीनां बीजरूपा । सा बहुयुगैः पत्युः कृष्णाद्गर्भं दधार । ततोऽसौ राधा तेजस्विनं तं गर्भं प्रलयोदके त्यक्तवती ॥ ७ ॥ अस्माद्गर्भाच्चतुर्भुजो बालको बभूव । सोऽतितेजस्वी बहुयुगैर्ववृधे । तस्य नाभिकमलात् ब्रह्माभवत् । स पितुर्विष्णोराज्ञया सृष्टिं चकार ॥ ८ ॥ स्वकेल्यै

अधर्मिणो ब्रह्मण एव दुर्गाकृष्णौ हि धर्मौ सममाविरास्ताम् ॥ कृष्णस्य तस्माद्भगिनी हि दुर्गा तेन स्मृताविर्भवतींगितज्ञा ॥ ६ ॥
कृष्णस्य राधा प्रथिताऽसुशक्तिर्याधींगिनी श्रीमुखशक्तिबीजा ॥ गर्भं दधौ पत्युरसौ युगैस्तं तत्याज कल्पांतजलेतिदीप्तम् ॥ ७ ॥
चतुर्भुजोऽस्माच्च बभूव डिंभोऽनेकैर्युगैः संववृधेऽतितेजाः नाभ्यंबुजात्तस्य बभूव धाताऽऽज्ञया पितुः सोऽथ चकार सृष्टिम् ॥ ८ ॥
कृष्णोऽपि गोलोकगतो निजांशैर्गोपान्समाविष्कृतवान्स्वकेल्यै ॥ लक्ष्म्यादिशक्तीश्च तथैव राधा गोपीः पशूः कामदुघादिधेनूः ॥९॥
मुख्यांश एकोऽखिलगोपवृंदेऽतर्ज्ञश्च कृष्णस्य सखा सुदामा ॥ गोपाल एतेन विना न कृष्णः क्वापि क्षणं तिष्ठति सर्वगोऽपि ॥ १० ॥
स राधया कार्यवशात्कदाचिच्छप्तोऽधुनैवासुरतां व्रजेति ॥ श्रुत्वा सुदामाऽह हरिं वियोगं सोढुं तवाहं क्षणमप्यनीशः ॥ ११ ॥
कृष्णः सुदामानमथाब्रवीन्मे न ते वियोगोऽस्ति कदा कश्चिच्च ॥ जीवस्य वै वृत्तिमयस्य दूरमर्थस्थितःस्यान्मनसो यथा हि ॥ १२॥
राधोक्तमेतद्वचनं हि सत्यं कर्तुं भव त्वं भुवि शंखचूडः ॥ दैत्योऽपि जित्वाऽखिलदेववृंदं मन्वंतरं राज्यमुपेहि मां म ॥ १३ ॥

स्वस्य क्रीडार्थम् । उत्तरार्द्धे आविष्कृतवती ॥ ९ ॥ मुख्यांशः प्राणप्रियः अंतर्ज्ञः कृष्णस्य हृद्गतज्ञ आसीत् ॥ १० ॥ स सुदामाख्यो गोपालः । असुरतां दैत्यभावम् ॥ ११ ॥ यथा वृत्तिमयस्य जीवस्य दूरं यथास्यात्तथा विषयवृत्तेर्मनसश्च वियोगो नास्ति । तथा दूरस्थितस्य तव मम च वियोगो नास्ति ॥ १२ ॥ उपेहि प्राप्नुहि ॥ १३ ॥

अत्र लोके गोलोके ॥ १४ ॥ १५ ॥ ईशः शिवः ॥ १६ ॥ अष्टाविंशे द्वापरे । एषः सुदामा ॥ १७ ॥ आत्माग्रजगः प्राताग्रवर्षः अना: ...
हीनः पिशाचगत्या पिशाचचर्यया रुदंती पृष्ठगता च माता यस्य ॥ १८ ॥ रामकृष्णौ अमुना सुदामाख्येन कर्त्रा प्रेमाख्येन दाम्ना बद्धाविव ... ।
यत एवं ततः स सुदामाभवत् । यथोक्तं विष्णुभागवते । श्रीदामानाम गोपालो रामकेशवयोः सखेति । तत्रैव द्व्यशीतितमेध्याये श्रीधरस्वामिचरणाः श्री...

मान्वंतरो यो जगतोस्ति कालः क्षणेन तुल्यः स किलात्र लोके ॥ ततः सुखं तिष्ठ मया सखेऽत्र साकं त्वयाग्रेनतगिष्य उर्व्याम्
॥ १४ ॥ श्रीदेशिकेंद्र उवाच ॥ कृष्णाज्ञयेत्थं भुवि शंखचूडो भूत्वा सुदामा तुलसीं च पत्नीम् ॥ लक्ष्म्यंशजां प्राप्य चकार राज्यं
मन्वंतरं चैकपतिस्त्रिलोक्याः १५ ॥ ब्रह्मादिभिः प्रार्थित ईश एनं कष्टेन दैत्यं हतवान्हि वधैः ॥ चकार कापट्यवपुस्तु विष्णुः
पत्न्याश्च तस्य व्रतभंगमादौ ॥ १६ ॥ प्रातश्च गोलोकमथो सुदामा द्वापरकेऽप्यष्टकविंश उर्व्याम् ॥ कृष्णावतारस्तु बभूव पूर्णस्त्वदं
ज्जयिन्यां द्विज आस चैषः ॥ १७ ॥ बाल्येऽसहिष्णुः स तदापि कृष्णवियोगमाप्तापसमोह्यतातः ॥ श्रुत्वा व्रजस्थं तमगात्पिशाच
गत्या रुदत्पृष्ठगमातृकश्च ॥ १८ ॥ दृष्ट्वैव कृष्णं सुमतिः सुदामा प्रेम्णा स कृष्णश्च तमालिलिंग ॥ दाम्ना निबद्धाविव राम कृष्णौ
प्रेम्णाऽमुना स्तः स ततः सुदामा ॥ १९ ॥ स रामकृष्णप्रियकृच्च ताभ्यां चक्रेत्र केलीर्हि यथोर्ध्वलोके ॥ मात्रात्तभक्ष्यो धृतगोपवेषः कृष्णे
गतेऽस्माच्च गतोप्यवंतीम् ॥ २० ॥ कंसांतकृद्वंधुयुतोथ कृष्णो ययाववंतीस्थगुरुं तदासौ ॥ ताभ्यां चतुःषष्टिदिनैरधीतिं कृत्वाऽऽप विद्याश्च
कलाःसमस्ताः ॥ २१ ॥ तदैकदा प्रावृषि मातृवक्त्रादनिंधनत्वं सहसा निशम्य ॥ प्राप्ता वनं चेंधनभार गोपास्त्रयो निवर्त्यैव ययुः स्वसद्मम्
॥ २२ ॥ अस्तो रवेस्तावदभूत्तमोपि वृष्टिश्च मेघैरिति रुद्धमार्गाः ॥ तस्थुस्त्रयस्ते भुवि काष्ठभाराश्चार्द्रांशुकैः क्षुत्सहिता हिमार्ताः ॥ २३ ॥

मसुहृदे कृष्णः प्रकल्प्यैन्द्रपदं भुवि । नंदादिसुहृदानंदी कुरुक्षेत्रं जगाम स इति । सुदामसुहृद इत्यपि पाठः । तेन श्रीदामा सुदामा एक एव ॥ १९ ॥
ऊर्ध्वलोके गोलोके मातुः सकाशादात्तं भक्ष्यं येन । अस्मात् गोलोकात् । मथुरां प्रति कृष्णे गते सति । सोपि अवंतीनगरं गतः ॥ २० ॥ अवंतिस्थं
गुरुं सांदीपिनिं ताभ्यां रामकृष्णाभ्यां सहासौ सुदामा ॥ २१ ॥ अनिंधनत्वं इंधनाभावम् ॥ २२ ॥ भुवि स्थापितः काष्ठभारो यैस्ते ॥ २३ ॥

अत्र सुदामा अत्तुं भक्षणार्थं मात्रा दत्तान् वस्त्राग्रे बद्धान् मुष्टिमात्रपृथुकान् रामकृष्णौ वंचयित्वा चखाद भक्षितवान् । तदा कृष्णो यथा रहसि कृतं पापं सूर्यो वेत्ति तथेदं पृथुकभक्षणं ज्ञातवान् । यतः अखिलदृक् । सर्वसाक्षी ॥ २४ ॥ २५ ॥ गुरोः परं तत्त्वं श्रुतौ न चोक्तमस्ति । अतः अम रत्रन्येषु अमरेषु लोकेषु नृषु लोकेषु अन्येषु लोकेषु पातालादिषु आप्तजन्मा प्राप्तजन्मा इह गुरौ विधीः अहं श्रेष्ठो गुरुर्लघुरित्यादिविपरीतबुद्धिर्यः सः अनीक्ष्यः अदर्शनीयो हीति निश्चयेन । तथाहि ब्रह्मविद्ब्रह्मैव भवति । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः । इति श्रुतेः । नास्ति तत्त्वं गुरोः परमित्युक्तेश्च गुरोः परं तत्त्वं नास्ति । किं च गुरुं हुंकृत्य तुंकृत्य तथा निर्जित्य वादतः । श्मशाने जायते वृक्षः

चखाद सुष्टया पृथुकान्सुदामाऽत्तुं मातृदत्तान्वसनाग्रबद्धान् ॥ तौ वंचयित्वाऽत्र हि वेद कृष्णो रहोघमर्कोऽखिलदृग्यथेदम् ॥२४॥ प्रातर्गुरु र्नोमभिराह्वयंस्तान्पथा ययौ तावदरण्यलब्धान् ॥ शीर्षेधनान्पंकपदान्विलोक्यालिंग्याह कृष्णं न तवाहमेतत ॥ २५ ॥ प्राप्ताः स्थलं ते गुरुणाथ कृष्णो नत्वेति तं प्राह गुरोर्न तत्त्वम् ॥ परं श्रुतौ चोक्तमतोऽमरत्रन्येष्वाप्तजन्मेह विधीर्ह्यनीक्ष्यः ॥ २६ ॥ तमत्रवी त्कृष्णमथो गुरुश्च ब्रूपे त्वमित्थं जनसंग्रहाय ॥ हीशस्य किं तेऽखिलवित्प्रदस्याहं ज्ञानदो दीप इवोग्रकांतेः ॥ २७ ॥ तैर्ज्ञानयोगो तु गुरोर्हि लब्ध्वाभ्यस्तौ तयोः कृष्ण इहाप सम्यक् ॥ तौ मध्यमं हल्यपरो न तादृक् हीच्छाभवौ वर्द्धयितुं च कौ तौ ॥ २८ ॥

कंकगृध्रनिषेवितः । इति स्मृतौ च गुरोर्लघुत्वकरणे दोषश्रवणान्ममाप्यवश्यं सेव्यस्त्वमेवासीत्यर्थः ॥ २६ ॥ हि यतः सर्वेषां ज्ञानप्रदस्येशस्य तव तुभ्य मिति यावत् । उग्रकांतेः सूर्यस्य दीप इवाहं ज्ञानप्रदः किम् । न कथमपीत्यर्थः ॥ २७ ॥ तैः रामकृष्णसुदामभिः गुरोः सकाशाज्ज्ञानयोगौ लब्ध्वाऽभ्य स्तौ । तत्र स्थित्वा यत्नोभ्यास इति योगसूत्रोक्तक्रमेणाभ्यस्तौ । इह एषु कृष्णः सम्यक् प्राप्तवान् । हली रामः मध्यमं यथा तथा प्राप । परः सुदामा तादृक् रामकृष्णसदृशं न प्राप । हि यतः तौ ज्ञानयोगौ वर्द्धयितुं पृथिव्यां प्रकाशयितुं इच्छाभवौ स्वेच्छाजन्मानौ भवतः । भवतंत्रत्वात्तयोर्ज्ञानयोगप्राप्तिः ।

सुदामा तु न तादृशाधिकारवानतो न तस्य साकल्येन ज्ञानयोगप्राप्तिरिति भावः ॥ २८ ॥ मृतोपि आप्तः पुत्रो यस्यां तां आर्यां मुख्यां [illegible] गुरो
दत्त्वा तातं वसुदेवं प्रति सबंधुः कृष्णोऽगात् प्राप्तः । अथ इहावंत्यां स्वसखं कृष्णं सर्वगतं पश्यन् तस्थौ ॥ २९ ॥ आद्यात्मुख्यात् पैत्र्यात्पितृसंबं[illegible]
ताद्धनात् धनेन । माता च क्षयं प्राप ॥ ३० ॥ वंचनां पृथुकासमर्पणरूपां । नैस्व्यं निर्धनत्वं । हि यतः स्वकर्म विज्ञोपि फलं दत्ते । तथापि एभि[illegible]
निर्भिरंतः हृदि कर्म तत्फलं चासत्यं मिथ्यैवावलोक्यते ॥ ३१ ॥ जीर्णांशुका जीर्णवस्त्रधरा । सर्वेश्वरः कृष्णस्तव सखास्ति । हे ईश तं गत्वा [illegible]

मृताप्तपुत्रां गुरवेथ दत्त्वाऽऽर्यां दक्षिणां तातमगात्सबंधुः ॥ कृष्णोथ तस्थाविह वै सुदामाखिलस्थमीक्षन्स्वसखं निरीहः ॥२९॥ माता
करोत्तस्य विवाहमाद्यात्पैत्र्याद्धनात्सत्कुलकन्ययाथ ॥ पुत्रान् सुताः स्त्री सुषुवे सुदाम्नः कालात्क्षयं प्राप धनं च माता ॥ ३० ॥
प्राग्वंचनां यां स चकार कृष्णे तयाऽतुलं नैस्व्यमगात्सुदामा ॥ विज्ञोपि दत्ते हि फलं स्वकर्माऽसत्यं तथापीक्ष्यत एभिरंतः ॥ ३१ ॥
जीर्णांशुकाऽन्नांशुकपीडिताऽर्भां पतिव्रतेत्याह पतिं कदाचित ॥ कृष्णोखिलेट् तेस्ति सखा तमीशं गत्वाऽऽपदस्त्राहि शिशूंश्च मां
त्वम् ॥ ३२ ॥ श्रुत्वेति कृष्णेक्षणलालसोऽगात्तद्वारकास्थं यदुपं सुदामा ॥ पत्न्यान्यगेहात्पृथुकैकमुष्टिमादाय चोपायनमार्यतुष्ट्यै
॥ ३३ ॥ क्षामं जरद्वस्त्रमसुं द्विजत्वादरुद्धमंतोऽखिलविद्विदित्वा ॥ गत्वा स्वयं दोर्भिरथालिलिंग निन्ये तमंतर्गृहमस्वबंधुः ॥ ३४ ॥
संस्नापितस्तूर्यरवात्सुगंधैश्चालंकृतोप्यंशुकभूषणैः सः॥ संपूजितश्चंदनपुष्पमुख्यैः स्वाद्वन्नसंभोजित इंदिरेशा ॥३५॥ तांबूलभाजोऽऽस्त
रशायितस्यांऽघ्री द्वौ सुदाम्नोथ ममर्द कृष्णः ॥ तद्वारितोऽथावदतां हि गाथाः स्मितास्यरुक्मिण्यभिवीजितांगौ ॥ ३६ ॥

तत्याप्तधनेन त्वं मां शिशूंश्चापदो दुःखात्रक्ष ॥ ३२ ॥ सा चासौ द्वारका च तद्वारका तस्यां स्थितम् । पत्न्या आनीताम् । आर्यतुष्ट्यै कृष्णप्रीत्यै ॥
॥ ३३ ॥ क्षामं कृशांगं ब्राह्मणत्वादरुद्धं द्वारदेशे प्रतिबंधरहितम् । अंतः हृदि । अस्वाःनिस्वाः निर्धनाः बंधवः प्रिया यस्य सः निष्किंचनप्रिय इत्यर्थः
॥ ३४ ॥ तूर्यरवात् वाद्यघोषेण । पुष्पमुख्यैर्मालादिभिः । स्वाद्वन्नेन संभोजितः । इंदिरेशा श्रीपतिना कृष्णेन ॥ ३५ ॥ तांबूलं भजति सेवते तस्य ।

आस्तरे पर्यंकोपर्यास्तरणे शायितस्य सुदाम्नो द्वौ पादौ कृष्णो ममर्द । अथ कृष्णस्तद्वारितस्तेन निवारितोऽभवत् । अथ निवारणानंतरं स्मितयुक्तमास्यं मुखं यस्यास्तया रुक्मिण्याऽभिवीजिते व्यजनेन सेविते अंगे ययोस्तौ कृष्णसुदामानौ गाथाः नानाकथाः गुरुगेहनिवासाद्या अवदताम् ॥ ३६ ॥ वध्वार्पितं यत् पृथुकमुष्टिरूपमुपायनमल्पमपि महते ऐश्वर्यवते कृष्णाय पूर्वं लज्जयाऽददन्नपि कृष्णेनाकर्षितग्रंथिर्यदा तदा विप्रः कृष्णाय जरत्कंचुकवेष्ट नैवेद्यमुपायनं ददौ । कृष्णस्तत् स्वकरेण विमुच्य प्रीत्याऽत्ति । भक्षितवानित्यर्थः ॥ ३७ ॥ तत्कृष्णेन गृह्यमाणं पृथुकोपायनं रुक्मिण्यपि वेगेनाल्पं गृहीत्वा स्वमुखेऽत्यजत् । हि यतस्तयोर्भक्तार्पितं प्रीतिकरमासीत् । यथा बालवाक्यं स्वपित्रोः प्रीतिकरं भवति तद्वत् । अन्ये तु कृष्णोयं सर्वस्वं मां च

दद‍ौ वधूदत्तमुपायनं यत्कृष्णाय विप्रो महते ह्रियाल्पम् ॥ बद्धं जरत्कंचुकवेष्टनैस्तत्प्रीत्या विमुच्यात्ति करेण कृष्णः ॥ ३७ ॥ वेगाद्गृहीत्वाऽणु मुखेऽत्यजत्तद्रुक्मिण्यपि प्रीतिकरं तयोर्हि ॥ भक्तार्पितं बालवचः स्वपित्रोरिवाहुरन्येऽखिलदानभीत्या ॥३८॥ तुष्टो द्विजोपायनतोथ कृष्णो हैमं पुरं कर्तुमदोर्थमाज्ञाम् ॥ विश्वक्रियायाह स मानसेनानेकांडकर्त्रूदर ईशशक्तिः ॥ ३९ ॥ कृष्णः सुदामानमथेत्युवाच त्वमत्र चाभ्यस्तसुसांख्ययोगः ॥ योगो न पक्को भवसप्तकेन सुपक्वयोगस्त्यज कर्मसंगम् ॥ ४० ॥ अहं त्वजन्मापि तवैव सख्युः प्रियाय जन्मानि च तन्मितानि ॥ प्राप्स्येऽसहिष्णुः किल ते वियोगं यास्ये त्वयाऽथांत्यभवे स्वधाम ॥ ४१ ॥

दास्यतीति भयेन रुक्मिणी तद्गृहीत्वाऽभक्षयदित्याहुः ॥ ३८ ॥ अथ कृष्णो द्विजार्पितोपायनेन तुष्टः सन् अमुष्मै इत्यदोर्थं ब्राह्मणार्थं हेममयं नगरं कर्तुं विश्वक्रियाय विश्वकर्मणे आज्ञां मानसेन मनसा आह । ननु कथं स्वर्गस्थिताय विश्वकर्मणे आज्ञां कृतवानित्यत आह । अनेकांडकर्त्रूदरे इति । अनेकब्रह्मांडकर्तारः उदरे यस्य । अत एव ईशा शिक्षणसमर्था शक्तिर्यस्य सः । अनेकब्रह्मांडनायकत्वात्सर्वनियंतृत्वान्मनसैव हेमनगरं निर्मातुं विश्वकर्मणे प्रेरितवानित्यर्थः ॥ ३९ ॥ अत्र जन्मनि अभ्यस्तौ शोभनौ ज्ञानयोगौ येन सोसि यद्यपि । तथापि तव योगः पक्कः पूर्णतां प्राप्तो नास्ति । अतः जन्मसप्तकेन सप्तजन्मभिस्त्वं सुपक्वयोगः सन् कर्मसंगं त्यज ॥ ४० ॥ ननु तव वियोगजनकेन जन्मांतरग्रहणेन मम दुःखं स्यादित्यत आह । अहमिति ।

जन्मरहितोप्यहं तु सख्युस्तव प्रियार्थमेव सनजन्मानि प्राप्स्ये यतस्तव वियोगं असहिष्णुः । अर्थात्प्रजन्मनि त्वया सह स्वभाग याम्ये ॥ ४१ ॥ ननु त्वया सहेह जन्मनि योगेऽभस्ते सति पुनर्जन्मग्रहणेन योगाभ्यासस्य किं प्रयोजनमित्यत आह । भित्त्वेति । ये बहवो योगिनो ब्रह्मरंध्रं भित्त्वा परं पदं प्रयांति । ते पुनर्जन्मनि जन्मग्रहणे दक्षाः समर्थाः न भवंति । यस्तु अंगुष्ठभेत्ता योगी स जनिषु जन्मसु स्वतंत्रो भवति । यथाहं स्वतंत्रस्तथा मदनन्यो मद्रूप एव एषोंगुष्ठभेत्तापि स्वतंत्रो भवति । तथाहि । सर्वे योगिनो ये ब्रह्मरंध्रं भित्त्वा व्रजंति । ते तु अंगुष्ठाभेदेन क्रियाशक्तेरनुत्सर्जनात्तावतारग्रहणे दक्षाः । किं तु ज्ञानक्रियाशक्त्योर्ब्रह्मरंध्रांगुष्ठरंध्रद्वारा विसर्जनेनैवावतारग्रहणे दक्षत्वं नैकतरसाधनेन । किं च एतमेव सीमानं विदार्य प्राविशत् इति श्रुत्या ज्ञानशक्तेर्ब्रह्मरंध्रद्वारा प्रवेश उक्तस्तथा प्रपदाभ्यां प्राविशत इति श्रुत्या क्रियाशक्तेरंगुष्ठद्वारा प्रवेश उक्तस्तेन चोभयशक्तेर्विसर्जनमनुमीयते । तस्मादुभयद्वारा शक्तिद्व-

भित्त्वाजरंध्रं बहवः प्रयांति परं पुनर्जन्मनि ते न दक्षाः॥ अंगुष्ठभेत्ता जनिषु स्वतंत्रो यथाहमेषो मदनन्य एव॥४२॥रहस्यमेतत्क्वचिदेव नोक्तं कर्तुं न शक्यं हि मदन्यपुंभिः ॥ सखांतरंगोस्ति भवान्ममातस्त्वंतिसिद्धिंप्स्यस्युदितं भवैस्त्वम् ॥ ४३ ॥ स्वोपास्यचक्रेषु पृथक् स्वमिष्टं ध्यात्वा सुषुम्नेतिगतामृतं च ॥ समर्प्य तस्मै स्वयमापिबंतश्चानंदिनो यांति निजां सुसिद्धिम् ॥ ४४ ॥ त्वं त्वेक एवा खिलदेवतानां रहस्यबोधादखिलेष्टसिद्धिम् ॥ प्राप्स्यस्यथोऽत्ये पृथगिष्टभक्ता एष्यंति तां योगगतिं भवत्तः ॥ ४५ ॥

यविसर्जनकर्तैव पूर्णयोगी भवति । अतस्तदर्थं जन्मग्रहणं कुर्विति भावः ॥ ४२ ॥ क्वचित्कस्मैचिन्नोक्तम् । हि यतः मदन्यपुरुषैः कर्तुमशक्यमस्ति । यतो भवान्ममांतरंगः सखास्ति । अतस्त्वमुक्तजन्मभिस्तां सिद्धिं प्राप्स्यसि ॥ ४३ ॥ किं च स्वोपास्यचक्रेषु गणेशब्रह्मविष्णुजीवात्मपरमात्माधिष्ठितेषु मूलाधारादिचक्रेषु पृथक् पृथक् स्वकीयमिष्टदैवतं ध्यात्वा तस्मै सुषुम्नेतिगतं सुषुम्नामार्गगतममृतं च समर्प्य स्वयमापिबंतः संतः आनंदयुक्ताश्च भक्ताः ते स्वेष्टां सुसिद्धिं यांति । सार्वात्म्यसिद्धिं तु न प्राप्नुवंतीत्यर्थः ॥ ४४ ॥ त्वं तु एक एव सर्वदेवतानां रहस्यबोधेन सर्वदैवतेभ्योऽखिलेष्टसिद्धिं प्राप्स्यसि । अर्थात्ये जन्मनि इष्टभक्ता उपासकास्त्वत्तः सकाशाद्योगगतिं पृथक् एष्यंति प्राप्ता भविष्यंति । लोकोद्धारार्थं त्वया जन्म स्वीकर्तव्यमित्यर्थः ॥ ४५ ॥

अनीहः निरिच्छश्चासौ विप्रश्च सुदामा । उभयान्वयि ॥ ४६ ॥ स्थितेः स्वनिवासस्य पुरं प्राप्तः सन् इदं हैमं सुवर्णमयं वीक्ष्याह । अद्याहं मार्गं विस्मृत्य द्वारकां प्रत्यागतवानस्मि किं किल । हि यतस्तस्याः द्वारकायाः परं सौवर्णं नगरं पृथिव्यां नास्ति ॥ ४७ ॥ का किंनामका । एतन्नेरुक्तं निस्वस्य धनहीनस्यात्मनो विनोदं मेने । तावन्मंत्रिण एनं सुदामानं ययुः । नगरं नेतुमिति शेषः ॥ ४८ ॥ यानात् यानेन । तैः मंत्रिभिरिह नगरे इट् राजा कृतः । अपत्यैः पुत्रादिभिस्त्रिया च सह भोगान् बुभुजे । धातुमयो देवः अनीहः सन् अन्यार्पितभोगान्भुंक्ते । तथा निरीहो भोगभुक् चासीत् ॥४९॥

अनेकधा योगरहस्यमित्थं मित्राय चाहाखिलवित्स कृष्णः ॥ मासं स्थितो नैपदयाचदीशं चानीहविप्रोथ ततः श्रतस्थे ॥ ४६ ॥ स्थितेः पुरं प्राप्त इदं स हैमं वीक्ष्याह विस्मृत्य किलाद्य मार्गम् ॥ किं द्वारकामागतवानहं हि तस्याः परं हेमपुरं न चोर्व्याम् ॥ ४७ ॥ स चाध्वगान्पृच्छति का पुरीयं सुदामपूश्चेत्यखिलास्तमाहुः ॥ निस्वस्य मेनेथ विनोदमेतत्तावद्ययुर्मंत्रिण एनमग्रे ॥ ४८ ॥ भूषांशुकैः सत्कृत एष यानान्नीतो नृपस्थानमिहेट् कृतस्तैः ॥ भोगानपत्यैर्बुभुजे स्त्रिया चाऽनीहोऽन्यदत्तानिव धातुदेवः ॥ ४९ ॥ सोयं गणेशस्य सुतोंत्यजन्मन्यभूत्कुलेस्मिन्सति पक्कयोगः ॥ ज्ञाताखिलोपास्त्यनुभूततत्त्वः कृष्णोप्युदग्दिश्यभवद्विजन्मा ॥ ५० ॥ कांत्याऽऽत्मजश्चांत्यजनिः स बुद्धः पिबन्पयोथाप्यपिबन्स्वमातुः॥इत्यात्मतंत्रोस्ति विनायकोऽतः पित्रा कृतो रूढगणेशनामा ॥५१॥

एवं सुदामचरित्रं संक्षेपेणोक्त्वा तस्यैव सप्तमावतारोयं गणेशस्य कनिष्ठपुत्र इत्याह । सोयमिति । सति कुले सत्कुले । पक्कः पूर्णः योगो यस्य । ज्ञाता अभिज्ञः । सर्वोपास्त्या अनुभूतं अपरोक्षीकृतं तत्त्वं येन । सोयं चरमजन्मनि गणेशपुत्रोऽभवत् । कृष्णोपि उदक् दिशि उत्तरदिशि ब्राह्मणोभवत् ॥५०॥ आत्मजः पुत्रः कांत्या हेतुभूतया अंत्यजनिश्चरमजन्मा स बुद्धो ज्ञातः पित्रेति शेषः । मातुः सकाशात् पयः पिबन् अपिबंश्च आसीत् । यत एवं स्वतंत्रोस्ति अतः पित्रा प्रसिद्धगणेशनामा विनायकः कृतः।विनायकनाम्नः स्वतंत्रवाचित्वात् गणेशनामत्वाच्चैतत्कुले गणेशनामकरणं युक्तमासीदित्यर्थः ॥५१॥

धिया इत्या गत्या च शोभा ययोस्तौ ॥ ५२ ॥ अथ दिवाकराख्यः पंडितः काश्याः सकाशाद्भालकीं प्रति प्राप्तः । राज्ञी चंद्रसेनपत्नी गुरुगणेशाज्ञया तं दिवाकरं स्वकीयं पुराणिकं चक्रे । तस्मान्नित्यं पुराणं शुश्रावेत्यर्थः ॥ ५३ ॥ अत्रावसरे मनोह्लादकं दिवाकरचरित्रं वर्णयति रामचंद्र इत्यादिभिः । जनके चंद्रसेने स्वर्गं प्राप्ते सति वयसा लघुः बाल आसीत् । विरहवती तन्माता स्वजे पुत्रे मनो यस्याः पतिः वीरो यस्याः सा वीरपत्नी ति यावत् । अतः सा स्वराज्यं वीक्षते व्यवहारतः पश्यति स्म ॥ ५४ ॥ तस्याः पुराणिकश्रेष्ठो दिवाकर आसीत् । यो दिवाकरश्चतुर्गुणितां चतुर्दश षट्पंचाशत्कोशान्वेत्ति । तन्मितास्तावत्यो भाषाश्च वेत्ति किल । यतः सर्वत्र पूज्यस्य गुरोर्भास्करस्य शिष्यः । एवं विद्वत्त्वं भास्करशिष्ये नाश्चर्यक

तौ भालचंद्राख्यविनायकौ च ज्येष्ठावरावार्यगणेशपुत्रौ ॥ चिक्रीडतुरुग्यब्दवयोधिकोनौ स्कंदेभवक्त्राविव धीतिशोभौ ॥ ५२ ॥
श्रीदेशिकेंद्र उवाच ॥ दिवाकरः पंडितोथ काश्याः प्राप्तः स भालकीम् ॥ गणेशवाक्यात्तं राज्ञी चक्रे स्वीयं पुराणिकम् ॥ ५३ ॥
रामचंद्र इति चंद्रसेनजः स्वर्गतेथ जनके वयोलघुः ॥ तत्प्रसूर्विरहिणी निजराज्यं वीक्षते स्वजमनाः पतिवीरा ॥ ५४ ॥ तत्पुराणि
कवरो दिवाकरो यश्चतुर्गुणचतुर्दशकोशान् ॥ वेत्ति वक्ति किल तन्मितभाषाः सर्वपूज्यगुरुभास्करशिष्यः ॥ ५५ ॥ द्वैतिभिर्निग
दितः श्रुतेरपि स्वीयसंमतिसमोर्थ एव तम् ॥ यो विनोदयति चातिचेष्टितैः खंडयत्यपि परिष्कृतीर्वदन् ॥ ५६ ॥ कश्चिदंकित इमं
समागतः कर्तुमेव मतवादमात्महा ॥ कांस्यवाद्यसहितश्च शिष्यतोट्टीयवेद्यभिगतं मनस्विनम् ॥ ५७ ॥ औत्तराद्द्विजसमो दिवाकरो
वीक्ष्य तं कृततदग्रकपृष्ठः ॥ उत्थितोथ मुमुचे निजमूत्रं मुक्तकच्छ उपवीतयुक्श्रुतिः ॥ ५८ ॥

मित्यर्थः ॥ ५५ ॥ द्वैतमतस्थैः श्रुतेरप्यर्थः स्वीयसंमतिसमो द्वैतसंमतियोग्यो यदि निगदितः प्रतिपादितस्तर्हि तं अर्थं अतिचेष्टितैर्विनोदयति उपहसति । अपि चानेकपरिष्कारान् अनेकशास्त्रघटितशब्दान् वदन्खंडयति ॥ ५६ ॥ विनोदचेष्टया द्वैतमतखंडनप्रकारं वर्णयति । कश्चिदित्याद्यष्टभिः । कश्चिदंकित स्तप्तमुद्रांकितः आत्महाऽऽत्मज्ञानरहितः शिष्यतः शिष्यैः सह कांस्यवाद्यसहितः अट्टगतवेद्यां स्थितं यतः मनस्विनं स्वतंत्रं इमं दिवाकरं प्रति द्वैताद्वैतमत वादं कर्तुं समागतः ॥ ५७ ॥ उत्तरदेशस्थद्विजसमः कान्यकुब्जदेशगतद्विजसमानवेषः इत्यर्थः । तं वीक्ष्य कृतं तस्याग्रे पृष्ठं येन तथाविधः मुक्तः

कच्छो येन । उपवीतयुक्ता श्रुतिर्दक्षिणकर्णो यस्य स सन्स मूत्रं मुमुचे । एवं हास्यास्पदमेतस्य चेष्टितमित्यर्थः ॥ ५८ ॥ स च माध्वः इति चेष्टितयुक्तं तं दिवाकरं दृष्ट्वा चकितः सन् क एषोस्तीति इतरजनान् पृच्छति । तदा ते दिवाकरोयमस्तीति जगुः । अदः इदं वचनं निशम्य स च माध्वो निर्गमने च्छावानभवत् । यस्य दर्शनार्थं वयमागताः स एवंचेष्टितश्चेत्किमेतस्य दर्शनेनेति बुद्ध्या स्वस्थानं प्रति गंतुमिच्छितवानित्यर्थः ॥ ५९ ॥ अथार्यो दिवाकरो धौतपादकरः सन् आचमनं च कृत्वा तं माध्वं प्रति इति वदति । इति किम् । कुतस्त्वं अत्र गतिमान् अत्रागतोसि । पुनश्च क गच्छसीति । सोप्याह भवता उदितुं किं चिद्भाषितुमेवात्रागतोस्मीति संबंधः ॥ ६० ॥ ननु तर्हि ब्रूहीति चेत्तत्राह । अथेति । अथाहं विपरीतकर्माणं भवंतं दृष्ट्वा

तं समीक्ष्य चकितः स हि माध्वः कोस्ति चैष इति पृच्छतीतरान् ॥ ते जगुश्च विदयं दिवाकरोऽदो निशम्य स च निर्गमनेच्छुः ॥५९॥ धौतपादकर आचमनं चाऽथो विधाय वदतीति तमार्यः॥ त्वं कुतोऽत्र गतिमान्क च यास्याऽहेति सोणुभवतोदितुमेव॥६०॥ आगतोस्म्यथ विलोक्य भवंतं व्यस्तकृत्यमभवं गमनेच्छुः ॥ तं दिवाकर उताह न कुर्वेहं क्वचिच्छ्रुतिमृतेण्वपि कर्म ॥६१॥ दिवाकरं चाह हसन्स:माध्वः क्वास्ति श्रुतिर्मूत्रविसर्जनेपि॥ रुद्रे ह्युभाभ्यामुत ते किलेत्थं दिवाकरश्चाह तदा प्रमाणम् ॥ ६२ ॥ वागतमन्तनुर्प तदामो नाश्नुते श्रुतिरियं भवदंके ॥ तत्समेयमपि नास्ति वास्तवाऽर्थो विलोमकरणाद्यथेच्छया ॥ ६३ ॥

गमनेच्छावानभवम् । उत पुनः दिवाकरस्तमाह । अहं श्रुतिं विनाऽल्पमपि कर्म कदाचिन्न करोमि ॥ ६१ ॥ स माध्वोपि हसन् दिवाकरमाह । श्रुतिर्मूत्रविसर्जने कुत्रास्ति । दिवाकरश्च । उभाभ्यामुत ते इत्थं रुद्रे श्रुतिः उत्तिष्ठता मूत्रकरणे प्रमाणमस्तीति तदाह ॥ ६२ ॥ ननूभाभ्यामुत ते नम इति श्रुतिस्तु रुद्रनमस्कारपरा उत्तिष्ठता मूत्रकरणे न प्रमाणमस्तीत्याशंक्य तव मते तप्तमुद्राधारणे प्रमाणत्वेन श्रुतेरर्थो यथेच्छमंगीक्रियते । तद्वत् मयापि यथेच्छं उत्तिष्ठता मूत्रकरणे प्रमाणत्वेनोभाभ्यामुत ते इति श्रुतिरंगीकृतेत्याह।वागिति । अतमा तनुर्यस्य स तत्पदं नाश्नुते न प्राप्नोति । यतः आमः अपक्वः अनधिकारीत्यर्थः । अश्नुत इति श्रौतः प्रगृह्यभावः । इति श्रुतिगता वाक् श्रुतिवचनं भवतां माध्वानां अंके तप्तमुद्राचिह्नविषये स्वेच्छया विपरीतार्थकरणेन

यथार्थो नास्ति यथा तथैव ममापि उभाभ्यामित्याकारका श्रुतिस्तत्समा त्वच्छ्रुतिसमा यथेच्छया विपरीतार्थकरणात् वास्तवार्थो नास्ति । यथा तप्तमुद्रा धारणे स्वेच्छया श्रुत्यर्थः कल्प्यते तथा उत्तिष्ठता मूत्रकरणे उभाभ्यामित्यस्यार्थो यथेच्छया कल्प्यत इति भावः ॥ ६३ ॥ ननु तत्रानभतनुर्गम्यमन तप्तमुद्रारहितस्य कृतार्थता नास्तीति विहितमस्ति कथं यथेच्छयार्थकरणमित्याशंक्य तच्छ्रुतेर्यथार्थतात्पर्यमाह । अंतरमिति । यस्यांतरं मनः सर्वेंद्रियवृत्तिभिः सह पश्चात्तापेन तपति स तापत्रयानलसन्तप्तो मुमुक्षुरत्र श्रुतौ तप्ततनुरुच्यते । तप्तेनायसा यथा पशुस्तथा तप्तमुद्रया दग्धदेहोत्र न कथ्यते । यद्य पीतरश्रुतिस्मृतिवचनैरेवमर्थः कल्प्यते तथापि तदर्थस्य शूद्रपरतया व्याख्यानान्न ब्राह्मणविषयता । यथोक्तम् । "शंखं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा

अंतरं तपति यस्य हि पश्चात्तापतोऽखिलहृषीकवृत्तिभिः ॥ तप्तदेह इति सोत्र कथ्यते नायसा हि तपता यथा पशुः॥६४॥श्रीदेशिकेंद्र उवाच ॥ इत्यनेकविधवेदवाक्यतस्तं परास्तमकरोद्दिवाकरः॥पूजितः सकलपंडितैः सदा वक्ति जीर्णममलं नृपस्त्रियै ॥ ६५ ॥ राजकीयकथने क्वचित्सती मंत्रिभिर्न च पुराणमशृणोत् ॥ तत्पुरो ह्यथ विधाय च पृष्ठं वित्तदाह सदिदं शृणु रंडे ॥६६॥ मूर्धाभिषिक्तमहिषीति वचो निशम्य क्रुद्धाब्रवीत्तमिह दुर्वचनं न तेस्तु ॥ पुण्याख्यपत्तनमथाखिलविच्च गत्वा तत्रत्यपंडितजनांश्च पराजयस्व ॥ ६७ ॥

स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः । किं च । एकजातेरयं धर्मो यद्विष्णोर्लिंगधारणम् । यथा स्मशानजं काष्ठं सर्वकर्मबहिष्कृतम् । तथा मुद्रांकितो विप्रः सर्वकर्मसु गर्हितः " इति । तस्माद्यथा तप्तमुद्राधारणे भवद्भिः श्रुतिप्रमाणमंगीक्रियते तथा उत्तिष्ठता मूत्रकरणेऽस्माभिरपि श्रुतिप्रमाणं मन्यते । वस्तुतस्तूभयमपि न प्रमाणमित्यर्थः ॥ ६४ ॥ जीर्णं पुराणं नृपस्त्रियै चंद्रसेनपत्न्यै ॥ ६५ ॥ कदाचित् मंत्रिभिः सह राजकीयस्य कार्यस्य कथने क्रियमाणे सतीशेषः । तत्पुरः राजपत्न्या अग्रे पृष्ठं कृत्वा पृष्ठदेशे या भित्तिस्तत्संमुखो भूत्वा वित् पंडितो दिवाकरस्तदाऽऽह । हे रंडे भित्ते त्वं सदिदं पुराणं शृणु इत्याह । अतिनिस्पृह इत्यर्थः ॥ ६६ ॥ मूर्धाभिषिक्तमहिषी राजपत्नी । यदि त्वमखिलवित्पंडितोसि तर्हि पुण्यनगरं गत्वा तत्रत्यपंडितान् पराजय

स्व । तेषां पराजये तव पंडितत्वमस्तु किं मदग्रे तव पांडित्यमित्यर्थः ॥६७॥ इह पुण्यनगरे सर्वपंडितेभ्यः सदसि मया यदुक्तं तत् अर्थसहितं ते पंडिताः कथयंति वा न कथयंतीति तत्सर्वं दूतमुखतस्ते विदितं श्रुतं भवेत् । ततो ममाधिकारस्त्वया ज्ञातो भविष्यतीत्यर्थः ॥ ६८ ॥ स्वाधिकारं वर्णयति व्यास इति । इह जगति एको व्यासः सर्वज्ञोस्ति । उत पुनः कौ पृथिव्यामहं दिवाकरः सर्वज्ञोस्मि । अन्यस्तृतीयः सर्वज्ञो नास्ति । यद्यप्येवं तथापि तत्कथिते व्यासोक्ते पुराणे बहु न्यूनं अपशब्दादि मया दृष्टमस्ति । अथ स व्यासः साक्षादागतोपि मदुक्तकाव्ये ऊनदृष्टयै अपशब्दाद्यवलोकनाय समर्थो न भवेत् । एतादृशं मामज्ञात्वाऽनादरकर्त्री त्वं मम कीर्तिं श्रोष्यसीत्यर्थः ॥ ६९ ॥ उदक्द्विजः उत्तरदेशस्थो द्विजः पुरभयीति भाषाप्रसिद्धः । तेन समानाऽऽ

तामब्रवीदिति दिवाकर आशु यामि पुण्याख्यपत्तनमहं खलु पंडितेभ्यः ॥ उक्तं मया सदसि तत्कथयंति सार्थं वा नेति चारमुखतो विदितं भवेत्ते ॥६८॥ व्यासोऽखिलज्ञ उत कौ हि दिवाकरोहं नातस्तृतीय इह तत्कथिते पुराणे ॥ न्यूनं मयैव बहु दृष्टमथो मदुक्ते सोऽद्धाऽऽगतोपि न भवेत्क्षम ऊनदृष्टयै ॥ ६९ ॥ उक्त्येत्युदक्द्विजसमाकृतिरेष एकः पृष्ठे धृताढ्यगुणपात्र उपात्तदंडः ॥ पुण्याख्यपत्तनमगाच्छ्रुतिशास्त्रविद्भिः स्वाशैः प्रविष्टमुत लब्धधनैर्विसृष्टम् ॥ ७० ॥ तस्थाविहोपवनधर्मगृहेवगाही सर्वांबराणि च दधन् गणपाय दूर्वाः ॥ कोशाप्रसिद्धबहुनामभिरार्पयच्च श्रुत्वेति कश्चिदवदत्किमयं पिशाचः ॥७१॥ श्रीमत्सभामथ दिवाकर उत्कवेषः प्रातोन्यपंडित इहास तदा न कश्चित्॥तं व्यस्तवेषमपि वीक्ष्य सुकांतिमंतं ज्ञात्वा द्विजं नमति चोत्थित एव राजा ॥ ७२ ॥ श्रीमत्करस्थमकरोदथ नारिकेलं श्लोकं च पत्रलिखितं मुखतो वदन्सः ॥ अथो गणेशमुखपंचपरोस्य हीत्थमुक्त्वोत्तरोक्तिमगमच्च दिवाकरोऽस्मात् ॥ ७३ ॥

कृतिर्यस्य स एकाकी पृष्ठभागे धृतं आढ्यं महत् गुणेन युक्तं पात्रं येन सः तथा उपात्तः दंडो येन सः करधृतदंड इत्यर्थः । स्वस्य धनस्य आशा येषां तैः नृपाद्धनेच्छुभिः प्रविष्टं कृतप्रवेशम् उत पुनः लब्धधनैर्विसृष्टम् ॥ ७० ॥ इह पुण्यनगरसमीपे उपवने धर्मगृहे धर्मशालायां स्थितः अवगाही कृतस्नानः सर्वांबराणि उष्णीषादीनि धारयन् कोशेषु अप्रसिद्धशब्दैर्गालीप्रदानसदृशैर्बहुनामभिर्गणपतये दूर्वाश्चार्पयत् । इति श्रुत्वा कश्चित्पुरुषः अयं पिशाचोस्ति किं इत्याह ॥ ७१ ॥ इह सभायां तदा कश्चित्पंडितो नासीत् । नमति ननाम ॥ ७२ ॥ श्लोकं वक्ष्यमाणम् । अस्य पद्यस्यार्थो

गणेशादिपंचायतनपरोस्तीत्यर्थं औत्तरोक्ति उत्तरदेशस्थानामुक्तिरियोक्तिः वाक्यं तामुक्त्वाऽस्मात् नृपप्रकाशादगमन्त गत्वाज्ञ ॥ ७३ ॥ आम्रफलं सपत्रनारिकेलफलम् ॥ ७४ ॥ एकमपि अर्थं न विदुः । कुतः पंचार्थानित्यर्थः ॥ ७५ ॥ भालकीशा चंद्रसेनेन कार्यार्थमुदितौ स्थापितौ भालकी वकीलेति प्रसिद्धौ यादवमाधवाख्यौ दिवाकरकवेः शिष्यौ अस्य पद्यस्य अर्थद्वयं कृत्वा पृथिव्यां नौ गुरुर्दिवाकरः अमुष्य पद्यस्यार्थपंचकं वेत्तीति तान्सर्वान्सभास्थितान्प्रति ऊचतुः ॥ ७६ ॥ अखंडं चरति संचरति । विद्वांसः अनेकाः शिष्या यस्य स राजा स्वदूतैर्महति पुरे शोध्यः । आवा

प्राप्ताः सभामथ बुधाः सकलाश्च राजा तानाह कश्चिदिह चागतवानुदक्स्थः ॥ विप्रः सपत्रमिदमाम्रफलं ददौ मेऽश्लोकमत्रेति पंचसुरवाचकमस्ति पद्यम् ॥ ७४ ॥ नैव स्थितः स इत आशु गतः स्वतंत्रः कुत्रास्ति तत्स्थितिरिमां न च वेत्ति कश्चित् ॥ उक्तेति तेन निखिलेभ्य इहाथ पद्यं तद्दर्शितं न विदुरर्थमिमेस्य चैकम् ॥ ७५ ॥ शिष्यौ दिवाकरकवेरिह भालकीशा कार्योदितौ वथ च यादवमाधवाख्यौ ॥ कृत्वास्य चार्थयुगमूचतुरित्थमेतान्वेत्त्यर्थपंचकममुष्य गुरुर्हि नौ कौ ॥ ७६ ॥ नूनं स चागत इहाप्यगात् एकोखंडं चरत्यापि च विद्वदनेकशिष्यः ॥ शोध्यः पुरे महति हि प्रभुणा स्वदूतैरावां परीक्षितुमथं सह तैश्च यावः ॥ ७७ ॥ तौ जग्मतुर्गुरुमथेक्षितुमीशदूतैस्तं पुर्यनीक्ष्य विहृदौ प्रतिगेहगत्या ॥ आराममेत्य जललब्धय एकमत्र पाकोद्यतं गुरुदिवाकरमैक्षतां हि ॥ ७८ ॥ तौ तं प्रणेमतुरितीक्ष्य सशंकदूतांश्चेत्याहतुर्गुरुरयं किल नौ भवद्भिः ॥ वाच्योऽधिपाय ययुरित्युदितेन तत्र स्थित्वा चतुर्गुरुमिमौ बहु चार्थयंतौ ॥ ७९ ॥

मपि दूतैः सहैनं परीक्षितुं यावः गच्छावः ॥ ७७ ॥ इत्युक्त्वा राजाज्ञया तद्दूतैः सह गुरुं द्रष्टुं तौ यादवमाधवौ जग्मतुः । पुरि नगरे तं अनीक्ष्य प्रतिगृह गमनेन विहृदौ विमनस्कौ संतौ जलप्राप्त्यर्थं आराममेत्य अत्रारामे पाकार्थमुद्युक्तमेकं दिवाकरगुरुं ऐक्षतां हि अवलोकितवंतौ ॥ ७८ ॥ इति प्रणाम करणं दृष्ट्वा ये सशंका राजदूतास्तान् प्रति आहतुः । भवद्भिरयं नौ आवयोर्गुरुः अत्रास्तीति श्रीमते राज्ञे वाच्यः निवेदनीयः । इति उदितेन यादवमाधव

वाक्येन ते दूताः ययुः राजानं प्रतीति शेषः । इमौ चात्रारामे स्थित्वा गुरुं प्रार्थयंतौ संतौ ऊचतुः ॥ ७९ ॥ भुवि एकतमः एक एव विद्वानस्ति । अथापि त्वयीषदप्यभिमानो नास्ति । यतस्त्वं पादचारी शिष्यवर्जितोन्यदेशस्थद्विजवेषधर इह राजभूमौ प्राप्तः । अल्पविद्या अपि परे इतरपंडिताः अनेक दंभयुक्ताः संतोऽमुं राजानमायांति धनाद्यर्थमिति शेषः । त्वं तु विद्वानपि निरभिमानोसीति भावः ॥ ८० ॥ किं च यदि भवान्पत्रद्वारा पूर्वं नौ आवां प्रति किंचित्सूचयित्वा एकोप्यागतः स्यात् । तदा हे आर्य ससर्वपंडितयुक्तमेव राजानं तवाग्रे योजनार्द्धपर्यंतमानेतुं तव कृपयावां सुधियौ स्वः समर्थावि

विद्वान् भवान्भुवि किलैकतमोऽभिमानो नेषत्त्वयीह पदचार्यपि शिष्यहीनः ॥ प्राप्तोन्यवेष इनकौ हि परेऽल्पविद्याश्चायांत्यने कविधदंभिन एनमीशम् ॥ ८० ॥ नौ पत्रतोण्वपि भवान्यदि सूचयित्वैकोप्यागतः किल तदाखिलपंडिताढ्यम् ॥ श्रीमंतमेव पुरतस्तव योजनार्द्धमानेतुमार्य सुधियौ कृपया तवाऽऽवाम् ॥ ८१ ॥ पद्यं त्वया यदुदितं सुरपंचकार्थं तस्यार्थमेकमपि वेत्ति बुधो न कश्चित् ॥ अर्थद्वयं तव पदाश्रयतोवदाव चात्युत्सुकोस्ति निखिलश्रवणार्थमीशः ॥ ८२ ॥ श्रीदेशिकेंद्र उवाच ॥ ज्ञात्वा तदा शयमथो स दिवाकरस्तौ प्राहेति नैव धनलब्धय आगतोहम् ॥ राज्ञीप्सितं मम ददाति हि वस्त्रमन्नं यश्चेच्छतीतरदतो मृतिमान्स मूर्खः ॥ ८३ ॥ आयांति भूगतबुधा इह वित्तमाप्तुं कस्तेषु वित्तम उताणु मयापि वक्ति ॥ इत्यागतोथ निखिलांश्च ममैकपद्यं जिग्ये तदीक्षणमभूद्धि तदंतरघ्नम् ॥ ८४ ॥

त्यर्थः ॥ ८१ ॥ स्वागमने हेतुमाहतुः।पद्यमिति । द्वौ च तौ अर्थौ चावां अवदाव उक्तवंतौ । निखिलानां पंचार्थानां श्रवणार्थं राजाऽत्युत्कंठितोस्ति।अतो भवता राजसभामेत्य पद्यस्यार्थपंचकं वक्तव्यमिति राजाज्ञयाऽत्रावामागतावित्यर्थः ॥ ८२ ॥ तस्य राज्ञः आशयं सभाऽऽगमनाभिप्रायम् । हि यतो राज्ञी मम इच्छितं वस्त्रमन्नं च ददाति । यः इतरत् अन्नवस्त्रभिन्नं इच्छति अतो हेतोः स मूर्खो मृतिमान् मृततुल्यः अन्नवस्त्रवतः पुरुषस्य याञ्चाकरणं मरण तुल्यमित्यर्थः ॥ ८३ ॥ को विद्वत्तमो मया सहाल्पं वक्ति इति हेतोरहमागतोस्मि । अथ ममैकं पद्यं सर्वानपि पंडितान् जिग्ये अजयत । हि यतस्तदी

क्षणं पद्यावलोकनं तेषां पंडितानामंतरग्नं मनस्तापकरमभूत् । मम दर्शनेन तेषां पराभवो भविष्यत्येवेत्यर्थः ॥ ८४ ॥ इतः स्वपाचितात् । शनैरिति युक्त्या प्रार्थितवंतौ । इनमुख्या राजादयः पंडिताः ॥ ८५ ॥ इतः उपवनात् । निजस्थितिं स्वगृहम् ॥ ८६ ॥ अथ केचित् पंचायतनार्थं ज्ञातुं निषेदुः स्थितवंतः । परे पंडिताः हे आर्य त्वया प्राक् राजनिकटे उक्तं पद्यं अर्थैः पंचार्थैः सह त्वं वदेति जगदुः ॥ ८७ ॥ उदारमतिः श्रीमान् दिवाकरो निशम्य तेषां वाक्यमिति शेषः । बहुकोशैः पूर्णः सर्वकोशाभिज्ञो विच्छ्रुतिषु पंडितः श्रोत्रेषु अर्थान् पद्यस्य पंचार्थान् ददौ अर्पितवान् । पंचार्थान्वर्णयामासेत्यर्थः । तत्र दृष्टांतः । यथा धनवान् कोशपूर्णो याचकहस्तेषु अर्थान्ददाति तथेत्यर्थः । अथ ते पंडिता निस्वा इवाभिमानरहिताः संतोऽगम्यगतीन्सर्वान

भुक्त्वा स पाचितमितोऽणु ददौ च ताभ्यां लब्ध्वा प्रसादमथ तौ मुदितौ शनैस्तम् ॥ इत्याहतुर्नृपसभामधुना त्वमेहि ह्येष्यंति नेतुमिनमुख्यबुधा इह त्वाम् ॥८५॥ चेन्नो मनस्तव सभागमनेऽस्त्यथो नौ वासस्थलं कुरु निजांघ्रिरजःसुपूतम् ॥ संप्रार्थितः स बहुधेति तुरंगसंस्थस्ताभ्यां निजस्थितिमितः स्वगुरुर्हि नीतः ॥ ८६ ॥ ज्ञात्वाययुर्नृपतिनात्र बुधाः समीक्ष्य वेपाद्रिलोममपि कांतियुतं प्रणेमुः ॥ केचिन्निषेदुरथ पंचसुरार्थपद्यं ज्ञातुं परे जगदुरार्य वदोक्तमर्थैः ॥ ८७ ॥ श्रीमान्दिवाकर उदारमतिर्निशम्यार्थान्विच्छ्रुतिष्वनुददौ बहुकोशपूर्णः ॥ याचत्करेषु धनवानिव तेथ सर्वान्निस्वा इवाददुरगम्यगतीन् ह्यमानाः ॥ ८८ ॥ श्रियै गजास्यान्नुडितातिसन्मुत् खगेट्गतिः स्थापितलोककीर्तिः ॥ अजातमजार्च्यांघ्रिरहःस्वभूर्नोनादिः सुसंज्ञाभृदिलाष्टमूर्तिः ॥ ८९ ॥

र्थान् जगृहुः । धनलाभेन दरिद्राणामिव तेषां पंडितानां बह्वर्थलाभात्संतोषोभवदित्यर्थः ॥ ८८ ॥ तदेव पंचायतनदेवतार्थप्रतिपादकं पद्यमाह । श्रिय इति । तत्रादौ गणेशार्थपरत्वम् । अप्सूदकेषु रुहतीत्यब्रुट् कमलं आस्यमेवाब्रुट् आस्याब्रुट् गजस्यास्याब्रुट् मुखकमलं यस्य स गजवदनो नोऽस्माकं श्रियेऽस्तु । कीदृशः इतातिसन्मुत् इता प्राप्ताऽतिसन्मुत् अतिसंतोषो यस्य भक्तवरदानाय सदा संतुष्ट इत्यर्थः । पुनः किंभूतः । खगेशा पक्षिश्रेष्ठेन मयूरेण गतिर्गमनं यस्य मयूरारूढः । त्रेतायुगे मयूरवाहनो गणेश इति गणेशपुराणे कथाश्रवणात् । पुनः किं भूतः । स्थापिता लोकेषु कीर्तिः स्मरणमात्रेण निर्वि

प्रकैरणरूपा येन सः । गतिस्थापित इत्यत्र शर्परे वा विसर्गलोपो वक्तव्य इति विकल्पेन विसर्गलोपः । पुनः किंभू० । अजस्य ब्रह्मणः आत्मजे सिद्धि बुद्धी तयोस्ताभ्यां वाऽर्च्यौ पूज्यावंघ्री चरणौ यस्य । पदंघ्रिश्चरणोऽस्त्रियामित्यमरः । सिद्धिबुद्धिनिषेवित इत्यर्थः । पुनः की० । अहनि कल्पादौ स्वयमेव भवतीत्यहःस्वभूः । अवतारग्रहणे स्वतंत्र इत्यर्थः । पुनः किं० । न आदिर्यस्य सोऽनादिः । विश्वादित्वेनानादिरित्यर्थः । पुनः की० । शोभनाः संज्ञाः नामानि बिभर्ति स सुसंज्ञाभृत् । इलादयो भूम्यादयोऽष्टौ मूर्तयो यस्य यस्माद्वा । भूमिरापोनलो वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधेति गीतोक्ताष्टमूर्तिमान् तत्कारणं वा । अष्टप्रकृतिकारणमिति गणेशसहस्रनामसु तन्नामदर्शनात् । अथ देवीपरत्वम् । एङः पदांतादतीति सूत्रे णाकारस्य पूर्वरूपत्वादगजेति पदम् । अगाद्धिमालयाज्जाता पार्वती नः श्रिये अस्तु । कीदृशी । आस्याब्रुहि मुखकमले इता प्राप्ता अतिसन्मुत् आतिसंतोषो यस्याः साऽऽस्याब्रुडितातिसन्मुत् । आनंदमयत्वात्सदा हास्यवदनेत्यर्थः । पुनः की० । खगेड्गतिना गरुडवाहनेन हयग्रीवाख्यविष्णुना स्थापिता लोके कीर्तिर्यस्याः सा । अगस्तिमुनये हयग्रीवेण देवीमहामंत्रोपदेशद्वारा लोके कीर्तिस्थापनात् । पुनः की० । अजस्य ब्रह्मणः आत्मजा सरस्वती । तथा अजः ब्रह्मा आत्मजः पुत्रो यस्याः सा लक्ष्मीः । सा च सा चाजात्मजे सरस्वतीलक्ष्म्यौ । एकशेषः । ताभ्यामर्च्यौ पूज्यौ अंघ्री यस्याः सा । लक्ष्मीवाणीनिषेवितेति लग्नचामरहस्तश्रीशारदापरिसेवितेति च ब्रह्मांडपुराणे त्रिशतिस्तवे देवीनामदर्शनात् । पुनः किं० । अहःस्वभूः अहनि कल्पादौ स्वयमेव भवतीत्यहःस्वभूः । यथोक्तं मार्कंडेयपुराणे—एवं स्तुता तदा देवी तामसी तत्र वेधसा । विष्णोः प्रबोधनार्थाय निहंतुं मधुकैटभौ । नेत्रास्यनासिकाबाहुहृदयेभ्यस्तथोरसः । निर्गम्य दर्शने तस्थौ ब्रह्मणोव्यक्तजन्मन इति । पुनः की० । अनादिः सर्वेषां आदिभूता । सर्वस्याद्या भगवतीति मार्कंडेयपुराणेऽनादित्वश्रवणात् । पुनः की० । सुसंज्ञाभृत् अनेकनामवतीत्यर्थः । पुनः की० । इलादयः पंचभूतानि सूर्याचंद्रमसौ जीवात्मेत्यष्टौ मूर्तयो यस्याः सा । अष्टमूर्तिरजा जैत्रीति ब्रह्मांडपुराणे तथा नामदर्शनादित्यर्थः । अथ सूर्यपरत्वम् । खे आकाशे गच्छंति ते खगा ग्रहास्तेषां इट् स्वामी सूर्यः नः श्रियेस्तु । कीदृशः । अगेभ्यः पर्वतेभ्यो जातानां नदीनां आस्येषु मुखेषु प्रवाहेषु यानि अब्रूंहि कमलानि तेभ्यः इता प्राप्ता अतिसन्मुत् अतिसंतोषो यस्मात् । यस्योदयेन कमलानां

संतोषो भवतीति कमलानंदकर इत्यर्थः । ननु कमलानां संतोषेण कथं तस्य वर्णनीयत्वमित्याशंक्य सर्वप्रकाशकोपि स एवेत्याह । गतिस्थापितलोककीर्ति-
रिति । गत्या भ्रमणेन स्थापिता लोकानां चतुर्दशभुवनानां कीर्तिर्येन । यत्प्रकाशेनैव सर्वलोकप्रकाशो भवतीत्यर्थः । पुनः की० । अजस्य ब्रह्मणः
आत्मजा वसिष्ठादयो ऋषयस्तैरर्च्यौ त्रिकालमुपास्यौ अंघ्री यस्य । संध्यात्रये सर्वेषामुपास्यः सूर्य एव । पुनः की० । अहनि अहनि [illegible]
भवतीति अहः स्वभूः । पुनः की० । अनादिः । सूर्य आत्मा जगतस्तस्थुषश्चेति श्रुतिसिद्धात्मरूपत्वात् अनादिः । पुनः किं० । सुसंज्ञाभृत् [illegible]
नाम्नी स्त्री तां बिभर्ति वामांके करोति सः । पुनः किं० । इलादिषु शिवाष्टमूर्तिषु मूर्तिर्यस्य सः । अथ विष्णुपरत्वम् । स्वभूः विष्णुः । [illegible]
स्वभूरित्यमरः । नोस्माकं श्रियेस्तु । किंभूतः । गजास्याब्रुडितातिसन्मुत् । गजस्य मकरग्रस्तगजेंद्रस्य आस्ये मुखे शुंडादंडे यत् [illegible]
इता प्राप्ता अतिसन्मुत् अतिसंतोषो यस्य गजार्पितकमलेन संतुष्ट इत्यर्थः । पुनः किं० । खगेशा गरुडेन गतिर्यस्य गरुडगामीत्यर्थः । पुनः की० । [illegible]
पिता कीर्तिः अवतारग्रहणेन धर्मस्थापनदुष्टवधसाधुत्राणादिरूपा येन सः । पुनः की० । अजस्य ब्रह्मण आत्मजा नारदाद्यास्तैरर्च्यौ [illegible] अंघ्री
यस्य । पुनः किं० । अनादिः उक्तार्थवत् । पुनः किंभू० । सुसंज्ञाभृत् शोभनाः संज्ञाः रामकृष्णादिनामानि बिभर्तीति । पुनः किंभूतः । [illegible]
भूमिरापोनलोवायुरित्यादयो गीतोक्ता अष्टौ मूर्तयः प्रकृतयो यस्य सः । अथ शिवपरत्वम् । इलाष्टमूर्तिः । इलादयो भूरंभांस्यनलोनिलोंबरमहर्नाथो हि-
मांशुः पुमानित्याभाति चराचरात्मकमिदं यस्यैव मूर्त्यष्टकमिति भगवत्पादैरुक्ताः अष्टौ मूर्तयो यस्य सः शिवो नः श्रियेस्तु । किंभूतः । अगाद्रिपालगा
ज्जातायाः पार्वत्या आस्यमेवाब्रुट् मुखकमलं तेनावलोकितेन इता प्राप्ताऽतिसन्मुत् अतिसंतोषो यस्य पार्वतीमुखावलोकनेनातिसंतुष्ट इत्यर्थः । पुनः की० ।
खगेड्गतिस्थापितलोककीर्तिः । खगानां ग्रहाणां ईशः स्वामिनः सूर्यस्य गत्या पलायनेन स्थापिता लोके कीर्तिः शिक्षाकर्तृरूपा येन यस्य वा सः
रुद्रः । रुद्रभयाद्यथार्कः इति विष्णुभागवते वर्णनात् । तथाहि । विद्युन्मालीनामाऽसुरः शिवप्रसादात्सूर्यवर्चस्वी विमानं लब्ध्वा रात्र्यागमे सूर्यवत् भ्रमणं
कृतवान् । तत्कर्म दृष्ट्वा सूर्येण स पराजितः सन् पुनः शिवं शरणं जगाम । तदा शिवोपि निजभक्तपराभवमसहमानः सूर्यं हंतुं प्रवृत्तस्तदा सूर्यः पलायनं
कृत्वा काश्यां स्थितस्तत् लोलार्कतीर्थं जातमिति काशीखंडे कथाश्रवणात् सूर्यस्यापि भयजनकः । यद्वा खगस्य हंसस्य इट् स्वामी ब्रह्मा तस्य पलायनेन

स्थापिता लोके कीर्तिर्येनेति । रुद्रभयाद्यथा क इति विष्णुभागवते पाठांतरे स्वीकारात । मृगरूपां सरस्वतीं स्वसुतां यभितुमुद्यतो मृगरूपो ब्रह्मा रुद्रभयात्प
लायनं कृतवानिति च कथा प्रथीयसीत्यर्थः । पुनः किं० । अजः ब्रह्मा आत्मजास्तस्य पुत्राश्च सनकाद्यास्तैरर्च्यौ पूज्यावंघ्री यस्य सः । अनादिः ।
सुसंज्ञाभूत् । एतत्पदद्वयं उक्तार्थवत् । एतादृशपंचार्थकपद्येन ब्राह्मणमात्रस्य पंचायतनोपासनाऽवश्यकर्तव्यत्वेन विहितेति भावः ॥ ८९ ॥ अथौत्तरवचाः
औत्तरः उत्तरदेशस्थस्तस्य वचांसीव वचांसि यस्य स बुधार्यो दिवाकरः-सर्वान् पुण्यनगरस्थपंडितानाह । यूयं सुमतात् उत्तमप्रमाणेन मदर्थान् यत्कृत
पद्यार्थान्निषेध्य बाधं दत्त्वा अत्रापि उत्तमप्रमाणेनेति योज्यम् । अपरानर्थान्कुरुध्वम् । नो चेत् बहुधनप्रदस्यास्य राज्ञो गृहे घरट्टान्यादाय उदितैः पठितशास्त्रा

सर्वानथौत्तरवचाः स बुधार्य आहार्थान्मे निषेध्य सुमतादपरान्कुरुध्वम् ॥ नो चेन्नृपस्य बहुदस्य गृहे घरट्टान्यादाय धान्यमुदितैः
खलु पिंष्ट यूयम् ॥ ९० ॥ प्राहुर्नमंत इति तेथ दिवाकरार्यं नेत्थं मतिर्ह्यखिलगार्कगतेव कांतिः ॥ लब्धा त्वयैव किल देशिकसत्प्र
सादात्त्वां वर्णयाम इति किं नतिमेव कुर्मः ॥ ९१ ॥ संपूजितो वसनभूषणदक्षिणाद्यैः सर्वाधिकैर्नृपतिनाऽऽर्यवरोथ सर्वम् ॥ दत्त्वा
बुधेभ्य इन ईक्षति पूर्ववेषोसौ निर्ययौ नृपपुराद्बहुधार्थितोपि ॥ ९२ ॥ विद्वालकीं गत इतः सकलं स्वचारै राज्ञी निशम्य वदतीति
दिवाकरार्यम् ॥ उक्तं मयाज्ञतमयाऽखिलवित् क्षमस्व बालांघ्रिवातमिव सर्वगता धरित्री ॥ ९३ ॥

दिभिः पेषणसमये गायनोपयोग्यैः कृत्वा धान्यं यूयं पिंष्ट पेषणं कुरुध्वम् । मत्कृतार्थान्निषेध्यान्यार्थाकरणे भवतां शास्त्राध्ययनं व्यर्थमस्तीत्यर्थः ॥ ९० ॥
इत्थं तव बुद्धिसदृशा मतिरखिलगा सर्वपंडितगता नास्ति । यथार्कगता कांतिः सर्वत्र नास्ति तथेत्यर्थः । त्वया तु देशिकप्रसादाद्धारकरगुरुप्रसादादीदृशी
बुद्धिः प्राप्ता इति हेतोस्त्वां प्रति वयं किं वर्णयामः । अपि तु न वर्णयामः । किं तु नतिं नमस्कारमेव कुर्मः । अस्माकमप्रतिष्ठां मा कुर्विति भावः ॥
॥ ९१ ॥ इने राज्ञि ईक्षति सति सर्वं राज्ञा दत्तं वस्त्रादि बुधेभ्यो दत्त्वा सः पूर्ववेषः सन् बहुप्रार्थितोपि नृपपुरान्निर्ययौ ॥ ९२ ॥ इतः सकाशात् वित्

दिवाकरो माळकी प्रातोभवत् । सकलं पुण्यनगरगतं वर्तमानम् ॥ ९३ ॥ अनीहः निस्पृहः । शास्त्रात्मगुर्वभिमतात् । शास्त्रप्रतीत्या आत्मप्रतीत्या गुरु प्रतीत्या च एतद्विश्वं असत् पश्यन् क्वचित्सक्तो नाभवत् । सद्गुरूक्त्या गुरुगणेशवचनेन । गुरुवचनेनैवास्य पुराणप्रवचनं प्रवृत्तिरिति भावः ॥ ९४ ॥ अथोमापत्यानंदस्य सिद्धिसामर्थ्यं वर्णयन्कथांतरमाह प्रौढ इति यावत्सर्गसमाप्ति । गुरोः गणेशात् मंत्रान् लब्ध्वा ॥ ९५ ॥ ९६ ॥ श्रीमदिनादिकानां

श्रीदेशिकेंद्र उवाच ॥ योनीह इत्थमखिलार्थसुखे च माने शास्त्रात्मगुर्वभिमतादसदेतदीक्षन् ॥ सक्तः क्वचिन्न न दिवाकरपंडितः स राज्ञै पुराणमिह वक्ति हि सद्गुरूक्त्या ॥ ९४ ॥ प्रौढोथ मंत्रांश्च गुरोस्तु लब्ध्वा बभूव वीरः स च रामचंद्रः ॥ तुनोप तस्मात्रनृनो पि राजा योन्यैर्बलाढ्यैर्हि नृपैर्हतस्वः ॥ ९५ ॥ ये द्वेषिणः स्युर्यवनस्य राज्ञस्तदीयदेशान्स च रामचंद्रः ॥ गत्वा लुलुंठेऽश्वगपत्ति भिश्चाल्पैरप्यजेयो बहुभिः किलान्यैः ॥ ९६ ॥ न क्रोशमात्रं बहिरेतुमीशः शूरोप्यभूच्छ्रीमदिनादिकानाम् ॥ राज्ये कुतोन्यो ल्पबलस्तदेत्यासीद्रामचंद्राच्च भयं हि राज्ञाम् ॥ ९७ ॥ नाभूत्तदोपद्रव ईषदन्यराजोद्भवो वै यवनस्य राज्ये ॥ यद्रामचंद्रो जयतीह खड्गी गुरुप्रसादेन धरैकवीरः ॥ ९८ ॥ शूराः स्वदूताः क्षितिपैः सुदेयलोभादनेका भुवि योजितास्ते ॥ चरंति गुप्ताश्च विलोमवेषा यतंति धर्तुं नृपरामचंद्रम् ॥ ९९ ॥ बंदीव चाभूदथ तेषु चैकोऽगाद्रामचंद्रं बहु वर्णयंस्तम् ॥ श्रीमन्नृपस्याप्यनुगस्तदादीन्नृपान्वि निंदन्वदतीति मिथ्या ॥ १०० ॥ बंद्युवाच ॥ शूरस्त्वमेवैक इलातलेऽस्मीत्याकर्ण्य ते पार्श्वमिहागतोस्मि ॥ चेत्सार्वभौमोपि हि चाल्पवीर्यस्तं स्तावकाः स्तोतुमबुद्धयः स्युः ॥ १ ॥ त्वं त्वल्पभूश्चाखिलभूभृदेको यतोखिलानामपि भोक्ष्यसे गाम् ॥ गत्वा बलात्तद्गतवस्तुहत्या ते त्वद्भुवो नाण्वपि हर्तुमीशाः ॥ २ ॥

श्रीमद्राजादीनाम् ॥ ९७ ॥ यत् यस्माद्धरायामेको मुख्यो वीरः ॥ ९८ ॥ सुदेयं धनं तस्य लोभेन ॥ ९९ ॥ बंदीव बंदिसदृशवेषवानभवत् । तदा दीन् श्रीमदादीन् नृपान् विनिंदन् मिथ्या इति वक्ष्यमाणं वदति ॥ १०० ॥ अबुद्धयः अल्पबुद्धयः बुद्धिप्रवृत्तिरहिता इति यावत् ॥ १०१ ॥ अखिलभू भृत्सु सर्वराजसु एकः असाधारणः यतः सर्वेषां भोग्यां भूमिं बलात् तत्तद्राजगतवस्तूनां रत्नादीनां हरणेन भोक्ष्यसे । ते तु राजानस्तव भुवः अणु अल्प

मपि अंशं हर्तुं समर्था न भवंति ॥ १०२ ॥ सौख्यात्सौख्येन । अन्यबलः अन्यबलेन बलवान् । स्वयं तु न शूरोस्ति । यतो द्विजः । शूरत्वं ब्राह्मणे न संभवति । अत एव स सर्वनृपैः प्रार्थितोपि त्वत् त्वत्तः भयं अंतः मनसि धत्ते ॥ ३ ॥ आत्मीयेभ्यः स्वकीयेभ्यः परं श्रेष्ठम् ॥ ४ ॥ ५ ॥ पूर्वं तेन बंदिना संसूचितो यो राजा श्रीमान् तस्य दूताः । अखिलं गृहप्रवेशमार्गादिकं जानाति सः अग्रे प्रथमं दारुपरंपराभिः काष्ठसोपानैः ॥ ६ ॥ बृहत्कपा

त्वत्तेजसाऽऽस्ते यवनः स्वराज्ये स्त्रैणोपि सौख्यात्परतापहीनः ॥ श्रीमान्द्विजस्त्वन्यबलस्त्वदंतर्धत्ते भयं सर्वनृपार्थितोपि ॥ ३ ॥
श्रीदेशिकेंद्र उवाच ॥ इत्याद्यनेकस्तुतिभिस्तु चक्रे तं रामचंद्रं स्ववशं स दूतः ॥ अज्ञाय कौटिल्यममुष्य सोऽपि विश्वासमात्मीयपरं चकार ॥ ४ ॥ अथैकदा कृत्रिमबंदिवाक्यात्स रामचंद्रोऽल्पतुरंगवाहैः ॥ पुण्याद्गतो योजनयुग्मसंस्थं धनाढ्यगेहं निशि तेन युक्तः ॥ ५ ॥ प्राग्बंदिसंसूचितराजदूताः शूराः स्थिताः स्युर्बहवोत्र गेहे ॥ स कृत्रिमो बंद्यखिलज्ञ एकोऽग्रेंतर्ययौ दारुपरंपराभिः ॥ ६ ॥ अल्पाररं चोरुकपाटसंस्थमुद्घाट्य सोंतर्नृपतिं निनाय ॥ शस्त्राणि तस्मादखिलानि हत्वा विश्वासतोऽल्पाररतो मिषाच्च ॥ ७ ॥ अंतःप्रविष्टे नृपतौ कपाटमन्यो दृढं ध्वांतगतश्चकार ॥ नृपं त्वशस्त्रं स्थितशूरमध्ये नीत्वा स लीनस्तमसीह बंदी ॥ ८ ॥ तैरावृतो थो नृपतिः सशस्त्रैर्ध्वांतेपि तच्छस्त्ररवं निशम्य ॥ तूष्णीं स्थितो भग्नरदाहितुल्यः सूतस्य दौष्ट्यं हृदि चाविदत्सः ॥ ९ ॥ ये रामचंद्रस्य बहिः स्थिताः स्युर्दूताः समीक्ष्येह च सौधसंस्थान् ॥ बहून् सशस्त्रान् भयतोथ तस्माद्ययुर्द्रुतं स्वास्त्रवनेच्छवोल्पाः ॥११०॥
श्रीमान्निशम्यात्मसशस्त्रदुर्गेष्वशस्त्रमार्तं नृपरामचंद्रम् ॥ आज्ञापयच्चामृति दुर्गकारागृहेऽस्तु चोरोऽयमिति स्वकीयान् ॥ ११ ॥

टसंस्थं अल्पाररं खिडकीतिभाषाप्रसिद्धम् । विश्वासेनाल्पद्वारस्य मिषेण अल्पद्वारात्सशस्त्रागमनं न भवतात् ।निमित्तेन तस्माद्रामचंद्रात्सर्वशस्त्राणि हत्वा तमंतर्निनाय ॥ ७ ॥ स्थिताः अंतःस्थिता ये शूरास्तेषां मध्ये ॥ ८ ॥ सूतस्य बंदिनो दौष्ट्यं दुष्टत्वमविदत् ज्ञातवान् ॥ ९ ॥ स्वास्त्रवनेच्छवः स्वप्राणरक्षणेच्छावंतः । यतः अल्पाः अल्पसामर्थ्यास्तस्मात्स्थानाययुः ॥११०॥ अयं रामचंद्रः चोरः इत आमृति मरणपर्यंतं दुर्गगतकारागृहेऽस्तु तिष्ठतु

इति स्वकीयान्प्रति आज्ञापितवान् ॥ ११ ॥ अस्मात् पूर्वस्थानात् । माता चंद्रसेनपत्नी ॥ १२ ॥ १३ ॥ तस्य कर्मफलस्य निर्वा[illegible]
भवति । यथोक्तम् । " अवश्यं भाविभावानां प्रतिकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः " इति ॥ १४ ॥ गुर्वादि[illegible]
अन्यत्र इदं भवदुक्तं अवश्यभोक्तृत्वं सत्यमस्ति । हि यतः गुरुभक्तानां हरो कर्मफलदातारि रुष्टे प्रतिकूले सत्यपि गुरुः रक्षिता भवति । [illegible]

तथेति तैः स्थापित एष नीतोऽस्माद्दुर्गगेहेऽमितशूरपुत्रः ॥ पुत्रस्य चादर्शनमात्मदूतैः श्रुत्वाथ माता बहुदुःखिताभूत् ॥ १२ ॥
दुर्गेऽस्ति जीवन्स च शत्रुगुप्तोऽथेत्थं समाकर्ण्य तदाशु तुष्टा ॥ गत्वा गणेशं गुरुमानमंतीत्याहात्मजं मोचय मे[illegible] ॥ १३ ॥
गुरुर्गणेशो विधुसेनपत्नीमथाब्रवीद्यश्च यथा करोति ॥ तथा फलं तस्य भवेद्धि नूनं केनापि नो तस्य भवेन्निवृत्तिः ॥ १४ ॥
राज्ञी पुनः प्राह गुरुं नमंतीदं सत्यमन्यत्र गुरुर्हरादिभ्यः ॥ त्राता गुरुः स्याद्धि हरे च रुष्टे किं तत्र चैतत्परि[illegible] ॥ १५ ॥
इत्थं बहुप्रार्थनया दयार्द्रो राज्ञीमुमापत्यसुखोऽवदच्च ॥ यत्रास्ति ते सूनुरितो बहिस्तात्स्थाप्यामत्वयाऽत्र स्थितवास्तथः [illegible] ॥ १६ ॥
दुर्गाद्बहिर्मोक्ष्यति वै परश्वः प्रातर्विमुक्तस्तव रामचंद्रः ॥ श्रुत्वेति विश्वासयुताऽथगान्सा तद्दुर्गमा[illegible] ॥ १७ ॥
अथापरेद्युर्निशि शूलिनीति दुर्गैव जप्ता गुरुणा यथावत् ॥ साद्राविरासीत्पुरतो गुरोस्तं प्राहाशु कृत्यं वद तद्धि [illegible] ॥ १८ ॥
सोथाब्रवीच्छ्रीमदिनेन चैकः क्षिप्तोऽस्ति शिष्यो मम दुर्ग एनम् ॥ त्वं मोचयाश्वेव हि रामचंद्रं श्रीमंतमाज्ञाप्य [illegible] ॥ १९ ॥
तथेति सा मंत्रवशाखिलस्थाऽऽविर्भूय तद्राजगृहेथ शूलात् ॥ उत्थाप्य मंचस्थमुवाच दुर्गा त्वं रामचंद्रं खलु मोचयाशु ॥ २० ॥

पुत्रसंकटं परिहर्तुं किम् । न किमपि अशक्यमित्यर्थः । यथोक्तं " शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः " इति
॥ १५ ॥ अश्वेषु स्थितिर्येषां ते । सादिन इत्यर्थः ॥ १६ ॥ अवेषान् राजचिह्नसूचकवेषरहितान् । आत्मीयत्वगोपनार्थमित्यर्थः ॥ १७ ॥ [illegible]
नाम्नी दुर्गा तन्मंत्र इति यावत् । कृत्यं मया कर्तव्यम् ॥ १८ ॥ एनं रामचंद्रं शीघ्रमेव मोचय । अनन्यं एकाकिनम् ॥ १९ ॥ तथेति उक्त्वेति [illegible]

शूलात् शूलेन । मंचस्थं श्रीमंतम् ॥ १२० ॥ नोचेत् न मोचयसि चेत् । अनसुं गतप्राणम् । इत्यादि परान्वयि । सिंदूरं भाले यस्याः ऊर्ध्वाः कचाः केशा यस्यास्तां च तां च ॥ २१ ॥ उष्ट्रिणी अतित्वरितगमना भवति । तस्यां स्थितेन दूतेन ॥ २२ ॥ अस्य रामचंद्रस्य मृत्युपर्यंतं बंधः पूर्वमुक्तोस्ति । ईशा स्वामिना श्रीमता स चाद्य मोचनीय इति कथमुच्यते ॥ २३ ॥ २४ ॥ गुरुणोक्ते काले प्रभाते ॥ २५ ॥ विठ्ठलस्य पूः पंढरी आप्ता प्राप्ता । स पंढरीं प्राप्त इत्यर्थः । अत्र भीमानद्यामाप्लुतिः स्नानं कृतं देवो विठ्ठलः पूजितः द्विजभुक्तमन्नं भक्षितम् । एतत्कृत्यं दिवा कृतमित्यर्थः ॥ २६ ॥

नो चेत्त्रिशूलेन शिरोद्य भित्त्वा कुर्वेऽनसुं त्वामिति तन्निशम्य ॥ भीतोथ दृष्ट्वा स च शूलहस्तां सिंदूरभालोर्ध्वकचां करालाम् ॥ २१ ॥
पटांतरस्थान्वदति स्वदूतान्पत्रं विलेख्याद्य हि लेखकेन ॥ प्रेष्योष्ट्रिणीस्थेन किलाशु दुर्गाद्विमोचनीयो नृपरामचंद्रः ॥ २२ ॥
श्रुत्वेति ते विस्मितमानसाः स्युर्ह्यामृत्यु बंधोस्य पुरोदितोस्ति ॥ मोच्यः स चेशा कथमुच्यतेद्य निद्रालुना वेति मिथस्तदोचुः ॥२३॥
पुनस्तया शूलहतोऽब्रवीत्स तथा निशम्याथ मुहुर्मुहुस्तैः ॥ पत्रं विलिख्याशु हि लेखकेन तदेव तत्प्रेषितमुष्ट्रिणीस्थात् ॥ २४ ॥
दृष्ट्वैव पत्रं त्वथ दुर्गपेणारुणोदये मोचित एव सद्यः ॥ स रामचंद्रः स्वजनेषु चागाद्दुर्गाद्बहिस्ताद्धि गुरूक्तकाले ॥ २५ ॥ तेनाश्वमारुह्य धृतासिनाथ स्वीयैर्वराश्वैर्जविभिः किलाप्ता ॥ पूर्विठ्ठलस्यात्र कृताप्लुतिर्हि देवोर्चितोन्नं द्विजशेषमात्तम् ॥ २६ ॥ तत्रत्यमीशं तृणवद्धि मत्वा श्रीमत्प्रयुक्तं स च रामचंद्रः ॥ आनीय दूतैर्धनिनोऽखिलेभ्यो हृत्वा बलात्स्वं निशि निर्ययौ च ॥ २७ ॥ प्रातः पुरीं स्वां स इतोथ पुण्ये कृताह्निकोगाच्च सभां स राजा ॥ स्वप्नं निजानाह त आहुरेतत्सत्यं हि साक्षाद्भवदुक्तितोभूत् ॥ २८ ॥

रात्र्यारंभे तत्कृत्यमाह । तत्रत्यमिति । श्रीमता प्रयुक्तं स्थापितं तत्रत्यं पंढरीस्थमीशं राजानं तृणतुल्यं मत्वा स्वदूतैस्तत्रत्यान्धनिकानानीय सर्वेभ्यः सकाशात्स्वं धनं बलात्कारेण हृत्वा निशि निर्ययौ च ॥ २७ ॥ इतः पंढरीक्षेत्रात् स रामचंद्रः स्वां पुरीं माळकीं प्रति प्राप्तोभवत् । अथ पुण्यनगरे स श्रीमान्राजा कृताह्निकः सन् सभामगात् । स निजान्प्रधानादीन्प्रति स्वप्नं प्राह । एतत् त्वयोक्तं सर्वं प्रत्यक्षं तव वचनेन सत्यमभूत् इति ते

सचिवादय आहुः । अयं भावः । स्वमावलोकितदेवनाभयेन रामचंद्रो मोचनीय इति त्वया प्रत्यक्षं द्विवारमाज्ञाकरणात्तदैव पत्रं प्रेषणीयं [illegible]
तदैव स मोचित इत्यतो हेतोर्न तवैषाऽऽज्ञा स्वप्नगता किं तु जागृतिगतैवेत्याहुरिति ॥ २८ ॥ आमृति मरणपर्यंतं बद्धः ॥ २९ ॥ [illegible]
हसेवकहस्तेन ॥ १३० ॥ अथात्र पुण्यनगरे वार्ता गता । वार्तामेवाह परेद्युरिति । स्वकीयैः सह गतो भालकीं प्रतीति शेषः ॥ ३१ ॥ [illegible]
त्सेवकाः पुरि पंढर्यां कुतः संगताः । अत्याश्चर्यमित्यर्थः ॥ ३२ ॥ सर्गोक्तकथाश्रवणफलमाह जनिमिति । शुकानंदगुरोः सपूर्वां पूर्वकथासहितां

श्रीमान्स कोपात्सकलानथाह किं मोचितश्चामृति बद्ध एषः ॥ मुक्तस्त आहुर्भवदाज्ञयेति स चाह तान्स्वाप्नमूलं वचः किम् ॥ २९ ॥
न मोचनीयः स किलेति पत्रं प्रेष्यं पुनर्वै द्रुतमुष्ट्रिणीस्थात् ॥ आहुस्त एषोद्य किमस्ति दुर्गे किं प्रेषणीयं हि पुनैव पत्रम् ॥१३०॥
वार्ताऽऽगताऽथात्र परेद्युरेव स रामचंद्रोऽखिलपंढरीस्थान् ॥ बलाल्लुलुंठे धनिनोऽगणय्य तत्रत्यमीशं हि गतः स्वकीयैः ॥ ३१ ॥
श्रीमान्निशम्येति च राघवाख्यः प्राहैक एषः किल दुर्गरुद्धः ॥ कुतस्तदीयाः पुरि संगताश्च स्वप्नं किमेतन्निशि दैवतोक्तम् ॥ ३२ ॥
जनिं शुकानंदगुरोः सपूर्वां दैवाकरीं यस्तु कथां च सिद्धेः ॥ श्रैष्ठ्यं गणेशस्य निशम्य भक्त्याऽऽप्नुयात्सुपुत्रं सुविदं सुसिद्धिम् ॥१३३॥
इति श्रीगुरुपरंपराचरित्रोत्तरार्धे गुरुगणेशसिद्ध्या रामचंद्रमोचनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥ श्रीदेशिकेंद्र उवाच ॥ वैनायकीं
जनिं पूर्वं कथयित्वा कथांतरम् ॥ कथितं हि पुनस्तस्य कथामेनोपहां शृणु ॥ १ ॥ विनायकोथ पंचाब्दो भालचंद्रोऽष्टवार्षिकः ॥
गृह एवासतुर्द्वौ तौ सदा पित्रंकवर्तिनौ ॥ २ ॥

जनिं उत्पत्तिं दिवाकरस्य कथां गुरुगणेशस्य सिद्धेः श्रेष्ठत्वं च भक्त्या निशम्य श्रुत्वा चकारात्पठित्वा च । क्रमेण सुपुत्रं उत्तमं ज्ञानम् उत्तमां
सिद्धिं च प्राप्नुयात् प्राप्नोति । चकारस्यानुक्तसमुच्चायकत्वेन सर्वत्र संबंधः । उपजातिवृत्तम् ॥ १३३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्धटीकायामर्थस्फूर्त्य
भिधायां गुरुगणेशसिद्धिवर्णनं नाम षट्चत्वारिंशः सर्गः ॥ ४६ ॥ उत्सप्तवेदे चैकोर्ध्वशतपर्वैर्विनायकः । भ्रमन्नुर्वीं शुकस्थाने योगाभ्यासीति वर्ण्यते ॥
॥ ४७ ॥ अथ शुकानंदस्य बाल्यतः योगाभ्यासं वर्णयति वैनायकीमित्यादिना । एनोपहां पापनाशिनीम् ॥ १ ॥ पितुः अंकवर्तिनौ समीपवर्तिनौ ॥ २ ॥

पूर्वपादः पूर्वान्वयी । वयसा समाः तुल्याः बालकाः । क्रीडास्थानमिति शेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ सुखे ब्रह्मानंदे । अश्वासः श्वासोच्छ्वासरहितः ॥ ७ ॥ तैर्बालकैः । तथा विनायकस्य श्वासरहितत्वम् ॥ ८ ॥ कथितं श्रुत्वेति संबंधः । माता कृष्णानाम्नी ॥ ९ ॥ १० ॥ सावधानः देहाद्यनुसं

क्रीडासक्तौ न बाल्येऽपि भालचंद्रविनायकौ ॥ क्रीडितुं तौ बलान्निन्युः करौ धृत्वा वयःसमाः ॥ ३ ॥ न भुंजंति क्षणं ते तौ गोपाः कृष्णबलाविव ॥ तथा ज्येष्ठः कनिष्ठं च रामः कृष्णमिवान्वहम् ॥ ४ ॥ क्रीडतीषद्भालचंद्रः कचिन्नैव विनायकः ॥ पद्मासनस्थितोऽभैषु क्रीडत्स्वपि सदात्मदृक् ॥ ५ ॥ क्रीडंतोथैकदा बालाः क्रीडास्थानात्सुदूरतः ॥ गता एकांतमालोक्य [illegible] योगं विनायकः ॥ ६ ॥ प्राणयामैरसून्नीत्वा सहस्रारे स्थिरः सुखम् ॥ बाह्यं न वेद किंचिच्चाश्वासः स्थाणुरिवाचलः ॥ ७ ॥ गोपैः वृत्त्यागतैस्तत्राश्वासचेष्टः स चेक्षितः ॥ भीतैर्गत्वा गृहं तस्य पितृभ्यां कथितं तथा ॥ ८ ॥ माता श्रुत्वाऽरुदत्पाकं त्यक्त्वा गंतुं समुद्यता ॥ तामित्याह गुरुः सर्वं ज्ञात्वा ह्युपास्यचिंतनात् ॥ ९ ॥ न मृतोनेकजनिभिर्योगयुग्विनायकः ॥ योगमाश्रित्य सोद्यापि भुंक्ते सौख्यं समाधिजम् ॥ १० ॥ समाधेर्विरमेऽथाशु सावधानो भविष्यति ॥ मा चिंतां कुरु पाकं ते भोजनायागमि ष्यति ॥ ११ ॥ इत्थं देशिकवाक्येन कृष्णांबाऽभूत्स्थिरांतरा ॥ समाध्यंते गृहं चागाद्यामार्द्धेन विनायकः ॥ १२ ॥ ततः पित्रोप नीतौ तौ भालचंद्रविनायकौ ॥ सार्थोक्ताऽऽभ्यां तु गायत्री नाद्ये साऽऽसीद्यथावरे ॥ १३ ॥ वेदश्चाभ्यामितस्ताभ्यां श्रमाऽभवत्ततः पितुः ॥ सार्थं निपातप्रकृतिप्रत्ययांश्च विनायकः ॥ १४ ॥

धानयुक्तः ॥ ११ ॥ १२ ॥ सार्था अर्थसहिता । अवरे कनिष्ठे अर्थयुक्ता यथासीत् तथाऽऽद्ये ज्येष्ठे नासीत् ॥ १३ ॥ श्रमाभवत् इति । भालचं द्राध्यापनेपितुः श्रमोभवत् । विनायकस्याध्ययने तु पितुः श्रमो न जात इत्यर्थः । उत्तरार्द्धमुत्तरान्वयि । अर्थसहितं यथास्यात्तथा । निपातान् अव्ययानि

दीन् ॥ १४ ॥ ततः तंत्रेभ्यः ॥ १५ ॥ प्रागुपास्त्या पूर्वजन्मोपासनया ॥ १६ ॥ सः यद्भूते तत् ताभिः सिद्धिभिः निमित्तभूताभिर्द्भुतमभवत् ॥ ॥ १७ ॥ तदेवाह वारीतिसार्द्धेन । न वारि उदकं यस्यां तस्यामुर्व्यामीप्सितं वारि अभवत् । ताभिः सिद्धिभिरित्यनुवृत्तिः सर्वत्र । अफलद्रौ निष्फलवृक्षे फलप्राप्तिरभवत् ॥ १८ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ १९ ॥ गूढमेतत्क्वापि नो ब्रूतेति तानाह । स्वसामर्थ्यगोपनार्थमित्यर्थः । विदुषोः कन्याभ्यां पित्रा विवाहितौ ॥ २० ॥ आद्यस्य भालचंद्रस्य स्त्री यमुनानाम्नी आसीत् । विनेतुः स्त्री गंगानाम्नी आसीत् । कृष्णपद्धियः कृष्णपादनिष्ठस्य ।

सकृदुच्चार्य पितृतस्तंत्राण्यैक्षत्ततः स्वयम् ॥ ज्ञात्वा मंत्रांश्च नो ब्रूते साक्षाद्वीक्षन् गुरोः कृपाम् ॥ १५ ॥ श्रीदेशिकेंद्र उवाच ॥ मंत्रज्ञोऽनुपदिष्टोपि प्रागुपास्त्या विनायकः ॥ ज्ञातः पित्रेत्यथो मंत्राः प्रोक्तास्तस्मै न षोडशी॥१६॥जपतोऽस्याऽखिलान्मंत्रान् प्राक् सिद्धाः सिद्धयोऽखिलाः ॥ ह्याविरासन्हि यद्भूते ताभिस्तच्चाभवद्भुतम् ॥ १७॥ वारीप्सितमवार्युर्व्यामफलद्रौ फलागमः ॥ प्रकाशोत्थंततमासितमो गाढं क्वचिद्दिवा ॥ १८॥ पयोऽभूदपयस्विन्यामज्ञः सज्ञमतिस्तथा ॥ सिद्धेश्चमत्कृतीस्तत्तत्कांक्षिभ्यः स दशाब्दिकः ॥ १९ ॥ दर्शयन्ब्रूत नो क्वापीत्याह बालान्विनायकः ॥ विवाहितौ ततः पित्रा कन्याभ्यां विदुषोरुभौ ॥ २० ॥ यमुनाद्यस्य गंगास्त्रीविनेतुः कृष्णपद्धियः ॥ साक्षाद्गंगाऽवतीर्णा किं विष्ण्वंशस्येव शंतनोः ॥२१॥ शंतनुर्गम्यतेऽयं हि नृतनोरात्मबोधतः ॥ शंकरत्वादथो पूर्वं तं त्यक्त्वा सा गताऽब्धिगा ॥ २२ ॥अतः सांत्वनमेतस्य कर्तुं धृततनोर्भुवि ॥ नृतनुः साप्यभूच्छांता पतिचित्तानुवर्तिनी ॥ २३ ॥

कृष्णसखस्येति यावत् । शंतनोः स्त्रीव विष्ण्वंशस्य तस्य स्त्री साक्षाद्गंगैवावतीर्णा किम् ॥ २१ ॥ विनायकस्य शंतनुसाम्यं तत्पत्न्याः गंगासाम्यं च दृढयति शंतनुरिति द्वाभ्याम् । अयं हि विनायकः आत्मज्ञानेन नृतनोः मनुष्यमात्रस्य सुखकरत्वात् शंतनुरिति गम्यते ज्ञायते । जनैरिति शेषः । शंतनुर्हि स्वहस्तस्पर्शमात्रेण जीर्णमपि नवीनं कृत्वा सर्वेभ्यः सुखं कृतवान् । तथायमपि आत्मबोधेन सर्वेषां सुखकर इत्यर्थः । अथ समुद्रगामिनी गंगा तं शंतनुं त्यक्त्वा गता ॥ २२ ॥ यतः पतिं त्यक्त्वा गता । अतः एतस्य विनायकरूपस्य भुवि धृततनोः शंतनोः समाधानं कर्तुं सा गंगैव मनुष्यदेहाऽभ

वत् । यतः शांता पतिचित्तानुवर्तिनी चासीत् ॥ २३ ॥ अस्य विनायकस्य । पूर्वार्द्धे सेत्यनुवृत्तिः । तरुणोपि सिद्धो विनायकः युवतौ पत्न्याम् इहा त्मनि प्राप्तायां सिद्धावपि चातिसक्तो नाभवदिति योज्यम् ॥ २४ ॥ तत्र हेतुगर्भं विशेषणं आत्मसुखे रत इति । पूर्वार्द्धे पूर्वान्वितम् । स विनायकः क्वचि योगं धत्ते योगधारणां करोति । क्वचित् महामंत्रान् जपति । क्वचित् स्वतः स्वस्मात् अनन्यः अभिन्न ईशः शिवः तस्य पूजाम् अंजः अनायासेन अर्च नपदैः पूजावस्तुभिः करोति । " पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुपु " इत्यमरः । अनायासलब्धैः पूजाद्रव्यैः पूजयतीत्यर्थः । इतः अनेन पुत्रेण गृहस्थाश्रमः कथं भवेदिति अंतः मनसि गुरुराह । एतादृशस्थितिमान् गृहस्थाश्रमं कथं करिष्यति प्रपंचेऽनासक्तत्वादित्यर्थः । शिखरिणी० ॥२५॥२६॥

स्वतंत्रस्याप्यनीहस्य लंघयत्यस्य नोदितम् ॥ युवापि युवतौ सोऽभून्नातिसक्तो विनायकः ॥ २४ ॥ सिद्धः सिद्धाविहाप्तायामपि चात्मसुखे रतः ॥ स्वतंत्रासीद्व्यवहृतिस्तस्य बाल्येपि तां शृणु ॥ २५ ॥ क्वचिद्योगं धत्ते क्व च जपति मंत्रांश्च महतः स्वतोऽनन्ये शार्चां क्व च स कुरुतेऽजोऽर्चनपदैः ॥ क्वचिच्चात्मारामोऽखिलमपि मृषापश्यादिति तं गुरुर्वीक्ष्याऽऽहांऽतः कथमथ गृहस्थाश्रम इतः ॥ २६ ॥ विनेताथो तातं क्वचिदिति वदत्यार्य मनसीति मे वांछा कार्यं भुवि किल मया तीर्थगमनम् ॥ यतो नो वर्णित्वे कृतमिद मिहोक्तं हि मुनिभिर्गुरुः श्रुत्वाऽऽहांतर्विदिति चाश्वेहि सुखतः ॥२७॥ अथो नत्वांबां प्राक्पितरमपि बंधुं च निरगाद्भ्रमन्कौ तीर्था नीक्षति च न तु साधूनभिमतान् ॥ अदंभानात्मज्ञान्मनुयुतिधृतिज्ञानपि तदा सह स्थातुं कैश्चिन्न समुदित एकश्चरति गाम् ॥ २८ ॥

अथ विनेता विनायकः कदाचित्पितरम् इति वदति । इति किं । हे आर्य इह ब्रह्मचर्ये इदं तीर्थाटनं मुनिभिरुक्तं यत् तत् यतो मया वर्णित्वे ब्रह्मचर्ये न कृतम् । अतस्तदर्थं तीर्थगमनं मया कर्तव्यमिति मे मनसीच्छा अस्तीति योज्यम् । गुरुः पुत्रवाक्यं श्रुत्वा । त्वं व्रज गच्छ च पुनः सुखेन आशु एहि आगच्छ । इति आह । यतः अंतर्वित् अंतर्वेत्ता योगाभ्यासं कृत्वाऽयं पुनरागमिष्यतीति ज्ञानवान् ॥ २७ ॥ अथ स पूर्वं मातापितरौ बंधुं च नत्वा निर्गतः सन् कौ पृथिव्यां भ्रमन् तीर्थानि ईक्षति अपश्यत् । च पुनः अभिमतान् स्वस्य इष्टान् दंभरहितान् आत्मज्ञान् मंत्रधारणायोगधारणाज्ञा

तत्र साधून् न ईक्षति । तदा कैश्चित्सह स्थातुं मुदितो नाभवत् । किं तु गां भूमिं एकश्चरति एकाकी स भूमौ चचारेत्यर्थः ॥ २८ ॥ [illegible]
तत्र स निरुपाधिस्थले रमति । अथोपसि स्नात्वा जलात्समीपं यथा स्यात्तथा कृतं संध्यादिकं तपो येन स कृतनित्यक्रियः [illegible]
रुद्रो वा अन्यो वा शिवलिंगादिरूपो देवोस्ति तस्मै नमस्कर्तुं संगवात् परं द्वादशघटिकानंतरं मौनव्रतवान् गच्छति ॥ २९ ॥ [illegible]
मतः पंचैकादशेत्यादिविषमसंख्यया सव्यं यथा स्यात्तथा भ्रमति । प्रदक्षिणं करोतीत्यर्थः । अथ ओकः स्वस्थानं प्रति [illegible]
कश्चितः पुरुष हे द्विजश्रेष्ठ त्वया मम गृहे भोजनार्थम् आगंतव्यमिति वदति यदि । तर्हि स इह तद्गृहे भोक्तुं व्रजति [illegible]

गतोयं यं ग्रामं रमति निरुपाध्योकसि जलात्समीपं स्नात्वाथोपसि हि कृतसंध्यामुखतपाः ॥ माहारुद्रो [illegible]
पुरे नमस्कर्तुं तस्मै व्रजति स मुनिः संगवपरम् ॥ २९ ॥ नमस्कृत्वा देवं भ्रमति परि सव्यं [illegible]
कश्चिद्विज इमम् ॥ द्विजार्यागंतव्यं मम गृह इहाश्नातुमिति स व्रजत्यात्तं भुंक्ते स्थिरमति इति [illegible] ॥३०॥ [illegible]
व्रजति बहिरात्मैकनिरतः स भुक्त्वाऽभुक्त्वान्नं सदृश इतरैरीक्ष्यत इति ॥ भ्रमन्गां योगार्थं निजन [illegible]
थाश्रमपदमबाधं किल जनैः ॥ ३१ ॥ विनायकेन चाश्रमः शुकस्य रम्य ईक्षितः समन्वितः [illegible] ॥ [illegible]
समाकुलो भ्रमद्द्रुपुष्पषट्पदः क्वचिन्न संति जीवमात्रके च वैरजापदः ॥ ३२ ॥

किं चिन्न याचतीत्यर्थः । इति भोजनार्थं मद्गृह आगच्छेति केनापि अनुदितः अप्रार्थितो यदि तदा स्थिरमतिः [illegible]
दित्यर्थः ॥३०॥ परेह्नि उक्ते काले संगवादूर्ध्वं स बहिर्व्रजति । आत्मैकनिष्ठः सः अन्नं भुक्त्वा अभुक्त्वा वा इतरजनैः [illegible]
जनेन ग्लानियुक्तो वा नावलोक्यते । सदानंदत्वसाम्यादिति भावः । पृथ्वीं भ्रमन् योगार्थं योगाभ्यासार्थं निजनमुखं निर्जन [illegible]
सः जनैः अबाधं उपद्रवरहितं निर्जनमिति यावत् । शुकस्याश्रमपदं प्राप्तः किल ॥ ३१ ॥ अथ पंचभिः शुकाश्रमं वर्णयति । [illegible]

रम्यः शुकस्याश्रमोऽवलोकितः । किंभूत आश्रमः सुपादपैः अनेकजातिपक्षिभिरन्वितः । लतागृहैः निकुंजैः समाकुलो व्याप्तः । भ्रमंतः द्रुमपुष्पेषु षट्पदाः भ्रमराः यस्मिन् । यत्र कचिज्जीवमात्रे वैरजाः परस्परवैरभवाः आपदः दुःखानि न संति निर्वैरजीवयुक्त इत्यर्थः । चामरवृत्तम् ॥ ३२ ॥ निर्वैरत्वं दर्शयन्नाह किलेति । इहाश्रमे उंदुराः मार्जारैः सह विहारिणो भवंति किल । भुजंगाः नकुलैः सह विहारिणो भवंति । अथात्र ये जंगमाः जीवाः संति ते सिंहादिभ्यो या भीतिस्तां गताः प्राप्ता न भवंति।तरुषु वृक्षेषु ये विहंगमाः पक्षिणस्ते अनेकजातयोपि एकजातितुल्यः संगमो येषां ते तथाभूताः अतिप्रेमयुक्ता भवंतीत्यर्थः ॥३३॥ किं च अपुष्पिणः पुष्परहिता अपि द्रुमाः सपुष्पवल्लिभिः शोभिनः अतिप्रीतियुक्ता भवंति तथेत्यर्थः "वल्लिस्तु वेल्लिःस्मृताः"

किलोंदुरा इहौतुभिर्विहारिणो भुजंगमास्तथैव बभ्रुभिः सहाथ येत्र संति जंगमाः ॥ न सिंहमुख्यभीतिगा द्रुमेषु ये विहंगमास्त्वने कजातयोपि चैकजातितुल्यसंगमाः ॥३३॥ द्रुमाः सपुष्पवल्लिभिश्चपुष्पिणोपि शोभिनः स्ववत्सुताभिरस्त्रिना यथा इवातिलोभिनः ॥ युताः फलान्वितद्रुमाः पतत्रिभिः सुशब्दिभिर्धनान्विता इवार्यकास्तु याचकैः स्वलब्धिभिः॥३४॥अदर्शनाश्च योगशक्तिभिर्वसंति योगिनः शुकादयः सुखादिवांगनाभिरेव भोगिनः॥न शस्त्रिसंगमादृते गतिर्हि यत्र मानवी सुदीर्घवृक्षपत्रतः क्वचित्प्रभास्ति भानवी॥३६॥

इति वाचस्पतिवाक्याद्वल्लिशब्द इकारांतः।यत्र फलान्वितद्रुमाः सुशब्दयुक्तपक्षिभिर्युक्ताः संति । यथा धनयुक्ताः आर्यकाः दातारः स्वलब्धिभिः स्वस्य धनस्य लब्धिः प्राप्तिर्येषां तैः । सुशब्दिभिरित्युभयसंबंधि । आशीर्वादशब्दं कुर्वद्भिर्याचकैर्युक्ता भवंति तथेत्यर्थः ॥ ३४ ॥ यत्र अदर्शनाः गुप्तरूपाः शुकादयो योगिनश्च योगशक्तिभिः सह सुखेन वसंति । यथा भोगिनो विषयिणः अंगनाभिः सह गुप्तरूपाः सुखेन वसंति तथा । रहसि सुखभोगित्वसाम्येनायं दृष्टांतः यत्र मानवी मनुष्याणां गतिर्गमनं शस्त्रधारिणां संगमं विना नासीत् । बहुभीतिसंभवं मत्वा जनाः शस्त्रवद्भिः सहैव यत्र गच्छंति नैकाकिन इत्यर्थः ।

यत्र सुदीर्घवृक्षपत्रतः तच्छाययेति यावत् । भानवी सूर्यस्य प्रभा क्वचिदस्ति न सर्वत्रेत्यर्थः ॥ ३५ ॥ यत्र सदंबुना पवित्रोदकेन अखंडिताः निर्झराः प्रवा हवंतः संति । यत्र सांगनाः निर्जरा देवाश्च शुकस्य पाषाणरूपस्य नतौ नमस्कारविषये यांति । यत्र गुहागतस्य शुकयोगिनः पाषाणमयौ वृषौ वृषणौ यौ रंभ याऽप्सरसा ईक्षितौ दृष्टौ । तौ क्षितौ पृथिव्यां नृभिर्देवैश्च पूजितौ भवतः । यदा रंभा शुकं मोहयितुं प्रवृत्ता । तदा शुको गुहायां प्रविष्टः सन् स्ववृषणा ववशेषितवान् । तद्दिनमारभ्य तत्र पाषाणमयवृषणयोः पूजनं नरैर्देवैश्च क्रियत इति प्रसिद्धम् ॥ ३६ ॥ ३७ ॥ तस्य शुकस्य आश्रमजले आप्लुतिः स्नानं यस्य कृतस्नान इत्यर्थः । बिले गुहायां तस्थौ । चैलाजिनकुशेषु आसनं स्थितिर्यस्य । तत्र योगाभ्यासं कृतवानित्यर्थः ॥ ३८ ॥ तमेव योगाभ्या

अखंडिताः सदंबुना प्रवाहिणो हि निर्झरा नतौ शुकस्य यांति यत्र सांगनाश्च निर्जराः ॥ गुहागतस्य योगिनः शुकस्य रंभयेक्षितौ वृषौ हि यौ दृषन्मयौ नृदेवपूजितौ क्षितौ ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ इत्थं शुकाश्रमं वीक्ष्य जनसंबाधवर्जितम् ॥ अभ्यस्तुं चिरतो योगं मुमुदेंतर्विनायकः ॥ ३७ ॥ दृषन्मयं शुकं नत्वा तदाश्रमजलाप्लुतिः ॥ कृतावश्यो बिले तस्थौ चैलाजिनकुशासनः ॥ ३८ ॥ देशिकेंद्र उवाच ॥ स च प्राणायामी स्वगुदकृतपार्ष्णिः समतनुः कुलादूर्ध्वं कुर्वन्ननिलममुनाऽग्निं स्वभवने ॥ ज्वलंतं कृत्वाभ्यां परचितिमथोत्थाप्य च तया विधेर्ग्रंथिं भित्त्वाऽनुदशदलगां पक्षिपगतेः ॥ ३९ ॥

तत्प्रकारमाह स चेत्यादिपंचभिः परान्वितं पद्यम् । अथ सः विनायकः प्राणायामी प्राणायामवान् स्वगुदस्थाने कृतः पार्ष्णिर्येन सः समतनुः सम कायशिरोग्रीवः कुलात् मूलाधारात् सकाशात् अनिलं वायुं ऊर्ध्वं कुर्वन् उत्क्षिपन् अमुना वायुना स्वभुवने स्वाधिष्ठाने स्थितमग्निं ज्वलंतं प्रदीप्तं कृत्वा आभ्याम् अग्निवायुभ्यां पराचितिं कुंडलिनीमुत्थाप्य जागृतां कृत्वा तया कुंडलिन्या विधेः ग्रंथिं षट्दलगतां ब्रह्मग्रंथिं भित्त्वा अनु अनंतरं दशदलगतां मणिपूराख्यां नाभिस्थानस्थितां पक्षिपगतेः गरुडवाहनस्य विष्णोश्च ग्रंथिं भित्त्वा ततः अनाहतस्थां द्वादशदलहृदयकमलगतां

रौद्रीं रुद्रस्य ग्रंथिं दलयति । भेदयति । अधोमुखं हृदयकमलं ऊर्ध्वमुखं करोतीत्यर्थः ॥ ३९ ॥ किंच विशुद्धाज्ञे कंठभ्रूमध्यस्थे षोडशदलद्विदले अति क्रामति । हि यतः रिपुभवैः षट्जन्मभिः युतिज्ञः योगमार्गज्ञः सहस्रदले अभित् स्वस्माद्भिद्रहिता स्वाभिन्नेति यावत् सा चासौ अभिमता इष्टदेवता च तां ध्यायन् अत्र सहस्रारे द्रवीभूतविधोः सकाशात् यत्पीयूषम् अमृतं तेन सर्वशरीरगतनाडीः एकोत्तरशतसंख्यकाः सुखयति पुष्टाः करोति । तदुक्तं वामकेश्वरतंत्रे—भुजंगाकाररूपेण मूलाधारं समाश्रिता । शक्तिः कुंडलिनी नाम बिसतंतुनिभा शुभा ॥ मूलकंदफलाग्रेण दंष्ट्राकमलकंदवत् । मुखेन पुच्छं संगृह्य ब्रह्मरंध्रसमन्विता ॥ पद्मासनगतः स्वस्थो गुदमाकुंच्य साधकः । वायुमूर्ध्वं गतं कुर्वन् कुंभकाविष्टमानसः ॥ वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् ।

ततो रौद्रीं ग्रंथिं दलयति तथाऽनाहतगतां विशुद्धाज्ञे चाप्याक्रमति हि युतिज्ञो रिपुभवैः ॥ सहस्रारे ध्यायन्नभिदभिमतामत्र च गलद्विधोः पीयूषेणाऽखिलतनुगनाडीः सुखयति ॥ ४० ॥ शिवैक्यादात्मीयं सुखमनुभवन्यामदलतः क्रमान्मूलाधारं व्रजति च समाधेरुपरमे ॥ ततो यामेनाह्ना प्रतिदिनमिति द्वित्रिदिनकं समाधिं षण्मासावधि समकरोद्वर्धितमिति ॥ ४१ ॥ समाधेरुत्थाने तरुगलितपत्राशनपरोऽवसत्पुण्यारण्ये सततसुहृदात्मैकसुखवान् ॥ समायातैः कैश्चिद्व्रजति स च दृश्यः क्व च न वा स्वसिद्धेः सामर्थ्ये जितनिखिलभीश्चोज्झितफलः ॥ ४२ ॥

ज्वलनाघातपवनाघातैरुन्निद्रितोहिराट् ॥ ब्रह्मग्रंथिं ततो भित्त्वा विष्णुग्रंथिं भिनत्त्यतः । रुद्रग्रंथिं विभिद्यैव कमलानि भिनत्ति षट् ॥ सहस्रकमले शक्तिः शिवेन सह मोदते । सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥ इति ॥ ४० ॥ एवं क्रमेण समाधिसुखमनुभूय । तस्मादुत्थानक्रममाह । शिवैक्या दिति । तत्र शिवयोरैक्येन आत्मनः सुखम् अनुभवन् क्रमेण मूलाधारं व्रजति । समाधेः उपरमं च व्रजति । यामदलतः चतुर्घटिकापर्यंतम् । एकप्रहरेण दिवसेन च समाधिं अकरोत् । इति प्रकारेण प्रतिदिनं द्विदिनं त्रिदिनं इति क्रमेण षण्मासावधि वर्द्धितं समाधिं कृतवान् ॥ ४१ ॥ समाधेः सकाशा दुत्थाने सति वृक्षाणां गलितपत्राशनपरः सततसुहृत् प्रियः आत्मा तदेकसुखवान् पुण्यारण्ये शुकाश्रमेऽवसत् । स्वसिद्धिसामर्थ्येन क्वचित्समागतैः कैश्चि

त्पुरुषैः दृश्यो भवति कदाचित् न वा दृश्यो भवति । स्वसिद्धिसामर्थ्येन जिता निखिलेभ्यः सर्वत्र भीः येन निर्भय इत्यर्थः । च पुनः उज्झितफलः निस्पृहः । एवं स्वातंत्र्येण योगाभ्यासं कृतवानित्यर्थः ॥ ४२ ॥ नृगृहाः पिशाचाः । प्रगतिपवनस्य प्रचंडवायोर्भयं मशका इव । तस्य भयं कर्तुं उत च पुरतः स्थातुं कुतः ईशाः न कुतोपि समर्था इत्यर्थः । यतः तत् भयं भिद्बुद्धेर्भेदबुद्धेर्भवति । इदं सर्वत्र शिवदृष्टेः कुतः स्यात् । "द्वितीयाद्वै भयं भवति" इति श्रुतेः ज्ञानिनो न कुतोपि भयमित्यर्थः ॥ ४३ ॥ षडुद्भवैः षड्जन्मभिः येन विनायकेन कर्त्रा सद्गुरोः सांदीपनेः सकाशात् साक्षात्कृष्णेन सह योगः अभ्यासितः सन् आप्तः प्राप्तः ॥ ४४ ॥ ज्ञानशक्त्येति सार्द्धान्वयः । अजरंध्रं ब्रह्मरंध्रं । तत् ब्रह्मरंध्रं शिथिलं चकार । शैथिल्याभावे तस्य भेदो न स्यादि

क्वचिद्विघ्नं कर्तुं विपिनगतमायांति भयदाः पिशाचा नेशास्तत्पुरत उत गंतुं किल भयम् ॥ कुतस्ते कुर्वंति प्रगतिपवनस्येव मशका भवेत्तद्भिद्बुद्धेरखिलशिवदृष्टेः कुत इदम् ॥ ४३ ॥ श्रीदेशिकेंद्र उवाच । तस्येत्यभ्यासतः पक्वो योगोभूद्धि षडुद्भवैः ॥ येनाभ्यासत आप्तोद्धा कृष्णेन सह सद्गुरोः ॥ ४४ ॥ ज्ञानशक्त्या कुंडलिन्या भित्त्वा चक्राणि षट् क्रमात् ॥ गत्वाजरंध्रं तन्मार्गादायुषोंते परं पदम् ॥ ४५ ॥ ज्ञानशक्तियुतो गंतुं शिथिलं तच्चकार सः ॥ अथो यथा क्रियाशक्तिं कृष्णोऽध्यंगुष्ठभेदतः ॥ ४६ ॥ वशीकृत्य करं प्राप्तस्वं प्राप स्वाधीनजन्मवान् ॥ विनायकोपि कृष्णोक्तं स्मृत्वा कर्तुं तथा स्वयम् ॥ ४७ ॥ अभ्यासाद्वेद नान्ये यद्विदुः श्रेष्ठाश्च योगिनः ॥ क्वापि नैवोक्तमखिले योगसूत्रेऽपि तत्कृता ॥ ४८ ॥

त्यर्थः ॥ ४५ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ४६ ॥ यथा कृष्णः पादांगुष्ठभेदेन क्रियाशक्तिं वशीकृत्य ब्रह्मरंध्रतः स्वपदं प्राप्तवान् । यतः स्वाधीनजन्मवान् । कृष्णे अंगुष्ठभेदस्तु यदा जराव्याधो मुसलावशिष्टं लोहं मृगबुद्ध्या कृष्णचरणे चिक्षेप । तदा तन्निमित्तेनांगुष्ठभेदं कृतवान् इत्यतिरहस्यम् । तथा च स्वाधीनज्ञानक्रियाशक्तिकस्यैवावतारग्रहणे स्वातंत्र्यमिति भावः। तथा विनायकोपि पूर्वजन्मनि कृष्णोक्तं कर्तुम् अभ्यासेन स्वयं वेद ज्ञातवानित्यन्वयः॥ ४७॥ अन्ये श्रेष्ठा अपि योगिनः यत् अंगुष्ठभेदादि कर्तुं न विदुः । तेषां तस्य ज्ञानमेव नास्ति । कुतस्तदाकरणमिति भावः । तत्कृता योगशास्त्रकर्त्रा पतंज

ल्लिना योगसूत्रे कचिदपि नोक्तम् । अंगुष्ठभेदाख्यं रहस्यमिति शेषः ॥ ४८ ॥ ननु तर्हि कुत्रोक्तमेतद्रहस्यमित्याशंक्य उपनिषदि सूचितमित्याह । उक्तमिति । उपनिषद्गर्भे उपनिषद्धृदये सृष्टेः क्रमे विलोमतः वैपरीत्येन उक्तमस्ति । तथा हि । सृष्टिमुपक्रम्य श्रूयते । एतमेव सीमानं विदार्य प्राविशत इति प्रपदाग्रंमाभिनदिति च । तत्र एतमेव सीमानमिति ब्रह्मरंध्रेण ज्ञानशक्तेः प्रवेशः प्रपदाग्रमिति अंगुष्ठद्वारा क्रियाशक्तेश्च प्रवेश उक्तः । तेन च ज्ञानक्रियाशक्त्योर्निर्गमोपि तथैव सूचितो भवति । अतिरहस्यत्वाद्वैपरीत्येन सृष्टिमुखेन उक्तमिति भावः ॥ ४९ ॥ अथ तत्र शुकनदस्य यक्षिणीदर्शन प्रसंगमाह । अथेति ॥ ५० ॥ अतो वर्णयति सहसेति चतुर्भिः । सुलक्षणा सुलक्षणावयवा महसा तेजसा युक्ता यक्षिणी अंबरतः आकाशात्सह साऽवतरत् । सा कृतक्षणा कृतक्षणावकाशा सती इहाश्रमे अक्षिणी परिवर्त्य भ्रामयित्वा गुहसाम्यं स्कंदोपमानं विनायकं ददृशे वियोगिनीवृत्तम् ॥

उक्तं ह्युपनिषद्गर्भे क्रमे सृष्टे विलोमतः ॥ स्वयं कृष्ण इदं वेद तन्मित्रत्वाद्विनायकः ॥ ४९ ॥ अथैकदा ययौ माघशिवरात्रौ निशीथके ॥ पूजासाहित्यसहिता यक्षिणी शुकमर्चितुम् ॥ ५० ॥ सहसाम्बरतस्तु यक्षिणी महसाव्यावतरत्सुलक्षणा ॥ इह सा परिवर्त्य चाक्षिणी गुहसाम्यं ददृशे कृतक्षणा ॥ ५१ ॥ वदति स्वमुखाद्गुरो जयाऽऽमदतीव्राऽशुचिहृत्पराजया ॥ विदातिक्रमएव निर्जया सुदती चासमयांगजन्यया ॥ ५२ ॥ अरुणं प्रभया निरीक्ष्य सा तरुणं तं वपुषोरुवक्षसा ॥ करुणं त्रिभये निरीक्ष्य साकरुणं हीषु रुषेव रक्षसा ॥ ५३ ॥

॥ ५१ ॥ आ अतिशयेन यो मदः स्वरूपोन्मादस्तेन तीव्रा दुर्दर्शा अत एव अशुचिहृदाम् अपवित्रमनसां पराजयो यस्याः सा स्वमुखेन जयगुरो इति वदति । सुदती सा विदां ज्ञानिनाम् अतिक्रमे पराभवे एव निर्जया जयरहिता आत्मज्ञानिपराभवे असमर्थेत्यर्थः । अंगजन्या या मा लक्ष्मीः शोभा तया युक्तापीत्यर्थः ॥ ५२ ॥ उरु वक्षस्थलं यस्य तेन वपुषा देहेन उपलक्षितं कांत्या अरुणवर्णं तरुणं त्रिभये । त्रिभ्यः तापत्रयेभ्यः भयं यस्य तस्मिन्न शरणागते करुणं करुणाकरं तं विनायकं सा यक्षिणी निरीक्ष्य । इषु । ' इकार उच्यते कामः । इति कोशात् इः कामस्तदादिषु षड्रिपुषु रक्षसेव क्रूरया रुषा क्रोधेन साकरुणं अकरुणासहितं निर्दयमिति यावत् । कामादिजये शूरं परीक्ष्य सुनता सुनम्रा सती । इति वक्ष्यमाणं वदतीति परेण पद्येना

स्यान्वयः ॥ ५३ ॥ किंभूतं देशिकं गुरुरूपं पु० किं० प्रणतानां शरणागतानां यत् अज्ञत्वं मूर्खत्वं तस्य हरः छेदकः ज्ञातासिः ज्ञ.नित्वखड्गो यस्मिन् तं स्वार्थे कप्रत्ययः। शरणागताज्ञाननाशे ज्ञानशास्त्रवानित्यर्थः। पु० किं० जनतान्यं जनसमूहभिन्नम् अलौकिकमित्यर्थः। पु० किं० न पाशबंधनं यस्य क्ष्यादिवासनारहितं। पु० किं० विनतापुत्र इव गरुड इव भवाहेः संसारसर्पस्य नाशकम्। भवनिवर्तकमित्यर्थः ॥ ५४ ॥ तद्वाक्यमेवाह। यक्षलोकगते त्यादिषोडशभिः ॥ ५५ ॥ कामुकैर्जप्यंते। मंत्रभेदा इत्यपकर्षः। कामभेदैरहमेव तान् प्रति तत्कामभेदैः सिद्धिप्रदा भवामि। पृथक् तनुः पृथग्रूपा ॥

सुनता वदतीति देशिकं प्रणताज्ञत्वहरज्ञतासिकम् ॥ जनतान्यमपाशबंधनं विनतापुत्रभवाहिनाशकम् ॥ ५४ ॥ यक्षिण्युवाच ॥ यक्षलोकगताहं हि यक्षीणी कामरूपिणी ॥ देवतैवास्मि सन्मंत्रभेदाः संति चतुर्दश ॥ ५५ ॥ जप्यंते कामिभिः कामभेदैस्तानाशु सिद्धिदा ॥ अहमेवाखिलैर्मंत्रैः पृथग्ध्यानैः पृथक्तनुः ॥ ५६ ॥ शिवभक्तास्मि मे स्थानं शिवरूपे वटद्रुमे ॥ शिवद्रोहींद्दुराचारा न्पीडयामि मलीमसान् ॥ ५७ ॥ साहं पर्वणि शैवेद्य ज्योतिर्लिंगानि सर्वतः ॥ दृष्ट्वा संपूज्य गोकर्णे चात्मलिंगं महाबलम् ॥५८॥ प्राप्ताऽस्म्यत्र गुरोः स्थानं मुहुस्तन्नामकीर्तना ॥ अर्चितुं श्रीगुरुं हीत्थं प्रत्यब्दं चागमोऽत्र मे ॥५९॥ नैकः कश्चिच्च दृष्टोऽत्र मनुजो गहने वने ॥ कः स्थातुं देहधीर्हीशः सर्पव्याघ्रभयादिह ॥ ६० ॥ शास्त्रान्मृषातनुः कश्चिज्ज्ञात्वाप्यच्छिन्नवासनः ॥ जीवात्मैक्यप्र माभ्यासहीनो नैवाभयं व्रजेत् ॥ ६१ ॥

॥ ५६ ॥ मलीमसान्। मलिनपुरुषान् ॥ ५७ ॥ सेत्यादि परान्वयि। शैवपर्वणि शिवरात्र्यां सर्वतः सर्वाणि ॥ ५८ ॥ गुरोः शुक्रस्य तस्य गुरोः नाम कीर्तयति सा हि यतः प्रत्यब्दं शिवरात्र्यां श्रीगुरुम् अर्चितुं ममात्रागमो भवति ॥ ५९ ॥ कश्चित् एकोपि मनुजोत्र गहने वने मया न दृष्टः हि यतः सर्पव्याघ्रभयेनेह स्थातुं को देहबुद्धिरीशः समर्थोस्ति न कोपि समर्थ इत्यर्थः ॥ ६० ॥ शास्त्रात् संप्रदायिगुरुं विना केवलशास्त्रज्ञानेन तनुं देहं मृषेति ज्ञात्वापि कश्चित्पुरुषः न च्छिन्ना वासना यस्य सः आत्मैक्यस्य या प्रमा ज्ञानं निश्चयः तस्याः अभ्यासेन रहितः अभयं निर्भयपदं न

प्राप्नोति ॥ ६१ ॥ त्वं तु न तादृश इत्याह किलेति द्वाभ्याम् । अनेकजन्मभिः गुरोः सकाशात् पुनः पुनः जीवात्मनोर्योगं ऐक्यं वेत्ति । स त्वं तस्य जीवात्मैक्यस्य अभ्यासे त्यक्तम् आलस्यं येन सः अत एव चरमजन्मनि पक्कयोगः सन् अधुनात्मनि कल्पितं समुद्रे तारंगं तरंगसमुदायमिव विश्वं पश्यसि । हि यतः त्यक्तार्थेहः त्यक्तविषयवासनः । अत एव स्वसौख्यवान् । आत्मानंदवान् तस्मात्त्वमेव निर्भयोसीत्यर्थः ॥ ६२ ॥ ६३ ॥ मया कर्त्र्या । आत्मप्राप्त्या या कांतिस्तया त्वम् इत्थं पूर्वोक्ताधिकारवानिति ज्ञातोसि । किंभूतया कांत्या । कलियुगे न अन्यगा अन्यपुरुषे गता

किलानेकभवैर्भूयो गुरोर्जीवात्मयोगवित् ॥ तदभ्यासोज्झितालस्यस्त्वमतश्चरमे भवे ॥ ६२ ॥ पक्कयोगोधुना विश्वं पश्य स्यात्मनि कल्पितम् ॥ तारंगमिव सिंधौ हि त्यक्ताऽर्थेहः स्वसौख्यवान् ॥ ६३ ॥ ज्ञातोसीत्थं मयाऽऽत्माप्त्या कांत्या नान्यगया कलौ ॥ नो चेत्को मां समीक्ष्यैकामेकांतेऽलौकिकीं स्त्रियम् ॥ ६४ ॥ नैष्यत्यनंगवशतां ह्यरुक्पुष्टस्तनुर्युवा ॥ भ्रंशितास्तापसाः शांताः कुशलाः साधवोऽमिताः ॥ ६५ ॥ दर्शनादेव चास्पृष्टाः कामिनोऽकामिनोऽपि च ॥ वटमूले क्वचित्काले भवेन्मद्दर्शनं नृणाम् ॥ ६६ ॥ मां दृष्ट्वाऽस्पृहस्याऽपि मनश्चेच्छति मद्गतिम् ॥ क्षणाद्भवाम्यदृश्याहं स तु मामसकृत्स्मरन् ॥ ६७ ॥

तया । त्वय्येवावलोकितयेत्यर्थः । नो चेत् एवमधिकारी त्वं न स्याश्चेत् । कः पुरुषो मामेकाकिनीं अलौकिकीं स्त्रियमेकांते समीक्ष्य रोगरहितः पुष्टदेहस्तरुणः सन् कामवशतां नैष्यति । अपि तु सर्वेपि कामाधीनाः भवंतीति नियोज्यम् ॥ ६४ ॥ भ्रंशिताः । मयेति शेषः ॥ ६५ ॥ पूर्वार्द्धे पूर्वान्वयि । मया अस्पृष्टा अपि दर्शनमात्रेणैव भ्रंशिता इति योज्यम् । अकामा अपि दर्शनमात्रेण सकामा भवंतीति भावः ॥ ६६ ॥ अहं तु क्षणात् क्षणमात्रेणादृश्या गुप्ता भवामि । स तु मयावलोकितः पुरुषस्तु मां प्रति असकृत् स्मरन् । सकृत् दृष्टापीतिपूर्वान्वितं । अभ्यासात् अभ्यासदार्ढ्येन निशि

स्वप्ने मां स्वांके शयानामिव नित्यं पश्यतीति संबंधः । स्रवत् वीर्यं शुक्रं यस्य सः क्रमेण अनसुः गतप्राणो भवति ॥ ६७ ॥ ६८ ॥ किं च सः कामेन कश्मलदृक् मलिनत्वबुद्धिः दुर्गतिं च एति प्राप्नोति । हि यतः अनात्मधीः देहबुद्धिः । देहतादात्म्याध्यास एव सर्वदुःखकारणमित्यर्थः ; मंत्रवेत्ता शिवभक्तो दैवयोगेन प्राप्नुयात् तर्हि तं यक्षिणीग्रस्तं पुरुषं इह लोके रक्षति ॥ ६९ ॥ हि यतः शिवभक्तान् आत्मविदः पक्वयोगांश्च पुरुषान् द्रष्टुं समर्था नास्मि । कुतस्तरां तान्मोहयितुं समर्था भवामीति । एतादृशाधिकारवान्यो मद्गुरुः शुकः स त्वमेवासीत्याह । मन्य इति । अहं तु त्वां गुरुं साक्षा-

सकृद्दृष्ट्वाप्यथाऽध्यासान्नित्यं स्वप्ने निशीक्षते ॥ शयानामिव मां स्वांके स्रवद्वीर्योऽनसुः क्रमात् ॥६८॥ कामकश्मलदृक् चैति दुर्गतिं स ह्यनात्मधीः ॥ मंत्रविच्छिवभक्तश्चेद्दैवाल्लब्धोऽवतीह तम् ॥६९॥ शिवभक्तात्मवित्पक्वयोगान्नेशास्मि चेक्षितुम् ॥ मन्ये त्वां तु गुरुं साक्षाच्छुकनामाऽस्तु वित्त्वयि ॥७०॥ श्रीदेशिके०उ०॥ इत्युक्त्वा शुकमभ्यर्च्य नत्वा भूयो विनायकम् ॥ सा गतांतर्द्धिमणु नो च्युति स्त्वात्मसुखाद्गुरोः ॥ ७१ ॥ ततो वर्षांतरे पौषमासांतामादिने ययौ ॥ सूर्यग्रहमहापर्वार्द्धोदयाख्यं च पुण्यदम् ॥७२॥ केचित्स्नातुं ययु स्तत्र भक्त्या श्रीशुकमर्चितुम्॥हिंस्रभीतेर्दूरशब्दैर्वाद्यैश्चाढ्याःसुशस्त्रिभिः ॥७३॥ स्नात्वांते चार्चयंतस्ते शुकमश्मवृपाकृतिम् ॥ ददृशुश्च गुहासंस्थं योगिनं तं विनायकम् ॥ ७४ ॥ मीलिताक्षं समाधिस्थं साक्षाच्छुकमिवापरम् ॥ तूष्णीं नत्वाऽखिलाः पाकं चक्रुस्ताव त्समाधितः ॥ ७५ ॥ तमुत्थितं स्नपंतं च नत्वा सर्वेऽपि यात्रिणः ॥ प्रार्थयंतोऽसकृच्चाहुर्योगिन् भुंक्ष्वेति पाचितम् ॥ ७६ ॥

च्छुकमेव मन्ये । हे वित् ज्ञानिन् त्वयि शुकनाम अस्तु अतः परं शुकानंदनामा त्वं भविष्यसीत्यर्थः ॥ ७० ॥ अंतर्द्धिं अंतर्धानं । गुरोः विनायकस्य आत्मसुखात् च्युतिः यक्षिणीदर्शनेन विवशत्वं किंचिन्नासीत् ॥ ७१ ॥ अमार्कश्रवणे पाते युक्ता चेत्पौषमाघयोः । अर्द्धोदयः स विज्ञेयः किंचिन्न्यूनो महोदयः ॥ इति चार्द्धोदयाख्यं महापर्व अहोरात्रमासीदित्यर्थः ॥ ७२ ॥ हिंस्रभीतेर्व्याघ्रादिभयात् हेतोः । दूरं शब्दो येषां तैः भेर्यादिवाद्यैः शस्त्रधारिभिश्च युक्ताः ॥ ७३ ॥ अंते पर्वांते चकारात्पर्वादौ च ॥ ७४ ॥ तावत्समाधित इति परान्वयि ॥ ७५ ॥ ७६ ॥

उत्तरार्द्धमुत्तरान्वयि ॥७७॥ तृष्णोद्भवाय आशोत्पादनाय । सोतिनिस्पृहः इत्युत्तरान्वितम् ॥७८॥ नैवापश्यत्फलादिकमिति शेषः ॥ ७९ ॥ शस्त्रधारी मंत्री सर्पादिमंत्रवेत्ता बलिष्ठोपि यत्राश्रमे स्थातुं न समर्थोऽभवद्धि । उत्तरार्द्धमुत्तरान्वयि । पश्चाद्भैः पश्चाद्गामिभिः ॥८०॥ पक्षयुक्तकृमिषु पतंगेषु गतेषु सत्सु द्वीपो गज इव ॥ ८१ ॥ द्युमणेः सूर्यस्य अस्ते अस्तमानसमये ॥ ८२ ॥ अथ विनायकस्य परदेवतादर्शनं विवक्षुस्तत्रादौ रात्रिवृत्तांतमाह । अथेत्यादि सार्द्धाभ्यां द्वाभ्यां । मणिभिः शिरोगतरत्नैः प्रभा येषां ते वायुभक्षकाः भुजंगाश्चेरुः । अथापि आश्रमगतजीवानां हिंसका न बभूवुः ॥ ८३ ॥ स्ववृत्तये

नेति हस्तेन संकेतं तेभ्यश्चक्रे स योगिराट् ॥ ग्राम्याण्येकेथ वन्यानि फलान्यग्रेऽस्य भक्षितुम् ॥७७॥ स्थापितान्यपि ताम्रोत्थाः कौश्चि द्रौप्याः सुवर्णजाः ॥ मुद्रास्तृष्णोद्भवायाग्रे निहिताः सोतिनिस्पृहः ॥ ७८ ॥ नैवापश्यद्धि वांतान्नमिव सत्कृतभोजनः ॥ याम शेषादिनेऽथो ते निर्ययुर्निखिलास्ततः ॥ ७९ ॥ शस्त्री मंत्री बलिष्ठोपि स्थातुं हीशोत्र नो निशि ॥ कैश्चित्फलाद्यै चाग्रस्थे पश्चाद्गैश्च शठैर्हते ॥ ८० ॥ विनेताऽण्वपि नो खिन्नो यो हि तुल्याश्मकांचनः ॥ गतेषु तेषु स्वस्थोऽभूद्द्वीपः पक्षिकृमिष्विव ॥ ८१ ॥ अथास्ते द्युमणेः संध्यां शैवं च भजनं तथा ॥ कृत्वा तस्थौ स योगींद्रः स्वोपास्याभिगतांतरः ॥ ८२ ॥ श्रीदेशिके० उ० ॥ अथांचकारेत्र महावनेऽभूच्छब्दः शिवोलूकनिशाखगानाम् ॥ मणिप्रभाश्चानिलभुग्भुजंगाश्चेरुर्हि नैवाश्रमजीवहिंस्राः ॥ ८३ ॥ व्याघ्रादयश्चोरुल तागृहेभ्यो निर्गत्य जग्मुर्बहिराश्रमाद्धै ॥ स्ववृत्तये नात्तुमिहाणु हीशाः सत्त्वं मुनेरीशतया निबद्धाः ॥ ८४ ॥ महापिशाचाः परितो बहिस्तात्क्रीडंति चानात्मजनोरुपीडाः ॥ इत्थं महारण्यगदेशिकस्याऽग्रे चाविरासील्ललितैव नारी ॥ ८५ ॥

स्वस्य उपजीविकार्थं इहाश्रमे अणु अल्पमपि सत्त्वं जीवजातं अत्तुं भक्षितुं ईशाः समर्थाः न भवंति । हि यतः मुनेः शुकस्य ईशतया शिक्षकत्वेन निबद्धाः । शुकमुनेर्भयेन तदाश्रमे जीवभक्षणं कर्तुमसमर्थाः संतो स्वोपजीवनार्थम् आश्रमाद्बहिर्गच्छंतीत्यर्थः ॥ उप० ॥ ८४ ॥ अनात्मजनानाम् आत्मविद्भिन्नाना पुरुषाणां उरुः महती पीडा येभ्यस्ते । एवं महारण्यगतस्य देशिकस्य विनायकस्याग्रभागे नारीरूपा ललितैव आविर्बभूव ॥ उप० ॥ ८५ ॥

महार्हम् अमोल्यं वस्त्रं यस्याः । कमनीयं सुंदरं गात्रं वपुः यस्याः । अनेकानि विचित्राणि आभरणानि यस्याः । एणस्य मृगस्य नेत्रे इव नेत्रे यस्याः । अनेकानि विचित्राणि आभरणानि यस्याः । सुहास्यं वक्त्रं यस्याः सा ललिता विनेत्रा विनायकेन दृष्टा । किं भूता । अभिगता प्राप्ता अग्रगोत्रा समीपभूमिर्यया विनायकाग्रभूमिं प्राप्तेत्यर्थः । गोत्राकुः पृथिवी पृथ्वी इत्यमरः। पुनः किं०। श्रुतिगौ कर्णभूषणभूतौ इंदुमित्रौ चंद्रसूर्यौ यस्याः सा ताटंकयुगुलीभूततरणीडुपमंडलेति ब्रह्माण्डपुराणे देव्याः कर्णभूषणयोः सुवर्णमयत्वात् चंद्रसूर्यरूपत्वमित्यर्थः ॥ ८६ ॥ अथ विनेता विनायकः विजने निर्जने वने तां दृष्ट्वाह । मनसीति शेषः । आर्या श्रेष्ठा नरेंद्रभार्या स्वधवात् स्वपत्युः सकाशात् रुष्टा सती कष्टेन अत्र का प्राप्तास्ति । नो चेत् रुष्टा न चेत् । अन्या इतरा

महाऽर्हवस्त्रा कमनीयगात्रा ह्यनेकचित्राभरणैणनेत्रा॥सुहास्यवक्त्रा श्रुतिगेंदुमित्रा दृष्टा विनेत्राऽभिगताग्रगोत्रा॥८६॥ अथो विनेता विजने वने तां वीक्ष्याऽह कार्यास्ति नरेंद्रभार्या॥प्राप्ताऽत्र कष्टात्स्वधवाद्धि रुष्टा नो चेत्किमन्या वनमेति मान्या॥८७॥काप्यस्तु धात्राद्य चिरंटिकात्राऽनीता पवित्रा नतये सुपात्रा ॥ इत्थं धिया तां स ननाम देवीं सा चाऽब्रवीत्तं सुभगाऽप्यवित्तम् ॥८८॥ सुवासिन्यु० ॥ पर्वाद्य चेष्टं किमिह त्वमिष्टं ह्यनर्चमानः स्वविदाऽभिमानः ॥ किं तेऽभवद्धीनतया भवद्धीज्ञंतिक्षणेन त्विह ते क्षणेन ॥ ८९ ॥

मान्या स्त्री वनं प्रति एति प्राप्नोति किम् । अपि तु नैति । तस्मात् राजपत्नीयं काचित्स्यादित्यर्थः ॥ ८७ ॥ कापि अस्तु । अथापि अद्य पर्वदिवसे पवित्रानतये नमस्कारार्थम् सुपात्रभूता चिरंटिका सुवासिनी धात्रा दैवेन आनीता । 'चिरंटी तु सुवासिनी' इत्यमरः । अद्य पर्वदिवसे दैवयोगेन प्राप्ता इयं मया नमस्करणीयेत्यर्थः । आप्तां प्राप्तां देवी एवंबुद्ध्या देवताबुद्ध्या ननाम। सा च सुभगा ऐश्वर्यवत्यपि अवित्तं वित्तरहितं तम् अब्रवीत् ॥ ८८ ॥ अद्य बहुकालेन इष्टं इच्छितं पर्व पर्वकालोऽस्ति । इह पर्वणि त्वं इष्टं दैवतम् अनर्चमानः पूजां अकुर्वन् स्वविदा स्वज्ञानेन ते तव अभिमानः गर्वोऽभवत्किं । इह तव क्षणेन क्षणात्मकेन ईक्षणेन अवलोकनमात्रेण भवद्धीः सद्बुद्धिः लीनतया उपास्ये न्यूनत्वनिश्चये युक्तास्तीति

मया ज्ञाता । ज्ञानोत्तरं कृतव्रतनिवृत्तये उपासनायाः अवश्यानुष्ठेयत्वात् पूजादिकं त्वया किं न कृतमित्यर्थः ॥ ८९ ॥ इहारण्ये पूजोपयोगिसाहित्यं नास्तीति योगी विनायक अतिकम्राम् अतिकमनीयां तां देवींप्रति नम्रांगतया नम्रदेहेन आह । सा च देवी तमाह । त्वं मम गेहं गृहं प्रति एहि । आगच्छ । सुगंधपूर्वं सुगंधद्रव्यादिकं सर्वं पूजोपयोगि ते तुभ्यमहं दास्यामि । मद्गृहे त्वया पूजा कर्तव्येत्यर्थः ॥ ९० ॥ तथेति उक्त्वा स विनायको देव्याः पदव्या मार्गेण ययौ । तस्याः पृष्ठतो ययावित्यर्थः । अथ तया देव्या अत्राश्रमे भाव्या भावनया भाविता भव्या दिव्यरूपा गेह्या गृहसंबंधिनी या स्थितिः स्थानं रचिता निर्मिता किंभूता स्थितिः रजताभः रौप्यतुल्यः बाह्यः बाह्यप्रांतो यस्याः। पु० किं० । अंतः मध्ये सुवर्णा सुवर्णसदृशापि विचि

श्रीदेशिकें० ॥ पूजोपयोगीह न चेति योगी तामाह नम्रांगतयाऽतिकम्राम् ॥ सा चाह गेहं मम चैहि तेऽहं दास्ये हि सर्वंतुसुगंध पूर्वम् ॥ ९० ॥ तथेति देव्याः स ययौ पदव्या तयाऽत्र भाव्या रचिताथ भव्या ॥ स्थितिर्हि गेह्या रजताभबाह्या चांतः सुवर्णापि विचित्रवर्णा ॥ ९१ ॥ अंतः प्रविष्टः स च सद्वरिष्ठोऽथांबालिकाभिर्द्विजदारिकाभिः ॥ अभ्यंगपूर्वं स कृताप्लुतिर्वै दत्तार्हवस्त्रः कृत कुंकुमास्रः ॥ ९२ ॥ संदर्शितेज्यागृह एष लज्जाहृद्धाःकृतेज्यांतरगः शिवेज्याम् ॥ समारभद्व्यासनगः कुशुद्ध्या भौन्याऽसुरीत्या खिलमातृगत्या ॥ ९३ ॥

त्रवर्णा नानावर्णा देव्या एतादृशं स्थानं निर्मितमित्यर्थः ॥ ९१ ॥ अंतरिति द्वयोरन्वयः । सत्पुरुषेषु वरिष्ठः स च विनायकः अंतः तद्गृहमध्ये प्रविष्टो यदा तदा अंबायाः देव्याः आलिकाभिः सखीभिः द्विजदारिकाभिः ब्राह्मणकन्याभिः अपूर्वं यथा स्यात्तथा अभ्यंगपूर्वकं कृताप्लुतिः कृत स्नानः दत्तं अर्हवस्त्रं दिव्यवस्त्रं यस्मै कृतं कुंकुमास्रं कुंकुमन्यासो येन ॥ ९२ ॥ संदर्शितम् इज्यागृहं पूजामंदिरं यस्मै । दारिकाभिरित्यपकर्षः । एषः विनायकः लज्जाहृत् दरिद्रोहं महदैश्वर्यं प्राप्तोस्मीति लज्जितचित्तः । यद्वा लज्जाबीजं हृदि मनसि यस्य । द्वारिद्वारदेशे कृता ईज्या पूजा येन स

चासौ अंतरगः गृहमध्यगतश्च इज्यां समारभत् । कुशुद्ध्या भूशुद्ध्या । भौत्या भूतशुद्ध्येति यावत् । असुरीत्या प्राणप्रतिष्ठया । अखिलैः सर्वन्यासैः सह मातृगतिः मातृकान्यासस्तया ॥ ९३ ॥ मणिभिः रत्नैः प्रकीर्णे व्याप्ते सुवर्णमये पीठे । रात्नं रत्नमयं श्रीचक्रं हि यतः रात्नम् । अतः न नराणां प्रयत्नो यस्मिन् नराणां दुःसाध्यमित्यर्थः । च पुनः हेम्नः सुवर्णस्य पात्राणि विशेषार्घ्यादीनि । दिव्यं दिवि नंदनवनादौ भवं सुभव्यं सुतरां प्रशस्तं पुष्पादि । आदिशब्देन चतुष्षष्ट्युपचारपरिग्रहः । भूम्नः महतः अस्य विनायकस्य पुरतः ददुः अर्पयामासुः। द्विजदारिका इति शेषः ॥ ९४ ॥ स विनायकस्तदीयमंत्रान् पात्रासादनमंत्रान् उच्चार्य पात्राणि आसाद्य वर्द्धिनीसामान्यादिपात्रासादनं कृत्वा अंतरंगां पूजां । अंतर्यागमिति यावत् । सांगां

पीठे सुवर्णे मणिभिः प्रकीर्णे यंत्रं च रात्नं ह्यनरप्रयत्नम् ॥ पात्राणि हेम्नः पुरतोऽस्य भूम्नः पुष्पादि दिव्यं च ददुः सुभव्यम्॥ ९४ ॥
आसाद्य पात्राणि तदीयमंत्रानुच्चार्य सांगां स किलांतरंगाम् ॥ पूजां चकाराथ बहिःप्रकारां तत्रार्यचक्रे विधिवद्धि चक्रे ॥ ९५ ॥
सुवासिनीहाऽगसुताप्यनीहा तुष्टास्य भक्त्याऽर्पितवस्तुभुक्त्या ॥ मातेव बालार्पितवाजगोलाच्छिवस्तु वीरः सतनुः सुधीरः ॥ ९६ ॥
बटुर्गणेशः कृतबालवेषः कुमारिकाख्या ललितासुसख्यः ॥ संपूजितास्तेन सुसंमतेन येऽन्येत्र चाप्ताश्च गृहे हराप्ताः ॥ ९७ ॥

संपूर्णां चकार किल । अथ तत्र आर्ये श्रेष्ठे चक्रे यंत्रे बहिःप्रकारां बहिर्यागमिति यावात् । विधिवत् चक्रे कृतवान् । हीति निश्चये । इं९० ॥ ॥ ९५ ॥ इह यागे । अनीहा निष्कामापि अगसुता पार्वती सुवासिनी अस्य विनायकस्य भक्त्या श्रद्धया अर्पितं यद्वस्तु हरिद्राकुंकुमतांबूलादि तस्य भुक्त्या स्वीकारेण तुष्टा संतुष्टाऽभवत् । यथा बालेन अर्पितात् वाजगोलात् अन्नग्रासेन माता संतुष्टा भवति तथेत्यर्थः । सुधीरः शिवस्तु सतनुः सदेहः सन् वीरः अभवत् । वीरपूजार्थमित्यर्थः ॥ ९६ ॥ गणेशः कृतः बालवेषो येन स बटुरभवत् । ललितायाः सुसख्यः कुमारिकाख्याः अभवन् । ये चान्ये हरस्य आप्ताः नंद्यादयो भक्ताः अत्र गृहे संति । ते सर्वे सुसंमतेन सुसंप्रदायिना तेन विनायकेन संपूजिताः ॥ ९७ ॥

स विनायकः पंचविंशतितत्त्वातीतः।यद्वा तत्त्वानि आत्मविद्याशिवसर्वतत्त्वानि मंत्रशास्त्रप्रसिद्धानि स्थूलसूक्ष्मकारणमहाकारणानि तेभ्योऽतीतः।स्वसुखेन आत्मसुखेन समृद्धःपूर्णोऽभवत्। अर्चां पूजां कृत्वा यंत्रे स्थितां ब्रह्ममयीं देवतां हृदि विसर्जयित्वा ज्ञानेन सुपुष्टां व्यापिकां तां पश्यन् ज्ञानमयान्तरङ्गोभवत्।स्वानंदमग्न इत्यर्थः । इंद्रवज्रावृत्तम् ॥ ९८ ॥ यामार्द्धमात्रेण उद्धृतपक्ष्मणी उद्घाटितपक्ष्मणी नेत्रे यस्य स उद्घाटितनेत्रः सन् स्वसंस्थां स्वस्य निवासं तरुभिः वृक्षादिभिः समानां तुल्यां यथापूर्वं पश्यन् । पूर्वस्थितिं प्राप्त इत्यर्थः । नद्यां यमुनायामक्रूरस्य उपास्येन कृष्णेन कृतं शेषशायिदर्शनादिकं यथा अभवत् तथा कीरपद्यां शुकाश्रमभूम्यां उपास्यपरदेवतया संपूर्णपूजादिरूपं कर्तव्यं तदखिलं कृतं साकल्येन संपादितं सुवासिनीदर्शनादिपूजांतं स मेने निश्चि

तत्त्वातिगामी स्वसुखाभिवृद्धोऽर्चां सोऽथ कृत्वा हृदये विसृज्य ॥ यंत्रस्थितां ब्रह्ममयीं सुपुष्टां पश्यन् स्थितो ज्ञानमयान्तरङ्गः ॥९८॥
यामार्द्धमात्रोद्धृतपक्ष्मनेत्रः पश्यन्स्वसंस्थां तरुभिः समानाम् ॥ मेने कृतं तत्सकलं हि देव्याऽक्रूरस्य नद्यामिव कीरपद्याम् ॥९९॥
इत्थं त्रिवर्षं स्वमनोभिकर्षन्सदात्मतुष्टोऽमृतयोगपुष्टः ॥ भुक्त्वा द्रुपर्णानि मरुद्विशीर्णान्येकः स पुण्ये न्यवसद्धरण्ये ॥ १०० ॥
इदं विनेतुश्चरितं हि सेतुर्महाऽऽपदब्धेर्गृहमर्थलब्धेः ॥ यैर्नित्यमुक्तं श्रुतमादराक्तं तेषां न कष्टं सकलं किलेष्टम् ॥ १०१ ॥ इति श्रीमद्गुरुपरंपराचरित्रे उत्तरार्धे विनायकगुरोः शुकाश्रमस्थितिवर्णनं नाम सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

तवानित्यर्थः । इंद्रवज्रावृत्तम् ॥ ९९ ॥ इत्थं त्रिवर्षपर्यंतं स्वमनः अभिकर्षन् वशीकुर्वन् सदा आत्मनि तुष्टः अमृतयोगेन ब्रह्मरंध्रेन्दुमंडलगलदमृतलाभेन पुष्टः मरुता वायुना विशीर्णानि गलितानि द्रुपर्णानि तांबूलस्थानीयानि भुक्त्वा स एकाकी पुण्ये अरण्ये शुकाश्रमे न्यवसत् वासं कृतवान् । उपजातिवृत्तम् ॥ १०० ॥एतत्सर्गोक्तस्य विनायकचरित्रस्य श्रवणादेः फलमाह।इदमिति।इदं विनेतुः विनायकस्य चरित्रं महापदब्धेः महादुःखसमुद्रस्य सेतुः तरणोपायभूतम् । अर्थलब्धेः पुरुषार्थप्राप्तेः गृहं स्थानमस्ति । यैः पुरुषैः आदराक्तं आदरेणाऽऽक्तं ज्ञातमित्यर्थः । उपसर्गवशाद्धातोरर्थांतरप्राप्तिः । तेषां कष्टं दुःखं न स्यात् सकलम् इष्टं च स्यात्किल।उपजातिवृत्तम्॥ १०१ ॥इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां शुकानंदचरित्रे सप्तचत्वारिंशःसर्गः ॥४७॥

उदष्टवेदे द्व्यब्देदुपश्चैश्चंद्रपुरस्थितेः । विनैतुर्विषभीशांतिः साधुसंगश्च वर्ण्यते ॥ ४८ ॥ अथ विनायकस्य निःस्पृहत्वं दर्शयन्न चंद्रपुरगमने निमित्तमाह । अथेत्यादिना । शुकाश्रमाद्गतैः यात्रिकैः ॥ १ ॥ मितानि परिमितानि क्वचिद्दिने द्रुमपर्णानि खादन् अथापि स ओजोयुक् तेजोयुक्तः बृहत्तनुर्दीर्घदेहोस्ति । पुष्टदेहो युवा च पूर्वाह्णे योगाभ्यासं करोतीत्यर्थः ॥ २ ॥ ३ ॥ ४ ॥ त्वया विलोकितुं स योग्यः । अत्र सद्मने शुकाश्रमे चिरं स्थातुं च योग्योस्ति । उत्तरार्द्धमुत्तरान्वयि ॥ ५ ॥ ६ ॥ स्वाशयवेदिनं स्वाभिप्रायविदं दूतं समाधौ वा तनौ देहे वा स्थितं

श्रीदेशिकेंद्र उवाच ॥ अथ तद्देशनाथाय शुकाश्रमगतैस्तदा ॥ प्रोक्तं शुकाश्रमे ह्येको योगी वसति निर्जने ॥१॥ गलितानि द्रुपर्णानि मितान्येव क्वचिद्दिने ॥ आस्ते खादन्महारण्येऽथाप्योजोयुग्बृहत्तनुः ॥ २ ॥ पुष्टो युवा च पूर्वाह्णे योगाभ्यासरतः सदा ॥ समाधेर्विरमेप्यन्यैरुक्तोपीषन्न वक्ति सः ॥३॥ फलादि मधुरं ताम्रं रौप्यं स्वर्णं च तत्पुरः॥स्थापितं नेक्षते किञ्चिद्यथास्थीनि सुकर्मठः ॥४॥ त्वया द्रष्टुं स योग्योत्र चिरं स्थातुं च सद्मने ॥ नाम्ना परशुरामोथ श्रुत्वेत्थं पटवर्धनः ॥ ५ ॥ भावूपनामकः सैन्यसहितस्तं ययौ निशि ॥ प्रातः समाधेः पूर्वं तं वक्तुमत्युत्सुकांतरः ॥ ६ ॥ ईषच्छुकाश्रमाद्दूरं स्वच्छं दृष्ट्वाऽमितं जलम् ॥ स्नातुमर्कोदये तत्राऽवसत्स्वाशयवेदिनम् ॥ ७ ॥ प्रेषयित्वा मुनिं ज्ञातुं समाधौ वा तनौ स्थितम् ॥ प्रेषितोऽथाशु तं गत्वाऽऽसनस्थं कांतविग्रहम् ॥ ८ ॥ भस्माक्षभूषं रुढाल्पजटं श्मश्रुलमुन्नसम् ॥ जपंतं ब्रह्म हृद्गार्थं मीलिताक्षं समीक्ष्य सः ॥ ९ ॥ तिष्ठञ्जपांते नत्वाह योगिन्प्रेक्षणाय ते ॥ प्राप्तो देशपतिर्द्रष्टुं दुग्धार्थं खेटमंकगम् ॥ १० ॥

मुनिं विनायकं ज्ञातुं प्रेषयित्वा सूर्योदये स्नातुं तत्रावसदिति संबंधः ॥ ७ ॥ अथ प्रेषितो दूतः तं योगिनं गत्वा जपांते नत्वा तिष्ठन् । आहेतितृतीयस्थेन सहान्वयः ॥ ८ ॥ भस्मरुद्राक्षभूषणं रूढाः अल्पजटाः यस्य तं श्मश्रुलं मुखकेशयुक्तम् उन्नतनासिकं हृद्गतः अर्थो यस्य तत ब्रह्म गायत्रीं जपंतम् ॥ ९ ॥ हे योगिन् दुग्धार्थं दुग्धपानार्थम् अंकगं समीपगतं खेटकं दा॰ पु॰ देशपतिस्तवदर्शनार्थं प्राप्तोस्ति ॥ १० ॥

पूर्वार्धं पूर्वान्वयि। भूपालदुर्गं पूर्वं प्रथमं यस्य भूपालगडभूम्यंतः या तिनमित्यर्थः।यत् खेटं किंभूतं द्वादशग्रशतायकं द्वादशतद्रव्योत्पत्तिकरम्। प्रतिवर्षं द्वादश शतरौप्यमुद्राः यत्रोत्पन्ना भवंतीत्यर्थः। उत्तरार्द्धे स इत्यध्याहारः॥ ११॥ योगार्थं योगाभ्यासार्थम्।जनसंबाधपीडया हेतुभूतया तन्निवृत्त्यर्थं गां भूमिं भ्रमन् अत्रागतोस्मीति संबंधः ॥ १२ ॥ तद्विवर्जितः जनसंबाधवर्जितः सन् अत्र सुखं यथा स्यात्तथाहं स्थितोस्मि। अत्रापि सा पीडा प्राप्ता। तत्र हेतुः एकस्थलस्थितेः एकस्थले बहुकालवासाद्धेतोः। तस्मान्निःस्पृहेण बहुकालमेकत्र न स्थेयमित्यर्थः ॥ १३ ॥ यतो जनसंबाधोत्र भवति। अतः यथा सा

भूपालदुर्गपूर्वं यद्द्वादशग्रशतायकम् ॥ अधुनावस्थितः स्नातुमदूरं शीघ्रमेष्यति ॥ ११ ॥ तावन्नयोगारंभः स्यादेवं श्रुत्वा विनायकः ॥ हसन्नाह मनस्येव जनसंबाधपीडया ॥ १२ ॥ भ्रमन्गामागतोऽस्म्यत्र त्रिवर्षं तद्विवर्जितः ॥ सुखमस्म्यधुनाऽत्रापि सा प्राप्तैकस्थलस्थितेः ॥ १३ ॥ अतोऽस्माच्चाशु गंतव्यं यथा सा न भविष्यति ॥ वदत्यंतरिति ग्रीवां चांदोलयति देशिके ॥१४॥ बहिर्दृष्ट्याग्रगो मत्वा ग्रीवयोमिति वक्त्ययम् ॥ निर्ययावश्वगोऽथाशु द्विजो लेखनवृत्तिमान् ॥ १५ ॥ गत्वाऽब्रवीन्निजेशं च योगी दृष्टोतिकांतिमान् ॥ नमस्कृतः प्रार्थितश्च श्रीमदाशयवन्मया ॥ १६ ॥ एतद्देशाधिपः श्रीमद्भावुकोऽत्रागतस्तव ॥ दर्शनार्थं चैकखेटं दातुं दुग्धार्थमंकगम् ॥ १७ ॥ स्नात्वाऽदूरजलेऽत्राश्वागमिष्यति नराधिपः ॥ तावत्साध्यः समाधिर्नो भवतेत्यंतभाषणम् ॥ १८ ॥

पीडा न भविष्यति तथाऽस्मात्स्थानान्मयाशु गंतव्यम्। उत्तरार्द्धमुत्तरान्वयि ॥ १४ ॥ अयं योगी ग्रीवासंकेतेन ओं वरं खेटकं गृह्णामीति वक्तीति बहिर्दृष्ट्या मत्वा लेखनवृत्तौ योजितः स द्विजो राजदूतः अथाश्वगः अश्वारूढः सन् निर्ययौ ॥ १५ ॥ निजेशं स्वस्वामिनं गत्वा सोऽब्रवीत्। श्रीमतस्तव आशयवत् अभिप्रायवत् मया स प्रार्थितः ॥ १६ ॥ किमिति तदाह। एतदित्यादि ॥ १७ ॥ अदूरजले समीपवर्तिनि उदके इत्यंतं भाषणं श्रुत्वेति संबंधः ॥ १८ ॥

अथेति परान्वयि ॥ १९ ॥ श्रीमतः अत्रागमनम् आशु भवेत् इति मया योगिने उक्तम् ॥ २० ॥ अदः इदम् अनुगोक्तं सेवकवचनं श्रुत्वा हृदि मनसि वदति । यः सुवर्णादौ निरीह इति सर्वैः उदितः उक्तः । स आमलाभाशया बद्धोस्ति । हि यतः येन आमलाभेन निःस्वो निर्धनोपि राजा भवति । सः आमलाभः इतरस्मात्स्वर्णादिलाभात् वरगतिः वरागतिः निर्वाहोयस्मात्स श्रेष्ठो भवति । अतोयं योगी तत्र लोभवाने वास्तीत्यर्थः । मालिनीवृत्तम् ॥ २१ ॥ इति चिन्तयन् सः किं चिद्विलंबेनाश्रमं प्राप्तो यावत्तावत्स योगी इतः स्थानात् बहुवृक्षाच्छादितमार्गेण गतः ।

श्रुत्वाऽनीहोपि खेटार्ति तुष्टचित्तो हसन्मुहुः ॥ संकेतं श्रीवया मां च वरमित्यकरोदथ ॥ १९ ॥ अहं शीघ्रमिहायातः श्रीमदागमनं भवेत् ॥ मयाऽऽशूक्तं योगिनेत्र विलंबे स्वसमाधिमान् ॥ २० ॥ श्रीदेशिकेंद्र उवाच ॥ अथ स परशुरामोदो निशम्यानुगोक्तं वदति हृदि निरीहः स्वर्णमुख्येऽखिलैर्यः ॥ उदित उत स बद्धो आमलाभाशया हि वरगतिरितरस्माद्येन निःस्वोऽपि राजा ॥ २१ ॥ नृपतिरिति विलंबादाश्रमं प्राप तावद्गत इत उरुवृक्षच्छन्नमार्गेण योगी ॥ तमिह चपलदूतैरप्यदृष्ट्वाऽऽसमंताद्वदति कुकपदस्यास्याग्रतोमे मुधोक्तिः ॥ २२ ॥ यदि स कृतसमाधिर्दृष्टमात्रो जनानां हरति सकलपापं तापदैन्ये च सद्यः ॥ कपिल उत शुकोयं याज्ञवल्क्योऽत्रिजो वा पतिततरुदलादः कः सुपुष्टस्त्रिवर्षम् ॥ २३ ॥

तं योगिनं प्रति इहाश्रमे समंताच्चपलदूतैः शोधकैःस्वयं चान्विष्यानवलोक्य वदति । स दूतानिति शेषः । यद्वदति तदाह । कुत्सितं कपदं अल्पपदं यस्य तस्य अस्य योगिनः अग्रे मे मम पूर्वा उक्तिः । अहमागमिष्यामीति वचनं मुधा वृथा आसीत् । यदि पूर्वं निवेदितं न स्यात्तदा दर्शनलाभः स्यात् । अतो वृथास्माकं प्रयत्नो जात इत्यर्थः ॥ २२ ॥ कृतः समाधिर्येन स दृष्टमात्रो यदि तदा स जनानामवलोकनकर्तॄणामस्माकं सकलपापं तापं दैन्यं च सद्यः हरति । यतस्तस्मादयं योगी कपिलः उत शुकः याज्ञवल्क्यः अत्रिजो दत्तात्रेयोवा अस्ति । अन्यथा त्रिवर्षपर्यंतं पतितवृक्षपर्णाशनतः

कः सुपुष्टो भवेत् न कोपीत्यर्थः ॥ २३ ॥ अस्य योगिनः न विदितं हृदयं मनो येन स प्रेषितो दूतः तस्य हास्यं ईक्षनसनं खेटस्य प्राप्याऽयं प्रमुदितोस्तीति स मूढो मामवदत् । तस्य दूतस्य वचनतः मया अल्पो विलंबः कृतः यतः विलंबेन मम सदीक्षा साधुदर्शनं नासीत् । अतः इह मयि दैवं प्रबलम् असीत् । दुर्बलदैवेन मम साधुदर्शनं नासीदित्यर्थः ॥ २४ ॥ पाषाणमयऋषिशुकस्य सुपूजा यस्य सः अतिखिन्नः योगिदर्शनाभावेन दुःखितः निजपुरमगात् । अथ विनेता विनायकः अज्ञातमार्गोपि त्रिघस्रैः त्रिदिनैः विधुपुरं चंद्रपुरम् अगमत् । अल्पदिनैर्बहुयोजनातिक्रमणं योगसामर्थ्यादिति भावः ॥ २५ ॥ अत्र चंद्रपुरे जगन्नाथनामा अमृतवृत्तिः अयाचितवृत्तिः कश्चित्साधुरवसत् । यं जगन्नाथं प्रति स्वयं साक्षात्पां

अविदितहृदयोऽस्य प्रेषितो हास्यमीक्षन्प्रमुदित इति खेटाप्या वदन्मां स मूढः ॥ वचनत इह तस्याल्पः कृतो वै विलंबः प्रबलमहह दैवं मे यतो नो सदीक्षा॥२४॥धिगिति स बहुधोक्त्वात्मानमत्रैव पक्काऽश्मऋषिशुकसुपूजः स्वैरशेषैः सहा यम्॥निजपुरमतिखिन्नो गादथातो विनेता विधुपुरमगमच्चाज्ञातमार्गस्त्रिघस्रैः ॥ २५ ॥ अत्रसदमृतवृत्तिर्वै जगन्नाथनामा वदति सकलभाव्यं यं स्वयं पांडुरंगः ॥ अतिथिमपि हि पत्नी यस्य पश्यत्युपास्यं त्ववसदपि गृहेस्याऽनीह एषोऽस्पृहस्य॥२६॥अहरहरिह भुंक्ते यद्धि लब्धं विनेता समसुमतिमतो वै सख्यमासीद्धिसाध्वोः॥यतिरिह गृह एकोऽत्रौषधज्ञोस्त्यनीहः स्वकृतमतिरुजेभ्यो भेषजं दत्तवान्यः॥२७॥स इह परगृहेऽश्नात्यैकगेहे त्र्यहं नो स्थितिरभवदथैकत्रानिशं योगियत्योः ॥ यतिरपि गुरुवाक्यं मेन उक्तं विनेत्रा पुर इह वरदुर्गेंद्र नागपूर्नाथभृत्यः ॥ २८ ॥

डुरंगः सर्वेषां भाव्यं भविष्यं सुखदुःखादि आ साकल्येन वदति कथयति । यः पांडुरंगसाक्षात्कारवानित्यर्थः । यस्य पत्न्यपि अतिथिम् उपास्यं देवतारूपं पश्यति । अथास्य निःस्पृहस्य जगन्नाथस्य गृहे अनीहो निरिच्छ एष विनायकोऽवसत् ॥ २६ ॥ समे न्यूनाधिकभावरहिते सुमती सुबुद्धी विद्येते ययोस्तयोःद्वयोः साध्वोः विनायकजगन्नाथयोः सख्यमासीत् । तुल्यशीलयोः सख्यं भवतीत्यर्थः । अत्र जगन्नाथगृहे निरीहोपि लोकोपकारार्थम् औषधज्ञो भिषग्वैद्य एको यतिः अस्ति । यो यतिः अतिरुजेभ्यो प्रबलरुग्भ्यः स्वकृतं भेषजं दत्तवान् ॥ २७ ॥ स यतिः इह जगन्नाथगृहे ।

परगृहे अश्नाति । एकगेहे त्वहं नो भुंक्ते । अथ योगियत्योः विनायकजगन्नाथयोरनिशमेकत्र स्थितिरभवत् । यतिश्च विनेत्रा विनायकेन उक्तं वचनं गुरुवाक्यसदृशं मेने । अथ च इह पुरे चंद्रपुरे वरदुर्गेट् दुर्गपतिः नागपूर्नाथस्य नागपुरराज्ञः भृत्यः आसीत् ॥ २८ ॥ उदक्दिशि अमला शंकर रहिता सुजातिः यस्य स रजपूत इति भाषाप्रसिद्धः । अस्मिन् चंद्रपुरनगरे अव्याहता अकुंठिता आज्ञा यस्येति पूर्वान्वितम् । अथास्य दुर्गपस्य पुत्रः शुभमतिः प्राग्वयसा श्रीः शोभा यस्य पूर्ववयस्क इति यावत् । तुरगगतिः अश्वगामी अनेकभूषणैर्युक्तः सुवस्त्रः दूतयुक्तः सन् अपराह्णे भ्रमति । एवं प्रतिदिनमपराह्णे भ्रमणं करोतीत्यर्थः ॥ २९ ॥ अथ कदाचित्स विनायकः अधिष्ठिता आश्रिता अध्वनि अग्रवेदिः द्वाराग्रवेदिर्येन ।

उदगमलसुजातिस्सुन्दरोऽव्याहताज्ञोथ च शुभमतिरस्यैवात्मजः प्राग्वयःश्रीः ॥ तुरगगतिरनेकैर्भूषणैर्युक्तसुवस्त्रो भ्रमति पुरवरेऽस्मिन्दूतयुक्तोऽपराह्णे ॥ २९ ॥ क्वचिदथ स विनेताधिष्ठिताध्वाग्रवेदिर्यतितदितरयुग्द्वार्बाह्यतो भोजनोर्ध्वम् ॥ स्थित इह पथि तावत्प्राप दुर्गेशपुत्रोभिमुखमिदमपश्यत्सत्त्रयं सत्परोक्ति ॥ ३० ॥ त्रय इह परमोजो वीक्ष्य वैनायकेस्मिन्तुरगमनुगहस्ते त्वर्पयत्सोऽवतीर्य ॥ स्वसदनमनु नेतुं सैकदूतोऽवतस्थे नमनमनु विनेत्रे दंडवत्संविधाय ॥ ३१ ॥ समकृतकरयुग्मो योगिनं प्राह भूमन्नहमहानि च नित्यं क्रीडनेऽश्वैश्च सक्तः ॥ निशि च रसिकगीतालापसक्तोंगनाभिर्गदितमपि च पित्रा नो कदाप्याशृणोमि ॥ ३२ ॥

राजमार्गसमीपे या वेदिस्तदाश्रित इत्यर्थः । यतितदितरयुक्तः यतिजगन्नाथाभ्यां युक्तः भोजनोर्ध्वं द्वार्बाह्यतः द्वारस्य बाह्यभागे स्थितोऽभवत् । तावत् इह पथि दुर्गेशपुत्रः प्राप्तः सन् अभिमुखं संमुखं यथा स्यात्तथा इदं सत्त्रयं विनायकयतिजगन्नाथरूपं साधुत्रयं सत्यपराः ब्रह्मपराः उक्तयो यस्मिन् तत् अपश्यत् । वेदांतविचारतत्परान् साधून् ददर्शेत्यर्थः ॥ ३० ॥ इह त्रये साधुत्रये परमम् ओजस्तेजः वैनायके विनायक एव वैनायकः । स्वार्थेण् । विनायके दृष्ट्वा विनायकं तेजस्विनं दृष्ट्वेत्यर्थः । स स्वतुरगं सेवकहस्ते अनु पश्चात् स्वगृहं नेतुं अश्वादधोवतीर्य अर्पयत् । अनु अनंतरं विनायकाय दंडवन्नमनं सम्यक् कृत्वा स एतद्दूतसहितः अवतस्थे । विनायकसमीपे स्थित इत्यर्थः ॥ ३१ ॥ समकृतकरयुग्मः संपुटीकृतहस्तः स राजपुत्रो

योगिनं विनायकं प्राह । हे भूमन् गुरो अहं नित्यम् अहनि दिवा अश्वैः सह क्रीडने सक्तोस्मि । रात्रौ चांगनाभिः सह रसिकगीतालापादिषु सक्तोऽस्मि पित्रोः गदितं कदापि नो आशृणोमि ईषदपि शृणोमि। काऽन्यस्य कथा । एवं स्वतंत्रोस्मीत्यर्थः ॥ ३२ ॥ इति विषयबुद्धेर्मम देहगताऽहंबुद्धिरासीत् । अथेदं जगत् असत् अस्ति । इति वक्तुस्तव दर्शनोत्तरं मृतानां जनानां गतितः प्रवाहेण च सा देहबुद्धिर्मृषा भवेत् । अथ देहेन भोग्यमिदं दृश्यं पृथिव्यादिकं कथं प्रतीयते । हे आर्य तत् त्वं वद । यदिदं सत्यत्वेन प्रतीयमानं कथमसत्यत्वेन ज्ञातव्यमित्यर्थः ॥ ३३ ॥ स्वपार्श्वभागे यतिं

इति विषयमतेर्मेऽहंमतिर्देहगासीज्जगदसदिति वक्तुर्दर्शनानन्तरं ते ॥ मृतजनगतितः साभून्मृषा देहभोग्यं कथमसदथ सत्यं दृश्यते तद्वदार्य ॥ ३३ ॥ तमतिविमलबुद्धिं चिंतयित्वा विनेता यतिमपि निजपार्श्वे वीक्ष्य सल्लोकनाथम् ॥ पुरपतिसुतमित्थं त्वब्रवीत्साधुसंगादिदमतिविनयाच्च ज्ञायते तं कुरु त्वम् ॥ ३४ ॥ वचनमिति विनेतुः संनिशम्योष्णरश्मिं चरमगिरिगतं प्राग्वीक्ष्य वानीय वाहम् ॥ कृतनतिततिरश्वाद्दुर्गमापाथ नित्यं त्विह स गुरुमुपेत्यैवापराह्णेऽक्षयास्यै ॥ ३५ ॥ क्वचिदथ यतिसाध्वोः सक्तयोः स्वस्य कार्यै कृतनतिमनुघस्रं तं दयाढ्यो विनेता ॥ वदति पररहस्यं तस्य वैराग्यलक्ष्योभिगतबहुभगस्याप्यह्नि पादागमेन ॥ ३६ ॥ श्रीविनायक उवाच ॥ न तनुरणिवयं वेत्ति तां जडां स्वमिव वर्तयन्योस्त्यहंधिया ॥ पृथगितोपि सल्लोहनोऽग्निवत्तामेव विद्धि चात्मानमक्षयम् ॥ ३७ ॥

संतं जगन्नाथं च दृष्ट्वा । इदं त्वदुक्तम् । तं साधुसंगम् ॥ ३४ ॥ सः राजपुत्रः अन्तोन्मुखं रविं वीक्ष्य साधुत्रयाय कृता नतिः नमस्कारो येन सोऽश्वेन दुर्गं प्राप । अक्षयास्यै अक्षयब्रह्मसुखलाभाय ॥ ३५ ॥ अनुघस्रं प्रतिदिनं कृताः नतयो येन तं प्रति इति वक्ष्यमाणप्रकारेण रहस्यं वदति । किं कृत्वा अभिगतबहुभगस्य प्राप्तबह्वैश्वर्यस्यापि तस्य दिवा पादेन यदागमनं तेन हेतुना वैराग्ये लक्ष्यं यस्य तथाभूतः सन् । वैराग्यवत एवोपदेशः सफलो भवतीति निश्चिन्वान इत्याशयः ॥ ३६ ॥ अथ श्लोकपंचकेनात्मतत्त्वमुपदिशति । नेत्यादिना । इयं तनुः देहः अणु किंचिदपि न वेत्ति ।

देहस्य स्वपरज्ञानं नास्तीत्यर्थः।लोहतः लोहात्पृथक् अग्निरिव इतोऽस्माद्देहात्पृथक् सन्नपि तां जडां तनुं अहमितिबुद्ध्या तादात्म्याध्यासेन स्वमिव चैतन्यवन्तमिव वर्तयन् प्रवर्तयन् योऽस्ति वर्तते। तमात्मानं नाशरहितं त्वं विद्धि। यथाग्निर्लोहाद्भिन्नोपि उपाधिवशेन लोहतादात्म्याध्यासेन परप्रकाश्यमपि स्वप्रकाशमिव करोति। तथात्मापि देहतादात्म्याध्यासेन जडमपि देहं स्वप्रकाशमिव ज्ञानवंतमिव करोतीत्यर्थः। कामदावृत्तम्॥ ३७॥ यः आत्मा स्वयम् अर्थतः अर्थैः सततम् इंद्रियाणां त्राणं रक्षणम् असुभवे प्राणसंबंधेन जायमाने तृट्क्षुधौ प्राणोपाधिके इति च यो वेत्ति जानाति। मनोधियोः मनोबुद्ध्योः संकल्पनिश्चयावपि यो वेत्ति तमात्मानं विद्धि। यो यस्य प्रकाशकः स तस्माद्भिन्नो भवतीत्यर्थः॥ ३८॥ सततम् अद्वयः स्वप्रकाशतया स्थितोपि यस्तम् अविद्यया निमित्तभूतया कोपि

सततमिंद्रियत्राणमर्थतोऽसुभवतृट्क्षुधौ वेत्ति यः स्वयम्॥ अपि मनोधियोः कल्पनिश्चयौ तमिह विद्धि चात्मानमक्षयम्॥ ३८॥
सततमद्वयः स्वौजसास्थितो न तमविद्यया वेत्ति कोप्यहो॥ गुरुपदाश्रयात्प्रकट एव यस्तमिह विद्धि चात्मानमक्षयम्॥ ३९॥
विधिमुखाणुपर्यंतमंतरं बहिरपीश्वरो व्याप्य यः स्थितः॥ क्षितिजलानलान्वायुखे तथा तमिह विद्धि चात्मानमक्षयम्॥ ४०॥
जलतरंगवच्चाज्ञकल्पिताः कुटिलकल्पना व्यापकान्ययोः॥ जलमिवाद्वयस्तेषु चात्र यस्तमिह विद्धि चात्मानमक्षयम्॥ ४१॥
पठति यस्त्विदं श्लोकपंचकं मननपूर्वकं हृद्गतार्थकम्॥ न स निबद्ध्यते भीमपाशकैर्मरुदिवाखिलं प्राप्य चावशः॥ ४२॥

न जानाति। अहो आश्चर्यं गुरुपदाश्रयात् यः आत्मा प्रकट एवास्ति तं त्वं०॥ ३९॥ विधिमुखं ब्रह्मादिकं च तत् अणुपर्यंतं स्तंबपर्यंतम् आब्रह्मस्तंबपर्यंतं तथा अंतरं मध्ये बहिरपि व्याप्य य ईश्वरः स्थितोऽस्ति। तथा क्षित्यादीनि पंच भूतानि व्याप्य यः स्थितस्तम्॥ ४०॥ एको व्यापकः अन्यो व्याप्यश्च तयोः व्याप्यव्यापकयोः जलतरंगवत्कल्पना अज्ञैः कल्पिताऽस्ति। तरंगाः व्याप्याः जलं व्यापकमिति यथा। जगत् व्याप्यम् आत्मा व्यापकः एवम् अज्ञदृष्ट्यैव कल्प्यते। वस्तुतस्तु तेषु जलमिव अद्वयो यस्तं त्वमात्मानं नाशरहितं विद्धि॥ ४१॥ एतत्पद्यपंचकस्य पाठादेः फलं च स्वयमेवाह। पठतीति। मननपूर्वकं विचारपूर्वकं हृदि मनसि गतः अर्थो यस्य। अर्थज्ञानपूर्वकमित्यर्थः। सः भीमपाशकैः शिवपाशैः अणवकार्मणमाय्यसंज्ञकैः द्विपं

चाशन्मितैस्तंत्रप्रसिद्धैर्मरुत् वायुरिव न बध्यते अखिलं सर्वम् ईप्सितं प्राप्य अवशः स्वतंत्रो भवति॥ ४२॥ ४३॥ आब्रह्मस्तंबमर्यादासहितान्मृत्योः सका शान्मुक्तोऽस्मि । सर्वैः सह मुक्तोस्मीति अद्भुतं जातमित्यर्थः ॥ ४४ ॥ इत्युक्त्वा स गृहमगात् । तथा पुनः एत्य नित्यं गुरोरग्रे तिष्ठन् पित्रा भोजनार्थं दूतैः पृथक् बहुधा आहूतो यदि तदा भोक्तुं गच्छति । अन्यथा न गच्छति । एवं विनायके बहुभक्तिमानासीदित्यर्थः ॥ ४५ ॥ अथ विनायकस्य विषबाधाजन्यां गंडांतप्राप्तिं तत्परिहारं चाह । एकादश्यामित्यादिना । सदुक्तीः ब्रह्मवार्ताः ॥ ४६ ॥ तत्र मलं विस्रष्टुं स्थानं गतः विठ्ठलः आविर्भूय

श्रीदेशिकेन्द्र उवाच ॥ इत्थं वैनायकं वाक्यं श्रुत्वानंदाश्रुरुत्कचः ॥ नमन्भूयश्चार्यपुत्रो गद्गदार्णोऽब्रवीदिदम् ॥ ४३ ॥ निपीय त्वन्मुखांभोजगलत्पीयूषमेकदा ॥ आब्रह्मस्तंबपर्यन्तान्मृत्योर्मुक्तोहमद्भुतम् ॥ ४४॥ इत्युक्त्वाऽगाद्गृहं चैत्य नित्यं तिष्ठन्गुरोः पुरः ॥ पित्राऽऽहूतः पृथग्दूतैर्भोक्तुं गच्छति नान्यथा ॥ ४५ ॥ एकादश्यां क्वचिद्दंडिजगन्नाथविनायकाः ॥ मिथश्चक्रुः सोपवासाः सदुक्तीर्निशि जाग्रतः ॥ ४६ ॥ विनायकं जगन्नाथः प्राहेत्थमहमद्य वै ॥ विस्रष्टुं हि मलस्थानं गतस्तत्रैव विठ्ठलः ॥ ४७ ॥ पीतवासाः समपदः कट्यर्पितकरोऽभ्ररुक्॥ तुलसीस्रक्स्मितास्योऽर्हमुकुटांगदकुंडलः ॥ ४८ ॥ आविर्भूयाऽऽह मामित्थं त्वन्मित्राय भयं महत् ॥ प्राप्तं तन्नाशयाम्याशु मैव चिंताऽणु चास्तु ते ॥ ४९ ॥ इति श्रुत्वाऽशुचितया वाच्यं नेति विलम्बनात् ॥ मयेयन्नोदितं तावद्बभूवांतर्हितः स्वयम् ॥ ५० ॥ मित्रं मे कः किमस्मै तच्चेति चिंतायुतोस्म्यहम् ॥ त्वां विना नैव पश्यामि मन्मित्रं मास्तु ते भयम् ॥ ५१ ॥

मां प्रति इत्थमाहेति तृतीयस्थेनान्वयः ॥ ४७॥ समपदः समचरणः अभ्ररुक् मेघकांतिः तुलस्याः स्रक् माला यस्य अर्हाणि बहुमूल्यानि मुकुटादीनि यस्य ॥ ४८ ॥ विठ्ठलोक्तिमाह । त्वन्मित्रायेति ॥ ४९ ॥ इति श्रुत्वा श्रीमते विठ्ठलाय अशुचिना मया वक्तव्यं न वा वक्तव्यमिति विचारेण किंचिन्नोक्तं तावत् स्वयमन्तर्हितो बभूव ॥ ५० ॥ को मम मित्रमस्ति । अस्मै मित्राय । किं च तत् भविष्यति । इत्यहं चिंतायुक्तोस्मि । त्वां विना अन्यत् मम

मित्रमहं न पश्यामि । अतस्ते तव भयं मास्तु मा भवतु ॥ ५१ ॥ मित्रायोक्तं भयं मह्यं देहीति मयाप्ययं विद्वन्नो नोक्तः । हि यतः एष विद्वत्तः स्वयं प्रभुः मित्रोक्तं भयं मह्यं दातुं समर्थः । तस्मात्किमिदानीं भविष्यतीति मम चिंता जातेत्यर्थः ॥ ५२ ॥ तत्र आत्मा तु अनंतः अंतरहितोऽस्ति । अतोऽस्य शीतं यथा तस्यात्मनः इदं भयं तस्मात् । इंद्रिययुक्ता तनुः देहस्तु स्वप्नसदृशो मृषैवास्ति । अस्याः तनोः अस्तित्वं न चास्ति । शशविषाणवत् देहो नास्त्येवेत्यर्थः । अतः कुचिंतां त्यज । देहस्य मृषात्वेन आत्मनश्चानंतत्वेन मृत्युभयं नास्त्येवेत्यर्थः ॥ ५३ ॥ ननु स्वप्नोऽपि मिथ्या देहस्तु [illegible] । कथं स्वप्नजागरयोः साम्यमित्याशंक्य उभयोः साम्यं दर्शयति । मृषेति । मृषाभूता स्वाप्नी अवस्था स्खलत् द्रवीभूतं यत् शुक्रं [illegible] हेतुना आश्रितः

तन्मे देहीति नोक्तं स मयाप्येष प्रभुः स्वयम् ॥ इत्युक्तवंतं तं प्राह सदात्मस्थो विनायकः ॥ ५२ ॥ भयं त्वं [illegible] किलात्मा स्त्यनन्तो न तस्येदमग्नेर्हि शीतं यथा स्यात् ॥ तनुः स्वप्नतुल्येन्द्रियाढ्या मृषातो न चास्ति त्वयस्यास्त्यजातः कुचिंतां [illegible] ॥ ५३ ॥ मृषा स्वाप्न्यवस्था तनोर्जागृतेश्च स्खलच्छुक्रतोद्वेव वक्ति स्वसाम्यम् ॥ तथा स्वाप्नमेवानृतं प्राह देहं न वै जाग्रतं [illegible] वशो हि ॥ ५४ ॥ अनेकैस्तदेत्थं गुरूक्तैः सुवाक्यैर्गता तामसी प्रातरुत्थाय सर्वे ॥ कृतं स्नानसंध्यादि चक्रुश्च तेषु [illegible] वंदितोऽभूत् ॥ ५५ ॥ बहिः स व्रजन्प्राह सर्वांश्च कुड्येऽप्यये [illegible] कोपि स्पृशेत्रो ॥ यतः स्पृष्टहस्तस्तु सोमो [illegible] भोक्तुं ययौ साध्वसाढ्यः ॥ ५६ ॥

जागृदवस्थासंबंधिन्याः तनोः देहस्य स्वसाम्यं स्वतुल्यत्वम् अद्धा साक्षात्कथयति । तस्मात् स्वप्नगतरेतस्खलनस्य जागृतौ दर्शनाज्जागृतेरपि स्वप्नतुल्यत्वम् । अन्यथा मिथ्यादेहगतं सत्यदेहे न प्रतीयते । यतः मृषादेहगतं मृषादेह एव प्रतीयत इति नियमात् देहो मृषैवेत्यर्थः । यद्यप्येवं तथापि हि यतः अविद्यावशो देही अतः स्वप्नगतमेवानृतमित्याह । जागृतं देहमनृतं नैवाह ॥ ५४ ॥ गुरूक्तैः विनायकप्रोक्तैः । तेषु त्रिषु मानुषु मध्ये [illegible] अन्यगृहे अशनं भोजनं तद्विषये वंदितोऽभवत् । तद्दिने यवैरन्यगृहे भोजनार्थम् । आमंत्रणमासीदित्यर्थः ॥ ५५ ॥ स गतिः नाहिर्भोजनार्थं [illegible]

अन्यान्प्रति अभीष्टदोऽस्ति । नृकोट्यां कोटिमनुष्येषु मया ईदृक् एतादृशः पुरुषः अन्यो न दृष्टः ॥ ६३ ॥ आर्यपुत्रो दुर्गपालसुतः ॥ ६४ ॥ यद्विषं द्रुतमृत्युप्रापकमस्ति । यतः अतस्त्वमस्मै यावद्विषनाशस्तावत्पर्यंतं दुग्धं पायय प्राशय ॥ ६५ ॥ अर्थैः द्रव्येण बलात्कारेण याच्ञया वा यथा लभ्यते तथा तत् ततम् अतप्तं वा दुग्धं त्वया आनीयताम् ॥ ६६ ॥ ततः भूषाभिर्यदि दुग्धपूर्तिर्न स्यात्तर्हि स्वां तनुं क्रयाय

ययौ तावदेवार्यपुत्रोऽपि मुक्त्वा नमन् श्रीगुरुं चाग्रतोऽतिष्ठदस्य ॥ यतिः प्राह तं भक्तिरेषा गुरौ तेऽनृता वाऽस्ति सत्या द्रुतं दृश्यतेऽत्र ॥ ६४ ॥ ततः सोऽब्रवीत्किं गुरुस्त्वन्यथाद्य यतिश्चैनमूचे विषं भूगबुद्ध्या ॥ किलानेन भुक्तं द्रुतं मृत्युदं यत्पयः पाययास्मै हि यावद्विषान्तः ॥ ६५ ॥ यथा लभ्यतेऽर्थैर्बलाद्याच्ञया वा तथाऽऽनीयतां तच्च तप्तं ह्यतप्तम् ॥ यदा वांतदुग्धस्य दूरं प्रवाहस्तदा त्युल्बणस्यास्य शांतिर्विषस्य ॥ ६६ ॥ अथाकर्ण्य चेत्यब्रवीदार्यपुत्रोऽहमद्यैव गुर्वर्थमंगस्थभूषाः ॥ प्रदास्ये ततश्चेन्न पूर्तिस्ततुं स्वां क्रयायैव सत्यं न सेष्टात्मदातुः ॥६७॥ स चोक्त्वेति निष्कास्य हस्तात्स्वमुद्रा अवस्थाप्य दूतानवोचन्नु यावत् ॥ पयोदैर्धनं याच्यते देयमेव किलानीयतां यच्च लब्धं तदाशु ॥ ६८ ॥ ततस्तेऽथ मुद्रास्तु विक्रीय लब्धाद्धनादेव दुग्धं समानीय ततम् ॥ ददुर्दैडिनेऽ पाययत्सोऽपि तस्मै पिबंश्चावमत्सोऽपि भूयः पयांसि ॥ ६९ ॥ दिनार्द्धादिसूर्यास्तपर्यंतमित्थं पयःपानतः किंचिदेव प्रफुल्ले ॥ वितेने दृशौ तत्र नूत्नं च दुग्धं समानिन्युरेतत्पपौ चैष भूयः ॥ ७० ॥ अथो यामरात्रौ प्रफुल्लाक्षियुग्मो बभाषेऽखिलान्सम्यगेवैष सर्वं ॥ ननंदुर्ददौ दक्षिणां ब्राह्मणेभ्यः सितां चाखिलेभ्यो मुदार्यात्मजोऽपि॥७१॥पयो वांतमेतस्य साधोर्गृहांतादगाद्गोपुरांतं बहिस्तन्नदीव ॥ जनास्तन्निरीक्ष्याद्भुतं मेनिरेंतर्गुरौ दुर्गनाथात्मजस्येह भक्तिम् ॥ ७२ ॥

धनार्थमर्पयामि । हि यतः सा तनुः आत्मदातुः श्रीगुरोः गुरुप्राप्त्यपेक्षया न इष्टा अस्ति ॥ ६७ ॥ पयोदैः दुग्धार्पकैः । ततं दुग्धम् ॥ ६८ ॥ विक्रीय विक्रयं कृत्वा प्राप्तं ततं दुग्धमानीय यतये ददुः ॥ ६९ ॥ ते दूताः नूत्नं नवीनं दुग्धम् आनीतवंतः । एष विनायकः एतद्दुग्धं भूयः पपौ ॥ ७० ॥ सितां शर्कराम् । आर्यात्मजः दुर्गपालसुतः ॥ ७१ ॥ एतस्य विनायकस्य वांतं पयः साधोर्गृहसमीपभागादारभ्य गोपुरांतं नगर

धाराद्धिस्तत् नदीव अगात् अगच्छत् प्रावहदित्यर्थः । जनास्तन्निरीक्ष्य दुर्गपालसुतस्य दुग्धार्पणेन इह गुरौ अद्भुतां भक्तिम् अंतः मनसि मेनिरे ॥ ७२ ॥
ननु योगाभ्यासिनो विनायकस्य कथं विषबाधा बभूवेत्याशंक्य भक्तपरीक्षार्थमेवं तेन लोके दर्शितमित्याह । हरेरिति । साक्षात् हरेः सख्युः ज्वलंती
प्रदीप्ता योगशक्तिः योगसामर्थ्यं यस्य तस्यैतस्य विनायकस्य विषादेर्बाधा कुतः स्यात् न कुतोपि भवेद्धि । यद्यप्येवं तथापि अस्य दुर्गपालसुतस्य
स्थिरां भक्तिं ज्ञातुम् इत्थं कृतम् एवं विषबाधादर्शनं कृतम् । विनायकेनेति शेषः । हि यतः संगृहीतं नूतनसंगृहीतं वस्तु सुज्ञैः परीक्ष्यं परीक्षणीयं

हरेः सख्युरेतस्य साक्षाद्विषादेः कुतः स्यात्तु बाधा ज्वलद्योगशक्तेः ॥ तथाप्यस्य भक्तिं स्थिरां ज्ञातुमित्थं कृतं संगृहीतं परीक्ष्यं हि
सुज्ञैः ॥ ७३ ॥ गृहे तन्निशि स्वप्नमैक्षद्धि कृष्णा पुमान्कृष्णवर्णः करोर्ध्वात्तदंडः ॥ विनेतारमैच्छद्धि दंडेन हंतुं बलाद्दंडिनैकेन
दूरीकृतः सः ॥ ७४ ॥ स्वभर्त्रैंबिका स्वप्नमाहापरेऽह्नि निजोपास्यसाक्षात्कृतिः सोऽब्रवीत्ताम् ॥ विनेतारमेवापमृत्युः किलागा
त्परावर्तयत्तं यतिः कोपि यत्नात् ॥ ७५ ॥ सुतः क्षेमवांस्तेऽधुना गेहतोऽस्य गतेः पंचमं वर्ततेऽब्दं न पूर्णम् ॥ स तावद्गृहं
ह्येष्यतीत्थं निशम्याभवत्स्वस्थचित्ताथ कृष्णापि गंगा ॥ ७६ ॥ श्रीदेशिकेंद्र उवाच ॥ विनायकेऽथ तत्रैव तिष्ठत्यहिपुराद्ययौ ॥
जगन्नाथावरो बंधुर्बंधुं द्रष्टुं सदाशिवः ॥ ७७ ॥

भवति । अतो भक्तबुद्धिपरीक्षणाय विनायको विषं भक्षितवान् । तद्बाधां च दर्शितवानिति भावः ॥ ७३ ॥ तस्यां निशि गृहे विनायकमाता स्वप्नं ददर्श
करेण ऊर्ध्वम् आत्तः उद्धृतः दंडो येन सः । एकेन दंडिना यतिना ॥ ७४ ॥ निजोपास्यस्य साक्षात्कारो यस्य सः गणेशः । कश्चिद्यतिः प्रयत्नेन
तमपमृत्युं परावर्तयत् दूरीकृतवान् ॥ ७५ ॥ ते पुत्रः अधुना क्षेमेणास्ति । अस्य पुत्रस्य गतेः गमनादारभ्य पंचममब्दं वर्तते । तत् पूर्णं यावन्न
भवेत् तावत्स गृहमेष्यति हि । एवं गणेशवाक्यं निशम्य कृष्णा गंगापि स्वस्थचित्ताऽभवत् ॥ ७६ ॥ अथ जगन्नाथसाधोर्बंधुना कृतां विनायकस्य साधुत्व

परीक्षां वर्णयन्नाह विनायक इत्यादि यावत्सर्गसमाप्ति । तत्रैव चंद्रपुरे । अहिपुरात् नागपुरात् ॥ ७७ ॥ तत्रादौ सदाशिवाख्यस्य देवताप्रसादं वर्णयति । तस्येत्याद्यष्टादशभिः । तस्य सदाशिवस्य उपास्यः शिव आसीत् । सः अनेन सदाशिवेन भक्त्या यत्र ध्यायते । तत्रैव तस्मै भक्ताय स शिवोपि यथा येन रूपेण स्मृतस्तेन रूपेण दर्शनं दत्ते । एवं वशीकृतः शिव इत्यर्थः ॥ ७८ ॥ शिवरात्रेः प्राक्दिनैः कैश्चिद्दिवसैः । जनैः सह तस्यां शिवरात्र्याम् ॥ ७९ ॥ सर्वैः सह सदाशिवस्य व्रजतः शिवरात्रिदिनं श्रीशैलतः अर्वाक् दशयोजनके मार्गे प्राप्तम् ॥ ८० ॥ तन्निशि शिवरात्र्यां शिवं

तस्योपास्यः शिवो यत्र ध्यातोनेनैकभक्तितः ॥ तत्रैव दर्शनं तस्मै दत्ते सोपि यथा स्मृतः ॥ ७८ ॥ कैश्चित्स शिवरात्रेः प्राक् दिनैर्नागपुराज्जनैः ॥ निर्ययौ हि शिवं द्रष्टुं तस्यां श्रीमल्लिकार्जुनम् ॥ ७९ ॥ सदाशिवस्य व्रजतोऽखिलैः शिवनिशादिनम् ॥ अर्वाक् श्रीशैलतः प्राप्तं दशयोजनके पथि ॥ ८० ॥ यात्रिणोत्र मिथः प्राहुर्निर्गताः स्मो गृहाद्वृथा ॥ शीतवातातपक्रांताः शिवं द्रष्टुं हि तन्निशि ॥ ८१ ॥ दशयोजनदूरस्थे श्रीशैले सागतात्र नः ॥ विवाहपुर्यां तद्वानां पथीवोपयमाहकम् ॥ ८२ ॥ श्रुत्वा सदाशिवो वाचं तान्प्राहागम्यतां मम ॥ पृष्ठतोद्यैव सर्वेभ्यो दर्शये मल्लिकार्जुनम् ॥ ८३ ॥ तथेति पृष्ठतस्तस्य ययुस्ते स त्वमार्गतः ॥ वनं द्रुमलताकीर्णमपाला गौरिवाययौ ॥ ८४ ॥ तथापि नैव कस्यापि बाधा भूत्कंटकादितः ॥ व्रजन्सदाशिवः शंभुं ध्यायन्वक्तीह चेतसा ॥ ८५ ॥ भूरंभोऽग्निर्मरुद्व्योम सूर्यश्चंद्रः पुमानिति ॥ मूर्त्यष्टकं ते यस्मान्नो ततो विश्वेश्वरात्परम् ॥ ८६ ॥

द्रष्टुं गृहाद्वृथा निर्गताःस्मः ॥ ८१ ॥ सा शिवरात्रिः अत्र मार्गे आगतास्ति । यथा विवाहपुर्यां यत्र विवाहस्तन्नगरे तदर्थं विवाहार्थं गच्छंति तेषां तद्वानां विवाहदिवसो मार्गे यथा भवति तथाऽभवत् ॥ ८२ ॥ ८३ ॥ स तु अमार्गतः अमार्गेण ॥ ८४ ॥ चेतसा ध्यायन् वक्ति प्रार्थितवानित्यर्थः ॥ ॥ ८५ ॥ तत्प्रार्थनामेवाह । भूरित्यादिपंचभिः । यस्मादिति । यस्मात्तव मूर्त्यष्टकम् । तस्मात् विश्वेश्वरात् अपरं नास्ति त्वमेव सर्वरूपोसीत्यर्थः ॥ ८६ ॥

त्रिगुणात्मकरूपेण सर्वकारणस्त्वमेवासीत्याह । सृष्टाविति । सृष्टौ जगत्सर्जने भवरूपोसि । भवति जगद्यस्मात्स भवः । स्थित्यां जगत्पालने मृडरूपोसि । मृडयति सुखयतीति मृडः । अस्य जगतः लये नाशे हररूपो भवसि । हरति सर्वं स हरः । त्रिगुणात्मककर्मभिः ब्रह्मा विष्णुः रुद्रः इति तवैवाख्या नामानि संति । यथोक्तं " बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः । जनसुखकृते सत्त्वोत्पत्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः" इति महिम्नस्तवे जगदुत्पत्त्यादिकर्ता शिव एवोक्तः । तस्मात्त्वमेव सर्वकारणमित्यर्थः ॥८७॥ ८८ ॥ यथा

सृष्टौ भवो मृडः स्थित्यां लयेस्य भगवान्हरः ॥ ब्रह्मा विष्णू रुद्र इति तवैवाख्यास्त्रिकर्मभिः ॥ ८७ ॥ गुणैरेवं त्रिधाकारो जगत्यपि तथा विभो ॥ आब्रह्मस्तम्बपर्यन्तमेकोनंतस्त्वमेव हि ॥ ८८ ॥ त्वमेव कुरुषे विश्वं पासि नाशयसि स्वयम् ॥ यथोत्पाद्येंद्रजालं ज्ञो तद्धि ख्याप्यांतयत्यपि ॥ ८९ ॥ त्वं तु सर्वगतः सर्वं त्वय्येवातः किलाद्य नः ॥ श्रीशैलं दर्शयात्रैव शिवरात्रौ यथास्ति सः ॥९०॥ इत्थं सदाशिवे शंभुं प्रार्थयत्यखिलाश्च ते ॥ सहसा ददृशुः कृष्णां यात्रिणोऽत्रत्यनाविकैः ॥ ९१ ॥ उत्तारिताश्च श्रीशैलं ययुः कूटं समीक्ष्य च ॥ हर्षिताः संकुलां यात्रां पश्यंतः परिधिस्थिताम् ॥९२॥ गत्वा स्नात्वा मल्लतीर्थे पुपूजुर्मल्लिकार्जुनम्॥रात्रौ जागरिताः किं चिन्निद्रिताश्चारुणोदये ॥ ९३ ॥ उत्थायार्कोदये मार्गे ददृशुः प्राग्दिनस्थलम् ॥ विस्मिताः प्राहुरन्योन्यं किमहो स्वप्न ईक्षितः ॥ ९४ ॥ सदाशिवस्य सामर्थ्यं शिवभक्तस्यखल्विदम् ॥ श्रीशैलमथ गत्वा ते ददृशुः प्रागिवाखिलम् ॥९५॥ स्वोपास्यबलवानित्थं बंधुं नत्वा सदाशिवः ॥ तस्थौ गेहे तदा नासीद्गतः स्नातुं विनायकः ॥ ९६ ॥

इंद्रजालवेत्ता इंद्रजालं सर्वतः प्रकाश्यन्नयति । तथा दर्शय त्वमिति शेषः ॥ ८९ ॥ ९० ॥ कृष्णां नदीं अत्रत्यैः कृष्णातीरगतैः नाविकैस्ते यात्रिणः उत्तारिताः संतः श्रीशैलं च ययुरित्यन्वयः ॥ ९१ ॥ परिधिमध्ये स्थितां संकुलां संमर्दभूतां पश्यंतो हर्षिताः संतो मल्लतीर्थे गत्वा स्नात्वा मल्लिकार्जुनं पुपूजुरित्यन्वयः ॥ ९२ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ९३ ॥ प्राक् दिने यत्र निवासस्तत्स्थलं ददृशुः ॥ ९४ ॥ प्राक् शिवरात्रिदिने यथा दृष्टं तथा सर्वं तीर्थपरिधिदेवालयादिकं ददृशुः ॥ ९५ ॥ इत्थं प्रकारेण स्वोपास्यसामर्थ्यवान् सदाशिवः बंधुं जगन्नाथसाधुं नत्वा गृहे स्थितो यदा । तदा स्नातुं गतो

विनायकः । गृहे नासीत् ॥ ९६ ॥ यो विनायकाख्यः साधुः देहेपि स्पृहारहितः ॥ ९७ ॥ पृच्छतां प्रश्नकर्तॄणां सुखप्रदः । मादृशैर्ज्ञानिभिरपि सह स्थातुं योग्योस्ति ॥ ९८ ॥ हे आर्य सात्त्विकेन त्वया सर्वोपि यः कश्चिदपि स साधुरिति वर्ण्यते ॥ ९९ ॥ १०० ॥ मयोक्तः साधुरयमेवास्तीति बंधुना जगन्नाथेन संकेतितः सदाशिवोऽथ भस्मरुद्राक्षसहितं सांबु सोदकं पात्रं हस्ते यस्य तम् आर्द्रांशुकयुक्तः अंसः स्कंधो यस्य तं विनायकम् अनुक्त्वैव हस्ते धृत्वा उग्रदृष्टिः सन् गृहाद्बहिः नगरादूरं क्रोशमितां भूमिं धावन् निनायेति द्वयोरन्वयः ॥ १०१॥ १०२ ॥ भ्रामयित्वेति परान्वयि ।

जगन्नाथोथ कुशलं पृष्टो भ्रात्रेऽब्रवीच्च तम् ॥ आगतः साधुरेकोस्मद्गृहे देहेपि सोऽस्पृहः ॥ ९७ ॥ शांतस्तपस्वी तेजस्वी ज्ञानी पृच्छत्सुखप्रदः ॥ दर्शनीयः सह स्थातुं योग्योसौ मादृशैरपि ॥ ९८ ॥ श्रुत्वेत्थमुदितं भ्रात्राऽब्रवीत्तं च सदाशिवः ॥ त्वया हि सात्त्विकेनार्य सर्वः साधुरितीर्यते ॥९९॥ परीक्ष्यते स साधुः को दंभी वादंभवान्मया॥ सदाशिवे वल्गतीत्थं चागात्स्नात्वा विनायकः ॥ १०० ॥ संकेतितोयमेवेति बंधुनाथ सदाशिवः ॥ स भस्माक्षं सांबुपात्रहस्तमार्द्रांशुकांसकम् ॥ १०१ ॥ विनायकमनुक्त्वैवोग्रदृग्धृत्वा निनाय तम् ॥ गृहाद्बहिः पुराद्दूरं धावन्क्रोशमितां भुवम् ॥ १०२ ॥ भ्रामयित्वा तथैवैनं याममात्रमितस्ततः ॥ गृहमेत्याग्रतो बंधोर्मुक्त्वा हस्तादभाषिणम् ॥ ३ ॥ ननाम दंडवद्भूयः प्राह बंधुं सदाशिवः ॥ सत्यं साधुरयं नेदृङ् मया क्वापि किलेक्षितः ॥ ४ ॥ यश्चापरिचितः स्नात्वा प्रातः शुचिपटः करे ॥ मयाऽस्नातेनापि धृतस्तूष्णीं ग्रामाद्बहिश्चिरम् ॥ ५ ॥ भ्रामितः पुनरानीतो गृहं चाथ नमस्कृतः ॥ तथापि नेषद्ब्रूतेयं तनुस्थोपि न जन्मवान् ॥ ६ ॥ अस्य नामस्मृतेरेवाऽघानि नश्यंति मादृशाम् ॥ किं पुनर्दर्शनात्स्पर्शात्सहवासाच्च दुर्लभात् ॥ ७ ॥ वर्णयित्वेति बहुधा प्रार्थयंश्च सदाशिवः ॥ विनायकं नमन्प्राहेत्यपराधं क्षमस्व मे ॥ ८ ॥

अभाषिणं मौनवंतं विनायकं हस्तात् मुक्त्वा विसृज्य दंडवद्भूमौ ननाम ॥ १०३ ॥ १०४ ॥ शुचिपटः पवित्रवस्त्रः । अस्नातेनापि मया किंचिन्न कृतं इति द्वयोः संबंधः ॥ १०५ ॥ अयं साधुः तनुस्थो देहस्थोपि जन्मवान् नास्ति ॥ १०६ ॥ अस्य नामस्मृतेः नामस्मरणादेव मादृशानां पापानि नश्यंति । दर्शनादिना पापानि नश्यंतीति किं वाच्यं नश्यंत्येवेत्यर्थः ॥ १०७ ॥ १०८ ॥

अमितं बहुविधं । यः देहादिषु त्यक्तसंगः अत एवात्मवान् ज्ञानी स हसन् प्राह । सदाशिवमिति शेषः ॥ १०९॥ अथ विनायक आत्मैक्येनापराधाभावं दर्शयन्नाह । आत्मेति । अमितेषु अनंतेषु ब्रह्मांडेषु न भिद्यति । भेदं न प्राप्नोति । यथांभोनिधिः एकः समुद्रः बहुयोजनविस्तीर्णः क्रोशेषु तत्तत्सेतौ क्रोशमर्यादायां चकारात् योजनेषु योजनमर्यादायां च तरंगे च न भिन्नः तद्वत् । तत्र एकस्तरंगः इतरं तरंगं हंति अन्यवत् इतरतरंगवत् इतरं धावति । तत्र कस्य तरंगस्य कस्तरंगः अपराधवान् भवति । तस्मान्न कस्यापराधोस्ति । सर्वत्रात्मनः एकत्वादित्यर्थः ॥ ११० ॥ यः बहून् साधून् निनिंद । स सदाशिवः इत्थं बहुविधं विनायकस्य सद्वचः निशम्य इमं विनायकम् । आत्मवित्सु सत्तमं श्रेष्ठं मत्वा अवश्यमपि स्वकर्म त्यक्त्वा सततं विनेतुः अग्रे

विनायको निशम्येति सदाशिववचोऽमितम् ॥ देहादित्यक्तसंगो योऽब्रवीदित्यात्मवान्हसन् ॥ ९ ॥ विनायक उवाच ॥ आत्मा सर्वगतोऽद्वयः सततमप्यानंदवान्स्वस्थितो ब्रह्मांडेष्वमितेषु भिन्न इव यः क्रोशेष्विवांभोनिधिः ॥ तत्सेतौ च तरंग एक इतरं हंत्य न्यवद्धावति कः कस्याऽस्त्यपराधवानिह तथा तन्वास्तनुश्चात्मनि ॥ १० ॥ श्रुत्वेत्थं हि सदाशिवो बहुविधं वैनायकं सद्वचो यः साधूंश्च बहून्निनिंद स इमं मत्वात्मवित्सत्तमम् ॥ त्यक्त्वावश्यमपि स्वकर्म सततं तस्थौ विनेतुः पुरस्तस्यार्यस्य च भक्तितो गुरुवरे सर्वेपि भक्त्यान्विताः ॥ ११ ॥ इत्थं चंद्रपुरेपमृत्युहरणं श्रुत्वा परीक्षां तथा साधुत्वस्य विनायकस्य पठति श्रद्धान्वितो नित्यशः ॥ नो तस्यापमृतिर्न वा परकृता निंदा क्वचिज्जायतेर्थानर्थी स्वगतिं मुमुक्षुरमलां शांतिं लभेज्ज्ञानवान् ॥ ११२ ॥ इति श्रीमद्गुरुपरं पराचरित्रोत्तरार्द्धे विनायकगुरोश्चंद्रपुरस्थितिवर्णनं नामाष्टचत्वारिंशः सर्गः ॥ ४८ ॥

तस्थौ । तस्य आर्यस्य श्रेष्ठस्य सदाशिवस्य गुरुवरे विनायके भक्तितः भक्तिसत्त्वात् सर्वेपि जनाः गुरुवरे भक्त्या युक्ताः बभूवुः ॥ १११ ॥ एतत्सर्गोक्तकथाश्रवणादिफलमाह । इत्थमिति ।इत्थं विनायकस्य चंद्रपुरे अपमृत्युहरणं तथा साधुत्वस्य परीक्षां च श्रुत्वा श्रद्धान्वितः सन्यः इदं नित्यशः पठति । तस्य अपमृतिर्न भवेत् । परकृता निंदा च न जायते।अर्थी अर्थेच्छुः अर्थान् लभेत् । मुमुक्षुः स्वगतिम् आत्मज्ञानं लभेत् । ज्ञानवान् अमलां शांतिं लभेत् । शार्दूलविक्रीडितम् ॥ ११२ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां शुकानंदचरित्रेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

एकोनपंचाशेगाऽन्धिभूपयैः स्तूयते मृधम्। विनेतुः पूर्णदीक्षोक्ता सद्भिः कृष्णातटे स्थितिः ॥४९॥ विनायक इति। अथ सदाशिवकृतपरीक्षानंतरम् ॥ १॥ अथ कस्यचिद्योगिनो यतेरद्भुतां कथां वक्तुमुपक्रमते। एकदेत्यादिना ॥ २ ॥ हनौ अल्पकृष्णवर्णयुक्तान्। इदं हनौ कृष्णत्वम् ॥ ३ ॥यतो राज्ञः अश्वगः अश्वगामी सेवकः सवार इति भाषाप्रसिद्धस्तस्य पुत्रः। अत एव शस्त्रभृद्भिः शस्त्रधारकैः सहाभ्यासोऽस्यास्तीति। सः शस्त्रविद्याकुशलः आसीदित्यर्थः ॥४॥

श्रीदेशिकेंद्र उवाच ॥ विनायकश्चंद्रपुरेऽथाभूत्ख्यातो हि सद्गुरुः ॥ दर्शनार्थं ययुस्तस्य पौराः सर्वेऽतिभक्तितः ॥ १ ॥ एकदा ब्राह्मणाः शांताः सत्कर्माभिरतांतराः ॥ विद्वांसश्चैत्य नत्वा तं तस्थुः सर्वे तदग्रतः ॥ २ ॥ सर्वांगकांतांस्तान्दृष्ट्वा हनौ कार्ष्ण्यान्वितानणु ॥ विनायकोपृच्छदिदं कांतिमत्सु भवत्सु किम् ॥ ३ ॥ तेऽथाहुः शिवभक्तः प्राग्द्विजोऽत्रत्योपि लेखकः ॥ बाल्याच्छस्त्रभृदभ्यासी यतो राजाश्वगात्मजः ॥ ४ ॥ परिणामज्ञबुद्धिः स राज्ञा ज्ञातः कचित्कृतौ ॥ प्रभुत्वे योजितोत्रैव देशे स्वातंत्र्यकार्यकृत् ॥ ५ ॥ देशः स्वस्थः कृतस्तेन हताश्चोराश्च शस्त्रिणा ॥ दूरं पलायिताः केचित्तदा नैवात्र चारभीः ॥ ६ ॥ विप्राणां दानदो नित्यं दीनां धकृपणाऽन्नदः ॥ शिवरायः स विदुषां संगाद्विद्वांश्च तीव्रधीः ॥ ७ ॥ नापत्यमासीन्नृपतुल्यभूतेरप्यस्य दैवाद्धि मृता च पत्नी ॥ अथैष्वनीहः प्रवयाः समृद्धमदाद्द्विजेभ्यः स गृहं ह्यशस्त्रम् ॥ ८ ॥ भूत्वा यतिश्चोपनिषत्प्रमेयं पश्यन्त्सदानंदनिधौ निमग्नः ॥ वेदांतनिष्ठेषु बभूव मान्यस्त्रयोस्य शिष्याश्च बभूवुरेके ॥ ९ ॥ यतेर्गुरोस्ते यतयश्च सेवां चक्रुर्ययुस्तं तु दिदृक्षवोऽन्ये ॥ संमर्दभीरुर्निरगात्पुरात्स शिष्यैः शिरःशस्त्रसमूहभारैः ॥ १० ॥

परिणामज्ञा फलपरिपाकविचारवती बुद्धिर्यस्य स राज्ञा कचित् कृतौ कुशलतायां ज्ञातः। अत्रैव चंद्रपुरप्रांते स्वतंत्रत्वेन कार्यकर्ताऽसौ प्रभुत्वे स्वामित्वे योजित आसीत् ॥ ५ ॥ ६ ॥ शिवरायनामा ॥७॥ अशस्त्रं शस्त्रवर्जितं यथा स्यात्तथा द्विजेभ्यः गृहं अदात्। शस्त्राणि विना सर्वं द्विजेभ्यो दत्तवान् ॥ ८ ॥ उपनिषत्सु श्रुतिशिरःसु प्रमेयं ज्ञेयं वेदान्तार्थम्। एके मुख्याः ॥ ९ ॥ शिरःसु शस्त्रसमूहानां भारो येषां तैः शिष्यैः सह चंद्रपुरान्निर्गतः ॥ १० ॥

निजैः शिष्यैः । कालुष्यं मलम् ॥ ११ ॥ विद्वान् महाराष्ट्रवराः आंध्रदेशस्थाश्च तैः शिष्यैर्निमित्तभूतैः आत्मतत्त्वबोधकमेकं मननं विचारप्रधानं ग्रंथं लोकोपकाराय कृतवान् । यतिरित्यध्याहारः । त्रिभाषं गीर्वाणमहाराष्ट्रांध्रभाषाभिः बद्धम् । तन्मननं षोडशप्रकरणैः पृथिव्यां ख्यातमासीत् ॥ १२ ॥ अथ यतिः तस्यां पुरि ये अविद्धकर्णानां यवनानाम् आत्मभवाः पुत्रास्तैः अत्र यतिनिर्मितोपवने पुष्पद्रुमभक्षणे नियुक्तान् अजान् निवार्य अर्भान् अजपालान् प्राह । अमी द्रवः पुष्पद्रुमाः कंटकाढ्याः कंटकद्रुमा इवाजैर्भक्षितुं योग्याः न संति ॥ १३ ॥ सगेहाः सगृहाः गृहस्थाश्रमिणः अस्माकं संन्यासिनां

वापीं पुरादूरमवेक्ष्य जीर्णां कालुष्यमुद्धृत्य निजैः स तस्याः ॥ आराममद्रिः कृतवान्सुपुष्पं लब्धाशनोऽत्रावसदात्मनिष्ठः ॥ ११ ॥
विद्वन्महाराष्ट्रवरांध्रशिष्यैर्लोकोपकृत्यै परतत्त्वबोधम् ॥ चकार चैकं मननं त्रिभाषं ख्यातं क्षितौ षोडशभिः प्रकारैः ॥ १२ ॥
पुरेत्र पुष्पद्रुमभक्षकाजानविद्धकर्णात्मभवैर्नियुक्तान् ॥ निवार्य चार्भान् यतिराह नाजैर्भक्ष्या द्रवोमी इव कंटकाढ्याः ॥ १३ ॥
वयं निरीहाः पुरमुज्झ्य दूरं स्थिताः परोपद्रवभीतितोऽत्र ॥ यूयं सगेहाः कथमस्मदी यद्वेषेण कल्याणयुगायुषोऽग्रे ॥ १४ ॥
इत्थं हि नित्यं यतिनोदितास्तेऽजैराययुः पुष्पहनोत्र पापाः ॥ भूयोऽब्रवीत्तांस्तु यतिर्मुधाऽसून्किं नाशितुं हीच्छथ मत्करेण ॥ १५ ॥
शरद्गता नित्यमिति प्रवाहाद्यतिस्त्वथो पूरधिकारिविप्रान् ॥ वृत्तं त्विदं प्रेषयतिस्म शिष्यै रक्ष्यो यतिर्दुर्जनतो गृहस्थैः ॥ १६ ॥

द्वेषेण अग्रे कल्याणयुक् आयुः येषां ते कल्याणजीविनः कथं भविष्यथ । न कथमपि भवतां कल्याणजीवनं भविष्यतीत्यर्थः ॥ १४ ॥ यतिना उक्ता अपि ते अजपालाः अजैः सह अत्रोपवने नित्यमाययुः । असून् स्वप्राणान् ॥ १५ ॥ नित्यम् इति प्रवाहात् क्रमेण शरत् गता वर्षमतिक्रांतम् । अथ यतिः पुरि अत्र नगरे ये अधिकारिणो विप्रास्तान् प्रति गृहस्थैर्भवद्भिर्यतिरहं दुर्जनतः पुष्पनाशकयवनेभ्यो रक्षणीय इति वृत्तं शिष्यैः प्रेपितवान्॥ १६॥

अत्रत्याधिकारिभिः अदः यतिवचनम् उपेक्षितम् । हि यतः असज्जनैर्दुर्जनैर्यवनैः सह कलिं कलहं कर्तुम् अनीशैः असमर्थैः । इति प्रत्यब्दम् अस्मान्प्रति यतेः शिष्यवचनक्रमेण समानां वर्षाणाम् एकादशकम् । एकादशवर्षाणीति यावत् । गतम् अतिक्रांतम् ॥ १७ ॥ वासुदेवेंद्र इति संन्यासनामा स उत पुनः आगतान् साजान् अजसहितान् यवनपुत्रान् वदति । उवाच । वः युष्माकम् असुक्षये प्राणनाशे अब्दमात्रं शेषमस्ति किल । यदि वः जीवने इच्छास्ति । तर्हि अद्यापि अधुनापि यन्मयोक्तं तद्यूयं शृणुध्वम् ॥ १८ ॥ स तु यतिः इति प्रतिमासं यवनान् नः अस्मांश्च शिष्यद्वारा चरमाब्दस्य शेषं अवदत् । पूर्तौ वर्षसमाप्तौ च यूयं श्वः मत्करेण मृत्युं प्राप्स्यथेति पुनस्तान्यवनान्प्राह ॥ १९ ॥ तेषां यवनानां पुत्रैः

श्रुत्वाप्यदोऽस्माभिरुपेक्षितं चानीशैः कलिं कर्तुमसज्जनैर्हि ॥ प्रत्यब्दमस्मानिति शिष्यवाचा गतं समैकादशकं यतेश्च ॥ १७ ॥
स वासुदेवेंद्र उतागतांस्तान्साजान्वदत्यब्दमसुक्षये वः ॥ शेषं किलेच्छा यदि जीवनेऽस्ति शृणुध्वमद्यापि मयोदितं यत् ॥ १८ ॥
स मासिमासीत्यवदत्त्वविधान्नश्चाथ शिष्यैश्चरमाब्दशेषम् ॥ पूर्तौ पुनः प्राह च तानविधान्यूयं मृतिं प्राप्स्यथ मत्कराच्छ्वः ॥ १९ ॥
श्रुत्वा तदर्भैर्मिथ इत्थमुक्तं वक्त्येष चैको मुहुरस्मदंतम् ॥ वध्यः श्व एवाश्वखिलैः सशस्त्रैरित्यागतं प्राग्द्विगुणैरथार्भैः ॥ २० ॥
मुक्त्वा द्रुमध्येऽजततिं ययुस्ते हंतुं यतिं तन्निकटे सशस्त्राः ॥ दीपं पतंगा इव वीक्ष्य तान्स चक्रेण कांश्चिद्धतवान्सुवेगात् ॥ २१ ॥
ब्रह्मैव सत्यं वदता हतास्ते क्षणेन बाणैर्यतिनात्र चैकः ॥ व्रणी गतो ग्राममतो निशम्य स्वांतं ययुस्ते यवनाः सहस्रम् ॥ २२ ॥

यतिवचनं श्रुत्वा मिथः इत्थमुक्तम् । तदेवाह वक्तीति । एष एकाकी मुहुः अस्माकं नाशं वक्ति । अतः सर्वैरस्माभिः शस्त्रसहितैः शीघ्रं श्व एवैष वध्य इति । अथ रात्र्यतिक्रमणानंतरं पूर्वापेक्षया द्विगुणितैरर्भैर्यवनपुत्रैः आगतम् । ते आगता इत्यर्थः ॥ २० ॥ द्रुमध्ये पुष्पद्रुममध्ये अजसमुदायमुन्मुच्य सशस्त्रास्ते यतिं हंतुं समीपे ययुः । स यतिस्तान् दृष्ट्वाऽतिवेगेन कांश्चिच्चक्रेण हतवान् ॥ २१ ॥ ब्रह्मैव सत्यमस्तीति वदता यतिना ते सर्वे यवनाः क्षणमात्रेण बाणैर्हताः । अत्र एषु यवनेषु व्रणवानेको ग्रामं प्रति गतः अतः अस्मात्स्वांतं स्वजननाशं श्रुत्वा ते सहस्रं यवना ययुः । यतिघाता

येति शेषः ॥ २२ ॥ यतिर्वध्य इति सर्वैरुक्ताः वाचो दूरान्निशम्य सः आत्मनः पर्णकुटी त्यक्तवान् । अथ सः सर्वाणि आत्तानि गृहीतानि शस्त्राणि येन स गृहीतसर्वशस्त्रः सन् धरायाः उच्चप्रदेशे अंते प्रलये रुद्र इव सर्वान्हंतुं स्थितोऽभवत्॥२३॥येन यतिना अस्माकम् अल्पपुत्राः बंधवः अन्ये चाप्ताः हतास्तं द्रुतमेव वयं हन्मः । इत्थं निशम्य तान्प्रति सोहमिहैवास्मि पूर्वकुट्यां तु नास्मीति यतिराह ॥ २४ ॥ परितः दृशो येषां ते परितोदृशः । उच्चवाचम् उच्चस्वरां वाणीं । समंतात् आसन् । विमुक्तासिधराः विकोशखड्गधराः ॥ २५ ॥ अंतकलोकगाः यमलोकगामिनो बभूवुः ॥ २६ ॥ उच्चरन्

वध्यो यतिश्चेत्यखिलोक्तवाचो दूरान्निशम्याऽत्यजदात्मवासम् ॥ सर्वात्तशस्त्रोऽथ धरोच्चदेशे स्थितोऽखिलान्हंतुमिवांतरुद्रः ॥ २३ ॥
येनास्मदल्पात्मजबंधवोन्ये चाप्ता हतास्तं द्रुतमेव हन्मः ॥ इत्थं निशम्याह यतिस्ततोमून्सोऽहं त्विहैवास्मि न पूर्वकुट्याम् ॥२४॥
श्रुतोच्चवाचं परितोदृशस्ते वीक्ष्योच्चभूस्थं यतिमाससमंतात् ॥ आसन्विमुक्तासिधराश्च तावद्बाणैर्यतिस्तानवधीत्पुरस्थान् ॥ २५ ॥
ये दूरगास्तानपि बाणघातैः करांघ्रिकण्ठोरुकटिप्रदेशे ॥ जघान भिन्नांघ्रिकरांश्च केचिद्भूशायिनोप्यंतकलोकगाः स्युः ॥ २६ ॥
अत्रैव सत्यं मुहुरुच्चरन्स बाणैर्बहूनित्यवधीद्धि तेऽपि ॥ तं यंत्रमुक्तैर्लघुसीसगोलैर्दूरान्निजघ्नुः कुसुमैरिवेभम् ॥ २७ ॥ त्यजामि तांश्चापि शरान्स उच्चैरुक्त्वाथ तत्याज बहूनधस्तात् ॥ केचिद्ग्रहीतुं ययुरस्य पृष्ठात्तान्भिंडिपालाश्मभिराततांड ॥ २८ ॥ कांश्चित्स कुंतादपि दीर्घशूलाद्धत्वोज्झ्य ते चैककरात्तशक्तिः ॥ खेटापरोऽधश्च ययौ धरोच्चाद्बध्वैव शस्त्राणि बहूनि कट्याम् ॥ २९ ॥

उच्चारयन् । यंत्राणि । भाषया बंदूक इति प्रसिद्धानि । तेभ्यो मुक्तैर्लघुसीसगोलैः कुसुमैर्गजमिव । योगाभ्यासेन दृढशरीरस्य सीसगोला अपि पुष्पसमा बभूवुरित्यर्थः ॥ २७ ॥ अमितान्बहून् शरान् अहं त्यजे त्यजामि भूमौ स्थापयामीति यावत् इति उक्त्वा अधस्तात् शरान् तत्याज । किं चियवनाः तान् ग्रहीतुं अस्य पृष्ठतो ययुः । तान् स भिंडिपालगतपाषाणैः आ सर्वतस्तताड ॥ २८ ॥ कांश्चित्कुंतेन दीर्घशूलेन च हत्वा ते कुंतशूले उज्झ्य त्यक्त्वा एककरेण आत्ता गृहीता शक्तिर्येन खेटं शस्त्रनिवारणचर्म तद्युक्तः अपरहस्तो यस्य स बहूनि शस्त्राणि कट्यां बध्वा धराया उच्चदेशादधश्च

ययौ ॥ २९ ॥ उड्डीय उड्डानं कृत्वा । खेटेनाभिवंचयन्निवारयन् । क शस्त्रैः योद्धुमिति शेषः ॥ ३० ॥ अव्रणः अविद्धगात्रः तैः सह युयुधे । स यतिः त्यक्तसर्वशस्त्रः सन् पट्टिशतः पट्टिशेन असितः खड्गेन च तान्यवनान् चिच्छेद हीति निश्चयेन ॥ ३१ ॥ अलातचक्रोपमं तत पट्टिशम् ॥ ॥ ३२ ॥ पलायितान् दृष्ट्वा यतिर्मनसि प्राह । शूरस्त्यक्तशस्त्रान् कृतपृष्ठदेशान् न हन्यात् । अथ स यतिर्दूरगतान् दिदृक्षून् पौरान् दृष्ट्वा तेषु पौरेषु च विप्रान् इति वक्ष्यमाणमाह ॥ ३३ ॥ अविधैः कृतं कर्म वः युष्मभ्यं स्वैः शिष्यैः शिष्यद्वारा मया बहुवारमुक्तम् । अत्र विषये भवद्भिरल्पमपि उक्त्या

उड्डीय शक्त्या त्वहनद्यतिस्तच्छस्त्राणि खेटादभिवंचयंश्च ॥ बभ्राम चैकश्चपलो न शक्तास्तं द्रष्टुमेते यवनाः क योद्धुम् ॥ ३० ॥
पूर्वं त्यजञ्छस्त्रमथान्यदेव गृह्णन्स चैको युयुधेऽव्रणस्तैः ॥ चिच्छेद तान्पट्टिशतोऽसितश्च यतिर्हि तत्रोज्झितसर्वशस्त्रः ॥ ३१ ॥
अलातचक्रोपमपट्टिशं तत्संभ्रामयंस्तानवधीद्बहूंश्च ॥ पलायिताश्चोर्वरितास्स्वलंतस्त्यक्त्वैव शस्त्राण्यपि जीविताशाः ॥३२॥ संवीक्ष्य
चित्ते यतिराह शूरान्संत्यक्तशस्त्रान्न हि दत्तपृष्ठान् ॥ हन्यादुदीक्ष्याऽऽजिदिदृक्षुपौरान्स दूरगान्प्राह वचोऽथ विप्रान् ॥ ३३ ॥ शिष्यैर्मयाऽविधकृतं बहूक्तं साहाय्यमुक्त्याप्यणु नो किलात्र ॥ यद्द्वादशाब्दं च कृतं भवद्भिर्यात्वग्र्यतेजस्तपसापि तावत् ॥ ३४ ॥
उक्त्वेति तस्मात्स ययौ स्ववापीं स्नात्वात्र भस्माक्षधृगासनस्थः॥आचम्य चासून्क्रमतः करंध्रं भित्त्वा ययौ धाम निवृत्तिशून्यम् ॥३५॥
शेषास्ततस्तं यवनाः समेत्य दूराच्छनैर्वीक्ष्य विशस्त्रमीक्ष्यम् ॥ हंतुं ययुः केचिदथापरे तानाहुर्हि यूयं किमितो गताः प्राक्॥३६॥
हन्यात्किल स्त्री ह्यपि शस्त्रहीनं शस्त्रान्विता ह्येष तनूज्झितासुः ॥ धृत्या स्थितं प्रेतमिदं न वेध्यमुक्त्वेत्यभूत्तैस्तु मिथस्तदाजिः॥३७॥

वाचापि यवननिवारणरूपं साहाय्यं न कृतं यतस्तावत् द्वादशवर्षपर्यंतं अग्र्यं श्रेष्ठं युष्माकं ओजः ब्रह्मतेजः तपसा पुण्येन सह यातु गच्छतु । यूयं द्वादशवर्षपर्यंतं तपस्तेजोहीना भविष्यथेत्यर्थः ॥ ३४ ॥ तस्मात् स्थानात् । भस्माक्षधृक् भस्मरुद्राक्षधारी प्राणानायम्य मूलाधारादिक्रमेण ब्रह्मरंध्रं भित्त्वाऽऽवृत्तिरहितं परं धाम ययौ ॥ ३५ ॥ विशस्त्रं शस्त्ररहितम् । अपरे यवनाः पूर्वं इतः स्थानात् किमर्थं गताः पलायिताः स्थ ॥ ३६ ॥ एष यतिः तनोः

संकाशात्त्यक्ता असवो येन स गतप्राणोऽस्ति। इदं प्रेतं धैर्येण स्थितं न वध्यं भवद्भिरिति शेषः। इति उक्त्या वाक्येन निमित्तभूतेन तैः सह परस्परं आजिः संग्रामोऽभवत् ॥ ३७ ॥ तं यतिम्। आपुः प्राप्ताः। एते यवनाः। कृतस्य पुण्यस्य नाशाद्धेतोरस्माभिस्तदैव विवर्णता प्राप्ता। तस्य शापेन कृष्णवर्णा वयं जाता इत्यर्थः ॥ ३८ ॥ पद्भ्यः आरभ्य तनुस्थितं तत् वैवर्ण्यं द्वादशवर्षैः क्रमेण गतम्। अल्पं तु वक्त्र एव स्थितम्। तदपि वर्षपूर्तौ गमिष्यति उत पुनस्त्रिभिरग्रगामिमासैर्वयं सुवर्णाः दिव्यकान्तयो भविष्यामः ॥ ३९ ॥ इति विनायकाय द्विजैः कथा उक्ता। नतिः नमस्कारः कृतः। गृहं स्वस्व

तमस्पृशंतः पुरमापुरेतेऽथो तस्य शिष्यैर्विधिवत्समाधिः ॥ यतेः कृतोऽस्माभिरथो तदैव वैवर्ण्यमाप्तं कृतपुण्यनाशात् ॥ ३८॥ अब्दैः क्रमाद्द्वादशभिर्गतं तत्पद्भ्यस्तनुस्थं त्वणु वक्त्र एव ॥ स्थितं गमिष्यत्युत वर्षपूर्तौ वयं सुवर्णास्त्रिभिरग्रमासैः ॥ ३९ ॥ श्रीदेशिकेंद्र उवाच ॥ द्विजैः कथोक्तेति नतिर्विनेत्रे कृता गृहं चाप्तमथो विनेता ॥ त्रस्तोऽमितागंतृजनैः स्वपित्रोरीक्षोत्सुकोऽगाच्छिबिकाधिरूढः ॥ ४० ॥ देशिकेन्द्र उवाच ॥ तुष्टावात्मागमान्नत्वा पितरौ स विनायकः ॥ पित्रेऽब्रवीत्क्रमात्पृष्टक्षेमः पंचाब्दवृत्तकम् ॥ ४१ ॥ शुकाश्रमस्थितिं यक्षिण्युक्तिं देवीक्षणं गुरुः ॥ श्रुत्वा प्राक्सिद्धमप्येनं मेनेऽवाप्याप्तसिद्धिकम् ॥४२॥ मंत्राधिकारिणं मत्वा ततः कतिपयैर्दिनैः॥विधिवत्षोडशीं दीक्षां ददौ पुत्राय धीमते ॥४३॥ शुकाश्रमाप्तसिद्धित्वाद्यक्षिण्युक्त्या च देशिकः ॥ शुकानंदेति तन्नामाकरोदात्मविदां वरः ॥ ४४ ॥ नवोढां तां युवोज्झ्य त्वं पंचाद्धं बहिरास्थितः ॥ कुलीने योग्यमेतन्नो पितृभ्यामुक्त इत्यसौ ॥ ४५ ॥

गृहं च प्राप्तम्। स्वगृहान्प्रति गता इत्यर्थः। अथ विनायकः अमितैर्बहुभिः दर्शनार्थं आगंतृजनैः त्रस्तः स्वपित्रोः ईक्षोत्सुकः दर्शने उत्कंठितः शिबिकाधिरूढः सन् अगमत्। स्वपितृसमीपमिति शेषः ॥ ४० ॥ आत्मागमनेन संतुष्टौ ॥ ४१ ॥ देवीक्षणं परदेवतादर्शनम्। अप्य अधुनापि ॥ ४२ ॥ षोडशीं दीक्षां पूर्णाभिषेकदीक्षाम् ॥ ४३ ॥ शुकाश्रमे प्राप्ता सिद्धिर्येन तस्य भावस्तस्माद्धेतोः यक्षिण्याः उक्त्या हेतुभूतया तस्य विनायकस्य शुकानंदेति नाम कृतवान् ॥ ४४ ॥ कुलीने त्वयि एतन्न योग्यमस्ति। इति पितृभ्यां उक्तः असौ विनायको मासद्वयपर्यंतं गृहेऽवसदित्यन्वयः ॥ ४५ ॥

इह गृहे ॥ ४६ ॥ दर्शनादेव साधव इति परान्वयि ॥ ४७ ॥ ईक्ष्यता दृश्यताम् । अस्माभिरिति शेषः । उत्तरार्द्धमुत्तरान्वयि ॥ ४८ ॥ विनायकः तेन संमर्देन त्रस्त इति परान्वयि ॥ ४९ ॥ एकांतभूः एकांतस्थानं प्रियं यस्य । गृहंगमः गृहागमनवानभवत् ॥ ५० ॥ द्विमासपर्यंतं चतुर्मासपर्यंतं वा पित्रोः प्रीतये स विनायको गृहेऽवसत् । एवं स्थितिर्यस्य तस्य विनायकस्य वृद्धानां हृदां प्रिया कन्याऽभवत् ॥ ५१ ॥ ५२ ॥ तद्वृत्तांतं

विनायकोऽवसद्गेहे मासद्वयमिहाययुः ॥ प्राप्तसिद्धिममुं ज्ञात्वा स्वस्वकामाप्तये जनाः ॥ ४६ ॥ नैषद्ददाति तान्योगी योगाभ्यासरतः सदा ॥ प्राहुस्तथापि तेऽन्योन्यं दर्शनादेव साधवः ॥ ४७ ॥ पुनंतीति पुराणोक्त्याऽयं सिद्धो हीक्ष्यतां मुहुः ॥ श्रद्धयैवं प्राप्तसिद्धे स्तस्य दर्शनमात्रतः ॥ ४८ ॥ स्वस्वेप्सितानि ते प्रापुर्विश्वासो हि फलप्रदः ॥ संमर्दोऽथ महानासीत्त्रस्तस्तेन विनायकः ॥ ४९ ॥ तूष्णीं वनं ययौ गेहाद्योगी ह्येकांतभूप्रियः ॥ षण्मासं वाधिकोनं च स्थित्वैकांते गृहंगमः ॥ ५० ॥ द्विमासं वा चतुर्मासं पित्रोः प्रीत्यै गृहेऽवसत् ॥ इत्थंस्थितेरभूत्कन्या विनेतुर्वृद्धहृत्प्रिया ॥ ५१ ॥ अथैकदा भ्रमन् प्रातः करवीरं विनायकः ॥ तत्रासीद्ब्रह्मचार्येकः साक्षाल्लक्ष्म्याः प्रसादवान् ॥ ५२ ॥ तंत्राणि स चतुःषष्टि दुर्लभान्यपि पुस्तकैः ॥ यत्नात्संगृह्य चापश्यन्मंत्राद्यं तत्तदुद्धृतेः ॥ ५३ ॥ बीजकोशबलाद्वेद स व्रती सुलभं मितम् ॥ संप्रदायैकवेद्यं यद्वेत्ति कोदः सुधीः स्वयम् ॥ ५४ ॥ अचिन्तयद्ब्रह्मचारी कस्तंत्राणां रहस्यकम् ॥ मां वक्तुमीशः स्याद्येषां पुस्तकान्यपि कानिचित् ॥ ५५ ॥ त्रुटितान्यतिजीर्णानि येषां तानि मया चिरम् ॥ संशोध्य लेखकैर्द्रव्याल्लिखितान्यथ नो मया ॥ ५६ ॥

वर्णयति । तंत्राणीत्यादिदशभिः । तत्तदुद्धृतेः तत्तन्मंत्रोद्धारेण मंत्राद्यमपश्यत् ॥ ५३ ॥ बीजकोशबलेन सुगममपि मंत्रादिकं स व्रती मितं अल्पमेव वेद । यत् यस्मात्संप्रदायैकवेद्यं अदः इदं मंत्रादिकं कः सुधीः स्वयं गुरुं विना वेत्ति न कोऽपि वेत्तीत्यर्थः ॥ ५४ ॥ मनसि अचिन्तयत् ॥ ५५ ॥ येषां तंत्राणां यानि पुस्तकानि त्रुटितानि असमग्राणि अतिजीर्णानि संति । तानि मया चिरकालं संगृह्य संशोध्य द्रव्य

द्वारेण लेखकैः लेखितानीति द्वयोः संबंधः ॥ ५६ ॥ तेषां तंत्राणां साक्षाल्लक्ष्मीदृशा लक्ष्मीसाक्षात्कारवतापि मया तात्पर्यं न ज्ञायते । यदि किंचिदपि तात्पर्यं त्रिभिर्दिवसैः मम बुद्धिम् एष्यति बुद्ध्यारूढं भविष्यति ॥ ५७ ॥ ५८ ॥ साक्षात् प्रत्यक्षी भूय तमब्रवीत् । नो इत्यादि परान्वयि ॥ ५९ ॥ हि यतः ब्रह्माद्या अपि गुरोः सकाशात् ऋषयो मंत्रद्रष्टारो जाता इति शेषः । त्वां प्रति तान्मंत्रान् वक्तुम् अत्र ममालये गुरुरागतोऽस्ति ॥ ६० ॥

तात्पर्यं ज्ञायते तेषां साक्षाल्लक्ष्मीदृशापि न ॥ यदीषच्चाप्यहोभिर्मे त्रिभिस्तद्बुद्धिमेष्यति ॥५७॥ यदि वा लभ्यते वक्तुं गुरुस्तत्र विदां वरः ॥ तदैव प्राणैः स्थास्येहं नो चेत्त्यक्ष्यामि तान्द्रुतम् ॥ ५८ ॥ श्रीदेशिकेन्द्र उवाच ॥ इत्थंमतिं महालक्ष्मीः साक्षाद्भूत्वाऽब्रवीच्च तम् ॥ साहसं मास्तु ते बुद्धौ नो मंत्रास्तु गुरुं विना ॥ ५९ ॥ ज्ञायंते कैरपीषद्धि ब्रह्माद्याश्चर्षयो गुरोः ॥ त्वां तान्वक्तुं चागतोऽत्र गुरुर्हास्त्यालये मम ॥ ६० ॥ तं गच्छ शरणं शीघ्रं तपःकांतमलौकिकम् ॥ इत्युक्त्वांतर्दधे देवी वर्णी सोथ निजालयात् ॥ ६१ ॥ ययौ देव्यालयं तत्र तपस्विषु विनायकम् ॥ देव्युक्तकांत्या ज्ञात्वा तं ननामानन्यसन्नतिः ॥ ६२ ॥ प्रार्थयन्गृहमानीय चोक्त्वा वृत्तं निजं क्रमात् ॥ पुनः प्राह वृणेऽहं त्वां गुरुत्वेनांबिकोक्तितः ॥ ६३ ॥ तंत्राणि सरहस्यं मे कृपया प्राक्क्रमाद्वद ॥ बहुधेत्थं प्रार्थितोथ पादुकामंत्रपूर्वकम् ॥ ६४ ॥ तंत्राण्याह चतुःषष्टि सरहस्यान्यनुक्रमात् ॥ दिनैः सप्तभिरेवासौ बुबुधेऽखिलविद्गुरोः ॥ ६५ ॥ ज्ञात्वा सर्वाणि पुपुजे निःस्पृहो निःस्पृहं गुरुम् ॥ शुकानंदोथ तत्रत्यनारायणविदन्तिकम् ॥ ६६ ॥

वर्णी ब्रह्मचारीत्यादि परान्वयि ॥ ६१ ॥ देव्या उक्ता या कांतिस्तया तं ज्ञात्वा ननाम । किंभूतः न अन्येषु सन्नतिर्नमस्कारो यस्य । अन्येभ्योऽनम्र इत्यर्थः ॥ ६२ ॥ अंबिकायाः उक्तितः वचनेन ॥ ६३ ॥ बहुधेत्यादि परान्वयि ॥ ६४ ॥ उत्तरार्द्धं परान्वयि । असौ ब्रह्मचारी सर्ववेत्तुः गुरोः शुकानंदसकाशात् सप्तभिर्दिनैः सर्वाणि तंत्राणि ज्ञात्वा तं गुरुं पुपुजे इति संबंधः ॥ ६५ ॥ उत्तरार्द्धं परान्वयि । तत्र करवीरक्षेत्रे स्थितस्य नारायणशा

स्त्रिणः अंतिकं गत्वेति संबंधः ॥ ६६ ॥ कृष्णातीरे शुकानंदनिवासं विवक्षुस्तत्र प्रसिद्धस्य सिद्धस्थलस्य वृत्तांतमाह । दत्तात्रेय इति सार्द्धपंचभिः ॥ ॥ ६७ ॥ अवतीर्ण इति पूर्वान्वयि । अस्य नृसिंहसरस्वत्याभिधस्य यतेः कथा गुरुचरित्राभिधा द्विपंचाशदध्यायात्मिका ख्यातास्ति । या प्राकृता महाराष्ट्ररूपभाषया लिखितापि तत्तत्कामप्राप्तये श्रेष्ठैरपि नृभिः पठ्यते ॥ ६८ ॥ यत्र कृष्णायाः समीपे तस्यैव नृसिंहसरस्वत्याख्यसिद्धस्य पादुके ये स्तः ते पूजकैः त्रिधा त्रिकालं त्रिप्रकारेण वा राजोपचारैः पूज्येते ॥ ६९ ॥ प्राक्कर्मणा आर्ताः पीडिताः स्त्रियो युवानः अर्भाः बालकाः जरोन्मुखाः वृद्धाश्च ।

गत्वा संभाष्य तं सुज्ञं ययौ कृष्णातटं ततः ॥ दत्तात्रेयो यो नृसिंहसरस्वत्याकृतिः कलौ ॥ ६७ ॥ अवतीर्णो द्विपंचाशदध्यायास्य यतेः कथा ॥ ख्याता या प्राकृताप्यार्यैः कामाप्त्यै पठ्यते नृभिः ॥६८॥ तस्यैव पादुके यत्र कृष्णायास्तु समीपतः ॥ राजोपचारैर्नित्यं ते पूज्येते पूजकैस्त्रिधा ॥ ६९ ॥ प्राक्कर्मार्ताश्चतुर्वर्णाः स्त्रीयुवार्भा जरोन्मुखाः ॥ वसंति यत्र स्वस्वार्तिनाशायानेकसाधनैः ॥ ७० ॥ यतयश्च यतिस्थानेऽनेके तत्राखिलार्चिताः ॥ योगिनः संत्यनीहाश्चाथाखिलानां हि वृत्तये ॥ ७१ ॥ राज्ञां त्रीण्यन्नसत्राणि दुर्भिक्षेऽप्यन्नदानि वै ॥ शुकानंदोऽस्पृहस्तत्र तस्थौ निःस्पृहसंगमात् ॥ ७२ ॥ सूर्यभक्तो यतिश्चैको नृसिंहाख्योऽखिलात्मदृक् ॥ दत्तात्रेयात्प्राप्तयोगो योगी चेति त्रयः सदा ॥ ७३ ॥ शुकानंदेन संगम्य पप्रच्छुस्ते स्वसंशयम् ॥ यो यतिः स तु बालत्वे लब्ध्वा मंत्रान्रवेर्गुरोः ॥ ७४ ॥ जपत्येकांघ्रिभूर्नित्यं याममर्कमुखोऽस्पृहः ॥ तत्र सिद्धतपाः कश्चिद्गोपालाख्यः स भूगतान् ॥ ७५ ॥

अनेकैः साधनैः अनुष्ठानैः ॥ ७० ॥ यतिस्थाने यतिनिवासस्थाने अखिलैः दर्शनार्थमागामिभिः पूजिताः ॥ अथादि परान्वयि । वृत्तये उपजीविकार्थम् ॥ ७१ ॥ निःस्पृहसमागमाद्धेतोः ॥ ७२ ॥ तानेव निःस्पृहान् त्रीन् साधूनाह । सूर्यभक्त इति परान्वितम् ॥ ७३ ॥ य इत्यादि परान्वयि । रवेः सूर्यस्य मंत्रान् ॥ ७४ ॥ एकांघ्रिः एकपादः भुवि यस्य यामपर्यंतम् अर्कमुखः सूर्याभिमुखः अस्पृहो निस्पृहः । तत्र सिद्धस्थाने सिद्धं तपो यस्य स कश्चिद्गोपालाख्य आसीत् । सः भूमिं प्राप्तान् व्यस्तरूपान् रूपांतरधारिणो देवान् उक्त्या भाषणमात्रेण अंतर्हितान् गुप्तरूपांश्च देवान् द्रुतं वेत्तीत्यन्वयः ॥ ७५ ॥

॥ ७६ ॥ औत्तरार्हः उत्तरदेशीयो यो नृपस्तस्याकार इवाकारो यस्य । दूतरूपधरैः पार्षदैः सहेति पूर्वान्वितम् । स पादुके नत्वैवं तदग्रतः पादुकाग्रे नारिकेलं दृष्ट्वा पादुकासमीपस्थं शुकानंदं प्रति नारिकेलं देहीत्ययाचतेति योज्यम् ॥ ७७ ॥ सः शुकानंदः ॥ ७८ ॥ इत्थं द्वयोः संवादे सति । गोपाल एव तं हरिं ज्ञात्वा उच्चैः प्राहेति संबंधः ॥ ७९ ॥ ८० ॥ अथ नृसिंहाख्यसाधोः कथामाह । नृसिंह इत्यादिभिरेकविंशतिभिः ॥ ८१ ॥

वेत्ति देवान्व्यस्तरूपानप्युक्त्यांतर्हितान्द्रुतम् ॥ अथैकदा गतस्तत्र गोलोकस्थो हरिः स्वयम् ॥ ७६ ॥ औत्तरार्हनृपाकारः पार्षदैर्दूत रूपकैः ॥ नत्वैव पादुके दृष्ट्वा नारिकेलं तदग्रतः ॥७७॥ समीपस्थं शुकानंदं हसन्देहीत्ययाचत ॥ सोऽब्रवीत्पादुकाग्रस्थं पूजकैर्गृह्य तेऽखिलम् ॥ ७८ ॥ दीयते च प्रसादार्थं तदन्येन मया कथम् ॥ देयमित्थं विसंवादे ज्ञात्वा गोपाल एव तम् ॥७९॥ प्राहोच्चैर्नृपवे षोयं नमस्कार्योऽखिलैर्हरिः ॥ तावत्तिरोहितः सोपि शुकानंदोतिविस्मितः ॥ ८० ॥ नृसिंहस्तु निराभीमासंगस्थनृहरेः पुरा ॥ पूजका न्यतमो बाल्यान्नृसिंहोपासको दृढम् ॥ ८१ ॥ अथ मंजरथस्थो यो हरिशास्त्र्यपि वैष्णवः ॥ स्मृत्याऽऽद्यैकादशीकृच्चाद्वैतनिष्ठस्ततोऽ भ्यसत् ॥ ८२ ॥ शास्त्राणि च नृसिंहाख्यो वेदांतं श्रद्धयाधिकम् ॥ विश्वं ब्रह्मणि संपश्यन्ब्रह्मैकं विश्वसंस्थितम् ॥ ८३ ॥ तं निजो पास्यममलं नृसिंहाख्यं न चापरम् ॥ ज्ञातं गुरोरतः सर्वं गुर्वभिन्नं हि पश्यति ॥८४॥ गृहं गतोथ पत्न्याऽसौ लब्धतुष्टोवसत्सुधीः ॥ पश्यन्मूर्तिं नृसिंहस्यालये तिष्ठन्कांचिद्गृहम् ॥ ८५ ॥ भोक्तुं व्रजति सुप्त्यै चापत्यान्यस्याऽभवंस्ततः ॥ यदृच्छालाभतस्तेषां पोषणं दैवतोऽभवत् ॥ ८६ ॥

सः-हरिशास्त्री वैष्णवः विष्णुभक्तोपि स्मृत्या स्मृतिप्रामाण्येन प्रथमैकादशीकर्ताऽद्वैतनिष्ठश्चाभवत् । ततस्तस्माच्छास्त्रिणः सकाशादभ्यसदिति परैः सह योज्यम् ॥ ८२ ॥ ८३ ॥ अमलम् उपाधिरहितम् अपरं स्वस्माद्भिन्नं सः न पश्यति । यतः गुरोः सकाशात्सर्वं ज्ञातम् । अतः सर्वं गुर्वभिन्नं गुरु रूपं स पश्यति हि ॥ ८४ ॥ अथाध्ययनानंतरं गृहं प्रति भोक्तुं सुप्त्यै निद्रार्थं च व्रजतीति संबंधः ॥ ८५ ॥ ततः अस्य नृसिंहसाधोरपत्यानि पुत्राः

अभवन् । तेषां पुत्राणाम् ॥ ८६ ॥ तत्र कृष्णानिरासंगमक्षेत्रे ॥८७॥ असकृत् पुनःपुनः नैवाभिषिच्यताम् । भवद्भिरिति शेषः ॥ ८८ ॥ यूयं शैत्यभीत्योष्णोदकैः स्नानकृतः । कथं नृसिंहं शीतलोदकैः पुनः पुनरभिषिंचतेत्यवोचदित्यर्थः ॥८९॥ अंतःस्थं हृद्गतम् । न स्थेयं मयेति शेषः ॥ ९० ॥ स्वीयान् स्त्रीपुत्रादीन् । गुरुरूपस्यनिजाभिन्नं गुरुदेवतात्माभिन्नं तं नृसिंहं पुरः अग्रे स्थितमिति शेषः ॥ ९१ ॥ तत्रादौ अनंतरूपेण वर्णयति । नित्य इति । हे भूमन् व्यापक त्वं नित्यः सत्यरूपोसि । यतः अनंतः देशकालवस्तुपरिच्छेदरहितः । यतो देशकालवस्तुपरिच्छेदहीनः । अतः एक एवेति । सजातीयविजातीयस्वगतभेदशून्यः एकः सन् व्यापकत्वेनानंत इत्यर्थः । न गुणी गुणवांश्च नासि । गुणसंबंधाभावान्निर्गुण इत्यर्थः । एकलः एकोपि

अथैकदा ययुस्तत्र यात्रिणो बहवो द्विजाः ॥ अभिषेकं च नैवेद्यं चक्रुर्नृहरये पृथक् ॥ ८७ ॥ नृसिंहः पूजकान्प्राहाऽसकृन्नैवाभिषिच्यताम् ॥ नृहरिः शीतलाद्भिर्वै शैत्यं चास्य भविष्यति ॥ ८८ ॥ शैत्यभीत्योष्णवार्भिश्च यूयं स्नानकृतः कथम् ॥ जल्पतोस्य मुहुश्चेत्थं शुश्रुवुर्न च पूजकाः ॥ ८९ ॥ भ्रांतोयमिति तं प्राहुरज्ञात्वांतस्थमस्य ते ॥ नृसिंहः प्राह न स्थेयं संघे चाविदुषामिह ॥ ९० ॥ इत्युक्त्वेशालये नीत्वा स्वीयान्नृहरयेऽर्पयत् ॥ गुरुरूपस्यनिजाभिन्नं प्रार्थयामास तं पुरः ॥ ९१ ॥ नृसिंह उवाच ॥ नित्योऽनंत उतैक एव न गुणी गुण्येव भास्येकलस्त्वं चात्मोद्भवमायया युत इव द्रुः कालतश्छायया ॥ भास्येतन्निर्गुणः प्रकाशसमतातामिस्रतुल्यैः पृथक् भूमन्देव नृतिर्यगद्रुततनुश्चैकोप्यनंतो भवान् ॥ ९२ ॥

त्वं स्वलीनजीवादृष्टोद्भूतेन कालेन कालोपाधिवशादात्मनि प्रादुर्भूतमायया गुण्येव गुणवानेव नासि प्रतीयसे । निर्गुणस्य नवेंद्रियागोचरत्वान्मायागुणेन गुणवान्यदा तदैव ज्ञायसे इत्यर्थः । ईश्वरस्य कल्पितमायासंबंधे मायागुणेन गुणत्वे च दृष्टांतः । यथा कालोपाधिवशाच्छायया युक्तो द्रुमः । यथा वा छायागुणेन कालोपाधिकृतात्मत्वदीर्घत्वादिरूपेण छायाद्रुमोपि अल्प इव दीर्घ इव च प्रतीयते तद्वदित्यर्थः । किं च छायागुणेन वृक्षस्य त्रिगुणत्वं यथा तथा मायायास्त्रिगुणत्वेन तवापि त्रिगुणत्वमित्याह । भासीति । वृक्षच्छायायां यथा प्रकाशः सूर्यपरावर्तनेन मूलदेशे बहुप्रकाशः । यथा वा सर्वतो

च्छायामिश्रप्रकाशः । यथा च तामिस्रनिविडच्छायया प्रकाशाभावस्तत्तुल्यैः सत्त्वरजस्तमोगुणैर्मयि कल्पितैस्त्वं पृथक् पृथक् सत्त्वगुणेन देवतनुः रजोगुणेन नृतनुः तमोगुणेन तिर्यक्तनुः त्रिगुणसमष्टिरूपेण अद्भुतनृसिंहतनुश्च भासि । तस्मात् वृक्षस्य छाययेव तव मायया यथार्थसंबंधाभावान्निर्गुणत्वं कल्पितोपाधिसंबंधात्सगुणत्वं चास्ति । तेन मायाया अनंतत्वात्तवापि अनंतत्त्वमिति भावः । शार्दूलविक्रीडितवृत्तम् ॥ ९२ ॥ एवमेकस्यानंतरूपत्वं प्रदर्श्य जीवरूपत्वेन वर्णयति । एक इति । एकस्त्वं भिन्नाकारेषु देहेषु अंशेन संस्थः स्थितोपि स्वैश्वर्यं न हि जहासि । यथा पात्रेषु प्रतिबिंबितो रविस्तेजो न त्यजति । एष जीवश्च तवांशस्त्वद्रूपोपि तवात्मरूपस्य विस्मृत्या देहात्मबुद्धिमान् सन् बद्धो भवति बद्ध इव प्रतीयते । अथापि तं प्रति गुरुरूपेण

एकस्त्वं पृथगाकृतिष्वपि तनुष्वंशेन संस्थोपि नो स्वैश्वर्यं हि जहासि बिंबितरविः पात्रेषु तेजो यथा ॥ जीवांशस्तव एष देहमतिमांस्त्वद्विस्मृतेर्बध्यते मुक्तं तं गुरुरूपतो हि कुरुषे दत्त्वैव चात्मस्मृतिम् ॥ ९३ ॥ जीवोहं गुरुणा कृतो हि हरिणा देहादिमिथ्योक्तिभिर्ह्यात्मा त्वं तु नृसिंहरूपमभवं संदर्श्य सर्वात्मताम् ॥ आत्मन्येव हि दर्शयस्युत भवान्देवोस्ति सत्त्वात्मको नृत्वं राजसकं च तामसमिदं धत्से हरित्वं यतः ॥ ९४ ॥

आत्मस्मृतिं समर्प्यैव मुक्तं कुरुषे । यथोक्तं "यावन्नानुग्रहः साक्षाज्जायते परमेशितुः । तावन्न सद्गुरुं शांतं सच्छास्त्रमुपलभ्यते" इति । तस्माद्यथा वह्न्यंशो वह्निरेव । तथा त्वदंशो जीवः सद्गुरुकृपया त्वमेव भवसीत्यर्थः ॥ ९३ ॥ अथ जीवरूपस्यात्मनो गुरुकृपया ईश्वरत्वं दर्शितं । नृसिंहरूपस्य त्रिगुणात्मत्वेन सर्वरूपत्वं वर्णयति । जीव इति । हरिणा हरिशास्त्रिणा गुरुणा कर्त्रा देहादिषु मिथ्यात्वप्रतिपादकवचनैः जीवोहम् आत्मा परमात्मरूपः कृतोस्मि हि । उत पुनः । त्वं तु अभवं भवनिवर्तकं नृसिंहरूपं प्रदर्श्य प्रकटीकृत्य आत्मन्येव त्रिगुणरूपत्वेन सर्वात्मतां दर्शयसि । यतो भवान् देवः प्रकाशमानोस्ति । अतः प्रकाशरूपत्वात्सत्त्वगुणरूपोस्ति । यतस्त्वं रजोगुणात्मकनृत्वं धत्से धारयसि । नरस्य मिश्रत्वाद्राजसत्वम् । च पुनः यतः तमोगुणात्मकं हरित्वं

सिंहत्वं च धारयसि सिंहस्य तिर्यग्योनित्वात्तामसत्वम् । अतस्त्रिगुणरूपत्वात्त्वमेव सर्वरूपोसीति भावः ॥ ९४ ॥ एवं सर्वरूपत्वेन नृसिंहस्यैव जगज्जन्मादिहेतुत्वं दर्शयन् स्वस्य देशांतरे गमनं प्रार्थयति । विश्वमिति । एतद्विश्वं त्वमेवासि । किं च अस्य जगतः जनिपोषणसंहारकर्ता त्वत्तो भिन्नो नैवास्ति । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंतीति श्रुतेः । तस्मात्त्वमेवोत्पत्त्यादिकर्तासीत्यर्थः । इति हेतोः अत्रत्यं जगति किल वर्तमानं मम कुटुंबं स्त्रीपुत्रादि यत् तस्य निर्वाहे किंचिदपि चिंतामहं न करोमि । कथमेतेषां निर्वाहो भविष्यतीति न चिंतयामि । तथा गुर्वभिन्नं बहुरूपं जगति स्थितं त्वां किल निश्चयेन पश्यन् सर्वत्र साष्टांगं प्रणमन् देहभावं त्यजन्सुखेन धरां भ्रमामि ॥ ९५ ॥ श्रीनृसिंहाग्रे इत्थमुक्त्वा पुत्रेष

विश्वं त्वं जनिपोषसंहृतिकरस्त्वत्तोस्य नैवापरस्तत्रत्यं किल मत्कुटुंबमिति तच्चिंतां न कुर्वेऽण्वहम् ॥ त्वां पश्यन्किल गुर्वभिन्नममिताकारं हि विश्वस्थितं साष्टांगं प्रणमन् भ्रमाम्यथ सुखाद्धरां देहभावं त्यजन् ॥ ९५ ॥ उक्त्वेत्थं चतुरीषणोज्झित इतो द्राङ्निर्ययौ चैकलस्तावच्छ्रीनृहरिस्तदाकृतिधरश्चासीद्धि देवालये ॥ प्राग्वल्लब्धधनैः पुपोष च नृसिंहः स्त्रीसुतानीश्वरो मुक्तो बद्ध इवापरः किल विपाशोभूद्धि भक्त्याद्भुतम् ॥ ९६ ॥ बभ्रामाथ नृसिंह एक इतराज्ञातानुभूतिः क्षितौ नेक्षत्यंबरिणं विवस्त्रमपि यो देहं मलाढ्यं तथा॥ दृष्ट्वाश्वाहिगजोष्ट्रहिंस्रखरगोविप्रश्वभुक्स्त्रीनृपान्साष्टांगं प्रणनाम भोहरिगुरोलक्ष्मीनृसिंहेतिवाक् ॥ ९७ ॥

णावित्तेषणादारेषणालोकेषणाश्चताभिः उज्झितस्त्यक्तः स एकाकी इतः स्थानात् शीघ्रं निर्ययौ । तावच्छ्रीनृसिंहोपि तदाकृतिधरः देवालये आसीत् । नृसिंहाख्यसाधुर्देवालयाद्गतोपि नृसिंहेन तद्रूपग्रहणात् प्रत्यागत इव लोकैर्दृष्ट इत्यर्थः । नृसिंहश्च पूर्ववत् लब्धेन द्रव्येण तस्य स्त्रियं सुतांश्च पालयामास । नित्यमुक्तोपीश्वरो भक्तकार्यार्थं बद्ध इवाभवत किल । अपरो जीवो भक्त्या विपाशो विमुक्तोऽभवत् बद्धस्य मुक्तत्वं मुक्तस्य बद्धत्वमित्यद्भुतं जातमित्यर्थः ॥ ९६ ॥ अथ नृसिंहसाधुरितरैर्न ज्ञातः अनुभवो यस्य सः एक एव क्षितौ बभ्राम । यः स्वदेहं सवस्त्रं विवस्त्रं स मलं वा न पश्यति । यश्च श्वानादीन्

श्वभुजः चांडालान्। "प्रणमेद्दंडवद्भूमौ आश्वचांडालगोखरम्।" इति भगवदुक्ताधिकारवान्बभूवेत्यर्थः ॥ ९७ ॥ अथ परैः पृष्टाख्यः पृष्टनामा यदि तदा तथास्त्विति वदति। अथ उच्चस्थले गत्वा श्रीनारायणेत्यादि उच्चैर्वक्ति। अनु अनंतरम्। अधः स्थबालकास्तं प्रति तथास्तु इत्याह्वयंति ॥ ९८ ॥ केनचिदर्भकेण गोरजोत्सवं गोंधळ इति भाषाप्रसिद्धं त्वं कुरु इति प्रोक्तो यदा तदा स वाद्योरुकः वाद्यभूते ऊरू यस्य हस्तेन स्वस्य ऊरू वादयन् सन् येन पूर्वं गोरजोत्सवं कुरु इत्युदितः उक्तः स एव पुनरेत्य चेद्यावत् अलं कुर्विति वक्ति तावत्पर्यंतं नृत्यति। अन्यथा तथैव बहुकालं नृत्यतीत्यर्थः ॥

नो केनाप्यणु वक्ति नृत्यति कदाचिन्नाम गायन्हरेः पृष्टाख्योथ परैस्तथास्त्विति वदत्युच्चेऽथ गत्वा स्थले ॥ श्रीनारायण वासुदेव नृहरे रक्षाखिलान्दुःखतो वक्त्युच्चैरिति चाह्वयंति तमधःस्थार्भास्तथास्त्वित्यनु ॥ ९८ ॥ कुर्वर्भेण च गोरजोत्सवमिति प्रोक्तः स वाद्यो रुकस्तावन्नृत्यति येन पूर्वमुदितोऽलं वक्ति यावद्धि सः ॥ इत्थं गां भ्रममाण आगत इदं कृष्णातटं संगतिं लब्ध्वा तत्र विनायकस्य न पुनस्तां त्यक्तुमैच्छद्धृदि ॥ ९९ ॥ तत्रागात्करवीरराजमहिषी भृत्यैर्नृयानेन तां द्रष्टुं यानमसौ गतोनुगहतोऽप्यस्माद्ययौ नो तदा ॥ प्राप्तोंजोत्र विनायकोवददथो तेभ्योस्य वृत्तं च तैर्यानं मुक्तमसौ निरीक्ष्य विवृतां राज्ञीं ननाम ब्रुवन् ॥ १०० ॥ नग्नं वीक्ष्य नृसिंहमाह गुरुराट् चोपेंद्रजन्माद्य किं कौपीनं स दधौ तथास्तु भवतीत्याकर्ण्य चार्यस्त्रियम् ॥ साध्वी वक्ति स मेऽस्य देयमिति तद्वस्त्रं दधंश्च स्पृशल्लिंगं यष्टिहतोऽपि सोथ गुरुवाक्चीरार्पणात्तां जहौ ॥ १ ॥

॥ ९९ ॥ तत्र सिद्धस्थले कदाचिन्नृयानेन करवीरक्षेत्रस्थस्य राज्ञः पत्नी भृत्यैः सहाययौ। तां द्रष्टुमसौ नृसिंहाख्यसाधुर्यानं प्रति गतस्तदा अनुगैस्ताडितोपि न ययौ। तदा अत्र यानस्थलेऽनायासेन प्राप्तो विनायकस्तेभ्यो भृत्येभ्यः अस्य नृसिंहस्य वृत्तं अवदत। अयं राजपत्नीं नमस्कर्तुं प्राप्त इति कथितवान्। अथ तैर्भृत्यैश्च यानं मुक्तं वस्त्रादिप्रतिबंधरहितं कृतम्। तदासौ नृसिंहः विवृताम् आवरणरहितां राज्ञीं निरीक्ष्य उक्तवत् जयजयश्रीहरिगुरो लक्ष्मीनृसिंह इति वदन् ननाम ॥ १०० ॥ अथ कदाचित् गुरुराट् शुकानंदगुरुः नग्नं नृसिंहं दृष्ट्वा आह । हे नृसिंह अद्य उपेंद्रजन्म वामनजयंती

अस्ति किम् । यद्यस्ति वामनजन्म । तर्हि स वामनः कौपीनं यथा दधौ । तथा कौपीनधारणं भवति त्वयि अस्तु त्वमपि कौपीनधारणं कुर्वित्यर्थः । इत्याकर्ण्य स नृसिंहः सार्घां पूजाद्रव्यसहिताम् एकाम् आर्यस्त्रियं श्रेष्ठपुरुषस्य पत्नीं प्रति तस्याः वस्त्रं धारयन् स्वलिंगं स्पृशन् लोकैर्यष्टिभिर्हतोपि मम अस्य लिंगस्य किंचित् त्वं देहीति वक्ति । उवाचेत्यर्थः । अथ गुरुवाचा अयं कौपीनं याचत इति वचनेन यत् तया कृतं चीरार्पणं तेन तां जहौ मुमोच । एवं विविधचरित्रवान्स नृसिंहसाधुरभवदित्यर्थः ॥ १ ॥ इति स्थित्या पूर्णाधिकारेण युक्तोपि नृसिंहो गुरुं शुकानंदगुरुं न त्यजति । तस्मात्पूर्णतमाधिकारवान् शुकानंदगुरुरित्यर्थः । अतः परं दत्तात्रेयाख्ययोगिनश्चरित्रं वर्णयति । अथेत्यादि यावत्सर्गसमाप्ति । यः द्रविडदेशे सन्धनाग्र्यः धन

श्रीदेशिकेंद्र उवाच ॥ इतिस्थित्याढ्योऽपि त्यजति न नृसिंहोण्वपि गुरुं ह्यथासीद्योगींद्रो द्रविडसधनाग्र्यस्य स सुतः॥विवाह्यैनं बाल्ये दिवमुपगतौ यस्य पितरौ क्वचिच्छ्रुत्वा योगं स च कृतमतिर्लब्धुमनु तम् ॥ २ ॥ जगादाचार्यं स्वं वद मम गुरो योगमथ सोऽब्रवी द्योगोनीहैरमलमतिभिर्ज्ञायत इति ॥ ततस्तीर्थाचारान्विवसनजटिस्वैरवसनान्स पृच्छत्युज्झ्यैवाशनगृहपितॄंस्तैः सह वसन् ॥ ३ ॥ बलाद्गेहं नीत्वाऽशनमथ पितृव्योस्य विदधे तदंगान्निष्कास्याऽकटकमिह सौवर्णमखिलम् ॥ तथापीषन्नायं वसति सदने योगहृतधी र्विरागिव्रातोऽत्रागमदथ च कृष्णां भुवि चरन् ॥ ४ ॥

वान्विप्रस्तस्य सुत आसीत् ॥ २ ॥ स्वकीयमाचार्यं पुरोहितम् । ततस्तीर्थानि रामेश्वरादीनि आचरन्ति संचरंति तान् विवसनान् नग्नरूपान् जटाधरान् स्वेच्छावस्त्रान् प्रति स तैः सह वसन् पृच्छति योगविषये प्रश्नं कृतवान् । किं कृत्वा अशनं भोजनं गृहं पितॄन् पितृव्यादीन् उज्झ्य त्यक्त्वा । एवं योगविषयेत्युत्कंठित आसीदित्यर्थः ॥ १०३ ॥ अथास्य पितृव्यस्तं बलाद्गृहं नीत्वा कटकभिन्नं सर्वं सुवर्णमयं भूषणजातं निष्कास्याशनं भोजनं विदधे अर्पितवान् । योगेन हृता धीर्यस्य सः । विरागिणां व्रातः समुदायो भुवि संचरन् अत्र कृष्णानदीं प्राप्तः "स्तोमौघनिकरव्रातवारसंघातसं

त्रपाः" इत्यमरः ॥ १०४ ॥ स तान् एत्य नमन् सन् असकृत् योगं पृच्छति । अथ ते विरागिणः अर्भकं दृष्ट्वा प्राहुः । चेत् यदि नः परिचरः सेवकः भवसि तर्हि इमं योगं वेत्सि । आप्तैर्जनैः उक्तोऽपि गृहं न जगाम । अथास्मिन्बालके सुप्ते सतीमे विरागिणः शिशुभयात् शिशुनिमित्तेन यद्भयं तस्मात्तेभ्यो भयं तस्माद्धेतोः पूर्वरात्रावपि निर्ययुः ॥ ५ ॥ विधुकांत्या चंद्रप्रकाशेन ऐक्षत । एकः एकाकी । सरितः कृष्णायाः । अथ त्वं हरिण्याः

स तान्पृच्छत्येत्याऽसकृदपि नमन्योगमथ तेऽर्भमीक्ष्याहुश्चेन्नः परिचर इमं वेत्सि च परम् ॥ स चोमित्युक्त्वागान्न गृहमुदितोऽप्याप्त जनतो निशीथात्प्रागस्मिन्स्वपति भयतो निर्ययुरिमे ॥५॥ निशीथे चोत्थाय क्व च न विधुकांत्यैक्षत स तान् रुरोदोच्चैः को मे वदति भुवि योगं मुहुरिति ॥ रुदित्वैको दीर्घं सरित इह सुष्वाप पुलिनेऽथ कृष्णाह स्वप्ने व्रजतु हरिणीपृष्ठमनु तम् ॥६॥ अथो दत्तात्रेयः शिशुरुषसि चोत्थाय हरिणीं जलं पीत्वा यांतीं द्रुतमनुययौ वीक्ष्य वचनात् ॥ वनान्युल्लंघ्यैषा निबिडविपिनं प्राप्य च गुहां तमःपूर्णां दीर्घां सपदि हि विवेशाद्भुतगतिः ॥७॥ मृगीमन्वायांतं शिशुमथ गुहाद्वारनिलयास्तपोनिष्ठाः प्राहुर्न बिल इह मार्गः किल नृणाम् ॥ अथाऽर्भस्तेष्वासीत्त्र्यहमशनमस्मै ददुरिमे तमाहुः पिष्टास्त्यै व्रज लघु पुरं योजनमितः ॥ ८ ॥ शिशुस्त्वेवं श्रुत्वाऽवददुदरपूर्त्यै न च गृहादहं निर्यातोऽथाभिमतमधुनाऽऽविश्य च गुहाम् ॥ प्रकुर्वे कृष्णोक्त्याऽणु भयमपि मे नेति दृढधीर्विवेश ध्वांताढ्यं शिशुरपि स चैको बिलवरम् ॥ ९ ॥ फणाभिः फूत्कारैः पथि तमुपयांतं हि फणिनोऽस्पृशन्ये ताञ्छीर्ष्णां करयुगपदाद्दूरमकरोत् ॥ ततोऽर्धक्रोशांतं निबिडतम उल्लंघ्य महसि सुवापीं वीक्ष्यासौ बहुतरु महोद्यानमलभत् ॥ ११० ॥

प्रातरागतायाः पृष्ठमनु पृष्ठदेशं अनुसृत्य व्रजेति कृष्णा तं बालकं स्वप्ने प्राह ॥ १०६ ॥ वचनात् स्वप्नश्रुतवचनेन । अद्भुता गतिर्गमनं यस्याः सा ॥ ॥ ७ ॥ पिष्टास्त्यै पिष्टयाञ्चार्थम् । लघुपुरं अल्पखेटकम् ॥ ८ ॥ अभिमतं इष्टयोगसाधनम् । कृष्णावचनेन मम अल्पमपि भयं न भवेदिति दृढनिश्चयः सन् ध्वांताढ्यं अंधकारयुक्तं बिलवरं गुहां विवेश ॥ ९ ॥ अर्द्धक्रोशपर्यंतम् । महसि तेजोवति देशे सुष्ठु वापीं बहुवृक्षं महोद्यानं चापश्यत् ॥ ११० ॥

तत्र मृगव्याघ्राजिनजन्यम् आसनं चैलमयं तृणमयं चासनम् । बहून्यासनानीति यावत् । दृष्टवान् । इह स्थाने क्वचिदासने तापसं ऋषिं नैवापश्यत् । अथैनं साक्षात् दत्तात्रेयो गुप्तरूपः स्पष्टभाषणेन योगमभ्यासयतीत्याह । वच इति सार्द्धैस्त्रिभिः । अथ हे शिशो अस्यां वाप्यां त्वं स्नानं कुरु । ततः एनां विभूतिं धृत्वा अग्रे आसनश्रेष्ठे उपविश तिष्ठ ॥ ११ ॥ गुदस्थाने पार्ष्णिं कृत्वा दृढं पद्मासनं कुरु । सततं स्वनासाग्रे दृष्टिं कुरु । तनुं ऋज्वीं सरलां कुरु । इति स्वयं दत्तात्रेयस्तं प्रति योगगतिं इह स्थानेऽभ्यासयति हि । यतः यः शिशुरपि देहाशां त्यजेत् । तस्य देवोपि सुलभो भवेत्

मृगव्याघ्रत्वग्जासनमपि च चैलं तृणमयं क्वचिन्नैवापश्यत्स्थितमिह शिशुस्तापसमृषिम् ॥ वचः शुश्रावाथ स्नपनमिह वाप्यां कुरु शिशो विभूतिं धृत्वैनामुपविश पुरःस्थासनवरे ॥ ११ ॥ गुदे पार्ष्णिं दत्त्वाऽऽसनमथ च पाद्मं कुरु दृढं स्वनासाग्रे दृष्टिं कुरु सततमृज्वीं तनुमिति ॥ स्वयं दत्तात्रेयो युजिगतिमिहाभ्यासयति तं त्यजेद्देहाशां यः शिशुरपि हि देवोस्य सुलभः ॥ १२ ॥ क्रमात्प्राणायामैः कुलविकसितां कुंडलिनिकां विधायैतन्मार्गात्षडपि किल चक्राणि कुलतः ॥ अतिक्रम्यानीयोर्ध्वकमलममूनात्मकभवाऽनुभूत्या तत्स्थैंदुस्रवदमृतमापाययति तम् ॥ १३ ॥ विशुद्धाख्यादाज्ञामसुभिरभियातुः क्व च शिशोः कपोलांतर्नाड्यामणुपवन एनं व्यथितवान् ॥ करस्पर्शाद्गुप्तोऽव्यथमथ शिशुं सोत्रितनयोऽकरोदित्थं बालः सकृदजितहस्तानुभववान् ॥ १४ ॥

॥ १२ ॥ कुंडलिनीं कुले कुलस्थाने मूलाधारे विकसितां कृत्वा एतस्याः कुंडलिन्या मार्गेण कुलतः मूलाधारात्षट् चक्राणि अतिक्रम्य ऊर्ध्वकमलं सर्वोर्ध्वभागस्थं श्रेष्ठकमलं ब्रह्मरंध्राख्यं सहस्रदलकमलं प्रति प्राणान् आनीय इह स्थाने आत्मसुखं तदुद्भूतानुभवेन तत्स्थेंदोर्ब्रह्मरंध्रगतादिंदोः स्रवत् गलत् यदमृतं मधु तं शिशुं आपाययति । दत्तात्रेय इति शेषः ॥ १३ ॥ क्व च कदाचित् विशुद्धचक्रं आज्ञाचक्रं प्रति प्राणैः सहाभियातुः अभिगच्छतः शिशोः कपोलांतर्गतनाड्या वायुरेनं किंचिद्व्यथां कृतवान् । अथ गुप्त एव सोऽत्रिपुत्रो दत्तात्रेयः शिशुं करेण कपोलं स्पृष्ट्वा व्यथारहितं कृत

वान् । इत्थं बालकः सकृत् अजितस्य दत्तात्रेयस्य हस्तानुभववानासीत् ॥ ११४ ॥ स बालः पृथिव्यां सर्वेषां दुःष्प्राप्यं योगं त्रिभिर्वर्षैः प्राप्तवान् । तथा सर्वसिद्धीश्चालभत् । हि यतः अजितकृपया किमलभ्यमस्ति । न किमपि दुःप्राप्यमित्यर्थः । सकृत् तव गुरोः साक्षात् पूजा मया मद्धस्तेन भवतु । इति बालवचनेन । अदृश्यः गुप्तरूपो दत्तात्रेयः त्वं शितिगलं नीलकंठं योगिनं प्रति गच्छेति तं प्राह । नीलकंठपूजा मत्पूजासमाना भवतीत्यर्थः ॥ ॥ १५ ॥ अथ स च बालः सिद्धिसामर्थ्येन महः प्रकाशं पश्यन् बिलात् बहिर्देशे प्राप्तवान् च पुनः ईशेन गुरुणोक्तनीलकंठयोगिन विचिन्वन् सन् तं प्राप्य पूजितवान् । स नीलकंठश्च तं शिशुं दत्तात्रेयाद्विदितयोगं ज्ञात्वा तं प्रति अवदत् । हे शिशो आत्मज्ञानं विना त्वयि सकलं योगसामर्थ्यमम

स योगं त्र्यब्दैश्चालभदखिलदुःप्राप्यमवनौ तथा सर्वाः सिद्धीर्ह्यजितकृपयाऽलभ्यमिह किम् ॥ सकृत्साक्षात्तेर्चा भवतु हि मये त्यर्भवचनाददृश्यः प्राहेशो व्रज शितिगलं योगिनमिति ॥ १५ ॥ महः सिद्ध्या पश्यन्नथ स च बहिः प्राप बिलतो विचिन्वंश्चेशोक्तं शितिगलमपि प्राप्य पुपुजे ॥ शिशुं ज्ञात्वाऽऽत्रेयाद्विदितयुतिसिद्धिं तमवदत्सहीत्थं चामर्त्यं त्वयि सकलमात्मस्थितिमृते ॥ १६ ॥ देशिकेंद्र उवाच ॥ दत्तात्रेयोप्यब्रवीन्नीलकंठं तां मे ब्रूहीशोदितो यद्गुरुस्त्वम् ॥ पृच्छाम्यन्यं नो पुनः प्राह सिद्धो वेत्स्यंजो मत्संप्रदाय्यंकगत्यां ॥ १७ ॥ सिद्धं नत्वा सिद्धयोगं स कृष्णातीरं प्राप्तः षोडशाब्दो भ्रमन् गाम् ॥ तद्भार्याऽथो पादुके च भ्रमंती वीक्ष्यैनं सा प्राह मां धारयेति ॥ १८ ॥

र्त्यम् अलौकिकमस्ति । ज्ञानं विना योगो वृथेति भावः ॥ १६ ॥ दत्तात्रेयाख्यो बालकोपि नीलकंठमुवाच । यत् यतः ईशोदितः दत्तात्रेयप्रोक्तो गुरुस्त्वम् । अतस्तामात्मस्थितिं मे मह्यं ब्रूहि । अहमन्यं प्रति न पृच्छामि । इति श्रुत्वा सिद्धो नीलकंठस्तं प्रति पुनः प्राह । मत्सकाशात्संप्रदायवतः सत्पुरुषस्य अंकगत्या समीपगमनेन शुकानंदसंगेनेति यावत् । अंजः अनायासेन वेत्सि ज्ञास्यसि । आत्मस्थितिमित्यनुवृत्तिः ॥ १७ ॥ अथ स षोडश वर्षो दत्तात्रेययोगी सिद्धः योगो यस्य तं नीलकंठसिद्धं नत्वा गां भूमिं पर्यटन् कृष्णातीरं प्रति प्राप्तः । अथ तस्य भार्या नृसिंहसरस्वतीसिद्धस्य पादुके

धृत्वा भ्रमंती देशांतरं गतस्य पत्युर्दर्शनार्थं प्रदक्षिणां कुर्वंती सती एनं पतिं दृष्ट्वा पतिं पत्नी प्राह । एवं तयोः संवादोऽभवदित्यर्थः ॥ १८ ॥ स योगी ओमित्युक्त्वा तां पत्नीं भिक्षान्नेनापालयत् । एवं युवानौ तरुणावपि तौ त्यक्तानंगौ त्यक्तकामावभवताम् ॥ १९ ॥ अथ कस्य चिद्राज्ञः सुवर्णं धनं चोरेण नीतमासीत् । तत्प्राप्त्यर्थं स राजा योगिने सर्ववृत्तांतं प्राह । योगी चास्यै यक्षिण्यै वर्षांते सकृत्स्वसंगमुक्त्वा प्रतिज्ञाय सिद्ध्या सिद्धिसामर्थ्येन तत् धनं तया यक्षिण्या आनीतवान् ॥ १२० ॥ वर्षं घस्रैः दिनैर्नित्यं प्रतिदिनं यथा न्यूनमभवत् । तथैषा यक्षिणी योगिनः समीपं किंचित्किंचिदगात् तथैवास्य योगिनश्चिंता च वर्धमानाऽभवत् । तावत्तत्र विनायको दैवयोगात्प्राप्तोऽभवत् ॥ १२१ ॥ स योगी चातिकांतिं सिद्धं विनायकं

त्वां धृत्वाऽयुक्तं स्यामहं चेति योगी प्राह स्त्री मेऽन्नं च वासोऽस्तु नान्यत् ॥ ओमित्युक्त्वाऽपालयत्तां स भैक्ष्यात्त्यक्तानंगौ तौ युवानावपि स्तः ॥ १९ ॥ राज्ञः स्वर्णं चोरनीतं तदास्यै प्राप्तो राजा योगिनं प्राह सर्वम् ॥ सिद्ध्या यक्षिण्याऽनयत्तच्च योगी वर्षांतेऽस्यै संगमुक्त्वा सकृत्स्वम् ॥ २० ॥ घस्रैर्नित्यं वर्षमूनं यथाभूदण्वण्वेषा योगिनोगात्समीपम् ॥ चिंताऽस्यासीद्वर्धमाना तथैव प्राप्तस्तावत्तत्रदैवाद्विनेता ॥ २१ ॥ सिद्धं ज्ञात्वा तं नमंश्चातिकांतिं किंचिद्दूरं तामपश्यत्स योगी ॥ विश्वस्तोऽस्मिन्वृत्तमाहाथ सोपि हास्यास्योऽभीः किं हि ते योगिनोऽस्याः ॥ २२ ॥ एतद्धस्तस्थं बीजमेकं जप त्वं भीस्तेनाल्पा सोऽथ जप्त्वाऽभयोऽभूत् ॥ दत्तात्रेयादाप्तयोगोपि भूयोऽपृच्छत्सूक्ष्मं तं शुकानंदमेषः ॥ २३ ॥

ज्ञात्वा तं प्रणमन् सन् तां यक्षिणीं शुकानंदभयेन किंचिद्दूरं यथा तथापश्यत् । अथास्मिन्विनायके विश्वस्तः कृतविश्वासः सन् वृत्तं योगाभ्यासादिकं यक्षीणीपीडादिकं च स्ववृत्तांतं प्राह । स विनायको हास्यमुखः सन् प्राह । हे योगिन् तव योगिनः अस्याः क्षुद्रयक्षिण्याः सकाशाद्भयं किमस्ति । न किमपि तव भयमस्तीत्यर्थः ॥ २२ ॥ एतस्य जगतो हस्तस्थं अंतर्यामिरूपेण हृदयगतं बीजं जगत्कारणं एकं अद्वयं आत्मानं जप भावय । यद्वा एतत् हल्लेखाख्यमेकं बीजं मंत्रशास्त्रप्रसिद्धं जप । तेन जपेन ते तव अल्पमपि भयं न भवेत् । अथ स योगी जप्त्वा शुकानंदप्रोक्तं

बीजं जप्त्वा यो निर्भयोऽभवत् । तस्य यक्षिणीबाधा नाभवदित्यर्थः । दत्तात्रेयात्माप्तयोगोपि स भूयः पुनश्च सूक्ष्मं तं योगं शुकानंदं प्रति अपृच्छत् । पृच्छतेः द्विकर्मकत्वम् ॥ २३ ॥ अथान्ययोगिनो वृत्तमाह । उदगिति । तत्र स्थितिस्थाने उदक् उत्तरदिशि कृष्णा नदी अस्ति । पुरः अग्रे पंचगंगाख्या नदी अस्ति । तस्याः पंचगंगायाः प्राग्देशे राजधानी आसीत् । अथ तत्र यज्ञमहोत्सवे तत्रस्थराज्ञा पादुकासमीपगताः सर्वे तापसाः समाहूता इति संबंधः ॥ १२४.॥ अत्र केचिद्गताः केचिन्नगताः । तत्र दत्तात्रेयाख्यो योगी अश्वयानेन गत इति संबंधः ॥ २५ ॥ अथासने चूचे आसने तं योगिनं स्थापयित्वाऽस्याग्रे वेश्यानां नर्तनं कारितम् । राज्ञेति शेषः । अथ स योगी वेश्याः पश्यन् मुहुर्हसन् सन् तासां नेत्रहस्तानां कृती

देशिकेन्द्र उवाच ॥ उदक्कृष्णा नदी तत्र पंचगंगाभिधा पुरः ॥ तस्याः प्राग्राजधान्यासीत्तत्राऽध्वरमहोत्सवे ॥ २४ ॥ राज्ञाऽखिलाः समाहूतास्तापसाः पादुकांकगाः ॥ केचिद्गताश्च नैकेऽत्र दत्तात्रेयोऽश्वयानतः॥२५॥योगी गतोथासनोच्चे तं स्थाप्या ग्रेऽस्य नर्तनम् ॥ वेश्यानां कारितं सोथ वेश्याः पश्यन्हसन्मुहुः ॥२६॥ नेत्रहस्तकृतीस्तासां दृष्ट्वा चक्रे स्वयं तथा॥राजा तमाह देया किं चासामेका भवन्मुदे ॥ २७ ॥ ग्रीवां चांदोल्य नेत्थं सोऽकरोद्वेश्यासमं हसन् ॥ नृपः प्राह पुनर्देयं किं तद्वाच्यमतिप्रियम् ॥ २८ ॥ योगीत्यूचे भूतिगोलो देयो लैंगिकृतो मुदे ॥ राजा प्राहाथ नो विप्रोऽयमुत्थाप्यो वरासनात् ॥ २९ ॥

श्चेष्टाः दृष्ट्वा तथा स्वयं चक्रे इत्यन्वयः ॥ २६ ॥ आसां वेश्यानां मध्ये एका तव संतोषाय मया देयास्ति किमिति राजा तं योगिनं प्राह ॥ २७ ॥ नेति मम वेश्या नापेक्षिता इत्थं एवमभिप्रायेण ग्रीवामांदोल्य ग्रीवाचालनेन सूचयित्वा स योगी हसन् वेश्यासमानं चेष्टितं चकार पुनर्नृपः तवातिप्रियं मया दातुं योग्यं किमस्ति । तत्त्वया वक्तव्यमिति प्राह ॥ २८ ॥ लिंगधारिभिः कृतो विभूतिगोलो मुदे मम संतोषाय त्वया दातव्य इति योगी राजानमूचे । लिंगधारिकृतभूतिगोलस्य सूक्ष्मोपलराहित्येन योगिप्रियत्वात् । यद्वा योगिनः स्वतंत्रत्वात्तादृशभूतिगोलयाचेति भावः । अथ राजा

प्राह । अयं विप्रो नास्ति तस्मादयं श्रेष्ठासनादुत्थाप्यः दूतैरिति शेषः ॥ २९ ॥ अस्मादासनात्त्वमुत्तिष्ठेति दूतास्तं योगिनं प्राहुः । तदा स च क्रुद्धः सन् ततो निर्ययौ । तदार्भकाः वल्गंतः संतः पृष्ठलग्नाः तत्पृष्ठगामिनो बभूवुः । स योगबलेनापगां पंचगंगानदीं व्यस्तं विलोमं तीर्त्वा स्वस्थलमेत्य मध्ये कोपि नायातु इति पत्नीमुक्त्वा तां स्त्रियं बहिः स्थाप्यांतः पर्णकुटीमध्ये तस्थौ स्थितोभवदित्यन्वयः॥१३०॥१३१॥ तस्य नृपस्यैश्वर्यमश्वशालादिकं नाशितुं स पट्टे लिलेखेत्यन्वयः । अर्भकाः नावा नौकया पंचगंगां तीर्त्वा तत्रैत्य ववल्गिरे वल्गनं चक्रुः । सर्वज्ञः योगिनः कृत्याभिज्ञः अत्र पर्णकुटी समीपे तस्य स्त्रियं प्रत्युवाच ॥ ३२ ॥ अंतस्थो योगी ।किं कुरुते । अहं पुरांतरं निर्गच्छामि । अंतस्थो योगी क्षणपर्यंतं स्थातव्यमिति शुकानंदमब्रवीत् ।

दूतास्तमाहुरुत्तिष्ठाऽस्मात्क्रुद्धो निर्ययौ स च ॥ वल्गंतोऽर्भाः पृष्ठलग्नाः स योगाद्व्यस्ततोपगाम् ॥ ३० ॥ तीर्त्वा स्वस्थलमेत्यां तस्तस्थौ स्थाप्य बहिः स्त्रियम् ॥ उक्त्वाऽऽयातु न कोपीति मध्ये पट्टे लिलेख सः ॥ ३१ ॥ नाशितुं तन्नृपैश्वर्यं नावेत्याऽर्भा ववल्गिरे ॥ सर्वज्ञोत्र शुकानंदश्चैत्योवाचेति तत्स्त्रियम् ॥ ३२ ॥ योगी किं कुरुतेंतस्थो निर्गच्छामि पुरांतरम् ॥ योग्यंतस्थोऽत्र ती स्थेयं क्षणं सोथेति निर्गतः ॥ ३३ ॥ अंतरेहीति कृच्छ्रोक्त्या योगिनोंतर्ययौ गुरुः ॥ पट्टं वीक्ष्याह किं चेदं सोऽमुं चेत्यब्रवीन्नमन् ॥ ३४ ॥ राज्ञोपमानकर्तुर्मेऽश्वेभपत्यंगनासुताः ॥ नाशितुं लिखिताः सिद्ध्या किमादौ दह्यतां वद ॥ ३५ ॥

अथ स शुकानंदः अहं निर्गतोस्मीत्यब्रवीत्॥३३॥त्वमंतर्भागे एहीति योगिनः या कष्टेनोक्तिस्तया गुरुरंतर्ययौ । गुरुरित्युभयान्वयि । गुरुस्तल्लिखितपत्रं दृष्ट्वा इदं किमस्तीत्याह । स योगी अमुं शुकानंदं नमन्नित्यब्रवीत् ॥ ३४ ॥ ममापमानकर्तुर्नृपस्य अश्वगजसेनास्त्रीसुताः मया नाशितुं लिखिताः । मया सिद्धिसामर्थ्येनादौ किं दह्यतां तत्त्वं वद । इति योगिनः ईरितं वाक्यं श्रुत्वा शुकानंद एनं अब्रवीत । ते त्वया दत्तात्रेयाद्युतिः योगः लब्धः प्राप्तोस्ति खलु । तया युत्याऽऽत्मानं समाधौ समाधिकाले आप्त्वा संप्राप्य त्वमेनं सर्वगतमात्मानं द्वेक्षि । अतस्तव योगस्य सिद्धेश्च धिगस्तु । इति प्रोक्त्वास्मायो

गिनः सकाशात् लिखितं पट्टमग्रहीत् । तदनेकं यथा तथा बिभेद । शुकानंद इति शेषः ॥ ३५ ॥ ३६ ॥ क्रुद्धोपि योगी अस्य शुकानंदस्य महत्ते
जो दृष्ट्वा किंचिदपि नावदत् । नाथशुकानंदश्च अर्भकसमुदायं प्रति एत्याब्रवीत् । वः युष्माकम् आयुष्यस्याशा नास्ति किं । हि यतः सिद्धं प्रति गिरा
व्यस्तं विपरीतं वदथ । सिद्धनिंदया भवतां नाशो भविष्यतीत्यर्थः । इति श्रुत्वा तेऽर्भकाः भिया भयेन गृहान् प्रापुः । एभ्यः अर्भकेभ्यः सकाशाच्छु
कानंदवचनं श्रुत्वा राजात्र सिद्धस्थले अभिगतः सन् तं योगिनं भूतिगोलैरतोषयत् ॥ ३७ ॥ अथ योगवान्योगी पश्चात्तापेन युक्तः सन् शुकानंदगुरु
मवदत् । अहं पापकर्मणः राजद्वेषरूपात् त्वया त्रातो रक्षितोस्मि । अतः गुरुवचनेन तव संगतिः प्राप्तास्ति । अथ नाथः शुकानंदगुरुः दत्तात्रेयतस्तव

श्रीदेशिकेंद्र उवाच ॥ श्रुत्वा योगीरितमिति स चावोचदेनं युतिस्ते लब्धाऽऽत्रेयादपि खलु तयात्मानमाप्त्वा समाधौ ॥ द्वेक्ष्येनं त्वं नि
खिलगमतस्ते युतेर्धिक्च सिद्धेः प्रोक्तेत्यस्माल्लिखितमग्रहीत्तद्बिभेदाप्यनेकम्॥३६॥योगी क्रुद्धोप्यवददणु नो वीक्ष्य तेजोस्य भूरि नाथो
प्येत्यार्भगणमवदर्त्किं न वोस्त्यायुराशा ॥ सिद्धं व्यस्तं वदथ हि गिराऽऽपुर्गृहांस्ते भियैभ्यः श्रुत्वा राजात्र तमभिगतोऽतोषयद्भूति
गोलैः ॥ ३७ ॥ पश्चात्तप्तोऽवददथ गुरुं योगवान् कर्मणोहं त्रातः पापाद्गुरुवचनतः संगतिस्ते मया सा ॥ दत्तात्रेयात्पर उत गुरुः
कस्तवेत्याह नाथः स प्राह त्वद्गुरुपरवतां प्राग्गुरुर्नीलकंठः ॥ ३८ ॥ दत्तात्रेयाद्युतिगतिततिर्नूनमाताऽप्यदृश्यात्साक्षाद्द्रष्टुं चार्चितुमथ
मया प्रार्थितोऽदृश्य एषः ॥ मां चावोचन्मम परतनुं नीलकंठं व्रजाशु तस्मिन्दृष्टेऽर्चित उत किलाहं च दृष्टोऽर्चितोऽस्मि ॥ ३९ ॥

परः गुरुः कोस्तीत्याह । स च योगी शुकानंदमवोचत् । त्वद्गुरुपरवतां तव गुर्वादिपरंपरावतां गुरूणां प्राग्गुरुः पूर्वगुरुर्यः नीलकंठाख्यः स मम गुरुरित्यर्थः
॥ ३८ ॥ ननु त्वया दत्तात्रेयो गुरुः पूर्वमुक्तोस्ति । कथं पुरातनो नीलकंठस्तव गुरुरभवदित्याशंक्य दत्तात्रेयवचनेनैव तद्गुरुलाभो जात इत्याह ।
दत्तात्रेयादिति द्वाभ्याम् । अदृश्यरूपाद्दत्तात्रेयाद्योगमार्गविस्तारो मया नूनं प्राप्तोस्ति । अथ तं पूजितुं मया प्रार्थित एषोऽदृश्यरूपो मामवोचत् । हे योगिन्
त्वं मम परतनुं द्वितीयदेहं नीलकंठं प्रति शीघ्रं व्रज । यतः तस्मिन्नीलकंठयोगिनि दृष्टे उत पुनः अर्चिते सति अहमेव दृष्टोऽर्चितोस्मि । तस्य पूजने

मम पूजा कृता भविष्यतीत्यर्थः ॥ ३९ ॥ योगिनो वाक्यम् । अन्यादृष्टः अन्येनादृष्टोपि स नीलकंठो दत्तात्रेयकृपया मे मया बदामिनगरसंबंधिवने दृष्टः । पुष्पैर्युक्तैः फलदलादिभिः पूजितो मुदमगात् । अथ स नीलकंठो मां प्राह । त्वया दत्तात्रेयायोगोधिगतोस्ति । अलौकिकी सिद्धिश्चाधिगतास्ति । अथ ममाग्राग्रशिष्यस्य परंपरानुगतशिष्यस्य इह सिद्धस्थले समागमेनात्मस्थितिम् आत्मज्ञानं प्राप्स्यसि । एवं नीलकंठगुरोर्वचनेन तव दर्शनं जातमि त्यर्थः ॥१४०॥ आकर्ण्येति देशिकोक्तिः । एवमिह सिद्धस्थले योगिवचः श्रुत्वा शुकानंद एकाकी बदाम्यारण्यं प्राप्तः । किंभूतं द्रुमैर्वृक्षैर्निबिडं व्याप्तं पुनः अहिव्याघ्राणां वल्मीकानि गुल्मानि लतादिपिहितोदराणि च यस्मिन् तत् । अत्र वने ईशालये देवालये उरुजटाश्मश्रुं महज्जटाश्मश्रुधरं उच्चदेहं

अन्यादृष्टोपि स गुरुकृपातो बदामीवने मे दृष्टः पुष्पैर्युतफलदलैः पूजितोऽगान्मुदं माम् ॥ प्राहात्रेयाद्युतिरधिगताऽलौकिकी चापि सिद्धिः प्राप्स्यस्यात्मस्थितिमथ ममाग्राग्रशिष्याल्पसंगात् ॥१४०॥ आकर्ण्येत्थं वच इह शुकानंद एको बदाम्यारण्यं प्राप्तो द्रुनि बिडमहिव्याघ्रवल्मीकगुल्मम् ॥ दृष्ट्वात्रेशालय उरुजटाश्मश्रुमुच्चं स्थितोल्पं सिद्धोथेक्ष्यावददसुमपास्त्यत्र तत्रैकमेव ॥ ४१ ॥ दत्ता त्रेयोदित इह भवांश्चागतो मां हि द्रष्टुं दत्तात्रेयाद्युतिगतिरसौ मां गुरुं मन्यतेऽहो ॥ तेनात्रेयोदित इह समालोकितोहं परैनौ षट्को शात्स्तः शिवमिह विधौ लैंग्यपांड्यौ दिदृक्षू ॥ ४२ ॥

नीलकंठं दृष्ट्वा तत्राल्पकालं स्थितः स्थिरोभवत् । अथ सिद्धो नीलकंठोऽमुं विनायकं वीक्ष्यावदत् । हे अप न पालको यस्य तस्य विनायकस्य संबोधनं अपेति । यद्वा अपा इति शुकानंदस्य लौकिकं नाम तत्संबुद्धिः । तत्र त्वयि अत्र मयि च एकमेवात्मतत्त्वमस्ति । त्वया स्थिरेण भूत्वा किं विचार्यते । मन्निकटमागच्छेत्यर्थः ॥४१॥ भवांश्च दत्तात्रेययोगिना उक्तः सन् मां द्रष्टुमिहागतोस्ति । असौ योगी दत्तात्रेयात् योगस्य गतिः प्राप्तिः यस्य स मां गुरु मिति मन्यते । मयानुपदिष्टोपि मां गुरुं मन्यते । अहो आश्चर्यमित्यर्थः । तेन योगिना दत्तात्रेयेण प्रोक्तोहमिहावलोकितोस्मि । षट्कोशात् षट्क्रोशग्रा मात् । लैंग्यः लिंगधारी जंगम इति भाषाप्रसिद्धः । पांड्यः पंडा बुद्धिस्तद्वान् । कुलकर्णीति भाषाप्रसिद्धः । एतौ द्वौ विधौ सोमवारे इह शिवं दिदृक्षू

भवतः । शिवदर्शनार्थमागताभ्यां चावलोकितोस्मीति यावत् । अपरैर्नावलोकितोस्मीत्यर्थः ॥ ४२ ॥ मम जनेः जन्मसकाशात् अब्धिनिघ्नं चतुर्भि र्गुणितं वर्षाणां सहस्रम् । चतुःसहस्रवर्षाणि जातानीत्यर्थः । कच्छिद्राब्जाद्ब्रह्मरंध्रगतचंद्रसकाशादमृतं तत् अनुवेलं पिबतीति सोहं तेन नूतनदेहोस्मि । किंच । मे शिष्यात् शांभवाख्यात् त्वं नवधृतिसमः एकोननवत्यधिकशतसंख्यातुल्यः शिष्योसि । अहं योगसामर्थ्येन सर्वानादिनाथादित्वत्पर्यंतान्संप्रदायिनः सचरित्रं यथा स्यात्तथा वेद्मि । अथ त्वं च मत्प्रसादात्सर्वान्गुरून् चरित्रैः सह विद्धि ॥ ४३ ॥ इह सिद्धस्थाने अहमेव परो गुरुर्यस्य तेन भुवि सुयोगवता दत्तात्रेयाख्येन योगिना अंजः अनायासेन स्वसंस्थाम् आत्मस्थितिं प्राप्तुं तव संगोऽभवदिति दिष्ट्या जातं तव संगेन तस्यात्मज्ञानलाभो

वर्षाणां मे गतमथ जनेरब्धिनिघ्नं सहस्रं कच्छिद्राब्जामृतमनुपिबन्नाडिभिर्नूतनांगः ॥ शिष्यान्मे त्वं नवधृतिसमः शांभवाद्वेद्मि सर्वान्योगाचाहं सचरितमथो विद्धि तन्मे प्रसादात् ॥४३॥ दिष्ट्या संगोऽभवदिह च ते योगिना मत्परेण दत्तात्रेयेण भुवि सुयुजांजो हि लब्धुं स्वसंस्थाम् ॥ नो प्राचीनादृत इह भवेदात्मता संप्रदायाद्देवोप्यद्धा श्रुतिमुखयुतीर्वक्ति नो ज्ञातिमीषत् ॥ ४४ ॥ इत्थं श्रुत्या त्रिदिनमवसत्पिष्टपाथेयतुल्यं नत्वा नाथस्तमथ निरगात्प्राप कृष्णातटं च ॥ दत्तात्रेयो नृहरिरगृहश्चात्यजंतोस्य संगं तेभ्यो भीत्याऽमलनिशि ततो निर्गतोऽगात्स्वगेहम् ॥ ४५ ॥

भविष्यतीत्यर्थः ।प्राचीनात्संप्रदायादृते इह लोके आत्मता आत्मज्ञानं न भवेत् । देवोपि साक्षात् श्रुतिमुखानि वेदादीनि युतिं योगं च वक्ति । ज्ञप्तिं ज्ञानं ईषदपि नो वक्ति । आत्मविज्ञानं गुरूपसदनेनैव भवति । न देवतादिनेति भावः ॥४४॥ इत्थमिति देशिकेंद्रोक्तिः । इत्थंश्रुत्या प्राचीनवार्ताश्रवणनिमित्तेन पिष्टरूपं पाथेयं तेन तुल्यं पाथेयसमाप्तिपर्यंतमिति यावत् । त्रिदिनपर्यंतं शुकानंदनाथोऽवसत् । अथ तं नीलकंठयोगिनं नत्वा तस्मान्निरगात् । कृष्णातटं च प्राप । दत्तात्रेयो योगी नृहरिसाधुः अगृहः गृहाश्रमरहितः यतिरितियावत् । एतस्य शुकानंदस्य संगमत्यजंतः अत्यागिनोभवन् । शुकानंदसंगं न तत्यजुरित्यर्थः । तेभ्यो भयेन ते आगमिष्यंतीति भयेन । अमलनिशि शुक्लपक्षरात्रौ ततो निर्गतः सन् स्वगृहमगात् । शुकानंद इति शेषः ॥ ४५ ॥

सर्गोक्तकथाश्रवणादिफलमाह । गाथामिति । कृष्णातटं गतस्य शुकानंदनाथस्य गाथां कथां यः पुमार्यः पुरुषश्रेष्ठः नित्यं प्रतिदिनं भूयः त्रिकालं अन्यथा श्रवणकर्ता पठनकर्ता च भवेत् । वा अथवा श्रावयेत् । सः योगं सिद्धिं लभते । उत पुनः आत्मसिद्धिम् आत्मज्ञानं च लभते । तथाऽनायासेन राजतुल्यान्भोगान् भुवि भुंक्ते हि । परत्र स्वर्गे अमरैः देवैः पूज्यो भवेत् ॥ १४६ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां शुकानंदचरित्रे एकोनपंचाशत्तमः सर्गः ॥ ४९ ॥ . उत्पंचाशे प्रोच्यते षड्त्रिंशोर्ध्वशतपद्यतः । प्राङ्म्नित्रासिर्विनेतुश्च चिंतामण्युद्भवोद्भहौ ॥ ५० ॥

गाथां कृष्णातटगतशुकानंदनाथस्य भूयो भक्त्या नित्यं श्रुतिपठनकृच्छ्रावयेद्वा पुमार्यः ॥ योगं सिद्धिं लभत उत स ह्यात्मसिद्धिं तथांजो भोगान्भुंक्ते भुवि नृपसमान्स्यात्परत्रामरेज्यः ॥ १४६ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे शुकानंदकृष्णातीरस्थितिवर्णनं नामैकोनपंचाशत्तमःसर्गः ॥ ४९ ॥ अथैकदा शुकानंदः पंढरीं गंतुमुत्सुकः ॥ बहिः प्रतस्थे भालक्याः क्षपास्ये हनुमत्पुरः ॥ १ ॥ स्वप्ने परमहंसोत्राऽब्रवीत्तेजोधिको निशि ॥ तुलजापुरमार्गेण पंढरीं गच्छ नान्यथा ॥ २ ॥ जागृतः प्राह मे स्वप्नः पंढरीशोदितः खलु ॥ रूपात्परमहंसीयाद्यतो नान्यत्र मे मनः ॥ ३ ॥ इति बुद्ध्याध्वना तेन व्रजन्नित्यं स योजनम् ॥ आहूतोऽन्विप्रगेहेऽथ क्वचिद्भोजनोत्तरम् ॥ ४ ॥ पृथुकान्कंडयंत्याह माता गृहपतेर्गुरुम् ॥ भक्ष्यंतामुष्णपृथुकाः सोऽब्रवीदणु नो क्षुधा ॥ ५ ॥ बलात्सा प्रददौ पश्चाद्भक्ष्यंतामिति तान्गुरुः ॥ वस्त्रे बध्वाग्रहीत्संगात्ततोगात्तुलजापुरम् ॥ ६ ॥

अथ शुकानंदस्य पंढरीयात्रां वर्णयन् सिद्धरूपेण श्रीकृष्णदर्शनमाह । अथेत्यादिभिः षट्त्रिंशद्भिः पद्यैः । क्षपास्ये सायंकाले भालक्याः वहिर्देशे हनुमतः अग्रे प्रस्थानं कृतवान् ॥ १ ॥ २ ॥ पंढरीशेन उक्तः । परमहंसस्य रूपेण । यतः मम मनः अन्यत्र देवेषु नास्ति । अतस्तदुक्त एव स्वप्न इत्यर्थः ॥ ३ ॥ तेनाध्वना तुलजापुरमार्गेणाहूतश्चेद्विप्रगृहेऽश्नन् अन्यथा तथैव तिष्ठन्नित्यर्थः । अथादिपरान्वयि ॥ ४ ॥ भक्ष्यंतां त्वयेति शेषः ॥ ५ ॥ पश्चान्मार्गेण पृथुकान् वस्त्रे बध्वा संगात्संगेनाग्रहीत् । संग्रहं कृतवानित्यर्थः ॥ ६ ॥

असौ शुकानंदः स्वप्ने दृष्टं परमहंसं इहापि तुळजापुरे हनुमतः वेद्यां स्थितं पश्यन् सन् प्रणमति प्रणनाम । तं शुकानंदं दृष्ट्वा सोपि परमहंसः सोपानमार्गं त्यक्त्वा वेद्याः अधः उड्डानं कृत्वैव परममाप्तमिवालिंगितवान् ॥ ७ ॥ स्वकरात्स्वहस्तेन धृत्वा हनुमतः वेदिं निनाय । तस्य विनायकस्य स्कंधगतं श्वेतकंबलमास्तीर्य तथादरेण एनमुपवेश्य अर्चककराद्धनुमत्पूजकहस्तेन साधितं सिद्धांतम् अपिबत् । विजयोद्भवं धूम्रपानं कृतवानित्यर्थः ॥ ८ ॥ अथ सिद्धांतोद्भवं धूमं विनायकमुखे व्यसृजत् । सिद्धः इत्यनुवृत्तिः । ततः धूमेन स विनायकः गतमार्गपरिश्रमः अभूत् । गतश्रमोभवदित्यर्थः । सिद्धः

स्वप्नेक्षितं परमहंसमिहापि पश्यन्वेद्यां स्थितं हनुमतः प्रणमत्यसौ तम् ॥ वीक्ष्यावरोहणपथं परिहाय सोप्युड्डीयाध एव परमाप्त मिवालिलिंग ॥ ७ ॥ धृत्वा विनायकमथ स्वकरान्निनाय वेदिं तदंसगतनिर्मलकंबलं च ॥ आस्तीर्य चैनमुपवेश्य तथादरेण सिद्धांत मर्चककरादपिबत्स सिद्धः ॥८॥ धूमं तदुत्थितमथो व्यसृजद्विनेतुर्वक्त्रे ततः स गतमार्गपरिश्रमोऽभूत् ॥ सिद्धोर्चकं वदति चास्त्यणु कष्टमस्मिन्तेनार्पितं तमपिबत्पुनरुत्ससर्ज ॥ ९ ॥ वातातपाध्वगतिकष्ट इतो विनेताऽभूच्चाश्रमो मनसि चाह विचित्रमेतत् ॥ सिद्धांतधूममपिबन्मयि चोत्ससर्ज तेनाश्रमोहमभवं न किलैष मर्त्यः ॥१०॥ कश्चित्स्थितो यवन आत्मरतोत्र दूरं सोंतर्विचारयति वेत्ति तदेष सिद्धः ॥ ज्ञात्वोनमस्य स च नेति निषेधयंस्तं जातोंजसा ध्वनिरिदं मुहुराह तद्राक् ॥ ११ ॥

अस्मिन्मित्रे अल्पं कष्टमस्तीत्यर्चकं वदति । तदा पुनस्तेनार्चकेणार्पितं तं सिद्धांतमपिबत् । विनायकमुखे पुनरुत्ससर्ज च ॥ ९ ॥ वातादिभिः कष्टं यस्य स विनायकः इतः धूमग्रहणात् श्रमरहितोभवत् । स चैतद्विचित्रं जातमित्याह । एतत्किं तदेवाह । सिद्धांतेति । एषः सिद्धांतधूममपिबत् मयि चोत्ससर्ज । तेन हेतुनाऽहं श्रमरहितोऽभवम् । तस्मादेष सिद्धः मनुष्यो नास्ति किल ॥ १० ॥ अत्र कश्चिदात्मरतो यवनः किंचिद्दूरं स्थितोऽभवत् । सः यत् अंतः विचारयति । तत् एष सिद्धः जानाति । अस्य सिद्धस्य न्यूनं ज्ञात्वा स च यवनः त्वचिंतितं नेति तं सिद्धं निषेधयन् सन् अंजसा ध्वनिः

आकाशशब्दो जातः इतीदं वचनमुदाजहार । किंभूतः तद्वाक् यवनवाक् । यवनवाचाऽऽहेति यावत् । एवं तयोः सर्वज्ञयोः सिद्धयवनयोरेकत्र स्थितिरासीदित्यर्थः ॥ ११ ॥ अथ सिद्धः मम दर्शनं कुत्राभूदिति विनायकं प्राह । हनुमतो वेद्यां तव दर्शनमभूदिति नाथे विनायके वदति सति पुनः द्वितीयवारं इदमाधुनिकं दर्शनं जातमिति सिद्धोऽब्रवीत् । तदा नाथश्चास्यां वेद्यां तद्दर्शनं तथा पूर्ववत् द्वितीयं जातमित्याह । अंगीकृतवानिति तेन सिद्धेनैकं वचः कृतम् । एकवाक्यता कृतेत्यर्थः ॥ १२ ॥ असौ विनायकः अल्पं वै शूद्रस्पर्शं न सहते इति हेतोः विनायकाग्रे व्रजन् सन् स सिद्धः उरुरवं बंदिजनवद्बृहच्छब्दं कृतवान् । उरुरवात्तस्य बृहच्छब्देन राजा एति किमिति विशंकमानाः मार्गं ददुः । जना इति शेषः । इद् सिद्धरूपीश्वरोपि इति गुरोर्दास्यं

सिद्धो विनायकमथाह ममेक्षणं क्व वेद्यामभूद्धनुमतो वदतीति नाथे ॥ सिद्धोऽब्रवीत्पुनरिदं च तदाह नाथो वेद्यां तथेति कृतमेकवचोऽत्र तेन ॥ १२ ॥ स्पर्शं न शौद्रमणु वै सहते विनेतेत्यग्रे व्रजन्नुरुरवं ह्यकरोत्स सिद्धः ॥ राजैति किं वररवादिति शंकमाना मार्गं ददुः स गुरुदास्यमितीद्व च चक्रे ॥ १३ ॥ सिद्धस्तदेति सविनायक एत्य तीर्थं कल्लोलमाप्लुतिकरार्थिन ईशदूतान् ॥ प्राहेत्ययं मम सखाप्लुतये क्वचिन्नो वार्यस्तथेति तमिमेपि नमंत आहुः ॥१४॥ आवश्यकारिणमवेक्ष्य कृताप्लुतिं तं तावत्स्थितोऽत्र निरगाच्च ततो विनेत्रा ॥ सिद्धो निरीक्ष्य तुलजां मठमाप शूद्रसंन्यासिनो बहिरथाह्वयदीशमेकम् ॥ १५ ॥ योद्धा स्वयं तुलजया निशि दीव्यते ये तं चाह सिद्ध इत एहि स जोगडेति ॥ प्राप्तं बहिस्तमवदत्त्वहमात्तमुक्तो भक्ष्यं त्वयाऽगदि मया हि तदा पुरा किम् ॥ १६ ॥

पुरः पश्चाच्च रक्षणं कृतवान् ॥ १३ ॥ इति क्रमेण विनायकसहितः स सिद्धः कल्लोलाख्यं तुलजादेव्याः समीपगतं तीर्थमेत्य तत्र स्नाने करग्राहिणो राजदूतानिति प्राह । इति किम् । अयं मम सखा भवद्भिः स्नानार्थमनिवारणीय इति । इमेऽपि राजदूताः तं सिद्धं नमंतः संतः तथेति अयमस्माभिः न निवार्यते इत्याहुः ॥ १४ ॥ अथ कृतस्नानं ब्रह्मयज्ञाद्यावश्यकारिणं तं विनायकं दृष्ट्वा तावत्पर्यंतं तत्र तीर्थे स्थितः स सिद्धः विनायकेन सह ततो निरगात् । अथ तुलजां दृष्ट्वा शूद्रसंन्यासिनः गोसावीतिभाषाप्रसिद्धस्य मठं प्राप । अथैकं मुख्यं ईशं मठस्वामिनं बहिराह्वयत् ॥ १५ ॥ यः स्वयं साक्षा

देव्या सह रात्रौ द्यूतं करोति । तं शूद्रयतिं प्रति हे जोगडेति भाषया शूद्रयतिसंबोधनम् । त्वमितोत्रैहीति स सिद्ध आह । अथ बहिः प्राप्तं तं प्रति सिद्ध उवाच । त्वयाहं भक्ष्यं आत्तुं स्वीकर्तुं यदोक्तोस्मि । तदा पूर्वं मया किमगदि उक्तं तत्स्मरेत्यर्थः ॥ १६ ॥ स्वयमेव स्मारयति अर्द्धाह्नकेति । मध्याह्ने मम सखा पृथुकान् गृहीत्वाऽऽगमिष्यति । ततः तस्मात्सकाशादिमान् पृथुकानहं भोक्ष्ये । इत्थं मम वाक्यं भवान्स्मरति किम् । इति शूद्रयतिं प्रति उक्त्वा स सिद्धः द्वाराग्रभागे वेद्याः उपरि निंबवृक्षस्याधः अगात्प्राप्तः ॥ १७ ॥ अत्र वेद्यां तेन विनायकेन सह स्थित्वा तस्य स्कंधगतं भारमादाय तद्गतं बंधनं मोचयति मोचितवान् । ततः सकाशात्प्रीत्याऽल्पान् विनायकस्य पृथुकान्स्वहस्तेनात्ति भक्षितवान् । यथा पूर्वं कृष्णः सुदाम्नोऽल्पान्पृथुकान्स्वहस्तेन भक्षितवान् ॥ १८ ॥ अत्र भवेऽस्मिन् जन्मनि च अंघ्रिजयतेः शूद्रसंन्यासिरूपस्य मम प्रथममीक्षणमभूत् किल । तदा तव मातृवाक्येन पयः दुग्धं लब्ध्वा त्वां च दृष्ट्वा पुनरहं गतोस्मि । इति प्रथमं दर्शनं जातम् ॥ १९ ॥ ततः यवनभिक्षुरूपोहं तव गृहमागतोभवम् । ते इति परिणामेनोभयसंबंधि । ते तुभ्यं मात्राहं उदितः कथितोस्मि । अथ भवता बहिरेत्य द्विके द्वितीये दर्शने मम तक्रं दत्तम् । उत पुनः इदमाधुनिकं तृतीयं दर्शनमभूत् । यदि स्मरसि तर्हि कृष्णातटे राजवेषेण अन्यच्चतुर्थं दर्शनमभूत् । एवमिह जन्मनि चतुर्वारं मम दर्शनं जातमित्यर्थः ॥ २० ॥ देशिकेंद्रोक्तिः । अस्मै

अर्द्धाह्नके मम सखा पृथुकान्गृहीत्वा यास्यत्यहं तत इमान्खलु भोक्ष्य इत्थम् ॥ वाक्यं स्मरत्यपि भवानिति सिद्ध उक्त्वा द्वाराग्रवे
द्युपरि निंबतरोरधोऽगात् ॥ १७॥ स्थित्वात्र तेन स तदंसगतं च भारमादाय मोचयति तद्गतबंधनं च ॥ प्रीत्या ततः स पृथुकानल्
मितांश्च हस्तात्कृष्णः सुदाम्न इव चात्ति विनेतुरेषः ॥ १८ ॥ सोऽश्नन्विनायकमुवाच न पूर्वमित्थं मां त्वं हि वेत्सि मम ईक्षणमत्र
चाद्यम् ॥ जातं ममांघ्रिजयतेस्तव मातृवाक्याल्लब्ध्वा पयो गत उताहमवेक्ष्य च त्वाम् ॥ १९॥ प्रातस्ततो यवनभिक्षुरहं गृहं ते मातो
दितोथ भवता बहिरेत्य तक्रम् ॥ दत्तं मम द्विक उतेदमपूर्वतीर्थं कृष्णातटे स्मरसि चेन्नृपवेषतोऽन्यत् ॥२०॥ सांप्रतम[illegible]
मिदं कथित्वाऽथो पूर्वषड्जनिकथामवदत्स चास्मै ॥ सिद्धः समीप इह नैव तदास कश्चिद्बोद्धा स्वयं मधुरिपुर्विपरीतवेषः ॥ २१ ॥

विनायकाय विपरीतवेषो विष्णुः साक्षात्स सिद्धः पूर्वजन्मवृत्तमवदत् कथितवान् ॥ २१ ॥ क्रमेण षण्णां पूर्वजन्मना स्मृतये स्मरणार्थं सुरभिलोकस्य गोलोकस्य ईश्वरः कृष्णोऽहं प्रख्यातोस्मि । सर्वेभ्यः प्रियः सुदामा गोपालस्त्वं ममांशोसि । मालिनी वृ० ॥ २२ ॥ अथवा कलेः प्राक् द्वापरांते मथुरायां वसुदेवादवंत्यां ब्राह्मणाच्च धृतनरशरीरौ अभवावेति शेषः ।·श्रुतिमुखं वेदादिकमपि एकस्माद्गुरोः सांदीपनेः सकाशात्प्राप्तवंतौ । अथ च विहितयोगाभ्यासेन लब्धः स्वबोधः आत्मबोधः ययोस्तौ ॥ २३ ॥ अथाहं बहुभार्यो द्वारकाधीशोऽभवं । त्वमेकपत्नीवान् स्वे धने इतरमतिः लोष्ठमतिः अतोऽ

सिद्ध उवाच ॥ तव शिरसि मयादौ दीयते स्वीयहस्तः स्मृतय इह हि षण्णां प्राग्जनीनां क्रमेण ॥ प्रथितसुरभिलोकेशोस्मि कृष्णोहमंशस्त्वमसि मम सुदामा गोप आप्तोऽखिलेभ्यः ॥२२॥ विधृतनरशरीरौ प्राक्कलेर्भूतलेऽस्मिन्मधुपुरवसुदेवावंतिकाब्राह्मणाभ्याम् ॥ श्रुतिमुखमपि चैकस्माद्गुरोः प्राप्तवंतावथ च विहितयोगाभ्यासलब्धस्वबोधौ ॥ २३ ॥ अहमथ बहुभार्यो द्वारकेशस्त्वमेकांगन इतरमतिः स्वेऽकिंचनोऽपत्यवांश्च ॥ मयि कृतदृढभक्तिः प्रेषितो भार्ययाथाऽन्यहृतपृथुकमुष्ट्योपायनार्थं कुवस्त्रः ॥ २४ ॥ त्वदतिसुहृद ईशोथाप्तवान्प्रीतितस्तान्पुरमखिलकृतोत्पाद्यैव हैमं त्वदर्थम् ॥ तव युतिमणु पक्वां वीक्ष्य षड्जन्मलभ्याथ च भव वरयोगी हीत्थमाज्ञप्तवांस्त्वाम् ॥ २५ ॥ अभिनवपुरभोगांस्त्वं तु भुक्त्वाप्यनीहस्तदनु गतशरीरश्चोत्तरस्यां तु राजा ॥ त्वमहमथ सुहृत्ते मंत्रिवर्योऽत्र जातोऽहमथ भुवि मुकुंदो राजसंज्ञो जयस्त्वम् ॥ २६ ॥

किंचनः संततियुक्तोपि मयि दृढभक्तिमान् अभवः । पुनरुपायनार्थमन्यगृहाद्गृहीता पृथुकानां मुष्टिः यया तया भार्यया पत्न्या प्रेषितः किंभूतः कुवस्त्रः कुपटः ॥ २४ ॥ अतिसुहृदः त्वत् त्वत्सकाशादीश्वरोपि अहं प्रीत्या तान्पृथुकान् प्राप्तवानथाखिलकृता विश्वकर्म्मणा त्वदर्थं हैमं पुरमुत्पाद्य तव युतिं योगं किंचित्पक्वां दृष्ट्वा षड्जन्मप्राप्त्या त्वं श्रेष्ठयोगी भवेतीत्थमहं त्वामाज्ञप्तवानस्मि॥ २५॥ त्वं तु अभिनवपुरे सुवर्णनगरे भोगान् भुक्त्वाऽपि अनीहो निःस्पृहो अभवः । एतत्कृष्णावतारे प्रथमं जन्म । तदनु तदनंतरं गतशरीरः सन् त्वमुत्तरस्यां दिशि राजा विक्रमाख्यः जातोसि । अथ तव सुहृत् मंत्रिवर्यो भट्टिरहं जातोस्मि ।

एतद्द्वितीयं जन्म। अथाहं भुवि मुकुंदयोगी।त्वं जयो राजसंज्ञः जयत्पालराजसंज्ञको जातोसि।एतत्तृतीयं जन्म॥ २६॥इह जन्मनि मया तुभ्यं वेदांतज्ञाने विचारः कथितः। स विवेकसिंधुसंज्ञको ग्रंथ आसीदित्यर्थः। अथ चतुर्थजन्मन्यहं ज्ञानेश्वराख्यो योगी अभवम्। त्वं भल्लटाख्यः खेचरस्वामीति अभदेके प्रसिद्धोऽभवः। अथ पंचमजन्मनि अहं जलवाहकः त्वं चैकनाथो जातः। अथाहं षष्ठजन्मनि बाबाचित् बबाचैतन्यनामा जातः। त्वं तु तुकारामाख्यो जातोसि॥ २७॥ एवं षड्जन्मानि कथयित्वा सप्तमजन्मवृत्तांतमाह। धृतेत्यादिना। अजन्मापि अहं धृतः यतितुल्यवेषो येन संन्यासीव जातः। त्वं त्व

कथित इह विवेकोऽध्यात्मबोधे मया तेऽहमभवमथ योगी ज्ञानवान्भल्लटस्त्वम्॥ अहमथ जलवाही चैकनाथस्त्वमेवाहमथ किल हि बाबाचित्तुकारामकस्त्वम्॥ २७॥ धृतयतिसमवेषश्चाधुनाहं त्वजन्मा चरमभव इह त्वं विच्छुकानंदयोगी॥ वियुतिमणु न तेहं सोढुमर्हस्ततोऽद्यप्रभृति हि तव पृष्ठेनुव्रजेऽनन्यदृष्टः॥ २८॥ भव इह खलु जातस्त्वं तु सत्पक्वयोगो व्रजसि सह मयैवायुःक्षये स्वीयलोकम्॥ नगजनिभववृत्तं ते समासेन चोक्तं स्मृतिगतमखिलं तेऽद्यास्तु वै मत्प्रसादात्॥ २९॥ इति निगदितवृत्तः प्राक्स्मृतिं प्राप सद्योऽनमदनुजनिमित्रं सोपि तं चालिलिंग॥ वदति सुहृदमस्मात्पंढरीं यामि शीघ्रं स च मुहुरवदत्तं तत्र चाश्मा न चान्यत्॥ ३०॥ अथ स परमहंसः पंढरीं द्रष्टुमुत्कं त्वखिलविदभिमत्याहश्चतुष्कं निषेध्य॥ व्रज सख इति चाहार्यः शुकानंदमात्तं स च कृतविधिरेष निर्ययावाशु तस्मात्॥ ३१॥

स्मिन् चरमजन्मनि वित्त ज्ञानवान् शुकानंदयोगी जातोसि। यतस्तवाल्पं वियोगं सोढुमहं नार्हः असमर्थोस्मि। ततोद्यप्रभृति नान्येन दृष्टोऽहं तव पृष्ठदेशे अनुव्रजामि॥ २८॥ इह भवे इहजन्मनि॥ २९॥ अनुजनिमित्रं प्रतिजन्मसुहृदम्। अनमत् ननाम। स च सिद्धः। तत्र पंढर्याम् अश्मा पाषाणोस्ति। अन्यत्किमपि नास्ति॥ ३०॥ उत्कं उत्कंठितम् अभिमत्वा ज्ञात्वा चतुर्दिनं निषेध्य आर्यः सिद्धः हे सखे पंढरीं त्वं व्रजेति शुकानंदं प्राह। अथैष विनायकश्च कृतः विधिः स्नानादिर्येन स तस्मात्तुलजापुरादाशु निर्ययौ॥ ३१॥

अथ सः सुहृदं सिद्धं नत्वा पंढरीमार्गेण गमनकर्ताऽभवत् । यतिरपि पुरसीमांतमन्वगात् । नगरपुरुषान् चोरशस्त्राभिभूतान् पश्यन् स सिद्धः अतोऽनेन कारणेन मया त्वं चतुर्दिनं निषिद्धोसि इति शुकानंदमाह । भाविचोरभवज्ञानवता मया निषेधः कृत इत्यर्थः ॥ ३२ ॥ अमुं सिद्धम् । नद्यां भीमायां कृतविधिः कृतनित्यक्रियः । अमरगृहं देवालयम् । स्वामित्रं परमहंसस्वरूपं दृष्टवान् ॥ ३३ ॥ समचरणकमलं निबिडसजलमेघकांतिं मंडनानां मंडनं भूषणानां भूषणं नवीनतुलस्याः माला कंधरायां यस्य तं कमलनेत्रं दयायुक्तं धवलप्रकाशं हास्यं यस्य एतादृशं तं विठ्ठलं तं च सिद्धं कदाचित्स ऐक्षदित्यनु

सुहृदमथ स नत्वा पंढरीमार्गगामी यतिरपि पुरसीमांतं स्वयं ह्यन्वगात्तम् ॥ अभिमुखमिह चैक्षंश्चोरशस्त्राभिभूतान्च्छुकसुखमिति चाह त्वं मयातो निषिद्धः ॥ ३२ ॥ मुहुरमुमथ नत्वाऽत्याग्रहोक्त्या निवर्त्य क्रमत उत विनेता पंढरीं प्राप नद्याम् ॥ कृतविधिरिह नत्वा पुंडरीकं च गत्वाऽमरगृहमिह चैक्षत्पांडुरंगं स्वमित्रम् ॥ ३३ ॥ समचरणसरोजं सांद्रनीलांबुदाभं जघननिहितपाणिं मंडनं मंडनानाम् ॥ तरुणतुलसिमालाकंधरं कंजनेत्रं सदयधवलहासं विठ्ठलं तं कचिच्च ॥३४॥ अथ स परमहंसं विठ्ठलं चैकमेव दृढमतिरिति मत्वा तं मुहुः सन्ननाम ॥ न्यवसदिह च मासं चाव्रजद्देशमीक्षन्नभिगतमथ पृष्ठे गोपवेषं सवेणुम् ॥ ३५ ॥ प्रतिजनि दृढभक्तो मेऽप्यनीहोऽतिशांतः सुरपदमपि नेच्छत्यात्तमोक्षं कुतोन्यत् ॥ तमनुव्रज इतोंघ्र्योः पांसुभिः स्यां पवित्रो भगवदुदितमित्थं सत्यमत्राभवद्धि ॥ ३६ ॥ श्रीदेशिकेंद्र उवाच ॥ विनायकेथ गेहस्थे ह्युमापत्योप्यकारयत ॥ तेन तद्दुहितुर्दानं कुलशीलस्वविद्वते ॥ ३७ ॥

वृत्तिः ॥ ३४ ॥ वेणुसहितं गोपवेषं हरिं पृष्ठदेशे अभिगतमीक्षन् स्वदेशमव्रजत ॥ ३५ ॥ प्रतिजन्मसु दृढभक्तिः निःस्पृहोतिशांतः यः मे मया दत्तमिंद्रपदं प्राप्तं मोक्षं च नेच्छति । अन्यद्धनादिकं कुतः इच्छति । एतादृशो यः तमहमनुव्रजामि । इतोनुगमनेन तस्य चरणयोः पांसुभिः अहं पवित्रः स्यां भवामि इत्थं भगवदुक्तमत्र शुकानंदे सत्यं जातं हि । यथोक्तं भगवता "निरपेक्षं मुनिं शांतं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः" इति ॥ ॥ ३६ ॥ तेन विनायकेन निमित्तभूतेन तद्दुहितुः विनायककन्यायाः दानं कुलं शीलं स्वं धनं वित् ज्ञानं एतद्युक्ताय वराय कृतम् । विनायकः प्रपंचे

सर्कः वासीदित्यर्थः ॥ ३७ ॥ सेति परान्वयि ॥ ३८ ॥ परालयमव्रजंत्याः इति संबंधः ॥ ३९ ॥ क्वचिदन्यं पुरुषमपश्यंत्या इति पूर्वान्वयि ॥ ४० ॥ हे पितः हे अर्हवित् योग्यज्ञान त्वया मद्गृहे आगंतुं योग्यं न वा योग्यं इति दृष्ट्वैव वा आगंतव्यं न वाऽऽगंतव्यमित्यर्थः ॥ ४१ ॥ अर्हां योग्यां कंचुकीम् । तत्र स्वगृहे यथा पथि तथाऽवसत् । गृहेष्वतिथिवद्वसेदित्युक्तत्वादेति भावः ॥ ४२ ॥ समाप्तोयं देशिकेंद्रसंवादः ॥ अथाग्रे कथां वक्तुं प्रेरयति

अथ प्रौढवयाः कन्या व्रजंती श्वशुरगृहम् ॥ पित्रोक्ता ते गृहं यास्ये त्वं चेत्कीर्तिकरीति सा ॥ ३८ ॥ आकर्ण्यापि गता तूष्णीं काले नाथ विनायकः ॥ तस्याश्चागाद्गृहं पत्युः प्रियकर्त्र्याः परालयम् ॥३९॥ अव्रजंत्याः क्वचिद्रान्यमपश्यंत्याश्च तामिति ॥ पश्यंस्तुष्टो विनेताभूत्सती पितरमब्रवीत् ॥ ४० ॥ हसंतीति पितर्गेहं ममागंतुं पुनस्त्वया ॥ योग्यं वाऽयोग्यमालोक्यागंतव्यं वा न वार्हवित् ॥ ४१ ॥ श्रुत्वेत्थं स स्मितास्योभूय्यहं स्थित्वार्हकंचुकीम् ॥ दत्त्वास्यै स्वगृहं चागात्तस्थौ तत्र यथा पथि ॥ ४२ ॥ देशिकेन्द्र उवाच ॥ इतोग्रतः कथा मत्तः श्रुता दृष्टा त्वया च मे॥प्रियशिष्याय वक्तव्या किलास्मै रामयज्वने ॥ ४३ ॥ श्रीमयूरेश्वर उवाच ॥ भवतोनंतवीर्यस्य कथां पितुरहं लघुः ॥ किं जानेथ यथास्फूर्ति वक्ष्ये श्रीचरणाश्रयात् ॥ ४४ ॥ गुरुभक्तार्य भो रामदीक्षिताग्रे कथां शृणु ॥ गुर्वंघ्र्यर्पितहृद्धीस्त्वं ह्यैकाग्र्यं किं तवोच्यताम् ॥४५॥ गुरुर्गणेशो हृदि चाह कन्या विनायकस्याप गृहं हि पत्युः ॥ प्राङ्निस्पृहोनीहतमोयमद्य पुत्रोस्य भूयात्स्थितये स्वगेहे ॥ ४६ ॥

इत इति । हे मयूरेश्वर इतः मज्जन्मसकाशादग्रे मम कथा मत्तस्त्वया श्रुता दृष्टा चास्ति । सा प्रियशिष्याय रामदीक्षितायास्मै पुरोवर्तिने त्वया वक्तव्या किल ॥ ४३ ॥ ४४ ॥ इति देशिकेंद्रं संप्रार्थ्य रामदीक्षितं प्राह । त्वं गुरुचरणेर्पितमनोबुद्धिरसि । अतस्तव त्वां प्रति मया एकाग्रता किं वक्तव्या । त्वयि एकाग्रता अस्त्येवेत्यर्थः ॥ ४५ ॥ अयं विनायकः प्राक् पूर्वजन्मसु अथास्मिञ्जन्मन्यतिनिस्पृहोस्ति । अतः स्वगृहे स्थितये निवासायास्य पुत्रो भूयात्

भवतु । इति गणेशो मनस्याह । संकल्पं कृतवान् ॥ ४६ ॥ गंगा विनायकपत्नी अन्यत्र नदी च । शिवांशं स्कंदमिव । गणनाथस्य तोषो यस्मादित्युभयत्र ॥ ४७ ॥ अथेंदौ बुधे च स्वोच्चगते वृषकन्यास्थिते सति ब्राह्मे धिष्ण्ये रोहिणीनक्षत्रे शुभग्रहावलोकिते सुलग्ने देवी गंगा वा शुभचिह्नं पुत्रं सुषुवे हि । यतः गुरुगणेशो यथांतर्मनसि अचिंतयत्तथा जातम् । गुरुसंकल्पोन्यथा न भवतीत्यर्थः ॥ ४८ ॥ जातं जातकर्म तस्य नाम्नः उक्तदिवसे द्वादशेह्नि नामकरणं पुत्रेण कारितवान् । स्वचिंतितलाभेन स्वस्येष्टो गणेशः तन्नाम्ना च चिंतामणिम् उच्चगतो ज्ञो बुधो यस्य तस्माद्धेतोः शास्त्रिणं नाम्नाकारयत् । चिंतामणिशास्त्रिणमिति लिंगभेदेपि नामविशेषणम् ॥ ४९ ॥ विरक्तोपि विनायकः किंचित् अंतस्तुष्टोऽभव

अतः सदानंदपयोधिमग्नाद्विनायकाद्गर्भमनिंद्यकाले ॥ दधार गंगाप्यनलादिव प्राक् साक्षाच्छिवांशं गणनाथतोषम् ॥ ४७ ॥ इंदौ बुधे स्वोच्चगतेथ धिष्ण्ये ब्राह्मे सुलग्ने शुभखेटदृष्टे ॥ देवी शुभांकं सुषुवे सुतं हि गुरुर्यथाचिंतयदंतरासीत् ॥ ४८ ॥ पौत्रस्य जातं स सुतेन जन्मन्यकारयन्नाम तदुक्तघस्रे ॥ चिंतामणिं चिंतितलब्धितोपि स्वेष्टाख्यया शास्त्रिणमुच्चगज्ञात् ॥ ४९ ॥ कृष्णांबिका बालमहोभिरेनं विवर्द्धमानं हि सदा स्मितास्यम् ॥ पश्यंत्यभूत्तुष्टमनाश्च गंगा तथा विनेतापि विरक्त ईषत् ॥ ५० ॥ विद्वद्द्विजार्यौ शिवरामभट्टौ यौ संगमक्षेत्रमनालिसंस्थौ ॥ आद्यः शिवार्चाभिरतो हि नित्यं स्वकर्मकृत्सर्वशिवव्रताढ्यः ॥ ५१ ॥ अन्योऽन्वहं संगत्र आप्लुतोभूत्संध्यापरो ब्रह्म सहस्रसंख्यम् ॥ जपत्यपि श्रीयुतदक्षिणादिं चाधीत्य देवर्षिपितॄन्प्रतर्प्य ॥ ५२ ॥

दित्यर्थः ॥ ५० ॥ तदा तत्र भालक्यां द्विजार्यावासतुः । तयोर्वृत्तांतमाह । विद्वद्द्विजार्यावित्यादिसप्तदशभिः । विद्वांसौ च तौ द्विजश्रेष्ठौ च शिवरामभट्टेति एकनामानौ यौ संगमक्षेत्रमनालिखेटकस्थौ भालक्यामासतुरिति शेषः । आद्यः संगमवासी शिवरामभट्टः नित्यं शिवार्चातत्परः स्वकर्मकर्ता सर्वशिवव्रतकारी आसीत् ॥ ५१ ॥ अन्यः मनालिस्थः शिवरामभट्टः प्रत्यहं संगवकाले स्नातोभवत् । ततः संध्यापरः सन् सहस्रसंख्यं ब्रह्म गायत्रीमंत्रं जपति । ततः श्रीयुक्तं दक्षिणादिं श्रीविद्यामंत्रं दक्षिणामूर्तिमंत्रं च सहस्रं सहस्रं जपति । अथाधीत्य ब्रह्मयज्ञं कृत्वा देवर्षिपितॄंश्च तर्प्य गणेशशंभ्वोः प्रत्येकम्

अष्टोत्तरशतं पार्थिवान्यर्च्य पूजयित्वा तयोर्मंत्रौ जपतीति परान्वयि ॥ ५२ ॥ अथ सायंसंध्यां कृत्वा अश्नाति । स इत्यध्याहारः । अस्य वाक् सदा श्रीनिवासमवदत् । वाचा श्रीनिवासनामानि सदा वदतीत्यर्थः ॥५३॥ पंचायतनोपासकत्वं तस्याह । कृत्वेति । गणेशशिवयोरैलपूजां पार्थिवपूजां कृत्वा देवीं देवीमंत्रं चकारात् गणेशशिवयोः मंत्रं च जप्त्वा अर्कनतीः सूर्यनमस्कारान् करोति । वित् पंडितः सः वाचा श्रीनिवासनामानं विष्णुं वदति हि । यतः अद्वैतनिष्ठः अभेदेनोपासक इत्यर्थः ॥५४॥ तेन शिवरामेण सगुणा आत्ता गृहीता मूर्तिर्येन स श्रीनिवासः सदा स्वाग्रभागे एवावलोक्यते । अद्वेषिणः तस्य भक्तस्य द्वेष्टृन् द्वेषकर्तृन् पीडयति स्म । श्रीनिवास इत्युभयान्वयि । यतः स्वनतानां स्वभक्तानाम् अभिमानो यस्य भक्तपक्षपातीत्यर्थः ॥ ५५ ॥

गणेशशंभ्वोरपि पार्थिवानि योष्टोच्छतं चार्च्य तदीयमंत्रौ ॥ जपत्यथाश्नाति विधाय संध्यां वाक् श्रीनिवासं त्ववदत्सदास्य॥५३॥ कृत्वैलपूजां गणपेशयोर्हि देवीं च जप्त्वार्कनतीः करोति ॥ विच्छ्रीनिवासं वदति स्ववाचा ह्यद्वैतनिष्ठः शिवरामभट्टः ॥५४॥ सदेक्षते स्वाग्रत एव तेनात्ता श्रीनिवासः सगुणात्तमूर्तिः ॥ द्वेष्टॄन्द्रुतं पीडयति स्म तस्य ह्यद्वेषिणोप्यात्मनताभिमानः ॥ ५५ ॥ जमंकितः कश्चिदथो विनिंदन्मृताङ्गना तस्य रमेशकोपात् ॥ लघ्वात्मजोऽगाच्छरणं स भट्टं प्रापाश्रयं बालसुदं तदुक्त्या ॥ ५६ ॥ इत्यात सिद्धिः शिवरामभट्टो मनालिगः संगमगो गुरुश्च॥गणेश एकत्र कदाचिदासुर्मनालिगः संगमगं तदाह ॥ ५७ ॥ मनालिगशिवराम उवाच ॥ अहर्निशं कर्म सकाममेव तवानृतं पोषितुमेव देहम् ॥ पुष्टोर्थभोगैः स किमक्षयो वा गांधर्वपूः सूर्यकरैर्निबद्धा ॥ ५८ ॥

अंकितः मुद्राधारी कश्चित्तं शिवरामभट्टं निंदितवान् । तस्य स्त्री श्रीपतिकोपेन मरणं प्राप्ता । तदा लघवः अत्यल्पाः आत्मजाः यस्य स मुद्रांकितः शिवरामभट्टं शरणमगात्ततः तदुक्त्या शिवरामवचनेन सः अन्नादिना बालसंतोषकरम् आश्रयं प्राप्तवान् । एवं मनालिस्थशिवरामभट्टस्य स्थितिरि त्यर्थः ॥ ५६ ॥ संगमगः पूर्वोक्तः गणेशो गुरुश्च एते कदाचिदेकत्र स्थिता आसुः । तदा मनालिशिवरामः संगमशिवराममाह ॥ ५७ ॥ अनृतं देहं पोषितुम् अहर्निशं तव कर्म सकाममेवास्ति । अथ भोगैः पुष्टोपि देहः सः अक्षयो भवति ।किं नैवाक्षयो भवति । वा इत्यव्ययमिवार्थे । यथा सूर्यकिरणै

निवद्धा गंधर्वपूः गंधर्वनगरम् अक्षयं भवति किं किं तु सक्षयैव । तद्वदित्यर्थः ॥५८॥ संगमगः शिवरामभट्टः इति श्रुत्वा कोपेन तं अवदत् । त्वमेव पृथिव्यां महान् सर्वज्ञोसि । यद्यस्मात् मम सर्वकर्म सकाममिति वेत्सि । ललनासमीपगतोपि तनोर्मृषात्वं च जानासि । स्त्रीलोलुपस्य तव देहे मृषात्वनिश्चयः मत्कर्मणः अपेक्षया त्वज्ज्ञानं च वृथेत्यर्थः ॥ ५९ ॥ अपक्षः पक्षपातरहितः ॥ ६० ॥ तत्कर्म किं सकाममस्ति अथवा निष्काममस्ति इति मया न ज्ञायते । यत् यतः इदं द्वयमसत्यमस्ति । असत्यत्वमेवाह । पुत्रिकाणां लघुकन्यानां खेलनसमानं सकामं कर्म अकामं निष्कामं स्वप्नोपमं इति आर्याः श्रेष्ठा आहुः ।

श्रुत्वावदत्संगमगो रुषा तं महांस्त्वमेवास्यखिलज्ञ उर्व्याम् ॥ यत्कर्म मे वेत्स्यखिलं सकामं तनोर्मृषात्वं ललनांकगश्च ॥ ५९ ॥ विवादिनावित्थमिमौ गणेशं पप्रच्छतुः स्वस्ववचश्च सत्यम् ॥ नास्त्यस्ति वेत्थं हि मुहुर्वदंतावथाब्रवीद्देशिकराडपक्षः ॥६०॥ श्रीगुरुगणेश उवाच ॥ किं तत्सकामं किमथास्त्यकामं न ज्ञायते सत्यमिदं द्वयं च ॥ यत्पुत्रिकाखेलसमं सकामं स्वप्नोपमं प्राहुरकाममार्याः ॥ ६१ ॥ मयूरेश्वर उवाच ॥ श्रुत्वेति तौ कर्म मृषैव मत्वाऽशंकौ स्थितिं जग्मतुरानतौ तम् ॥ अनेकशिष्योपि मनालि भट्टो गणेशगेहेर्थयति प्रसादम् ॥ ६२ ॥ कृष्णांबिकामंत्रयतीममेव पूर्णादितिथ्यां निशि चैति सोपि ॥ भुक्तौ बिलंबान्मुदितोल्पबालं चिंतामणिं खेलयति स्मितास्यम् ॥ ६३ ॥ स्थित्वोर्ध्वजानुर्ह्युदरांघ्रिमर्भं धृत्वा कराभ्यां च दृशा चलंत्या ॥ अभीक्ष्णदृष्टिस्त्वनुदोलितांगः स श्रीनिवासं वदति स्म भूयः ॥ ६४ ॥ सिद्धस्य तस्यामृतवर्षिणी दृक् चाक्षिण्यतोर्भस्य किलाप्तदीप्ते ॥ चेद्बालको गाढतमस्थितोपि तदक्षिणी व्याघ्रदृशाविव स्तः ॥ ६५ ॥

" स्वसुखायात्मयेऽज्ञैर्हि सकामा क्रियते क्रिया । हृद्विरामाय बालाभिः पुत्रकोद्वाहनं यथा । ज्ञानिभिः कर्म चानीहं वर्णाश्रमपथागतम् । मन्यतेऽजोऽखिलैः स्वप्नं यथांतस्थं श्रुतेक्षितम् " । इति । साभिनिवेशं कर्म सकामं यादृच्छिकं कर्म निष्काममित्यार्यवचनमस्ति मृषात्वात् । मया तु न किमपि ज्ञायते इत्यर्थः ॥ ॥६१॥ प्रसादं लब्धुमिति शेषः।उप०॥६२॥ आमंत्रयति । भोजनार्थमिति शेषः । भोजने विलंबाद्धेतोरल्पबालं हास्यमुखं चिंतामणिं मुदितः सन् खेलयति । ॥ ६३ ॥ ६४ ॥ सिद्धस्य तस्यामृतवर्षिणी दृक् दृष्टिः आसीत् । अतो हेतोः बालकस्याक्षिणी आप्ता प्राप्ता दीप्तिः प्रकाशो ययोस्ते अविदीप्ते आस्ताम्

रिति शेषः ॥ ६५ ॥ स्थितिं गृहं गतोपि अंबिकया कृष्णया कर्त्र्या विनेत्रा करणभूतेन विरुद्गतक्रोधः सन् भोक्तुमेति ॥ ६६ ॥ सेतुं मर्यादाम् । हि यतः ईदृक्सतः एतादृशसाधोरन्नं बहुपुण्येन लभ्यं भवति । अतः तेन मर्यादारहितभाषणे कृतेपि अवश्यं तद्गृहे मया भोक्तव्यमित्यर्थः ॥ ६७ ॥ एवं शिवरामभट्टवृत्तांतमुक्त्वा बाल्यतः देशिकेंद्रचरित्रमाह । अपूर्णवर्ष इति । अंघ्रिगतिः पादचारी । पितामहो गणेशः । धातुगणैः सह शब्दान् ॥ ६८ ॥ त्रिकेण

क्वचिद्विलंबे सति वल्गतेऽसौ निर्भर्त्सितोऽथो गुरुणातिकोपी ॥ स्थितिं गतश्चांबिकया विनेत्राऽऽहूतः पुनश्चैतिविरुद्धि भोक्तुम्॥६६॥
उल्लंघ्य सेतुं हि भवादृशां यो ब्रूतेस्य गेहं न च गम्यतां वै ॥ उक्तः स शिष्यैरिति तानवोचद्धीदृक्सतोन्नं बहुपुण्यलभ्यम् ॥ ६७ ॥
श्रीमयूरेश्वर उवाच॥अपूर्णवर्षोणुरदः स बालः स्पष्टं बभाषेंघ्रिगतिः स्मितास्यः॥द्वितीयवर्षेथ पितामहोमुं चापाठयद्धातुभिरार्यशब्दान्
॥६८॥आद्यद्वितीयोत्तमपूरुषैश्च क्रियाः पृथक् सोकथयत्रिकेण ॥ मासैस्त्रिभिश्चाथ हि पंचमाब्दं प्राप्तं सुबुद्धेः किल तस्य गर्भात्॥६९॥
तदा गणेशो गुरुराह चांतः कार्यास्य मौंजी सुमतेः सुदिष्टे ॥ पितास्पृहोहं च गतायुरग्रे कथं सुतस्यैष हि कार्यकर्ता ॥ ७० ॥ इत्थं
धियाकारयदर्भकस्य मौंजीं हि सावित्र्युदिता विनेत्रा ॥ तदर्थ उक्तो गुरुणैव रात्रौ बटुर्यथैषोल्पवयाश्च वेत्ति ॥ ७१ ॥ कृष्णांबिकाथा
त्मगतिं गतास्याश्चाकार यद्दिव्यगतिं सुताभ्याम् ॥ अष्टादशाहं च निजायुरुक्त्वा संन्यासदीक्षां जगृहे गणेशः ॥ ७२ ॥ चिंनाम
णिर्जन्मन एव शास्त्री मयोदितोमुं कुरु शास्त्रिणं त्वम् ॥ आख्याहि विद्याः परतः स्त्वतोस्मै गुरूक्तमित्योमवदद्विनेता ॥ ७३ ॥

त्रिवर्षेण । त्रिभिर्मासैरागामिभिः गर्भात्पंचमवर्षं प्राप्तम् । यदेति शेषः ॥ ६९ ॥ सुदिष्टे सुकाले । अस्य पिता विनायको निस्पृहोस्ति अहं च गतायुरस्मि । एष विनायकः अग्रे सुतस्य कार्यकर्ता मौंजीबंधकर्ता कथं भविष्यति ॥ ७० ॥ तदर्थः गायत्र्यर्थः रात्रावुक्तः । बालस्य क्रीडासक्तत्वादित्यर्थः ॥७१॥ सुताभ्यां भालचंद्रविनायकाभ्याम् ॥ ७२ ॥ जन्मनः सकाशादिति गुरूक्तं गणेशवचनं प्रति विनायकः ओम् अवदत् अंगीकृतवानित्यर्थः ॥ ७३ ॥

भाद्रपदशुक्लद्वादश्यां स्वधाम प्राप्तः । संस्था समाधिः ॥ ७४ ॥ अस्य चिंतामणेः मातुर्बंधुः मातुलः यथार्थलब्ध्या यथासंभवद्रव्यलाभेन भगिन्याः कृष्णायाः प्रेम्णा युक्तः ॥ ७५ ॥ बंधुनाऽगदि उक्ता । अत्र भालक्ष्यां पुत्रयुक्तः तव पतिः विनायकः स्थास्यति यदि तर्हि अन्यां कन्यां दास्यामि ॥ ॥ ७६ ॥ अंतः मनसि सा आज्ञा कार्या मया कर्तव्या । अस्मै पुत्राय यथाऽऽत्मविषया विद्याः अधिगताः प्राप्ताः भविष्यंती तिशेषः ॥७७॥ इत्थंधिया पित्रा विनायकेन एषः चपलबालकश्चिंतामणिः रहसि आहूतः । अथ कस्त्वमसीति यथार्थं विचार्य मे मां प्रति शीघ्रं वदेति च पित्रोदितः उक्तः । किं

अंतर्बहिः स्वीयमुपास्यमीक्षन् गुरुर्गणेशो निजमाप धाम ॥ हरेस्तिथौ भाद्रपदाद्यपक्षेभूद्भालकीयोपघनेस्य संस्था ॥ ७४ ॥ ज्ञात्वा सुबुद्धं शिशुमस्य मातुर्बंधुर्ददौ स्वीयसुतां च तस्मै ॥ भ्राज्ञाद्विवाहाद्धि यथार्थलब्ध्या वस्त्रादिना प्रेमयुतो भगिन्याः ॥ ७५ ॥ दैवा त्स्नुषां वीक्ष्य मृतां हि लघ्वीं गंगा शुचाव्यागदि बंधुनाथ॥दास्येव चिंतामणयेऽन्यकन्यां चेत्ते पतिः स्थास्यति सात्मजोत्र ॥७६॥ विनायकोंतः क्वचिदाह विद्या पुत्राय वाच्येति गुरूदिताज्ञा॥कार्यात्मविद्यामुपदिश्य चास्मै यथाखिलाश्चाधिगताः सुविद्याः ॥७७॥ श्रीमयूरेश्वर उवाच ॥ इत्थंधिया चपलबालक ईषदेव स्थित्यामनीश उदितं तु पठंश्च खेलन् ॥ आहूत एष रहसीत्युदितोथ पित्रा त्वं कोऽसि मे वद विचार्य यथार्थमाशु ॥७८॥ श्रुत्वाह बाल इति हृत्कृतहस्तकोऽहं चिंतामणिः पितरमुं त्ववदत्पिताथ ॥ वक्षः करात्स्पृशसि यं कथयंश्च वाचा चिंतामणिं क इह हृत्करवाक्सु सोऽत्र ॥ ७९ ॥

भूतः ईषत् किंचित्कालं स्थित्यामेकत्र निवासे अनीशोऽसमर्थ एव चपलत्वादित्यर्थः ॥ गुरूदितं गुरूक्तं शब्दादि तु पठन् खेलन् क्रीडां कुर्वंश्च । एतादृश मपि पुत्रं रहस्याहूय विनायकः त्वं कोसीति यथार्थं कथयेति प्रश्नं कृतवानित्यर्थः ॥ ७८ ॥ इति श्रुत्वा हृदि कृतः हस्तो येन स बालः पितरमाह । हे पितरहं चिंतामणिरस्मि । अथामुं पितावदत् । वाचा यं चिंतामणिं कथयन् करेण वक्षः स्पृशसि । स चिंतामणिः अत्रैषु हृदयहस्तवाणीषु कोस्ति ।

चिंतामणिशब्दवाच्यं हृदयं वा हस्तो वाणी वास्तीति कथयेत्यर्थः ॥ ७९ ॥ ८० ॥ द्युनद्या अंबुना द्युनदीं अर्चयति वा अभिषिंचतीव । अत्रेवार्थे वा शब्दः । तत्कृपया तं प्राह । हे गुरो हस्तो निदर्शकः मम स्थानसूचकोस्ति । उरः हृदयं मम स्फुरणस्थानमस्ति । वाक् आख्यात्रिका मम वाचिकास्तिा किल निश्चयेनाहं सर्वेभ्योऽन्यः भिन्नोऽस्मि ॥८१॥ एवं देहादिभ्योपि भिन्नोस्मीत्याह। नैवेति । अहं देहो नैवास्मि । इह देहे यानींद्रियाणि तान्यपि अहं न ह्यस्मि । अंतः स्फुरच्चतुष्कं अंतःकरणचतुष्टयं नास्मि किल । अथासवः प्राणाः अपि नाहमस्मि।अपि शब्दात् नञः सर्वत्र संबंधः।किं च सर्वं जडं परप्रकाश

श्रुत्वेत्यभूत्स चकितोण्वपि नाब्रवीत्तं स्पृष्ट्वा करेण शिरसीत्यवदत्पिताथ ॥ आकृष्य चित्तमधुना क्षणमेव खेलात् सत्यं विमृश्य वद भीर्न तवाणु मत्तः ॥ ८० ॥ पंचाब्दकोपि किल तत्कृपया शिशुस्तं प्राहांबुनार्चयति वा द्युनदीं द्युनद्याः ॥ हस्तो निदर्शक उरः स्फुरणस्थलं वाक् चाख्यात्रिका मम किलाखिलतोऽहमन्यः ॥ ८१ ॥ नैवास्मि देह इह यान्यपि हींद्रियाणि नांतः स्फुरत्किल चतुष्कमथासवोपि ॥ सर्वं जडं परविकासमहं चिदात्मा द्रष्टापि तस्य सुखदुःखमुखैरलितः ॥ ८२ ॥ श्रुत्वार्भवाक्यमिति तं मुदितो विनेंताऽऽहेदं स्मरिष्यसि सदा यदि चात्मदीप्त्या ॥ देवस्त्वमेव भवितासि यथा विपक्षः कीटोपि विस्मृततनुर्हि सपक्षभृंगः ॥ ८३ ॥ मयूरेश्वर उवाच ॥ गंगाविनायकसुहृत्स्वगृहं कदाचित्साकं सुतेन जयसिंहपुरं निनाय ॥ तौ सद्विवाहमवलोकयितुं त्रिहाष्टघस्रं स्थितौ सुतयुतौ सुहृदः प्रियाय ॥ ८४ ॥ नैवाऽवसत्क्षणमपि स्थल उच्चभित्तौ याति त्यजन् पतनभीतिमथोरुवापीम् ॥ कूपं तथापि तटगः प्रतिबिंबमीक्षन् चिंतामणिर्वदति तद्बहुवाच उच्चैः ॥ ८५ ॥ आनीत एष सुहृदा पुनरेत्य याति भीत्याहुरेत्य पितरा विति चाखिलाप्ताः ॥ भित्तेः पतिष्यति शिशुर्युवयोर्हि वाप्यां कूपेऽमितांभसि च वात्र विलोमकर्ता ॥ ८६ ॥

मस्ति । अहं चिदात्मा स्वप्रकाशः तस्य सर्वस्य द्रष्टा साक्षी सुखदुःखैरलितोस्मि॥८२॥इदमात्मनः सर्वसाक्षित्वेन देहादिभिन्नत्वं आत्मदीप्त्या आत्मप्रकाशेन त्वं यदि सदा स्मरिष्यसि भिन्नत्वेन पश्यसि । तर्हि त्वं देव एव भविष्यसि । यथा पक्षरहितः कीटो विस्मृतपूर्वतनुः सन् सपक्षो भृंगो भवति । तद्वदित्यर्थः॥ ॥ ८३ ॥ गंगाविनायकयोः सुहृदाप्तः । इह जयसिंहपुरे ॥ ८४ ॥ तत् प्रतिबिंबं उच्चैः बहुवाचो वदति ॥ ८५ ॥ यदि पतिष्यति तर्हि अत्र विवाहे

विलोमकर्ता विपरीतकर्ता भविष्यति । अनर्थकर्ता भविष्यतीत्यर्थः ॥ ८६ ॥ तान् आप्तान् चित्रं यथा स्यात्तथा इति वक्ष्यमाणमवदत् ॥ ८७ ॥ यद्यपि मम देहो बद्धः तथाप्यहं मुक्तोस्मि । यथा घटगतार्कस्य सत्प्रतिकृतिः प्रतिबिंबं बद्धमपि स आकाशस्थः सूर्यो घटाद्भिन्नः तथाहमपि देहाद्भिन्नोस्मि । यतः सर्वगतः स्वतेजाः स्वप्रकाशः । अथ ते आप्ताः पितृवाक्यं श्रुत्वाऽस्येयमुक्तिरस्तीत्याहुः । अद्वैतनिष्ठस्य पुत्रोऽद्वैतनिष्ठ एव भवतीत्यर्थः ॥ ८८ ॥

तानब्रवीद्गुरुरिति प्रसभं हि रज्ज्वाऽयं बध्यतां बहिरितो न यथा व्रजेद्वै ॥ श्रुत्वेति तैरपि स बद्ध उताहसंस्तांश्चितामणिः शिशुरपी त्यवदद्धि चित्रम् ॥ ८७ ॥ बद्धा तनुर्मम तथाप्यहमस्मि मुक्तोर्कस्येव सत्प्रतिकृतिर्घटगा स खस्थः ॥ भिन्नस्तथास्मि तनुतोऽखिलगः स्वतेजास्तेथाहुरुक्तिरिति तातवचो निशम्य ॥ ८८ ॥ मुक्तः क्षणाच्छिशुरथोपयमोर्ध्वमेत्य सस्त्रीसुतः स्वगृहमाह हृदा विनेता ॥ त्वं शास्त्रिणं कुरु सुतं गुरुरित्यवोचत्प्राप्तात्मविद्य उत नैव भवेद्धि शास्त्री ॥ ८९ ॥ नंदीतटेऽस्ति किल वेंकटशास्त्रिसंज्ञः ख्यातः स पुण्यनगरे शिशुरेष तस्मात् ॥ अध्यापनीय इति सात्मजयोषिदाप गोदां हि सिद्धमुखनाथपुरीसमीपे ॥ ९० ॥ वैरागिणो मठ इहास समीपगोदोऽनाच्छादितोह्युपरि केवलभित्तिसंस्थः ॥ तत्र स्थितः स कृषिकैर्यवनैर्निरस्तो ग्रामाद्बहिर्न्यवसदत्र सुतस्त्रिया ढ्यः ॥ ९१ ॥ प्रातः परेहि गुरुराह सुतं पुरांतश्चितामणे प्रथितवेंकटशास्त्रिगेहम् ॥ गत्वा पठात्र वरशास्त्रमटन्नगर्यां स्वस्योदरस्य परिपूर्तिकरान्नलब्ध्यै ॥ ९२ ॥

योयं मत्पुत्रः प्राप्तात्मविद्यो यद्यपि उत पुनस्तथापि सः शास्त्री नैव भवेत् हि ॥ ८९ ॥ सात्मजयोषित् पुत्रस्त्रीसहितः गोदां प्राप । तत्रापि सिद्धनाथपुरी समीपे प्राप्तः ॥ ९० ॥ इह सिद्धनाथपुर्यां समीपं गोदा यस्मादुपर्यनाच्छादितः आच्छादनरहितः केवलं भित्तिभिः संस्था स्थितिर्यस्य एतादृशः विरागिमठ आसीत् । तत्र स्थितो विरागी कृषिकैः यवनैर्निरस्तोभवत् । अत्र मठे ग्रामाद्बहिः सुतस्त्रियाढ्यः स्त्रीपुत्रयुक्तो विनायक उवास ॥ ९१ ॥ पुरांतः ग्राममध्ये

स्वकीयोदरस्य पूर्तिकरं यदन्नं तत्प्राप्त्यै नगर्यामटन्पठ ॥९२॥ लघुः अल्पवयाः महतोपि शिष्यान् प्रति शब्दादीनि अपृच्छत् ॥ ९३ ॥ इति शाला
वलोकनक्रमेण स सच्छास्त्रकाव्यैः पठनम् अध्ययनं येषां तैः बालकैः युक्तं तं वेंकटशास्त्रिणं युष्मत्सकाशादध्ययनं कर्तुं गुरुणा पित्रा प्रेषितोस्मि इत्यब्र
वीत् ॥ ९४ ॥ एषः वेंकटशास्त्री कस्मै चित् शिष्यायात्मपरपादैः आत्मनेपदपरस्मैपदभेदैः लकारभेदान् पाठार्थे स्थितं शिष्यं प्रति पृच्छंतं तं बालम
पश्यत् । स पाठस्थितो महानपि एतद्बालोक्तं शब्दादि न वेत्ति न ज्ञातवान् ॥ ९५ ॥ स शास्त्री ग्रीवया ग्रीवासंकेतेन वरमित्यवोचत् । अथ सः चिंता

श्रुत्वेति तत्पुरगताः पृथुकाव्यशालाः पश्यन्नपृच्छदलघून्स लघुः सुशब्दान् ॥ धातुत्रिपूरुषलकारपदानि वीक्ष्यार्भस्येति बुद्धिम
खिलाश्च सविस्मयाः स्युः ॥ ९३ ॥ प्राप्तः शिशुः स इति वेंकटशास्त्रिगेहं सच्छास्त्रकाव्यपठनैर्युतमार्यबालैः ॥ नत्वाऽब्रवीदिति
तमेव पुरोस्य तिष्ठन् संप्रेषितोस्मि गुरुणाध्ययनाय युष्मत् ॥ ९४ ॥ कस्मै चिदेव कथयन्हि किरातपाठं चापश्यदर्भमिममग्रगतं
सुकांतम् ॥ पृच्छंतमात्मपरपादलकारभेदान्पाठस्थितं स च महानपि वेत्ति नैतत् ॥ ९५ ॥ ज्ञात्वाल्पमप्यतिसुबुद्धशिशुं स
शास्त्री तं ग्रीवया वरमवोचदथो रघोः सः ॥ संयाच्य पुस्तकमिहैव च पंचमस्य सर्गस्य पाठमवदत्स्मृतिकृद्विनेतुः ॥ ९६ ॥ तत्राद्य
पद्यकथितानि शिशुः पदानि लिंगक्रियावचनभेदयुतान्वयं च ॥ चिंतामणिः सकलमाह गुरुस्तदर्थं चेत्यब्रवीन्निकटगान्विदलौ
किकोर्भः ॥९७॥ गत्वा गुरुं सकलवृत्तमवोचदेष गोदाप्लुतिर्द्विजगृहाटनलब्धभैक्ष्यम् ॥ चिंतामणिः स बुभुजेंबिकयाथ नाथो वार्येव
नित्यमपिबत्स्वसुखैकनिष्ठः ॥ ९८ ॥

मणिः विनेतुः गणेशस्य स्मृतिकृत् स्मरणकर्ता गणपतिं स्मरन्नित्यर्थः ॥ ९६ ॥ तत्र पंचमसर्गे आद्यपद्यकथितानि पदानि लिंगक्रियावचनभेदेन युक्तम
न्वयं च सर्वं चिंतामणिः प्राह । गुरुस्तु तस्यार्थं प्राह । च पुनः वित् वेंकटशास्त्री अयमर्भकः अलौकिकोस्तीति समीपगतान् शिष्यान् प्राह ॥ ९७ ॥
गुरुं पितरम् । गोदायामाप्लुतिः स्नानं यस्य कृतस्नान इति यावत् । द्विजगृहेष्वटनेन लब्धं भैक्ष्यं भिक्षान्नं सः मात्रा सह बुभुजे । नाथः शुकानंदस्तु

वारि उदकमेव नित्यं प्राशितवान् । यतः आत्मसुखैकतृप्तः ॥ ९८ ॥ अदः इदं नवीनपद्यं विलोक्य स पुनः शालां व्रजति जगाम । एवं सर्वत्र भूतार्थे वर्तमाननिर्देशो हि अतीतानागतवदर्थमात्रस्य ब्रह्मविदनुभवे सद्यः सिद्धत्वादुपपद्यते इत्यर्थः ॥ ९९ ॥ तस्य पितुः करेण लालनं यस्य स पितुरंके उत्संगे स्वपिति । माता च धरायां ऊर्ध्वं च विधृतः श्वेतकंबलो यया सा स्वपिति । ज्येष्ठमासे जलेऽल्पं वर्षति सति एषः शुकानंदयोगी धृतिमान् सन् इहैवाना च्छादितगृहे तस्थौ । यतः समे शीतोष्णे यस्य सः ॥ १०० ॥ अथ कदाचिद्रात्रिगतं वृत्तांतमाह । मातापुरादिति द्वाभ्याम् । कदाचित् मातापुरस्थो

शालां पुनर्व्रजति पद्यमदो विलोक्य तस्यार्थमाकलयति क्षणमेव पश्यन् ॥ शालाः पुरे भ्रमति काव्यगतीः स शृण्वन् कौपीनवानपि स पृच्छति धातुमार्थान् ॥ ९९ ॥ अंके पितुः स्वपिति तत्करलालनोऽभौ माता धरोर्ध्वविधृतामलकंबला च ॥ ज्येष्ठेऽणु वर्षति जले निशि चैष योगी तस्थाविहैव धृतिमान् समशीतलोष्णः ॥ १०० ॥ मातापुरान्नृपतिरागत आढ्यसेनो गोदावरीं हरिगुरावत्र वसत्पुरांके ॥ तस्याहृतो वरहयो निशि तस्करैस्तं चान्वेषयंत्यसिधराः सहरं हि धर्तुम् ॥ १०१ ॥ गाढे भ्रमंत्यपि तमस्युरुदीपतस्ते द्राग्धार्यतां हयमुडित्थमनेकशब्दैः ॥ ज्ञातास्तदेत्थमुदितं गुरुणांबिकायै स्मः श्लेष्मणा रटसि चेत्सकलाश्च चौराः ॥ १०२ ॥ प्रातर्गुरुं कथितवान्स निशीति जातं चिंतामणिस्तदथ निशम्य तमाह शास्त्री ॥ प्रावृष्यनावृतगृहे ह्यवसत्पिता तेऽनीहस्तनावपि किमेष विलोकनीयः ॥ १०३ ॥ शास्त्री ततः प्रथितशिष्ययुतः स्वशिष्यैर्गोदातटे समगमत्किल भित्तिगेहम् ॥ अंतर्गुरुं स च विलोक्य धरांगतार्के विस्मृत्य विद्वदभिमानमिमं ननाम ॥ १०४ ॥

राजा सेनया युक्तः सन् सिंहस्थे गुरौ गोदावरीं समगमत् । पुरसमीपे चावसत् । तस्योत्तमाश्वस्तस्करैः निशि आहृतः । तदा शस्त्रधारिणो राजदूताः सहरं चोरसहितं तमश्वं धर्तुमन्वेषयंति ॥ १०१ ॥ गाढे तमस्यपि ते महादीपैः सह भ्रमंति यदा । तदा हयं मुष्णातीति स चोरः सर्वैः शीघ्रं धार्यतां इत्थमने कशब्दैस्ते गुरुणा अंबिकायै स्वपत्न्यै च इत्थमुदितं कथितम् । इत्थं किं तदाह स्म इति । त्वं श्लेष्मणा रटसि शब्दं करोषि चेत् सर्वेपि वयं चोराःस्म भविष्याम इति अतः शब्दं मा कुरुष्वेत्यर्थः ॥ १०२ ॥ देहेपि निस्पृह एषोस्माभिरवलोकनीयः ॥ १०३ ॥ ततः प्रख्यातशिष्यैः युक्तो वेंकटशास्त्री

स्वशिष्यैः सह गोदातटे भित्तिमात्रं गृहं शुकानंदस्थानं प्राप्तः धरायां प्राप्तं सूर्यमिवेमं शुकानंदं निरभिमानः सन् ननाम॥ १०४ ॥अयाचितं तन्नामानं सः वेंकटशास्त्री । जलमात्रपानेनानयोः सप्तदिनानि व्यतीयुः । तथाप्युभयोर्मुखे आनंद एवास्ति हि । यतः यो देहादि मृषा पश्यति स तद्वः देहगतोपि सुखी भवति॥ ५॥साधुचरणयोः भक्तौ रतः यः बालः बालाजीपंताख्यः तस्य गृहान्निन्युः।गृहशब्दस्य पुंस्त्वे बहुवचनत्वम्। "गृहाः पुंसि च भूम्न्येवेत्यमरः" । नाथो गुरुः स्वपर्थं पत्न्याः निर्वाहार्थं धान्यभिक्षार्थं ग्रामे सप्तगृहाण्यटति । स्वयंचाप्ययाचितगृहेऽश्नाति । पुत्रो भिक्षामार्द्रभिक्षां याचित्वा भक्षयति । एवं

प्राहेत्ययाचितमथो स दिनानि सप्ताऽत्रैव व्यतीयुरनयोर्जलमात्रपानात् ॥ आनंद एव वदनेस्त्युभयोस्तथापि देहादि पश्यति मृषा स सुखी च तद्वः ॥ ५ ॥ संप्रार्थ्य वित्प्रभृतयः सकलत्रनाथं साध्वंघ्रिभक्तिरतबालगृहान्हि निन्युः॥स्वर्थं पुरे ह्यटति सप्तगृहाणि नाथ श्चाश्नात्ययाचितगृहे तनयोत्ति भिक्षाम् ॥ ६ ॥ पद्यैस्त्रयोदशमितैर्दिवसैः स दृष्टं पद्यं स्वयं ह्यवददुक्तपदार्थलिंगम् ॥ अभ्यस्तकाव्य मिह वीक्ष्य च पांडुरंगं तेनारभद्गुरुरमुष्य च तर्कशास्त्रम्॥७॥चिंतामणिस्त्वधिकधीरपि तेन साकं पंचाब्दतोखिलगदाधरवृत्तिमाप ॥ शास्त्री ययावथ बुधाब्दिकदक्षिणार्थं चिंतामणिप्रमुखतो नृपधाम पुण्यम् ॥८॥ मार्गे क्वचित्पुरवरे नृपशाहुदेशे राज्ञोधिकार्यर्थ सदग्रज निर्हि सुज्ञः ॥ तेनांजसाऽध्वगविदामभवद्धि शिष्यैः संगोट्टकार्यगतिभिश्चतुरट्टभूम्याम् ॥ ९ ॥

कालातिक्रमणमासीदित्यर्थः ॥ ६ ॥ त्रयोदशदिवसैः अधीतपद्यैः तावन्मात्रेण स चिंतामणिः यत् दृष्टं पद्यं तदुक्तं यथोक्तं पदार्थलिंगं यस्मिन् यथा भवति तथा स्वयं नैरपेक्ष्येणावदत् हि । इह नंदीतटे अभ्यस्तकाव्यं पांडुरंगाख्यं दृष्ट्वा तेन सह अमुष्य चिंतामणेः न्यायशास्त्रम् ॥ ७ ॥ अथ वेंकटशास्त्री चिंतामणिप्रमुखतः तदादिशिष्यैः सह बुधानां वार्षिकदक्षिणार्थं पुण्याख्यराजधानीं ययौ ॥ ८ ॥ कदाचिन्मार्गे शाहुराज्ञः देशे नगर श्रेष्ठे शाहुराज्ञः अधिकारी सुज्ञो ब्राह्मणोऽवसत् । तेन सह मार्गगामिनां विदां पंडितानां शिष्यैः अट्टकार्यार्थं गतिर्गमनं येषां तैः सह चतुरट्टभूम्यां अंजसा

संगोऽभवत् ॥ ९ ॥ एषोधिकारी सर्वान् दृष्ट्वा निकटे आह्वयत् । ननाम च । इति प्राह । इति किं चेदित्यादि । इह भवत्सु यः कविः सः अद्य अधुना शाहुराज्ञः आशीर्वादपरं पद्यं वदतु । इत्थमुक्त्याधिकारिवचनेन चिंतामणिस्तत्पद्यं द्रुतमकरोत् ॥ ११० ॥ तदेव पद्यमाह धृतेति । धृताऽनंगगा वियद्गंगा के मस्तके येन सः कृतः अनंगनाशो मदननाशो येन सः प्रचंडाहिभिः शेषादिमहासर्पैः रुंडोत्तमैर्मस्तकश्रेष्ठैश्चालंकृतः शोभितो यः द्विषां शत्रूणां सहस्रं सहस्राणि हरन् नाशयन् सन्स भवः शिवः ते त्वां कर्मणि षष्ठी । अजस्रं निरंतरं भवोपद्रवात्संसारतापात्पायाद्रक्षतु । हे शाहुराजन्निति राज्ञः संबुद्धिः । भुजंगप्रयातवृत्तम् ॥ ११ ॥ इति सार्थं श्रुत्वा सोधिकारी संतुष्टोभवत । उत पुनः श्रेष्ठार्थे द्वे वस्त्रे चिंतामणिहस्तेऽर्पयत । स चिंतामणिः शीघ्रं सन्धार

दृष्ट्वाह्वयन्निकट आनमदेष सर्वांश्चाहेति चेत्कविरिहास्ति भवत्सु सोद्य ॥ आशीःपरं वदतु पद्यमिनस्य शाहोश्चिंतामणिस्तदक रोद्द्रुतमित्थमुक्त्या ॥ ११० ॥ धृतानंगगांकः कृतानंगनाशः प्रचंडाहिरुंडोत्तमालंकृतो यः ॥ हरन्द्विट्सहस्रं स पायादजस्रं भवोपद्रवा च्छाहुराजन् भवस्ते ॥ ११ ॥ श्रुत्वा स सार्थमभवन्मुदितो द्विवस्त्रे चिंतामणेः कर उतार्पयदार्यधार्ये ॥ द्राक्सन्दधन्गुरुमगाच्च खिलाश्च तेषु गोपाल एतदथ सर्वविभागमाह ॥ १२ ॥ आकर्ण्य सर्वमपि तद्गुरुराह वृत्तं चिंतामणिः समकरोदिति सोंशुकेशः ॥ सीतेट् यथा रघुप एव बलात्कुतोऽन्यः शास्त्री ततः सकलयुक् पुरमाप पुण्यम् ॥ १३ ॥ तत्राप्यनेकविषयस्थबुधार्यशिष्या मीमांस काद्वयसुतार्किकशब्दपाठाः ॥ उद्योगिनोधिकवयोत्रपुरंशुकाश्च चिंतामणेर्न तु धिया सदृशोत्र कश्चित् ॥ १४ ॥

यन् गुरुमगात् सर्वे च गुरुमगमन् । तेषु च गोपालाख्यः एतद्वस्त्रयुग्मं सर्वेषां विभागो यस्मिन् तदस्तीत्याह । स एतद्वस्त्रयुग्मं सर्वैः ग्राह्यम् । इत्याह ॥ १२ ॥ चिंतामणिः वृत्तं पद्यं चकार । इति हेतोः स एवांशुकेशः वस्त्रस्वामी भवति । अन्ये बलात्कारेण स्वामिनः कुतो भवंति । यथा राम एव धनुर्भंगेन सीता पतिः अन्ये लक्ष्मणाद्याः न सीतापतयस्तथेत्यर्थः ॥ १३ ॥ तत्र पुण्यनगरे अनेकदेशस्थपंडितश्रेष्ठानां शिष्याः आसुः । अत्रैषु कश्चिदपि चिंतामणे र्धिया सदृशो नासीत । किंभूताः शिष्याः मीमांसाशास्त्रस्याद्वैतशास्त्रस्य सुतर्कशास्त्रस्य शब्दशास्त्रस्य च पाठो येषां ते तथा उद्योगवंतः तथाऽधिकं

१ न संति अंगानि अवयवा यस्य तदनंगमाकाशं तत्र गच्छति सा अनंगगा गंगा के मस्तके यस्येति । शास्त्रेष्वाकाशस्य निरवयवत्वप्रतिपादनात् ।

वयः वपुः वस्त्रादिकं च एषां ते तादृशाः ॥ १४ ॥ अत्र नानाफडणवीस इत्यभिधानः सुबुद्धिः राजमंत्री आसीत् । अस्य पस्त्ये गृहे । ' निशांतपस्त्यसदनम् ' इत्यमरः । सर्वपंडितानां पुरतः सर्वेषां परीक्षाऽऽसीत् । तत्र चिंतामणेः परीक्षा इषुखदा पंचाशन्मुद्राप्रदाऽभवत् । चिंतामणेः प्रतिवर्षं पंचाशन्मुद्रालाभदायिनी परीक्षाभवदित्यर्थः । तां परीक्षां दृष्ट्वा सर्वे पंडिताः बालस्य सुबुद्ध्या निमित्तभूतया मोहं प्राप्ताः ॥ १५॥ कृष्णशास्त्री खंदारराज्ञः गुरुरेनं चिंतामणिं सुबुद्धिमत्त्वेन जामातरं मनसि निश्चितवान् ।कन्यां दातुं निश्चितवान् इत्यर्थः॥ १६ ॥ यः कृष्णशास्त्री व्याकरणशास्त्रे निपुणः पद्यैरपरकौमुदीकर्ता ।

नानाभिधः सुमतिरत्र च राजमंत्री पस्त्येऽस्य चाखिलविदां पुरतः परीक्षा ॥ चिंतामणेरिषुखदा ह्यभवद्विलोक्य तं पंडिताश्च मुमुहुर्हि शिशोः सुबुद्ध्या ॥ १५ ॥ सर्वं परीक्ष्य लघुमप्यतिबुद्धिमंतं चिंतामणिं मिथ उताहुरलौकिकोयम् ॥ खंदारराजगुरुरेनमवेक्ष्य कृष्णो जामातरं मनसि निश्चितवान् सुधीत्वात् ॥ १६ ॥ यः शब्दशास्त्रनिपुणोपरकौमुदीकृत्पद्यैर्हि वर्णयति दृष्टनरं गुणैर्द्राक् ॥ मौहूर्तचंद्रमकरोद्विधिविन्मुदे सोप्यज्ञाततातविषयाय दुहितृदोंतः ॥ १७॥ कृष्णोत्यशक्त इति शीघ्रमथो स शास्त्री पुण्यात्पुरं निजमगादवदच्च पत्नीम् ॥ नंदीतटे वसति वेंकटशास्त्रिशिष्यश्चिंतामणिर्भवतु तद्गृहिणींदुभागा॥१८॥ यास्ये परं त्वहमथो विधिवत्कुरु त्वं चोद्वाहमेष धनवृत्तिगृही न चिंत्यः ॥ उक्त्वेत्ययं दिवमगादथ सा सती च नंदीतटस्थविद आलिखदत्र पत्रम् ॥ १९ ॥

पद्यैरित्युभयान्वयि । यः यंकंचित् दृष्टं नरं स्वकृतपद्यैः शीघ्रं गुणैः सह वर्णयति । यश्च विधिविदां ज्योतिर्विदां संतोषाय मुहूर्तचंद्रं ग्रंथं कृतवान् । सः अज्ञातपितृकाय अज्ञातदेशाय चिंतामणये अंतः मनसा दुहितृदः कन्याप्रदाताऽभवत् । विद्वद्भिः विद्यां विना वराय कन्यां दातुं किमपि नावलोक्यते इत्यर्थः ॥ १७ ॥ इंदुभागा चंद्रभागा कन्या तद्गृहिणी तस्य भार्या भवतु ॥ १८॥ परं परलोकं उद्वाहं कन्याविवाहं एषः जामाताधनवान् वृत्तिमान् गृहवान्वा

अस्ति नास्ति वेति न विचारणीयः । अवश्यं त्वया कन्या दातव्येत्यर्थः ॥ १९ ॥ तदर्थं पत्रार्थम् । शास्त्री वेंकटशास्त्री आप्ता गृहीता गुरोः शुकानंदस्य वाक् येन स खंदारं गंतुं पांडुरंगमवदत् । स च देशिकेंद्रसहाध्यायी कन्यां गुणवतीं दृष्ट्वा घटितादिकं सदवलोक्य तिथिनिश्चयं च कृत्वा गुरुमगात् ॥ ॥ १२० ॥ उक्तिं यांचां विनाऽनल्पधनं अदात् । उच्चचिह्नं ध्वजादिविवाहचिह्नयुक्तम् ॥ २१ ॥ भूषावद्भिः पूजिता वधूः यस्मिन् विविधान्नाः रुचिरान्न भोजिनः सर्वे यस्मिन् श्वश्रसकाशात् आप्तसद्वसनमुख्यः प्राप्तसद्वस्त्रभूषणादिः वरो यस्मिन् सद्दक्षिणाभिः मुदिताः विप्रपुरोहिताद्या यस्मिन् तं विवाहं

ज्ञात्वा तदर्थमथ शास्त्र्यपि पाडुरंगं खंदारमाप्तगुरुवागवदच्च गंतुम् ॥ कन्यां विलोक्य सुगुणां घटितादिकं सन्निश्चित्य चोपयमधस्त्रम गाद्गुरुं सः ॥ १२० ॥ शास्त्री ततो वदति यं हि विवाहवृत्तं सोदादनल्पधनमादरतो विनोक्तिम् ॥ चिंतामणिं स पितृमातृकमुच्च चिह्नं खंदारमानयदुताप्तयुतः सशिष्यः ॥ २१ ॥ भूषांशुकांचितवधुं विविधान्नसर्वं श्वश्र्वाप्तसद्वसनमुख्यवरं विवाहम् ॥ सद्दक्षिणामु दितविप्रपुरोहिताद्यं कृत्वाखिलैः स निरगान्नवदंपतिभ्याम् ॥ २२ ॥ लक्ष्म्याः सुपूजनविधौ गुरुराट् स्नुषां तां नाम्ना चकार भजना प्यदां जयंतीम् ॥ नंदीतटे समकरोत्स सुधीश्च शिष्यान्गेहं निजार्द्धमददच्च सखादिरामः॥२३॥तस्मिन्नुवास सकलत्रसुतः स्नुषाढ्यः सिंदूरयुग्गुरुगणेशमिहोपधाय॥ शिष्यास्तमायगुरथात्मधिये सुभक्त्या त्यक्त्वा जडां तनुमथो दिवमाप गंगा॥२४॥बाला परीक्षितगुणा गुरुणा जयंती साध्व्यंबिकाहरहराप्तसुकीर्तिवृत्ता ॥ साधुश्चराचरसुदृग्वसतीह नागोरायो ह्यमुष्य गुरुदर्शनमास सौख्यात ॥ २५ ॥

कृत्वा स वेंकटशास्त्री सर्वैः सह नवदंपतिभ्यां सह ततो निरगात् ॥२२॥ स विनायकः शिष्यानुपदिष्टवान् । कश्चित्सखारामाख्यः निजं स्वकीयमर्द्धं गेहं अददत् दत्तवान् । शुकानंदायेति शेषः ॥२३॥तस्मिन् गृहे इह गृहे सिंदूरयुक्तं गुरुरूपं गणेशमूर्तिं उपधाय स्थापयित्वा आत्मधिये आत्मज्ञानार्थम् । गंगा शुकानंदपत्नी ॥ २४ ॥ साध्वी सांबिका जयंती अहरहः प्रतिदिनं आप्ता प्राप्ता सुकीर्तिः सुवृत्तं च यया सा तथा आसीत् । इह नंदीतटे चराचरे जगति शोभना हितकरा दृक् दृष्टिर्यस्य स समदर्शी नागोरायाख्यः साधुर्वसति । अमुष्य शुकानंदगुरोर्दर्शनं सौख्यात् आत्मसुखनिमित्तेनासीत् ॥ २५ ॥

एतत्सर्गोक्तकथाश्रवणादिफलमाह । श्रीमदिति । अर्थिनः अर्थेच्छावतः अर्थाः भवेयुः । अपरस्य निरीहस्य तु मोक्षो भवेत् ॥ १२६ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां पंचाशत्तमः सर्गः ॥ ५० ॥ उदेकपंचाशे ह्युक्ता चोचतुःशतपद्यतः । चिंतामणेः पुण्यगतिर्दीक्षाऽन्त्योद्भवः क्रमात् ॥ ५१ ॥ अथ देशिकेंद्रस्य सप्तशृंगस्थदेवीदर्शनं विवक्षुः पुण्यनगरगमनमाह । वेंकटेशविद इत्यादिभिः । वेंकटेशशास्त्रिणः सकाशाद्विद्यां लब्ध्वा अधिकविद्यालाभेच्छया चिंतामणिः पुण्यनगरं ययौ । च पुनः सूर्यनारायणशास्त्रिणः सकाशादाप्ता प्राप्ता वित् विद्या येन स बभूव । तस्मादध्ययनं कृत

श्रीमच्छुकानंदगुरोश्चरित्रं यत्प्राक्सखस्येक्षणभाषणादि ॥ चिंतामणेर्जन्मत आविवाहं श्रुत्वार्थिनोर्थास्त्वपरस्य मोक्षः ॥ १२६ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे पंचाशत्तमोध्यायः ॥ ५० ॥ श्रीमयूरेश्वर उवाच ॥ वेंकटेशात्त्रिदो विद्यां लब्ध्वा चाथाधिकेच्छया ॥ पुण्यं चिंतामणिश्चागात्सूर्यनारायणाप्तवित् ॥ १ ॥ दक्षिणा सार्द्धशतकाऽथाभूच्चिंतामणेरिह ॥ सदसि श्रीमतोप्यन्यगृहस्थानां पृथक् ततः ॥ २ ॥ वसन्पुण्ये निशम्याथ सप्तशृंगनिवासिनीम् ॥ तारार्द्धमातृकारूपामेकः पद्भ्यां स तां ययौ ॥ ३ ॥ गिरौ देव्यग्रतस्तीर्थे गत्वा कृत्वाऽत्र चाप्लुतिम् ॥ रुद्राक्षभूतिधृक् चोर्ध्वं गत्वा तुष्टाव पद्यतः ॥ ४ ॥ चिंतामणिरुवाच ॥ या भूनीरकृशानुवायुगगनाऽभिन्नैः स्वरूपैः स्थिता या वै सत्त्वरजस्तमस्त्रिगुणकैर्नानास्वरूपैर्वृता ॥ तामाद्यां जगदात्मिकां जगदुपादानैकरूपां सदा सप्तशृंगनिवासिनीं परचितिं वंदेहमत्यादरात् ॥ ५ ॥

वानित्यर्थः ॥ १ ॥ श्रीमतः सदसि सार्द्धशतमुद्रात्मिका दक्षिणाऽभवत् । ततः पृथक् श्रीमतो दक्षिणाया भिन्ना चिंतामणेर्दक्षिणा अन्यगृहस्थानां गृहेषु अभवदित्यर्थः ॥ २ ॥ तारस्य प्रणवस्य अर्द्धमात्रारूपां श्रुत्वा एकाकी पादाभ्यां तां ययौ ॥ ३ ॥ पद्यतश्चित्रपद्यैस्तां स्तुतवान् ॥ ४ ॥ तदेव स्तोत्रमाह । येत्यादिदशभिः । या देवी भूरादिपंचमहाभूताभिन्नैः स्वरूपैः स्थिताऽस्ति । पंचमहाभूतस्वरूपिणीत्यर्थः । या वै निश्चयेन सत्त्वरजस्तमोरूपैस्त्रिगुणैर्यानि स्वरूपाणि तैर्वृताऽऽवृतास्ति । तामाद्यां मूलप्रकृतिं जगद्रूपां जगदुपादानं ब्रह्म तदेकरूपां ब्रह्मरूपिणीमिति यावत् । सप्तशृंगपर्वताधिष्ठितां परचितिं

कार्यकारणातीतचैतन्यरूपां देवीं अत्यादरेणाहं सदा वंदे । यद्वा शुभेच्छाविचारणातनुमानसासत्त्वापत्त्यसंसक्तिपदार्थाविभाविनीतुर्याख्या एताः सप्तभूम य एव शृंगाणीव शृंगाणि उपलब्धिस्थानानि तत्राधिवासिनीत्यर्थः । शार्दूलविक्रीडितम् ॥ ५ ॥ भवे संसारे दुःखं आप्तानां या सौख्यकर्त्री शरणागताना मापद्विहंत्री संकटहंत्री । तां स्थावरजंगमानां प्रसवित्रीं सप्तशृंगाद्रौ विराजमानामहं वंदे । इंद्रवज्रावृत्तम् ॥ ६ ॥ ननु निश्चयेन चराचरविश्वस्य विमोहिनीं स्वरूपावरणकरीं गुणसंघानां निधिरूपस्य शंभोर्विनोदिनीं विनोदकर्त्रीम् अंतर्यामित्वेन प्रेरकां वा । विबुधानां मानसान्येव कंजानि कमलानि विक स्वयति या तां प्रति हे जनाः यूयं भजत । द्रुतविलंबितम् ॥ ७ ॥ सद्रूपां कालत्रयाविनाशिरूपां चिद्रूपां स्वप्रकाशरूपां साधुजनवृंदैः पूजितं रूपं यस्यास्तां

या सौख्यकर्त्री भवदुःखितानामापद्विहंत्री शरणागतानाम् ॥ वंदे सवित्रीं स्थिरजंगमानां तां सप्तशृंगाद्रिविराजमानाम् ॥ ६ ॥
ननु चराचरविश्वविमोहिनीं गुणगणाकरशंभुविनोदिनीम् ॥ विबुधमानसकंजविकासिनीं भजत सप्तसुशृंगनिवासिनीम् ॥७॥सच्चिद्रूपां सज्जनवृंदार्चितरूपां लीलामात्रस्वीकृतनानासुगुणरूपाम् ॥ विद्वद्वृंदध्यानसमासादितरूपां वंदे सप्तशृंगविराजत्पररूपाम् ॥ ८ ॥ भुज गाधिराजोत्तमालंकृता या भुजंगेंद्रसंसुप्तसंबोधिका या ॥ भुजंगार्तिहन्त्री शुभा योगमाया सदा पातु मां सप्तशृंगैककाया ॥ ९ ॥
नमामि जनमोहिनीं सकलवेदसंमोचिनीं गिरीशवरवर्णिनीमसुरदुष्टसंमर्दिनीम् ॥ सुधार्णवनिवासिनीं सुजनमानसोल्लासिनीं सुसप्त शिखराचलाधरवराधिसंवासिनीम् ॥ १० ॥

लीलामात्रेण स्वीकृतानि नानासगुणरूपाणि यया तां विद्वद्वृंदैर्ध्यानेन संपादितं रूपं यस्याः सप्तशृंगपर्वते विराजमानं पररूपं अद्वैतमात्ररूपं यस्यास्तामहं वंदे । मत्तमयूरवृत्तम्॥८॥या भुजंगाधिराजेन शेषेण उत्तमे उत्तमांगे शिरसि अलंकृता भूषिता या च भुजंगेंद्रे शेषे सुप्तस्य निद्राणस्य शेषशायिनो हरेः संबो धिका मधुकैटभवधार्थं प्रबोधकर्त्री सा योगमाया विष्णुनिद्रारूपिणी भुजंगार्तिहंत्री सर्पजन्यपीडानिवारिणी शुभा योगमाया सप्तशृंगपर्वते एकः मुख्यः कायो देहो यस्याः सा सदा मां सर्वतो रक्षतु । भुजंगप्रयातवृत्तम् ॥ ९ ॥ गिरीशस्य वरवर्णिनीम् उत्तमभार्याम् असुरान्दुष्टांश्च सम्यक् मर्दयति नाश

धृति तां सुधासमुद्रनिवासिनीं सुसतशिखरः सप्तशृंगश्चासौ अचलाधरवरः श्रेष्ठपर्वतस्तत्र निवासिनीमहं नमामि । पृथ्वीवृ० ॥ १० ॥ शरच्चंद्रवद्गौर मुखी सुरसा शृंगारादिसुरसाश्रया तरसा बलेन सुमनसां देवानां भयहारिणी गिरिश्चासौ सप्तमौलिश्च सप्तशृंगस्तस्मिन्निलयः स्थानं यस्याः सा सुभुजा देवी दुःखसंघातपरितः पातु रक्षतु । सर्वजनानिति शेषः । प्रमिताक्षरावृत्तम् । तल्लक्षणं तु—प्रमिताक्षरा सजससैरुदितेति ॥ ११ ॥ शांकरी शंकरप्रिया हरिसोदरी विष्णुभगिनी विनतानां नम्राणाम् अमराणामवनकारिणी रक्षका नीरजासनेन कमलासनेन ब्रह्मणा सेविता अखिलेभ्यः खेदेभ्यः खेदजन

शरदिंदुगौरवदना सुरसाभयहारिणी सुमनसां तरसा ॥ परिपातु दुःखनिवहाद्गिरिजा गिरिसप्तमौलिनिलया सुभुजा ॥ ११ ॥
शांकरी हरिसोदरी विनतामरावनकारिणी नीरजासनसेविताखिलखेदमोचनकारिणी ॥ पातु मां भवसंकटात्सुरवैरिदुर्मदहारिणी तारिणी सुखकारिणी गिरिसप्तमौलिविहारिणी ॥ १२ ॥ स्तुता ध्याता या वै सकृदपि नता येन जगतामधिष्ठात्री सद्यो वितरति हि तस्मै निजपदम् ॥ गिरौ सप्तशृंगे निवसति चिरं या परकला करोतु क्षेमं नः सपदि किल साष्टादशभुजा ॥ १३ ॥ निःशेषचेतनहृदि स्थितया त्वया वै संप्रेरितेन रचिताऽल्पविदा मया या ॥ पद्यैः सुवृत्तनवकैर्नवरत्नतुल्यैस्तामंब वक्षसि गृहाण चिरं सुमालाम् ॥ १४ ॥ सप्तशृंगनिवासिन्याः कंठदेशेऽर्पिता सती ॥ माला चिंतामणेर्भूयात्परं चिंताविनाशिनी ॥१५॥ मयूरेश्वर उवाच ॥ देवीं स्तुत्वेति नत्वासावर्चित्वा सोपचारतः ॥ चिंतामणिर्लब्धभोक्ताऽवसत्तत्र तपस्विषु ॥ १६ ॥ आब्रह्मस्तंबचिद्रूपां शिवां विष्णुविमोहिनीम् ॥ ध्यायन्स्वाभिन्नसद्बुद्ध्याऽखंडानंदोंतरात्मदृक् ॥ १७ ॥

केभ्यः पाशेभ्यो मोचनकारिणी सुरवैरिणां देवशत्रूणां दैत्यानां दुर्मदहारिणी भवसंकटात् तारिणी आत्मसुखकारिणी गिरौ सप्तमौलौ सप्तशृंगे विहारिणी मां पातु ॥ १२ ॥ नता स्मरणेनात्मतया भाविता वितरति ददाति । शेषं स्पष्टम् । शिखरिणी ॥ १३ ॥ सर्वचेतनानां हृदि स्थितया त्वया वै संप्रे रितेनाल्पज्ञेन मया नवरत्नसदृशैः सुवृत्तनवकैः पद्यैर्या रचितास्ति । हेंब तां मालां त्वं वक्षसि चिरं गृहाण धारय । वसंततिलकावृत्तम् ॥ १४ ॥ परं अत्यंतं यथास्यात्तथा चिंताविनाशिनी भवतु ॥ १५ ॥ १६ ॥ आब्रह्मस्तंबजगति चैतन्यरूपां आत्माभिन्नया सद्बुद्ध्या ध्यायन् अखंडानंदज्ञानातीत ।

यतः अंतरात्मदृक् अंतर्निष्ठः ॥ १७ ॥ स्ववित् आत्मज्ञः शुकानंदस्य सुहृत् मित्रम् अदंडः दंडरहितः अत्र पर्वते ययौ ॥ १८ ॥ देव्या दर्शनेच्छुः सः सन् साधुः आस्थितं तपस्विगणं दृष्ट्वा तपस्विनामियं कोटी उत्कर्षोस्तीत्युक्त्वा ऊर्ध्वं चारुरोह । " अत्युत्कर्षाश्रयः कोट्यः " इत्यमरः ॥ १९ ॥ चिंतामणिर्यतिवाक्यं निशम्याह मनसीति शेषः।असौ बुधः संस्कृतभाषाभिज्ञो गोस्वामी गवामिंद्रियाणां नियंता शूद्रसंन्यासी अस्ति किम् । गोस्वामिशब्दो लौकिकभाषया गोसाविपरो भवति । बुधस्यापि दंडरहितत्वाद्गोसावीति संशयोस्ति । अस्तु कोपि नाम तथापि मयाऽसौ गत्वा संभाषणीयोस्तीति हेतुना तं यतिमेत्य आनमन्सन् भवतामागमनं कुतो जातमित्याहेति संबंधः ॥ २० ॥ पंचवट्याः सकाशादागमनं जातमिति स यतिरब्रवीत् । असौ चिंतामणिः

स्वविन्नारायणः शास्त्री करवीरस्थितः सुहृत् ॥ शुकानंदस्य संन्यासी भूत्वाऽदंडोत्र चाययौ ॥ १८ ॥ देव्याः संदर्शनाकांक्षी तपस्विगणमास्थितम् ॥ तपस्विनामियं कोटीत्युक्त्वोर्ध्वं चारुरोह सन् ॥१९॥ चिंतामणिर्निशम्याह गोस्वामी किमसौ बुधः ॥ आपणीत्रोत्वगत्वेति तमित्याहानमन्कुतः ॥ २० ॥ आगमः सोब्रवीत्पंचवट्याः क्षेत्रं किमित्यसौ ॥ यतिः किं वाच्यमित्याहाधिका काश्याश्च गोदया ॥ २१ ॥ चिच्छक्तिवासत इदं च वरं धरायां चिंतामणिस्त्ववददित्थमुवाच सोथ ॥ दंडी चिदेव किल शक्तिरयं सदर्थस्तत्पुरुषान्न च यतो भवति द्विभेदः ॥ २२ ॥

पंचवटीक्षेत्रं किं कथमस्तीत्यब्रवीत्।सा क्षेत्रमस्तीति किं वाच्यम् । यतः गोदया गोदासंबंधेन काश्या अप्यधिकास्ति इति यतिः प्राह ।"आद्या सा गौतमी गंगा द्वितीया जाह्नवी तथा " । इति गोदाया ज्येष्ठत्वात् । " रेवातीरे तपः कुर्यान्मरणं जाह्नवीतटे । दानं दद्यात्कुरुक्षेत्रे त्रयं गौतमीतटे " । इति फलाधिक्यश्रवणात्काश्यधिका पंचवटीत्यर्थः॥ २१ ॥चिच्छक्तिनिवासेन इदं च समर्थंगाख्यं क्षेत्रं पृथिव्यां वरं श्रेष्ठमस्तीति चिंतामणिरवदत् । अथ स दंडी यतिश्च तं प्रत्युवाच । चिच्छक्तिरित्यत्र चिदेव शक्तिरित्ययमेव सन् अर्थोऽस्ति । षष्ठीतत्पुरुषात्सदर्थो न भवति । यतो द्वयोश्चिच्छक्त्योर्भेदो भवति ॥ २२॥

पुनश्च यतिं चिंतामणिरुवाच । तत्पुरुषसमासेपि राहोः शिर इत्यत्र राहुशिरसोरिव हेम्नः पुत्तलिकेत्यत्र सुवर्णपुत्तलिकयोरिव चितः शक्तिरि त्यत्रापि अभेदे भेदोपचारो दृश्यते । अप्पयाख्यदीक्षितचरणैश्चितश्रिधात्वं शिव इति शक्तिरिति अज इति भेदैः प्रकारैः अधर्म निर्धर्मकं ब्रह्म पराशिवस्त स्मात् द्वौ धर्मौ शक्तिर्विष्णुश्चेति स्त्रीपुरुषरूपौ तयोः कथनात् रत्नत्रयपरीक्षायाम् उक्तमस्ति हि । तस्माच्चितः शक्तिरित्ययमप्यर्थः सम्यगेवेत्यर्थः ॥ ॥ २३ ॥ इति श्रुत्वा यतिशिष्यस्तदा गुरुं प्राह । अयं साधुवादः उत्तमवादोस्तीति । गुरुश्च नायं वादः किंतु जल्पोस्तीति इत्थं शिष्यमब्रवीत् । रो हपरंपराणां आरोहणसोपानानाम् उच्चत्वेन श्रममिता इमे त्रयः सोपानोभयतः वेद्योः स्थिता बभूवुः ॥ २४ ॥ यतिशिष्यः चिंतामणिमुवाच । भवतः

चिंतामणिः पुनरुवाच यतिं न भेदो राहोश्शिरास्त्विह च पुत्तलिकेव हेम्नः॥ उक्तं च दीक्षितवरैस्तु चितस्त्रिधात्वं चाधर्मधर्मकथनाच्छित्र शक्त्यजैर्हि ॥२३॥ शिष्यो यतेरिति निशम्य गुरुं तदाहाऽसौ साधुवाद इति तं गुरुरब्रवीच्च ॥ जल्पोयमित्थमथ रोहपरंपरोच्चश्रान्त्या ताः स्थितास्त्रय इमे ह्युभयत्र वेद्योः ॥२४॥ चिंतामणिं तु यतिशिष्य उवाच विद्वन्कुत्र स्थितिस्तव वदेति निशम्य विद्वान् ॥ नंदीतटेऽ वदद्सौ यतिराङ्विनेतुः पुत्रोसि वेत्स्यखिलमेव ममेति चाह ॥ २५ ॥ चिंतामणिस्त्वथ शनैर्निकटस्थमाहायं कः स मंदमवदत्करवी रशास्त्री ॥ नारायणः किल पुरेति निशम्य चोक्तं स्मृत्वा गुरोर्झटिति चोत्थित आनमत्तम् ॥ २६ ॥ तिष्ठन्नुवाच यतिमज्ञतया मयोक्तमर्भेण पित्र इव तद्यतिराट् क्षमस्व ॥ तं चाब्रवीद्यतिरथात्मविदस्तवोक्तिर्ह्यानंददा मम तु नैव तयाऽणुकोपः ॥ २७ ॥

स्थितिः क्व कुत्रास्तीति निशम्य विद्वान्सः नंदीतटे मन्निवासोस्तीत्यवदत् । अथ यतींद्रः त्वं विनायकस्य पुत्रोसि मम सर्ववृत्तं च वेत्सि जानासीत्याह ॥ ॥ २५ ॥ चिंतामणिस्तु अथायं यतिः कोस्तीति शनैर्निकटस्थं यतिशिष्यं प्रति प्राह । स शिष्यः मंदं शनैर्यथा स्यात्तथाऽवदत् । पुरा पूर्वाश्रमे अयं नारा यणाख्यः करवीरगतः शास्त्री अस्तीति । इति निशम्य देशिकः गुरोः शुकानंदस्य उक्तं वचनं च स्मृत्वा झटित्युत्थितः सन् यतिं ननाम ॥ २६ ॥ स पुरस्तिष्ठन्यतिमुवाच । हे यतिराट् अर्भकेण पित्रे उक्तमिव मया तुभ्यमुक्तं तत्क्षमस्व । यतिश्च तमब्रवीत् । तया त्वदुक्त्या तु मम अणुरपि कोपो

नास्ति । हि यत आत्मविदस्तवोक्तिर्ममानंदप्रदास्तीति ॥ २७ ॥ अथ शिष्यान्वितो यतिः इतः स्थानादूर्ध्वं पर्वतोर्ध्वदेशं ययौ । तं यतिं तु अनुवदन् चिंतामणिश्च तेन सहोर्ध्वमगात् । ते त्रयो देवतासमीपं गताः संतः परांबामनमन् । यतिस्तु शिष्यहस्तेन तां विधिवत् पूजितवान् । हि यतः उपास्याम् । सन्यासानंतरमपि कृतव्रतानिवृत्तये उपास्यदेवतापूजनं कर्तव्यमिति भावः ॥ २८ ॥ अथ यतिश्चिंतामणिमवदत् । इत्थं तव संगः किंचित्कालं आस्तां भवतु । किं तु त्वं तपःपरोऽनुष्ठानपरोऽसि । कथं तव संगो भविष्यति । स तु चिंतामणिरब्रवीत् । अतिकालेन तपः फलति । साधुसंगस्तु शीघ्रं

शिष्यान्वितो यतिरथोर्ध्वमितो ययौ तं चिंतामणिस्त्वनुवदन्सह तेन चागात् ॥ ते देवतानिकटगास्त्वनमन्परांबां शिष्याद्यतिश्च पुपुजे विधिवद्ध्युपास्याम् ॥ २८ ॥ चिंतामणिं यतिरथावददित्थमास्तां संगस्तवेषदपि किं तु तपःपरस्त्वम् ॥ स त्वब्रवीत्फलति वा न तपोतिकालात्सत्संग आशु फलदः स ममास्त्वखंडम् ॥ २९ ॥ श्रीमयूरेश्वर उवाच ॥ ततश्चिच्छत्तयैक्यं मुहुरनुवदंतो ययुरधो वणीग्रामं तेथो तदधिपतिलब्धाखिलसुखाः ॥ यतिर्दत्तात्रेयासनमिह निशि न्यस्य रहसि स्वयं चक्रेग्रस्थो भजनममरप्राकृतपदैः ॥ ३० ॥ उवाचैनं दंडी स च रहसि चिंतामणिमिदं वचो दत्तात्रेयं मयि भजति पूर्वं त्वतनुवाक् ॥ बभूवेतीदं ते भजनमुत मेतिप्रियमथो तदाद्यं कुर्वे तद्रहसि किल तस्यासनपुरः ॥ ३१ ॥

फलप्रदो भवति । अतः स साधुसंगो ममाखंडमस्तु । अहं तपःपरो नास्मि । किंचित्कालं त्वया सहागमिष्यामीति भावः ॥ २९ ॥ ततश्चिच्छत्तयोरैक्यं मुहुरनुवदंतस्ते अधः पर्वताधो भागे वणीसंज्ञकं ग्रामं ययुः । अथ तस्य ग्रामस्याधिपाल्लब्धं अखिलमन्नादि तस्मात्सुखं येषां ते । तस्मात्प्राप्तसत्कारा बभूवुरित्यर्थः । इह स्थाने यतिः रात्रावेकांते दत्तात्रेयासनं स्थाप्य स्वयं अग्रे स्थितः सन् अमरप्राकृतैः गीर्वाणप्राकृतभाषाबद्धैःपदैर्भजनं चक्रे ॥ ३० ॥ इह रहसि चिंतामणिमाहूय स दंडी इदमुवाच उक्तवान् । पूर्वमपि दत्तात्रेयं भजति सति इदं तव भजनं ममातिप्रियमस्तीति अतनुवाक् आकाशवाणी

बभूव । अथाहं तदार्थं तदाप्रभृति तव भजनं रहसि तस्यासनपुरतः करोमि किल॥ ३१ ॥ इह भजनस्थाने अन्यः शिष्यः श्रेष्ठो वा कश्चिन्मत्तः मत्सकाशाद्भयेन न प्रविशति वै । त्वं तु आत्मज्ञस्य शुकानंदस्य पुत्रोसि । तथात्मज्ञानवानसि । इति हेतोर्मया प्रीत्याऽत्राहूतस्त्वं मम सुभक्त्या इहासनगतं सर्वगतं परं दत्तात्रेयं पश्यन्सन् भजनं शृणु । एवं स यतिश्चिंतामणौ बहुप्रीतिमानासीदित्यर्थः ॥ ३२ ॥ अथो वणीग्रामे निशातिक्रमणानंतरं व्रजति जगाम । असौ यतिर्विद्वानपि प्राकृतपदैर्भजनमकरोत् । अतोयं परमभक्तोस्तीति मनसा प्राहेत्यर्थः ॥ ३३ ॥ स्वोपास्ये भक्तिर्यस्य समं यथास्यात्तथा त्रैकांडवर्तकः कर्मो

न शिष्यो नार्यो वा प्रविशाति भयान्मत्त इह वै त्वमस्यात्मज्ञस्यात्मज इति तथात्मानुभववान् ॥ मयाहूतः प्रीत्या शृणु भजनमीशन्न खिलगं परं दत्तात्रेयं त्विह मम सुभक्त्यासनगतम् ॥ ३२ ॥ यतिः शिष्याढ्योथो बुधजननतः पंचवटिकां ययौ पुण्यग्रामं व्रजति स च चिंतामणिरपि ॥ स्मरन्विद्वांसं तं यतिवरमिदं चाह मनसा यतिर्विद्वांश्चासौ भजनमकरोत्प्राकृतपदैः ॥ ३३ ॥ श्रीमयूरेश्वर उवाच ॥ मल्लारिः श्रोत्रियोथासीत्पुण्ये विद्वांस्तु कर्मठः ॥ स्वोपास्यभक्तिरात्मज्ञः समं त्रैकांडवर्तकः ॥ ३४ ॥ भास्करार्यप्रशिष्यो यः प्रत्यब्दं च महाक्रतुम् ॥ अग्निहोत्री करोत्येव नित्यं नैमित्तिकं तथा ॥ ३५ ॥ स्वोपास्यपूजनं विप्रसुवासिन्यर्चनाशनम् ॥ वस्त्रभूषणमिष्टान्नैर्देवतानामपूर्वकम् ॥३६॥ स शांतिपाठं पूर्वाह्णे भाष्यप्रवचनं तथा ॥ जीर्णश्रुतिं भोजनोर्ध्वं शिष्येषूक्तिं च शास्त्रतः ॥ ३७ ॥ ईदृक् चाखिलविन्मान्यः श्रीमतात्यंतमानितः ॥ चिंतामणिस्तस्य गेहेऽवसत्प्रीत्यात्मगेहवत् ॥ ३८ ॥ पुत्राधिकं करोत्यस्मिञ्छ्रोत्रियः प्रेम सद्गुणे ॥ पत्नीस्नुषाश्च तस्यामुं पश्यंत्यः पुत्रबंधुवत् ॥ ३९ ॥

पास्तिज्ञानकांडप्रवर्तकः आसीत् ॥ ३४ ॥ ३५ ॥ विप्रसुवासिनीनां अर्चनमशनं च देवतानामपूर्वकं करोतीत्यपकर्षः । सहस्रनामभिस्त्रिशतीनामभिस्तावत्यः विप्रसुवासिनीः वस्त्रभूषणान्नैः पूजयतीत्यर्थः ॥ ३६ ॥ भोजनानंतरं जीर्णश्रुतिं पुराणश्रवणं शिष्येषु शास्त्रैरुक्तिं शास्त्रप्रवचनं च करोति ॥ ३७ ॥ अखिलवित्सु सर्वपंडितेषु मान्यः श्रीमता राज्ञाऽत्यंतं सत्कृत आसीत् ॥ ३८ ॥ सद्गुणे सद्गुणवति ॥ ३९

ईप्सितांचितः इष्टप्राप्तिहेतुना श्रद्धा भक्तिरभूत ॥ ४० ॥ अन्येभ्यश्च दक्षिणां लब्ध्वा गुरोः शुकानंदस्य ईक्षोत्सुकः दर्शने उत्कंठितः सवित् सज्ञानः ॥ ४१ ॥ आत्मदं ज्ञानप्रदम् ॥ ४२ ॥ ४३ ॥ ४४ ॥ तत् दारिद्र्यं निवारयितुं अन्यतः अन्यत्र स्वाद्वन्नभोजनार्थं शिष्यैराहूतोपि तद्गृहं ययौ ॥ ४५ ॥ ४६ ॥ सते साधवे शुकानंदाय अत्तुं भक्षितुम् ॥ ४७ ॥ निवृत्ताः रसाः वासनाः यस्मात । यतः आत्मदृक् । "तावज्जितेंद्रियो न स्याद्विजितान्येन्द्रियः पुमान् । रसवर्जं

पुण्येनेकगृहस्थानां श्रद्धा चिंतामणावभूत् ॥ तदुक्ततत्तन्मनुभिः साधनैश्चेप्सितान्वितः ॥ ४० ॥ दक्षिणां श्रीमतो लब्ध्वाऽन्येभ्यश्चाथ ययौ द्रुतम् ॥ नंदीतटं गुरोरीक्षोत्सुकश्चिंतामणिः सवित् ॥ ४१ ॥ वर्षेवर्षेपि गत्वेति पुण्यं मासचतुष्टयम् ॥ स्थित्वाऽत्रैव पुनर्याति पितरं गुरुमात्मदम् ॥ ४२ ॥ शुकानंदगुरुस्त्वासीन्नंदीतट उदारधीः ॥ परीक्ष्यैवागतान्छिष्यान्छिक्षयन्नात्मविद्यया ॥ ४३ ॥ चिंतामणेः सहाध्यायी पांडुरंगः सुहृत्तमः ॥ तस्य गेहेऽथ दारिद्र्यं गुरुर्वीक्ष्य दयान्वितः ॥ ४४ ॥ पुत्रस्य सख्युस्तद्दूरं कर्तुं निश्चित्य तद्गृहम् ॥ ययौ स्वाद्वन्नभुक्त्यर्थं शिष्याहूतोपि चान्यतः ॥ ४५ ॥ मातरं पांडुरंगस्याब्रवीदंब क्षुधा मम ॥ बाधते देहि यत्किंचिद्विद्यतेऽद्य गृहे तव ॥ ४६ ॥ साधूक्तं तन्निशम्येति चानीक्षंत्यणु सा गृहे ॥ तक्रं पिष्टं चान्यगेहादानीयाऽत्तुं ददौ सते ॥ ४७ ॥ लिलेहामृतवत्तद्धि निवृत्तरस आत्मदृक् ॥ धनधान्यर्द्धिरस्त्वत्रेत्युक्त्वागात्स्वगृहं गुरुः ॥ ४८ ॥ त्रिर्गत्वेति स्वयं भुक्तं गुरुणाथ समृद्धिमत् ॥ धनधान्यैरभूद्गेहं पांडुरंगस्य शास्त्रिणः ॥ ४९ ॥ सन्मानं सर्वविद्भ्यो नृपाश्चाचक्रिरे ततः ॥ इत्थं दयालवः संतः परोपकृतिनैपुणाः ॥ ५० ॥ अथतुमत्यां हि पितुर्जयंत्यां मातर्यपत्यान्यभवन् क्रमेण ॥ आदौ सुतोभूद्धरणीधराख्यः सत्संगतीच्छुः स्वयमेव शेषः ॥ ५१ ॥ सत्संगतिः सप्तपदाप्यनंतसौख्याय सोल्पायुरतोवतीर्णः ॥ पुरा हरिश्चात्ततनुर्यथासीद्वसिष्ठसांदीपनिसंगतीच्छुः ॥ ५२ ॥

रसोप्यस्य परं दृष्ट्वा निवर्तते" इत्यात्मदर्शनेन सर्वरसनिवृत्तिर्भवतीत्यर्थः । अत्र गृहे ॥ ४८ ॥ त्रिः त्रिवारम् ॥ ४९ ॥ पूर्वार्द्धे पांडुरंगस्येत्यनुवृत्तिः । एवं साधवः परोपकारे कुशला भवंति ॥ ५० ॥ पितुश्चिंतामणिसकाशात् । यः साधुसंगेच्छावान् स्वयं शेष एवाभवत् ॥ ५१ ॥ शेषावतारत्वं सहेतुकमाह ।

सदिति द्वाभ्याम् । सप्तपदा सप्तपादन्यासमात्रेण जातापि अनंतसौख्याय हेतुर्भवति । अतः सः अल्पायुरवतीर्णोऽभवत् । बहुदिनसहवासे अनादरेणाल्पसंग एवात्यादरे हेतुर्भवतीत्यर्थः । पुरा हरिः रामकृष्णरूपः आत्ततनुः गृहीतदेहः ॥ ५२ ॥ पूर्वं सत्संग एव विष्णोरवतारे कारणमिति दर्शयन् तथैव शेषावतार प्रयोजनमाह । संकल्पादेवेति । अहं संकल्पमात्रेणैव स्वचरणभजकानां दुःखं हर्तुं समर्थो यद्यपि तथापि सेवया सौख्यदात्री सतां संगतिर्वैकुंठे मम न भवति । अत्र वैकुंठे सनकाद्याः संतो यद्यप्यायांति । तथापि ते ईश्वरबुद्ध्या मां नमंति । इति हेतोरजितो विष्णुस्तत्पादपांसून् साधुचरणरजांसि आप्तुं प्राप्तुं धृततनुर्गृहीतदेहोभवत् । तथैव सत्संगलाभार्थमत्रापि चिंतामणिगृहे शेषो धृततनुरभवत् । ईश्वरेणापि सेव्यत्वात्साधुसंगस्य परमं महत्वमित्यर्थः ॥

संकल्पादेव दुःखं निजपदभजतां हर्तुमीशस्तथापि वैकुंठे संगतिर्नो मम भवति सतां सेवया सौख्यदात्री ॥ आयांत्यत्रापि संतः सनकमुनिमुखा मां नमंतीशबुद्ध्येत्याप्तुं तत्पादपांसून् धृततनुरजितोऽत्रापि शेषस्तथैव ॥ ५३ ॥ ततः शिवैवावतरत्त्रिवर्षैः कर्तुं शिवं देशिकतत्पराणाम् ॥ नाम्ना विनेत्रापि शिवोदिता सा यथास्थितं ह्युच्यत आत्मनिष्ठैः ॥५४॥ मयूरेश्वर उवाच॥आत्मानुभूतमवदद्गुरवे हि बाल्ये चिंतामणिः सुखमगाद्व्यतिरेकतोंतः ॥ उक्त्या गुरोरिदमथान्वयतोपि लब्ध्वाऽपश्यद्बहिः स्वहृदि चात्मसुखं तदेकम् ॥५५॥ मंत्रैः कृतोथ गुरुणा निखिलैश्च पूर्णो नामास्य देशिकसुखं कृतमार्य्यबुद्ध्या ॥ चिंतामणिः कणवनादि गृहेस्ति वा नो वेत्त्येष नाणु हि सदात्मसुखे निमग्नः ॥ ५६ ॥

॥ ५३ ॥ ततः धरणीधरजन्मानंतरं त्रिवर्षैः देशिकतत्पराणां गुरुसेविनां शिवं कल्याणं कर्तुं शिवा गौर्येवावततार जाता । हि यतः आत्मनिष्ठैर्यथास्थितं यथास्ति तथा उच्यते ॥ ५४ ॥ यश्चिंतामणिर्बाल्ये आत्मना अनुभूतं स्वस्य देहादिभिन्नत्वं गुरवेऽवदत् । सः व्यतिरेकतः व्यतिरेकविचारदार्ढ्येनांतः सुखमगात् प्राप अथ गुरोः शुकानंदस्य वाक्येन इदं आत्मसुखं अन्वयतः सर्वगतत्वरूपेण अन्वयविचारदार्ढ्येन लब्ध्वा बहिः सर्वत्र हृदि च तदेकं सुखमपश्यत् । एवमन्वयव्यतिरेकविचारेण दृढबोधोऽभवदित्यर्थः ॥ ५५ ॥ अथ गुरुणा सर्वमंत्रैः पूर्णाभिषिक्तः कृतः । आर्यबुद्ध्या गुरुत्वबुद्ध्याऽस्य

नाम देशिकानंदं कृतम् । देशिकशब्दस्य गुरुवाचकत्वात्स्वकीयं गुरुत्वमेव ददावित्यर्थः । अस्ति वा नास्तीति नो वेत्त्येव । अण्वपि धनधान्यादिचिंतां न करोत्येवेति यावत् । यतः आत्मसुखे निमग्नः ॥५६॥ अन्यवाचया अन्यवचनेन स्नानं अशनं च यस्य स्नानभोजनकर्ता भवति । जानुशिराः सन् निद्रारहितो भवति । सदा विचारपरत्वात् तथा तिष्ठतीत्यर्थः ॥ ५७ ॥ अथ कन्याजन्मानंतरमस्य चिंतामणेः पुत्रोऽभवत् । यः सुतपस्वी ऋषिः । स शीघ्रफलदायिनि कलियुगे सत्संप्रदायिनो गृहे चरमामभेदरूपामुपासनां कर्तुं अभवत् । यतः अस्मिन् जन्मनि तस्य अन्या उपासनाव्यतिरिक्ता मतिर्नाभवत् । इदं अयं पुरा ऋषिरितिवृत्तं कश्चित्सिद्धो यतिर्विनायकस्य शिष्यं प्रति वदति कथितवान् ॥ ५८ ॥ तस्य गणराजनामकरणे हेतुमाह । य इति । यः पूर्व

दृष्ट्वेत्यमुं हृदि गुरुर्ह्यवदद्युवायं नापत्यगेहललनासु मनोऽणु धत्ते॥ वीक्षन् दिवा निशि च पुस्तकमन्यवाचा स्नानाशनस्त्वथ स जानुशिरास्त्वनिद्रः ॥ ५७ ॥ पुत्रोस्य चाभवदथो सुतपाः किलर्षिः कर्तुं कलौ द्रुतफले चरमामुपास्तिम् ॥ सत्संप्रदायिभुवनेऽन्यमतिर्न तस्यच्छात्रं यतिर्वदति सिद्ध इदं विनेतुः ॥ ५८ ॥ यः प्राक् तपोबलतं आप्तुमिनत्वमीशः सोनीहबुद्धिरिह साधुगृहेवतीर्णः ॥ नाम्ना ततोस्तु शिशुरेष गणाधिराजश्चितास्य मास्तु गृहगेत्यवदद्विनेता ॥ ५९ ॥ मौंजी कृताथ गुरुणा धरणीधरस्य पूर्णाभिषेकमकरोन्मनसास्य नाथः ॥ दृष्ट्वातिरूपगुणशीलयुतां शिवां चाहैषाबलाप्यमितशिष्यकरी भवित्री ॥ ६० ॥

तपोबलेन इनत्वं राजभावं प्राप्तुं समर्थः । सः अनीहबुद्धिः सन् इह साधुगृहेवतीर्णोभवत् । कामनासद्भावे हि शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते इति राजैश्वर्यप्राप्तिरुक्ता । कामनाभावे तु अथवा योगिनामेव कुले भवति धीमतामिति योगिकुले जन्म उक्तम् । तस्मादयं राजपदार्होपि निःस्पृहत्वेन सत्कुले जात इत्यर्थः । यत एवं ततः कारणात् एष शिशुः नाम्ना गणराजोऽस्तु । अस्य गृहगता चिंता च मास्तु । इति विनायकोऽवदत् ॥ ५९ ॥ गुरुणा चिंतामणिना । नाथः शुकानंद इत्युभयान्वयि । एषाऽबलापि बहून् शिष्यान्करोति सा बहुशिष्यकरी भवित्री भविता । अस्याः बहवः शिष्या भविष्यंती

त्यर्थः ॥ ६० ॥ अथ नागोरायाख्यसाधोश्चत्वारः शिष्याः गुर्वाज्ञया शुकानंदं सेवितुं प्राप्ता इत्याह । रामचंद्र इत्यष्टादशभिः ॥ ६१ ॥ गुणवान् पुत्रोपि मृतः ॥ ६२ ॥ ६३ ॥ उत्तरार्द्धमुत्तरान्वयि ॥ ६४ ॥ ६५ ॥ सदाऽऽत्मगं आत्मचिंतकम् ॥ ६६ ॥ गोदासमीपे यो मुकुटग्रामोऽस्ति । तत्रस्थः

रामचंद्रो द्विजोथासीद्योवंतीस्थनृपाश्रयः ॥ पुत्रपौत्रान्वितो गेहे धनधान्यसमृद्धिमान् ॥ ६१ ॥ वृद्धा तस्य मृता पत्नी दैवात्पुत्रोपि सद्गुणः ॥ पौत्रौ द्वौ स्तोस्य सद्बुद्धी पितामहवचःकरौ ॥ ६२ ॥ तथापि रामचंद्रस्य स्नुषा दुर्वाक्यतोऽनिशम् ॥ श्वशुरं वक्ति पुत्रस्ते तरुणोऽपि मृतः कथम् ॥ ६३ ॥ वृद्धस्त्वं तु बलाढ्योऽसि बहुभुग्जीवसे मुधा ॥ इत्यादिवचनैस्तस्याः पुत्रशोकाच्च दुःखितः ॥६४॥ निर्ययौ रामचंद्रोऽथ समृद्धात्स्वगृहादपि ॥ गुरुं पश्यन्निजाज्ञानभवशोकहरं परम् ॥ ६५ ॥ प्राप्तो नंदीतटं संतं नागोरायं सदात्मगम् ॥ सेवां कुर्वन्सततस्तस्य तस्थौ तन्निकटेऽनिशम् ॥६६॥ गोदांकं मुकुटग्रामस्तत्रत्योपि तमागतः ॥ सीतारामः स्त्रियं गेहे त्यक्त्वान्योपि महीपतिः ॥६७॥ लघुलंर्ध्वी स्त्रियं त्यक्त्वा प्रभ्वाख्यो ब्राह्मणान्यभूः ॥ सेवां युवाऽकरोत्साधोर्ब्राह्मणाधिककांतिमान् ॥ ६८ ॥ शिष्याश्चत्वार इत्यासन्नागोरायसमीपगाः ॥ अथ काशीं ययौ साधुस्तेन तेऽपि ययुस्तदा ॥ ६९ ॥ काश्यां मुमूर्षुतां प्राप्तः शिष्यानाह न चाधिका ॥ क्षेत्रार्यापि गुरोः काशी द्रुतं तस्मादितो मया ॥ ७० ॥ मरणार्थं गुरोरेव समाध्यग्रेऽद्य गम्यते ॥ इत्युक्त्वा स ययौ शिष्यैः परमस्य गुरोः स्थितिम् ॥ ७१ ॥

सीतारामाख्यः गृहे स्त्रियं त्यक्त्वा समागतः । महीपतिनामापि कश्चित्स्त्रियं गृहे त्यक्त्वा समागतः । नागोरायाख्यसाधुमित्यनुवृत्तिः ॥ ६७ ॥ प्रभ्वाख्यः परभाजीनामा ब्राह्मणान्यः शैवकुले जातः ॥६८॥६९॥ क्षेत्रार्या क्षेत्रश्रेष्ठापि काशी गुरोरधिका न चास्ति । द्रुतमित्यादि परान्वयि ॥ ७० ॥ ७१ ॥

तां आत्मताम् ॥ ७२ ॥ ७३ ॥ ७४ ॥ ननु नागोरायाख्यः साधुरपि मोक्षदं काशीक्षेत्रं त्यक्त्वा किमर्थं गुरुसमाध्यग्रे मरणार्थं गत इत्याशंक्य काशीमरणापेक्षया गुरुसमीपमरणस्य श्रेष्ठत्वमाह । मृतेरिति । काश्यां मरणान्मोक्षोऽगादि कथितोस्ति । व्यासादिभिरिति शेषः । अथापि यस्य पुरुषस्य इह जन्मनि अल्पमपि कृतं कर्माभुक्तमस्ति चेत्तर्हि स पुमान् तत्कर्मभोगार्थं भैरवदंडं भजति प्राप्नोति । तस्मात्कर्मभोगं विना काश्यामपि मोक्षो न भवति । गुरौ तु नैतदस्तीत्याह श्रुतेरिति । ज्ञानादेव तु कैवल्यमिति श्रुतिर्ज्ञानमात्रेण मोक्षं वदति । तच्च ज्ञानं सद्गुरुं विना न भवति । तत् ज्ञानं यस्माद्गुरोः सकाशात्प्राप्तं तस्य स्थितिनिकटे समाधिसमीपे मरणेनापि अजननं जन्मनिवृत्तिर्भवति । तथा च काशीमरणानंतरं विदेहमुक्तिप्राप्तौ जीवन्मुक्तिसुखं नैव भवति

चत्वारोंतेवासिनोथ गुरुमाहुर्न चात्मता ॥ लब्धास्माभिर्भवत्यात्मधामगे को वदेद्धि ताम् ॥ ७२ ॥ श्रुत्वेत्थं तान्गुरुश्चाह गच्छध्वं गौतमीतटे ॥ क्षेत्रं नंदीतटं तत्र शुकानंदोस्ति चात्मवान् ॥ ७३ ॥ मत्तो नान्यः स एवाहं तं भजध्वं हि मां यथा ॥ लप्स्यथाऽथात्मतां तस्मात्साधुरुक्त्वेत्यगादिवम् ॥ ७४ ॥ मृतेः काश्यां मोक्षोऽगादि यदिह यस्यास्त्यणु कृतं त्वभुक्तं चेद्दंडं भजति स पुमान् भैरवकृतम् ॥ श्रुतिर्ज्ञानान्मोक्षं वदति न च तत्सद्गुरुमृते तदाप्तं यस्मात्तत्स्थितिनिकटमृत्याऽप्यजननम् ॥ ७५ ॥ इदं नागोरायो मनसि स दधन्दैवविहितामपि त्यक्त्वा काश्यां मृतिमथ समाधिं परगुरोः ॥ ययावेवं भक्तोऽधिकमणु गुरोर्नैक्षति परं पुरः साक्षात्प्राप्तं हरिमपि हरं किं परमितः ॥ ७६ ॥ अथ ते गुरुसंस्थां च कृत्वार्चित्वा ययुस्ततः ॥ नंदीतटं हि पृच्छंतः शुकानंदगृहं मुदा ॥ ७७ ॥ नत्वा तं वृत्तमुक्त्वा स्वं चत्वारोथ तदाज्ञया ॥ शृण्वंतोऽखंडमात्मत्वं तस्थुः सेवाकृतो गुरोः ॥ ७८ ॥

गुरोः सकाशाज्ज्ञानप्राप्त्या तु जीवन्मुक्तिसुखं मरणोत्तरं विदेहकैवल्यं च प्राप्यते । प्रारब्धभोगेन च प्रतिबंध उभयत्र समानोपि गुरुभक्तस्याभोक्तृत्वनिश्चयेन प्रतिबंधाभासो भवतीति गुरुभक्तैर्ज्ञातव्यमिति भावः ॥ ७५ ॥ दैवेन विहितां प्राप्तामपि काश्यां मृतिं त्यक्त्वाऽथ परमगुरोः समाधिं प्रति ययौ । मरणार्थमिति शेषः । एवं गुरुभक्तो यो गुरोः परं भिन्नं साक्षात्प्राप्तं हरिं हरमपि गुरोरधिकं अणु क्षणमपि न पश्यति । सः इतो हरिहरात्परं अन्यं पुरुषं गुरोरधिकं पश्यतीति किं वाच्यम् । सर्वरूपं गुरुमेव पश्यतीति भावः ॥ ७६ ॥ अथ ते शिष्याः गुरुसंस्थां गुरुसमाधिम् ॥ ७७ ॥ तं शुकानंदम् । स्वकीयं वृत्तं

गुरुसेवादिकम् । सेवाकृतः सेवाकर्तारः ॥ ७८ ॥ अथ देशिकेंद्रस्य भाग्यनगरगतं वृत्तांतमाह चिंतामणिरित्यादि यावत्सर्गसमाप्ति । शिवायाः कन्यायाः परं पतिं द्रष्टुं श्रिये धनादिप्राप्त्यर्थं च अद्य संप्रति मया भाग्यपूर्गम्यते । भाग्यपुरं गच्छामीत्यर्थः ॥ ७९ ॥ तत्र भाग्यपुरे विहारिणं चंदुलालनामकं श्रेष्ठाधिकारिणं सचिवत्वाधिकारिणं स्वसखं विष्णुरूपं यतः याचकेभ्यो बहुवित्तप्रदं स्मृत्वाऽऽज्ञां दत्तवानित्यर्थः ॥ ८० ॥ सुतं चिंतामणिं अनुगच्छति तं अयोजयत् । तेन सह गंतुमाज्ञापितवानित्यर्थः ॥ ८१ ॥ रामचंद्रेण कृतं अध्वनि कार्यं वस्त्रक्षालनपाकामान्नानयनादिकं यस्य सः शिष्यैरन्यैश्च तत्र तत्र पूजितः सन् राजधानीं ययौ ॥ ८२ ॥ नंदीतटस्थोपि शुकानंदशिष्यो नागेंद्रनामा कश्चिदत्र भाग्यनगरे आर्येभ्यः श्रेष्ठेभ्यः सकाशाद्धनेच्छयाऽवसत् ।

चिंतामणिः कचिन्नाथं रहः प्राह शिवोचितम् ॥ वरं द्रष्टुं श्रियेप्यद्य भाग्यपूर्गम्यते मया ॥ ७९ ॥ श्रुत्वेदं चाह गच्छेति स्मृत्वा तत्र विहारिणम् ॥ श्रेष्ठाधिकारं स्वसखं याचकामितवित्तदम् ॥ ८० ॥ रामचंद्रं गुरुर्वीक्ष्योद्योगिनं कार्यकोविदम् ॥ गुरुभक्त्यात सिद्धिं चायोजयत्तं सुतानुगम् ॥ ८१ ॥ गुरुं नत्वा सदश्वस्थो रामचंद्रेण देशिकः ॥ कृताध्वकार्यैः शिष्यान्यार्चितोऽगात्क्षिति पस्थितिम् ॥८२॥ नंदीतटस्थोप्यवसद्धि शिष्यो नागेंद्रनामाऽर्यधनेच्छयात्र ॥ योऽब्देऽब्द एवात्मदतुष्टये स्वं चाप्रेषयत्स्वावधि भिक्षु कोपि ॥ ८३ ॥ तेनाभवच्चाल्पविदापि वित्सु ख्यातिर्गुरोः सुभ्रमताऽऽर्यपुर्याम् ॥ आसीत्क्वचित्कीर्तनमार्यगेहेऽत्राहूत आर्येष्वथ देशिकश्च ॥८४॥कथाकृतोक्तेष्वमितेष्वशुद्धश्लोकेषु तेषामवदत्सदर्थम् ॥ श्रुत्वा कथाकृन्मुदितस्तथान्ये न पंडिताश्चापुरिहाल्पगंध्रम्॥८५॥

योऽब्देऽब्दे प्रतिवर्षमात्मप्रदस्य शुकानंदगुरोः संतोषार्थं स्वयं भिक्षुकोपि स्वावधि यथाशक्ति स्वं धनं प्रेषितवान् ॥ ८३ ॥ तेनाल्पविदाऽल्पविद्यावतापि आर्यपुर्यां श्रेष्ठराजधान्यां भ्रमता नागेंद्राख्येन हेतुना वित्सु विद्वत्सु गुरोर्विख्यातिरभवत् । अथ कचिच्छ्रेष्ठगृहे कीर्तनमासीत् । अत्र कीर्तने आर्येषु श्रेष्ठविद्वत्सु आहूतेषु देशिकश्चाहूतः । गृहस्वामिनेति शेषः ॥ ८४ ॥ अथ तत्र कीर्तने बहुषु अशुद्धश्लोकेषु कथाकृता हरिदासेनोक्तेषु सत्सु तेषां श्लोकानां सदर्थं उत्तमार्थमवदत् । देशिकेंद्रइत्यनुवृत्तिः । तं सदर्थं श्रुत्वा कथाकृत् हरिदासः प्रमुदितस्तथान्ये च श्रोतृजना मुदिता बभूवुः । पंडिताश्च इह देशिकोक्तार्थे

अल्पं रंध्रं शब्दार्थदोषं न प्रापुः ॥ ८५ ॥ अथ कथासमाप्तौ कश्चित्कविराशीर्वादपरं तस्य नामयुक्तं स्वकृतं काव्यं पद्यमिति यावत् । पत्युर्गृहपतेः संतोषाय प्राह । तस्यार्थं सद्य एव कविर्नृपाणां पंडितानां चाग्रभागे उवाच उक्तवान्॥८६॥तदेव पद्यमाह भक्त्येति । त्वं कृष्णचरणे केवलया भक्त्या निमित्तभूतया प्राप्तभाग्योसि । अत एव नाम्ना केवलकिसन् एव गदित उक्तोसि । सर्वजनैरिति शेषः । कृष्णभक्ते त्वयि कृष्णनाम बहु शोभत इत्यर्थः । च पुनस्ते तव सदा जय आस्तां भवतु । हस्त्यश्वसेवककोशधान्यसुगवां वृद्धिरास्ताम् । असाध्ये कर्मणि सिद्धिरास्ताम् । उत उत्कृष्टा तनुर्यस्य स चासौ पटुः कुशलस्तस्य तव सत्पात्रे यद्दानं तस्मिन्प्रीतिश्चास्ताम् ॥ ८७ ॥ एतत्पद्यस्यार्थं श्रुत्वा यजमान आह । श्रीकृष्णचरणभक्त्या मे मह्यं सर्वमैश्वर्यं प्राप्तमिति त्वया

कथासमाप्तावथ कश्चिदाह स्वं काव्यमाशीःपरमेव पत्युः ॥ तोषाय तन्नामयुतं तदर्थमुवाच सद्यो नृपपंडिताग्रे ॥ ८६ ॥ भक्त्या केवलया हि कृष्णचरणे त्वं प्राप्तभाग्योऽधुना नाम्ना केवलकृष्ण एव गदितश्चास्तां जयस्ते सदा ॥ हस्त्यश्वानुगकोशधान्यसुगवां वृद्धिः सुपुत्रागगोऽसाध्ये कर्मणि सिद्धिरुत्तनुपटोः सत्पात्रदाने रतिः ॥ ८७ ॥ श्रुत्वार्थं यजमान आह गदितं कृष्णांघ्रिभक्त्याखिलं प्राप्तं मेथ किमाशिषा यदमलं भक्त्यैव लभ्यं न तत् ॥ चोक्तं श्रीगुरुणाथ तच्च चरमे पादेस्ति सत्येव के सन् श्रीट् पात्रमदोक्षदानमिह ते प्रीतिः सदास्तामिति ॥ ८८ ॥ श्रुत्वार्थमित्थं यजमान आह पुराणिकं स्वं निकटस्थमुच्चैः ॥ बह्वस्ति ते व्याकरणं हि किं तल्लघ्वो हृदो बाणसमोयमर्थः ॥ ८९ ॥

गदितं उक्तमस्ति । अथाशिषा किं न किमपि प्राप्यत इत्यर्थः । यद्भक्त्या लभ्यं तदैश्वर्यमाशिषा न लभ्यते । एवं च तवाशिषो वैयर्थ्यं स्यात् । अथ तत् आशिषालभ्यत्वं चरमे एतत्पद्यस्यांत्यपादेस्तीति च गुरुणा देशिकेंद्रेणोक्तं तदेवाह सतीत्यादिना । के ऐश्वर्यसुखे सत्यपि येन तवैश्वर्यसुखं प्राप्तं स एव श्रीट् विष्णुरेव सत्पात्रमस्ति । अदोक्षदानं अमुष्मै इंद्रियार्पणं इह जन्मनि तव प्रीतिश्चास्ताम् । तथाच पूर्वजन्मकृतभक्त्या तव सर्वैश्वर्यप्राप्तिर्यद्यपि तथापि ऐश्वर्यमग्नस्य तव इदानीमपि हरिस्वरूपे सत्पात्रे भक्तिरस्त्विति आशीर्वादफलमित्यर्थः ॥८८॥ इत्थं देशिकेंद्रकृतं अर्थं श्रुत्वा यजमानः समीपस्थं स्वकीयं

पुराणिकं प्रति उच्चैः प्राह । तव तद्याकरणं बहु अस्ति । तत् किम् । न किमपि उपयोगि । हि यतः बाणसमोयं देशिकेंद्रप्रोक्तोर्थो मम हृदो मनसः । अन्यत्र हृदयस्य लग्नोभवत् । सम्यक् निश्चित इत्यर्थः ॥ ८९ ॥ स यजमानो देशिकं वस्त्रादिभिः पूजितवान् । अथ कश्चिच्छूद्रो यतिः गोसावीति भाषाप्रसिद्धः । कथां श्रोतुमागतोभवत् । स इममर्थं निशम्य एषः देशिकेंद्रः मम गुरुः आस्तामिति हृदा मनसा प्राह ॥ ९० ॥ अतः कीर्तनस्थानात्सर्वे स्वस्वगृहं प्रापुः । अन्येद्युः स च यतिर्देशिकेंद्रं शरणं गत्वा तस्माच्छिवमंत्रं जग्राह । सः नाम्ना गिरियुक्चंद्रकांतिः भाषया महितापूगिरिरासीदित्यर्थः ॥

सोऽपूजयद्देशिकमंशुकाद्यैः शूद्रोथ कश्चिद्यतिरागतोभूत् ॥ श्रोतुं कथां सोर्थमिमं निशम्यास्तां मे गुरुर्द्येष हृदेत्यवोचत् ॥ ९० ॥ स्वस्वास्थितिं प्रापुरतोऽखिलाश्चान्येद्युः स गत्वा शरणं यतिश्च ॥ श्रीदेशिकं शैवमनुं च तस्माज्जग्राह नाम्ना गिरिचंद्रकांतिः ॥ ९१ ॥ नित्यं भक्त्या ययौ श्रोतुं स्वानुभूतिं गुरोर्मुखात् ॥ श्रद्दधे देशिकेत्यंतं मान्योप्येष नृपादिषु ॥९२॥ कृष्ण एवावतीर्णो यः कोपि तं न विदुर्जनाः ॥ राजमंत्री स्वतंत्रः स चंदुलालेतिविश्रुतः ॥९३॥ कारितं दर्शनं तस्य यतिना देशिकाय वै ॥ दर्शनादेव तुष्टोभूच्चंदुलालः स देशिकम् ॥ ९४ ॥ स्वीयतां दीयते नित्यं धनाद्यं यद्यथोचितम् ॥ इत्युक्त्वाज्ञापयद्दातुं स्वीयांश्चावार्यतां गुरोः ॥ ९५ ॥ दर्शनार्थं क्वचित्तस्य गच्छत्यात्मपरो गुरुः ॥ देशिकेऽस्याभवच्छ्रद्धाऽनीहत्वाद्दतवाक्यतः ॥ ९६ ॥ मुहुरन्यान्विदश्चेत्थमवदद्राजमंत्र्यसौ ॥ युष्मत्सदृशमेतैः किं ह्यसत्यं प्रोच्यतेखिलम् ॥ ९७ ॥ देशिकोक्त्याकरोदेषोऽन्येषां कार्याणि वै द्रुतम् ॥ देशिकं चावदत्त्वित्थं त्वमन्यार्थं सदैव माम् ॥ ९८ ॥ ब्रूषे नैवात्मकार्यार्थं श्रुत्वेत्थं देशिकोब्रवीत् ॥ यद्यद्व्ययार्थं याच्यं मे दीयते तत्त्वयांचया ॥ ९९ ॥

॥ ९१ ॥ एषः शूद्रयतिः ॥ ९२ ॥ स्वतंत्रः अपराधीन आसीत् ॥ ९३ ॥ स देशिकमित्युत्तरान्वयि ॥ ९४ ॥ स्वीयान् सेवकान् गुरौ अवार्यतां अनिवार्यतां चाज्ञापयत् ॥ ९५ ॥ निस्पृहत्वेन सत्यवाक्येन च अस्य सचिवस्य विश्वासो जातः ॥ ९६ ॥ विदः पंडितान् । एतैः देशिकैः आदराद्बहुवचनम् । अखिलं सर्ववचनम् ॥ ९७ ॥ त्वमित्यादि परान्वयि ॥ ९८ ॥ त्वं तु सदैवान्यार्थं अन्येषां कार्यार्थं मां प्रति ब्रूषे आत्मकार्यार्थं न ब्रूषे ।

तत्र किं कारणमित्यर्थः । यद्यद्यर्थं निर्वाहार्थं मया याचितुं योग्यं तत्तत्त्वयाऽयांचया यांचां विना दीयते । अतो मयाऽऽत्मकार्यार्थं किमपि नो याच्यत इत्यर्थः ॥ ९९ ॥ तत्र भाग्यनगरेऽनेकमासपर्यंतं स्थितोऽभवत् । सचिवस्य दर्शनमेव तस्य नाभूत् । कुतो भाषणादीति । अथ देशिकस्तस्य दर्शनं सन्मानेनाकारयत् । देशिकवचनेन तस्य सचिवदर्शनं जातमित्यर्थः । अथ देशिकस्तस्य रघुनाथदेवस्य पुत्राय शिवानाम्नीं स्वकन्यां दातुं मनसा इच्छति । इच्छितवान् ॥ १०० ॥ देशिकेंद्रेण उक्तं तत्कन्यादानं मेने अंगीकृतवान् । अथ स शूद्रयतिर्मंत्रिपुरत ऊचे । देशिकेंद्रकन्याविवाहमिति शेषः । सोपि मंत्री प्राह । यस्तस्मिन् व्ययः व्ययार्थं धनं तदहं दास्ये । यतिश्च गुरुमेत्य वक्ति । सचिवोक्तं कथितवान् । स च चिंतामणिः

इत्थं भाग्यपुरस्थिते गुरुवरे श्रीभास्करार्यस्य वै दौहित्रो रघुनाथदेव इति तत्रानेकमासस्थितः ॥ नाभूद्दर्शनमेव तस्य सचिवस्याकार यद्देशिकः सन्मानादथ दातुमिच्छति हृदा तत्सूनवे स्वां शिवाम् ॥१००॥मेने तद्रघुनाथदेव उदितं यद्देशिकेनाथ स प्रोवाचाशु यतिश्च मंत्रिपुरतः सोप्याह यस्तद्व्ययः ॥ दास्ये तं यतिरेत्य वक्ति च गुरुं सोऽप्रेषयत्स्वानुगं नंदीग्राममपत्यतोत्र शुभकार्यार्थं जयंत्यागमे ॥ १ ॥ पत्रं वीक्ष्य विनायको गुरुरथो सापत्यदेवीं निजैर्भाग्यं धाम नियोजयत्यथ गृहे स्थातुं ह्युदास्याप सः ॥ शिष्याढ्यो निरगात्पथाणुगतितः सत्पंढरीं शुश्रुवुः पृष्ठेन्येस्य च वेणुनूपुररवौ तन्निर्गमादास्थितेः ॥ २ ॥ यावद्भीमरथीतटं गुरुरगात्तावद्ध्रुवं शुश्रुवुर्नो शिष्याश्च ततः किलेति स गतो नाथः पुरीं पंढरीम् ॥ भाग्याख्यं नगरं समानयति सत्कार्याय चिंतामणिस्तातार्घ्यं ससुतं सभार्यमथ तत्राभूद्विवाहो विधेः ॥ ३ ॥

स्वानुगं स्वसेवकं अपत्यतः अपत्यैः सह जयंत्याः विवाहकार्यार्थं अत्र भाग्यनगरे आगमनविषये नंदीग्रामं प्रेषितवान् ॥ १ ॥ अथ विनायको गुरुः पत्रं दृष्ट्वा अपत्यसहितां देवीं जयंत्यंबां निजैः शिष्यैः सह भाग्यं धाम भाग्यनगरं प्रति गंतुमिति शेषः । नियोजयति आज्ञापितवान् । अथ शुक्लानंदो गृहे स्थातुमुदासीन आस हि । ततः शिष्ययुक्तः शुक्लानंदः पथा मार्गेण अणुगतितः अल्पगमनेन दिव्यपंढरीं प्रति निरगात् । तदाऽन्ये शिष्याः अस्य गुरोः पृष्ठदेशे तस्य निर्गमादारभ्य निवासस्थितिपर्यंतं वेणुनूपुरयोः शब्दौ शुश्रुवुः ॥ २ ॥ भीमरथी चंद्रभागा तस्यास्तटं यावत् तावत् शुश्रुवुः । ततः

परं न शुश्रुवुः किल । इति प्रकारेण स नाथः पुरीं पंढरीं गतः । अथ चिंतामणिः सपुत्रं सभार्यं तातस्य पितुरग्र्यं ज्येष्ठबंधुं स्वपितृव्यं भालचंद्राख्यं सत्कार्य विवाहार्थं भालक्याः सकाशात् भाग्यनगरं प्रति समानयति । आनीतवान् । अथ तत्र विवाहो विधेः विधिनाऽभवत ॥ ३ ॥ सर्गोक्तां कथां संक्षेपेण कथयन् श्रवणफलमाह । पुण्यादिति । पुण्यनगरसकाशात सप्तशृंगपर्वतगतदेवीदर्शनं स्तुतिं च सद्यतेः सतः यतेः नारायणसंगं भाषणं च आर्यवर्यसदने मल्लारिश्रोत्रियगृहे चिंतामणेर्वासं नंदीग्रामगमनं मनोर्मंत्रस्य ग्रहणं पूर्णाभिषेकमिति यावत् । तन्मि * य पांडुरंगाख्यस्य नैस्व्योद्धृतिं दारिद्र्यहरणं अपत्योद्भवं धरणीधरादिपुत्रजननं आर्यपूर्गेतिकथा भाग्यनगरगमनचारित्रं च श्रुत्वा सर्वं इच्छितं प्राप्नुयात् न इति शेषः ॥ १०४ ॥ इति श्रीगुरुपरंपराच

पुण्यात्सप्तविषाणपर्वतगतांबिकास्तुती सद्यतेः संगं भाषणमार्यवर्यसदने वासं हि चिंतामणेः ॥ नंदीग्रामगतिं मनोर्ग्रहणमेतन्मित्रनैस्व्योद्धृतिं चापत्योद्भवमार्यपूर्गेतिकथां श्रुत्वाखिलं चाप्नुयात् ॥ १०४ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे देशिकेंद्रकथावर्णनं नामैकपंचाशत्तमः सर्गः ॥ ५१ ॥ श्रीमयूरेश्वर उवाच ॥ आसीत्प्रसिद्धयतिरत्र च पौंडरीकेऽहोरामवागनिशमात्मरतोतिशिष्यः ॥ तस्माद्विनायकगुरुर्जगृहेथ दीक्षां संन्यासिनश्च विधिना बुधरामतीर्थात् ॥ १ ॥ स्थित्यास्य योगपटमाह गुरुश्च सच्चित्सुखानंदतीर्थमिति वीक्ष्य महानुभावम् ॥ नूत्नं यतिं शरणमेत्य विदोपि पौराः शास्त्रैरतर्क्यमुरुधात्मपदं त्वपृच्छन् ॥ २ ॥

रित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां देशिकेंद्रचरित्रे एकपंचाशत्तमः सर्गः ॥ ५१ ॥ उद्विपंचाशके प्रोक्तं त्रिगूर्ध्वशतपद्यतः । गुरुपत्रं मयूरेशो जन्म चात्मस्थितिर्गुरोः ॥ ५२ ॥ अथ देशिकेंद्रकृतपत्रं वर्णयन् शुकानंदस्य पंढर्यां वृत्तांतमाह । आसीदित्यादिभिः षड्भिः । अत्र पौंडरीके पंढर्यां आत्मरत आत्मनिष्ठः प्रसिद्धो यतिरासीत् । अनिशं अहोरात्रं अहोरामेति वाक् यस्य बहवः शिष्या यस्य तस्मात्सकाशाच्छुकानंदगुरुर्दीक्षां संन्यासदीक्षां जगृहे । विधिना गृहीतवान् । किंभूतात्संन्यासिनः बुधात् रामतीर्थाभिधात् ॥ १ ॥ स्थित्या आचरणेन महासामर्थ्यवंतं दृष्ट्वा गुरुः रामतीर्थाख्योऽस्य शुकानंदस्य सच्चिदानंदतीर्थमिति योगपटं संन्यासनाम प्राह । पौराश्च विदो विद्वांसो नवीनयतिं शुकानंदं शरणमेत्य शास्त्रविचारैरतर्क्यं आत्मनः पदं स्थान

मात्मज्ञानं बहुधा अपृच्छन् ॥ २ ॥ ये योगिनोपि कविलं ब्रह्मरंध्रं तद्गतचंद्रात् गलदमृतं निजेष्टे स्वेष्टदेवतायां सुषुम्नानाड्या अर्पणार्थं ह्यपृच्छन् । ये चान्ये तदीयचक्रे गणेशादीनां मूलाधारादिचक्रे अनया नाड्या आनीय अक्षितः नेत्रद्वारा बहिरपि इह शिलाद्ये पाषाणादिरूपे स्वेष्टदेवतायां तया नाड्याऽस्यामृतस्यार्पणमपि इत्यन्ये शिष्याः अपृच्छन् । सूक्ष्मयोगगतिं पृष्टवंत इत्यर्थः ॥ ३ ॥ यत्तैः पृष्टं तत्सर्वं गुरुः शुकानंदस्तान् पृच्छकान्प्राह । यत्किंचिदुपनिषदि योगशास्त्रेपि कैरपि किंचिन्न श्रुतं तत् केवलं गुरुमुखैकवेद्यं प्राहेत्यर्थः । एकदा स्वकं आत्मसुखं निशम्य रहसि गुप्तं यथास्यात्तथा गुरुं

ये योगिनः कविलचंद्रसुधां निजेष्टे नाड्याऽर्पणार्थमनयैव तदीयचक्रे॥आनीय चाक्षित इहास्य तथा शिलाद्ये स्वेष्टेऽर्पणं बहिरपीति परे ह्यपृच्छन् ॥ ३ ॥ पृष्टं गुरुस्त्वखिलमाह तदेव तान्वै नेषच्छुतं श्रुतिशिरस्यपि योगसूत्रे ॥ गुप्तं निशम्य रहसि स्वकमेकदा ते नेमुर्गुरुं चरणयुग्ममथात्यजंतः ॥ ४ ॥ पप्रच्छुरेनमपरेऽमितसाधनानि मंत्रांश्च कर्मठनराः शुभकर्मतत्त्वम् ॥ सर्वांश्च तोषयति सद्गुरुरिच्छितोक्त्या ह्यात्मैव सर्वजगतः प्रियकृन्निजोक्त्या ॥ ५ ॥ शुच्यूर्जविष्णुतिथिमध्यगमाश्चतुष्के ये यात्रिणस्त्विह वसंत्यमिताः स्पृहोनाः ॥ ते नित्यमेत्य गुरुमात्ममुदं प्रणेमुः कृष्णं स्थितं मुनिनृपा इव वै प्रभासे ॥ ६ ॥ भूत्वा यतिर्गुरुरभूत्किल पंढरीस्थः पौरैर्हि यात्रिभिरखंडितवंदितांघ्रिः ॥ ज्ञात्वेति यात्रिवचसा वदति स्वचित्ते चिंतामणिर्न गृहमेति गुरुर्यतित्वात् ॥ ७ ॥

नेमुः । अथ चरणयुग्मं अत्यजंतः गृह्णंत इत्यर्थः। परेऽन्ये बहुसाधनानि स्वेष्टसाधनानि अपृच्छन् । ये सुधियः कर्मठास्तेपि निर्मलं कर्मतत्त्वं कर्मसिद्धांतमपृच्छन् । सद्गुरुश्च तान् सर्वान् इच्छितवचनेन संतोषयति संतोषितवान् । हि यतः गुरुरूप आत्मैव सर्वजगतः निजोक्त्या स्वात्मप्रतिपादकवचनेन प्रीतिकर्ता भवति ॥४॥५॥ आषाढकार्तिकयोः ये विष्णुतिथी एकादश्यौ तयोर्मध्यगते मासचतुष्के ये यात्रिणो बहवो निस्पृहा इह पंढर्यां वसंति । ते आत्मनि मुत् प्रीतिर्यस्य तं आत्मैकतुष्टं गुरुमेत्य प्रभासे स्थितं श्रीकृष्णं प्रति मुनय इव नृपा इव प्रणेमुः ॥ ६ ॥ गुरुः शुकानंदः संन्यासित्वहेतोर्गृहं

प्रति नैति नैष्यतीति चिंतामणिः स्वचित्ते वर्तते । चिंतितवानित्यर्थः ॥ ७ ॥ तं गुरुं विना गृहादिकं मम सौख्याय भवति किम् । यथाऽन्नं विना सुवर्णादिकं सौख्याय भवेत्किम् । अपि तु न भवेदेव । तथा गुरुं विना सर्वं मम दुःखहेतुर्भविष्यतीत्यर्थः । यद्यपि एष गुरुर्मम हृदयं जानाति तथापि देहबुद्धिरहं सुविदे सुज्ञानाय तस्मै गुरवे पत्रं प्रेषयामि ॥ ८ ॥ इत्युक्त्वा स चिंतामणिरखिलेषु घटेषु दीप्त्या प्रकाशरूपेण या व्याप्तिस्तया रवेरिव स्ववेत्तुरात्मज्ञस्य

किं तं विना गृहकलत्रसुतादिकं मे सौख्याय हेममुखमन्नमृते यथा स्यात् ॥ जानाति मे हृदयमेष तथापि पत्रं संप्रेषयामि सुविदे तनुधीः किलाहम् ॥ ८ ॥ उक्त्वेति पत्रमलिखच्छ्रुतिसिद्धसच्चित्स्वानंदतात्रिपदनामसदर्थनत्या ॥ द्रष्टुंपदेत्रिविधसंस्तुतितःस्ववेत्तुर्व्याप्त्याघटेष्विवरवेरखिलेषुदीप्त्या ॥ ९ ॥ श्रीमदखंडानंताद्वयाभयनिरामयनिर्मायनिराकारनिराधारनिराभासपरिपूर्णनिराश्रयनिःसंगनिराभोगनिर्गुणगुणातीतनिर्मलनिष्कलपरमानंदानुभवैकगोचररजस्तमोमलासंस्पृष्टविस्पष्टशुद्धसत्त्वान् अष्टापदवच्चराचरालंकारप्रकारनिकराधारभासुरसत्तत्त्वान् प्रभाकरकरवज्जलाकारपरिदृश्यमाननिखिलजगदाकारसंस्फुरच्चित्तत्त्वान् आत्मवन्नीलपीतकाचोपनेत्रप्रतीतविचित्रजगदाविर्भूतप्रभूतानंदतत्त्वान्सकलमुनिजनवंद्यानवद्याविद्याहरणपट्वध्यात्मविद्यानुगृहीतदीनसत्त्वान्नामरूपाभेदबोधनाय परिगृहीतश्रीसच्चिदानंदनामकान्यतिवर्यान् हृदयारविंदे सदा धारयामि तानेव सर्वत्र पश्यामि सकलेंद्रियैः पूजयामि तद्गुणानेव शृणोमि तच्चरित्रमेव वाचा वदामि तत्कीर्तिमेव ख्यापयामि तद्रूपमेव ध्यायामि तद्गुणगणास्वादनेन तृप्यामि हृष्यामि तच्चरणारविंदानेव ॐ नमोनारायणायेति साष्टांगं प्रणमामि ॥ १० ॥

गुरोः पादौ विविधस्तुतिभिर्हेतुभूताभिः द्रष्टुं श्रुतिसिद्धं यत्सच्चिदानंदं ब्रह्म तस्य त्रिपदात्मकं यन्नाम सच्चिदानंदतीर्थ इत्यभिधा तस्याः सन् अर्थो यस्यां तया नत्या नमस्कारेण सह पत्रं लिखितवान् ॥ ९ ॥ तत्रादौ सच्चिदानंदरूपेण प्रणमति । श्रीमदितिगद्येन । अहं नामरूपयोरभेदबोधनाय परिगृहीतं सच्चिदानंदनाम यैस्तान् यतिवर्यान् आदराद्बहुवचनम् । हृदयारविंदे सदा धारयामीत्यादि वाक्ययोजना स्पष्टा । किंभूतान्यतिवर्यान् श्रीमत् अखंडं

परिच्छेदरहितं यतः अनंतं व्यापकं ततः अद्वयं सजातीयविजातीयस्वगतभेदरहितम् अत एवाभयम् । "द्वितीयाद्वै भयं भवतीति श्रुतेः" द्वैताभावान्निर्भयमित्यर्थः । अतः निरामयं अकलुषितं निर्मायं मायासंबंधरहितं मायिकस्याकारत्वात् । निराकारं देहाद्याकाररहितं निराधारं सर्वाधिष्ठानत्वादधिष्ठानरहितं निराभासं प्रतिबिंबाद्याभासरहितं परितः सर्वत्र पूर्णं निराश्रयं आश्रयरहितं निःसंगं अलिप्तं निर्गतः आ साकल्येन भोगो विषयस्पर्शो- यस्मात्तत् अत एव निर्गुणं गुणातीतं इंद्रियातीतं निर्मलं विवर्ताधिष्ठानत्वेन परिणामादिमलरहितं निष्कलं निरंशं परमानंदं निर्निमित्तानंदरूपं अनुभवैकगोचरं अनुभवैकसंवेद्यं रजस्तमोभ्यां ये मलास्तैरसंस्पृष्टं विशेषेण स्पष्टं नित्यसिद्धं यत शुद्धतत्त्वं ब्रह्म तद्रूपान् इत्थंतमेकं पदम् । अष्टापदवत् सुवर्णवत् चराचराः स्थावरजंगमा एवालंकारास्तेषां निकरस्य संघस्य आधारभूतं निराधारं आधाराधेयभावरहितं भासुरं प्रकाशमानं यत् सत्तत्त्वं सत्पदवाच्यं तत्त्वं तद्रूपान् सद्रूपानित्यर्थः । प्रभाकरस्य सूर्यस्य करवत् किरणवत् जलस्य मृगजलस्य आकार इव दृश्यमानो यो निखिलजगदाकारस्तस्मिन्संस्फुरत् यत् चित्तत्त्वं चैतन्यतत्त्वं

अज्ञोऽर्भकोऽहमपराध्यपतिश्च दीनस्त्यक्तुं कथं हृदपि मां करुणाविहीनम् ॥ योग्यं तवेति किमथो मयि दुःसुतत्वं यन्निर्निमित्तसदयोप्यसि निर्दयस्त्वम् ॥ ११ ॥

तद्रूपान् चिद्रूपानित्यर्थः । आत्मवन्नीलपीतस्य काचस्योपनेत्रेण उपाधिना प्रतीतं प्रतीयमानं देहाद्युपाधिना प्रतीयमानं यद्विचित्रं जगत् तस्मिन्नाविर्भूतं प्रादुर्भूतं प्रभूतं बहुलं यदानंदाख्यं तत्त्वं तद्रूपान् । "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इति श्रुतिप्रतिपादितपरमानंदरूपानित्यर्थः । सकलैर्मुनिजनैर्वैद्यान् । अनवद्या दोषरहिता च साऽविद्या तस्याः हरणे पटुश्च निपुणा याऽध्यात्मविद्या ब्रह्मविद्या तया हेतुभूतयाऽनुगृहीताः कृतार्थीकृताः दीनसत्त्वाः तापत्रयतप्तजीवा यैस्तान् हृदयारविंदे सदा धारयामि हृदि स्थितत्वेन भावयामीत्यादि स्पष्टार्थः ॥ १० ॥ एवं गद्येन प्रणम्य स्वस्मिन् अपराधित्वमाशंक्य क्षमापयति । अज्ञ इत्यादि सप्तभिः । अज्ञः ज्ञानहीनोऽर्भकोऽहं अपराधवान् अपतिः निरंकुशः दीनोऽनाथश्चाऽस्मि । एतादृशं मां परित्यक्तुं तवापि हृत् हृदयं करुणारहितं कथमासीत् । अथवा इति तव करुणाविहीनत्वं योग्यमस्ति किम् । यत् यतः मयि दुःसुतत्वं दुष्टपुत्रत्वमस्ति ।

अतस्त्वं निर्निमित्तं यथास्यात्तथा सदयः कृपायुक्तोऽपि निर्दयो भवसि । सर्वथा अहमेवापराधवानस्मीत्यर्थः ॥ ११ ॥ किं च यस्य पुरुषस्य यः स्वजः स्वभावजो गुणः स सर्वदा दृढोस्ति । यद्यपि मयि दुष्टस्वभावो दृढोस्ति । तथापि श्रीदेशिकेंद्रस्य गुरोः करुणा कदाचिदपि मुधा वृथा न भवति । श्रीगुरुकृपैव सदा फलतीत्यर्थः । अथवा मयि वाचालता बहुगर्ह्यवाक्त्वमस्ति । ततः कारणात् इति प्रकारः मम त्यागरूपः प्रकारो जातोस्ति किम् । किं वा वस्तुतः सर्वथाहमपराधवान् । किंभूतः अपारः भवसमुद्रपाररहितः संसारे निमग्न इति यावत् । अनंतापराधिनं मां दृष्ट्वा भवद्भिः पंढरीगमनं कृतमस्ति किमित्यर्थः ॥१२॥ पूर्वं ज्ञानोपदेशेन महत्कृपा मयि कृतेत्याह । अनंतोत्पत्ताविति । अनेकजन्मनि मंत्रजपतपोयोगाभ्यासभजनादिकं साधनजातं कृत्वापि यत्र स्वरूपे मनः ईषदपि न प्रविशति । "श्रवणायापि बहुभिर्यो न लभ्यः । शृण्वंतोपि बहवो यं न विद्युः" इति श्रुतेः अतिदुर्लभं स्वरूपज्ञानमस्तीत्यर्थः ।

यस्यास्ति यः स्वजगुणः स दृढः सदापि श्रीदेशिकेंद्रकरुणा न मुधा कदापि ॥ वाचालता मयि ततः किमिति प्रकारः किं वस्तुतोऽहमभवं ह्यपराध्यपारः ॥ १२ ॥ अनंतोत्पत्तौ वै मनुजपतयो योगभजनादिकं कृत्वापीषद्विशति न मनो यत्र मननात् ॥ प्रदत्तं तज्ज्ञेयं द्विविधमपि मूर्खाय खलु मे कृपेयं ते तुल्यः सुरतरुरपि स्याद्धि न यया ॥ १३ ॥ कृपापारावार स्थिरचरविहारिन्य तिवर परानंदाकारामितभवचलद्दुर्गतिहर ॥ असारं संसारं निरवधि सुततुं तरिवरे सदारस्याश्वास्तां मम तव पदे दर्शनपरे ॥ १४ ॥

तत् ज्ञेयं ज्ञातुं योग्यं द्विविधं अन्वयव्यतिरेकप्रकारं अहं ब्रह्म सर्वं ब्रह्मेत्यनुभवात्मकं स्वरूपं मननात् मननप्रकारेण मे मूर्खाय प्रदत्तं कृपया ते त्वया श्रीगुरुणाऽर्पितम् । ते इति परिणामेनोभयान्वयि । इयमेतादृशी तव कृपास्ति खलु । यया कृपया तुल्यः समः सुरतरुः कल्पद्रुमोपि न स्यात् हि । कल्पद्रुमो हि कल्पितवस्तुप्रदाने समर्थोपि अकल्पितं न ददाति । श्रीगुरोस्तु कल्पनातीतात्मवस्तुप्रदातृत्वेन न कल्पद्रुमसाम्यं भवति । तस्मात् अनुपमा तव कृपापि जातेत्यर्थः ॥ १३ ॥ श्रीचरणदर्शनेच्छया प्रार्थयति । कृपेति । हे कृपापारावार हे दयासमुद्र हे स्थिरचरविहारिन् स्थावरजंगमविश्वविलासिन् हे यतिवर हे परानंदस्वरूप अमितभवेषु बहुजन्मसु चलतां भ्रमतां जीवानां दुर्गतिं हरति यस्तस्य संबुद्धिः । असारं सुखलेशरहितं संसारं निरवधि अवका

शरहितं यथा तथातिशीघ्रमिति यावत् । तर्तुं तारिवरे श्रेष्ठनौकारूपे तव पदे सदारस्य सपत्नीकस्य मम आशु दर्शनपरे दर्शनयोग्ये आस्तां भवेताम् । सदारस्य मम श्रीचरणदर्शनं शीघ्रं देहीत्यर्थः ॥ १४ ॥ हे ईश कुटुंबवानहमेकवारं यथास्यात्तथा ईप्सितौ इष्टौ यौ सुपादौ श्रीचरणौ तत्र विलंबी दंडवल्लंबायमानस्त्वया कार्यः । सुकुटुंबं मां प्रति स्वचरणयोर्लीनं कुर्वित्यर्थः । हे योगिन् तव इदं मह्यं दर्शनप्रदानं दुर्घटं अशक्यं नास्ति । यूयं इच्छामात्रेण दर्शनं दातुं समर्था इत्यर्थः । अंतः मनसि उपायो नैव दृश्यते । कृत्यादिपरतंत्रा वयं त्वां द्रष्टुं न स्वतंत्राः । अतो यूयमेव मद्गृहमागत्य दर्शनं दातुं समर्था इत्यर्थः ॥ १५ ॥ किंच तवौदासिन्ये महती मम हानिः स्यादित्याह । चेद्यदि नर्तकः उदास्य उदासीनो भूत्वा पुत्रिकां न नर्तयति । तर्हि सा पुत्रिका अक्षिपात्रिका अणु अपि द्रष्टुं योग्या न भवति । नर्तकस्योदासीनत्वेन तत्कारितपुत्रिकानृत्यस्यापि औदासिन्यात् प्रीतिकरत्वं न भवति । अतो दर्शनायोग्यत्वं नृत्यस्य । हे गुरो तथा संन्यासग्रहणादुदासीनेन भवता त्वया निमित्तेन उत्तरोत्तरं तिर्यक् पशुपक्ष्यादिरूपा ऊर्ध्वं देवादिरूपा अधः मनुष्यादिरूपा वा मम गतिर्भवेद्भविष्यति किम् । त्वयि उदासीने मम का वा गतिर्भविष्यतीति न ज्ञायते इत्यर्थः ॥ १६ ॥ श्रीचरणदर्शने सति मम महान् लाभः स्यादित्याह । चेद्यदि तव पदे मे मह्यं सकृत् दृश्यतां द्रष्टुं योग्यतां अभियातः प्राप्नुतस्तर्हि अहं पश्यतां दृष्टिमतां जनानां मध्ये उसमः शिवसदृशोऽस्मि भवेयम् । " उकारः क्षत्रिये नेत्रे हरमौलो हरे हरौ " इति रत्नमाला । श्रीचरणदर्शनं मम यदि स्यात्तर्हि मां शिवमिव सर्वे जनाः पूजयिष्यंति इत्यर्थः । सर्वथा सर्वप्रकारेणाहं कृपणः श्रीचरणदर्शने सालसः ऊनः अत्यल्पः दुर्बलः सामर्थ्यरहितश्चास्मि । यद्यप्येवं तथापि श्रीमतां युष्माकमंघ्रियुगुलाच्चरणद्वंद्वात्प्राप्तं सद्बलं यस्य सः । श्रीचरणसामर्थ्येनैवाहं सामर्थ्यवानस्मीत्यर्थः ॥ १७ ॥

एकवारमहमीश कुटुंबी कार्य ईप्सितसुपादविलंबी ॥ नैव दुर्घटमिदं तव योगिन्नैव दृश्यत उपाय इहातः ॥१५॥ चेद्धि नर्तक उदास्य पुत्रिकां नर्तयत्यणु न साक्षिपात्रिका ॥ किं ममापि भवता भवेद्गुरो तिर्यगूर्ध्वमध उत्तरं गतिः ॥ १६ ॥ चेत्सकृत्तव पदे हि दृश्यतामेऽभियात उसमोऽस्मि पश्यताम् ॥ सर्वथा कृपण ऊनदुर्बलः श्रीमदंघ्रियुगुलाप्तसद्बलः ॥ १७ ॥

एवं क्षमाप्य ब्रह्मरूपेण स्तौति मूर्तिमित्यादिसप्तभिः । अथाहं सच्चिदखंडितां गुरोर्मूर्तिमंतरे मनसि ध्यायामि किल । या मूर्तिः सर्वं जडं प्रकाश्य प्रकटीकृत्य सर्वेषामंतरे हृदि विमला स्पष्टा भासते। यथा एकं सुवर्णं यद्यपि तथापि कुंडलादिनामभिर्नानामयं भवति । तथा श्रीगुरुपादपंकजम् अनामयं चिंतारोगनिवर्तक महं सदा ध्यायामि ॥ १८ ॥ एकोपि स्थूलो गुणः रज्जुः भ्रांत्या कदाचित् अहिसदृशः सर्पतुल्यो दृश्यते । स एवान्यसमये दंडाकृतिरीक्ष्यते । जनै रिति शेषः । तदा तस्य अहिता सर्पत्वं लुप्यते । सहसाऽऽकारद्वयेन बाधितः सः गुणः अणु किंचिदपि नाशगः नाशं प्राप्तो न भवति । किंतु यथा स्थित एव वर्तते । तद्वत् विश्वस्योत्पत्तिलयेषु वर्तत इति मया सद्गुरुश्रेष्ठस्त्वमेवोपासितोसि । रज्जुवदबाधितं तव रूपं पश्यामीत्यर्थः ॥ १९ ॥ एकापि रज्जु

मूर्तिं सच्चिदखंडितां किल गुरोर्ध्यायाम्यहं त्वंतरे या सर्वं हि जडं प्रकाश्य विमला भात्येव सर्वांतरे ॥ स्वर्णं चैकमथापि कुंडलमुखाख्याभिर्हि नानामयं तद्वच्छ्रीगुरुपादपंकजमहं ध्यायामि चानामयम् ॥ १८ ॥ एकः स्थूलगुणो यथाहिसदृशो भ्रांत्या क्वचिद्दृश्यतेसौ दंडाकृतिरीक्ष्यतेन्यसमये तस्याहिता लुप्यते ॥ आकारद्वयबाधितोपि सहसा नैवाण्वसौ नाशगो विश्वोत्पत्तिलयेषु सद्गुरुवरस्तद्वन्मयोपासितः ॥ १९ ॥ श्रीमत्सद्गुरुरेक एव जगदाकारस्तथा भासते भूत्वा स्त्रीपुरुषाकृतिर्नटवरस्तत्तत्समः काशते ॥ अंतर्निर्विकृतिर्निजानुभववान्साक्षाद्धि वेषे वसन्सर्वत्रापि गुरुं तथैकममलं ध्यायामि चार्थेऽत्र सन् ॥ २० ॥ गुरुवरो जगदाकृतिरीक्ष्यते ह्यसदिदं सति तत्र विभासते ॥ यदि समाधिसुखेऽस्य विभासता भवति तद्ध्यसतो जगतोऽस्तिता ॥ २१ ॥

यथाऽनेकरूपा भवति । तथा श्रीमद्गुरुरेक एव सन् जगदाकारो भासते । यथा नटश्रेष्ठः स्त्रीपुरुषाकृतिर्भूत्वा तत्तत्समः स्त्रीपुरुषादिसदृशः काशते दृश्यते । किंभूतः अंतः वेषमध्ये निर्विकृतिर्विकाररहितः निजानुभववान् स्वरूपस्मरणवान् वेषे कल्पितस्त्र्यादिरूपे साक्षाद्वसन् एतादृशोपि नटो बहुरूप इव दृश्यते । तथा एकममलमुपाधिविकाररहितं श्रीगुरुं त्वां प्रति अर्थे अर्थनिमित्तमत्र भाग्यनगरे सन् वर्तमानोप्यहं सर्वत्र जगति ध्यायामि । सर्वं गुरुरूपमेव पश्यामीत्यर्थः ॥ २० ॥ श्रीगुरुश्रेष्ठो जगदाकार ईक्ष्यते सुविचारवद्भिरिति शेषः । इदं सर्वमसत् तत्र सति सद्रूपेऽधिष्ठाने विविधरूपेण भासते । यदि समाधिसु

सुप्त्यादिसुखेऽस्य सर्वस्य विभासता प्रकाशमानता भवति । तर्हि असतो मिथ्याभूतस्य जगतः अस्तिता सद्रूपता भवति । समाधिसुषुप्त्यादौ जगतोऽविद्यमानत्वेन मिथ्यात्वमित्यर्थः॥ २१ ॥ अदः इदं अन्यत् भेदेन प्रतीयमानमपि जडमस्ति । अमुष्य एतस्य मतिर्ज्ञानं स्वपरविज्ञानं नास्ति । मतिकथा ज्ञानवार्ता पुरुषं पुरुषाभिमानिनं प्रति वृथा भवति । जडदेहतादात्म्यवतो ज्ञानवार्ता निष्फला भवतीत्यर्थः । इति हेतोः सदा एकरूपो गुरुरेव नानाकृतिः सज्ज्ञानाज्ञानादिविविधरूपोऽस्ति । क्वचेति । देशे काले वस्तुनि तदपरं तस्माद्गुरोरपरं भिन्नं वचः शब्दजातं वा कृतिरर्थजातं च नास्ति।वाच्यवाचकरूपो गुरुरेवेत्यर्थः ॥ २२ ॥ त्रिगुणरूपेण गुरुरेव भातीत्याह । सात्त्विकीति । अंतः हृदि या वृत्तिः स्फुरति । सा सत्त्वगुणात्मिकास्ति । सैव ततो राजसैरिंद्रियैस्तमोर्थगा तमोगुणात्मकविषयगामिनी भवति । अहो आश्चर्यं इयं त्रैगुणी त्रिगुणात्मिका गतिः प्रवृत्तिरल्पधियां जडमतीनां भवति । स्थूलधियां त्रिगुणप्रवृत्तिर्दृश्यते । ये संतः

जडमदोन्यदमुष्य न वै मतिर्मतिकथैव मुधा पुरुषं प्रति ॥ इति सदैकगुरुर्विविधाकृतिस्तदपरं न वचः क्व च वा कृतिः ॥ २२ ॥
सात्त्विकी स्फुरति वृत्तिरंततो राजसेंद्रियतमोर्थगा ततः ॥ त्रैगुणी गतिरहंधियामियं सद्धियां न च गुरोः पराव्ययम् ॥ २३ ॥ गुरुरविर्जगदंबुविभासको विमुखमूढमृगांतरनाशकः ॥ सुजनभक्तमनोजविकाशदो हृदय एव सदास्त्वघनाशदः ॥ २४ ॥

सद्गुरोः सकाशाद्धीः ज्ञानं येषां तेषां गुरुकृपाविलसितज्ञानदृष्टीनां गुरोः परं भिन्नं नास्ति । किंभूतं अव्ययं व्ययो नाशः स च जायमानस्यैव भवति । त्रिगुणात्मकं तु शशविषाणवत् अजातमेव । अतोऽव्ययमिति । यथोक्तं भगवता । “ ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ” इति । तस्मात्सर्वं गुरुकृपया गुरुरूपमेव भवतीत्यर्थः ॥ २३ ॥ एवं गुरोर्महत्त्वं यथाशक्त्युपवर्ण्य सदा गुरुस्मरणं प्रार्थयति गुरुरविरिति । गुरुरूपः सूर्यो जगद्रूपं अंबु मृगजलं तस्य विभासकः स एव विमुखाः अशरणीकृतगुरवस्त एव मूढमृगास्तेषामंतरं मनः नाशयति । विषयजललोलुपतया भ्रमयति सः । भ्रामको भवतीत्यर्थः । स एव सुजनानां भक्तानां मन एव कमलं तस्य विकाशप्रदो भवति । तथा मद्धृदये सदैव अघनाशं पापप्रणाशं प्रददाति सः।यद्वाऽघनाशं अज्ञानाभावं ज्ञानं प्रददाति सः श्रीशुकानंदोस्तु वर्ततु । तस्माच्छ्रीगुरोस्तव दर्शनं सदा हृदि भवति यद्यपि तथापि बहिस्त्वां द्रष्टुं मम मनोऽतितृष्णायुक्तमस्तीत्यर्थः ॥ २४ ॥

सन् अर्थो यस्मिन्तत् गृहसुतेन गृहस्थाश्रमजन्यपुत्रेण लिखितं पत्रं दृष्ट्वा सच्चिदानंदतीर्थः शुकानंदगुरुरग्रे स्थितं प्राह । हे शिष्य यतेर्मम गृहे वासो निंद्योऽस्तीत्याशंक्य चिंतामणिर्मांप्रति श्रुतिसमं श्रुतयः समाः यस्मिन् यथा भवति तथाऽनुभवेनालिखत् पत्रं प्रेषितवान् । एतादृशपुत्रस्य संगापेक्षया पुण्याश्रमेषु तीर्थाटनमधिकमस्ति किं अपि तु नाधिकं तस्मान्नंदीतटं गच्छामीत्यर्थः ॥ २५ ॥ इत्थं नाथः शुकानंदगुरुः नंदीतटं प्रति गमने मतिर्यस्य सः सद्भिः पंढरीस्थसत्पुरुषैः शिष्यात् शुकानंदशिष्यद्वाराऽश्रावि श्रुतः। गुरुर्नंदीतटं गच्छतीति वृत्तं श्रुतं यदा तदा सर्वैः ओकः शुकानंदः स्थानं

मयूरेश्वर उवाच ॥ दृष्ट्वा पत्रं सदर्थं गृहिसुतलिखितं सच्चिदानंदतीर्थः प्राहेत्यग्रस्थशिष्यं ह्यगदि मम यतेर्गेहवासोऽतिनिंद्यः ॥ इत्याशं क्यालिखद्यच्छ्रुतिसममनुभूत्यैव चिंतामणिर्मामीदृक्पुत्रस्य संगात्किमधिकमटनं तीर्थपुण्याश्रमेषु ॥ २५ ॥ इत्थं नाथो हि नंदीतटगमनमतिः सद्भिरश्रावि शिष्यादेत्यौको वस्तुमभ्यर्थित इह विनयात्सोत्यजत्पत्रमग्रे ॥ तेषां तैस्तद्विलोक्येत्युदितमथ सुतं त्वीदृशं सुज्ञमुज्झ्याऽत्रैव स्थेयं वचोदो गदितुमपि गुरौ नो समर्थाः स्म सर्वे ॥ २६ ॥ तत्रासीद्बालशास्त्री सकलबुधमतश्चात्मलब्ध्या नुभूत्यै येनानेकाश्च संतोऽमितमनुगृहणान्मानिताः सद्गुरुत्वात् ॥ त्रिंशत्संख्यांश्च पित्राप्यनुदिनमपि योऽनर्पयद्वै तथापि नैकस्मा ज्ञात्मतां सोऽलभदथ शरणं श्रीशुकानंदमाप ॥ २७ ॥

प्रति एत्य इह पंढर्यां वस्तुं वासं कर्तुं अभ्यर्थितः प्रार्थितस्तदा स शुकानंदस्तेषामग्रे पत्रं त्यक्तवान् । तैस्तत्पत्रं विलोक्येत्युदितं उक्तम् । इति किम् । ईदृशं सुज्ञं पुत्रं त्यक्त्वा त्वयात्रैव स्थातव्यं इति अदः वचनं गुरौ त्वयि त्वत्समीपे गदितुं वक्तुमपि वयं न समर्थाः स्मः । स्मेत्यव्ययं पत्रस्याश्चर्यरूपत्वादि त्यर्थः ॥ २६ ॥ तत्र श्रीशुकानंदशिष्य आसीदित्याह तत्रेति । आत्मप्राप्त्या या अनुभूतिस्तदर्थं येन बालशास्त्रिणाऽनेकसाधवः बहुमंत्रग्रहणेन सद्गुरुत्वेन मानिताः । यश्च पित्रा सह त्रिंशत्संख्यान्गुरूननुदिनमतर्पयत् । वै निश्चयेन । तथापि स एकस्मादपि गुरोः सकाशादात्मतामात्मभावं नालभत् । अथ

श्रीशुकानंदं शरणं प्राप्तः ॥ २७ ॥ तस्माच्छुकानंदगुरोरश्वरमगुरुश्रेष्ठाल्लब्धः आत्ममार्गो आत्मगतिर्यस्य स सन् अत्र नाथे श्रद्धे विश्वासं कृतवान् । नाथेन संन्यासे गृह्यमाणे सति तदर्थं संन्यासार्थं सः वित्तमन्नादिकं सर्वमपि ददौ । एवं भक्तः स बालशास्त्रीह पंढर्यां गुरुं वस्तुं अवदत् । अथ नाथस्तं वक्ति उवाच । इदं हि विश्वं मिथ्याऽस्ति । अखिलतः सर्वेभ्य इतरो भिन्न आत्माऽखिलस्थः सर्वगतोऽस्ति । अहमपि स आत्माऽस्मि । आत्मरूपस्य सर्वगतत्वात् कदाचिदपि तव मम च वियोगो नास्ति । अतस्त्वया मद्गमने निषेधो न कर्तव्य इति भावः ॥ २८ ॥ अग्रे प्रथमं स शुकानंदगुरुः नद्यां चंद्रभागायां स्नात्वा कृतविधिः कृतनित्यक्रियः पुंडरीकं श्रीयुक्तं रुक्मिणीयुक्तं पांडुरंगं चानमत् । ततो यतेरहोरामाख्यस्य संन्यासदीक्षागुरोराज्ञां कृच्छ्रेण

तस्माल्लब्धात्ममार्गश्चरमगुरुवराच्छ्रद्दधेऽत्रैव नाथे संन्यासे गृह्यमाणेऽखिलमपि स ददौ वित्तमन्नं तदर्थम् ॥ इत्थं भक्तः स वस्तुं गुरुमवददथो प्रार्थयंश्चात्र नाथस्तं वक्तीदं हि मिथ्याखिलत इतर आत्माखिलस्थोपि सोहम् ॥ २८ ॥ स्नात्वाग्रे पुंडरीकं कृतविधिरनमच्छ्रीयुतं पांडुरंगं यत्याज्ञां प्राप्य कृच्छ्रात्कृतनतिरखिलैः प्राप नंदीतटं सः ॥ पत्राज्ज्ञात्वाऽथ चिंतामणिरपि पितरं द्राक् दिदृक्षुस्त्वनाज्ञो राज्ञोऽथाप्रेषयत्प्राग्वृषतुरगनिजैर्देशिकार्थं जयंतीम् ॥ २९ ॥ तातोऽग्र्योऽपत्यभार्यायुगथ निजपुरं गंतुकामः सुवस्त्रैर्भ्रातृव्येणार्चितोऽस्माद्व्रजति पथि तदा लक्ष्मणश्चास संगे ॥ नासीत्क्रोशद्वये भोऽथ च तृषितसुताऽयाचदंबां तु नीरं सावोचद्भू हि तातं वदति तमपि तत्सोऽब्रवीन्नात्र वारि ॥ ३० ॥

प्राप्य अखिलैः कृताः नतयो यस्मै स नंदीतटं प्राप्तः । अथ चिंतामणिः पत्रद्वारा पितरं नंदीतटागतं ज्ञात्वा तं शीघ्रं दिदृक्षुरासीत् । अथ राज्ञः चंदुलालसकाशान्न आज्ञा यस्य सः अप्राप्ताज्ञः सन् प्राक् पूर्वं वृषभैरश्वैर्निजैः शिष्यैः सह जयंतीं स्वपत्नीं प्रति देशिकार्थं गुरुसेवार्थं प्रेषितवान् नंदीतटमिति शेषः ॥ ॥ २९ ॥ अथ भालचंद्रस्य शुकानंदभ्रातुर्वृत्तांतमाह तातोऽग्र्य इत्यादिसप्तभिः । अथ चिन्तामणेस्तातोऽग्र्यः पितृव्यः अपत्यभार्यायुक् स्त्रीपुत्रसहितः स्वनगरं गंतुकामो भ्रातृव्येण चिंतामणिना सुवस्त्रैः पूजितः सन् अस्माद्ग्राम्यनगराद्यदा व्रजति गच्छति । तदा लक्ष्मणाख्यः रामदीक्षितपिता संगे समागमे आसीत् ।

अथ कदाचित् क्रोशद्वये उदकं नासीत् । तदा तृषिता कन्या मातरं प्रति तत् उदकमयाचत् । सा च माता स्वतातं ब्रूहि जलं याचयति कन्यामेवाचत् । तं भालचंद्रमपि वदति कन्यायै जलं देहीति सोऽपि भालचंद्रोऽत्र तदुदकं नास्तीत्यब्रवीत् ॥ ३० ॥ अथ भालचंद्रस्य पूर्ववृत्तांतस्मृतिर्जातेत्याह । अश्वस्थ इति त्रिभिः । अश्वारूढो भालचंद्रः पादचारिणं पितुरुमापत्यानंदस्य शिष्यं लक्ष्मणं वदति स्म । मत्तोऽल्पः कनिष्ठोऽपि विनायकः आप्तसिद्धिरस्ति मयि किमपि तत् सिद्धिसामर्थ्यं नास्ति । पूर्वं कदाचित् आवां विप्रैः सहोत्तमविवाहं प्रतिगतौ । अथात्र विवाहे मितमल्पं धनादि लब्ध्वा जनैः सह निर्गतौ । तदा मार्गे ईषदपि अंभः उदकं नासीत् । तदा पांथाः तृषार्ता बभूवुः । मातृकट्यां स्थितः कश्चिल्लघुबालको मुमूर्षुरभवत् ॥ ३१ ॥ तस्य

अश्वस्थो भालचंद्रः पदगमिति जगौ लक्ष्मणं तातशिष्यं मत्तोल्पोऽप्याप्तसिद्धिर्मयि न किमपि तत्प्रागगतौ सद्विवाहम् ॥ विप्रैरावां हि लब्ध्वाऽत्र मितमथ जनैर्निर्गतौ चाध्वनीषन्नांभः पांथास्तृषार्ताः शिशुरभवदणुर्मातृकट्यां मुमूर्षुः ॥ ३१ ॥ माता क्रोशंत्यभूत्तानवद दतिघृणो द्वादशाब्दो विनेता चेत्स्यात्सर्वाक्षिरोधः क्षणमिह सुजलं दर्शयाम्याऽऽपिबंतु ॥ श्रुत्वा सर्वे तथासन् स लघुतरुतले भूस्थ पाषाणमेकं चोद्धृत्योज्झ्याह सर्वान् पिबत जलमिदं त्वाश्वनालस्यलभ्यम् ॥ ३२ ॥ उन्मील्याक्षीण्यथाल्पावट इह ददृशु स्तेमलं तोयमर्भायांबादौ पाययित्वाऽपिबदपि निखिलाः पूरयित्वाल्पपात्रे ॥ पाश्चात्या वीक्ष्य सत्रं जलमिह किमिति द्रागययुस्तावदश्मा गर्तं त्यक्तो विनेत्रा न जलमणु तदा तेऽल्पपात्रस्थमापुः ॥ ३३ ॥

माता च क्रोशंती आक्रोशकर्त्री अभवत् । तदातिदयालुर्द्वादशवर्षो विनायकस्तानवदत् । क्षणमात्रं सर्वाक्षिरोधः सर्वेषां नेत्रलापनं यदि भवेत्तर्हि इह निर्जलदेशे सुंदरं जलं दर्शयामि । अथ च सर्वे पिबंतु । इति श्रुत्वा सर्वे तथा आसन् पिहितनेत्रा बभूवुः । तदा स विनायकः लघुवृक्षस्याधोभागे भूमिस्थितम् एकं पाषाणमुद्धृत्य उज्झ्य त्यक्त्वा च सर्वान्प्राह । यूयं तु शीघ्रमिदं जलं पिबत । किंभूतं अनालस्यलभ्यं आलस्येन लभ्यं न भवति तत् । किंचिद्विलंबे सति उदकलाभो न स्यादित्यर्थः ॥ ३२ ॥ अथ ते सर्वेऽक्षीण्युन्मील्याल्येऽवटे गर्तेऽमलं जलं ददृशुः । तदा माताऽर्भकाय मुमूर्षवे आदौ जलं पाय

यित्वा स्वयं चापिबत्। निखिलाः सर्वेपि अल्पपात्रे जलं पूरयित्वाऽपिबन् । ततः पाश्चात्याः पश्चाद्गामिनो वृक्षाधः सर्वं जनसमुदायं दृष्ट्वाऽत्र जलमस्ति किम् इति शीघ्रं ययुः। तावत् विनायकेन जलगर्तेऽश्मा पाषाणो न्यस्तः। यदाऽणु अल्पमपि जलं नासीत्। तदा ते पश्चाद्गामिनोऽल्पपात्रस्थं जलं प्रापुः। अपिबन्नित्यर्थः ॥ ३३ ॥ इति अजलदेशे जलार्पणकर्तृत्वरूपं सामर्थ्यं वर्यें ज्येष्ठेऽपि मयि नास्ति। इदं भालचंद्रस्य वचनं श्रुत्वा तस्य पत्नी जीवा नाम्नी प्राह। इदं बंधोः श्रेष्ठत्वं त्वया इह वृथा कथितं मिथ्या एतदनृतमस्तीत्यर्थः । स भालचंद्रोऽत्रविषये साक्षिणो द्विशतं जनाः संतीत्यब्रवीत्। अथ लक्ष्मणस्तामवोचत् प्राह। इदं भालचंद्रोक्तं वचनं ऋतं सत्यमस्ति चेत् तर्हि तवाक्ष्यांध्यं अक्ष्णोरंधत्वं आस्तां भवतु । सा च तथा सत्ये वचसि ममांधत्वं भवतु

सामर्थ्यं नेति वर्येपि मयि वच इदं तस्य पत्नी निशम्या हेदं बंधोर्वरत्वं कथितमिह मुधा सोब्रवीत्साक्षिणोऽत्र ॥ प्राहाथो लक्ष्मणस्तां वचनमिदमृतं चेत्तवाक्ष्यांध्यमास्तां साचोचन्नेत्तथास्तां गदित इति वचस्यंधतां प्राप साशु ॥ ३४ ॥ प्राप्ताः कष्टान्नदीं ते जलमथ तृषिताश्चोत्तरंतः पपुर्वै जीवा मंदं स्वकन्यां वदति वद जलं क्काऽस्ति पात्रं च शीघ्रम् ॥ कन्या प्राहाग्रतस्तद्वदसि किमधुनांधेव वीक्ष्येंदुभालोऽसौ सत्यं भ्रष्टदृष्टिः सदनृतकथनात्सावदन्नेति भूयः ॥ ३५ ॥ तामाहाऽसौ वदर्तं न गतदृगिति साप्याह तं लक्ष्मणं स मिथ्येयं वक्ति नूनं वदति च स इमामंब ते वागृतास्तु ॥ मंदं जीवांध्यमाहावदद्रुत स इमां नासिकां घर्षयार्ये सांप्रि नस्थासितास्तामिति कृतमनयाश्चैव दृक्‌ चाथ लब्धा ॥ ३६ ॥

इत्यूचे। इति वचस्युदिते उक्ते सति सा शीघ्रमन्धत्वं प्राप ॥ ३४ ॥ अथ ते तृषिताः संतः कष्टेन नदीं प्राप्ताः । उत्तरंतोऽथादिश्य उत्तीर्यमाणाः जलं पपुः । तदा जीवाख्या मंदं शनैः कन्यां वदति। जलं क्काऽस्ति पात्रं च क्कास्ति इति। तत् शीघ्रं वद कथयेति । कन्या च प्राह । अग्रतस्तवाग्रभागे तज्जलं पात्रं चास्ति। त्वमधुनांधेव किं वदसीति। एवदृष्ट्वेंदुभालो भालचंद्रोऽवदत्। असौ मत्पत्नी सतः सत्यस्य विनायकनृत्तस्यानृतमिति कथनात् भ्रष्टदृष्टिः अंधाभवदिति। सा पुनः न अंधा नास्मीत्यवदत् ॥ ३५ ॥ तामसौ भालचंद्रः ऋतं सत्यं त्वं वद इत्यूचे। सापि अहं गतदृष्टिर्नास्मीत्याह।

स भालचंद्रो लक्ष्मणं प्राह । इयं मिथ्या वक्ति नूनमिति । स च लक्ष्मण इमां जीवाख्यां वदति । हेंब ते वाक् अहमंधा नास्मीति वाणी ऋता सत्या भवतु इति । अथ जीवा मंदं शनैरात्मनोंधत्वमाह । उत पुनः स लक्ष्मण इमामवदत् । हे आर्ये त्वं आत्मनो नासिकां घर्षय । सांप्रिस्थ्या भाषया सवाशेरपारिमिता सिता शर्करा आस्तां सर्वान्प्रत्यर्पयेति यावत् । इति लक्ष्मणवाक्यं श्रुत्वा अनया कृतं लक्ष्मणोक्तं नासिकाघर्षणं शर्करासमर्पणादि सर्वं आचारितम् । अथ तया शीघ्रं दृक् दृष्टिश्च लब्धा । एवं तेषां मार्गे वृत्तं जातमित्यर्थः ॥ ३६ ॥ तैः सर्वैर्भालकी प्राप्ता । ते भालकीं गता इत्यर्थः । इतः इतः परं भाग्यनगरस्थश्चिंतामणिः प्राह मनसीति शेषः । अज्ञस्य मम पत्रं दृष्ट्वा सपदि तत्कालं गुरुरस्मद्दयाढ्यः मयि दयायुक्तः सन् गेहं नंदीतटस्थं गृहं

प्राप्ता तैर्भालकीतः क्षितिपपुरगतः प्राह चिंतामणिर्मे ज्ञस्यावेक्ष्य पत्रं सपदि गुरुरगाद्गेहमस्मद्दयाढ्यः ॥ चेद्गेहं नो गतोहं पुनरपि लघु तीर्थानि यास्यत्यनीहो राजाज्ञां नैव दत्ते किमु झटिति गृहं गम्यतां तां विहाय ॥ ३७ ॥ इत्थं चित्ते विचिन्वन्नृपतिमुपगतश्चेति स प्राह राजन्प्राप्तो गेहं गुरुर्मे स्वगतिरपि शुकानंदनाथो निरीहः॥गच्छाम्येतद्दिदृक्षुः पुनरपि झटितीहाभियास्ये भवंतं राजाथोचन्नृपयानाद्गुरुरिह दययाऽऽयातु मेऽक्ष्णोः सुपुण्यात् ॥ ३८ ॥

प्राप्तोऽस्ति । अहं गृहं प्रति न गतश्चेत्तर्हि पुनरपि लघु शीघ्रं तीर्थानि यास्यति । यतः अनीहो निस्पृहः । राजा चाज्ञां नैव दत्ते । किं मया तां राजाज्ञां विहाय अगृहीत्वा झटिति गृहं प्रति गम्यतां गंतव्यम् । गुरुदर्शनं कथं भविष्यतीत्यर्थः ॥ ३७ ॥ इत्थं चित्ते विचिन्वन्धारयन् स चिंतामणिर्नृपतिमुपगतः सन् तं प्राह । हे राजन् स्वतंत्रो मम गुरुः शुकानंदनाथो निस्पृहो मम गृहं प्राप्तोऽस्ति । एतद्दिदृक्षुरेतस्य दर्शनेच्छावानहं गच्छामि । पुनरपि झटिति इह भवंतं प्रति अभियास्ये आगमिष्यामि । अथ राजा उवाच । तव गुरुर्नृपयानेनेह भाग्यनगरे मम नेत्रयोः सुपुण्येनायातु आगच्छतु । नृयानं प्रेषयित्वा गुरुं अत्रानयिष्यामीत्यर्थः ॥ ३८ ॥

भूयश्चिंतामणिस्तं वदति । इह गुरुर्नायास्यति । हि यतो निरीहो यः सदा आत्मानुभवसुखेन युक्तः सन् न अन्यस्य दृष्टिर्यस्मिन् स अन्यानवलोकितोस्ति । सोऽत्र नायास्यतीति । राजा च तं भूयः प्राह । खलु निश्चितं मम लिखितं पत्रं वीक्ष्यासौ शुकानंदः शीघ्रमागमिष्यति । यतोऽसौ मयि कृपावानस्ति । राज्ञः श्रीकृष्णावतारत्वेन शुकानंदस्य च सुदामावतारत्वेनोभयोर्मित्रत्वात्परस्परं कृपापात्रत्वमित्यग्रे वक्ष्यमाणत्वादिति भावः । इति नृपवचः सचिववचनाग्रे चिंतामणिर्नो वेत्ति न जानाति ॥ ३९ ॥ इति नित्यं चिंतामणिस्तमवदत् । तथा वदति । कदाचिदसौ चिंतामणिः प्राग्वत् आहं नंदीतटं गच्छामीति अवदत् ।

भूयश्चिंतामणिस्तं वदति गुरुरिहाऽऽयाति नो यन्निरीहश्चैकांते यः सदात्मानुभवसुखयुतो ह्यस्ति चानन्यदृष्टिः ॥ राजा तं चाह भूयः खलु मम लिखितं वीक्ष्य चायास्यति द्राङ् मय्यास्तेसौ कृपावानिति नृपवचनं वेत्ति चिंतामणिर्नो ॥ ३९ ॥ नित्यं चिंतामणिस्तं ह्यवददिति तथा प्रागिवासौ कदाचिद्विप्रः प्राप्तः सभां सल्लिखितमुपददौ मंत्रिणे देशलिप्या ॥ तावद्राजानुगोगात्सदसि नृपवरस्त्वा ह्वयत्येवमाहाग्रस्थे पौराणिके चावदति तमतिरुष्णाथमित्याह मंत्री ॥ ४० ॥ माहाराष्ट्री लिपिस्ते बुध किमवगतास्तीत्युवाचैष सोथो पत्रं त्यक्त्वा विदग्रे पठ वदति गृहीत्वाथ चिंतामणिस्तत् ॥ पैशाचीं तत्र चैक्षल्लिपिमवददसौ नोक्षितैवाजनैर्या वाच्या शीघ्रं कथं सावतु निजसुखकृन्मावितर्ह्रीः शुकार्यः ॥ ४१ ॥

तावत्कश्चिद्विप्रः सभां प्राप्तः सन् सल्लिखितं कस्यचित्सत्पुरुषस्य पत्रं देशलिप्या शुकं मंत्रिणे ददौ । तावच्च राजानुगो राजसेवक अगात् सदसि प्राप्तः । स च दूतः नृपवरो राजा त्वां प्रति आह्वयतीति एवं प्राह । तदाग्रस्थिते पौराणिके च [illegible] कथने पुराणं वदति सति त्वरावशात्तं प्रति अतिशयेन रुष्टः क्रोधो यस्य स मंत्री नाथं चिंतामणिं प्राह ॥ ४० ॥ हे बुध ते तव माहाराष्ट्री लिपिरवगतास्ति किम् । एवं चिंतामणिश्चावगतेत्युवाच । अथ स मंत्री वि दश्चिंतामणेरग्रे पत्रं त्यक्त्वा पठेति वदति । अथ चिंतामणिस्तत्पत्रं गृहीत्वा तत्र पत्रे पैशाचीं लिपिं भाषया 'मोडीति' प्रसिद्धां ऐक्षत् दृष्टवान् । असाव

वदत् मनसीति शेषः। या लिपिः आजनेः जन्मत आरभ्य नेक्षिता अवलोकिता नास्ति । सा शीघ्रं मया कथं वक्तव्या । अस्मिन् समये निजस्य आत्मनः सुखं करोति सः अविता रक्षिताह्रीः लज्जा येन स शुकानंदो मा मां प्रति अवतु एतत्संकटाद्रक्षतु ॥ ४१ ॥ संकटमेवाह वाक्सत्यमित्यर्द्धेन । यो मंत्री वाक् सत्या यस्य सत्यवाचं मां अन्यान्प्रति वदति कथयति । तस्मै अदृष्टापि लिपिः एति अवगतास्तीति मया उक्तमस्ति । सा लिपिर्नायाति अवगता नास्तीति चेन्मयि वदति सति तर्हि अद्य मयि असत्यत्वं स्यात् । इत्थं चिंतायुक्तश्चिंतामणिः सर्वगतं गुरुं ध्यायति स्म ध्यातवान् । तावत्सः प्राप्तस्फूर्तिः सन् सर्वं लिखितं तत्पत्रं मंत्रिणोऽग्रेऽवोचत् पठितवान् ॥ ४२ ॥ तस्मिन्पत्रे गुंडाख्यसाधोरिति लिखितमासीत् । इति किम् । अयमग्र्यो ब्राह्मणः सुपात्रोस्ति ।

वाक्सत्यं माखिलान्यो वदति लिपिरदृष्टापि तस्मै ह्यवैमीत्युक्तं नायाति सा चेदिति वदति मयि स्यादसत्यत्वमद्य ॥ इत्थं चिंताढ्य चिंतामणिरखिलगतं श्रीगुरुं ध्यायतिस्माऽऽप्तस्फूर्तिस्तावदेवाखिलमपि लिखितं मंत्रिणोऽग्रे ह्यवोचत् ॥ ४२ ॥ तस्मिन्गुंडाख्य साधोर्लिखितमिति सुपात्रोयमग्र्योऽस्य सूनोर्मौंजी देयं तदर्थं धनमवनपरस्तन्निशम्याथ दत्त्वा ॥ विप्रायागात्स नाथं वसतिमथ गतो द्राग्घि चिंतामणिश्चान्येभ्यः पत्रं ददौ तल्लिपिविद उत ये कष्टतोऽर्णार्णमाहुः ॥ ४३ ॥ प्रावोचद्देशिकः स्वानिति लिपिरखिलैर्ल भ्यतेऽभ्यासतः सा स्मृत्या नाथेन दत्ता मम हृदि न नृपः शक्त इत्थं न देवः ॥ स्तुत्यानेकैरहोभिर्नृपतिरभिददात्येकखेटं हि देवः कृच्छ्राद्दत्ते च दिष्टं न गुरुसम इतः स्यात्परोऽन्यः क्व मर्त्यः ॥ ४४ ॥

अस्य सूनोर्मौंजी व्रतबंधोस्ति । तदर्थं त्वया धनं देयं योग्यमस्तीति । अवनपरः रक्षणतत्परः स मंत्री तत्पत्रं निशम्य विप्राय दातव्यं धनं च दत्त्वा स्वनाथं राजानं प्रत्यगात् । अथ चिंतामणिश्च शीघ्रं स्वस्थानं गतः सन् अन्येभ्यः लिपिविद्भ्यस्तत्पत्रं ददौ । ये लिपिज्ञास्तेपि तत्पत्रं कष्टेन वर्णं वर्णं प्राहुः ॥ ॥ ४३ ॥ चिंतामणिः स्वान् स्वशिष्यान् लिपिविदः इति प्रोचे । या लिपिः सर्वैरभ्यासेन लभ्यते । सा लिपिः स्मरणमात्रेण गुरुणा मम हृदि दत्ताऽ र्पिताऽस्ति । इत्थं एवं सद्यः अपरिचितलिपिज्ञानं दातुं नृपो न समर्थः । अनेकैर्दिवसैः स्तवनेन देवोपि न समर्थः । हि यतः संतुष्टो नृपः एकखेटं ददाति

देवश्च कष्टात् आराधनश्रमेण दिष्टं दैवविहितं दत्ते । सद्गुरुतुल्यो न भवति । अतो देवाद्राज्ञश्च परः अन्यो मर्त्यः क कुतो गुरुसमो भवति । नैव भवतीत्यर्थः ॥ ४४ ॥ अथाहमीदृशदयायुक्तं गुरुं त्यक्त्वा स्पर्शं भाषया 'परीस' इति प्रसिद्धं त्यक्त्वा सुवर्णमिव इनं नृपं किं किमर्थं भजामि । यस्य गुरोः स्मरणमात्रेण इति अपरिचितलिपिज्ञानं लब्धम् । तस्य पादसंगेन सर्वमपि अलभ्यमस्ति किम् । अपि तु सर्वं लभ्यमेवाऽस्ति । इत्थं कृतमतिः निश्चितबुद्धिः स चिंतामणिः शीघ्रमश्वमारुह्य रामचंद्रशिष्येण साकं आर्यं सचिवं त्यक्त्वैव अदृष्ट्वैव इतो भाग्यनगरात्प्रावृषि निर्ययौ । यतो निरीहः गुरुपदयोर्गता धीर्यस्य सः ॥ ४५ ॥ स च रामचंद्रो मार्गे गच्छन् सव्यहस्ते धृतः महान् दंडो येन एकोऽपि शस्त्रधारिगणतुल्य आसीत् । तं दृष्ट्वैव इनपरा राजसेविनः खड्गादिशस्त्रहस्ताश्च भीतिं

त्यक्त्वैवेनं भजामीदृशदयमथ किं स्पर्शमुज्झ्यैव हेम स्मृत्या यस्येति लब्धं किमखिलमपि तत्पादसंगादलभ्यम् ॥ आरुह्याश्वं स इत्थं कृतमतिरचिराद्रामचंद्रेण साकं त्यक्त्वैवार्यं निरीहो गुरुपदगतधीर्निर्ययौ प्रावृषीतः॥४५॥मार्गे गच्छन्स चैकोऽसिधरगणसदृक् सव्यहस्तोरुदंडस्तं वीक्ष्यैवातिभीतिं दधत इनपराश्चासिमुख्यास्त्रहस्ताः ॥ वामे कुक्ष्यूरुपेश्यामखिलमपि दधन्देशकालोचितं यत्प्रादाद्यस्येप्सितं तद्गुरुपदभजनाद्रामचंद्रः सुसिद्धिः ॥ ४६ ॥ पर्जन्ये कंबलाधोल्पभुवि समकरोदोदनं यो गुरुं सुस्नाप्यास्थाप्ये शपूजाशनमपि गुरुतः कारयित्वावशिष्टम् ॥ भुक्त्वादात्पर्णमुख्यं विद उत ददृशुस्तं भ्रमंतोऽश्वसंस्थाः स्थानं नैवात्र खेटे मुहुरिति वचनै रामचंद्रं शशंसुः ॥ ४७ ॥

दधते । एवं बलाढ्य इत्यर्थः । वामे वामभागे कुक्षिगता या उरुर्महती पेशी भाषया बटवा इति प्रसिद्धा तस्यामखिलमपि देशकालोचितं वस्तुजातं दधन् सः यस्य यद्वस्तु ईप्सितं तस्मै दत्ते । गुरुपदभजनेन सुसिद्धिः प्राप्तसिद्धिरासीत् ॥ ४६ ॥ कदाचित्पर्जन्ये सति कंबलस्याधोभागेऽल्पभूमौ स ओदनं चकार च पुनः गुरुं सुस्नाप्य तत्रैव कंबलाधः गुरुतः गुरुणा देवपूजां भोजनं च कारयित्वा स्वयंचावशिष्टं भुक्त्वा पर्णमुख्यं तांबूलादिकं विदे गुरवे अदात् ददौ । तं भुक्तवंतं प्रति भ्रमंतोऽश्वारूढा ददृशुः । अत्र खेटे स्थानं नैवास्तीति वचनैः रामचंद्रं शशंसुः । वयं स्थानार्थं भ्रमामः । त्वं तु गुरुं भोजयित्वा

भुक्तवानसि महदाश्चर्यमिति प्रशशंसुरित्यर्थः ॥ ४७ ॥ एवं वर्षासु वृष्टिष्वपि यस्य रामचंद्रस्य संगेन श्रीगुरुरीषदपि श्रममनुपगतः श्रान्तोऽभवत् । सोऽयं भक्तवर्यो रामचंद्रो धन्योऽस्ति । यो बहुधनं गृहं त्यक्त्वा गुरुचरणसेवातत्परोऽभवत् । अथ तौ चिंतामणिरामचंद्रौ नंदीतटं प्राप्तौ । गुरुं शुकानंदं यति रूपमीक्ष्य नमंतौ स्मितास्यौ बभूवतुः । अथ चिंतामणिस्तिष्ठता भाग्यनगरेऽपरिचितपत्रबोधेन कृतां गुरुवरकरुणां स्तौति । या करुणा स्मरणकर्तॄणामभी ष्टदा भवति ॥ ४८ ॥ तामेव करुणास्तुतिमाह जयतीति पंचभिः । हे नाथ सा तव कृपा परमानंददायिनी जयति सर्वोत्कर्षेण वर्तते । किंभूता कृतस्य कर्मणो विनाशिनी अत्यंताभावकरी "क्षीयंते सर्वकर्माणि तस्मिन् दृष्टे परावरे" इति भगवदुक्तौ गुरुकृपाजन्यज्ञानस्य सर्वकर्मनाशकत्वमित्यर्थः । यस्याः

इत्थं वर्षास्वपीषच्छ्रममनुपगतः श्रीगुरुर्यस्य संगाद्धन्योऽयं भक्तवर्यो गृहमुरुधनमप्युज्झ्य गुर्वंघ्रिसेवी ॥ प्राप्तौ नंदीतटं तौ गुरुमथ यतिमीक्ष्यानमंतौ स्मितास्यौ तिष्ठंश्चिंतामणिस्तां गुरुवरकरुणां स्तौति या स्मर्तृभीष्टा ॥ ४८ ॥ चिंतामणिरुवाच ॥ जयति सा परानंददायिनी नाथ ते कृपा कृतविनाशिनी ॥ यदनुलेशतः पामरो नरो भवति गोचरागोचरोऽमरः ॥ ४९ ॥ यदनुगानतः कलिर भूत्कलः किल कुलाकुलः स्वात्मदृक्प्रदः ॥ नाथ दुःसहोदर्कवासनानिरसनक्षमस्तावको गुणः ॥ ५० ॥ यदनुसरणतः करणवृत्तयः प्रापुरंभसां वीचिवल्लयम् ॥ व्रजति संसृतेर्भयमितीह किं नौमि नाथ ते चरणपंकजम् ॥ ५१ ॥

कृपाया अनु लेशमात्रेण पामरः क्षुद्रोपि नरो गोचराणां भूचराणां अगोचरोऽप्रत्यक्षः अमरो देवरूपो भवति । गुरोः कृपाकटाक्षलेशमात्रेणैव ब्रह्मरूपत्वं प्राप्यत इत्यर्थः ॥ ४९ ॥ यस्य कृपागुणस्यानुगानतो वर्णनेन कलिर्दुष्टयुगमपि कलः कं सुखं लाति ददाति सः सुखप्रदोऽभवत् किल । कुलानि सजातीयानि अकुलानि विजातीयानि तेषु सर्ववस्तुषु स्वात्मदृक्प्रदः स्वात्मदृष्टिप्रदः सर्वगतात्मज्ञानसंपादकस्तावकः तव गुणः कृतार्थताजनकत्वरूपः हे गुरो दुःसहा नामुदर्कवासनानां उत्तरभाविदेहबीजभूतानां वासनानां निरसने दूरीकरणे समर्थोऽस्ति । त्वत्कृपया जीवानां पुनर्जन्म न विद्यते इत्यर्थः ॥ ५० ॥ एवं वासनानाशेनेंद्रियलयपूर्वकं संसारभयनिवृत्तिरित्याह । यदनुसरणत इति । यच्चरणपंकजं प्रत्यनुसरणं शरणबुद्ध्यानुगमनं तेन हेतुना करणानामिंद्रियाणां

वृत्तयो जलतरंगवल्लयं प्रापुः । इह चरणानुसरणे सति संसृतेर्भयं व्रजति गच्छतीति किं वाच्यम् । किंतु गच्छत्येव । हे नाथ तत्तव चरणपंकजमहं नौमि ॥ ॥ ५१ ॥ यत्पदस्यावलोकनमात्रेण मनो गतमलं वासनारहितं सत् परसुखे परमानंदरूपे आत्मनि सुखेन अनायासेन स्थिरं भवति । तच्च मनः अदसः अमुष्माच्चरणारविंदात्परं किमपि नाभीप्सति नेच्छति । हे नाथ त्वदनुयायिनां त्वत्सेवकानां तत्पदं पद्यते प्राप्यते वस्तुतत्त्वमनेनेति पदं ब्रह्मप्राप्तिकारणम् । यद्वा आश्रयं रक्षकं वा भवति । "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः ॥ ५२ ॥ यस्य गुरोरुपदेशमात्रेणेदं जगत्सच्चिदानंदस्वरूपादात्मनः पृथक् नो भासते । किं तु जले तरंग इव मृदि घटादीव सदा केवलं भात्येव । दृढमिथ्यात्वनिश्चये केवलं द्वैतभानं बाधकं न भवति । तस्मादेतादृशी

यदवलोकनाद्गतमलं मनो भवति सुस्थिरं परसुखात्मनि ॥ न हि किमप्यदः परमभीप्सति त्वदनुयायिनां नाथ तत्पदम् ॥ ६२ ॥
यदुपदेशतो भाति नो पृथक् स्वात्मतश्चिदानंदविग्रहात् ॥ जलतरंगवन्मृद्घटादिवज्जगदिदं सदा भाति केवलम् ॥६३॥ श्रीमच्छुकानंदनाथतनयेन गुरोः सदा ॥ स्वांतःकरणशुद्ध्यर्थं रचितं श्लोकपंचकम् ॥ ६४ ॥ श्रीमयूरेश्वर उवाच ॥ श्रुतेति गुरुणा नुतिस्स्त्विति महीपतिर्भाषितः सुतीर्थगमनाद्वरः सुसुतसंग इत्थं पुरा ॥ मदुक्तिरनृता न यत्स्तवनमस्य चानंददं ततोऽर्पितममुष्य मे स्वगुरुनाम सद्देशिकम् ॥ ६५ ॥ सदाथ गुरुरशृणोच्छ्रुतिशिरोरहस्यार्थकं क्व चांतिमपुराणतोऽर्थममलं हि चिंतामणेः ॥ तुतोष हृदि चावदन्मन स यो ममानंदकः स एव हि बहिः सुतोऽयमिति चान्यतो धीः कुतः ॥ ६६ ॥

श्रीगुरोस्तव कृपा मयि सर्वोत्कर्षेण वर्तत इत्यर्थः ॥ ५३ ॥ श्रीमच्छुकानंदनाथपुत्रेण मया श्रीगुरोः सकाशात् स्वांतःकरणशुद्ध्यर्थं स्वचित्तशुद्ध्यर्थं गुरोः संबंधि श्लोकपंचकं रचितम् ॥ ५४ ॥ इति नुतिः स्तुतिस्तु श्रीगुरुणा शुकानंदेन श्रुता तु पुनः महीपतिनामा शिष्य इति भाषित उक्तः । इति किं सुतीर्थगमनापेक्षया सुपुत्रसंगमो वरः श्रेष्ठोस्ति । इत्थं पूर्वं ममोक्तिर्भाषणमनृतं नासीत् । यत् यतः कारणादस्य पुत्रस्य स्तवनं ममानंदप्रदमस्ति । ततः कारणात् पूर्वं मे मया देशिकमिति सत् स्वगुरोर्नाम अमुष्य कर्मणिषष्ठी । एनं प्रति अर्पितमस्ति । एतस्मात्सदा वेदांतश्रवणं कर्तुं देशिकनाम कृतमित्यर्थः ॥ ५५ ॥ अथ गुरुः सदा चिंतामणेः सकाशाच्छ्रुतिशिरसामुपनिषदां रहस्यभूतमर्थमश्रुणोत् । क्व च कदाचित् अंतिमपुराणतः सकलपुराण

नामंते समाप्तौ कृतं पुराणं विष्णुभागवताख्यं तस्मादमलमर्थमश्रुणोत् । च पुनः हृदि तुतोष संतुष्टोऽभवत् । मनसि चावदत् । योयमानंदः स्वात्मानंदः स एव बहिः सुतरूपोयमस्ति हि । यत इति । नानार्थचतुरा धीः अन्यतः अन्यस्मिन्कुतः स्यात् । न कुतोपीति । तस्मादयं मत्पुत्रः परमानंदरूपोस्तीत्यर्थः ॥ ५६ ॥ अथ कदाचिद्वर्षाकाले गौतमी बहुजलाभवत् । पुरसेतुं नगरमर्यादां विहाय उल्लंघ्य वृद्धिगा वृद्धिगामिनी सती अंतरे पुरांतरे आसमं सर्वत्र समानं यथा स्यात्तथागता प्रविष्टाऽभवत् । तदा शुकसुखः शुकानंदगुरुः पुत्रमवदत् । बहिर्जलस्य गतौ गमननिमित्तं त्वमिमां सरितं गोदां प्रति श्रुतेः सदर्थं सन् अर्थौ यथा स्यात्तथा स्तुहि स्तवनं कुरु । वेदार्थगर्भितेन तव स्तवनेनेयं गंगा स्वस्थानं प्रति गच्छत्विति भावः ॥ ५७ ॥ अथ चिंतामणिर्गोदां ब्रह्मरूपत्वेन स्तौति । जगदित्यादिपंचभिः । इदं जगत् यत्सत्ताकं यस्यास्तव सत्तैव सत्ता यस्य तत् यत्सत्ताकं सत् कनके सुवर्णे कटककुंडलादिवत्स्फुरति । यथा कन

कदाचिदथ वार्षिके बहुजलाभवद्गौतमी विहाय पुरसेतुतां समगतांतरे वृद्धिगा ॥ तदा शुकसुखोऽवदत्सुतमिमां सदर्थं श्रुतेः स्तुहीति सरितं बहिर्जलगतावथैषोऽस्तुवत् ॥ ५७ ॥ चिंतामणिरुवाच ॥ जगद्यत्सत्ताकं स्फुरति कटकादीव कनके परं यच्च प्रेमास्पदमखिल संचारकृतिनाम् ॥ यदंशोऽयं भोक्ता श्रुतिशिरसि जीवो निगदितस्तवांबालंबे तद्धृदयसुखदं गौतमि वपुः ॥ ५८ ॥

कसत्तैव कुंडलादिसत्ता भवति न ततोन्यत्र कुंडलादिसत्ता दृश्यते । तथा यस्मिन् अधिष्ठाने यत् अध्यस्तं तत् अधिष्ठानसत्ताकमेव भवति । तस्मात्त्वद्व्यतिरिक्ता जगतः सत्ता नास्तीत्यर्थः । तथा यत्तव स्वरूपं अखिलानां संचारकृतिनां नानायोनिषु भ्रममाणानां जीवानां परं निर्निमित्तं यथा तथा प्रेमास्पदमस्ति । 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेः निर्निमित्तप्रिय आत्मा तदेव तव स्वरूपमित्यर्थः । श्रुतिशिरसि उपनिषदि यो भोक्ता जीवो निगदितः कथितोस्ति । सोयं यस्यास्तवांशोंऽश इवास्ति । हेंब मातः हे गौतमि अतिशयेन गौरिति गोतमो वृषवत्प्रपंचभारवाही जीवस्तस्येयमधिष्ठानरूपा सत्ता तत्संबुद्धिः । यद्वा अतिशयेन गावः किरणाः जलानि वा गोतमास्तेषामियं समष्टिरूपिणी गौतमी जलतेजसोः समष्टिरूपा । "स्वर्गेषु पशुवाग्वज्र

दिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिंगं चिह्नशेफसोः" इत्यमरः । यद्वा गौतमर्षिणाऽऽनीता गौतमी तत्संबुद्धिः हे गौतमि अहं हृदयसुखदं मनःसुखकरं तव वपुः स्वरूपमालंबे आश्रयामि । प्रवाहवर्णनेन व्यापकरूपं प्रगटयंत्यास्तवाद्वितीयपरब्रह्मरूपत्वं गुरुकृपयाहं जानामीत्यर्थः ॥ ५८ ॥ ननु जलरूपाहं प्रसिद्धास्मि कथं परब्रह्मरूपत्वेन मां वर्णयसीत्याशंक्य जलरूपग्रहणे कारणं दर्शयन्नद्वैतरूपेण वर्णयति । अनाथानिति । हे अंब जगदंब त्वं अनाथान्करुणया परिपातुं रक्षितुं विस्तीर्णम् अमलं यज्जलं तन्मयेन वपुषाऽवतीर्णासि । किंभूता निजानंदस्य स्वात्मानंदस्य य उद्रेकः अतिशयस्तेन प्रकटाः स्पष्टाः जडचेतनरूपा वीचिनिकरास्तरंगसंघा यस्यां सा निजैः स्वकीयैः प्राक्पुण्यौघैः पूर्वजन्मकृतपुण्यसंचैर्हेतुभूतैर्मम दृङ्मार्गे दृष्टिपथे सुलभा सुखेन गोचरा प्रत्यक्षा भवसि । जनान् पापहरणद्वारा उद्धर्तुं गृहीतजलरूपाया अपि तव दर्शनं पूर्वपुण्यं विना नैव भवतीत्यर्थः ॥ ५९ ॥ एवं प्रवाहरूप

अनाथानंब त्वं जगति परिपातुं करुणयावतीर्णा विस्तीर्णामलजलमयेनासि वपुषा ॥ निजानंदोद्रेकप्रकटजडचिद्वीचिनिकरा निजप्राक्पुण्यौघैर्भवसि मम दृङ्मार्गसुलभा ॥ ५९ ॥ त्वमेव पृथिवीजलज्वलनवायुखाद्यात्मिका तथा महदहंकृतिस्त्वमसि भूरिमोदात्मिका ॥ त्वमेव पुरुषः परः प्रकृतिरस्य विश्वात्मिके निरस्तगुणविभ्रमं कुरु सुखोदयं गौतमि ॥ ६० ॥ जननि चित्रमिदं प्रतिभाति यत्स्फुटमखंडसुखानुभवात्मकम् ॥ जडसुखेतरवन्मलिनात्मनां तदमलं तव रूपमहं भजे ॥ ६१ ॥

ग्रहणे कारणमुक्त्वा गोदायाः सर्वरूपत्वं वर्णयति त्वमिति । त्वमेव पृथिव्यादिपंचमहाभूतात्मिकासि । तथा महद्गुणसाम्यावस्थारूपं महत्तत्त्वम् अहं कृतिश्च त्वमेवासि । भूरिमोदात्मिका भूमानंदस्वरूपा त्वमेव । परमः पुरुषः अस्य पुरुषस्य संबंधिनी प्रकृतिश्च त्वमेवासि । त्वत्तोऽन्यत्किमपि नास्ति । हे विश्वात्मिके त्वं निरस्तः दूरीकृतः गुणानां विषयाणां विभ्रमो भ्रांतिर्यस्मिन् तं विषयोपाधिरहितमिति यावत् । सुखस्य परमानंदस्य उदयं प्रादुर्भावं कुरु । सर्वरूपा त्वं सर्वेषां निरुपाधिकमानंदं कुर्वित्यर्थः ॥ ६० ॥ ननु सर्वेषां निरुपाधिकं आत्मसुखमस्त्येव तत्र प्राप्तस्य प्रापणं मया कृतं वृथा स्यादित्याशंक्य मलिनमनसां नित्यसिद्धमप्यात्मसुखं कंठचामीकरवत् अप्राप्तमेव भवति । तत्प्राप्त्यर्थं त्वयावश्यं कृपा कर्तव्येत्याह । जननीति । हे मातः इदं विश्वात्मकं

तव रूपं विचित्रं प्रतिभाति । स्फुटं विचारे सति स्पष्टं यत् अखंडसुखात्मकं तव रूपं मलिनात्मनां विषयदूषितचित्तानां जनानां जडवत् सुखेतरवत् दुःखवत् प्रतिभाति । तत्तव रूपममलमुपाधिरहितमहं भजामि । यद्यपि सर्वेषां नित्यसिद्धमप्यात्मसुखं चित्तमालिन्येनाप्रतिभासमानं तथापि त्वत्कृपया स्नानपानादिसंपादनरूपया चित्तशुद्धिद्वारा तेषामात्मसुखलाभो भवत्वित्यर्थः ॥ ६१ ॥ एवं सर्वात्मकं सर्वसुखकरं च गौतमीरूपमुपवर्ण्य पुनः सर्वाधिष्ठानत्वेन स्तौति । यत्सत्त्वयेति । यस्यास्तव सत्तया असदपि विश्वं सत् अभूत् सत्यमिव जातम् । यथा गुणस्य रज्जोः सत्त्वेन सत्तया अहिः सर्पः सन्निव सत्यसर्पवद्विभाति । एवं स्फूर्तिरपि अधिष्ठानगतैवास्तीत्याह स्फूर्त्येति । यस्य त्वद्रूपस्यात्मनः स्फूर्त्या स्फुरत् जगत् प्रदृश्यते सर्वैरवलोक्यते नु इति निश्चयेन । यथा

यत्सत्तयाऽसत्सदभूदहिर्यथा गुणस्य सत्त्वेन विभाति सन्निव ॥ स्फूर्त्या स्फुरद्यस्य जगत्प्रदृश्यते स्फुरन्नु नैल्यं नभसो यथाखिलैः ॥ ६२ ॥ श्रीमच्छुकानंदनाथचरणासक्तचेतसा ॥ चिंतामण्यभिधेनोक्तं गौतमीरत्नपंचकम् ॥ ६३ ॥ मयूरेश्वर उवाच ॥ स्तुतायामिति गौतम्यां सोत्ततार पुराद्बहिः ॥ पौरास्तुष्टाः सुकुड्यानि पतितान्यपि चक्रिरे ॥ ६४ ॥ जलक्रीडारताः खिन्नाः पतिते स्वगृहेऽपि ये ॥ क्रीडंति वाद्यैर्गायद्भिः पूर्जले खाड्वकप्लवैः ॥ ६५ ॥ कविरुवाच ॥ अथ श्रीमन्मयूरेशोऽज्ञं मां चाह दयान्वितः ॥ श्रोतॄन्वद कथामग्रेऽतस्त्वमेव ममाज्ञया ॥ ६६ ॥

नभसः आकाशस्य स्फूर्त्या स्फुरत् नैल्यं नीलत्वं सर्वैरवलोक्यते तद्वत् । तस्माद्ब्रह्मरूपायास्तवैव सत्तास्फूर्तिभ्यां जगतः सत्तास्फूर्ती भवतः । तेन त्वं जगदुत्पत्तिपालननाशादौ स्वतंत्रासि । अतो यथेच्छसि तथा कुर्विति भावः ॥ ६२ ॥ उपसंहरति श्रीमदिति । मयेति विशेष्यपदाध्याहारः ॥ ६३ ॥ पतितानि जलप्रवेशेन स्खलितान्यपि चक्रिरे रचयामासुः ॥ ६४ ॥ पूर्जले ग्रामप्राप्तजले खाड्वकैः खट्वानिबद्धैः प्लवैस्तरणसाधनैः ॥ ६५ ॥ समाप्तो मयूरेश्वरसंवादः । अथ श्रोतॄन्प्रति रामकृष्णसोमयाजी शेषकथां गुरुमुखात्प्रसिद्धां वर्णयति अथेत्यादि यावद्ग्रंथसमाप्ति । त्वमेवेति अन्यस्यासामर्थ्यं सूचितम् ॥ ६६ ॥

॥ अतः परम् ॥ ६७ ॥ तत्रादौ मयूरेश्वरजन्म भाव्याधिकारस्य जन्मकाले ज्ञापनार्थं सहेतुककाले जातमित्याह गुराविति । सर्वे जनाः गुरौ भावं दधतु धारयंतु हि निश्चयेन । ततः सर्वैर्गुरुभक्तिः कर्तव्येति हेतोर्भावनामके संवत्सरे अर्के सप्तम्यां वदि कृष्णपक्षे जयंत्यां मयूरेशनामा पुत्रो जातः । अथ तदा उदग्धियः उत्तरबुद्धेः लाभार्थमुदगयनमार्यफलदं श्रेष्ठफलदमास । उत्तरायणे जन्मसंभवश्च गुरुचरणसंश्रितानामुत्तरबुद्धेः विषयोन्मुखा पूर्वबुद्धिः विषयेभ्यो निवृत्ता उत्तरबुद्धिस्तस्याः लाभदो भविष्यतीत्यर्थः । तदा मासोऽन्त्यः फाल्गुनमासो बभूव । सोऽपि सहेतुक इत्याह । नतजनपुमर्थांतिमफल इति । नतजनेभ्यः शरणागतजनेभ्यः पुमर्थेषु धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु य अंतिमः पुमर्थो मोक्षस्तं प्रददाति सः मोक्षप्रद इति यावत् । मयूरेशगुरोरंतिममासे जननेनायं शरणागतानां बुद्धिम् आत्मप्रवणां करिष्यतीति सूचितमिति भावः ॥ ६८ ॥ किंच निजोच्चे स्वोच्चस्थाने मकरराशौ

इत्थं गुर्वाज्ञयैवातधीरज्ञोऽहमतः कथाम् ॥ वक्ष्ये श्रोतॄन्भाविकान्वो गुर्वंघ्र्यर्पितमानसान् ॥ ६७ ॥ गुरौ भावं सर्वे दधतु हि ततो भावशरदि त्वथोदग्धीलब्ध्यै ह्युदगयनमासार्यफलदम् ॥ बभूवांत्यो मासो नतजनपुमर्थांतिमफलो जयंत्यां जातोऽर्के वदि किल मयूरेड् भुवि तदा ॥ ६८ ॥ निजोच्चे भौमोऽस्याखिलबुधत उच्चत्वकृदथो गुरो राश्योः संस्थावमृतखरगू स्वान्यमतगान् ॥ सुसौम्यत्वं चौग्र्यं ददत उत यद्दर्शनकृतस्तथास्यर्क्षं मूलं पदनतिकृतां मूलसुखदम् ॥ ६९ ॥

स्थितो मंगलोऽखिलबुधतः सर्वपंडितेभ्यः अस्य मयूरेश्वरगुरोरुच्चत्वकृत् महत्त्वकर्ताऽभवत् ।तथा गुरोः राश्योः धनमीनयोः संस्थौ स्थितौ अमृतखरगू चंद्रसूर्यौ गुरुराशिस्थत्वेन गुरोरुत्कर्षं सूचयंतौ यस्य गुरोः दर्शनकृतः दर्शनकर्तॄन् स्वमतगान् स्वमतस्थान् आत्मीयान् अन्यमतगान्परमतस्थान् परकीयान्प्रति क्रमेण सुसौम्यत्वम् उत पुनः औग्र्यम् उग्रत्वं च ददतः । चंद्रस्य शीतकरत्वेन स्वकीयानां गुरुः शांतदर्शनोऽभवत् । सूर्यस्योष्णकरत्वात् परमतस्थानामुग्ररूपो गुरुरदृश्यत । तथास्य गुरोः ऋक्षं नक्षत्रं मूलाख्यं पदनतिकर्तां गुरुचरणनम्राणां मूलसुखदं ब्रह्मसुखप्रदम् आसीत् । मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चेति भारते आदिपर्वणि मूलपदं धर्मवृक्षमूलस्य वाचकमुक्तम् । तथा च सर्वोऽपि कालो गुरोर्महत्त्वसूचक एवासीदित्यर्थः । कालसामान्येन गुरोर्जन्मवि

शेषवर्णनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥ ६९ ॥ अथ पिता चिंतामणिः अर्भकस्य मुखं दृष्ट्वा विधिवज्जातकर्म कृतवान् । अथ तस्य जनैः जन्मसंबंधि नाम कुजनेभ्यः पापिजनेभ्यो भयप्रदं भीम इति कृतवान् । शुकानंदगुरुरन्वीक्ष्य पौत्रं दृष्ट्वा पुत्रमवदत् । अयं शिशुः उभयोरावयो रानंदरूपोस्ति । यतस्त्वं मत्तोऽभूः जातोऽसि । त्वत्तोऽयं जातोऽस्ति । अतो नौ आवयोः कीर्तिकर्तायं भविष्यतीत्यर्थः ॥ ७० ॥ सर्वपंडितमान्यानि शिशोश्चिह्नानि दृष्ट्वा सकलगणेशमूर्तिषु मयूरेशो मयूरपुरवासी ख्यातोस्ति यथा तथैषोपि स्वकुले गणेशनामकथनादत्र लोके नतजनानां विघ्नोपशमेन च

पिता दृष्ट्वाऽस्यास्यं विधिवदकरोज्जातमथ तज्जनैर्नामाप्युक्तं कुजनभयदं भीम इति वै ॥ शुकानंदोऽन्वीक्ष्याऽवददयमथानंद उभयो र्यतो मत्तोऽभूस्त्वं त्वदयमिति नौ कीर्तिजनकः ॥ ७० ॥ शिशोर्दृष्ट्वा चिह्नान्यखिलबुधवंद्यानि सुविदा मयूरेशः ख्यातोऽखिलगणपमूर्तिष्वपि भुवि ॥ तथास्तामेषोऽत्र स्वकुलगणपाख्याभिकथनान्मयूरेशेत्याख्या ह्यगादि नतविघ्नोपशमनात् ॥ ७१ ॥ लघुश्चायं बालः स्मितवदन एवास सततं विलोक्यैनं हृत्स्थं जहुरखिलतापं नरवराः ॥ क्रमाज्जातो द्व्यब्दो धृतलिखितपत्रोऽवददिति शृणुध्वं पौराणं मम गृहगतान्मंजुवचनः ॥ ७२ ॥ गुरुं सीतारामो गृहमथ निनायोत्सवमिषाद्वसञ्छिष्यैस्तत्रापि कतिचिदहोभिः शुकसुखः ॥ सदैवात्मत्वोक्त्या निजमनुभवं प्राह पदगान्कचिच्चैकांतेच्छुर्वनमभिययौ शिष्यसहितः ॥ ७३ ॥

विख्यातो भवतु । इति निमित्तमात्रेण सुविदा सुज्ञेन शुकानंदेन कर्त्रा मयूरेशेति आख्या नाम अगादि उक्ता ॥ ७१ ॥ लघुरपि एष बालो मयूरेशः सततं हास्यवदन एवास । तं दृष्ट्वैव जनाः हृदयगतं सर्वदुःखं जहुः तत्यजुः । क्रमेण द्विवर्षो जातः सः मंजुवचनः मधुरवाक् धृतं हस्ते गृहीतं लिखितं पत्रं येन स सन् हे जनाः मम पुराणं शृणुध्वमिति गृहगतान्प्रति अवदत् ॥ ७२ ॥ अथ शुकानंदस्य सिद्धिसामर्थ्यं वर्णयन् प्राह । गुरुमिति सप्तभिः । अथ कश्चि त्सीतारामाख्यशिष्य उत्सवनिमित्तेन गुरुं प्रति स्वगृहं निनाय । तत्रापि कतिचिद्दिवसैः शिष्यैः सह स शुकानंदो वसन् सदात्मत्वोक्त्या वेदांतवचनेन पदगान्

पादसेविनः शिष्यान्प्रति आत्मानुभवं प्राह । क्वचित् एकांतेच्छुः एकांतस्थले वासं कर्तुमिच्छुः सन् शिष्यसहितो वनं अभिययौ ॥ ७३ ॥ अथ ते सीतारामादयः गुरोः सकाशात् निजं आत्मानं शृण्वंतः संतः तनुतां देहभावं त्यक्त्वा क्षुधां तृषां स्वकीयं परकीयं इति किमपि नाविदन्नज्ञातवंतः । यतः आत्मन्येव एकस्मिन्मनो येषां ते । आत्मचिंतका इत्यर्थः । निशीथे स्वसुखतः समाधिसुखादुत्थाय पुनर्गुरुमिति प्राहुः । इति किं नोऽस्माकं तृषाया बाधास्ति । इह जलं चोष्णकाले ऊषरभूमौ क्वास्ति । न क्वापि जलमस्ति । अतः किं कर्तव्यमस्माभिरिति ॥ ७४ ॥ इति श्रुत्वा गुरुः शुकानंदः एतान् शिष्यान्प्राह । हे अंधाः जलयुक्तो हस्तप्रमाणो गर्तः इह समीपे पार्श्वभागेऽस्ति । यूयमत्र विमलं जलं पिबत । इति निशम्य इमे शिष्याः स्थितितो निस्

गुरोस्ते शृण्वंतो निजमथ विहायैव तनुतामविंदन्नो क्षुत्तृट्स्वपरमिति चात्मैकमनसः ॥ निशीथे चोत्थाय स्वसुखत उताहुर्गुरुमिति तृषाबाधा नः क्वास्ति जलमिह चोष्णोषरभुवि ॥ ७४ ॥ गुरुः श्रुत्वाहैतान्सजल इह गर्तः करमितः समीपे पार्श्वेऽधाः पिबत जलमत्राशु विमलम् ॥ निशम्यांभो वीक्ष्य स्थितित उदगारात्पपुरिमे मिथश्चाहुः सिद्ध्याऽजलभुवि जलाप्तिः किल गुरोः ॥ ७५ ॥ विदा निर्गच्छंतः सलिलमपि गर्तं त्विह दिवाप्यनीक्ष्याहुः सर्वे गुरुमिति जलं नाद्य निशि यत् ॥ न वाच्यं क्वापीदं ह्यवददखिलान्देशिक इति व्रजन्मार्गेऽतिष्ठत्त्रिघटिकमगो मूक इव सः ॥ ७६ ॥ व्रजंतः पृच्छंतस्तमथ निखिलाः किं पथि भवानतिष्ठच्चिंतायुग्घृदिव वरसिद्धो निजमतिः ॥ निशम्येदं सोऽमून्वदति मम भक्तो नृपभये ह्यपश्यंश्चोपायं त्वमितनतिकृन्मे किल रहः ॥ ७७ ॥

सस्थानादुदक् उत्तरस्यां समीपेंऽभः जलं वीक्ष्य पपुर्मिथश्चाहुः । गुरोः सिद्ध्या सिद्धिसामर्थ्येन निर्जलभूमौ जलप्राप्तिर्बभूव किल ॥ ७५ ॥ विदा गुरुणा सह दिवा निर्गच्छंतः सर्वे इह तु स्थाने उदकं गर्तं चानीक्ष्य अदृष्ट्वा यज्जलं निशि आसीत् । तदद्य नास्तीति गुरुं प्राहुः । देशिकः शुकानंदगुरुः शुष्माभिरिदं वृत्तं हि क्वापि कस्मै चिदपि न वाच्यम् । इति सर्वानवदत् । क्वचिन्मार्गे गच्छन्सः शुकानंदः अगः न गच्छतीत्यगः मूक इव त्रिघटिकापर्यंतं अतिष्ठत् स्थिरोऽभवत् ॥ ७६ ॥ अथ व्रजंतः सर्वे तं गुरुं पृच्छंतः प्रश्नकर्तारो बभूवुः । प्रश्नं चक्रुरित्यर्थः । निजमतिः आत्मज्ञानवान् वरश्चासौ सिद्धश्च

सिद्धश्रेष्ठो भवान् चिंतायुक् हृत् मनो यस्य सः । सचिंत इव मार्गे किमर्थमतिष्ठत् । इदं शिष्यवचनं स गुरुर्निशम्यामून् वदति । कश्चिन्मम भक्तो नृपाद्भये सति उपायं तु अपश्यन् रहः एकांते मे मह्यम् अमितनतिकृत् बहुनमस्कारकर्ताऽभवत् किल । तेन राजभयनिवारणार्थं मह्यं बहुनमस्काराः कृता इत्यर्थः ॥ ७७ ॥ कोऽसौ भक्त इत्याह । नतीरिति । स माणिकराख्यो भक्तः मयि अभिगतबुद्धिः मन्निष्ठबुद्धिः सन् यावत्पर्यंतं नतीः नमस्कारानकरोत् । तस्य भयं हर्तुं दूरीकर्तुं तावत्पर्यंतम् इह मया तूष्णीं स्थितम् । नमस्कारसमाप्तिपर्यंतमहं स्थिरोऽभवमित्यर्थः । अथ तत् तस्य भयं सिद्धिसामर्थ्येन या तस्योपरि नृपस्य कृपा तया हृतं दूरीकृतं वै मयेत्यनुवृत्तिः । अथ पंताख्यः शिष्यो गुरुवाक्यं श्रुत्वा दिनं समयं वेलां मासादिकमपि यदासीत् तत् अलि

नतीर्माणिक्याख्यो मदभिगतधीर्यावदकरोन्मया तावत्तूष्णीं स्थितमिह भयं हर्तुमधुना ॥ हृतं तद्वै सिद्ध्या नृपतिकृपयाऽथो गुरुवचोऽलिखत्पंतः श्रुत्वा दिनसमयमासाद्यमपि यत् ॥ ७८ ॥ ततो माणिक्याख्यः कतिपयदिनैरेत्य च गुरुं सुवस्त्रैर्यत्यर्हैः पुपुज इतरैस्तत्सुतमुखान् ॥ स्ववृत्तं नाथायाऽवददिनभयं श्रीपदनतीः कृपां राज्ञः पश्चान्नतिदिनमभूद्यच्च लिखितम् ॥ ७९ ॥ कविरुवाच ॥ सिद्धेः सामर्थ्यमित्थं बहुगति च गुरुर्दर्शयन्नाद्यशिष्यान्प्राहेदं नैव वाच्यं क्वचिदिति च मनाक् तेपि नाहुर्गुरूक्त्या ॥ आसीन्नंदीतटेऽथाखिलविषयलिखद्वृत्तिपद्माकराख्यो वृत्तेस्तस्यापकारी यवन इह महान्सर्वकाराधिकारी ॥ ८० ॥

खत् । शुकानंदोक्तं सत्यमस्ति किम् । इति ज्ञातुं तत्समयमासादिकं लिखितवानित्यर्थः ॥ ७८ ॥ ततः कतिपयदिनैर्माणिक्याख्यः शिष्यो गुरुमेत्य यत्यर्हैर्यतियोग्यैः काषायरंजितैः सुवस्त्रैः पुपुजे । तस्य गुरोः सुतमुखान्पुत्रादीनितरैर्गार्हस्थ्ययोग्यवस्त्रैः पूजितवान् । राज्ञो भयं श्रीचरणयोर्नमस्कारान् पश्चात् राज्ञः कृपाम् एतत्स्ववृत्तांतं नाथायावदत् । तदा यद्दिनं पंताख्येन लिखितं तदेव माणिक्यकृतनमस्कारदिनमभूत् । एवं सर्वज्ञः शुकानंद आसीदिति भावः ॥ ७९ ॥ इत्थं बहुगति बहुप्रकारं च सिद्धेः सामर्थ्यं दर्शयन्गुरुराद्यान्मुख्यान् शिष्यान्प्राह । इदं सिद्धिसामर्थ्यं भवद्भिः क्वचित्कदाचित् मनाक् ईषदपि न वाच्यमिति । तेपि शिष्याः गुरुवचनेन क्वचित्किंचिदपि न प्राहुः । अथ पद्माकराख्यशिष्यस्य वृत्तांतमाह । आसीदित्यादिसार्द्धषड्भिः ।

अथ नंदीतटेऽखिलविषये सर्वदेशे लिखंती वृतिर्यस्य स पद्माकराख्यः कमलाकराख्यः सरदेशपांडे इति प्रसिद्ध आसीत् । तस्य वृत्तेः वार्षिकधनस्य अप कारी कश्चिद्यवनः इह नंदीतटे सर्वकाराधिकारी आसीत् । भाषया सर्काराधिकारी आसीदित्यर्थः ॥ ८० ॥ स पद्माकरः यवनद्वेषेण पीडितः ग्रहीत्रा पालकेन पित्रा मुकुंदाख्येन सह भाग्यनगरमगमत् । तत्रार्द्धलक्षमितं नृपस्वं राजधनं अधिकृततगं अधिकृतो यवनस्तन्निष्ठं राज्ञे वक्ति । अर्द्धलक्षं राजधनं अधिकारियवननिष्ठं वर्तते इति राज्ञे निवेदितवानित्यर्थः । इति पद्माकरकृत्यं यवनो ज्ञात्वा तत्कथनात्पुरा आज्ञाय ज्ञात्वा पंचविंशतिसहस्रवित्तं तत्कार्य कर्त्रे मुख्यप्रधानाय दत्त्वा सपितृकं पित्रा सहितं स्वैः स्वकीयैः शस्त्रिभिः शस्त्रधारिभिरावृतं रक्षितं तं पद्माकरं आनयत् नंदीतटमिति शेषः । स च पद्माकरः

पित्रा भाग्यं ग्रहीत्राऽगमदधिकृततगं वक्ति पद्माकरोऽर्द्धं लक्षं राज्ञे नृपस्वं यवन इति पुराऽऽज्ञाय लक्षांघ्रिवित्तम् ॥ दत्त्वा तत्कार्यकर्त्रे सपितृकमनयत्तं स्वशस्त्र्यावृतं चाऽऽनेतुं पित्रेंऽबु सोगात्पथि वदति रुदन् स्वेक्षणं नेति चास्मात् ॥ ८१ ॥ दत्त्वा पित्रेंबु मार्गे क्व निशि स तदा स्वप्नमैक्षद्यतित्वात्पूर्वं नाथोऽब्रवीत्तं यतिरिति वदनं किं तवाल्पं स नेति ॥ नाथः पद्यं तु यावानिति दृढधृतये द्वादशो त्त्याह चेति प्रातः पित्रेऽब्रवीत्स गुरुरयमिति तेऽथाध्वना ग्राममापुः ॥ ८२ ॥

पथि पित्रे पित्रर्थमंबु जलं आनेतुमगात् । तदा रुदन् सन् अस्माद्दुष्टयवनान्निमित्तभूतात् स्वेक्षणं च स्वकीयानां दर्शनमपि न भवतीति वदति । किं कर्तव्यं क्व गंतव्यं स्पर्द्धी यवनस्तु दुष्टोस्ति । अस्मान्मुक्त्वा कथं स्वकीयानां दर्शनं भविष्यतीत्यादि मनसा चिंतितवानित्यर्थः ॥ ८१ ॥ पित्रे उदकं दत्त्वा मार्गी मार्गगामी स पद्माकरः क्व कदाचिद्रात्रौ स्वप्नमैक्षत् । यतित्वाद्यतिभावात्पूर्वं नाथः शुकानंदः अयतिरपि यतिवेषः सन् तं पद्माकरं तव वदनं किमर्थं अल्पं म्लानमस्तीत्याह । सः न इति म्लानं नास्तीत्याह । तदा नाथस्तु यावानिति पद्यम् । “ यावानहं यथाभावो यद्रूपगुणकर्मकः । तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात् । ” इति श्लोकं दृढधृतये दृढधारणार्थं दृढस्मरणार्थमिति यावत् । द्वादशोक्त्या द्वादशवारमुच्चारणेन प्राह । पद्माकरायेति शेषः । प्रातः स

इति स्वप्नं पित्रेऽब्रवीत् । स च पिता अयं स्वप्नगतो गुरुरस्तीत्यब्रवीत् । अथ ते मार्गेण ग्रामं प्राप्ताः ॥ ८२ ॥ तत्र दुर्नीतिरविंधो यवनः पद्माकरस्य गृहमहरत् । अथ सः पुरोधस उपाध्यायस्य गृहे न्यवसत् । अत्र उपाध्यायगृहे तातो मुकुंदाख्यः स्वः स्वर्गं आप प्राप । सुज्ञपद्माकरोपि तस्य पितुरूर्ध्वां तनुगतिं देहगतिं और्ध्वदैहिकं चकार । अथ पद्माकरः धृतांत्याश्रमं गृहीतसंन्यासं गुरुं पंढरीसकाशात्प्रातं श्रुत्वा तमगात् । स्वप्ने दृष्टं संन्यासरूपिणं नाथं वीक्ष्य नत्वा स्ववृत्तं आपद्वर्तमानं प्राह । अथ गुरुः शुकानंदः अस्मै पद्माकराय कालेन मंत्रमवदत् ॥ ८३ ॥ अथ गुरुस्तस्मै पद्माकराय विठ्ठलाख्यायापि शिष्याय द्विविधं अन्वयव्यतिरेकरूपं ज्ञानं चाभीक्ष्णं सततं प्राह । तौ द्वावपि विठ्ठलपद्माकराख्यौ आर्यबुद्धी श्रेष्ठबुद्धिमंतौ बभूवतुः । तदुदितं अल्पमपि

गेहं दुर्नीत्यविंधोऽहरदथ स पुरोधोगृहेऽतिष्ठदत्रापि स्वस्तातस्तदूर्ध्वां तनुगतिमकरोत्सुज्ञपद्माकरोपि ॥ श्रुत्वा प्राप्तं धृतांत्याश्रममथ समगाद्वीक्ष्य तं स्वप्नदृष्टं नाथं नत्वाऽह वृत्तं त्वथ गुरुरवदन्मंत्रमस्मै तु कालात् ॥ ८३ ॥ ज्ञानं चाहाथ तस्मै द्विविधमपि गुरुर्विठ्ठलायाप्यभीक्ष्णं तौ द्वावप्यार्यबुद्धी तदुदितमणु नो वक्तुमीशो बुधश्च ॥ वृत्तेर्लाभाय भाग्यं पुरमथ गतये नम्रपद्माकराय रौप्यां मुद्रां ददौ श्रीगुरुरधनवतेऽधः स्वपीठात्सुसिद्धिः ॥ ८४ ॥ तावद्वित्तः स भाग्यं गत इह धनवान्नाथशिष्योंऽत्यभिक्षुर्गीतां तस्मै यथार्थां निशि वदति तदर्थाशनोऽटन्दिवा च ॥ ताम्रं मुख्यं सुमित्रं बहुगुणविभवात्प्राप्य तस्याज्ञयाऽल्पां वृत्तिं लेभे प्रधानात्स्थितिमपि च गतां श्रीगुरोः सत्प्रसादात् ॥ ८५ ॥

ताभ्यामुक्तं वक्तुं प्रत्युत्तरं दातुं बुधः पंडितोपि न समर्थोऽभवत् । एवं गुरुकृपया उत्तमाऽधिकारिणौ जातावित्यर्थः । अथ वृत्तिलाभार्थं भाग्यपुरं प्रति गतये गंतुं नम्राय पद्माकरायाधनवते धनहीनाय स्वपीठात्स्वासनात् अधोभागाद्रौप्यमयीं मुद्रां श्रीगुरुर्ददौ यतः सुसिद्धिः । संन्यासिनो द्रव्यसंग्रहराहित्वात् सिद्धिसामर्थ्यैनैवासनाधोभागात् रौप्यमुद्रां गुरुर्ददावित्यर्थः ॥ ८४ ॥ तावन्मात्रवित्तः स कमलाकरो भाग्यनगरं गतः । इह भाग्यनगरे धनवान्देशिकानंदशिष्यः अंत्यभिक्षुः शूद्रसंन्यासी पूर्वोक्त आसीत् । तस्मै यथार्थां गीतां यथार्थदीपिकां निशि असौ कमलाकरो वदति । किंभूतः तदर्थाशनः तस्य

शङ्कयतेः अर्थेनाशनं भोजनं यस्य सः दिवाऽटन् राजधान्यां स्वकार्यार्थं भ्रमंश्च तत्र सः मुख्यं अधिकारिणं ताम्रजातीयं बहुगुणसामर्थ्येन सुमित्रं प्राप्य तस्याज्ञया प्रधानादल्पां वृत्तिं लेभे श्रीगुरोः प्रसादेन गतां नष्टां स्थितिं स्थानं च लेभे ॥ ८५ ॥ एवं प्राप्तवृत्तिः कमलाकराख्यः पुत्राभ्यां सुबुद्धिभिर्नृभिश्च युक् युक्तोऽभवत् । गोपालाख्येन नृपगत्यर्थं सचिवेन भाषया वकीलाख्येन निमित्तभूतेनको पृथिव्यां वृत्त्या कीर्त्या च वर्द्धमानोऽभवत् । अथ गुरुचरणगामिन्या भक्त्या हेतुभूतया येन कमलाकरेण साधुमान्यं प्राकृतं काव्यं बहुधा कृतम् । तस्य वंशो गुरुचरणनिष्ठया चिरायुः सुकीर्तिश्चास्ताम् ॥ ८६ ॥ अथान्यशिष्यस्य वृत्तांतमाह । आसेति द्वाभ्याम् । गुरुपदयोः कृता निश्चिता धीर्यस्य स एकोऽसाधारणो बालकृष्णाख्य आस । यो बाल्य एव योगं ज्ञानं

पुत्राभ्यां नन्नृभिर्युक्सुमतिभिरभवद्वर्धमानः सुकीर्त्या वृत्त्या गोपालनाम्ना नृपगतिसचिवेनापि पद्माकरः कौ ॥ भक्त्या गुर्वङ्घ्रिगत्या कृतमथ बहुधा प्राकृतं येन काव्यं सन्मान्यं तस्य वंशो गुरुपदसुधियाऽऽस्तां चिरायुः सुकीर्तिः ॥ ८६ ॥ आसैको बालकृष्णो गुरुपदकृतधीर्बाल्य एवाभ्यसद्यो योगं ज्ञानं युवा चाऽविषयमतिरगाद्गुर्वनुज्ञो वधूं स्वाम् ॥ व्याघ्रं गुल्मेऽश्मना योऽहनदथ स रवं चक्र एषोऽपि तादृग्भीतो व्याघ्रोऽपलायत्तदनुगतिरथावर्तितो त्र्यंश्वरेण ॥ ८७ ॥ मार्गाज्ञानाद्भृगोश्चापतदमितदृषत्कंटकैर्घर्षितांगोऽवस्त्रोऽगात्खेटमेकं त्विह परिचिततो वस्त्रयुक्तन्वनाशः ॥ ताते प्रावृष्यदग्धे कुणपमपि दधन्पृष्ठ एवैष रात्रौ तिष्ठन्प्रातर्ददाहेत्य मितधृतिरभंगादिकर्ता भिषक् च ॥ ८८ ॥

चाभ्यसत् । युवा तरुणोपि अविषयमतिर्यो गुरोरनुज्ञा यस्य स गुरुणाज्ञप्तो यदा तदा स्वपत्नीमगात् । अथ कदाचिद्यो गुल्मे स्थितं व्याघ्रमश्मनाऽहनत् । अथ स व्याघ्रो रवं महाशब्दं चक्रे । एष बालकृष्णोपि तादृशं शब्दं चक्रे । तदा स व्याघ्रोऽपलायत् । तदनुगतिः तस्य व्याघ्रस्य अनुगतिः पश्चाद्गामी बालकृष्णः त्र्यंश्वरेण केनचित्पुरुषश्रेष्ठेन आवर्तितो निवर्तितोभवत् ॥ ८७ ॥ अथ स मार्गापरिज्ञानेन भृगोः सकाशादपतत्पपात । बहुपाषाणकंटकैर्घर्षितांगोऽवस्त्रः वस्त्रहीनोप्येकं खेटकमगात् । इह खेटे परिचिततः परिचितपुरुषाद्वस्त्रयुक्तोभवत् । एवं तनौ देहे अनाशो निराशः आसीदित्यर्थः ।

कदाचित्पर्जन्यकाले ताते पितरि अदग्धे सति तस्य कुणपं शवं च पृष्ठे दधन् तथैव रात्रौ तिष्ठन् प्रातस्तत् ददाह । इत्यादिबहुधैर्यवान् अभंगकर्ता भिषक् वैद्यश्च बभूव ॥ ८८ ॥ अथान्यशिष्यस्य वृत्तांतमाह । योगीति । कश्चिल्लक्ष्मणाख्यो योगी शुकानंदशिष्य आसीत् । स च कदाचिद्भुवि संचरन् गोदा तीरगतं खेटकं गंगाखेडसंज्ञकं प्राप्तः । अत्र खेटके केन चिदानंदयोग्याख्येन विदा ज्ञानिना कृतानि योगाभ्यासार्थं विलसंति व्याघ्रादीनां आसनानि संति । तत्रैकस्मिन् आसने अस्मिन् लक्ष्मणाख्ये योगमार्गेण चात्मयोगं कुर्वति सति । झूमिति शब्दानुकरणम् । सुतरां दीर्घो रवः पूरकवायोः शब्दोन्यैरानंदयो ग्यादिभिः श्रुतः । अथोत्थाने समाधिविसर्जनावसरे स आनंदयोगी तं लक्ष्मणं योगिनं प्रत्यवदत् । इतिप्रकारा युतिः योगो यस्मात्स तव गुरुः शुकानंदो

योग्यासील्लक्ष्मणाख्यः क्व च भुवि स चरन् गौतमीतीरखेटं प्राप्तोऽत्रानंदयुग्वित्कृतयुतिविलसद्व्याघ्रमुख्यासनानि ॥ तत्रास्मिन्यो गगत्यात्मयुजि च रवोऽन्यैः श्रुतो झूं सुदीर्घोऽथोत्थाने तं स योगी त्ववददिति युतिस्ते गुरुर्मेपि मान्यः ॥ ८९ ॥ मूर्तिः प्राङ्मंगलोऽ भूद्गुरुगतिरतिविच्चाह शूद्राय गीतां यो वै नौसाज्यभिज्ञोऽखिलविषयकरः सत्सु राजस्वपीशः ॥ दानी शूरश्च गीतातिरतिरिति जगुस्तं बुधाश्चार्जुनांशं सोऽऽधिक्याद्देशिकेंद्रं पुपुज इति विदो गोतटेऽतः क्रुधा स्युः ॥ ९० ॥ अन्ये दुर्वाचमूचुर्निशि परवचसा द्वारि चागत्य नाथः श्रुत्वांतर्दुर्मनाश्चानुपमपुरमदस्त्यक्तुमैच्छन्न तावत् ॥ सन्नामागान्मुमुक्षुर्गुरुमिदमवदद्वृद्धिगाहंकृति मेऽस्माद्गेहं चैत्य नम्रां कुरुमुनिरिव तां विंध्यमागत्य काश्याः ॥ ९१ ॥

ममापि मान्य एवास्ति । इत्यादि बहु सत्कृतवानित्यर्थः ॥ ८९ ॥ अथ नंदीतटाद्वसुमतीगमने कारणमाह मूर्तिरिति द्वाभ्याम् । प्राक् मंगलं यस्य स मूर्तिः मंगलमूर्तिः शुकानंदशिष्यः गुरौ गतिः दर्शनार्थं गमनं यस्य सोतिवित् ज्ञानवांश्चासीत् । स कस्मै चिच्छूद्राय भगवद्गीतां प्राह । यो वै शूद्रो नौसाजी नामा तत्तद्देशाधिपेषु सत्सु अपि सर्वदेशेषु करभारो यस्य यत ईशः बलेन समर्थः दानकर्ता शूरश्च भगवद्गीतासु बहुप्रीतिमांश्चासीत् । बुधा अपि इत्य धिकारिणं तं अर्जुनस्यांशं जगुः । स शूद्रो देशिकेंद्रं गुरोर्गुरुं शुकानंदं आधिक्येन पूजितवान् । इति हेतोर्गोतटे नंदीतटे ये विदः पंडितास्तेऽतर्मनसि क्रोध युक्ता बभूवुः । खलपुरुषाः परसत्कारं दृष्ट्वा संतप्ता भवंतीत्यर्थः ॥ ९० ॥ अन्ये खलाः खलपंडितवचसा निमित्तभूतेन रात्रौ गुरोर्द्वारसमीपमागत्य दुर्व

चनं प्रोचुः । वेदार्थभूतां गीतां शूद्राय शिष्यमुखेनायं शुकानंदः पाठयति । अतोयमधर्मकर्तास्तीत्यादि प्रोचुरित्यर्थः । इति श्रुत्वा शुकानंदनाथः । "स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम्" इति प्रमाणेन स्त्रीशूद्रादीनां भारतांतर्गतगीताश्रवणे वाचने चाधिकारसत्वेपि तत्प्रतिपादनेन नंदीतटस्थैः सह विरोधः स्यादित्यभिप्रायेणांतर्दुर्मनाः सन् अदः इदं अनुपमं गोदायाः नाभिस्थानाश्रितत्वादुत्कृष्टं पुरं नंदीतटाख्यं त्यक्तुं नैच्छत । तावत् सन्नामा संताजीपंताख्यो मुमुक्षुः सन् गुरुं शुकानंदं अगात् । शरणं प्राप्तः । गुरुं इदं चाब्रवीत् । इदं किं यथा मुनिरगस्त्यः काश्याः सकाशादागत्य विंध्यपर्वतं नम्रं चकार । तथा त्वमपि अस्मान्नंदीतटात् मम गृहं वसुमतीनगरमिति यावत । एत्यागत्य मदीयां तां वृद्धिगां स्त्रीगृहादिषु वृद्धिं प्राप्तामहंकृतिं नम्रां आत्मचरणे लीनां कुरु । अस्मान्नंदीतटाद्वसुमतीमागत्य ज्ञानोपदेशेन मामुद्धरेति भावः ॥ ९१ ॥ इत्थं सन्संताख्यः शुकानंद

इत्थं संप्रार्थ्य नाथं विपुलवसुमतीं सन्नृयानेन निन्येऽन्यानश्वैर्गोरथैश्चाखिलमपि गृहगं त्र्यूर्ध्वसुस्थानगेहम् ॥ पार्श्वाभःकूपमब्दव्ययकणमजरं वस्तुमार्याय दत्त्वाऽप्युर्वीं चारामरम्यां त्रिनतिगुरुगतिर्देशलेख्योऽमितैर्युक् ॥ ९२ ॥ संमर्दोभून्महांस्तत्सहगतिभिरहोरात्रमेवावकाशोऽनात्मत्वं वक्तुमासीत्सततमपि गुरोरात्मचर्चेप्सितानाम् ॥ ज्ञात्वेत्यार्यस्ततोऽगात्परनिशि सहगैरासनातीरखेटं गव्यूत्या दूरमत्रावसदधिपमतात्तार्णकुट्यां यथाप्त्या ॥ ९३ ॥

नाथं संप्रार्थ्य नृयानेन विपुलधनवतीं स्वपुरीं निन्ये अन्यान्गुरुपुत्रादीन् अश्वैर्निन्ये अखिलमपि गृहगतं पदार्थजातं गोरथैः शकटीभिर्निन्ये । पार्श्वेऽभसः कूपो यस्याब्दपर्यंतं व्यये भोगविषये कणाः यवादिधान्यानि यस्मिन् सर्वधान्यैः पूर्णमिति यावत । अजरं नूतनं त्रीणि ऊर्ध्वं सुस्थानानि यस्मिंस्तत् गेहम् आर्याय गुरवे वस्तुं वासं कर्तुं दत्त्वाऽऽरामेण रम्यामुर्वीं च दत्त्वा देशलेख्यः संताख्योऽमितैर्बहुजनैर्युक्तः सन् त्रिवारं नत्यर्थं नमस्कारार्थं गुरौ गतिर्गमनं यस्य स बहुजनैः सह त्रिकालं गुरुदर्शनासक्तोऽभवदित्यर्थः ॥९२॥ तदा तस्य संताख्यस्य सहगतिभिः सहचारिभिः जनैर्निमित्तभूतैरहोरात्रं महान्संमर्दोऽभूत् । गुरुगृहे इति शेषः । आत्मचर्चा वेदांतवार्ता ईप्सिता यैस्तेषां वेदांतश्रवणपराणां शिष्याणाम् । कर्मणि षष्ठी । तान् प्रति सततमपि आत्मत्वम्

आत्मभावं वक्तुं गुरोः शुकानंदस्यावकाशो नैवासीत । इति ज्ञात्वाऽऽर्यः शुकानंदस्तवः वसुमतीसकाशात् गव्यूत्या क्रोशद्वयेन दूरम् आसनानद्यास्तीर गतं खेटं प्रति परनिशि उत्तररात्रौ सहगैः शिष्यैः सहागात् । आत्मचर्चार्थमिति शेषः । अत्र खेटे अधिपमतात् खेटाधिपस्यानुमतेन तृणमय्यां कुट्यां यथा स्या यथालब्धवृत्त्या वासं कृतवान् । आर्य इत्यनुवृत्तिः ॥ ९३ ॥ प्रातश्च वसुमत्यां विषयस्य देशस्य संताख्यो लेखको न दृष्टः नाथो गुरुर्येन स सन् देशिकेंद्रं वदति । गुरुः शुकानंदो नोऽस्मांस्त्यक्त्वाद्य क्व यात इति । असौ देशिकेंद्रः अहं न वेद्मीत्थम् अवदत् । तदा चारः कश्चिद्दूत एत्यासनातीरस्थं शुकानंदं प्राह । आसनातटे शुकानंदोऽस्तीति संताख्याय कथितवानित्यर्थः । अथ स्वयं संताख्यो बहुभिर्जनैः सह शुकानंदं समेत्याह प्रार्थितवान् । हे पर

प्रातश्चादृष्टनाथो वदति विषयसल्लेखको देशिकेंद्रं त्यक्त्वा नः क्वाद्य यातो गुरुरवददसौ वेद्मि नेत्थं तदेत्य ॥ चारः प्राहासनास्थं स्वयमथ बहुभिस्तं समेत्याह भूमन् त्यक्त्वा नस्त्वं भवाब्धौ परपद कथमत्रासि चोद्धारकोऽस्मान् ॥ ९४ ॥ भक्तं वीक्ष्याथ नाथोऽवददिति न भयं ते भवाब्धेर्यतोऽसौ मिथ्या त्वं सत्य एतत्तनुमुखमपि चात्मास्मृतावेव भाति ॥ रज्ज्वस्मृत्यां फणीव त्वमपि किल तथाविस्मृतात्माथ देहोऽहं चेत्थं मन्यसे तां त्यज मतिमहमात्मेतिधीर्मोक्ष्यसेऽघात् ॥ ९५ ॥

पद भवातीतस्वरूप हे भूमन् व्यापक गुरो त्वं नोऽस्मान्भवाब्धौ संसारसमुद्रे त्यक्त्वात्र स्थाने कथमसि वर्तसे । किंभूतः अस्मानुद्धारकः संसारादुद्धार कर्ता भवसमुद्रतारको भवसमुद्रेऽस्मांस्त्यजासि यदि तदा कस्तारको भवेत् । न कोपि गुरुं विना रक्षकस्तस्मात्त्वं वसुमतीमेत्यास्मान् ज्ञानोपदेशेन तारये त्यर्थः ॥ ९४ ॥ शुकानंदनाथस्तं भक्तं दृष्ट्वा इत्यवदत् । हे संताख्य भक्तवर्य भवाब्धेः सकाशात्तव भयं नास्ति । यतोऽसौ संसारो मिथ्यास्ति । त्वं तु सत्योसि । आत्मास्मृतौ । आत्मविस्मरणे सति एतद्देहेंद्रियादिकमपि भात्येव । यथा रज्जुविस्मरणे सति सर्पः प्रतीयते । तथा त्वमपि विस्मृतात्मा सन् अहं देहः चकारात्प्राणेंद्रियादि चास्मीति मन्यसे । तां देहोहमितिमतिं त्यज । अहमात्मास्मीतिबुद्धिस्त्वं अघात् संचितक्रियमाणपापात् मोक्ष्यसे मुक्तो भवि

ष्यसि । अविचारकृत एव संसारसंबंध इति भावः ॥ ९५ ॥ एतत्स्पष्टं संसारस्याविचारकृतत्वं दर्शयन् तन्निवृत्तये विचारमुपदिशति । देह इति । गृहात्पृथगपि वर्तमानस्त्वं गृहे दग्धे सति एतस्य गृहस्य नाथः स्वामी अहं दग्धोस्मीति गृहे वर्द्धिते धनधान्यादिना वृद्धिं प्राप्ते सति अहं वरः श्रेष्ठोस्मीति ममताधीर्देहादितादात्म्यबुद्धिर्भवसि । यथा तथा देहेहंतया सन् वर्तमानः पृथगपि सन् वर्तमानस्त्वं देहे ये सौख्यदुःखे ते सुखदुःखे मयि अस्मच्छब्दवाच्ये आत्मनि वदसि । अविवेककृतदेहतादात्म्याध्यासेनदेहधर्माश्चात्मनि प्रतीयंते इत्यर्थः । अतस्त्वं कृतं नित्यं आवश्यकर्तव्यं कर्म येन स सन् अहं देहेंद्रियाणि नास्मि । प्राणाः अहं अहंकारः धीर्बुद्धिर्मनश्च नास्मि । किंतु मुक्तः देहादिभ्यो विलक्षणः शिवोस्मीति वद उच्चारय । अपिशब्दात्तथा

देहे ये सौख्यदुःखे वदसि मयि गृहे दग्ध एतस्य नाथोऽहं दग्धो वर्द्धितेऽहं वर इति ममताधीर्हि गेहात्पृथक्च ॥ त्वं देहेहंतया सन्पृथगपि हि तथा नास्मि देहेंद्रियाणि प्राणाहंधीमनांसीति वद कृतनित्योपि मुक्तः शिवोऽहम् ॥ ९६ ॥ इत्थं नाथोदितं वै हृदि दृढमदधद्धयेक एवाखिलेषु शृण्वत्स्वंभोखिलोर्व्यां प्रपतदपि यथा निम्नभूस्तद्धि धत्ते ॥ नाथं नत्वा मुहुः सोऽब्रवददिति मम दृक् श्रीपदेक्षास्तु भूयस्तं नाथश्चावदत्ते पुरमहमनुयास्ये हि सन्मेऽत्र पुत्रः ॥ ९७ ॥ नाथाशीः सोऽथ सर्वैर्गत इह वसति श्रीगुरौ पंच बैल्वा उद्भूताश्च स्वतोभि द्रुव उत किमिमे सिद्धयेऽस्मात्सुवृक्षाः ॥ तत्रांतेवासिनां सच्छ्रवणमनुभवोऽहर्निशं चास नाथाद्यात्यस्मात्पुत्रगेहं गुरुरथ वसति स्वेच्छया यत्र कुत्र ॥ ९८ ॥

भावय च । तेन त्वं कृतार्थो भविष्यसीत्यर्थः ॥ ९६ ॥ इत्थं सर्वेषु शृण्वत्सु स एक एव संताख्यः शुकानंदनाथोक्तं हृदि मनसि अदधत् निश्चितवान् । यथा सर्वपृथिव्यां प्रपतत् पतितमप्यंभः उदकं तत् निम्नभूमिर्धत्ते हि । श्रद्धावानेव गुरुवाक्येन कृतार्थो भवति नान्य इत्यर्थः । स च नाथं मुहुर्नत्वा इति अवदत् प्रार्थितवान् । इति किम् । मम दृशोः श्रीपादेक्षणं भूयोस्तु भवतु । नाथश्च तं संताख्यमवदत् । अहं तव पुरं वसुमत्याख्यं अनुयास्ये पुनःपुनरागमिष्यामि हि । यतः अत्र वसुमत्यां मम सन् पुत्रः गुणवान् पुत्रश्चिंतामणिरस्ति । अतस्तत्प्रीतये ममागमनं भविष्यत्येव । अधुना तु नागमिष्यामीत्यर्थः ॥ ९७ ॥ अथ नाथात् आशीर्वादो यस्य स संताख्यः सर्वैः सहचारिभिः सह गतः स्वनगरं प्राप्तः । इहासनातीरे गुरौ शुकानंदे वसति सति पंच बैल्वाः

द्रवो वृक्षाश्च स्वतः अभिगुरोरासमंतात् उद्भूताः । इमे उत पुनरस्माच्छुकानंदसकाशात्सिद्धये सिद्धिं प्राप्तुं युवृक्षाः कल्पद्रुमादय एव संति किंतु । तत्र बिल्ववृक्षसमीपे शुकानंदनाथात् अहर्निशं शिष्याणां सच्छ्रवणं अनुभवश्वास । अथ गुरुरस्मात्स्थानात् पुत्रगृहं याति । कदाचित् यत्र कुत्र नंदीतटे वाऽऽसनातटे वा स्वेच्छया वसति । वासं कृतवान् । ज्ञानिनः स्वतंत्रा इत्यर्थः ॥ ९८ ॥ अथान्यद्वृत्तमाह कश्चिदिति द्वाभ्याम् । यतिरिव वेषधारी कश्चिद्व्रती ब्रह्मचारी वेत्रधृग्भिर्यष्टिधारिपुरुषैर्युक्तः नृयानारूढस्तत्पुरं वसुमत्याख्यं प्राप्तः सन् अहं पीठस्थः शृंगेरीपीठनिवासी अस्मीति जनानवदत् । ते च वसुमतीस्थजनाः जगुस्तं प्रति उत्तरं ददुः । क्रोशद्वये गुरुः शुकानंदोस्ति । तस्य शुकानंदस्योक्त्या वचनेनात्र वसुमत्यां त्वं अखिलेज्यः सर्वपूज्यो भविष्यसि ।

कश्चित्प्राप्तो हि वर्णी यतिरिव नगरं वेत्रधृग्युङ्नृयानी पीठस्थोऽहं जनान्योवददिति च जगुस्ते गुरुर्योजनार्द्धे ॥ तस्योक्त्याऽत्राखिलेज्यस्त्वमथ स निरगात्कृत्रिमः स्थानमैक्षत्पृच्छन्नाथं न तत्र स्थितमपि स चरन्तं निजैस्त्वैक्षदार्यः ॥ ९९ ॥ कष्टात्प्राप्तः पुरं सोऽनृतयतिरथ तत्राल्पमानं धनं च लब्ध्वागात्तूर्णमेवेतरपुरमुपवीतं तदीयं तु कैश्चित् ॥ दृष्टं गुप्तं जटायां रहसि कृतमधो ब्रह्मयज्ञादि कर्तुं तत्रत्यैर्धिक्कृतोऽथोषसि सकलमपीहात्यजच्चापलायत् ॥ १०० ॥

अन्यथा नेत्यर्थः । अथ स कृत्रिमो निरगात् । शुकानंदं द्रष्टुमिति शेषः । नाथं पृच्छन् स्थानं शुकानंदनिवासस्थानं ऐक्षत् । संचरन् स तत्र स्थाने स्थितमपि शुकानंदनाथं नैक्षत् न दृष्टवान् । आर्यो गुरुस्तु निजैः शिष्यैः सह तं कृत्रिमयतिं ऐक्षत् । एवं शुकानंदः सिद्धिबलेन कृत्रिमयतेर्दृष्टिपथं न प्राप्त इत्यर्थः ॥ ९९ ॥ अथ सोऽनृतवेषधारी यतिः कष्टात् गुरोरदर्शनजन्यश्रमेण पुरं वसुमतीं प्राप्तः सन् तत्राल्पमानं अल्पसत्कारं अल्पधनं च लब्ध्वा तूर्णमेव त्वरयैव इतरपुरमगात् । कैश्चित्तु जटायां गुप्तं तदीयं यज्ञोपवीतं ब्रह्मयज्ञादि कर्तुं अधःकृतं तत् दृष्टम् । तदा तत्रत्यैरितरपुरवासिभिर्धिक्कृतः द्रव्यसंपादनाय त्वं कृत्रिमयतिर्जातोसीति तिरस्कृतः सन् सकलमपि पदार्थजातं इहान्यपुरेऽत्यजत् त्यक्तवान् पलायनं च कृतवान् । एवं शुकानंदाश्रयेण

कृत्रिमपुरुषे तस्मिन् जनानुरागो नासीदित्यर्थः ॥ १०० ॥ अथ वसुमत्यां सकलैर्जनैर्धूर्तैस्तद्वृत्तं द्रव्यहरणाय यतिवेषस्वीकरणरूपं वै श्रुतं तथास्मै कृत्रिमयतये शुकानंदस्य सिद्धिसामर्थ्येन अदर्शनं च श्रुतम् । इह वसुमत्यां आर्यः शुकानंदः सर्वज्ञसिद्धोस्तीति सर्वैरुदित उक्तः । अथान्यद्वृत्तमाह बोधानंद इति द्वाभ्यां सार्द्धाभ्याम् । अथ बोधानंदाख्यो यतिर्गुर्जरदेशस्थोऽमलात्मा शुद्धचित्तः तद्वसुमत्याख्यं पुरं समगात् । इह पुरे आर्यैः श्रेष्ठैरर्चितोपि स बोधानंदः श्रवणमतिर्वेदांतश्रवणनिष्ठः सन् ईज्यपादात्पूज्यपादाच्छुकानंदसकाशादंत्यां चरमां दीक्षां परमहंसदीक्षां जग्राह ॥ १०१ ॥ क्वचित्कदाचित् श्रीगुरुः शुकानंदो नंदीतटं गत्वा इह माधवाख्यस्य गेहे वसतिं वासं कृतवान् । यो माधवोत्यंतं भक्तः शुकानंदे भक्तिमान् सुविद्वान् गुर्वभिन्नं गणपतिमभजत् । यश्चा

वृत्तं तद्धुर्यैतैर्वै श्रुतमथ वसुमत्यां तथाऽदर्शनं चेत्यस्मै नाथस्य सिद्धचोदित इह सकलैः सर्ववित्सिद्ध आर्यः ॥ बोधानंदो यतिस्तत्पुरमथ समगाद्गुर्जरस्थोऽमलात्मा सोंऽत्यां जग्राह दीक्षां श्रवणमतिरिहार्यार्चितोऽपीज्यपादात् ॥ १०१ ॥ गत्वा नंदीतटं च क्वचिदिह वसति श्रीगुरुर्माधवस्य गेहे योऽत्यंतभक्तो गणपतिमभजद्गुर्वभिन्नं सुविद्वान् ॥ नित्यं धुंडचग्र उत्क्रान्तसुखपरमतिः सत्पुराणं बहूंश्च शिष्यानध्यापयत्यात्मजसममखिलानन्नदा यस्य पत्नी ॥ २ ॥ बोधानंदाय काचित्तनुवलिलुलितं फेणिसंज्ञं सदन्नं चानीय प्रार्थयंती यत इदमभगायास्त्वयाल्पं हि भक्ष्यम् ॥ सोऽवोचन्नद्वीतटे मे गुरुरहमिदमश्नामि नो तं विनेत्थं गत्वाथो तच्च गृह्णन्स यतिरपि शुचिर्नाथशेषं बुभोज ॥ ३ ॥

त्मसुखपरा मतिर्यस्य स माधवो धुंडचग्रे गणेशसमीपे नित्यं सत्पुराणं भागवतादिकमुक्त्वा बहून् शिष्यानध्यापयति । यस्य पत्नी राधानाम्नी अखिलान् शिष्यादीन् पुत्रसमं यथास्यात्तथाऽन्नदासीत् । तस्य गृहे शुकानंदोऽवसदित्यर्थः ॥ २ ॥ एवं गुरौ नंदीतटे वसति सति गुरौ बोधानंदस्य भक्तिं दर्शयति। बोधानंदायेति । काचिद्भक्तिमती स्त्री तनुवलिभिर्ललितं सुंदरं भाषया फेणीसंज्ञकमन्नं चानीय बोधानंदं प्रार्थयंती आसीत् । हे यते त्वयाऽभगाया दुर्भाग्याया मम इदं फेणीसंज्ञकमन्नमल्पं भक्ष्यं भक्षणीयम् । ततः स बोधानंदो नंदीतटे मम गुरुः शुकानंदोस्ति । तं विनाहमिदमन्नं नो अश्नामि । तेन सह

भक्षयामीति यावत् । इत्थमवोचत् । तां स्त्रियमिति शेषः । अथ च तदन्नं गृह्णन् यतिरपि स बोधानंदः शुचिः सन् नाथं शुकानंदगुरुं नंदीतटस्थं प्रति गत्वा तदन्नं समर्प्य आत्तं स्वीकृतं शेषं गुरुभुक्तशेषं येन सोऽभवत् । एवं गुरुभक्त्या कृतकृत्योऽभवदित्यर्थः ॥ ३ ॥ अथ देशिकेंद्रस्य गंडांतप्राप्तिं परिहारं चाह । खेटांत्येत्यादिषड्भिः । अथो आर्ये शुकानंदगुरौ गृहे वसति सति आप्तेन स्वगृहं नेतुमागतेन सहितश्चिंतामणिः विदपि ज्ञानवानपि खेटांत्यं औदुंबराख्यं भाषया उंबरखेडनामकपुरमगमत् । किंभूते आर्ये अनुनमितौ प्रस्थितचिंतामणिना नमस्कृतौ चरणौ यस्य तस्मिन् कष्टेन या वाक् तया उदिताऽऽज्ञा येन तस्मिन् । भाविगंडांतज्ञानवता गुरुणा बलादाज्ञा दत्तेति भावः । अथ सन् चिंतामणिः आवित् आ साकल्येन शास्त्रज्ञस्तत्रौदुंबरग्रामे तत्रत्यैः

खेटांत्यौदुंबराख्यं पुरमगमदथो सात्तचिंतामणिर्वित्तिष्ठत्यार्येऽपि गेहेऽनुनमितचरणे कष्टवाचोदिताज्ञे ॥ तत्राथो चावसत्सन्कतिपय दिनतः प्रीतये सख्युरावित्तत्रत्यैश्चार्यविद्भिः श्रवणमनुभवं कर्तुमाप्तैस्तदंके ॥ ४ ॥ जातश्चिंतामणेरुज्वर इह वसतस्तं परीक्ष्याह वैद्योऽत्युग्रस्तापोयमाशु व्रजतु लिखितमस्याप्तमत्रागमाय ॥ श्रुत्वाप्तोऽप्रेषयत्तल्लिखितमथ शुकानंद आप्यापमृत्युं सिद्ध्या ज्ञात्वाऽऽत्मजस्याद्य न भवतु स हीत्यंतराहर्तसंधः ॥ ५ ॥

औदुंबरग्रामवासिभिः श्रेष्ठपंडितैः चिंतामणिसकाशाच्छ्रवणमनुभवं च कर्तुं तदंकं चिंतामणिसमीपं प्राप्तैः सद्भिः सख्युरामस्य प्रीतये च कतिपय दिनान्यवसत् ॥ ४ ॥ इहौदुंबरग्रामे वसतश्चिंतामणेः उज्ज्वरः महान् ज्वरो जातः । तदा कश्चिद्वैद्यस्तं ज्वरं परीक्ष्याह । अयं तापो ज्वरोऽत्युग्रो नाशकोऽस्ति । अतो लिखितं पत्रं आशु शीघ्रं अस्य चिंतामणेराप्तं पित्रादिकं प्रति अत्र पुत्रसमीपे आगमायागमनाय व्रजतु गच्छतु । पत्रं दृष्ट्वास्याप्तः सत्वरमागच्छतु । ज्वरस्य दुर्निवार्यत्वादित्यर्थः । वैद्यवाक्यं श्रुत्वा स चाप्तस्तत्तादृशं लिखितं पत्रं प्रेषितवान् । अथ शुकानंदो लिखितमाप्य प्राप्यात्मजस्यापमृत्युं सिद्ध्या ज्ञात्वा अद्य स ज्वरो मृत्युर्वा न भवतु नश्यतु । इति अंतर्मनस्याह । ऋतसंधः सत्यसंकल्पः । संधा प्रतिज्ञा मर्यादेत्यमरः । कर्तुं अकर्तुं अन्यथा

कर्तुं समर्थः शुकानंद इत्यर्थः ॥ ५ ॥ अथ शुकानंदः अणुः अल्पो बालो मयूरेश्वरः शिशुर्यस्यास्तां जयंतीं प्रति झाक् शीघ्रं त्रा मनुष्येणाश्वेन च सह उदितं उक्तं पुरं औदुंबरखेटकाख्यं प्रेषितवान् । अथ चिंतामणेश्च तापः सप्तमेद्धे दिवसेऽशमत् । शांतोऽभवत् । अखिलाश्च नाड्यो मंदा बभूवुः । सुषुम्नो त्थितिः जीवननाड्युत्थानमपि न बभूव । तदा वित् दोशिकेंद्रः असूत्क्रांतिं प्राणोत्क्रमणं वीक्षतेऽसौ असूत्क्रांतिवीक्षः अंतः मनसि एकं सत्यं ब्रह्माहमस्मि इत्थंस्थितिरभवत् । अनु अनंतरं भिषक् वैद्यः अद्य गृहेऽशनं न भविष्यतीत्याह । अस्यात्यंतमुमूर्षुत्वादिति भावः ॥ ६ ॥ तदा गेहेट् गृहस्वामी शुचिर्देव पूजारतोपि त्वरितं वैद्यमेत्याह । हे वैद्य त्वमद्य विदे चिंतामणये मात्रां देहि । भुक्तेर्भोजनस्य कालोस्तीति । स च वैद्य आह । ईषज्जलमपि वक्त्रे चिंताम

त्राश्वेन द्राग्जयंतीमुदितपुरमथाप्रेषयत्सोणुबालां तापश्चिंतामणेश्चाशमदथ दिवसे सप्तमेद्धेऽखिलाश्च ॥ नाड्यो मंदाः सुषुम्नोत्थितिरपि विदसूत्क्रांतिवीक्षोंतरेकं सत्यं ब्रह्माहमित्थंस्थितिरनुभिषगाहाशनं नाद्य गेहे ॥६॥ गेहेडाहैत्य वैद्यं त्वरितमपि शुचिर्देहि मात्रां विदेद्य भुक्तेः कालः स चाह व्रजति जलमपीषन्न वक्त्रे तदाप्तः ॥ मेऽग्रे देहीत्यवोचत्स च करकलितामंभसाऽऽघृष्य मात्रां वक्त्रे तस्याक्षिपत्सा सरवमथ गताऽंतर्गुरोरिच्छयैव ॥७॥ शब्दं श्रुत्वाथ वैद्यो वदति कफकुठाराख्यमात्रांजसास्मै दत्ता साऽऽच्छिद्य कंठस्थितमखिलकफं चोष्णमंतश्चकार॥वैद्याद्ध्यायुर्बलिष्ठं भयमणु न किलास्याद्य गेहेस्तु भुक्तिर्वोऽथाऽयाचच्च चिंतामणिरणु जलमस्यार्पयद्वैद्य उष्णम्॥८॥

णिमुखे न व्रजति । अतो मात्रा कथमस्य दातव्येत्यर्थः । तदाप्तो ममाग्रे मात्रां देहीत्यवोचत् । स च वैद्यः करकलितां हस्तलब्धां मात्रामंभसा सह घर्षयित्वाऽस्य चिंतामणेर्वक्त्रेऽक्षिपत् । अथ सा मात्रा गुरोः शुकानंदस्य इच्छया संकल्पेनैव सरवं सशब्दं यथा तथांतर्गता उदरं प्रविष्टाऽभवत् । गुरोरिच्छयै वापमृत्युर्निरस्त इत्यर्थः ॥ ७ ॥ अथ वैद्यः शब्दं मात्राप्रवेशशब्दं श्रुत्वा वदति । गृहवासिन इति शेषः । मयांजसाऽस्मै चिंतामणये कफकुठाराख्यमा त्रा दत्ता । सा मात्रा कंठगतं सर्वं कफं आच्छिद्य नाशयित्वा अंतरुष्णत्वं चकार । वैद्याद्धि आयुष्यं बलिष्ठमस्ति । अस्य चिंतामणेरणु किंचिदपि भयं नास्ति किल । अद्य गेहे वो युष्माकं भुक्तिर्भोजनमस्तु भवतु।अथ चिंतामणिश्चाणु जलं अल्पं जलमयाचत् । वैद्योऽस्य एनं प्रति उष्णं जलमर्पयत् ॥८॥

अथो गृहे भुक्तिर्भोजनमभवत् । गृहवर्तिनामिति शेषः । बहिरन्येषां जनानां वार्ता अद्य चिंतामणिर्मरिष्यति नूनमित्यादिवार्ताऽभवत् । अथाध्व नाऽध्यांती आगामिनी जयंती दूरात् तां जनैर्वाच्यमानां वार्तां श्रुत्वाऽशस्तं चिंतातुरजनत्वेनाप्रशस्तं उदितमुक्तमात्मगृहमगात् प्राप्ता । आमश्व तां दृष्ट्वाऽनमत् ननाम । स सर्ववृत्तम् औषधार्पणादिवृत्तांतमुक्त्वा हेंऽबाद्य तव भाग्येन सुदिनमभूदिति प्राह । अथ माता जयंती तत्रात्मगृहेऽतिष्ठत् । ईशे पत्यौ देशिकेंद्रे ऽरुजि रोगहीने सति सा आत्मसकाशाद्वस्त्रान्विता सती ईशा पत्या सह स्वपुरं वसुमतीं प्रति अभिययौ प्राप्ता । एवं शुकानंदसंकल्पेन चिंतामणेरपमृत्युर्निरस्त इत्यर्थः ॥ ९ ॥ अथैकपद्येन नारायणयतेर्वृत्तमाह तीर्थ इति । नारायणादिः तीर्थः नारायणतीर्थाख्यः प्राक् पूर्वाश्रमे चकारात्संन्यासाश्रमे च गुरोः

भुक्तिर्गेहेन्यवार्ता बहिरभवदथो तां तु दूराज्जयंती श्रुत्वाध्वाऽऽशांत्यशस्तं गृहमुदितमगाद्वीक्ष्य चात्तोऽनमत्ताम् ॥ प्राहेत्यंबाद्य भाग्यात्तव सुदिनमभूद्वृत्तमुक्त्वाथ माताऽतिष्ठत्तत्राऽरुजीशे स्वपुरमभिययावात्मवस्त्रान्वितेशा ॥ ९ ॥ तीर्थो नारायणादिर्यतिरभवदथांधो गुरोः प्राक् च शिष्यास्तिष्ठन्नाथाग्रतोह्ना तदुदितमणु चाकृत्यमासीन्न यस्य ॥ रात्रौ तत्पादशीर्षः स्वपिति गुरुवचोजागृतस्तत्पदे स्वे हस्ते कृत्वान्यहस्ताद्गुरुचरणतलं मर्दयंश्चाशृणोत्कम् ॥ १० ॥ पूजाऽऽषाढ्यां गुरोर्यत् क्रियत इह निजैर्वर्षवर्षेपि नाथः प्राहास्तां ते तु चिंतामण इति च सुतं सोऽपि तं चोभयोर्हि ॥ वादे तूष्णीं कुधांतर्गुरुरभवदथो क्रुद्धमाज्ञाय नाथं पूजां जग्राह चिंतामणिरपि पितरं चास्तुवद्वर्यपद्यैः ॥ ११ ॥

शुकानंदस्य शिष्यः अह्नि दिवा नाथस्य गुरोरग्रतस्तिष्ठन् सः दैवेनांधो नेत्रहीनोभवत् । अणु अपि एतस्य गुरोरुदितं उक्तं सेवादि यस्य यतेरकृत्यं नासीत् । किंतु कृत्यमेवासीत् । सर्वं गुरूक्तं कार्यं कृतवानित्यर्थः । स रात्रौ तस्य गुरोः पादसमीपे शीर्षं यस्य तादृशः स्वपिति । च पुनः गुरुवचसा जागृतः सन् तस्य पदे स्वकीये हस्ते कृत्वान्यहस्तेन गुरुचरणतलं मर्दयन् कं आत्मसुखं तत्कारणं वेदांतवचनं श्रुतवान् । गुरुसेवारतोसावात्मसुखं प्राप्तवानित्यर्थः॥ १० ॥कदाचित्कुपितं गुरुं चिंतामणिः स्तुतवानित्याह । पूजेति । आषाढपूर्णिमायां निजैः शिष्यैर्गुरोः पूजा वर्षेवर्षे प्रतिवर्षं क्रियते । तदा नाथः

शुकानंदगुरुः हे चिंतामणे ते तव पूजा आस्तां भवतु इति सुतं प्राह । स च चिंतामणिः हे गुरो त्वमेव पूजां स्वीकुरु इति गुरुं प्राह । इत्युभयोर्वादे च सति गुरुः शुकानंदो बहिस्तूष्णीं अंतः क्रुधा कोपेन युक्तोऽभवत् । अथो अनंतरं चिंतामणिरपि नाथं क्रुद्धमाज्ञाय ज्ञात्वा पूजां जग्राह । च पुनः श्रेष्ठपद्यैः पितरमस्तुवत स्तुतवान् ॥ ११ ॥ स्वकृताग्रहजन्यस्य शुकानंदहृद्गतकोपस्य शांत्यर्थं करुणाघनत्वेन प्रार्थयन् गुरुं प्रस्तौति । स्वामिन्नित्यादिपद्यैः । हे स्वामिन् हे अनाथकरुणाकर कृपासमुद्र अत एव दीनबंधो तापत्रयसंतप्तानुग्राहक । ननु अनुग्राह्यानुग्राहकभेदेऽद्वैतरूपत्वं न स्यादित्यत आह । अखंडसुखचिद्रसपूर्णसिंधो अखंडं निरंतरं सुखचिद्रसस्य सच्चिदानंदैकरसस्य पूर्णसमुद्रस्तद्रूप । ज्ञानिदृष्ट्या प्रतीयमानोपि अनुग्राह्यानुग्राहकभेदो न वस्तुतः सन्नित्यर्थः । स्वामिन्पदस्यात्यादरे वीप्सा । दीनबंधुत्वमेवाह । अबोधतिमिरस्याज्ञानांधकारस्यावृतिरावरणं तस्यावरणशक्तियुक्ताज्ञानस्य भंगे नाशे

चिंतामणिरुवाच ॥ स्वामिन्ननाथकरुणाकर दीनबंधो स्वामिन्नखंडसुखचिद्रसपूर्णसिंधो ॥ स्वामिन्नबोधतिमिरावृतिभंगभानो स्वामिन्कदाचिदपि भातु विना त्वदन्यत् ॥ १२ ॥ यदालंबादेतत्स्फुरदपि जगत्तत्त्वमगमन्विमूढा नैव त्वत्पदभजनपूजासु विमुखाः ॥ त्वदायत्ताः संतो विदुरपि च यत्तत्त्वमखिलं तदेवास्तां नित्यं मम मनसि दृश्यं करुणया ॥ १३ ॥

विषये सूर्य इव ज्ञानोपदेशेनाज्ञाननिवारक । एवं संबोध्य स्वेष्टं प्रार्थयन्नाह । त्वत् गुरुरूपाधिष्ठानाद्विना कदाचिदपि किमपीति शेषः । नो भातु न प्रकाशतु । किंतु गुरुरूपमेव सर्वं दृश्यत्वित्यर्थः ॥ १२ ॥ ननु सर्वमधिष्ठानरूपमिति दर्शनं ' आत्मैव गुरुरात्मन ' इति वचनादात्मविचारेण भविष्यतीत्याशंक्य गुरुं विना केवलात्मविचारस्याकिंचित्करत्वमित्याह । यदालंबादिति । ये तव गुरोः पदस्य भजनपूजादिषु सुतरां विमुखाः । अत एव विमूढाः गुरुं विना केवलात्मविचारवंतस्ते यस्याधिष्ठानस्य साक्षिरूपस्यालंबादाश्रयेण स्फुरत् प्रकाशमानमेतज्जगत् तस्य तत्त्वं याथार्थ्यं जगत्सत्यं वासत्यं वा सत्यासत्यं वेति निश्चयं अध्यस्तस्याधिष्ठानरूपत्वं वा नैवागमन । सावधारणनिर्देशात्तेषां यथार्थज्ञानं नास्त्येवेत्यर्थः । अपिच येतु त्वदायत्ताः गुरुसेवापरतंत्रास्ते संतो गुरुभक्ताः यत्तत्त्वं आत्मरूपं तत्त्वं अखिलं साकल्येन विदुस्तत्तत्त्वं भवत्करुणया नित्यं सततं मन्मनसि व्यक्तं स्फुटं आस्तां भवतु । श्रीगुरुकृपया ब्रह्मा

त्मैक्यज्ञानं सदास्त्वित्यर्थः ॥ १३ ॥ किंच यस्मिन् गुरौ आत्मतत्त्वे वा आविष्टाः आवेशं प्राप्ताः तच्चिंतनं तत्कथनमित्यादिनिष्ठावंतः अत एव नष्टाः अत्यंतं विलीनाः सर्वाः दृढगुणग्रंथिमतयः विषयवासनानिश्चया येषां ते निवृत्तवासनाः संतः अखिलाधिष्ठितं सर्वाश्रयभूतं स्वसुखमात्मसुखं सद्यो वासनाक्षय समकाले प्राप्नुवंति । त्वयि परमात्मरूपे गुरौ आविष्टाः गुरुसेवैकतत्पराः प्राणाः इंद्रियाणि यस्य तस्मिन्मयि त्वत्करुणा विशदं यथा स्यात्तथा नायास्यति चेत् तर्हि सा निरालंबा निराश्रया स्यात् । किंभूता करुणा बिंबस्याधिष्ठानस्यावृतिमावरणं हरति तादृशं बलं यस्याः सा । अयं भावः अधिष्ठानाज्ञानहरा तव गुरोः कृपा मयि न प्रवृत्ता चेत् निराश्रया स्यात् । तस्याः निराश्रयत्वे च निष्फलत्वं स्यात् । एतन्नयुक्तमतो मयि करुणावश्यं भवद्भिः कर्तव्येति ॥

यदाविष्टा नष्टाखिलदृढगुणग्रंथिमतयः प्रपद्यंते सद्यः स्वसुखमखिलाधिष्ठितमहो ॥ त्वदाविष्टप्राणे मयि विशदमायास्यति नचेन्निरालंबा बिंबावृतिहरबला स्याद्धि करुणा ॥ १४ ॥ न जानेहं धर्मान् श्रुतिविहितवर्णानुसरणान्न वै भक्तिं रक्तिं हरिहरमुखेषु क्वचिदपि ॥ विरक्तिं नैवेह गृहसुतधनाशापरवशः सलज्जस्त्वां स्तोतुं यदपि करुणाप्रार्थनपरः॥१५॥ततो मे क्षंतव्यस्त्वरितमपराधो हि सकलस्त्वदेकालंबस्य प्रथितगुणजाड्यस्य भगवन् ॥ शुकानंद स्वामिन्प्रबलभवपाशप्रमथन प्रसीद प्राकट्यं व्रज वृजिनदोषार्तिहरणात् ॥१६॥

॥ १४ ॥ ननु सुशीले कृपाकरणं युक्तं न तु दुःशीले त्वत्सदृशे इत्याशंक्य सुशीले कृपाकर्तारो बहवो विष्णवाद्याः संति दुःशीले तु कृपां कर्तुं गुरुरेव समर्थ इत्याह । नेति । अहं श्रुतिषु विहितान् वर्णानुसरणान् ब्राह्मणादिवर्णैरनुष्ठातुं योग्यान् धर्मान् स्वस्वक्रियाकलापान् न जाने । हरिहरादिषु क्वचिदपि साधनेषु भक्तिं फलावश्यंभावनिश्चयरूपां श्रद्धां रक्तिं प्रीतिं च नैव जाने । इह देहे गृहाद्याशापरतंत्रः सन् विरक्तिं वैराग्यं च नैव जाने। एवं दुःशीलोप्यहं यदपि यद्यपि त्वां स्तोतुं सलज्जस्तथापि करुणार्थं प्रार्थनापरोस्मि । अतस्त्वया गुरुणाऽवश्यं कृपा कर्तव्येत्यर्थः ॥१५॥ किंच यद्यपि कृपापात्रभूताः शिष्याः क्षमापात्रभूताः पुत्रादयस्तथापि पुत्रत्वेन शिष्यत्वेन चाहं कृपाक्षमयोः पात्रभूतोस्मीत्याह । तत इति । यतः प्रार्थनापरस्ततः कारणात् हे भगवन्

प्रथितं विख्यातं गुणनिमित्तं जाड्यं जडत्वम् आलस्यं वा यस्य त्वमेवैक आलंबः आश्रयो यस्य तस्य मेऽपराधः सर्वस्त्वया क्षंतव्यः । हे शुकानंद हे स्वामिन् प्रबलात् भवपाशात् प्रमथ्नाति नाशयति तत्संबुद्धिः । हे गुरो त्वं प्रसीद । वृजिनदोषेण पापदोषेण याऽर्तिः पीडा तस्याः हरणात् नाशेन प्राकट्यं व्रज प्रकटो भव । अध्यात्मादिदोषनिवारणपूर्वकं परमात्मरूपेण प्रकटो भवेत्यर्थः ॥ १६ ॥ एवं पंचपद्यैः संप्रार्थ्य प्रणमति । सच्चिदानंदतीर्थस्येति । ॐ नमो नारायणायेति मनुना मंत्रेण सच्चिदानंदतीर्थाभिधस्य गुरोः पादकमलयुग्ममहं नौमि ॥ १७ ॥ अर्पितं देशिकेंद्रेणेति शेषः ॥ १८ ॥ कविवाक्यं विंशाब्दानिति । अनीहो निरिच्छोपि शुकानंदः यतिः सन् इति प्रकारेण सत्पुत्रस्य गृहे विंशाब्दपर्यंतमवसत् । किंकुर्वन् पुत्राच्चिंतामणेः

सच्चिदानंदतीर्थस्य नौमि पादांबुजद्वयम् ॥ नमो नारायणायेति मनुना प्रणवादिना ॥१७॥ श्रीमच्छुकानंदनाथपादयोरर्पितं त्विदम् ॥ अपराधाभिधं स्तोत्रमपराधनिवारणम् ॥ १८ ॥ विंशाब्दानेव नाथो यतिरवसदनीहोपि सत्पुत्रगेहे शृण्वन्सारं पुराणादुपनिषदमलार्थं च पुत्राद्धि तस्य ॥ :षट् पौत्राश्च त्रिपौत्र्योऽभवदिति नवकं वीक्ष्य तुर्यं स चाहाऽयं विद्वान्स्थानकर्ताऽस्त्वखिलनृपवशश्चार्द्धिमत्सं प्रदायः ॥ १९ ॥ वंशोयं वृद्धिगोस्तु द्विविध इह किलान्यायकृद्यातु दुःखं स्वीयोपास्ये गुरावप्यविकलमतिमांस्तन्मतिः सर्वतोपि ॥ स्वाचाराध्वानुयायी व्रजतु सुखमिति स्वान्वयाशीः स योगी साम्राज्यं गंतुमैच्छत्परमतिरभजत्श्रैण्यमंघोणु चक्रैः ॥ १२० ॥

सकाशात् उपनिषदां अमलं निर्दोषमर्थं पुराणात्सारं च शृण्वन् । तस्य शुकानंदस्य षट् पौत्रास्तिस्रः पौत्र्य इति नवकं नवप्रकारं संतानमभवत् । अथ सः शुकानंदस्तुर्यं कनिष्ठं मयूरेश्वराभिधं पौत्रं ईक्ष्याह । अयं मयूरेश्वरो विद्वान् स्थानकर्ता मठसंस्थाकर्ता आखिला नृपा वशा यस्य सः ऋद्धिमान् संप्रदायो यस्य एतादृशोस्तु भवतु । सर्वगुणसंपन्नो भवत्वित्यर्थः ॥ १९ ॥ किंच द्विविधः कन्यापुत्ररूपः क्रियया जन्मना वा द्विविधो वंशः वर्द्धितोस्तु वृद्धिं गच्छतु । इह वंशे अन्यायकृत् अपराधकर्ता दुःखं यातु प्राप्नोतु किल । स्वीयोपास्ये उपास्यदेवतायां गुरावपि चाविकलमतिर्नानैक्यनिश्चयवान् सर्वतः सर्वत्रापि तन्मतिः गुरुबुद्धिः स्वाचाराध्वानुयायी कुलमार्गानुसरणशीलो यः सः सुखं व्रजतु प्राप्नोतु । इति स्वान्वये आशीर्वादो यस्य स योगी सत्यसंकल्पः शुकानं

दगुरुः परमतिः ब्रह्मबुद्धिः सन् साम्राज्यं स्वरूपस्थितिं गंतुमैच्छत् । अह्नयह्नि प्रतिदिवसे क्षैण्यं क्षीणत्वं अणु अंधः अन्नं च अभजत् स्वीकृतवान् । क्षीणश क्तिरल्पाहारश्चाभवत् इत्यर्थः॥१२०॥अथाह्नां त्रिके शेषे सति यः शुकानंदः अणुवचसा क्षीणशक्तित्वादल्पवचसा जयंतीं स्नुषां प्रति निशि आह्वयत्।साच इह श्वशुरसमीपे अगात्।आज्ञा कास्तीत्यवोचत् । क्षुधितो गुरुरपि उत्कृष्टमोदकान् अत्तुं भक्षितुं मे देहीत्यवोचत् । सा गुरोरुक्त्या मोदकानानयत् । अथ च गुरुस्तान्मोदकान्भक्षयित्वाह । अद्याहं तृप्तोस्मि । अतः परं ऋणानुबंधेन अशनं भविष्यतीत्याह । परेद्युर्द्वितीयदिवसे चिदाख्यः चिन्मयाख्यः सन् साधुः समगात् । शुकानंददर्शनार्थमिति शेषः ॥२१॥ अहं शुकानंदनाथेन न ज्ञातः । इति साधौ वदति सति आर्यो गुरुः काशं प्राकरोत् । अथ साधुः

अह्नां शेषे त्रिकेऽथाह्वयदणुवचसा यो जयंतीं निशीहाऽगात्सा काज्ञेत्यवोचत्क्षुधितगुरुरपीच्छात्तुमुन्मोदकान्मे ॥ देहीत्युक्त्या गुरोः सानयदथ स च तान् भक्षयित्वाह तृप्तोहं चाद्यर्णानुबंधाशनमिति समगात्सच्चिदाख्यः परेद्युः ॥ २१ ॥ ज्ञातो नाथेन नाहं त्विति वदति सति प्राकरोत्काशमार्यो ज्ञातं मत्वा स्वमेनं नतिकृदथ ययौ विठ्ठलं तद्दिदृक्षुः ॥ अन्येद्युर्ज्यैष्ठवद्ये दशम इह गुरोर्बिंदुबिंद्वस्रम ग्राद्दक्षांघ्रेर्वीक्ष्य कश्चिद्गलदिन उदिते देशिकं प्राह शीघ्रम् ॥ २२ ॥ छिद्रं चान्वीक्ष्य चिंतामणिरवददिति प्राग्गुरूक्तं हि कृष्णो व्याधेषोर्व्याजतश्चात्यजदिह हि परः कर्मशक्तिं न योगी ॥ वेत्तीदं योगसूत्रे न कुह चिद्विदितं चाथ कृष्णस्य सख्याच्छ्रौतावेशाद्धि दित्वाऽत्यजि किल गुरुणांऽघ्र्यग्रतः कर्मशक्तिः ॥ २३ ॥

स्वमात्मानं शुकानंदेन ज्ञातं मत्वा एनं गुरुं नतिकृत् नमस्कारकर्ता सन् विठ्ठलं पंढरीस्थितं प्रति ययौ । किंभूतः तद्दिदृक्षुः तस्यैव विठ्ठलस्य दर्शनेच्छुः । अन्ये द्युस्तृतीयदिवसे ज्येष्ठवद्ये ज्येष्ठमासकृष्णपक्षे दशमः । तिथिशब्दस्य पुंस्त्वापेक्षया पुंस्त्वम् । दशमीतिथिरासीत् । इह दशम्यां इने सूर्ये उदिते सति गुरोः शुकानंदस्य दक्षांघ्रेः दक्षिणपादस्याग्रात् अंगुष्ठसकाशात् गलत् बिंदुबिंदु अस्रं रुधिरं वीक्ष्य कश्चिच्छिष्यः देशिकं प्रति शीघ्रं प्राह ॥ २२ ॥ चिंतामणिः शुकानंदस्यांगुष्ठाग्रेऽणु अल्पं छिद्रं ईक्ष्य दृष्ट्वा अवदत् । श्रीकृष्णः व्याधेषोः जरीनाम्नो व्याधसंबंधिबाणस्य व्याजतः मिषेण कर्मशक्तिमत्यजत् । इह लोके

परः कृष्णाभिन्नः योगी इदं योगरहस्यं न वेत्ति । योगसूत्रे कुह चित् कुत्रापि नोदितं नोक्तं इदं रहस्यमिति उभयान्वयि।इति हि प्राक् गुरूक्तं शुकानंदेन उक्तमासीदित्यर्थः। अथ कृष्णस्य सख्यान्मित्रत्वेन श्रौतेषु श्रुत्यर्थेषु आवेशात् प्रवेशात् सकलश्रुत्यर्थज्ञानेन विदित्वा गुरुणा शुकानंदेनांध्यग्रतः अंगुष्ठाग्रात्कर्मशक्तिरत्याजि त्यक्ता । 'प्रपदाग्रं प्राभिनत्' इति श्रुतिरहस्यज्ञानवता शुकानंदेनांगुष्ठद्वारा कर्मशक्तित्यागः कृत इत्यर्थः ॥ २३ ॥ अथ शिष्याः अखिलगतं सर्वगतं न भवो जन्म अंतश्च यस्य तं जन्ममरणरहितं शुकानंदम् आत्मधामनि स्वस्वरूपे स्थितिर्यस्य तं मत्वा तटाके स्नात्वा तालादिभिः सह स्तवैः स्तुतिभिर्गुरुवरमभजंन् । स्तुतिमेवाह । नाथेत्यर्द्धेन । हे नाथ गुरो वयं देहेषु गृहेषु चाभितः साकल्येन बद्धाः साहंकाराः संतः सर्वगतमपि त्वा त्वां क

नाथं मत्वात्मधामस्थितिमखिलगतं चाभवांतं तटाके स्नात्वा शिष्याः स्तवैः श्रीगुरुमभजंस्तालवीणामृदंगैः ॥ नाथ क्वेक्षामहे त्वाखिलगमपि वयं देहगेहाभिबद्धाः पक्ष्यर्भाः स्थाननीडा इव निजजननीं नीडबाह्योपगां च ॥ २४ ॥ कृत्वा पद्मासनस्थं गुरुमथ सकलाश्चोपचारैः प्रपूज्याऽलभ्यं संगृह्य तीर्थं त्विह दिवसदलेऽस्यास्फुरद्बाहुयुग्मम् ॥ भ्रू कर्णांतौ कपोलावपि नयनयुगं काशितं वीक्ष्य सर्वे मामेवेक्षत्यधीशो जगुरिति भजनं शैवमूचुः प्रदोषे ॥ २५ ॥ तावत्प्रातोदशब्दः श्रुत उत निखिलेभ्यो भवान्यैव चोक्तस्तत्तात्पर्यं न केपीह विदुरथ गुरोर्बालकृष्णो वरांगम् ॥ मालाच्छन्नं प्रकुर्वन्विमलमथ शिरश्छिद्रमालोक्य चाह श्राद्धं भित्त्वैव नाथः स्वभुवनमगमज्ज्ञानशक्त्यास्य शब्दः ॥ २६ ॥

ईक्षामहे क पश्यामः । के इव नीडात् बाह्ये उपगतां जननीं मातरं प्रति स्थानं नीडेषु येषां ते पक्षिणोऽर्भाः बालकाः इव । मातरं विना बालका यथा तथा त्वां विना वयमनाथा इत्यर्थः ॥ २४ ॥ अथ सकलाः पुत्रशिष्यादयो गुरुं पद्मासनस्थं कृत्वाऽलभ्यं पुनरप्राप्यं तीर्थं संगृह्योपचारैर्वस्त्राद्यैरर्चयंतः पूजाकर्तारोऽभवन्निति शेषः । इह दिवसदले त्वस्य गुरोर्बाहुयुग्ममस्फुरत् । भ्रुवौ कर्णप्रांतौ कपोलौ नयनमपि काशितं प्रकाशितं वीक्ष्य सर्वेऽधीशो गुरुर्मामेवेक्षतीति जगुः । ततः प्रदोषे शिवस्य भजनमूचुः शिवभजनं चक्रुरित्यर्थः ॥ २५ ॥ यावत् प्रदोषभजनं क्रियते तावत् भवानीनाम्न्यैव प्रतोदशब्दः श्रुतः उत निखिलेभ्यः सर्वेभ्यः उक्तः । अथ तस्य शब्दस्य तात्पर्यं कारणमिह केपि न विदुः । अथ बालकृष्णाख्यशिष्यो मालाच्छन्नं पुष्पमालयाच्छादितं

गुरोर्वरांगं मस्तकं विमलमनाच्छादितं प्रकुर्वन् शिरसि छिद्रमीक्ष्याह । शुकानंदनाथः ब्राह्मं रंध्रं ब्रह्मरंध्रं भित्वा ज्ञानशक्त्या सह स्वभुवनं स्वस्थानमगमत् । अस्य ब्रह्मरंध्रभेदस्य शब्दो जात इति शेषः । शुकानंदस्य ज्ञानक्रियाशक्तिसहितोत्क्रमणेनावतारग्रहणे स्वतंत्रत्वमित्युक्तं प्राङ् न विस्मर्तव्यमिति भावः ॥
॥ २६ ॥ एवं शुकानंदगुरोः स्वरूपस्थितिमुक्त्वा वसुमत्यां तत्समाधिस्थितिमाह। स्थानमित्यादित्रिभिः।गुरुवरेण शुकानंदेन गदितम् । आसनातीरे समाधिः कर्तव्य इति देहविसर्गात्पूर्वं कथितम् । तत्समाधेः स्थानम् आसनातीरे आहुः । केचित्तु आरामभूमौ क्षितेः आरामभूमेः सततगतौ चिरकालस्थित्यर्थं स्थानं समाधेराहुरिति पदानुवृत्तिः । गुरुसमाधिसत्त्वेनारामभूमिं हर्तुं न कोपि समर्थ इति तेषामभिप्रायः। जयंती अंबिका आबालवृद्धानां ईक्षार्चनार्थं दर्शन

स्थानं केचित्समाधेर्गुरुगदितवरं चासनातीर आहुः केचित्त्वारामभूमौ क्षितिसततगतौ स्वांकपुर्यां जयंती॥ आबालेक्षार्चनार्थं त्विद मखिलमतं चास मात्रोदितं हि गेहात्पश्चात्समीपस्वगृहसर इनाद्योजितं सत्समाधौ ॥ २७ ॥ पुर्यां निन्युर्विमानास्थितगुरुमखिला स्तूर्यतो देहधीभिर्गायन्नृत्यत्स्वभक्तैः पुरत उत नदत्तालवीणामृदंगैः ॥ मुंचंतो गंधमाल्याक्षतफलसुरभिस्त्वर्णरौप्याणि नाथे पौराः पश्चाद्गतार्थाग्रगनिजसुखदास्तत्र वीथ्यस्तदासुः ॥ २८ ॥

पूजाद्यर्थं स्वांकपुर्यां स्वांकं यथा तथा पुर्यां स्वगृहसमीपे पुर्यां वसुमत्यामेवेति यावत् । समाधेः स्थानमाहेति संबंधः । इदं तु मात्रा जयंत्या उक्तं समाधिस्थानमखिलमतं सर्वमान्यम् आस हीति निश्चयेन । ततः गेहात्पश्चात्पश्चिमभागे समीपे स्वगृहं देशिकेंद्रगृहं सरस्तटाकश्च यस्य तत्र स्थानं समाधिविषये इनात् ग्रामाधिकारिणः सकाशात् योजितं सर्वैरिति शेषः । संपादितमित्यर्थः ॥ २७ ॥ अखिलाः सर्वे पौराः नाथे शुकानंदे गंधादीनि मुंचंतः संतः पुरतः अग्रे तूर्यतः वाद्यभेदेन सह देहधीभिः शरीरबुद्ध्यादिकरणैः गायद्भिः नृत्यद्भिः स्वभक्तैर्गुरुभक्तैः सह उत पुनर्नदंतस्तालवीणामृदंगा येषां तैः सह पुर्यां नगरे विमानास्थितं गुरुं निन्युः । तदा तत्र वीथ्यः मार्गाः पश्चाद्गतानां पश्चाद्गामिनाम् अर्थः सुवर्णाद्यर्थप्राप्तिर्यासु तथाऽग्रगानामग्रगामिनां भजनरतानां

निजसुखदाः स्वात्मसुखदा आसुः । पुरोगामिनः स्वात्मानंदमग्नाः पश्चाद्गामिनो नाथोपरि क्षिप्तद्रव्यलाभेन तदानंदमग्ना बभूवुरित्यर्थः ॥ २८ ॥ इत्थं समारंभेण समाधिस्थाने नीतं प्रापितं स्फुरदधरम् आत्मदं गुरुं शुकानंदम् अवेक्ष्य एके मुख्या ग्रामवासिनः ओमिति तत्त्वं ब्रह्माखंडं गुरुः जपतीति प्राहुः । अथ सतः गुरोः समाधेः प्रपूर्तिर्विधिवदभूत् । कदेत्यपेक्षयामाह । अष्टाविंशे मन्वंतरगतेऽष्टाविंशतिपर्यये अष्टनेत्रांकयुगमिते ४९२८ कलौ गते सति सर्वजित्संवत्सरस्थे ज्येष्ठमासि अंत्ये कृष्णपक्षे दशम्याम् अब्जे सोमवारे इह वसुमत्यां श्रीगुरोः शुकानंदस्य स्वधामस्थितिः समभूत् । अत्र विषये पद्यं च समभूत् देशिकेंद्रकृतमिति शेषः ॥ तद्यथा । "भूमानंदपदात्मसिद्धिवशतो मासोप्यगाज्ज्येष्ठतां निर्धूताखिलभेदजातमलतः पक्षोप्यवये

इत्थं नीतं समाधौ स्फुरदधरमवेक्ष्यात्मदं प्राहुरेकेऽखंडं तत्त्वं जपत्योमथ विधिवदभूत्सतसमाधेः प्रपूर्तिः ॥ अष्टाविंशेष्टनेत्रांकयुगगतकलौ सर्वजित्स्थे दशम्यां ज्येष्ठेंत्येऽब्जे स्वधामस्थितिरिह समभूच्छ्रीगुरोश्चात्र पद्यम् ॥ २९ ॥ पक्षं नित्योत्सवोऽभून्निजभुवनगतेः श्रीशुकानंदभूम्नः संतः प्राप्ताः स्वपूर्भ्यो गुरुपदगतयोन्येपि लब्धुं प्रसादम् ॥ संपूज्यार्यं समाधिस्थितमपि तदयुग्दुःखिनो देशिकात्तं श्रुत्वास्तार्कं हि तेजोगतमिव निजगं सर्वहृत्स्थं ननंदुः ॥ ३० ॥

तरः" ॥ २९ ॥ एवं शुकानंदगुरोः समाधिस्थितिमुक्त्वा तदनंतरं महानुत्सवो जात इत्याह । पक्षमिति । पक्षपर्यंतं निजभुवनगतेः स्वात्मस्वरूपस्थितस्य श्रीशुकानंदनाम्नो भूम्नः "यो वै भूमा तत्सुखमिति" श्रुतेः । व्यापकस्य गुरोर्नित्यमुत्सवो भजनाद्यानंदोऽभवत् । तदा साधवो गुरुपदगतयो गुरुपादांकिताः शिष्याः अन्येपि भक्ताः स्वपूर्भ्यः स्वग्रामेभ्यः सकाशात् प्रसादं लब्धुं प्राप्ताः संतः समाधिस्थितमार्यं गुरुं संपूज्य तस्य गुरोरयुजा वियोगेन दुःखवंतोपि ते देशिकानंदगुरोः सकाशात्तं शुकानंदगुरुं सर्वहृत्स्थं सर्वांतर्यामिणं निजगं स्वात्मनि स्थितम् अस्तार्कम् अस्तगतसूर्यं तेजोगतम् अग्न्यादितेजसि स्थितमिव सर्वहृत्स्थं श्रुत्वाऽऽनंदं प्रापुः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति गीतोक्तप्रकारेण स्वात्मरूपं

ज्ञात्वा ननंदुरित्यर्थः ॥ ३० ॥ एवं प्रतिवर्षेप्युत्सवोऽभवदित्याह । वर्षेवर्ष इति । प्रतिवर्षम् अंत्यः पक्षः शुक्रस्येत्यंतशुक्रे ज्येष्ठकृष्णपक्षे इनदिनतः सप्तमीसकाशात् पंचघस्रः पंचदिनात्मक उत्सवः गाथादिसाधनैरभवत् । गाथाः महत्कथाः विप्रभुक्तिर्ब्राह्मणभोजनं मिथः परस्परम् आत्मविवरणवचांसि आत्मप्रतिपादकवाक्यानि सद्गुरूक्तानि बोधकगुरुवचांसि तैः गुरुपदगतयः संतः देशिकेंद्रात् आत्मविषयान् संशयान् अपहर्तुम् आयांत्येव । तेषां निजगति वचनैः निजे आत्मनि गतिः स्थितिर्येषां तैर्वचनैर्वाक्यैः अखंडं यथा तथा ब्रह्मसत्रं किलाभूत् ॥ ३१ ॥ एकोनत्रिंशदधिकद्विशतसंख्याकं श्रीशुकानंदं प्रणमति । कृष्णेनेति । यः पूर्वमित्रेण कृष्णेन सह नगसंख्याः सप्तसंख्याः अवतारा यस्य अंत्ये सप्तमावतारे अंघ्र्यग्रतः अंगुष्ठाग्रात् कर्मणः क्रियाशक्तेर्गति

वर्षेवर्षेत्यशुक्रेऽभवदिनदिनतश्चोत्सवः पंचघस्रो गाथाभिर्विप्रभुक्त्यात्मविवरणवचोभिर्मिथः सद्गुरूक्तैः ॥ आयांत्येवापहर्तुं गुरुपदग तयः संशयान्देशिकेंद्रात्संतस्तेषां त्वखंडं निजगतिवचनैर्ब्रह्मसत्रं किलाभूत् ॥३१॥ कृष्णेन मित्रेण नगावतारोंऽत्येंघ्र्यग्रतः कर्मगतिः करंध्रात् ॥ ज्ञस्यात्मगस्तं नवनेत्रनेत्रमितं शुकानंदगुरुं नताः स्मः ॥ ३२ ॥ शृणोति सख्युश्चरितं हरेर्यो वा श्रावयेच्चाजनितः पठेद्वा ॥ भवेत्सुपुत्रः सुधनश्चिरायुर्लब्ध्वा गुरोर्ज्ञानमुपैति सिद्धिम् ॥ १३३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे शुकानंदसंन्या सात्मस्थित्यंतकथावर्णनं नाम द्विपंचाशत्तमः सर्गः ॥ ५२ ॥

र्गमनं यस्य करंध्राद्ब्रह्मरंध्रात् ज्ञस्या ज्ञानशक्त्या महात्मगः आत्मस्वरूपे स्थितो यः तं नवनेत्रनेत्रमितं २२९ शुकानंदगुरुं नताः स्मः ॥ महायोगींद्रः शुकानंद इति भावः ॥ ३२ ॥ सर्गोक्तकथाश्रवणादेः फलमाह । शृणोतीति । यः पुमान् हरेः सख्युः सुदाम्नः तदवतारभूतस्य शुकानंदस्य आजनितः जन्मसकाशात् चरित्रं अन्यं प्रति श्रावयेत् वा पठेत् वा शृणोति च । सः सुपुत्री सुपुत्रवान् सुधनः बहुधनवान् चिरायुः बह्वायुः सन् गुरोः सकाशा ज्ज्ञानं लब्ध्वा सिद्धिं मोक्षमुपैति ॥ १३३ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां द्विपंचाशत्तमः सर्गः ॥ ५२ ॥

उत्रिपंचेऽमरामाब्जैर्मेगाकाशीकथेयेते । गुरुभागवतोत्पत्तिर्ग्रामार्मिदेशिकात्मता ॥५३॥ अथावशिष्टदेशिकेंद्रचरित्रमाह । सिद्धिमित्यादिभिः । अथ शुकानंदे सिद्धिं गते सति देशिकेंद्रगुरुरन्वहं प्रत्यहं मठे प्रातर्भजनं प्रदोषभजनं च कुर्वन् गृहेऽशनं यस्य स गृहे भोजनकर्ता आसीत् ॥ १ ॥ गुरोः शुकानंदस्यालयं देवालयं प्राकारं च दृढं यथा तथा कर्तुम् आरभन् सन् पुत्रैर्जयंत्या च गंगाम् अनेकशः अनेकैः जगन्नाथेनोक्तो यो गंगालहरीनामा गंगायाः स्तवस्तस्य पाठैः स्तुवन् उत्तमशिल्पिभिस्तीर्थमखनदित्यन्वयः ॥ २ ॥ ३ ॥ तत्र तीर्थे गंगावतरणार्थं गंगां स्तौति । नम इत्यादिपंचभिः । हे गंगे तुभ्यं नमोस्तु । त्वं तु तुंगमत्युच्चम् ईश्वरसदनं कैलासस्तस्मात्सकाशात् मातंगेश्वरो महागजस्तन्मुखास्तदाद्याः मृगपक्ष्याद्याः जनाश्च मनुष्यास्तेषामघं पापं दलयितुं

कविरुवाच ॥ सिद्धिं गते शुकानंदेऽथान्वहं देशिको मठे ॥ उषःप्रदोषभजने कुर्वन्नासीद्गृहाशनः ॥ १ ॥ प्राकारं चालयं कर्तुं गुरोः सच्छिल्पिभिर्दृढम् ॥ आरभन्तीर्थमखनत्स्तुवन्गंगां सुतैः स्त्रिया ॥२॥ जगन्नाथोक्तगांगेयस्तवपाठैरनेकशः ॥ स्वयं च तं पठन्गंगां प्रार्थयन्सोऽब्रवीदिति ॥ ३ ॥ श्रीदेशिकेंद्र उवाच ॥ नमो गंगे तुंगेश्वरसदनतस्त्वं त्विह गता धरांगे मातंगेश्वरमुखजनाघं दलयितुम् ॥ मदंगेऽघाभंगे यदि निजकमासिच्य रुगघं ह्यरं गेहांगेहाऽभिभवमनुहंसीतरहृतम् ॥ ४ ॥ मिषाद्विष्णोर्वेषाकलितजगतः पादनखतो रुषाऽभूरुद्दोषा जलतनुरदः कावरणतः ॥ झषाद्याभूषाऽगाः परमतियुगैर्मेरुशिखरं विषादोषाकृष्टच्छिरसि भवतीं स्थाणुर दधत् ॥ ५ ॥

नाशयितुम् इह धरांगे भूभागे गता प्राप्तासि । सर्वेषां पापनिवारणार्थमेव तवागमनमित्यर्थः । यदि त्वम् अघेन पापेन अभंगे दृढे मदंगे निजकं निजजलमासिच्य रुगघं रोगरूपं पापम् अनुवारं वारंवारं हंसि नाशयसि । तर्हि इतरत् अन्यत् तव कृत्यं लोकोपकारायावतरणादि सर्वं ऋतं सत्यं स्यात् हीति निश्चयेन । किंभूतं रुगघम् अरम् अत्यंतं यथास्यात्तथा गेहांगयोर्गृहदेहयोरीहानां वासनानाम् अभितः भवो जन्म यस्मात्तत् ममताहंतादिबंधजनकमिति यावत् । एतादृशं मम पातकं निजोदकप्रादुर्भावेन दूरीकरोषि चेत्तर्हि तव महत्त्वं सत्यं स्यादिति भावः ॥ शिखरिणी वृत्तम् ॥ ४ ॥ जलावरणात्कैलासं प्रत्यागमने हेतुं वर्णयति । मिषादिति । वेषेण त्रिविक्रमदेहेनाकलितं व्याप्तं जगत् येन तस्य विष्णोः पादनखतः पादनखस्य मिषात् स्पर्शनिमि

तेन सार्वविभक्तिकस्तसिः । अदसः अमुष्य जगतः कावरणतः ऊर्ध्वजलावरणसकाशात् जलतनुः जलदेहा त्वं रुषा क्रोधेन उद्घोषा महाशब्दवती अभूः जातासि । झषाद्याः मीनाद्या आ समन्तात् भूषाः अलंकारा यस्यां सा त्वम् अतियुगैः बहुयुगैः बहुकालेनेति यावत् । परम् उत्कृष्टं मेरुशिखरं प्रति अगाः प्राप्तासि यदा । तदा दोषाकृतं रजनीकरं चंद्रं बिभर्ति यः सः स्थाणुः शिवः कैलासवासी विषात् विषनिमित्तेन तत्कृतदाहनिवारणार्थं भवतीं त्वां प्रति शिरसि अदधत् धृतवान् । निजावरणे विष्णोः पादनखस्पर्शेन क्रोधवशात्प्राप्ता त्वं शिवेन शिरसि धृता सती शांतरूपा जातासीति भावः ॥ ५ ॥ कैलासाच्च भुवं प्रत्यागमने कारणद्वयमाह । नगोत्पत्त्येति । नगात् हिमालयादुत्पत्तिर्यस्यास्तथा सपत्न्या पार्वत्या कर्त्र्या । अपत्यात् गणपतेः सकाशात् गौतममुनेः कर्मणिषष्ठी । ✱ प्रति गोहत्याभीत्या गोहत्याभयेन निमित्तेन । पतिशीर्षैकनिलया शिवजटानिवासिनी त्वम् अणु किंचिद्बहिष्कृतासि । अत्रेयं कथा

**नगोत्पत्त्याऽपत्यात्त्वमथ पतिशीर्षैकनिलयांऽब गोहत्याभीत्या बहिरणु कृता गौतममुनेः ॥ निजेट्च्युत्या नुत्या शिवत उत राज्ञा त्वमखिला भुवस्तत्या गत्या सरिदधिपनीतार्यगतये ॥६॥ न भेदोणुर्गोदोत्तरजलगयोस्त्वं द्वितनुभृन्न वादोपि स्कांदोदितसुमतगंगैक वचनात् ॥ सदोत्संगे मां दोर्भृदिति मम गंगैव जननी ह्यदोभेदो नो ते त्वयि गतिमतीशार्यवनिता ॥ ७ ॥**

गोरूपा पार्वती रक्षकरूपेण गणेशेन सह गौतमस्य शालिक्षेत्रे आगत्य गोरूपया तया धान्यं भक्षितं यदा तदा गौतमेन तृणमभिमंत्र्य प्रक्षिप्तं ततो गौर्मरणं प्राप्ता । अथ रक्षेण गणपतिना गोहंता गौतम इति भाषितम् । गौतमोपि तद्दोषनिवृत्त्यर्थं शिवं संप्रार्थ्य गोदामानीतवानिति । उत पुनः राज्ञा भगीरथेन कर्त्रा । निजेशां स्वपूर्वजानां सगराणां च्युत्या भ्रंशेन निमित्तेन । शिवतः शिवस्य नुत्या स्तुत्या अखिला सर्वरूपा त्वं भुवस्तत्या विस्तारेण या गतिस्तया विस्तृतगमनेनेति यावत् । आर्याणां पूर्वजानां गतये मोक्षार्थं सरिदधिपं समुद्रं प्रति नीता प्रापितासि । अत्रापि विष्णुभागवते कथा । भगीरथेन कपिलशापदग्धान् पितॄनुद्धर्तुं भागीरथी आनीतेति । सर्वेषामघनिवारणार्थं भूमौ तव द्विधाऽवतरणमित्यर्थः ॥ ६ ॥ एवं गंगावतरणे द्विधा कारणमुक्त्वा द्विरूपायास्तस्याः स्वमात्रा गंगानाम्न्या सहाभेदं वर्णयन्नाह । न भेद इति । गोदा च उत्तरजलगा भागीरथी च तयोर्भेदः अणुरपि नास्ति । हि यतस्त्वं

द्वितनुभूत् देहद्वयधारिणी असि । स्कांदे स्कंदपुराणे उदितं उक्तं च तत् सुमतं मान्यं गंगाया एकं वचनम् एकत्वप्रतिपादकं वचनं तस्माद्धेतोः वादोपि नास्ति । गोदाभागीरथ्योर्मध्ये एकस्या एव महत्त्वमिति विरोधो नास्तीत्यर्थः । यथोक्तं स्कांदे । "आद्या सा गौतमी गंगा द्वितीया जाह्नवीतथा" इति सदा उत्संगे अंके मां प्रति दोर्भ्यां बाहुभ्यां बिभर्ति सा गंगैव त्वं मम जननी मातासि । ते तव अदोभेदः अमुया मात्रा सह भेदो नास्ति । यत्र ईशस्य गुरोरार्या श्रेष्ठा वनिता पत्नी गंगानाम्नी मम माता त्वयि गोदायां गतिमती गमनवती आसीत् गोदायां प्रविष्टेत्यर्थः । अयं भावः बाल्ये त्वं मातृरूपेण मां पालयित्वांते गंगां प्रविष्टासि यतस्ततो गंगैव मम माताऽसीति ॥ ७ ॥ सर्वेषां जलदात्री त्वं गुरुसेवापरेण मया प्रार्थिता सती मठे आत्मनः प्राकट्यं कुर्वित्याह । यत इति । यतः कारणाद्विध्यंडे ब्रह्मांडे यज्जलं तत् पातीति । ब्रह्मांडजलस्वामिनी त्वम् अंभोधेः समुद्रस्य चतुर्थ्यर्थे वा षष्ठी । अंभोदा

यतोऽभोदांभोधेस्त्वमसि खलु विध्यंडजलपा विदंभोंभो लब्धुं तव जननि संप्रार्थय इति ॥ पदांभोजं शंभोः पितुरिह मयाऽऽसेवि सततं न कौंभोऽथारंभोऽपि च पर उतात्रावतरताम्॥८॥कविरुवाच॥इत्यंतं प्रार्थयन्गंगां देशिकश्चाभजन्मुखात् ॥ लीलावतरणं द्रक्ष्ये भागीरथ्याः कदाद्भुतम् ॥ ९ ॥ अथोक्तकालेधःस्थानेऽवातरत्सामलांभसा ॥ दर्शयंत्यल्पसिकताशुक्तिशंखान् सजीवकान् ॥ १० ॥

भागीरथीरूपेण जलदात्री असि खलु । अतः हे जननि विदंभः दंभरहितोहं तवांभः उदकं लब्धुं इति प्रार्थये । ननु अत्रैवागमने किमर्थं तवाग्रह इत्याशंक्याह । मया पितुः पितृरूपस्य गुरोः शंभोः पदांभोजं इह मठे आसेवि सेवितम् । अथ कौंभः कुंभगुरुसंबंधी आरंभः हरिद्वारे पर्वारंभः उत पुनः अपरः सिंहे गुरौ गोदायां पर्वारंभः कन्यागुरौ कृष्णानद्यां पर्वारंभो वा नासेवि न प्राप्तः । गुरुं विना तीर्थांतरं न गतोस्मि । अतोऽत्र मठे अवतरतां प्रकटीभवितव्यं त्वयेति शेषः ॥ ८ ॥ एवं देशिकेंद्रस्तुत्या गंगा प्राप्ता इत्याह । कविवाक्यम् । इत्यंतमित्यादि । इत्यंतम् एतत्पर्यंतं प्रार्थयन् अहं भागीरथ्याः अद्भुतं लीलावतरणं कदा द्रक्ष्ये पश्यामि । इति मुखेनाभजत् ॥ ९ ॥ अथ उक्ते अमुकतिथौ भागीरथ्याः प्रादुर्भावो भविष्यतीति । गुरुणा उक्ते काले सा गंगा

सजीवकान् सूक्ष्मसिकताशुक्तिशंखान्दर्शयंती सती अधःस्थाने अधोभागे निर्मलोदकरूपेणावतरत् ॥ १० ॥ अथ देशिको गुरुः नर्तनं कुर्वन् अखिलैः सह ग्रह मे दृष्या भागीरथ्याः नूतनलीलाऽद्य दृष्टास्ति ॥ ११ ॥ १२ ॥ १३ ॥ निजान् स्वकीयान् ॥ १४ ॥ साधोर्देशिकेंद्रस्य स्तवनेन अभिनव गंगायाः मर्यादां माहात्म्यं चाह । स्पृशेदित्यादिपंचभिः । उच्छिष्टभांडेनाघनाशिनी गंगा नो स्पृश्या स्पर्शार्हा न भवति । एवमशुचिना नरा मनुष्येण न स्पृश्या । अखिलैः पदा न स्पृश्या ॥ १५ ॥ सार्द्धर्तुना मासत्रयेण स्नानादिति सर्वत्र योज्यम् । स्नानेन अपत्यं संततिर्भविष्यतीत्यध्याहारः ॥ १६ ॥

देशिकोथाखिलैर्नृत्यन्भजनं त्वित्थमब्रवीत् ॥ दृष्टाद्याभिनवा लीला भागीरथ्याश्च मे दृशा ॥ ११ ॥ दत्त्वा वितानं तीर्थोर्ध्वमुत्सवं देशिकोऽकरोत् ॥ भागीरथ्याः स्तवैर्वाद्यैः पूजनैर्विप्रभोजनैः ॥ १२ ॥ द्रष्टुं त्वभिनवां गंगां ययुः पौराः परेपि च ॥ कश्चित्साधुः शूद्र जातिर्द्रष्टुं चागात्स्वशिष्ययुक् ॥ १३ ॥ शांतोनीहः शंभुभक्तस्तद्वीक्ष्याह निजानिति ॥ इदमंभोऽतितेजस्वि नान्यांभःसममीक्ष्य ताम् ॥ १४ ॥ गंगैव साक्षात्प्राप्तात्र साधोः स्तुत्याऽघनाशिनी ॥ स्पृश्या नोच्छिष्टभांडेनाशुचिना नाऽखिलैः पदा ॥ १५ ॥ उद्धृते नांभसा स्नानं बहिः कार्यमघापहम् ॥ स्नानात्सार्द्धर्तुनापत्यं बाधाशांतिः शरद्दलात् ॥ १६ ॥ व्यतुर्तोऽकिंचनत्त्वांतो मंडलात्कुष्ठरुक्क्षयः ॥ द्विमासाभ्यां तु विद्याप्तिर्मासाच्छत्रुपराजयः ॥ १७ ॥ सभा वश्या त्रिपक्षैः स्यात्स्त्रीलाभः पंचमासतः ॥ कर्तव्यं कामिभिः स्नानं यथा केनापि नेक्ष्यते ॥ १८ ॥ व्रतस्थैः श्रीगुरोरग्रे शायिभिः श्रद्धयामलैः ॥ कदाचिन्महति प्राप्ते पर्वण्यल्पे तदाज्ञया ॥ १९ ॥

अकिंचनत्वांतो दारिद्र्यनाशः । मंडलात् चत्वारिंशद्दिनैः ॥ १७ ॥ त्रिपक्षैः सभा वश्या स्यात् । नेक्ष्यते नावलोक्यते । उषसि कर्तव्यमित्यर्थः ॥ १८ ॥ व्रतस्थैर्ब्रह्मचर्याधःशय्यासत्यभाषणैकभुक्त्यादिव्रतनिष्ठैः । पूर्वार्द्धं पूर्वान्वितम् । यदा कदा चिन्महति पर्वणि अल्पेऽल्पकालात्मके ग्रहणादौ प्राप्ते सति तदा गुरोरेवाज्ञया नृभिः साक्षात्स्नानं तीर्थे निमज्ज्य स्नानं कार्यम् । अन्यथा न कर्तव्यमिति संबंधः ॥ १९ ॥

असौ शिवभक्तः साधुः पारोक्ष्येण परमार्थदृष्ट्या न तु पक्षपातेनेति यावत् । एवमुक्त्वाऽऽर्यं गुरुं नत्वा निजैः स्वीयैः सह निर्ययौ ॥ २० ॥ तत् साधुवाक्यम् । अथ देशिक आह । साधुः आत्मीयः न च पुनः किंचित्परिचितोपि नास्ति ॥ २१ ॥ पुरस्थः ग्रामस्थो नास्ति । तेन साधुना कर्त्रा । परमेश्वरेणांतर्यामिणा यांऽतः हृदि स्फूर्तिः तया यत् उक्तं तत् ऋतं सत्यमस्ति । अत्र तीर्थे ॥ २२ ॥ यंत्राभमिति । अत्यर्थैर्बहुधनैः मंत्रिभिः याज्ञिकद्विजैः अभिनवगंगेति नाम्ना तस्य तीर्थस्योत्सर्गमुद्यापनं चाकरोत् ॥ २३ ॥ नाथस्य गुरोरात्ते कृष्णनाम्नि विधेः दैवात् कुष्ठरोगोऽभवत् । असौ कृष्णः तस्य कुष्ठस्य शमाय शांत्यर्थम् उक्तानि भेषजादीनि

गुरोरेव नृभिः कार्यं साक्षात्स्नानं न चान्यथा ॥ परोक्षेणैवमुक्त्वासौ नत्वार्यं निर्ययौ निजैः ॥ २० ॥ मठस्थैस्तच्छ्रुतं कैश्चिद्देशिकायोक्तमादितः ॥ देशिकोथाह नात्मीयश्चेषत्परिचितोपि सः ॥ २१ ॥ न पुरस्थः किलेशांतःस्फूर्त्योक्तं तेन तदृतम् ॥ साक्षाद्गंगैव संप्राप्ताऽत्रास्मत्कुशलकारिणी ॥ २२ ॥ कविरुवाच ॥ यंत्राभं शिल्पिभिस्तीर्थमत्यर्थैर्देशिकोऽकरोत् ॥ नाम्नाभिनवगंगेति तदुत्सर्गं च मंत्रिभिः ॥ ॥ २३ ॥ नाथात्तेभूद्विधेः कुष्ठः कृष्णेऽसौ तच्छमोक्तकृत् ॥ नैवाकुष्ठोथ तीर्थेद्धा स्नपन्मंडलमुक्तवत् ॥ २४ ॥ देशिकेनेक्षितोऽकुष्ठः पृष्टः केन सुरुग्भवान् ॥ क्षमस्वेति मुहुर्नत्याऽऽहैनं तीर्थाप्लुतेः फलम् ॥ २५ ॥ देशिकश्चाह तं मैतद्रहस्यं ब्रूहि कुत्र चित् ॥ पुत्रो मंगलमूर्तिश्चापत्तीर्थे शिशूदितः ॥ २६ ॥ नत्वा स्तुत्वा शुकानंदं चावर्त्य त्रिः शनैः पदैः ॥ मुहूर्तेनैत्य गुरुणा गंगादत्त इवोद्धृतः ॥ २७ ॥ गंगाप्रसादं नामास्य कृतं गंगात्तजन्मनः ॥ वीक्ष्य तीर्थजले तैलं कश्चिद्वैद्योब्रवीद्गुरुम् ॥ २८ ॥

करोति सः तच्छमोक्तकृत् कुष्ठनिवारणार्थमुपायकर्ता सन्नपि अकुष्ठो नैवाभवत् । अथायुत्तरान्वयि ॥ २४ ॥ केनोपायेन सुरुक् सुकांतिः । एवं देशिकगुरुं तीर्थस्नानादेतत्फलमित्याह । स इत्यध्याहारः ॥ २५ ॥ एतत् तीर्थस्नानेन कुष्ठनिवृत्तिर्भवतीति रहस्यं कुत्र चित् जनेषु मा ब्रूहि । अन्यद्वृत्तमाह । पुत्र इत्यादिद्वाभ्याम् । शिशुभिर्बालकैरुदितः उक्तः गुरवे कथितश्चासीदिति योज्यम् ॥ २६ ॥ गंगया दत्त इव उद्धृतः । मुहूर्तव्यवधानेपि अव्ययपुत्रलाभेन गंगयैवायं समर्पित इति निश्चयो देशिकेंद्रगुरुणा कृत इति भावः ॥ २७ ॥ गंगासकाशात्प्राप्तं जन्म यस्य तस्यास्य मंगलमूर्तेः गंगाप्रसाद इति

नाम कृतं देशिकेंद्रगुरुणेत्यनुवृत्तिः । एवं गंगाप्रादुर्भावमुक्त्वा काशिकाप्रादुर्भावमाह । वीक्ष्येत्यादिसार्द्धाष्टभिः ॥ २८ ॥ भेषजाशिनः औषधसेविनः ते इति कर्तरि षष्ठी । त्वया ऊर्जदीपैः कार्तिकदीपैः तद्गलिततैलेनेति यावत् । दूषितमुदकं हेयं त्याज्यमस्ति । यावदेवं वैद्यो वदति तावत् भगवतीनाम्नी गुरुकन्या लघ्वी सप्तवर्षा सा समानवयस्कां आर्यजां पंडितपुत्रीं प्रति इति वक्ष्यमाणं स्वप्नमाह ॥ २९ ॥ तदेव स्वप्नमाह । दृष्टमित्यादिसार्द्धद्वयेन । अनंभः जल रहितं ततः प्रकाशबहुलं तेजोव्याप्तं दृष्टम् । तस्मात्तीर्थात् ॥ ३० ॥ तया सितापुटं शर्करापुटकं मंगलमूर्तये दत्त्वा ममायं पुत्रो मया सुताय पुत्रायार्पित इति चोक्तं कथितम् । अत्रास्मच्छब्दस्य षष्ठ्या कर्तरि षष्ठ्या च उभयान्वयित्वम् । तस्मात् द्वावपि पुत्रावित्यर्थः॥ ३१ ॥तथा पुंसा शुकानंदसदृशेन मह्यं दत्तम् ।

ऊर्जदीपैर्दुष्टमंभो हेयं ते भेषजाशिनः ॥ तावद्भगवती स्वप्नं लघ्वीत्याहार्यजां समाम् ॥२९॥ दृष्टं तीर्थं मयाऽनंभः प्रकाशबहुलं ततः ॥
निर्गतौ दंपती तस्माच्छुकानंदसमः पुमान् ॥ ३० ॥ अभ्यक्ता मुक्तकेशा स्त्री तया मंगलमूर्तये ॥ दत्त्वा सितापुटं चोक्तं पुत्रोयं मे
सुतार्पितः ॥ ३१ ॥ पुंसा दत्तं तथा मह्यं ततो जातास्मि जागृता ॥ तूष्णीं स्थित्वाशृणोद्दूराद्देशिकः श्रद्धयेति च ॥ ३२ ॥ वैद्यं
प्राहैतदंभोहं पिबाम्यश्नंश्च भेषजम् ॥ अणूक्तं तीर्थमाहात्म्यं सर्वं वक्तुं क ईश्वरः ॥ ३३ ॥ शैवोथासीन्मठे कश्चिद्वर्चस्वी गुरुसेवया ॥
उषस्यैक्षच्चिरंटीं सोऽनिद्रः कासीति चाह ताम् ॥ ३४ ॥ काश्यस्म्यत्रागता स्थातुं सेत्युक्त्वांतर्दधे मठे ॥ तेनोक्तं देशिकायेदं श्रुत्वोचे
सोऽखिलानिति ॥ ३५ ॥ गुरोर्गुरुत्वं भक्तेभ्यः काशीगंगागमाद्वदन् ॥ मत्वा तं च गुरोर्भक्त्या देवतेक्षार्हतां गतम् ॥ ३६ ॥

शर्करापुटमित्यनुवृत्तिः । ततोहं जागृता जातास्मीति देशिकगुरुस्तूष्णीं स्थित्वा दूरात् श्रद्धया श्रुतवान् ॥ ३२ ॥ भेषजं गृह्णन्नपि अहं एतदंभः एतत्तीर्थोदकं पिबामीति वैद्यं प्राह । देशिक इत्यनुवृत्तिः । अणूक्तमित्यादिकविवचनम् ॥ ३३ ॥ एवं हि भगवतीस्वप्नवचसा काशीत्वज्ञानेपि पुनः प्रत्यक्षं दर्शनं जात मित्याह । शैव इत्यादिद्वाभ्याम् । चिरंटीं सुवासिनीम् ॥ ३४ ॥ तेन शैवेन । सः देशिकगुरुः इति वक्ष्यमाणं सर्वान्प्रति ऊचे उक्तवान् ॥ ३५ ॥ किं कुर्वन् काशीगंगाऽऽगमनेन शुकानंदगुरोर्महत्त्वं भक्तेभ्यो वदन् । किं कृत्वा तं च शैवं गुरुभक्त्या देवतायाः ईक्षार्हतां दर्शनयोग्यत्वं गतं प्राप्तं मत्वा निश्चि

त्येति पूर्वश्लोकान्वितम् ॥ ३६ ॥ अथ देशिकेंद्रगुरुर्गंगाकाश्योरागमनं सहेतुकं वर्णयन्नादौ गंगागमनहेतुं तदभिप्रायमाह । अगणितेति त्रिभिः । असंख्यातजनसंघः स्नानेन मयि गंगायां पापौघं त्यजति । तस्याघौघस्यापहंत्री नाशिका सज्जनानां साधूनाम् आप्लुतिः स्नानमस्ति । यतोस्मिन्युगे अदंभिनः दंभरहिताः साधवः क्वचिदपि न संति । अतोहं इलायाः भूमिसकाशात् सुरभुवनं स्वर्गं प्रति अल्पकालेन यास्ये गच्छामि । मालिनीवृत्तम् ॥ ३७ ॥ स्वर्गेपि साधुसंगाभावात्पुनश्च भूमिगमनमिच्छंत्याह । दिवीति । स्वर्गेपि किंचित्साधुसंगो न भवति हि । यतः इह स्वर्गे क्रियावतां कर्मकर्तॄणां स्थितिरास्ति । ते च स्वर्गवासिनोऽल्पाधिकाख्या कर्मतारतम्येन न्यूनाधिकैश्वर्यलाभेन परस्परं स्पर्धिनो द्वेषकर्तारो भवंति । अतः स्वर्गे साधुसंगलेशोपि नास्तीत्यर्थः । भूमा

श्रीदेशिकेंद्र उवाच॥ अगणितजनसंघः स्नानतो मय्यघौघं त्यजति तदपहंत्री चाप्लुतिः सज्जनानाम् ॥ क्वचिदपि न युगेस्मिन्साधवोऽदंभिनोतः सुरभुवनमिलायाः स्वल्पकालेन यास्ये ॥ ३७ ॥ दिवि च न भवतीषत्साधुसंगः क्रियावत्स्थितिरिह हि मिथस्ते स्पर्धिनो ह्यल्पाधिकाख्या ॥ श्रुत उत वसुमत्यां कृष्णमित्रात्मवेत्ता स्थित उरुयुतिशक्त्या स्फूर्तिमत्सत्समाधौ ॥ ३८ ॥ न च कलिभवदोषास्तन्मठे गंतुमीशाः सततमजविदुक्तैर्वेदशीर्षैः सदर्थैः॥ कलिरपि बुधसंगात्तत्र चेत्थं विचार्यावतरदिह च गंगाघौघहंत्री[illegible] ॥३९॥

वेव सत्संगोस्तीति स्मरंत्याह । श्रुत इति वसुमतीनगरे कृष्णमित्रश्चासौ आत्मवेत्ताऽऽत्मज्ञश्च एतादृशः शुकानंदः स्फूर्तिमति दर्शनमात्रेणात्मस्मृतिकरे उत्तमसमाधौ बहुयोगशक्त्या स्थितोस्तीति श्रुतः । मयेति शेषः । अतस्तत्राहं गच्छामीत्यभिप्रायः ॥ ३८ ॥ ननु तत्रापि मठे कलिदोषेण दुःखं स्यादत आह नेति । कलियुगभवाश्च दोषास्तस्य शुकानंदगुरोर्मठे गंतुं न समर्थाः । तत्र हेतुमाह । सततम् अजविद्भिः ब्रह्मविद्भिः उक्तैः कथितैः सदर्थैः उत्तमार्थयुक्तैः वेदशीर्षैः उपनिषद्भिः निमित्तभूतैः । अनिशं ब्रह्मवार्तया तत्र कलिदोषो नास्तीत्यर्थः । ननु वासे बहूनां कलह इति वचनात्तत्र कलहस्तु स्यादेवेत्यत आह । तत्र कलहोपि बुधसंगाद्भवेत् । विद्वज्जनैः सह कलहः सुखदः स्यादित्यर्थः । यथोक्तं "विज्ञेन कलहः प्रोक्तो ह्यमृतादपि दुस्तरः । मूर्खेण सह संवासो

विषादपि सुदुर्घटः" इति । इत्थं प्रकारेण विचार्य दर्शनमात्रेण पापौघहंत्री गंगा इह मठेऽवतरत् प्राप्ताऽभूत् ॥ ३९ ॥ एवं श्लोकत्रयेण सहेतुकं गंगागमनं मुक्त्वा तथैव काश्यागमने हेतुभूतं तदभिप्रायमाह । वदतीति । मयि काश्याम् अजनिदो मोक्षप्रद ईशो विश्वनाथो मुमूर्षुं प्रति तारकमंत्रं वदति । उत पुनः गतासोर्मृतस्य भैरवादुक्तो दंडो येन सः शिवोऽजनिदो मोक्षप्रदो भवति । उरुतनुधीनां दृढदेहबुद्धीनां कर्मणां क्षयः भोगैरेव भवति । "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भगवदुक्तेः काशीमरणेपि भैरवकृतदंडेन भोगक्षये सति मुक्तो भवति अन्यथा नेत्यर्थः । गुरोः सकाशान्निजसुखभाजाम् आत्मसुखसेविनां सः कर्मभोगो विचारेण स्यात् । गुरुभक्तानां कर्मभोग आत्मविचारेण अकर्तृत्वनिश्चये सति स भोगो भुक्तोपि अभुक्त एव भवतीत्यर्थः ॥ ४० ॥ काश्यपेक्षया गुरुकाश्याः अधिकत्वं मत्वाह । इति प्रकारेण मयि काश्यां मृतस्य जंतोर्मुक्तिदो विश्वनाथोस्ति। गुरुकाश्यां तु गुरुरखिले सर्वत्र सदुक्त्या ब्रह्मो

वदति मयि मुमूर्षुं तारकं हीश एवाऽजनिद उत गतासोर्भैरवादुक्तदंडः॥क्षय उरुतनुधीनां कर्मणामेव भोगैर्गुरुनिजसुखभाजां स्याद्वि चारात्स नूनम् ॥ ४० ॥ इति मयि मृतजंतोर्मुक्तिदो विश्वनाथो गुरुरखिलसदुक्त्या जीवतस्तां ददाति॥ पशुरपि महिषः प्राङ्मुक्ति भाग्ज्ञानिनोक्तस्तदभिगतसुमार्गः सन् शुकानंदयोगी ॥ ४१ ॥ युतिगतिरजवित्स्वैर्मुक्तिदो जीवतश्चाऽहमिति तमभियास्ये जीवतोऽ ज्ञान्स्वदास्मात् ॥ इतिमतिरिह काशी चागता नूनमस्याः प्रभवतु गुरुकाशीनाम जीवत्स्वदानात् ॥ ४२ ॥

पदेशेन जीवतः पुरुषस्य तां मुक्तिं ददाति । ननु काश्यां पशवोपि मुच्यंते गुरुकाश्यां तु ज्ञानाधिकाराभावान्न मुच्यंत इत्याशंक्याह । प्राक् पूर्वं ज्ञानिना ज्ञानदेवेन गुरुणा उक्तः उपदिष्टो महिषाख्यः पशुरपि मुक्तिभाक् मुक्तिं गत आसीत् । तस्मात् ज्ञानदेवात् अभिगतः प्राप्तः सुमार्गः संप्रदायो यस्य स शुकानंदयोगी सन्साधुरस्ति । एवं गुरुकृपया पशवोपि मुच्यंत इत्यर्थः ॥ ४१ ॥ एवं च विश्वेशसंगाद्विदेहमुक्तिदाप्यहं शुकानंदसंगेन जीवद्विदेहमुक्तिदा भवामीत्यभिप्रायेणाह । युतिगतिरिति । युत्या योगेन गतिः स्थितिः ज्ञानं यस्य ये गत्यर्थास्ते प्राप्त्यर्थास्ते ज्ञानार्थाश्च भवंतीत्यनुशासनात् । स शुकानंदः अजविद्भिर्ब्रह्मविद्भिः स्वैः स्वकीयैः शिष्यप्रशिष्यैस्तत्कृतोपदेशैरिति यावत् । जीवतः पुरुषस्य शरणागतस्य चकारान्मरणानंतरं च मुक्तिदो भवति ।

इति हेतोरहं तं गुरुं अभियास्ये शरणं गच्छामि अस्माद्गुरोः । ल्यब्लोपे पंचमी । गुरुं प्राप्य जीवतः अज्ञान् जीवान् प्रति मुक्तिदा भवामीति शेषः । इति सार्द्धश्लोकाभिप्रायवती मतिः बुद्धिर्यस्याः सा काशी इह शुकानंदमठे प्रावास्ति नूनम् । अस्याः काश्याः गुरुकाशीति नाम जीवतां जीवानां स्वदानात् आत्मदानेन प्रभवतु प्रसिद्धं भवतु । यथोक्तं गुरुणा । "जीवद्विदेहमुक्त्योर्वितरति सौख्यं हि यत्र देशिकराट् । गुरुकाश्या गुरुतेयं गुरुशास्त्रात्मानुभूतिविज्ञानात्"। गुरुभागवते । "यत्प्रेमवशतो गंगावतरत्काशिकापि च । वंदे तं श्रीशुकानंदनाथं नारायणप्रियम्" इति । अयं भावः । काश्यां तु मरणान्मुक्तिरिति काशीमरणसमये रुद्रस्तारकं ब्रह्मोपदिशतीति च मरणानंतरं प्राप्यमाणा विदेहमुक्तिर्भवति । गुरुकृपया ज्ञानलाभे सति तु । 'ज्ञानादेव तु कैवल्यम्' । "नान्यः पंथा विद्यतेऽयनाय" इति श्रुतौ ज्ञानप्राप्तिकाले इति सावधारणनिर्देशात् मरणात्प्रागपि मोक्षप्राप्तिश्रवणेन गुरुकाश्यां गुरोः सकाशाद्विज्ञानमात्रेण जीवन्मुक्तिसुखं भवति । अंते विदेहकैवल्यं चाप्नोति । तस्माद्युक्तमुक्तं गंगाकाश्योरागमनेन गुरोर्महत्त्वमिति । तत्सिद्धं काश्यपेक्षया गुरुकाश्या गुरुत्वमिति ॥ ४२ ॥ एवं गंगाकाश्योरागमनमुपवर्ण्य प्रकृतमनुसरति । इत्थमित्यादिभिः ॥ ४३ ॥ आर्यस्य शुकानंदगुरोः ॥ ४४ ॥ आत्मीयैः परैश्च कैश्चिद्दत्तेन वित्तेन माधवशास्त्रिणा कर्त्रा । नंदीतटे शुकानंदनामोक्त्या भिक्षया आप्तं लब्धं शतं तेन चेति पूर्वान्वयि ॥ ४५ ॥ प्राकारादुच्चं देवालयं कर्तुं यदा वित्तं नासीत्तदा गुरुर्मनस्याह उदगिति ॥ ४६ ॥ तां दीक्षां परमहंसदीक्षां गृहीत्वा तद्देशं व्रजामीति योज्यम् ॥ ४७ ॥

कविरुवाच ॥ इत्थं गंगा च काशी च गुरुसान्निध्यमास्थिता ॥ गुरुकाश्यास्तु माहात्म्यं पुनरग्रेपि वक्ष्यते ॥ ४३ ॥ प्राकारालयमार्यस्याकारयच्छिल्पिभिर्गुरुः ॥ स्ववित्तेन जयंत्यंगभूषणैश्च क्रमात्ततः ॥ ४४ ॥ दत्तेनात्मपरैः कैश्चिन्माधवार्येण भिक्षया ॥ नंदीतटे शुकानंदनामोक्त्याप्तशतेन च॥४५॥प्राकारोच्चालयं कर्तुं नासीद्वित्तं तदा गुरुः॥मनस्याह ह्युदग्देशे राजानः संति धार्मिकाः ॥ ४६ ॥ विद्वत्परमहंसेभ्यः स्वर्णदाः प्रागिति श्रुतम् ॥ अतोहं विधिवद्दीक्षां गृहीत्वा तां व्रजामि तम् ॥ ४७ ॥

॥ ४८ ॥ ४९ ॥ अदृशः दृष्टिहीनस्य । उन्निशि उत्तररात्रौ । अदः इदं वाक्यम् ॥ ५० ॥ ५१ ॥ ५२ ॥ स च यतिरखिलं स्वप्नमिति उत्तरेण संबंधः ॥ ५३ ॥ गुरोरपराधः कोऽस्ति । यत्र यस्मात्कोपेन मयि लत्ता हता । गुरुणेति परिणामेन योज्यम् । इति कोपः पूर्वं नैवासीदित्याह । अथ देशिकः इति यतिस्वप्नं श्रुत्वा निजं आगः स्वापराधं मत्वांतर्मनसि यतिस्थितिं संन्यासं नैच्छदिति योज्यम् ॥ ५४ ॥ ५५ ॥ अथ गुरुभागवतग्रंथस्यो

देशं नृपेभ्यः स्वं लब्ध्वा करिष्ये चालयं गुरोः ॥ मुखेनापि वदत्येव नारायणयतेः पुरः ॥ ४८ ॥ यतिः श्रुत्वांतरुद्विग्नः किं चिद्वक्ति न देशिकम् ॥ मुहुः शृण्वंत्यभूत्खिन्ना जयंत्यापि हृदाऽबला ॥ ४९ ॥ अथाऽदृशो यतेश्चाभूत्स्वप्नः साक्षादिवोन्निशि ॥ शुकानंदो यतिं स्वांघ्रिं मर्दयंतमदोऽब्रवीत् ॥ ५० ॥ द्रुलताभिर्मयारामः कृतस्तस्याधुना कथम् ॥ चिंतामणिर्नाशमिच्छत्ययं वार्यो न किं त्वया ॥ ५१ ॥ यतिराह न वेद्मीदं कुत्रासीत्यब्रवीद्गुरुः ॥ तस्मै क्रुधाहनल्लत्तामित्यथाभूत्स जागृतः ॥ ५२ ॥ बहूच्छ्वसन्बहिश्चागात्तमाह निद्रदेशिकः ॥ यतेऽनुश्वसिषि त्वं किं सभीरिव स चाखिलम् ॥ ५३ ॥ स्वप्नं लत्तांतमुक्त्वागः किं गुरोर्मयि यत्क्रुधा ॥ हता लत्तेति कोपः प्राङ्नैवेत्याहाथ देशिकः ॥ ५४ ॥ श्रुत्वेत्यागो निजं मत्वांतश्च नैच्छद्यतिस्थितिम् ॥ करिष्ये जन्मभिः स्थानं गुरोरित्याशयोऽभवत् ॥ ५५ ॥ देशिको रहःस्थितो निजं विचारयति हृदा निश्चयत्यसौ द्वयं हि ब्रह्म सत्त्वमिति भिदा ॥ वक्ति शुद्धमेव युग्ममे तदत्र गुणमयं वीक्ष्यते त्वनेकमत्र संशयोऽस्ति दृढमयम् ॥ ५६ ॥

त्पत्तिप्रकारं तन्माहात्म्यं चाह । देशिक इत्यादिभिर्विंशतिभिः श्लोकैः । कदाचिदेकांतस्थितो देशिकगुरुः निजम् आत्मानं हृदा विचारयति । चिंतितवान् । तदाऽसौ ब्रह्म सत्त्वं अहं ब्रह्मास्मीति स्फूर्तिश्चेति भिदा भेदेन द्वयं प्रकृतिपुरुषरूपं निश्चयति निश्चितवान् । एतत् ब्रह्म सत्त्वमिति युग्मं शुद्धमेव अभिन्नरूपत्वादेकरूपमेवास्ति । अत्र युग्मे त्रिगुणमयम् अनेकं जगत् कथं वीक्ष्यते सर्वैरवलोक्यते । अयं संशयोऽस्ति इति वक्ति । हृदि संशयं कृत्वा

१—ब्रह्म सत्त्वमिति महावाक्यानुरोधाद्धीतिवर्णस्य न गुरुत्वं मंतव्यम्।

मुखेनापि उच्चारितवानित्यर्थः ॥ ५६ ॥ इत्थमेव स्वप्ने चिंततिस्म चिंतितवान् यावत् । तावत्तदग्रतः एकं पत्रम् आपतदितिशेषः । अथात्र पत्रे गुरुः श्लोकपादमपश्यत् । तं पादं तदैव गुरुरात्मनिष्ठचेतसा वासनानिपीतसारनीळिमेव भगवत इति पठति वै निश्चयेन कंठगतं कृतवानित्यर्थः ॥ ५७ ॥ श्लोकपादात्म कमेतत्पत्रं गुरुभागवतमस्ति यथावत् संशयच्छेदकं चास्ति । अदः इदं तस्योर्ध्वं लिखितमस्ति ॥ ५८ ॥ अथ तात्तदर्थश्लोकितो लिखितोऽस्ति । तमेवार्थमाह सत्यमित्यादिना । सत्यं ज्ञानमनंतं शुद्धं यद्ब्रह्म तत् अग्रे सृष्टेः पूर्वमासीत् । अथ च ब्रह्मास्मि अहं इति प्रकारेणास्फुरदिति संबंधः ॥ ५९ ॥ इदं हि ब्रह्मास्मीति स्फुरणं सत्त्वादीनां मायामळानामाश्रयम् अधिष्ठानरूपमस्ति । इदं स्फुरणं ब्रह्मात्मैक्यरूपत्वात्सततं शुद्धमेवास्ति । यद्यप्येवं तथापि

स्वप्न इत्थमेव चिंततिस्म तावदग्रतश्चैकपत्रमत्र पद्यपादमैक्षताथ सः ॥ तत्तदैव चात्मनिष्ठचेतसेति पठति वै वासनानिपीतसारनी लिमेव भगवतः ॥ ५७ ॥ श्लोकपादात्मकं चैतद्गुरुभागवताभिधम् ॥ यथावत्संशयच्छित्त तदूर्ध्वं लिखितं त्वदः ॥ ५८ ॥ तदर्थश्लो कितोऽधस्तात्सत्यं ज्ञानमनंतकम् ॥ श्रुतिसिद्धं हि यद्ब्रह्मैकमग्रेऽथ चास्फुरत् ॥ ५९ ॥ ब्रह्मास्म्यहमितीदं हि सत्त्वमायामला श्रयम् ॥ सततं शुद्धमेवेदं तथापि ब्रह्मशब्दतः ॥ ६० ॥ सत्त्वं रजोऽस्मितोऽहंतातमोऽदो गुणभासकम् ॥ गुणाभासान्मृषैवेदं भाति ब्रह्मणि नान्यतः ॥ ६१ ॥ पृथिव्याश्चास्तितोद्भूतैर्गैरिकादिगुणैर्यथा ॥ तस्यामेव हि कुड्याद्येऽनेकचित्राणि भांति च ॥ ६२ ॥ युद्ध्यद्गायज्जपन्मुख्यचित्रकल्पितवासनाः ॥ विविधास्ताः पृथिव्यैव निपीताः स्वगताः कृताः ॥ ६३ ॥

ब्रह्मशब्देन सत्त्वमिति अस्मितः अस्मिशब्देन रज इति अहंता अहंकारस्तया तम इति अदः ब्रह्मास्मीति स्फुरणं गुणभासकं त्रिगुणप्रकाशकमस्तीति योज्यम् ॥ ६० ॥ मृषैवेदं जगत् ब्रह्मणि गुणाभासेन भाति । अन्यतः अन्यहेतुना न भाति । ब्रह्मास्म्यहमिति गुणकल्पनैव जगद्वैचित्र्यहेतुरित्यर्थः ॥ ॥ ६१ ॥ उक्तार्थे दृष्टांतमाह पृथिव्या इति सार्द्धाभ्याम् । पृथिव्या अस्तितया उद्भूतैर्गैरिकादिगुणैर्यथा पृथिव्यंशेनैव कुड्यादिस्थितानि चानेकचि त्राणि भांति ॥ ६२ ॥ तेषु युध्यंतो गायंतो जपंत इति सत्त्वरजस्तमोगुणात्मका जीवाः मुख्याः येषु तेषां चित्राणां कल्पिताः वासनाः त्रिविधप्रकाराः संति ।

ताः वासनाः पृथिव्यैव निपीताः स्वगताः स्वनिष्ठाः कृताः ॥ ६३ ॥ तासां वासनानां विचित्राभः सारः सामर्थ्यम् । " सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु " इत्यमरः । तस्यां पृथिव्यामिव दृश्यते । दृष्टांतमुक्त्वा दार्ष्टांतिके योजयति तथेति सार्द्धाभ्यां द्वाभ्याम् ॥ ६४ ॥ तथानेकजीवानाममिताः असंख्याता यास्तु वासनाः नानाविधाः संति । ताः वासनाः सर्वाधिष्ठानतः सर्वाश्रयत्वेन हेतुना अधर्मिणा निर्धर्मकेण साक्षाद्ब्रह्मणा जगतः समष्ट्यधिष्ठानेन निपीताः स्वीकृताः संति । तासां वासनानामयं सारो विचित्रजगद्रूपोऽस्ति । स सगुणमूर्तेर्नारायणस्य नीलिमेव नीलत्वमिव भाति प्रकाशत इति संबंधः । वासनानां निपीतानां सार एव नीलिमा तद्वत् इति पद्यपदार्थः । तथा जगद्यष्ट्याश्रये साक्षिणि ब्रह्माहमिति गुणाभासेन विविधं जगद्भाति । तथा

तासां सारो विचित्राभ इव तस्यां हि दृश्यते ॥ तथैवानेकजीवानां वासनास्त्वमिताश्च ताः ॥ ६४॥ निपीताः स्वीकृताः साक्षाद्ब्रह्मणा
ऽधर्मिणापि ताः ॥ सर्वाधिष्ठानतस्तासां सारोऽयं नीलिमेव सः ॥६५॥ नारायणस्य भगवच्छब्दितस्याऽगुणस्य च ॥ भक्तेच्छोपात्त
सन्मूर्तेर्भातीत्यर्थं समीक्ष्य सः ॥ ६६ ॥ नारायणे चतुर्वर्णे नाम्नि श्रुतिशिरोधृते ॥ प्रत्यर्णं श्रुतिवाक्यैर्हि संगतैश्च सदुक्तिभिः ॥६७॥
आर्तजिज्ञास्वर्थलिप्सुविदां संप्रार्थनाक्रमात् ॥ प्रतिपाद्य तमेवार्थं गुरुभागवतं गुरुः ॥६८॥ प्रत्यर्णं शतवृत्तैश्चाकरोद्बुधनमस्कृतम् ॥
नित्यं भक्त्यांघ्रिपद्योक्तिश्रुतितोऽयुतगोफलम् ॥ ६९ ॥

च पूर्वकल्पे ब्रह्मणि लीनानां जीववासनानां गुरुरूपया अहं ब्रह्मास्मीति स्फूर्तौ सत्यां साक्षिणि विवेकेन लीनानां परिपाकेन ब्रह्मादि षड्गुणैश्वर्यरूपं विविधं जगत् विलसतीति भावः ॥ ६५ ॥ इतीत्यादिपरान्वयि ॥ ६६ ॥ स गुरुरिति अधोलिखितमर्थं समीक्ष्य श्रुतिशिरोधृते उपनिषत्प्रतिपादिते चतुर्वर्णे नारायणेति नाम्नि संगतैर्योजितैः सन् अर्थो येषु तैः प्रतिवर्णं यथा तथा श्रुतिवाक्यैस्तमेव पूर्वोक्तमर्थं प्रतिपाद्य ज्ञानिन ऐश्वर्यं जगदित्यर्थम् आर्तजिज्ञास्वर्थार्थिभक्तानां प्रार्थनाक्रमेण प्रतिवर्णं शतवृत्तैर्गुरुभागवतमकरोत् कृतवान् इति त्रयाणामन्वयः ॥ ६७ ॥ ६८ ॥ किंभूतं गुरुभागवतम् । नित्यं भक्त्या सुश्रद्धया अंघ्रिपद्योक्तिश्रुतितः अंघ्रिपद्ययोः श्लोकपादश्लोकयोरुक्त्या पठनेन श्रुतितः श्रवणेन चायुतगोफलं दशसहस्रगोदानफलं यस्मिंस्तत् अत

एवं बुधनमस्कृतं सर्वमान्यमित्यर्थः ॥ ६९ ॥ किं च सर्वकामनापूरकं चास्तीत्याह नारायणेति । सर्वनामसुरत्नभूतम् । श्रुतानि पुराणे यानि चतुर्दशर त्नानि तेषु कांतं सुंदरम् । नारायणेति नाम उत्प्रेक्षितुम् इह गुरुभागवते ये श्लोकास्ते नियमेन श्रुतिमुखैः श्रवणादिभिः प्रत्येकं नियमेन ईप्सितं फलं येभ्यस्ते तथाभूताः संति । अखिलोक्तिः सर्वग्रंथपाठः ईप्सितफलदोस्तीति किं वाच्यम् । अस्त्येवेत्यर्थः ॥ ७० ॥ आर्तादिभक्तानां कामपूरकमित्याह । आर्तेति । हे आर्याः श्रेष्ठाः यूयं नृजन्म लब्ध्वाऽऽर्तपीडानिवारकं विविदिषोः जिज्ञासोः परबोधो ज्ञानं यस्मात् अर्थ्यर्थदं धनार्थिनां तत्तदर्थदं विदमला त्मनां ज्ञानिनां सुखं यस्मात्तत् गुरुभागवतं शृणुध्वं पठध्वं च । किंभूतं शब्दार्थानां भूषणान्यलंकारा यस्मिंस्तत् यत् यस्मात् हेतुगर्भितं विशेषणम् । श्रुति

नारायणेत्यखिलनामसुरत्नभूतं ह्युत्प्रेक्षितुं श्रुतचतुर्दशरत्नकांतम् ॥ श्लोका इह श्रुतिमुखैर्नियमेन भक्त्या प्रत्येकमीप्सितफलाः किम थाखिलोक्तिः ॥ ७० ॥ आर्तार्तिहं विविदिषोः परबोधमार्याश्चार्थ्यर्थदं विदमलात्मसुखं पठध्वम् ॥ लब्ध्वा नृजन्म गुरुभागवतं शृणुध्वं शब्दार्थभूषणमथो श्रुतिहृत्सुखं यत् ॥७१॥ कुर्वन्गुरुस्तु गुरुभागवतं यदासीत्पद्यं युगं क्व च समुज्झितबाह्यवृत्तिः ॥ संदर्श यन्हि लघुतूर्यसुताय नित्यं सर्वप्रियाय सुधियेऽग्रिमविस्तराय॥७२॥ नित्यं ह्युषस्यपि मृदंगसुतालवाद्यैर्नारायणेति च भजन्स्वयमेव नृत्यन् ॥ अर्थांश्च वक्ति गुरुभागवतीयपद्यस्यानेकधा कृतनवस्य विदात्मतंत्रः ॥ ७३ ॥ नित्यं च शुश्रुवुरनेकभवात्तपुण्यैर्नारायणा द्ययतिमुख्यशुकार्यशिष्याः ॥ प्राग्लब्धमात्मसुखमार्यगुरोस्तदेवानेकर्द्धिमद्धि गुरुभागवतात्समापुः ॥ ७४ ॥

हृदोः कर्णमनसोः सुखं यस्मात्तत् । श्रवणमात्रेण हृत्कर्णयोः सुखप्रदमित्यर्थः ॥ ७१ ॥ गुरुभागवतं कुर्वन् गुरुस्तु यत्पद्यं क्व च कदाचित् युगं पद्ययुगं वासीत् । तत् सुबुद्धये सर्वप्रियाय लघवेऽल्पाय तुर्यसुताय चतुर्थपुत्राय मयूरेश्वराय अग्रिमविस्तराय भाविप्रसिद्धयर्थं नित्यं संदर्शयन् आसीत् ॥ ७२ ॥ गुरुर्नित्यमपि उषःकाले मृदंगादिभिः नारायणेति भजन् स्वयमेव नृत्यंश्च कृतस्य नवीनस्य गुरुभागवतसंबंधिपद्यस्य अनेकधा अर्थांश्च वक्ति । यतो वित् ज्ञानवान् आत्मतंत्रः स्वतंत्रः॥७३॥नारायणेत्यादयः शुकानंदशिष्याश्चानेकजन्मसंपादितपुण्यैर्नित्यं शुश्रुवुः । अर्थानित्यनुवृत्तिः । आर्यगुरोः शुकानंदात् पूर्वं

लब्धं यदात्मसुखं गुरुभागवतात् तच्छ्रवणेनेति यावत् । तदेव हि आत्मसुखमनेकवृद्धियुक्तं सम्यक् प्रापुः । तेषां गुरुभागवतश्रवणेनात्मसुखं वृद्धिं गतमि त्यर्थः ॥ ७४ ॥ काश्यादिपंडितैः सर्वं गुरुभागवतं पदशः अवलोक्यानेकार्थैः शब्दैः सम्यगलंकृतम् उज्झिताघं दोषवर्जितं सती आख्या यस्य तत् उत्तमोयं ग्रंथ इति मिथः प्रोक्तम् । यत् यस्माच्छुत्यर्थसारयुक्तमपि काव्यरसेन व्याप्तमस्ति । "वेदः पुराणं काव्यं च प्रभुर्मित्रप्रियावचः" इति । तस्मा त्सर्वोत्तमोयं ग्रंथोऽत्यादरेणानिशं विचारणीय इत्यर्थः ॥ ७५ ॥ अथ मयूरेश्वरस्याल्पकालेन विद्याप्राप्तिपूर्वकं वृत्तं वर्णयति । धातूनिति चतुर्भिः । पूर्वं स्वगुरोः सकाशात् धातून् ततः स्वल्पं काव्यं अन्यस्मात् श्रीनिवासशास्त्रिणः सकाशात् परां कौमुदीं व्याकरणशास्त्रं च सम्यक् पठन् श्रेष्ठबुद्धिः मयूरेश्वर

काश्यादिविद्भिरखिलं पदशोऽवलोक्याऽनेकार्थशब्दसमलंकृतमुज्झिताघम् ॥ प्रोक्तं मिथो हि गुरुभागवतं सदाख्यं श्रुत्यर्थसारमपि काव्यरसामृतं यत् ॥ ७५ ॥ कविरुवाच ॥ धातून्प्राक्स्वगुरोः पठन् वरमतिः सम्यङ्मयूरेश्वरः स्वल्पं काव्यमतः सुशब्दगतयेऽन्य स्मात्परां कौमुदीम् ॥ तत्पुत्राद्यखिलोक्तचिंतनकृती शालाग्रणीश्चाभवच्छृण्वंस्तातमुखात्सुशास्त्रविषयांश्चानेकपद्यार्थकृत् ॥ ७६ ॥ विद्वचौदुंबरखेटमात्मजयुतश्चागान्नृयानो निजैर्मासं चावसदाह भागवतमह्नयह्नयथाल्पः सुतः ॥ टीकार्थोदितबाधतोऽर्थमपरं तद्बा धयान्यं वदन् पद्यस्येत्यमितार्थतोऽप्यणुवयास्तातााखिलानंददः ॥ ७७ ॥

स्तस्य श्रीनिवासशास्त्रिणः पुत्राद्या येऽखिलाः शिष्यास्तेभ्यः उक्तं शास्त्रादि तस्य चिंतने कुशलः शालाग्रणीः सर्वशालासु श्रेष्ठश्चाभवत् । देशिकेंद्रमुखेन सुशास्त्रविषयान् श्रृण्वन् सन् अनेकान्पद्यार्थान् करोति सः अनेकपद्यार्थकृच्चाभवत् । स्वल्पकालेनातिविद्वान् जात इत्यर्थः । शार्दूलविक्रीडितवृत्तम् ॥ ॥ ७६ ॥ पुत्रयुक्तो नृयानारूढो वित् देशिकेंद्रगुरुर्हि निजैः शिष्यैः सहौदुंबरखेटं चागात् । मासपर्यंतं चावसत् । चकारात्पुनर्गृहं प्राप इति ज्ञेयम् । तत्र मयूरेश्वरोऽह्नयह्नि प्रतिदिनं भागवतं विष्णुभागवतमाह । अणुवयाः अल्पवयस्कोपि सः टीकार्थे उदितेन उक्तेन बाधेनापरमर्थं तस्य बाधेनान्यमपि अर्थं वदन् इति प्रकारेण अमितार्थतः बह्वर्थप्रतिपादनेन तातस्य देशिकेंद्रगुरोरखिलानां चानंदप्रदोऽभवत् । अल्पे वयसि विद्वत्ता बहु शोभत इति भावः ॥७७॥

एवं बुद्धिमत्ता पूर्वपुण्यं विना न लभ्यत इत्याह । चेदिति । मयूरेश्वरः कचिदह्नि अर्थांतरं स्वबुद्धया नेयात् न प्राप्नुयाच्चेत् । तदा गुरुस्तस्य करे एवं दृष्ट्वा कचित्पंक्तौ अंगुलिं निधायात्र त्वं पश्य । अर्थांतरमित्यनुवृत्तिः । इति अवदत् । स च मयूरेश्वरस्तत्रार्थांतरं दृष्ट्वा गुरुहृद्गतार्थस्यानुवक्ताऽभवत् । हि यतः गतयुक् योगभ्रष्टः श्रीमतां पूतानां शुचीनां गृहे उद्भवो यस्य सः "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत" इत्युक्तेः । एतादृशगृहे गृहीतजन्मा भवतीति । इत्थंधिया एवंबुद्धया लक्ष्यते जनैरिति शेषः । मयूरेश्वर इत्यनुवृत्तिः । तस्माद्योगभ्रष्टो मयूरेश्वर इत्यर्थः ॥ ७८ ॥ एवं पूर्वपुण्येन महत्त्वं प्राप्तो गुरुकृपया सर्वं प्राप्तवानित्याह तुष्ट इति । तस्य मयूरेश्वरस्यालौकिकया बुद्धया संतुष्टो गुरुस्तु निखिलात्मधिषणः सर्वात्मबुद्धिः सन् अत्यंतं बहा

चेदर्थांतरमह्नि नो कचिदियाद्बुद्धया मयूरेश्वरः पत्रं तत्करगं समीक्ष्य च गुरुः पंक्तौ निधायांगुलिम् ॥ पश्यात्रेत्यवदत्स वीक्ष्य गुरुहृद्गतार्थानुवक्ताभवच्छ्रीमत्पूतगृहोद्भवो हि गतयुक्चेत्थं धिया लक्ष्यते ॥ ७८ ॥ तुष्टस्तस्य गुरुस्त्वलौकिकधियात्यंतं ददावाशिषः श्चात्मन्येव सदाखिलात्मधिषणोऽनंताशिषस्तास्ततः ॥ ताभिः सर्ववशः क्षितीशनमितः सच्छ्रीविद्याढ्योऽभवत्काशीस्थाद्विबुधप्रियो हि निखिलात्मस्थाशिषः सत्फलाः ॥ ७९ ॥ देशं देशिकमात्मजैर्जिगमिषुं स्वं चानमंतं यतिः प्रोचे स्यात्पुनरीक्षणं तव न चेत्त्वं तर्ण्वं तं चाह सः ॥ दातुं मे पुनरीक्षणं कुरु मतिं यत्सत्यसंकल्पवांस्त्वं श्रुत्वेति यतिस्तथेत्यवदिति तत्कुर्यात्स मंत्री गुरुः ॥ ८० ॥

शिषश्च स्वात्मन्येव न तु प्रत्यक्षं सदा ददौ । मयूरेश्वरायेति तच्छब्दपरिणामाद्योज्यम् । ततस्ता अनंतबुद्धिप्रेरिताः आशिषः अनंता बभूवुः । ततस्ता भिराशीर्भिः सर्वं वशमस्यास्तीति सर्ववशोऽभवदिति प्रत्येकमन्वयः । राजभिर्नमस्कृतः सत्या उत्तमया श्रिया विद्यया च युक्तः काशीस्थपंडितानां प्रियः आदिशब्दात्सर्वपंडितमान्यश्चाभवत् । हि यतः निखिलं सर्वं जगत् आत्मस्थं यस्य तस्य सर्वांतर्यामिणः गुरोराशिषः सत्फलदा भवंति । मनोगता एव महतामाशिषः फलंति । न वागुच्चारमपेक्ष्य फलंतीति भावः ॥ ७९ ॥ पूर्वम् औदुंबरखेटे मासपर्यंतमवसदित्युक्तत्वात्तत्र गतं वृत्तांतमुक्त्वा अथ तस्य देशिकस्य कदाचिद्वृत्तांतमाह देशमिति । अथ नारायणयतिर्देशिकगुरुं पुत्रैः सह देशं ग्रामांतरं गंतुमिच्छावंतमात्मानं नमंतं प्रति पुनस्तव दर्शनं भविष्यति

न वेति प्रोचे उक्तवान् । इतीत्युभयान्वयि । इत्याकर्ण्य सः देशिकश्च तं नारायणयतिं प्राह । त्वं मे मह्यं दर्शनं दातुं मतिं संकल्पं कुरु । यद्यस्मात्त्वं सत्यसं- कल्पवानसि । इति श्रुत्वा तु यतिः स्वतंत्रो गुरुः इति पुनर्दर्शनं कुर्यादित्यवोचत् । भूतभविष्यज्ज्ञानवान्नारायणयतिः प्राणवियोगसमये देशिकेन्द्रसान्निध्यमि- च्छितवानित्यर्थः ॥ ८० ॥ अथ नारायणयतेर्निर्याणप्रकारमाह । देश इति त्रिभिः । अथ देशे आसमंतात्प्रवसन् गुरुस्त्रिमासु त्रिमासेष्वतिक्रांतेषु सत्सु अत्यशक्तं नारायणयतिं श्रुत्वा अध्वनि मार्गे दंडवत् स्थितान् स्वस्वगृहं नेतुं प्रार्थनापरान् स्वदान् धनदान् शिष्यान्निवार्यैव स्थानं वसुमतीमगात् । तं च नारायणयतिं मुमूर्षुं दृष्ट्वा इत्थं चावदत् । इत्थं किं द्वाभ्यामृतुभ्यामूर्ध्वमार्यस्य शुकानंदस्योत्सवोस्ति । तत्रोत्सवे निजान् शिष्यान्प्रति तवेक्षा दर्शनमस्तु ।

देशेथाऽऽप्रवसन् त्रिमासु च गुरुः श्रुत्वात्यशक्तं यतिं शीघ्रं स्थानमगात्स्वदानपि निवार्यैवाध्वदंडस्थितान् ॥ दृष्ट्वा तं च मुमूर्षु- मित्थमवदद्द्व्यृतूर्ध्वमार्योत्सवो हीक्षा तत्र निजांस्तवा स्त्वथ यतिश्चाहेति कुर्याद्गुरुः ॥ ८१ ॥ ज्येष्ठे मासि गुरूत्सवे गुरुपरा द्रष्टुं ययुः श्रीगुरुं संभाष्यात्मसुखं च तेन भवनान्यापुः समाप्ते महे ॥ शुच्याद्ये गतवाक् परेह्नि गुरुणा प्रस्थापितोसौ मठेऽन्येद्युर्भागवतश्रुती- च्छुमिति तं प्रोचे मयूरेड्गुरुः ॥ ८२ ॥ श्रोतुं सार्थमिदं ययुर्वरनरो द्रष्टुं च यत्युत्सवं देहांते स्वयुतायुते क्व च हि मे नारायण त्वत्स्मृतिम् ॥ श्रुत्वेत्यर्थमुपद्यमेव स यतिश्चोच्चाल्य हस्तांघ्रि कौ प्राणांश्चात्यजदुच्चतोर्गिविमलं नारायणेत्युच्चरन् ॥ ८३ ॥

चतुर्मासपर्यंतं त्वया प्राणधारणं कर्तव्यमिति । अथ यतिश्च इति गुरुः कुर्यादित्याह । गुरोरिच्छया चतुर्मासपर्यंतं मम स्थितिर्भवतु । इत्युक्तवानित्यर्थः ॥ ॥ ८१ ॥ ज्येष्ठे मासि गुरुपराः शिष्याः शुकानंदगुरोरुत्सवे प्राप्ताः । चकाराद्यतिं च द्रष्टुं ययुः प्राप्तास्तेन यतिना संभाष्यात्मसुखं प्रापुः । महे उत्सवे समाप्ते सति स्वभुवनानि चापुः । असौ यतिः शुच्याद्ये आषाढशुद्धप्रतिपदि गतवाक् प्रतिबद्धवागासीत् । अपरेह्नि द्वितीयायां गुरुणा मठे प्रस्थापितः । अन्येद्युः भागवतश्रवणेच्छावंतं तं यतिं प्रति मयूरेश्वरश्च गुरुर्भागवतं प्रोचे पठितवानित्यर्थः ॥ ८२ ॥ इदं गुरुभागतं सार्थं श्रोतुं वरनरः श्रेष्ठपुरुषाः यते- रुत्सवं च प्राणोत्क्रमणोत्सवं द्रष्टुं ययुः । स यतिश्च क्व च कस्मिन् अपि देशे स्वैः स्त्रीपुत्राद्यैर्युतायुते संयुक्तेऽसंयुक्ते वा अंतेऽन्तकाले हे नारायण त्वत्स्मृतिं

देहि हीति निश्चयेन । इत्यर्थकं " यदा कदाचित्सुखतः कथं चियत्र क वा व्याधिवियोगयोगयोः । प्रयात्यसुश्चेयदि वा प्रयातु प्रयच्छ नारायण ते स्मृतिं नः" इत्यादि सुपद्यं श्रुत्वैव कौ पृथिव्यां हस्तांघ्रि प्राण्यंगत्वादेकवद्भावः । हस्तं पादं चोच्चाल्य निक्षिप्य उच्चतः उच्चस्वरेण वर्णैर्विमलं नारायणेति नामोच्चरन्प्राणांस्त्यक्तवान् । एवमंतकाले नारायणस्मरणं दुर्लभमिति भावः ॥ ८३ ॥ एवं नारायणयतेरात्मस्थितिमुक्त्वा तस्य समाधिस्थितिमाह । य इति । यो यतिरंतर्बहिर्गतवृत्तिभिर्गुरोरन्यद्वस्तुजातं कदापि काले क्व च देशे नेक्षते न पश्यति । सर्वं गुरुरूपं पश्यतीत्यर्थः । तस्य यतेः समाधिं गुरोः शुक्लानंदस्योदङ्मुखस्य दक्षिणे भागे तत्स्थानात्पूर्वभागे समतः साम्येन चक्रे देशिक इत्यध्याहारः । यद्यपि ज्येष्ठस्यैव दक्षिणे समाधिर्भवति तथापि शुक्लानंदशिष्येषु मुख्यगुरुभक्तत्वाद्दक्षिणे कृतवानित्यर्थः । वेत्रा ज्ञानिना देशिकेंद्रेण कर्त्रा । असौ समाधिस्थो यतिर्मलयालब्रह्मेति नाम्ना कथितोस्ति । यथाऽद्ये मठे शृंगिरि

योंतर्बाह्यगवृत्तिभिः क्व च गुरोर्नान्यत्कदापीक्षते तस्याथो गुरुदक्षिणेपि समतश्चक्रे समाधिं यतेः ॥ नाम्नासौ मलयालपूर्वमुदितो ब्रह्मेति वेत्रा मठे सौख्यासौख्यकृतौ यथा सदसतां चाद्ये मठे शृंगिरिः ॥ ८४ ॥ यस्त्वद्यापि मठस्थवस्त्वभिहरं संदंड्य तस्मात्पुनर्वस्त्वत्रानयतीह दुष्कृतकरं बाह्यं करोत्याशु वै ॥ व्याधिस्थं मठगं हि नाथशरणं निर्व्याधिमल्पौषधैस्तं साक्षान्मठदैवतं मठगसद्भक्ताभिमानं नुमः ॥ ८५ ॥ विद्वान्सद्धिषणोऽखिलप्रियसुतः कार्यौ मयूरेश्वरो मंत्राणां महतां रहस्यविदितीच्छन्देशिको लौकिकात् ॥ ज्येष्ठत्वाद्गणराजमेव विधिनाऽऽसिच्योक्तमंत्रोदितं प्राग्यज्ञात्तसमाख्ययापि हि ततो यज्ञेश्वरं चाकरोत् ॥ ८६ ॥

मठे सदसतां सुजनदुर्जनानां सौख्यासौख्यकृतौ सुखदुःखकरणविषये शृंगिरिनामास्ति । तथास्मिन्मठे सुजनदुर्जनानां सुखदुःखजनको मलयालब्रह्मेति देशिकेंद्रेणोक्त इत्यर्थः ॥ ८४ ॥ गुरुभक्तवर्यं नारायणयतिं प्रणमति य इति । यस्तु अद्यापि मठस्थवस्तुनः हर्तारं पुरुषं सम्यक् दंडयित्वा तस्मात्सकाशात् अत्र मठे वस्तु आनयति । इह मठे पापकर्तारं बहिर्भूतमाशु करोति वै निश्चयेन । मठगतं व्याधिपीडितं गुरुं शरणागतं पुरुषं प्रति अल्पौषधैर्व्याधिरहितं करोति । तं प्रत्यक्षमठदैवतं मठगतसद्भक्तस्य गुरुभक्तस्य पक्षपातिनं नारायणयतिं नुमः । वयमित्यध्याहारो वक्तृश्रोत्रभिप्रायेण ॥ ८५ ॥ गणराजाय पूर्णाभिषेकपूर्वकं सर्वमंत्रान्प्रददावित्याह । विद्वानिति । विद्वान्सद्बुद्धिरखिलेषु पुत्रेषु प्रियः पुत्रो मयूरेश्वरो महामंत्राणां रहस्यवित् पूर्णाभिषिक्तो मया कार्यः

कर्तव्यः इतीच्छन्देशिकेंद्रगुरुर्लौकिकाल्लोकदृष्ट्या ज्येष्ठत्वाच्च हेतोर्गणराजमेव विधिनाभिषिच्योक्तमंत्रैः पूर्णदीक्षोक्तमंत्रैः षोडश्यादिभिरुदितमुपदिष्टं प्राक् पूर्वजन्मनि यज्ञैराप्ता प्राप्ता या समाख्या नाम तया यज्ञेश्वरं चाकरोत् । यज्ञेश्वरानंदनाथमिति दीक्षानाम कृतवानित्यर्थः ॥ ८६ ॥ मयूरेश्वराय सर्वं दत्तवानित्याह । प्रीत्येति । अथ देशिकेंद्रो मयूरेश्वरं प्रीत्या रहस्याहूयाद्यान् षोडशीमुख्यान् सार्थरहस्यतः सार्थान्सरहस्यान् मंत्रानुवाच । नारायणनाम्नि चत्वारि उद्वाक्यानि उत्तमानि महावाक्यानि चोक्तवान् । एतत् ज्येष्ठात् गणराजात्तदपेक्षयाऽधिकं यथा तथा ते तुभ्यमुक्तमस्ति । यज्ञेश्वर इति तव नाम चास्तु । हि यतस्त्वं च लघोः शिष्यात् रामकृष्णाख्यात् तद्धस्तेनेति यावत् । स्वाज्ञाबलेन यज्ञं सोमयागं करिष्यसीति चोवाच । पूर्णाभिषेकाभावेपि गुरुकृपया

प्रीत्याऽऽहूय रहोथ देशिक उवाचाद्यान्मयूरेश्वरं मंत्रान्सार्थरहस्यतोपि चतुरुद्वाक्यानि नारायणे ॥ ज्येष्ठात्तेऽधिकमुक्तमस्तु तव नामार्थं च यज्ञेश्वरं यज्ञं त्वं च करिष्यसीति हि लघोः शिष्यान्निजाज्ञाबलात् ॥ ८७ ॥ ज्येष्ठे मासि गुरूत्सवेंतिमदिने पूर्वं सहस्रं द्विजाः संभुक्ताः परतोन्नमीषदपि नो भुक्त्यागताः प्राग्दलाः ॥ संतोन्येपि तदान्नदास्तु सकलान्वीक्ष्यान्नपूर्त्यक्षमाः संप्रार्थ्यं स्थितिगां मठं त्वरितमानिन्युर्जयंतीं सतीम् ॥ ८८ ॥ तामाहुः पृथगंब शेषमणु नो पाकस्थलेऽन्नं क्वचिद्भुक्त्यै पंचशतं मठेत्वनुगताः स्त्रीयाः परे पश्य तान् ॥ किं तेभ्यः परिवेषणीयमिति साऽऽकर्ण्यान्नपूर्णा स्वयं दृष्ट्वा पाकभुवं वदत्यपि मयाऽऽश्वापच्यतेद्याऽखिलम् ॥८९॥

मयूरेश्वरस्य सर्वं पूर्णमासीत् इत्यर्थः ॥ ८७ ॥ अथ जयंत्यंबायाः सिद्धिसामर्थ्यमाह । ज्येष्ठ इत्यादित्रिभिः । ज्येष्ठमासे शुक्लानंदोत्सवे अंतिमदिने पूर्वमेकसहस्रं द्विजाः संभुक्ताः । परतः पश्चात्किंचिदपि अन्नं नासीत् । प्राग्दलाः प्रागुक्तसहस्रदलपरिमिताः पंचशतपरिमिताः संतः साधवोऽन्येपि भुक्त्यै भोजनार्थं प्राप्तास्तदा सर्वेऽन्नदाः परिवेषणकर्तारस्तान् भोजनकर्तॄन् वीक्ष्यान्नपूर्त्यक्षमाः संतो गृहगतां जयंतीं सतीं मठं प्रति त्वरितमानिन्युः । अन्नपूर्त्यर्थमित्यर्थः ॥ ८८ ॥ तां पृथक् आहुः । परिवेषणकर्तार इत्यनुवृत्तिः । हेंऽब मातः पाकस्थले क्वचिदन्नमणु शेषं नास्ति । स्त्रीयाः परे च पंचशतं पुरुषाः भोजनार्थं मठे प्राप्तास्तान्प्रति त्वं पश्य । तेभ्योस्माभिः किं परिवेषणीयम् । इत्याकर्ण्य साक्षादन्नपूर्णा सा स्वयं पाकस्थलं दृष्ट्वा मया ऽखिलं सर्वं

मन्नमायु आ साकल्येन पच्यत इति वदति उवाचेत्यर्थः ॥ ८९ ॥ किं च यूयं सर्वान्भोजनकर्तॄन् पात्रस्थितान् कुरुतेति च वक्तीति पूर्वान्वितम् । सा च स्थित्वा उपविश्य त्वरितमेकां सत्पोलिकां कृत्वा तत्स्थले पाकस्थलेऽत्यजत् । पात्रेषु अन्नमर्प्यतामिति मातुर्वाक् श्रुता । यत्पूर्वमन्नं [illegible] वलोकितं तत्स्थलं वटकैः पोलिकादिभिश्च पूर्णमवलोकितमस्ति । जयंत्यंबिकेच्छयाऽन्नपूर्तिर्जातेत्यर्थः ॥ ९० ॥ तैः परिवेषणकर्तृभिस्तदन्नं पंक्तौ परिवेषितम् । अखिलैर्भोजनकर्तृभिस्तद्यथेष्टं भुक्तम् । तदा ते परिवेषणकरा आश्चर्ययुक्ताः संतो निजान्स्वकीयान्प्रति जयंत्यंबाया अद्भुतमिदमन्नपूर्तिकरं [illegible] जगुः । अथ मिथः सर्वे इति प्राहुः । इति किम् । जयंत्यंबान्नपूर्णैवाज्ञान्परिपातुमेव कौ पृथिव्यां प्राप्तास्ति । अन्यस्यां [illegible] कृत. । न

पात्रस्थान् कुरुताखिलानिति च सा स्थित्वैकसत्पोलिकां कृत्वा तत्स्थल आत्यजत्त्वरितमेवांधोऽर्थ्यतां पात्रतः ॥ वाङ् मातुरित्थं [illegible]
*श्रुतेति वटकैः पूर्णं हि पाकस्थलं दृष्टं चोदनपोलिकादिभिरनन्नं यत्पुराऽऽलोकितम् ॥ ९० ॥ तैः पंक्तौ परिवेषितं तदखिलैर्भुक्तं
यथेष्टं मुदाऽऽश्चर्याढ्याः परिवेषिणो जगुरिदं मातुर्निजेभ्योऽद्भुतम् ॥ प्राहुश्चाथ मिथोऽखिला इति जयंत्यंबान्नपूर्णैव कौ प्राप्ताऽज्ञान्प
रिपातुमेव हि कुतोऽन्यस्यामिदं वैभवम् ॥ ९१ ॥ कविरुवाच ॥ प्रोक्तः प्राकृतकाव्यकृद्गुरुगतिर्यो बालकृष्णः स्वहृद् छात्री [illegible]
बभूव सद्गुरुपरा शूद्री तु सद्वंशजा ॥ तातभ्रातृसुहृत्पतींश्च तरुणीत्वेप्यात्यजंत्यागतात्मत्राप्तौ शरणं गुरुं परजनिर्मुक्तैव मुक्ताश
धीः ॥ ९२ ॥ गायत्यार्यरवा गुरूक्तसुपदान्याकर्ण्य चापुर्मुदं सुज्ञाः संत उतार्थिनो निजसुखाङ्क्त्या श्रुतेः सद्गात् ॥ सा भाग्यं
त्वगमत्पुरं गुरुयुता तत्रार्यसंन्यासिना गत्वा मंत्रिवरं च गानमकरोत्तुष्टस्ततो मंत्रिराट् ॥ ९३ ॥

कुतोपीत्यर्थः ॥ ९१ ॥ अथ सर्वाधिकारिणः सकाशाद्गुरोर्ग्रामप्राप्तिप्रकारं वक्तुमुपक्रमते । प्रोक्त इत्यादिभिः । प्राकृतकाव्यकर्ता स्वहृद् आत्मज्ञानवान् बालकृष्णाख्यो गुरुगतिः शिष्यो यः पूर्वसर्गे प्रोक्तस्तस्यैका छात्रिणी गुरुः परः श्रेष्ठो यस्याः सा गुरुपरा बभूव । सा तरुणावस्थायामेव [illegible] आ साकल्येन त्यजंती सती तेषां दर्शनमपि अकुर्वती आत्मत्वप्राप्तिनिमित्तं बालकृष्णगुरुं शरणं गता । परजनिश्चरमजन्मा मुक्तैरपि आत्माङ्गीकृता बुद्धिर्यस्याः सा । ज्ञानिनामपि मान्याऽऽसीदित्यर्थः ॥ ९२ ॥ सा च यानि बालकृष्णगुरूक्तानि सुपदानि आर्यरवात् उत्तमस्वरेण गायंत्यासीत् । तानि आकर्ण्य

मुक्ताः सुज्ञाः संतो मुमुक्षवः उत पुनः अर्थिनो विषयिणः निजसुखादिकमेण हेतुना मुदं प्रापुः । सद्रवात् उत्तमस्वरेण या श्रुतिः श्रवणं तस्मात् सा गुरुयुक्ता सती भाग्यनगरमगमत् । तत्र नगरे आर्येण श्रेष्ठेन शूद्रसंन्यासिना पृथ्वीपुरीनाम्ना प्रसिद्धेन सह मंत्रिवरं चंदुलालेति प्रसिद्धं प्रति गत्वा गानं पद भजनमकरोत् । ततः स मंत्रिराट् संतुष्टोऽभवत् । स कृष्णांश इति पूर्वोक्तं ज्ञातव्यमिति भावः ॥ ९३ ॥ स च मंत्री अन्वहं त्वं मामेत्य शुकानंदभजनं श्रावयेति तां प्राह । साध्वी साधुबायीति लोकप्रसिद्धा सा च इह द्वारपालैरहं न निवारिता चेत् तदा ओमिति तं मंत्रिणमवदत् । ईशः आज्ञाकरणे समर्थो मंत्री अनया उक्तं नो निवार्येति तान्द्वारपालानाज्ञापयत् । नित्यं भोक्तुं रूप्यार्द्धं चाज्ञापयत् । अथ सा मंत्रिणोंतःस्थलमनुदिनं ययौ ॥ ९४ ॥ मंत्रिणि

मंत्री तामवदच्छुकार्यभजनं मां श्रावयेत्यन्वहं साध्वी तं वदति स्म चोमिति यदा नो द्वारपैर्वारिता ॥ तानाज्ञापयदीश उक्तमनया भोक्तुं च नित्यं तथा रूप्यार्द्धं त्वथ सा ययावनुदिनं चांतःस्थलं मंत्रिणः ॥ ९४ ॥ भुक्तिस्थे प्रकृतौ पदानि वदतिस्मासौ शृणोति कहद्ग्रासं नास्मरदत्तुमाननगतं नेतुं करस्थं मुखे ॥ कालोत्यंतमभूद्धि भोक्तुमवदद्बाह्याद्घटीवाग्घटीः श्रुत्वा शीघ्रमथात्ति नित्यमिति तस्यासीद्रतिस्तच्छ्रुतौ ॥ ९५ ॥ गेहस्थं क्व च देशिकं वदति व.ग्ग्येशं मयूरेश्वरः संस्थानेषु हि सर्वतोऽग्रगतये संत्यग्रहाराः पुरः ॥ नैवास्मत्स्थल ईषदप्यथ पुरं भाग्यं भवद्भिर्निजैर्गत्वा ग्राम उतैक एव सचिवात्संयाचनीयो लघुः ॥ ९६ ॥

भुक्तिस्थे भोक्तुं प्रवृत्ते सति सा पदानि वदतिस्म । असौ मंत्र्येकहृत एकाग्रचित्तः सन् श्रृणोति । मुखगतं ग्रासं अत्तुं भक्षयितुं न स्मृतवान् । करस्थं मुखे नेतुं न स्मृतवान् । तदा तस्य भोक्तुमत्यंतं यावत्कालोऽभवत् तावत् घटीवाक् घटीवक्ता बाह्यतो घटीरवदत् इति कालो जात इत्याह । तच्छ्रुत्वा सः शीघ्रमत्ति भुंक्ते । इति नित्यं तेषां साध्व्या उक्तपदानां श्रुतौ श्रवणविषये तस्य मंत्रिणः प्रीतिरासीत् ॥ ९५ ॥ एवं गुरोर्ग्रामलाभार्थमुपक्रम्य देशिकेंद्रस्य भाग्यनगरे गमनमाह । गेहस्थमिति । कदाचिद्वाकूपटुर्मयूरेश्वरो देशिकं वदति । हे गुरो सर्वेषु संस्थानेषु अग्रगतये अग्रे संस्थानस्य व्ययसंपादनायाऽग्रहारा वंशपरंपरया देयाः पुरः ग्रामाः संति । अस्मत्संस्थाने ईषदपि किंचिद्ग्रामादिकं नैवास्ति । अथ भवद्भिर्भाग्यनगरं निजैरस्मदादिभिः सह गत्वा सचिवादल्प

एक एव ग्रासः सम्यक् याचितव्यः ॥ ९६ ॥ किं च हि यतः प्रकृतिना पूर्वतस्तव स्नेहोप्यस्ति । पूर्वं तव परिचयोस्ति । अतो युवयोर्वचः परस्परं वचनं वक्तुं माध्यस्थनुर्मध्यस्थपुरुषस्यापेक्षा च नास्ति । अथैनं मयूरेश्वरं सर्वविद्गुरुरिति वदति । इति किं तदाह । तस्य मंत्रिण आज्ञां विलंघ्य मया आगतम् । अहमागतोस्मि यतः । अतो मया तत् भाग्यनगरं नो गम्यते न गच्छामीत्यर्थः । चेद्यदि भाग्यनगरे सर्वत्र त्वं अटन्सन् तत्र पुरे मां कुत्रापि न नेष्यसि तर्हि अहं निजैः सह यास्ये । भाग्यनगरं गत्वा स्वस्थल एव स्थास्यामीत्यर्थः ॥ ९७ ॥ एवं गुरोरभिप्रायं ज्ञात्वा ॐमिति वदन् अंगीकुर्वन् मयूरेश्वरो दशिकं गुरुं आत्मजैः पुत्रैरितरैश्च शिष्यैर्युक्तं यानेनाश्वैर्गोभिर्भारवाहिवृषैः सह यथा मार्गेण भाग्यनगरं निन्ये । तत् भाग्यनगरं गत्वा पुरस्य बाह्यदेशे अंके

स्नेहोप्यस्ति हि पूर्वतः प्रकृतिनाऽपेक्षा न माध्यस्थनुर्वक्तुं वै युवयोर्वचोथ वदतीत्येनं गुरुः सर्ववित् ॥ आज्ञां तस्य विलंघ्य चागत
मतो नो तन्मया गम्यते चेद्यास्यामि कुतोपि नेष्यासि पुरेऽटन् सर्वतस्त्वं निजैः ॥ ९७ ॥ ज्ञात्वाशयमेवमोमिति वदन्निन्ये मयूरे
श्वरो भाग्यं देशिकमात्मजेतरयुतं यानाश्वगोभिः पथा ॥ गत्वा तत्पुरबाह्यतोंकमवसत्तात्त्वद्वयं स्वं त्वभूच्छ्रुत्वा देशिकमागतं ययुरथो
स्वीयाः पुरादीक्षितुम् ॥ ९८ ॥ तै रौप्यत्रयमर्पितं पथि वृषैर्भारावहायाददात्प्रोचेथो स्थितबालकृष्ण इति चापश्यन्मयूरेश्वरम् ॥
पत्रं प्राग्लिखितं न नो गुरुरिहानीतो मुधा श्रीमता यः पूर्वं बहुधार्मिकः प्रकृतिराण्नैषोऽधुना तादृशः ॥ ९९ ॥

समीपेऽवसत् । वित्तं तु तावद्वयं मार्गे प्राप्तव्ययपरिमितमभूत् । अथ स्वीयाः गुरोः शिष्याः बालकृष्णकमलाकराण्णारावाख्याः देशिकमागतं श्रुत्वा द्रष्टुं भाग्यनगरादाययुः ॥ ९८ ॥ ततस्तैः शिष्यैः रौप्यत्रयं यदर्पितम् । गुरवे इति शेषः । असौ गुरुस्तद्रौप्यत्रयं वृषैः भारमावहतीति तस्मै भाषया भाडेकरी ति प्रसिद्धाय पुरुषायाददात् । अथ समीपे स्थितो बालकृष्णो मयूरेश्वरं चासमेतात्पश्यन् इति प्रोचे । इति किम् । श्रीमता त्वया पूर्वं गुरुमानयिष्यामीति पत्रं न लिखितम् । नोऽस्माकं गुरुरिह वृथाऽऽनीतोस्ति । यः प्रकृतिराट् मंत्री पूर्वं बहुधार्मिक आसीत् । स एषः संप्रति तादृशो धार्मिको नास्ति ।

यतो नायं पूर्ववद्धर्मकर्ता । अतो वृथाऽस्माकं गुरुरानीत इत्यर्थः ॥९९॥ ततः कमलाकराख्यशिष्यो धैर्याढ्यं यथा स्यात्तथा एकं शुभं वर्तमानम् अणु अल्पस्वरेणेति वदति । इति किम् । साध्वी मंत्रिणाऽऽज्ञप्ता सती तस्य मंत्रिणो गृहांतः अंतर्गृहे आर्यस्य शुकानंदगुरोर्भजनं तद्भक्तौ तस्य भोजनसमये प्रत्यहं करोति । असौ मंत्र्यपि भुंजन् सन् एकाग्रमनसा तद्भजनं चिरकालेन श्रुतवान् शृणोति हि । यतस्तस्य भक्तिः शुकानंदभजनेस्ति । अतः स्वराट् स्वतंत्रो गुरुरनंतलीलोस्ति । गुरुकार्यं सर्वं सेत्स्यतीत्यर्थः ॥ १०० ॥ अथात्मज्ञो देशिको बालकृष्णवचसा पूर्वं विमनस्कः सन्नपि तस्य कमलाकरस्य पृथक् ईरितं भिन्नं वाक्यं श्रुत्वा संतुष्टोऽभवत् । कमलाकरं च वदति । नोऽस्मान्स्थातुं वासं कर्तुं निर्जनमुपद्रवरहितं सुजलं स्थलं द्रष्टव्यं त्वयेति शेषः । स च

धैर्याढ्यं कमलाकरोऽणु वदतीत्येकं शुभं मंत्रिणाऽऽज्ञप्ता तत्सदनांतरार्यभजनं साध्वी करोत्यन्वहम् ॥ तद्भुक्तौ श्रुतवाननन्यमनसा भुंजंश्चिरादप्यसौ तद्भक्तिर्हि शुकार्यनामभजने सोऽनंतलीलः स्वराट् ॥ १०० ॥ श्रुत्वा तत्पृथगीरितं तु विमनास्तुष्टोऽप्यभूद्देशिकश्चात्मज्ञः कमलाकरं वदति नः स्थातुं स्थलं निर्जनम् ॥ द्रष्टव्यं सुजलं स चाह लघुसिंहाराम ईदृक् पुरा नोऽज्ञातस्थितिरित्यथाऽखिलयुतस्तत्रावसच्छ्रीगुरुः ॥ १०१ ॥ अह्न्याद्येऽश्वनृभुक्तयेऽखिलमथाऽऽरामेड् ददौ त्र्यहं पूर्णं शिष्यवरैस्त्रिमासगतये दत्तं त्रिभिर्भक्तितः ॥ तस्थौ भागवतं गुरुर्गुरुसमाख्यं सत्पठद्भिर्निजैस्तत्रत्यांश्च समागतांस्तदमितान्सूक्ष्मान्सदर्थान्वदन् ॥ २ ॥

कमलाकर इति प्राह । इति किम् । नोऽस्माकम् अज्ञातस्थितिः अज्ञातवासस्थानं लघुसिंहस्य छोटेसिंहाख्यस्यारामः ईदृक् गुरुनिवासयोग्योस्ति । तत्र त्वया वस्तव्यमित्यर्थः । अथ सर्वैर्युक्तः श्रीगुरुस्तत्रारामेऽवसत् ॥ १०१ ॥ तत्राद्येऽह्नि प्रथमदिवसे आरामपतिः अश्वमनुष्याणां भुक्तये सर्वमन्नादिकं ददौ । तत् त्र्यहं त्रिदिनपर्यंतं पूर्णमासीत् । त्रिभिः शिष्यवरैस्त्रिमासं मासत्रयपर्यंतं तत् अन्नादि दत्तं भक्त्या समर्पितम् । तत्र सन् गुरुश्च गुरुसमाख्यं भागवतं पठद्भिः शिष्यैः सह समागतान् तत्रत्यान् नगरस्थान् प्रति तस्य गुरुभागवतस्य बहून् सूक्ष्मान् उत्तमार्थान्वदन् सन् ग्रामलाभार्थं चिंतादिरहितः

सुखेन तत्रावसदित्यर्थः ॥ २ ॥ एवं देशिकेंद्रवृत्तमुक्त्वा मंत्रिणो वृत्तमाह साध्वीमित्यादिना । स च सचिव एकदा साध्वीमाह । शुकानंदसाधुः सद्यः संप्रति कुत्र वर्तत इति । अथ सा सती साध्वी स शुकानंदः स्वस्थानं गतोस्ति । अस्यात्मजोस्तीत्युवाच । स च तस्य शुकानंदस्य पुत्रः कीदृक् अधिकारी अनधिकारी वा क्व स्थले वर्तत इति मंत्रिणि वदति सति इज्या मान्या साध्वी पित्रा शुकानंदेन तुल्यः संप्रतीह भाग्यनगर एव वसति । इत्थमब्रवीत् । स च मंत्री तत्पुत्रोत्र वसतीति किमर्थं नोदितो मह्यं न कथित इत्यूचे उक्तवान् । एवं प्रकारेण तस्य गुरुदर्शनेच्छा जातेत्यर्थः ॥ ३ ॥ च पुनः भृत्या नाह मंत्रीति शेषः । हे दूताः भवद्भिरस्मत्तः मम प्रार्थनया शुकानंदपुत्र इह सभायामानेयः आनेतव्य इति । अथ ते भृत्यास्तया साध्व्या सह श्रीगुरुं गत्वा

मू॰ साध्वीमाह स चैकदेति सचिवः सद्यः शुकानंदमन्कुत्रास्तेऽथ सतीत्युवाच स गतः स्वस्थानमस्यात्मजः ॥ कीदृक् क्वास्ति सुतोपि तस्य वदतीत्थं मंत्रिणीज्याऽब्रवीत्पित्रा तुल्य इहैव संप्रति वसत्यूचे स किं नोदितः ॥ ३ ॥ भृत्यांश्चाह नृपान्ततो द्रुतमिहानेयः शुकार्यात्मजोऽस्मत्तः प्रार्थनया भवद्भिरथ ते गत्वा तया श्रीगुरुम् ॥ प्राहुर्मंत्रिवरो भवत्पदसमीक्षामिच्छतीशाद्य नो तस्मात्पा द्रुतमस्त्वथास्तु चाथ गुरुराड् याम्यद्य नेत्याह तान् ॥४॥ स्मृत्वा प्रेषितमात्मनैव भवतां यन्मंत्रिणाह्वानकं नोपेक्ष्यं हि विदोऽपि यं स्वगतयश्चेत्थं मयूरेश्वरात ॥ श्रुत्वा तं गुरुराह गच्छतु भवांश्चेन्मे गतीच्छास्ति ते यामि श्वो यदि ते पुनस्त्विह समायांतीरितं तैस्तथा ॥ ५ ॥

इति प्राहुः । इति किम् । हे गुरो मंत्रिवरस्तव चरणदर्शनमिच्छति । हे ईश गुरो सा च त्वत्पदसमीक्षा अस्मात् नृपान्ततोऽस्तु भवतु । अथ गुरुराट् अद्याहं न यामि नागच्छामीति तान्प्राह ॥ ४ ॥ मयूरेश्वर इत्थं श्रुत्वा तं गुरुमाह । इत्थं किम् । यद्यस्मान्मंत्रिणाऽऽत्मनैव स्मृत्वा यद्भवतां युष्माकं प्रेषितमाह्वानकं तत् नोपेक्ष्यम् । इदानीमर्थलाभसमये उपेक्षा न कर्तव्या । हि यतो विदः पंडिता अपि यं मंत्रिणं प्रति स्वगतयः आह्वानमनपेक्ष्यैव स्वयंगामिनो भवंति । तं प्रति त्वयाऽवश्यं गंतव्यमित्यर्थः । इति श्रुत्वा तं गुरुराह । भवानेव गच्छतु । अहं तु न यामि न गच्छामीत्यर्थः । चेद्यदि ते तव मद्गमनस्येच्छास्ति । यदि वा एते राजसेवकाः पुनः समायांति एष्यंति । तर्हि श्वो यामि यास्यामि । इति श्रुत्वा तैर्दूतैस्तथा श्वः नेतुमागमिष्याम इति ईरितमुक्तम् ।

एवं स्वतंत्रो गुरुरिति भावः ॥ ५ ॥ अथान्यदिने वैदूतैरागत्य नृयानेन गुरुर्मंत्रिगृहं नीतः प्रापितः । हस्तिमुखैर्वाहनैर्गुरुपुत्राद्या नीताः । तेन च मंत्रिणा सत्कृतोऽसौ गुरुः पृष्टः सन् स्वात्मनः क्षेमं उवाच ॥ ६ ॥ तदेव पूर्वपरिचयस्मारकं गुरुवाक्यमाह । परार्थमिति । परोपकारार्थमेव प्रतिदिनं तवोक्तिर्वचनमस्ति । स्वार्थं स्वकार्यार्थं कदाचिन्नवोक्तिर्नास्तीति च भवान् यं प्रति पूर्वमुवाच । सोऽहं शुकानंदपुत्रोऽस्मि । हे भूमन् यदि त्वं वेत्सि जानासि । तर्हि जानीहीति शेषः । मंत्री चाहं सर्वं जानामीति तं देशिकेंद्रमाह । एवं तस्य पूर्वपरिचयस्मरणं जातमित्यर्थः ॥ ७ ॥ गुरुस्तं पुनराह । त्वं साक्षात्कृष्णोसि । शुकानंदगुरुः सुदामास्ति । अतस्त्वमिनो राजासि चेत्तर्हि मित्रस्य किंचित्कार्यं कुरु । स च मंत्री इदं अहं कृष्ण इति शुकानंदवाक्यमस्ति किं इत्याह ॥

कविरुवाच॥अन्येद्युरागत्य नृयानतस्तैर्नीतो गुरुर्हास्तिमुखैः सुताद्याः॥ मंत्रिस्थितिं तेन च सत्कृतोसौ पृष्टस्ततः क्षेममुवाच तं सन् ॥ ॥ ६ ॥ परार्थमेवानुदिनं तवोक्तिः स्वार्थं क्वचिन्नेति च यं भवान् प्राक् ॥ उवाच सोऽहं यदि वेत्सि भूमन् जानेऽखिलं चेति तमाह मंत्री ॥ ७ ॥ गुरुस्तमाहेति पुनस्त्वमद्धा कृष्णः शुकानंदगुरुः सुदामा ॥ मित्राणुकार्यं कुरु चेदिनस्त्वं शुकार्थवाक्यं किमिदं स चाह ॥ ८ ॥ उक्तं शुकानंदपदैरिदं मे गुरुण्यथो भागवतेऽपि मत्तः ॥ आलेखितं देशिक इत्थमुक्त्वोचे तत्पुरः सप्तममुक्तपद्यम् ॥९॥ श्रीमच्छुकानंदसखाप्तभूतः कृष्णस्त्वमेवाश्रितसौख्यकारी ॥ लीलाविहारी मनुजावतारी पाहि स्वकीयानघदुःखहारी ॥ ११० ॥ श्रुत्वेति पद्यं स्वपरं तदर्थं ज्ञात्वाऽपरज्ञेयमुरःस्वहस्तः ॥ मंत्री हसन्देशिकमाह तुष्टः कुर्वे शुकानंदगुरोस्तु सर्वम् ॥ ११ ॥

॥ ८ ॥ इति श्रुत्वा देशिकेंद्रः गुरोर्वाक्यमाह । उक्तमिति । श्रीशुकानंदचरणैरिदं भवान्कृष्ण इति मे मह्यं कथितम् । अथ मत्तः मम हस्तेन गुरुभागवते आलेखितम् । इत्थमुक्त्वा देशिकगुरुस्तस्य मंत्रिणः पुरः अग्रे उक्तं गुरुभागवतोक्तं पद्यमूचे उक्तवान् ॥ ९ ॥ तदेव पद्यमाह । श्रीमदिति । श्रीमच्छुकानंदस्य सखा मित्रम् आप्तभूतः प्रियरूपोसि । किंभूतः आश्रितजनानां सुखकर्ता लीलया विहारो जगति संचारो यस्य अघं पापं तज्जन्यं दुःखं च हरति यः स त्वं स्वकीयान्पाहि रक्षेति । अत्र विहारिपदं मंत्रिणो जन्मनामासीदिति ज्ञेयमिति भावः ॥ ११० ॥ इति पद्यं श्रुत्वा न परेणान्येन ज्ञेयो ज्ञातुं योग्य

दत्तोऽस्ति । यतस्तस्मात्कृष्णांशो मंत्री सुदाम्नोंशः शुकानंदोऽस्तीति सर्वैर्ज्ञातव्यमिति भावः ॥ १६ ॥ अथ मयूरेश्वरो देशिकेंद्रवचनं श्रुत्वाऽवदत् सर्वानिति शेषः । अस्माभिरिति बहुवचनं सर्वाभिप्रायेण । सदीज्यः सन्मान्यो गुरुः त्वयैतत्पद्यं पुनः पुनः किमर्थं मंत्रिसमीपे पठितमिति भूयो मुधा भाषितः । किं कृत्वा तस्य पद्यस्यांतःस्थं तत्त्वं सूक्ष्मं कारणमज्ञात्वा । अतो मंत्री कृष्णांशः शुकानंदयोगी च सुदामास्ति सत्यम् । यस्मात्पद्यात्स मंत्री तत्त्वं वेद ज्ञातवान् । विद्वांस्त्वं स्वकृतमपि पद्यतत्त्वं न ज्ञातवान् । हि यतो नारायणेनोक्तम् । श्रीनारायण एव गुरुभागवतकर्तेति भावः ॥ १७ ॥ अथ स गुरुरखिलैः पुत्राद्यैर्युक्तः पूजित इत्यादिक्रमबोधकविशेषणविशिष्टः सन् निजनगरं वसुमतीमवाप जयंत्यंबा च सुतरां तुष्टाभवदित्यन्वयः । पांथैः पौरैश्च पूजितः क्रमेण

श्रुत्वायोक्तं मयूरेऽवददथ सुधास्माभिरुक्तः सदीज्यः किं भूयः पद्यमेतत्पठितमिति तदंतःस्थमज्ञाय तत्त्वम् ॥ कृष्णांशः सत्यमेष प्रकृतिरपि शुकानंदयोगी सुदामा यस्माद्वेदैष तत्त्वं स्वकृतमपि न विद्धि नारायणोक्तम् ॥ १७ ॥ कविरुवाच ॥ अथ गुरुरखिलाढ्यैः पूजितः पांथपौरैः क्रमगतवरगोदः प्रेष्य भाग्यं रथौ सः ॥ उदगिततरिगंगो गोतटस्थार्चितांघ्रिर्निजनगरमवापाऽभूत्सुतुष्टा जयंती ॥ ॥ १८ ॥ ययुरथ धनजस्थाः स्थायुकाः श्रीगुरुं वै कृतनतय उताहुर्ग्रामदेयादि तस्मै ॥ गुरुरपि निजभक्ताज्ञानहा भाविमुक्त्यै गुरु भगवत ऐशं नाम्नि नारायणेऽधात् ॥ १९ ॥

प्राप्तोत्तमगोदा येन सः । नंदीतटं प्राप्त इत्यर्थः । तत्र मंत्रिदत्तरथौ भाग्यनगरं प्रेषयित्वा उदगिता उत्तारिता तर्या नौकया गंगा येन स नौकयोत्तरतीरं प्राप्त इत्यर्थः । गोतटस्थैर्नंदीतटस्थैर्जनैरर्चितावंघ्री यस्य सः ॥ १८ ॥ अथ धनजग्रामस्थाः स्थायुकाः ग्रामाधिकारिणः । 'स्थायुकोऽधिकृतो ग्रामे' इत्यमरः । गुरुं देशिकेंद्रं प्रति ययुः । उत पुनः कृतनतयः संतस्तस्मै गुरवे ग्रामदेयादि । तन्मौल्यादिकमिति यावत् । आहुः कथितवंतः । एवं रीत्या ग्रामलाभो जात इत्यर्थः । निजभक्तानामज्ञाननाशको देशिकेंद्रगुरुरपि भाविजनानां मुक्त्यर्थं गुरुरेव भगवांस्तस्य ऐशं ऐश्वर्यं नारायणनाम्नि अधात् स्थापितवान् । अयं भावः । भाविजनविमुक्त्यर्थं कृतस्य गुरुभागवतस्याभिप्रायेण नारायणनामार्थज्ञाने जाते सति आत्मनः ऐश्वर्यरूपं सर्वं जगदिति ज्ञानं जायते ।

अतो गुरुभागवताभिप्रायेण नारायणनामस्मरणेन मुक्तिर्भविष्यतीति ॥ १९ ॥ एवं देशिकेंद्रगुरोश्चरित्रमुपवर्ण्याल्पकालेन स्वरूपस्थितिं वक्तुं तस्य कदाचिद्वृत्तमाह । वरजनीत्यादित्रिभिः । अथोत्तमजन्मनि कृतकृत्यो गुरुः स्वीयं स्वस्थानं तत्र या गतिर्गमनं तत्राशयश्चित्ताभिप्रायो यस्य स स्वपदं गंतुकामः स्नान् स्नानसमय एव चेष्टादिदेहव्यापाररहितोऽभवत् । हस्तपादचांचल्यरहितः किंचिद्वक्तुं तु असमर्थश्चाभवत् । सपदि तत्कालं मयूरेश्वरो जयंत्यंबां प्रति कथितवान् ॥ १२० ॥ गौरीं पूजयंत्या जयंत्यंबया इति च देशिकेंद्रवृत्तं श्रुतम् । झटिति त्वरितं तदभिगत्या देशिकेंद्रसमीपगमनेन तादृशो विचेष्ट ईशो गुरुः प्रार्थित आसीत् ।*अर्द्धं त्वदंगं मम मदीयमस्ति खलु । अत्र मदीयार्द्धांगे तु भवदीयं तव सत्त्वं ममत्वं तद्विसर्जने स्वातंत्र्यं न भवतु । चेदहं श्रीच

वरजनिकृतकृत्यः स्वीयगत्याशयोऽथ स्नपनसमय एवाऽभूद्विचेष्टः कदाचित् ॥ पदकरचलनो नो वक्तुमीशस्त्वनीशस्तामिति सपदि वीक्ष्योचे जयंतीं मयूरेट् ॥ १२० ॥ श्रुतमिति च जयंत्या पूजयंत्या हि गौरीं झटिति तदभिगत्या प्रार्थितस्तादृगीशः ॥ खलु मम भवदंगं त्वर्द्धमत्राणु सत्त्वं न भवतु भवदीयं चेदहं श्र्यंघ्रिनिष्ठा ॥ २१ ॥ इति निगदितवाचि श्रीजयंत्यां त्रिदोर्धा तनुरभवदसत्त्वाऽस्यां घ्रिहस्ताक्षिमुख्या ॥ प्रथमवदपि चार्द्धा मातृसंकल्पसत्त्वा विदुरिदमिह तज्ज्ञाः पक्षवायुं तदज्ञाः ॥ २२ ॥ तनुपदकरवक्त्रक्षालनं देशिकस्यार्पणमणुकवलस्याप्यंधसोऽर्धास्य एव ॥ वसनधृतिपिधाने बाह्यतोऽतर्गतिश्चाऽभवदमलसुशिष्यैरीशसेवादिपुण्यैः ॥ २३ ॥

रणनिष्ठास्मि । तर्हि संप्रति तव प्राणवियोगो मा भवत्वित्यर्थः ॥ २१ ॥ श्रीजयंत्यां इति प्रकारेण निगदितवाचि उक्तवाक्यायां सत्यां त्रिदो देशिकेंद्रगुरोर्मुखहस्तपादादिकाऽर्धा तनुरसत्त्वा चलनादिसंचाररहिताऽभवत् । अपराऽर्धा तनुर्मातृसंकल्पेन सत्त्वं यस्यां सा पूर्ववद्व्यापारयुक्ताऽभवत् । जयंत्यंबासंकल्पेन गुरोरर्धदेहश्चलनादियुक्तो जात इति भावः । इह लोके तज्ज्ञाः तदभिप्रायज्ञाः इदं तत्त्वं विदुः । अतज्ज्ञाः पक्षवायुं विदुः । पक्षवायुं निश्चितवंत इत्यर्थः ॥ ॥ २२ ॥ ततः किं वृत्तमित्याह । तन्वित्यादिना । देशिकेंद्रस्य देहादेः क्षालनम् अंधसोऽन्नस्य योऽल्पग्रासस्तस्यार्द्धास्ये अर्द्धमुखे एवार्पणं वस्त्रधारणं पिधानमाच्छादनं गृहस्यांतर्बहिर्गमनं च सुशिष्यैः काशीनाथविदादिभिरभवत् । शिष्यैः सर्वं कार्यं संपादितमित्यर्थः । ईशस्य गुरोः सेवा पूर्वपुण्यैरेव भवति

हि निश्चयेनेत्यर्थः ॥ २३ ॥ अथ कदाचिज्जयंती विघ्नराजमयूरेश्वरयोः पुत्रयोर्दुहितृद्वयं कन्याद्वयं उपयमविधियोग्यं विवाहयोग्यं दृष्ट्वा देशिकेंद्रनाथं प्राह । प्रवासं कर्तुं योग्यो मयूरेश्वरस्त्वया योजनीयः प्रवासं कर्तुमाज्ञापयितव्यः । यत् यतः एतस्मिन्वर्षे द्वयोः पौत्र्योर्विवाहो भवतु । मयूरेश्वरेण प्रवासं कृत्व लब्धेन वित्तेनास्मिन्वर्षेऽवश्यं विवाहः कर्तव्य इत्यर्थः ॥ २४ ॥ इति जयंत्या यदोदितमुक्तम् । तदाऽऽर्येण गुरुणा च तथेत्युक्तम् । अथ मयूरेश्वरः प्रवासं कृत्वा शीघ्रं गुरुं प्रति अगात् । अल्पप्रवासेन प्राप्तं बहुधनं मात्रे जयंत्यै निवेद्य द्विपुत्र्योर्विवाहं स कृतवानित्यर्थः ॥ २५ ॥ अथ स चैक एव मयूरेश्वरः प्रवासं कृतवान् । यस्य वचोभिः शठः कृपण उदारो भवति । निंदकोऽस्य मयूरेश्वरस्य स्तावको भवति । परमतगतिः परमतगामी शिष्यतामेति ।

उपयमविधियोग्यं विघ्नराड्विन्मयूरेड्दुहितृयुगमवेक्ष्य प्राह नाथं जयंती ॥ प्रवसनमथ कर्तुं योजनीयो मयूरेड् भवतु शरदि चास्यां यद्धि पौत्र्योर्विवाहः ॥ २४ ॥ उदितमिति जयंत्यार्येण चोक्तं तथेति प्रवसतिमथ कृत्वाऽगाद्गुरुं द्राङ्मयूरेट् ॥ बहुधनमणुगत्याऽऽप्तं च मात्रे निवेद्योपयममपि स चक्रे सद्वराभ्यां द्विपुत्र्योः ॥ २५ ॥ प्रवसतिमथ चैकः सोऽकरोद्यद्वचोभिर्भवति शठ उदारो निंदकः स्तावकोऽस्य ॥ परमतगतिरेतिच्छात्रतां मित्रवाक्योऽपरिचित उत सद्यो दर्शनान्मान्यमानी ॥ २६ ॥ अचलतनुकरादेश्चाययुर्दर्श नाथं श्रुतिमुखविमलार्थज्ञस्य नाथस्य संतः ॥ स्वसुखवदनुभूतिं ज्ञातुमद्वैतवाक्यैरसुभृत इव भीष्मस्योपदेष्टुं स्वधर्मम् ॥ २७ ॥

अपरिचितो मित्रवद्वक्ता भवति । उत पुनर्मानी अभिमानवान् अमानी अभिमानरहितो भवति । एवं मयूरेश्वरो बहुभाग्यवानासीदिति भावः ॥ २६ ॥ अचलानि तनुकरादीनि यस्य श्रुत्यादिषु यो विमलार्थस्तं जानाति यस्तस्य देशिकानंदनाथस्य दर्शनार्थं परे संतः साधवः स्वसुखवत आत्मज्ञस्यानुभवं वेदां तवाक्यैर्ज्ञातुं चागताः । कस्य दर्शनार्थं इव । स्वकीयं धर्मं युधिष्ठिरं स्वस्ववर्णाश्रमधर्मं वा । दार्ष्टांते स्वधर्ममात्मधर्मम् । यद्यपि तद्भिन्नत्वे सति तद्गतधर्मव त्वमुपमात्वमिति सत्पदस्यैकत्वादुपमा न संभवति । तथापि भिन्नार्थकत्वादुभयसंबंधित्वेन भेदांगीकारादुपमानोपमेयभावः संभवति । तथा च गुरोर्दर्शनार्थं

महान्समारंभो जात इत्यर्थः ॥ २७ ॥ इति प्रकारेण स देशिकेंद्रगुरुः प्रच्छकानां संशयघ्नो द्विशरत् वर्षद्वयपर्यंतं तस्थौ । अथास्याः जयंत्याः स्वत्त्व विरमयितुं विलीनं कर्तुं अंत्याश्रमेच्छुः संन्यासग्रहणेच्छावानभवत् । संन्यासे हि दारैषणायास्त्यागेन पत्न्याः सत्त्वं निवर्तेत इत्यर्थः । अथैकः शिष्यस्तं गुरुमेत्य प्रणम्रः मुकुटग्रामवासिनः सुशिष्यस्य स्वप्नं तेनैव कथितमूचे कथितवान् ॥ २८ ॥ तदेव स्वप्नमाह । अवददिति । शुकानंदयोगी तं मुकुटगतं शिष्यं प्रति इत्यवदत् । इति किम् । चिंतामणिः अद्यापि चरमपदं संन्यासाश्रमं नैति किं संन्यासं न गृह्णाति किम् । इति शुकानंदगुरौ वदति सति त्वं च संन्यासिरूप ईक्षितः तेन दृष्टोसि । अथ स मुगुटगतशिष्यश्च जागृतोऽभवत् । इति तत् शिष्योक्तं स्वप्नं वेत्ता ज्ञानी देशिकेंद्रः श्रुतवान् ॥ २९ ॥

द्विशरदिति स तस्थौ पृच्छतां संशयघ्नो विरमयितुमथास्याः स्वत्त्वमंत्याश्रमेच्छुः ॥ अभवदथ तमेकः शिष्य एत्य प्रणम्रो मुकुटगतसु शिष्यस्वप्नमूचे तदुक्तम् ॥ २८ ॥ अवददिति हि साक्षात्तं शुकानंदयोगी न चरमपदमद्याप्येति चिंतामणिः किम् ॥ इति वदति गुरौ त्वं चेक्षितो न्यासिरूपस्त्वथ स विगतनिद्रश्चेतिः वेत्ताऽशृणोत्तत् ॥२९॥तदुदितमथ वेत्राऽऽकर्ण्य चोक्त्वा जयंती तदभिमतमयूरेट्र चानयच्चासिनिप्रान् ॥ क्षितिमरुदनघोक्त्या देशिकश्चैषणोनोऽभवदतिधनदानात्प्रेषवाग्विद्यतिर्हि ॥ १३० ॥

एवं स्वप्नाभिप्रायं ज्ञात्वा देशिकेंद्रगुरोः संन्यासग्रहणमाह । तदुदितमिति । अथ वेत्रा देशिकेंद्रेण तदुक्तं शिष्योक्तं स्वप्नमाकर्ण्य जयंत्यंबा उक्ता संन्यासं स्वीकरोमीति तस्यै उक्तम् । ततस्तया जयंत्यंबयाऽभिमत आज्ञापितश्चासौ मयूरेश्वरः सोपि संन्यासिनो विप्रांश्चानयत् । ततो देशिकेंद्रः क्षितिमरुद्भिर्भूदेवै र्याऽनघोक्तिः पुण्याहवाचनं तया तत्पूर्वकमिति यावत् । अतिधनदानात् बहुधनदानेन तत्पूर्वकमिति यावत् । ईषणोनः ईषणात्रयरहितो जातः च पुनः प्रेष वाक् प्रेषोच्चारकर्ताभवत् । हि यतः वित् विद्वान्सन्यतिः । तथा चान्यमनपेक्ष्य स्वतः प्रेषमंत्रोच्चारणं विद्वत्संन्यासविषयम् । " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इति श्रुतौ सावधारणनिर्देशेन वैराग्योत्पत्तिकाले एव संन्यासो विधीयते । न त्वन्यापेक्षया उपदेशम् अन्यं देशं कालं वाऽपेक्ष्य विधीयते ।

अविद्वत्संन्यासे तु अन्यापेक्षयैव संन्यासो भवति नान्यथेति भावः ॥१३०॥ एवं देशिकेंद्रगुरोः संन्यासमुक्त्वा प्राणोत्क्रमप्रातिमाह । यतितनुरिति । अथ यतितनुः संन्यासी स देशिकेंद्रगुरुः सार्द्धमासं वै अवसत् । नित्यं च लघुकवलं यथा स्यात्तथाऽल्पमल्पमन्नमश्नन् उत पुनः इहांतकालप्राप्तौ गुणदिनशेषे त्रिदिनशेषे सति तु अन्नं दृष्ट्वैवाहं तृप्तोस्मीत्याह । नाथे इति वचः यस्मिंस्तस्मिन् उक्तवति सति जयंत्यंबा विदो देशिकेंद्रस्याशु त्वरितमंतं मेने निश्चि तवती ॥ ३१ ॥ अथ देशिकेंद्रगुरोः स्वधामस्थितिमाह । प्रतिपदीति । स गुरुरित्यध्याहारः । इषे आश्विनमासे वदि कृष्णपक्षे प्रतिपत्तिथौ अदः इदं विश्वं नारायणे हीति निश्चयेन शिव एव गुरुस्तदभिन्नो यः स्वात्मा तस्य योऽनुभवस्तेन वीक्ष्य सम्यग्दृष्ट्वा आत्मगः स्वधामस्थितोऽभवत् । तस्य गुरोरभितः

यतितनुरवसद्वै सार्द्धमासं स नित्यं लघुकवलमथान्नं चोनमूनं किलाश्नन् ॥ इह गुणदिनशेषे त्वन्नमालोक्य तृप्तोऽहमितिवचसि नाथेऽतं विदोंबाशु मेने ॥ ३१ ॥ प्रतिपदि वदि चेषे वीक्ष्य नारायणेऽदः शिवगुरुतदभिन्नस्वानुभूत्याऽऽत्मगोऽभूत् ॥ तदभित उदध श्चोच्चाऽऽस नारायणोक्तिर्हृदि बहिरपि नास्य स्फूर्तिरन्या तदाऽऽसीत्॥३२॥स्नपनमथ गणेनाद्यैः कृतं तीर्थवार्भिः सविधि सदुपचारैः पूजितो देशिकेंद्रः॥ भ्रमित इह सुवाद्यैस्तालमुख्यैर्भजद्भिः शुकसुखपरतश्चास्थापितः सत्समाधौ ॥३३॥ययुरथ गुरुभक्तास्तद्वियोगात्त दुःखाः सुखयति निखिलांस्तद्व्यापकोक्त्या मयूरेट्॥तिथिदिनमपि चक्रे ह्युत्सवं स्वान्नदानैः प्रतिशरदि तथैषे पूर्णतः पंचघस्रम् ॥३४॥

ऊर्ध्वमधश्च उच्चा· उच्चस्वरा नारायणोक्तिर्नारायणशब्द आस । तदाऽस्य देशिकेंद्रस्य हृदि मनसि बहिः वचसि अपिशब्दात्सर्वेंद्रियेषु अन्या नारायण भिन्ना स्फूर्तिर्नासीत् । नारायणस्मरणपूर्वकं निर्याणं जातमिति भावः ॥ ३२ ॥ अथ गुरोः समाधिस्थापनमाह । स्नपनमिति । गणेनाद्यैः गणराजाद्यैः पुत्रैः शिष्यैश्च तीर्थोदकैः स्नानं कृतम् । सविधि यथा स्यात्तथा गंधाद्युपचारैर्देशिकेंद्रगुरुः पूजितः । इह वसुमत्यां तालादिवाद्यैर्भजंतस्तैः सह भ्रमितः चालितः । शुकसुखपरतः शुकानंदस्य पश्चिमतः सत्समाधौ गुरुयंत्रांकितत्वेनोत्तमसमाधौ चास्थापितः ॥३३॥ तदा महानुत्सवो जात इत्याह । ययुरिति अथ गुरुभक्तास्तस्य देशिकेंद्रगुरोर्वियोगेन प्राप्तं दुःखं येषां ते तथाभूताः संतो ययुः गुरुस्थानमिति शेषः । मयूरेश्वरस्तान्सर्वान्क्षति तस्य गुरोर्व्यापकोक्त्या

व्यापकत्वप्रतिपादनेन सुखयति । गुरोर्वियोगेन दुःखिता अपि मयूरेश्वरमुखाद्देदांतश्रवणेनानंदयुक्ता बभूवुरित्यर्थः । एवं तिथिदिनं पंचदशदिनपर्यंतं स्वस्यात्मनोऽन्नस्य च दानैः अत्रात्मदानमात्मोपदेशस्तैः साधनैरुत्सवं चक्रे । तथा प्रतिशरदि प्रतिवर्षं आश्विनमासे पौर्णिमामारभ्य पंचदिनपर्यंतमुत्सवं चक्रे । समाप्तं देशिकेंद्रगुरोश्चरित्रमिति ॥ ३४ ॥ त्रिंशदूर्ध्वद्विशतसंख्यानिविष्टं देशिकानंदनाथं प्रणमति । नारायणार्थानिति । पुरातनैः पंडितैरुक्ता न भवंति तानपुरातनोक्तान् श्रुतिवाक्यैः सिद्धान् निश्चितानन्नेकान्बहून्नारायणशब्दस्यार्थान्यश्चक्रे गुरुभागवते प्रतिपादितवान् । तं देशिकानंदगुरुं वयं नताः स्मः ॥ ३५ ॥ एवमादिनाथमारभ्य देशिकानंदपर्यंतं त्रिंशदूर्ध्वं द्विशतसंख्यातानां गुरूणां चरित्रं प्रथमसर्गे उपक्रांतमुपसंहरति । श्रीमयूरेश्वरः श्रीयुक्त श्वासावादिरादिनाथस्तमारभ्य देशिकानंदपर्यंतं त्रिंशदूर्ध्वं द्विशतसंख्यातानां गुरूणां चरित्रं मे मह्यं उदितवान् । इह एतेषु गुरुषु अर्द्धं पंचदशाधिकशतसं

नारायणार्थाञ्छ्रुतिवाक्यसिद्धांश्चक्रे त्वनेकानपुरातनोक्तान् ॥ यस्त्रिंशदूर्ध्वं द्विशताप्तसंख्यस्तं देशिकानंदगुरुं नताः स्मः ॥ ३५ ॥
चरितमुदितवान्मे श्र्यादितो देशिकांतं खगुणयमलसंख्यश्रीगुरूणां मयूरेट् ॥ कथितमिह तदर्धं प्राग्दले रुद्रटांतं परत उत कुमारो
दासतो देशिकांतम् ॥ ३६ ॥ पठति चरितमेतत्तीर्थकाश्योर्महत्त्वं गुरुभगवत ऐशं भाग्यपूर्यानमानौ ॥ गुरुनिजगतिमंत्यां श्रावये
द्वाऽतिभक्त्याऽघहृतिविदमलश्रीस्वेशताः संलभेत ॥ १३७ ॥ इति श्रीगुरुपरंपराचरित्रे उत्तरार्द्धे तीर्थावतरणादिदेशिकानंदनिर्वाणां
तकथावर्णनं नाम त्रिपंचाशत्तमः सर्गः ॥ ५३ ॥

ख्यया रुद्रटानंदगुरुपर्यंतं पूर्वार्द्धे कथितम् । उत पुनः परतः उत्तरदले कुमारादूर्ध्वं दासतः कुमारदासादारभ्य देशिकानंदपर्यंतमर्द्धं कथितम् ॥ ३६ ॥ एतत्सर्गोक्तकथाश्रवणादेः फलमाह । पठतीति । यः पुमान् तीर्थगुरुकाश्योः महत्त्वं गुरुरेव भगवान् तस्यैशं ऐश्वर्यं गुरुभागवतोत्पत्तिचरित्रमिति यावत् । भाग्यनगरे गमनसत्कारौ अंत्यां चरमां गुरोर्देशिकेंद्रस्य गतिं आत्मस्थितिं एतच्चरित्रं पठति वाऽशृणोच्छृणुयात् । अन्यं प्रति श्रावयेद्वा सः क्रमेणाघहत्या दिफलं लभेत प्राप्नुयात् । अघहृतिः पापनाशः वित् ज्ञानं अमलश्रीरुत्तमसंपत् स्वेशता स्वैश्वर्यं चेति चतुर्णां फलमित्यर्थः ॥ १३७ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां त्रिपंचाशत्तमः सर्गः ॥ ५३ ॥

उच्चतुःपंचमेऽकांगभू १६९ पद्यैः कथ्येत गुरोः । मयूरेशस्य चान्येषां कथास्वस्थानसद्गतेः ॥ ५४ ॥ अथावशिष्टं मयूरेश्वरचरित्रं वर्णयति । अविदित्या दिभिः । अत्रास्मिन्कलियुगे न इष्टा क्रिया यस्य सोऽपि क्रियापरित्यागी अविद्वान् ज्ञानलेशहीनोऽपि पुरुषो विष्णोर्नाम उच्चरन् सन् तावन्मात्रेण साधुर्भवति । विद्वांश्च क्रियावान् विहितकर्मकर्ता भवति हीति निश्चयेन । तौ कृत्रिमसाधुक्रियावंतौ मिथो निंदतः निंदां कुरुतः । मयूरेश्वरस्तु द्विमित्रः द्वौ कृत्रिमसाधुक्रियावंतौ मित्रभूतौ यस्य सः क्रियावान्विहितकर्मकर्ता वित् विद्वानपि आत्मवानात्मज्ञः द्वयोरीशयोर्हरिहरयोर्भक्त आसीत् । सर्वगुणसंपन्न आसीदित्यर्थः । भुजंगप्रयातं वृत्तम् ॥ १ ॥ किं च प्रातरुत्थाय नारायणनामानि भजन्सः कृतं स्नानादिकर्म येन स भाष्यमुक्त्वा समर्च्य इष्टदेवतामिति

कविरुवाच ॥ अवित्साधुरत्रोच्चरन्विष्णुनामाप्यनिष्टक्रियोऽथो क्रियावान्हि विद्वान् ॥ मिथो निंदतस्तौ मयूरेड् द्विमित्रः क्रियावा न्विदप्यात्मवान्द्वीशभक्तः ॥ १ ॥ भजन्प्रातरुत्थाय नारायणाख्याः कृतस्नानसंध्याग्निसेवादिकर्मा ॥ ततो भाष्यमुक्त्वा समर्च्याति सर्वैः पुराणं ततश्चेशसेवी प्रदोषे ॥ २ ॥ कदाचित्समभ्यर्च्य तं देशिकेंद्रसमाधिं नमन्स भ्रमन्सव्यगत्या ॥ चकाराष्टकं देशिकेंद्रस्य वृत्तैः सदर्थं सुकारुण्यमूर्तेः स्ववक्तुः ॥ ३ ॥ श्रीमयूरेश्वर उवाच ॥ प्रसन्नैकचित्तं दयासांद्रमंतः प्रकामं हितं तत्त्वजिज्ञासुवित्तम् ॥ जगद्भ्रांतिविश्रांतिवृत्तं प्रशांतं भजे देशिकानंदनाथं स्वनाथम् ॥ ४ ॥ दरांदोलिनेत्रं मृदुस्पर्शगात्रं विधुस्मेरवक्त्रं सुलीलाचरित्रम् ॥ अमर्यादकारुण्यपात्रं पवित्रं भजे देशिकानंदनाथं स्वनाथम् ॥ ५ ॥

शेषः । सर्वैः सहाऽत्ति भुंक्ते । ततः पुराणमुक्त्वेत्यनुवृत्तिः । प्रदोषकाले ईशसेवी शिवभजनकर्ता चाभवत् ॥ २ ॥ स कदाचिद्देशिकेंद्रस्य समाधिं सम भ्यर्च्य नमन् सव्यगत्या भ्रमन् प्रदक्षिणीकुर्वन् सन् कारुण्यमूर्तेरात्मवक्तुर्देशिकेंद्रस्याष्टकं सदर्थं उत्तमार्थयुक्तं वृत्तैः पद्यरचनाभिश्चकार ॥ ३ ॥ तदेवाष्टक माह प्रसन्नेत्यादिभिः । प्रसन्नं एकचित्तं एकाग्रचित्तं यस्य अंतः हृदि दयासांद्रं कृपापूर्णं प्रकाममत्यंतं हितकरं तत्त्वजिज्ञासूनां वित्तं आत्मधनं जगद्भ्रांतेर्द्वैत भ्रमस्य विश्रांतिर्विलयो यस्मात्तत् अज्ञाननिवर्तकं वृत्तं सदाचरणं यस्य तं देशिकानंदनाथमहं स्वनाथं स्वगुरुं भजे भजामि ॥ ४ ॥ तमेव गुरुं सगुणरूपं

स्तौति । दरांदोलिनेत्रमित्यादिभिः षड्भिः । दरांदोलिनी ईषच्चंचले नेत्रे यस्य मृदुः स्पर्शो यस्य तादृशं गात्रं शरीरं यस्य विधुरिव चंद्रवत् स्मेरं सुंदरं वक्त्रं यस्य सुंदरं लीलाचरित्रं यस्य अनौपम्यं उपमारहितं यत्कारुण्यं तस्य पात्रं स्थानं यतः पवित्रं तमहं भजे इति सर्वत्र । अत्र यद्यपि विष्णवादीनां देहस्य ज्ञानविग्रहत्वेन । "न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" इति ज्ञानस्य पवित्रत्वेन शुद्धत्वं तथापि । "निरपेक्षं मुनिं शांतं निर्वैरं समदर्शिनम् अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः" इति भगवदुक्तौ । पूयेय पवित्रो भवामीति । उक्तलक्षणस्य ज्ञानिनो भक्तस्य ऋणापाकरणेन स्वदेहशुद्ध्यर्थं भक्तानुगामिनो हरेर्न ज्ञानिवच्छुद्धदेहत्वम् । ज्ञानिनो गुरोस्तु ज्ञानैकविग्रहत्वेन पादरजस्पर्शिनो विष्णोः पवित्रताजनकत्वेन चातिशुद्धत्वमिति भावः ॥ ५ ॥ एतदेवानुपमकरुणाकरत्वमाह । सदेति । सदा स्वात्मनि स्थितं स्वनिष्ठापराणां आत्मानुकूलानां गुरुभक्तानां यत् अनेकार्तिकष्टं बहुपीडाजन्यदुःखमपहंति

सदा स्वात्मनिष्ठं स्वनिष्ठापराणामनेकार्तिकष्टापहं दृष्टतत्त्वम् ॥ निजाभीष्टदानप्रवीणं धुरीणं भजे देशिकानंदनाथं स्वनाथम् ॥ ६ ॥ तमोग्राहभीतानहंव्यालगीर्णान्निरस्तोदयास्तान्समस्ताननीशान् ॥ जनानीदृशांस्त्रातुमाविर्भवंतं भजे देशिकानंदनाथं स्वनाथम् ॥ ७ ॥
दधानं मनोहारिसौंदर्यमूर्त्तिं प्रधानं महद्भाग्यवत्सान्निधानम् ॥ समाधानमंतःसुखालंबबुद्धे भजे देशिकानंदनाथं स्वनाथम् ॥ ८ ॥

नाशयति तं दृष्टमपरोक्षीकृतमात्मतत्त्वं येन तं निजेभ्यः स्वभक्तेभ्योऽभीष्टदाने इष्टार्थपूरणे प्रवीणम् अतिकुशलं धुरीणं ज्ञानोपदेशस्य धूर्वहमहं भजे । शोकनिवृत्तिपूर्वकपरमानंदप्रापकमित्यर्थः ॥ ६ ॥ किं च ज्ञानोपदेशार्थमेव गुरोरवतारो न तु विष्णवादिवद्भूभारहरणार्थं इत्याह । तम इति चतुर्भिः । तमोग्राहादज्ञानमकरात् भीतान् अहंकारसर्पेण ग्रस्तान् निरस्ताः अस्तहीनाः सदोदिताः उदयास्ताः जन्ममरणानि येषां तान् अनंतयोनिषु भ्राम्यमाणान् यतोऽनीशानसमर्थानेतादृशान्समस्तान् जनांस्त्रातुं ज्ञानोपदेशेन रक्षितुं आविर्भवंतं प्रादुर्भवंतं तमहं भजे ॥ ७ ॥ किं च । मनोहारि सौंदर्यं यस्यां तां मूर्तिमाकृतिं दधानं प्रधानं श्रेष्ठं महतां भाग्यवतां च निष्कामसकामभक्तानां सम्यक् निधानं इष्टधनस्वरूपं अंतःसुखमात्मसुखम् आलंबते आश्रयं करोति

या तस्याः बुद्धेः समाधानं स्थिरतासंपादकं तमहं भजे ॥ ८ ॥ पुराणशास्त्रश्रुतिसिद्धांतेषु यत्तत्त्वं तत् सारभूतम् अमृतरूपं ब्रह्मतत्त्वं सुनिष्कृष्य युक्त्या निश्चित्य कारुण्यतः करुणया जनेभ्यः संप्रदायिजनेभ्यः स्वतः प्रेष्ठं निर्निमित्तप्रियं यत् नैजमात्मतत्त्वं तत् प्रददाति तं ब्रह्मोपदेशिनमहं भजे ॥ ९ ॥ यदीयप्रबोधावस्कृतज्ञानेन भूताधिवासं सर्वभूताश्रयमाद्यं परं ज्योतिर्ब्रह्मतत्त्वं स्वयमन्यनैरपेक्ष्येण नित्यं सदाऽऽभाति भक्तहृदये परिस्फुरति । पदद्वंद्वनत्या यदीयचरणद्वंद्वनमस्कारमात्रेण विनिर्धूताः दूरीकृताः भेदा यैस्ते गलितद्वैतदृष्टयो भवंति तमहं भजे । तस्मादनुपमकरुणाकरो गुरुरेवेत्यर्थः ॥ १० ॥ एवं सगुणरूपेण गुरुं स्तुत्वा निर्गुणरूपेण वर्णयति । यदालोकनादिति । यस्य ब्रह्मरूपस्य गुरोरवलोकनादवलोकनमात्रेण लोकबाह्यः प्रत्यक्प्रवणत्वेन लोका

पुराणागमश्रौतसिद्धांततत्त्वं सुनिष्कृष्य कारुण्यतः सारभूतम् ॥ जनेभ्यः स्वतः प्रेष्ठनैजप्रदानं भजे देशिकानंदनाथं स्वनाथम् ॥ ९ ॥ यदीयप्रबोधात्परं ज्योतिराद्यं स्वयं नित्यमाभाति भूताधिवासम् ॥ विनिर्धूतभेदाः पदद्वंद्वनत्या भजे देशिकानंदनाथं स्वनाथम् ॥ १० ॥ यदालोकनान्नान्यदालोकनीयं समालोक्यते लोकबाह्यावलोकैः ॥ अलोकं हि लोकस्वभावानुकूलं भजे देशिकानंदनाथं स्वनाथम् ॥ ११ ॥ पठेदष्टकं देशिकेंद्रस्य भक्त्या तथा यः पुमान् श्रद्धया संशृणोति ॥ तदीयानुकंपावशाच्छीघ्रमेवमजस्रं स्वसाम्राज्यतामाप्नुयात्सः ॥ १२ ॥

तीत आलोकोऽवलोकोऽवलोकनं येषां तैरंतर्दृष्टिभिर्ज्ञानिभिरवलोकनीयं वस्तुजातमन्यत् भिन्नं नावलोक्यते । गुरुरूपमेव सर्वमवलोक्यते । "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतेः सर्वं ब्रह्मरूपं भवतीत्यर्थः । तथा अलोकं लोकातीतम् अलौकिकमिति यावत् । लोकस्वभावं प्रत्यनुकूलं तत्तत्स्वभावजनकं सर्वसंतोषकरं वा तमहं भजे । एवं सगुणनिर्गुणरूपो गुरुरेवेत्यर्थः ॥ ११ ॥ एतदष्टकस्य श्रवणादेः फलमाह । पठेदिति । देशिकेंद्रस्याष्टकं यः पुमान् पठेत् तथा श्रद्धया सम्यक् शृणोति । सः तदीयानुकंपावशात् देशिकेंद्रगुरुकृपया तां प्रसिद्धां स्वसा

प्राज्यतामात्मसाम्राज्यमजस्रं सततं प्राप्नोति ॥ १२ ॥ कविवचनं सिद्धिमित्यादि । देशिकेंद्रगुरौ सिद्धिं गते सति गणराज एव प्रथमवर्षे व्रतानि सीमानुल्लंघनपरान्नवर्जनादीनि कृतवान् । मयूरेश्वरो मातृवचसा प्रवासगः प्रवासं गतोऽभवत् । तदा विश्वगुरुः शृंगगिरिपीठस्थो यतिर्नंदीतटं प्रत्यगात् ॥ १३ ॥ तमेव वर्णयति यस्येति द्वाभ्याम् । यस्य शिबिकाऽध्वनि वक्रा तिर्यग्गामिनी अभूत् । आतपत्रं छत्रं द्वे चामरे च यस्यां सा छत्रचामरयुक्तेत्यर्थः । यस्या अग्रभागे च दिवा उरुदीपौ मशालीति भाषाप्रसिद्धौ आस्ताम् । यस्याग्रे सुंदराः रौप्यदंडा येषां ते धृतं सत् सुंदरं मठांकं मठचिह्नं चपरास इति भाषाप्रसिद्धं यैस्ते प्रसिद्धाः पुरुषा इति शेषः । जयद्भिः जयनशीलैश्चंद्रसूर्यादिवाद्यैरंकैः भाषया अबदागिरि इत्यादिचिह्नैः सह प्रयांति ॥ १४ ॥ हैमः

कविरुवाच ॥ सिद्धिं गते देशिक आद्यवर्षे व्रतानि चक्रे गणराज एव ॥ प्रवासगो मातृगिरा मयूरेण्नंदीतटं विश्वगुरुस्तदागात् ॥१३॥
यस्याध्ववक्रा शिबिकाऽऽतपत्रद्विचामराऽग्रे च दिवोरुदीपौ ॥ सुरौप्यदंडा धृतसन्मठांकाः प्रयांति वाद्यैश्च जयद्भिरंकैः ॥ १४ ॥
रत्नांचितो यन्मुकुटो हि हैमः सरौक्ममुक्तास्रगुरःस्थलो यः ॥ विद्वान्स्वयं वित्प्रिय आत्मविच्चाऽनाचारिणो दंडयतीह सेतौ ॥ १५ ॥
नाम्ना नृसिंहादिमभारतियों नंदीतटे पजित आर्यविद्भिः ॥ तुष्टस्ततोऽगाद्वसुमत्पुरं च तत्रैव तस्थौ कतिचिद्दिनेषु ॥ १६ ॥
नासीत्तदा तत्र च विन्मयूरेट् तद्द्वेषिभिः शंकरवर्य उक्तः ॥ शूद्रोपदेष्टाऽस्ति च तैर्मयूरेड्ढं द्व्यः कुधर्मोऽधिकृतेन शास्त्री ॥ १७ ॥

सुवर्णमयो यस्य मुकुटो रत्नांचितः बहुरत्नशोभित आसीत् । सरौक्मी सुवर्णमयी मुक्तास्रक् मौक्तिकमाला उरःस्थले यस्य यश्च स्वयं विद्वान् सन् वित्प्रियः विदो विद्वांसः प्रिया यस्य स आत्मवित् ब्रह्मज्ञः स अनाचारिणः आचाररहितान् पुरुषान्प्रति इह पृथिव्यां सेतौ वर्णाश्रमादिमर्यादानिमित्तं दंडयति । सर्वेषां धर्मरक्षणार्थमेव पीठस्थितानां भ्रमणमित्यर्थः ॥ १५ ॥ स वसुमतीं प्रात इत्याह । नाम्नेति । यो नृसिंहभारतीति नाम्ना उपलक्षितः नंदीतटे आर्यविद्भिः श्रेष्ठपंडितैः पूजितः सः संतुष्टः सन् ततः स्थानात् वसुमतीनगरं चागात् । तत्र च कतिचिद्दिनेषु तस्थौ स्थितवान् ॥ १६ ॥ तदा तत्र वसुमत्यां विद्वान् मयूरेश्वरो नासीत् । ग्रामांतरं गत आसीदित्यर्थः । तदा तस्य मयूरेश्वरस्य द्वेषिभिर्ग्रामस्थैः शंकराचार्य उक्तः प्रार्थित

आसीत्। तत्कृतप्रार्थनामाह। मयूरेश्वरः शूद्राणामुपदेशकर्ता सन् तैः शूद्रैः सहात्ति भोजनं कुरुते। यत एवं कुत्सितधर्माऽतोऽधिकारिणा भवता शास्त्रज्ञेन इह वसुमत्यां स शास्त्री शास्त्रज्ञो दंड्यः दंडयितुं योग्योऽस्ति ॥ १७ ॥ ननु भवद्भिरेव शास्त्रज्ञैः स कुतो न दंड्यत इत्याशंक्याह। वयं तु तं मयूरेश्वरं प्रति ईषत् किंचिद्वक्तुमपि क्षमाः समर्थाः न स्मः। हि यतः समर्था अधिकारिणोऽस्य शिष्याः संति। अतो न वयं तस्य दंडे समर्था इत्यर्थः। यतो भवद्भिरेव दंड्यः अतो हेतोर्वयं सत्पदि श्रीचरणसमीपे वसु धनं दास्यामहे अर्पयामः। इति श्रुत्वाऽऽर्यः श्रेष्ठश्चासौ विज्ञो ज्ञानवांश्च गुरुः स नृसिंहभारती तूष्णीमास। मयूरेश्वरगुणाज्ञानात्तूष्णीं बभूवेत्यर्थः ॥ १८ ॥ अथ यतः शंकराचार्यस्य कार्यकर्ताऽधिकारी कश्चिच्छास्त्री आसीत्। स च तैर्मयूरे

वक्तुं तमीषन्न वयं क्षमाः स्मः शिष्याः समर्थास्त्वधिकारिणोऽस्य॥दास्यामहेऽतो वसु सत्पदीति श्रुत्वार्यविज्ञो गुरुरास तूष्णीम् ॥१८॥
शास्त्री यतः कार्यकृदास कश्चिन्नीतः स तैश्चोपवनं नृयानात् ॥ सर्वाधिकार्याद्यवनात्तथोक्तः कुर्वेऽवदच्चेति पुरस्थितान्सः ॥ १९ ॥
ज्ञात्वेति सर्वं कमलाकरेण मातोदिता सा त्वलिखज्जयंती ॥ शीघ्रं त्वमेहीति विदेऽथ पत्रं वीक्ष्यागमत्सोऽपि पुरं हि निर्भीः ॥ २० ॥
कृताह्निकोऽगाद्गुरुदर्शनार्थं मुद्राफलाढ्यद्विकरः स तिष्ठन् ॥ पद्यं पठन्व्यक्तगुरुस्तवाढ्यं सांगं ननामाखिलविद्वरिष्ठः ॥ २१ ॥

श्वरद्वेषिभिः कर्तृभिर्नृयानेनोपवनं प्रति नीतः सन् सर्वाधिकार्याद्यवनात् तथोक्तः। यथा शंकराचार्यः प्रार्थितस्तथायमपि प्रार्थित आसीत्। स च शास्त्री अहं कुर्वे युष्मदुक्तं करोमीति ग्रामस्थितान्प्रत्यवदत् ॥ १९ ॥ अथ कमलाकरेण इति सर्वं तेषामभिप्रायं ज्ञात्वा माता जयंत्यंबा उदिता उक्ता। जयंत्यै सर्वं कथितमित्यर्थः। सा तु जयंती त्वं शीघ्रमेहि वसुमतीमागच्छेति विदे मयूरेश्वराय पत्रमलिखत्। अथ सोऽपि मयूरेश्वरगुरुर्हि निश्चयेन निर्भयः सन् वसुमतीपुरमगमत् ॥ २० ॥ अथ कृताह्निकः स मयूरेश्वरो गुरुदर्शनार्थं शंकराचार्यदर्शनार्थमगात्। मुद्रा च फलं श्रीफलं च ताभ्यामाढ्यौ युक्तौ द्वौ करौ यस्य स कृतांजलिस्तिष्ठन् सर्वविद्वरिष्ठः सर्वविद्वन्मान्यः सः व्यक्तं यथा स्यात्तथा गुरोः स्तवयुक्तं

वक्ष्यमाणपद्यं पठन् सन् सांगं साष्टांगं ननाम नमस्कृतवान् ॥ २१ ॥ तदेव पद्यमाह श्रीमदिति । श्रीगुरूणां चरणाः अत्यादरार्थं बहुवचनम् । मम भूतयेऽणिमाद्यैश्वर्याय "विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा" इत्यमरः । औत्पत्तिकसिद्धये भवंतु । यद्वा "ऋचः सामानि यजूंषि स हि श्रीरमृता सताम्" इति श्रुतेः । ब्रह्मसंपत्तये, भवंतु । भोगमोक्षैकहेतवो भवंत्वित्यर्थः । किंभूताः श्रीगुरुचरणाः । श्रीमत् अनेकब्रह्मांडसंपत्तिमच्च तत् सच्चित्सुखं सच्चिदानंदं ब्रह्म सैवाकृतिराकारो यस्यां सा चासौ मतिश्च ब्रह्माकारवृत्तिमती बुद्धिः । "दृश्यते त्वग्र्यया बुद्ध्या" इति बुद्धिगोचरत्वं ब्रह्मणः श्रूयते । तस्यां बुद्धौ विलसंतोऽध्यस्तत्वेन प्रतीयमानाः ये पंचरूपाः पंचभूतमयाः प्रपंचाः अनेकजीवप्रपंचाः पंचविंशतितत्त्वानि वा त एव उत्तुंगा अत्युच्चा महांतस्त्वंगंतश्चलंतस्तरंगास्तेषु स्फुरन् अधिष्ठानत्वेन भासमानोऽमलोऽविद्यादिमलरहितो यः सदानंदः संश्चासावानंदश्च सद्रूप आनंदः । यद्वा सदा कालत्रयेऽव्यभिचारितया वर्तमान आनंदो ब्रह्मानंदस्तस्य सम्यक् स्फूर्तिं प्रकाशं भजंति ते संस्फूर्तिभाजः ब्रह्मानंदस्वरूपा इति यावत् । श्रीगुरुचरणोपास

श्रीमत्सच्चित्सुखैकाकृतिमतिविलसत्पंचरूपप्रपंचोत्तुंगत्वंगत्तरंगस्फुरदमलसदानंदसंस्फूर्तिभाजः ॥ प्रत्यग्रूपप्रतीतप्रियसकलपराग्रूप विद्याप्रदानप्रध्वस्तध्वांतदुःखा मम गुरुचरणा भूतये संभवंतु ॥ २२ ॥ ज्ञात्वोक्तपद्याद्वरमार्गमेनं स्थेयं समीपेऽवददित्थमार्यः ॥ तस्थौ मयूरेट् शुचिरार्यपार्श्वे वासिष्ठमूलार्थमिहाह कश्चित् ॥ २३ ॥

कानां हि ब्रह्माकारांतःकरणवृत्तौ सत्यां स्वात्मानंदसमुद्रे पंचभूतात्मकः प्रपंचस्तरंग इव भासते । तस्य तरंगस्यादावंते मध्ये च जलमिव ब्रह्मानंद एव भासते । एतादृशसामर्थ्यवंतः श्रीगुरुचरणा इति भावः । एतेन परमानंदप्रदत्वं श्रीगुरुचरणानां दर्शितम् । इदानीं विशेषणांतरेण शोकाद्यनर्थनिवर्तकत्वं सूचयन्नाह प्रत्यग्रूपेति । प्रत्यग्रूपे प्रत्यगात्मस्वरूपे साक्षिण्यधिष्ठाने प्रतीतं अभेदेन प्रतीयमानं प्रियं यत्प्रियतया प्रियमिव भासमानं सकलं पराग्रूपं दृश्यप्रपंचस्वरूपं यया विद्यया तस्याः सम्यग्ज्ञानस्वरूपायाः प्रदानेन समर्पणेन प्रध्वस्तं अत्यंतं विनाशितं ध्वांतं तमः अज्ञानं तज्जन्यं दुःखं च यैस्तादृशाः श्रीगुरुचरणाः । श्रीगुरुचरणाश्रितानां हि शोकाद्यनर्थमूलभूताज्ञाननिवृत्तौ सत्यां निष्प्रत्यूहं परमानंदप्राप्तिः फलं भवति । तस्मात् गुरुचरणा एव भोगमोक्षप्राप्त्यर्थं शरणीकरणीया इत्यभिप्रायेण साष्टांगं प्रणनामेति भावः ॥ २२ ॥ आर्यः शंकराचार्यः उक्तेन पद्येन हेतुना एवं वरमार्गं श्रेष्ठसंप्रदायिनं ज्ञात्वा त्वया मत्समीपे

स्थेयं स्थातव्यं इत्थमवदत् । ततः शुचिभूतो मयूरेश्वरः आर्यस्य पार्श्वे तस्थौ । तदा इह सदसि कश्चित्पुरुषो योगवासिष्ठस्य मूलार्थमाह ॥ २३ ॥ मयूरेश्वरः टीकोक्तपंक्त्याः परमर्थं मुखेनोक्तवान् । तदुक्तं शृण्वन् सन् त्वत्समीपे टीकाऽस्ति किं इति गुरुः शंकराचार्य आह । अथ विदा मयूरेश्वरगुरुणा सा टीका शिष्यादानीय वक्के वाचकाय च दत्ता ॥ २४ ॥ ततः स च वाचकस्तां वासिष्ठटीकागतां पंक्तिं किंचिदपि वक्तुं समर्थो नाभवत् । कुतस्तदर्थं वक्तुं समर्थं इति न कुतोऽपि समर्थः । हि यतस्तस्थामेकपुरि एकनगरे वित् पंडितः नतु सर्वनगरगतबुधमान्यः । अल्पज्ञ इत्यर्थः । अथ त्वयैवोक्तपद्यस्य वासिष्ठगतस्य टीका वाच्या वक्तव्येति यतींद्रो मयूरेश्वरं प्रत्युक्तवान् ॥ २५ ॥ एषोऽपि मयूरेश्वरस्तथेत्यंगीकृत्य गुरुं यतींद्रं नत्वा परिष्कृतां वर्णतः शुद्धां

टीकोक्तपंक्त्याः परमर्थमूचे मुखान्मयूरेड् गुरुराह शृण्वन् ॥टीकास्ति किं साथ विदा स्वशिष्यादानीय वक्के गुरुणापि दत्ता॥२४॥ तां पंक्तिमीषन्न च वक्तुमीशोऽभवत्कुतोर्थं हि तदेकपूर्वित् ॥ ऊचे मयूरेशमथो यतींद्रस्त्वयैव वाच्योदितपद्यटीका ॥ २५ ॥ तथेति नत्वा गुरुमात्तटीकः परिष्कृतां पंक्तिमवोचदेषः ॥ अर्थं निजोक्तं प्रतिपादयंश्च श्रुत्वार्य ऊच्येकबुधं तमाह ॥ २६ ॥ ज्ञात्वा मयूरेशि गुरोः सुतुष्टिं तन्निंदकाः स्युर्मनसातिखिन्नाः ॥ गुरुः किमस्मान्नतु दंडकर्तेत्यार्ये हि निंदाऽऽप्तसुखान्यदंडा ॥ २७ ॥ विना मयूरेश मथो गुरूनों तिष्ठत्यतंद्रो मुहुराह्वयन्स्वैः॥कृत्वाऽऽह्निकं सोपि समेत्य वर्यं वासिष्ठमूचेऽपि परं सदर्थम्॥ २८ ॥

पंक्तिमवोचत् । उक्तवान् । किं कुर्वन् । निजोक्तं आत्मोक्तमर्थं प्रतिपादयन् । यतींद्रस्तच्छ्रुत्वा तं मयूरेश्वरं प्रति पृथिव्यामेकं पंडितमाह । असाधारणोयं मयूरेश्वरो महापंडित इति संतुष्टोऽभवदित्यर्थः ॥ २६ ॥ मयूरेश्वरे यतींद्रस्यातिसंतोषं ज्ञात्वा मयूरेश्वरद्वेषिणो विप्राः मनसाऽतिदुःखिता बभूवुः । स्वमनोरथभंगादिति भावः । पुनश्च तेषां भयं जातमित्याह । गुरुर्यतींद्रोऽस्मान्प्रति दंडकर्ता भवति किम् । यद्वाऽस्मात् मयूरेश्वरनिमित्तेन दंडकर्ता भवति किम् । हि यस्मात् आर्ये श्रेष्ठपुरुषे निंदाऽऽप्तसुखा आर्याय प्राप्तसुखा भवति । अन्यदंडा च भवति । अन्येभ्यः आर्यभिन्नेभ्यो दंडो यस्याः सकाशात्तान्यदंडा च भवति । महतां निंदा च महत्सुखकरी निंदाकर्तुर्दुःखकरी च भवतीत्यर्थः॥ २७॥ एवं प्रथमदर्शनेनाचार्यकृपा जातेत्याह विनेति । अथातंद्रोऽनलसः

गुरुः पीठस्थः स्वसेवकैर्मयूरेश्वरमाह्वयन् सन् तं विना न तिष्ठति । स च मयूरेश्वरोऽह्निकमाशु कृत्वा वर्यं श्रेष्ठमाचार्यं समेत्य सदर्थयुक्तं वासिष्ठं पद्य जातं परमुत्कृष्टं यथास्यात्तथोक्तवान् ॥२८॥ कदाचिदेकांतस्थले श्रीगुरुणा मयूरेश्वर उक्तः । अत्र वसुमत्यां कैश्चिद्भवान्दंड्य इत्थं तवाघं दोषः उक्तः अथ शास्त्रज्ञो मयूरेश्वरः यतोऽहं श्रीपादशिष्योऽस्मि । अतः सुतरां दंड्योऽस्मि । मां प्रति दंडं कर्तुं गुरुः समर्थ इत्यर्थः ॥ २९ ॥ पुनश्च गुरुराचार्य आह।मयाऽस्मिन्सर्वदेशे भवानेव विद्वानस्तीति ईक्षया सकृद्दर्शनमात्रेणाच ज्ञातोसि । परे तु त्वां प्रति द्विषंति।यथा कर्कशपक्षिणो ये काकादयः पिकपक्षिणं द्विषंति तद्वद्वृथा द्विषंतीत्यर्थः॥३०॥कविवाक्यं मात्रेत्यादि । मात्रा जयंत्यंबया तदानीमभार्यस्य मृतभार्यस्य मयूरेश्वरशास्त्रिणः पुनरुपयमो द्वितीयविवाहश्च

रहः कचिच्छ्रीगुरुणा मयूरेडुक्तोऽत्र कैश्चिद्भवतोऽघमुक्तम् ॥ दंड्यो भवानित्थमथाह शास्त्री श्रीपादशिष्योऽस्मि यतः सुदंड्यः ॥२९॥
हसन्पुनश्चाह गुरुर्मयाद्येक्षयैव विद्वानखिलेऽत्र देशे ॥ ज्ञातो भवांस्त्वां तु परे द्विषंति पिकं यथा कर्कशपक्षिणो वै ॥ ३० ॥ कवि
रुवाच॥मात्रा कृतश्चोपयमो मयूरेड्विदुस्त्वभार्यस्य पुनस्तदानीम् ॥ ततो जयंती गुरुणोदितेत्थं नः संगतस्तेऽस्तु हि वित्सुतोंब ॥३१॥
जयंत्यवोचद्गुरुमत्र नान्यः संस्थानसद्वृत्तिकरो विनास्मात् ॥ आर्योऽब्रवीन्नागपुरः प्रयोजये त्वमुं यतः स्थानमपि स्वकीयम् ॥ ३२ ॥
माताऽऽग्रहं चेति गुरोर्विदित्वाऽऽर्याऽऽज्ञा न भंग्येत्यवदत्तथेति ॥ गुरुश्च तत्र स्वमठार्थमुर्वीं लब्ध्वा मयूरेशपरां चकार ॥ ३३ ॥

कृतः । ततो गुरुणाचार्येण जयंतीत्थमुक्ता प्रार्थिता । इत्थं किं हेंऽब मातस्तवायं वित् पुत्रो नोऽस्माकं संगतः संगेनास्तु । कतिचिद्दिनपर्यंतं मयूरेश्वरो मया सहागच्छत्वित्यर्थः ॥ ३१ ॥ जयंती गुरुमाचार्यं प्रत्यवदत् । अत्र नगर्यां संस्थानस्य सद्वृत्तिकर उत्तमनिर्वाहकर्ताऽस्मान्मयूरेश्वराद्भिनान्यो नास्ति । तत आर्यः शंकराचार्यो नागपुरात्सकाशादमुं मयूरेश्वरं प्रयोजये प्रेषयिष्यामि । यतः अदः इदं संस्थानमपि स्वकीयमस्माकमेवास्तीत्यर्थः ॥ ३२ ॥ अथ माता जयंतीति गुरोराग्रहं विदित्वा आर्याज्ञा महदाज्ञा न भंग्या । महतामाज्ञाभंगो न कर्तव्य इति हेतोस्तथेत्यवदत् । अंगीकृतवतीत्यर्थः । गुरुश्च तत्र

स्वमठार्थं भूमिं लब्ध्वा मयूरेशपरा तदधीनां चकार ॥ ३३ ॥ पौरैः कर्तृभिः स्वशक्त्या इज्यपादः पूज्यपादो गुरुरर्चितः सन् अखिलाढ्यः सर्वैर्युक्तस्ततो नगरादुदक्कः उत्तरदिशि निरगात् । मयूरेश्वरविदं च स्वशिष्यैः पूःपथतः नगरे मार्गे चांकगं समीपगतं कुर्वन् सन् निन्ये निनायेत्यर्थः ॥ ३४ ॥ प्राक् संगृहीताः ये सर्वपंडितास्तेभ्योऽधिकं मयूरेश्वरं कुर्वन् प्रतिनगरेऽधर्मकर्तॄन् विशेषेण दंडयित्वाऽऽर्यैः श्रेष्ठैः पूजितोऽहिपत्तनांकं नागपुरसमीपमगात् ॥ ३५ ॥ तत्रत्यविप्रैर्नागपुरस्थपंडितैः समुपेत्य नत्वा गुरुमितिशेषः । तत्संतोषाय मिथः शास्त्रवाद उक्तः । तदार्यांकगतः आचार्यसमीपस्थो मयूरेश्वरो वित्सु सर्वपंडितेषु इज्यः पूज्यो मान्यश्चास्तीति विदाऽऽचार्येण गुणैर्लक्षितः । सर्वोत्कृष्टत्वेन ज्ञात इत्यर्थः ॥ ३६ ॥ तत्र म्लेच्छप्रायाणां कलंकिब्राह्मणानामस्वीकृतितोऽनंगी

पौरैः स्वशक्त्यार्चित इज्यपादस्ततोऽखिलाढ्यो निरगादुदक्कः ॥ विदं मयरेशमपि स्वशिष्यैर्निन्येंऽकगं पूःपथतश्च कुर्वन् ॥ ३४ ॥
प्राक्संगृहीताखिलपंडितेभ्योऽधिकं मयूरेशविदं सुकुर्वन् ॥ पुरेपुरेऽधर्मकृतो विदंड्यार्यैः पूजितोगादहिपत्तनांकम् ॥३५॥ तत्रत्यविद्भिः
समुपेत्य नत्वोक्तः शास्त्रवादो मिथ आर्यतुष्ट्यै ॥ वित्स्वेक आर्यांकगतो मयरेड् गुणैर्विदापीक्षित इज्यमान्यः ॥ ३६ ॥ म्लेच्छद्विजाऽ
स्वीकृतितो न राज्ञाऽऽर्यः सत्कृतस्तन्मतिना हि साधोः ॥ नानादराद्भावि सुखं प्रपंचेऽगात्कामठीं श्रीगुरुरुत्तरेऽस्मात् ॥ ३७ ॥ चातु
र्मास्यारंभ आसीत्तदानीं नोक्तस्तत्राऽऽर्यैर्यतीनां प्रवासः ॥ तस्मात्तत्रैवावसत्स्वैर्यतींद्रः स्वानां वृत्त्यै न्यस्य भूषाः कृतर्णः ॥ ३८ ॥

करिणार्यः शंकराचार्यो नागपुरस्थेन राज्ञा न सत्कृतः । किंभूतेन तन्मतिना तत् कलंकिद्विजशुद्धीकरणं मतौ बुद्धौ यस्य तेन । साधोरनादरात् भावि सुखं प्रपंचे न स्यात् । महत्कृपैव प्रपंचे सुखकरी भवतीत्यर्थः । श्रीगुरुरस्मान्नागपुरादुत्तरे कामठीं प्रत्यगात् ॥ ३७ ॥ कामठीग्रामगतं वृत्तमाह । तदानीं कामठीगमनसमये चातुर्मास्यारंभ आसीत् । तत्र काले यतीनां प्रवास आर्यैः श्रेष्ठैर्नोक्तस्तस्माद्धेतोः स्वकीयैः सह यतींद्रस्तत्रैवावसत् । स्वकीयानां वृत्त्यै निर्वाहार्थं भूषाः अमौल्यपदार्थान्संस्थाप्य कृतम् ऋणं येन सः ॥ ३८ ॥

स्वगृहं प्रति गंतुं तमाचार्यं प्रार्थयन् मयूरेश्वरस्तेन यतिना चात्र कामठीग्रामे स्थातुं प्रोक्तः । अद्य चातुर्मास्यविधौ गृहस्थेन केनचित्प्रार्थनीयः प्रार्थना कर्तव्येति शास्त्रमस्तीत्यर्थः । ततः कारणात्संस्थितेनात्र स्थितेन त्वयाहं प्रार्थनीयः संस्थापनीयश्चास्मि । मासद्वयपर्यंतं त्वयात्र स्थातव्यमित्यर्थः ॥ ३९॥ आषाढपौर्णमास्यां वित् मयूरेश्वरस्त्वया स्थेयं इत्थं विश्वपूज्यं प्रार्थयन्सन् व्यासादीनां स्थित्या स्थापनेन तत्पूर्वकमिति यावत् । संस्थानस्थैर्मुक्तादिभिः पूजितवान् ॥ ४० ॥ अथो विद्वान् मयूरेश्वरः सर्वज्ञायतींद्रात् शारीराख्यं शांतिपाठादिभाष्यं जग्राह । च पुनः संप्रदायं पश्यन् अस्माद्यतींद्रसकाशात् पृथिव्यां धर्मं शासितुं चिह्नानि यष्टिचामरादीनि लेखनं मुद्रांकितपत्रं च जग्राह । एवं प्रीतिपात्रमभवदित्यर्थः ॥ ४१ ॥ पूर्वं ज्ञाः पंडिताः ये आचार्य

गंतुं गेहं प्रार्थयंस्तं मयूरेट् प्रोक्तस्तेन स्थातुमत्राद्य मह्यम् ॥ गेहस्थेन प्रार्थनीयं ततोऽहं प्रार्थ्यः स्थाप्यः संस्थितेन त्वयेति ॥ ३९॥ मुक्तारत्नस्वर्णभूषार्यवस्त्रैः संस्थानस्थैर्विच्छुचेः पौर्णमास्याम् ॥ व्यासस्थित्याऽपूजयद्विश्वपूज्यं स्थेयं चेत्थं प्रार्थयन् श्रीमयूरेट् ॥ ॥ ४० ॥ जग्राहाथो शांतिपाठादिभाष्यं शारीराख्यं सर्ववेत्तुर्यतींद्रात् ॥ विद्वान्पश्यन्संप्रदायं मुदास्माच्चोर्व्यां धर्मं शासितुं चिह्न लेखम् ॥ ४१ ॥ दृष्ट्वा प्रीत्याऽऽर्यस्य सर्वत्र मानं द्वेषं प्राग्ज्ञा विन्मयेऽशि चक्रुः ॥ तस्मादन्यत्रावसत्सोथ बुद्ध्वाऽऽर्यस्तत्सर्वान् क्रोधवद्वाग्भिरूचे ॥४२॥ तत्राप्यार्यो दत्तवांस्तंडुलाद्यं विच्छिष्याश्चैरत्तुमह्न्यह्नि नूतनम् ॥ प्रत्यब्दार्चा याऽऽश्विने तत्र तद्वत्पुण्याह्नि श्रीदेशिकस्योत्सवार्हम् ॥ ४३ ॥

समीपे स्थितास्ते आर्यस्य यतींद्रस्य प्रीत्या निमित्तभूतया मयूरेश्वरे सर्वत्र मानं सत्कारं दृष्ट्वा मयूरेश्वरे द्वेषं चक्रुः । कुटिलास्त्वन्यस्य सत्कारं दृष्ट्वा केवलं द्विषंत्येवेति भावः । स च मयूरेश्वरस्तस्मात्स्थानादन्यत्रावसत् । अथार्यो यतींद्रस्तन्मयूरेश्वरद्वेषादि बुद्ध्वा ज्ञात्वा सर्वान्प्रति क्रोधवाग्भिरुवाच । रुष्टोभव दित्यर्थः ॥ ४२ ॥ यत्र मयूरेश्वरोऽवसत् । तत्रार्योऽपि यतींद्रो विदा मयूरेश्वरेण तच्छिष्यैरश्वैश्च प्रतिदिनमत्तुं भोक्तुं नवीनं तंडुलाद्यं दत्तवान् ददौ । आश्विनमासे या प्रत्यब्दार्चा प्रतिवर्षपूजा आसीत् । तत्र पूजाविषये तद्वत् तत्सदृशं तंडुलाद्यं दत्तवान् । देशिकस्य गुरोः पुण्याह्नि पुण्यतिथिनिमित्तं उत्स

वार्हमुत्सवयोग्यं च तंदुलादि दत्तवान् । मयूरेश्वरस्य बहुमानं कृतवानित्यर्थः ॥ ४३ ॥ एवं चातुर्मास्यारंभं समाप्तिं चोक्त्वा देशस्थैः कृतं यतींद्रसत्कार माह । वस्तूनीति । अन्योऽन्यजातीयः सद्बुद्धिः कलाल इति प्रसिद्धः त्रिलक्षमितं अन्यात्रत्यगं अन्यत्रगतम् अत्रगतं च ऋणं यतींद्रकृतं दत्त्वा पत्तनस्वामिने समर्प्य तेभ्योऽमुष्य यतेः वस्तूनि यतींद्रस्थापितानि आनीय आर्ये गुरौ तत्समीपे ददौ । ततो ज्ञाः नागपुरस्थपंडितास्तु पत्तनादेयत्यागत्या र्यं समीजुरनर्चुः । अन्येऽपि द्विजाः स्वस्वशक्त्या दूतैः दूतद्वारा पूजितवंतः । राज्ञो भयादिति भावः ॥ ४४ ॥ केचिन्नागपुरस्थाः श्रीगुरुं स्वगेहं नेतुकामाः बभूवुस्तान् प्रति यतींद्रः प्राह । भवद्भिर्मयूरेश्वरो नेयः स्वस्वगृहं प्रति नेतव्यः इज्यः पूजनीयश्च । तस्मिन्मयूरेश्वरे पूजिते सति मत्पूजा भवेत्

वस्तून्यन्यात्रत्यगर्णं त्रिलक्षं दत्त्वानीयार्ये ददावन्यसद्धीः ॥ एत्याचार्यं पत्तनाज्ज्ञाः समीजुर्दूतैरन्येऽपि द्विजाः स्वस्वशक्त्या॥४४॥
केचिद्गेहं श्रीगुरुं नेतुकामास्तान् प्राहार्यो नेय इज्यो मयूरेट्॥मत्पूजा स्यात्पूजितेऽस्मिन्नशंकाऽऽज्ञप्ताश्चेत्थं तं हि नीत्वा समीजुः॥४५॥
कृच्छ्रात्प्रापाऽऽज्ञां गुरोर्विन्मयूरेण्मातुः पत्रैः शीघ्रमेहीतिलेखैः ॥ चिह्नैः शास्तुर्युक् पथाऽर्चां सुगृह्णन् स्थानं चागान्मातृतोषः सुकी र्तिः ॥ ४६ ॥ लब्ध्वा चाधिकृतिं क्षितौ द्विजमुखादंडां तदंकान्यपीश्नो क्वाप्यवदभ्रमंश्चविषयान्विद्वान्मयूरेश्वरः ॥ दृष्ट्वांकानि तपःसुकीर्तिमखिलाश्चाचार्यवत्तस्य वै पूजामिष्टसुरस्य चक्रुरिव चाभीत्येष्टलाभार्थिनः ॥ ४७ ॥

अत्र शंका नास्ति । इत्थमाज्ञप्तास्ते तं मयूरेश्वरं नीत्वा स्वस्वगृहमानीय समीजुः आनर्चुः । आचार्याज्ञया मयूरेश्वरमाचार्यवत् पूजितवंत इत्यर्थः ॥४५॥ अथ विद्वान्मयूरेश्वरः त्वं शीघ्रमेहीति लेखः वर्णन्यासो येषु तैः पत्रैर्निमित्तभूतैर्गुरोराज्ञां कष्टेन प्राप्य स्वस्थानमगात् । किंभूतः शास्तुः सर्वशिक्षकस्याचा र्यस्य चिह्नैर्युक् युक्तः पथा मार्गेणार्चां तत्रतत्रत्यैः कृतां पूजां सुतरां गृह्णन् स्वस्थानं चागात् । मातुर्जयंत्यास्तोषः संतोषो यस्मात्सः सुकीर्तिः उत्तम कीर्तिमांश्चासीत् ॥ ४६ ॥ एवं मयूरेश्वरस्य यतींद्रकृतं सत्कारमुपवर्ण्याथ तस्य देशाटनमाह । लब्ध्वेत्यादिभिस्त्रिभिः । अथ विद्वान् मयूरेश्वरः पृथिव्यां द्विजमुखानां ब्राह्मणादीनामासमंताद्दंडो यस्याः तामधिकृतिमधिकारं लब्ध्वापि तस्माद्यतींद्रात् अंकानि रौप्ययष्ट्यादिचिह्नानि च लब्ध्वापि देशान् भ्रमन्

तत्र कापि कुत्रापि नोऽवदत् अहमाचार्यात्मनाधिकारोंऽस्मीति नोक्तवान् । अखिलाः सर्वे च ते ब्राह्मणादयोंकानि पीठस्थचिह्नानि दृष्ट्वा तपसा सुकांतिं मयूरेश्वरं च दृष्ट्वाऽऽचार्यवत्तस्य मयूरेश्वरस्य पूजामभीत्या भयराहित्येन चक्रुः । दंडं करिष्यतीति भयेनाचार्यस्य पूजा क्रियते । मयूरेश्वरस्य तु निर्भयत्वेन पूजां चक्रुरित्यर्थः।क इव इष्टसुरस्येष्टदेवतायाः पूजामिष्टलाभार्थिनः कामुकजना इव॥४७॥कदाचिद्गुरुवरो मयूरेश्वरो देशं पश्यन्सन् समुद्रमध्यगतां मुंबई नगरीमगात् । किंभूतां रौप्यादियुक्तां मौक्तिकादीनां विक्रेतृभिर्युक्ताम् आढ्याः युक्ताः धनैस्ते आढ्यधना धनाढ्यास्तैर्युक्तां परस्वे परधने मतिः ग्रहणनिश्चयो येषां तैश्च युक्तां तत्र मुंबय्यां सुज्ञैरेव श्रीगुरुरर्चितः परैरसुज्ञैश्चार्चितो नाभवत् । अथ विदा मयूरेश्वरेणैकाऽऽर्या तथावत् तद्वत् मुंबयीसदृशी कृता ॥४८॥

पश्यन्देशमगात्कचिद्गुरुवरः सिंधुस्थितां मुंबयीं रौप्यस्वर्णसुवस्त्रधातुमणियुङ्मुक्तादिविक्रेतृभिः ॥ युक्तामाढ्यधनैः परस्वमतिभिस्तत्रा चिंतः श्रीगुरुः सुज्ञैरेव न चापरैरथ कृताऽऽर्यैका तथावद्विदा ॥ ४८ ॥ नटविटगणिकादांभिकसंग्रहिणो ये तु मुंबयीनिलयाः ॥ वैदि कतात्त्विकसात्त्विकरहस्तपःस्थाः समीपवर्तिलयाः ॥ ४९ ॥ तस्मात्र्यंबककं समर्च्य वरधीर्देवं निवृत्तिं जनस्थानात्सप्तविषाणगां प्रतिपदं तस्मान्मयूरेश्वरम् ॥ ज्ञानेशं तुकयं च सासवटगं श्रीविठ्ठलं योगिनीं वैद्येशं शिवनिश्यमर्दमभजत्प्रत्येकपद्यैः सुरान् ॥ ५० ॥

तामेवार्यामाह । नटेति । ये मुंबयीनिलयाः मुंबयीवासिनो जनास्ते नटानां विटानां जारपुरुषाणां गणिकानां वेश्यानां दांभिकानां च संग्रहिणः संग्रहकर्तारो भवंति । ये तु वैदिकास्तत्त्वज्ञाः सात्त्विका रहसि तपः स्थास्तपःकर्तारस्ते समीपवर्ती लयो नाशो येषां ते । एतादृशास्तत्र न जीवंतीत्यर्थः ॥ ४९ ॥ वरधीरुत्तमबुद्धिर्मयूरेश्वरस्तस्मान्मुंबयीस्थानात् त्र्यंबकेश्वरं देवं समर्च्य संपूज्य च निवृत्तिदेवमेत्यार्च्येति सर्वत्र योज्यम् । जनस्थानात् तत्सकाशात्सप्तशृंग निवासिनीं प्रतिपदं प्रतिष्ठानं तस्मान्मयूरेश्वरं मयूरपुरवासिनं गणपतिं ज्ञानेशं ज्ञानेश्वरं तुकयं तुकारामं सासवटगं सोपानदेवं श्रीविठ्ठलं योगिनीं च देवीं वैद्यनाथं शिवनिशि शिवरात्र्याममर्दकं चैव सुरान् तत्तत्क्षेत्रगतान् देवान् अर्चयित्वा संपूज्य प्रत्येकं पद्यैरभजत् स्तुतवान् । तानि च पद्यानि संस्थाने

प्रसिद्धानि विस्तरभयादिह नोक्तानीत्यर्थः ॥ ५० ॥ किं च सद्विद्वान् मयूरेश्वरोऽपरिचितेपि देशेकैराचार्यदत्तचिह्नैर्निमित्तभूतैरखिलजनैर्विद्वद्भिश्च कर्तृभिरत्यादरात्पूजितः सन् निजं स्थानं प्राप । अथास्य बंधुर्गणराजाख्यो महान्समर्थ आसीत् । यः दीर्घेण कालेनेतिशेषः । सुविधिना शिवपूजकः सोन्वहं रात्रावेव भुंक्ते । सदानुष्ठानपरोऽभवदित्यर्थः ॥ ५१ ॥ एवं गणराजमुद्दिश्य तस्यावशिष्टं चरित्रमाह । प्राक् प्रोक्तमित्यादिषड्भिः । कलियुगेहि अनर्थं मनसा निर्विषयमनसा सिद्धिः स्यात्किलेति त्याशयात् एवमभिप्रायेण तपःपूर्णतां शीघ्रं प्राप्तुं महर्षिरेव जनिमान् गृहीतजन्मा गणराजोस्तीति प्राक्प्रोक्तं मयेति शेषः । इत्थं महर्षिरयमिति प्रकारेण तं गणराजं गुरुर्हितोपदेष्टा चासौ विधतिः विद्वान्संन्यासी कश्चित्तस्मात्सकाशात् ज्ञात्वा सोमेश्वराख्योऽधिपो

देशे शिष्यविवर्जितेऽपरिचितेऽप्यंकैर्मयूरेश्वरः सद्विद्वांश्च सुपूजितोऽखिलजनैर्विद्वद्भिरत्यादरात् ॥ स्थानं प्राप निजं त्वथास्य गणराडासीच्च बंधुर्महान्यो दीर्घेण शिवार्चकः सुविधिना निश्येव भुंक्तेऽन्वहम् ॥५१॥ प्राक् प्रोक्तं तु महर्षिरेष जनिमान्प्राप्तुं तपःपूर्णतां शीघ्रं स्याद्धि कलावनर्थमनसा सिद्धिः किलेत्याशयात् ॥ ज्ञात्वेत्थं गुरुविद्यतेस्तमधिपः सोमेश्वरः स्वस्त्रियं चापुत्रामुपदेष्टुमाह्वयद् थाभूत्स प्रवासोद्यमः ॥५२॥स्नात्वोषः श्रुतितंत्रकर्म सकलं कृत्वा निशः प्राग्दलेर्भुक्त्वाऽश्वस्थनिजैः स्वयं नृगतिगोऽभूदग्रदीपद्वयः ॥ यामेऽन्त्ये निशि शिष्यदेवसदने स्थित्वा चरन्नुक्तवद्भुंक्ते निश्यखिलैश्च शिष्यसदने तैर्वस्त्रमुख्यार्चितः ॥ ५३ ॥

राजा अपुत्रां स्वस्त्रियमुपदेष्टुं तं गणराजमाह्वयत् । अथ स गणराजः प्रवासोद्यमोऽभवत् ॥ ५२ ॥ स गणराजः उषःकाले स्नात्वा श्रुतितंत्रकर्म वैदिकं तांत्रिकं कर्म झटिति अस्तमानपर्यंतं कृत्वा रात्रेः पूर्वदले भुक्त्वाऽश्वस्थनिजैरश्वारूढैः शिष्यादिभिः सह नृगतिगः नृपानगामी अभवत् । किंभूतः अग्रे दीपद्वयं यस्य सः निशि रात्रौ अंत्ये यामे शिष्यस्य देवस्य वा सदने या स्थितिर्निवासस्तया उक्तवत् स्नानादिकमाचरन् गणराजस्तैः शिष्यैर्वस्त्रादिभिरर्चितो रात्रौ सर्वैः सह शिष्यगृहे भुङ्क्ते भोजनं करोति । रात्रावेव स्थितिभोजनयोर्विधानान्निशिपदस्य पुनरावृत्तिः ॥ ५३ ॥

तस्य सिद्धिसामर्थ्यमाह । निङ्गत्येति । निङ्गत्यां रात्रिगमनविषये तस्य गणराजस्य भयं नासीत् । हि यतस्तस्य गुरोः परितो मंत्राधिदेवतानां गतिरासीत् । देवतासामर्थ्येन निर्भय इत्यर्थः । क्वचित्कदाचित् तैलं नासीत् । तदा नापित आर्योक्त्या गणराजवाक्येन कोशेंऽबु जलमाक्षिपत् । तेन जलेन रात्रौ मार्गे उरुदीपयोः सूज्ज्वलनता सुतरां प्रदीप्तताऽभवत् । ततः स्थितौ निवासस्थानेऽह्नि दिवा तच्छेषं जलं दृष्ट्वा सर्वे गणराजगुरोः सिद्धिं चावदन् कथितवंतः । एवं मंत्रसिद्धिमान् गणराज इत्यर्थः ॥ ५४ ॥ इत्थं प्रकारेण गणराजगुरुः सोमेश्वरस्य राज्ञो दुर्गं प्राप । अथ च तत्पत्न्यै संतानदं संतानगोपालमंत्रं चादिशत् । ततो नृपतिना उत्तमवस्त्राद्यैरर्चितः सन् स्वकीयं स्थानं वसुमतीमगात् । तथैव सोमेश्वरनृपस्यांगनाऽन्यैर्वंध्येत्युक्तापि श्रीगुरोर्गणरा

निङ्गत्यां न भयं हि तस्य परितो मंत्राधिदेवीगतिस्तैलं न क्वचिदास नापित इहार्योक्त्यांऽबु कोशेऽक्षिपत् ॥ तेनाध्वन्युरुदीपसूज्ज्वलनता रात्रावभूच्च स्थितौ दृष्ट्वा तज्जलशेषमह्नि निखिलाः सिद्धिं गुरोश्चावदन् ॥ ५४ ॥ इत्थं प्राप नृपस्य दुर्गमथ तत्पत्न्यै च संतानदं मंत्रं चादिशदर्चितो नृपतिनाऽनर्घ्यांशुकाद्यैर्गुरुः ॥ स्वीयं स्थानमगात्तथैव सुषुवे पुत्रान्नृपस्यांगनाऽन्यैर्वंध्या गदितापि सिद्धमनुतानुष्ठानतः श्रीगुरोः ॥ ५५ ॥ जातं पूर्णमथो समीक्ष्य च तपो गंतुं स्वधामात्मवान् देहे क्षैण्यमसावहोभिरभजद्धीच्छांतभूः सन्नृषिः ॥ अज्ञात्वास्य च वैभवं क्षयरुजं प्राहुः परेऽथांबिकाऽस्मै दातुं भिषजो रुगौषधमगात्तद्युक् पुरं कोंडलम् ॥ ५६ ॥

जस्य सिद्धमनुतया सिद्धमंत्रत्वेन यदनुष्ठानं जपादि तेन हेतुना पुत्रान् सुषुवे । गुरुकृपया सोमेश्वरस्य राज्ञो बहुपुत्रा बभूवुरित्यर्थः ॥ ५५ ॥ गणराजस्याथ स्वरूपस्थितिमाह । जातमिति द्वाभ्याम् । अथासावात्मज्ञो गणराजस्तपः पूर्णं जातमिति समीक्ष्य स्वधाम गंतुं देहक्षीणत्वं अहोभिः कतिचिद्दिनैरभजत् प्राप्तवान् । हि यत इच्छया अंतभुवौ नाशोत्पत्ती यस्य स स्वेच्छाजनिः सद्रूपो ऋषिरेवास्ति । यद्यप्येवं तथापि परे जना अस्य वैभवं स्वेच्छाजनितस्वरूपं सामर्थ्यमज्ञात्वा क्षयरुजं प्राहुः।अथांबिका जयंती अस्मै गणराजाय भिषजो वैद्यप्रकाशाद्रोगस्यौषधं दातुं तद्युक् पुत्रयुक्ता सती कोंडलपुरमगात् ॥ ५६ ॥

तद्रुक् गणराजरोगः औषधैर्नाशमत् शांतो न जातः । अथ श्रुतिगताभिप्रायज्ञो बालकृष्णाख्यसाधुर्गुरुं गणराजमगात् । त्वं अंत्यमाश्रमं संन्यासाश्रमं कुरु इति च प्राह । अथ स गणराजो वियोर्ध्वं श्रीविद्याप्राप्त्यनंतरं तं संन्यासाश्रमं नैच्छत् । हि यतः सा श्रीविद्या शिवेन च पुनः अंत्यजनिना चरमजन्मना पुंसा लभ्यास्तीत्याशयेन संन्यासं नैच्छत् । यथोक्तं तंत्रे । "यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम् । तेनैव लभ्यते विद्या श्रीमत्पंचदशाक्षरी " इति श्रीविद्याविदुषो ज्ञानप्राप्त्या न संन्यासापेक्षास्तीति भावः । अथ स गणराजः वदि कृष्णपक्षे माघस्य पंचमे पंचमीतिथौ स्वं स्वरूपं लेभे । इह कौंडलपुरे तस्य समाधिरभूत् ॥ ५७ ॥ एकत्रिंशाधिकद्विशतसंख्यं यज्ञेश्वरानंदगुरुं प्रणमति । भूत्वेति । यः पूर्वं महर्षिस्तपसे तपः

तद्रुङ् नाशमदौषधैर्गुरुमथागाद्बालकृष्णः श्रुतिस्थार्थज्ञः कुरु चांत्यमाश्रममिति प्राहाथ नैच्छत्स तम् ॥वियोर्ध्वं हि शिवेन चांत्यजनिना लभ्यास्ति येत्याशयाल्लेभे स्वं वदि माघपंचम इहाभूत्तत्समाधिः पुरे ॥५७॥ भूत्वार्यवंशे तपसे महर्षिः कृत्वानिशं तत्परमाप धाम॥तमेकरामद्विमितं सुकीर्तिं यज्ञेश्वरानंदगुरुं नताः स्मः॥५८॥पुत्रार्थं त्वणु देवहूतिरिव सा खिन्ना जयंती ततः प्राप्तात्मीयपुरं सुखाद्विगतशुक् स्वोत्थान्मयूरेश्वरात् ॥ स्कंदेऽरण्यगतेऽविकेव च निजस्थानं गणेने गतेऽथागाद्गोतटमीक्षितुं ह्यसुजिहासुं माधवं सात्मजा ॥ ५९ ॥ यः संन्यास्यपि वित्प्रदे समुपास्ये भक्तिमांश्चोभयं पश्यत्येकमनेकगं तदभिदं चात्मानमानंदधीः ॥ ऐक्षिष्ट प्राविदं जयंत्यपि विदायुःशेषरुक्क्लेशिनं चास्वानंदविराममर्थगधियाखंडोक्तिनारायणम् ॥ ६० ॥

सिध्यर्थं श्रेष्ठवंशे भूत्वा जन्म गृहीत्वाऽनिशं तत्तपः कृत्वा परं धामाप प्राप्तवान् । तमेकरामद्विमितम् २३१ एकत्रिंशाधिकद्विशतसंख्यं सुकीर्तिं यज्ञेश्वरानंदगुरुं वयं नताः स्मः ॥ ५८ ॥ ततः सा जयंती देवहूतिरिव पुत्रार्थं पुत्रनिमित्तमणु खिन्ना सती आत्मीयपुरं वसुमतीं प्राप्ता । गणेने गणराजे निजस्थानं गते सति स्कंदेऽरण्यं गते सत्यंबिकेव पार्वतीव सा जयंती मयूरेश्वराद्गुरोः पक्षे गणपतेश्च सकाशात् स्वोत्थं आत्मोत्थं यत्सुखं तस्माद्धेतोः विगतशुक् शोकरहिताऽभवत् । मयूरेश्वरेण बोधिता सती पुत्रदुःखं विस्मृतवतीत्यर्थः । अथ सा सात्मजा मयूरेश्वरसहिता सती असून् जिहासुं मुमूर्षुं माधवं दामोदरतीर्थाख्यं यतिं द्रष्टुं गोतटं नंदीतटमगात् ॥ ५९ ॥ दामोदरतीर्थस्याधिकारमाह । य इति । यः स्वयं संन्यास्यपि वित्प्रदे ज्ञानप्रदे गुरौ उपास्ये देवतायां च

सर्वं भक्तिमान् सन् उभयं गुरुदेवतारूपं द्वयम् एकं एकरूपमनेकगतं पश्यति । तदभिदं गुरुदेवताऽभिन्नं आत्मानं च पश्यति । यत आनंदधीः सानंदबुद्धि भाक् । गुरुदेवतात्मैक्यनिश्चयं विनाऽऽनंदो न भवतीत्यर्थः । जयंत्यंबापि सुविदमुत्तमज्ञानवंतम् आयुःशेषे रुजा रोगेण क्लेशो यस्य तं च पुनः आ साकल्येन स्वानंदे विरामो विश्रांतिर्यस्य तम् अर्थगधिया गुरुभागवतोक्तप्रकारेण पदस्यार्थदृष्ट्याऽखंडं निरंतरम् उक्तौ वाचि नारायणो यस्य तं माधवमैक्षिष्ट अपश्यत ॥ ६० ॥ अथ तत्रत्याः नंदीतटस्थाश्च तं माधवमीक्षितुं ययुः । अथ कमलाकरस्यात्मजो रामार्यो रामरायाख्यः सुधियां वरो बुद्धिमद्वरिष्ठस्तं यतिं द्रष्टुं ययौ । यतये नतिर्यस्य स यतये कृतनमस्कारो मयूरेश्वरं नत्वा प्राह । अहं कश्चित् दामोदराख्यं संतं यतिवरं समेत्य ततः सकाशात् आत्मतायाः

तत्रत्याश्च तमीक्षितुं ययुरथो पद्माकरस्यात्मजो रामार्यः सुधियां वरो यतिनतिर्नत्वा मयूरेश्वरम् ॥ प्राहाहं हि समेत्य सद्यतिवरं दामोदराख्यं ततश्चाशृण्वन्निजतानुभूतिवचनान्यस्मान्हि वक्ताद्य कः ॥ ६१ ॥ तं चातुर्धरलक्ष्मणोऽवददिति श्रीमन्मयूरेश्वराद्राव्यं श्राव्यमिह स्थलं वसतये दत्त्वाखिलैः सुंदरम् ॥ तस्मात्तौ ययतुस्तदीक्षितुमथान्यैर्विन्मयरेडयुतौ ह्येकद्रव्यविभागतश्च ददतुः क्रीत्वा विदे सुस्थलम् ॥ ६२ ॥ सौधं त्रिस्थलमंकगोदमपि तद्रम्यं विलोक्योद्वहं तिष्ठंस्तस्य गवाक्ष ऐक्षत मयूरेशो मुहुर्गौतमीम् ॥ तोये स्नातुमधो व्रजंति च गृहं स्नात्वेक्षितस्तैर्नुतः संस्थाप्यात्र गणेशमेव च मनः स्थातुं स मात्राऽकरोत् ॥ ६३ ॥

अनुभूतिर्येभ्यस्तानि वचनानि च आ साकल्येन शृण्वन् श्रवणकर्ताऽभवम् । अद्य संप्रति कोऽस्मान्प्रति वक्ता भविष्यति न कोपीत्यर्थः ॥ ६१ ॥ अथ चातुर्धरलक्ष्मणस्तं रामार्यमित्यवदत् । इति किम् । अखिलैर्ग्रामस्थैरिह नंदीतटे वसतये निवासार्थं सुंदरं स्थलं अस्मै मयूरेश्वराय समर्प्य श्रीमन्मयूरेश्वराद्राव्यं श्राव्यं श्रोतव्यमिति । एवं तयोर्निश्चयो जात इत्यर्थः । अथ तौ रामलक्ष्मणौ विदुषा मयूरेश्वरेण युक्तौ अन्यैर्ग्रामस्थैः सह तत् स्थानं ईक्षितुं तस्मान्माधवगृहाद्ययतुः । ह्येकद्रव्यविभागतः सुस्थलं क्रीत्वा विदे मयूरेश्वराय ददतुः । द्वौ भागौ रामार्येण दत्तौ । एकभागो लक्ष्मणेन दत्तः । उभाभ्यामेव स्थलं गृहीत्वाऽर्पितमित्यर्थः ॥ ६२ ॥ एवं नंदीतटे स्थानप्राप्तिमुक्त्वा तत्र मयूरेश्वरस्य निवासप्रकारमाह । सौधमिति द्वाभ्याम् । मयूरेश्वरगुरुः सौधं सुधामयं त्रीण्यू

र्ध्वोर्ध्वस्थलानि यस्मिन् अंके समीपे गोदा यस्य तद्रम्यं उत्कृष्टं गृहं विलोक्य तस्य गवाक्षे तिष्ठन् सन् गौतमीं प्रति गुरुरैक्षत् अपश्यत् । ये अधः उदके स्नातुं व्रजंति स्नात्वा च गृहं व्रजंति । तैरीक्षितः नुतः नमस्कृतश्चासीत् । ततः स मयूरेश्वरोऽत्र स्थले गणपतिं च संस्थाप्य मात्रा सह स्थातुं मनः कृतवान् ॥ ६३ ॥ एवं रम्यस्थलं दृष्ट्वा तत्र निवसता मयरेश्वरेण यतेः प्रतिदिनं दर्शनमासीदित्याह । आकर्ण्येति । अथाशक्तो यतिर्विदं मयूरेश्वरमाप्तभुवं आप्तस्थानमाकर्ण्य संतुष्टश्चास । क इव । धर्मं प्राप्तभुवं प्राप्तराज्यं श्रुत्वा भीष्म इव । अथ स यतिस्तं मयूरेश्वरं प्रति तंडुलादिकं निजैः स्वकीयैः शिष्यैः प्रेषितवान् । तत्र स्थले वित् मयूरेश्वरः कृतशिवार्चः सन् अंबया जयंत्या सह भुक्त्वा निशि तं माधवयतिं प्रत्याययौ प्राप्तवान् । तं प्रति सर्वं

आकर्ण्याप्तभुवं त्वथो विदमशक्तश्चास तुष्टो यतिर्धर्मं भीष्म इवाथ तंदुलमुखं चाप्रेषयत्तं निजैः॥भुक्त्वा तत्र विदंबया कृतशिवार्चश्चाय यौ तं निशि प्रोक्त्वा सर्वमगाद्गृहं पुनरहर्नक्तं दिवा वा निशि॥६४॥यः स्वाभिन्नगणेशभक्तिनिरतो भाद्रद्वितीये स्वगः प्रत्यद्वं प्रतिपत्तिथे गणपतेश्चासीद्व्रतेरुत्सवः॥ पंचम्यंत उपास्यसाम्यमगमच्चेत्थं दृढोपास्तितस्तं विद्याप्रदसद्गुरुं यतिवरं दामोदराख्यं नुमः ॥ ६५ ॥ कृत्वाऽथांबुदडंबरं त्विह मयूरेशो गुरोः पादुके स्वर्णाभे शतपत्रयंत्रमपि गायत्र्यास्त्रिमूर्तेः शुभम् ॥ संस्थाप्य स्थलमाबबंध च सता दत्तं महाद्वारतोऽब्दत्र्यंशैः स्थितिरत्र विद्वसुपुरे चासीत्प्रवासो विदः ॥ ६६ ॥

स्थानलाभादि प्रोक्त्वा पुनर्गृहमगात् । इति प्रकारेण अहर्नक्तं निशि दिवा वा तं प्रति ययौ । एवं कतिचिद्दिनानि न्यवसदित्यर्थः ॥ ६४ ॥ अथ दामोदरतीर्थयतेः स्वरूपस्थितिं तस्मै नमस्कारं चाह । य इति । यः स्वाभिन्नो गणेशस्तस्य भक्तौ निरतोऽभेदेन गणपत्युपासक आसीदिति हेतोः स भाद्रपदद्वितीयतिथौ स्वगः स्वमात्मस्वरूपं गतोऽभवत् । प्रत्यब्दं प्रतिपत्तिथिमारभ्य गणपतेर्व्रतेश्च पंचम्यंत उत्सवोऽभवत् । य इत्थंप्रकारेण दृढोपासनयोपास्यसाम्यं गतस्तं विद्याप्रदं सद्गुरुं दामोदराख्यं यतींद्रं वयं नुमः ॥ ६५ ॥ अथ मयूरेश्वरः कतिचिद्दिनेषु तत्रावसदित्याह । कृत्वेति । अथ मयूरेश्वर इह नंदीतटस्थगृहे अंबुदडंबरं भाषया मेघडंबरं कृत्वा तत्र गुरोः स्वर्णाभे पादुके संस्थाप्य त्रिमूर्तेः ब्रह्मविष्णुरुद्ररूपिण्याः गायत्र्याः शुभं शतपत्रमित्युपलक्षणं

सहस्रपत्रस्य । यंत्रं च संस्थाप्य सता खंदारस्थरुक्मांगदेन दत्तं स्थलं स्वस्थानात्पूर्वस्थजं महाद्वारतो महाद्वारेण सह बबंध । अब्दत्रयं शैश्चतुर्मासैर्विदो मयूरे श्वरस्यात्र नंदीतटे स्थितिरभवत् । विद्वसुमत्पुरे ज्ञानिधनवत्यां वसुमत्यां स्थितिरभवत् । च पुनश्चतुर्मासपर्यंतं विदो मयूरेश्वरस्य प्रवासोऽभवत् । एवं चतुश्च तुर्मासैः त्रिस्थले गुरोर्निवासोऽभवदित्यर्थः ॥ ६६ ॥ अथ कदाचित् गुरुवरो मयूरेश्वरः स्वपुरे वसुमत्यां विकलां मुमूर्षुं जयंत्यंबां श्रुत्वा नंदीतटाद्ययौ । अथ सा स्वात्मगतिं प्राप्ता । ततः स मयूरेश्वरः अस्याः समाधिं फलारामेऽकरोत् । ऊर्जकृष्णे कार्तिककृष्णपक्षे सप्तम्याः सकाशात्त्रिदिनपर्यंतं पट्टस्थितो (डेरा) वस्त्रगृहस्थः सन् इतरजनैः सह ब्राह्मणभोजनादिभिः प्रत्यब्दं यस्या उत्सवं कृतवान् । अतः तां जयंत्यंबिकां वयं नुमः ॥ ६७ ॥ अथ राम

श्रुत्वाथ स्वपुरेंऽबिकां तु विकलां नंदीतटाद्विद्ययौ प्राप्ता स्वात्मगतिं समाधिमकरोदस्याः फलारामके ॥ सप्तम्यारुयहमूर्जकृष्ण इतरैः पट्टस्थितश्चोत्सवं प्रत्यब्दं द्विजभोजनैर्गुरुवरोऽतस्तां जयंतीं नुमः ॥६७॥ आसील्लक्ष्मणदीक्षितः प्रतिसमं शेषाद्रिगास्तत्कुले स्याढ्यः सोऽपि तथाकरोज्जरठतां प्राप्तोऽपि नापत्यवान् ॥ स्वप्नेऽऽह्वाऽह च वेंकटेश इति तं गच्छाधुनोमात्मजं भालक्यामिह चास्मि मन्मनुमतो लब्ध्वैहि सापत्यताम् ॥६८॥ आगत्याथ स लक्ष्मणो गुरुवरं तं भालकीस्थं नमन्नुक्त्वा स्वप्नमतो मनूंश्च जगृहे संप्रार्थयन्स्वस्त्रिया ॥ गंधाद्यैरधनोऽयजत्सुपचने भांडे ददौ दक्षिणां गत्वा गेहमवाप स त्रितनयान्वृद्धोऽपि पत्न्यां क्रमात् ॥ ६९ ॥

तीर्थचरित्रं वक्तुं तत्पूर्वकथामाह । आसीदित्यादित्रिभिः । कश्चिल्लक्ष्मणदीक्षितः वीरभद्रक्षेत्रे भाषया हुम्नाबादेति प्रसिद्धे आसीत् । तस्य कुले प्रतिवर्षं शेषाद्रिगामिन आसन् । सोऽपि लक्ष्मणः स्त्रीसहितः सन् तथा यात्रामकरोत् । वृद्धतां प्राप्तोऽपि पुत्रवान्नाभवत् । कदाचित्साक्षात् वेंकटेशस्तं स्वप्ने इत्याह । इति किम् । हे लक्ष्मणाधुना त्वं भालक्यामुमात्मजं उमापत्यानंदं गच्छ । इह च इहैव सिद्धमंत्रे उमात्मजेऽहमस्मि । अतोऽस्मान्मम मंत्रं लब्ध्वा सापत्यभावमेहि । उमापत्यानंदगुरुकृपया पुत्रवान् भविष्यसीत्यर्थः ॥ ६८ ॥ यस्मादेवं स्वप्ने वेंकटेशाऽऽज्ञाऽऽसीत् । तस्माद्धेतोः स लक्ष्मणः सद्गुरुं भालकीस्थं गुरुगणेशं एत्य तं नमन् सन् स्वप्नमुक्त्वा संप्रार्थयन् अस्मात्सकाशात्पत्न्या सह मंत्रान् गृहीतवान् । मनूनित्यनेनास्य गुरुकृपया बहुमंत्रलाभो जात इति

ज्ञेयम् । ततो गंधाद्यैः पूजितवान् । अथ नोऽकिंचनः सोऽन्नपचनसाधने भांडे दक्षिणां ददौ । निर्धनत्वात्तथा कृतवानित्यर्थः । ततो गृहं गत्वा वृद्धोऽपि सः पत्न्यां क्रमेण पुत्रत्रयमवाप । गुरुकृपाऽघटितघटनापटीयसीति भावः ॥ ६९ ॥ अथ ते व्रतिनः उपनीताः बभूवुः । तदा रामः इतरः कृष्णो लघुः कनिष्ठो गोविंद इति ते त्रयोपि श्रुतेर्वेदस्याध्ययनं सम्यगापठन् । इह त्रिषु पुत्रेषु लघू कनिष्ठौ ज्येष्ठानुगौ स्तः । ज्येष्ठानुकूलौ बभूवतुरित्यर्थः । अथ कदाचिल्लक्ष्मण दीक्षितो वसुमतीं प्रति गतं पूर्वं नंदीतटगतमिति ज्ञेयम् । गुरुपुत्रं शुकानंदं ज्ञात्वा तं प्रति जयसिंहनगरे भाषया हुन्नाबादेति प्रसिद्धे स्थितोऽह्नर्युग्मात् दिन द्वयेनागात् । इह वसुमत्यां गुरुं शुकानंदं संपूज्य पुनः तथा दिनद्वयेनागात् । स्वनगरमितिशेषः । पंचदिनगम्यो मार्गोऽह्नर्द्वयेनातिक्रांत इत्यर्थः ॥ ७० ॥

जातास्ते व्रतिनोऽथ राम इतरः कृष्णोऽप्यधीतिं श्रुतेर्गोविंदो लघुरापठन्निह लघू ज्येष्ठानुगौ स्तः सदा ॥ ज्ञात्वाथो वसुमद्गतं गुरुशुकानंदं ह्यगाल्लक्ष्मणोऽह्नर्युग्माज्जयसिंहपूर्गत इहार्यं पूजयित्वा तथा ॥ ७० ॥ रामाद्यास्त्वखिलां यजुःश्रुतिमथापुस्तत्र रामोऽधिकं विद्वांसो गृहिणोऽभवंस्त्रय इमे ताते गतेऽपि क्रमात् ॥ अग्न्याधानमथाकरोद्वरमतिर्ज्येष्ठः समिद्दर्भदो गोविंदः सततं तमेव भजते कृष्णोऽपि धान्यांशुकैः ॥ ७१ ॥ ख्यातोऽभूदिह चाहिताग्निरपरे देशे स्वकेऽप्यंजसाऽऽतिथ्यन्नादरसेवया प्रभुधियाऽसौ देशिकं चाययौ ॥ साग्निर्बंधुयुतः स्थितं वसुपुरे नत्वोक्तताताभिधः प्रार्थ्यैनं बहुधाग्रहीन्मातिसमं मंत्रान्सबंधुः स्त्रिया ॥ ७२ ॥

अथ लक्ष्मणपुत्रा रामाद्याः सर्वं यजुर्वेदं प्रापुः । तत्र रामः अधिकं यथा तथा प्राप । श्रौतस्मार्तादिज्ञानेन विशिष्ट इत्यर्थः । ततस्ताते लक्ष्मणदीक्षिते अतिक्रांते सति इमे त्रयोऽपि पुत्राः गृहिणः सस्त्रीका अभवन् । यतो विद्वांसः । विदुषा सर्वं प्राप्यत इत्यर्थः । अथोत्तमबुद्धिर्ज्येष्ठो राम अग्न्याधानम करोत् । गोविंदः सततं समिद्दर्भादिसमर्पकः सततं तमेव भजति । कृष्णोपि धान्यांशुकैरन्नवस्त्रसमर्पणेन तमेव भजते । अनुकूलभ्रातृसंगोऽतिदुर्लभ इति भावः ॥ ७१ ॥ आहिताग्निः स रामदीक्षितः इह पृथिव्यां स्वके देशेऽपरेपि च देशे विख्यातोऽभवत् । अंजसाऽतिथिषु अन्नादरसेवया प्रभुधिया ईश्वर बुद्ध्या च ख्यातोऽभवत् । अथ साग्निर्बंधुयुक्तः स वसुमतीनगरे स्थितं देशिकं ययौ । उक्तं देशिकेंद्राय कथितं पितुर्लक्ष्मणदीक्षितनाम येन स उक्तताता

भिक्षो रामदीक्षित एनं देशिकेंद्रं प्रार्थ्य बंधुसहितः स्त्रिया सह मतिसमं निश्चयसदृशं यथा स्यात्तथा मंत्रानग्रहीत् । यस्यां देवतायां यस्य निश्चयस्तत्तन्मंत्राः सर्वैर्गृहीता इत्यर्थः ॥ ७२ ॥ अथ भिक्षुः भिक्षुकोपि सः स्त्रीपुरुषयोग्यैर्वस्त्रैः सकुटुंबं स्त्रीपुत्रादिसहितमार्चयत् । शतं दक्षिणां च ददौ । इति प्रकारेण प्रतिसमं च शुक्रे ज्येष्ठमासे एत्याऽऽगत्याकरोत् । एवमेव प्रतिवर्षं पूजितवान् इत्यर्थः । यल्लब्धं द्रव्यादि तत् गुरवेऽर्पयति । गृहस्त्रीपुत्रादीनां भक्ष्यादिविषये त्वणु किंचिदपि चिंतां यो न दधौ नावहत् । अदः इदं भक्ष्यादि सर्वं कृष्णाख्यो नित्यशः अकरोत् । कृष्णः सर्वां प्रपंचधुरमुवाहेत्यर्थः ॥ ७३ ॥ अथ यश्च रामदीक्षितः आत्मधामगतं देशिकं श्रुत्वा मुहुः साष्टांगं प्रणमन् तत्पुरं देशिकपुरं वसुमतीमाययौ । किं कुर्वन् पथि गुरुं ध्यायन् श्रुतिं च वेदं पठन् ।

वस्त्रैस्तं सकुटुंबमार्चयदथो स्त्रीपुंसमैर्दक्षिणां भिक्षुश्चापि शतं ददौ प्रतिसमं चैत्येति शुक्रेऽकरोत् ॥ यल्लब्धं गुरवेऽर्पयत्त्वणु गृहस्त्रीपुत्र भक्ष्यादितश्चिंतां यो न दधावदोऽखिलमथो कृष्णोकरोन्नित्यशः॥७३॥श्रुत्वा देशिकमात्मधामगमथो पश्चाययौ तत्पुरं साष्टांगं प्रण मन्मुहुः पथि गुरुं ध्यायन्पठंश्च श्रुतिम् ॥ संपूज्याथ समाधिसंस्थितगुरुं वस्त्रादिभिश्चाखिलान्खिन्नोऽदृष्टगुरुर्विदुक्तिसुखवान्प्राप्तो गृहं चाप्तयुक् ॥ ७४ ॥ सोमस्तेन कृतः श्रुतिस्मृतिविदं नीत्वा मयूरेश्वरं मंठाळे त्रिविदर्त्विजा वरसखारामाश्रयाच्छ्रद्धया ॥ जातश्चावभृथो यदामितजलेऽर्भश्चापतद्वक्छरज्जीवन्यामदलात्स्वयं बहिरगात्पुण्यैर्यशो लभ्यते ॥ ७५ ॥

अथ सः समाधिस्थितं गुरुं देशिकेंद्रं संपूज्याखिलान् गुरुपुत्रादीन् वस्त्रादिभिश्च संपूज्य अदृष्टगुरुरनवलोकितगुरुस्स खिन्नः सन् विदुक्तिभिर्मयूरेश्वरवाक्यैः सुखवांश्च प्राप्तसुखश्च सन् आप्तयुक् स्त्रीपुत्रादियुक्तो गृहं प्राप्तः । एवं महान् गुरुभक्त आसीदित्यर्थः ॥ ७४ ॥ तेन सोमयागः कृत इत्याह । सोम इति । त्रिविदस्त्रिवेदिनः ऋत्विजो यस्य तेन रामदीक्षितेन श्रुतिस्मृतिज्ञं मयूरेश्वरं मंठाळग्रामे नीत्वा तत्र सखारामाख्यस्य कस्यचिद्गृहस्थस्याश्रयेण श्रद्धया सोमः कृतः । यदाऽवभृथो जातस्तदा बहुजले द्वक्शरत्व द्विवर्षात्मकोऽर्भो बालकश्चापतत् । यामदलात् चतुर्घटिकाभिर्जीवन् स्वयं बहिरगात् । तस्माद्यशोऽपि पुण्यै

रेव लभ्यते प्राप्यते इत्यर्थः।एवं रामदीक्षितस्य यजनं निर्विघ्नतया जातमित्यर्थः ॥७५॥ रामकरतो रामदीक्षितहस्तेन सयजनं जातम् । तथा याजनं भूयात् । इत्यर्थीः एवं निश्चयवान् मयूरेश्वरगुरुस्तस्माद्रामदीक्षितादरणिर्यस्य तस्मात् मत् मत्तः सकाशादार्यव्ययं श्रेष्ठव्ययं सोमयागमकरोत् ।रामदीक्षितादरणिप्रदानेन स सोमयागो मयूरेश्वरगुरुणा संपादित इत्यर्थः । क इव । चीरजपुत्तलैः वस्त्रपांचालिकासकाशान्नृत्यं कृती कुशलो नर्तक इव । यज्ञेश्वरनामदा देशिक वाक् लघुशिष्यात्त्वं यज्ञं करिष्यसीति वाक् सत्या कृता । मयूरेश्वरेणेति गुरुपदपरिणामायोज्यम् । हि यतः महतां वाण्या अजातमपि जायते । अतः गुरुकृपयैव स सोमयागो जात इत्यर्थः ॥ ७६ ॥ सन्साधुः रामदीक्षितः शुक्रे ज्येष्ठमासे इषे आश्विने च यौ द्वयोर्गुर्वोः शुकानंददेशिकानंदयोरुत्सवौ वर्षस्य वृष्टे

जातं सयजनं हि रामकरतो भूयस्तथा याजनं त्वित्थंधीरकरोद्गुरुस्तदरणेर्मत्सोममार्यव्ययम् ॥ नृत्यं चीरजपुत्तलेरिव कृती सत्या कृता दैशिकी वाग्यज्ञेश्वरनामदा हि महतां वाण्याप्यजातं भवेत् ॥७६॥ शुक्रेषद्विगुरूत्सवौ वसुमतीं प्रत्यब्दमागत्य सन्वर्षाद्यापगमौ च कष्टगतिमान्पर्जन्यपंकाकुलः॥योखंडं गुरुपन्मतिः क्व च सरुग्गत्वोत्सवं तं ययुः श्रुत्वाताश्च यतिः समाधिमगमत्सोग्रे गुरोः स्वार्चितः॥७७॥श्रीदेशिकेंद्रस्तु वसिष्ठ एवावतीर्ण एतद्भजनाय रामः॥तद्धृच्च तत्सव्यपुरःसमाधिस्तं रामतीर्थं यतिमानताः स्मः ॥७८॥

राद्यापगमौ आगमनिवृत्ती ययोस्तौ । ज्येष्ठे वर्षागमः । आश्विने वर्षनिवृत्तिश्च भवति । एतादृशोत्सवौ प्रति कष्टेन श्रमेण गतिमान् गमनकर्ता । पर्जन्येन ज्येष्ठे पंकेनाश्विने आकुलो व्याकुलः सन्नपि प्रत्यब्दं वसुमतीमागत्य गच्छति । योऽखंडं सदैव गुरुपादबुद्धिः श्रीगुरुचरणैकनिष्ठ आसीत् । स कदाचिदुत्सवं प्रति गत्वा सरुक् रोगवानासीत् । आताश्च भ्रातृपत्न्यादयस्तं ययुः । रामदीक्षितो यतिः सन् समाधिमगमत् स्वरूपं प्राप्तस्तदा गुरोः शुकानंदस्याग्रे स्वैः पुत्रादिभिरर्चितोऽभवत् । मध्यमहाद्वारस्य पूर्वभागे तस्य समाधिः कृत इत्यर्थः ॥ ७७ ॥ गुरुभक्तवर्यं रामतीर्थं प्रणमति । श्रीदेशिकेंद्र इति । श्रीदेशिकानंदो वसिष्ठ एवावतीर्णोऽस्ति । एतस्य वसिष्ठस्य भजनाय राम एव योऽवतीर्णोऽस्ति । यश्च तद्धृत् सः गुरुः हृदि चित्ते यस्य स गुरुचरणनिष्ठस्तस्य गुरोः सव्ये

पुरः अग्रे समाधिर्यस्य गुरुचरणे विसर्जितदेहश्चासीत्तं रामतीर्थयतिं नताः स्मः ॥ ७८ ॥ गुरुभक्तवर्यं देशिकेंद्रशिष्यं गुंडाख्यं प्रसंगेन प्रणमति । साधुरि ति । देशिकादध्वा ईश्वरप्राप्तिमार्गो यस्य देशिकेंद्रशिष्योऽमलमतिः शुद्धांतःकरणो गुंडादिर्नाना गुंडभट्टनानाख्यः साधुर्गौतम्याः सकाशाद्योजनार्द्धस्थानेऽव सत् । अतिथिसेवातत्परः सः मार्गशीर्षस्याद्या प्रतिपत् तस्याः सकाशाद्या षष्ठी चंपाख्या तस्यां यो मल्लारेरुत्सवस्तस्मिन् प्रतिपदमारभ्य षष्ठीपर्यंतमिति यावत् । ब्राह्मणादिभ्यः सर्वेभ्यः सर्ववर्णेभ्यो घृताढ्यमन्नं ददौ । अंते उत्सवांते विद्भ्यः पंडितेभ्योऽपरेभ्यो गायकादिभ्योऽधिकारानुरूपं धनं च ददौ । किंभूतः सत्सुतः सती स्त्री च यस्य । अस्मै वर्तमानाय गुंडाख्यसाधवे नमोस्तु । परमगुरोर्देशिकेंद्रस्य शिष्यत्वाद्युक्ता गुंडाख्यसाधुप्रणतिरिति भावः ॥ ७९ ॥

साधुर्गुंडादिनानावसदमलमतिर्गौतमीयोजनार्द्धस्थाने श्रीदेशिकाध्वाऽतिथिभजनपरो मार्गशीर्षाद्यषष्ठ्याम्॥श्रीमल्लार्युत्सवेन्नं द्विजमु खसकलेभ्यो घृताढ्यं ददौ सोंऽते विद्भ्यश्चापरेभ्यो धनमधिकृतिवत्सत्सुतास्त्रिनमोस्मै॥७९॥शिष्यग्रामान् भ्रमन् श्रीगुरुरथ कुहचित्खे टमंत्यार्द्धयामेऽह्नि प्राप्तस्तं नमंतोप्यणु न जगुरिहावस्तुमेकेऽधिकृच्च ॥ क्रोशस्थौदुंबरीं चागमदित इह सच्छिष्यसंप्राप्तसर्वोऽपश्यत्खेटा धिकृत्तन्निशि गुरुवदनं विष्णुमात्मायुधाढ्यम्॥८०॥प्रातर्गत्वा गुरुं सोवददनुनतिकृन्नो मयाद्धा हरिस्त्वं बुद्धो दैवेन चिंतामणिरिव करगो प्युज्झितोऽघं क्षमस्व ॥ तेनाथो पूजितस्तं गुरुरवददिदं तत्त्वाभूत्सुमार्गान्नत्वाऽऽनंदोऽव्रजत्तत्स्मृतिरिह स सदाहेदमेकं सुमित्रम् ॥८१॥

अथ मयूरेश्वरस्य भाग्यनगरयानं विवक्षुस्तावन्मार्गे तत्रतत्रत्यं वृत्तांतमाह । शिष्यग्रामानिति चतुर्भिः । अथ श्रीगुरुर्मयूरेश्वरः शिष्यग्रामान् भ्रमन्सन् अह्नि अंत्यार्द्धयामे चतुर्घटिकादिनशेषे कुहचित्खेटं प्राप्तस्तदा एके ग्रामस्थाः अधिकृत् तत्रत्योऽधिकारी चानंदाख्यः तं मयूरेश्वरं नमंतोपि इह स्वखेटे आवस्तुं किंचिन्न जगुः । अत्र त्वया स्थातव्यमिति नोचुः । स च गुरुरितः खेटात्क्रोशमात्रस्थितामौदुंबरीम् उंबरीतिप्रसिद्धां नगरीमागतः सन् इह पुरि सच्छि ष्यात्प्राप्तं सर्वं यस्मै स शिष्यसत्कृतोऽभवदित्यर्थः । अथ तस्यां रात्रौ खेटाधिकारी गुरोर्मयूरेश्वरस्य वदनमिव वदनं यस्य तं स्वायुधाढ्यं शंखचक्रादियुक्तं विष्णुमपश्यत् दृष्टवान् ॥ ८० ॥ अथ सः खेटाधिकारी प्रातः आर्यं मयूरेश्वरगुरुं गत्वा समेत्य अनु वारंवारं नतिकृत् नमस्कारकर्ता पुनः पुनः नमस्कु

वेन्सन् अवदत् । हे गुरो साक्षाद्धरिस्त्वं मया नो बुद्धो न ज्ञातोसि । अदैवेन दैवहीनेन मया त्वं करगतोपि चिंतामणिरिवोज्झितस्त्यक्तोसि । स्वखेटं प्राप्तोपि मया न सत्कृतोसि । अदः इदं अघं अपराधरूपपापं क्षमस्व इत्यादि बहु प्रार्थितवानित्यर्थः । अथ तेन खेटाधिकारिणा पूजितो गुरुस्तमधिकारिणं प्रतीत्यवदत् । इति किम् । तव सुमार्गात् उत्तमाचरणेन तदिदं विष्णुरूपेण मद्दर्शनमभूत् इति । अथानंदाख्यः खेटाधिकारी गुरुं नत्वाऽलजलमतवान् स्वग्राममिति शेषः । सदा तस्य मयूरेश्वरस्य स्मृतिर्यस्य सः एकं सुमित्रं प्रति इदं वृत्तमाह कथितवान् । अन्यं प्रति तु नोक्तवानित्यर्थः ॥ ८१ ॥ कैश्चित्स मयूरेश्वरगुरुर्विष्णुरूपो दृष्टः । कदाचिद्गणपतिरूपः इनः सूर्यरूपः शक्तिरूपः शंभुः शिवरूपश्च दृष्टः । असावेव मयूरेश्वरः सर्वमात्मा इत्यध्यासदार्ढ्येन सकलतनुः सर्वरूपोस्ति अनेकरूपोऽपि एक एवास्ति । उपगताः शरणं गताः बहवो यस्य दृष्ट्या दर्शनमात्रेण सूक्त्या वचनमात्रेण त्यक्तरोगाः सुदे-

> कैश्चिद्विष्णुः स दृष्टः क्व च गणप इनः शक्तिरूपोपि शंभुः सार्वात्म्याध्यासदार्ढ्यात्सकलतनुरसावेक एव त्वनेकः ॥ दृष्ट्या स्युर्यस्य सूक्त्या बहव उपगतास्त्यक्तरोगाः सुदेहाः किं पादांभः पिबंतो न भवपरगतास्तं मयूरेशमीडे ॥ ८२ ॥ तस्मात्स प्रवसन्निह दुर्गमगमद्यच्चाणुभिस्त्वक्षमं गंतुं क्वारिभिरर्चितो नृपतिना मासं स्थितः श्रीगुरुः ॥ दौर्वासं च पुरं गतोऽतितपसाऽत्रापीह वल्मीकगो दुर्वासा इह चावसत्तिथिदिनं राजार्चितः श्रीगुरुः ॥ ८३ ॥ प्राप्तो भाग्यपुरं ततोत्र बहुभिः संपूजितः स्वैः परै राजार्हैर्वसनैः सुवर्णमणिभिन्नमुद्रादिभिर्भूषणैः ॥ तत्रत्यं यवनं नृपस्य सचिवं निन्युर्बलाद्देशिकं शिष्टास्तेन च सत्कृतोऽवददिमं श्लोकं सदर्थं गुरुः ॥ ८४ ॥

हाश्च बभूवुः । यस्य पादांभः पादोदकं पिबंतो भवपरगताः संसारपारं प्राप्ताः न भवेयुः किम् । अपि तु मुक्ता एव बभूवुः । तमहं मयूरेश्वरमीडे । सर्वमनोरथपूरणे गुरुरेव समर्थ इत्यर्थः ॥ ८२ ॥ तस्मादौदुंबरीस्थानात्प्रवासं कुर्वन् श्रीगुरुः स मयूरेश्वरः दुर्गं भाषया दोवकोंडेति प्रसिद्धमगमत् । यच्च दुर्गं अणुभिः सूक्ष्मजीवैर्गंतुमक्षमं तदारिभिः शत्रुभिर्गंतुं क्व क्षमं कथं समर्थं भवेत् । न कुतोपि शत्रूणां तत्र प्रवेशोस्तीत्यर्थः । तत्र श्रीगुरुर्मयूरेश्वरो नृपतिना सोमेश्वराख्येनार्चितः सन् मासपर्यंतं स्थितोभूत् । दौर्वासं पुरं दुर्वासक्षेत्रं डुंबाकेति प्रसिद्धं च गतः । अत्र दुर्वासा ऋषिरतितपसा वल्मीकगोस्ति । अद्यापि वर्तते । इह च दुर्वासःक्षेत्रे श्रीगुरुः राज्ञार्चितः सन् पंचदशदिनपर्यंतमवसत् ॥ ८३ ॥ अथ भाग्यनगरे गुरोर्वृत्तमाह । प्राप्त इति त्रिभिः । ततः भाग्यपुरं प्राप्तो

गुरुस्तत्रस्थैः स्वशिष्यैः परैश्च बहुभिः कर्तृभिः राजयोग्यवसनैः सुवर्णादिभिश्च सम्यक् पूजितस्तत्र शिष्टाः वरिष्ठाऽधिकारिणो देशिकं मयूरेश्वरं तत्रत्यं भाग्यनगरस्थं नृपस्य सचिवं प्रति बलात्कारेण निन्युः। तेन च सत्कृतो गुरुर्मयूरेश्वरः सदर्थं उत्तमार्थयुक्तं इमं वक्ष्यमाणं श्लोकमवदत् ॥ ८४ ॥ तमेव श्लोकमाह। स्वीयानिति। यो भवान्स्वकीयान् भक्तजनान् सेवकान् अनेकविभवैर्बहैश्वर्यैः प्रीणाति। ऐश्वर्यदानेन प्रीतिं करोति। ये तु नित्यं भगवतो हरेः पदांबुजरताः वासोन्नमात्रार्थिनोऽन्नवस्त्रमात्रस्यार्थिनो याचकाः संति।तानेतान् प्रति भगवद्भक्तान् भवानुपेक्षते यदि। तर्हि एतैः पुनः किं कर्तव्यम्। एतान् को रक्षति। न कोपीत्यर्थः। ननु मत्सेवकानहमिव हरेः सेवकान्हरिः कुतो न रक्षतीत्याशंक्य हरिणा त्वय्येव सामर्थ्यं निहितमित्याह। हरिः भुजगारु

स्वीयान्भक्तजनाननेकविभवैः प्रीणाति यः सर्वदा ये नित्यं भगवत्पदांबुजरता वासोन्नमात्रार्थिनः ॥ तानेतान्समुपेक्षते यदि भवान्किं कार्यमेतैः पुनर्भुजगारुन्मुलके निधाय जगतां भारं हि शेते हरिः ॥८५॥ सार्थं पद्यमिदं निशम्य सचिवः स्वाख्यासुशब्दान्वितं पीतार्हांशुकके चतुःशतमिता मुद्रास्तथा राजतीः॥ संतुष्टो गुरवे ददौ स यवनोप्येकेक्षयैवासकृद्दृष्टेभ्योप्यणु नो ददाति हि महद्दृष्ट्या न कः स्याद्वशः॥८६॥गत्वाऽस्मान्नगरं स्वकीयमभवत्काशीतिचित्तो गुरुर्ज्ञातः शिष्यपरैः समेत्य वसुमत्क्षेत्रोत्सवं चाश्विने ॥ शक्त्या हेममुखार्चितोथ निखिलैः स्वर्णाक्षजोम्र्यैकया भक्त्यैवाबलयापि किं परकथेत्यापातिरुक्मं गुरुः ॥ ८७ ॥

न्मुलुके एतदाख्ये त्वयि जगतां भारं जगन्निर्वाहसामर्थ्यं निधाय चिंतारहितः शेते समुद्रे शयनं करोति हीति निश्चयेन। तस्मात्त्वमेव स्वसेवकानिव भगवद्भक्तानपि अन्नवस्त्रमात्रदानेन रक्षेत्यर्थः ॥ ८५ ॥ अथ सचिवः स्वनाम्ना सुशब्दैश्चान्वितम् अर्थसहितमिदं पद्यं श्रुत्वा संतुष्टः सन् यवनोपि सः पीतवर्णेऽर्हांशुके उत्तमवस्त्रे शालजोडीति प्रसिद्धे तथा राजतीः रजतमय्यश्चतुःशतमुद्राः गुरवे एकेक्षयैव एकवारदर्शनमात्रेणैव ददौ। योऽसकृत दृष्टेभ्यः साधुभ्योऽणु किंचिदपि नो ददाति। सोपि गुरोः सत्कारं कृतवानित्यर्थः। हि यतः महतां दृष्ट्या दर्शनेन को वशो न स्यात्। अपि तु सर्वोपि वशो भवेदेवेत्यर्थः ॥ ८६ ॥ एवं गुरोर्भाग्यनगरे प्रतिष्ठामुपवर्ण्य काशीयात्राप्रसंगमाह। तस्मादिति षड्भिः। अथ गुरुस्तस्माद्भाग्यनगरात्स्वकीयं पुरं गत्वा काश्यां इतिः

गमनं चित्ते यस्य स काशीं गंतुकामोऽभवत् । तदा शिष्यैः कर्तृभिः परैश्च ज्ञातः सन् आश्विनमासे वसुमतीक्षेत्रे यो उत्सवस्तं प्रति समेत्य सर्वजनैः स्वस्व शक्त्या हेमादिभिरर्चितोऽभवत् । अबलयाऽकिंचनयापि स्त्रिया कर्त्र्या भक्त्यैव निमित्तभूतया एकया स्वर्णाक्षजोर्म्या सुवर्णमयोऽक्षः कर्षस्तज्जन्यया ऊर्म्या मुद्रिकया गुरुरर्चितः । 'अंगुलीयकमूर्मिका' इत्यमरः । एवं सामान्ययापि पूजितः । परस्यान्यस्य कथा किं का वक्तव्येति यावत् । इति प्रकारेण गुरुर्मयूरेश्वरोऽतिरुक्मं बहुसुवर्णं प्राप । गुरोः काशीयात्रानिमित्तं बहुभिर्धनं दत्तमित्यर्थः ॥ ८७ ॥ अथ मयूरेश्वरगुरुः शिष्ययुक्तः पुत्रस्नुषासहितो वृषरथाश्वैः काशीमगात् । मार्गे येऽतिथयः समये प्रयांति आयांति । तान् । बहून् प्रीत्या संतोषेणान्नदाताऽभवत् । स मयूरेश्वरः आदौ प्रयागे विधिवत् इतरैर्जनैः सह

शिष्याढ्यः ससुतस्नुषोऽगमदथो काशीं गुरुर्गोरथाश्वैर्मार्गेऽतिथयः प्रयांति समये तेभ्योऽन्नदो भक्तितः ॥ स्नात्वादौ विधिवत्प्रयागइतरैः काश्यां कृतोक्तक्रियोऽथो गत्वा स गयां चकार विहितं यात्रामिति त्रिस्थलीम् ॥ ८८ ॥ गत्वा मुक्तिपुरं स तत्र च पुनः संन्यासिनोऽभोजयत्पक्वान्नैः परिपूज्य गंधकुसुमैः प्रत्येकमार्यांशुकैः ॥ भाष्यादीन्यथ पुस्तकानि जगृहे विक्रेतुरुक्ताद्धनाच्छ्रुत्वा भास्करवित्पथं ययुरभिज्ञं पंडितास्तं मुहुः ॥ ८९ ॥ भाष्यस्याथ गुरोः क्वचित्प्रवचनं स्वच्छार्थसद्बोधकं श्रुत्वार्यं निजदेशगंतुमनसं प्राहुर्बुधाः क्षेत्रगाः ॥ स्थित्वाऽत्रोपनिषत्सुभाष्यमखिलं नः श्रीमता प्रोच्यतां चातुर्मास्यभवद्व्ययोऽप्यखिल एवास्माभिरद्धार्प्यते ॥ ९० ॥

स्नात्वा काश्यां कृता उक्तक्रिया येन स बभूव । अथ स गयां गत्वा तत्र विहितं चकार । इति प्रकारेण त्रिस्थलीं यात्रां चकार ॥ ८८ ॥ पुनः मयूरेश्वरः काशीमित्यात्र सकलान्संन्यासिनः प्रत्येकमुत्तमवस्त्रैर्गंधपुष्पादिभिः परिपूज्य पक्वान्नैरभोजयत् । अथ भाष्यादीनि पुस्तकानि विक्रेतुः सकाशात् उक्तात् विक्रेतृकथितात् धनात् धनार्पणेन जगृहे । तदा काशीस्थपंडिताः भास्करवित्पथं भास्करपंडितसंप्रदायिनमभिज्ञं ज्ञानिनं मयूरेश्वरं श्रुत्वा तं प्रति मुहुर्ययुः । गुरुमुखेन विशेषश्रवणार्थमित्यर्थः ॥ ८९ ॥ अथ कदाचित् गुरोः मयूरेश्वरसकाशाद्भाष्यस्य प्रवचनं व्याख्यानं स्वच्छार्थस्य स्पष्टार्थस्योत्तमयुक्त्या बोधकं श्रुत्वा स्वदेशं प्रति गंतुमनसमार्यं गुरुं प्राहुः प्रार्थितवंतः । हे गुरो श्रीमता त्वयाऽत्र काश्यां स्थित्वा सर्वमुपनिषदां सुभाष्यं नोऽस्मान्प्रति प्रोच्यताम् ।

चतुर्मासेषु भवो जायमानो यो भवतां व्ययः सोपि सर्व एवाद्यैवास्माभिरर्प्यते । सावधारणनिर्देशात्सत्पुरुषस्य सहवासार्थं मयूरेश्वरगुरुमत्यादरेण प्रार्थितवंत इति भावः ॥ ९० ॥ इति प्रार्थनां श्रुत्वा गुरुश्च तानिति प्राह । इति किम् । हे बुधाः काशीस्थपंडिताः वयम् अत्रत्यान् काशीस्थान्वो युष्मान् अणु किंचित्प्रदातुं महत्काशीक्षेत्रं प्राप्ताः । युष्मत्सकाशाद्ग्रहीतुम् अन्नादि प्रतिग्रहीतुं नो आगताः । चेदहमिह काश्यां स्थास्यामि यदि । तदा अन्नपूर्णा च मह्यमन्नादि न दास्यति किम् अपि तु दास्यत्येव हि। अमी च शतं यात्रिगो मां त्यक्त्वा स्वपुरं न गच्छंति । अतः सर्वैर्यात्रिभिः सह स्वपुरं गच्छामीत्यर्थः ॥ ९१ ॥ एवं काशीस्थैः प्रार्थितोपि स्वनगरमगादित्याह । सत्कृत्येति । अथ स मयूरेश्वरगुरुः पुरोहितादीन् बुधान्सत्कृत्य विश्वेशादीन् नमन्

तांश्चाहेति गुरुर्वयं स्वविषयात्क्षेत्रं महत्त्वागताश्चात्रत्यानणु वः प्रदातुमथ नो युष्मद्ग्रहीतुं बुधाः ॥ स्थास्याम्यत्र यदा न दास्यति हि मेऽन्नाद्यन्नपूर्णा च मां त्यक्त्वाऽमी न शतं व्रजंति च पुरं गच्छाम्यतोद्याऽखिलैः॥९१॥ सत्कृत्याथ बुधान्पुरोहितमुखान्विश्वेशमुख्यान्नमं स्तत्रत्यैरपि सत्कृतः स निरगात्पूज्यः पथाऽगात्पुरीम् ॥ ऐक्यार्थं त्वथ गंगयोः समगमन्नंदीतटं चोत्सवाच्छिष्यैस्तत्र निवेशितोऽत्र विहितं कर्माकरोत्सव्ययी॥९२॥कालेनाथ स मल्लिकार्जुनमगाद्भाग्ये पथाणु स्थितश्चक्रेतिप्रियकीर्तनं श्रुतिमतं नारायणार्णाऽर्थवत् ॥ श्रुत्वैवेंद्रजिदर्पयत्सततमह्न्यह्न्यर्धरौप्यं विदे राजाहुश्च सदःस्थिताः पुनरयं वोऽध्वाऽस्तु चावर्तने ॥ ९३ ॥

काशीस्थैरपि सत्कृतः सन् निरगात् निर्गतः । पूज्यः सः पथा मार्गेण पुरीं वसुमतीमगात् । अथ गंगयोर्गोदाभागीरथ्योरैक्यार्थं नंदीतटं समगमत् । तत्र च नंदीतटे उत्सवाद्धेतोः शिष्यैर्निवेशितः सत्कारपूर्वं स्थापितः आगमनसमय एव स्थातुं निश्चितः सन् ततोऽत्र गोदायां विहितं कर्माकरोत् । किंभूतः सव्ययी सव्ययकर्ता बहुधनव्ययेन सर्वं कर्म कृतवानित्यर्थः ॥ ९२ ॥ एवं मयूरेश्वरगुरोः काशीयात्रामुपवर्ण्य मल्लिकार्जुनयात्रां वार्षिकप्राप्तिं चाह । कालेनेति । अथ कालेन मयूरेश्वरो मल्लिकार्जुनमगात् । मार्गेण भाग्यनगरे किंचित्कालं स्थितः सन् वेदमान्यं नारायणवर्णार्थयुक्तमतिप्रियं कीर्तनं चक्रे । तच्छ्रुत्वा इंद्रजिन्नामाधिकारी राजा सततं निरंतरं प्रत्यह्नि अर्धरौप्यं विदे मयूरेश्वरायार्पयत् । सदसि स्थिताश्चाधिकारिणः पुनरावर्तने युष्माकं मार्गोयमे

वास्तु इत्याहुः । श्रीमता भाग्यनगरमार्गेण पुनरागंतव्यमित्याहुरित्यर्थः ॥ ९३ ॥ गुरुश्च मयूरेश्वरस्तां मल्लिकार्जुनयात्रामपरां च दक्षिणदेशीयां यात्रां कृत्वा भाग्यं नगरं ययौ । तदा भक्तिमान् शंकरराजः तं मयूरेश्वरं स्वगृहं प्रत्याह्वयत् पूजितवांश्च । अथ वित् मयूरेश्वरस्तस्मै शंकरराजाय देव्यर्थस्य विशेषो यस्मिन् तत् पद्यमवदत् । स च शंकरराजः परं श्रेष्ठं इष्टार्थं च श्रुत्वाऽऽनंदबुद्धिः सन् विदे मयूरेश्वराय प्रत्यह्नि एकरौप्यं निष्कं सदार्पयत् ॥ ९४ ॥ अथ स्वपुरं प्राप्तः मयूरेश्वर इत्यध्याहारः । ततः कदाचित्प्रवासस्थस्य सद्गुरोर्महान् ज्वरोऽभूत् । तदा शिष्यैर्वाहिते याने गतः स्थितः सन् स्वपुरमगात् । स्वेच्छायुरिच्छामरणो गुरुः शीघ्रमज्वरो ज्वरहीनोऽभवत् । महद्दंडांतं जातमित्यर्थः । अथ कदाचिद्गुरुः स्वस्थितये स्वसमाध्यर्थं सुंदरं विवरं कृत्वा ऊर्ध्वम्

यात्रां तामपरां विधाय च ययौ भाग्यं गुरुस्तं तदा राजा शंकर आह्वयन्निजगृहं चापूजयद्भक्तिमान् ॥ विदेव्यर्थविशेषपद्यमवदत्तस्मै स चेष्टं परं श्रुत्वानंदमतिर्विदेऽर्पयदथाह्नयह्न्येकरौप्यं सदा ॥ ९४ ॥ प्राप्तोथ स्वपुरं ततः प्रवसतोऽभूदुज्वरः सद्गुरोः शिष्यैर्वाहितयानगः पुरमगात्स्वेच्छायुराश्वज्वरः ॥ कृत्वा स्वस्थितये गुरुः सुविवरं चोर्ध्वान्नपूर्णालयं कर्तुं प्राक्परतो मठस्य च सहाद्वारं समैच्छद्व्ययात् ॥ ९५ ॥ स्थानं प्राक्तु मठान्न नापितगृहेणासीन्महाद्वार्यणु तन्निष्कासितुमेव पद्यमकरोत्सर्वाधिकारिश्रुतौ ॥ ज्ञात्वा ये तु न मेनिरे ह्यधिकृतो भ्रष्टाधिकारास्ततः पार्श्व्यैकोऽधिकृतां वरोथ स समीक्ष्यार्यं चकारोक्तवत् ॥ ९६ ॥

अन्नपूर्णास्थानं कर्तुं मठस्य पूर्वपश्चिमतः महाद्वारद्वयं च धनव्ययात्कर्तुं सम्यगिच्छितवान् ॥ ९५ ॥ तत्र तदा मठात् प्राक् पूर्वतो महाद्वारे तद्विषये नापितगृहेणाणु स्थानं नासीत् । तत् नापितगृहं निष्कासितुमेव सर्वाधिकारिणः श्रुतौ श्रवणनिमित्तं पद्यं कृतवान् । "देशिकेंद्रमहाद्वारकीलमुत्पाटितं हि यैः । परलोकमहाद्वारार्गलमुद्घाटितं तु तैः" इति पद्यं कृतवानित्यर्थः । एतत्पद्यं ज्ञात्वा ये तु अधिकारिणो न मेनिरे । ते हि अधिकारात् भ्रष्टा बभूवुः । अथाधिकारिणां वर एकः पार्श्वी आर्यं मयूरेश्वरगुरुं सकृत्समीक्ष्य दृष्ट्वा सकृद्दर्शनमात्रेण यथोक्तं तथाऽकरोत् । नापितगृहं निष्कासितवानित्यर्थः ॥ ९६ ॥

अथ विदा मयूरेश्वरेण केशच्छिदे नापिताय गृहार्थं पंचशतं धनं दत्तम् । अथापि स नापितो गृहं नात्यजत् । अथ ज्ञो मयूरेश्वरो बहिर्द्वारार्थं गां भूमिं नृभि रखनत् । तदा नापितस्तु स्वमातारि क्रोधेन महत् भित्तिखंडमहनत् । ततः आश्वासां किंचिच्छ्वासयुक्तां तां गुरुर्वीक्ष्य दृष्ट्वा तीर्थोदकेनाजीवयत् । यतो मंत्रज्ञः । मंत्रज्ञो हि देवताकृपया सर्वं करोतीत्यर्थः ॥ ९७ ॥ गृहपे नापितेऽस्मात्स्थानाद्याते सति अथार्यो गुरुर्गोपुरनिभे द्वारे प्राक्प्रत्यक् पूर्वपश्चिमतो द्वारेऽकरोत् । तयोर्मध्ये ऊर्ध्वं पार्श्वयोश्च विस्तृतं लघु द्वारमकरोत् । तथा प्रागपाक् पूर्वदक्षिणभागे पाकस्थानं च कृतवान् । मठस्योर्ध्वगृहगतां खर्परतां खर्परस्थलीं मुक्त्वा निष्कास्य सौधां सुधामयीमूर्ध्वस्थलीं चक्रे । पूर्वालये पूर्वस्थाने हंसेशं हंसारूढं शिवं चक्रे । परे पश्चिमे आलये हंसे यंत्रं हंसस्थितगुरुयंत्रं

दत्तं पंचशतं विदा गृहधनं केशच्छिदेथापि नो गेहं सोऽत्यजदाखनद्बहिरथो द्वाराय गां ज्ञो नृभिः ॥ केशच्छित्त्वहनत्स्वमातरि मह द्भित्तेस्तु खंडं रुषाऽऽश्वासां वीक्ष्य गुरुः स तीर्थपयसा चाजीवयन्मंत्रवित् ॥ ९७ ॥ यातेऽस्माद्गृहपेऽथ गोपुरनिभे प्राक्प्रत्यगार्योऽ करोद्द्वारे मध्यलघूर्ध्वपार्श्ववितते पाकस्थितिं प्रागपाक् ॥ मुक्त्वा खर्परतां मठोर्ध्वगृहगां सौधां च पूर्वालये .हंसेशं परहंसयंत्रमिति वै विघ्नेशविष्णुस्थितिम् ॥ ९८ ॥ तीर्थांतस्थगुहाचिदंबरशिवं संस्थाप्य काश्या अहर्यात्रां प्राह च पद्यतो गुरुमुखैर्विश्वेश्वराद्यैः शिवात्॥ काशीत्थं भजनं च सार्थमवदत्स्वयाद्यः परो वा निजो नानीहात्मविदार्यसंस्थितिरिहाऽनंत्याध्वगानां बहिः ॥ ९९ ॥

क्रमेण गणेशविष्णुस्थितिं शुकानंदालये महागणपतिस्थापनं देशिकालये विष्णुस्थापनम् इति वै अकरोत् । हंसस्थापने च कारणं श्रीगुरुणोक्तम् । “वाह नत्वात् ध्वजत्वाच्च हंसदीक्षात्वतस्तथा । हंसधर्मसमायोगाच्चतुर्धा हंससंस्थितिः” इति । गुरुयंत्रं च मंत्रशास्त्रे प्रसिद्धम् ॥ ९८ ॥ तीर्थांतस्थायां गुहायां चिदंबराख्यं शिवं संस्थाप्य काश्यां विश्वेश्वराद्यैरिवोपलक्षितैर्गुरुकाश्यां गुरुमुखैः शुकानंदाद्यैः क्रमेणात्र मठे काश्या अहर्यात्रां पद्यतः प्राह । शिवादनंतरं काशीस्थं भजनं सार्थं यथा स्यात्तथाऽवदत् । इह गुरुकाश्यां परकीयः स्वकीयो वा शिष्यादिः स्त्रीयुक्तो न भवतु न वसतु इह । मठेऽनीहानामात्मविदामा र्याणां श्रेष्ठानां च संस्थितिर्भवतु । अनंत्याः अंत्यजभिन्ना येऽध्वगा मार्गगामिनस्तेषां बहिः स्थितिर्भवत्वित्यवददिति संबंधः । पद्यतोहर्यात्रा च यथा

काश्यां—"विश्वेशं माधवं धुंढिं दंडपाणिं च भैरवम्। वंदे काशीं गुहां गंगां भवानीं मणिकर्णिकाम्" इत्यहर्यात्रा। तत्र गुरुकाश्यां च—"विश्वेश्वरः शुकानंदो देशिको बिंदुमाधवः। धुंटियंज्ञेश्वरः साक्षाद्रामानंदस्तु भैरवः। नारायणो दंडपाणिर्जयंत्यंबान्नपूर्णिका। एतदीयपदं काशी गंगाभिनवपूर्विका। चिदंबरेशाकलिता गुहा सन्निहितांतरा। दशपापापहं नित्यं त्रिदशैरभिवंदितम्। एतद्धि नवकं पुंसा पठनीयं प्रयत्नतः। एतद्धि नवकं पुंसा कीर्तनीयं प्रयत्नतः" इत्युक्ता। अत्राभिनवगंगायां मणिकर्णिकाया अंतर्भावं कृत्वा नव स्थानानि ज्ञेयानि। सार्थकं शिवकाशीभजनं च। "शिवकाश्योः सादृश्यं विराजते तीर्थमध्यमिलितेन। तच्छीलेन नरेण हि विभाव्यते सर्वतीर्थफलितेन" इत्युक्तम्। यथोक्तं शैवागमे—"वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः। बुभुत्सायास्तथा ज्ञोऽस्मीत्याभासा ज्ञानवस्तुनः। असत्यालंबनत्वेन सत्यः सर्वजडस्य तु। साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः। आनंदरूपः सर्वार्थसाधकत्वेन हेतुना। सर्वसंबंधकत्वेन संपूर्णः शिवसंज्ञितः। जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः" इति। शिवस्य ज्ञानप्रकाशरूपत्वेन काश्याश्च काशृदीप्ताविति प्रकाशरूपत्वेन शिवकाश्योः साम्यम्। तीर्थशब्दस्य "तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु" इति वेदक्षेत्रवाचित्वेन च शिवनाम्नो वेदत्रयीमध्यगतत्वं काश्याश्च। "अयोध्या मथुरा माया काशी कांची ह्यवंतिका" इति मुक्तिक्षेत्रमध्यनिविष्टत्वेन च शिवकाश्योः सादृश्यमिति भावः। एवं शिवकाशीगुरुकाश्योः साम्यं वर्णितमित्यर्थः॥ ९९॥ स च मयूरेश्वरोऽत्र मठे पूजार्थं पूजकादीन् स्वार्पणाद्धनार्पणेन योजितवान्। नंदीतटे चादीर्घेऽल्पे रम्ये भुवने गंगामूर्तिं दशहराख्यपर्वणि सोत्साहं उत्साहसहितं यथा स्यात्तथा स्थापितवान्। प्रतिवर्षमुत्साहं च कृतवानित्यर्थः। ततस्तुर्याश्रमेच्छुः संन्यासेच्छावान् श्रीगुरुः सकृत्स्वीयान् ईक्षितुमुद्दृण उत्तमदयावान् क्रमेण गतिर्गमनं यस्य स क्रमगामी भाग्यनगरं ययौ। पुनर्दर्शनं न भविष्यतीति ज्ञानवानित्यर्थः॥ १००॥

पूजार्थं च मठेऽत्र पूजकमुखान्सोऽयोजयत्स्वार्पणाद्गंगामूर्तिमदीर्घरम्यभुवने नंदीतटेऽस्थापयत्॥ सोत्साहं दशहाख्यपर्वणि ततस्तुर्याश्रमेच्छुः सकृत्स्वीयानीक्षितुमुद्दृणः क्रमगतिर्भाग्यं ययौ श्रीगुरुः॥ १००॥

अत्र भाग्यनगरे वसतस्तस्य मयूरेश्वरस्य माःषट्कं षण्मासा गताः। किंभूतस्य आर्यैः श्रेष्ठपुरुषैः कर्तृभिः प्रत्येकं स्वेस्वे गृहेऽमौल्यभूषावस्त्रैर्हैम्या दक्षिणया सुवर्णदक्षिणया चार्चितौ पादौ यस्य पुनः किंभूतस्य सहचरैः सह स्वाद्वन्नभोक्तुः पुनः किंभूतस्य ज्येष्ठयोर्ज्येष्ठाश्विनयोर्ब्राह्मणभोजनमुखौ गुरूत्साहौ शुकानंददेशिकानंदोत्साहौ व्ययतः धनव्ययेन कुर्वतः॥ १०१ ॥ अत्र गौरीशंकरधारणस्य प्रवृत्तिः कृतेत्याह। मुक्तिमिति। कदाचिद्गुरुरनीहाः निष्कामाः सेहाः सकामा ये गुरुम्वरणमाप्तास्तान्प्रति तेभ्यो मुक्तिं भुक्तिमुत्तमभोगं च प्रदातुं द्विमुखान् गौरीशंकरसंज्ञकानक्षान्मंत्रं वदन्सन् प्रत्येकं दक्षिणकरे बबंध। तन्मंत्रस्तु । "गुरुपादांकितानां हि गौरीशंकरधारणात्। गुरुप्रसादात्सततं भोगमोक्षौ करस्थितौ" इति । ये त्वन्ये महांतस्तेपि गुरुहस्ताद्रुद्राक्षं ययाचिरे। विद्वान् याचको मयूरेश्वरेण

माःषट्कं गतमत्र तस्य वसतः प्रत्येकमार्यैर्गृहे स्वेस्वे भक्तियुतैः समर्चितपदस्यामौल्यभूषांशुकैः ॥ हैम्या दक्षिणया च सत्सहचरैः स्वाद्वन्नभोक्तुर्गुरोरुत्साहौ व्ययतो द्विजाशनमुखौ ज्येष्ठयोः कुर्वतः ॥ १०१ ॥ मुक्तिं भुक्तिमनीहसेहनिजभक्तेभ्यः प्रदातुं गुरुर्गौरीशंकरसंज्ञकान्द्विवदनानक्षांस्तु मंत्रं वदन् ॥ प्रत्येकं च बबंध दक्षिणकरे येन्ये महांतोपि ते रुद्राक्षं तु ययाचिरे गुरुकराद्विद्वान्कः स्वं त्यजन् ॥१०२॥ ऊर्जे प्रार्थनया निनाय सकलैस्तं विठ्ठलः स्वं गृहं यः कन्यान्वयजो हि भास्करगुरोस्तत्संस्थितेश्चाधिकृत्॥ तेनाकारि महान्व्ययो गुरुकृताऽब्दीये जयंत्युत्सवे स्वान्यैश्चार्चित उद्गमाग्निशकटाद्भाग्यं गुरुः प्रापितः ॥ १०३ ॥ मासाः सप्त गुरोरिहाध्वनि तथा पंचेति वर्षं गतं संस्थानागमनात्तदाशु स ततो निर्गंतुकामोऽभवत् ॥ तावद्रामहरिर्गुरुं निजगृहं नीत्वांगनां दीक्षितुं सच्चक्रे ऽत्यहमत्र चेक्षितुमगान्मंत्री नरेंद्रोपि तम् ॥ १०४ ॥

दीयमानं स्व धनं त्यजन् अगृह्णन् गुरुकराद्रुद्राक्षं ययाचे । गौरीशंकरस्य द्विरूपत्वात् गौर्या अंशेन भोगः शंकरांशेन मोक्षश्च भवतीत्यर्थः ॥१०२॥ कश्चिद्विठ्ठलदेवाख्यः ऊर्जे कार्तिकमासे प्रार्थनया तं मयूरेश्वरं सकलैः शिष्यादिभिः सह स्वगृहं प्रति निनाय। यो विठ्ठलदेवो भास्करगुरोर्हि कन्यावंशजस्तस्य संस्थानेऽधिकारी चास्ति। तेन विठ्ठलेन कर्त्रा गुरुणा कृतेऽब्दीये प्रतिवार्षिके जयंत्युत्सवे महान्व्ययोऽकारि कृतः। तत्र स्वकीयैरन्यैश्चार्चितो गुरुरुद्गमेनोर्ध्वगामिनाऽग्निशकटेन ताम्रनिर्मितेन यानभूतेन भाग्यनगरं प्रापितश्च विठ्ठलदेवेनेत्यनुवृत्तिः॥ १०३॥ गुरोर्मयूरेश्वरस्य इह भाग्यनगरे सप्तमासास्तथाध्वनि मार्गे पंचमासाश्चेति संस्था

नागमनावं वसुमत्या निर्गमात् वर्षे गतं यदा । तदा स गुरुस्ततो भाग्यनगरादाशु गंतुकामोऽभवत् । यावद्गंतुकामस्तावत् रामहरिः रामसिंहाख्योऽधिकारी गुरुं प्रति स्वगृहं नीत्वांऽगनां स्वस्त्रियं दीक्षितुमुपदेष्टुमगात् ॥ १०४ ॥ अथ स नरेंद्रः सानंदमुखं सद्गुरुं समीक्ष्य विनयानंदान्वितः सन् नमन्नाह । हे गुरो त्वन्मुखमालोक्य मम हृदि आनंदोंजसा कथमभूत् । युष्मद्दर्शनमात्रेण ममानंदः कथं जात इत्यर्थः । अखिलवित्सर्वज्ञस्तं नरेंद्रं प्रोचे उक्तवान् । हे नरेंद्र सर्वगतोप्यानंदो देहहृदि देहबुद्धिपुरुषे अणु स्फुरति । अमलहृदि आत्मज्ञे स आनंदो महान् स्फुरति । यथा आर्ये श्रेष्ठे आदर्शे । अयं भावः । अल्पादर्शेऽल्पमेव मुखादि प्रतीयते । महादर्शे तु महत् प्रतीयते यथा । तद्वत् मलिनांतःकरणे सामान्यं सुखं प्रतीयते । त्वत्सदृशे शुद्धांतःकरणपुरुषे सत्पुरुषदर्शनेन

साऽऽनंदास्यगुरुं समीक्ष्य विनयानंदान्वितोऽसौ नमन्प्राहालोक्य भवन्मुखं हृदि ममानंदोंजसाऽभूत्कथम् ॥ तं प्रोचेऽखिलवित्किलाखिलगतानंदोप्यणुर्देहहृद्यात्मज्ञे स महान्स्फुरत्यमलहृद्यार्ये यथा दर्शके ॥ १०५ ॥ रोहिण्यामभवद्धि कृष्ण इति यश्चक्रेऽतिलोकं यशश्चाख्या भागवतेप्यलेखि गुरुणाऽज्ञाता विहारीति सा ॥ आप्तश्चेति सुदामसत्ततुशुकानंदस्य तस्यासि वै नप्तानंदतनो नृप त्वयि न चानंदोद्भवोऽत्यद्भुतम् ॥ १०६ ॥ श्रुत्वेत्याह नरेट् सदीक्षणमरं संसारिणां दुर्लभं सत्संगस्तु ततोपि चेदणु भवेत्साफल्यकृज्जन्मनः ॥ भूयात्सोऽप्यधुना ममेति बहुधा संप्रार्थ्य चावासयत्तत्रैवार्यवरं हि तद्व्ययततावातं गृहेशं वदन् ॥ १०७ ॥

महानानंदो भवतीति ॥ १०५ ॥ किं च कारणांतरेणापि त्वय्यानंदसंभवोस्तीत्याह । रोहिण्यामिति । यस्तव पितामहो मंत्री रोहिण्यामभवत् । इति हेतोः स कृष्णोस्ति । हि यतः सः अतिलोकं लोकातीतं यशश्चक्रे । गुरुणापि देशिकेंद्रेण गुरुभागवतेऽज्ञाता विहारीत्याख्याऽलेखि लिखिता । विहारी च सुदामैव सत्तनुरुत्तमजन्मा शुकानंदस्तस्याप्तो मित्रमस्ति । इति चांजसा गुरुणा गुरुभागवते अलेखि । अतस्त्वं तस्यानंदतनोर्विहारीनाम्नो मंत्रिणो नप्तासि वै निश्चयेन । हे नृपातस्त्वय्यानंदोद्भव इति अद्भुतं न चास्ति । रोहिण्यां जन्मना उत्तमकीर्त्या गुरुभागवते गुरुणा लेखनेन च मंत्रिणः कृष्णरूपत्वं तद्वंशे जातस्य तव चानंदरूपत्वमिति भावः ॥ १०६ ॥ इति श्रुत्वा नरेट् नरेंद्र आह । हे गुरो सदीक्षणं सत्पुरुषदर्शनं संसारिणामरमत्यंतं दुर्लभमस्ति । सत्संगस्तु

ततोपि दुर्लभतरोस्ति । स चेदणु किंचिदपि भवेत्तर्हि जन्मनः साफल्यकर्ता भवति । स साधुसंगोऽधुना मम भूयात् भवतु । इति बहुधा संप्रार्थ्य तस्य गुरो र्व्ययतो नित्यव्ययार्थं गृहपतिम् आमं च वदन् सन् आर्यवरं गुरुवरं तत्रैव रामसिंहगृहेऽवासयत् । एवं नरेंद्रो मयूरेश्वरगुरौ बहुभक्तिमानासीदित्यर्थः ॥ १०७ ॥ तत्परैर्नरेंद्रसेवकैः नव इव प्रथमदिवस इवार्चितः सद्गुरुस्त्रीन्मासानवसत् । किं कुर्वन् अन्यपुंभिरितरपुरुषैः वीक्षिता न भवंति ता अनन्यपुंवीक्षिताः राज्ञोंतःपुरे योषितः स्त्रियश्चोपदिशन् । स च नरेंद्रो द्व्येकाहोंतरितं यथा स्यात्तथा विदो ज्ञानस्य सत्कथाः श्रोतुं गुरुं ययौ । तं गुरुमंतर्गृहे नीत्वा स्वप्रियाभिः स्वयं च वस्त्रभूषणाद्यैः अयजत् पूजयामास ॥ ८ ॥ अथ स्वदेशं गंतुमुत्सुकं मयूरेश्वरगुरुं ज्ञात्वाऽसौ नरेंद्रस्तत्कृते मयूरेश्वरार्थं प्रतिशरत्

मासांस्त्रीनवसद्गुरुर्नव इवाह्न्यहन्यर्चितस्तत्परै राजांतःपुरयोषितोप्युपदिशंश्चानन्यपुंवीक्षिताः ॥ द्व्येकाहोंतरितं ययौ स च गुरुं श्रोतुं विदः सत्कथास्तं नीत्वांशुकभूषणैरयजदंतः स्वप्रियाभिः स्वयम् ॥ ८ ॥ गंतुं देशमथोत्सुकं गुरुमसौ ज्ञात्वाऽलिखत्तत्कृते षष्ट्या रौप्यशतत्रयं प्रतिशरच्छ्रीशालवालव्ययात् ॥ दोलारोपितमार्यमग्र्यनिनदैर्ढक्कादिवाद्यैर्भटैर्हस्त्यश्वांघ्रिचरैरुपर्यभिगतेक्ष्यं प्रापयत्प्राक्स्थितिम् ॥९॥ सेनान्यं त्ववदद्गुरुः शिबिकया यानं परस्यासकृन्मेभूत्सास्तु निजेति देशिकवचः प्रोचे स राज्ञेऽथ सा ॥ राज्ञाऽकारि दिनैर्नवा गुरुमुदे साहस्ररौप्यव्ययाद्दत्तार्याय च निर्ययौ गुरुरथास्माद्दोलयाऽमोघवाक् ॥ ११० ॥

प्रतिवर्षं षष्ट्या युक्तं शतत्रयं श्रीशस्य लक्ष्मीपतेर्योऽलवालसंस्थाने व्ययस्तस्मादलिखत् । अलवालसंस्थानाद्दानपत्रपूर्वकमुक्तवार्षिकं दत्तवानित्यर्थः । दोलारोपितं शिबिकारूढमार्यं मयूरेश्वरगुरुम् अग्र्यः श्रेष्ठो निनदो येषु तैर्ढक्कादिवाद्यैर्हस्त्यश्वांघ्रिचरैः हस्त्यारूढैरश्वारूढैः पादचरैश्च सह उपर्यभिगतैरुपरि अभितश्च स्थितैरीक्ष्यतेऽवलोक्यतेऽसावुपर्यभिगतेक्ष्यस्तं पूर्वस्थितिं प्रापयत् ॥ ९ ॥ अथ गुरुस्तु नरेंद्रस्य सेनाधिपतिमवदत् । मम यानं गमनं परस्य शिबिकयाऽसकृदभवत् । सा शिबिका निजाऽऽत्मीयास्तु । अन्यस्य शिबिकया यानं न भूषणकरमित्यर्थः । स सेनानीरिति मयूरेश्वरवचनं राज्ञे नरेंद्राय प्रोचे कथितवान् । अथ राज्ञा नरेंद्रेण सा शिबिका नवीना दिनैः पंचदशदिनैर्गुरुमुदे मयूरेश्वरसंतोषाय साहस्ररौप्यव्ययेनाकारि कृता । आर्याय मयूरेश्वराय

चार्पिता । अथामोघवाक् सफलवाक् गुरुर्दोलया शिबिकया सहास्माद्भाग्यनगरान्निर्ययौ निर्गतः ॥ ११० ॥ एवं गुरोर्भाग्यनगरे सत्कारमुक्त्वा क्रमेण स्वस्थानागमनमाह । यत्रेत्यादिभिः । अनर्घ्याणि शिवायार्पितुमयोग्यानि यानि सुकेतक्याः लघुदलानि तैरपि यत्र शंकरः अर्च्यते । सर्वैरिति शेषः । तत्र संगमक्षेत्रे गुरुराप्लुत्य स्नात्वा संगमेश्वरं शिवं विधिवत्समर्च्य विप्रान्संतर्प्य स्वीयान् पितृव्यादीन् मोगडपल्लीस्थितान् दृष्ट्वा रामयज्वगृहगैः रामदीक्षितपुत्रैर्हु म्नाबादस्थैः सम्यक् पूजितो भालकीं गत्वा परात्परगुरुं समाधिस्थमुमापत्यानंदं समर्च्य सयशाः सुकीर्तिः सः नंदीतटमगात् ॥ ११ ॥ तत्र नंदीतटे शिष्यैः पूजितोथ शिबिकास्थितः सः अनु आगच्छाद्भिः संति वाद्यानि येषां तैः सह निरगात् । ततः पथाशी मार्गे भोजनकर्ता गुरुर्वसुमतीं प्राप्तः । रात्र्यास्ये

यत्रानर्घ्यसुकेतकीलघुदलैरप्यर्च्यते शंकरस्तत्राप्लुत्य शिवं समर्च्य विधिवत्संतर्प्य विप्रान्गुरुः ॥ स्वीयान्वीक्ष्य च रामयज्वगृहगैः संपूजितो भालकीं गत्वाभ्यर्च्य परात्परं गुरुमगान्नंदीतटं सद्यशाः ॥ ११ ॥ शिष्यैस्तत्र स पूजितोथ शिबिकास्थोनुप्रयाद्भिश्च तैः सद्वाद्यैर्निरगात्ततो वसुमतीं प्राप्तः पथाशी गुरुः॥ रात्र्यास्ये नगरागतैरभिनुतो वाद्यैरुदीपैः पथोर्ध्वाधःस्थाऽऽशिशुवृद्धदृक् सुखकरः श्रीमन्मठं चाविशत् ॥ १२ ॥ पौरार्यास्तु गुरुं समेत्य कुशलं नत्वा ह्यपृच्छन्स तानुक्त्वार्थंतमदर्शयत्सहचराद्दोलादि वीक्ष्याऽवदन् ॥ सत्यापादितसद्यशाश्च नगरे भाग्ये पुराऽभूत्पुमान्कोऽग्रे यद्धयदयागृहं जगुरिहार्थोऽन्यैः सकृद्दुर्लभम् ॥ १३ ॥

सायंकाले नगरादागतैर्जनैरभिनतो वाद्यैरुदीपैश्च सह पथा मार्गेणोर्ध्वाधःस्थानामाबालवृद्धानां नेत्रसुखदः श्रीमंतं मठं चाविशत् । बहु समारंभेण प्रविवेशे त्यर्थः ॥ १२ ॥ पुरसंबंधिन आर्याः श्रेष्ठपुरुषा गुरुं समेत्य नत्वा कुशलं पप्रच्छुः । स मयूरेश्वरगुरुस्तानार्थंतमुक्त्वा सहचरात् शिष्येण निमित्तभूतेन दोलाद्यं शिबिकादिकमदर्शयत् । ते च दोलादिकं समीक्ष्यावदन् । पुरा भाग्यनगरे इति प्रकारेणापादितं संपादितं यशो येन स एतादृशकीर्तिसंपादनकर्ता नाभूत् । अग्रे को भवेत् न कोपीत्यर्थः । हि यतः यद्भाग्यनगरम् अदयागृहं दयास्थानं न भवतीति जगुः । जना इति शेषः । इह भाग्यनगरे सकृत् एकवा रंपोऽ्र्थमन्यैर्दुःखेन लब्धुमशक्यमस्ति । तस्मान्मयूरेश्वरगुरोरेव भाग्यनगरे सत्कारो जातो नान्यस्येत्यर्थः ॥ १३ ॥

एवं भाष्यमार्गे गुरोः प्रतिष्ठामुपवर्ण्य तस्य विद्याधने बहुप्रीतिरासीदित्याह । शय्यायामिति । शय्यायां मंचादौ अथवाऽऽसने नृगमने नृयाने वाऽनसि शकटादौ वा स्थित्याऽतंद्रितः अनलंसोऽधोदृष्टिर्गुरुर्मयूरेश्वरः पुस्तकहस्तः सन् तानि अनेकानि पुस्तकानि ईक्षते । किंभूतानि पुस्तकानि । पूर्वोत्तरमीमांसाद्वयं तर्कः न्यायशास्त्रं शब्दो व्याकरणं युतिर्योगशास्त्रं सन्मंत्राः मंत्रशास्त्रं प्रयोगाः कर्मकांडं श्रुतिस्मृती एतेषां अर्थः तत्त्वज्ञानं येषु तानि अन्यान्यानि सांख्यादीनि पुराणानि भाष्याणि बहुभिन्नानि काव्यान्यपि पश्यति । पुस्तकविचारं विना कुत्रापि न तिष्ठतीत्यर्थः ॥ १४ ॥ किं च प्राचीनेषु बहुषु पुस्तकेषु सत्स्वपि पुनः स क्रीतानि अमूनि पुस्तकानि गृह्णाति । अन्यैर्लेखयति । स्वयं च लिखति । शिष्यादितः शिष्यादिभिः संगृह्णाति । प्रत्येकं

शय्यायामथवाऽऽसने नृगमने वानस्यधोदृग्गुरुः स्थित्याऽतंद्रित एव पुस्तककरोऽनेकानि तानीक्षते ॥ मीमांसाद्वयतर्कशब्दयुतिसन्मंत्रप्रयोगश्रुतिस्मृत्यर्थानि पुराणभाष्यबहुभित्काव्यान्यथान्यान्यपि ॥१४॥ प्राचीनेष्वमितेषु सत्स्वपि पुनः क्रीतानि गृह्णात्यमून्यन्यैर्लेखयति स्वयं लिखति संगृह्णाति शिष्यादितः ॥ प्रत्येकं समपट्टिकायुगमथोर्ध्वोच्चं दृढाधोंशुकं सूच्या सूत्रितमर्पयत्युरुगुणं वीक्षन्सदोनं त्रुटत् ॥१५॥ अस्माकं कुलमादितोस्ति विदुषां मुख्यं धनं पुस्तकान्याहुस्तत्तु विवर्धयन्हि सततं ज्ञात्वोत्तमः स स्मृतः ॥ मध्यस्तस्य च रक्षकोऽधम इदं यो नाशयत्येनसा दुःखं यातु निजान्वदन्निति गुरुश्चासीत्सदा तन्मनाः ॥ १६ ॥

पुस्तकेभ्यः समानं पट्टिकायुगमर्पयति । अथोर्ध्वमुच्चमुच्चमं दृढमधोंशुकं वस्त्रं सूच्या सूत्रितम् उरुगुणं दीर्घरज्जुयुक्तं चार्पयति । किंभूतः ऊनं त्रुटत् वस्त्रं सदा वीक्षन् पश्यन् । एवं पुस्तकेषु अत्यादरं कृतवानित्यर्थः ॥ १५ ॥ पुस्तकरक्षणेऽत्यादरमुक्तवानित्याह । अस्माकमिति । अस्माकमेतत्कुलम् आदितः आदिनाथमारभ्य विदुषां कुलमस्ति । विदुषामित्युभयसंबंधि । विदुषां मुख्यं धनं पुस्तकान्याहुः । विद्वांस इति शेषः । तत् पुस्तकधनं ज्ञात्वा सततं विवर्द्धयन् यः स हि पुरुष उत्तमः स्मृतः । तस्य धनस्य रक्षको मध्यो मध्यमः स्मृतः । य इदं धनं नाशयति । सोऽधमः स्मृतः । स एनसा दुःखं यातु । इति स्वकीयान्वदन्मयूरेश्वरगुरुः सदा तन्मनाः पुस्तकचित्तश्चासीत् ॥ १६ ॥

अथ मयूरेश्वरस्य संन्यासमाह । आत्मज्ञस्येति चतुर्भिः । ईश्वररूपिणः आत्मज्ञस्य गुरोः सदितराः सत्यः इतरा असत्यश्च सर्वाः प्रजाः संति । तत्र सत्यः प्रजाः स्तुत्या स्तवनेन अतोऽस्माद्गुरोः सकाशात् सत् पुण्यं प्रापुः । इतरा असत्यः प्रजास्तु निंदया गुरोर्बहुनिंदया असत्त्वं पापरूपं धनं प्रापुः । इति प्रकारेण पापपुण्यद्वयं अंजः अनायासेन प्रोज्झन् त्यजन् स्वयं चालेपः सन् पारंपर्यगः परंपराप्राप्तश्चासौ लोकसंग्रहकरश्च तं परंपरागतं लोकसंग्रहसंपादकं च संन्यासमैच्छत् । यतः सुवित् अतिविद्वान् । "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति श्रुतौ ज्ञानिनः पापपुण्ययोरन्यत्र गमनश्रवणादलेपो गुरुरित्युक्तं युक्तमस्तीति भावः ॥ १७ ॥ अथ ज्येष्ठे गुरुशुकानंदस्योत्सवोऽभूत् । शिष्यास्तुर्यगतिं संन्यासग्राहिणं मयूरेश्वरगुरुं

आत्मज्ञस्य गुरोः प्रजाः सदितरा इड्रूपिणश्चाखिलाः स्तुत्याऽऽपुः सदतोहि सत्य इतराश्चासत्स्वमुन्निंदया ॥ अंजः सत्कृतदुष्कृतद्वय मिति प्रोज्झन्नलेपः स्वयं पारंपर्यगलोकसंग्रहकरं संन्यासमैच्छत्सुवित् ॥ १७ ॥ ज्येष्ठेभूदथ चोत्सवो गुरुशुकानंदस्य तत्रागताः शिष्यास्तुर्यगतिं निशम्य हि गुरुं द्रष्टुं तमत्युत्सुकाः॥सद्दीक्षामथ धुंडिराज इति सत्पुत्रः समैच्छद्गुरोर्भूयः प्रार्थनया शिरोंघ्रिनतिभिः पूर्णत्वलब्धिर्यया ॥१८॥ नाथोऽभूत्सदयस्तदादिमवयःस्थागांसि विस्मृत्य तत्प्राक्पुण्यातिशयात्परैश्च विनुतो यत्सज्जनिः सत्कुले ॥ दीक्षां चाददुक्ततंत्रविधिवल्लक्ष्मीशसौख्याभिधां श्रीतत्यै द्रुतसिद्धवाचमपि वाक्छ्रीसेविताचाँवते ॥ १९ ॥

निशम्य तं द्रष्टुमत्युत्सुकाः संतस्तत्रोत्सवे आगताः।अथ धुंडिराज इति सत्पुत्रो गुरोः सकाशात् यया पूर्णत्वप्राप्तिर्भवति तां सद्दीक्षां पूर्णाभिषेकदीक्षां भूयः प्रार्थनया शिरसांघ्रिनतिभिश्चरणयोर्नमस्कारैर्बहुप्रार्थनया इच्छितवान् ॥ १८ ॥ एवं प्रार्थितो नाथस्तस्य धुंडिराजस्यादिमवयःस्थानि पूर्ववयोगतानि आगांसि अपराधान् विस्मृत्य परैश्च विनुतः प्रार्थितस्तस्य धुंडिराजस्य पूर्वपुण्यातिशयेन सदयो दयायुक्तोभवत् । यथतः सत्कुले सतां जन्म भवति । अथ च स गुरुः वाक्श्रीभ्यां सेविता लक्ष्मीवाणी निषेविता या पराशक्तिस्तस्या अर्चावते पूजकाय धुंडिराजाय उक्तो यस्तंत्रे विधिस्तद्वत् पूर्णदीक्षां ददौ । श्रीतत्य लक्ष्मीवृद्धये लक्ष्मीशानंद इत्यभिधां च ददौ । द्रुतं सिध्यत्यनया तां वाचं च ददौ । बह्वपराध्यपि शरणागतो गुरुणा नोपेक्ष्यत इति भावः ॥ १९॥

अथ गुरुस्तु दैवज्ञैर्वैदिकैर्ब्राह्मणैर्निमित्तभूतैः स्वयं प्रेषमुच्चरन् सन् मंत्रयुक्तं यथा भवति तथा संन्यासमकरोत् । हि यतो विदुषः प्रेषोच्चारणार्थमपरो न भवति । अन्यापेक्षा नास्तीत्यर्थः । बुधैरस्य गुरोः प्रबोधानंदतीर्थेति पूर्वागमात् पूर्वसंप्रदायात् आख्या कृता हि । यतोऽत्यज्ञान् जीवान् निजप्रबोध विभवात् आत्मज्ञानसामर्थ्येन सुज्ञानुत्तमांश्चाकरोत् । तस्माद्योग्यं प्रबोधानंदतीर्थ इति नामासीदित्यर्थः ॥ १२० ॥ अथ देशिके मयूरेश्वरगुरौ संन्यस्ते सति तं प्रति सुभक्ताः प्रियतमं मयूरेश्वरं श्रुत्वा दूरादगमन् । अस्माद्गुरोः सकाशादात्मतत्वं प्रापुः । च पुनः अमनः न मनो यस्मिन्मनसाऽग्राह्यम् अवाच्यं वक्तुमशक्यम् अतः अक्षयं सुखं चापुः । मनोवाग्ग्राह्यं तु सुखं सक्षयं भवतीत्यर्थः । ततस्ते संतुष्टाः संतस्तं मयूरेश्वरं यथार्थं यथाशक्ति

संन्यासं कृतवान्गुरुस्त्वथ विधिज्ञैर्वैदिकैर्मंत्रवत्प्रेषं यः स्वयमुच्चरान्हि विदुषः प्रेषोक्तये नापरः ॥ आख्योक्तास्य बुधैः प्रबोधसुखयुक्तीर्थेति पूर्वागमाद्योत्यज्ञान्हि निजप्रबोधविभवात्सुज्ञोत्तमांश्चाकरोत् ॥१२०॥ संन्यासिन्यथ देशिके तमगमन्दूरात्सुभक्ताः प्रियं श्रुत्वाऽस्मान्निजतत्त्वमापुरमनोवाच्यं सुखं चाक्षयम् ॥ तुष्टास्तं स्वयजन्यथार्थमभवन्नित्यं नवश्चोत्सवः सद्भिः श्रीगुरुवाक्यजात्मसुखदः पादोनवर्षं सताम् ॥ २१ ॥ चैत्रेऽथो गुरुपाददर्शनपरोदारामवंशी ययौ नाद्वंद्वी विषयार्य इज्यचरणं संपूज्य भक्त्याऽऽतकैः॥ श्रुत्या ग्रथमहर्निशं गुरुमुखाच्छ्रुण्वंश्च तत्रावसत्क्षैण्यं वीक्ष्य गुरोः पुनःपदसमीक्षासंशयी सन्मतिः ॥ २२ ॥

अयजन्हि । एवं पादोनवर्षं नवमासपर्यंतं सद्भिः सह श्रीगुरुवाक्यं मयूरेश्वरवचनं तस्माज्जातं यत् आत्मसुखं तद्ददाति सः सतामुत्सवो नित्यं नवीनोऽभवत् । संन्यासग्रहणानंतरं नवमासपर्यंतं सतामागमनेन नित्यमानंदो जात इत्यर्थः ॥ २१ ॥ अथ मयूरेश्वरस्य स्वरूपस्थितिं वक्तुमुपक्रमते । चैत्र इत्यादिभिः । अथ चैत्रमासे गुरुपाददर्शनतत्परश्चासौ उदारामवंशे भवश्च नावर्णस्य द्वंद्ववान् नानेति प्रसिद्धो ययौ प्राप्तः । वसुमतीमिति शेषः । यद्वा आसमंतात् मा लक्ष्मीर्यस्मिन् एतादृशो वंशोऽस्यास्तीति आमवंशी उदारश्चासावामवंशी च गुरुपाददर्शनपरश्चासौ उदारामवंशीचेति समासः । स ना पुरुषो ययौ । किंभूतः अद्वंद्वी सुखदुःखादिद्वंद्वरहितः ज्ञानवान् संपन्नश्चेत्यर्थः । विषयार्यः देशे मुख्यः स इज्यचरणं पूज्यपादं मयूरेश्वरगुरुम्

आप्तकैरार्तैः सह । यद्वा भामपूजाद्रव्यैर्भक्त्या संपूज्य श्रुत्यादीनामुपनिषदादीनामर्थं गुरुमुखादहर्निशं शृण्वन्सन् तत्र गुरुकाश्यामवसत् । सन्मतिर्बु द्धिमान्स गुरोः प्रबोधतीर्थस्य क्षीणत्वं दृष्ट्वा पुनःपदसमीक्षायां पुनश्चरणदर्शनविषये संशयवानासीत् । बुद्धिमता भविष्यं ज्ञायत इति भावः ॥ २२ ॥ प्रदोषपरतः प्रदोषकालात्परं गुरुस्तमिति प्राह । इति किम् । आदिनाथादारभ्य नाथानां गुरूणां चरित्रं सुपद्यं सुश्लोकयुक्तं येन रामकृष्णक विना कृतम् । यश्च ग्रंथान् क्व च कदाचित् अणु किंचिदपि नालोकितवान् । काव्यं च न सम्यगधीतवान् । कोशादिकं शाब्दं शब्दज्ञानजनकं बलं व्याकरणादिकं चाधीतवानिति कुतः । न कुतोऽप्यधीतवान् इत्यर्थः । यस्माद्विद्याभ्यासाभावेपि यो ग्रंथं कृतवान् । तस्मात्तस्य हृदयस्थदेशिकेन कृत

तं प्राहेति गुरुः प्रदोषपरतो येनादिनाथात्कृतं नाथानां चरितं सुपद्यमणु नो ग्रंथान्क्वचाऽलोकयत् ॥ काव्यं नो समधीतवान्स हि कुतः कोशादिशाब्दं बलं तस्मात्तद्धृदयस्थदेशिककृतं ज्ञेयं यतोऽस्मत्प्रियम् ॥ २३ ॥ पूजा येन च लौकिकैरपि पदैः श्रीदेशिकाख्या न्विता ध्यानावाहनमुख्यषोडशपदार्थाढ्या ममातिप्रिया ॥ तां त्वं ब्रूह्यधुनेति पुत्रमवदल्लक्ष्मीशसौख्यं गुरुः शृण्वंस्तां सुतवरस्तदर्थमव दच्चानंदमग्नः स्वयम् ॥ २४ ॥ नान्यत्र क्व च देशकालपदतः श्रीदेशिकान्मे मनश्चेत्त्रिंशद्विशताकृतिः स हि गुरोराद्यान्ततेष्टप्रदः ॥ तस्यैवास्ति कथा तु यत्र चरिते मत्संस्थितिश्चेति तच्छृण्वन्नच्छ्रावदुत्तराद्विहितदोस्मीत्यब्रवीत्तं गुरुः ॥ २५ ॥

मिति ज्ञेयं सर्वैर्ज्ञातव्यम् । यतोस्माकं प्रियम् । अयं भावः । श्रीदेशिकचरणैकनिष्ठस्य मम प्रीतिर्देशिककृतकाव्ये एव भवति । न तु मनुष्यमात्रकृतकाव्ये प्रीतिर्भवितुमर्हति । अतो देशिकचरणैकनिष्ठस्य रामकृष्णकवेः काव्यं देशिककृतमेवास्तीति ॥ २३ ॥ तेन च कर्त्रा लौकिकैः प्राकृतैः पदैः श्रीदेशिकनाम युक्ता पूजा कृतास्ति । ध्यानावाहनादिषोडशोपचारार्थयुक्ता सा पूजा ममातिप्रियास्ति । तां पूजामधुना त्वं ब्रूहीति लक्ष्मीशानंदनामकं पुत्रं गुरुरवदत् । ततस्तन्मुखतः पुत्रमुखेन तामित्यनुवर्तते । पूजां शृण्वन् गुरुः स्वयमानंदमग्नः सन् तदर्थं पूजापदानामर्थं चावदत् । रामकृष्णकविवरेऽतिसंतुष्टोऽभवदि त्यर्थः ॥ २४ ॥ एवं संतुष्टो गुरुर्गुरुपरंपराचरित्रं सकलं कृतवानित्याह । नान्यत्रेति । मम मनः श्रीदेशिकात् गुरोरन्यत्र गुरुं विना क्वचिद्देशे काले पदे

कुहचित्कदाचिदपि न वक्ति । इति तं गुरुं दृष्ट्वा गुरोरिदं मौनकारणं किमस्तीत्याहुः । सकला इत्यनुवृत्तिः । भिषजो वैद्याः वायुमाहुः । तद्विदः गुरुसामर्थ्य विदोऽसौ गुरुरवतारकृत्यं कृत्वाधुना स्वं रूपं कृष्णादिवत् ध्रुवं याति गच्छतीत्याहुः । कृष्णो यथा निर्याणकाले मौनं कृतवान् तथाऽयं गुरुरपीति । गुरोर भिप्रायं ज्ञातवंत इत्यर्थः ॥ २८ ॥ अथ गुरुरन्नमुदकं वा यस्य गुरोर्वक्त्रांतिके मुखसमीपे धृतं केन चिदानीतं चेत्तर्हि मनागपि किंचिदपि न स्पृशति । तद्दिनेऽन्नोदकं वर्जितमित्यर्थः । सद्भिर्गदितामुक्तां प्राचां शिवरामप्रभृतीनां स्वनिष्ठामात्मनिष्ठां कवितां प्रतिरुद्धा स्रक् माला येन स स्तब्धीकृतमालः सन् शृणोत्येव । ऊर्ध्वे सौधगृहे तिष्ठन्नधः शुकानंदस्य संस्थां समाधिं गवाक्षान्मुहुः पश्यति । अथ धुंडिराट् पुत्रः आशयं गुर्वभिप्रायं ज्ञात्वा नृभिः सह शनैर्गुरुं

नान्नं वांऽबु मनागपि स्पृशति यद्वक्त्रांतिके चेद्धृतं प्राचां सद्गदितां स्वनिष्ठकवितां रुद्धस्रगेवाशृणोत् ॥ तिष्ठन्नूर्ध्वमधः स पश्यति गुरोः संस्थां गवाक्षान्मुहुस्तं निन्येथ शनैर्नृभिर्गुरुपुरो ज्ञात्वाऽऽशयं धुंडिराट् ॥ २९ ॥ आस्तीर्णे तमशाययन्मृदुपटे चोच्चोपबर्हे ततः स्युः स्वीयाः परितस्तदंकगशिराश्चासोत्थितः स क्वचित् ॥ प्रेष्याश्वं च सपत्रतोऽनयदिह स्वान्धुंडिराट् गोतटात्पौराश्चानिशमाथ युर्गुरुसमीक्षार्थं नृसंघोऽभवत् ॥१३०॥ इत्थं त्रीणि गतान्यहान्यथ चतुर्थेऽपाययच्छ्रीपदे भक्तः शुक्तिपयोऽग्रहीदनशनश्चैनत्सुभक्त्या गुरुः ॥ सोऽपश्यत्सकलं निजे निजमिहात्मौपास्यगुर्वैक्यतः स्वाद्यैक्येन कमाप चार्यमहसांऽतर्बाह्यगेनांतरे ॥ ३१ ॥

पुरः शुकानंदसमीपे तं प्रबोधानंदगुरुं निन्ये । प्रासादादधोभागे आनीतवानित्यर्थः ॥ २९ ॥ च पुनः मृदुपटे उच्चोपबर्हे उत्तमोपबर्हयुक्ते आस्तीर्णे यति योग्ये शयने तं गुरुमशाययत् शयनं कारितवान् । ततः स्वीयाः पुत्रशिष्यादयः परितः स्युः आसमंतात्तस्थुः । स च गुरुरुत्थितः सन् कदाचित् तेषां परितः स्थितानामंकगतमुत्संगगतं शिरो यस्य तदंककृतमस्तक आसीत् । ततो धुंडिराट् पत्रसहितमश्वं प्रेष्य चकारान्मनुष्यं च प्रेष्य गोतटात्नंदीतटात्सका शात्स्वान्स्वकीयान्मत्प्रभृतीनिह वसुमतीमानयत् । पौराश्च वसुमतीस्थाः गुरुसमीक्षार्थं गुरुदर्शनार्थमनिशं सततमाययुः । तदा गुरुसमीक्षार्थमित्युभयान्वयि । नृणां संघः संमर्दोऽभवत् । सर्वेषां गुरुदर्शनार्थमुत्सुकताऽभवदित्यर्थः ॥ १३० ॥ इत्थं प्रकारेण त्रीण्यहानि गतानि । अथ चतुर्थेऽह्नि कश्चिद्भक्तः काशीरा

यास्यः श्रीपदे गुरवे शुक्तिमितं पयः अपाययत् । गुरुश्चानशनोऽशनवर्जितोपि एतस्य काशीरायस्य सुभक्त्या अग्रहीत् । अथ स मयूरेश्वरगुरुः सकलं जगत् निजे स्वात्मनि निजं चात्मानमिह सकले जगति आत्मनः स्वस्योपास्यदेवताया गुरोश्चैक्यतः एकत्वेन स्वस्याद्येनादिनाथेन सह यदैक्यं तेन च पश्यन् सन् अंतर्बाह्यगतेनार्यमहसा उत्तमतेजोरूपेणांतरे हृदि कं ब्रह्मसुखमाप स्वरूपं प्राप्तः । "सौदामिन्या यथाकाशे यांत्या हित्वाभ्रमंडलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैः" इति कृष्णगतिवत् गुरुः स्वस्थितिं प्राप्तोऽभवत् । अंतरेण कनापेत्यनेन गुरोः प्राणोत्क्रमणं नोच्यते । किं तु 'सोंतः श्वास उपारमदिति, भीष्मवत् तत्त्वानां लयमात्रं विधीयते । "तेन न तस्य प्राणा उत्क्रामंत्यत्रैव समवलीयंते" इति श्रुतौ ज्ञानिनः प्राणादेरत्रैव स्वस्वतत्त्वे लयश्रवणात्सार्वात्म्यप्राप्तिर्जातेति भावः ॥ ३१ ॥ एवं मयूरेश्वरगुरोरुत्तमपदप्राप्त्या तत्कालस्याप्युत्तमत्वप्राप्तिर्जातेत्याह । मौहूर्त इति । सः मुहूर्त एव मौहूर्तः गुरोर्मयूरेश्वरस्य शिवतागत्या शिवत्वप्राप्त्या शिवः शिवसंज्ञकोभवत् । हीति निश्चयेन । 'अह्नः स्युः शिवसार्पमित्रपितर इत्यादिनाऽह्नः प्रथमो

मौहूर्तः स शिवोऽभवद्धि शिवतागत्या गुरोः सप्तभूप्रक्रांत्याष्टतिथिः शिवः सदुरुतेत्योग्रं त्वहो मंगलम् ॥ सच्चित्सौख्यमयाद्धि पक्ष उदभूत्कृष्णोऽथ मास्त्वादिमः स्वाद्यैक्यादुत सूर्यमंडलभिदाभूच्चित्रभानुः शरत् ॥ ३२ ॥

मुहूर्तः शिवसंज्ञकोऽभवत् । गुरोः सप्तभूप्रक्रांत्या । शुभेच्छाविचारणातनुमानसासत्त्वापत्त्यसंसक्तिपदार्थभाविनीतुर्याणां सप्तभूमीनां प्रकृष्टोल्लंघनेन परशिवरूप तया अष्टतिथिः अष्टमीतिथिः शिवदेवताकोऽभवत् । तिथिशब्दस्य पुंस्त्वविवक्षया शिवशब्दस्य पुंस्त्वम् । अष्टम्याः शिवदेवताकत्वं चोक्तं चिंतामणौ । "तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः । शिवो दुर्गांतको विश्वे हरिः कामः शिवः शशी" इति।तथा गुरोः सदुरुतेत्या सति मंगलानां मंगलरूपे ब्रह्मणि उरुतया महत्त्वेन या इतिः गतिस्तया उग्रमपि अंगारकं अहः वासरः मंगलं मंगलसंज्ञकमभवत् । गुरोः सच्चित्सौख्यमयात् सच्चिदानंदरूपत्वेन पक्षः कृष्णः कृष्णसंज्ञको हीति निश्चयेन उदभूदुत्कृष्टोऽभवत्। "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इति कृष्णस्य सच्चिदानंदरूपत्वम्।एवं गुरोः स्वाद्यैक्यात् स्वस्या त्मनः गुरोराद्येन आदिनाथेन सह यदैक्यं तस्माद्धेतोः माः मासश्चादिमः आद्यश्चैत्रोभवत् । उत पुनः शरत् संवत्सरः गुरोः सूर्यमंडलभिदा गुरुकृतसूर्यमंडल

भेदेन चित्रभानुः चित्रः विचित्रः भानुः सूर्यो यस्यां सा चित्रभानुसंज्ञकाऽभवत् । सूर्यमंडलभेदश्च । "द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ । परिव्राड्योगयुक्तश्च युद्धे चाभिमुखो हतः" इत्युक्तः । इत्थं च गुरोः परमानंदप्राप्तिसमये मुहूर्तादिकालोऽप्युत्तमत्वं प्राप्त इत्यर्थः । अत्र सामान्यकालेन गुरोर्विशेषसमर्थनादर्थांतरन्यासोऽलंकारः ॥ ३२ ॥ एवं मयूरेश्वरगुरोः स्वरूपप्राप्तिमुपवर्ण्य तस्य समाधिस्थितिमाह स्नात्वेति । पुत्रादिभिस्तीर्थवरे स्नात्वा गुरुर्मयूरेश्वरो यथाविधि यथाशास्त्रमर्चितः । अमौल्यपट्युक्ते याने शिविकायां कृतः स्थापितः सन् भजनयुक्तवाद्यैः सह पुरे भ्रामितः । यदा भ्रामितस्तदा तं पौराः पुष्पैः सौरभितसुगंधिद्रव्यैः सितासिक्ताभिः शर्करादिकैरवाकिरन् । ततः स धुंडिराजस्तं मयूरेश्वरगुरुं मठे नीत्वा पूर्वसिद्धस्थले स्वगुरोरग्रे समाधिमकरोत् । आविशानिना

स्नात्वा तीर्थवरे यथाविधि गुरुः पुत्रादिभिश्चार्चितो यानेऽमौल्यपटे कृतो भजनयुग्वाद्यैः पुरे भ्रामितः ॥ पुष्पैः सौरभितैः सितासिक्ताभिः पौरास्तदाऽवाकिरन्नीत्वा तं स मठे समाधिमकरोत्सिद्धस्थले स्वाग्रयम् ॥ ३३ ॥ आपक्षं कृतवान् गुरूत्सवमथो भक्तैः परैश्चागतैः स्वाद्वन्नैर्द्विजभोजनैर्गुरुकथापौराणसद्गायनैः ॥ वर्षेवर्षे उताष्टमाद्युगदिनैरेकादशांतोभवद्भक्तास्तत्र ययुः परेऽपि गुणिनो विप्राश्च वित्तार्थिनः ॥ ३४ ॥ उर्व्यांशत्यूर्ध्वद्विशताकृतीन्यः प्राक् देशिकांतानवदद्गुणैर्गुरून् ॥ तं सर्वनाथाकृतिमेकमाद्यं प्रबोधनौरूपं गुरुमानताः स्मः ॥ ३५ ॥

गुरुणा स्वसमाधिस्थलं पूर्वमेव साधितमासीदित्यर्थः ॥ ३३ ॥ अथ सः धुंडिराट् पक्षपर्यंतं भक्तादिभिः शायनैर्गुरोर्मयूरेश्वरस्योत्सवं कृतवान् । उत पुनः वर्षेवर्षे प्रतिवर्षं अष्टमादष्टमीसकाशादेकादशांतः एकादशीपर्यंतं चतुर्दिनैरभवत् । गुरूत्सव इति परिणामेनानुवृत्तिः । तत्रोत्सवे गुरुभक्ताः परे च वित्तार्थिनो गुणिनो विप्राश्चाययुः ॥ ३४ ॥ एतावत्पर्यंतं श्रीमयूरेश्वरगुरोश्चरित्रमुपवर्ण्य कविराट् तं प्रणमति । उर्व्यांशादीति चतुर्भिः । पूर्वं यो गुरुर्ना रामकृष्णं कविं प्रति विंशत्यूर्ध्वद्विशतसंख्यान् देशिकानंदपर्यंतान् गुरून् गुणैः तच्चरित्रैः समावदत् । तं आदिनाथादिसर्वगुरुरूपं एकमद्वितीयमाद्यं सर्वादिरूपं प्रबोधानंदतीर्थाभिधं

गुरुमानताः स्मः ॥ ३५ ॥ यश्च गुरुः स्वयमेकत्रिंशाधिकशतद्वयसंख्यानिविष्टो मूढमपि मां द्वात्रिंशाधिकशतद्वितयसंख्यानिविष्टं धर्माभिमुखं चकार तं प्रबोधानंदतीर्थगुरुं नताः स्मः । श्रीमयूरेश्वरगुरुणा रामकृष्णाख्यं ग्रंथकर्तारं प्रति पूर्णाभिषेकः कृत इति भावः ॥ ३६ ॥ यश्च गुरुर्मोरेश्वरानंदगुरोः [illegible] वंशजन्यं स्वार्यासुतं स्वज्येष्ठभगिनीसुतं विठ्ठलदेवसंज्ञकं प्रति धरानंदनामकं तत्तुल्यसंख्यं द्वात्रिंशाधिकद्विशतसंख्योपगतं च चक्रे । तं प्रबोधानंदगुरुं नताः स्मः । श्रीमयूरेश्वरगुरुणा नारायणपुरवासिनं विठ्ठलदेवं प्रति पूर्णाभिषेकः कृत इत्यभिप्रायः ॥ ३७ ॥ यो गुरुः सुपवित्रं धुंडिराजनामानं स्वपुत्रं [illegible] लक्ष्मीशानंदाभिधं समानसंख्यामिधं द्वात्रिंशाधिकशतद्वयसंख्यानिविष्टं चाकरोत् । पूर्णाभिषेकं कृतवान् । तं प्रबोधानंदं नताः स्मः । अत्र यद्यपि धुंडिरा

उदेकरामद्विशताकृतिर्यो द्वात्रिंशदूर्ध्वद्विशनामिधं माम् ॥ मूढं च धर्माभिमुखं चकार तं श्रीप्रबोधाख्यगुरुं नताः स्मः ॥ ३६ ॥
कन्यान्वयं भास्करदेशिकस्य स्वार्यासुतं विठ्ठलदेवसंज्ञम् ॥ तत्तुल्यसंख्यं च धरासुखं यश्चक्रे प्रबोधाख्यगुरुं नताः स्मः ॥ ३७ ॥
यो धुंडिराजं स्वसुतं सुपूतं लक्ष्मीशसौख्यं हि समानसंख्यम् ॥ वाक्सिद्धिमंतं कृपयाऽकरोत्तं प्रबोधसौख्यं गुरुमानताः स्मः ॥ ३८ ॥
गुरावात्मत्वाते धनजहृतमादेशनृपतिर्गुरोश्छात्रिण्येकाऽकृदपि गुरुस्थानविततिम् ॥ व्ययं चाकर्ण्यासौ बहुगुरुसदाप्याल्लिखितैः
वर्द्धे तत्स्वं निखिलगगुरूत्साहविषये ॥ ३९ ॥

जस्य जन्मवंशे पुत्रत्वाच्छ्रेष्ठत्वं तथापि विद्यावंशे पूर्वापरदीक्षाक्रमेणैव ज्येष्ठकनिष्ठत्वभावो युज्यते । तेन रामकृष्णतोऽभयाजिकस्वेज्येष्ठत्वं विठ्ठलदेवस्य मध्यत्वं धुंडिराजस्य कनिष्ठत्वं च ज्ञेयमिति भावः ॥ ३८ ॥ अथ श्रीदेशिकेंद्रसंपादितधनजमास्य राज्ञा [illegible] पुनः [illegible] [illegible] गुरुस्थान याश्चरित्रं श्लोकद्वयेनाह । गुराविति । गुरौ श्रीमयूरेश्वरे आत्मत्वं प्राप्ते सति धनजहृतं धनजमामहर्तारं आत्मपंताइराख्यनृपतिं [illegible] प्रति गुरोः छात्रिणी विठायीनाम्नी गुरुस्थानविततिं शुकानंदसंस्थानविस्तारं व्ययं चाकरोत् । असौ राजा [illegible] [illegible] [illegible] [illegible] स्थानविततिं व्ययं चाकर्ण्याहं तस्य धनजमामस्य स्वं सर्वगगुरूत्साहविषये ददौ । अहं तद्वामसौख्यं [illegible] संस्थानोत्सवस्य [illegible] कृतवान् ।

विठायीकृतप्रयत्नेनैवार्द्धग्राममोचनं जातमित्यर्थः ॥ ३९ ॥ किंचाभीर्निर्भयापि स्त्री अबलापि विठायीनाम्नी गुरुबलात् गुरुकृपया नृपतो राज्ञः सकाशात् नवीनं धुंडीनाख्यया धुंडिराजनाम्ना युक्तं लिखितं पत्रं सनद इति भाषाप्रसिद्धं चक्रे कृतवती। किंभूतम् अनन्यविषयं न अन्यस्य विषयो ममत्वं यस्मिन् तादृशं गुरुत्सवार्थमेव धुंडिराजनामांकितत्वादन्यस्वत्वशून्यमस्तीत्यर्थः। या च विठायी पूर्वं मयूरेश्वरसमक्षं शुकानंदस्य ऊर्ध्वं देवालये शिखरं कृतवती। इदानीं तु सा विठायी सर्वेषां गुरुभक्तानामुपरि गुरोः सत्कार्यरूपं शिखरं अर्द्धग्राममोचनरूपं श्रेष्ठकार्यं कृतवती।सर्वगुरुभक्तचूडामणिरेवाभूदित्यर्थः॥ १४० ॥ अथ धर्मानंदो धुंडिराजाय तत्कृत्यं दर्शयन् आशिषं योजयति। पश्चादिति । येन गुरोर्मयूरेश्वरगुरोः पश्चात् पृष्ठभागे निर्याणानंतरं वाऽन्नपूर्णामूर्तिः कृता स्थापिता। अथ श्रीदक्षिणामूर्तिरूर्ध्वसंस्थः ऊर्ध्वालयस्थः कृतः। श्रीमंगलांबा देवी च सुमंगलाट्टे उत्तमे मंगलवारपेठस्थाने कृता स्थापिता । येनैतत्सर्व

विठायी स्त्री चाभीर्नृपत उत चक्रे गुरुबलान्नवं धुंडीनाख्यालिखितमपि चानन्यविषयम् ॥ शुकानंदोर्ध्वे या शिखरमपि पूर्वं कृतवती त्विदानीं सर्वेषामुपरि गुरुसत्कार्यशिखरम् ॥ १४० ॥ पश्चाद्गुरोर्येन कृतान्नपूर्णा श्रीदक्षिणामूर्तिरथोर्ध्वसंस्थः ॥ श्रीमंगलांबापि सुमंगलाट्टे स धुंडिराजो विजयी सदास्ताम् ॥४१॥ कविरुवाच ॥ इत्थमादिगुरोः सर्वगुरूणां वै परंपरा ॥ उक्तानेककथाभिश्च गुरुणा सर्वरूपिणा ॥ ४२ ॥ कोन्यस्तस्य कथां वक्तुं क्षमो देहमतिः सतः ॥ अंधकारो यथार्कस्य मशको मरुतो यथा ॥ ४३ ॥ तस्माद्गुरुकथा सर्वा गुरुणैव निरूपिता ॥ मया व्याजेनैव यथा वंश्या वादयता रवः ॥ ४४ ॥

एतत्रयं कृतं सः धुंडिराजः सदा विजयी आस्तां विजयी भवतु । संस्थाने संप्रदायप्रवर्तकोऽग्रे धुंडिराज एवास्तीत्यर्थः ॥ ४१ ॥ प्रथमसर्गे सर्वगुरूणां चरित्रं वक्तुमुपक्रांतमुपसंहरति इत्यादिना। एवमादिनाथगुरोः सकाशात्सर्वगुरूणां या परंपराऽनेककथाभिः सह मयोक्ता। सा सर्वरूपिणा गुरुणैवोक्ता वै इति निश्चयेन ॥ ४२ ॥ स्वयं देहबुद्धिः सन् सतः सद्रूपस्य गुरोः कथां वक्तुं अन्यः कः क्षमो भवेत्। न कोपि समर्थः । तत्र दृष्टांतः। यथांधकारः सूर्यस्य कथां वार्तां वक्तुं यथा वा मशको वायोर्वार्तां कर्तुं न समर्थस्तथा एतद्ग्रंथं कर्तुं गुरुं विनाऽन्यो न समर्थ इत्यर्थः ॥ ४३ ॥ यस्मादेवं तस्माद्गुरूणां कथा गुरुणैव मुख्यकर्त्रा मया व्याजेन निमित्तभूतेन सर्वा निरूपिता वर्णिता। यथा वादयता वादनकर्त्रा वंश्या वेणुना निमित्तभूतया रवः शब्दो निरूप्यते

तद्वत् ॥ ४४ ॥ रहस्यज्ञ इति । गुरुभक्त्यैव ज्ञातुं योग्योऽयं ग्रंथ इत्यर्थः ॥ ४५ ॥ यस्येति । सफला गुरुकथेत्यनुवृत्तिः ॥ ४६ ॥ एवं गुरुभक्त्यैव गुरुकथासेवनं विधायैतस्याः श्रवणादेः फलान्याह । पुत्रदेत्यादिभिः पंचभिः । अस्तीति क्रियाध्याहारः सर्वत्र ॥ ४७ ॥ स्त्र्यभिलाषिणां अस्त्रीकाणाम् । तदिच्छूनां सिद्धीच्छावताम् । तदर्थिनां योगाभ्यासेच्छावताम् ॥ ४८ ॥ अग्र्याणां ब्राह्मणानां धनप्रदा विद्याप्रदा च ॥ ४९ ॥ सुबुद्धिदा अव्यभिचा

रहस्यज्ञो गुरुर्नान्यस्तद्वक्तापि गुरुः स्वयम् ॥ रहस्या तत्कथा सर्वा वेद्या सा गुरुभक्तितः ॥ ४५ ॥ यस्य भक्तिर्गुरोरंघ्र्योस्तस्यैव सफला खलु ॥ पठनाच्छ्रवणाद्ध्यानादीप्सितार्थफलप्रदा ॥ ४६ ॥ पुत्रदेयमपुत्राणामधनानां धनप्रदा ॥ बुद्धिदा मंदबुद्धीनां मुमुक्षोर्मुक्तिदा तथा ॥४७॥ विद्याप्रदा ह्यविद्यानां स्त्रीप्रदा स्त्र्यभिलाषिणाम् ॥ सिद्धिप्रदा तदिच्छूनां योगदां जस्तदार्थिनाम् ॥ ४८ ॥ धनविद्याप्रदाग्र्याणां क्षत्रियाणां जयप्रदा ॥ वैश्यानां धनदा नित्यं शूद्राणां कृषिवर्द्धिनी ॥४९॥ सौभाग्यापत्यदा स्त्रीणां विधवानां सुबुद्धिदा ॥ आरोग्यदा रोगवतां कुमारीणां सुनाथदा ॥१५०॥ निष्कामाणां शांतिदात्री कामिनां सर्वकामदा ॥ श्रोतव्या हि ततः सर्वैः पठनीयापि भक्तितः ॥ ५१ ॥ आदिनाथाद्गुरोरेष संप्रदायो निरूपितः ॥ स सर्वेषां गुरुः सर्वसंप्रदायवतां किल ॥ ५२ ॥ गणेशस्य रवेः शक्तेर्विष्णोः श्रीशंकरस्य च ॥ कुर्वंत्युपासनां मंत्रैर्गुरुलब्धैः किलाखिलाः ॥ ५३ ॥

रादिसुबुद्धिदात्री । सुनाथदा सुभर्तृदा ॥ १५० ॥ श्रोतव्येति श्रवणपठनयोः प्रत्येकं फलं न तु समुच्चितयोरिति भावः ॥ ५१ ॥ आदिनाथादिति । आदिनाथ एव सर्वसंप्रदायेषु प्रथमगुरुस्तेन सर्वसंप्रदायिमान्योयं ग्रंथ इत्यर्थः ॥ ५२ ॥ एतद्ग्रंथस्य सर्वसंप्रदायिभिः सेव्यमानत्वमाह । गणेशस्येति द्वाभ्याम् । उपासनामंत्रग्रहणं गुरोः सकाशादेव कर्तव्यं न पुस्तकावलोकनमात्रेणेति भावः ॥ ५३ ॥

॥ ५४ ॥ ५५ ॥ पारायणक्रममाह । पारायणमिति षड्भिः । "प्रकाशश्च विमर्शश्च आनंदो ज्ञान एव च । सत्यः पूर्णः स्वभावश्च प्रतिभः सुभगस्तथा" इति मंत्रशास्त्रे वासरात्मकनवनाथकथनात् नाथस्यैवात्र ग्रंथे महत्त्ववर्णनाच्च नवाहेनेत्युक्तम् । आर्येण श्रेष्ठेन गुरुभक्तेन ॥ ५६ ॥ गुरुश्रीत्यादिसार्द्ध



विना मंत्रेण नोपास्तिर्न मंत्रो गुरुणा विना ॥ सर्वैरुपासकैस्तस्मात्पठनीया गुरोः कथा ॥ ५४ ॥ पद्यमर्धं तदर्धं वा नित्यं गुरुकथोद्भवम् ॥ पठनाच्छ्रवणाद्भक्त्या भवेच्चानंतपुण्यदम् ॥ ५५ ॥ पारायणं नवाहेन कुर्यादस्य सुभक्तितः ॥ गुरुभक्तः स्वयं वार्यगुरुभक्तेन कारयेत् ॥ ५६ ॥ गुरुश्रीपादुकाग्रे वा स्वस्वोपास्याग्रतः सुधीः ॥ एकभुक्त्या ब्रह्मचर्याद्वृथालापविवर्जनात् ॥ ५७ ॥ द्विजानां भोजनैः शक्त्या कथावक्तुः सुपूजनात् ॥ पारायणं यत्र यत्र भवेद्गुरुकथोद्भवम् ॥ ५८ ॥ यांति तस्मात्प्रेतभूतपिशाचा दशयोजनम् ॥ ब्रह्महत्यादिपापानि शृण्वतां दूरतोऽण्वपि ॥ ५९ ॥ भवंति भस्मसाच्छीघ्रं बहुप्राग्जन्मजान्यपि ॥ अनेकैर्जन्मभिर्जंतुः कुर्यात्तावन्न पातकम् ॥ १६० ॥ यन्न भस्मीभवेन्नाथपारंपर्यकथानकात् ॥ पुमान्पारायणं तस्मात्कुर्याद्भक्तिपुरःसरम् ॥ ६१ ॥ यद्गृहे पुस्तकं चैतद्यत्नात्संगृह्यते नरैः ॥ तत्र तत्पूजनात्सर्वदुःखहानिः सुखोद्भवः ॥ ६२ ॥ पूजितं पुस्तकं येन भक्त्या तेन सुपूजिताः ॥ ब्रह्मविष्णुहराद्याश्च चरितेऽत्र समास्थिताः ॥ ६३ ॥ लिखित्वा हेमहंसस्थं गुरुभक्ताय पूजितम् ॥ दद्याद्यो दक्षिणाढ्यं तु कुंमाषाढ्यां बहुपुण्यभाक् ॥ ६४ ॥

पूर्वान्वितम् ॥ ५७ ॥ ५८ ॥ दूरतोपि अण्वपि एतद्ग्रंथं शृण्वतां जनानां पापानि दशयोजनं यांतीति संबंधः ॥ ५९ ॥ प्राग्जन्मजानीत्यत्र पापानीत्यस्यानुवृत्तिः । अनेकैरिति परेण संबध्यते ॥ १६० ॥ ६१ ॥ एतद्ग्रंथस्य संग्राहकपूजकयोः फलमाह । यद्गृह इति द्वाभ्याम् ॥ ६२ ॥ ६३ ॥ एतत्पुस्तकदानस्य

फलमाह लिखित्वेति । हेमहंसस्थमिति गुरोर्हेमवाहनत्वात् ग्रंथस्य च गुरुरूपत्वात् हंसे पुस्तकं निधाय दानं विधीयत इत्यर्थः । आषाढ्यामित्यनेनावश्यं तत्र गुरुपूजा कर्तव्येत्यर्थात्सिद्धम् ॥ ६४ ॥ स्वकृतग्रंथे निर्दोषत्वाय गुरुं प्रार्थयति । रहस्यमिति । गुरुपरंपरासंभवं इदं ग्रंथरूपं अद्भुतं रहस्यं गुरुवरेणैव कृतम् । मनाग्बुद्धिनाऽल्पबुद्धिना मया न च कृतमस्ति । येन गुरुणा कृतम् । स सर्वेषां ब्रह्मरंध्रे स्थितो गुरुः वर्णतः पदतः वृत्ततोऽन्य त्किंचिदपि मतांतरादिकं यद्दूषितं दोषयुक्तं तस्य परिमार्जनं करोतु । मयि ग्रंथकर्तृत्वाभावाद्ग्रंथे निर्दोषत्वं गुरुरेव करोत्वित्यर्थः । पृथ्वीवृत्तम् ॥ ६५॥ ग्रंथकर्ता रामकृष्णकविराट् गुरोः सकाशाद्वरं प्रार्थयन्नाह । श्रीमद्देशिकमिति । श्रीमद्देशिकं श्रीमद्गुरुमादिनाथादितोऽस्मद्गुर्वंताः आकृतयो यस्य तं त्वां

रहस्यमिदमद्भुतं गुरुपरंपरासंभवं कृतं गुरुवरेण वै न च मया मनाग्बुद्धिना ॥ यदर्णपदवृत्ततोऽन्यदपि चाखिलं दूषितं करोतु परि मार्जनं त्विह गुरुः करंध्रे स्थितः ॥ ६५ ॥ श्रीमद्देशिकमादिनाथमुखतोऽस्मद्देशिकांताकृतिं याचे त्वां गुरुभक्तसंगमनिशं चित्त स्थैर्यं त्वत्पदे ॥ उत्साहः सततं तवैव भवतां शैवेज्यया मद्गृहे तूर्यैर्ब्राह्मणभोजनैर्गुरुकथालापैश्च संतु श्रियः॥६६॥ वैवस्वताख्यमनुम ध्यगताष्टविंशतिष्ये नगाभ्रधृतिशालिवहाख्यशाके ॥ चैत्रे च पार्थिवशरद्यपि रामजन्मतिथ्यामिदं गुरुकृतं चरितं सुपूर्णम् ॥ ६७ ॥ श्रीगुरोः कृपया कृत्वा मयाज्ञेनेदमादितः ॥ गोपालाय सुशिष्यायाज्ञप्तं टीकार्थसिद्धिदे ॥ १६८ ॥

प्रति अहं सततं गुरुभक्तसंगं सततं त्वत्पदे चित्तस्थैर्यं च याचे प्रार्थयामि । मद्गृहे तूर्यैर्वाद्यघोषैर्ब्राह्मणभोजनैर्गुरुकथावर्णनैः साधनैः श्रियः शोभाविशेषाः संतु । एवं वरं देहीत्यर्थः ॥६६॥ एतद्ग्रंथस्य संपूर्णताकालं निर्दिशति । वैवस्वतेति । वैवस्वतमन्वंतरांतर्गते अष्टविंशेऽष्टाविंशतिपर्यायागते तिष्ये कलियुगे । "तिष्यः पुष्ये कलियुगे" इत्यमरः । समाधिकाष्टादशशतपरिमिते शालिवाहनशके १८०७ पार्थिवनामसंवत्सरे चैत्रमासे रामजन्मतिथ्यां शुद्धनवम्यां गुरुकृतमिदं चरित्रं संपूर्णमासीत् । रामनवम्यां ग्रंथसमाप्त्या तद्दिने सर्वपृथिव्यामुत्सवो जात इति भावः । वसंततिलकावृत्तम् ॥६७॥ इदं गुरुपरंपराचरित्रं

टीकार्थं टीकाकरणार्थम् । उद्दिदे उत्तमज्ञानाय । आज्ञप्तम् । मयाज्ञा कृतेत्यर्थः ॥१६८॥ गुरुकथावर्णनरूपस्य वाग्यज्ञस्य संपूर्णतायै गुरुं नमस्करोति । स्मृतेति । यस्य गुरोः पादुका स्मृता सती भक्तान्संकटाद्रक्षति । वै निश्चयेन यस्य प्रणतिः पापघ्नी अस्ति । तं परं सर्वोत्कृष्टं श्रीगुरुं प्रति वयं नुमः ॥ १६९ ॥ इति श्रीमद्गुरुपरंपराचरित्रोत्तरार्द्धटीकायामर्थस्फूर्त्यभिधायां गोपालकृतौ प्रबोधानंदनाथचरित्रवर्णनं नाम चतुःपंचाशत्तमः सर्गः॥ ५४ ॥

स्मृता रक्षति भक्तान्वै पादुका यस्य संकटात् ॥ प्रणतिर्यस्य पापघ्नी नुमस्तं श्रीगुरुं परम् ॥ १६९ ॥ इति श्रीगुरुपरंपराचरित्रोत्तरार्द्धे प्रबोधानंदकथावर्णनं नाम चतुःपंचाशत्तमः सर्गः ॥ ५४ ॥ इत्युत्तरार्द्धं संपूर्णम् ॥ समाप्तं श्रीगुरुपरंपराचरित्रम् ॥ श्रीमत्परमहंसपरिव्राजकाचार्यविद्वद्वर्यश्रीदेशिकानंदनाथतनयाविद्वन्मुकुटमणिश्रीमन्मयूरेश्वरानंदनाथशिष्यधर्मानंदव्यावहारिकनामरामकृष्णसोमयाजिमुखाविर्भूतांतर्यामिश्रीदेशिकेंद्रप्रणीतं श्रीगुरुपरंपराचरित्रं समाप्तम् ॥

पारंपर्यं गुरूणां गुरुमतहृदयो रामकृष्णो बबंधाऽस्यार्थस्फूर्त्याख्यटीकां रविधृतिसुशके १८१२ शालिवाहस्य चक्रे ॥ गोपालोऽर्भकस्थः[1] श्रुतिमुखगतिविद्विश्वनाथात्मजो यस्तिष्ठन्नंदीतटेऽसौ कविमतबलवान् राधपूर्णे सुपूर्णाम् ॥ श्रीमत्परमहंसपरिव्राजकाचार्यदेशिकेंद्रगुरुचरणारविंदमकरंदानुरक्तश्रीधर्मानंदनाथानुगृहीतधीरानंदकृताऽर्थस्फूर्त्यभिधा श्रीगुरुपरंपराचरित्रस्य टीका संपूर्णा ॥ ॥ ॥ समाप्तोऽयंग्रन्थः ॥

१ आंवठ्यानागनाथस्य: ।





थ श्रीगुरुपरंपराचरित्रोक्तगुरुनामानुक्रमप्रारंभः ॥ आदिनाथा ंद नाथ आदिशक्त्यंबिका तथा ॥ सदाशिव श्च
क्तिका ॥ १ ॥ रुद्रश्च रुद्रशक्त्यंबा विष्णुस्तच्छक्तिरेव च ॥ ब्रह्मा च ब्रह्मशक्त्यंबा सनकश्च सनंदनः ॥ २ ॥
नत्कुमार एव च ॥ ततः सनत्सुजातः स्यादृभुक्षानंद एव च ॥ ३ ॥ दत्तात्रेयो रैवतको वासुदेवस्ततः परम् ॥
व्यासः शुको नृसिंहश्च महेशो भास्कराभिधः ॥ ४ ॥ महेंद्रो माधवानंदो जिष्णुदेवस्ततः परम् ॥ गौडपादानंदनाथो गोविंदानंद
एव च ॥ ५ ॥ ततः श्रीशंकराचार्यः पद्मपादस्ततः परम् ॥ बिंबाथ वाग्भवानंदश्चिदानंदः प्रसन्नकः ॥ ६ ॥ संभ्रमः परमात्मा च
नीलकंठोऽथ शांभवः ॥ विश्वात्मकः प्रियानंदः क्रोडीशो वीर एव च ॥७॥ चिन्मुद्रः संविच्छक्त्यंबा बीजकाशक्तिरेव च ॥ भट्टानंदोथ
मदनो गेयोनुत्तर एव च ॥ ८ ॥ भीमसिंहः शाकवृद्धिः शिलाभट्टारिकांबिका ॥ भट्टिश्च विक्रमादित्यो भोगः क्षिन्नः कुलेश्वरः ॥
॥ ९ ॥ लीलानंदोऽथ सहजः कामः कौलेश्वरः स्वरः ॥ श्रीविद्यानंदनाथश्च धर्माचार्योथ दीपकः ॥१०॥ पराभट्टारिकानंदोऽघोरः
शक्तिधरोऽमृतः ॥ मातृगुप्तो मुक्तकेशः प्रतिभो विष्णुदेवकः ॥ ११ ॥ विमलः संविदानंदो भोजः परशिवस्तथा ॥ मनोजदेवो गग
नो गेयादित्यश्च मूर्तिमान् ॥ १२ ॥ आज्ञाशक्तिमौर्विका च शिवादासोभिनंदकः ॥ धाराकदंबनामा च भुवनानंद एव च ॥१३॥
महेश्वरत्र्यंबकाख्यो जयगुप्तः सदाशिवः ॥ श्वेतांबरो देवदासो दुर्गासेनोथ पाणिनिः ॥ १४ ॥ ततः कपिलरुद्राख्यः शंकुको दीप
कस्तथा ॥ भासः कर्णोत्पलानंद उपमन्युरुमापतिः ॥ १५ ॥ विद्यापतिश्च हरणो वामनः संकुलाभिधः ॥ ततस्त्वद्भुतपुण्याख्य
उत्प्रेक्षावल्लभाभिधः ॥ १६ ॥ रामानंदः शिवस्वामी कपोलो रुद्राभिधः ॥ कुमारदासः श्रीहर्षः शंभुः पृथ्वीधराभिधः ॥ १७ ॥
हम्मीरो वैद्यनाथश्च कालीदासस्त्रिलोचनः ॥ रत्नाकरो लोलटश्च स्यान्मातंगदिवाकरः ॥ १८ ॥ दामोदरः श्रुतधरः शर्ववर्माथ
गोभिलः ॥ मयूरश्चैव माघश्च गोपालो राजशेखरः ॥ १९ ॥ चाणक्यः कृष्णमिश्रश्च क्षेमेंद्रो जयमाधवः ॥ अनंतो बिल्हणो दंडी

सुरवर्माथ भैरवः ॥ २० ॥ त्रिविक्रमो वररुचिः कृष्णभट्टो गुहेश्वरः ॥ सारस्वतो भर्तृहरिः कंठपंडित एव च ॥ २१ ॥ चंद्राननो नामदेवो बिल्वमंगल एव च ॥ तत उत्पलराजाख्यस्ततः शक्तिकुमारकः ॥ २२ ॥ अरसीठाकुरानंदो भवभूतिश्च लक्ष्मणः ॥ क्रीडाचंद्रः शार्ङ्गधरो भारविर्भैरवाभिधः ॥ २३ ॥ नागंमा कुमुदो बाणो वाक्परो नंदिवर्द्धनः ॥ मुक्तापीडो माथुरश्च धर्मकीर्तिश्च हेतुकः ॥ ॥ २४ ॥ नागवैद्यो भोजदेवः कर्पूरश्च कुटुंबकः ॥ निवृत्तिदेवनामा च ज्ञानदेवाभिधस्तथा ॥ २५ ॥ मुकांबा भल्लटानंदो भट्टस्वामी ततः परम् ॥ लक्ष्मीधरो हरिगणो विद्यातीर्थाभिधः स्मृतः ॥ २६ ॥ विद्यारण्यः सायणः स्यादिंदुराजश्च रासकः ॥ गोविंदराजो भानुश्च जयदेवो महेश्वरः ॥ २७ ॥ पीयूषवर्षो देवेशः सर्वज्ञसिंहभूपतिः ॥ विष्णुगुप्तो भोगभट्टो भेरीभांकार एव च ॥ २८ ॥ ततो राघवचैतन्यस्ततः शंखधरः स्मृतः ॥ भट्टारको विष्णुशर्मा ततो गोवर्द्धनोद्धरः ॥ २९ ॥ धनपालो मुरारिश्च सुबंधुर्हरदत्तकः ॥ [illegible]पाकरश्चोत्कटश्च तत आनंददेवकः ॥ ३० ॥ विमर्शश्चैव पूर्णश्च राजदेवो विनायकः ॥ ततो वल्लभदेवाख्यः स्वभावानंद एव च ॥ ॥ ३१ ॥ हरिहरदेवनामा च धर्मनारायणाभिधः ॥ सुभगो वै परिमलो रेवादासः प्रशस्तकः ॥ ३२ ॥ वसुंधरोथ कुमुदानंदो गोविंदभट्टकः ॥ आनंदश्च प्रकाशश्च भासुरानंद एव च ॥ ३३ ॥ उमापत्यानंदनाथः शुकानंदाभिधः परं ॥ श्रीदेशिकानंदनाथो यज्ञेशानंद एव च ॥ ३४ ॥ धर्मानंदस्तथा धीरानंदश्चेति परंपरा ॥ आदिनाथं समारभ्य रहस्यं देशिकावधि ॥ कर्णात्कर्णोपदेशेन संप्राप्तमवनीतले ॥ ३५ ॥ इति श्रीगुरुपरंपराचरित्रोक्तगुरुनामानुक्रमः समाप्तः ॥ ॥ शुभं भूयात् ॥ ॥

इंगोलीनगरनिवासिपण्डितवरपूर्णाभिषिक्तश्रीगोपालशास्त्रिभिः—स्वकीयप्रबन्धेन—मुद्रयित्वा प्रकाशयितुं
देतत्—मुम्बय्यां खेमराजश्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्—मुद्रणयन्त्रागारे—
ऽङ्कयित्वा प्रकाशितम्। मार्गशीर्ष संवत् १९६४, शाके १८२९.